इत्यधिकरणे भाष्याभिप्रेतं सूत्रार्थं परित्यज्य सूत्रव्याख्यान्तरं भामतीकृतं व्याचक्षाणः समर्थयंश्च एवमाह—'ननु टीकायां दुरुक्तिचिन्ता न युक्ता। वार्तिके हि सा भवति। तर्हि वार्तिकमस्तु। न हि वार्तिकस्य शृङ्गमस्ति।' इति। अनेन हि कल्पतरुवाक्येन भामत्याः वार्तिकत्वं स्थापितम्। इति च। तस्मात् चमत्कृतिजननमात्रोद्देशेन अन्यदन्यदुपवर्णयतां कवीनामुक्तिमात्रावष्टम्भेन तत्त्वनिर्णयार्थं न प्रवर्तितव्यमिति विज्ञायते॥

किं च, भगवत्पादाः माण्डूक्योपनिषद्भाष्यावसाने स्वगुरुगोविन्दभगवत्पादवन्दनपद्ये—

'यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये।'

इत्यूचुः। तोटकाचार्या अपि श्रुतिसारसमुद्धरणप्रकरणावसाने स्वगुरुभगवत्पादवन्दनपद्ये—

'येषां पादौ प्रपन्नाः श्रुतिशमविनयैर्भूषिताश्शिष्यसङ्घाः
सद्यो मुक्ताः स्थितास्तान् यतिवरमहितान् यावदायुर्नमामि।'

इति भगवत्पादकथितरीत्यैवावदन्। पद्मपादाचार्याः—

'भाष्यं प्रसन्नगम्भीरं तद्व्याख्यां श्रद्धयाऽऽरभे'

इति पञ्चपादिकायां, सुरेश्वराचार्याः—

'श्रद्धामात्रबलेन वार्तिकमिदं तस्यास्समासात् कृतम्'

इति वार्तिके चावदन्। एवञ्च भगवत्पादशिष्याणां श्रुतिशमविनयभूषितानां गुरौ तदीयभाष्ये च श्रद्धातिशयवतां परस्परस्पर्धामात्सर्यादिकं शापदानप्रवृत्त्यादिकमत्यन्तासम्भावितं वर्णयितुं प्रवृत्ता निरङ्कुशाः कवयः। साहसमिदं तेषाम्।

अपि च सुरेश्वराचार्या एव पूर्वाश्रमे विश्वरूपाचार्या इति प्रथितनामानः याज्ञवल्क्यस्मृतेः बालक्रीडाख्यां व्याख्यां रचयामासुरिति विदितचरम्। विज्ञानेश्वरोऽपि तदनुसारेणैव मिताक्षरानाम्नीं याज्ञवल्क्यस्मृतिव्याख्यामकरोत्। स एव मिताक्षरोपक्रमे एवमाह—

'याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम् ।
धर्मशास्त्रमृजुभिर्मिताक्षरैः बालबोधविधये विविच्यते ॥' इति ।

विश्वरूपाचार्य एव सुरेश्वर इति विभावनाख्यबालक्रीडाव्याख्याकारः

'यत्प्रसादादयं लोको धर्ममार्गस्थितस्सुखी ।
भवभूतिसुरेशाख्यं विश्वरूपं प्रणम्य तम् ॥'

इति वदन्नाह । भवभूतिरित्यस्य ईश्वरविभूतिरूप इत्यर्थः । वचनमालाख्यबालक्रीडाव्याख्याकारोऽपि—

'अवनम्य मनुसुरेश्वरयोगीश्वरतीव्रकिरणगुरुचरणान् ।
शास्त्राणां व्याकर्तॄन् कर्तॄनपि देवता निखिलाः ॥'

इति श्लोके सुरेश्वरं धर्मशास्त्रव्याकर्तृत्वेन आह । तीव्रकिरणः—याज्ञवल्क्यगुरुः सूर्य इत्यर्थः । विवरणप्रमेयसङ्ग्रहे च माधवाचार्याः सुरेश्वराचार्यं विश्वरूपाचार्यशब्देन व्यवहरन्ति । एवञ्च, बालक्रीडाग्रन्थकारः विश्वरूपस्सुरेश्वर इत्यत्र नाक्षेपावकाशः । याज्ञवल्क्यश्च स्मृतिकारः स्मृतौ संन्यासाश्रमं सम्यक् निरूपयामास । अन्ते स्वयं संन्यासाश्रममपि स्वीचकार । पूर्वाश्रमे तत्स्मृतिव्याख्याता सुरेश्वरोऽपि संन्यासाश्रमधर्मान् सप्रमाणं निरूपयति बालक्रीडायां सम्यगेव । स कथं संन्यासाश्रमप्रद्वेषी स्यात् इति विवेचयन्तु विद्वांसः । तस्मात् कवीनां एवमादिस्वाभ्यूहमात्रकल्पितार्थविषये नातीव विश्वासो विधेयः ॥

अभिनवद्रविडाचार्यविरुदावहश्रीबालकृष्णानन्दसरस्वतीविरचितशारीरकमीमांसाभाष्यवार्तिके श्लोकनिबद्धे यदुक्तम्—

'स्फुटाटोपं टीका व्यरचि गुरुवाचां नरहरेः
कृपापात्रीभूतैः विशदवचसाऽऽपञ्चचरणम् ।
नयैस्सद्भिर्यैस्ते कमलचरणाचार्यमणयो
नयन्त्वेनोहानिं विनयमपि चेतो मम सदा ॥' इति,

तस्यापि कविभिरुत्प्रेक्षितपञ्चपादिकापदयथाश्रुतार्थप्रतीतिमूलककल्पितेतिवृत्तप्रामाण्यबुद्धिमूलकत्वमवगन्तव्यम् । अलमधिकेन ।

तथा च पञ्चपादिकेति समग्रभाष्यटीकाया एव नामधेयम् । समग्र-मेव च पद्मपादाचार्याः पञ्चपादिकां विरचयामासुः । दैवदुर्विपाकादिदानीं न लभ्यते उपरितनो भागः इति निश्चप्रचम् ॥

पद्मपादाचार्याणां च भगवत्पादान्तेवासिनां भगवत्पादीयवक्त्रमानस-सरःप्रतिलब्धजन्मभाष्यारविन्दमकरन्दरसं भगवत्पादसन्निधाववस्थाय भगव-त्पादमुखादेव सादरमापीतवतां निजगुरुषु भगवत्पादेषु अनितरसाधारणी भूयसी भक्तिः । सा च 'नमाम्यभोगिपरिवारसम्पदम्' 'यद्वक्त्रमानससरः-प्रतिलब्धजन्म' इति भगवत्पादस्तुतिपरमङ्गलश्लोकद्वयेन, 'तस्मादग्रणीः शिष्टा-चारपरिपालने भगवान् भाष्यकारः' (18-पु) इति, 'तस्मात् ब्रह्मविदामेक-पुण्डरीकस्य लोकानुग्रहैकरसतया सम्यग्ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम्' (97-पु) इति च वाक्याभ्यां स्पष्टं प्राकाशि ।

ते च पद्मपादाचार्याः भगवत्पादीयं विमलमौपनिषदमद्वैतसिद्धान्तं भगवत्पादमुखादेव साक्षादवधारयन्तः पञ्चपादिकायां सुनिपुणमुपपादयामासुः ॥

तत्र च (1) (पु-10-14) 'ब्रह्मज्ञानं हि सूत्रितमनर्थहेतुनिबर्हणम् । अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वम् । तद्यदि वस्तुकृतं न ज्ञानेन निबर्ह-णीयम् । यतो ज्ञानमज्ञानस्यैव निवर्तकम् । तद्यदि कर्तृत्वभोक्तृत्वं अज्ञानहेतुकं स्यात्, ततो ब्रह्मज्ञानमनर्थहेतुनिबर्हणमुच्यमानं उपपद्येत । तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिबर्हणं सूचयता अविद्याहेतुकं कर्तृत्वभोक्तृत्वं प्रदर्शितं भवति । अतः तत्प्रदर्शनद्वारेण सूत्रार्थोपपत्त्युपयोगितया सकलतन्त्रोपोद्धातः प्रयोजनमस्य भाष्यस्य । तथा चास्य शास्त्रस्य ऐदम्पर्यं सुखैकतानसदात्मककूटस्थचैतन्यै-करसता संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति वेदान्ताः पर्यवस्य-न्तीति प्रतिपादितम् । तच्च अहं कर्ता सुखी दुःखी इति प्रत्यक्षाभिमतेन अबाधितकल्पेन अवभासेन विरुध्यते, अतः तद्विरोधपरिहारार्थं ब्रह्मस्वरूप-विपरीतरूपं अविद्यानिर्मितमात्मन इति यावन्न प्रतिपाद्यते, तावत् जरद्गवादि-वाक्यवत् अनर्थकं प्रतिभाति । अतः तन्निवृत्त्यर्थं अविद्याविलसितमब्रह्म-रूपत्वमात्मन इति प्रतिपादयितव्यम् । वक्ष्यति चैतत् अविरोधलक्षणे जीव-प्रक्रियायां सूत्रकारः 'तद्गुणसारत्वात् इत्यादिना'। 'भाष्यकारस्तु तत्सिद्धमेव

आदिसूत्रेण सामर्थ्यबलेन सूचितं सुखप्रतिपत्त्यर्थं वर्णयति' इति अध्यासभाष्यतात्पर्यवर्णनसन्दर्भे प्रपञ्चस्य आविद्यकत्वेन अध्यस्तत्वं न्यरूपयन् ॥

(२) 'सत्यानृते मिथुनीकृत्य' इति भाष्यविवरणसमये (25–पु) 'सत्यं अनिदं चैतन्यं अनृतं युष्मदर्थः स्वरूपतोऽप्यध्यस्तत्वात्' इति ब्रुवन्तः भ्रान्तौ भासमानस्यात्मनः अनात्मवत् स्वरूपतोऽनध्यासेऽपि अध्यस्तानात्मपदार्थसंसृष्टरूपेणाध्यस्तत्वं अभिप्रयन्ति स्म ॥

(३) (26–पु) 'मिथ्याज्ञाननिमित्तः' इति भाष्यं 'मिथ्या च तत् अज्ञानञ्च मिथ्याज्ञानम्, मिथ्येति अनिर्वचनीयता उच्यते। अज्ञानमिति च जडात्मिका अविद्याशक्तिः ज्ञानपर्युदासेनोच्यते। तन्निमित्तः––तदुपादान इत्यर्थः' इति व्याचक्षाणाः प्रपञ्चोपादानं अनिर्वचनीयं ज्ञानापनोद्यं भावरूपमज्ञानं भष्याभिप्रेतं आहुः ॥

(४) (23–पु) 'मिथ्याशब्दः द्व्यर्थः अपह्नववचनः अनिर्वचनीयतावचनश्च' इति अनिर्वचनीयत्वमपि मिथ्याशब्दार्थमाचख्युः ॥

(५) (27—30. पु) 'अवश्यमेषा अविद्याशक्तिः बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिनी अभ्युपगन्तव्या। अन्यथा मिथ्यार्थावभासानुपपत्तेः। सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति। प्रमाणवैकल्यादेव तदग्रहणसिद्धेः। रजतप्रतिभासात् प्रागूर्ध्वञ्च सत्यामपि तस्यां स्वरूपग्रहणदर्शनात्। अतः तत्र रूपान्तरावभासहेतुरेव केवलम्। प्रत्यगात्मनि तु चितिस्वभावत्वात् स्वयं प्रकाशमाने ब्रह्मस्वरूपानवभासस्य अनन्यनिमित्तत्वात् तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव तस्यानवभासः। अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति। सुषुप्त्यादौ च अहङ्कारादिविक्षेपसंस्कारमात्रशेषं स्थित्वा पुनरुद्भवति' इति वाक्यैः अग्रहणमिथ्याज्ञानतत्संस्कारकर्मातिरिक्तं अनाद्यनिर्वचनीयं भावरूपमज्ञानं प्रत्यक्षानुमानार्थापत्तिप्रमाणैः साधयन्ति स्म ॥

(६) 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति भाष्यवाक्यस्य अर्थाध्यासज्ञानाध्यासोभयलक्षणपरत्वं व्याख्याय, (51-पु) 'कारणदोषः कार्यविशेषे तस्य शक्तिं निरुन्धन्नेव संस्कारविशेषमप्युद्बोधयति। कार्यगम्यत्वात्

कारणदोषशक्तेः । अतः संस्कारदुष्टकारणसंवलिता एका सामग्री । सा च एकमेव ज्ञानं एकफलं जनयति । तस्य च दोषोत्थापितसंस्कारविशेषसहित-सामग्रीसमुत्पन्नज्ञानस्य उचितमेव शुक्तिगतमिथ्यारजतमालम्बनमवभासते । तेन मिथ्यालम्बनं ज्ञानं मिथ्याज्ञानम् । न स्वतो ज्ञानस्य मिथ्यात्वमस्ति, बाधाभावात्' (54-पु) 'अतो मायामयं रजतम् । अथ पुनः पारमार्थिकं स्यात् सर्वैरेव गृह्येत' (55-पु) 'किं च नेदं रजतमिति बाधोऽपि मायामयत्वमेव सूचयति । कथम् ? । तेन हि तस्य निरुपाख्यतापादनपूर्वकं मिथ्यात्वं ज्ञाप्यते । 'नेदं रजतं मिथ्यैवाभासिष्ट ' इति' (56-पु) ' तदिह निद्रादिदोषोपप्लुतं मनः अदृष्टादि-समुद्बोधितसंस्कारविशेषसहकार्यनुरूपं मिथ्यार्थविषयं ज्ञानमुत्पादयति । तस्य च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिः आलम्बनतया विवर्तते ' (66-पु) ' नाप्यध्यस्तमप्यसदेव । तथात्वे प्रतिभासायोगात् । ननु सर्वमेवेदमसदिति भवतो मतम् । क एवमाह ? अनिर्वचनीयानाद्यविद्यात्मकमिति उद्घोषित-मस्माभिः । अथ पुनर्विद्योदये अविद्यायाः निरुपाख्यतामङ्गीकृत्य असत्त्व-मुच्येत, काममभिधीयताम् ।' (69-पु) ' मिथ्यात्वमपि रजतस्य आगन्तुक-दोषनिमित्तत्वात् अनन्तरबाधदर्शनाच्च कथ्यते । न पुनः परमार्थाभिमतात् रजतादन्यत्वमाश्रित्य' इत्यादिभिः तत्र तत्र वाक्यैः भ्रमस्थले अनिर्वचनीयख्यातिं समर्थयन्ति ।।

(७) तथा (73-पु) ' विद्यत एवात्रापि अग्रहणाविद्यात्मको दोषः प्रकाशस्याच्छादकः। कथमवगम्यते? । श्रुतेः तदर्थापत्तेश्च । श्रुतिस्तावत्—'अनृतेन हि प्रत्यूढाः' ' अनीशया शोचति मुह्यमानः' इत्येवमाद्या । तदर्थापत्तिरपि—विद्यैव सर्वत्र श्रुतिषु ब्रह्मविषया मोक्षाय निवेद्यते । तेनार्थादिदमवगम्यते—जीवस्य ब्रह्मस्वरूपतानवगमोऽविद्यात्मको बन्धो निसर्गत एवास्तीति । ननु न जीवो ब्रह्मणोऽन्य इत्युक्तम् । बाढम् । अत एवार्थात् जीवे ब्रह्मस्वरूप-प्रकाशाच्छादिका अविद्या कल्प्यते । अन्यथा परमार्थतः तत्स्वरूपत्वे तदव-बोधोऽपि यदि नित्यसिद्धः स्यात् तदा तादात्म्योपदेशो व्यर्थस्स्यात् । अतः अनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदमेकरसं ब्रह्मेति श्रुतिस्मृतिन्या-यकोविदैरभ्युपगन्तव्यम् । तथा च स्मृतिः—' प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति क्षेत्रक्षेत्रज्ञत्वनिमित्तामनादिसिद्धामविद्यां प्रकृतिशब्देनाह

'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः। अतो मायावच्छिन्नरूपत्वात् अनन्यदपि ब्रह्मरूपमात्मनो न वेत्ति। तथा चोक्तम्—

'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥' इति'

(40-पु) 'तदेवं स्वयंज्योतिष एव सतो जीवस्य कार्यकरणसङ्घातव्यतिरिक्तातायाः तथा अनवभासदर्शनात् मनुष्योऽहमिति च अध्यासोपलब्धेः ब्रह्मात्मैकत्वस्यापि तत्स्वरूपस्यानवभासनं पूर्वकालकोटिरहितप्रकाशाच्छादितमोनिमित्तं श्रुतितदर्थापत्तिसमर्पितं तन्निमित्ताहङ्काराध्यासश्च सम्भाव्यते' (98-पु) 'येयं श्रुतिस्मृतीतिहासपुराणेषु नामरूपं अव्याकृतं अविद्या माया प्रकृतिः अग्रहणं अव्यक्तं तमः कारणं लयः शक्तिः महासुप्तिः निद्रा अक्षरं आकाशं इति च तत्र तत्र बहुधा गीयते चैतन्यस्य स्वत एवावस्थितब्रह्मस्वरूपतावभासं प्रतिबध्य जीवत्वापादिका अविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिः सुषुप्ते प्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिः अनादिरविद्या, तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषः विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसंजातज्योतिः स्वयंप्रकाशमानः अपरोक्षोऽहङ्कारः। यत्सम्भेदात् कूटस्थचैतन्योऽनिदमंशः आत्मधातुरपि मिथ्यैव भोक्तेति प्रसिद्धिमुपगतः। स च सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः' (100-पु) 'स च परिणामविशेषः अनिदंचिदात्मनः बुद्ध्या निष्कृष्य वेदान्तवादिभिः अन्तःकरणं मनः बुद्धिः अहंप्रत्ययी इति च विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते। परिस्पन्दशक्त्या च प्राण इति' इति वाक्यैः अनादिभावरूपाज्ञानं आवरणविक्षेपशक्तिद्वयोपेतं सपरिणामं श्रुतितदर्थापत्त्यादिभिः साधयन्ति॥

(८) (162-पु) 'तत्त्वमसीत्यादिवाक्यात् ब्रह्मरूपावगाहिज्ञानान्तरोत्पत्तेरिष्टत्वात्। तद्धि ब्रह्मणोऽवछिद्यैव चैतन्यस्य ब्रह्मरूपत्वप्रच्छादनेन जीवरूपत्वापादिकामनादिसिद्धामविद्यां अहङ्कारादिविक्षेपहेतुं निराकुर्वदेवोत्पद्यते। ततः कारणनिवृत्तौ तत्कार्यं अहमिति जीवे भोक्तृरूपता सपरिकरा निवर्तते इति युज्यते।' (173-पु) 'इह पुनरपसारिताविद्यादोषं ब्रह्मात्मज्ञानमुदयमासादयत् कथं तन्निमित्तं भोक्त्रादिग्रन्थिप्रवाहं नापनयति' (174-पु)

'ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्याहङ्कारग्रन्थेः तत्कालमेवाभावः प्रसज्येत। न। संस्कारादपि अग्रहणानुवृत्तेः सम्भवात् भयानुवृत्तिवत्। तथा हि—सम्यग्ज्ञानात् निवृत्तमपि भयं स्वसंस्कारादनुवर्तते कम्पादिनिमित्तं च भवति, तथा अग्रहणमपि स्वसंस्कारादनुवर्तते अहङ्कारग्रन्थेश्च निमित्तं भवतीति न किञ्चिदनुपपन्नमस्ति' (288-पु) 'तस्य अहंप्रत्ययसिद्धः भोक्तृत्वावभासः। स मिथ्यैव अनिर्वचनीयानाद्यविद्याविलसितः' इत्यादिभिः वाक्यैः अज्ञानात् भ्रमरूपज्ञानाध्यासवत् भ्रमविषयस्य अर्थाध्यासस्यापि सम्भवं ज्ञानेन सकार्याविद्यानिवृत्तिं अज्ञाननिवृत्तावपि संस्कारबलात्तदनुवृत्त्या जीवन्मुक्तिं च उपपादयामासुः॥

(९) (315-पु) 'कथं पुनस्ततो जन्म?। तत्परतन्त्रत्वात् रज्जुसर्पवत्' इति वेदस्य परमात्मसकाशात् जन्मनिरूपणकाले रज्जुसर्पजन्म उदाहरन्तः अनिर्वचनीयस्य उत्पत्तिमभिप्रयन्ति॥

तथा च प्रपञ्चात्मना परिणममानं अग्रहणशब्दितज्ञानाभावभ्रान्तितत्संस्कारकर्मातिरिक्तं अनिर्वचनीयं अनादिभावरूपमज्ञानं, आत्मानात्मनोरितरेतराध्यासे आत्मनः संसृष्टरूपेणाध्यासं, ज्ञानाध्यासार्थाध्यासाख्याध्यासद्वयं, भ्रमस्थले विलक्षणसामग्रीवशात् अनिर्वचनीयरजताद्युत्पत्तिं च भाष्याभिमततया समर्थयन्ति पञ्चपादिकाचार्याः। विवरणाचार्याश्च तत् सर्वं सप्रमाणं सोपपत्तिकं व्यवस्थापयामासुः॥

एवं भगवत्पादान्तेवासिभिः भगवत्पादाशयाभिज्ञैः पद्मपादाचार्यैः अनादिभावरूपाज्ञानानिर्वचनीयपदार्थोत्पत्तिज्ञानार्थाध्यासोभयादौ समर्थिते सत्यपि, तदीयसिद्धान्तमसहमानः महावैयाकरणः सर्वतन्त्रार्थतत्त्वज्ञः सर्वत्र निबन्धकृच्च श्रीनागेशभट्टः वैयाकरणसिद्धान्तलघुमञ्जूषाभिधे महति निबन्धे उपक्रमे 'एवं च पदादिरूप आन्तरः स्फोटः वाचक इति सिद्धम्' इत्यन्तेन महता ग्रन्थेन बौद्धस्य स्फोटात्मकशब्दस्य वाचकत्वं प्रसाध्य, तदनन्तरं 'एवं शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताविष्टः' इत्यादिना महता ग्रन्थेन बौद्धस्यैव अर्थस्य वाच्यत्वमिति निरूपयितुं प्रवृत्तः तस्मिन्नेव सन्दर्भे पूर्वनिर्दिष्टान् पञ्चपादिकोक्तान् सैद्धान्तिकानर्थान् साग्रहं निराचकार। तत्र च

बादरायणभगवत्पादवाचस्पतिमिश्रादीनामपि वचनानि उपष्टम्भयामास। तदुक्तार्थान् सङ्क्षेपेणानूद्य निराकुर्मः ॥

अद्वैतिभिरभिमतं अग्रहणमिथ्याज्ञानतत्संस्कारेभ्योऽन्यत् अनादि-भावरूपं अज्ञानं नास्तीति ब्रह्मपरिणामवादिनो भास्कराचार्यादयो वदन्ति। तदनूद्य विवरणे विस्तरेण निराकृतमेव। अयं तु नागेशः 'भगवत्पादानामपि अनादिभावरूपमज्ञानं न संमतम्। अपि तु भ्रान्तिज्ञानं तत्संस्कारश्च अविद्यामायादिपदैः भाष्ये तत्र तत्र व्यवह्रियते' इत्युक्त्वा, अविद्यादिपदघटितानि बहूनि सूत्रभाष्योपनिषद्भाष्यादिवाक्यान्युदाहृत्य, 'अविद्या अत्र वासनारूपा' 'तत्र अविद्या पूर्वतनसंस्काररूपा' 'व्याकृतं-स्थूलम्, अव्याकृतं—तज्जन्यसंस्कारः अस्थूलम्' 'अविद्या संस्काररूपा, माया स्थूलरूपा' 'एवमेव एवंजातीयकमन्यदपि भाष्यं व्याख्येयम्' इति वदति ॥

अपि च साधयति स्वपक्षं वक्ष्यमाणविधया—'तस्मात् भ्रमरूपा स्थूलाऽविद्या, वासनारूपा च अव्यक्तपदवाच्या सूक्ष्माऽविद्या। व्यवहारकाले स्थूलाविद्यायाः सा कारणमिति तस्या एव कारणत्वेन निर्देशः 'अव्यक्तं कारणम्' इत्यादौ, एतत्सृष्टौ तज्जन्मानुपलम्भात् तस्या नित्यत्वोक्तिर्नेया। उपनिषद्भाष्ये 'अजां' इति श्रुतौ अजामित्यस्य यौगिकत्वेन जन्माभावपरतया व्याख्यानमप्येवमेव नेयम्। संस्काराणामपि त्रिगुणत्वात् लोहितशुक्लकृष्णगुणत्वं तस्याः। समूहाभिप्रायेण च एकवचनं बोध्यम्। वासनारूपैव च सा मूलप्रकृतिरित्युच्यते।' 'अजामेकामिति श्रुतिः अविद्याया अजन्यत्वे न मानम्। अत एव तेजोऽबन्नानां अव्याकृतनामरूपा प्रागवस्था अजारूपकेण निर्दिष्टा इति भाष्ये उक्तम्। 'अनादिमायया सुप्तः' इति भाष्योक्तसम्प्रदायविदुक्तिश्च परम्परानादित्वपरा। 'अक्षरात् परतः परः' इति श्रुतौ अविद्यायाः अक्षरत्वश्रुतेश्च। तद्यदि यथाकथञ्चित् तत्त्वज्ञानात्प्रागनिवृत्तेः, तर्हि अनादित्वमपि तथैवास्तु।' 'सनत्सुजातीयभाष्येऽपि भगवत्पादैरुक्तं 'मोहो मृत्युः' इति पद्ये—'मोहः—मिथ्याज्ञानं अनात्मन्यात्माभिमानः। अनेन अग्रहणान्यथाग्रहणात्मिका अविद्या सूचिता' इति। अग्रहणं आत्मस्वरूपाग्रहणं तन्मूलकमिथ्याज्ञानात्मिकेत्यर्थः' 'द्युभ्वाद्यायतनाधिकरणे च 'देहादिषु अनात्मसु अहमस्मीत्यात्मबुद्धिरविद्या' इति भाष्ये उक्तम् ॥'

'किं च सर्वसंमताध्यासविषये 'कोऽयमध्यासो नाम' 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति प्रश्नोत्तरवत् सर्वासंमताविद्याविषयप्रश्नोत्तरानुपलम्भेन सा न भाष्यसंमता।' 'अग्रे च 'अध्यासातिरिक्ता अविद्या न काचिदिति सूचयितुमेव 'तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते' इत्युक्तम्। भावरूपायाः कारणाविद्यायाः अतिरिक्तायाः भाष्यसंमतत्वे अध्यासमपीति ब्रूयात्। 'तमेतमेवंलक्षणम्' इत्यक्षरस्वारस्येनात्र अहंममेत्याध्यास एव अविद्या। 'वासुदेवस्सर्वम्' इति विद्यायां तस्यैव विरोधित्वात्। रागद्वेषमोहादि-वासनास्तु वासनापदेनैव वाच्याः। मायात्वं तु साधारणम्। तत्रापि अविद्या-पदप्रयोगस्तु अध्यासत्वसामान्यात् गौणः इति लभ्यते। अत एव 'उपपद्यते चाप्युपलभ्यते च' इति सूत्रे भाष्ये उक्तम्—'न चेश्वरो वैषम्यहेतुरित्युक्तम्। न च अविद्या केवला वैषम्यस्य कारणम्। एकरूपत्वात्। रागादिक्लेशवासनाक्षिप्त-कर्मापेक्षा त्वविद्या वैषम्यकरी स्यात्' इति। एकरूपत्वादित्यस्य अहंममेत्य-ध्यासरूपाविद्यायाः सर्वेषां एकरूपत्वादित्यर्थः। तत्तत्प्राणिकर्मवशात् बीजाङ्कुर-न्यायेन अनादिपूर्वपूर्ववासनयैव घटादिभ्रमरूपां सृष्टिं स करोतीति बोध्यम्॥'

'किं च 'तत्तु समन्वयात्' इति सूत्रे 'साध्यश्चेत् मोक्षोऽभ्युपगम्येत अनित्य एव स्यात्' इति भाष्ये उक्तम्। तत्रानित्यत्वं नाश्यत्वमेव। तव तु अजन्यायाः अविद्याया नाश्यत्ववत् जन्यस्यापि मोक्षस्य अविनाशित्वे किं बाधकम्। जन्यत्वनाश्यत्वयोः परस्परव्याप्तेरेव लोके दृष्टत्वाच्च। एवञ्च, जन्या अविद्या नाश्या चेत्युक्तमेव॥'

'योगसूत्रेऽप्युक्तम्—'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्या-तिरविद्या' इति। व्याससूत्रेऽपि एतद्विलक्षणाविद्यानुक्तेः तस्यापीदमेव संमतमिति लक्ष्यते। अत्र च 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति सूत्रे 'परमतमप्रतिषिद्धमनुमतं भवति इति न्यायात् इहापि योगशास्त्रप्रसिद्धाः मनसः पञ्चवृत्तयः परिगृह्यन्ते प्रमाणविपर्ययविकल्पनिद्रास्मृतयो नाम' इति भाष्ये उक्तम्।' 'एवञ्च सिद्धं भ्रमः तत्संस्काररूपा चाविद्येति। सा च जन्यैवेति नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गः॥'

'अत एव तृतीये 'सामान्यात्तु' इति सूत्रे भगवत्पादैरुक्तम्—'न च ब्रह्मव्यतिरिक्तं किंचिदजं सम्भवति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'

इत्यवधारणात्। एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात् न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते' इति। अत एव 'न वियदश्रुतेः' इत्यधिकरणे वियदादीनामजन्यत्वे 'प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः' इति सूत्रेण एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्ग आपादितः। मृत्पिण्डादिदृष्टान्तेन कारणज्ञानेन कार्यस्यापि ज्ञानमिति हि ततो लभ्यते। तदुक्तम् 'अव्यतिरेकाच्छब्देभ्यः' इति। शब्दाच्च प्रकृतिविकृतिन्यायेनाव्यतिरेकात् प्रतिज्ञासिद्धिरवगम्यत इति तदर्थः। एतेन—आकाशस्य अजन्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गापादनमभ्युच्चयः। अविद्यानुरोधेन सर्वपदसङ्कोचस्यावश्यकत्वेन आकाशातिरिक्तपरत्वेनापि तत्संकोचात् इत्यपास्तम्॥'

'किञ्च 'यावद्विकारं तु विभागो लोकवत्' इति सूत्रेण कार्यत्वस्य भेदव्यापकत्वबोधकेन आकाशस्येव अविद्याया अपि तत्त्वबोधनात्। विकारः—कार्यं, विभागः—भेदः, अस्ति ह्याकाशे पृथिव्यादिभेदः, एवमविद्यायाः शुद्धब्रह्मभेदसत्त्वात् कार्यत्वमापतति। ब्रह्मणि तु न किञ्चिन्निरूपितो भेदः, अधर्मकत्वेन वैधर्म्यसंभावनाऽभावात्। न च अजन्यं सत् यदविनाशि तदन्यत्वरूपमत्र कार्यत्वं साध्यं, पराधीनसत्ताकत्वरूपं वा कार्यत्वं साध्यं, अविद्याया अजन्यत्वेऽपि ब्रह्मण्यध्यस्तत्वेन पराधीनसत्ताकत्वं विनाशित्वाच्च आद्यमपि तत्र इति वाच्यम्। सामान्यप्रवृत्तसूत्रस्य संकोचेन व्याख्याने मानाभावात् अविद्याया अजन्यत्वबोधकसूत्रान्तराभावाच्च। आकाशस्याप्यध्यस्तत्वेन अन्त्ये तत्रापि जन्यत्वं न सिद्ध्येत्।' 'न च अविद्याया जन्यत्वे मूलकारणे अनवस्थापत्तिः ब्रह्मणस्तु उपाधिसहकारं विना न जनकत्वं अत एव परमाण्वादीनां नित्यत्वं परैः स्वीकृतमिति वाच्यम्। वासनारूपाविद्यासहकारेण स्थूलाविद्यायाः तत्सहकारेण च सूक्ष्माविद्यायाः ब्रह्मजन्यत्वेन अनवस्थापत्त्यभावात्॥'

'अत एव 'असंभवस्तु सतोऽनुपपत्तेः' इति सूत्रे भाष्ये 'मूलप्रकृत्यनभ्युपगमे अनवस्थाप्रसंगात् या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्म' इत्युक्तम्। तव तु अजन्याविद्याया अपि सत्त्वात् 'तदेव नो ब्रह्म' इत्यस्यासङ्गतिः स्पष्टैव। अत्र कार्यत्वमात्रं साध्यं न तु यद्भेदः तत्कार्यत्वम्। तेन घटादीनां परस्परं कार्यत्वाभावेऽपि परस्परं भेदव्यवहारोपपत्तिः।

आरोपितधर्मवति भेदो विकारत्वं चास्त्येव, रज्जूरगस्थले आरोपितोरगत्वेनैव रज्जुविकारत्वव्यवहारात् ॥

किं च,

'सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः ।
संसारं तन्निवृत्तिं च करोत्यविरतोदयम् ॥'

इति शक्तिमण्डलत्वेन मायोक्ता ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥'

इति श्रुतौ च अविद्यायास्सावयवत्वमुक्तम् । तेन जन्यत्वमावश्यकं घटादिवत् । अस्यावयवेत्यत्र सन्धिरार्षः । यद्वा, अस्य—महेश्वरस्य, मायावयवानामेव च तदवयवत्वम्, तद्विशिष्टस्यैव महेश्वरत्वात् । किं च, सत्तास्फूर्त्यनुरोधेन तस्या ब्रह्मकार्यत्वमावश्यकम्, वासनासमूहरूपाविद्याया अपि योगिनां सत्त्वेन स्फूर्तिसत्त्वात् ॥

किं च, आनुमानिकाधिकरणे 'इदमेव व्याकृतनामरूपविभिन्नं जगत् प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमव्यक्तशब्दयोग्यम्' 'परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतन्त्रा । सा चावश्याभ्युपगन्तव्या, अर्थवती हि सा । न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति । शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः' 'अविद्यात्मिका सा बीजशक्तिः अव्यक्तशब्दनिर्देश्या परमेश्वराश्रया' इति भाष्ये उक्तम् । तत्तत्कार्यबीजशक्तीनामानन्त्येऽपि बीजशक्तिरित्येकवचनं जात्यभिप्रायेण । अनेन हि वासनानामेवाविद्यात्वं स्पष्टमेवोक्तम् । 'प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः अविद्यया सर्वशक्तियोगः' 'सर्वज्ञं सर्वशक्तियुक्तं महामायं च ब्रह्म' इत्यन्यत्रोक्तम् । अत्राविद्ययेत्यस्य पूर्वैतद्विधमिथ्याज्ञानजन्यवासनयेत्यर्थः । शक्तिसमूह एव च महामायेति बोध्यम् ॥

एतेन—अविद्या अजन्या कश्चित् भावपदार्थः वासनाश्रय इत्यपास्तम् । अतिरिक्ततत्कल्पने मानाभावात् । अत एव प्रपञ्चस्य एककारणकत्वप्रवादनिर्वाहः । स्वजन्यातिरिक्तसहकार्यनपेक्षत्वात् । यत्तु 'प्रकृतिश्च प्रतिज्ञा-

दृष्टान्तानुपरोधात्' इति सूत्रे भाष्ये च 'ब्रह्मैव उपादानकारणं निमित्तकारणं च' इत्युक्तम्, तस्य स्वसमकक्षनिमित्तकारणाभावे तात्पर्यम् ॥'

'इतोऽपि अविद्यायां जन्यत्वमावश्यकम्, अन्यथा प्रतिज्ञादृष्टान्तोपरोधः स्यादेवेति बोध्यम्। अत एव विष्णुपुराणे—

'प्रजापतिपतिं विष्णुमनन्तमपराजितम्।
प्रधानपुंसोरजयोः कारणं कार्यभूतयोः ॥'

इति स्मर्यते। अजयोरिति रूपकं स्वातन्त्र्यनिरासाय। तद्ध्वननायैव कार्यभूतयोरित्युक्तम्। यद्वा, एतत्सृष्टौ तज्जन्मानुपलम्भादजत्वम्। पूर्वकल्पान्ते जन्यत्वमादाय कार्यभूतयोरित्युक्तम्। 'यत्तत् सूक्ष्ममविज्ञेयम्' इति प्रकृत्य 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति, 'अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते' इति च भाष्योदाहृतस्मृत्यन्तरविरोधश्च। एतदुपब्रह्मणेन सूत्रस्वरसेन च उक्तजातीयश्रुतीनां मदुक्तव्याख्यैवोचिता ॥

'किं च, ब्रह्माण्डपुराणे अविद्याया ब्रह्मणि लय उक्तः—

'स्थूलं विलाप्य करणे करणं निदाने
तत्कारणं करणकारणवर्जिते च।
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र
तं त्वां हरिं विमलबोधघनं नमामः ॥'

इति। करणम्—महत्। निदानम्—प्रकृतिः। तत्कारणम्—प्रकृतिरूपं कारणम्। करणकारणवर्जिते—ब्रह्मणि। अनेनापि तदतिरिक्तस्य करणकारणसाहित्यं सूचितम्। विलाप्येत्यनेन समूलमुन्मूलनमुक्तम्; न तु प्रलय इव अविभागेनावस्थानम्। अत्र ब्रह्मणि लयोक्त्या तस्य तदुपादानत्वमुक्तम्। उपादानकारण एव लयस्य 'यतो वा इमानि भूतानि जायन्ते.... अभिसंविशन्ति' इति श्रुत्या बोधनात्। 'यस्य हि यत उत्पत्तिः तस्य तत्र लयो न्याय्यः, मृदीव शरावस्य। न च मनसो वागुत्पद्यते' इति शाङ्करभाष्याच्च ॥'

'किं च, अनुत्पत्तिकत्वे तस्या नाशानापत्तिः। तदुक्तं न्यायभाष्ये वात्स्यायनेन—'न चानुत्पत्तिधर्मकं किंचित् व्ययधर्मकं प्रतिज्ञातुं शक्यम्' इति। प्रागभावस्यापि न नाशः, उत्पत्त्यनन्तरं तत्प्राक्कालाभावेन तद्व्यवहाराभावोप-

पत्तेः। एवं जीवानामपि उपाधिवैशिष्ट्येन जन्यत्वमावश्यकम्। अत एव श्रुतौ लोहस्याग्नेः विस्फुलिङ्गा इव जीवा इत्युक्तम्। विशेष्यांशमादाय तेषां नित्यत्वोक्तिरपि। किं बहुना! घटादेरपि एवमेव जन्यत्वम्, तत्तदाकारादिविशिष्टब्रह्मण एव घटादित्वात् ॥'

'अविद्याया जन्यत्वादेव 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति श्रुतिः द्वन्द्वगर्भा ब्रह्मातिरिक्तसर्वत्वावच्छिन्नविषये एकरूपा भवति।' 'अविद्यायाश्च आध्यासिकसम्बन्धेन परमात्मैवाश्रयः तवातिरिक्ताविद्याया इव ॥'

'ध्वनितं चेदं अतिरिक्ताविद्याया असत्त्वं देवताधिकरणे कल्पतरुणा—

'भ्रमात् संस्कारतोऽप्यन्या मण्डूकमृदुदाहृतेः।
अविद्याऽनादिभावात्मा मता वाचस्पतेरिह ॥'

इत्यनेन। अत्र वाचस्पतेर्मतेत्यनेन सूत्रभाष्यकृतोः भ्रमतत्संस्काररूपैव अविद्येति मतं सूचितम्। इह—देवताधिकरणे। अनेन वाचस्पतेरपि अन्यत्र तत्पक्षाभिनिवेशस्सूचितः। वस्तुतः यथा मण्डूका मृदो निस्सरन्तीत्युदाहरणमपि वासनासमूहस्याविद्यात्वेन समूहादेकैकस्य निस्सरणेनोपपन्नम् ॥'

'अध्यासभाष्येऽपि 'युष्मदस्मदित्यादिना—अध्यासो मिथ्येति भवितुं युक्तम्' इत्यन्तेन ग्रन्थेन मिथ्याभूतेन अलीकेनाध्यासेन सकललोकशास्त्रव्यवहारानुपपत्तिरिति पूर्वपक्षं कृत्वा 'तथाप्यन्योन्यस्मिन् अन्योन्यात्मकतां अन्योन्यधर्मांश्च अध्यस्य इतरेतराविवेकेन अत्यन्तविविक्तयोः धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः' इति सिद्धान्तितम्। तस्यैव चाध्यासस्य प्रहाणाय अध्यात्मशास्त्रमिति तदर्थः। एतच्चाग्रे भाष्य एवोपपादितम्। अध्यस्येत्यस्यैव विवरणं 'सत्यानृते मिथुनीकृत्य' इति। इदं च 'मिथ्याज्ञाननिमित्त' इति प्रतीके 'मिथ्याज्ञानमध्यासः' इति व्याचक्षाणैः वाचस्पतिमिश्रैः स्पष्टीकृतम्। नैसर्गिकः इत्यनेन पूर्वपूर्वभ्रमजन्यः उत्तरोत्तरः संस्कारः ततश्च उत्तरोत्तरभ्रम इति सूचितम् ॥

यत्तु—'अध्यासः किंनिमित्तकः? तत्राह—मिथ्याज्ञाननिमित्त इति। मूलकारणाविद्यारूपभावपदार्थनिमित्तक इत्यर्थः। तच्च लोकव्यवहार इत्यस्य विशेषणम्। लोक्यते मनुष्योऽहमिति अभिमन्यते इति लोकः ज्ञानोपसर्जनः अर्थाध्यासः, तद्विषयः अध्यस्यमानार्थविषयः व्यवहार इति अर्थोपसर्जनो

ज्ञानाध्यासश्च उक्तः। स च उक्ताविद्यानिमित्तक इति। सा चाविद्या संस्कार-कालकर्मादिरूपेण परिणता अध्यासनिमित्तमिति वक्तुं निमित्तग्रहणम्, इति; तन्न—त्रयाणामपि अध्यासपदार्थत्वेन अध्यस्य मिथुनीकृत्येति क्त्वाप्रत्ययानुपपत्तेः। न च वस्तुनोऽभेदेऽपि अपौर्वापर्येऽपि विशेषणभेदेन वस्तुभेदं परिकल्प्य तत्प्रतिपत्तिक्रमेण पौर्वापर्यञ्च परिकल्प्य तदुपपत्तिरिति वाच्यम्; भेदकविशेषणानुपलम्भात्। प्रतिपत्तिक्रमाननुभवाच्च। रूढेर्योगापहारकत्वेन लोकव्यवहारपदयोः यथाकथंचित् स्वाभिमतयोगेन अध्यासपरतया व्याख्यानस्यानौचित्याच्च। तादृशव्याख्यानं विना भाष्यानुपपत्तेरभावाच्च॥'

'किं च, ज्ञानाध्यासः यथा प्रतिमादौ देवताध्यासः, यथा वा असन्निकृष्टे पर्वतादौ भ्रमात्मकवह्न्यनुमितौ विषयस्यासत्त्वेन योऽध्यासः इति वदन्ति नव्याः। तर्हि सर्वत्र तथैवास्तु, किमनेन द्वैविध्येन! किं चातिरिक्ताविद्याया अपि संस्कारादिरूपेण परिणामद्वारा कारणत्वेन लाघवात् क्लृप्तसंस्कारादृष्टैरेव उपपत्तौ तत्कल्पने मानाभावाच्च। वाचस्पतिमिश्रव्याख्याने तु अध्यस्येत्यनेन आनन्तर्यलाभेऽपि तस्य निमित्तत्वालाभात् तदुक्तिः। भ्रमरूपाध्यासेन कथं व्यवहार इति शङ्कापनयनाय च तदुक्तिः, मिथ्याज्ञानविषयेण रज्जुसर्पादिना भयपलायनादिव्यवहारवत् सर्वोऽपि व्यवहारः तन्निमित्तक इत्याशयः" इति॥

इयता ग्रन्थेन अनादिभावरूपाविद्या भगवत्पादानभिमता न केवलम्, भगवत्पादभाष्यादिनिबन्धविरुद्धा च, इति साग्रहं वदति नागेशभट्टः। तस्य भगवत्पादसिद्धान्ते न द्वेषः। तदभिमताद्वैतसिद्धान्तस्य स्वयं मञ्जूषायां बहुत्र पुरस्कारात्। किं तु, मूलाविद्यायामेव द्वेषः। स च द्वेषः भगवत्पादीयाद्वैतसिद्धान्तविद्वेषिविज्ञानभिक्षुप्रणीतानां साङ्ख्ययोगग्रन्थब्रह्मसूत्रभाष्यादिग्रन्थानां संसेवया जनिततदीयसिद्धान्तवासनावासितान्तःकरणत्वनिबन्धनः। स हि नागेशः विज्ञानभिक्षुसिद्धान्तं अद्वैतसिद्धान्तं च संकीर्णतया ग्रन्थे विलिखन् भगवत्पादे प्रेम पञ्चपादिकादिटीकाकर्तृषु च विद्वेषं प्रकाशयति। अहो तस्य सर्वतन्त्रार्थतत्त्वज्ञस्य सर्वसिद्धान्तसंकीर्णचित्तता नितरां शोचनीया!

तदास्ताम्। भगवत्पादानां तदनुयायिनां सुरेश्वरवाचस्पतिमिश्रादीनां च अनादिभावरूपा मूलाविद्या संमतेति तदीयग्रन्थमुखेन प्रथमं प्रदर्शयामः—

अदृश्यत्वाधिकरणे 'विशेषणभेदव्यपदेशाभ्याञ्च नेतरः' इति सूत्रे भाष्यम्--'तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति--'अक्षरात् परतः परः' इति। अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्मं ईश्वराश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात् परो योऽविकारः तस्मात् परतः पर इति भेदेन व्यपदेशात् परमात्मानमिह विवक्षितं दर्शयति। नात्र प्रधानं नाम किञ्चित् स्वतन्त्रं तत्वमभ्युपगम्य तस्यात् भेदव्यपदेश उच्यते। किं तर्हि--यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेन अव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत परिकल्प्यताम्, तस्मात् भेदव्यपदेशात् परमेश्वरो भूतयोनिः इत्येतदिह प्रतिपाद्यते' इति ॥

अत्र प्रकटार्थविवरणम्--'अव्याकृतं अनादिसिद्धं नामरूपयोः बीजस्य ईश्वरस्य शक्तिरूपं तत्पारतन्त्र्यात्। भूतानां विलीनानां सूक्ष्मं संस्काररूपं वर्तते अत्रेति भूतसूक्ष्मम्। ननु प्रधानात् ब्रह्मणो भेदं ब्रुवता तदिष्टं स्यादित्याशङ्क्याह--नात्र प्रधानमिति। तत्र मानाभावादित्यर्थः। तस्मात् अनाद्यनिर्वाच्यमायाख्यात् जगतस्तस्मिन् प्रधीयमानत्वेन प्रधानशब्दवाच्यात् अन्यः इश्वरोऽत्र प्रतिपिपादयिषितः' इति ॥

अत्र भाष्ये साङ्ख्याभ्युपेतप्रधानस्थानाभिषिक्ता ततुल्ययोगक्षेमा त्रिगुणा जगत्प्रकृतिः, परं तु ईश्वरपरतन्त्रा अनिर्वाच्यत्वेनासत्या अविद्या अभ्युपेता। साङ्ख्याभ्युपेतं प्रधानं अनादिभावरूपं भ्रान्तितत्संस्काराद्यतिरिक्तमित्यविप्रतिपन्नं 'मूलप्रकृतिरविकृतिः' इति साङ्ख्याभ्युपगमात्। स्वातन्त्र्यसत्यत्वाभावमात्रेण तु साङ्ख्याभ्युपेतप्रधानविलक्षणा त्रिगुणत्वजगत्प्रकृतित्वानादित्वादिप्रकारैस्तत्सलक्षणा च अविद्या एतद्भाष्यमालोचयतां स्फुटीभवेत् ॥

अयमेवार्थः आनुमानिकाधिकरणेऽपि भाष्ये स्फुटीकृतः--तत्र 'तदधीनत्वादर्थवत्' इति सूत्रे भाष्यमेवम्--'अत्राह--यदि जगदिदं अनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थमव्यक्तशब्दार्हमभ्युपगम्येत, तदात्मना च शरीरस्याप्यव्यक्तशब्दार्हत्वं प्रतिज्ञायेत, स एव तर्हि प्रधानकारणवादः एवं सत्यापद्येत, अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमादिति। अत्रोच्यते--यदि वयं स्वतन्त्रां काञ्चित् प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम प्रसञ्जयेम तदा प्रधानकारणवादम्, परमेश्वराधीना त्वियमस्माभिः प्रागवस्था

जगतोऽभ्युपगम्यते न स्वतन्त्रा, सा चावश्याभ्युपगन्तव्या। अर्थवती हि सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति। शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः। मुक्तानां च पुनरनुत्पत्तिः। कुतः? विद्यया तस्या बीजशक्तेर्दाहात्। अविद्यात्मिका हि बीजशक्तिः अव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः। यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः। तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति श्रुतेः। क्वचिदक्षरशब्दोदितम्—'अक्षरात् परतः परः' इति श्रुतेः। क्वचित् मायेति सूचितम्—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति मन्त्रवर्णात्। अव्यक्ता हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्।' इति॥

अत्र भामती—'नन्वेवं सति प्रधानमेवाभ्युपेतं भवति। सुखदुःखमोहात्मकं हि जगत् एवंभूतादेव कारणात् भवितुमर्हति कारणात्मकत्वात् कार्यस्य। यच्च तस्य सुखात्मकत्वं तत् सत्वम्, यच्च तस्य दुःखात्मकत्वं तद्रजः। यच्च तस्य मोहात्मकत्वं तत्तमः। तथा चाव्यक्तं प्रधानमेवाभ्युपेतमिति शंकानिराकरणार्थं सूत्रं 'तदधीनत्वादर्थवत्' इति। प्रधानं हि साङ्ख्यानां सेश्वराणां अनीश्वराणां वा ईश्वरात् क्षेत्रज्ञेभ्यो वा वस्तुतो भिन्नं शक्यं निर्वक्तुम्। ब्रह्मणस्त्वियमविद्याशक्तिः मायादिशब्दवाच्या न शक्या तत्त्वेनान्यत्वेन वा निर्वक्तुम्। इदमेवास्या अव्यक्तत्वं यदनिर्वाच्यत्वं नाम। सोऽयमव्याकृतवादस्य प्रधानवादात् भेदः। अविद्याशक्तेश्चेश्वराधीनत्वं तदाश्रयत्वात्। न च द्रव्यमात्रमशक्तं कार्यायालमिति शक्तेरर्थवत्त्वम्, तदिदमुक्तं—अर्थवदिति' इति।

अत्र 'जगतः सूक्ष्मावस्थाभ्युपगमः यद्यपि साङ्ख्यस्य सिद्धान्तिनश्चाविशिष्टः, तथापि परस्य सा स्वतन्त्रा सेश्वरसाङ्ख्यस्यापि सा परमात्मनस्सकाशात् परमार्थतो भेदवती। सिद्धान्ते तु परमात्मनि स्वरूपेण कल्पितेत्यस्ति विशेषः इति अत्रोच्यते इत्यादिपरिहाराभिप्रायः। प्रागवस्था जगत इति—जगत्प्रागवस्थाश्रयाविद्येत्यर्थः' इति ब्रह्मविद्याभरणम्॥

चमसाधिकरणे 'अजामेकाम्' इति मन्त्रे सूत्रानुरोधेन तेजोऽबन्नलक्षणा प्रकृतिः अजारूपकेण निर्दिष्टा इति पक्षमभिधाय मूलप्रकृतिरजेति मुख्यसिद्धान्तः प्रकरणानुरोधेन कथितो भाष्ये—'तथेहापि 'ब्रह्मवादिनो वदन्ति—किं-

कारणं ब्रह्म' इत्युपक्रम्य 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति पारमेश्वर्याश्शक्तेः समस्तजगद्विधायिन्याः वाक्योपक्रमे अवगमात्, वाक्यशेषेऽपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'यो योनिं योनिमधितिष्ठत्येकः' इति च तस्या एवावगमात्, न स्वतन्त्रा काचित् प्रकृतिः प्रधानं नाम अजामन्त्रेणाम्नायत इति शक्यं वक्तुम्। प्रकरणात्तु सैव दैवी शक्तिः अव्याकृतनामरूपा नामरूपयोः प्रागवस्था अनेनापि मन्त्रेण आम्नायत इत्युच्यते' इति। अत्रापि सिद्धान्त्यभिमतायाः अविद्याख्यमूलप्रकृतेः साङ्ख्याभिमतप्रधानापेक्षया वैलक्षण्यं ईश्वरपारतन्त्र्यमात्रमिति स्फुटम् ॥

अदृश्यत्वाधिकरणे भामत्यां पूर्वपक्षोपपादनसन्दर्भे 'भूतयोनिस्तु अक्षरं प्रधानमेव। तच्च साङ्ख्याभिमतमेवास्तु। अथ तस्याप्रामाणिकत्वात् न तत्र परितुष्यति, अस्तु तर्हि नामरूपबीजशक्तिभूतं अव्याकृतं भूतसूक्ष्मम्, प्रधीयते हि तेन विकारजातमिति प्रधानम्। तत् खलु जडमनिर्वाच्यं अनिर्वाच्यस्य जडस्य प्रपञ्चस्य उपादानं युज्यते सारूप्यात्। न तु चिदात्मा निर्वाच्यः, विरूपो हि सः' 'स्यादेतत्—स्मार्तप्रधाननिराकरणेनैव एतदपि निराकृतप्रायं तत् कुतोऽस्य शङ्केत्यत आह—अपि च पूर्वत्रादृष्टत्वादीति' इति ग्रन्थेन अविद्यायाः साङ्ख्यीयप्रधानतुल्यत्वं ईश्वरशक्तित्वतदभावमात्रात् भेद इति स्फुटीकृतम् ॥

ईक्षत्यधिकरणे 'पारमार्थिकप्रधानक्षेत्रज्ञातिरिक्त ईश्वरः' इति भामतीवाक्यं व्याचक्षाणः कल्पतरुकारः 'सिद्धान्तेऽपि अनिर्वाच्या त्रिगुणा अस्ति माया तत उक्तम्—पारमार्थिकेति' इत्याह। तेन पारमार्थिकत्वतदभावाभ्यामेव तयोर्भेदः इति स्फुटीभवति ॥

द्युभ्वाद्यधिकरणेऽपि भामत्यां पूर्वपक्षसन्दर्भे 'यदि तु अस्मिन् (साङ्ख्यीयप्रधाने) प्रमाणाभावेन न परितुष्यसि अस्तु तर्हि नामरूपबीजशक्तिभूतं अव्याकृतं भूतसूक्ष्मं द्युभ्वाद्यायतनम्, तस्मिन् प्रामाणिके सर्वस्योक्तस्योपपत्तेः। एतदपि प्रधानोपन्यासेन सूचितम्।' इति वदन् वाचस्पतिमिश्रः अप्रामाणिकं श्रुत्यसंमतं प्रधानं परित्यज्य तत्स्थाने श्रुतिसंमतं प्रामाणिकं अविद्याख्यमव्याकृतं उपन्यस्य तत्र द्युभ्वाद्यायतनत्वजगत्प्रकृतित्वादिधर्मजातमुपपन्नं आचक्षाणः प्रधानवदेव अनादिभावरूपामविद्यामभिप्रैति। ज्ञानाभावभ्रम-

तत्संस्कारादेः नागेशाभिमताविद्यायाः जगदुपादानत्वजगदायतनत्वादीनामसंभावितत्वात् ॥

योगप्रत्युक्त्यधिकरणे भाष्यम्—'तत्रापि श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं महदादीनि च कार्याणि अलोकवेदप्रसिद्धानि कल्प्यन्ते' इति। अत्र अनादिभावरूपस्य प्रधानस्य स्वातन्त्र्यं परित्यज्य ईश्वरपारतन्त्र्यमभ्युपगम्य जगत्प्रकृतित्ववर्णने श्रुत्यविरोध इति सूचनात् अविद्याया अनादित्वे भाष्यसंमतिः स्फुटा। तत्रैव भामत्यामपि 'योगशास्त्रस्य जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदादिगोचरं प्रामाण्यं नास्तीत्युच्यते' इति भाष्याभिप्रायः स्फुटीकृतः ॥

नविलक्षणत्वाधिकरणे भाष्ये—'यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ मिथ्याज्ञानस्यानपोदितत्वात् पूर्ववत् पुनः प्रबोधे विभागो भवति एवमिहापि भविष्यति' इति, 'यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवदव्याहतः स्थितौ दृश्यते एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते' इति च उक्तम्। अत्र भाष्ये सुषुप्तिसमाध्यपीतिषु विद्यमानत्वेन वर्णितं मिथ्याज्ञानं न नागेशाभिमतं मिथ्याभूतं ज्ञानमिति व्युत्पत्त्या भ्रान्तिज्ञानं भवितुमर्हति, तस्य तदानीमसम्भवात्। अपि तु मिथ्या च तत् अज्ञानं चेति विग्रहेण अनादिभावरूपमेवाज्ञानं अकामेनापि नागेशेन एष्टव्यम्। अनेन मिथ्याज्ञानपदप्रयोगस्थले मिथ्या च तत् अज्ञानं च मिथ्याज्ञानमिति मिथ्याज्ञानपदव्युत्पत्तिः भाष्यकारसम्मता इति ज्ञातव्यम्। अत्र 'अविद्याशक्तेर्नियतत्वादुत्पत्तिनियम इत्यर्थः' इति भामत्यपि अनादिभावरूपाज्ञानाभिप्रायैव ॥

उत्क्रान्त्यधिकरणे भाष्यम्—'दर्शयति च सुषुप्तादुत्थानं अविद्यात्मकबीजसद्भावकारितं 'सति संपद्य न विदुस्सति सम्पद्यामह इति, त इह व्याघ्रो वा सिंहो वा' इत्यादिना' इति। अत्रापि भ्रान्त्यतिरिक्तं मूलाज्ञानमुक्तम्। बीजपदमुपादानपरम्। उपादानत्वं च मूलाज्ञानस्यैव युज्यते ॥

तदन्तरप्रतिपत्त्यधिकरणभाष्ये—'जीवः मुख्यप्राणसचिवः सेन्द्रियः समनस्कः अविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते' इत्युक्तम्। अत्राविद्या न भ्रान्तिज्ञानम्, तस्य देहान्तरप्रतिपत्तिसमये अभावात्।

नापि तत्संस्कारः, तस्य पूर्वप्रज्ञापदेन पृथगुक्तेः। पूर्वप्रज्ञा जन्मान्तरीयसंस्कार इति व्याख्यातृभिः व्याख्यातत्वात्। विद्येति पाठे उपासना विवक्षिता।

साङ्ख्याभ्युपेता त्रिगुणा मूलप्रकृतिरेव तदभिमतस्वातन्त्र्यादिविरुद्धांशपरित्यागेन औपनिषदसिद्धान्तेऽपीष्यते इत्येतत् भगवद्गीतातद्भाष्यपरामर्शिनां विशदमवगम्यते। तथा च तस्या अनादित्वविषये संशयः कथमुदभूत् तद्दर्शिनां पण्डितानां नागेशप्रभृतीनामिति चित्रीयते चेतः। साङ्ख्यदर्शनं च अविरुद्धांशे प्रमाणमिति भगवतैवोक्तम्। तथा हि—

'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ (18-19-)

इति श्लोकस्य भगवत्पादीयं भाष्यम्-'गुणसङ्ख्याने—कापिले शास्त्रे। तदपि गुणसङ्ख्यानशास्त्रं गुणभोक्तृविषये प्रमाणमेव। परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते तथापि। ते हि कापिलाः गुणगौणव्यापारनिरूपणे अभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेनोपादीयत इति न विरोधः' इति ॥

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥ (13-5-)

इत्यत्र भाष्ये 'तान्येतानि साङ्ख्याः चतुर्विंशतितत्त्वान्याचक्षते' इत्युक्तम्॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ (7-4)

इत्यत्र साङ्ख्योक्तरीत्यैव प्रकृत्यष्टकमुपवर्णितम्। परं तु, अव्यक्तपदार्थनिरूपणावसरे 'मूलप्रकृतिरूपं अव्यक्तं अव्याकृतं अनिर्वचनीयं ईश्वरशक्तिरूपमायात्मकम्' इत्यनेन साङ्ख्याभिमतप्रकृतितो विशेष उक्तः। तत्र साङ्ख्यस्य मते अनादिः अस्मन्मते सादिरिति विशेषो नोक्तः। एतेन नागेशमतं भगवत्पादानभिमतमिति स्फुटम्॥

न केवलमनभिमतं, प्रत्युत नागेशमतं प्रतिक्षिप्तमपि। तथाहि—'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि' इत्यत्र भाष्ये—'न आदी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति। तेन हि किल ईश्वरस्य कारणत्वं सिध्यति। यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगत् नेश्वरस्य जगतः

कर्तृत्वम्, इति; तदसत्—प्राक् प्रकृतिपुरुषयोरुत्पत्तेः ईशितव्याभावात् ईश्वरस्यानीश्वरत्वप्रसङ्गात्। संसारस्य निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गात् शास्त्रानर्थक्यप्रसङ्गात् बन्धमोक्षाभावप्रसङ्गाच्च। नित्यत्वे पुनरीश्वरप्रकृत्योः सर्वमेतदुपपन्नं भवेत्' इति प्रकृतेः सादित्वमतं विशिष्य निरस्तम्॥

साङ्ख्याभिमतं प्रकृतिविकृतिरूपं महदहङ्कारतन्मात्रसप्तकं यद्यपि औपनिषदसिद्धान्ते नेष्यते। अत एव 'महद्वच्च' (1-4-7) 'इतरेषां चानुपलब्धेः' (2-1-2) इति सूत्रयोः भाष्ये तन्निरासः कृतः। औपनिषदसिद्धान्ते तु साङ्ख्योक्तभूतविलक्षणपञ्चतन्मात्रस्थाने अपञ्चीकृतसूक्ष्मभूतपञ्चकं, महत्तत्त्वस्थाने 'तदैक्षत' इति श्रुत्युक्तं पारमेश्वरं मायावृत्तिरूपमीक्षणं, अहङ्कारस्थाने च 'बहु स्यां प्रजायेय' इति श्रुत्युक्तः परमेश्वरस्य मायावृत्तिरूपो बहुभवनसङ्कल्पः अभ्युपगतः। स्पष्टमिदं गीतागूढार्थदीपिकायां मधुसूदनसरस्वतीप्रणीतायाम्। अथापि क्वचित् क्वचित् प्रौढवादितया साङ्ख्यीयं महदहङ्कारादिकं भाष्येऽपि वर्णितम्। अत एव इन्द्रियाणां सिद्धान्ते भौतिकत्वाङ्गीकारेऽपि साङ्ख्योक्तमाहङ्कारिकत्वमपि अभ्युपेत्य 'अथ तु अभौतिकानि' इत्यादि व्यपदिश्यते 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात' इति सूत्रभाष्ये। सर्वथा मायाशक्तिरूपा मूलप्रकृतिः अविद्याख्या साङ्ख्याभिमतप्रधानवदेव अनादिरित्यत्र औपनिषदसिद्धान्ते न विमतिलेशोऽपि॥

'अहंकारवासनावदव्यक्तं मूलकारणं अहङ्कार इत्युच्यते' 'भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्य उत्पत्तिबीजं अनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयः अक्षरः पुरुष उच्यते', 'स्वभावः ईश्वरस्य प्रकृतिः त्रिगुणात्मिका माया, अथ वा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः प्रभवः येषां गुणानाम्' इत्यादिभिः वाक्यैः भाष्ये संस्कारातिरिक्तमज्ञानं प्रकटीकृतम्। अत्र 'मायाशक्तिं विना भोक्तॄणां कर्मादिसंस्कारादेव क्षराख्योक्तकार्योत्पत्तिरित्याशङ्क्य तस्य निमित्तत्वेऽपि मायाशक्तिरुपादानमिति मत्वा आह—अनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयः अक्षरः पुरुष इति। कामकर्मादीत्यादिशब्देन ज्ञानं गृह्यते' 'वासना कारणमिति गुणव्यक्तेः निमित्तकारणं विवक्षितं प्रकृतिस्तूपादानम्' इति आनन्दगिरिटीकया भ्रान्तितत्संस्कारातिरिक्ता अविद्या विशदीकृता॥

'भूतग्रामबीजभूतात् अविद्यालक्षणात् अव्यक्तात् परः' 'त्रिगुणात्मिका अविद्यालक्षणा प्रकृतिः सूयते सचराचरं जगत्' 'प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते' 'प्रकृतावविद्यालक्षणायां कार्यकरणाकारेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येतत्' 'सम्यग्दर्शनफलं अविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभावः' 'प्रकृत्यैव च महदादिकार्यकरणाकारपरिणतया' 'मम स्वभूता माया त्रिगुणात्मिका प्रकृतिः योनिः सर्वभूतानां कारणम्, सर्वकार्येभ्यो महत्त्वात् भरणाच्च स्वविकाराणां महत् ब्रह्मेति योनिरेव विशेष्यते' 'कार्यं शरीरं करणानि तत्स्थानि त्रयोदश तेषां कर्तृत्वमुत्पादकत्वं तस्मिन् हेतुः कारणं आरम्भकत्वेन प्रकृतिरुच्यते' इत्यादिभिः गीताभाष्यगतैः वाक्यैः प्रपञ्चपरिणामिनी प्रपञ्चानुगता दण्डायमाना अनाद्यविद्या स्फुटीक्रियते। भ्रान्तितत्संस्कारादीनां तथाभावासम्भवात् ॥

'अविद्यायाः तामसत्वात्। तामसो हि प्रत्ययः आवरणात्मकत्वात् अविद्या विपरीतग्राहकः संशयोपस्थापको वा अग्रहणात्मको वा' इति गीताभाष्यम्। अत्रानन्दगिरिटीका—'अग्रहविपरीतग्रहसंशयरूपं त्रितयं अविद्याप्रयुक्तत्वात् विद्यापोह्यत्वाच्च अविद्या। तच्च वस्तुनि सम्यक्प्रकाशप्रतिबन्धकत्वादावरणात्मकम्। तमश्शब्दितं प्रपञ्चोपादानं अनाद्यनिर्वाच्यमज्ञानं 'अज्ञोऽहम्' इत्यनुभवात् स्वापे च अज्ञानपरामर्शात्तदवगमात् कार्यलिङ्गकानुमानात् आगमाच्च सिद्धम्' इति। ग्रहणस्य प्रत्ययात्मकत्वात् तत्प्रागभावस्य तत्सूक्ष्मावस्थातिरिक्तस्य सिद्धान्ते अनभ्युपगमात् अग्रहणस्य ग्रहणप्रागभावरूपस्य प्रत्ययात्मकत्वमुपपद्यते। अग्रहादित्रितयातिरिक्तं तत्प्रयोजकं तमश्शब्दितमज्ञानं अत्र भाष्ये प्रदर्शितम्। एतेन अग्रहादित्रयव्यतिरिक्तमज्ञानं भगवत्पादैर्नाङ्गीकृतमिति केषांचित् वादो निरस्तः ॥

बाह्यं तमः भावरूपमिष्टं भगवत्पादानाम्। न तु वैशेषिकादीनामिव अभावरूपम्। अत एव ज्योतिश्चरणाधिकरणभाष्यम्—'तमो ज्योतिरिति हीमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ। चक्षुर्वृत्तेर्निरोधकं शार्वरादिकं तम उच्यते। तस्या एवानुग्राहकं आदित्यादिकं ज्योतिः' इति। अत्र भामती—'चक्षुर्वृत्तेर्निरोधकमिति। अर्थावरकत्वेन' इति। अत्र कल्पतरुः—'अर्थावर-

कत्वेनेति। अनुद्भूतस्पर्शवत्त्वेन तमसः नयनरश्मिनिर्गमनप्रतिबन्धकत्वायोगात् अर्थप्रकाशनप्रतिबन्धकत्वेन निरोधकत्वं तमस इत्यर्थः ' इति । प्रकटार्थविवरणे—' चक्षुर्वृत्तेर्निरोधकमिति भावरूपत्वमाह । तमो भावः आवरणत्वात् कुड्यवदिति प्रयोगः । शार्वरादिकमिति रूपविशेषं लक्षयति । तमो द्रव्यं रूपवत्त्वात् मेघवदिति ' इति। बाह्यतमसः भावरूपत्वेन आन्तरतमोरूपमज्ञानमपि भावरूपमिति द्योतयितुमेव ' तामसो हि प्रत्ययः ' इत्यत्र अज्ञानस्य तमश्शब्देन निर्देशः भाष्ये ॥

' क्रियाकारकफलभेदबुद्धिरविद्यया आत्मनि नित्यप्रवृत्ता ' इति गीताभाष्यवचने भ्रान्तिरूपभेदबुद्धेरन्या तत्प्रयोजिका मूलाविद्या प्रदर्शिता। 'अविद्यादिसंसारबीजम्' इत्यत्र 'अविद्या अनाद्यनिर्वाच्यमज्ञानं, मिथ्याज्ञानं तत्संस्कारश्च आदिशब्दार्थः' इति व्याचक्षाणः आनन्दगिरिः मूलाविद्यां भाष्यार्थत्वेन आह ॥

' देहचैतन्यवादिनश्च लोकायतिकाः चैतन्यविशिष्टः कायः पुरुष इत्याहुः । तथा अन्ये इन्द्रियचैतन्यवादिनः। अन्ये मनश्चैतन्यवादिनः। अन्ये बुद्धिचैतन्यवादिनः । ततोऽप्यान्तरमव्यक्तमव्याकृताख्यमविद्यावस्थमात्मत्वेन प्रतिपन्नाः केचित्' इति गीताभाष्यम्। अत्र अव्यक्तशब्देन बुद्धिधर्मभ्रान्त्याद्यतिरिक्तमनाद्यज्ञानं विवक्षितम्। किं बहुना ! गीताभाष्ये आदित आरभ्य आन्तं ' त्रिगुणात्मिका वैष्णवी माया मूलप्रकृतिः स्वो भावः अविद्यालक्षणा प्रकृतिः अव्याकृतं ईश्वरशक्तिः भूतानां प्रकृतिः अविद्यालक्षणा ' इत्यादिशब्दैः पौनःपुन्येन मूलाविद्या निर्दिष्टा ॥

एवमेवोपनिषद्भाष्येऽपि मूलाविद्या अभ्यस्ता। तत्र ईशावास्योपनिषद्भाष्ये—'आत्मविषयमज्ञानं निवर्तयन्तः एते मन्त्राः' इत्युक्त्या ज्ञानवत् सविषयं अज्ञानं भावरूपं अभावातिरिक्तमावेद्यते। 'शुद्धं निर्मलं अविद्यामलरहितमिति कारणशरीरप्रतिषेधः ' इति अज्ञानस्य कारणशरीरत्वकीर्तनेन स्थूलसूक्ष्मशरीरवदेव भावरूपत्वं स्थूलादिशरीररूपेण परिणामिकारणत्वेन मिथ्याज्ञानादिव्यतिरिक्तत्वं च प्रदर्शितम्। 'विद्याया अन्या अविद्या' इत्युक्त्या विद्याविरोधित्वम्, न तु विद्याऽभावत्वमिति सूचितम्। 'सम्भवनं सम्भूतिः सा यस्य कार्यस्य सा सम्भूतिः तस्या अन्या असम्भूतिः प्रकृतिः कारणमविद्या अव्याकृताख्या कामकर्मबीजभूता अदर्शनात्मिका ' इति कथनेन अविद्याया अनादित्वमुपादानत्वं चावेदितम्।

'प्रकृतिलयः इति च पौराणिकैरुच्यते' इत्युक्त्या लयाधिकरणं भ्रान्तिज्ञानादिभिन्नं सूचितम् ॥

केनोपनिषद्भाष्ये 'अविदितात् विदितविपरीतात् अव्याकृतात् अविद्यालक्षणात् व्याकृतबीजात् अन्यत्' इति अज्ञानस्य जगद्बीजत्वेनानादितोक्ता ॥

कठोपनिषद्भाष्ये 'महतः परमव्यक्तं सर्वस्य जगतो बीजभूतं अव्याकृतनामरूपसतत्त्वं सर्वकार्यकारणशक्तिसमाहाररूपं अव्यक्ताव्याकृताकाशादिनामवाच्यं परमात्मन्योतप्रोतभावेन समाश्रितं वटकणिकायामिव वटवृक्षशक्तिः' 'अनाद्यविद्याप्रसुप्ताः उत्तिष्ठत हे जन्तवः! जाग्रत–अज्ञाननिद्रायाः घोररूपायाः सर्वानर्थबीजभूतायाः क्षयं कुरुत' इत्यादिवाक्यैः ;

मुण्डकोपनिषद्भाष्ये 'अक्षरात् नामरूपबीजोपाधिलक्षितस्वरूपात् सर्वकार्यकारणबीजत्वेन उपलक्ष्यमाणत्वात् परं तत् उपाधिलक्षणमव्याकृताख्यमक्षरं सर्वविकारेभ्यः तस्मात् परतोऽक्षरात् परः निरुपाधिकः पुरुष इत्यर्थः । यस्मिंस्तत् आकाशाख्यमक्षरं संव्यवहारविषयं ओतं प्रोतं च' 'अव्यक्तमूलप्रभवं क्षेत्रसंज्ञकं वृक्षं परिष्वक्तौ सुपर्णाविव अविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ' इत्यादिवाक्यैः ;

प्रश्नोपनिषद्भाष्ये 'अविद्याकृतकलानिमित्तो हि मृत्युः, तदपगमे अकलत्वादेव अमृतो भवति' इति वाक्येन च मूलाविद्या प्रकटीकृता । न हि भ्रान्तितत्संस्कारादेः पराभिमताविद्यायाः प्राणादिकलालक्षणजगदुपादानत्वं सम्भवति ॥

माण्डूक्योपनिषद्भाष्ये 'यच्चान्यत् त्रिकालातीतं कार्याधिगम्यं कालापरिच्छेद्यं अव्याकृतादि तदप्योङ्कार एव' 'ज्ञानदाह्यबीजाभावे ज्ञानानर्थक्यप्रसङ्गः' 'बीजावस्थाऽपि न किंचिदवेदिषमिति उत्थितस्य प्रत्ययदर्शनात् देहे अनुभूयत एव' 'यथा रज्ज्वां प्राक् सर्पोत्पत्तेः रज्ज्वात्मना सर्पस्सन्नेवासीत् एवं सर्वभावानां उत्पत्तेः प्राक् प्राणबीजात्मनैव सत्त्वम्' 'अपरमार्थरूपं अविद्याकृतं रज्जुसर्पादिसममुक्तं पादत्रयलक्षणम्' 'योऽयं संसारी जीवः सः उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना अन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वापेन सुप्तः' 'लीयते सुषुप्तौ मनः सर्वाभिरविद्यादिप्रत्ययबीजवासनाभिस्सह तमोरूपमविशेषरूपं बीजभावमापद्यते' 'अविद्यानिमित्तं

हि जन्म रज्जुसर्पवदित्यवोचाम सा चाविद्या आत्मसत्यानुबोधेन निरुद्धा यतः अतोऽजं अत एवानिद्रं अविद्यालक्षणानादिमायानिद्रास्वापात् प्रबुद्धम्' 'ग्रहणाग्रहणे हि रात्र्यहनी तमश्चाविद्यालक्षणं सदा अप्रभातत्वे कारणं तदभावात् नित्यचैतन्यभारूपत्वाच्च युक्तं सकृद्विभातमिति' इत्यादिवाक्यैः सुषुप्तावनुभूयमानमज्ञानं जगद्बीजं तत्त्वाप्रतिबोधतमआदिशब्दितं वासनातिरिक्तं अग्रहणापेक्षयाऽपि भिन्नं अवगम्यते ॥

तैत्तिरीयोपनिषद्भाष्ये 'परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणया अविद्यया अन्नमयादीन् बाह्याननात्मनः आत्मत्वेन प्रतिपन्नत्वात् अन्नमयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते। एवमविद्यया आत्मभूतमपि ब्रह्मानाप्तं स्यात्।' अत्र 'परमार्थं ब्रह्मस्वरूपं नास्तीत्यभावदर्शनं आवरणं लक्षणं लिङ्गं यस्यास्सा तथोक्ता' इत्यानन्दगिरिटीका। 'परमे प्रकृष्टे व्योम्नि आकाशे अव्याकृताख्ये। तद्धि परमं व्योम। 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः' इत्यक्षरसन्निकर्षात्।' इत्यादिवाक्यैः मूलाविद्या निर्दिष्टा ॥

छान्दोग्योपनिषद्भाष्ये—'उद्यन् नैशं तमः तज्जं च भयं प्राणिनामपहन्ति आदित्यः, तमेवंगुणं सवितारं यो वेद सोऽपहन्ता नाशयिता ह वै भयस्य जन्ममरणादिलक्षणस्यात्मनः तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति' 'नासि त्वं संसारी अमुष्यपुत्रत्वादिधर्मवान्। किं तर्हि सत् यत् तत् त्वमसीत्यविद्यामोहपटाभिनहनात् मोक्षितः गन्धारपुरुषवच्च स्वं सदात्मानमुपसम्पद्य सुखी निर्वृतः स्यात्।' 'हार्दाकाशे सत्याः कामाः वर्तन्ते अनृतापिधानाः' 'अनृतेन यथोक्तेन प्रत्यूढाः हृताः स्वरूपात् अविद्यादिदोषैः बहिरपकृष्टा इत्यर्थः' इत्यादिवाक्यानि अनाद्यविद्यागमकानि ॥

बृहदारण्यकोपनिषद्भाष्ये अविद्यागमकानि वाक्यानि प्रदर्श्यन्ते— 'आत्मनः इष्टानिष्टप्राप्तिपरिहारेच्छाकारणं आत्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणम्' इति भाष्यम्। अत्र टीका—'आत्माज्ञानं खलु अनर्थकारणं अन्वयव्यतिरेकशास्त्रगम्यं मिथ्याज्ञानकार्यलिङ्गकञ्च' इति ॥

'स एष बीजाङ्कुरादिवदविद्याकृतः संसारः आत्मनि क्रियाकारकफलाध्यारोपलक्षणः अनादिरनन्तोऽनर्थः' 'सोऽयं व्याकृताव्याकृतरूपस्संसारः अविद्याविषयः क्रियाकारकफलात्मकतया आत्मरूपत्वेनाध्यारोपितोऽविद्ययैव

मूर्तामूर्ततद्वासनात्मकः।' अत्र टीका—अविद्याविषयः—भ्रान्तिविषयः। समारोपे मूलकारणमाह—अविद्ययेति' इति। अत्र भाष्ये अविद्याविषय इति भ्रान्तिपरम्, अविद्ययेति तत्कारणीभूतानाद्यज्ञानपरम्। वासनातिरिक्तमज्ञान-मत्रोक्तम् ॥

'अथैतस्य साध्यसाधनलक्षणस्य व्याकृतस्य जगतः व्याकरणात् प्राक् बीजावस्था या तां निर्दिदिक्षति अङ्कुरादिकार्यानुमितामिव वृक्षस्य। कर्मबीजोऽ-विद्याक्षेत्रो ह्यसौ संसारवृक्षः समूल उद्धर्तव्यः इति।' अत्र टीका—बीजावस्था—साभासप्रत्यगविद्या तस्याः निर्देष्टुमिष्टत्वमेव न साक्षात् निर्देश्यत्वं अनि-र्वाच्यत्वात् इति वक्तुं निर्दिदिक्षतीत्युक्तम्' इति ॥

'यदर्थः सर्वशास्त्रारम्भः। यस्मिन्नविद्यया स्वाभाविक्या कर्तृक्रिया-फलाध्यारोपणा कृता। यः कारणं सर्वस्य जगतः। यदात्मके नामरूपे सलिलादिव स्वच्छात् मलमिव फेनं अव्याकृते व्याक्रियेते।' अत्र टीका—'अध्यासस्य चतुर्विधख्यातीनामन्यतमत्वं वारयति–अविद्ययेति। तस्या मिथ्या-ज्ञानत्वेन सादित्वात् अनाद्यध्यासहेतुत्वासिद्धिरित्याशङ्क्याह–स्वाभाविक्येति। विद्याप्रागभावत्वमविद्याया व्यावर्तयति—कर्त्रिति। न हि तदुपादानत्वमभावत्वे सम्भवति। न च उपादानान्तरमस्तीति भावः' इति, 'स पुनरनाद्यनिर्वाच्या-ज्ञानसम्बन्धात् तज्जन्यैः बुद्ध्यादिभिः ऐक्याध्यासमापन्नस्संसरति' इति च ॥

'ब्रह्मण्यध्यारोपितमविद्यया अब्रह्मत्वमसर्वत्वं च ब्रह्मविद्यया निवर्त्यते' 'न हि शुक्तिकायां रजताध्यारोपणे असति शुक्तिकात्वं ज्ञाप्यते चक्षुर्गोचरा-पन्नायां इयं शुक्तिका न रजतमिति, तथा 'सदेवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' नेदं द्वैतमस्ति अब्रह्मेति ब्रह्मण्येकत्वविज्ञानं न विधातव्यं ब्रह्मण्यविद्याध्यारोपणायामसत्याम्'। अत्र टीका—'मिथ्याज्ञानस्याज्ञानाव्यति-रेकात् ब्रह्मण्यविद्याध्यारोपणायां शुक्तौ रूप्यारोपणं दृष्टान्तितमिति द्रष्टव्यम्' इति ॥

'भवत्वेवं नाविद्याकर्तृ भ्रान्तञ्च ब्रह्म'। अत्र टीका–'अनादित्वाद-विद्यायाः कर्त्रपेक्षाऽभावात् विना च द्वारं ब्रह्मणि भ्रान्त्यनभ्युपगमादित्यर्थः' इति। 'यत्र पुनर्विद्यायां सत्यां अविद्याकृतानेकत्वभ्रमप्रहाणं तत् केन कं पश्येदिति कर्मासम्भवं दर्शयति'। 'ननु अविद्या सा। (प्रवर्तिका) अविद्यावान् हि

बहिर्मुखीभूतः प्रवर्तते। सापि नैव प्रवर्तिका। वस्तुस्वरूपावरणात्मिका हि सा। प्रवर्तक(काम)बीजत्वं तु प्रतिपद्यते' 'अविद्या प्रस्तुता। तत्र अविद्वान् अन्यां देवतां उपास्ते अन्योऽसावन्योऽहमस्मीति'। अत्र टीका–उपास्तिशब्दितं भेददर्शनं अविद्याकार्यं अनेनानूद्य 'न स वेद' इति तद्धेतुरविद्या पूर्वत्र प्रस्तुतेति योजना' इति॥

'यस्तु भेददृष्टिविषयः सः अन्योऽसावन्योऽहमस्मीति न स वेदेति अविद्याविषयः'। अत्र टीका—'यो भेददृष्टिपरः स न वेदेति अविद्या तद्दृष्टिमूलं सूत्रिता। तेन तद्विषयः भेददृष्टिविषय इत्यर्थः' इति॥

'एतावन्मात्रमेवात्मेति विज्ञानवादिनो वैनाशिका यत्र भ्रान्ताः। एतदेव वासनारूपं पटरूपवदात्मनो द्रव्यस्य गुण इति नैयायिका वैशेषिकाश्च सम्प्रतिपन्नाः। इदमात्मार्थं त्रिगुणं स्वतंत्रं प्रधानाश्रयं पुरुषार्थेन हेतुना प्रवर्तत इति साङ्ख्याः।' अत्र टीका 'एतावन्मात्रं–बुद्धिमात्रम्' इति। अत्र बुद्धिवासनाप्रधानानां भेदेन निर्देशः। तत्र बुद्धितद्वासनातिरिक्तं प्रधानं परतन्त्रे, सिद्धान्ते अविद्या। 'यत् ब्रह्मक्षत्रादि कर्मनिमित्तं वर्णश्रमादिलक्षणं आत्मन्यविद्याध्यारोपितप्रत्ययविषयं क्रियाकारफलात्मकमविद्याप्रत्ययविषयं रज्ज्वामिव सर्पप्रत्ययः'। अत्र टीका—आत्मन्यविद्यया अध्यारोपितस्य प्रत्ययः मिथ्याज्ञानं तस्य विषयतया स्थितं क्रियाद्यात्मकम्' इति। 'खिल्यभावः कार्यकरणभूतोपाधिसम्पर्कभ्रान्तिजनितः परमात्मनि अविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशितः॥'

'अज्ञानमेव निवर्तयतीति चेत्, न––विलक्षणत्वात्। अनभिव्यक्तिरज्ञानं अभिव्यक्तिलक्षणेन ज्ञानेन विरुध्यते। कर्म तु नाज्ञानेन विरुध्यते। तेन ज्ञानविलक्षणं कर्म। यदि ज्ञानाभावः यदि संशयज्ञानं यदि विपरीतज्ञानं वोच्यते अज्ञानमिति, सर्वं हि तत् ज्ञानेनैव निवर्त्यते, न तु कर्मणा अन्यतमेनापि विरोधाभावात्।' अत्र भाष्ये–'अनभिव्यक्तिशब्देन अनाद्यनिर्वाच्यमज्ञानमुक्तम्। यदीत्यादिवाक्ये ज्ञानाभावसंशयविपरीतज्ञानानां अनाद्यज्ञानप्रयुक्तानां अत एव अज्ञानपदव्यपदेश्यानां उक्तिः; न तु तदेव त्रितयं अज्ञानपदव्यपदेश्यं तत्प्रयोजकमतिरिक्तमज्ञानं नास्ति इति तात्पर्यमस्य भाष्यस्येति बोध्यम्। अत एव गीताभाष्येऽपि––'तामसो हि प्रत्ययः आवरणात्मकत्वात्

अविद्या विपरीतग्राहकः संशयोपस्थापको वा अग्रहणात्मको वा' इत्यत्र तमश्शब्देन अग्रहणादित्रितयव्यतिरिक्तमनाद्यज्ञानमुक्तमिति पूर्वमेवास्माभिरुक्तम्। एतेन—एतदेव भाष्यं अग्रहणाद्यतिरिक्ताज्ञानाभावे प्रमाणयन्तः केचिदाधुनिकाः परास्ताः॥

'मोहः विपरीतप्रत्ययप्रभवः अविवेकः भ्रमः। सा चाविद्या सर्वस्यानर्थस्य प्रसवबीजम्' इति भाष्ये अनर्थहेतुभूता कार्याविद्या प्रदर्शिता। तत्र कारणाविद्या नास्तीति न तात्पर्यं तस्य भाष्यस्य। अत एव तत्र टीका— 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः विपरीतप्रत्ययः। तस्मात् मनसि प्रभवति कर्तव्याकर्तव्याविवेकः। स लौकिकैः सम्यग्ज्ञानविरोधात् भ्रमः अविद्येत्युच्यते। तस्याः सर्वानर्थोत्पत्तौ निमित्तत्वम्। मूलाविद्यायास्तु उपादानत्वम्। तदेवाह—मोह इति।' इति॥

'यदात्मकं सप्तदशविधं लिङ्गं कर्मोपासनासमवायि प्राणिनाम्, यत्तत् समष्टिव्यष्ट्यात्मकम्' 'यदेतत् व्याकृतं सूत्रात्मकं जगत अव्याकृताकाशे अप्स्विव पृथिवीधातुः त्रिष्वपि कालेषु वर्तते उत्पत्तौ स्थितौ लये च' 'यन्निमित्तं च अस्य परोपाधिकृतं संसारधर्मित्वम्, सा चाविद्या, तस्या अविद्यायाः किं स्वाभाविकत्वम्, आहोस्वित् कामकर्मादिवत् आगन्तुकत्वम्, यदि च आगन्तुकत्वम्, ततो विमोक्ष उपपद्यते, तस्याश्च आगन्तुकत्वे का उपपत्तिः, कथं वा नात्मधर्मोऽविद्या इति सर्वानर्थवीजभूतायाः अविद्यायाः सतत्त्वावधारणार्थं परा कण्डिका आरभ्यते—'ता वा अस्यैताः' इति।' अत्र भाष्ये भ्रान्तितत्संस्काराद्याश्रयभूतलिङ्गस्याधारभूतमनाद्यज्ञानं प्रदर्शितम्। 'कामकर्मादिवदागन्तुकत्वम्, यदि च आगन्तुकत्व'मिति भाष्ये 'आगन्तुकत्वं अस्वाभाविकत्वम्' इति टीकायां व्याख्यातम्। तथा च अविद्यायाः आगन्तुकत्वं नाम अस्वाभाविकत्वं आत्मधर्मत्वाभाव इति यावत्। अत एव 'कथं वा नात्मधर्मोऽविद्या' इति उपरितनवाक्यं भाष्ये। एवं च एतद्भाष्ये अविद्यायाः सादित्वमुक्तमिति न भ्रमितव्यम्॥

'नाडीषु सप्तदशकं लिङ्गं वर्तते, तदाश्रिताः सर्वाः वासनाः उच्चावचसंसारधर्मानुभवजनिताः। तल्लिङ्गं वासनाश्रयम्' अत्र वासनाधारत्वेन लिङ्गं वर्णितम्। अतः लिङ्गस्याप्याधारभूतमज्ञानं वासनातो भिन्नमवगम्यते।

अत्र टीकायां 'स्वप्ने धर्मादिनिमित्तवशात् मिथ्यैव लिङ्गं नानाकारमवभासते तत् मिथ्याज्ञानं लिङ्गानुगतमूलाविद्याकार्यत्वात् अविद्या' इति भ्रान्तिज्ञानात् भिन्नमज्ञानं प्रदर्शितम् ॥

'अत इदमविद्यायाः सतत्त्वमुक्तं भवति—सर्वात्मानं सन्तं असर्वात्मत्वेन ग्राहयति । आत्मनोऽन्यद्वस्त्वन्तरमविद्यमानं प्रत्युपस्थापयति । आत्मानमसर्वमापादयति । ततस्तद्विषयः कामो भवति यतो भिद्यते । कामतः क्रियामुपादत्ते । ततः फलम् । तदेतदुक्तं वक्ष्यमाणं च—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादि । इदमविद्यायाः सतत्त्वं सह कार्येण प्रदर्शितम् । विद्यायाश्च कार्यं सर्वात्मभावः प्रदर्शितः अविद्याया विपर्ययेण । सा चाविद्या नात्मनः स्वभाविको धर्मः' । अत्र पूर्वं प्रदर्शिते 'आहोस्वित् कामकर्मादिवत् आगन्तुकत्वमविद्यायाः' इति भाष्यवाक्ये आगन्तुकत्वं अस्वाभाविकत्वं इति व्याख्येयमित्युक्तं यत् तत्र इदं भाष्यवाक्यमपि प्रमाणं वेदितव्यम् । अत्र टीका—'भेददर्शननिदानमविद्येति अविद्यासूत्रे वृत्तमित्याह—तदेतदिति ।' इति ॥

'अनन्ता ह्यन्तःकरणे भावनाविशेषाः नैते विशेषतो निर्देष्टुं शक्यन्ते तस्मिंस्तस्मिन् क्षणे कार्यतोऽवगम्यन्ते इदमस्य हृदि वर्तते, अदोऽस्येति' अत्र भाष्ये—वासनानामन्तःकरणाश्रितत्वमुक्तम् । अतः वासनाः अन्तःकरणहेत्वज्ञानतो भिन्नाः । 'अविद्याभ्रमापोहार्थत्वात् (न शास्त्रवैयर्थ्यम्)' अत्र टीका—'प्रत्यगविद्यातदुत्थानर्थध्वंसित्वेन अर्थवत्त्वं शास्त्रस्य' इति । अत्र अविद्यातिरिक्तभ्रमः निर्दिष्टः ॥

सर्वत्रप्रसिद्धाधिकरणे भामत्यां मूलाविद्याभ्युपगमसूचकानि वाक्यानीमानि—'अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते । तादृशानां च जीवानामविद्या ; न तु निरुपाधिनो ब्रह्मणः । न चाविद्यायां सत्यां जीवात्मविभागः सति च जीवात्मविभागे तदाश्रया अविद्येति अन्योन्याश्रयमिति साम्प्रतम् । अनादित्वेन जीवाविद्ययोः बीजाङ्कुरवदनवक्लृप्तेरयोगात् ।' इति ॥

अत्र कल्पतरुः—'औपाधिकभेदानुवादित्वेन भेदश्रुतीनां सूत्रस्य चोपपत्तिमाह—अनाद्यविद्येति । तादृशानां चेति । अविद्यावच्छिन्नानामित्यर्थः ।

अनादित्वेनेति। जीवाविद्ययोः बीजाङ्कुरवत् हेतुहेतुमत्त्वे जीवानित्यत्वं स्यात्। तस्मादुत्तरोत्तरजीवाभिव्यक्तीनां पूर्वपूर्वभ्रमनिमित्तकत्वमत्रोक्तम्। अनादिस्त्वविद्या जीवोपाधिः देवताधिकरणे वक्ष्यते। अनादिजीवाविद्ययोश्च इतरेतरतन्त्रत्वं अविद्यातत्सम्बन्धयोरिवाविरुद्धम्। स्वाश्रिताविद्याश्रितत्वे जीवस्य आत्माश्रयमिति चेत्; किमतः? उत्पत्तिज्ञाप्तिप्रतिबन्धेन हि आत्माश्रयस्य दोषता। न चानयोरुत्पत्तिः; अनादित्वात्। प्रतीतिस्तु जीवस्य स्वतः। तद्बलादविद्यायाः। तथापि स्वस्कन्धारूढारोहवत् स्वाश्रिताश्रितत्वं विरुद्धमिति चेत्, न––स्वाश्रिताश्रितत्वस्य क्वचित् प्रमितावविरोधात्। अप्रमितौ अव्याप्यादस्मात् अव्यापकस्य विरोधस्य दुष्प्रसंजनत्वात्। अपि च नैव कुण्डबदरवत् अधरोत्तरीभावः जीवाविद्ययोः। अमूर्तत्वात्। अवच्छेद्यावच्छेदकत्वं तु। तच्चेतरातरापेक्षं प्रमाणप्रमेयादिषु सुलभोदाहरणम्' इति॥

अत्र परिमलः—'जीवाभिव्यक्तीनामिति। आध्यासिकजीवरूपाभिव्यक्तीनामित्यर्थः। पूर्वपूर्वभ्रमनिमित्तकत्वमित्यनेन बीजाङ्कुरन्यायसाम्यार्थं टीकायामविद्यापदं भ्रमपरमिति व्याख्यातम्। तर्हि किं प्रवाहानादिभ्रमसन्तानव्यतिरेकेण स्वरूपानादिरविद्या नास्ति?। साप्यस्ति वक्ष्यमाणेत्याह—अनादिस्त्विति। ननु 'तादृशानां च जीवानां अविद्या न तु निरुपाधिनो ब्रह्मणः' इति टीकायां साप्यविद्या जीवाश्रिता अभ्युपगता। तत्प्रसङ्गात् भ्रमरूपाविद्यायां अन्योन्याश्रयः परिहृतः। तथा च अविद्याधीनो जीवब्रह्मविभागः तद्विभागे च सति जीवाश्रितत्वसिद्धिरविद्यायाः इत्यन्योन्याश्रयमाशंक्याह—अनादिजीवाविद्ययोरिति। अविद्यासम्बन्धः तन्निरूपकाविद्याधीनः अविद्याऽपि तत्सम्बन्धाधीना। अविद्यासम्बन्धाधीनत्वात् सर्वविवर्तानाम्। तत्र यथा इतरेतरतंत्रत्वं अनादित्वान्न दोषावहं एवमिहापीत्यर्थः। क्वचित्—प्रमेयत्वाभिधेयत्वादौ। ननु स्वाश्रिताश्रितत्वस्याप्रसिद्धौ तेन विरोधप्रसंजनं नैवोपपादि, जीवो यद्यविद्याश्रितः स्यात् अविद्याश्रयो न स्यात् तदुपादानकप्रपञ्चवत् इति प्रसंजनमुपपद्यते इत्यस्वरसादाह—अपि चेति। ननु अमूर्तत्वेऽपि नभश्शब्दवदाश्रयाश्रयिभावः सम्भवतीत्याशङ्क्याह—अवच्छेद्येति। अन्यत्र यथा तथा वा अस्तु प्रकृते जीवाविद्ययोः अवच्छेद्यावच्छेदकभावमात्रमिष्यते अविद्यावच्छेदोपाधिकं जीवत्वमिति। जीवः अविद्यया अवच्छिद्यते अविद्या च चैतन्याश्रिता वृक्षाश्रितः

कपिसंयोगः मूलेनैव जीवत्वेन अवच्छिद्यत इति। नन्विदमपि अन्योन्याश्रयदुष्टमित्याशङ्क्याह—तच्चेति। प्रमाणत्वाकारेण हि प्रमाणं निरूपकप्रमेयावच्छेद्यं प्रमेयं च स्वविशेषणीभूतप्रमावच्छेद्यमिति एवमादिषु अवच्छेद्यावच्छेदकत्वस्य इतरेतरतन्त्रत्वं दृष्टमित्यर्थः।' इति॥

देवताधिकरणभाष्यम्—'प्रविलीयमानमपि चेदं जगत् शक्त्यवशेषमेव प्रविलीयते। शक्तिमूलमेव च प्रभवति। इतरथा आकस्मिकत्वप्रसङ्गात्' इति। अत्र जगल्लयाधिकरणतया वर्णितं अनाद्यज्ञानमेव। अत एवात्र भामती—'यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयस्सन्ति तथापि स्वकारणे अनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिस्सहावतिष्ठन्त एव। तथा च स्मृतिः—

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥'

इति। ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिताः यथा कूर्मदेहे निलीनान्यङ्गानि ततो निस्सरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनासारसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति, तथा पूर्ववासनावशात् पूर्वसमाननामरूपाणि उत्पद्यन्ते' इति। 'यद्यपि प्राणमात्रावशेषता तन्निश्शेषता सुषुप्तप्रलयावस्थयोर्विशेषः तथापि कर्मविक्षेपसंस्कारसहितलयलक्षणाविद्यावशेषतासाम्येन स्वापप्रलयावस्थयोरभेद इति द्रष्टव्यम्' इति च॥

अत्र कल्पतरुः—'सूक्ष्मेणेत्यस्य व्याख्या शक्तिरूपेणेति। कर्मविक्षेपकाविद्याः भ्रान्तयः तासां वासनाभिरित्यर्थः॥

भ्रमात् संस्कारतश्चान्या मण्डूकमृदुदाहृतेः।
भावरूपा मताऽविद्या स्फुटं वाचस्पतेरिह॥

अप्रज्ञातम्—प्रत्यक्षतः। अलक्षणम्—अननुमेयम्। अप्रतर्क्यम्—तर्कागोचरः। अविज्ञेयम्—आगमतः। साक्षिसिद्धस्य ह्यज्ञानस्य आगमादिभिरसत्त्वनिवृत्तिः क्रियते। ननु किं भावरूपया अविद्यया प्रयोजनम्, अज्ञातशुक्तिब्रह्मविवर्तत्वेन रजतजगद्भ्रमसिद्धेः। अज्ञातत्वस्य च ज्ञानाभावादुपपत्तेः। तन्न।

स्वयंप्रभप्रत्यग्ब्रह्मणः स्वविषयप्रमाणानुदयेऽपि यथावत् प्रकाशापत्तौ जगद्भ्रमाभावप्रसङ्गात्। न हि स्वयंप्रभं संवेदनं स्वविषयप्रमाणानुदयात् न भाति। यद्यपि शुक्तिं स्वत एव जडां अविद्या नावृणोति तथापि तत्स्थानिर्वाच्यभावरूपरजतोपादानत्वेन एष्टव्येति भावरूपाविद्या सप्रयोजना' इति, 'लीयते अस्यां सर्वकार्यमिति लयलक्षणा अविद्येति' इति च॥

अत्र भामत्यां लयलक्षणा अविद्या इति पदेन अनाद्यविद्यैवोच्यते। विक्षेपपदेन भ्रान्तेः तत्संस्कारस्य च संस्कारपदेन उक्तेः तत्सहितत्वेन निर्दिश्यमानाया लयलक्षणाविद्याया अनाद्यविद्यारूपत्वस्यैवौचित्यात्। भामत्यां सर्वत्र लयपदेन तस्या एव निर्दिश्यमानत्वाच्च। अत एव वैषम्यनैर्घृण्याभावाधिकरणे 'न चेश्वरो वैषम्यहेतुरित्युक्तम्, न च अविद्या केवला वैषम्यस्य कारणम्; एकरूपत्वात्। रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा तु अविद्या वैषम्यकरी स्यात्' इति भाष्यविवरणभामत्यां 'न च अविद्या केवलेति लयाभिप्रायम्। विक्षेपलक्षणाविद्यासंस्कारस्तु कार्यत्वात् स्वोत्पत्तौ पूर्वं विक्षेपमपेक्षते। विक्षेपश्च मिथ्याप्रत्ययः मोहापरनामा पुण्यापुण्यप्रवृत्तिहेतुभूतरागद्वेषनिदानम्' इत्यत्र लयपदेन अनाद्यविद्योक्ता। तत्र कल्पतरुः—'भाष्ये केवलाया अविद्यायाः वैषम्यकरत्वनिषेधोऽनुपपन्नः भ्रान्तेर्विचित्रत्वेन वैषम्यहेतुत्वोपपत्तेरित्याशङ्क्याह—लयेति। मा भूत् लयलक्षणाविद्या वैषम्यकरी भ्रमसंस्कारस्तु किं न स्यादिति चेत्, अस्तु, स तु संसारानादितामन्तरेण न स्यात्। तथा च सिद्धं नस्समीहितमित्याह—-विक्षेपेति।' इति॥

रचनानुपपत्त्यधिकरणेऽपि 'एकत्वात् प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत्, न—अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत् प्रत्युक्तत्वात्' इति भाष्यविवरणभामत्याम्—'कारणभूतया लयलक्षणया अविद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यत् प्रत्युपस्थापितं नामरूपं तदेव माया तदावेशेनास्य चोद्यस्यासकृत् प्रत्युक्तत्वात्' इति॥

'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इत्यधिकरणे भामत्यां मूलाविद्या निर्दिष्टा—'यदा नाड्यो वा पुरीतद्वा सुषुप्तस्थानम्, तदा विपरीतग्रहणनिवृत्तावपि न जीवस्य परमात्मभाव इति अविद्यानिवृत्तावपि जीवस्य परमात्म-

भावाय कारणान्तरमपेक्षितव्यम् । तच्च कर्मैव । न तु तत्त्वज्ञानम्, विपरीतज्ञाननिवृत्तिमात्रेण तस्योपयोगात् । विपरीतज्ञाननिवृत्तेश्च विनापि तत्त्वज्ञानं सुषुप्तावपि सम्भवात् । ततश्च कर्मणैवापवर्गो न ज्ञानेन । यथाऽऽहुः— 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति । अथ तु परमात्मैव नाडीपुरीतत्सुप्तिद्वारा सुषुप्तिस्थानम्, ततो विपरीतज्ञाननिवृत्तेरस्ति मात्रया परमात्मभावे उपयोगः । तया हि तावदेष जीवः तदवस्थानो भवति केवलम् । तत्त्वज्ञानाभावेन समूलकाषमविद्याया अकाषात् जाग्रत्स्वप्नलक्षणं जीवस्य व्युत्थानं भवति । तस्मात् प्रयोजनवत्येषा विचाराणा ।' इति ॥

अत्र कल्पतरुः—'वस्तुतो ब्रह्मण एव सतो जीवस्य तद्वैपरीत्यं भ्रमः, तद्यदि निवृत्तेऽपि सुषुप्तौ विपर्यासे नाडीषु पुरीतति वा तिष्ठेत्; न तु ब्रह्मतादात्म्यं भजेत जीवः, तदा ब्रह्मभावे विपरीतज्ञाननिवृत्तिः अप्रयोजिका स्यादित्यर्थः । ननु दण्डायमानभावरूपाज्ञाननिवृत्तौ ब्रह्मभावः, सुषुप्तौ तु नाड्यादिस्थस्य तदनिवृत्तमिति न ब्रह्मभावः, ततो नाड्यादेः सुषुप्तिस्थानत्वाभावचिन्ता निष्प्रयोजनेत्याशङ्क्याह—अविद्यानिवृत्तावपीति । यावद्यावद्धि प्रतिबन्धनिवृत्तिः तावत् तावत् ब्रह्मभावोऽप्याविर्भवेत् । तत्र यदि मिथ्याज्ञाननिवृत्तौ न ब्रह्मभावः श्रुत्योच्येत, तर्हि अज्ञाननिवृत्तावपि न ब्रह्मभाव इति श्रुतेराशयः स्यात् । ततो ब्रह्मभावाय कारणान्तरं स्यात् न अज्ञानमिथ्याज्ञाननिवृत्ती इत्यर्थः । तर्हि तदेव कारणान्तरं ज्ञानमस्तु । नेत्याह—तच्चेति । कर्म ह्यमूतप्रादुर्भावफलं ज्ञानं तु अविद्यानिवृत्तिमात्रफलमित्यर्थः । विपरीतज्ञाननिवृत्तिः अविद्यानिवृत्तेरप्युपलक्षणम्; न तु विपरीतज्ञानमेवाविद्येति भ्रमितव्यम् । 'समूलकाषमविद्याया अकाषात्' इत्युपरितनग्रन्थे मूलशब्देन भावरूपाविद्यायाः अभिधानात् । तर्हि अविद्यानिवृत्तिद्वारेण ब्रह्मभावं ज्ञानमभिव्यनक्तु । नेत्याह—विपरीतज्ञाननिवृत्तेरिति । चशब्देन अविद्यानिवृत्तेरप्यप्रयोजकत्वादित्यर्थः । मात्रयेति । स्तोकप्रतिबन्धनिवृत्तिरूपेणेत्यर्थः । तया—विपरीतज्ञाननिवृत्त्या तावत्, तदवस्थानः—ब्रह्मभावावस्थानो भवति जीवः । तावच्छब्देन न सर्वात्मना तदवस्थानः, मूलाविद्यायाः स्थितत्वादित्यर्थः' इति । परिमले— 'मूलाविद्यायाः स्थितत्वादित्यर्थः इति । सूच्यत इति शेषः । एवं हि तावच्छब्दस्यान्वयो भवति' इति ॥

'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यधिकरणे भाष्यम्—'युक्तं तत्र विवेककारणाभावात् जलबिन्दोरनुद्धरणम्। इह तु विद्यते विवेककारणं कर्म चाविद्या च इति वैषम्यम्' इति, 'स एवायमुपाधिः स्वापप्रबोधयोः बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यते इति युक्तम्' इति च ॥

अत्र भामती—'अनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवः न वस्तुतः परमात्मनो भिद्यते। तदुपाध्युद्भवाभिभवाभ्यां च उद्भूत इव अभिभूत इव प्रतीयते। ततश्च सुषुप्तादावपि अभिभूत इव जाग्रदवस्थादिषु उद्भूत इव। तस्य चाविद्यातद्वासनोपाधेः अनादितया कार्यकारणभावेन प्रवहतः सुविवेकतया तदुपहितो जीवः सुविवेकः' इति ॥

अत्र कल्पतरुः—'अनाद्यनिर्वाच्याया अविद्यायाः यः उपधाने भेदः सम्बन्धविशेषः स एव उपाधिः तेन कल्पितो जीव इत्यर्थः। यद्यौपाधिको जीवः तर्हि सुषुप्तावुपाधिनाशात् नश्यतीत्यत आह—उपाध्युद्भवेति। सुषुप्तादावन्तःकरणाद्युपाधिः अभिभूतो भवति। संस्कारात्मना अवतिष्ठते, न तु सर्वात्मना नश्यतीत्यर्थः। ननु जाग्रदादावन्तःकरणादि सुषुप्तौ तद्वासना इत्युपाधिभेदात् जीवभेदः स्यात्, अतः कथं तस्यैव जीवस्य उत्थानम्? इत्यत आह—तस्य चेति। अविद्या भ्रान्तिज्ञानं तद्वासना च उपाधी अवच्छेदकौ मृद इव घटशरावादि यस्य सः अविद्यातद्वासनोपाधिः दण्डायमानोऽविद्यालक्षणः, तस्यानादितया कार्यकारणात्मकभ्रमतत्संस्कारभावेन प्रवहतः—प्रकृतिविकारयोरभेदात् परिणममानस्य सुविवेकतया तदुपहितो जीवः अनादिकालेऽपि सुविवेकः—ब्रह्मासंकीर्णः सन् सुषुप्त्याद्यवस्था अनुभवतीत्यर्थः। अत एव यथाश्रुतग्रन्थार्थग्राहिभिः कैश्चित्—वाचस्पतिमते सुषुप्तौ भ्रमसंस्कार उपाधिः जाग्रति अन्तःकरणादीति उपाधिभेदादुपहितजीवभेदप्रसङ्गः संस्कारस्य च सुषुप्तौ न साङ्कर्यवारकत्वम्, न हि घटसंस्कारः घटाकाशं व्यवस्थापयति—इत्याक्षेपौ कृतावनवकाशौ ॥'

'अत्र च भ्रमातिरिक्तं भावरूपमज्ञानं नास्तीति मन्वानस्य पूर्वपक्षः।

सुप्तस्यैव प्रबुद्धत्वे कर्मादिभिरवस्थिते।
अनाद्यविद्यावच्छेदः सुषुप्तावपि कल्प्यते ॥

श्रूयते च 'सति सम्पद्य न विदुः' इति सुषुप्तावज्ञानम्, इति सिद्धान्तः' इति कल्पतरुकार एव शास्त्रदर्पणेऽपि अलिखत्। अस्मिन्नधिकरणे परिमलेऽप्युक्तम्—'मिथ्याज्ञानातिरिक्तामविद्यामपहृत्य मिथ्याज्ञानवदविद्याया अपि निवृत्तिं चापाद्य पूर्वपक्षः प्रवर्तते। अन्यथा पूर्वपक्षानुत्थानात्' इति॥

'यावद्विकारं तु विभागो लोकवत्' इति सूत्रभाष्ये भामती—'सोऽयं प्रयोगः। आकाशदिक्कालमनःपरमाणवः विकाराः आत्मान्यत्वे सति विभक्तत्वात् घटशरावोदञ्चनादिवत्' इति। अत्र कल्पतरुः—'विकारा इति। पराधीनसत्ताका इत्यर्थः। एवं च विभक्तत्वं अविद्यादौ नानैकान्तम्। तस्य प्रागभावप्रतियोगित्वाभावेऽपि अध्यस्तत्वेन पराधीनसत्ताकत्वात्। जीवेश्वराद्यपि विभागविशिष्टरूपेण समारोपितमेव। ननु अद्वैतवादिनः कथमाकाशादेः विभक्तत्वसिद्धिः? अत आह—आत्मान्यत्वे सतीति। तत्त्वतो विभक्तत्वाभावेऽपि अविद्यया आकाशादेः अन्यत्वकल्पनायां सत्यां अस्ति विभक्तत्वमित्यर्थः। विभागश्च धर्मिसमानसत्ताको विवक्षितः। तथा च न ब्रह्मणि व्यभिचारः; तद्गतस्याकाशादिप्रतियोगिकभेदस्य मिथ्यात्वेन ब्रह्मसमानसत्त्वाभावादिति॥'

अत्र परिमले—'पराधीनसत्ताका इत्यर्थ इति। नन्वेवं सति अविद्यावदेव वियतोऽपि स्वतस्सत्तराहित्येनाध्यस्तत्वमात्रं सिध्यति, न कार्यत्वमिति चेत्; मा सैत्सीदितोऽनुमानात् कार्यत्वम, सम्भूतश्रुत्या हि तत्सिद्धिरभिमता। किमर्थं तर्हि इदं सूत्रसूचितमनुमानम्?। सम्भूतश्रुतिगौणत्वापादकासम्भवशङ्कानिराकरणार्थम्। तथैव च भाष्ये सूत्रमवतारितम्। असम्भवशङ्का च समवायिकारणाद्यभावप्रयुक्ता पूर्वोत्तरकालयोर्विशेषाभावप्रयुक्ता वा अध्यस्तत्वसिद्ध्या निवर्तत एव। अध्यस्तरजतादिषु रजतावयवतत्संयोगाद्यारम्भकानपेक्षणात्। अध्यस्तस्य ज्ञाननिवर्त्यत्वनियमेन निवृत्त्यनन्तरकाल इव उत्पत्तिपूर्वकालेऽपि वियत्कृतविशेषाभावोपपत्तेश्च। उत्पत्तिराहित्यानुमानानि तु हेत्वसिद्ध्यप्रयोजकत्वादिदोषपराहतानीति स्पष्टमेव। अविद्यादावित्यादिशब्देन 'षडस्माकमनादयः' इत्युक्तजीवेश्वराद्यनाद्यन्तरसङ्ग्रहः। ननु जीवेश्वरौ स्वरूपतः सत्यौ न पराधीनसत्ताकौ इति तयोर्व्यभिचारतादवस्थ्यमिति आशङ्क्याह—जीवेश्वराद्यपीति। आदिशब्देन वैराजाद्यैश्वररूपान्तरसंग्रहः। विभागविशिष्ट-

रूपं विना स्वरूपमात्रविवक्षायान्तु तत्र धर्मिसमसत्ताकविभागरूपो हेतुरपि नास्तीति न व्यभिचार इति द्रष्टव्यम् । आत्मान्यत्वे सतीत्यस्य हेतुविशेषणत्वे विशेष्यांशवैयर्थ्यमाशङ्क्य विभक्तत्वहेत्वसिद्धिपरिहारार्थत्वेन योजयति—नन्वद्वैतवादिन इति ।' इति । अत्र मूलाविद्या तस्या अनादित्वं च स्फुटीकृतम् ॥

'यावद्विकारं तु' इति सूत्रे विकारत्वं पराधीनसत्ताकत्वं विभक्तत्वं धर्मिसमसत्ताकविभागवत्त्वं इति विवक्षया ब्रह्माविद्यादौ अनैकान्तिकत्वं निरस्तम् । ब्रह्मविद्याभरणे तु, तथा अविवक्षणेऽपि न दोषः, यो विभक्तः स विकारः इत्युत्सर्गः बाधकात् ब्रह्माविद्यादौ त्यज्यते, आकाशादौ बाधकाभावान्न त्यज्यते इत्युक्तम्—'न चाकाशस्याकार्यत्वेऽपि अविद्यादिवत् ब्रह्मण्यध्यस्ततया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासङ्गतिरिति वाच्यम्, श्रुतिविरोधात् । श्रुत्या हि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुः' इत्याकाशस्य कार्यत्वप्रतिपादनेनैव प्रतिज्ञा समर्थ्यते । अतो न स्वकपोलकल्पनया प्रतिज्ञाव्याख्यानमुचितम् । ननु यद्याकाशस्य विभक्तत्वेन हेतुना विकारत्वं साध्यते, तर्हि ब्रह्मणोऽपि प्रपञ्चभेदप्रतियोगित्वेन विकारत्वं प्रसज्येतेति शङ्कते—नन्वात्मापीति । 'न—आत्मन आकाशः' इत्यादिपरिहारस्यायमभिप्रायः—यो विभक्तः स विकारः इत्युत्सर्गः, सति बाधके त्यज्यते । आकाशे तु बाधकाभावात् किमर्थं परित्यक्तव्यः ? तावताऽपि हि असम्भावितत्वात् आकाशे समवाय्यसमवायिनिमित्तकारणानां तत् नोत्पद्यते इति तार्किकयुक्तिः प्रतिपक्षिता भवत्येव । न ह्ययं नियमः तार्किकेणाऽपि आस्थातुं शक्यते ; ध्वंसस्य कारणत्रयाभावेऽपि जन्यत्वाभ्युपगमात् । न च भावविषयोऽयं नियम इति वाच्यम् ; शुक्तिरजतादेः भावस्यापि द्रव्यद्वयसंयोगरूपासमवायिकारणं विनैव उत्पत्तिदर्शनात् । निराकृता चेयं तार्किकाभिमता आरम्भप्रक्रिया वैशेषिकाधिकरणे । ततश्च ब्रह्माविद्यादीनामकार्यत्वस्य श्रुतिस्मृतिन्यायसिद्धतया यद्विभक्तं तत् कार्यमिति उत्सर्गबाधे न काचिदनुपपत्तिः ।' इति ॥

तदनन्यत्वाधिकरणभाष्ये—'सर्वज्ञस्य ईश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्ये-

श्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते' इति प्रपञ्चबीजभूता मूलाविद्या उक्ता ॥

समन्वयाधिकरणभाष्ये—'तदवगत्या मिथ्याज्ञानस्य संसारहेतोः निवृत्तिः प्रयोजनं क्रियते' इत्युक्तम् । अत्र आनन्दगिरिटीका—'मिथ्या च तत् अज्ञानं चेति विग्रहः । तस्य भ्रान्तित्वं व्यवच्छिनत्ति—संसारेति ।' अत्र भामती—'तद्विषयं शाब्दज्ञानमवगतिपर्यन्तं विद्या स्वविरोधिनीं संसारमूलनिदानं अविद्यां उच्छिन्दत् प्रयोजनवदित्यर्थः' इति मूलाविद्यां निर्दिशति ॥

ईक्षत्यधिकरणभाष्ये—'तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते' इत्यत्र प्रकटार्थविवरणे—'सकार्याया मायायाः अनिर्वचनीयत्वात् नाद्वैतभङ्ग इत्याह—तत्त्वेति ।' इति अविद्यायाः उपादानत्वमनिर्वचनीयत्वं चोक्तम् ॥

अन्तस्तद्धर्माधिकरणभाष्ये—'स्यात् परमेश्वरस्यापि इच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्,

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि ॥' इति स्मरणात् ।'

इति वाक्येन सविशेषभगवद्रूपस्य मायिकत्वोक्त्या माया अनादिभावरूपा प्रदर्शिता ॥

अन्तर्याम्यधिकरणे 'सर्वं विकारजातं तदविद्याशक्तिपरिणामः' इति भामतीवाक्यं विकारजातपरिणामिमायां अनादिभावरूपामावेदयति । 'अक्षरमम्बरान्तधृतेः' इत्यधिकरणे अम्बरान्तधारकत्वेन अव्याकृतमाशङ्क्य प्रशासनेन परिहरन् वाचस्पतिः अनादिभावरूपामविद्यामाचष्टे । तस्या एव अम्बरान्तजगद्धारकत्वसम्भवात् भ्रमादिषु असम्भवात् ॥

कृत्स्नप्रसक्त्यधिकरणे—'अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते, वाचारम्भणमात्रत्वाचाविद्याकल्पितस्य नामरूपभेदस्य ।' इति ब्रुवन् भाष्यकारः जगदाकारपरिणामिनीं मूलाविद्यामाचष्टे । 'सर्वोपेता

च तद्दर्शनात्' (2-1-30) इति सूत्रे 'सर्वशक्तियुक्ता च परा देवता' इति ब्रुवन् भाष्यकारः सूत्रकारश्च अविद्याशक्तिमाचष्ट। एवमेव 'सर्वधर्मोपपत्तेश्च' (2-1-37) इति सूत्रम्, 'यस्मादस्मिन् ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्माः उपपद्यन्ते--सर्वज्ञं सर्वशक्ति महामायं च ब्रह्म इति। तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनम्' इति भाष्यम्, 'महामायं चेति। एतेन ब्रह्मणि अनवच्छिन्ने मायाविद्यादिशब्दितं अनिर्वाच्यमज्ञानं कारणत्वादिसर्वव्यवहारनिर्वाहकमस्तीत्युक्तम्' इति आनन्दगिरीयं च मूलाविद्यास्थापकम् ॥

'अनिर्वाच्याविद्याद्वितयसचिवस्य' इति भामतीमङ्गलश्लोके कल्पतरौ—'एका ह्यविद्या अनादिभावरूपा देवताधिकरणे वक्ष्यते। अन्या पूर्वपूर्वविभ्रमसंस्कारः, तदविद्याद्वितयं सत्त्वासत्त्वाभ्यामनिर्वाच्यम्' इत्युक्तम्। अनावृत्त्यधिकरणे 'सम्यग्दर्शनविध्वस्ततमसाम्' इति भाष्यस्थपदविवरणावसरे 'द्विधा अविद्या तमः' इति भामत्याम्, 'द्विधा-कार्यकारणरूपा' इति कल्पतरौ च उक्तम्। एतेन वाचस्पतिः उपक्रमे उपसंहारे च मूलाविद्यां स्पष्टमेवाचष्ट इति ज्ञेयम् ॥

अंशाधिकरणभाष्ये—'निरतिशयोपाधिसम्पन्नश्चेश्वरः निहीनोपाधिसम्पन्नान् जीवान् प्रशास्तीति न किंचिद्विप्रतिषिध्यते।' इत्यत्र 'एकस्मिन्नेव पूर्णे चिदात्मनि अनाद्यनिर्वाच्याविद्याकल्पितः जीवेश्वरजगद्भेदः। तत्र कल्पितोपाध्युत्कर्षनिकर्षवशात् ईशित्रीशितव्यव्यवस्था' इति आनन्दगिरीयं स्पष्टमेव मूलाविद्यां निरूपयति ॥

सन्ध्याधिकरणे--'किं पुनः जीवस्य ईश्वरसमानधर्मत्वं नास्त्येव?। न नास्त्येव। विद्यमानमपि तत् तिरोहितमविद्यादिव्यवधानात्' इति, 'अविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतः जीवस्य ज्ञानैश्वर्यतिरोभावः' इति च भाष्यं तिरोधायिकां मूलाविद्यामाचष्टे ॥

उपदेशसाहस्र्याम्---

'सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः।
स्वात्मबोधप्रदग्धं स्यात् बीजं दग्धं यथाऽभवम् ॥'

इति पद्येन भगवत्पादा मूलाविद्यां आचख्युः। अत्र रामतीर्थटीका—'तम इति विशेषणेन अज्ञानस्य भावरूपत्वमुच्यते। ततो बीजत्वमुपादानत्वमुपपद्यते।'

'तदेवैकं त्रिधा ज्ञेयं मायाबीजं पुनः क्रमात्।
मायाव्यात्माऽविकारोऽपि बहुधैको जलार्कवत् ॥'

अत्र टीका—'तदेवैकं मायाख्यं बीजं त्रिधा भिन्नं क्रमात्—सुषुप्त्यादिक्रमेणेत्यर्थः। पुनरित्यत्र वीप्सा द्रष्टव्या, सुषुप्तिमारभ्य जागरितपर्यन्तं तदारभ्य सुषुप्तिपर्यन्तं अहरहस्त्रिधा विक्रियत इत्यर्थः। एतदुक्तं भवति—चिन्मात्राश्रयविषयमेकमेवाज्ञानं अनाद्यनिर्वचनीयं अनेककार्यविक्षेपसंस्कारोपेतं चैतन्याभासखचितं स्वाश्रये आत्मनि अध्यात्माधिदैवतभेदेन प्राज्ञेश्वराद्युपाधिभेदेन सुषुप्तिलयाद्यनन्तावस्थात्मकं भवति।' इति ॥

'तदविद्योत्थम्' इति उपदेशसाहस्रीस्थं पदं 'अनाद्यज्ञानजभ्रान्तिसंस्कारोत्थम्' इति व्याचक्षाणः रामतीर्थः, भ्रान्तिसंस्कारयोः कारणीभूतं अनाद्यज्ञानं स्पष्टयति। 'अन्यदृष्टिस्त्वविद्या स्यात्' इत्यस्य 'अन्यस्मिन्ननात्मनि दृष्टिः प्रतीतिर्यस्याः सा अन्यदृष्टिः, सा अविद्या भवतीत्यर्थः' इति, 'तद्भेददृष्टिमेवाविद्याम्' इत्यस्य 'तस्य साध्यसाधनसाधकरूपस्य भेदस्य दृष्टिः प्रतिभासो यस्यास्सा तथोक्ता, तामित्यर्थः' इति च व्याख्यां करोति रामतीर्थः। भगवत्पादाः कार्यकारणाविद्ययोरभेदेन व्यवहारं कुर्वन्ति। तेन केषांचित् भ्रान्तिरेवाविद्या इति भगवत्पादा मन्यन्ते इति भ्रमः। भ्रान्त्यतिरिक्तामप्यविद्यां बहुत्र पूर्वोक्तेषु स्थलेषु भगवत्पादा एव वदन्ति इति प्रतिबोधनीयास्ते ॥

अथ मूलाविद्याप्रदर्शकानि बृहदारण्यकोपनिषद्भाष्यवार्तिकवचनानि सटीकं प्रदर्श्यन्ते—

इदं जगदुपादानं सर्वशक्त्यजमव्ययम्।
स्वात्मैकाज्ञानवृत्तेन ग्रसिष्णु प्रभविष्णु च ॥ 1-2-126.

टीका—स्वस्यात्मनि यदेकं दण्डायमानमज्ञानं तस्य वृत्तं परिणामित्वं तेन इदमपि ब्रह्म कदाचित् जगतो ग्रसनशीलं कदाचित् तदाकारेण प्रभवनशीलमित्यर्थः ॥

अपीताशेषसंसारं शुद्धसंस्कारसंश्रयम्।
अव्याकृतमिदं ब्रह्म ह्यन्तर्यामीति चोच्यते ॥ 1-2-131.

टी—'मुक्त्यालम्बनं ब्रह्म व्यावर्तयति—संस्कारेति। संसारदशातो विशेषमाह—शुद्धेति। केवलसंस्काराश्रयत्वं साधयितुमाद्यं विशेषणम्। उपाधिप्रधानं अव्याकृतम्। उपहितप्रधानस्तु अन्तर्यामीति भेदः॥'

अत्र संस्काराश्रयत्वकीर्तनेन संस्कारादज्ञानस्य भेदो दर्शितः॥

नामरूपादिना येयमविद्या प्रथतेऽसती।
माया तस्याः परं सौक्ष्म्यं मृत्युनैवेति भण्यते॥ 1-2-135.

मृत्युर्वै तम इत्येवमाप एवेदमित्यपि।
अविद्या प्रथते मौली व्यक्ताव्यक्तात्मनाऽनिशम्॥ 1-2-136.

अत्र मौली अविद्या इति मूलाविद्यायाः स्पष्टं निर्देशः॥

तदज्ञानं तदुत्थं च जगत् कृत्स्नं तदात्मकम्।
यतोऽतस्तदनूद्याह ह्यात्मैवेति श्रुतिः स्फुटम्॥ 1-3-54.

अथात्माविद्याऽव्यक्तादिरूपेण प्रथते तदा।
तन्निवृत्तौ निवृत्तिः स्यात् निवृत्तिः केवलात्मता॥ 1-3-188.

तेन तेनात्मकार्येण स्वात्माभासतमोऽवधिः।
विशिष्टस्ससृजे विष्णुः तेजोऽबन्नादि मायया॥ 1-4-16.

टी—स्वात्मनः चिद्धातोः आभासो यत्र तेन तमसा अवधि-शब्दितोपाधिना उपहितः परः सूत्राद्यात्मना स्वकार्येण विशिष्टो भूतभौतिकं जगदुत्पादितवानित्यर्थः॥

अपास्ताविद्यातज्जत्वादस्थूलाद्युक्तिगोचरः।
स्वाभासाविद्योपाधिः सन् साक्ष्यन्तर्यामितां व्रजेत्॥ 1-4-151.

अथैतस्य यथोक्तस्य साध्यसाधनरूपिणः।
जगतो व्याकृतस्याभूद्बीजावस्थाऽविनश्वरी॥ 1-4-167.

टी—बीजावस्था साभासप्रत्यगविद्या विद्यां विना नाशरहिता॥

प्रमात्रादिविविक्तार्थमनुभूयोत्थितस्ततः।
नावेदिषमिति प्राह स्वानुभूत्यनुसारतः॥ 1-4-289.

टी—'मात्राद्यस्पृष्टमज्ञानं स्वापे स्वानुभवादनुभूयोत्थितः तस्मादेवानुभवात् नावेदिषमिति सिद्धं तत् परामृशति। अतः स्वापे तत् अनुभवमात्रसिद्धमित्यर्थः ॥'

अत्र स्वापे साक्षिप्रत्यक्षविषयतया कीर्तितमज्ञानं न भ्रमः, तदा तदभावात्। नापि तत्संस्कारः, तस्याप्रत्यक्षत्वात् ॥

प्रमात्राद्युत्थितेः पूर्वं चिदन्यानन्वयात्तमो—
विशेषणा चिदेवैका स्वानुभूत्यैव गम्यते ॥ 1-4-290

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयमित्येतत् स्वानुभूतितः ॥ 1-4-291

स्वानुभूत्यैव संसिद्धेः नाज्ञातः खरशृङ्गवत्।
संवित्तेरप्यसम्बोधात् स्यात्तन्मानव्यपेक्षिता ॥ 1-4-296

टी—अनुभवस्य सर्वसाधकत्वेऽपि अज्ञातत्वात् तन्निवृत्त्यर्थं तस्मिन् आत्मनि प्रवृत्ते माने व्यपेक्षिता स्यात् ॥

तमो नियामकं यस्मात् स्वकार्याणां तदन्वयात्।
उर्ध्वं व्यक्तेः पुरा चैव तदेवातो नियामकम् ॥ 1-4-344

टी—'प्राग्व्यक्तेः नाशादूर्ध्वं मध्ये च अज्ञानकार्याणां तेन व्याप्तेः यस्मान्न स्वातन्त्र्यं तस्मात्तदेवाज्ञानं स्वकार्यकर्मादेः व्यवस्थया व्यक्तौ नियामकमित्यर्थः।' अत्र सर्वकार्यानुगतं सार्वदिकं दण्डायमानं अज्ञानमुक्तम् ॥

नियम्यं कार्यमापेक्ष्य नियन्तैष तमोऽवधिः।
तेष्वेव चित्स्वभावः सन् साक्षितां प्रतिपद्यते ॥ 1-4-345

तदेतन्नित्यमज्ञानं तज्जकालाद्यनाप्लुतेः।
सर्वकालानुवर्त्यैव लोके नित्यमितीर्यते ॥ 1-4-358

टी—यदपेक्षं ब्रह्म अव्याकृतशब्दं तत् मिथ्याज्ञानम्? अन्यद्वा?। आद्ये तद्विशिष्टस्य ब्रह्मणः कारणत्वं वदता कार्यस्य तदिष्टं स्यात्। द्वितीये तस्याप्रसिद्धेः ब्रह्मणोऽपि न कारणतेत्याशङ्क्याह—तदेतदिति। अज्ञानजत्वात् कालादेः तस्य तेनापरिच्छेदादिति हेतुमाह—तज्जेति। कालापरिच्छेदेऽपि

कुतो नित्यत्वम्? तत्राह—सर्वेति। मिथ्याज्ञानादिहेतोरनाद्यज्ञानस्य कार्यकल्प्यत्वात् तद्विशिष्टब्रह्मणो युक्ता कारणतेति समुदायार्थः ॥

नित्यस्यानुच्छित्तिरिति चोद्यस्यापि न सम्भवः।
नित्याज्ञानसमुच्छित्तौ यतः प्रामाण्यमाश्रितम् ॥ 1-4-359

टी—अनादि चेदज्ञानं नोच्छिद्येत आत्मवदित्याशङ्क्य प्रागभावे व्यभिचारं मत्वा आह—नित्यस्येति। अभावेतरानादित्वं हेतुरित्याशङ्क्य सर्वमानवैफल्यप्रसङ्गरूपविपक्षबाधकतर्कहतेरप्रयोजकतेत्याह—नित्येति ॥

प्रमान्तरैरविज्ञातं प्रमेयं वस्तु भण्यते।
तत्तत्त्वमात्रगं तत्स्थध्वान्तनुन्मानमुच्यते ॥ 1-4-360

टी—मेयगताज्ञानमुपलक्षणम्, न विशेषणत्वेन मेयान्तर्भूतमिति मात्रपदम् ॥

आगन्तु चेदिहाज्ञानमनिर्मोक्षः प्रसज्यते।
पुरेवानागतं भूयो नैष्यतीत्यत्र का प्रमा ॥ 1-4-361

टी—अनाद्यज्ञाननिवृत्तिर्मानफलमित्युक्त्वा अनादित्वासिद्धौ दोषमाह—आगन्तु चेदिति। इहेति आत्मोक्तिः। प्रसङ्गं प्रकटयति—पुरेति। यथा मुक्तेरर्वाक् अविद्यमानमज्ञानं प्रादुर्भवति तथा तदूर्ध्वमपि तत् प्रादुर्भविष्यतीति शङ्काया निवारकाभावात् अनावृत्तिलक्षणमोक्षासिद्धिः, अतः अज्ञानस्यानादित्वात् ब्रह्मणस्तद्विशिष्टस्य कारणत्वमेव, जगतस्तु कार्यत्वमेव इति व्यवस्थेत्यर्थः ॥'

अत्र अज्ञानस्यानादित्वं अनादेरपि तस्य नाशश्च सम्यक्साधितः ॥

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥ 1-4-371.

टी—प्रतिपन्नस्य द्वैतस्य इन्द्रजालवदविचारितरमणीयस्य अभावेतरकार्यत्वेन उपादानापेक्षस्य अनुरूपमुपादानमज्ञानमिति तदुपादाय ब्रह्म तत्कारणमिति श्रुतिस्मृत्यनुसारिभिरभ्युपेयम्। न हि कूटस्थासङ्गाद्वयं ब्रह्म जगदाकारेण अज्ञानमनादाय परिणामि भवति। न च तस्याकारणत्वम्, श्रुतिस्मृतिवादेषु तत्कारणत्वोक्तिरित्यर्थः ॥

आत्मात्मवत्त्वसम्बन्धः आत्मात्माज्ञानयोर्मतः।
परोऽविवेको भूतानामात्माविद्येति कथ्यते ॥ 1-4-381.

टी—मोहकूटस्थयोः आध्यासिकतादात्म्यं सम्बन्धः। कारणत्वं परशब्दार्थः। भवनयोग्यसर्वपदार्थानां हेतुः विवेकनिवर्त्या प्रत्यगविद्या सा च आत्मन्येवेत्यर्थः ॥

ईशादिविषयान्तं यत् तदविद्याविजृम्भितम्।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ 1-4-382.

इति वेदशिरस्सूक्तिः तथा चोद्घुष्यते स्फुटा।
दैवी ह्येषा गुणमयी मम मायेति च स्मृतिः।
वैष्णवी खल्वियं मायेत्यपि लोकेऽपि गीयते ॥ 1-4-383.

मानान्तरानधिगतं मेयं तावन्निरूपितम्।
स्वानुभूत्यनुसारेण प्रत्यङ्मात्रसतत्त्वकम् ॥ 1-4-384.

टी—प्रत्यङ्मात्रं वस्तु अज्ञमज्ञातं च। न च अज्ञातत्वादि मानगम्यम्। तन्निवर्त्यत्वात्। स्वरूपानुभवानुसारात् तत्सिद्धिः। तच्च प्रत्यग्वस्तु अपूर्वत्वात् वेदान्तमेयं इत्येतत् 'तद्धे'त्यादौ निर्धारितमित्यर्थः ॥

एतन्निदानमधुना मिथ्याज्ञानं निरूप्यते।
यतो बिभ्यति भूतानि संसारानर्थलक्षणात् ॥ 1-4-385.

टी—कर्मव्युत्पत्त्या ज्ञानशब्दो विषयमपि विषयीकरोति। एतत् अज्ञातं वस्तु निदानं यस्य तत् मिथ्याभूतं ज्ञानं ज्ञेयं च यदित्यादिना निरूप्यत इति योजना ॥

यदेव नित्यमज्ञानं मिथ्याज्ञानं तदेव तु।
कारणेतररूपेण तयोरव्यभिचारतः ॥ 1-4-386

टी—अज्ञानं कारणं मिथ्याज्ञानं कार्यमित्यत्र फलितमाह—यदिति। नित्यमिति अनादित्वमुच्यते। तत्र हेतुमाह—कारणेति। मिथ्याज्ञानस्य अज्ञानेन अन्वयव्यतिरेकवत्त्वात् तयोः कार्यकारणभावात् कार्यस्य च उपादानात् भेदायोगात् अज्ञानात्मनो बन्धस्य सम्यग्ज्ञाननिरस्यत्वसिद्धिरित्यर्थः ॥

यस्मिंश्चाविद्ययाऽध्यासः संसारानर्थलक्षणः ।
स्वाभाविक्या कृतो मिथ्या शुक्त्यादौ रजतादिवत् ॥ 1-4-414.

टी—अध्यासस्य चतुर्विधख्यातीनामन्यतमत्वं वारयति—अविद्ययेति । अर्थाध्यासं सङ्गृह्णाति—संसारेति । तस्य हेयत्वद्योतनार्थं अनर्थपदम् । न चापातिकस्यानर्थत्वम्, किं तु निरूपणायां स्फुरतीति वक्तुं लक्षणविशेषणम् । अविद्याया मिथ्याज्ञानत्वेन सादित्वात् अनाद्यध्यासहेतुत्वासिद्धिः, न च मिथ्याज्ञानस्यैव तद्धेतुत्वं एकत्र तदभावादित्याशङ्क्याह—स्वाभाविक्येति । अविद्याया विद्याप्रागभावत्वादनादित्वेऽपि नाध्यासोपादानतेत्याशङ्क्याह—मिथ्येति । उभयविधाध्यासस्याभावेतरत्वात् तदुपादानाज्ञानस्यापि नाभावत्वम् । उपादानान्तराभावादिति भावः । आत्मन्यनात्माध्यासे दृष्टान्तः—शुक्त्यादाविति ॥

ननु सामान्यविज्ञानविशेषाज्ञानसंश्रयात् ।
जातरूपस्मृतेर्लोके मिथ्याज्ञानं प्रसिध्यति ॥ 1-4-415.

टी—दृष्टान्ते कारणत्रयमस्ति । दार्ष्टान्तिके तन्न दृष्टम् । आत्मनो निस्सामान्यविशेषत्वात् अनात्मनश्च साक्षिप्रत्यक्षत्वेन स्मृत्ययोगादित्यर्थः ॥

यत्राध्यासो यदध्यस्तं भेदसिद्धौ तयोर्मृषा—
ज्ञानं जगति संसिद्धं सा चैकात्म्येऽतिदुर्लभा ॥ 1-4-416.

न नः परिहृतेनार्थश्चोद्येनानेन कश्चन ।
प्रत्यङ्मोहैकहेतुत्वात् सर्वानर्थमृषामतेः ॥ 1-4-418.

टी—मायावादे कारणत्रयाभावात् न भ्रान्तिरिति चोद्यस्यानवकाशत्वात् न तेन तत् परिहार्यमिति सिद्धान्तयति—न न इति । या हि सर्वानर्थरूपा मिथ्याबुद्धिः तस्याः तदधिष्ठाननिष्ठसाक्षिचैतन्याज्ञानस्यैव निरपेक्षकारणत्वात् न कारणत्रयाभावकृतचोद्यमस्मन्मतेऽवतरतीत्यर्थः ॥

अज्ञानमेव बाध्यं नो मानस्येह यतस्ततः ।
तच्चोद्यपरिहारोऽतः क्रियते नाफलत्वतः ॥ 1-4-419.

मिथ्याज्ञानातिरेकेण नान्यदज्ञानमिष्यते ।
येषां तान् प्रति चोद्यं स्यात् न त्वज्ञातात्मवादिनाम् ॥ 1-4-420.

टी—येषां मिथ्याज्ञानातिरेकेण अनाद्यनिर्वाच्यमज्ञानं नास्ति तान् प्रति कारणत्रयाभावे कुतोऽध्यासः इति चोद्यावकाशात् तैः तत् परिहर्तव्यमित्यर्थः। अज्ञातात्मविवर्तो जगदिति वदतामस्माकं मते यथोक्तचोद्यस्य निरवकाशत्वात् नैव परिहर्तव्यतेत्यर्थः ॥

नन्वज्ञानमवस्तुत्वात् कथं संसारकारणम्।
मिथ्याज्ञानस्य वस्तुत्वात् तदेवास्त्विह कारणम् ॥ 1-4-421.
तथा च युक्तिमद्यत्नात् महद्भिरपि भाषितम्।
अप्रामाण्यं पुनस्त्रेधेत्यत एतत् सुसंस्थितम् ॥ 1-4-422.

टी—'अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः।
वस्तुत्वात् द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥
अविज्ञाने तु दोषाणां व्यापारो नैव कल्प्यते।
कारणाभावतस्त्वेव तत् सिद्धं नस्त्वदुक्तिवत् ॥'

इति चोदनासूत्रस्थं आप्तवाक्यम्। अज्ञानं मिथ्याधीः संशयः इति त्रिधा भिन्नमप्रमाणरूपम्। अत इति। अज्ञानस्य ज्ञानानुत्पादकत्वात् न संसारहेतुता ; स्वापादावदृष्टत्वात्। इतरयोस्तु युक्तं तद्धेतुत्वं, तयोरनर्थहेतुतायाः रज्जुसर्पभ्रान्त्यादौ दृष्टत्वात्। अतो मिथ्याधीः संसारहेतुः नाज्ञानमित्येतत् सिद्धम्। पूर्वं च मिथ्याज्ञानं उत्तरस्य हेतुरित्यर्थः ॥

मिथ्याज्ञानस्य कार्यत्वात् किं तत्कारणमुच्यताम्।
अकारणं सत् कार्यं चेत् डिम्भकैरपि हस्यते ॥ 1-4-427.

टी—मिथ्याज्ञानं कार्यं अकार्यं वा ? आद्ये तद्धेतुत्वेन अनाद्यज्ञानसिद्धिरिति मत्वा आह—मिथ्येति। कार्यत्वेऽपि तस्य न त्वदिष्टमज्ञानं कारणमित्याशङ्क्य, तत् तर्हि तदनपेक्षं तत्सापेक्षं वा इति विकल्पयति—किं तदिति। आद्यं दूषयति—अकारणमिति ॥

रागादि कारणं चेत् स्यात् कार्यं सत् कारणं कथम्।
अवस्त्वपि च वस्त्वेव वस्तुरूपात्तदन्यतः ॥ 1-4-428.

टी—द्वितीयमाश्रित्य शङ्कते—रागादीति। तदपि कार्यं अकार्यं वा इति विकल्प्य आद्यं प्रत्याह—कार्यमिति। तस्य मूलकारणत्वासिद्धिरित्यर्थः। न

चाकार्यं तत् प्रामाणिकम्। न च कारणदोषस्य निमित्तत्वेऽपि समवायित्वम्; अद्रव्यत्वात्। अनभ्युपगमाच्च। अतो मिथ्याज्ञानस्य कार्यत्वे तद्धेतुत्वेन अनाद्यज्ञानसिद्धेः अकार्यत्वे तस्यैव तद्भावात् भ्रमोपादानमनाद्यज्ञानं दुर्वारमिति भावः। यत्तु अवस्तुत्वात् तस्य न कारणतेति, तत्राह—अवस्त्विति। तद्धि तुच्छत्वं वा ? वस्तुतोऽन्यत्वं वा ? वस्तुत्वानधिकरणत्वं वा ?। नाद्य; असिद्धेः। यद्यपि वस्तुरूपात् तस्याज्ञानस्यान्यत्वात् तत् अवस्तु उपपद्यते, तथापि वस्त्वेव; अपरोक्षतया तुच्छव्यावृत्तेः। द्वितीये वस्त्वन्तरे व्यभिचारः। तृतीये तु असिद्धिः, वस्तुत्वानधिकरणत्वस्य तुच्छत्वानतिरेकात्। तस्य चासिद्धेः। न चैवमाद्यतृतीययोः पुनरुक्तिः; ब्रह्मणो वस्तुत्वानधिकरणस्यैव अतुच्छत्वात्। परं प्रति च तदनतिरेकवचनात्। न च तं प्रत्येव पौनरुक्त्यम्; सम्भावनोपनीतपक्षपराकरणाविरोधात्। न च ब्रह्मान्यत्वमेव अज्ञानस्यावस्तुत्वम्। तस्मिन्ननिर्वाच्ये तदसिद्धेरिति भावः॥

मिथ्याज्ञानस्य वस्तुत्वं येनैव स्यात् सदात्मना।
अज्ञानस्यापि तेनैव सत्यत्वं केन वार्यते॥ 1-4-442.

अनित्यहेतुतोऽनित्यं तेन कर्त्रादि लक्ष्यते।
निर्हेतु प्रत्यगज्ञानं लक्ष्यते तेन नित्यवत्॥ 1-4-670.

टी——तेन-साक्षिणा। कर्त्रादिरूपमनित्यं लक्ष्यते। तच्चानित्यत्वं अनित्यधर्मादिकृतत्वात्। अन्यथा च अकर्तृत्वाद्यनुभवविरोधात्। अनुभूयते हि विदुषा प्रतीचि अकर्तृत्वादीत्यर्थः। कर्त्रादेरनित्यत्वे तदुपादानाज्ञानमपि तदभेदादनित्यं सत् नोपादानं स्यादित्याशङ्क्याह——निर्हेत्विति। यद्यपि ज्ञाननिरस्यत्वादज्ञानं न नित्यं तथापि तेनैव साक्षिणा नित्यवल्लक्ष्यते। निर्हेतुत्वे सति अभावेतरत्वात् आत्मवत् इत्यनुमानात्। अनित्योपादानत्वाच्च तन्नित्यम्, अनित्यस्य तदयोगादिति भावः॥

अपि प्रत्यक्तमो नित्यं भास्वच्चैतन्यबिम्बितम्।
बुद्धितद्वृत्तयश्चैवं तप्तायोविस्फुलिङ्गवत्॥ 1-4-834.

टी——प्रत्यगाश्रयविषयमनाद्यनिर्वाच्यमज्ञानं जगन्मूलकारणं सदैवापरोक्षचैतन्यव्याप्तमित्यर्थः॥

अविद्यैव यतोऽमीषां प्रागभावो न तत् परम् ।
भावनाज्ञानकर्मभ्यो जन्मैषां तेन नान्यतः ॥ 1-4-1149.

टी––केचिदविद्याविलसितत्वममृष्यन्तो विश्वस्य प्रधानादि निदानमित्याहुः । अपरे ब्रह्मैव परिणामि तत्कारणमिति । तान् प्रत्याह––अविद्यैवेति। अमीषां-सूत्रादीनाम्। प्रागभावः—तदुपलक्षितमुपादानमित्येतत्। अतो न परिणामिकारणान्तरं शङ्कनीयमिति शेषः। न ब्रह्म तदुपादानं श्रुत्यादिप्रमितकौटस्थ्यस्यासङ्गाद्वयस्य परिणामायोगादित्याह–न तदिति । सूत्राद्युत्पत्तौ निमित्तमाह–भावनेति। न प्रधानादि तदुपादानम्, अचेतनस्यास्वातन्त्र्यात्। पारतन्त्र्ये च मायाप्रवेशात्। तां विना तदयोगादित्याशयेनाह––तेनेति। नान्यतो जन्मैषामिति सम्बन्धः। भावनाशब्देन उपासनान्युक्तानि ॥

अहमेव परं ब्रह्मेत्यस्यार्थस्याप्रबुद्धता ।
अविद्येति वयं ब्रूमो येह नास्ति सदाऽऽत्मनि ॥ 1-4-1157.

अविचारितसंसिद्धिप्रत्यगज्ञानकारणात् ।
अब्रह्मैव तदाभाति मोहसंवीतचेतसः ॥ 1-4-1170.

अज्ञानमेव मिथ्याधीः प्रमेयानभिसङ्गतेः ।
रूप्याध्यारोपणं तस्मादुदाहारि गरीयसा ॥ 1-4-1217.

टी—'न हि शुक्तिकाया'मित्यादिभाष्येण मिथ्याज्ञानं ब्रह्मणि भाष्यकृतोक्तम्, त्वया तस्मिन् अज्ञानं साध्यते। न च तदेवाज्ञानं, हेतुफलभावात्। तथा च भाष्याननुकूलतेत्याशङ्क्य, उक्तं स्मारयति–अज्ञानमिति। मिथ्याज्ञानस्य अज्ञानाव्यतिरेकात् ब्रह्मण्यविद्याध्यारोपणायां शुक्तौ रूप्याध्यारोपणं यत् भाष्यकृतोदाहृतम्, तद्युक्तमिति फलितमाह––रूप्येति। हेतुफलभावस्तु नात्यन्तिकं भेदमावहतीति भावः ॥

यद्यविद्या भवेत् कार्यमस्त्वेतद्यदिहोदितम् ।
अकार्यत्वात्त्वविद्यायाः त्वदुक्तं तुषकण्डनम् ॥ 1-4-1220.

टी—'यदिह ब्रह्मणि अविद्यां प्रति न स्रष्टृत्वमित्यादिष्टम्, तद्युक्तम्, यदि कार्यत्वमविद्यायाः स्यात्। न च तदस्तीत्यर्थः। अविद्यायाः ब्रह्मातिरेकात् कार्यत्वमाशङ्क्याह—अकार्यत्वादिति। तस्या हि कार्यत्वे कारणं वाच्यम्।

निष्कारणकार्यायोगात्। न च आत्मा तथा, कौटस्थ्यात्। न चाविद्यैव तथा; एकत्र कार्यकारणत्वायोगात्। तद्भेदस्य चासिद्धत्वात्। अतोऽकार्यत्वात् तस्याः ब्रह्म न तां करोति। अतिरेकस्तु अनिर्वाच्याविद्यायाः नास्तीति भावः।' अत्र अविद्यायाः कार्यत्वं निरस्तम्॥

अनादेरपि बाधश्चेत् तमसो नाभ्युपेयते।
प्रमाणानां प्रमाणत्वं न क्वचित् वः प्रसिध्यति॥ 1-4-1306.

टी—अनादित्वेनाज्ञानस्य आत्मवदनिवृत्तिं शङ्कते—अनादेरिति। अतिप्रसङ्गेन प्रत्याह—प्रमाणानामिति। लौकिकवैदिकसर्वप्रमाणानां स्वविषयाज्ञाननिवर्तकत्वेनैव प्रामाण्यसिद्धिसम्भवादित्यर्थः॥

अविचारितसंसिद्धि तमोवत् स्यात्तदुद्भवम्।
कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेच्चितिः॥ 1-4-1329.

टी—ज्ञानादज्ञानध्वस्तौ तज्जत्वात् ध्वस्तं जगत् चितिरेव स्यादित्यर्थः॥

अविचारितसंसिद्धि सर्वानर्थैककारणम्।
प्रत्यङ्मात्रैकसाक्षित्वात् तमस्तत् प्रत्यगात्मनि॥ 1-4-1341.

टी—ब्रह्मणः स्वात्मनि स्वरूपज्ञानस्य सदा भावात् किमौपदेशिकज्ञानेन? इत्याशङ्क्य, तदर्थवत्त्वार्थं आत्मन्यज्ञानं साधयति—अविचारितेति। तत्तमोऽनिर्वाच्यं प्रत्यगात्मनीति सम्बन्धः। प्रतीचि तमसस्त्वे कार्यलिङ्गकमनुमानमाह—सर्वेति। तत्रैव हेत्वन्तरमाह—प्रत्यङ्मात्रेति। तस्य एकस्य अविद्यातज्जसाक्षित्वात् तस्य चाज्ञानसम्बन्धं विना असिद्धिरित्यर्थः॥

यत्प्रसादात्तमस्सिद्धिः तत् स्वसाक्ष्यप्यपन्हुते।
तमोऽप्यनुभवादेव प्राक्तद्व्युत्पत्तिजन्मनः॥ 1-4-1357.

टी—न तमः साक्षिसिद्धं मानसिद्धत्वादित्याशङ्क्य, प्रागेव मानाधीनज्ञानोत्पत्तेः तमोभानात् अनुभवादेव तद्धीरित्याह—तमोऽपीति॥

सर्ववादिविरोधेऽपि संवादोऽनुभवे यथा।
वादिनामपि संवादः तथाऽज्ञानेऽप्यसंशयः॥ 1-4-1365.

टी—सर्वपक्षाणां मिथोविरोधेऽपि सर्वैरनुभवस्तावदिष्टः; अन्यथा व्यवहारलोपात्। स च स्वप्रकाशः; वेद्यत्वेऽनवस्थानात्। स कूटस्थः

अद्वयश्च । तत्र जन्मादिसाधकाभावत् । तस्मिन् वादिनामङ्गीकारो यथेत्यर्थः । यथोक्तेऽनुभवे सत्यपि तत्साध्यमज्ञानं विप्रतिपन्नमित्याशङ्कयाह—अविसंवाद इति । अज्ञानानुपगमे व्यवहारायोगात्, तस्य च सादित्वे वस्तुनस्तद्धेतुत्वाभावात्, अवस्तुनस्तद्धेतुत्वे तस्यापि सादित्वे अनवस्थानात् अनादित्वे तस्यैव अस्मदिष्टाज्ञानत्वात् अवस्तुत्वे सति आपरोक्ष्यादेव अनिर्वाच्यत्वात् अनुभववदत्रापि वादिनामस्त्येव संमतिरित्यर्थः ॥

तद्वद्बाधोऽप्यबोधस्य बोधेनाभ्युपगम्यते ।
एतावतैव पर्याप्तमस्मद्राद्धान्तसिद्धये ॥ 1-4-1366.

टी—एतावतेति । अनुभवः, अज्ञानम्, तद्धानिः इति त्रयसिद्धिमात्रेणेति यावत् ॥

अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् ।
अज्ञानं कारणं तत्र कार्यत्वं परिशिष्टयोः ॥ 1-4-1368.

अत्र अज्ञानपदेन मूलाज्ञानमुक्तम्, न ज्ञानप्रागभावः। ज्ञानप्रागभावोपलक्षितमज्ञानं भावरूपमिति पूर्वमेवोक्तम् ॥

कूटस्थज्ञानमात्रत्वात् न तमोऽस्य स्वभावतः ।
नाप्यागन्तु तथाऽज्ञानं हिरुक्सिद्धेरसम्भवात् ॥ 1-4-1369.

टी—नागन्तु तस्यात्मनोऽन्यत्रानुत्पत्तेः । तत्रापि हेत्वन्तराभावादुत्पत्त्यनुपपत्तेरित्यर्थः ॥

अविद्यातज्जकार्याणामात्मना सङ्गतिस्ततः ।
आत्मात्मवत्स्वरूपा स्यात् न तु सोभयकर्मजा ॥ 1-4-1370.
नाप्यविद्येति वक्तव्यं तस्या ध्वान्तैकमात्रतः ।
मिथ्याधीमात्रहेतुत्वात् प्रेरकत्वं न युक्तिमत् ॥ 1-4-1810.

टी—अविद्यायास्त्वावरणमात्रत्वात् वस्तुनि मिथ्याधीजनकत्वमेव तस्याः। न स्वरूपेण प्रवर्तकत्वम्, स्वापादावदृष्टेरित्यर्थः ॥

स्वाभासवदविद्योत्थबुद्ध्यादिव्याप्तिविभ्रमात् ।
तदात्मत्वाभिमानित्वात् विज्ञानमयताऽऽत्मनः ॥ 2.1·187.

टी––प्रत्यगाभासवती या अविद्या तदुत्थबुद्ध्यादिव्याप्तिकृतं भ्रममेव व्याकरोति–तदात्मत्वेति ॥

अन्तर्यामी तथा साक्षी सर्वज्ञश्चेत्यविद्यया ।
मिथ्याध्यासैश्च तत्कार्यैरप्रमेयं प्रतीयते ॥ 2-3-10.

टी—इत्थंभावे तृतीया ॥

आकाशशब्दवाच्यो यः सर्वकारणकारणः ।
मुख्यवृत्त्या समर्थं स्यात् तत्रैवामूर्तलक्षणम् ॥ 2-3-77.

टी—'अव्याकृतमाकाशशब्दार्थः । सर्वस्य कारणं ब्रह्म तदेव कारणं सत्तास्फूर्तिप्रदं यस्याव्याकृताख्यस्य भावस्येति विग्रहः ।' अत्राज्ञानस्यापि ब्रह्म कारणमित्युक्तमिति न भ्रमितव्यम् । कारणपदेन सत्तास्फूर्तिप्रदत्वस्य विवक्षितत्वात् । एवमेव 'यावद्विकारं त्वि'ति सूत्रेऽपि विकारपदं न कार्यार्थकम् । अपि तु पराधीनसत्ताकमित्यर्थः । कल्पतरुकारोऽपि तथैव व्याचष्ट ॥

प्रत्यगज्ञानमेवेह तदन्यद्वस्तुकारणम् ।
तदन्यकारणासत्त्वात् द्वैविध्यं तमसः कुतः ॥ 2-4-201.

टी—'आत्माज्ञानं तमाच्छादयत् न जगद्धेतुः एकस्य द्विकरत्वायोगात् । अतो जगत्कारणमज्ञानान्तरम्, तद्ध्वस्तिर्विहितज्ञानादित्याशङ्क्याह–प्रत्यगिति । एकस्य द्विकरत्वविरोधः कुल्यादिदृष्टान्तेन निरस्य इत्यर्थः ॥' अत्र एकस्यैवाज्ञानस्य आत्माच्छादकत्वं जगद्विक्षेपकारणत्वं च वर्णितं तच्च अनादिभावरूपाज्ञान एव घटते ॥

प्रत्यग्याथात्म्यविज्ञानं मृत्युरज्ञानरूपिणः ।
संसारहेतोर्मृत्योः स्यात् नापीहास्त्यनवस्थितिः ॥ 3-2-19.

परिच्छेत्त्री न चाविद्या तमोरूपा हि सा यतः ।
आच्छादिकाऽतः सा युक्ता समस्तव्यस्तरूपिणः ॥ 3-2-84.

टी—आच्छादकत्वस्य बाह्यतमसि प्रसिद्धत्वादिति हिशब्दार्थः ॥

न चापि मिथ्याविज्ञानं परिच्छेदकमिष्यते ।
परिच्छिनत्ति किं व्योम नीलज्ञानं मनागपि ॥ 3-2-85.

अत्र अविद्यातः पार्थक्येन भ्रान्तिज्ञानमुदाहृतम् ॥

नात्माऽनात्मीयकार्यस्य स्यादुपादानकारणम् ।
अतादात्म्यान्न हि घटं जनयन्तीह तन्तवः ॥ 3-2-88.

कर्मातः कारणं मुक्तेः न कथंचन युज्यते ।
साक्षादविद्याप्रध्वस्तौ पारंपर्यात्तु युज्यते ॥ 3-3-42.

अत्र श्लोके कर्मणः अज्ञानध्वंसहेतुत्वमाशङ्क्य निरस्तम्, तदेतत् ज्ञानाभावरूपाज्ञानपक्षे न युज्यते । ज्ञानस्यैव ज्ञानाभावनिवर्तकत्वात् कर्मणः तन्निवर्तकत्वशङ्काया अनुत्थानात् ॥

सकृत्प्रवृत्त्या मृद्गाति क्रियाकारकरूपभृत् ।
अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः ॥ 3-3-71.

अत्राज्ञानस्य क्रियाकारकरूपभृत्त्वं अनादिभावरूपाज्ञानवाद एव युज्यते ॥

अज्ञानमनभिव्यक्तिः बोधोऽभिव्यक्तिरात्मनः ।
बाध्यबाधकभावोऽयं विरोधाद्घटते तयोः ॥ 3-3-95.

कारणत्वं न कौटस्थ्यात् तन्मोहविरहे भवेत् ।
जाड्यान्वयाच्च बुद्ध्यादेः युक्ता तत्कारणानुमा ॥ 3-4-87.

टी—कार्यस्य जाड्यात् कारणेऽपि जाड्यांशोऽनुमेयः । कारणानुसारित्वात् कार्यस्य । अतः जडशक्तिविशिष्टस्यैव तद्भावात् न तत् वास्तवमित्यर्थः ॥

प्रत्यङ्मोहजबुद्ध्यादिजडरूपप्रधानतः ।
कर्तृत्वमात्मनो युक्तं चित्प्राधान्याच्च भोक्तृता ॥ 3-4-112.

टी—आत्मनः स्वाज्ञानोत्थबुद्ध्यादिप्राधान्येन मातृत्वादि, स्वाभासप्राधान्येन साक्षिता । स्वतस्तु कूटस्थता ॥

कारणं प्रत्यगज्ञानं कार्यं संसार उच्यते ।
तद्विरुद्धात्मकः प्रत्यक् ब्रह्मापूर्वादिवाक्यतः ॥ 3-5-95.
यावद्धि जनिमत् किंचित् नामादिप्रविभागवत् ।
आकाशस्तस्य सर्वस्य तत्त्वमत्र विवक्षितम् ॥ 3-8-15.

विद्या कर्म च संस्काराः प्रत्यगज्ञानतत्त्वकाः ।
देहग्रहणहेतुत्वं येषां नः श्रुतिरब्रवीत् ॥ 3-8-30.

अविचारितसंसिद्धि प्रत्यगज्ञानसंस्थिति ।
त्रयमेतत् सदा ग्राह्यं न कार्यं कारणं विना ॥ 3-8-31.

अत्र संस्कारातिरिक्तमज्ञानमुक्तम् ॥

ध्वस्तात्माज्ञानतत्कार्याः प्रत्यग्याथात्म्यबोधतः ।
वदन्ति ब्राह्मणास्तेऽतः त्यक्तसर्वैषणाः पदम् ॥ 3-8-68.

साविद्यः प्रत्यगात्मा यः वियद्योनिरुदाहृतः ।
अन्तर्याम्यादिरूपेण स एव प्रथते मृषा ॥ 3-9-157.

एवं संसरतस्तावत् परं ब्रह्म परायणम् ।
जगतश्चाप्युपादानं स्वात्माविद्यासमन्वयात् ॥ 3-9-160.

नामरूपादिमत्कार्यं यः प्रविष्टः स्वमोहजम् ।
जलार्कवदकृत्स्नत्वमापेदेऽविद्यया परः ॥ 4-3-1.

यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम् ।
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥ 4-3-74.

नानासंस्कारसंसर्गि प्रत्यगज्ञानमेव तत् ।
बुद्ध्यादिस्मृतिरूपेण प्रथते कर्मणो वशात् ॥ 4-3-88.

अत्रापि संस्कारातिरिक्तमज्ञानमुक्तम् ॥

उपादानं हि बुद्ध्यादेरात्माविद्येति भण्यते ।
सकृद्विभातं चिन्मात्रं ज्योतिरित्युपदिश्यते ॥ 4-3-388.

टी---बुद्ध्यादेरविद्यायाश्च जडत्वेन सारूप्यात् उचितमुपादानोपादेयत्वमिति सूचनार्थो हिशब्दः ॥

बुद्ध्यादिदेहपर्यन्तं प्रत्यगज्ञानहेतुकम् ।
जडस्वभावकं नित्यमवभासयति स्वयम् ॥ 4-3-347.

आत्मा इति शेषः ॥

बुद्ध्यादिष्वपि सूक्ष्मेषु यत् सूक्ष्मतममुच्यते ।
बुद्ध्यादिकारणं नित्यमात्माविद्येति भण्यते ॥ 4-3-348.

टी—कारणत्वसिद्ध्यर्थं तन्नित्यमिति अनादित्वमुक्तम् ॥

अपि कूटस्थवपुषः प्रतीचस्सङ्गकारकम् ।
तत्त्वमस्यादिवाक्योत्थज्ञानबाध्यं च यद्विदुः ॥ 4-3-349.

यन्निमित्तं च साक्षित्वं कारणत्वं तथाऽऽत्मनः ।
सर्वकार्यविनाशेऽपि यद्बीजमवशिष्यते ॥ 4-3-350.

तदात्मज्योतिषेद्धं सत् नित्यमेवावतिष्ठते ।
उत्पत्तिस्थितिभङ्गानां न वेद्मीति च साक्षितः ॥ 4-3-351.

टी—'साक्षितः स्वानुभवात् भातीति शेषः।' जगतः आस्पदमित्यपि शेषो ज्ञेयः ।

आत्माज्ञानमतः प्रत्यक्चैतन्याभासवत् सदा ।
आत्मनः कारणत्वादेः प्रयोजकमिहेष्यते ॥ 4-3-355.

अविचारितसंसिद्धि यत्तु बुद्ध्यादिकारणम् ।
कूटस्थात्मैकचैतन्यविम्बितं स्यात् स्वदोषतः ॥ 4-3-382.

टी—स्वदोषतः सत्त्वगुणस्य स्वाच्छ्यात् ॥

स्वात्माविद्यावधिस्सोऽयं परः कारणमुच्यते ।
साक्षी चेता जगद्बीजमन्तर्यामीति च श्रुतौ ॥ 4-3-383.

मिथ्याज्ञानमृते नान्यत् कार्यं किंचिदपीष्यते ।
अविद्याया यतो नातः आसङ्गाद्याहृतिः स्वतः ॥ 4-3-1108.

आविद्यं आत्मनि कामाद्याहरणमित्यर्थः ॥

न त्वागन्तुरविद्येयं अनिर्मोक्षप्रसङ्गतः ।
आत्मस्वभावोऽविद्येयं न वेत्येतद्विचार्यते ॥ 4-3-1208.

टी—'अविद्या चेदागन्तुकी तदा तस्याः हेत्वभावे मोक्षेऽपि पुनरुन्मज्जनसम्भवात् अनिर्मोक्षः । सहेतुत्वेऽपि आत्मातिरिक्तहेत्वभावात् आत्मन एव तद्धेतुत्वेन ततो मोक्षेऽपि अविद्योदयसम्भवात् स एव दोषः । किं च

अविद्यायाः सादित्वे तद्धेतोरन्वेष्यत्वात् कूटस्थस्यात्मनो विना अविद्यां अतद्धेतुत्वात् पूर्वाविद्यायाश्च उत्तराविद्यानुपादानत्वात् अविद्याया अनादित्वं सिद्धम् ।' अत्र अविद्याया अनादित्वं साधितम् ॥

आत्मन्येष यतस्सर्वः तदविद्यैकहेतुकः ।
अध्यात्मादिप्रपञ्चो हि शुक्तिकारजतादिवत् ॥ 4-3-1233.

टी—आत्मनीति । अतस्स मिथ्येति शेषः ॥

चैतन्यमात्मनस्तत्त्वं कूटस्थं न तु कामवत् ।
अनाद्यविद्यायोगोऽस्य तत्कार्यैरादिमान्मतः ॥ 4-3-1409.

टी—'कामादिवत् अविद्याऽपि आत्मनोऽस्वभावश्चेत् तत्सम्बन्धवत् अविद्यासम्बन्धोऽपि सादिस्स्यात् । ततश्च तस्यास्सादित्वं स्वतन्त्रता वेत्याशङ्क्याह —अनादीति । अनादिरविद्या । तद्धेत्वसिद्धेः । न तावत् सैव तद्धेतुः । एकत्र हेतुहेतुमद्भावाभावात् । न चाविद्यान्तरम् ; मानाभावात् । न चात्मा ; तस्य निरविद्यस्याहेतुत्वात् । अविद्यावतो हेतुत्वे च अनाद्यविद्यासिद्धिः तद्भेदस्यामानत्वेन व्युदस्तत्वात् । तस्मादनादित्वादविद्यायाः तत्सम्बन्धोऽप्यनादिः । कामादिस्तु तत्सम्बन्धश्च नैवमित्यर्थः' । अत्र अविद्यावत् तत्सम्बन्धोऽप्यनादिः साधितः । अत एव 'षडस्माकमनादयः' इति सिद्धान्तः ॥

रज्ज्वज्ञानमनादाय न सर्पादीक्षणं यथा ।
आत्माज्ञानमनादाय न तथाऽनात्मवीक्षणम् ॥ 4-3-1454.

विभक्तं यत्तमोऽस्तीव नाविभक्तं मनागपि ।
तमोऽन्वितत्वाद्बुद्ध्यन्ते न प्राज्ञेऽनन्वयात्तमः ॥ 4-3-1517.

टी—साभासमज्ञानं द्वितीयं चेत् 'न तु तत् द्वितीयमस्ति' इत्यादिः कथं निषेधः ? । न हि सुषुप्तावज्ञानं नास्ति । पुनरुत्थानविरोधादित्याशङ्क्याह—विभक्तमिति । यदज्ञानं 'अज्ञोऽह'मिति विभागेन भाति तत् परमार्थतोऽसदपि प्रतीतितोऽस्तीत्यवस्थाद्वये व्यवह्रियते । सुषुप्ते च न तत् विभागेन ज्ञायते । अतः न तत् तदा अस्तीत्युच्यते इत्यर्थः । किं च मातृपक्षतया अविद्या भासते, न परपक्षतया । न च स्वापे माता अस्ति । अतो युक्तं तदा तदभाववचनमिति स्थूलदृष्टिमाश्रित्याह—तम इति ॥

तमोऽन्तः कारणं बुद्धेः द्रष्टाऽन्तःकरणावधिः ।
सुखी दुःखी च देहान्तः प्रत्यगज्ञानहेतुतः ॥ 4-3-1528.

बुद्ध्यन्तस्यास्य मूढस्य सुखशब्दादिदर्शिनः ।
स्वकारणक्षयाद्ध्वस्तौ नात्मा पश्यन्नपीक्षते ॥ 4-3-1532.

टी—मात्रादिहेतुव्यक्ताज्ञानस्य स्वापे नाशात् तस्यापि तदा ध्वस्तौ आत्मा चिद्रूपतया स्वप्रकाशोऽपि न पश्यतीत्युच्यत इत्यर्थः ॥

द्रष्टृत्वादिविभागेन विभक्तो यस्त्वविद्यया ।
स कूटस्थात्मनाऽपीतो रज्ज्वा सर्पो यथा तथा ॥ 4-3-1533.

टी—ननु तदा मात्रादिध्वंसः सावशेषो निरवशेषो वा ?। आद्ये स्वकारणक्षयादित्ययुक्तम्। द्वितीये पुनरुत्थानानुपपत्तिः। तत्राह—द्रष्टृत्वादीति। स्वापे हेत्वभावोक्तिः व्यक्ताज्ञानाभावाभिप्राया। तेन मात्रादिविभागस्य अज्ञातेनात्मना तत्रोपसंहारात् ध्वंसः सावशेष इत्यर्थः। कूटस्थं ब्रह्म आत्मा यस्य कारणस्य तेन। स्वात्मन्येव मात्रादेरुपसंहारं दृष्टान्तेनाह—रज्ज्वेति ॥

आत्माविद्यैव नः शक्तिः सर्वशक्यस्य सर्जने ।
नातोऽन्यथा शक्तिवादः प्रमाणेनावसीयते ॥ 4-3-1784.

तस्मादज्ञात आत्मैव शक्तिरित्यभिधीयते ।
आकाशादेस्ततो जन्म यस्मात् श्रुत्याऽभिधीयते ॥ 4-3-1787.

जाग्रत्स्वप्नप्रपञ्चेऽस्मिन्नात्माविद्यैकहेतुके ।
अनन्योऽपि स्वतो यत्र मोहादन्य इवेक्ष्यते ॥ 4-3-1790.

स्वतः कूटस्थतत्त्वस्य तदसम्बोधतस्ततः ।
जन्मादिविक्रियाषट्कसङ्गतिस्स्यात् परात्मनः ॥ 4-4-39.

टी—'मायां तु प्रकृतिम्' इत्यादिश्रुतेः आविद्यं कारणत्वं तस्यैव परस्यास्थेयमित्यर्थः ॥

आत्मकारणवादोऽयमेवं सत्युपपद्यते ।
न तु विध्वस्तनिश्शेषजन्मनाशादिकारणे ॥ 4-4-40.

टी—एवं सति, अविद्याकृते कारणत्वे स्वीकृते सतीति यावत्। निरविद्ये ह्यात्मनि अङ्गीकृते नैवम्। अपूर्वादिश्रुतेरित्याह—न त्विति॥

न हि वेदान्तसिद्धान्ते ह्यज्ञातात्मातिरेकतः।
साङ्ख्यानामिव सिद्धान्ते लभ्यते कारणान्तरम्॥ 4-4-179.

जाग्रत्स्वप्नक्षये कामाः प्रमुच्यन्तेऽखिला नृणाम्।
संस्कारमात्रशेषास्ते सुषुप्ते यान्ति सङ्क्षयम्॥ 4-4-378.

कामहेतौ हि विध्वस्ते न कश्चिदवशिष्यते।
संस्कारो वाऽथ वाऽप्यन्यः सर्वस्याज्ञानमूलतः॥ 4-4-379.

अत्र संस्कारस्यापि मूलमज्ञानमतिरिक्तमुक्तम्।

किं च हेतुमतो जन्म सर्वत्र स्यात् पुनः पुनः।
सर्वहेतोस्त्वविद्यायाः ध्वस्तायाः स्यात् कुतो भवः॥ 4-4-919.

ब्रह्मणश्चेद्भवस्तस्या अनिर्मोक्षः प्रसज्यते।
स्थास्नुत्वाद्ब्रह्मणो नित्यं किरणानां रवेरिव॥ 4-4-920.

अनादेर्नाप्यनुच्छित्तिः सर्वत्रोच्छेददर्शनात्।
अनाद्यज्ञातमेयेषु ह्यज्ञानस्य प्रहाणतः॥ 4-4-921.

न च कारणसंसर्गो नाशोऽज्ञानस्य भण्यते।
उरगादेः स्रजीवास्य ब्रह्मणोऽकारणत्वतः॥ 4-4-923.

टी—'स्रजि कल्पितस्य सर्पादेः नाशः न कारणसंसर्गः। किन्तु स्रङ्मात्रता। तथा ब्रह्मण्यज्ञाननाशोऽपि न कारणसंसर्गात्मकः, ब्रह्मणः तदकारणत्वात्। तस्य चाकार्यत्वादित्यर्थः॥'

अत्र अविद्यायाः अकार्यत्वम्, अथापि नाशश्च इति निरूपितम्॥

अथ सम्बन्धवार्तिकस्थानि मूलाविद्यागमकवचनानि लिख्यन्ते—

यतोऽनुभवतोऽविद्या ब्रह्मास्मीत्यनुभूतिवत्।
अतो मानोत्थविज्ञानध्वस्ता साऽप्येत्यथात्मताम्॥ 177.

टी—ननु कीदृक् ज्ञानमविद्यामपनुदति? स्वरूपज्ञानम्? प्रमाणज्ञानं वा? नाद्यः, तस्याज्ञानसाधकस्य तदनिवर्तकत्वात्। न द्वितीयः, आगमादि-

मानविषयत्वात् ब्रह्मवत् तस्याः तन्निवर्त्यत्वायोगात् । इत्यत आह—यत इति। न तावदविद्या मानविषयः यतो न सा ततो निवर्तेत। किं तु ब्रह्मरूपानुभवगोचरः। स च प्रमाणाप्रमाणसाधारणः चित्प्रकाशः। श्रुत्यादिमानं तु तस्यां विप्रतिपन्नं प्रति अभावव्यावृत्तिमात्रं प्रतिपादयति। तथोक्तम्—'अत्र च साक्षिवेद्यस्य अज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यत इति न तस्य प्रमाणवेद्यत्वप्रसङ्गः' इति। आत्माज्ञानं नित्यानुभवसिद्धमित्यत्र दृष्टान्तमाह—ब्रह्मेति। वाक्योत्थं ज्ञानं ब्रह्मानुभूतिः। सा जाड्यात् न स्वतस्सिद्धा। नापि मानतः, अनवस्थानात्। अतो ब्रह्मस्वभावचित्प्रकाशात् सिद्धा। तद्वदज्ञानमपीत्यर्थः। तस्य नित्यानुभवमात्रसिद्धत्वे फलितमाह—अत इति। यतो नाविद्या मानविषयः, किं तु नित्यानुभवगोचरः, अतः वाक्योत्थबुद्धिवृत्तिध्वस्ता न सा तात्त्विकीति अविद्यातत्सम्बन्धावतात्त्विकाविति भावः। साऽप्येतीति। अविद्या हि प्रमाणप्रहता ब्रह्मात्मतां प्राप्य प्रलीयते। 'अविभागो वचनात्' इति न्यायात्। अतः अज्ञानध्वंसस्य ब्रह्मानतिरेकात् न द्वैतापातः। न च ब्रह्मणोऽज्ञानानाश्रयत्वम्; तद्ध्वंसात् प्राक् तदाश्रयत्वात्। घटध्वंसस्य मृदात्मत्वेऽपि तद्ध्वंसात् पूर्वं मृदो घटाश्रयत्वदृष्टेरित्याशयेनाह—अप्येतीति ॥

सर्वानर्थाभिसम्बन्धे ह्यविद्यैवास्य कारणम्।
वासनानामपि युतौ सैव यस्मादपेक्ष्यते ॥ 464.

टी—'अविद्यावत् वासनानामपि हेतुत्वसम्भवे कुतोऽवधारणम्? इत्याशङ्क्याह—वासनानामिति। तासां कार्यत्वेन अनन्वयानवस्थानाभ्यां उपादानत्वायोगात् सवासनानर्थहेतुरविद्यैवेत्यर्थः। विना अविद्यां असङ्गस्यात्मनो न वासनासङ्गतिरिति द्योतयितुं सैवेत्युक्तम् ॥'

अत्र वासनाव्यतिरिक्ताविद्या साधिता ॥

अतोऽनुभवतो लब्धमज्ञातं ज्ञापयत् सदा।
प्रत्यक्षादि प्रमाणं स्यात् न स्वतो नापि चान्यतः ॥ 990.

टी—अतः—अज्ञातत्वस्य असत्त्वं मानगम्यत्वमिति पक्षद्वयासम्भवात्। न स्वत इति—अज्ञातत्वस्य स्वयंप्रभत्वानभ्युपगमात् मेयत्वस्य च निरस्तत्वात् अनुभवसिद्धमज्ञातत्वम् ॥

नाज्ञासिषमहं पूर्वमित्येवं प्रमिते घटे ।
पूर्वाज्ञातत्वविषयो भूयोऽप्यनुभवो यतः ॥ 991.

टी—अज्ञातत्वमनुभवसिद्धं न तुच्छीभवति । अतुच्छत्वस्य व्याप्तिस्तु मेयत्वस्वप्रकाशत्वानुभवसिद्धत्वानामन्यतमेन इत्यास्थेयमित्यर्थः ॥

सर्वोऽप्यनुभवात् सिद्धां बालोऽप्यज्ञाततां स्वतः ।
न किञ्चिज्जान इत्येवं पृष्टो वक्ति प्रमां विना ॥ 993.

कृत्स्नमात्राद्युपादानतमोबाधस्तु बोधतः ।
तत्त्वमस्यादिवाक्योत्थात् पूर्णैकात्म्यस्वलक्षणात् ॥ 1006.

स्वाभाविक्यप्यविद्येयमनुभूत्याऽवभासिता ।
तमस्सूर्योदयेनेव ज्ञानेनोत्कृत्य नाश्यते ॥ 1088.

टी—ननु अज्ञानमनादित्वात् अनुभवमात्रसिद्धत्वाच्च आत्मवत् न निवर्तते इत्याशङ्क्य, अनादिभावत्वमुपधिरिति मत्वा आह—स्वाभाविकीति । अवभासितेत्यत्रापि पूर्वोऽपिः सम्बध्यते ॥

अनादिकालमज्ञानं ज्ञानेनादिमता क्षणात् ।
दृश्यते नाश्यमानं हि न चास्याऽऽवृत्तिरीक्ष्यते ॥ 1889.

टी—विद्वदनुभवविरुद्धं चानुमानमित्याह—अनादीति । ज्ञानप्रागभावे च अनैकान्त्यं प्रसिद्धमिति हिशब्दार्थः ॥

तैत्तिरीयोपनिषद्भाष्यवार्तिकवचनानि मूलाविद्यागमकानि—

अनादिमध्यनिधनाविद्यासन्दूषितात्मनः ।
ब्रह्मणो जायते व्योम तिमिरादिव चन्द्रमाः ॥ ब्रह्मवल्ली-1-49.

निजाविद्यामहाजालसंवीतधिषणः पुमान् ।
मोहोत्थानलकामाख्यबडिशापहृताशयः ॥ ब्र. 1-66.

टी—आत्मन्यनादिरनिर्वाच्याविद्या निजाविद्येत्युच्यते ॥

न जानामीत्यविद्यैका नित्या तत्कारणं मता ।
स्वप्रसिद्धयैव सा सिद्ध्येत् निशोलूकीव वासरे ॥ ब्र. 1-76.

टी—स्वानुभवसिद्धा अविद्या । स्वप्रसिद्धिरात्मचैतन्यम् ॥

आत्माग्रहातिरेकेण तस्या रूपं न विद्यते ।
अमित्रवदविद्येति सत्येवं घटते सदा ॥ ब्र. 1-79.

टी—'केचित्तु ज्ञानप्रागभावमविद्यामाचक्षते । तान् प्रत्याह—आत्मेति । आत्मनः अग्रहो नाम आवरणमाच्छादनम् । न तदतिरेकेण अविद्याया रूपमस्ति । न खल्वभावस्याच्छादकत्वं सम्भवति । अतो वस्त्वाच्छादकत्वमविद्यायाः स्वरूपमित्यर्थः । अविद्येति नञः तर्हि कोऽर्थः स्यात्? इत्याशङ्क्य, यथा अमित्राधर्मादौ तदन्यत्वं तद्विरुद्धत्वं वा नञः अर्थः तथा विद्यातोऽन्यत्वं विद्याविरुद्धत्वं वा नञोऽर्थः, न तदभावत्वमित्याह—अमित्रवदिति।' आच्छादकत्वेन भावरूपाविद्यैव अग्रहणशब्देन क्वचित् भाष्ये व्यपदिश्यते न ज्ञानप्रागभावः इति अनेन ज्ञायते ॥

मायावी जगदुत्पाद्य माययैवेश्वरेश्वरः ।
सर्पादीन् कल्पितान् स्रग्वत् तदेवानुविवेश सः ॥ ब्र. 6-78.

अविद्यया तदोद्धृत्य रज्ज्वा रज्जुमिव स्वयम् ।
अहित्वेनाद्वयाद्बोधात् कुरुते कर्तृभोक्तृभिः ॥ ब्र. 7-63.

टी—यथा रज्जुः स्वाविद्यया स्वात्मानमहित्वेन करोति, तथा अयमप्यात्मा स्वाविद्यया स्वमात्मानं अद्वयात् बोधात् ब्रह्मणः सकाशात् पृथक्कृत्य कर्तृभोक्तृत्वरूपेण करोतीत्यर्थः ॥

भयहेतुर्द्वयं यस्मात् तच्चाविद्यासमुद्भवम् ।
प्लुष्टायां विद्यया तस्यां न कुतश्चन भीर्भवेत् ॥ ब्र. 9-25.

इत्थं बहूनि भगवत्पादसुरेश्वरवाचस्पत्यादिवाक्यानि मूलाविद्यां दृढं स्थापयन्ति दृश्यन्ते । तेषु वाक्येषु भ्रमतत्संस्काराद्यतिरिक्ता स्वरूपतोऽनादिभूता संस्काराद्याश्रयरूपा प्रपञ्चाकारपरिणामिनी सर्वत्रानुगता भावरूपा दण्डायमाना एका मायादिपदव्यपदेश्या अनिर्वाच्या मूलाविद्या स्पष्टमवगम्यते । एवं सति भाष्यादौ न सा अवगम्यते इत्युक्तिर्नागेशभट्टस्य स्थूलकूश्माण्डस्य भक्ते प्रच्छादनप्रयत्नवत् अपहास्या । तस्या अजन्यत्वं न यथा कथंचित् व्याख्यानमर्हति । स्वरूपतोऽनादित्वरूपमेव तत् । तथैव भाष्यादाववगतेः । भाष्यादौ मूलाज्ञानस्य भ्रान्तिज्ञानकारणत्वेन कार्यकारणयोरभेदात् क्वचित्

तदभेदेनापि निर्देशो दृश्यते न तावता मूलाज्ञानापलापो भवितुमर्हति। यत्तु—'सर्वसंमताध्यासे प्रश्नोत्तरोपलम्भवत् सर्वासंमताविद्यायां प्रश्नोत्तरानुपलम्भात् न सा भाष्यसंमते'त्युक्तम्। तन्न—भगवत्पादप्रणीताया उपदेशसाहस्र्या गद्यभागे अविद्याविषये प्रश्नोत्तरोपलम्भात्॥

तत्र हि गुरुशिष्यसंवादरूपतया प्रवृत्ते 'भगवन्! कथमहं संसारान्मोक्षिष्ये शरीरेन्द्रियविषयवेदनावान् जागरिते दुःखमनुभवामि, तथा स्वप्ने अनुभवामि च पुनः पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य, किमयमेव मम स्वभावः? किं वा अन्यस्वभावस्य सतो नैमित्तिकः? इति। यदि स्वभावः न मे मोक्षाशा, स्वभावस्यावर्जनीयत्वात्। अथ नैमित्तिकः, निमित्तपरिहारे स्यात् मोक्षोपपत्तिः' इति शिष्यप्रश्ने 'शृणु वत्स न तवायं स्वभावः, किंतु नैमित्तिकः' इति गुरोः प्रतिवचनम्। पुनः 'किं निमित्तम्? किं वा तस्य निवर्तकम्? को वा मम स्वभावः? यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रपद्येय' इति शिष्यप्रश्ने 'अविद्या निमित्तं विद्या तस्य निवर्तिका। अविद्यायां निवृत्तायां तन्निमित्ताभावात् मोक्ष्यसे जन्ममरणलक्षणात्। स्वप्नजाग्रद्दुःखं च नानुभविष्यसि' इति गुरोः प्रतिवचनम्। पुनरपि 'का सा अविद्या किंविषया वा? विद्या च का यया स्वभावं प्रतिपद्येय' इति शिष्यप्रश्ने 'त्वं परमात्मानं सन्तं असंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे, अकर्तारं सन्तं कर्तेति, अभोक्तारं सन्तं भोक्तेति, विद्यमानं च अविद्यमानमिति। इयमविद्या' इति गुरोः प्रतिवचनम्॥

अत्र परमात्मस्वरूपावरणेन विपरीतरूपप्रतिपत्तिरूपविपर्ययेण च कार्येण आवरणविक्षेपशक्तिमती अनादिभावरूपाविद्या निरूपिता। पुनश्च महता प्रबन्धेन आक्षेपसमाधानैरविद्यामुपपाद्य अन्ते 'एषा अविद्या यन्निमित्तः संसारः जाग्रत्स्वप्नलक्षणः, तस्या अविद्यायाः विद्या (वेदान्तमहावाक्यजन्यप्रत्ययाभिव्यक्तकूटस्थात्मप्रकाशरूपा) निवर्तिका' इत्युपसंहृतम्। अत्र च भ्रान्तिज्ञानमेवाविद्या उक्ता इति न भ्रमितव्यम्। जाग्रत्स्वप्नलक्षणभ्रान्तिज्ञानात्मकसंसारनिमित्तभूताया एव मूलाविद्यायाः अत्र निरूपणात्॥

अध्यासभाष्ये 'कोऽयमध्यासो नाम?' इति प्रश्नपूर्वकं अध्यासनिरूपणमपि कार्यलिङ्गकानुमानविधया तत्कारणीभूताया मूलाविद्याया निरूपणार्थमे-

वेति नाविद्याया अनिरूपणम् । 'मिथ्याज्ञाननिमित्तः' इति पूर्वतनभाष्ये अध्यासकारणतया मिथ्याभूतस्य अज्ञानस्य अशेषानर्थनिदानस्य प्रक्रान्तत्वात् । 'मिथ्याज्ञाननिमित्तः' इति भाष्ये हि मिथ्याज्ञानपदं न भ्रान्तिज्ञानपरम्, अपि तु मूलाज्ञानपरमेव । तदेतत् अभिनवद्रविडाचार्यविरुदावहबालकृष्णानन्दसरस्वतीविरचितशारीरकमीमांसाभाष्यवार्तिके उक्तम्—

मूलमलबोधकमुपेयमथ मिथ्या-
ज्ञानपदमत्र पुनरुक्तिपरिहृत्यै ।
भ्रान्तिरुदिता भवकरी किल विशिष्या-
ध्यस्यपदतो न खलु मूलमलमुक्तम् ॥ 1-168.
ज्ञानमतितीव्रमवलम्ब्य विनिवृत्त्या
सर्वविषयभ्रमनिदानकतया च ।
मूलमलमावृतिमयं भवति मिथ्या-
ज्ञानपदतो व्यवहृतं गुरुवरेण ॥ 1-169. इति ॥

अस्य चाभिनवद्रविडाचार्यस्य व्याकरणगुरुः नागेशभट्टः । तदुक्तं तेनैव—

'वचांसि व्याकुर्वन् वररुचिगिरां यो विवरणं
विशालं व्यातेने विविधनयविन्यासविमलम् ।
विजानंस्तज्जीनं पुनरपि नवीनं कलयितुं
स नागेशः श्रीमान् जयति जगतामादिमगुरुः (28) इति ॥

वेदान्ते गुरुः गौडब्रह्मानन्दसरस्वती । तदप्युक्तं तेन—

मदोन्मत्तद्वैतद्विरदहठकुम्भस्थलवर-
प्रभेदप्रद्योतन्नयनखरविस्फूर्जितवरान् ।
समन्तादुन्मुक्ताविरलवरमुक्तान् मृगपतीन्
सदा ब्रह्मानन्दान् सरलचरितान् साधु कलये ॥ 20 ॥ इति ।

'मिथ्याज्ञाननिमित्तः' इति पदविवरणस्थले गुरुशिष्ययोरेवं मिथो विरुद्धा उक्तिः । 'शिष्यादिच्छेत्पराजयम्' इत्युक्तरीत्या शिष्यस्यात्र जयः । 'सर्वसम्मताध्यासे'त्युक्तिः नागेशस्य न शोभते । अख्यातिवादिनां साङ्ख्यानां

प्राभाकराणां च अध्यासस्यासम्मतत्वात्। 'सर्वासम्मताविद्ये'त्युक्तिरपि न शोभते ; अज्ञानस्य साक्षिसिद्धस्यापलापानर्हत्वात्। अज्ञानस्याभावव्यावृत्त्यादिविषये परं वादिनां विवादः, न स्वरूपे ॥

गीताभाष्ये त्रयोदशाध्याये अविद्याया आश्रयविषयकप्रश्नोत्तरपरम्परा दृश्यत एव—'अत्राह—सा अविद्या कस्येति। यस्य दृश्यते तस्यैव। कस्य दृश्यत इति। अत्रोच्यते—अविद्या कस्य दृश्यत इति प्रश्नो निरर्थकः। कथम्?। दृश्यते चेदविद्या तद्वन्तमपि पश्यसि। न च तद्वत्युपलभ्यमाने सा कस्येति प्रश्नो युक्तः' इत्यादिरूपा ॥

यदप्युक्तम्–'अग्रे च अध्यासातिरिक्ता अविद्या न काचिदिति सूचयितुमेव 'तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते' इत्युक्तम्। भावरूपायाः कारणाविद्याया अतिरिक्ताया भाष्यसम्मतत्वे अध्यासमपीति ब्रूयात्' इति। तत्र ब्रूमः—प्रथमतः तद्भाष्यस्य साम्प्रदायिकोऽर्थः प्रदर्श्यते, येन नागेशोक्ताभिप्रायो न भाष्यकाराणामिति स्फुटं ज्ञायेत ॥

तत्र आनन्दगिरीयव्याख्या इत्थम्—'ननु ब्रह्मविद्यापोद्यत्वेन सूत्रितामविद्यां हित्वा किमित्यध्यासो वर्ण्यते? तत्राह—तमेतमिति। आक्षिप्तत्वं समाहितत्वं लक्षितत्वं च विशेषणार्थः। अध्यासमिति अनुभवानुसारिणी अनर्थतोक्ता। पण्डिता मन्यन्ते इति पृथग्जनागोचरत्वेन एतदविद्यात्वस्य व्युत्पाद्यत्वमुक्तम्। प्रतिपन्नोपाधौ निषेध्यस्य अविद्यान्वयव्यतिरेकित्वात् अविद्यात्वमस्य इति वक्तुमविद्याग्रहणम्। अतो न सूत्रिता अविद्या उपेक्षिता। तस्या एव वर्ण्यमानत्वादित्यर्थः। न केवलमन्वयादिना अस्याविद्यात्वम्। विद्यापोद्यत्वेन तद्विरोधित्वाच्चेत्याह—तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुरिति। तस्य—अध्यस्तस्य बुद्ध्यादेः। विवेकः–विलापनम्, तेन रूपेण आत्मनोऽसाधारणरूपस्य इदमित्थमेवेत्यवधारणं विद्या। तेन तद्विरोधित्वादिना सिद्धे अध्यासस्याविद्यात्वे सैवोच्यत इत्यर्थः। तथापि कारणाविद्यां त्यक्त्वा कार्याविद्योक्तिरयुक्तेत्याशङ्क्याह—तत्रैवं सति यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न सम्बध्यते इति। तस्मिन् अध्यासे उक्तरीत्या अविद्यात्मके सति आच्छादकाविद्यायाः स्वापादौ स्वतः अनर्थत्वादर्शनात् कर्तृत्वाद्यध्यासात्मना तस्याः जागरादौ तथात्वात् कार्याविद्या

वर्ण्यते। यत्र आत्मनि बुद्धयादौ वा ; यस्य बुद्धयादेरात्मनो वा अध्यासः, तेन बुद्धयादिना आत्मना वा कृतेन अशनायादिदोषेण चैतन्यगुणेन वा आत्मा अनात्मा वा वस्तुतो न स्वल्पेनापि युज्यते इत्यतो विद्यया तन्निवृत्तिरित्यर्थः।' इति। 'अविद्याकार्यत्वादध्यासमविद्यां मन्यन्ते' इति प्रकटार्थविवरणे उक्तम्॥

भामत्यां तु एवं व्याख्यातम्—'ननु सन्ति च सहस्रमध्यासाः। तत् किमर्थं अयमेवाध्यासः आक्षेपसमाधानाभ्यां व्युत्पादितः नाध्यासमात्रमित्यत आह—तमेतमिति। अविद्या हि सर्वानर्थबीजमिति श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धम्। तदुच्छेदाय वेदान्ताः प्रवृत्ता इति वक्ष्यति। प्रत्यगात्मन्यनात्माध्यास एव सर्वानर्थहेतुः, न पुनः रजतादिविभ्रमाः, इति स एवाविद्या। तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुमिति तदेव व्युत्पाद्यम् ; नाध्यासमात्रम्। अत्र च एवंलक्षणमिति एवंरूपतया अनर्थहेतुतोक्ता। यस्मात् प्रत्यगात्मनि अशनायादिरहिते अशनायाद्युपेतान्तःकरणाद्यहितारोपेण प्रत्यगात्मानमदुःखं दुःखाकरोति तस्मादनर्थहेतुः। न चैवं पृथग्जना अपि मन्यन्ते अध्यासं येन न व्युत्पाद्येत इत्यत उक्तम्—पण्डिता मन्यन्ते' इति॥

ब्रह्मविद्याभरणेऽपि—'अहं ममेति प्रतीतेरध्यासत्वं अविद्यात्वप्रसिद्धया द्रढयति—तमेतमिति। तथा च स्मृतिः—'अहं ममेत्यविद्येयं व्यवहारस्तथाऽनया' इति।' इति। तथा च भाष्ये अध्यासस्य अविद्यात्वोक्तिः न कारणाविद्यानिरासतात्पर्येण। भाष्य एव जगदाकारपरिणामिन्याः मूलाविद्यायाः बहुषु स्थलेषु प्रदर्शितत्वात्। तथा च पूर्वोक्तसाम्प्रदायिकभाष्यार्थापरिज्ञानात् मूलाविद्यानिरासप्रत्याशादुराग्रहाच्च नागेशस्य भाष्यापार्थकल्पनमिति विद्वांसो विदांकुर्वन्तु॥

शुद्धब्रह्मणोऽनभिव्यक्तिलक्षणं मूलाज्ञानमेव शुद्धब्रह्माभिव्यक्तिलक्षणाखण्डाकारज्ञानेन साक्षाद्विरोधि तेनापोद्यते, मूलाज्ञानलक्षणकारणनिवृत्त्या च तत्कार्याध्यासनिवृत्तिरिति सम्प्रदायः॥

रागद्वेषमोहादिवासनास्विव अध्यासेऽपि अविद्यापदं मायापदं च गौणमेव। मूलाज्ञान एव तु तत् मुख्यम्। 'उपपद्यते चाप्युपलभ्यते च' इति सूत्रभाष्ये 'न चाविद्या केवला वैषम्यस्य कारणम्' इति वाक्ये अविद्यापदं न भ्रान्तिपरम्, अपि तु मूलाविद्यापरमेव। अत एव भामत्याम्—

'न चाविद्या केवलेति लयाभिप्रायम्' इति तत्र व्याख्यातम्। इदं च पूर्वमेव निरूपितम्। एतेन नागेशस्य अन्यथोक्तयः सर्वा अपास्ताः ॥

यच्चोक्तम्—जन्यत्वनाश्यत्वयोः परस्परव्याप्तेरेव लोके दृष्टत्वात् अविद्याया नाश्यत्वेनाभिमतायाः जन्यत्वमावश्यकं, ततश्चानादित्वं अविद्याया न सम्भवतीति, तन्न—'यत् कृतकं तदनित्य'मित्यनुमानानुगृहीतया 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुत्या जन्यत्वस्य नाश्यत्वव्याप्यत्वं निश्चीयते। नाश्यत्वस्य जन्यत्वव्याप्यत्वं तु प्रमाणाभावात् न भवति। 'उपपद्यते चाप्युपलभ्यते च' इत्यादिसूत्रात् 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिस्मृतेः अकृताभ्यागमप्रसङ्गादियुक्तिबलाच्च अजन्यत्वेनाभ्युपगन्तव्यायाः मूलाविद्यायाः 'सोऽविद्याग्रन्थिं विकिरतीह सोम्य' इत्यादिज्ञानफलप्रतिपादकश्रुतिविद्वदनुभवादिबलात् नाश्यत्वसिद्धेः। अप्रयोजकत्वाच्च। 'अनादित्वं सादित्वं वा नानिवर्त्यत्वे निवर्त्यत्वे वा प्रयोजकम्, किं तु विरोध्यसन्निपातः तत्सन्निपातश्च' इत्याद्याकरेषु स्फुटम् ॥

यच्चावाचि—'अनित्याशुचि' इत्यादियोगसूत्रोक्ता भ्रान्तिरूपा अविद्यैव व्यासस्यापि सम्मता व्याससूत्रे तद्विलक्षणाया अविद्याया अनुक्ते'रिति, 'परमतमप्रतिषिद्धमनुमतं भवति इति न्यायेन अप्रतिषिद्धस्य योगशास्त्राभ्युपगतस्य भगवत्पादैरभ्युपगतत्वा'दिति च, तन्न—'तदधीनत्वादर्थवत्' इति सूत्रे अविद्यात्मकबीजशक्तेः ईश्वराधीनायाः भ्रान्त्यादिकारणभूतायाः अनादिभावरूपायाः भ्रान्त्यादिधर्मकबुद्ध्यादिपरिणामिपराभिमतप्रधानस्थानीयायाः अभ्युपगतत्वात्। तदेतत् पूर्वमेव निरूपितम्। योगसूत्रभाष्यकारो भगवान् व्यासः स्वीयब्रह्मसूत्रेऽपि योगसूत्राभिमतमेवाभ्युपगच्छेदिति परस्य भ्रान्तिः। व्यासस्य योगदर्शनानुरोधेन योगसूत्रभाष्यकृत्त्वेऽपि स्वीयवेदान्तदर्शने 'एतेन योगः प्रत्युक्तः' इति योगदर्शनं निराकुर्वतः योगदर्शनरीत्यैव सर्वं अभ्युपगन्तव्यमिति निर्बन्धे कारणाभावात्। षड्दर्शनीटीकाकारत्वेन प्रसिद्धः तत्तद्दर्शनावलम्बिभिः सविशेषं पुरुस्कृतो वाचस्पतिमिश्रः तत्तद्दर्शनटीकायां परस्परसिद्धान्तासङ्करेणैव व्याख्यातवान्। न तु विज्ञानभिक्षुनागेशभट्टादिवत् सर्वदर्शनसङ्करमापादयति। तन्न्यायमाकलयतु व्यासविषयेऽपि नागेशः। अविद्यायाः ब्रह्माजन्यत्वेऽपि ब्रह्मणि कल्पितत्वेन ब्रह्माधीनसत्ताकायाः ब्रह्मानतिरिक्तायाः ब्रह्मज्ञानेन ज्ञातत्वसम्भवात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः न भङ्गः ॥

यच्च—'सामान्यात्तु' इति सूत्रे 'न च ब्रह्मव्यतिरिक्तं किंचिदजं सम्भवति 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यवधारणात्' इति भगवत्पादीयं वचनं ब्रह्मातिरिक्ताया अजन्याया अविद्याया अभ्युपगमे विरुध्येत' इति, तत्प्रत्युच्यते—'सदेवे'त्यादिश्रुतौ हि सच्छब्दवाच्यं अविद्याशबलं ब्रह्म, न तु शुद्धम्, शुद्धस्य कारणत्वायोगात् कारणवाचिसच्छब्दाबोध्यत्वात्। तदेतत् माण्डूक्योपनिषद्भाष्ये भगवत्पादैरुक्तम्—'बीजात्मकत्वाभ्युपगमात् सतः। यद्यपि सत् ब्रह्म प्राणशब्दवाच्यं तत्र, तथापि जीवप्रसवबीजात्मकत्वमपरित्यज्यैव प्राणशब्दत्वं सतः सच्छब्दवाच्यता च' इति। तथा च सदेवेत्यवधारणेन अविद्याशबलव्यतिरिक्तं जगत् व्यावर्त्यते, न तु अविद्या। एवं च, सद्रूपब्रह्मव्यतिरिक्तं किंचिदपि अजं न सम्भवतीति भाष्योक्तेः अविद्योपहितब्रह्मान्यत् अजं न सम्भवतीत्येव अर्थः। एवं सति अविद्याया अजन्यत्वे तत् भाष्यमनुकूलमेव, न प्रतिकूलम्। किं च 'सामान्यात्तु' इति सूत्रं हि ब्रह्मव्यतिरिक्तवस्त्वभावपरम्, तत्र च ब्रह्मव्यतिरिक्ततया शङ्क्यमानं सादि वा? अनादि वा?। सादिपदार्थसामान्यस्य ब्रह्मजन्यत्वात् कार्यस्य च कारणानन्यत्वात् न व्यतिरिक्तत्वम्। अनादि च अज्ञानं यद्यप्यस्ति ब्रह्मणः कारणत्वघटकम्, तथापि तस्य ब्रह्मण्यध्यस्ततया ब्रह्मव्यतिरिक्तत्वं नास्ति। अजन्याया अविद्याया ब्रह्मव्यतिरिक्तत्वं नास्तीति साधनार्थमेव तत्र भाष्ये 'एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात् न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते' इति हेत्वन्तरमुक्तम्॥

यच्च उक्तम्—'वियदधिकरणे प्रकृतिविकाराव्यतिरेकन्यायेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्समर्थितत्वात्, अविद्याया अपि ब्रह्मविकृतित्वमङ्गीकरणीय'मिति; तत्रोच्यते—ब्रह्मणः जगत्प्रकृतित्वं अविद्याशाबल्येनैव, न तु शुद्धरूपेण, मुक्तावपि जगदुद्भवप्रसङ्गात्। अविद्यां प्रति च अविद्याशबलितस्य प्रकृतित्वं न सम्भवति, आत्माश्रयात्, स्वोत्पत्तेः पूर्वं स्वस्याभावात्। वियदादिकं प्रति अविद्याशबलितरूपेण प्रकृतित्वे स दोषो न प्रसरति। अतः प्रकृतिविकाराव्यतिरेकन्यायेन ब्रह्मविज्ञाने वियदादिविज्ञानम्, ब्रह्मण्यध्यस्ताविद्यादेस्तु अधिष्ठानाध्यस्ताव्यतिरेकन्यायेन ब्रह्मज्ञानेन विज्ञानम्। अन्यथा अगतेः। न चैवमाकाशादेरप्यविद्यातुल्यमेव अध्यस्तत्वेनैव ज्ञानं भवतु,

किमर्थं जन्यत्वमाश्रीयते? इति वाच्यम्, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुः' इत्याकाशादेः कार्यत्वेनैव प्रतिज्ञायाः श्रुत्या समर्थितत्वात्, अविद्यायाः तथा असमर्थितत्वादिति विशेषात्॥

वस्तुतः प्रकृतिविकृतिपदे साद्यनादिविवर्तरूपाध्यस्तसाधारण्येन विवर्तमानविवर्तपरे तदव्यतिरेकन्यायेन प्रतिज्ञासमर्थनं अनाद्यविद्यासादिवियदादिसाधारणमिति बोध्यम्। अत एव तत्र भामती—'ब्रह्मविवर्तात्मतया जगतस्तद्विकारस्य वस्तुतो ब्रह्मणा अभेदे ब्रह्मणि ज्ञाते ज्ञानमुपपद्यते' इति। अत एव च 'यावद्विकारं तु विभागो लोकवत्' इति सूत्रे 'आकाशदिक्कालमनःपरमाणवो विकाराः' इति भामत्युक्तानुमानप्रयोगे विकारपदं पराधीनसत्ताकार्थपरतया विवृतं कल्पतरौ। एतेन—'यावद्विकारं तु विभागो लोकवत्' इति सूत्रे कार्यत्वस्य भेदव्यापकत्वबोधनात् ब्रह्मभिन्ना अविद्याऽपि कार्येत्यवगम्यते' इत्युक्तमपास्तम्। पराधीनसत्ताकत्वरूपविकारत्वस्यैव तत्र भेदव्यापकत्वबोधनात्। अनाद्यविद्याया अपि ब्रह्माधीनसत्ताकत्वाङ्गीकारात्। अविद्यायाः अजन्यत्वं च श्रुतिस्मृतियुक्तिभिस्सिद्धमपलपितुमशक्यम्॥

यत्तु—'असम्भवस्तु सतोऽनुपपत्तेः' इति सूत्रभाष्ये 'मूलप्रकृत्यनभ्युपगमे अनवस्थाप्रसङ्गात् या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्म' इत्युक्तिः अविद्याया अजन्यत्वे विरुध्येत, अविद्याया अपि अजन्यायाः मूलप्रकृतित्वात् तदेव च नो ब्रह्म इत्युक्त्ययोगात्' इति, तत्रोच्यते—यतः अविद्याशबलितमेव ब्रह्म मूलप्रकृतिः, अतः अविद्याशक्तेः ब्रह्मप्रकृतित्वनिर्वाहिकायाः एवकारेणाव्यावर्तनात् न भाष्यविरोधः। यच्च—'अविद्यायास्सावयवत्वेन जन्यत्वमावश्यक'मिति, तन्न—अविद्यायाः सत्त्वासत्त्वब्रह्मभिन्नत्वाभिन्नत्वसावयवत्वनिरवयवत्वादिभिः निरूपयितुमशक्यत्वरूपानिर्वचनीयत्वेनाभ्युपगमात्। ब्रह्माधीनसत्तास्फूर्तिमत्त्वमविद्याया ब्रह्माध्यस्तत्वमेव साधयति न ब्रह्मकार्यत्वमिति बोध्यम्। अविद्याशबलितस्य ब्रह्मण एकस्य जगत्कारणत्वाभ्युपगमात्, जगत एककारणकत्वप्रवादनिर्वाहस्य नानुपपत्तिः। अविद्यायाः ब्रह्मशक्तिमात्रत्वेन शक्तिमत्सकाशादनतिरेकात्॥

'प्रधानपुंसोरजयोः' इति विष्णुपुराणवचनमपि अविद्यायाः अजन्यत्वमेवावेदयति। न तत् अजत्वरूपणपरम् ; स्वरूपानादित्वपरत्वे बाधकाभावात्। अत एव 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति गीतापि तथैव वदति। तत्रैव वचने 'कार्यभूतयोः' इति अविद्यायाः कार्यत्वोक्तिः अविद्याकार्यतादात्म्याभिप्रायिका। जीवस्य कार्यत्वोक्तिः अन्तःकरणोपहिताकारेण। 'तस्माद्व्यक्तमुत्पन्नम्' 'अव्यक्तं पुरुषे सम्प्रलीयते' इति वचने अव्यक्तस्य उत्पत्तिप्रलयकीर्तनमपि कार्यतादात्म्याभिप्रायेणैव ; न तु अविद्यायाः स्वरूपेण उत्पत्तिः ज्ञानं विना प्रलयश्च ॥

यदपि—'ब्रह्मणि अविद्याया लयः तत्र तत्र वर्णितः ब्रह्मणः अविद्योपादानत्वं बोधयति, उपादानकारण एव लयस्य श्रुत्या बोधनात्। 'यस्य हि यत उत्पत्तिः तस्य तत्र लयः न्याय्यः, मृदीव शरावस्य। न च मनसो वागुत्पद्यते' इति भाष्याच्च। किं च अविद्याया अजन्यत्वे नाशोऽपि न सम्भवति 'न च अनुत्पत्तिधर्मकं किंचित् व्ययधर्मकम्' इति न्यायभाष्याच्च। प्रागभावस्य अजन्यस्य नाशो नेष्यते, उत्पत्त्यनन्तरं उत्पन्नवस्तुप्रागभावस्य सत्त्वेऽपि प्राक्कालाभावेन तद्व्यवहाराभावोपपत्तिः' इति। तत्प्रति ब्रूमः—अविद्याया लयो नाम न कारणात्मनाऽवस्थानं घटादेरिव, येन ब्रह्म तस्याः कारणं स्यात्। कारणात्मनाऽवस्थानात्मकलयाभिप्रायेणैव 'यस्य हि यत उत्पत्तिः तस्य तत्र लयः' इत्यादि भाष्यं प्रवृत्तम्। अध्यस्तस्य ज्ञानानन्तरं अधिष्ठाने लयः न कारणात्मना अवस्थानम् ; कारणस्यापि नाशात्। अपि तु बाधः। बाधश्च सह कारणेन निवृत्तिः अज्ञानप्रयुक्तस्य। अज्ञानस्य तु कारणाभावात् निवृत्तिमात्रम्। तच्च 'अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः' इत्युक्तरीत्या ब्रह्ममात्रता। जन्यस्यैव नाश इति अप्रयोजकम्। प्रागभावे व्यभिचरितं च ॥

प्रतियोग्युत्पत्त्यनन्तरमपि प्रागभावो वर्तते, प्राक्कालाभावात् व्यवहारः परं नास्ति इत्यादिकल्पना अप्रामाणिकी ; न्यायभाष्यवाक्यं प्रागभावव्यावर्तकभावत्वविशेषणेन पूरणीयम्। अविद्या च भावाभावविलक्षणा। अतो न कोऽपि दोषः। 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति श्रुतावपि ब्रह्मपदं अविद्याशबलितपरमेव। अविद्याशबलितब्रह्मातिरिक्तसर्वत्वावच्छिन्ने विषये ब्रह्मजत्वादिबोधिनी श्रुतिः एकरूपैव भवति। एतेन—'सर्वान्तर्गताविद्यायां

ब्रह्मजत्वं न बोधयति, अन्यत्र ब्रह्मजत्वं बोधयतीति श्रुतिरेकरूपा न भवति अविद्याया अजन्यत्ववादिमते' इति दूषणस्यानवकाशः। सर्वपदस्य अविद्याशबलितब्रह्मातिरिक्तपरत्वेन अविद्यापरत्वाभावात् वैरूप्यप्रसक्तेरभावात् ॥

यत्तु—' देवताधिकरणस्थेन 'भ्रमात् संस्कारतश्चान्या' इत्यादिकल्पतरुकारश्लोकेन अतिरिक्ताविद्याया असत्त्वं ध्वनितम्' इत्याद्युक्तं मञ्जूषायाम्, तत् सर्वं अपाकृतं सूत्रकारभाष्यकारवाचस्पतिमिश्राणां मूलाविद्यासम्मतिप्रदर्शकबहुविधवाक्यजातप्रदर्शनतः पूर्वम्। देवताधिकरणे भामत्यां 'महाप्रलयसमये अन्तःकरणादयः स्वकारणे अनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिस्सहावतिष्ठन्त एव, ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिताः पूर्ववासनावशात् उत्पद्यन्ते। यथा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनासारसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति।' इत्युक्तम्। अत्र अन्तःकरणादीनां सूक्ष्मरूपेण विद्यमानानां आधारभूता वासनानामपि आधारत्वेन वासनातिरिक्ता पुनः सृष्टौ उपादानकारणीभूता च अविद्या स्पष्टमुपवर्णिता। दृष्टान्ते च मण्डूकशरीराणां सूक्ष्मरूपाणां आधारभूता मण्डूकवासनावासिता च मृत् पुनः मण्डूकशरीरोपादानं वर्णिता। एवं स्पष्टमुपवर्णनेऽपि अन्यथा तद्ग्रन्थभाववर्णनाग्रही नागेशः शोचनीय एव विदुषाम् ॥

अध्यासभाष्ये 'मिथ्याज्ञाननिमित्तः' इति पदेन मिथ्याभूतमज्ञानं अध्यासोपादानकारणमाचक्षाणा भगवत्पादाः स्पष्टं मूलाविद्यामाचक्षते इति पूर्वमेवावेदितम्। नागेशशिष्योऽपि अभिनवद्रविडाचार्यः तथैव व्याख्यातवानित्यप्युक्तम्। आनन्दगिरीयेऽपि—' मिथ्या च तत् अज्ञानं च तत् निमित्तमुपादानं यस्य सोऽध्यासस्तथा। तत्र मिथ्येत्युक्ते भ्रान्तिज्ञानप्राप्तौ अज्ञानमित्युक्तम्। तन्मात्रग्रहे ज्ञानाभावशङ्कायां मिथ्येति। तेन अनिर्वाच्यत्वेन अभावविलक्षणं ज्ञाननिवर्त्यमनाद्यज्ञानं तदुपादानोऽध्यास इत्यर्थः। एतदेवाज्ञानं संस्कारकालकर्मादिरूपेण परिणतमध्यासनिमित्तमिति वक्तुं निमित्तग्रहणम्' इत्युक्तम्। प्रायशस्सर्वेऽपि भाष्यव्याख्यातारः सम्प्रदायानुसारेण एवमेव व्याचक्षते ॥

भामत्यां तु—'मिथ्याज्ञानमध्यासः तन्निमित्तः—तद्भावाभावानुविधानात् व्यवहारभावाभावयोरित्यर्थः' इति व्याख्यातम् । यद्यपि 'अध्यस्य व्यवहारः' इत्यनेनैव अध्यासस्य व्यवहारहेतुत्वलाभात् 'मिथ्याज्ञाननिमित्त' इति व्यर्थम्, तथापि 'सुप्त्वोत्तिष्ठती'तिवदहेतुत्वभ्रमं व्यावर्त्य स्फुटयितुं 'मिथ्याज्ञाननिमित्त' इत्युक्तिः । उपसंहारभाष्ये 'नैसर्गिकोऽध्यासः' इत्यभिधानात् व्यवहारोऽपि नैसर्गिकत्वविशिष्टः अध्यास एव, तथा च क्रियाभेदाभावात् अध्यस्य व्यवहारः इति क्त्वाप्रत्ययानुपपत्तिरिति शङ्काया इदं समाधानम्—लोकव्यवहारो नाम लोकानां व्यवहारः, स च 'अयमह'मिति 'ममेद'मिति वा व्यपदेशः, स च अध्यासात् भिन्न इति क्रियाभेदः । उपक्रमे व्यवहारस्यैव नैसर्गिकत्वमुक्तम्, नाध्यासस्य । तथापि कार्यभूतव्यवहारनैसर्गिकत्वेन सामर्थ्यसिद्धस्य अध्यासनैसर्गिकत्वस्य उपसंहारे कथनं न विरुध्यते, इति । भामत्यां 'मिथ्याज्ञाननिमित्तः' इति भाष्यस्य भ्रान्तिज्ञानकारणक इत्यर्थकरणं निमित्तपदस्वारस्येन; न तु मूलाज्ञाननिरासतात्पर्येण । अत एव 'नैसर्गिकः इति, स्वाभाविकः अनादिरयं व्यवहारः व्यवहारानादितया तत्कारणस्याध्यासस्यानादिता उक्ता' इति टीकाविवरणस्थले कल्पतरौ व्यवहाराध्यासानादित्वं प्रवाहानादित्वरूपमिति निरूप्य तदनन्तरम् 'अत्र च निमित्तनैमित्तिकयोरनादित्वमुक्तम्, भ्रमोपादानानादित्वं तु वक्ष्यति देवताधिकरणे' इत्युक्तम् । नागेशस्तु भामत्यां भ्रान्तिज्ञानपरतया व्याख्यानं दृष्ट्वा वाचस्पतेरनाद्यज्ञानमनभिमतमिति बभ्राम । तत्तु भ्रान्तं भामत्यनवलोकननिबन्धनम्, यतः पूर्वप्रदर्शितस्थलेषु भामती विलोकिता चेत् स भ्रमः नोदियात् ॥

आनन्दगिरीये—'लोक्यते मनुष्योऽहमिति ज्ञायते इति ज्ञानोपसर्जनोऽर्थाध्यासः, लोकविषयः व्यवहार इति अर्थोपसर्जनो ज्ञानाध्यासश्च उक्तः । स च अध्यासः सत्यानृतमिथुनीकरणरूपः । अध्यस्य मिथुनीकृत्य इति क्त्वाप्रत्ययः नाध्यासस्य पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः; लोकव्यवहारस्याध्यासतया क्रियान्तरत्वाभावात् । अतः वस्तुनः अभेदेऽपि अपौर्वापर्येऽपि विशेषणभेदेन कल्पितभेदं वस्तु तत्प्रतिपत्तिक्रमेण पौवापर्यं च तदालम्बनम् ।' इत्युक्तम् । आनन्दगिरीयं पञ्चपादिकाविवरणानुसारेण प्रवृत्तम् ॥

पञ्चपादिकायामेवमुक्तम्—'लोक इति मनुष्योऽहमित्यभिमन्यमानः प्राणिनिकाय उच्यते। व्यवहरणं व्यवहारः। लोक इति व्यवहारो लोकव्यवहारः, मनुष्योऽहमित्यभिमान इत्यर्थः। अध्यस्य मिथुनीकृत्य इति च क्त्वाप्रत्ययः न पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः; 'भुक्त्वा व्रजती'तिवत् क्रियान्तरानुपादानात्। 'अध्यस्य नैसर्गिकोऽयं लोकव्यवहार' इति स्वरूपमात्रपर्यवसानात्, उपसंहारे च 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः' इति तावन्मात्रोपसंहारात्। अतः चैतन्यं पुरुषस्य स्वरूपमितिवत् व्यपदेशमात्रं द्रष्टव्यम्' इति॥

अत्र विवरणम्—'लोकव्यवहारशब्दः अध्यासाभिधायी इति दर्शयति—लोक इति मनुष्योऽहं इत्यादिना। व्यवहारः–अभिज्ञा अभिवदनं उपादानं अर्थक्रिया इति चतुर्विधः। अतः मनुष्योऽहमिति ज्ञानाभिधाने व्यवहारशब्दं अर्हत इति भावः। ननु क्त्वाप्रत्ययोपादानात् अर्थतः क्रियाभेदः पूर्वापरीभावश्चाङ्गीकर्तव्यः। तत् कथं अध्यासमिथुनीकरणलोकव्यवहाराणां एकार्थत्वम्? इति। नेत्याह—अध्यस्य मिथुनीकृत्य इत्यादिना। ननु किमिति स्वरूपमात्रपर्यवसानं, क्रियाभेद एव क्त्वाप्रत्ययसामर्थ्यात् उपादीयताम्? इति। नेत्याह—उपसंहारे चेति। न हि पदमात्रवैयर्थ्यभयात् वाक्यार्थः नैसर्गिकत्वगुणविशिष्टः विशेष्यपदार्थः अध्यासः उपक्रमोपसंहारयोः भेत्तुं युक्त इत्यभिप्रायः। किं तर्हि क्त्वाप्रत्ययालम्बनम्? इति। प्रतिपत्तितः क्रियाभेदपूर्वापरीभावौ इत्याह—अतः चैतन्यं पुरुषस्य स्वरूपं इतिवत् व्यपदेशमात्रम्, इति। उपचारमात्रमित्यर्थः। कथम्? एकोऽप्यध्यासः अन्योन्यात्मता, सत्यानृते, अहमिदं ममेदं, इति च विशेषणभेदात् विशिष्टः अध्यासः परोपाधौ भिद्यते, विशिष्टाश्च प्रत्ययाः क्रमेण वक्तुः भवन्ति इति प्रतिपत्तितः पूर्वापरीभावं विशेषणभेदाच्च विशिष्टक्रियाभेदं च अङ्गीकृत्य क्त्वाप्रत्ययः' इति॥

अत्र नागेशः–आनन्दगिरिप्रदर्शितं पञ्चपादिकाद्यभिमतं लोकव्यवहारपदार्थं निराचष्टे–'रूढेर्योगापहारकत्वेन लोकव्यवहारपदयोरध्यासरूपयौगिकार्थान्तरवर्णनमनुपपन्नमनावश्यकं चे'ति, तत्रोच्यते–लोकशब्दस्य जनः इति व्यवहारशब्दस्य शब्दप्रयोग इति च रूढ एवार्थः किमिति न स्वीक्रियते? इति नागेशाशयः। तस्य समाधानं नृसिंहाश्रमस्वामिप्रणीतायां भावप्रकाशिकायां

विवरणव्याख्यायामुक्तम्—'ननु लोक इति मनुष्योऽहमिति टीकाग्रन्थेन लोकव्यवहारपदमध्यासपरतया व्याख्यातम्। तत् कस्मात्? लोकस्य व्यवहार इति प्रसिद्धार्थे बाधकाभावात्। न चाध्यासे आक्षिप्ते भाष्यकारस्य व्यवहारप्रदर्शनमसङ्गतमिति तथा व्याख्यातमिति वाच्यम्; तस्य तत्कार्यत्वेन तत्र प्रमाणतया तदुपन्यासोपपत्तेरित्याशङ्क्य, तस्य प्रमाणभाष्येणैव सिद्धत्वात् अद्यापि व्यवहारस्याध्यासकार्यत्वस्यासिद्धत्वाच्च तथा व्याख्यातमित्याह—लोकेति।' इति विवरणावतारिकाग्रन्थेन। चित्सुखविरचितायां तात्पर्यदीपिकाख्यायां विवरणव्याख्यायामप्युक्तम्—'ननु अध्यासस्यानादित्वे वक्तव्ये लोकव्यवहारस्य अनादित्वं वक्तुमयुक्तं इत्याशङ्क्य परिहरति—लोकेति' इति॥

'सत्यानृतयोर्मिथुनीकरणं नाम अधिष्ठानारोप्ययोः स्वरूपेण एकस्यां बुद्धौ भानम्, मिथुनीकरणात् विवेकाग्रहः, ततोऽध्यासः' इति भामतीकल्पतरुप्रदर्शितरीत्यनुसारेण सत्यानृतमिथुनीकरणमध्यासात् भिन्नमिति प्रतीयते। कथं पञ्चपादिकायामेकत्वोक्तिः? इति चेत्—अत्रापि समाधानमुक्तं भावप्रकाशिकायाम्—'अध्यस्य मिथुनीकृत्य लोकव्यवहार इति भाष्ये पृथक्तया प्रतीयमानाध्यासमिथुनीकरणलोकव्यवहाराणां टीकायामेकार्थत्वमुक्तं युक्तमेव; सत्यानृतयोः परस्पराध्यासव्यतिरेकेण मिथुनीकरणाभावात्। न चारोपात् पूर्वमेकबुद्ध्युपस्थितत्वमेव मिथुनीकरणमिति वाच्यम्; तत्पूर्वं तन्नियमाभावात्। आरोप्यसंस्कारस्य स्वरूपेणैव कारणत्वात्। आरोप्यतदधिष्ठानयोः गृह्यमाणस्मर्यमाणयोः एकज्ञानविषयत्वायोगाच्च।' इति॥

'अध्यासमिथुनीकरणलोकव्यवहाराणामध्यासरूपत्वे क्त्वाप्रत्ययानुपपत्तिः भेदकविशेषणानुपलम्भात् प्रतिपत्तिक्रमाननुभवाच्च' इति यत् नागेशेनोक्तम्, तस्य समाधानं पूर्वोक्तविवरणग्रन्थपर्यालोचिनां स्फुटम्। तत्र विशेषणभेदस्य प्रतिपत्तिक्रमस्य च उपपादनात्। अत्र क्त्वाप्रत्ययस्य उपपत्तिः प्रकारान्तरेण वर्णिता भावप्रकाशिकायाम्—'वस्तुतस्तु क्रियान्तरानुपादानेऽपि, अध्यस्य मिथुनीकृत्य लोकव्यवहार इति पदानां उक्तविधया विजातीयार्थभेदासम्भवात् एकार्थत्वेऽपि, पूर्वपूर्वाध्यासस्य उत्तरोत्तराध्यासे हेतुत्वात् समानकर्तृकक्रियाव्यक्तिभेदः पूर्वापरीभावश्चास्तीति नैसर्गिकपदसूचितानादित्वं प्रवाहरूपेणेति भाष्यकारोऽनेन सूचयतीति मुख्य एव क्त्वाप्रत्ययः इत्यभिप्रेत्य 'विशिष्टक्रिया-

भेदं चे'ति चशब्दः प्रयुक्त इति द्रष्टव्यम्' इति। नृसिंहाश्रमस्वामिभिः प्रदर्शितं इममेव मार्गं अनुसरन्ति स्म पश्चात्तनाः श्रीरामानन्दस्वामिनः रत्नप्रभायां भाष्यटीकायाम्।

निमित्तशब्दः कारणसामान्यवाची निमित्तकारणरूपकारणविशेषवाची च। तत्र मिथ्याज्ञानोपादान इति अनुक्त्वा निमित्तपदप्रयोगस्याशयः तत्त्वदीपने एवमुक्तः—'अज्ञानशबलस्येश्वरस्याधिष्ठातृत्वं संस्कारद्वारेणैवाज्ञानस्य निमित्तत्वं चेति दर्शयितुं भाष्ये निमित्तपदोपादानम्' इति। मिथ्याज्ञाननिमित्तपदेन भावरूपाज्ञानोपादानत्वमेव वक्तव्यम्, न तु भ्रान्तिज्ञानकारणकत्वमिति पञ्चपादिकाटीकायां तात्पर्यार्थद्योतन्यामुक्तम्—'मिथ्याज्ञाननिमित्त इत्युक्त्या मिथ्याज्ञानलक्षणाध्यासस्य मिथ्याज्ञानमेव कारणमित्युक्तं भवेत; तदनुपपन्नं आत्माश्रयात्। तन्निवृत्तये मिथ्याज्ञानस्य पूर्वमिथ्याज्ञानं कारणमित्युक्ते, सुषुप्त्याद्यनन्तरं अध्यासासम्भवः स्यात। तद्व्यावृत्त्यर्थं संस्कारद्वारेण पूर्वमिथ्याज्ञानं कारणमित्युक्ते, निर्वाह्यनैसर्गिकत्वमेव तन्निर्वाहकत्वेनोक्तं स्यादिति सर्वथा असमञ्जसत्वे प्राप्ते, तद्व्युदासाय विगृह्य दर्शयति—मिथ्या च तत् अज्ञानं चेति' इति॥

यच्च—'ज्ञानाध्यासमात्रमलं किं अर्थाध्यासेन? प्रतिमादौ देवताध्यासे असंनिकृष्टपर्वतादौ भ्रमात्मकवह्न्यनुमितौ च अर्थाध्यासाभावात् सर्वत्र ऐकरूप्यस्य उचितत्वा'दिति, तन्न—प्रतिमादौ देवताध्यासस्य आहार्याध्यासरूपत्वात् अनिर्वचनीयोऽर्थो न अङ्गीक्रियते। एवं परोक्षभ्रमे अन्यथाख्यातिस्वीकारात् अनिर्वचनीयपदार्थोत्पत्तिः प्राचीनैर्नाङ्गीक्रियते। प्रत्यक्षभ्रमे पुरोदेशे विषयाभावे अर्थापरोक्ष्यासम्भवात् अनिर्वचनीयपदार्थोत्पत्तिरवश्यमभ्युपगन्तव्या; नवीनैर्लघुचन्द्रिकाकारादिभिस्तु परोक्षभ्रमस्थलेऽपि अनिर्वचनीयोत्पत्तिरभ्युपगम्यत एव। तथा च ज्ञानाध्यासार्थाध्यासोभयमङ्गीकरणीयमेव। यत्तु—'क्लृप्तसंस्कारादिभिरेवोपपत्तौ अज्ञानकल्पनं किमर्थ'मिति। तन्न—उपादानतया अज्ञानस्यावश्याङ्गीकरणीयत्वात्। इत्यलमधिकेन॥

पञ्चपादिकाकाराद्यभिमतः भ्रमस्थले अनिर्वचनीयपदार्थोत्पत्तिवादः साग्रहं लघुमञ्जूषायां निरस्तः। सूत्रकारभाष्यकारादीनामपि अनिर्वचनीयपदार्थोत्पत्तिर्नास्तीत्यत्रैव तात्पर्यमित्यपि प्रत्यपादि। तथा हि—'व्यासोऽपि

'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रे मायामात्रमिति अनिर्वचनीयोत्पत्तिवादं निराकरोति। न च 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथस्सृजते' इति स्वप्नविषयश्रुत्युक्तसृष्टयसङ्गतिरिति वाच्यम्; 'रथाद्यभाववचनं श्रुत्वा रथादिसृष्टिवचनं तु भक्त्या' इति भाष्येणैव समाधानात्। किञ्च 'नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। तस्मात् मायामात्रं स्वप्नदर्शनम्।' इति भाष्ये स्पष्टम्। सामग्रीव्यतिरेकाच्चानुत्पत्तिं वदता शुक्तिरजतादिस्थलेऽपि अनुत्पत्तिः सूचिता॥

जागरिकप्रपञ्चोऽप्येवमेव। जाग्रत्प्रपञ्चस्यापि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रेण मायामात्रत्वमुक्तम्। 'प्राक् तु ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चः व्यवस्थितरूपो भवति। सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यते इति विशेषः' इति भाष्ये उक्तम्। तस्य प्रपञ्चस्य अन्यवस्तुत्वाभावः 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेरिति सूत्रार्थः। वाचैव केवलमारभ्यते यतो नाममात्रं न तु वस्तुत इति श्रुत्यर्थः। अत एव च 'अनन्यत्वेऽपि कार्यकारणयोः कार्यस्य कारणात्मत्वम्, न तु कारणस्य कार्यात्मत्वम्' इति, 'न तु दृष्टान्तभावात्' इति सूत्रभाष्ये। कार्यस्य वस्तुत्वाभावादिति तदाशयः॥

अत एव चतुर्थेऽपि कार्याधिकरणे भाष्ये 'तासां (उत्पत्त्यादिश्रुतीनां) एकत्वप्रतिपादनपरत्वात्। मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य च अनृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति' इत्युक्तम्। सत इत्यस्य आद्यन्तयोः सत्त्वेन मध्येऽपि सत्त्वानुमानेन कालत्रयाबाध्यत्वरूपं सत्यत्वम्, प्रपञ्चस्य तु आद्यन्तयोरसत्त्वेन मध्येऽपि असत्त्वानुमानेन कालत्रयबाध्यत्वरूपमनृतत्वमित्यर्थः। मध्ये कदाचित् सत्त्वेन प्रतीतिस्तु भ्रम एवेति तदाशयः। उत्पत्त्यादीनां भ्रमविषयाणामेव तत्रानुवाद इति विकारत्वादिप्रतीतिरपि भ्रम एवेति तत्तात्पर्यम्॥

'यथा च तक्षोभयथा' इति सूत्रेऽपि भाष्ये 'विहारोऽपि तत्रत्यः (स्वाप्नः) वासनामय एव, न तु पारमार्थिकोऽस्ति' इति उक्तम्। यथा तन्त्रान्तरे घटादिप्रपञ्चस्य पारमार्थिकत्वं तथा तत्रापि न स्वाप्नस्येत्यर्थः। अस्माकं तु व्यावहारिकोऽपि प्रपञ्चः दीर्घस्वप्न एवेति बोध्यम्। 'तदन-

न्यत्वं' इति सूत्रभाष्ये 'यथा च मृगतृष्णिकोदकादीनां ऊषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात् स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभावः' इति, 'सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः स्वप्नव्यवहारस्येव प्राक् प्रबोधात्' इति च उक्तम्। 'अविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवद्व्याहतः' इति नविलक्षणत्वाधिकरणभाष्ये उक्तम्॥

यत्तु अनिर्वचनीयं सदसद्विलक्षणं जलादि मृगतृष्णादौ उत्पद्यते, एवं ब्रह्मणि प्रपञ्चः मृदादौ घटादिः स्वाप्नश्चेति, तन्न। तादृशानिर्वचनीयस्याप्रसिद्ध्या तत्र सदादिभेदस्य वक्तुमशक्यत्वात्। किं च, तस्य सद्भिन्नत्वादसत्त्वं असद्भिन्नत्वात् सत्त्वमापततीति उभयरूपत्वमेवायाति, तत्र सत्त्वमारोपितमिति भेदाभेदयोरिव तयोर्न विरोधः। धर्मद्वयानाक्रान्तस्य लोकव्यवहारे अभावाच्च। तदुक्तं साङ्ख्यसूत्रे—'नासतः ख्यातिर्नृश्रृङ्गवत्' 'न सतो बाधदर्शनात्' 'नानिर्वचनीयस्य तदभावात्' 'नान्यथाख्यातिः स्ववचनविरोधात्' इति। किं च, अनिर्वचनीयोत्पत्तौ घटादिना मृदादेरिव ब्रह्मणोऽपि विकारित्वापत्तिः। भ्रमविषयेण तु न विकारित्वं, कामुककृतैः कान्ताविषयैः 'सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्' इति विकल्पैः कान्ताया विकारित्वाभावात्। वस्तुतो मृदि घटादिविकारो भ्रम एव। न तु कोऽपि पदार्थः इति तदनन्यत्वमिति सूत्रेणोक्तम्॥

किं च, प्रसिद्धसामग्रीव्यतिरेकेऽपि यया सामग्र्या शुक्त्यादौ रजताद्युत्पत्तिः तया सामग्र्या विषयासत्त्वेऽपि तदसन्निकर्षेऽपि ज्ञानाङ्गीकारेऽपि न बाधकम्। किं च, अनिर्वचनीयोत्पत्तौ तस्य तस्य तादृशरजतत्वाद्याश्रयत्वेन तज्ज्ञानस्य भ्रमत्वानापत्तिः; तस्य तदवृत्तिधर्मप्रकारकत्वाभावात्। न च रजतत्वमेव अनिर्वचनीयं आश्रयस्तु शुक्तिरेवेति न दोषः। त्वयाऽपि जातेः वारं वारमुत्पत्त्यनङ्गीकारात्। किं च, जातेरिव तदाश्रयत्वस्यापि तादृशस्य शुक्तौ सत्त्वेन पूर्वोक्तदोषतादवस्थ्यम्। तदुक्तं योगसूत्रे—'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' इति। 'विपर्यय इति लक्ष्यम्; मिथ्याज्ञानमिति लक्षणम्। तद्विवरणमतद्रूपेति। तद्रूपप्रतिष्ठत्वाभाववत्। यत् ज्ञानप्रतिभासि रूपं रजतत्वादि तदाश्रयत्वाभाववद्विशेष्यकमित्यर्थः' इति मिश्राः। व्यास-

स्यापि इदमेव च मिथ्याज्ञानमभिप्रेतम्; तेनान्यतल्लक्षणानुक्तेः। साङ्ख्यदूषितानिर्वचनीयख्यातेरपि तत्सूत्रानारूढत्वाच्च। तेन 'सदसत्ख्यातिर्बाधाबाधाभ्याम्' इति साङ्ख्यसूत्रोक्तसदसत्ख्यातेरेव तदभिमतत्वं लक्ष्यते। यावद्विशेषदर्शनमबाधः, तदुत्तरं बाध इति सूत्रार्थः॥

किं च, शुक्तिरजतस्थले अधिष्ठानज्ञानेन तन्नाशो वाच्यः। न च तस्य वस्तुनाशकता दृष्टा। अत एव गौतमादिभिः उत्पत्तिः तत्र नोक्ता। अन्यथा, घटादिवत् तत्रापि उत्पत्तिमेव वदेयुः। शुक्त्यादि समवायिकारणं चाकचक्यादि असमवायिकारणं दोषो निमित्तकारणमिति वक्तुं शक्यत्वात्। अन्यथाख्यातिरित्येव चोक्तं तदीयैः। अन्यथाख्यातिरित्यनेन प्रकारस्यान्यत्र सत्त्वं सूचितम्। तत्सम्बन्धोऽप्येवमेव। तदनुयोगित्वमप्येवमेव इति सूचितम्। संयोगसमवाययोः सम्बन्धत्वस्य अनुयोगित्वादिभाननियतत्वात्। बुद्धिसद्वात्। भ्रमप्रकारत्वमेव मिथ्यात्वम्। 'रजतं पश्यामि' इत्यनुव्यवसायोऽपि दोषवशात् चाक्षुषत्वांशे भ्रम एव। न च दोषस्य रजतज्ञानत्वं त्वया कार्यतावच्छेदकं वाच्यं तद्वरं रजतत्वमेव लाघवात्तथोचितमिति वाच्यम्; उत्पत्तिनाशकल्पनापेक्षया प्रमास्थले क्लृप्तस्य तस्यैव तत्त्वौचित्यात्। अत एव 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यधिकरणे भाष्ये 'प्रत्येत्येव हि केवलं शुक्तिकां रजतमिति, न तु तत्र रजतमस्ति' इत्युक्तम्। 'न स्थानतोऽपि' इति सूत्रभाष्येऽपि 'न हि स्वच्छस्सन् स्फटिकः अलक्तकाद्युपाधियोगात् अस्वच्छो भवति। भ्रममात्रत्वादस्वच्छताभिनिवेशस्य' इत्युक्तम्। तव व्यावहारिकप्रातिभासिकयोः सदसद्विलक्षणत्वाविशेषेण भेदस्य वक्तुमशक्यत्वात्। विशेषदर्शनबाध्यत्वमपि तुल्यम्॥

श्रीहर्षेणाप्युक्तम्—'परकीयरीत्या इदमुच्यते—अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति। वस्तुतस्तु, वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतस्सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे। ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः—न साध्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थयैव व्याहतत्वात्' इति। सत्त्वासत्त्वव्यवस्थापनेति। तदन्यतरव्यवस्थापनेत्यर्थः। अनिर्वचनीयत्वं—निर्धार्य सत्त्वासत्त्वान्यतररूपेणानिर्वचनीयत्वम्, न तु सदसद्विलक्षणत्वम्, इति व्याख्यातारः॥

अत एव भागवते उक्तम्—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ इति।

यत् विनाऽप्यर्थं आत्मन्यधिष्ठाने प्रतीयेत, यच्चात्मरूपे न प्रतीयेत, तत् प्रत्ययाप्रत्ययरूपमात्मनो मायां विद्यात्। यथा आभासः द्विचन्द्रादिः, यथा च तमः राहुः ग्रहमण्डले सन्नपि न प्रतीयते इत्यर्थः। असदर्थप्रकाशनस्यैव मायात्वादेवमुक्तम् ॥

यदुक्तं बृहन्नारदीये—

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी ॥ इति,

तस्यायमर्थः—व्यवहारकाले सत्त्वेन प्रतीतेः न केवलमसद्रूपा। प्रतिक्षणं परिणामितया प्रतीतेः बाधदर्शनात् विशेषदर्शनबाध्यत्वाच्च न केवलं वास्तवसद्रूपा। अत एव वास्तवोभयरूपापि न। विरोधाच्च। अत एव अनिर्वाच्या—सत्येव असत्येव इति निर्धार्य वक्तुमशक्या। तर्हि किमुभयविलक्षणा? नेत्याह—मिथ्याभूता, प्रतिभासमात्रविषयत्वात्। सनातनी। भ्रमपरम्पराजनकपरम्पराकवासनारूपेणेति। तस्मादारोपितं सत्त्वं परमार्थतस्त्वसत्त्वमित्येव युक्तम्। तदुक्तम्—'यत्तत् कारणमव्यक्तं नित्यं सदसदात्मकम्' इति। 'ईश्वरस्यात्मभूते इव अविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये' इति तदनन्यत्वाधिकरणभाष्यस्याप्ययमेवार्थः। अविद्यात्र वासनारूपा। ईश्वरस्यात्मभूते इत्यनेन आरोपितसत्तेत्युक्तम्। अविद्याकल्पिते इत्यनेन असत्त्वमुक्तम्। एवमेव 'अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते। पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते' इति कृत्स्नप्रसक्त्यधिकरणभाष्यमपि व्याख्येयम्। तत्र अविद्या पूर्वतनसंस्काररूपा। व्याकृतं स्थूलम्। अव्याकृतं तज्जन्यसंस्कारः अस्थूलम्। कौर्मेऽपि—

'विप्र पृथ्व्यादि चित्तस्थं न बहिस्स्थं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥' इति।

अत्र कदाचनेत्युक्त्या व्यवहारदशायामपि तथात्वमेवोक्तम्। 'नेह नानास्ति किञ्चन' इत्याद्या श्रुतिरपि बहिः सर्वप्रकारसत्तामनारोपितां निषेधति।

अत एव वाचस्पतिमिश्रा अपि अध्यासभाष्यव्याख्यायामाहुः—'मृगतृष्णाजलादि न सत्, नासत्, नापि सदसत्, परस्परविरोधात्, इति अनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयम्। तदनेन क्रमेण अध्यस्तं तोयं परमार्थतोयमिव अत एव पूर्वदृष्टमिव। तत्त्वतस्तु न तोयं न च पूर्वदृष्टम्। किं तु अनृतमनिर्वाच्यम्, एवं च देहेन्द्रियादिप्रपञ्चोऽपि अनिर्वाच्यः। अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्यते। चिदात्मा तु श्रुत्यादिगोचरः सत्त्वेनैव निर्वाच्यः' इति। अस्यार्थः—न सत्; बाधयोगात्। नासत्; असतश्चाक्षुषाद्यनुभवविषयत्वाभावात्। नापि सदसत्—अनारोपितोभयात्मकम्, अनारोपितोभयरूपत्वस्य विरुद्धत्वात्। अनिर्वाच्यमेव—आरोपितसदसत्त्वान्यतरधर्मेण निर्धार्य वक्तुमशक्यम्। तदाह—अनृतमनिर्वाच्यमिति। अनृतं—असत्। अनिर्वाच्यत्वमुक्तरीत्या अनृतत्वेनैव निर्धार्य वक्तुमशक्यत्वात्। यत् अध्यस्यते तत् अनृतमनिर्वाच्यमित्यर्थः। अपूर्वः—ज्ञानात् पूर्वमविद्यमानः। तदाह—मिथ्याप्रत्ययोपदर्शित (ए)[इ]वेति। मिथ्याप्रत्ययशब्देन तज्जन्यस्संस्कारः। अत एव अध्यस्यत इत्येवोक्तम्, न तु उत्पद्यत इति। अध्यस्यत इत्यस्य इत्युच्यत इति शेषः। उपदर्शनस्यैवाध्यासत्वात्। निर्धार्य वाच्यत्वाभाव एव अनिर्वाच्यत्वमिति ध्वनयन्नाह—सत्त्वेनैव निर्वाच्य इति। सदसद्विलक्षणत्वस्य अनिर्वाच्यत्वपदार्थत्वे तदुत्पत्त्यङ्गीकारे च अपूर्व इत्युक्त्यसङ्गतिः। अत्र एवकाराधिक्यं च। एवं च असत एव आरोपितसत्त्ववतः पुरोवर्तिनि कल्पनात् सन्निकर्षोऽपि तादृशः सूपपादः। सन्निकर्षादि विना चित्तादिदोषवशात् ज्ञानमित्युपपादितम्। एवमध्यासोऽपि अनिर्वाच्य एव। तदुक्तं तैरेव 'तं केचिदन्यत्रान्यधर्माध्यासः' इति भाष्यावतरणे—'स चायमध्यासः अनिर्वचनीयः सर्वेषामेव सम्मतः' इति। 'नानिर्वचनीयस्य ख्याति'रिति साङ्ख्योक्तं तत्खण्डनं तु सदसद्विलक्षणमुत्पद्यते अनिर्वचनीयमिति बाह्यैकदेशिमतसिद्धस्य। न तु उक्तानिर्वचनीयवादस्य। इदमेवानिर्वचनीयत्वं सदसत्ख्यातिशब्देन तेनोक्तमिति बोध्यम्। एतेन—असतो भाने बौद्धमतप्रवेश इत्यपास्तम्। तेन तत्रारोपितसत्त्वस्याप्यनङ्गीकारात्। आत्मनः तेन अनित्यत्वाङ्गीकाराच्च॥

जगतः उत्पत्तिविनाशबहिष्ट्वादिकमपि सत्यत्वेनारोपितम् । यद्वा, तत्तत्सामग्रीभ्रमः तत्तद्विषयभ्रमे कारणमिति तद्गतकार्यकारणभावस्य तद्विषये अनादिवासनावशात् आरोपितावेव उत्पत्तिविनाशौ । अनिर्वचनीयोत्पत्तिवादिभिरपि स्वसमानाधिकरणस्य अवच्छिन्नवृत्तिकान्यात्यन्ताभावस्य प्रतियोगित्वरूपं मिथ्यात्वं वदद्भिः स्वीकृतमेव वस्तुनोऽसत्त्वम् । अन्यथा, अभावपदे विरोध्यर्थत्वान्नञः प्रतियोगिसामानाधिकरण्यं तस्य वक्तुमशक्यम् । प्रतियोग्यसामानाधिकरण्यस्यैव तत्र विरोधपदार्थत्वात् । मम तु स्वप्रतिभाससमानाधिकरणेत्याद्युक्तमेव भ्रमविषयत्वं मिथ्यात्वम् ॥

'न तु दृष्टान्तभावात्' इति सूत्रेऽपि भाष्ये उक्तम्—'यथा स्वयं प्रसारितमायया मायावी कदापि न संस्पृश्यते अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यते । मायामात्रं ह्येतत्, यत् परमात्मनोऽवस्थात्रयात्मना अवभासनं रज्ज्वा इव सर्पादिभावेन' इति । अवस्थात्रयेति उपलक्षणम् । अनेन हि सर्वस्य जनकत्वादेरवभास एव न वस्तु किंचिदस्तीति स्पष्टमेवोक्तम् । अनादिवासनावशात् भ्रमविषयमेव तत् यतो वेत्यादिश्रुतयः अनुवदन्ति । यतो वेत्यादिश्रुत्या सर्वस्य जनकत्वपालकत्वलयस्थानत्वैः तादृशैरेव ब्रह्मणः तटस्थलक्षणं बोध्यते ॥

देहादौ अहमित्यध्यासः शुद्धविषय एव । जडचेतनयोः विषयविषयिणोः अन्योन्यस्मिन् अन्योन्यात्मकतां अध्यस्य इति भाष्योक्तेः । न च अध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वापत्तिः । अध्यासविषयस्य मिथ्यात्वमित्येव नियमात् । स च क्वचित् अध्यस्यमानस्य क्वचिदधिष्ठानस्य तत्त्वेन उपपन्नः । यत्तु एतद्दोषभिया संसृष्टात्माध्यास इति कैश्चिदुक्तम्, तन्न—उक्तभाष्यास्वारस्यात् ।' इति ॥

अत्रोच्यते—यद्यपि अद्वैतसिद्धान्ते ब्रह्मैकमेव पारमार्थिकं सत् नान्यत् किंचिदपि, तथापि व्यावहारिकं प्रातिभासिकं च सत् अङ्गीक्रियते । तदुभयं च न अत्यन्तासत् शशविषाणादिवत् भवितुमर्हति । तदेतत् सूत्रकारस्य भाष्यकारस्य टीकाकारस्य वाचस्पतेः अन्येषां च अभिमतं नापलापमर्हति । 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्यधिकरणे हि 'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' इति सूत्रे भाष्यम्—'एवमपि—पारमार्थिकचैतन्य-

मात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्यापि उपन्यासादिभ्योऽवगतस्य ब्राह्मस्य ऐश्वर्यरूपस्याप्रत्याख्यानात् अविरोधं बादरायण आचार्यो मन्यते।' इति ॥

अत्र भामती–' निरस्ताशेषप्रपञ्चेनाव्यपदेश्येन चैतन्यमात्रात्मना अभिनिष्पद्यमानस्य मुक्तात्मनोऽर्थशून्यैरेवापहतपाप्मसत्यकामादिशब्दैर्व्यपदेश इत्यौडुलोमिर्मेने। तदिदमुक्तं भाष्ये—'शब्दविकल्पजा एवैते अपहतपाप्मत्वादयः न तु सांव्यवहारिका अपी'ति ।

तदेतदतिशौण्डीर्यं औडुलोमेर्न मृष्यते ।
बादरायण आचार्यो मृष्यन्नपि हि तन्मतम् ॥

एवमपीत्यौडुलोमिमतमनुजानाति । शौण्डीर्यं तु न सहत इत्याह—व्यवहारापेक्षयेति। एतदुक्तं भवति—सत्यं तात्त्विकानन्दचैतन्यमात्र एवात्मा। अपहतपाप्मसत्यकामत्वादयस्तु औपाधिकतया अतात्त्विका अपि व्यावहारिकप्रमाणोपनीततया लोकसिद्धाः, नात्यन्तासन्तः। येन तच्छब्दाः ' राहोश्शिर ' इतिवदवास्तवा इत्यर्थः।' इति । अत्र कल्पतरुः—' अतिशौण्डीर्यं—अतिप्रागल्भ्यं दुर्वैदग्ध्यं धर्माणां तुच्छत्वाभ्युपगमप्रयुक्तम् ' इति । ' सर्वेश्वरत्वादिगुणकत्वचिन्मात्ररूपत्वश्रुत्योरपि व्यावहारिकपारमार्थिकदृष्टिभ्यामविरोधे सम्भवति कस्याश्चन श्रुतेर्निरालम्बनत्वकल्पना न युक्ता ' इति परिमले ॥

अत्राधिकरणे मुक्तात्मनोऽपि सत्यकामत्वादिधर्माः व्यावहारिकाः न तुच्छाः सत्यकामादिशब्दानां तत्प्रतीतीनां च नार्थशून्यत्वं इति स्पष्टमुद्घोषितं सूत्रकारभाष्यकारादिभिः। तदेतद्विरुद्धं ' जागरिकप्रपञ्चोऽप्येवमेव असन् तत्प्रतीतीनां विषयशून्यत्वमेव' इति वदतो नागेशभट्टस्येति बोध्यम् ।

एवं ' अभावं बादरिराह ह्येवम् ' इत्यस्मिन्नधिकरणे—' तन्वभावे सन्ध्यवदुपपत्तेः ' 'भावे जाग्रद्वत्' इति सूत्रयोर्भाष्यम्—' यदा तनोः सेन्द्रियस्य शरीरस्याभावः तदा यथा सन्ध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वपि उपलब्धिमात्रा एव पित्रादिकामा भवन्ति, एवं मोक्षेऽपि स्युः । एवं ह्येतदुपपद्यते ' ' भावे पुनस्तनोः यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्ति एवं मुक्तस्याप्युपपद्यते ' इति । अत्र सगुणविद्याफलप्रपञ्चनपरसन्दर्भे जागरितवत् सगुणमुक्तस्यापि अनुभूयमानाः पित्रादिकामाः विद्यमाना एव, न तु स्वप्नवत्

उपलब्धिमात्राः इति स्पष्टमुक्तम् । अत्र भाष्ये स्वप्ने अविद्यमानत्वोक्तिरपि न सर्वथा असत्त्वतात्पर्येण । अपि तु जागरवत् व्यावहारिकत्वाभावाभिप्रायेण । अत एव अत्राधिकरणे 'सम्प्रति शरीरेन्द्रियाभावेन' इति भामतीवाक्यविवरणपरस्य 'इदानीं शरीराभावकाले इत्यर्थः' इति कल्पतरुवाक्यस्य 'शरीराभावकाल इति। जागरव्यावहारिकशरीराभावकाल इत्यर्थः। स्वप्नदृष्टान्तबलेन दृश्यानां पित्रादीनामिव द्रष्टुरुपासकस्यापि वासनामयप्रातिभासिकशरीरसिद्धेः' इति परिमले व्याख्यानं कृतम् । तथा च प्रातिभासिको वा व्यावहारिको वा विषयः स्वप्नजागरयोरनुभूयमानः ज्ञानातिरेकेण सन्नेव न तुच्छः इत्येव सूत्रकारादिसम्मतम् । न तु नागेशाशयानुसारेण जागरस्वप्नप्रत्ययानां अर्थशून्यत्वम् ॥

'फलमत उपपत्तेः' इत्यधिकरणे भाष्यम्—'तस्यैव ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते' इति। अत्र व्यावहारिकी प्रपञ्चसत्ता भाष्यसम्मता इति स्पष्टम् । 'नास्य पारमार्थिकं रूपमाश्रित्य एतच्चिन्त्यते किं तु सांव्यवहारिकम्' इति भामती सांव्यवहारिकं रूपमङ्गीकरोति, न तु विषयं विनैव व्यवहारमात्रम् ॥

किं च, सत् असत् व्यावहारिकं प्रातिभासिकं इति चतुष्टयी विधा । कालत्रयाबाध्यस्वरूपं सत्, सर्वदा निस्स्वरूपं असत्, व्यवहारकालमात्राबाध्यस्वरूपवत् व्यावहारिकं, व्यवहारकाल एव बाध्यप्रातीतिकस्वरूपवत् प्रातिभासिकम्। आद्यं ब्रह्म। द्वितीयं शशशृङ्गादि अर्थशून्यविकल्परूपप्रतीतिगोचरः। तृतीयं वियदादिप्रपञ्चः सृष्टिस्थितिलयादिमान्। चतुर्थं शुक्तिरूप्यादि स्वाप्नप्रपञ्चश्च । नागेशस्तु शशशृङ्गादिवदेव प्रातिभासिकव्यावहारिकयोरपि प्रपञ्चयोः निस्स्वरूपत्वं तत्प्रतीतेरर्थशून्यत्वमाचष्टे । तदिदं सूत्रकारभाष्यकारादीनामसम्मतम् ॥

तदनन्यत्वाधिकरणभाष्ये—'सूत्रकारोऽपि परमार्थाभिप्रायेण 'तदनन्यत्व'मित्याह । व्यवहाराभिप्रायेण तु 'स्याल्लोकव'दिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति। अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति' इति सूत्रकारस्य व्यावहारिकप्रपञ्चाभ्युपगम उक्तः ।

व्यावहारिकप्रपञ्चस्वरूपमभ्युपगम्यैव च सूत्रकारेण वियत्पादादौ वियत्सृष्ट्यादिविचाराः बाहुल्येन सगुणोपासनासंबन्धिनो विचाराश्च प्रवर्तिताः ॥

अन्तस्तद्धर्माधिकरणभाष्ये—'स्यात् परमेश्वरस्यापि इच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इति, व्यतिहाराधिकरणभाष्ये—'आध्यानार्थेऽपि सत्यकामादिगुणोपयेशे तद्गुण ईश्वरः प्रसिद्ध्यति' इति, 'प्रदीपवदावेशस्तथा हि दर्शयति' इत्यस्मिन्नधिकरणे भाष्ये—'सगुणविद्याविपाकावस्थानं त्वेतत स्वर्गादिवदवस्थान्तरं यथैतदैश्वर्यमुपवर्ण्यते' इति च व्यावहारिकसविशेषभगवद्रूपगुणविशेषलोकविशेषादीनां स्वरूपाभ्युपगमः प्रदर्शितः ॥

'नाभाव उपलब्धेः' इत्यस्मिन्नधिकरणे भाष्यकारैः विज्ञानवादिमतनिराकरणेन ज्ञानातिरिक्तः अनिर्वचनीयः बाह्योऽर्थः स्थापितः। विज्ञानवादिमते हि अर्थः आन्तरः ज्ञानाभिन्नः सत्यः। उक्तं च तस्मिन्नेवाधिकरणे भामत्याम्—'न हि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति, किं त्वनिर्वचनीयं नीलादि इति' इति। अत्र कल्पतरुः—'बौद्धा हि वित्तेर्विज्ञानस्यान्तरं नीलादिरूपमाचक्षते न वयमित्यर्थः' इति। समुदायाधिकरणेऽपि कल्पतरौ—'ज्ञाने अर्थाकारस्य बौद्धैरनिर्वाच्यत्वानङ्गीकारात्' इत्युक्तम्। 'नाभाव उपलब्धेः' इत्यधिकरणे परिमलेऽप्युक्तम्—'न हि विज्ञानवादिना अस्माभिरिव जगदनिर्वचनीयमित्युच्यते। किं तु बाह्यास्तित्ववादिभिः यद्यावत् बहिरस्तीत्युच्यते तत् सर्वमन्तः सत्यमेवास्तीत्युच्यते' इति। ज्ञानाध्यास एव अर्थाध्यासो नास्ति भगवत्पादमते इति वर्णयतो नागेशस्य विरुद्धमिदम् ॥

'वैधर्म्याच्च न स्वप्नादिवत्' इत्येतत्सूत्रभाष्ये—'यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवत् जागरितगोचरा अपि स्तम्भादिप्रत्ययाः विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति। तत्प्रतिवक्तव्यम्। अत्रोच्यते—न स्वप्नादिप्रत्ययवत् जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात्?। वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनर्वैधर्म्यम्?। बाधाबाधाविति ब्रूमः।' इति स्पष्टं ज्ञानातिरिक्तोऽर्थः साधितः जागरिते। भामत्यामप्युक्तम्—'बाधाबाधाभ्यां वैधर्म्यात् न स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुम्' इति। अत्र कल्पतरौ—'अभ्युपेत्य स्वप्नप्रत्ययस्य निरालम्बनत्वं जाग्रत्प्रत्ययस्य तन्निरस्यति। विद्यत एव तु तस्यापि प्रातीतिकमा-

लम्बनम्' इति स्वप्नेऽपि ज्ञानातिरिक्तोऽर्थः स्थापितः । परं तु स प्राति-भासिकः जागरे व्यावहारिकः अनिर्वचनीयत्वमुभयत्र समम् ॥

'सन्ध्ये सृष्टिराह हि' इत्यस्मिन्नधिकरणे भाष्ये—'किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः? आहोस्विन्मायामयी?' इति सन्दिह्य पारमार्थिकीति पूर्वपक्षं कृत्वा 'मायामात्रं तु' इति सूत्रेण मायामयीति सिद्धान्तितम्। अत्र भामत्यां संशयस्वरूपमुपवर्णितम्—'यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागतयोरुभयोरपि सर्गयोर्मायामयत्वम्, तथापि यथा जाग्रत्सृष्टिः ब्रह्मात्मभावसाक्षात्कारात् प्रागनुवर्तते ब्रह्मात्मभावसाक्षात्कारात्तु निवर्तते, एवं किं स्वप्नसृष्टिः आहोस्वित् प्रतिदिनमेव निवर्तत इति विमर्शार्थः' इति । अत्र कल्पतरौ 'सर्वविकारमिथ्यात्वस्य अधस्तात् आरम्भणाधिकरणे साधनात् न पूर्वपक्षिणो दृष्टान्तसिद्धिरित्याशङ्क्याह—यद्यपीति । स्वप्नस्य व्यावहारिकत्व-मस्ति न वेति चिन्त्यत इत्यर्थः' इति विवृतम् ॥

अस्मिन्नधिकरणे स्वाप्नसृष्टेः व्यावहारिकत्वमेव निराक्रियते, न प्रातिभासिकत्वं न च अनिर्वचनीयत्वम् । नाप्यसत्त्वम्, ज्ञानात्मकत्वं वा साध्यते । 'मायामात्र'मिति सूत्रस्थमात्रपदेन सति प्रमातरि अबाध्यत्वरूपस्य व्यावहारिकसत्यत्वस्य निरासः । अत एव आनन्दगिरीये—'सूत्रे मात्रशब्देन सति प्रमातरि बाध्यत्वं नाम भ्रान्तिसिद्धत्वं स्वप्नस्य जाग्रद्वैलक्षण्यं विवक्षितम्' इत्युक्तम् ॥

एतेन—'व्यासोऽपि मायामात्रमित्यनेन अनिर्वचनीयोत्पत्तिवादं निरा-करोति' इति नागेशोक्तिः परास्ता । मात्रपदेन व्यावहारिकत्वस्यैव निरासात्, 'न तत्र रथा' इत्यादिश्रुतौ स्वप्ने रथाद्यभावचनं व्यावहारिकरथादेरभावपरम्, 'न तु प्रतीयमानस्य प्रातिभासिकस्यापि रथादेः अभावपरम् । 'रथादिसृष्टि-वचनं भक्त्या' इति भाष्यमपि व्यावहारिकसृष्टिनिषेधपरम् । चक्षुरादिनिषेध-परं दारुप्रभृतिरथादिसामग्रीनिषेधपरं च भाष्यं लौकिकरथादिग्राहकचक्षुरादेः तत्साधनदार्वादेश्च निषेधपरम् । न दोषादिघटितप्रातिभासिकसामग्र्या अपि निषेधपरम् । शुक्तिरजतादेरपि एवमेव दोषादिघटितसामग्र्या उत्पत्तिर्भाष्ये न वार्यते ॥

'यथा रज्ज्वां प्राक् सर्पोत्पत्तेः रज्ज्वात्मना सर्पः सन्नेवासीत्, एवं सर्वभावानां उत्पत्तेः प्राक् प्राणबीजात्मनैव सत्त्वम्' 'दृष्टं च रज्जुसर्पादीनां अविद्याकृतमायाबीजोत्पन्नानां रज्ज्वाद्यात्मना सत्त्वम्' 'अविद्याकृतरज्जुसर्पादिसमम्' 'न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पः बुद्धिसंस्कारात् पुनः पूर्ववत् तद्विवेकिनामुत्थास्यति' 'न हि रज्ज्वां अविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत् कश्चित्' 'सतो हि विद्यमानात् कारणात् मायानिर्मितस्य हस्त्यादिकार्यस्येव जगतो जन्म युज्यते नासतः कारणात्' 'अविद्यानिमित्तं हि जन्म रज्जुसर्पवदित्यवोचाम' 'अप्रबोधकृते ह्यस्य नामरूपे प्रबोधाच्च ते रज्जुसर्पवद्विनष्टे' 'यथा मायामयादाम्रादिबीजात् जायते तन्मयः मायामयोऽङ्कुरः' इत्यादिवाक्येषु माण्डूक्योपनिषद्भाष्ये प्रातिभासिकस्य रज्जुसर्पादेः उत्पत्तिः प्रलयश्च अभ्यासेन वर्ण्यते, अतः प्रातिभासिकव्यावहारिकोभयविधानिर्वचनीयस्योत्पत्तिः प्रलयश्च भगवत्पादसम्मतौ ॥ यच्च—

'यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ।
नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥' (4-59)

इति गौडपादकारिकाभाष्यम्—'नासौ अङ्कुरः नित्यः, न चाच्छेदी विनाशी वा अभूतत्वात्। तद्वत्—एवं धर्मेषु जन्मनाशादियोजना युक्तिः। न तु परमार्थतो धर्माणां जन्म नाशो वा युज्यत इत्यर्थः' इति,

'धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ।
जन्म मायोपमं तेषां सा च माया न विद्यते ॥' (4-58)

इति कारिकाभाष्यम्—'संवृत्यैव धर्मा जायन्ते न ते तत्त्वतः परमार्थतो जायन्ते।' इति,

यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ (4-68)

यथा मायामयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥' (4-69) इति,

'न हि मनोविकल्पनायाः रज्जुसर्पादिलक्षणायाः रज्ज्वां प्रलय उत्पत्तिर्वा । न च मनसि रज्जुसर्पस्योत्पत्तिः प्रलयो वा । न चोभयतो वा ।

तथा मानसत्वाविशेषात् द्वैतस्य' इति 'न निरोधो न चोत्पत्तिः' इति कारिकाभाष्यम्। अत्र आनन्दगिरिटीका—'विमतः तत्त्वतो नोत्पत्तिप्रलयवान् कल्पितत्वात् रज्जुसर्पवत् इत्यत्र दृष्टान्तासिद्धिमाशङ्क्य, रज्जुसर्पस्य रज्ज्वामुत्पत्तिप्रलयौ मनसि वा द्वयोर्वेति विकल्प्य, प्रथमं प्रत्याह—न हीति। रज्जुं पश्यतां सर्वेषामुपलब्धिप्रसङ्गादित्यर्थः। द्वितीयं दूषयति—न चेति। बहिरुपलब्धिविरोधादित्यर्थः। तृतीयं निरस्यति—न चेति। द्वयाधारत्वानुपलम्भादित्यर्थः। रज्जुसर्पवत् द्वैतस्य मानसत्वाविशेषात् न तत्त्वतो जन्मविनाशौ दर्शयितुं शक्याविति दार्ष्टान्तिकमाह—तथेति।' इति। एतादृशभाष्यकारिकावाक्येषु प्रातिभासिकस्य जगतः व्यवहारतः, व्यावहारिकस्य परमार्थतश्च उत्पत्तिप्रलयौ निषिद्धौ ; न तु सर्वथा। नागेशस्तु तत्त्वतः उत्पत्तिप्रलयनिषेधवाक्यमात्रपर्यालोचनया अनिर्वचनीयोत्पत्तिर्भगवत्पादानामनभिमतेति घोषयति। तत्तु उत्पत्तिप्रलयबोधकपूर्वोक्तपरस्सहस्रवचनदर्शनात् अनुपपन्नम् ॥

उभयलिङ्गाधिकरणभाष्येऽपि—'तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते। तया चाविद्या बाध्यते। ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत्प्रवलीयते' 'रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानं अविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति' इति अनिर्वचनीयस्य जगतः प्रलयोऽङ्गीकृतः। उत्पत्तेरप्युपलक्षणमिदम् ॥

बृहदारण्यकोपनिषद्भाष्येऽपि—'तस्मादविद्यानिवृत्तिमात्रे मोक्षव्यवहार इति चावोचाम। यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्तिः' इत्युक्तम्। अत्र टीका—'यथा रज्ज्वादौ अधिष्ठाने सर्पादिहेतोः रज्ज्वज्ञानस्य निवृत्तौ सत्यां सर्पादेरपि निवृत्तिः, तथा अविद्याया बन्धहेतोः निवृत्तिमात्रेण तत्कार्यस्य बन्धस्यापि निवृत्तिव्यवहारो भवतीति चावादिष्मेति योजना' इति ॥

बृहदारण्यकोपनिषद्भाष्यवार्तिकेऽपि रज्जुसर्पाद्यनिर्वचनीयपदार्थोत्पत्तिरङ्गीकृता। तथा हि—

यत्तत्त्वकं स्याद्यद्वस्तु न तत्तदतिवर्तते।<br>नाज्ञातरज्जुजः सर्पो रज्जुमुलङ्घ्य वर्तते ॥ 1-4-303.

अविचारितसंसिद्धि तमोवत् स्यात्तदुद्भवम्।<br>कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेच्चितिः ॥ 3-4-131.

टी—चिन्मात्रमवशिष्टमित्यर्थः ॥

रज्जुत्वाहित्वयोर्यद्वदेकस्मिन्नपि वस्तुनि ।
स्वतस्तन्मोहतश्चैव सम्भवस्तद्वदात्मनि ॥ 3-5-36.

मुक्तत्वं च सितत्वं च परस्परविरुद्धयोः ।
धर्मयोः समवायः स्यात् न तु नीलोत्पलादिवत् ॥ 3-5-37.

टी—सितत्वं चेत्यस्मादूर्ध्वं इतिशब्दाध्याहारः ॥

स्रजीव सर्पदण्डादेः स्रगविद्योत्थवस्तुनः ।
स्रक्तत्त्वव्यतिरेकेण सिद्धिर्नान्यत्र कुत्रचित् ॥ 4-4-170.

सर्पादयो यथा रज्ज्वा विकाराःस्युरबोधतः ।
अज्ञानादात्मनस्तद्वत् तेजोऽबन्नादिविक्रिया ॥ 4-4-178.

अथाविद्यावतोऽविद्याहान्यहानिकृतो भवेत् ।
विशेष आत्मनः कश्चिदिति चेन्नैवमिष्यते ॥ 4-4-353.

अविद्यामात्रहेतूत्थगोचरत्वसमाश्रयात् ।
रज्जुखण्डाद्यविद्योत्थसर्पादिविनिवृत्तिवत् ॥ 4-4-354.

तद्भेदमित्यविज्ञातप्रत्यक्त्त्वादिदं जगत् ।
रज्ज्वां सर्पादिवज्जातं नामरूपक्रियात्मकम् ॥ 2-1-1.

स्रजि दण्डादयो यद्वत् स्रगज्ञानैकहेतुकाः ।
पतिजायासुताद्येवं प्रत्यगज्ञानहेतुजम् ॥ 2-4-88. इति ॥

एवं परस्सहस्रं वचनानि अनिर्वचनीयपदार्थोत्पत्तिप्रलयबोधकानि आकरेषु दृश्यन्ते। विस्तरभिया न तानि लिख्यन्ते। जागरिकप्रपञ्चः अनिर्वचनीयत्वेन यद्यपि मायामात्र इति भाष्ये तत्र तत्र वर्ण्यते, अथापि व्यावहारिकं तुच्छविलक्षणं तत्स्वरूपं नापलप्यते ; इति नागेशोदाहृतेषु 'प्राक्तु ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चः व्यवस्थितरूपो भवति' 'सर्व-व्यवहाराणामेव प्राक् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः' इत्यादिभाष्य-वाक्येष्वेव गम्यते। 'उत्पत्त्यादिश्रुतीनां एकत्वप्रतिपादनपरत्वात् नोत्पत्त्यादि-प्रतिपादनपरत्वम्' इत्यादिभाष्यवाक्यमपि सृष्ट्यादिश्रुतीनां पारमार्थिकोत्प-त्त्यादिप्रतिपादकत्वनिषेधपरम्, न तु व्यावहारिकसृष्ट्यादिपरत्वप्रतिषेधक-

मपि। अत एव वियत्पादादौ सृष्ट्यादिप्रतिपादकश्रुतिविरोधपरिहारः चिन्तितः। 'विहारोऽपि तत्रत्यः वासनामय एव न तु पारमार्थिकोऽस्ति' इत्यपि भाष्यं स्वाप्नविहारस्य पारमार्थिकत्वमेव प्रतिषेधति न प्रातिभासिकत्वमपीति स्पष्टमवगम्यते। इदमपि नागेशोदाहृतात् 'सत्यत्वोपपत्तेः स्वप्नव्यवहारस्येव प्राक् प्रबोधात्' 'विभागव्यवहारः स्वप्नवदव्याहतः' इत्यादिभाष्यवाक्यादेवावगतम् ॥

यत्तु—अनिर्वचनीयस्याप्रसिद्धया तत्र सदादिभेदो वक्तुमशक्य इति ; तन्न—यतः शुक्तिरजतस्वाप्नरथादिकमनिर्वचनीयं प्रसिद्धमेव। तद्धि न सत्; बाधितत्वात्। नाप्यसत्; अपरोक्षत्वात्। अतः सदसद्विलक्षणं तत् प्रसिद्धम्। एवमेव व्यावहारिकोऽपि प्रपञ्चः न सन्; श्रुत्या बाधितत्वात्। नाप्यसन्; अपरोक्षत्वात्। तथा च अनिर्वचनीयः सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यः। सदसद्विलक्षणत्वमेव च अनिर्वचनीयत्वं तस्य। प्रातिभासिकव्यावहारिकोभयविधप्रपञ्चस्य ब्रह्मतुच्छोभयविलक्षणत्वात् सदसद्विलक्षणपदव्यवहार्यस्यापि सद्भिन्नत्वरूपमसत्त्वमिष्यत एव। अत एव तुच्छस्यात्यन्तासत्पदेन व्यवहारः। तत्र अनिर्वचनीयव्यावर्तकतया अत्यन्तपदसार्थक्यम्। असद्भिन्नत्वरूपं सत्त्वं चेष्यत एव। अत एव ब्रह्मणः परमार्थसदिति निर्देशः अनिर्वचनीयसद्व्यावर्तकपरमार्थपदघटितः। पारमार्थिकत्वरूपसत्त्वं तु तत्रारोपितमस्तु। तथा चारोपितसत्त्वेन असद्भिन्नत्वरूपसत्त्वेन वा सदिति वस्तुतः सत्त्वाभावेन असदिति च सदसदुभयरूपत्वेन व्यवह्रियतां कामं प्रपञ्चः। परमार्थतः सत्त्वाभावात् सद्विलक्षणत्वेन अत्यन्तासद्रूपतुच्छविलक्षणत्वात् असद्विलक्षणत्वेन च प्रपञ्चः सदसद्विलक्षणः अनिर्वचनीयः इति अद्वैतिभिः क्रियमाणस्य व्यवहारस्य तावता को दोषः ?। ब्रह्मतुच्छोभयगतसत्त्वासत्त्वरूपधर्मद्वयानाक्रान्तः शुक्तिरजतादिः लोकव्यवहारे सुप्रसिद्धः। तेन धर्मद्वयानाक्रान्तस्य लोकव्यवहारे अभावकथनं नागेशस्य अभिनिवेशमूलकमेव ॥

यत्तु साङ्ख्यस्य सदसत्ख्यातिवादित्वमुक्तं भट्टनागेशेन। तत्रोच्यते—साङ्ख्यः अख्यातिवादी इति विवरणादौ प्रामाणिकग्रन्थे प्रतीयते—'भोक्तैव केवलं न कर्तेत्येके' इति भाष्योक्तसाङ्ख्यपक्षोपपादनावसरे पञ्चपादिकाविवरणे—(611 पु.) 'कर्तृत्वं हि क्रियावेशः। न च सर्वगतस्य निरवयवस्य आत्मनः

परिस्पन्दपरिणामलक्षणक्रियान्वयः सम्भवति। न च बुद्धेः कर्तृत्वमात्मनो भवति। तादात्म्याध्यासाभावात्। अख्यातिवादित्वात्' इति। तत्र ऋजुविवरणे तत्त्वदीपने च क्रमेण 'साङ्ख्यस्येत्यर्थः' 'साङ्ख्यस्यापीति शेषः' इति व्याख्यातम्। पञ्चपादिकास्थस्य (4-4-पु.) 'एतेन अन्यसम्प्रयोगे अन्यविषयस्य ज्ञानस्य स्मृतित्वतत्प्रमोषौ सर्वत्र व्याख्यातौ द्रष्टव्यौ' इति वाक्यस्य विवरणावसरे—'ननु अतत्त्वे तत्त्वज्ञानमिति शास्त्रकारेणैव दर्शितः संसर्गभ्रमः इति। नेत्याह—एतेनान्यसंप्रयोगे इति। वक्तव्ये च पूर्ववादिनाप्यविवेके संसर्गज्ञानकल्पनागौरवात् अख्यातिरेव युक्तेति भावः' इत्युक्तं पञ्चपादिकाविवरणे। (131-पु.) तत्र तत्त्वदीपने—'अयथार्थज्ञानानाश्रयणे सिद्धान्तक्षतिरिति शङ्कते—नन्वतत्त्वे इति। शास्त्रकारेणेति। साङ्ख्येनेत्यर्थः। अयथार्थज्ञानाभावेऽपि तद्व्यवहाराभिप्रायं तत् वचनमिति मत्वा आह—नेत्याहेति। कल्पनागौरवादपि अयथार्थज्ञानं नोपेयमित्याह—वक्तव्ये इति।' इति व्याख्यातम्। अत्र साङ्ख्यः अख्यातिवादी इति तत्त्वदीपने स्फुटीकृतम्॥

'अख्यातिवादिनाऽपि मानसं संसर्गज्ञानं संसर्गाभिमानो वा वक्तव्य इत्यभिप्रायः' (186-पु) इति विवरणस्थवाक्यव्याख्यानसमये तत्त्वदीपने—'स्वरूपलक्षणस्य कथमख्यातिमते अनुगतिः? संसर्गज्ञानस्य तेनानभ्युपगतत्वादित्याशङ्क्याह—अख्यातीति। चाक्षुषायथार्थज्ञानाभावेऽपि मानसमयथार्थज्ञानमख्यातिवादिना अङ्गीक्रियते 'देहादावनात्मन्यात्मबुद्धिरविद्या' इति साङ्ख्योक्तेरित्यर्थः। प्राभाकरेणापि संसृष्टव्यवहारानुपपत्त्या संसर्गज्ञानमङ्गीकरणीयमित्याह—संसर्गाभिमान इति।' इत्युक्तम्। तथा च साङ्ख्यः अख्यातिवादी इति घण्टाघोषः॥

रचनानुपपत्त्यधिकरणे साङ्ख्यमतनिरासार्थे साङ्ख्यमतानुवादसन्दर्भे—'तदविभागापत्तिश्चाविद्या' इति भामतीवाक्यस्य विवरणपरं कल्पतरुस्थं 'अविवेको ह्यविभागः' इति यद्वाक्यं तस्य परिमले व्याख्यानम्—'अविभागापत्तिश्च इत्यत्र अविभागो नैक्यम्। अख्यातिवादिनः साङ्ख्यस्य मते भ्रमविषयैक्यविवर्ताभावादित्याशङ्क्य, विवेकाग्रह एवाविभागशब्देन विवक्षित इति व्याचष्टे—अविवेक इति।' इति। अनेनापि साङ्ख्यः अख्यातिवादी इति स्फुटीकृतम्। एवमन्यत्रापि ग्रन्थे साङ्ख्यः अख्यातिवादी इति

प्रसिद्धम् । विवेकाग्रहात् बन्धः विवकख्यात्या च मुक्तिरिति साङ्ख्याभ्युपगम इति च सुविदितम् ॥

एवं स्थिते वस्तुतत्त्वे सति, साङ्ख्यस्य मते सदसत्ख्यातिरिति, तत्र च 'सदसत्ख्यातिर्बाधाबाधाभ्याम्' इति साङ्ख्यसूत्रं प्रमाणमिति च प्रदर्शनं नागेशस्य, सर्वसिद्धान्तसङ्करकारिणः विज्ञानभिक्षोः साङ्ख्यप्रवचनभाष्यावलोकनतच्छ्रद्धाविप्रलब्धबुद्धित्त्वप्रयुक्तमिति प्रामाणिका मन्वते। उपलभ्यमाना सदसत्ख्यातिबोधिनी साङ्ख्यसूत्ररूपा षडध्यायी विज्ञानभिक्षुप्रणीतेत्यपि केचन संशेरते। युज्यते च स संशयः। कथमन्यथा अख्यातिवादित्वेन प्रसिद्धः साङ्ख्यः सदसत्ख्यातिवादितां प्रापितः सूत्रे। अहो ! लोके केचन ग्रन्थकर्तारः परवञ्चकाः, अन्ये च तैः वञ्चिताः सन्तः स्वयं, वस्तुतत्त्ववेदिनः परानाक्षिपन्ति च। यद्वा, सदसत्ख्यातिबोधकं साङ्ख्यसूत्रं नागेशश्रद्धया अभ्युपगच्छेम, अथापि तत्सूत्रस्य नागेशवर्णितो योऽर्थः 'यावद्विशेषदर्शनमबाधः तदुत्तरं बाधः' इति, सः अनिर्वचनीयख्यातिवादिभिरपि इष्यत एव। अत एव पञ्चपादिकायामुक्तम्—'अथ पुनर्विद्योदये अविद्यायाः निरुपाख्यतामङ्गीकृत्य असत्त्वमुच्येत, काममभिधीयताम्।' इति। तच्च पूर्वं प्रदर्शितम् ॥

'साङ्ख्यदूषितानिर्वचनीयख्यातिः व्याससूत्रेऽनारूढा' इत्यपेशलम्। 'मायामात्रं त्वि'ति सूत्रारूढत्वात्। नागेशप्रदर्शितसाङ्ख्यसूत्रग्रन्थे असत्ख्यातिः सत्ख्यातिश्च निरस्ता। परिशेषात् सदसद्विलक्षणानिर्वचनीयख्यातिरेव तदभिमतेति ज्ञायते। एवं च पश्चादनिर्वचनीयख्यातिः कथं खण्ड्यतामियात् ?। यदि च अनिर्वचनीयत्वं नाम वस्तुभूतो धर्मः अनिर्वचनीये धर्मिणि नास्तीत्याशयेन खण्ड्यते अनिर्वचनीयख्यातिः, खण्ड्यतां कामम्। अनिर्वचनीयख्यातिवादिभिरपि अनिर्वचनीयस्यैव अनिर्वचनीयत्वस्याभ्युपगमादिष्टापत्तेः ?। तथैव च तत्सूत्रस्याप्यर्थो वर्णनीयः। अनिर्वचनीयख्यातिमते अनिर्वचनीयत्वं वास्तविकतया अभिमतमिति मत्वा च खण्डनम्। 'नानिर्वचनीयस्य ख्यातिः अद्वैतमते तदभावात्—अनिर्वचनीयत्वस्य धर्मस्य वस्तुतोऽभावात्' इति सूत्रार्थः। विज्ञानभिक्षुणा 'तदभावात्' इति पदस्य अनिर्वचनीयवस्त्वप्रसिद्धेरिति अर्थो वर्णितः। तच्छ्रद्धया नागेशोऽपि तथैवार्थं ब्रूते। स चार्थः अनिर्वचनीयस्य शुक्तिरूप्यादेः प्रसिद्ध्या अनुपपन्नः ॥

इदं चान्यदाश्चर्यं—यत् नागेशः विज्ञानभिक्षुभक्तः तद्वर्णितमप्यर्थं सर्वत्र नानुसरति। 'सदसत्ख्यातिर्बाधाबाधात्' इति सूत्रस्य हि विज्ञानभिक्षुप्रणीतार्थ एवम्—'सदसत्ख्यातिरेव सर्वेषां गुणादीनाम्। कुतः? बाधाबाधात्। तत्र स्वरूपेणाबाधः; सर्ववस्तूनां नित्यत्वात्। संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्ये अस्ति। यथा स्फटिकादिषु लौहित्यादेस्तद्वत्। न च सदसत्त्वयोर्विरोध इति वाच्यम्; प्रकारभेदेनाविरोधात्। यथा हि लौहित्यं बिम्बरूपेण सत् स्फटिकगतप्रतिबिम्बरूपेण चासदिति दृष्टम्। यथा वा रजतं वणिग्वीथीस्थरूपेण सत् शुक्त्यध्यस्तरूपेण चासत्, तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तरूपेण चासदिति। एवमेवावस्थाभेदेनापि सदसत्त्वमविरुद्धम्। यथा हि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नपि अङ्कुराद्यवस्थाभिरसन् भवति। तथैव प्रकृत्यादिकं सदसदात्मकमिति। एतच्चास्माभिः ब्रह्ममीमांसाभाष्ये योगवार्तिके च प्रपञ्चितम्' इति। नागेशोदीरितार्थस्तु पूर्वं प्रदर्शितः तद्विलक्षणः। 'नान्यथाख्यातिः' इति स्वाभिमतसाङ्ख्यसूत्रानुसारेण अन्यथाख्यातिं खण्डयन्नपि विज्ञानभिक्षुः 'सदसत्ख्यातिः' इति सिद्धान्तसूत्रं व्याचक्षाणः 'यथा वा रजतं वणिग्वीथीस्थरूपेण सत् शुक्त्यध्यस्तरूपेण चासत्' इति अन्यथाख्यातिमतानुसारेणैव ब्रूते। अतः विज्ञानभिक्षुः सर्वसिद्धान्तसङ्करवादी इति स्पष्टम्। तमनुरुन्धानो नागेशोऽपि तथैव संवृत्त इति अहो! शोच्यता तस्य॥

यत्तु—'अनिर्वचनीयोत्पत्तौ घटादिना मृदादेरिव ब्रह्मणोऽपि विकारित्वापत्ति'रिति; तन्न—अनिर्वचनीयत्वादेव प्रपञ्चस्य वस्तुतः तत्सम्बन्धाभावात् ब्रह्मणो विकारित्वानापत्तेः। स्वसमसत्ताकविकाराभावात् ब्रह्मणः। 'तदनन्यत्व'मिति सूत्रे ब्रह्मव्यतिरेकेण वस्तुतः प्रपञ्चो नास्तीत्येवोक्तम्। न तु व्यावहारिकप्रपञ्चस्वरूपस्याप्यपलापः कृतः। तस्मिन्नेव सूत्रे भाष्ये एतत् स्पष्टमवगम्यते—'अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं 'स्याल्लोकवत्' इति परिहारोऽभिहितः। न त्वयं विभागः परमार्थतोऽस्ति' 'सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः स्वप्नव्यवहारस्येव प्राक् प्रबोधात्' 'तस्मात् प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः' 'सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह। व्यवहाराभिप्रायेण तु 'स्याल्लोकव'दिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति' इत्यादिवाक्यैः॥

यत्तु—'यया सामग्र्या शुक्त्यादौ रजताद्युत्पत्तिः तया विषयासत्त्वेऽपि ज्ञानमात्राङ्गीकारेऽपि बाधकाभावः' इत्युक्तम्; तन्न—रजतस्य उत्पत्त्यनङ्गीकारे 'अत्र रजतं साक्षात्करोमि' इत्यनुभूयमानस्य रजतज्ञानसाक्षात्कारत्वस्यानिर्वाहात्। देशान्तरस्थरजतादौ प्रत्यक्षविषयत्वासम्भवात्। अद्वैतसिद्धिलघुचन्द्रिकादिषु विशदमिदम्। न च रजतत्वाश्रयस्य अनिर्वचनीयरजतस्योत्पत्त्यङ्गीकारे रजतज्ञानस्य रजतत्ववद्रजतविषयकत्वेन विशेष्यावृत्तिधर्मप्रकारकत्वाभावेन भ्रमत्वासम्भवप्रसङ्ग इति वाच्यम्; सिद्धान्ते बाधितार्थविषयकत्वमेव भ्रमत्वम्, न तु तदभाववति तत्प्रकारकत्वम्, इत्यभ्युपगमात्। अनिर्वचनीयरजतस्य च बाधितत्वेन तज्ज्ञानस्य भ्रमत्वोपपत्तेः॥

योगसूत्रेऽपि बाधितार्थविषयकत्वमेव भ्रमत्वमित्युक्तम्। 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' इति सूत्रविवरणावसरे हि वाचस्पतिमिश्रा एवमाहुः—'यत् ज्ञानप्रतिभासिरूपं तद्रूपाप्रतिष्ठमेवातद्रूपप्रतिष्ठम्। यथा अश्राद्धभोजीति। अतः संशयोऽपि सङ्गृहीतः। एतावांस्तु विशेषः—तत्र ज्ञानारूढैवाप्रतिष्ठता। द्विचन्द्रादेस्तु बाधज्ञानेन। नन्वेवं विकल्पोऽपि तद्रूपाप्रतिष्ठानात् विचारतो विपर्ययः प्रसज्येतेत्यत आह—मिथ्याज्ञानमिति। अनेन हि सर्वजनीनानुभवसिद्धो बाध उक्तः। स चास्ति विपर्यये; न तु विकल्पे। तेन व्यवहारात्। पण्डितरूपाणामेव तु विचारयतां तत्र बाधबुद्धेरिति।' इति॥

भोजवृत्तौ—'अतद्रूपप्रतिष्ठमिति। तस्यार्थस्य यद्रूपं तस्मिन् रूपे न प्रतितिष्ठति, तस्यार्थस्य यत् पारमार्थिकं रूपं न तत् प्रतिभासयतीति यावत्' इति उक्तम्। अत्र मिश्रव्याख्यायां तद्रूपपदेन ज्ञाने प्रतिभासमानस्वरूपस्य प्रतिष्ठापदेन अबाधस्य च परिग्रहः। प्रतिभासमानस्वरूपे अबाधो नास्ति, अपि तु बाध एव। तथा च बाधितार्थविषयकज्ञानमिति सूत्रस्य फलितोऽर्थः। भोजव्याख्यायां तद्रूपपदेन पारमार्थिकस्वरूपस्य प्रतिष्ठापदेन विषयीकरणस्य चार्थस्य परिग्रहः। तथा च अबाधितार्थाविषयकत्वं बाधितार्थविषयकत्वपर्यवसन्नमुक्तमिति नार्थान्तरम्। एवं च व्यासस्यापि योगसूत्रभाष्यप्रणेतुः बाधितार्थविषयकज्ञानं मिथ्याज्ञानमित्येव सम्मतम्। 'यत् ज्ञानप्रतिभासि रूपं रजतत्वादि तदा-

श्रयत्वाभाववद्विशेष्यकमित्यर्थः इति मिश्राः' इति यत् नागेशेनोक्तम्, तस्य तथा मिश्रैरनुक्तमित्येव समाधानम् ॥

यदपि—'शुक्तिरजतस्थले अधिष्ठानज्ञानेन तन्नाशो वाच्यः। न च तस्य वस्तुनाशकता दृष्टा। अत एव गौतमादिभिः उत्पत्तिः तत्र नोक्ता' इत्यादि। तन्न—अधिष्ठानज्ञानस्य अज्ञाननिवर्तकत्वेन अज्ञाननिवृत्त्या तदुपादानकस्य शुक्तिरजतादेरपि निवृत्तिसम्भवात्, ज्ञानस्य शुक्तिरजतादिनिवर्तकत्वस्यावक्तव्यत्वात्। अन्यथाख्यातिवादिभिः गौतमादिभिः शुक्तिरजताद्युत्पत्त्यनभ्युपगमेऽपि अनिर्वचनीयख्यातिवादिभिः तदुत्पत्त्यङ्गीकारस्य आक्षेपानवकाशात् ॥

'बुद्धिसद्वा रजतम्' इत्यभ्युपगमः नागेशोक्तः साकारज्ञानवादिबौद्धानामेव शोभते, नानिर्वचनीयख्यातिवादिनां वेदान्तिनाम्। भ्रमस्थले अनिर्वचनीयपदार्थोत्पत्तिं विना रजतस्य प्रत्यक्षत्वोपपादनायोगात् रजतोत्पत्त्यादिकल्पनागौरवं प्रामाणिकत्वान्न दोषाय इति बोध्यम्। 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यधिकरणे विद्यमानं 'प्रत्येत्येव हि केवलं शुक्तिकां रजतमिति न तु तत्र रजतमस्ति' इति भाष्यवाक्यं व्यावहारिकं रजतं तत्र नास्तीत्यर्थकं न तु प्रातिभासिकमपि रजतं तत्र नोत्पद्यत इत्यर्थकम्, भाष्यवाक्यैरेव पूर्वं प्रातिभासिकरजतोत्पत्त्यादेः प्रदर्शितत्वात्। एवमेव 'न स्थानतोऽपि' इति सूत्रभाष्यस्थस्य 'न हि स्वच्छः सन् स्फटिकोऽलक्तकाद्युपाधियोगात् अस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य' इति वाक्यस्याप्यभिप्रायः—अस्वच्छत्वं स्फटिकस्य प्रातिभासिकं न तु व्यावहारिकं इति। प्रातिभासिकव्यावहारिकयोः अनिर्वचनीयत्वाविशेषेऽपि व्यवहारकालाबाध्यत्वबाध्यत्वाभ्यां विशेषः प्रागेव प्रदर्शितः।

यदपि—'परकीयरीत्येदमुच्यते—अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति। वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतस्सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे' इत्यादिना श्रीहर्षोक्तं खण्डनखण्डखाद्यग्रन्थवचनं प्रदर्श्य सदसद्विलक्षणत्वरूपं अनिर्वचनीयत्वं श्रीहर्षस्याप्यसम्मतमिति कीर्तितं नागेशभट्टेन। तत्रोच्यते—श्रीहर्षेण हि—'सौगतब्रह्मवादिनोरयं विशेषः—यदादिमः सर्वमेवानिर्वचनीयं वर्णयति।

विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनसङ्गिरन्ते। तथाहि—नेदं सद्भवितुमर्हति ; वक्ष्यमाणदूषणग्रस्तत्वात्। नाप्यसदेव ; तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः।' इति ग्रन्थेन ब्रह्मवादिनां मते विश्वं सदसद्विलक्षणमिति स्पष्टं उच्यते। 'श्रौतबाधा-परोक्षप्रतिभासोपपत्तये सदसद्विलक्षणत्वमेवानिर्वचनीयत्वमेष्टव्यम्' इति तत्रैव टीकायां खण्डनभूषामणौ दीधितिकाराः रघुनाथभट्टाचार्यशिरोमणयो वदन्ति॥

ततः 'सदसत्त्वपक्षबहिर्भावाभ्युपगमः व्याघातादेवासम्भवी, परस्पर-विरोधे हि न प्रकारान्तरस्थितिः इति' इत्याशङ्क्य, श्रीहर्षेणोक्तम्—'तदेतदना-कलितपराभिसन्धेः प्रत्यवस्थानम्। यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत?। सापि हि कृत्स्नप्रपञ्चपर-सर्वशब्दाभिधेयमध्यनिविष्टैव। परस्यैव व्यवस्थया एवं पर्यवस्यति—निर्वचन-प्रतिक्षेपादनिर्वचनीयत्वम्, विधिनिषेधयोरेकतरनिरासस्य इतरपर्यवसायितायाः तेनाभ्युपगमात्। ततः परकीयरीत्या इदमुच्यते—अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति।' इति॥

अत्र खण्डनभूषामणिटीका—'किमनया दूषणपरम्परया अनिर्वचनी-यत्वस्य सत्त्वमपलप्यते? उत तस्य स्वरूपमेव?। नान्त्यः ; अप्रमितस्य निषेधा-योगात्। प्रथमे तु इष्टापत्तिरित्याह—यो हीति। अनिर्वचनीयतायामपि अनिर्वचनीयताया एव मया अभ्युपगमादित्यर्थः। नन्वेवं यथा प्रपञ्चस्य सत्त्वेन असत्त्वेन वा निर्वक्तुमशक्यस्य न सत्यत्वसिद्धिः, तथा अनिर्वचनीयत्व-स्यापि तथात्वे असिद्ध्यापत्तिरित्यत आह—परस्यैवेति। एवंशब्दार्थमाह—निर्वचनेति। अनिर्वचनीयत्वमित्यतोऽनन्तरं इतीति शेषः। अस्त्वेवमनिर्वच-नीयताख्यस्य धर्मस्य अनिर्वचनीयत्वं, धर्मिणस्तु कथम्? इत्यत आह—तत इति। तयेत्यर्थे सार्वविभक्तिकस्तसिः॥

तर्हि किमनिर्वचनीयत्वं त्वया न साधनीयम्। तदा च कथं तत्सिद्धिः? इत्यत आह—'वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतस्सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे' इति। न हि मया अनिर्वचनीयत्वं साध्यते ; परं तु प्रपञ्चसत्त्वासत्त्वयोः प्रमाणाभावमुप-न्यस्य तस्य सत्त्वासत्त्वव्यवस्थायां उदासीनाः चरितार्थाः परिशेषसिद्धानिर्वच-

नीयव्यवहाराः सुखम्—निरूपणक्लेशविधुरं आस्महे। ननु तद्व्यवस्थाया-मौदासीन्ये शून्यवाद एव कथं न स्यात्? इत्याशङ्क्याह—ब्रह्मतत्त्वे इति। भरं—तात्पर्यं तन्निरूपणम् ॥

ननु तर्हि सदसत्त्वविचारे कथं ते प्रवृत्तिः? इष्टस्य साध्यस्याभावादित्यत आह—'ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति, तान् प्रति ब्रूमः—न साध्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थयैव व्याहतत्वात् इति। ब्रह्मभिन्नं तत्त्वमस्तीत्ययं पक्षोऽस्माकं द्वेष्यः स मा प्रसर्पत्विति अनिष्टाभावार्थं प्रवर्तामहे इत्याशयः' इति। अत्र खण्डनग्रन्थे तदीयटीकायां च प्रपञ्चस्य सदसद्वैलक्षण्यरूपमनिर्वचनीयत्वं स्फुटं प्रत्यपादि ॥

अद्वैतसिद्धिलघुचन्द्रिकयोरेवमुक्तम्—'सत्त्वासत्त्वयोः परस्परविरहरूपत्वे एकनिषेधस्यापरविधिपर्यवसन्नतया एकत्रोभयवैलक्षण्यं व्याहतमिति चेत्, न—निषेधसमुच्चयस्यातात्त्विकत्वाङ्गीकारात् न व्याहतिः। न ह्यतात्त्विकरजतेन शुक्तेर्विरोधः; ननु अतात्त्विकयोः तदभावयोः तदधिकरणे परस्यापीष्टत्वात् तदुक्तिर्व्यर्थेति चेत्, न—तादृशाभावयोः प्रतियोगिसमसत्ताकयोरेव निवेशेन स्वान्यूनसत्ताकस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वरूपमिथ्यात्वस्य सत्त्वादौ ज्ञापकत्वेन सार्थक्यात्। वस्तुतस्तु सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वम्; किं तु परस्परविरहव्याप्यतामात्रम्। अतः गोत्वाश्वत्वयोः परस्परविरहव्याप्ययोः गजे अभाववत् सत्त्वासत्त्वयोरपि प्रपञ्चे अभावाङ्गीकारे न दोषः' इत्यादि ॥

नागेशः मञ्जूषायां पौनःपुन्येन स्वीयं मतं एवं कथयति—'प्रातिभासिकव्यावहारिकोभयविधप्रपञ्चज्ञानयोरपि विषयः असन्नेव। असत्त्वादेव तस्य उत्पत्तिविनाशबहिष्ट्वादिकमपि नास्ति। आरोपितमेव तत् सर्वम्। असदर्थप्रकाशनमेव माया नाम। परमार्थतः असतोऽपि तस्य आरोपितं सत्त्वम्, अत एव सदसदात्मकमिति तस्य व्यपदेशः वस्तुतोऽसत्त्वात् सत्त्वस्य तत्रारोपाच्च। असतो भाने बौद्धमतप्रवेशापत्तिरपि नास्ति, बौद्धेन आरोपितसत्त्वस्यानङ्गीकारात् आत्मनः तेन अनित्यत्वाङ्गीकाराच्च। परमात्मनः जगज्जनकत्वपालकत्वादेरपि अवभासमात्रम्। न वस्तु किंचिदस्ति। अनादिवासनावशात् जायमानभ्रमविषय-

मेव तत् 'यतो वे'त्यादिश्रुतयः अनुवदन्ति। भ्रमविषयैरेव जगज्जनकत्वादिभिः ब्रह्म लक्ष्यते। अनिर्वचनीयत्वमिति पदेन सदेवेति वा असदेवेति वा सत्त्वासत्त्वान्यतरमात्रधर्मेण निर्धार्य वक्तुमशक्यत्वमेव विवक्षितम्; न तु सदसद्विलक्षणत्वम्, यतः प्रतीयमानमसदेव। परं तु, तत्र सत्त्वस्यारोपितत्वात् चाक्षुषादिप्रत्यक्षगोचरत्वेन असदेव इति निर्धार्य वक्तुमशक्यत्वमात्रम्। सत्त्वारोपात्तत् सदात्मकम्। तथापि बाधदर्शनात् सदेव इति निर्धार्य वक्तुमशक्यं तत्। आरोपितसत्त्वस्य वस्तुतोऽसत्त्वस्य च विद्यमानत्वादेव प्रपञ्चख्यातिः सदसत्ख्यातिरिति गीयते साङ्ख्यसूत्रे। अनिर्वचनीनयख्यातिरेव च सदसत्ख्यातिशब्देनापि साङ्ख्यसूत्रे उच्यते। पूर्वोक्तविधया सदसत्त्वान्यतरधर्ममात्रेण निर्धार्य वक्तुमशक्यत्वरूपानिर्वचनीयत्ववतो धर्मिणः ख्यातेरेव सदसत्ख्यातिशब्दबोध्यत्वात्। साङ्ख्यसूत्रे अनिर्वचनीयख्यातिखण्डनं तु सदसद्विलक्षणं वस्तु भ्रमस्थले उत्पद्यत इति वादिनां मतनिरासतात्पर्येणैव' इत्यादिवाक्यकदम्बैः॥

तत सर्वं नागेशस्य, स्वीयस्य सर्वसिद्धान्तसङ्करकारिविज्ञानभिक्ष्वादिग्रन्थपरिचयस्य, नव्यं मतं किंचित्प्रदर्शनीयं तस्य भगवत्पादानां भाष्यादिग्रन्थेष्वपि आरूढत्वं सम्पादनीयमिति स्वीयदुरभिनिवेशस्य च महिम्नः फलमिति मन्यन्ते सम्प्रदायतः भगवत्पादभाष्यादिग्रन्थसंसेविनः भगवत्पादभाष्यटीकादिपरश्शताद्वैतनिबन्धपरिशीलकाश्च विद्वांसः। सदसद्विलक्षणं मायामयं जगत् अनिर्वचनीयं पारमार्थिकोत्पत्त्याद्यभावेऽपि व्यवहारतः प्रतिभासतश्च उत्पत्तिविनाशादियुतं अतुच्छं इत्यादिकं भाष्यादिग्रन्थप्रमाणप्रदर्शनेन पूर्वमेव निरूपितम्। 'ऋतेऽर्थं यत्प्रतीयेत' इति भागवतवचनं 'पृथ्व्यादि चित्तस्थं न बहिस्स्थं कदाचन' इति कौर्मवचनं अन्यच्च एवंजातीयकं वचनं जगतः परमार्थत्वमात्रनिषेधपरम्; न तु जगतः तुच्छत्वप्रतिपादनपरं इति बोध्यम्॥

'नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी॥'

इति नागेशप्रदर्शितबृहन्नारदीयवचनमपि जगतः सदसद्विलक्षणत्वमेव बोधयति। तदेव च अनिर्वाच्यपदेन मिथ्याभूता इति पदेन च प्रत्याय्यते। 'तर्हि किमुभयविलक्षणा?। नेत्याह—मिथ्याभूतेति' इति नागेशव्याख्या अपव्या-

ख्या, मिथ्याभूता इति पदेन उभयविलक्षणत्वनिषेधाप्रतीतेः। भगवत्पादभाष्यवाक्यानामपार्थकल्पनं च नागेशीयं सर्वं प्रागेव निरस्तम्। 'अविद्याकल्पिते नामरूपे' इति भाष्ये अविद्याकल्पितत्वं सदसद्विलक्षणत्वरूपानिर्वाच्यत्वम्, न तु असत्त्वमिति बोध्यम्॥

वाचस्पतिमिश्रैरपि अनिर्वचनीयस्य सदसद्विलक्षणत्वमेवाध्यासभाष्यटीकायामुक्तम्। तद्ग्रन्थार्थकथनसन्दर्भे नागेशस्य 'अनृत'मिति पदस्य टीकाकाराशयविरोधेन असदित्यर्थकथनं अनुपपन्नम्। अनिर्वचनीयस्यासद्विलक्षणत्वात्। टीकाकारेण असत्त्वानभ्युपगमाच्च। टीकायां—देहेन्द्रियादिप्रपञ्चस्य व्यावहारिकस्य अप्रातिभासिकस्य अत एव अज्ञातसत्ताविशिष्टस्य अपूर्वत्वं ज्ञानात्पूर्वमविद्यमानत्वरूपं वक्तुमशक्यम्, अत एव पूर्वमिथ्याप्रत्ययोपदर्शितत्वस्यैव सम्भवेन 'पूर्वमिथ्याप्रत्ययोपदर्शित इवे'त्युक्तिरपि न युज्यते। प्रातिभासिकस्य तु प्रतिभासकाले अभिनवतया उत्पद्यमानस्य अपूर्वत्वम्; अत एव पूर्वमिथ्याप्रत्ययानुपदर्शितस्य तस्य 'पूर्वमिथ्याप्रत्ययोपदर्शित इवे'ति कथनं च युज्येत; इति आक्षेपो भवितुमर्हति टीकाग्रन्थे। तस्य समाधानमुच्यते—'देहेन्द्रियादिप्रपञ्चः अनिर्वाच्यः अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव' इति टीकावाक्यस्यायमर्थः—अपूर्वोऽपि—वस्तुसत्त्वेन पूर्वमविद्यमानोऽपि। पूर्वमिथ्याप्रत्ययोपदर्शित इव–पूर्वमिथ्याप्रत्ययेत्यत्र मिथ्यापदं स्वरूपकीर्तनमात्रम्। पूर्वप्रत्यये वस्तुसत्त्वेन प्रदर्शित इव। न तु देहेन्द्रियादिः प्रपञ्चः परमार्थतः पूर्वं आसीत्। नापि पूर्वप्रत्ययेन पारमार्थिकस्स उपदर्शितः। अपि तु—व्यावहारिक एव पूर्वमासीत् पूर्वतनेन वस्तुतो मिथ्याभूतेन प्रत्ययेनापि व्यावहारिक एव स प्रदर्शितः इत्यर्थः। दृष्टिसृष्टिपक्षाभिप्राये तु न कोऽपि क्लेशः॥

अत्र 'सदसद्विलक्षणत्वस्य अनिर्वाच्यत्वपदार्थत्वे तदुत्पत्त्यङ्गीकारे च अपूर्व इत्युक्त्यसङ्गतिः; अत्र एवकाराधिक्यं च' इति नागेशग्रन्थे 'अत्र इवकाराधिक्यं च' इति शोधनीयः पाठः। तद्ग्रन्थभावः एवम्—देहेन्द्रियादिप्रपञ्चः वस्तुतः असन् अत एव नोत्पद्यते। प्रतीतिमात्रं तस्य, विषयो नास्ति, इति स्वमते देहेन्द्रियादिप्रपञ्चः पूर्वमभावात् अपूर्वः इति, पूर्वमिथ्याप्रत्ययेनापि अर्थशून्येन प्रदर्शितत्वात् प्रदर्शितार्थस्य ज्ञानातिरिक्तस्याभावात् पूर्वमिथ्याप्रत्ययोपदर्शित इव इति च वक्तुं युज्यते। अनिर्वाच्योत्पत्तिवादिनां भवतां मते

देहेन्द्रियादेः व्यावहारिकस्य पूर्वमेवोत्पन्नस्य अपूर्वत्वं न युज्यते वक्तुम्। पूर्वमिथ्याप्रत्ययोपदर्शितस्य सतः तस्य पूर्वमिथ्याप्रत्ययोपदर्शित इवेति वक्तुमनुचितत्वेन इवकाराधिक्यं च' इति। तस्याक्षेपस्य समाधानमुक्तमेव। 'चिदात्मा तु सत्त्वेनैव निर्वाच्यः' इति टीकाया भावः एवम्—चिदात्मा सत्त्वेनैव निर्वाच्यः सन्, नासत्त्वेन निर्वाच्यः शशशृङ्गादिवत् असन्, नापि सदसत्त्वाभ्यामनिर्वाच्यः प्रपञ्चवत् सदसद्विलक्षणः इति। 'चिदात्मन्यध्यस्यते इत्येव टीकायामुक्तम्; न तु उत्पद्यते इति, अतः अनिर्वचनीयपदार्थोत्पत्तिः न टीकाकारसम्मता' इति नागेशोक्तं न सम्यक्। टीकाकारैरेव अन्यत्र तदुत्पत्तेः कथितत्वात्। सन्ध्याधिकरणे भामत्यां—'ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागतयोरुभयोरपि सर्गयोर्मायामयत्वम्' इत्यादिना अनिर्वाच्यपदार्थोत्पत्तेः अभ्युपगमात्। अत एव सर्गयोरित्युक्तम् ॥

यच्चोक्तम्—'अनिर्वचनीयोत्पत्तिवादिभिरपि स्वसमानाधिकरणस्यावच्छिन्नवृत्तिकान्यात्यन्ताभावस्य प्रतियोगित्वरूपं मिथ्यात्वं वदद्भिः स्वीकृतमेव वस्तुनोऽसत्त्वम्। अन्यथा अभावपदे विरोध्यर्थत्वान्नञः प्रतियोगिसामानाधिकरण्यं तस्य वक्तुमशक्यम्, प्रतियोग्यसामानाधिकरण्यस्यैव तत्र विरोधपदार्थत्वात्। मम तु स्वप्रतिभाससमानाधिकरणेत्याद्युक्तमेव भ्रमविषयत्वं मिथ्यात्वम्' इति ॥

तस्यायमाशयः—पूर्वोक्तमिथ्यात्वलक्षणे अभावपदघटकस्य नञः विरोध्यर्थकत्वात् तत्र स्वपदबोध्यमिथ्यात्वाभिमतप्रतियोगिसामानाधिकरण्यं न सम्भवति, अतः स्वसमानाधिकरणपदस्य स्वाश्रयत्वेनाभिमतवृत्त्यर्थकत्वं वाच्यम्, तथा च स्वाश्रयत्वेनाभिमतस्यापि वस्तुतः स्वाश्रयत्वाभावात् तत्र स्वाभावो भवितुमर्हति। एवं च मिथ्यात्वेनाभिमतस्यानिर्वचनीयस्य स्वविरोध्यभावाधिकरणे वृत्तिमत्त्वाभावेन असत्त्वमेव स्वीकार्यमापतति इति ॥

तत्रोच्यते—समासरूपे अभावपदे नञस्सत्त्वेऽपि न तस्य विरोधबोधकत्वमिष्यते, किं तु असमस्तनञ एव विरोधबोधकत्वम्। अत एव, 'भूतले घटोऽस्ति न वा' इति संशयनिवृत्तये 'भूतले घटाभावोऽस्ति' इति न प्रयुज्यते; किं तु 'भूतले घटो नास्तीति' इति लघुचन्द्रिकायां गुणगुण्यादिभेदाभेदविचारे निरूपितम्। अभावपदस्य विरोधबोधकत्वेऽपि प्रतियोगिसामानाधि-

करण्यमभावे सम्भवति। स्वरूपेण प्रपञ्चाधिकरणे पारमार्थिकत्वेन व्यधिकरणधर्मेण प्रपञ्चाभावसम्भवात्। स्वरूपेण तदभावस्यैव तदधिकरणे विरोधात्। स्वरूपेण प्रपञ्चनिषेधाभ्युपगमपक्षेऽपि व्यावहारिकप्रपञ्चाधिकरणे पारमार्थिकस्य ब्रह्मरूपस्य प्रपञ्चाभावस्य सम्भवः; समानसत्ताकयोरेव भावाभावयोर्विरोधात्। एकाधिकरणकस्वाप्नगजतदभावदृष्टान्तेन व्यावहारिकयोरेव प्रपञ्चतदभावयोः ब्रह्मण्यभ्युपगमपक्षेऽपि लोकसिद्धाभावीयदैशिकविशेषणतासम्बन्धेन अभावाधिकरण एव प्रतियोगिनो वृत्तिमत्त्वं न सम्भवति। शास्त्रसिद्धाभावीयदैशिकविशेषणतासम्बन्धेन अभावाधिकरणे प्रतियोगिनो वृत्तौ न किमपि बाधकम्। मिथ्यात्वानुमानानुगृहीतश्रुतिप्रमाणेन ब्रह्मणि प्रपञ्चाभावस्य बोधनेऽपि प्रत्यक्षादिप्रमाणैः प्रपञ्चाभावानवगाहिभिः असद्व्यावृत्तप्रपञ्चस्वरूपोपलम्भेन तदधिकरणताया अविरोधात्॥

मिथ्यात्वघटकाभावः प्रतियोगिसमानाधिकरणः तदविरोधी विरोधबोधकाभावपदेन कथं निर्देशमर्हति इति चेत्, तस्य पारमार्थिकत्वेन प्रपञ्चनिषेधपक्षे पारमार्थिकतया प्रपञ्चाधिकरणत्वविरोधित्वात्, स्वरूपेण प्रपञ्चनिषेधपक्षेऽपि पारमार्थिकः प्रपञ्चाभावः प्रपञ्चभिन्नसत्ताकः इति स्वीकारे पारमार्थिकप्रपञ्चाधिकरणत्वविरोधित्वात्, व्यावहारिकः मिथ्यात्वघटकाभावः प्रपञ्चसमानसत्ताकः: इति पक्षे शास्त्रसिद्धविशेषणतया विद्यमानस्य तस्य प्रपञ्चाधिकरणत्वाविरोधेऽपि तस्यैव लोकसिद्धविशेषणतया विद्यमानत्वे प्रपञ्चाधिकरणत्वविरोधसम्भवात् विरोधबोधकाभावपदेन कथञ्चिन्निर्देशः सम्भवतीति सन्तुष्यताम्। स्वाभावसामानाधिकरण्यमव्याप्यवृत्तित्वमिति अव्याप्यवृत्तित्वपरिष्कारे विरोधबोधकाभावपदस्य कथमन्यथा निर्वाहः इति चिन्त्यतां नागेशेन॥

यदप्युक्तम्—'देहादौ अहमित्यध्यासः शुद्धविषय एव, जडचेतनयोः विषयविषयिणोः अन्योन्यस्मिन् अन्योन्यात्मकतां अध्यस्य इति भाष्योक्तेः। न च अध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यत्वापत्तिः; अध्यासविषयस्य मिथ्यात्वमित्येव नियमात्। स च क्वचित् अध्यस्यमानस्य, क्वचिदधिष्ठानस्य तत्त्वेन उपपन्नः। यत्तु एतद्दोषभिया संसृष्टात्माध्यास इति कैश्चिदुक्तम्, तन्न—उक्तभाष्यास्वारस्यात्' इति। तत्र ब्रूमः—पञ्चपादिकायां हि—

'तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति' इति भाष्यविवरणावसरे — 'अस्मदर्थश्चाहं-प्रत्ययिसम्भिन्न एव अनिदञ्चिदंशो विषयः, न पुनः शुद्ध एव अहंप्रत्ययिन इवाध्यासे अध्यासान्तरानास्कन्दितः' इत्युक्तम्। तत्र विवरणे—'अत्र उत्तरोत्तराध्यासविशिष्टे पूर्वपूर्वाध्यासः इति कथयितुं आत्मन्यध्यस्यतीत्यात्म-शब्दार्थमाह—अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न इति' इति व्याख्यातम्। 'अहं-प्रत्ययिसम्भिन्नः—अहङ्काराध्यासोपहित इत्यर्थः। विषयः—अधिष्ठानमित्यर्थः। अविद्योपहिते अहङ्काराध्यासात् कार्याध्यासानुपहितत्वमत्र शुद्धत्वमभिप्रेतम्' इति प्रबोधपरिशोधिन्यां पञ्चपादिका विवृता। विवरणे—'तं च प्रत्यगात्मान-मित्यात्मनः अन्तःकरणादिष्वध्यासो दर्शितः; तदयुक्तम्—इतरेतराध्यासे द्वयोरध्यस्यमानत्वात् मिथ्यात्वापातात्' इत्याशङ्क्य 'न च द्वयोरपि मिथ्या-त्वापातः, चेतनस्याचेतने स्वरूपाध्यासाभावात् संसृष्टतयैवाध्यासात्' इति समाहितम्। नागेशः पूर्वोक्तपञ्चपादिकाविवरणकारयोरुभयोरपि मतं खण्डयति पूर्वोक्तवचनेन ॥

अत्रोच्यते—भगवत्पादाः बृहदारण्यकोपनिषद्भाष्ये ज्योतिर्ब्राह्मण-विवरणावसरे एवमाहुः—'यथा मरकतादिर्मणिः क्षीरादिद्रव्ये प्रक्षिप्तः परी-क्षणाय आत्मच्छायमेव तत् क्षीरादिद्रव्यं करोति तादृगेतदात्मज्योतिः बुद्धेरपि हृदयात् सूक्ष्मत्वात् हृद्यन्तस्स्थमपि हृदयादिकं कार्यकरणसङ्घातं च एकीकृत्य आत्मज्योतिश्छायं करोति। पारम्पर्येण सूक्ष्मस्थूलतारतम्यात् सर्वान्तरतमत्वात्। बुद्धिस्तावत् स्वच्छत्वादानन्तर्याच्च आत्मचैतन्यज्योतिःप्रतिच्छाया भवति। तेन हि विवेकिनामपि तत्रात्माभिमानबुद्धिः प्रथमा। ततोऽप्यानन्तर्यात् मनसि चैतन्यावभासता बुद्धिसम्पर्कात्। तत इन्द्रियेषु मनस्संयोगात्। ततोऽनन्तरं शरीरे इन्द्रियसम्पर्कात्। एवं पारम्पर्येण कृत्स्नं कार्यकरणसङ्घातं आत्मा चैतन्यस्वरूपज्योतिषा अवभासयति। तेन हि सर्वस्य लोकस्य कार्यकरणसङ्घाते तद्वृत्तिषु च अनियता आत्माभिमानबुद्धिर्यथाविवेकं जायते।' इति। अत्र 'बुद्धिसंपर्कात्' इत्यादिभिः उत्तरोत्तरं अध्यासः पूर्वपूर्वाध्यासोपहिते इति सूच्यते ॥

वार्तिकेऽपि निरूपितमिदम्—

आत्मच्छायं पयोऽशेषं यथा मारकतो मणिः ।
परीक्षणाय प्रक्षिप्तः कुर्यादात्मा तथैव च ॥ (4-3-346)

बुद्ध्यादिदेहपर्यन्तं प्रत्यगज्ञानहेतुकम् ।
जडस्वभावकं नित्यमवभासयति स्वयम् ॥ (3-4-347)

बुद्ध्यादिष्वपि सूक्ष्मेषु यत् सूक्ष्मतममुच्यते ।
बुद्ध्यादिकारणं नित्यमात्माविद्येति भण्यते ॥ (4-3-348)

तदात्मज्योतिषेद्धं सत् नित्यमेवावतिष्ठते ।
स्वकारणाभिसम्बन्धात् चैतन्याभासता धियः ।
जायतेऽतोऽभिमानोऽस्यां जायते महतामपि ॥ (4-3-357)

कारणानन्तरत्वाच्च तथा स्वच्छस्वभावतः ।
चैतन्याभासवत्येषा धीः पूर्वमभिजायते ॥ (4-3-358)

तस्मादात्माभिमानो हि बुद्धौ जनिमतां सदा ।
जायते सर्वभूतानामपि सर्वविदामिह ॥ (4-3-359)

चिदाभासोऽथ मनसि बुद्ध्यानन्तर्यकारणात् ।
मनस्सम्बन्धतश्चैवमिन्द्रियेष्वभिजायते ॥ (4-3-360)

मनःकरणसम्बन्धात् देहेऽप्यस्योपजायते ।
एवमाभासयत्यात्मा कृत्स्नं कार्यं सकारणम् ॥ (4-3-361)

सौक्ष्म्यस्य तारतम्येन स्थितस्य विषयावधि ।
आत्माभिमानधीः पुंसां जायतेऽनियता ततः ॥ (84-3-362) इति ॥

वार्तिकसारे च स्फुटीकृतमिदम्—

ज्योतिरात्मचितिच्छायं प्रथमं कुरुते तमः ।
तमोयोगेन धीस्तद्वद्धीयोगादिन्द्रियं तथा ॥

अक्षयोगात्तथा देहः एवमेते चिदात्मवत् ।
भासन्ते तेष्वतः पुंसां प्रत्यगात्मत्वविभ्रमः ॥ इति ॥

तस्मात् भगवत्पादाशयविदां पञ्चपादिकाचार्याणां अविद्याध्यासव्यतिरिक्ताध्यासाः पूर्वपूर्वाध्यासोपहितात्माधिष्ठानाः न शुद्धाधिष्ठाना इत्युक्तिः समीचीनैव ॥

अध्यस्तमेव हि परिस्फुरति भ्रमेषु
नान्यत् कथञ्चन परिस्फुरति भ्रमेषु ।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-
चन्द्रैकताप्रभृतिकानुपलम्भनेन ॥ (1-36)

इति सङ्क्षेपशारीरके स्वरूपेण संसृष्टतया वा अध्यस्तमेव भ्रमविषय इति भगवत्पादाशयः प्रकाशितः । अतः संसृष्टात्माध्यासवर्णनं विवरणाचार्याणां युक्तमेव । एवं च नागेशभट्टप्रदर्शिता दोषकणिकापि पञ्चपादिकाविवरणादिसम्मते मूलाविद्यास्वरूपे अनिर्वचनीयख्यातौ च न लगति नाप्यपरे दोषा उत्प्रेक्षितुमपि शक्यन्ते इति विद्वांसो विजानन्तु ॥

एवं लघुमञ्जूषायां नागेशभट्टेन मूलाविद्यायां अनिर्वचनीयख्यातौ च उद्भाविता दोषाः सर्वेऽपि निष्कासिताः । आधुनिकैः पण्डितैः श्रीयुतसुब्रह्मण्यशर्मभिः त्रिंशद्वत्सरेभ्यः पूर्वं बङ्गलूरुनगरे अध्यात्मप्रकाशकार्यालयद्वारा मुद्राप्य प्रकाशिते शङ्करहृदयापरनाम्नि मूलाविद्यानिरासग्रन्थे, तैरेव तुरीयाश्रमस्वीकारानन्तरं श्रीसच्चिदानन्देन्द्रसरस्वती इति नाम्ना विख्यातैः प्रणीते वत्सरत्रयात् पूर्वं अध्यात्मप्रकाशकार्यालयद्वारा प्रकाशिते सुगमाभिधे अध्यासभाष्यव्याख्याग्रन्थे च नागेशभट्टोत्थापिता एव मूलाविद्यास्वरूपनिरासयुक्तयः अनिर्वचनीयपदार्थोत्पत्तिवादनिरासयुक्तयश्च प्रायशः प्रकाशिताः । ताश्च नागेशभट्टोक्ततया संकीर्तनं विनैव स्वयमभ्यूहितत्वेनैव निर्दिष्टाः । प्राचीनाचार्यपरम्पराप्रवर्तितसम्प्रदायविरुद्धः स्वाभिप्राय एव भगवत्पादानां सुरेश्वराचार्याणां च सम्मत इत्यपि उद्घुष्टम् । पञ्चपादिकाकाराणां मूलाविद्यायाः अनिर्वचनीयपदार्थोत्पत्तेश्चाङ्गीकर्तॄणां मतं साग्रहं निरस्तम् । 'तद्व्याख्यानं निष्प्रयोजनं भाष्याक्षरबाह्यं युक्तिबाह्यं चेति श्रेयस्कामैरुपेक्ष्य' मिति निन्दितम् । विवरणभामतीप्रस्थानानन्दगिरीयप्रभृतयः पूर्वाचार्यग्रन्था अपि साग्रहं निराकृताः । एतादृशमूलाविद्यानिराससुगमाख्यग्रन्थद्वयमपि नागेशभट्टग्रन्थपर्यालोचनेनैव पर्यालोचितप्रायमिति कृत्वा पृथक् तत्पर्यालोचने तन्निरासे च न प्रयत्यते । पूर्वो-

पदर्शितभगवत्पादसुरेश्वराचार्यवचनैरेव मूलाविद्यायाः अनिर्वचनीयपदार्थोत्पत्तेश्च भगवत्पादसम्मतत्वे सिद्धे तन्निराकर्तॄणां सर्वेषामपि भगवत्पादमतबाह्यत्वात् भगवत्पादमतजिज्ञासुभिः श्रेयस्कामैस्तदीया ग्रन्था उपेक्ष्या इति विभावनीयं विद्वद्भिः। इदमाश्चर्यम्–यत्–'अविद्या प्रथते मौली' (1-2-136) इति वार्तिके स्पष्टमेव मूलाविद्या अभ्युपगता। मूलाविद्यानिरासकारः स्वग्रन्थनाम्नैव स्वयं सुरेश्वरवार्तिकखण्डक इति स्पष्टीकरोति स्वमात्मानम्, स्थिते चैवं, सुरेश्वरवार्तिके मूलाविद्या न प्रतिपादिता इति उद्घोषयति च। तदेतत् विमृशन्तु विद्वांसः। अलमतिविस्तरेण इत्येतावता उपरम्यते ॥

भगवत्पादीयब्रह्मसूत्रभाष्योपरि भगवत्पादाशयप्रकाशकविस्तृतव्याख्यारूपं पञ्चपादिकाविवरणप्रस्थानं भामतीप्रस्थानं इति प्रस्थानद्वयं जगतीतले सुप्रसिद्धम्। भाष्यव्याख्यान्तराणि सर्वाणि प्रायशः एतत्प्रस्थानद्वयानुरोधीन्येव। तत्रापि विवरणप्रस्थानानुरोधीन्येव बाहुल्येन व्याख्यान्तराणि। पञ्चपादिकायां निगूढतया विद्यमानानां अद्वैतसिद्धान्तासाधारणप्रमेयविशेषाणां बहूनां विवरण एव स्पष्टं प्रकाशनात् पञ्चपादिकानामापि विहाय विवरणप्रस्थानमित्येव प्रसिद्धिः समजनि ॥

तत्र पञ्चपादिकाया विवरणातिरिक्तान्यपि व्याख्यानानि सन्ति। तानि च प्रायशः विवरणानुरोधीन्येव। तत्र च व्याख्याद्वयमत्र प्रकाशितं प्रथमभागे **प्रबोधपरिशोधिनी तात्पर्यार्थद्योतिनी** चेति। तत्र **आत्मस्वरूप**विरचितप्रबोधपरिशोधिन्यां सामग्र्येण पञ्चपादिकाव्याख्यारूपायां विवरणोदीरितेन पथा सुष्ठु पञ्चपादिकाभावः प्रकाशितः। अपरा तात्पर्यार्थद्योतिनी **श्रीविज्ञानात्म**प्रणीता सङ्क्षिप्ता, अथापि बह्वर्थवहा पञ्चपादिकायाः सामग्र्येण व्याख्यानमकृत्वा स्थलविशेषेषु परं निगूढाभिप्रायोद्घाटिनी बहु उपकरोति। विज्ञानात्मनः ज्ञानोत्तमपूज्यपादा गुरव इति ग्रन्थ एवोक्तम्। चित्सुखाचार्याणामपि त एव गुरवः, अतः विज्ञानात्मा चित्सुखाचार्यसतीर्थ्य इति स्फुटम्। पञ्चपादिकायाः अन्या अपि टीकाः (१) नृसिंहाश्रमकृता (२) अज्ञातकर्तृका आदिभागे लुप्ता; परं तु ईक्षत्यधिकरणेऽपि कियद्भागपर्यन्ता असमग्रा (३) विज्ञानवासयतिकृता कण्ठीरवनाम्नी इत्येताः मद्रनगरस्थराजकीयप्राच्यकोशसंरक्षणशालायां उपलभ्यन्ते ॥

**प्रकाशात्म**भगवत्प्रणीतस्य **पञ्चपादिकाविवरणस्य** ग्रन्थरत्नस्य व्याख्याद्वयमत्र प्रकाशितं द्वितीयभागे **तात्पर्यदीपिका भावप्रकाशिका** चेति। तत्र **चित्सुख**प्रणीता तात्पर्यदीपिका विवरणस्य समग्रव्याख्या प्रायशः प्रतिवाक्यं विवरणप्रमेयं सम्यक् प्रकाशयति लालित्येन । चित्सुखाचार्याश्च प्राचीनाः अद्वैते स्वातन्त्र्येण व्याख्यारूपतया च बहुग्रन्थकर्तारः सुप्रसिद्धाः । अपरा भावप्रकाशिका **नृसिंहाश्रम**प्रणीता अतिगभीरा विस्तृता बहुप्रमेयबोधिनी तत्तत्स्थलविशेषेषु विवरणनिगूढार्थप्रकाशिका बहु उपकरोति । परं तु तस्मिन् ग्रन्थे मध्ये मध्ये बहुत्र भागाः त्रुटिताः कोशे । प्रथमवर्णके कोशन्तरसहायेन त्रुटितभागाः प्रायशः यथामति पूरिताः। द्वितीयवर्णकादिषु कोशान्तरालाभात् त्रुटितभागपूरणं दुश्शकं संवृत्तम्। पाठकमहाशयैः कोशागारेषु अन्विष्य तत्तत्त्रुटितभागपूरणं स्वयं कृत्वा परेषामपि निवेदितं चेत् महते उपकाराय भवेदिति सविनयमावेद्यते । नृसिंहाश्रमश्रीचरणाश्च आश्रमस्वामिन इति लघुचन्द्रिकादिषु कृतनिर्देशाः अद्वैते स्वतन्त्रतया व्याख्यारूपेण च बहुग्रन्थकर्तारः अपरिमितशिष्याणामुपदेष्टारः अप्पय्यदीक्षितेभ्यः पूर्वकालिकाः द्वैतमतनिरासकानेकग्रन्थप्रणेतारः सुप्रसिद्धा एव ॥

विवरणस्याप्यसङ्ख्या व्याख्याग्रन्थाः विद्यन्ते । तेषु प्रधानं तत्त्वदीपनं अखण्डानन्दमुनिप्रणीतं पञ्चपादिकाविवरणस्य साकल्येन स्पष्टं प्रतिवाक्यं तात्पर्यवर्णननिपुणं सुप्रसिद्धं पूर्वमेव मुद्रापितम् । ऋजुविवरणाभिधं चापरं विवरणव्याख्यानं सर्वज्ञविष्णुभट्टोपाध्यायप्रणीतं कृतमुद्रणम् । अन्यदपि विवरणव्याख्यानं टीकारत्नाभिधं आनन्दपूर्णकृतम्, पञ्चपादिकाविवरणोज्जीविनी यज्ञेश्वरदीक्षितकृता, इत्येतत् ग्रन्थद्वयं मद्रनगरस्थराजकीयप्राच्यकोशसंरक्षणशालायामेव उपलभ्यते । विवरणप्रमेयसङ्ग्रहः श्रीविद्यारण्यप्रणीतः अत्युत्तमो ग्रन्थः विवरणतात्पर्यनिरूपणपरः स्वतन्त्रग्रन्थः कृतमुद्रणः । रामानन्दस्वामिप्रणीतः विवरणोपन्यासाभिधः अपरः ललितः स्वतन्त्रः ग्रन्थोऽपि कृतमुद्रणः ॥

यथा पञ्चपादिकाविवरणप्रस्थानं व्याख्योपव्याख्यापरम्परया विस्तृतं तथैव भामतीप्रस्थानमपि व्याख्योपव्याख्यापरम्परया विस्तृतमेव । तत्र भामती षड्दर्शिनीटीकाकृद्वाचस्पतिमिश्रप्रणीता समग्रसूत्रभाष्यव्याख्या प्रसिद्धा । तस्या व्याख्या कल्पतरुः अमलानन्दसरस्वतीप्रणीता । तद्व्याख्या परिमलः

अप्पय्यदीक्षितप्रणीतः ; एवं भामतीव्याख्यान्तराण्यपि सन्ति । तत्र कल्पतरुव्याख्या परिमलाद्भिन्ना आभोगनाम्नी लक्ष्मीनृसिंहप्रणीता आन्तं मुद्रिता मद्रनगरस्थराजकीयप्राच्यकोशागाराधिकारिभिः । तत्र च अस्माभिः टिप्पणमारचितम् । तत्र च मुद्रितभामतीकल्पतरुपरिमलग्रन्थस्थाः बह्व्यः अशुद्धयोऽवश्यज्ञातव्या अपि संसूचिताः । शुद्धपाठा अपि प्रदर्शिताः ॥

अथ भामतीविवरणप्रस्थानयोः उपेयभूतपारमार्थिकाद्वैतसिद्धान्तस्थापनैकपरमतात्पर्यवतोरपि तदुपायभूतव्यावहारिकप्रमेयविशेषे तात्पर्यभेदसत्त्वात् कस्मिन् कस्मिन्नंशे तात्पर्यभेदः प्रस्थानद्वयस्यापि इति स्पष्टप्रतिपत्त्यर्थं तात्पर्यभेदप्रदर्शकभामतीविवरणस्थलविशेषान् प्रदर्शयामः । अवान्तरप्रक्रियाभेदेऽपि परमलक्ष्यभेदाभावात् प्रस्थानद्वयस्य नाद्वैतसिद्धान्तस्य काचिदपि क्षतिः, तदुक्तं सूरेश्वराचार्यैः—

यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता ॥ इति ॥

## (1) कर्मणां विविदिषार्थत्वं विद्यार्थत्वमिति पक्षद्वयम् ॥

तत्र कर्मणां विविदिषार्थत्वं विद्यार्थत्वं इति पक्षभेदः भामतीविवरणप्रस्थानयोः । भामत्यां जिज्ञासाधिकरणे—'विविदिषन्ति यज्ञेन' इति तृतीयाश्रुत्या यज्ञादीनामङ्गत्वेन ब्रह्मज्ञाने विनियो(गात्)[गः]ज्ञानस्यैव कर्मतया इच्छां प्रति प्राधान्यात् प्रधानसम्बन्धाच्चाप्रधानानां पदार्थान्तराणाम्' इति पूर्वपक्षमुक्त्वा 'तमेतमात्मानं वेदानुवचनेन–नित्यस्वाध्यायेन ब्राह्मणा विविदिषन्ति—वेदितुमिच्छन्ति, न तु विदन्ति, वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्, इच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्रधानेन च कार्यसम्प्रत्ययात् । न हि 'राजपुरुषमानय' इत्युक्ते वस्तुतः प्रधानोऽपि राजा पुरुषविशेषणतया शब्दत उपसर्जनः आनीयते । अपि तु पुरुष एव, शब्दतस्तस्य प्राधान्यात्' इति सिद्धान्तितम् । सर्वापेक्षाधिकरणेऽपि (3-4-6) भामत्यां—'उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा 'विविदिषन्ति यज्ञेन' इति श्रुतेः' इत्युक्तम् । 'सर्वथापि च त एवोभयलिङ्गात्' (3-4-34) इत्येतत्सूत्रविवरणभामत्यामपि 'यज्ञादीनि विविदिषायां विनियुज्ञानो विधिः' इत्युक्तम् । तथा च यज्ञादीनां विविदिषार्थत्वपक्षः भामतीकाराभिप्रेतः ॥

विवरणकारास्तु प्रथमवर्णके (37-पु) 'अवान्तरवाक्यभेदेन 'विविदिषन्ति' इति यज्ञादीनां ज्ञानसंयोगविधानवत्' इति, तृतीयवर्णके (543-पु) 'सर्वाण्येव कर्माण्युत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकारविध्यन्तरवत् 'ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेत्' इत्यधिकारान्तरविधिविधेयानि भविष्यन्तीत्याह—'विविदिषन्ति यज्ञेन दानेन' इत्यादिना। कथम्?। आत्मतत्त्वापरोक्षानुभवस्तावत् इष्यमाणतया स्वर्गादिवत् भावनासाध्योऽवगम्यते। पुरुषार्थत्वात्। शाब्दज्ञाने तु सञ्जाते तत्कामनाऽयोगात् असञ्जाते विषयानवगमादेव तत्र कामनाऽयोगात् शब्दावगते अपरोक्षज्ञानमिष्यत इति युक्तम्। तच्च प्रयत्नान्तरसाध्यमिति पुरस्ताद्दर्शितम्। तत्र यज्ञादीनामिच्छोपसर्जनतया आख्याताभिहितभावनाकरणतयाऽवगतानां साध्येनैवान्वयात् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि। ततश्च आत्मानुभवकामो यज्ञादीन्यनुतिष्ठेदिति विधिः परिणम्यते। न चेच्छामात्रेण संयोगः, तस्या असाध्यमानतावगमात्। न च विविदिषन्तीति वर्तमानताविरोधः। लेट्परिग्रहेण विधेरेवावगमात्। न च नित्यकाम्याधिकारान्तरविरोधः; एकस्य कर्मणोऽनेकाधिकारविधिसम्बन्धावगमात्' इति, (554-पु) 'नन्वेवमपि ब्रह्मज्ञानं दृष्टप्रमाणसामग्रीजन्यत्वात् नादृष्टमपेक्षते, सति प्रमाणकारणे यज्ञाद्यभावात् ज्ञानोदयादर्शनाभावात्; नैतत्। दृष्टकारणक्लृप्तौ हि अन्वयव्यतिरेकप्रमाणान्तर्भूतत्वात् केवलव्यतिरेकस्य तदपेक्षा युज्यते, इह तु सुखस्य दृष्टकारणसम्पत्तौ केवलव्यतिरेकाभावेऽपि विधानादेव अदृष्टसापेक्षत्ववत् सम्यग्ज्ञानेऽपि विधानादेव अदृष्टसापेक्षत्वमुपपद्यते।' इति, 'यथा यागादिकर्मणां स्वर्गाद्युद्देशेन विहितानां तदुपपत्तये विधिसामर्थ्यादेव मध्यवर्त्यपूर्वाणि कल्प्यन्ते, एवमिहापि अन्तःकरणशुद्धिचित्तैकाग्र्यादिद्वारं कल्प्यताम्' इति, (546-पु) 'ननु विशुद्धिद्वारेण ज्ञानहेतुत्वे संस्कारविविदिषापक्षयोः को विवेकः?। उच्यते—श्रवणमननध्यानाभ्यासादिसहकारिकारणसम्पत्तावेव संस्कारो विज्ञानं साधयति, तदभावे सति अभ्युदयमेव। विविदिषायां तु—विज्ञानस्य कर्मफलत्वात् फलपर्यन्तं साधनानि सम्पाद्यापि विज्ञानं जनयन्तीति विशेषः' इति च ग्रन्थेन यज्ञादीनां विद्यार्थत्वपक्षं समर्थयन्ति ॥

विवरणाचार्यैरेव शारीरकन्यायसङ्ग्रहे सर्वापेक्षाधिकरणे—'यज्ञेन विविदिषन्ति' इति कर्मणां ज्ञानसाधनत्वं विधीयते' इत्युक्तम् ॥

## (2) ब्रह्मसाक्षात्कारकरणं मनः शब्द इति पक्षद्वयम् ॥

तथा ब्रह्मसाक्षात्कारः मनःकरणकः शब्दकरणकः इति पक्षभेदः प्रस्थानद्वये। तथा हि—भामत्यां जिज्ञासाधिकरणे—'न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दप्रमाणस्य फलम्; अपि तु प्रत्यक्षस्य। तस्यैव तत्फलत्वनियमात्। अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात्। तस्मात् निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम्' इति, 'तस्मात् यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्छनाभेदमध्यक्षमनुभवति, एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवः स्वस्य ब्रह्मभावमन्तःकरणेन।' इति, 'तस्यापि (विद्योदयस्यापि) श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात्' इत्यादिवाक्यैः ब्रह्मसाक्षात्कारः मनःकरणकः, न शब्दकरणक इति व्यवस्थापितम् ॥

'तस्माद्यथा गान्धर्वशास्त्रार्थे'त्यादिवाक्यं समानानुपूर्वीकमेव आवृत्त्यधिकरणेऽपि (4-1-1) भामत्यां दृश्यते ॥

विवरणे तु प्रथमवर्णके—(403-पु) 'लोके तावत् विषयस्यापरोक्षता संविदभेदाद्वा विषयस्याव्यवधानतया स्वसंविज्जनकत्वाद्वा प्रमाणकारणेन्द्रियसम्प्रयुक्तत्वाद्वा भवति। उक्तकारणत्रयहीने अनुमेयादौ परोक्षतादर्शनात्। तत्र ब्रह्मण एव सर्वसंविदुपादानत्वात् ब्रह्माकारशब्दप्रमाणजन्यसंवेदनेऽपि तदभिन्नतया वा तज्जनकतया वा ब्रह्मापि प्रथममेवापरोक्षतया अवभासते। तच्च चित्तस्यातिसूक्ष्मे अनेकाग्रतादोषात् विपर्ययसंस्कारदोषाच्च प्रतिबद्धं भ्रान्त्या परोक्षवदवभासते। तत्रापरोक्षज्ञानमुद्दिश्य यज्ञादीनां शमादीनां निदिध्यासनादीनां च विधानसामर्थ्यात् यज्ञादिनिबर्हितकल्मषप्रतिबन्धं शमादिनिरुद्धविपरीतप्रवृत्तिदोषं मननसन्दर्शितप्रमेयादिसम्भावनागुणप्रदीपोज्ज्वलितं अतिसूक्ष्मतरब्रह्मात्मविषयनिदिध्यासनप्रचयपरिनिर्मिततदेकाग्रवृत्तिगुणं चित्तेन्द्रियं पारोक्ष्यविभ्रमनिमित्तप्रतिबन्धनिरासेन शब्दादेव अपरोक्षनिश्चयनिमित्तं भवतीति गम्यते। लोके च अतिसूक्ष्मवस्तुनिर्धारणे चित्तैकाग्र्यविशेषापेक्षाया दर्शनात्।' 'एवं च 'तं त्वौपनिषदम्' इति तद्धितप्रत्ययेन ब्रह्मावगतिहेतुत्वं शब्दस्य दर्शितमुपपन्नं भवति। अपरोक्षावगतेरेव सम्यगवगति-

त्वादिति। अन्यन्मतम्—न प्रथमोत्पन्नं शाब्दज्ञानमेव प्रतिबन्धविगमापेक्षया अपरोक्षावभासं भवति, किं तु शब्द एव प्रथमं ब्रह्मणि परोक्षज्ञानमुत्पाद्य पुनः वर्णितचित्तदर्पणसहकारिकारणापेक्षया द्वितीयमपरोक्षज्ञानमुत्पादयति। शब्दादीनां तद्धितप्रत्ययादिना अपरोक्षज्ञाने विनियोगसामर्थ्यात्। यथा सम्प्रयोगोऽभिज्ञामुत्पाद्य पुनः पूर्वानुभवसंस्कारापेक्षया प्रत्यभिज्ञामुत्पादयति, तद्वत्। न च स्वयंप्रकाशे ब्रह्मणि परोक्षज्ञानं विभ्रमः। स्वयंप्रकाशेऽपि पुरुषान्तरसंवेदने परोक्षानुमानदर्शनादिति।' इति ॥

द्वितीयवर्णके-(452-पु) 'ननु 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति ध्यानमपरोक्षफलं श्रूयते। सत्यम्। एकत्र चित्तस्य समवधानता तदैकाग्र्यनिमित्तं भवति। तदेकाग्रचेतसा सहकारिणा शब्द एव 'औपनिषदम्' इति तद्धितप्रत्ययसामर्थ्यात् अपरोक्षज्ञानमुत्पादयति। ध्यायमानो ज्ञानप्रसादेन पश्यतीति वाक्यस्यान्वयात्। चित्तैकाग्र्यस्य सूक्ष्मवस्तुदर्शननिमित्तत्वात्' इति च वाक्यैः ब्रह्मसाक्षात्कारः वेदान्तवाक्यरूपशब्दकरणक इति व्यवस्थापयन्ति ॥

विवरणाचार्यैरेव शारीरकन्यायसङ्ग्रहे सर्वापेक्षाधिकरणे—'तं त्वौपनिषदम्' इति च वेदान्तानामपरोक्षब्रह्मावगतिसाधनत्वं तद्धितप्रत्ययेनोक्तम्।' 'तत्र परोक्षज्ञानहेतुरपि शब्दः कर्मादिपरिमार्जितप्रत्यक्प्रवणेन शमादिनिरुद्धविपरीतप्रवृत्तिप्रतिबन्धकेन प्रत्ययाभ्यासजनितसंस्कारप्रचयनिमित्तब्रह्मैकाग्रवृत्तिचित्तदर्पणेन सहकारिणा अनुगृहीतः अपरोक्षज्ञानमुत्पादयति शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण इव होमोऽपूर्वमिति। अथ वा, शब्दादेव प्रथममपरोक्षज्ञानमुत्पद्यते, शब्दजन्यसंवेदनस्य ब्रह्मप्रकृतितया अभेदात्। संवेदनस्य विषयजन्यतया तदभेद एव लोकेऽप्यपरोक्षज्ञानता नामेति। ततश्च भ्रान्त्या परोक्षवदवभासमाने प्रथमज्ञाने वर्णितचित्तदर्पणसामर्थ्यादेव देहाद्यध्यासात् विविक्ते त्वंपदार्थे प्रत्यक्षतोऽवभासमाने तत्पदार्थे च चेतसि सम्यगवधृते पारोक्ष्यभ्रमनिमित्तस्याध्यासस्य निवृत्तेः तदेव वाक्यार्थविषयं शाब्दज्ञानं अपरोक्षावभासमवतिष्ठत इति'। इति अयमेवार्थः उक्तः ॥

विवरणाचार्यैरेव प्रणीते शब्दनिर्णयाभिधे ग्रन्थेऽपि अवसाने अयमर्थ उक्तः—'तच्चापरोक्षज्ञानं शब्दादेवेत्याह—

विषयोत्पन्नतः संविदैक्याद्वाऽज्ञानहानतः ।
स्वतस्सिद्धेरतश्शब्दादापरोक्ष्यं प्रजायते ॥ (71)

लोकेऽपि संवेदनस्य विषयोत्पन्नत्वाद्वा, विषयस्य संविदैक्याद्वा, विषयस्य चेतनप्रकृतिकतया स्वयमेव चैतन्येनाभिन्नस्य आवरणध्वंसाद्वा आपरोक्ष्यम्, तन्निमित्तं ज्ञानमपरोक्षज्ञानमित्युच्यते । न ज्ञानस्य स्वतोऽपरोक्षतामात्रात् । नापि तज्जन्यसंवेदनस्य । एवं ब्रह्मण्यपि शब्दज्ञाननिमित्तं संवेदनं ब्रह्मप्रकृतिकं ब्रह्माभिन्नमिति सर्वचैतन्यानां ब्रह्मप्रकृतिकत्वाद्वा स्वयंप्रकाशस्यावरणध्वंसाद्वा अपरोक्षे आत्मनि प्रत्ययत्वाद्वा अहंप्रत्ययवत् । तन्निमित्तं ज्ञानमपरोक्षज्ञानमित्युच्यते । संजातेऽपि शब्दात् तथाविधे विज्ञाने असम्भावनादिदोषात् अविद्यासंस्कारबलाद्वा परोक्षमिव विभ्रमादवभासते ।' इत्यादि ॥

## (3) श्रवणादौ विधिर्नास्ति अस्ति इति पक्षद्वयं प्रस्थानद्वये ॥

भामत्यां समन्वयाधिकरणे (1-1-4) 'ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावात्, अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव सम्भवात्, उपासनायाः संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनस्साचिव्यस्य च मानान्तरसिद्धत्वात् 'आत्मेत्येवोपासीते'ति न विधिः । अपि तु विधिसरूपोऽयम्' इति, 'अन्यतः प्राप्ता एव हि श्रवणादयः विधिसरूपैर्वाक्यैरनूद्यन्ते । न च अनुवादोऽप्यप्रयोजनः ; प्रवृत्तिविशेषकरत्वात् । तथा हि— तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति । आत्मश्रवणादिविधिसरूपैस्तु वचनैः मनसः विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोतः उद्घाट्यत इति प्रवृत्तिविशेषकरता अनुवादानामस्तीति' इति, 'मननिदिध्यासनयोरपि न विधिः । तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोः विधिसरूपैर्वचनैरनुवादात्' इति च श्रवणादौ विध्यभाव उक्तः ॥

यद्यपि वाक्यान्वयाधिकरणे (1-4-6) भामत्याम्—'आत्मैव द्रष्टव्यः— साक्षात्कर्तव्यः। एतत्साधनानि च श्रवणादीनि विहितानि 'श्रोतव्यः' इत्यादिना' इत्युक्त्या श्रवणादीनां विधिरङ्गीकृत इव भाति, तथापि कल्पतरौ—'विहितानि— विधिवन्निगदैर्बोधितानीत्यर्थः' इति व्याख्यानात् न विरोधः । उभयलिङ्गाधिकरणे (3-2-5) भामत्याम्—'न च चिन्तासाक्षात्कारयोर्विधिरिति

तत्त्वसमीक्षायामस्माभिरुपपादितम्। विस्तरेण चायमर्थः तत्रैव प्रपञ्चितः' इति ध्यानादौ विध्याभाव उक्तः। सर्वापेक्षाधिकरणे (3-4-6) श्रवणादिस्वरूपमुपवर्णितम्---'चतस्रः प्रतिपत्तयो ब्रह्मणि। प्रथमा तावत्—उपनिषद्वाक्यश्रवणमात्रात् भवति; यां किलाचक्षते श्रवणमिति। द्वितीया—मीमांसासहितात् तस्मादेवोपनिषद्वाक्यात्; यामाचक्षते मननमिति। तृतीया—चिन्तासन्ततिमयी; यामाचक्षते निदिध्यासनमिति। चतुर्थी साक्षात्कारवती वृत्तिरूपा। नान्तरीयकं हि तस्याः कैवल्यमिति। तत्राद्ये तावत्प्रतिपत्ती विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंसः उपपद्येते। ते एव च चिन्तासन्ततिमयीं तृतीयां प्रतिपत्तिं प्रसुवाते। सा च आदरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्ते प्रतिपत्तिं चतुर्थीम्। तन्नान्तरीयकं च कैवल्यम्' इति। आश्रमकर्माधिकरणे (3-4-8) भामत्यामुक्तम्—'चतसृणामपि च प्रतिपत्तीनां ब्रह्मणि विधानानुपपत्तेरित्युक्तं प्रथमसूत्रे। 'द्रष्टव्यो' 'निदिध्यासितव्य' इति च विधिसरूपं न विधिरित्यप्युक्तम्।' इति। जिज्ञासासूत्रे भामत्यामेवमुक्तम्---'न तावत् ब्रह्मसाक्षात्कारे पुरुषो नियोक्तव्यः। तस्य ब्रह्मस्वाभाव्येन नित्यत्वादकार्यत्वात्। नाप्युपासनायाम्; तस्या अपि ज्ञानप्रकर्षे हेतुभावस्य अन्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वात्। नापि शाब्दबोधे; तस्याप्यधीतवेदस्य पुरुषस्य विदितपदतदर्थस्य समधिगतशाब्दन्यायतत्त्वस्य अप्रत्यूहमुत्पत्तेः' इति। आवृत्त्यधिकरणेऽपि (4-I-1) भामत्याम्—'अन्वयव्यतिरेकाभ्यां च श्रवणमनननिदिध्यासनाभ्यासस्य स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात्' इत्युक्तम्॥

एवं सर्वत्र प्रदेशेषु श्रवणादौ विधिं निराकुर्वन्नपि वाचस्पतिः सहकार्यन्तरविध्यधिकरणे (3-4-14) 'अपूर्वत्वाद्विधिरास्थेय इत्यर्थः' इति स्वीयवाक्येन निदिध्यासनादौ विधिमङ्गीकरोतीव भाति। अत एव तस्मिन्नधिकरणे प्रकटार्थविवरणे---'वाचस्पतिः समन्वयसूत्रे श्रवणादिविधिं निराचचक्षे, अत्र तु तद्विधिमूरीचक्रे, अहो बतास्य पाण्डित्यम्' इति दूषितम्। कल्पतरौ तु तद्दूषणसमाधानमेवमुक्तम्—'समन्वयसूत्रे अपूर्वविधिर्निराकृतः। अत्र नियमविधिरुच्यते इत्यविरोधः' इति। एतत् समाधानं आपाततः, वास्तविकं च समाधानं कल्पतरावनन्तरमुक्तम्---'अथ वा विधित्वं चार्थवादस्यैव सतः वाक्यस्य प्रशंसाद्वारेण प्रवृत्त्यतिशयकरत्वम्। अत एव समन्वयसूत्रे भाष्यम्—'विधिच्छायानि

वचनानि' इति' इत्यादिग्रन्थेन। परिमलेऽपि तत्र श्रवणादौ नियमविधेरपि व्यावर्त्याभावेन अभावः उपपादितः। एवं च भामतीप्रस्थाने श्रवणादौ न कोऽपि विधिरिति स्थितम् ॥

विवरणे तु श्रवणादौ नियमविधिरूरीकृतः। तथा हि— प्रथमवर्णके- (31-पु) 'अमृतत्वसाधनं आत्मदर्शनं 'द्रष्टव्यः' इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नाम अङ्गि विधीयत इति' (33-पु) 'ननु 'श्रोतव्य' इति विधिः मोक्षसाधनब्रह्मात्मज्ञानाय वेदान्तवाक्यविचारं साधनचतुष्टयसम्पन्नस्य विधातुं न शक्नोति, श्रवणादीनां विषयावगमं प्रति अन्वयव्यतिरेकसिद्धसाधनत्वात्। न च अवघातादिवत् उभयार्थता सम्भवति; दृष्टादृष्टप्रकारद्वयसाध्यापूर्ववत् इह अदृष्टसाध्यस्याभावात्। आत्मावगमस्य दृष्टोपायमात्रसाध्यत्वात् इति। नैतत् सारम्। आत्मतत्त्वापरोक्ष्यस्य सर्वादृष्टसाध्यत्वस्य वक्ष्यमाणत्वात् अवघातादिवत् उभयार्थतया विधानोपपत्तेः। ननु विधिपरत्वे वेदान्तानां तन्निष्ठतया ब्रह्मस्वरूपस्य असिद्ध्यादिदोषप्रसङ्गात् नास्ति श्रवणादिविधानं इति भाष्यकारैरेव दर्शितम्। सत्यम्; ज्ञानविधिस्तत्र निराकृतः, न श्रवणादिविधिः। तत्र उक्तदोषप्रसङ्गाभावात् ॥

कथम्?। दर्शनविधाने हि ब्रह्म कर्मतया गुणभूतं प्रसज्यते। ब्रह्मदर्शनमुद्दिश्य विचारविधाने तु स्वप्रधानफलभूतदर्शनविशेषणतया ब्रह्मापि स्वप्रधानं भवति न तु गुणभूतं इति वेदान्तैः ब्रह्मणि स्वप्रधाने प्रतिपाद्यमाने तद्दर्शनाय श्रवणादिविधानं नैव विरुध्यते। ननु एवमपि उपक्रमोपसंहाराभ्यां एकस्मिन् आत्मप्रतिपादनपरे वाक्ये कथं अवान्तरवाक्यैः श्रवणादिविधानं कल्प्यते? इति। अवान्तरवाक्यभेदेन 'विविदिषन्ति' इति यज्ञादीनां ज्ञानसंयोगविधानवत्, 'उपरि हि देवेभ्यः' इति उपरिधारणविधानवत्, मलवद्वाससो व्रतकलापविधानवच्च इति ब्रूमः। अथवा 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादिवाक्यं श्रवणादिविधायकमस्तु; तस्य तत्परत्वात्। सूत्रकारेण च वक्ष्यमाणत्वात्। सर्वथा तावत् मनननिदिध्यासनाभ्यां अङ्गभूताभ्यां सह श्रवणविधानं अस्त्येव।' इति वाक्यैः श्रवणादौ नियमविधिः स्थापितः ॥

श्रवणादीनां स्वरूपं पञ्चपादिकायां नवमवर्णके उक्तम्—(352-पु) 'श्रवणं नाम आत्मावगतये वेदान्तवाक्यविचारः शारीरकश्रवणञ्च। मननं

वस्तुनिष्ठवाक्यापेक्षितदुन्दुभ्यादिदृष्टान्तजन्मस्थितिलयवाचारम्भणत्वादियुक्त्यर्थ-वादानुसन्धानं वाक्यार्थाविरोध्यनुमानानुसन्धानं च । निदिध्यासनं मननोपबृंहितवाक्यार्थविषये स्थिरीभावः । विधेयस्य उपासनापर्यायस्य निष्फलत्वात् । दर्शनं ततो वाक्यार्थे स्थैर्यात् निरस्तसमस्तप्रपञ्चावभासविज्ञानघनैकतानुभवः ' इति ॥

विवरणे नवमवर्णकेऽपि (773-पु) 'ननु सम्यग्दर्शनस्य फलरूपत्वात् प्रमाणाधीनत्वाच्च अविधेयतेति युक्ता तस्यार्थवादता । श्रवणादयस्तु क्रियारूपत्वात् सम्यग्दर्शनस्य दृष्टादृष्टोपकारितया विधेया एवेति। तदाह—' एतच्च सर्वं प्रथमसूत्रेणैव सूत्रितं विवृतं च भाष्ये' इति। मनननिदिध्यासनोपबृंहितस्य श्रवणस्य सम्यग्दर्शनाय विधेयत्वमङ्गीकृत्य प्रथमसूत्रं प्रवृत्तमित्यर्थः । ' इति श्रवणादिविधिः स्थापितः ॥

यत्तु वेदान्तपरिभाषाटीकायां रामकृष्णदीक्षितप्रणीतायां शिखामणिसंज्ञितायामुक्तम्—' द्वितीयवर्णके टीकाकृता—'यद्येवं किं विधिना । स्वयमेव पुरुषार्थे निर्ज्ञाते हेतौ प्रवर्तते ' (196-पु) इति विध्यभावः कण्ठरवेण अङ्गीकृतः । तत्रैव च विवरणाचार्यैः—' निदिध्यासितव्य इति च आत्मप्रतिपादनपरे (वाक्ये) वाक्यभेदाभावाय स्तुतिपरत्वात् ' (451-पु) इत्युक्तम्। तस्मादहर्थिद्रष्टव्यपदसमभिव्याहारेण प्रायदर्शनन्यायेन ' श्रोतव्य ' इत्यादेरपि अहर्थित्वमेव युक्तम् , न विधायकत्वम् ' इति । तत् विवरणतात्पर्यापरिज्ञाननिबन्धनम्। यतः तत्रैव स्थले तत्त्वदीपने—' मनननिदिध्यासनाभ्यां सह श्रवणं नामाङ्गि विधीयते' इत्यत्र निदिध्यासनविधिराश्रितः । ततः कथं तन्निरसनम् ? इत्याशङ्क्याह—'अदृष्टार्थत्वाच्च निदिध्यासनविधानस्ये'ति । साक्षादापरोक्ष्यहेतुत्वेन निदिध्यासनं विधीयत इति यन्मतं तदत्र निषिध्यते । प्रथमवर्णके तु निदिध्यासनविध्यायत्तं चित्तैकाग्र्यलक्षणदृष्टफलसमवाय्यदृष्टम् , तस्मिन् सति शब्दादेव अपरोक्षप्रत्ययोत्पत्तेः अभिधानात् न किंचिदप्यवद्यमित्यर्थः ।' इत्युक्तम् । तस्मात् विवरणे श्रवणादौ नियमविधिरेव सिद्धान्तितः, न तु रामकृष्णदीक्षितीयाभिप्रायानुसारेण नियमविधेरपि अभावोऽभिप्रेतः । इति ज्ञेयं पण्डितैः ॥

## (4) निदिध्यासनमङ्गि श्रवणमङ्गि इति पक्षभेदः ॥

श्रवणमननोपकृतनिदिध्यासनजसंस्कारवच्चेतसस्साक्षात्कारे उपयोगः मनननिदिध्यासनोपस्कृतवेदान्तश्रवणस्य साक्षात्कारे उपयोग इति पक्षद्वयम् । तत्र भामत्यां जिज्ञासाधिकरणे—'तस्यापि (विद्योदयस्यापि) श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात्' 'गान्धर्वशास्त्रार्थोपासनावासनाया इवापूर्वानपेक्षायाः षड्जादिसाक्षात्कारे, वेदान्तार्थोपासनावासनायाः जीवब्रह्मभावसाक्षात्कारे अनपेक्षाया एव सामर्थ्यात्' 'तस्मात् ब्रह्मभूयस्य अविद्यापिधानापनयमात्रेणाविर्भावात् अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव सम्भवात् उपासनायाः संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनस्साचिव्यस्य च मानान्तरसिद्धत्वात् 'आत्मेत्येवोपासीत' इति न विधिः; अपि तु विधिसरूपोऽयम् ।' इति, सर्वापेक्षाधिकरणे (3-4-6)— 'तत्राद्ये तावत् प्रतिपत्ती (श्रवणमननरूपे) विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंसः उपपद्येते । ते एव च चिन्तासन्ततिमयीं तृतीयां प्रतिपत्तिं (निदिध्यासनरूपां) प्रसुवाते । सा च आदरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्ते एव प्रतिपत्तिं चतुर्थीम्, तन्नान्तरीयकं च कैवल्यम् ।' इत्यादिभिश्च वाक्यैः श्रवणमननपूर्वकनिदिध्यासनसंस्कारसचिवचेतसा करणेन ब्रह्मसाक्षात्कारो वर्णितः ॥

विवरणे तु—प्रथमवर्णके (29-पु) 'अमृतत्वसाधनं आत्मदर्शनं 'द्रष्टव्यः' इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नाम अङ्गि विधीयते' (33-पु) 'मनननिदिध्यासनयोश्च श्रवणाङ्गत्वमुत्तरत्र वक्ष्यामः' (38-पु) 'सर्वथा तावत् मनननिदिध्यासनाभ्यां अङ्गभूताभ्यां सह श्रवणविधानमस्त्येव' ॥

(410-पु) 'ननु मनननिदिध्यासनयोः कथं श्रवणं प्रत्यङ्गतावगमः ? यावता ब्रह्मण्येव शक्तितात्पर्यविशिष्टवेदान्तशब्दावधारणात् श्रवणशब्दाभिधेयात् आत्मन्यवबुद्धे पश्चात् मननं अर्थसम्भावनोपपत्तिपर्यालोचनाद्वारा जनिता ब्रह्मणि प्रत्ययावृत्तिरुत्पद्यते । ततश्च प्रमाणयुक्तिसम्भावनाभ्यां परिनिश्चिते(ऽपि) विषये तदेकाकारं चित्तसमाधानं निदिध्यासनमुत्पद्यते । तदेवं निदिध्यासनस्वरूपोपकारितया श्रवणमननयोस्तदङ्गभावे अवगते न युज्यते

श्रवणाङ्गता मनननिदिध्यासनयोरिति । अत्रोच्यते—यस्मिन् पक्षे शक्ति-तात्पर्यविशिष्टशब्दावधारणं प्रथमं ब्रह्मणि परोक्षज्ञानमुत्पाद्य मनननिदिध्यासन-संस्कारविशिष्टान्तःकरणापेक्षया अपरोक्षज्ञानमुत्पादयति, तत्र ब्रह्मणि परोक्ष-ज्ञानस्य निदिध्यासनोपकारितया तदङ्गत्वेऽपि तात्पर्यविशिष्टशब्दावधारणा-दपरोक्षज्ञानोत्पत्तौ मनननिदिध्यासने श्रवणस्य फलोपकार्यङ्गतामश्नुवाते ॥

ननु अपरोक्षफलोदयेऽपि निदिध्यासनाङ्गतैव श्रवणमननयोः किं न स्यात्? त्रयाणामपि सन्निपत्योपकाराविशेषात् दर्शपौर्णमासवत् समप्रधानता वा किं न स्यात्? इति । उच्यते—विशिष्टशब्दावधारणं प्रमेयावगमं प्रति अव्यव-धानेन कारणं भवति । प्रमाणस्य प्रमेयावगमं प्रति अव्यवधानात् । मनन-निदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्य-द्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितस्य करणस्य विशिष्ट-शब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे अङ्गीक्रियेते ॥

यदा तु पुनः शब्दादेव प्रथममपरोक्षानुभवफलं विज्ञानमुत्पन्नं भ्रान्ति-विक्षेपसंस्कारखचितान्तःकरणदोषात् अर्थेऽपि परोक्षानुभवफलतया विश्रान्त्या अवतिष्ठते, तदा मनननिदिध्यासने चित्तगतविक्षेपादिदोषप्रतिबन्धनिरासेन अपरोक्षफलप्रतिष्ठाहेतुतया प्रमाणस्य फलोपकार्यङ्गमिति न विरुध्यते । न च शब्दकरणमन्तरेण निदिध्यासनादेव अपरोक्षनुभवफलजन्म सम्भवति । तस्य प्रामाण्यासिद्धेः । शब्दावगतब्रह्मात्मविषयत्वादपरोक्षस्य तद्द्वारेण प्रामाण्य-निश्चय इति चेत्; नैवम्—उत्पन्नस्य हि विज्ञानस्य प्रमाणान्तराधीनविषय-सद्भावनिश्चयाधीनप्रामाण्यकल्पनात् वरं स्वस्यैव क्लृप्तप्रमाणजन्यत्वकल्पनम् । अन्यथा परतः प्रामाण्यात् । इतरत्र स्वतःप्रामाण्यात् । तस्माद्युक्तं श्रवणस्य फलोपकार्यङ्गता मनननिदिध्यासनयोरिति ।' इत्यादिभिः वाक्यैः श्रवणस्य अङ्गित्वं मनननिदिध्यासनयोस्तदङ्गत्वं च व्यवस्थापितम् ॥

## (5) अवच्छेदवादः प्रतिबिम्बवाद इति पक्षभेदः ॥

जीवेश्वरयोरौपाधिको भेदः न पारमार्थिकः इत्यद्वैतिनां सिद्धान्तः । तत्र अज्ञानान्तःकरणरूपोपाधिभिः अवच्छेदः चैतन्यस्य तत्र प्रतिबिम्बनं इति पक्षद्वयम् । अवच्छेदवादः प्रतिबिम्बवादः इति क्रमेण तदुभय-

मुच्यते । तत्र अवच्छेदवादः भामत्यां स्थापितः प्रतिबिम्बवादः दूषितः । भामत्यां अध्यासभाष्ये नीरूपस्य चैतन्यस्य नीरूपे अन्तःकरणाद्युपाधौ प्रतिबिम्बनं निराकृतम्—'रूपवद्धि द्रव्यं अतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात् । चिदात्मा तु अरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति । यथाऽऽहुः—'शब्दगन्धरसादीनां कीदृशी प्रतिबिम्बता' इति ।' इति ग्रन्थेन । रचनानुपपत्त्यधिकरणे (2-2-1) भामत्याम्— 'अविद्योपधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्पः' इति, वाक्यान्वयाधिकरणभामत्याम् (1-4-6) 'अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते' इति च प्रतिबिंबसादृश्यस्यैव कथनात् प्रतिबिम्बवादः असम्मत इति ज्ञायते । तस्य सम्मतत्वे परमात्मप्रतिबिम्ब इत्युक्त्यापत्तेः । अंशाधिकरणे च भामत्याम् (2-3-17)—'प्रतिबिम्बानामिव श्यामतादिः जीवानामेव नानावेदनाभिसम्बन्धः । ब्रह्मणस्तु बिम्बस्येव न तदभिसम्बन्धः' इत्यत्र 'प्रतिबिम्बानामिव, बिम्बस्येव' इत्युक्त्या मुख्यः प्रतिबिम्बभावः न सम्मत इति ज्ञायते ॥

'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यधिकरणे भामत्याम् (3-2-3)—'यथा घटाकाशो नाम न परमाकाशादन्यः, अथ चान्य इव यावद्धटमनुवर्तते । न चासौ दुर्विवेचनः, तदुपाधेर्घटस्य विविक्तत्वात् । एवमनाद्यनिर्वचनीयाविद्योपधानकल्पितो जीवः न वस्तुतः परमात्मनो भिद्यते, तदुपाध्युद्भवाभिभवाभ्यां च उद्भूत इव अभिभूत इव च प्रतीयते । ततश्च सुषुप्तादावपि अभिभूत इव जाग्रदवस्थादिषु उद्भूत इव । तस्य चाविद्यातद्वासनोपाधेः अनादितया कार्यकारणभावेन प्रवहतः सुविवेकतया तदुपहितो जीवः सुविवेक इति' इति ग्रन्थेन घटाकाशोदाहरणेन अवच्छेदवादे सम्मतिः प्रकटिता । इतरव्यपदेशाधिकरणेऽपि (2-1-7) भामत्याम्—'स एव तु (परमात्मा) अविद्योपधानभेदात् घटकरकाद्याकाशवत् भेदेन प्रथते ।' इति वाक्येन, 'नात्माऽश्रुते'-रित्यधिकरणभामत्याम् (2-3-11)—'औपाधिकत्वाच्च (जीवब्रह्म) भेदस्य घटकरकाद्याकाशवत् विरुद्धधर्मसंसर्गस्योपपत्तेः' इति वाक्येन चावच्छेदवादः स्फुटितः ॥

विवरणे तु प्रतिबिम्बवादस्समर्थितः । तत्र मूले पञ्चपादिकायां प्रथमवर्णके (108-पु) 'तत्त्वमिति बिम्बस्थानीयब्रह्मस्वरूपता प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते' 'शास्त्रीयोऽपि व्यवहारः प्रतिबिम्बस्य पारमार्थिकमेव बिम्बैकरूपत्वं दर्शयति––'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥' इति ।' (111-पु) 'जीवः पुनः प्रतिबिम्बकल्पः सर्वेषां नः प्रत्यक्षश्चिद्रूपः नान्तःकरणजाड्येनास्कन्दितः । स चाहंकर्तृत्वमात्मनो रूपं मन्यते । न बिम्बकल्पब्रह्मैकरूपताम् । अतो युक्तस्तद्रूपावगमे मिथ्यापगमः ।' इति प्रतिबिम्बवादः प्रकाशितः । विवरणे प्रथमवर्णके (287-पु) 'जीवः प्रतिबिम्बश्चेत् न बिम्बात्मतामवगन्तुमलं प्रतिबिम्बत्वात् अक्षिपात्रगतदेवदत्तप्रतिबिम्बवत् इत्येतन्निराचष्टे—'देवदत्तस्याचेतनांशस्यैव प्रतिबिम्बत्वात् न तत् प्रतिबिम्बं बिम्बैकरूपतामात्मनो जानाति अचेतनत्वात्' इति । अचेतनत्वप्रयुक्ता तत्रानवगतिः न प्रतिबिम्बत्वप्रयुक्ता, घटादिषु तथा दर्शनादिति भावः । ननु देवदत्तस्यैव बिम्बस्य भ्रमनिवर्तकतत्वज्ञानाश्रयत्वं दृष्टम्, एवं बिम्बत्वात् ब्रह्मण एव भ्रमनिरासितत्वज्ञानाश्रयत्वं स्यादिति, नेत्याह–'यस्य हि भ्रान्तिरात्मनि परत्र वा समुत्पन्ना तद्गतेनैव सम्यग्ज्ञानेन सा निवर्तते' इति । न बिम्बत्वकृतं तत्वज्ञानाश्रयत्वम्, किं तु भ्रान्तत्वकृतम्, तदप्यज्ञत्वकृतम्, तदपि जीवत्वनिमित्तमिति भावः । ननु जीवलक्षणप्रतिबिम्बात्मतामात्मनो ब्रह्म जानीयाद्वा न वा । न चेत् सर्वज्ञताहानिः । जानाति चेत् ब्रह्म स्वात्मन्येव संसारं पश्येत् इति । नेत्याह–'यस्तु जानीते देवदत्तः प्रतिबिम्बस्यात्मनोऽभिन्नत्वं न स तद्गतेन दोषेण संस्पृश्यते ।' इति । देवदत्तो हि स्वात्मानं अक्षिपात्रे अल्पत्वादिगुणमवगच्छन्नपि तत्त्वज्ञानप्रतिहतत्वात् नानुशोचति । एवं ब्रह्मापि स्वात्मनि जीवे प्रतिबिम्बे संसारं पश्यदपि तत्त्वज्ञानित्वात् नानुशोचति । तत्वज्ञानसंसरणे च अवदातश्यामत्वादिवत् न इतरेतरत्र व्यवतिष्ठेते इति भावः । ननु एकतावगमेऽपि न तत्र विच्छेदविभ्रमो निवर्तते । सत्यम्, न प्रतिबिम्बत्वकृतं तत् । किं तु उपाधेरज्ञानाजन्यत्वात् ज्ञानानिवर्त्यत्वकृतमित्याह—'नापि ज्ञानमात्रात् प्रतिबिम्बस्य निवृत्तिः तद्धेतोः दर्पणादेः पारमार्थिकत्वात् ।' इति ॥

ननु जीवस्यापि तर्हि उपाधिजाड्येनास्कन्दनसम्भवात् न भ्रान्तिसम्यग्ज्ञानाश्रयत्वं अप्रतिबिम्बता च तदाश्रयत्वे स्यादिति । नेत्याह—'जीवः

पुनः प्रतिबिम्बकल्पः सर्वेषां नः प्रत्यक्षश्चिद्रूपः नान्तःकरणजाड्येनास्कन्दितः' इति। 'रूपं रूपं प्रतिरूपो बभूव' 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' 'अत एव चोपमा सूर्यकादिवत्' इति च श्रुतिस्मृतिसूत्रैः जीवस्य प्रतिबिम्बभावस्य दर्शितत्वात् अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवत् अमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्बसम्भवात् जानुमात्रप्रमाणेऽपि जले दूरविशालाकाशदर्शनात् जलान्तराकाश एवाभ्रादिप्रतिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात् तत्प्रतिबिम्बत्वं चिद्रूपत्वं च शास्त्रप्रतिपन्नं प्रत्यक्षप्रतिपन्नं च न निराकर्तुं शक्यत इति भावः ॥

ननु घटाकाशवदुपाध्यवच्छिन्नो जीवः किं न स्यात्? न—सामान्यविशेषाभ्यामुपाधिभिरण्डान्तर्वर्तिब्रह्मणः सर्वात्मना जीवभावेनावच्छिन्नत्वात् अनवच्छिन्नस्य ब्रह्मणः अण्डाद्बहिरेव सद्भावप्रसङ्गात् तत्र सर्वगतत्वसर्वनियन्तृत्वादि ब्रह्मणो न स्यात्। अवच्छिन्नप्रदेशेषु अनवच्छिन्नस्य द्विगुणीकृत्य वृत्त्ययोगात्। स्वरूपापेक्षया तत् सर्वं न बहिस्स्थितब्रह्मापेक्षयेति चेत्, न—'यो विज्ञाने तिष्ठन्' इत्यादौ जीवव्यतिरिक्तस्यैव ब्रह्मणः जीवसंनिधानेन विकारान्तरवस्थानश्रवणात्। प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनात् एकत्रैव द्विगुणीकृत्य वृत्त्युपपत्तेः जीवावच्छेदेषु ब्रह्मणोऽपि नियन्तृत्वादिरूपेणावस्थानमुपपद्यते इति प्रतिबिम्बपक्ष एव श्रेयानिति।' इति प्रतिबिम्बवादः समर्थितः ॥

विवरण एव प्रथमवर्णके (294-पु) 'अत्र सर्वसङ्करवादी प्रतिबिम्बस्यावस्तुत्वाभ्युपगमात् न जीवः प्रतिबिम्बमिति जल्पति। तत्र मुखचित्स्वरूपयोः प्रतिबिम्बेषु नावस्तुत्वमिष्यते' 'भेदविपर्यासादीनामवस्तुत्वाभ्युपगमेऽपि न मुखचैतन्ययोः काचित् क्षतिः, मुखचित्स्वरूपयोश्च बिम्बात्मतां प्रमिमीमहे मिथ्यांशपर्युदासेन। न च मिथ्यांशस्य बन्धमोक्षौ, किं तु स्वरूपस्यैव। स्वरूपगतस्यापि साङ्कर्यपरिहाराय उपाधिभेदो दर्शितः, तस्मात् परसिद्धान्तापरिज्ञानविलसितोऽयं सर्वसङ्करवादिनो विभ्रमः 'अवस्तुत्वाभ्युपगमात्' इति।' इति ग्रन्थेन प्रतिबिम्बस्य वस्तुत्वं बिम्बाभिन्नत्वं च स्थापितं भास्करमतनिरासेन। नवमवर्णकेऽपि विवरणे (760-पु) 'ननु कोऽयं जीवो नाम, यस्य स्वरूपं त्वंपदेन

लक्ष्यमाणं ब्रह्मैव वाक्यार्थः सम्पद्यते। ब्रह्मैवाविद्याप्रतिबिम्बतमिति वदामः' इति ग्रन्थेन प्रतिबिम्बवादः उपसंहृतः ॥

## (6) अज्ञानस्य आश्रयविषयभेदः तयोरैक्यमिति पक्षद्वयम् ॥

तत्र भामत्यां आश्रयविषयभेदः समर्थितः। भामत्यां अध्यासभाष्ये—'अन्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारः अहङ्कारास्पदं संसारी सर्वानर्थसम्भारभाजनं जीवात्मा इतरेतराध्यासोपादानः तदुपादानश्चाध्यासः इति अनादित्वात् बीजाङ्कुरवत् नेतरेतराश्रयत्वम्' इति ग्रन्थेन जीवाश्रयत्वमविद्याया उक्तम्। ब्रह्मविषयत्वं चाज्ञानस्य इत्यत्र न विप्रतिपत्तिः। तथा च आश्रयविषयभेदः। समन्वयाधिकरणभामत्यामपि (1-1-4)—'नाविद्या ब्रह्माश्रया, किं तु जीवे, सा त्वनिर्वचनीयेत्युक्तम्, तेन नित्यशुद्धमेव ब्रह्म' इत्युक्तम्।

सर्वत्रप्रसिद्धाधिकरणेऽपि (1-2-1) भामत्याम्—'अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते। तादृशानां च जीवानामविद्या; नतु निरुपाधिनो ब्रह्मणः' इत्यादिग्रन्थेन अविद्यावच्छिन्नचैतन्यरूपजीवाश्रितत्वमविद्याया उक्तम्। अन्योन्याश्रयात्माश्रयादिकं कल्पतरुपरिमलयोस्तत्र परिहृतम्। तत्तत एवावसेयम्। आनुमानिकाधिकरणेऽपि (1-4-1) भामत्याम्—'जीवाधिकरणाप्यविद्या निमित्ततया विषयतया वा ईश्वरमाश्रयत इति ईश्वराश्रयेत्युच्यते; न त्वाधारतया। विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति' इत्युक्तम्। वाक्यान्वयाधिकरणभामत्यामपि (1-4-6)—'अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति, तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन् उच्यते।' इत्यादिवाक्येन जीवाश्रयत्वमविद्याया उक्तम् ॥

विवरणे तु अज्ञानस्य आश्रयविषयभेदनिरासेन तदैक्यं समर्थितम्। विवरणे प्रथमवर्णके—(210-पु) 'न तावदज्ञानमाश्रयविषयभेदापेक्षम्; किंतु एकस्मिन्नेव वस्तुनि आश्रयत्वमावरणं चेति कृत्यद्वयं सम्पादयति। स्वाश्रयापवरकप्रदेशे कृत्यद्वयसम्पादितमोवत् अक्रियात्मकत्वादावरणत्वाच्च। न हि तमो वस्तुद्वयापेक्षमवभासते। अज्ञानमिति च द्वयापेक्षज्ञानपर्युदासेनाभिधानात द्वयसापेक्षवदवभासते। यथा स्थितिरगमनशब्देनाभिधीयमाना कस्य किंविषयमगमनमिति कर्मसापेक्षवद्भाति तद्वत। तमोवच्च स्वाश्रयावरणमज्ञानं स्वा-

श्रयैकत्वेन न विरुध्यते। नापि स्वाश्रयचित्प्रकाशेन विरुध्यते अज्ञानम्। स्वावभासकेन संवेदनेन चित्प्रकाशेन अज्ञानस्याविरुद्धत्वात्। साक्षिचैतन्यस्य चाज्ञानावभासकत्वात्। अतो न चिदाश्रयत्वविरोधः।' इति, (219-पु) 'ननु अविद्या किंसम्बन्धिनी भेदनिमित्तम्। ननु दर्पणादिद्रव्यं वा किंसम्बन्धि बिम्बभेदनिमित्तम्। मुखमात्रसम्बन्धीति चेत्—इहापि चित्स्वरूपमात्रसम्बन्धि अज्ञानं तत्र जीवब्रह्मव्यवहारभेदं प्रवर्तयति। कथं पुनः स्वरूपमात्रसम्बन्धिनोऽज्ञानस्य ब्रह्मस्वरूपं परिहृत्य जीवविभागैकपक्षपातिता?। ननु दर्पणघटादेर्मुखाकाशभेदे हेतुतया मुखादिसंसर्गिणोऽपि बिम्बाकाशौ परिहृत्य प्रतिबिम्बघटाकाशादिपक्षपातित्ववदिति वदामः।' इत्यादिग्रन्थेन अविद्यायाः चिन्मात्रविषयिण्याः चिन्मात्राश्रयत्वं अथापि जीवपक्षपातित्वं च समर्थितम् ॥

### (7) प्रतिजीवं मूलाविद्यानानात्वम्, एकैव मूलाविद्या इति पक्षद्वयम् ॥

तत्र भामतीकाराः नानाजीववादिब्रह्मसिद्धिकारमण्डनमिश्रमतानुवर्तिनः मूलाविद्यानानात्वपक्षमाचक्षते। आनुमानिकाधिकरणभामत्याम् (1-4-1)—'न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे; येनैवमुपालभ्येमहि। किं त्वियं प्रतिजीवं भिद्यते। तेन यस्यैव जीवस्य विद्योत्पन्ना तस्यैवाविद्यापनीयते, न जीवान्तरस्य। भिन्नाधिकरणयोर्विद्याविद्ययोरविरोधात्। तत् कुतः समस्तसंसारोच्छेदप्रसङ्गः?। प्रधानवादिनां त्वेष दोषः। प्रधानस्यैकत्वेन तदुच्छेदे सर्वोच्छेदः। अनुच्छेदे वा न कस्यचिदित्यनिर्मोक्षप्रसङ्गः। प्रधानाभेदेऽपि चेदेतदविवेकख्यातिलक्षणाविद्यासदसत्त्वनिबन्धनौ बन्धमोक्षौ, तर्हि कृतं प्रधानेन। अविद्यासदसद्भावाभ्यामेव तदुपपत्तेः। न चाविद्योपाधिभेदाधीनो जीवभेदः जीवभेदाधीनश्चाविद्योपाधिभेदः इति परस्पराश्रयादुभयासिद्धिरिति साम्प्रतम्। अनादित्वाद्बीजाङ्कुरवदुभयसिद्धेः। अविद्यात्वमात्रेण च एकत्वोपचारः अव्यक्तमिति च अव्याकृतमिति चेति' इति ग्रन्थेन मूलाविद्यानानात्वमुक्तम्। वाक्यान्वयाधिकरणभामत्यामपि (1-4-6) उक्तम्—'यथा हि बिम्बस्य मणिकृपाणादयो गुहाः एवं ब्रह्मणोऽपि प्रतिजीवं भिन्ना अविद्या गुहा' इति ॥

विवरणकारास्तु न मूलाविद्यानानात्वमभिप्रयन्ति। तैः विवरणे कुत्रापि प्रदेशे प्रतिजीवं मूलाविद्याभेदस्य स्वाभिमततया अवर्णनात्। परं तु सप्तमवर्णके (693-पु) 'जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्माविर्भावयन्ति।

सादृश्याच्च प्रपञ्चैकतावभासः अनेकैरवगतद्वितीयचन्द्रवत्। स्वरूपापेक्षया च ब्रह्म सर्वजगत्कारणं इत्यपरे। ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्तते स्वप्नादिवदिति मतान्तरम्। तस्मात् ब्रह्मैव स्वमायया अविद्यया विवर्तत इति।' इति प्रोचुः। तत्र 'ब्रह्मसिद्धिकाराणां मतमाह–जीवा एवेति। इष्टसिद्धिकाराणां मतमाह—ब्रह्मैकमेवेति। अन्त्यं पक्षमुपसंहरति—तस्मादिति।' इति तात्पर्यदीपिकाव्याख्यायां चित्सुखाचार्याः प्रोचुः। तत्त्वदीपने व्याख्यातम्—'जीवा एवेति। प्रतिजीवमविद्याया भिन्नत्वात् कार्यप्रपञ्चस्यापि भेदात् एकमुक्तौ न सर्वद्वैतनिवृत्तिरित्यर्थः। सिद्धान्तरहस्यमाह—ब्रह्मेति। किं तर्हि उपादेयमिति, अत्राह—तस्मादिति। न चैकमुक्तौ सर्वमुक्तिप्रसङ्गः, इष्टापत्तेः। शिष्टमिष्टसिद्धौ द्रष्टव्यम्' इति। अत्र व्याख्याद्वयेऽपि एकजीववादिनां इष्टसिद्धिकाराणां मूलाविद्याया एकत्ववादिनां मत एव विवरणकाराणां तात्पर्यमिति प्रकाशितम्॥

नवमवर्णके (758-पु)—'मम पुनरेकोपाधिपरित्यागेन बिम्बभूतब्रह्मात्मताऽपरोक्षावभासिनोऽपि प्रतिबिम्बश्यामत्वादिभिरिव जीवसंसारैः न सम्बन्धः मिथ्यात्वेन तत्त्वज्ञानप्रतिहतत्वात्। स्वप्नादिवच्च तत्त्वज्ञानेन सर्वोपाधिविनिर्मोक्षश्च युज्यते।' इत्यादिग्रन्थेन नानाजीववादिनां एकजीववादिनां च मतानुसारेण बन्धमोक्षव्यवस्था उपपादिता विवरणे। 'नानाजीवपक्षाश्रयणेन व्यवस्थामुपपाद्य एकजीवपक्षाश्रयेण सर्वोपाधिक्षयोऽप्युपपद्यत इत्याह—स्वप्नादिवदिति' इति ऋजुविवरणे तत्त्वदीपने च व्याख्यातम्। विवरणकारैः अत्र स्वमतं किमिति न स्फुटीकृतम्॥

परं तु प्रथमवर्णके (97-पु) 'आत्माश्रयं आत्मविषयं च अज्ञानमन्तरेण अनात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे प्रमाणाभावात्। विषयाग्रहणस्य प्रमाणवैकल्यादप्युपपत्तेः।' इति, (99-पु) 'मूलाज्ञानस्यैवावस्थाभेदाः रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्तन्ते' इति च उक्तम्। तत्र तत्त्वदीपने–'मायां तु प्रकृतिं विद्यात्' इत्यादिवाक्यात् कल्पनालाघवानुगृहीतात् मूलाज्ञानमेकमेष्टव्यम्। तस्य चानन्ता अवस्थाः कल्प्यन्ते व्यवहारनिर्वाहाय। तत्र च कारणत्रितयानुरोधेन काचिदवस्था रजताद्याकारेण विवर्तते। तस्यां चाधिष्ठानसाक्षात्कारान्निवृत्तायां विपर्यासनिवृत्तिरिति

न किंचनावद्यमिति द्रष्टव्यम्' इत्युक्तम् । तत्र तात्पर्यदीपिकायां चित्सुखाचार्यैः —'यावन्ति ज्ञानानि तावन्ति अज्ञानानि इति इष्टसिद्धिकारैरपि स्वीकृतत्वात् न अपसिद्धान्तोऽपि इति भावः' इति व्याख्यातत्वात् विवरणाचार्यस्य इष्टसिद्धिकारपक्षावलम्बित्वं स्फोरितम्। तस्मात् मूलाविद्याया एकत्वमेव विवरणकाराभिमतमिति स्फुटीभवति ॥

मूलाविद्याया एकत्वाभ्युपगमेऽपि पूर्वोक्तविधया प्रतिजीवमवस्थाभेदाङ्गीकारेण बद्धमुक्तव्यवस्था उपपादयितुं शक्यैव। अत एव सिद्धान्तलेशसङ्ग्रहे उक्तम्–' यद्यपि शुद्धब्रह्माश्रयविषयमेकमेवाज्ञानं तन्नाश एव च मोक्षः, तथापि जीवन्मुक्तावज्ञानलेशानुवृत्त्यभ्युपगमेन अज्ञानस्य सांशत्वात् तदेव कचिदुपाधौ ब्रह्मावगमोत्पत्तौ अंशेन निवर्तते, उपाध्यन्तरेषु यथापूर्वमंशान्तरैरनुवर्तते' इति ॥

(8) **अखण्डाकारवृत्तेरुपहितं ब्रह्म विषयः शुद्धं विषय इति पक्षद्वयम् ॥**

भामतीकाराणां मते निरुपाधिकब्रह्मणः स्वयंप्रकाशस्य न वृत्तिविषयत्वमिष्यते। तथा हि भामत्यां जिज्ञासाधिकरणे—' तस्मात् निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम्। न चायमनुभवो ब्रह्मस्वभावः; येन न जन्येत। अपि तु अन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः। न चैतावता ब्रह्मणोऽपि पराधीनप्रकाशता। न हि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति, सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते। न तु उपहितमपि। यथाऽऽहस्म भगवान् भाष्यकारः—' नायमेकान्तेनाविषयः' इति। न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः; तस्यैव तदुपाधेः विनश्यदवस्थस्य स्वपरोपाधिविरोधिनः विद्यमानत्वात्। अन्यथा चैतन्यच्छायापत्तिं विना अन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात्' इत्युक्तम्। अत्र ब्रह्मणः उपहितरूपेण वृत्तिविषयत्वं अनुपहितरूपेण स्वप्रकाशत्वमिति वृत्तिविषयत्वस्वप्रकाशत्वयोरविरोध इति कल्पतरुपरिमलयोर्व्यक्तमुपपादितम् ॥

जन्माद्यधिकरणेऽपि (1-1-2) भामत्याम्—' व्यतिरेकसाक्षात्कारस्य विकल्परूपो विषयविषयिभावः' इति वाक्येन अयं विषय उक्तः। तत्र तद्वा-

क्यार्थः कल्पतरौ स्फुटीकृतः—'व्यतिरेकः—प्रपञ्चाभावोपलक्षितस्वरूपम्, तद्विषयसाक्षात्कारस्य विकल्परूपो ब्रह्मणा सह विषयविषयिभावरूपः सम्बन्धोऽस्ति ; न तु तत्त्वतः। उक्तं हीदं प्रथमसूत्रे—'वृत्तिविषयत्वमपि तथैवोपहितस्य, न निरुपाधे'रिति। तत्र प्रस्मर्तव्यमित्यर्थः' इति। अत्र भामतीमते तत्त्वज्ञानस्य उपहितविषयकत्वस्य स्पष्टमुपवर्णनात् मूलाज्ञानमपि तन्मते उपहितविषयकमेवाङ्गीकरणीयम्। अन्यथा ज्ञानाज्ञानयोरसमानविषयकत्वे निवर्त्यनिवर्तकभावायोगात् ॥

विवरणे तु स्वयंप्रकाशमानेऽपि ब्रह्मणि नाज्ञानविरोधः, प्रमाणज्ञानस्यैव अखण्डाकारवृत्तिरूपस्याज्ञानविरोधित्वात् इत्यभिप्रायेण स्वप्रकाशस्य ब्रह्मणोऽज्ञानाश्रयत्वमज्ञानविषयत्वं चोपपादितम्–(211-पु) 'नापि स्वाश्रयचित्प्रकाशेन विरुध्यते अज्ञानम्। स्वावभासकेन संवेदनेन चित्प्रकाशेन अज्ञानस्याविरुद्धत्वात्। साक्षिचैतन्यस्य चाज्ञानावभासकत्वात्। अतो न चिदाश्रयत्वविरोधः' (213-पु) 'न च स्वयंप्रकाशमाने अज्ञानसंसर्गविरोधः क्वचित् दृष्टः। विषयाणां परप्रकाश्यानामेव तत्संसर्गविरोधात्। संवेदनस्यात्मस्वरूपत्वादेव तदाश्रयाज्ञानोपगमात् न तदुदाहरणम्' (224-पु) 'स्वयंप्रकाशस्याविद्याश्रयत्वमुपपन्नमित्युक्तम्। इदानीं प्रकाशमानस्याविद्याविषयभावो नोपपद्यत इत्याक्षिपति—'ननु प्रमाणान्तरविरोधे सति श्रुतिस्तदर्थापत्तिर्वा नाविद्यां निवेदयितुमलम्' इति। ननु 'त्वदुक्तमर्थं न जानामी'ति प्रतिभासमानमेवाज्ञानस्य व्यावर्तकमवभासते। ननु तत्र विशेषाकारस्यानवगतस्य व्यावर्तकता। न—अनवभासमानस्य व्यावर्तकतया प्रतिभासानुपपत्तेः। ननु अवभासमानस्यापि तद्व्यावर्तकत्वमनुपपन्नमेव। न। अज्ञानसम्बन्धस्य प्रतिभासमात्रशरीरत्वात् अनुपपत्तेरलङ्कारत्वात्। प्रतिभासस्तु विद्यत एव। तत्र कथं प्रतीयमानस्याविद्याविषयत्वानुपपत्तिः इत्याक्षिपति—'किं तत् प्रमाणम्' इति।' इत्यादिग्रन्थेन। एवं च विवरणमते स्वप्रकाशब्रह्मण एवाज्ञानविषयत्वोपगमात तत्समानविषयकतन्निवर्तकाखण्डाकारवृत्तिरूपतत्त्वज्ञानस्यापि स्वप्रकाशं ब्रह्मैव विषय इत्यभिमतमिति ज्ञायते। न च वृत्तिविषयत्वे ब्रह्मणः स्वप्रकाशत्वविरोध इति शङ्क्यम् ; वृत्तेरज्ञाननिवर्तकत्वमात्रस्येष्यमाणत्वात्। प्रकाशकत्वानङ्गीकारात् इति बोध्यम् ॥

## (9) साधनचतुष्टयान्तर्गतं प्रथमसाधनं सत्यासत्यवस्तुविवेकः नित्यानित्यवस्तुविवेक इति पक्षभेदः ॥

तत्र भामतीकाराः जिज्ञासाधिकरणे एवमाचक्षते—'मा भूदिदं तद्वतं नित्यं इदं तदनृतमनित्यमिति धर्मिविशेषयोर्विवेकः। धर्मिमात्रयोः नित्यानित्ययोः तद्धर्मयोश्च विवेकं निश्चिनोत्येव। नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यम्, तथा चास्थागोचरः। अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतम्, तथा चानास्थागोचरः। तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यद्वतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति। यत्तु अनित्यमनृतं भविष्यति तापत्रयपरीतं तत्त्यक्ष्यत इति। सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयादैहिकाद्वा कर्मणः विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम्। न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्; तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः। शून्यवादिनामपि शून्यताया एव सत्यत्वात्' इति। तथा च भामत्यां भाष्यगतनित्यानित्यपदे सत्यासत्यपरतया व्याख्याते॥

विवरणकाराः तृतीयवर्णके—(558-पु) "सोऽन्वेष्टव्य' इति विधिप्रकरणे 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति नित्यानित्यवस्तुविवेको दर्शितः।' इत्यादिना ग्रन्थेन नित्यानित्यपदयोर्यथाश्रुतार्थमेवाचक्षते॥

परिमले भामत्यां सत्यासत्यपदयोर्यथाश्रुतार्थपरित्यागेनार्थान्तरकरणे कारणं प्रदर्शितम्। तत् तत एवावसेयम्॥

## (10) स्वाध्यायाध्ययनविधिः अर्थावबोधफलकः अक्षरावाप्तिफलक इति पक्षद्वयम्॥

तत्र भामतीकाराः अर्थावबोधफलकोऽध्ययनविधिरिति मीमांसकपक्षमनुमोदन्ते। तथा हि—जिज्ञासाधिकरणे अध्यासभाष्यविवरणावसाने—'यद्यपि च स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितम्' इत्यादिभिः वाक्यैः मीमांसकसम्मतं अर्थावबोधफलकत्वमध्ययनविधेः अङ्गीकुर्वन्ति मिश्राः॥

पञ्चपादिकाकाराः विवरणकाराश्च अध्ययनविधेः अक्षरग्रहणान्तत्वं समर्थयन्ति। तथा हि—पञ्चपादिकायां तृतीयवर्णके—(222-पु) 'स्यादेतदेवम्, यद्यर्थावबोधफला अध्ययनक्रिया स्यात्। सा ह्यधीयमानावाप्तिफलत्वात् अक्षरग्रहणान्ता। अथाक्षरग्रहणं निष्प्रयोजनमिति न तत्र पर्यवसानं विधेः, भवतु तर्हि सक्तूनां गतिः। तदपि न, अक्षरेभ्यः प्रयोजनवदर्थावबोधदर्शनात्। न तर्हि निष्प्रयोजनान्यक्षराणि। अतः तत्पर्यन्तमध्ययनं न निष्फलम्। अतोऽक्षरग्रहणादेव नियोगसिद्धेः फलप्रयुक्त एवार्थावबोधः। अपि चाक्षरग्रहणान्तो विधिर्निष्प्रयोजन इति न सर्वत्र प्रयोजनवदर्थावबोधपर्यन्तता कल्पयितुमपि शक्यते, तत्रावश्यं कल्पनीया अक्षरग्रहणान्तता। तद्यथा—राजन्यस्य सत्रवैश्यस्तोमबृहस्पतिसवानामाम्नानम्, वैश्यस्य चाश्वमेधराजसूयसत्राणां पाठः। न च तेषामनध्ययनमेव। स्वाध्यायशब्देन सकलवेदवाचिना अध्ययनस्य विहितत्वात्।' इत्यादिभिर्वाक्यैः अध्ययनविधेः अक्षरग्रहणान्तत्वं व्यवस्थापितम्। तच्च विवरणकारैः समर्थितम्॥

एवं दशसु स्थलेषु भामतीविवरणप्रस्थानयोः मतभेदः प्रदर्शितः तत्तत्स्थलविशेषप्रदर्शनपूर्वकमस्माभिः। इतोऽन्येऽपि अभिप्रायभेदाः प्रस्थानद्वयेऽपि सूक्ष्मतया विद्यमानाः सुधीभिः उन्नेयाः। एतत्प्रस्थानद्वयमपि व्याख्योपव्याख्याभिस्सह ये सम्यक् परिशीलयन्ति ते नूनमद्वैतसमयगभीरसागरपारं गमिष्यन्ति। इत एव प्रस्थानद्वयाम्भोधेः प्रमेयसारामृतानि समुद्धृत्य सिञ्चन्ति तत्तत्प्रकरणग्रन्थाम्बुधराः परश्शतं अद्वैतसिद्धान्तावलम्बिनः। तेषु केचित् मुद्रिताः। अमुद्रिताश्चानेके विद्यन्ते। ते सर्वे सम्यक् परिशीलिताश्चेत् परोत्प्रेक्षिता अद्वैतसिद्धान्तोपरि दूषणाभासा अलग्नका एवेति नियतं भायात्॥

अत्र पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां भगवत्पादैः समन्वयाधिकरणावसाने उदाहृतं 'गौणमिथ्यात्मनोऽसत्त्वे' इत्यादिश्लोकत्रयं सुन्दरपाण्ड्यप्रणीतमित्युक्तम्। सूतसंहिताव्याख्यायामपि माधवाचार्यास्तथैव वदन्ति। परं तु आशुतोषसंस्कृतग्रन्थमालायां मुद्रिते अभिनवद्रविडाचार्यापरनामकश्रीबालकृष्णानन्दसरस्वतीप्रणीते पद्यमये शारीरकमीमांसाभाष्यवार्तिके सविवरणे समन्वयसूत्रावसाने निर्दिष्टेन—

'कथितार्थपरां द्रविडार्यकृतां अपि चेति गुरुर्वदतीह कथाम् ।
महतामुदिते गदिते विदितं स्थिरनिश्चयवान् जन एष इति ॥'

इति पद्येन द्रविडाचार्याः श्लोकत्रयप्रणेतार इति ज्ञायते । तत्रैव ग्रन्थे— 'उक्तार्थे द्रविडाचार्यसम्मतिप्रदर्शनपरं 'अपि च' इत्यादिग्रन्थमवतारयति—कथितेति' इति मूलकारैरेव विवृतं चेदम् । सुन्दरपाण्ड्यः द्रविडाचार्यश्च एक इति द्विनामेति चानेन ज्ञायते । कल्पतरौ वेधाद्यधिकरणे (3-3-14) 'आह चात्र निदर्शनमाचार्यसुन्दरपाण्ड्यः' इत्युपक्रम्य 'निःश्रेण्यारोहणप्राप्यम्' इत्यादिपूर्वमीमांसासम्बन्धिश्लोकत्रयमुदाहृतम् । तच्च श्लोकत्रयं तन्त्रवार्तिकेऽपि (3-3-7) उदाहृतम् । एतेन आचार्यसुन्दरपाण्ड्यः पूर्वोत्तरमीमांसासम्प्रदायप्रवर्तकपूर्वाचार्य इति ज्ञायते । द्रविडाचार्यश्च छान्दोग्योपनिषद्विवरणात्मकसूत्ररूपवाक्यनामकब्रह्मनन्दिकृतग्रन्थस्य भाष्यकारः प्रसिद्धः । स च भगवत्पादैः भाष्ये बहुषु प्रदेशेषु स्मृतः । स च अद्वैतसम्प्रदायप्रवर्तकः । आत्रेयः ब्रह्मनन्दी च वाक्यकारः तथैव । इति मया सविस्तरं सप्रमाणोपन्यासं **द्रविडात्रेयदर्शना**भिधे ग्रन्थे निरूपितम् । अलमधिकेन ॥

एतादृशात्युत्तमग्रन्थं मुद्रापयित्वा उपकृतवतां **मद्रनगरस्थप्राच्यकोशसंरक्षणशालाधिकृतानां** अधमर्णाः सर्वेऽपि विद्वांसः । अस्य च ग्रन्थस्य संशोधने सुबहु उपकृतवद्भ्यः पण्डितप्रकाण्डेभ्यः न्यायवेदान्तशिरोमणिविरुदावहेभ्यः- एस्. आर्. कृष्णमूर्तिशास्त्रिभ्यः प्रत्युपकर्तुमशक्तः कार्तज्ञ्यमावेदयामि । ग्रन्थपरिशोधनविषये महत्यवधाने कृतेऽपि संजाताः अशुद्धीः संशोध्य निवेद्य च उपकुर्वन्तु पाठकमहाशया विद्वांस इति सविनयं साञ्जलिबन्धं च सम्प्रार्थये ॥

जगद्गुरुकृपाप्राप्तशास्त्ररत्नाकराभिधः ।
पोलकं श्रीरामशास्त्री व्यलिखद्भूमिकामिमाम् ॥

इत्थम्

**शास्त्ररत्नाकरः**
**पोलकम्, सु. श्रीरामशास्त्री,**
**मद्रनगरसंस्कृतकलाशालायां**
**साहित्यवेदान्तोपाध्यायः**

## ॥ पञ्चपादिकाविषयानुक्रमणी ॥

### जिज्ञासाधिकरणम्—1-292.

### प्रथमवर्णकम्—1-179.

पुटम्

## द्वितीयवर्णकम्—180–215

## तृतीयवर्णकम्—216-263

पुटम्

## जन्माद्यधिकरणम्—293–313

### पञ्चमवर्णकम्—293–313

## समन्वयाधिकरणम्—319-376

### अष्टमं वर्णकम्—319-330



### नवमं वर्णकम्—331-376

पृष्ठम्

# द्वितीयभागात्मक-
## पञ्चपादिकाविवरणप्रतिपाद्यासाधारणविषयाणां अनुक्रमणिका

[N. B.] [ मूलव्याख्यानरूपविवरणभागस्य विषयानुक्रमणिका मूलग्रन्थ-(पञ्चपादिका)-विषयानुक्रमणिकातोऽव्यतिरिक्तेति न पृथक् लिखिता ]

### जिज्ञासाधिकरणम्
### प्रथमवर्णकम्

पुटम्

## चतुर्थवर्णकम्

पुटम्

## शास्त्रयोनित्वाधिकरणम्

### षष्ठवर्णकम्



### सप्तमवर्णकम्



## समन्वयाधिकरणम्

### अष्टमवर्णकम्

॥ श्रीः ॥

# ॥ पञ्चपादिकायाम् ॥

## ॥ शुद्धपाठसूचिका ॥

| शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|
| वानित्यर्थः | ५ | ११ |
| न सम्भवतीत्यर्थः । | १२ | २४ |
| अतोऽविरोधाध्याय एव | १४ | १२ |
| कार्यसम्बन्धिवाचिकव्यापारप्राधान्या व्याख्या | १५ | १३ |
| स्वरूपं | ३१ | ३ |
| अतः तदग्रहण | ७२ | ३ |
| बिम्ब | १०५ | ३-५ |
| प्रतिमुद्रावत् | १०५ | ४ |
| संस्कारापायेऽपि | १०६ | १० |
| उभयत्र सत्यत्व | १०९ | ५ |
| उपाधेरज्ञानाजन्यत्वं | १११ | ९ |
| दित्यूह्यम् | १११ | २० |
| चैतन्यस्याविद्यमानत्वात् | ११५ | २३ |
| सोऽयमिति पदार्थयोरिव अवैलक्षण्यं | ११९ | ९ |
| सर्वत्राक्षसम्प्र | १३६ | ९ |
| कात्स्न्येन वा | १३६ | १३ |
| इत्यवास्तव | १३८ | ९ |
| विदधतां | १४४ | ४ |
| न— | १४६ | ७ |
| क्रमद्रष्टृत्वा | १५६ | १३ |
| परिहाराय | १८९ | ११ |
| चोद्यते यथा मन्त्रेषु | १९१ | ६ |
| मशक्नुवन्तः | १९२ | ९ |

| शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|
| गृह्येरन्निति | १९३ | २ |
| माशङ्क्य | २५६ | ७ |
| ज्ञानान्तरसिद्धार्था | ३२५ | १० |
| गौणमिथ्यात्मनः | ३७३ | ८ |

---

## ॥ पञ्चपादिकाविवरणे ॥

| शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|
| 'यदग्नये च' | ३ | २५ |
| सदात्मने | ११ | १ |
| इदानीं पञ्चमश्लोकस्य | १२ | २० |
| भावरूपाज्ञान | ९० | १७ |
| दुरवधारण | ९२ | २७ |
| प्रयोज्यत्वं | २१६ | २५ |
| प्रयुक्तं | २१९ | १७ |
| अहंकारावभासस्य | २५९ | १४ |
| आनन्तर्य | ४७६ | ३ |
| अधिकारा | ४७६ | ८ |
| ननु गौण्या | ४८० | १४ |
| प्रवृत्त्ययोगात् | ५०४ | ९ |
| प्रतिपत्त्यभावात् | ५१५ | १३ |
| यजेतेत्यादि | ५४६ | १ |
| प्रसज्यत इति | ५४७ | १८ |
| उपलभ्य | ७२८ | १६ |

---

## पञ्चपादिकाविवरणे अद्वैतसिद्धान्तोपरि भास्करतदीयैरुद्भावित-दूषणपरिशीलनस्थलानां अनुक्रमणिका

### प्रथमवर्णके



### तृतीयवर्णके



### चतुर्थवर्णके



### पञ्चमवर्णके



### अष्टमवर्णके

नवमवर्णके



## ॥ पञ्चपादिकायाम् ॥



## ॥ पञ्चपादिकाविवरणे ॥

॥ श्रीः ॥

॥ अविघ्नमस्तु ॥

# पञ्चपादिका

अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने ।
अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नमः ॥ १ ॥

---

## ॥ प्रबोधपरिशोधिनी ॥

### ॥ पञ्चपादिकाव्याख्या ॥

पुष्पेण स्वार्जितेन स्वमतफलवपुः स्वार्च्यमानः किलासी-
द्विष्णुर्नः शङ्करोऽसौ विधिरजनि निजं वेदमावेदयिष्यन् ।
इत्थं निर्णीतमार्यैः प्रणतिषु पटुना मौलिना वीतसङ्ख्यान्
वारानाराधयामो दिनमनु भगवद्विघ्नराजप्रभावम् ॥ १ ॥

सारस्वतं हि यज्ज्योतिर्व्यासशङ्करसंज्ञितम् ।
तन्नमामि सदानन्दप्रत्यग्ब्रह्मपदोदितम् ॥ २ ॥

ध्यानादानालजाग्रद्धृदयसरसिजज्ञानमैरेयधारा-
स्वाद(ज्ञस्वा)[ज्ञं स्वा]त्मतृप्तं यतिवरपरिषत्पूज्यपूज्यं यतीन्द्रम् ।

---

## ॥ तात्पर्यार्थद्योतनी ॥

### ॥ पञ्चपादिकाव्याख्या ॥

यद्देहादिविकल्पकल्पितभिदासम्भेदमाभासते
यद्वा तत्तदुपाधिभेदभजनात् कार्यव्यवस्थास्पदम् ।
भूयस्तद्विलये सति स्वयमखण्डानन्दचिन्मात्र(क)[त]ः
यच्चाभाति तदस्तु वस्तु दुरितध्वंसाय वः शाश्वतम् ॥

दिग्भ्यः संरम्भगर्भं सरभसमभि(य)[त]ः प्रक्रमे विक्रमाणां
[वा]दारब्धा यदीयाननपुटविलुठन्मानतर्कश्रवेण ।
जल्पाकाश्चित्रक्लृप्ता इव दधति पुरः कम्पविद्वेषिवेषं
तस्मै ज्ञानोत्तमाय त्रिभुवनगुरवे नित्यमस्तु प्रणामः ॥

भूयो भूयो नमस्यापरिचयपटुना मौलिना वीतसङ्ख्यान्
वारानाराधयामो दिशि दिशि भगवच्छ्रीनृसिंहस्वरूपम् ॥ ३ ॥

प्रणम्य परमानन्दं प्रणतार्तिहरं हरिम् ।
प्रत्यक्प्रबोधसिद्ध्यर्थं विभजे पञ्चपादिकाम् ॥ ४ ॥

वक्तृश्रोत्रोः सम्यक् शब्दार्थपरिस्फूर्त्यैविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनप्रभृतये अभिमतदेवतानमनमङ्गलच्छलेन अशेषस्य भाष्यस्य ब्रह्मात्मैकत्वे तात्पर्यमाह—**अनाद्यानन्देति**। अनादिश्चासावानन्दश्च अनाद्यानन्दः। कूटस्थं च तत् ज्ञानं च कूटस्थज्ञानम्। अनन्तं च तत् सच्च अनन्तसत्। अनाद्यानन्दश्चासौ कूटस्थज्ञानं च अनाद्यानन्दकूटस्थज्ञानम्। तदेवानन्तसत्। अनाद्यानन्दकूटस्थज्ञानानन्तसत्। तदेवात्मा स्वरूपं अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मा। तस्मै इति विग्रहः ॥

तटस्थमेव ब्रह्म, जीवब्रह्मणी भिन्ने विरुद्धधर्मत्वादित्याद्यनुमानात्। अतो न युक्तं तत्र तात्पर्यमित्यत्राह—**साक्षिणे इति**। अन्तःकरणस्येति शेषः। तत्त्वमस्यादिवाक्यात्, विवादपदानि शरीराणि एकेनैवात्मना आत्मवन्ति, जीवच्छरीरत्वात्, प्रतिवादिशरीरवदित्यनुमानाच्चाद्वितीयमेवेत्यर्थः। तथाऽपि नाद्वितीयं तत्, पृथिव्यादिप्रपञ्चस्य वस्तुतः सत्त्वादित्यत्राह—**अभूतद्वैतजालायेति**। "नेह नाना" इत्यादि श्रुतेर्दृश्यत्वाद्यनुमानैश्चानिर्वाच्यं जगदित्यर्थः।

अथाप्यपुरुषार्थे तात्पर्यं न युक्तमित्यत आह-**आनन्देति**। "आनन्दो ब्रह्म" इति श्रुतेः, परप्रेमास्पदत्वानुमानाच्चानन्दमित्यर्थः। आनन्दस्य विषयजत्व-

---

[ओं] नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यः नमो गुरुभ्यः। ब्रह्मणो वेदान्तप्रतिपाद्यत्वसिद्धये मुमुक्षूणां जिज्ञास्यत्वसिद्धये च परमपुरुषार्थरूपत्वं दर्शयति—**अनाद्यानन्देति** ॥ आनन्दस्य विषयेन्द्रियसंयोगसाध्यत्वदर्शनात्, सातिशयत्वेन दृष्टत्वात्, "स एको मानुष आनन्दः" इत्यादौ श्रुतत्वाच्च, लोकप्रसिद्धत्वेनापूर्वत्वाभावाच्च, वेदान्तप्रतिपाद्यत्वाभावः प्राप्त इत्याशंक्य "यो वै भूमा तत्सुखम्" इत्यादिश्रुतेर्ब्रह्मानन्दस्याद्वितीयत्वश्रवणात्, आनन्दोऽपरिच्छिन्नः नियमेनोपाधिपरामर्शाधीनभेदावभासत्वात्, आकाशगोत्वादिवदित्यनुमानेन चापरिच्छिन्नत्वावगमात् जन्मादिप्रतिभासस्य वर्णदैर्घ्यादिप्रतिभासवद्व्यञ्जकबुद्ध्युपाधिधर्मविषयत्वेनान्यथासिद्धत्वाच्च मुमुक्षूणां जिज्ञास्यत्वं वेदान्तप्रतिपाद्यत्वं च ब्रह्मानन्दस्य सिध्यतीति परिहरति—**अनादीति**। अत्रानन्दः देशतो वस्तुतश्चानवच्छिन्नः कालतोऽनवच्छिन्नत्वात्। यदुक्तसाध्यं न भवति तदुक्तसाधनं न भवति।

सातिशयत्वादिदर्शनात् लोकप्रसिद्धत्वेन अपूर्वत्वाभावाच्च न ब्रह्मरूपतेत्यत्राह—**अनादीति**। "यो वै भूमा तत्सुखम्" इत्यादिश्रुतेः, आनन्दोऽपरिच्छिन्नः उपाधिपरार्शमन्तरेणादृश्य[ भेद ]त्वादाकाशवदित्यनुमानाच्चापरिच्छेदावगमात्, आनन्दस्य जन्माद्यवभासस्याकाशादाविवाभिव्यञ्जकबुद्धिधर्मविषयतयाऽन्यथा-सिद्धत्वाच्च, नित्यत्वाद्ब्रह्मरूपतेत्यर्थः ॥

तथाऽपि तस्य मोक्षे अनवभासात् गृहमध्यनिहिताज्ञातनिधिवत् अपुमर्थ-तेत्यत्राह—**ज्ञानेति**। 'विज्ञानमानन्दम्'इत्यादावानन्दस्य स्वप्रकाशज्ञानैकरस-त्वेन श्रुतत्वात्, आनन्दोऽपरोक्षस्वभावः, अपरोक्षस्वभावात्मन्यकल्पितत्वे सति स्वसत्तायामापरोक्ष्यात् आपरोक्ष्यस्वरूपवदित्यनुमानाच्चानन्दस्यापरोक्षात्मत्वा-वगमात्, आपरोक्ष्ये सत्यपि वेद्यत्वाभावापराधेनापुमर्थत्वादर्शनाच्च पुमर्थतेत्यर्थः ॥

ज्ञानस्य क्षणिकत्वेन परिच्छिन्नत्वेन च दृष्टत्वान्नापरिच्छिन्नानन्तात्मतेत्य-त्राह—**कूटस्थेति**। "सत्यं ज्ञानमनन्तम्" इत्यादौ ज्ञानस्यानन्तत्वश्रवणात्, ज्ञानमपरिच्छिन्नम्, उपाधिपरामर्शमन्तरेणादृश्यभेदत्वादाकाशादिवदित्यनुमाना-

---

यथा घटादि, न चार्थं तथा, तस्मान्न तथा, इत्यनुमानेनानन्दस्य त्रिविधानन्त्यं स्वयमेव सिध्यतीति मत्वा सत् अनन्दाकारेणोक्तमिति द्रष्टव्यम् ॥

एवंभूतानन्दो मोक्षे अनवगतोऽबगतो वा? अनवगतत्वे, स्वपित्रादिसञ्चितगृह-मध्यनिहिताज्ञातनिधिवदपुरुषार्थः स्यात्। अवगतत्वेऽपि जन्यज्ञानेनाजन्यज्ञानेन वा? जन्यज्ञा(न) [नेन चेत् ](के) [तज्जनके]न्द्रियस्य तदाधारदेहस्य (त···हेतुत्वन्नावा) [तद्धे-त्वन्नपा]नादेश्चावस्थानप्रसङ्गात् भूमलक्षणब्रह्मप्राप्तिमोक्षासम्भवः। अजन्यज्ञानेन चेत् अनन्तानन्दस्य सदा आपरोक्ष्यप्रसङ्गः॥ किं च, वेद्यत्वाज्जडत्वानित्यत्वादिदोषप्रसङ्ग इत्या-शंक्य, 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिष्वानन्दस्य स्वयंप्रकाश(स्य) [मान] ज्ञा(ने)नै(व)कर-सत्वेन श्रुतत्वात्, आनन्दोऽपरोक्ष(स्य) [स्व]भावः, रागादिवदपरोक्षस्वभावात्मन्यकल्पि-तत्वे सति स्वसत्तायामापरोक्ष्याव्यभिचारित्वात्, आपरोक्ष्यस्वरूपवत् इत्यनुमानेन चानन्द-स्यापरोक्षस्वभावत्वं सिद्धम्। आपरोक्ष्ये सत्यपि वेद्यत्वाभावापराधेनापुरुषार्थत्वादर्शनाच्च, ज्ञानस्वभावत्वेनापरोक्ष्यं सिध्यतीत्याह—**ज्ञानेति**॥

ज्ञानस्य क्षणिकत्वेन परिच्छिन्नत्वेन च दृष्टत्वादनाद्यपरिच्छिन्नानन्दस्वरूपत्वं न स्यादित्याशंक्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिषु ज्ञानस्या(द्वितीय)[नन्त]त्वेन श्रुत-त्वात्, ज्ञानमपरिच्छिन्नं, नियमेनोपाधिपरामर्शाधीनभेदावभासत्वात्, आकाशगोत्वादिवत, इत्यनुमानेन चापरिच्छिन्नत्वावगमात् व्यञ्जकबुद्ध्युपाधिधर्मविषयत्वेन जन्मादिप्रतिभासस्या-न्यथासिद्धत्वाच्च कौटस्थ्यमेव ज्ञानस्येत्याह—**कूटस्थेति**॥

भूयो भूयो नमस्यापरिचयपटुना मौलिना वीतसङ्ख्यान्
वारानाराधयामो दिशि दिशि भगवच्छ्रीनृसिंहस्वरूपम् ॥ ३ ॥

प्रणम्य परमानन्दं प्रणतार्तिहरं हरिम् ।
प्रत्यक्प्रबोधसिद्ध्यर्थं विभजे पञ्चपादिकाम् ॥ ४ ॥

वक्तृश्रोत्रोः सम्यक् शब्दार्थपरिस्फूर्त्यैविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनप्रभृतये अभिमतदेवतानमनमङ्गलच्छलेन अशेषस्य भाष्यस्य ब्रह्मात्मैकत्वे तात्पर्यमाह—**अनाद्यानन्देति।** अनादिश्चासावानन्दश्च अनाद्यानन्दः। कूटस्थं च तत् ज्ञानं च कूटस्थज्ञानम्। अनन्तं च तत् सच्च अनन्तसत्। अनाद्यानन्दश्चासौ कूटस्थज्ञानं च अनाद्यानन्दकूटस्थज्ञानम्। तदेवानन्तसत्। अनाद्यानन्दकूटस्थज्ञानानन्तसत्। तदेवात्मा स्वरूपं अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मा। तस्मै इति विग्रहः ॥

तटस्थमेव ब्रह्म, जीवब्रह्मणी भिन्ने विरुद्धधर्मत्वादित्याद्यनुमानात्। अतो न युक्तं तत्र तात्पर्यमित्यत्राह—**साक्षिणे इति।** अन्तःकरणस्येति शेषः। तत्त्वमस्यादिवाक्यात्, विवादपदानि शरीराणि एकेनैवात्मना आत्मवन्ति, जीवच्छरीरत्वात्, प्रतिवादिशरीरवदित्यनुमानाच्चाद्वितीयमेवेत्यर्थः। तथाऽपि नाद्वितीयं तत्, पृथिव्यादिप्रपञ्चस्य वस्तुतः सत्त्वादित्यत्राह—**अभूतद्वैतजालायेति।** "नेह नाना" इत्यादि श्रुतेर्दृश्यत्वाद्यनुमानैश्चानिर्वाच्यं जगदित्यर्थः।

अथाप्यपुरुषार्थे तात्पर्यं न युक्तमित्यत आह-**आनन्देति।** "आनन्दो ब्रह्म" इति श्रुतेः, परप्रेमास्पदत्वानुमानाच्चानन्दमित्यर्थः। आनन्दस्य विषयजत्व-

---

[ओं] नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यः नमो गुरुभ्यः। ब्रह्मणो वेदान्तप्रतिपाद्यत्वसिद्ध्ये मुमुक्षूणां जिज्ञास्यत्वसिद्ध्ये च परमपुरुषार्थरूपत्वं दर्शयति—**अनाद्यानन्देति** ॥ आनन्दस्य विषयेन्द्रियसंयोगसाध्यत्वदर्शनात्, सातिशयत्वेन दृष्टत्वात्, "स एको मानुष आनन्दः" इत्यादौ श्रुतत्वाच्च, लोकप्रसिद्धत्वेनापूर्वत्वाभावाच्च, वेदान्तप्रतिपाद्यत्वाभावः प्राप्त इत्याशंक्य "यो वै भूमा तत्सुखम्" इत्यादिश्रुतेर्ब्रह्मानन्दस्याद्वितीयत्वश्रवणात्, आनन्दोऽपरिच्छिन्नः नियमेनोपाधिपरामर्शाधीनभेदावभासत्वात्, आकाशगोत्वादिवदित्यनुमानेन चापरिच्छिन्नत्वावगमात् जन्मादिप्रतिभासस्य वर्णदैर्घ्यादिप्रतिभासवद्व्यञ्जकबुद्ध्युपाधिधर्मविषयत्वेनान्यथासिद्धत्वाच्च मुमुक्षूणां जिज्ञास्यत्वं वेदान्तप्रतिपाद्यत्वं च ब्रह्मानन्दस्य सिध्यतीति परिहरति—**अनादीति।** अत्रानन्दः देशतो वस्तुतश्चानवच्छिन्नः कालतोऽनवच्छिन्नत्वात्। यदुक्तसाध्यं न भवति तदुक्तसाधनं न भवति।

सातिशयत्वादिदर्शनात् लोकप्रसिद्धत्वेन अपूर्वत्वाभावाच्च न ब्रह्मरूपतेत्यत्राह—**अनादीति**। "यो वै भूमा तत्सुखम्" इत्यादिश्रुतेः, आनन्दोऽपरिच्छिन्नः उपाधिपरार्शमन्तरेणादृश्य[ भेद ]त्वादाकाशवदित्यनुमानाच्चापरिच्छेदावगमात्, आनन्दस्य जन्माद्यवभासस्याकाशादाविवाभिव्यञ्जकबुद्धिधर्मविषयतयाऽन्यथा-सिद्धत्वाच्च, नित्यत्वाद्ब्रह्मरूपतेत्यर्थः ॥

तथाऽपि तस्य मोक्षे अनवभासात् गृहमध्यनिहिताज्ञातनिधिवत् अपुमर्थतेत्यत्राह—**ज्ञानेति**। 'विज्ञानमानन्दम्'इत्यादावानन्दस्य स्वप्रकाशज्ञानैकरसत्वेन श्रुतत्वात्, आनन्दोऽपरोक्षस्वभावः, अपरोक्षस्वभावात्मन्यकल्पितत्वे सति स्वसत्तायामापरोक्ष्यात् आपरोक्ष्यस्वरूपवदित्यनुमानाच्चानन्दस्यापरोक्षात्मत्वावगमात्, आपरोक्ष्ये सत्यपि वेद्यत्वाभावापराधेनापुमर्थत्वादर्शनाच्च पुमर्थतेत्यर्थः ॥

ज्ञानस्य क्षणिकत्वेन परिच्छिन्नत्वेन च दृष्टत्वान्नापरिच्छिन्नानन्तात्मतेत्यत्राह—**कूटस्थेति**। "सत्यं ज्ञानमनन्तम्" इत्यादौ ज्ञानस्यानन्तत्वश्रवणात्, ज्ञानमपरिच्छिन्नम्, उपाधिपरामर्शमन्तरेणादृश्यभेदत्वादाकाशादिवदित्यनुमाना-

---

यथा घटादि, न चार्थं तथा, तस्मान्न तथा, इत्यनुमानेनानन्दस्य त्रिविधानन्त्यं स्वयमेव सिध्यतीति मत्वा सत् अनन्दाकारेणोक्तमिति द्रष्टव्यम् ॥

एवंभूतानन्दो मोक्षे अनवगतोऽवगतो वा ? अनवगतत्वे, स्वपित्रादिसञ्चितगृहमध्यनिहिताज्ञातनिधिवदपुरुषार्थः स्यात्। अवगतत्वेऽपि जन्यज्ञानेनाजन्यज्ञानेन वा ? जन्यज्ञा(न) [नेन चेत् ](के) [तज्जनके]न्द्रियस्य तदाधारदेहस्य (त...हेतुत्वज्ञावा) [तद्धेत्वज्ञपा]नादेश्चावस्थानप्रसङ्गात् भूमलक्षणब्रह्मप्राप्तिमोक्षासम्भवः। अजन्यज्ञानेन चेत् अनन्तानन्दस्य सदा आपरोक्ष्यप्रसङ्गः॥ किं च, वेद्यत्वाज्जडत्वानित्यत्वादिदोषप्रसङ्ग इत्याशंक्य, 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिष्वानन्दस्य स्वयंप्रकाश(स्य) [मान] ज्ञा(ने)नै(व)करसत्वेन श्रुतत्वात्, आनन्दोऽपरोक्ष(स्य) [स्व]भावः, रागादिवदपरोक्षस्वभावात्मन्यकल्पितत्वे सति स्वसत्तायामापरोक्ष्याव्यभिचारित्वात्, आपरोक्ष्यस्वरूपवत् इत्यनुमानेन चानन्दस्यापरोक्षस्वभावत्वं सिद्धम्। आपरोक्ष्ये सत्यपि वेद्यत्वाभावापराधेनापुरुषार्थत्वादर्शनाच्च, ज्ञानस्वभावत्वेनापरोक्ष्यं सिध्यतीत्याह—**ज्ञानेति**॥

ज्ञानस्य क्षणिकत्वेन परिच्छिन्नत्वेन च दृष्टत्वादनाद्यपरिच्छिन्नानन्दस्वरूपत्वं न स्यादित्याशंक्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिषु ज्ञानस्या(द्वितीय)[नन्त]त्वेन श्रुतत्वात्, ज्ञानमपरिच्छिन्नं, नियमेनोपाधिपरामर्शाधीनभेदावभासत्वात्, आकाशगोत्वादिवत, इत्यनुमानेन चापरिच्छिन्नत्वावगमात् व्यञ्जकबुद्ध्युपाधिधर्मविषयत्वेन जन्मादिप्रतिभासस्यान्यथासिद्धत्वाच्च कौटस्थ्यमेव ज्ञानस्येत्याह—**कूटस्थेति**॥

चापरिच्छेदावगमात्, जन्मादिदर्शनस्य व्यञ्जकवृत्तिधर्मविषयतयाऽन्यथासिद्धत्वाच्च कूटस्थतेत्यर्थः ।

"असदेवेदम्" इत्यागमात्, विमतमसत् कारणत्वात् मृत्पिण्डवदित्यनुमानाच्च तदसदेवेत्यत्राह—**सदिति**। सर्वश्रुतिषु तात्पर्यात् ब्रह्मणः सत्त्वावगमात् क्वचिदसच्छब्दो गौणः। अनुमाने चासतः पिण्डस्य नृशृङ्गवत् कारणत्वाभावात् साधनविकलो दृष्टान्त इत्यर्थः ॥

सतः परिच्छिन्नत्वानित्यत्वादिदर्शनान्नापरिच्छिन्नब्रह्मरूपतेत्यत्राह—**अनन्तेति**। सतः 'सदेव सोम्य' इत्यादावपरिच्छिन्नत्वावगमात्, परिच्छेदावभासस्याकाशवदुपाधिपरिच्छेदादुपपत्तेश्चानन्ततेत्यर्थः। ज्ञानादिपदसामानाधिकरण्यस्य नीलोत्पलवद्गुणगुणित्वेन सम्भवात् ज्ञानादयो ब्रह्मणो गुणा इति एकदेशिमतमाशङ्क्याह-**आत्मन इति**। नीलोत्पलादौ भेदग्राहकाध्यक्षादिविरोधात् गौणं सामानाधिकरण्यम्। ब्रह्मणो ज्ञानादौ तु तदभावान्मुख्यत्वम्। अत एकरसं ब्रह्म गमयतीत्यर्थः ।

---

ईश्वरानन्दस्य अनादित्वे, अपरिच्छिन्नत्वे, स्वसत्तायां स्फुरणाव्यभिचारित्वेन ज्ञानस्वभावत्वेऽपि च, कदाचित् ज्ञानबाध्य(स्वशङ्कया)[त्वं स्या]दित्याशंक्य तस्य मायोपाधौ प्रतिबिम्बितत्वेन सोपाधिकानन्दत्वात् (सकर्म)[तत्त्व] ज्ञानेनोपाधिबाधे बाध्यत्वं भवेत्, इह तु बाध्योपाध्यैक्याध्यासाभावात् सत्यत्वमित्याह—**स[दि]ति** ।

सत्तायाः प्रतिपदार्थं भिन्नत्वेन परिच्छिन्नत्वेन चावभासमानत्वात् अपरिच्छिन्नानन्दस्वरूपत्वमयुक्तमित्याशङ्क्य, 'सदेव सोस्येदमग्र आसीत्' इति श्रुतिषु सतोऽद्वितीयत्वश्रवणात्, सद्भेदकस्य सत्त्वेनासत्त्वेनानिरूपणात्, पूर्वोक्तानुमानेनापरिच्छिन्नत्वावगमात्, भेदप्रतिभासस्यौपाधिकत्वेनान्यथासिद्धत्वाच्च, सतः ऐक्यमेवेत्याह—**अनन्तेति** ॥

सच्चिदानन्दानामपर्यायशब्दवाच्यत्वेन भेदमाशङ्क्य, तेषामेकत्वसाधकश्रुत्यनुमानादिविरोधात्, भेदानुमानस्य प्रकृष्टप्रकाशश्चन्द्रः घटस्य स्वरूपं, (जन्यो घटः)भिन्नो भेदः, अयमाकाशः इत्यादिष्वनैकान्तिकत्वाच्च, [लक्षणया प्रतिपा]द्यस्याखण्डैकरसत्वे[ऽपि] वाच्यरूपस्य भेदाङ्गीकारेण सिद्धसाधनत्वाच्चैकरसत्वं (स्वग)[स्वानुभव]सिद्धमित्याह—**आत्मने इति** ॥

एवंभूतस्य वस्तुनः संसारावस्था(याद्यः)[यां] योग्यत्वे सति अनुप[लं]भादनन्तसच्चिदानन्दात्मकवस्तुविपरीतपरिच्छिन्नासत्यजड[दुःखा]भिन्नप्रपञ्चस्य प्रत्यक्षादिभिरवभासमानत्वाच्च, एवंभूतं वस्तु नास्तीत्याशङ्क्य, अभूतस्यापरमार्थस्य प्रपञ्चस्यैवंभूते वस्तुन्यर्थक्रियासमर्थतया मायाकल्पितत्वेन प्रत्यक्षादिभिरवभासमानत्वात् तदविरोधित्वम्, स्वस्मिन्

**नमः श्रुतिशिरःपद्मषण्डमार्तण्डमूर्तये ।**
**बादरायणसंज्ञाय मुनये शमवेश्मने ॥ २ ॥**

---

**साक्षिणे ब्रह्मण इति** सामानाधिकरण्यात् ब्रह्मात्मैक्यमभिधेयमभ्यधायि। अत एवाभिधानाभिधेयत्वसम्बन्धोऽभ्यधायि। **अभूतद्वैतजालाय अनाद्यनन्देति** प्रयोजनं प्रादर्शि। अत एतत्परीप्सुरधिकारी निरधारीत्यूह्यम् ॥

सम्प्रति सूत्रार्थभाष्यार्थपरिस्फूर्त्योस्सूत्रकृत्प्रसादायत्तत्वात् तान् प्रणमति—**नमः श्रुतीति**। तस्याविद्वत्तया सूत्रकृत्त्वासम्भवान्न तदुपाधौ नमस्कार्येतेत्याशङ्क्य, ब्रह्मवित्त्वमाह—**मुनय इति**। विद्यासामग्र्यभावात् कथं विद्वत्तेत्यत्राह—**बादरायणसंज्ञायेति**। बदराणि यस्मिन् देशे सन्ति स देशो बादरः अयनमाश्रयो यस्य सः बादरायण इत्यन्वर्थसंज्ञावानेकान्तशीलः श्रवणमनननिदिध्यासनपौष्कल्यवानित्यर्थः। तथाऽपि परप्रतिपादनसामर्थ्याभावान्नाचार्यतेत्याशङ्क्य वेदान्तेष्वतिगूढात्माविष्करणसमर्थ इत्याह—**श्रुतिशिर इति**। अथाऽपि शमादिसहकार्यभावान्न विद्वत्ता आचार्यता चेत्यत्राह—**शमवेश्मन इति** ॥

---

कल्पिते [न] विरुद्धप्रपञ्चेन तत्कारणाविद्यया च छन्नत्वादप्रकाशमानत्वं च न विरुध्यत इत्याह—**अभूतद्वैतजालायेति** ॥

तत्पदार्थस्वरूपं शोधनद्वारेण यथावत् प्रतिपाद्य, तावता मुमुक्षोः प्रयोजनासिद्धिं मन्वानः [त्वं]पदार्थस्वरूपमप्यैक्यापरोक्ष्यसि(द्धत्वं) [द्ध्यर्थं] शोधनद्वारेण यथावन्निर्दिशति—**साक्षिणे इति**। अवस्थात्रयस्य तदन्तर्वर्तिनां सर्वेषां च सदा साक्षित्वात् तद्व्यतिरिक्तानन्दाद्वयप्रकाशचित्स्वभावः प्रत्यगात्मेति यावत् ॥

**साक्षिणे ब्रह्मणे नम इति** सामानाधिकरण्य(दर्शना)निर्देशात् संक्षेपतोऽर्थात् शास्त्रार्थनिर्देशः कृतः। **अनाद्यानन्देति अभूतद्वैतजालायेति** चैताभ्यां स्वरूपत्वेनैकत्वज्ञानात् परमानन्दाविर्भावसक(ल)[लानर्थ]बीजसंसारनिवृत्तिलक्षणमोक्षप्रयोजनं चार्थादर्शितम्। **नम इति** मुखतो मङ्गलाचरणं कृतम् ॥

मोक्षसाधनसम्यग्ज्ञानसाधनेषु भगवतः श्रवणसाधनसामग्रीपौष्कल्यं दर्शयति—**श्रुतिशिरःपद्मेति** ॥ मननाख्यसाधनपौष्कल्यमाह—**मुनये इति**। मननान्मुनिरिति निर्वचन * लक्षणनिदिध्यासनाख्यसाधनपौष्कल्यं दर्शयति—**शमवेश्मन इति**। शम एवास्य वेश्मेति, शमश्चासौ वेश्मेति वा विग्रहः ॥

---

* अत्र ग्रन्थः त्रुटितः।

नमाम्यभोगिपरिवारसम्पदं
निरस्तभूतिमनुमार्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं
विनाविनायकमपूर्वशङ्करम् ॥ ३ ॥

यद्वक्त्रमानससरःप्रतिलब्धजन्म-
भाष्यारविन्दमकरन्दरसं पिबन्ति ।
प्रत्याशमुन्मुखविनीतविनेयभृङ्गाः
तान् भाष्यवित्तकगुरून् प्रणमामि मूर्ध्ना ॥ ४ ॥

पदादिवृन्तभारेण गरिमाणं बिभर्ति यत् ।
भाष्यं प्रसन्नगम्भीरं तद्व्याख्यां श्रद्धयाऽऽरभे ॥ ५ ॥

---

इदानीं देवताभक्तिवद्गुरुभक्तेरपि विद्याप्राप्तिं प्रत्यन्तरङ्गत्वं "यस्य देवे परा भक्तिः" इत्यादिश्रुत्युक्तं शिष्यान् प्रति प्रख्यापयितुं गुरूनभिपूजयति-**नमामीति**। गुरुं विरुद्धश्लेषेण स्तुवन् प्रसिद्धशङ्करं व्युदस्यति—**अपूर्वेति**। अपूर्वत्वमापादयति **अभोगी**त्यादिपदैः। भाष्यार्थसंस्फूर्तौ भाष्यकृत्प्रसादस्याप्यपेक्षितत्वात्तमेव गुरुं भाष्यकृत्त्वोपाधौ नमस्करोति—**यद्वक्त्रेति**। वक्तुर्वावदूकतयाऽनुपजीव्यत्वात् भाष्यस्य न तत्कर्तृत्वोपाधौ नमस्कार्यतेत्याशङ्क्य आद्यपदम्। अनधिकारिभ्यो विद्योपदेष्टृत्वेनाशिष्टत्वात् अपूज्यतेत्याशङ्क्याह-**प्रत्याशमिति**। **उन्मुखत्वं** श्रद्धावत्त्वम्, **विनीतत्वं** त्वव्याजं गुरुशुश्रूषाद्यङ्गानुष्ठातृत्वम्। दुष्प्रतिग्रहत्वादशिष्टत्वमाशङ्क्याह—**भाष्यवित्तकेति** ॥

---

**नमामीति** श्लोको **भाष्यकारस्ये**श्वरेण विरुद्धश्लेषाभिधायित्वेन योज्यः। **विनाविनायकमिति** विघ्नकर्त्रा विना वर्तत इति। अथ वा विनाकृताः विनायकाः बौद्धाः येन स तथोक्तः ॥

**उन्मुखत्वं** श्रद्धावत्त्वम्। **विनीतत्वं** नाम सदाचारवत्त्वम्। **विनेयत्वं** नाम व्याजं विहाय गुरुशुश्रूषादिसाधनकलापानुष्ठानेन श्रवणादिकर्तृत्वम् ॥

**'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यादि 'अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः' इत्यन्तं भाष्यं, 'अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इत्यनेन**

---

यत्कार्यमुद्दिश्य मङ्गलाचरणं कृतं, तन्निर्दिशति—**पदादीति**। पदच्छेदपदार्थोक्तिविग्रहवाक्ययोजनानामविषयत्वादव्याख्येयत्वं व्यासेधति पूर्वार्धेन। असमर्थसमासावाचकपदप्रयोग( दुर )[ दूरा ]न्वयादिदोषवत्त्वादव्याख्येयत्वमाशङ्क्याह—**प्रसन्नेति**। तर्हि आक्षेपसमाधानानर्हत्वादव्याख्येयत्वमित्यत्राह—**गम्भीरमिति**। तथाऽप्युद्धतेनान्यथाव्याख्यानसम्भवात् त्वया न व्याख्येयमित्यत्राह—**श्रद्धयेति**।

यदि **भाष्यव्याख्या** प्रारभ्यते, तर्हि **युष्मदस्मदित्यादिलोकव्यवहार** इत्यन्तो ग्रन्थः सूत्रार्थाप्रतिपादकत्वेनाभाष्यत्वान्न व्याख्येय इत्याशङ्कां शमयन्, आद्यभाष्यद्वयस्य विषयप्रयोजनोपपादने तात्पर्यमाह—**युष्मदस्मदिति**। **लोकव्यवहार इत्यन्तं भाष्यं विषयं प्रयोजनं च प्रतिपादयती**त्युत्तरत्र सम्बध्यते, विषयप्रयोजनशब्दयोर्द्वितीयान्ततया विपरिणम्य अनुषङ्गात्। **भाष्य**मित्यत्र तत्पदं च द्रष्टव्यमित्येके। स्वार्थसाधनेऽप्यक्षमं, भाष्यद्वयमेव कथं विषयप्रयोजने प्रतिपादयति, कथं च आहेत्यादेर्भाष्यत्वमित्यत्राह—**अस्यानर्थहेतो**रित्यादि-**पर्यवस्यदि**त्यन्तेन। विषयादिसाधकाध्यासस्य साधकानि लक्षणसम्भावनाप्रमाणानि वदता **भाष्येण** सह लक्षणादिभिः स्वार्थमध्यासं साधयित्वा विषयप्रयोजने प्रतिपादयतीत्यर्थः॥

अध्यासभाष्यस्य प्रयोजनभाष्यस्य च अध्यासकथनेन वेदान्तविषयादिकथनेन च विचारशास्त्रीयविषयादिसाधने सव्यवधानत्वसाम्यात् सहोपादानं **आरभ्यन्त इत्यनेन पर्यवस्यदिति** कृतम्। **सर्वलोकप्रत्यक्ष** इत्यनेन पर्यव-

---

**भाष्यस्य** पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना [इत्यादिव्याख्या](दि)विषयत्वं दर्शयति—दर्शयति—**पदादीति**। असमर्थसमासावाचकपदप्रयोगदूरान्वयादिदोषरहितत्वं दर्शयति—**प्रसन्नेति**। आक्षेपसमाधानविषयत्वमाह—**गम्भीरमिति**॥

मङ्गलाचरणस्य भाष्यव्याख्यानं प्रयोजनत्वेन निर्दिष्ट(:)[म्।] भाष्यस्य भाष्यलक्षणवत्त्वाभावादभाष्यत्वेन व्याख्यानानर्हत्वाशङ्कायां तद्व्युदा(सेन सूत्रार्थ)[साय आह-**शास्त्र-**

**भाष्येण पर्यवस्यत् शास्त्रस्य विषयः प्रयोजनं चार्थात् प्रथमसूत्रेण सूत्रिते इति प्रतिपादयति। एतच्च 'तस्मात् ब्रह्म जिज्ञासितव्यम्' इत्यादिभाष्ये स्पष्टतरं (भाष्यकारेणोक्तम्)॥**

---

स्यदित्येव विवक्षितमिति द्रष्टव्यम्। यद्वा विषयप्रयोजनाख्यसाध्यस्य प्रयोजनभाष्ये निर्देशाद्वा तेन पर्यवस्यदित्युक्तमित्यूह्यम्॥

असूत्रीयविषयप्रयोजनयोः प्रतिपादनेन कथं भाष्यत्वम्, कथं च तयोस्तात्पर्यं भाष्यस्येत्यत्राह—**विषयः प्रयोजनं च सूत्रिते इति**। यस्मात् सूत्रिते, तस्मात् तयोः प्रतिपादकस्य भाष्यत्वाद्व्याख्येयत्वं, तयोः तात्पर्यं च भाष्यस्य भवेदित्यर्थः। विषयप्रयोजने सूत्रार्थत्वेन न दृश्येते इत्यत्राह-**अर्थादिति**। अत्र किं ज्ञापकमित्याकाङ्क्षायां, प्रथमसूत्रेण प्रवर्तकार्थपरेण प्रवृत्त्यङ्गत्वेन सूत्रिते इत्याह—**प्रथमेति**॥

यदि सूत्रिते विषयप्रयोजने, तर्हि तयोः सूत्रस्य व्यापारं दर्शयित्वा भाष्यकृता ते मुखतो वर्णनीये। अन्यथा सूत्रभाष्यकारयोः तत्रातात्पर्यापातादित्यत्राह—**एतच्चेति। तस्मात् ब्रह्म जिज्ञासितव्यमित्यादिभाष्ये स्पष्टतरं** भाष्यकारेणोक्तमिति शेषः। भाष्यकारेणोक्तमिति त्वया प्रतिपाद्यते चेत्, तर्हि भष्यकृता नोक्तमित्यत्राह—**स्पष्टेति**। भाष्यकृतोक्तं तत्स्पष्टमिति मयोच्यत इत्यर्थः। तर्हि भाष्यकारस्यास्पष्टोक्तिरित्यत्राह—**तरमिति**। भाष्यकृता स्पष्टमुक्तम्। स्पष्टतरमुक्तमिति मया प्रतिपाद्यते। एतावत् टीकाकृत्यम् अन्यथा तद्वैयर्थ्यम्। स्पष्टत्वं च मुखतः कथनम्। स्पष्टतरत्वं च तत्र युक्तिप्रदर्शनमित्यूह्यम्॥

---

**स्य] विषयः प्रयोजनं चेति**। विषयप्रयोजने सूत्रार्थत्वेन न दृश्येते इत्यत आह—**अर्थादिति**। अर्थात् सूत्रिते इत्यत्र किं प्रमाणमित्यपेक्षायां, प्रथमसूत्रेण प्रवर्तकार्थपरेण (सूत्रेण) प्रवृत्त्यङ्गत्वेन ते सूत्रिते इत्याह—**प्रथमसूत्रेणेति**। भाष्यकारेणोक्तं चेदिदमस्माभिरेव द्रष्टुं शक्यते, किमिति भवद्भिः प्रदर्श्यते इत्यत्राह—**स्पष्टमिति**। तर्हि भाष्यकारस्यास्पष्टोक्तिलक्षणदूषणमुद्भावितमित्याशंक्य, भाष्यकारत्वादेव तत्र स्पष्टं प्रदर्शितम्। वयं तु स्पष्टतरं प्रदर्शयिष्याम इत्याह—**स्पष्टतरमिति**॥

**अत्राह । यद्येवं एतावदेवास्तु भाष्यम् ' अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते ' इति । तत्र 'अनर्थहेतोः प्रहाणाय' इति प्रयोजननिर्देशः । 'आत्मैकत्वविद्याप्रतिपत्तये ' इति विषयप्रदर्शनम् । किमनेन ' युष्मदस्मद्' इत्यादिना 'अहं मनुष्यः' इति देहेन्द्रियादिषु अहं ममेदमित्यभिमानात्मकस्य लोकव्यवहारस्य अविद्यानिमित्तत्वप्रदर्शन-**

---

प्रथमटीकोक्तमेवाक्षेपसमाधानाभ्यां स्पष्टीकर्तुं, यदि विषयप्रयोजनप्रतिपादनात् भाष्यं, तर्ह्यस्यानर्थहेतोरित्याद्येव भाष्यमित्याशङ्कते—**यद्येवमिति** । **एतावदि**त्यध्यासभाष्यमुक्तमिति भ्रान्तिं व्युदस्यति—**अस्यानर्थहेतोरिति** । कुत इत्यत्राह---**तत्रेति** । अस्यानर्थहेतोरिति भाष्यवत् पूर्वभाष्यमपि विषयादिप्रतिपादकमिति । नेत्याह—**अहं मनुष्य इत्यादिना** । तथाऽपि सूत्रितविषयप्रयोजनसिद्धिहेतुतया वर्णनीयस्य बन्धाध्यासस्य प्रतिपादकत्वाद्भाष्यत्वं स्यादिति परिहरति—**उच्यत इति** ॥

ब्रह्मज्ञानाय विचारकर्तव्यतासूचकत्वात् न सूत्रिते विषयप्रयोजने इत्य-

---

अर्थात् सूत्रितविषयप्रयोजनसमर्थनपरत्वादेवास्य भाष्यत्वं भवेच्चेदित्याह—**यद्येवमिति** ॥ **एतावदि**त्युक्ते प्रकृतभाष्यविषयत्वं प्राप्तं पर्युदस्य विवक्षितभाष्यविषयत्वं दर्शयति—**अस्यानर्थहेतोरिति** । विषय(ादि)प्रयोजनप्रतिपादकं भाष्यत्वेनाङ्गीकृतं चेत् पूर्वभाष्यस्यापि विषयप्रयोजनयोस्तात्पर्यवत्त्वेन भाष्यत्वमस्त्वित्याशङ्क्य, शक्तितात्पर्ययोरन्यतरेणापि पूर्वभाष्यं विषयप्रयोजनस्पर्शि न भवति अर्थान्तरपरत्वादित्याह—**किमनेनेति** ॥

अहंममाभिमानयोर्विरुद्धत्वेनैकविषयत्वासम्भवाद्देहेन्द्रियादिविषयाहंममाभिमानस्याविद्यात्मकत्वप्रदर्शनपरस्य भाष्यस्यानर्थक्यं प्राप्तम्, देहेऽहमभिमानः, इन्द्रियेषु ममाभिमान इति व्यवस्थया विषयभावेऽपि, देहोऽहमित्यभिमानाभावात् तस्याविद्यात्मकत्वप्रदर्शनपरस्य पुनरप्यानर्थक्यं प्राप्तम् , देहमात्रेऽहमभिमानाभावेऽपि मनुष्यत्वकृशत्वादिविशिष्टे अहमभिमानस्य सम्भवादानर्थक्याभावेऽपि, अध्यासमाक्षिप्य लोकव्यवहारस्याविद्यात्मकत्वप्रदर्शनात् पुनरप्यानर्थक्यं प्राप्तम् , अध्यासलोकव्यवहारयोरेकत्वान्न प्राप्नोतीत्येतदर्थजातमाह—**अहं मनुष्य इत्यादिना** ॥

विषयप्रयोजनयोस्तद्धेतुभूताध्यासस्य चासूत्रितत्वात् तत्समर्थनपरस्य भाष्यत्वं न सिध्यतीत्याशङ्क्य, तेषां सूत्रितत्वप्रकारं दर्शयति—**ब्रह्मज्ञानं हीत्यादिना** । **ब्रह्मज्ञानं**

**परेण भाष्येण। उच्यते—ब्रह्मज्ञानं हि सूत्रितं अनर्थहेतुनिबर्हणम्। अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वम्। तत् यदि वस्तुकृतं न ज्ञानेन निबर्हणीयम्। यतः ज्ञानं अज्ञानस्यैव**

---

त्राह—**ब्रह्मेति**। यत्कामनानन्तरं यत्र प्रवृत्तिरुपदिश्यते, तत्तस्य काम्यस्य साधनमिति न्यायात्, मुमुक्षोर्ब्रह्मज्ञानाय विचारकर्तव्यतासूत्रणसामर्थ्यादधिकारिविशेषणं काम्यमानानर्थात्यन्तिकोच्छित्तिर्ज्ञानद्वारा विचारस्य प्रयोजनमिति सूत्रयितव्ये, हेतूच्छित्तौ हेतुमत आत्यन्तिकोच्छित्तिरिति निश्चित्य विचारसाध्यज्ञानमनर्थहेतुनिवर्तकमिति सूत्रितम्। अतस्तत्सूत्रणसामर्थ्यात् ज्ञानेनानर्थस्यात्यन्तिकोच्छित्तिर्विचारस्य प्रयोजनत्वेन सूत्रितेत्यर्थः। यद्वा यत्कामनानन्तरं यत्र प्रवृत्तिरुपदिश्यते, तत्तस्य काम्यस्य साधनमिति न्यायात्, मुमुक्षोर्ज्ञानाय विचारकर्तव्यतासूत्रणसामर्थ्यात् काम्यमानानर्थनिवृत्तिर्ज्ञानद्वारा विचारस्य प्रयोजनत्वेन सूत्रितेत्यर्थः। अत्र **ब्रह्मज्ञानं हीति** यज्ज्ञानेन एकविषयो यो विचारः तस्य तज्ज्ञानजनकत्वप्रसिद्धेः, ब्रह्मज्ञानाय विचारकर्तव्यतासूत्रणसामर्थ्यात् विचारस्य ब्रह्मविषयत्वं सूत्रितमिति विषयस्य सूत्रितत्वमुक्तं द्रष्टव्यम्।

तर्हि सूत्रस्यानेकार्थपरत्वात् वाक्यभेद इत्याशङ्क्य, विश्वतोमुखत्वस्य सूत्रलक्षणत्वान्न दोष इत्याह-**सूत्रितमिति**। अनर्थो नरकपातादिरन्यः। तस्य विद्याव्यावर्त्यत्वसूचनात् कथं देहाद्यवभासस्य मिथ्यात्वं साध्यत इत्यत आह-**अनर्थश्चेति**। नरकपातादेरन्योन्यव्यभिचारात् भोक्तृत्वं साक्षादनर्थः, तद्धेतुत्वाद्देहाद्यभिमानादिरनर्थ इत्यर्थः। निवर्ततां तर्हि वास्तवमेव भोक्तृत्वं ज्ञानेन, सेतुदर्शनेनेव पापम्। अतः कथमध्यासस्य प्रयोजनसिद्धिहेतुतेत्यत्राह-**तद्यदीति**।

---

ब्रह्मात्मैकत्वज्ञानं **हि सूत्रित**मिति विषयस्य सूत्रितत्वं दर्शितम्। **अनर्थहेतुनिबर्हणमिति** प्रयोजनस्य सूत्रितत्वं दर्शितम्। **अनर्थहेतुनिबर्हणं ज्ञानं हि सूत्रित**मिति बन्धस्याविद्योपादानत्वेन अविद्यात्मकत्वं सूत्रितं दर्शितम्। **सूत्रितं** हीत्यनेनैतस्यार्थजातस्य सूत्रणसामर्थ्यं सूत्रस्य [दर्शितं] द्रष्टव्यम्। नरकपातादिष्वपि भोक्तृत्वं साक्षादनर्थः, तत्साधनत्वात् कर्तृत्वं, तत्साधनत्वात् प्रमातृत्वमिति द्रष्टव्यम्॥

सेतुदर्शनादेः सत्यभूतदुष्कर्मनिवर्तकत्वदर्शनात ज्ञाननिवर्त्यत्वे अज्ञानात्मकत्वमप्र[योजकमि] त्याशङ्क्य, ताम(नुव)[पनु]दति—**तद्यदीति**। विन्ध्यादुत्तरदेशमारभ्य सङ्कल्पितव्रतकलापवत(स्सत्य)[स्सेतु]पर्यन्तसङ्कल्पपूर्वकगमनमेव तन्निवर्तकं न चक्षुस्सम्पा-

निवर्तकम् । तत् यदि कर्तृत्वभोक्तृत्वं अज्ञानहेतुकं स्यात्, ततः ब्रह्मज्ञानं अनर्थहेतुनिबर्हणं उच्यमानं उपपद्येत । तेन सूत्रकारेणैव ब्रह्मज्ञानं अनर्थहेतुनिबर्हणं सूचयता अविद्याहेतुकं कर्तृत्वभोक्तृत्वं प्रदर्शितं भवति । अतः तत्प्रदर्शनद्वारेण सूत्रार्थोपपत्त्युपयोगितया सकलतन्त्रोपोद्घातः प्रयोजनमस्य

---

वास्तवत्वे ज्ञानादनर्थबन्धनिवृत्तेः अयोगात् ज्ञानस्य अनर्थहेतुनिवर्तकत्वं सूत्रितं न स्यादित्यत्र हेतुः **यत इति** । इति व्याप्तिरिति शेषः । सङ्कल्पपूर्वकसेतुगमनादिक्रियाया एव पापनिवर्तकत्वम्, न चक्षुर्जन्यज्ञानस्य, अन्धस्यापि पापव्यावृत्तेरित्यर्थः ।

कदा तर्हि ज्ञानस्य सूत्रितं निवर्तकत्वं युक्तं स्यादित्यत्राह-**तद्यदि कर्तृत्वभोक्तृत्वमिति** । तर्हि सूत्रितप्रयोजनसिद्धिहेतुत्वादध्यासस्य सोऽपि सूत्रितव्य इत्याशङ्कां व्युदस्यन् तत्र फलमाह-**तेनेति** । तर्हि अध्यासस्य सूत्रार्थत्वाद्विषयादिसिद्धिहेतुतया वर्णनीयत्वं गतमित्याशङ्कां निरस्यंस्तत्र फलमाह-**अत इति** । सूत्रिताविद्याहेतुकत्वप्रदर्शनद्वारेण, सूत्रार्थो विचारकर्तव्यता उपपद्यते याभ्यां विषयप्रयोजनाभ्यां, ते सूत्रार्थोपपत्ती, तत्सिद्धिहेतुतया सोऽध्यासो वर्णनीय इति शेषः ।

सूत्रेण प्रथमप्रतिपन्नं प्रतिपाद्यमर्थं उल्लङ्घ्य किमिह चरमप्रतिपन्नमार्थिकाध्यासं प्रथमं वर्णयति भाष्यकार इत्यत्राह—**सकलेति** । **तन्त्रमिति** तन्त्रार्थो ब्रह्मात्मैकत्वम् । प्रतिज्ञां हृदि कृत्वा प्राक्प्रतिपाद्यो **हेतुरुपोद्घातः** । अस्तु

---

दितज्ञानम्, अन्धस्यापि पापनिवृत्तिदर्शनादिति । (दर्शनं भुङ्क्त्वा) [दर्शनं स्पर्शनं भक्त्या ।] अनन्यथासिद्धान्वयव्यतिरेकप्रमाणेन अज्ञाननिर्मितत्वेनाज्ञानत्वेन वा अज्ञानात्मकत्वमेव [ज्ञाननिवर्त्यत्वे]प्रयोजकमित्याह—**न ज्ञानेनेति** ॥

**सूत्रार्थोपपत्त्युपयोगितयेति** । सूत्रार्थो विचारकर्तव्यता, सा उपपद्यते याभ्यां विषयप्रयोजनाभ्यामिति ते विषयप्रयोजने सूत्रार्थोपपत्ती, तयोः सिद्ध्युपयोगितया, कर्तृत्वादिबन्धस्याविद्यात्मकत्वप्रदर्शनद्वारेणाध्यासात्मकत्वं वर्णनीयमिति शेषः । सकलतन्त्राख्यशास्त्रारम्भस्य उपोद्घातो, हेतुः । स तु विषयप्रयोजनतद्धेत्वध्यासलक्ष(णं)[णः।] तत्समर्थनमस्य

**भाष्यस्य । तथा चास्य शास्त्रस्य ऐदम्पर्यं, सुखैकतान-सदात्मककूटस्थचैतन्यैकरसता संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति वेदान्ताः पर्यवस्यन्तीति, प्रतिपादितम् । तच्च अहं कर्ता सुखी दुःखी इति प्रत्यक्षाभिमतेन अबाधित-**

---

प्रयोजनसिद्धिहेतुरध्यासः, तन्त्रार्थात्मकविषयसिद्धिहेतुः कथमित्याशङ्क्य, तद्वक्तुं, यथा तत्सिद्धिहेतुः, तथा तन्त्रार्थः तत्रैदम्पर्यं च दर्शितमित्याह— **तथाचेति** ।

तदेवैदम्पर्यं दर्शयति— **सुखैकतानेत्यादिना** । **अनाद्यानन्दे**त्यस्यार्थमाह— **सुखैकतानेति** । **कूटस्थज्ञाने**त्यस्यार्थं **कूटस्थचैतन्येति** । **अनन्तसदि**त्यस्यार्थं **सदात्मकेति** । सर्वमभेदेनाप्नोतीति निर्वचनादात्मशब्देनानन्तत्वमुक्तं द्रष्टव्यम् । **आत्मन** इत्यस्यार्थमे**करसतेति** । **साक्षिण** इत्यस्यार्थं **संसारित्वाभिमतस्येति** । **साक्षिणे ब्रह्मण** इति सामानाधिकरण्यस्यार्थं **आत्मनः स्वरूपमिति** । **अभूतद्वैतजालाये**त्यस्यार्थमद्वैतस्य पारमार्थिकत्वकथनेनाह— **पारमार्थिकमिति** । ब्रह्मात्मैकत्वे वेदान्ताः पर्यवस्यन्तीति यदिदं वेदान्तशास्त्रस्यैदम्पर्यं, तत् सूत्रभाष्यकाराभ्यां **प्रतिपादित**मित्यर्थः ।

ततः किमिति चेत् ऐदम्पर्याख्यसमन्वयस्य तन्त्रार्थस्य चाध्यक्षादिविरोधपरिहारार्थत्वादध्यासः तन्त्रार्थसाधकः । स प्रथमं वक्तव्य इत्याह- **तच्चेति** ।

---

प्रयोजनमित्यर्थः । **तथा चेति** । यथा प्रयोजनस्वरूपसिद्धिहेतुरध्यासः, तथा विषयप्रमितिसिद्धिहेतुश्च भवतीत्यर्थः ॥

**अनाद्यानन्द**पदस्यार्थमाह— **सुखैकतानेति** । **कूटस्थज्ञाने**त्यस्यार्थमाह— **कूटस्थचैतन्येति** । **अनन्तसदि**त्यस्यार्थमाह— **सदात्मेति** । सर्वमाप्नोतीत्यात्मेति निर्वचनादात्मशब्दोऽनन्तशब्दपर्यायो द्रष्टव्यः । **आत्मने** इत्यत्रात्मशब्दस्यार्थमाह— **एकरसतेति** । **साक्षिणे** इत्यस्यार्थमाह— **संसारित्वाभिमतस्येति** । साक्षित्वादेव साक्ष्यसंसार्यात्मत्वं वस्तुनो[तो] न सम्भवतीत्यतः **साक्षिणे ब्रह्मणे** इति सामानाधिकरण्यार्थमाह— **आत्मनः स्वरूपमिति** । **अभूतद्वैतजालाये**त्यस्यार्थमाह— **पारमार्थिकमिति** । संसारद्वैतजालस्य मायामयत्वादेवात्मनोऽपरमार्थस्वरूपं तत् । इदमेव तु सदा पारमार्थिकं स्वरूपमित्यर्थः । इ(दं)[त्थं]शब्दार्थो दर्शितः । इदानीं तत्परत्वं दर्शयति—

कल्पेन अवभासेन विरुध्यते। अतः तद्विरोधपरिहारार्थं ब्रह्म-स्वरूपविपरीतरूपं अविद्यानिर्मितं आत्मन इति यावत् न प्रतिपाद्यते, तावत् जरद्गवादिवाक्यवदनर्थकं प्रतिभाति। अतः तन्निवृत्त्यर्थं अविद्याविलसितं अब्रह्मरूपत्वं आत्मन इति प्रतिपादयितव्यम्। वक्ष्यति च एतत् अविरोधलक्षणे जीव-प्रक्रियायां सूत्रकारः 'तद्गुणसारत्वात्' इत्यादिना॥

---

अहमित्यनन्तत्वविरुद्धं परिच्छिन्नत्वमाह। **कर्तेति** कूटस्थत्वविरुद्धम्। **सुखीति** सुखरूपविरुद्धं, **दुःखीति** सुखैकतानविरुद्धमाह। तस्यावभासस्य विरोधित्वसामर्थ्यमाह-**प्रत्यक्षेति**। तर्हि बाधकत्वमेवेत्यत्राह-**अभिमतेति**। तस्य बाध्यत्वादविरोधकत्वमित्यत्राह **अबाधितेति**। पुनरपि बाधकत्वं तर्हीत्यत्राह **कल्पेनेति**। भेदशास्त्रेष्वबाधितत्वेन साधितेनेत्यर्थः। शास्त्रमेव, प्रत्यक्षादिकं तदभिमतं च बन्धमाभासीकृत्य ब्रह्मात्मैकत्वं प्रमापयिष्यति, अतो न पृथगध्यासो वाच्य इत्यत्राह-**यावन्नेति**। विषयाद्यसम्भावनादिग्रस्ततया स्वार्था-प्रमापकः स्यादित्यर्थः। अतो विरोधनिवर्तकत्वेनाध्यासो वक्तव्य इत्याह—**अत इति**। यदि शास्त्रार्थप्रमापकोऽध्यासः, तर्हि मुखतः सूत्रितव्यः, तस्य प्राधान्यात्, अन्यथा तत्रातात्पर्यप्रसङ्गादित्यत्राह—**वक्ष्यति चेति**।

---

**इति वेदान्ता इति**। **अहमिति** पदेनानन्तत्त्वाकारविरुद्धपरिच्छिन्नाकार उच्यते। **कर्तेति** कूटस्थचिदाकारविरुद्धाकारः। **सुखीति** सुखरूपविपरीताकारः। **दुःखीति** सुखैकतानविरुद्धाकार उच्यते। **तच्च** ऐदम्पर्यमेवंभूते**न अवभासेन विरुध्यते**। एतेनेदं चैक्यलक्षणं विरुध्यत इति **च** शब्दार्थः। तस्यावभासस्य विरोधितासामर्थ्यमाह—**प्रत्यक्षेति**। तर्हि प्रत्यक्षत्वात् श्रौतज्ञानबाधकत्वमेव प्राप्तमित्याशङ्क्याह—**अभिमतेति**। प्रत्यक्षाभिमतस्य तस्य रूप्यज्ञानवत् बाध्यत्वाद(ति)बाधकत्वमेव प्राप्तमिति, नेत्याह—**अबाधितकल्पेनेति**। व्यवहारावस्थायामबाधितत्वादपरोक्षप्रतिभासत्वाच्चार्थतोऽबाधितत्वमेवा-पतितमिति शङ्कां व्युदस्यति—**अवभासेनेति**। अवमतो भासोऽवभासः वर्णह्रस्वत्वादि-प्रतिभासवदौपाधिकधर्मविषयः? किं वा स्वाभाविककर्तृत्वादिविषयः? इति सन्दिग्धत्वमव-मतत्वं नाम॥

**यद्येवमेतदेव प्रथममस्तु । नैवम्—अर्थविशेषोपपत्तेः । अर्थविशेषे हि समन्वये प्रदर्शिते तद्विरोधाशङ्कायां तन्निराकरणमुपपद्यते । अप्रदर्शिते पुनः समन्वयविशेषे तद्विरोधाशङ्का तन्निराकरणं च निर्विषयं स्यात् । भाष्यकारस्तु तत्सिद्धमेव आदिसूत्रेण सामर्थ्यबलेन सूचितं सुखप्रतिपत्त्यर्थं वर्णयति इति न दोषः ॥**

---

तर्ह्युपोद्घातत्वात् प्रथममध्याससूत्रं वाच्यमित्याशङ्कते—**यद्येवमिति** । प्रतिपादनप्रक्रियायां प्रवृत्तत्वात् सूत्रकाराणां, तैः समन्वये दर्शिते तद्विरोधाशङ्कानिरासौ युक्तौ । अन्यथा तयोर्हि निर्विषयत्वापातात् । नैवं भाष्यकारस्य, तस्योपोद्घातप्रक्रियायां प्रवृत्तत्वादिति परिहरति—**नै[मै]वमिति** । एतद्व्यनक्ति **अर्थविशेष इति** । तर्हि भाष्यकृता यथासूत्रं प्रवर्तितव्यं, नोपोद्घातप्रक्रियायाम्, अतोऽविरोधायैव विरोधाशङ्कानिरासौ कर्तव्यौ भाष्यकृतापीत्यत्राह-**भाष्यकारस्त्विति** । तत्र सिद्धमिह वर्णयन् भ्रान्तस्यादित्यत्राह-**प्रथमसूत्रेणेति** [**आदिसूत्रेणेति**] । विचारकर्तव्यतापरं तदित्यत्राह—**सामर्थ्येति** । तदपि विषयादिपरमित्यत्राह **बलेनेति** । विचारकर्तव्यतानुपपत्त्या विषयाद्युपपत्तिः सूत्रिता । तदनुपपत्त्या चाध्यास इत्यर्थः । तर्हि प्रथमसूत्रे यथासूत्रमेव प्रवर्तितव्यं भाष्यकृतेत्यत्राह-**सुखप्रतिपत्त्यर्थमिति** । झटिति विषयादि प्रतिपद्य प्रवर्तितुमित्यर्थः । अतो भाष्यत्वाद्व्याख्येयत्वं सिद्धम् ।

---

अध्यायसङ्गतिमाह—**अविरोधेति** । अधिकरणसङ्गतिमाह—**जीवप्रक्रियायामिति** । **प्रथमसूत्रेण** ब्रह्मज्ञानाय विचारः कर्तव्य इत्यर्थविशेषे प्रतिज्ञाते, ब्रह्म किंलक्षणमित्याकाङ्क्षायाम् "जन्माद्यस्य यतः" इति सूत्रेण तल्लक्षणे प्रतिपादिते, एवम्भूते ब्रह्मणि किं प्रमाणमित्याकाङ्क्षायां ['शास्त्रयोनित्वात्'] "तत्तु समन्वयात्" इति[त्यादि]-सूत्रैर्वेदान्तवाक्येषु प्रमाणत्वेनोपन्यस्तेषु, पश्चाद्वेदान्तानां प्रत्यक्षादिविरोधाशङ्कायां तन्निरासाय सूत्रकारेणाविरोधलक्षणेऽध्याससूत्रं प्रणेतव्यमित्याह—**मैवमिति** । **सामर्थ्यबलेनेति** । विचारकर्तव्यतायाः सामर्थ्यलक्षणानुपपत्त्या सूत्रिते विषयप्रयोजने, तयोः सामर्थ्यविगतयोरनुपपत्त्याख्यबलेन [बन्ध] मिथ्यात्वं **सूचित**मित्यर्थः ॥

**ननु च ग्रन्थकरणादिकार्यारम्भे कार्यानुरूपं इष्टदेवतापूजानमस्कारेण बुद्धिसन्निधापिताथवृद्ध्यादिशब्दैः दध्यादिदर्शनेन वा कृतमङ्गलाः शिष्टाः प्रवर्तन्ते। शिष्टाचारश्च नः प्रमाणम्। प्रसिद्धं च मङ्गलाचरणस्य विघ्नोपशमनं प्रयोजनम्। महति च निःश्रेयसप्रयोजने ग्रन्थमारभमाणस्य विघ्नबाहुल्यं**

---

अथाशेषमपि भाष्यमव्याख्येयमनाप्तोक्तत्वात् इति चोदयति **नन्वित्यादिना**। अनाप्तोक्तत्वं वक्तुं, मङ्गलस्य कर्तव्यतां साधयति-**ग्रन्थकरणादीति। देवतापूजापूर्वकनमस्कारेण कृतमङ्गलाः प्रवर्तन्ते** इत्युक्ते, नहि प्राकृतेन कृतमाचार्येण कर्तव्यमित्यत्राह— **शिष्टा इति**। नैतद्दृश्यते 'अथातो धर्मजिज्ञासे'त्यादावित्यत्राह— **अथवृद्ध्यादिशब्दैरिति**। तर्हि (नियमो) वाच्य इत्याशङ्क्य, (बुद्धिपूर्वं) बुद्धिस्थे नेत्याह–**बुद्धिसन्निधापितेति**। नैतदपि दृश्यते कृष्यादावित्यत्राह— **दध्यादीति**। तर्हि दध्यादिदर्शनं बहिः पूजा वा कर्तव्येत्यत्राह— **कार्यानुरूपमिति**। वाचिकव्यापारेषु कायसम्बन्धवाचिकव्यापारप्राधा[न्या](व्या)ख्या।

अथवृद्धिनमस्क्रियादिशब्दोच्चारणेन अन्यत्रान्यथा च प्रवर्तन्ते। अतः तदिह कर्तव्यमित्यर्थः। न कर्तव्यं शिष्टैः कृतमपि, निष्ठीवनादेरप्यस्माभिः कर्तव्यत्वापातादित्यत आह–**शिष्टाचारश्चेति**। आचारो धर्मबुद्ध्यानुष्ठेयं कर्म। तत् कर्तव्यं श्रुतिस्मृतिसिद्धत्वादित्यर्थः। न कर्तव्यं फलाभावादित्यत्राह— **प्रसिद्धं चेति**। नास्त्यत्र विघ्नप्राप्तिः अल्पारम्भत्वादित्यत्राह— **महति चेति**।

---

स(र्वे)[र्वे सन्तु] कृतमङ्गलाः। सर्वैरज्ञैः कृतमाचार्येणापि[किमर्थं] कर्मानुष्ठेयमित्यत आह—**शिष्टेति**। आचार्ये(ण)[णापि] मङ्गलाचारणं कृतमित्याशङ्क्य चिकीर्षितकार्यानुरूपं कर्तव्यमित्याह—**कार्यानुरूपमिति**। कार्यव्यक्तीनां आनन्त्यादस्येदमिति नियमासम्भवात् कार्यानुरूपं मङ्गलाचरणं केनापि कर्तुं न शक्यत इत्याशङ्क्य, कार्यव्यक्तीनां कायिकवाचिकमानसभेदेन त्रिराशीकर्तुं शक्यत्वात् कायिककार्यारम्भे इष्टदेवतानमस्कारादिलक्षणं, वाचिकारम्भे अथवृद्ध्यादिशब्दप्रयोगलक्षणं, मानसारम्भे दध्यादिदर्शनलक्षणम्, अथ वा कायिके दध्यादिदर्शनरूपं, मानसे मनःप्रवणतात्मकनमस्काररूपमिति नियमसम्भवात् कार्यानुरूपं मङ्गलाचरणं कर्तुं शक्यमित्याह—**इष्टदेवतेति**। तर्हि शिष्टानामग्रणीः भाष्यकारः भाविकार्यानुरूपं कृतमेवेत्याशङ्क्य, नेत्याह—**ग्रन्थकरणेति**।

सम्भाव्यते । प्रसिद्धं च 'श्रेयांसि बहुविघ्नानि' इति । विज्ञायते च 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति, येषां च यन्न प्रियं ते तद्विघ्नन्तीति प्रसिद्धं लोके । तत् कथमुल्लङ्घ्य शिष्टाचारं अकृतमङ्गल एव विस्रब्धं भाष्यकारः प्रववृते ? अत्रोच्यते—युष्मदस्मद् इत्यादि तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः इत्यन्तमेव भाष्यम् । अस्य च अयमर्थः—सर्वोपप्लवरहितो विज्ञानघनः प्रत्यगर्थः इति ।

---

न सम्भावनामात्राद्विघ्नोपशान्तये प्रवृत्तिः । किन्तु निश्चयादित्यत्राह—**प्रसिद्धं चेति** । लोकप्रसिद्धिर्निर्मूला न विघ्ननिश्चयहेतुरित्यत्राह—**विज्ञायते चेति** । नैतद्वाक्यं शास्त्रप्रवृत्तेः विघ्नं गमयतीत्यत्राह—**येषां चेति** । अतोऽकृतमङ्गलस्य विघ्नोपसंसृष्टतया शास्त्रार्थाप्रतिपत्त्यादिसम्भवात् शिष्टाचारहीनतया चानाप्ततेत्याह—**तत्कथमिति** । **विस्रब्धमिति** । विश्वासो यथा भवति लोकस्य तथा न कथञ्चित्प्रवृत्तः अनाप्त इत्यर्थः । अतोऽनाप्तोक्तत्वादव्याख्येयमिति शेषः ।

"सर्वदा सर्वकार्येष्वि"त्यादिस्मृतेः शिष्टाचारपरिपालनाय विघ्नोपशान्तये च तत्त्वानुसरणं मङ्गलं कृतमित्याह— **अत्रोच्यत इति** । किं तत्र मानमित्यत्राह—**युष्मदस्मदित्यादीति** । **भाष्यमिति** । प्रमाणमित्यर्थः । कथमिदं तत्त्वानुसरणं गमयतीत्यत्राह—**अस्य चायमर्थ इति** । अस्य भाष्यस्य अध्यासाभाव(वत् तत्प्र)[प्र]तिपत्त्यर्थमध्यासासम्भवहेतुतया अयं **चार्थ** इति अन्वयः । **सर्वोपप्लवरहित इति** युष्मच्छब्देन फलितमर्थमाह । **विज्ञानघन इति** विषयविषयिशब्दाभ्यां फलितम् । **प्रत्यगर्थ इति** अ(र्थम)सच्छब्देन फलितम् । अतोऽस्य **युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणो**रिति पदद्वयार्थत्वात् पदद्वयमेवात्र प्रमाणत्वेनोक्तम् । इतर(त्रत्व)[त्तु अ]ध्यासासम्भवहेतुत्वेन तत्त्वमप्यनुसर्यत इति वक्तुमुपात्तमित्यूह्यम् । **विवरणे** पदद्वयं व्याख्यातमित्युक्तत्वात् ।

---

कथं शिष्टाचारमुल्लङ्घ्य प्रवर्तते, अकृतमङ्गल एव विघ्नैरुपह(स्य)[न्य]मानो विस्रब्धं कथं प्रवर्तते इत्यन्वयौ द्रष्टव्यौ ॥

**अस्य च अयमर्थ इति**। अस्य भाष्यस्य, अध्यासाभाव(व्यतिरेकेण तत्सि)[सि]-द्धयर्थमयं [सर्वोपप्लवरहितो विज्ञानघनः प्रत्यगर्थ इति] अर्थ इत्यन्वयः।

ननु **भाष्यटीकयोः** व्याख्यानव्याख्येयभावो न घटते। कुतः? यतः **टीका-कारो**ऽनेकपदा(दि)[नि]व्याख्येयत्वेनोपादाय पदत्रयेण व्याचष्टे(तपात्तसर्व)[तत् किं]सर्व-पदानां पदत्रयेण तात्पर्यार्थं कथयति? किं वा अभिधेयार्थम्? यदि तात्पर्यार्थं, तदा अभि-धेयार्थकथनसमये **युष्मदि**त्यारभ्याभिधेयार्थः कथयितव्यः। तथा न क्रियते। यद्यभि-धेयार्थं, तद[पि] न घटते। उपात्तसर्वपदानामभिधेयार्थस्य पदत्रयेण वक्तुमशक्य-त्वात्। पदत्रयेण पदत्रयमेव व्याख्यातं, पश्चात् उत्तर(शेष)पदानि व्याख्यास्यन्ते इत्यपि वक्तुं न शक्यते। **विषयविषयिणोः** इत्यारभ्य (स) व्याख्येयत्वेनोपादानादित्यस्य विरोधस्य समाधानार्थं **विवरणकारेण पदद्वयं व्याख्यात**मित्युक्तम्। तदप्यसङ्गतम्, कुतः? 'सुप्तिङन्तं पदम्' इति पदलक्षण(मित्य)[म]ङ्गीकृत्य **पदद्वय**मित्युक्तवान्? किं वा पद्यतेऽर्थोऽ[ने]नेति व्युत्पाद्य?। उभयथाप्यसङ्गतिरेव। कथम्? प्रथमकल्पे **विषयविष-यिणोः** इत्यस्य पुनरुपादानं न सङ्गच्छते। द्वितीये **युष्मदस्म**दिति पदद्वयं विहाय **प्रत्यय**पदमारभ्य व्याख्यायेत; न तथा क्रियत इति सर्वमसङ्गतमिति।

अत्र समाधिः—'सुप्तिङन्तं पदम्' इति पदलक्षणं स्वीकृत्य **विवरणकारेण पदद्वयं व्याख्यात**मित्युक्तम्। कथं तर्हि **टीकाकारेण** द्वितीयपदस्य व्याख्येयत्वेनोपादानमिति चेदुच्यते—**तमःप्रकाशवद्विरुद्धस्वभावयो**रित्यत्र **विरोध**शब्दार्थः [किं] सहावस्था-नायोग्यतालक्षणः? किं वैक्यायोग्यतालक्षणः? इति विशये, चिज्जडयोर्विषयविषयित्वादेवैक-कालावस्थानात् सहावस्थानायोग्यतालक्षणो विरोधो नास्ति, किं त्वैक्यायोग्यतालक्षणः इत्यस्यार्थस्य निर्णायकत्वेन द्वितीयपदमादत्ते, न व्याख्येयत्वेनेत्यविरोधः।

तर्हि व्याख्येयत्वाभावाद्व्याख्येयपदार्थनिर्णायकत्वाभावाच्च **इतरेतरभावानुपपत्ति-**रित्यन्तं किमित्युपादीयत इति चेत्, उच्यते—अध्यासाभाव एव साक्षादस्य भाष्यस्यार्थः। विशुद्धं तत्त्वमपि अनुस्मर्यते। अतो मङ्गलाचरणं सिद्धमित्युक्तम्। तत्र विशुद्धं तत्त्वमध्या-सासम्भवे हेतुत्वेन स्मर्यत इत्येतदर्थसिद्ध्यर्थं हेतुमदध्यासासम्भवकथनपरं भाष्यमादत्त इत्यविरोधः। तर्हि पदद्वयस्य पदत्रयेण कथं व्याख्यानं कृतमिति चेत्, **सर्वोपप्लव-रहित** इति **युष्मदि**त्यस्य व्याख्यानम्। **विज्ञानघन** इति **विषयविषयिणोरि-**त्यस्य, **प्रत्यगर्थ** इत्यस्मत्पदस्य व्याख्यानम्। व्याख्याप्रकारो द्विविधः—व्याख्येयपदेन फलितार्थप्रदर्शनम्, अप्रसिद्धार्थपदस्य प्रसिद्धार्थपदेनार्थाभिधानं चेति। [तत्र प्रथमप्रकारम-वलम्ब्य] **युष्म**त्पदेन फलितार्थमाह—**सर्वोपप्लवरहित**(त्वमि)[इ]ति। **युष्मदि**त्य-हङ्कारस्य विवेचनादुपप्लवरहित आत्मा, तद्विवेचनद्वारेण कर्तृत्वादिधर्मविवेचनात् सर्वोप-प्लवरहितः। जडस्वभाव[स्यात्म]नो विषयत्वं केचिदूचिरे। तान्निराकरोति—**ज्ञानेति**। ज्ञानस्वभावस्यात्मनो नित्यानुमेयत्वमभ्युपगच्छन्ति **साङ्ख्याः**। तान्निराकरोति—**विज्ञानेति**। विस्पष्टं ज्ञानं विज्ञानमित्यर्थः। द्रव्यबोधस्वभावस्यात्मनो विषयत्वमभ्युपगच्छन्ति **भाट्टाः**। तान्निराकरोति—**घन इति**। **विषयीति**। विषयिशब्दार्थनिर्णयेनेतरत् सर्वं विषयकोटि-

**तत् कथञ्चन परमार्थतः एवम्भूते वस्तुनि रूपान्तरवदवभासो मिथ्येति कथयितुम् । तदन्यपरादेव भाष्यवाक्यात् निरस्तसमस्तोपप्लवं चैतन्यैकतानमात्मानं प्रतिपद्यमानस्य कुतो विघ्नोपप्लवसम्भवः । तस्मात् अग्रणीः शिष्टाचारपरिपालने भगवान् भाष्यकारः ।**

---

नन्वत्र नाध्यासासम्भवहेतुतया विशुद्धात्मतत्त्वमनुस्मर्यते, किन्तु अध्यासासंभवो व्यावर्त्यत इति चेत् । सत्यम् । तथाप्यर्थात्तत्त्वमप्यनुस्मर्यते इत्याह— **तत्कथंचनेति** । किमर्थं तत्त्वमनुस्मर्यते इत्यत्राह— **परमार्थत इति** । तर्हि तत्त्वानुस्मृतिरविवक्षिता, इत्यत्राह— **तदन्यपरादेवेति** । **तत्**—तस्माद्देवतानुस्मरणादित्यर्थः । दोषभूयिष्ठत्वादस्यानुस्मृतिर्न कार्यकरीत्यत्राह— **निरस्तेति** । तथापि गुणहीनत्वान्निष्फलेत्यत्राह— **चैतन्यैकतानमिति** । अथाप्यप्रत्यक्षत्वान्नास्यानुस्मृतिः फलवतीत्यत्राह— **आत्मानमिति** । अन्यार्थमपि देवतानुस्मरणं स्वभावाद्विघ्नान् हन्ति "अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः" इति न्यायादित्यर्थः । यदुक्तं शिष्टाचारहीनतया चेति, तत्राह— **तस्मादिति** ।

---

निक्षिप्तमित्यर्थात् व्याख्यातमिति द्रष्टव्यम् । देहादिषु पराग्भावेन तर्कतो विविच्यमानेषु प्रातिलोम्येनाञ्चन्निवोपलभ्यत इति **प्रत्यक्** । स एवार्थ्यत इत्यर्थः । विवेकिभिः प्रत्यक्त्वेन गम्यत इति यावत् । द्वितीयपदस्य युष्मदस्मदोर्मध्ये व्याख्यानं किमर्थमिति चेत्, न; **सर्वोपप्लवरहित** इत्युक्तम्, तत्कथमित्यपेक्षायां विज्ञानघनत्वादिति तद्धेतुत्वेनानन्तरं व्याख्यातम् । विशेष्यत्वेन **प्रत्यगर्थ** इति पश्चाद्व्याख्यातमिति न विरोधः । [तत्] (ञ्च) **परमार्थतः एवम्भूते वस्तुनि रूपान्तरवदवभासो रूपान्तरं च कथं न मिथ्येति कथयितु**मित्येकः (द्वयं)[अद्वये] **एवम्भूते वस्तुनि रूपान्तरवदवभासः कथञ्चन**(थीति)[अर्थात्] भीतवद्वर्तते, अतो **मिथ्येति कथयितु**मित्यपरः । **एवम्भूते वस्तुनि चन** अपि **कथ**मपि केनापि प्रकारेण स्वरूपेण संसृष्टरूपेण च **मिथ्येति कथयितु**मित्य[न्योऽ]र्थः । अत्र **मिथ्याशब्दो**ऽपह्नवार्थो द्रष्टव्यः । करिष्यमाणभाष्यवाक्या[द]र्थप्रतिपत्तिः[पूर्वं न] युक्ता(को)[तस्माद]सङ्गतमिदं [वाकयात् प्रतिपद्यमानस्येति ।] मैवम् । साध्यतया प्रतिपन्नं वाक्यं स्वनिष्पत्त्यर्थं स्वार्थप्रतिपत्तिमाक्षिपतीत्यभिप्रेत्याह (इति) यतः **तदन्यपरादिति** । **तत्** तस्मात् एवंभूतार्थात्, **अन्यपरात्**—अध्यासाभावपरात्, **वाक्यात्**—वाक्यप्रणयनाद्धेतोः, प्रणयनार्थमिति यावत् । **सर्वोपप्लवरहित** इत्यस्यार्थः **निरस्तसमस्तोपप्लवम् इति** । **विज्ञानघन** इत्यस्यार्थः **चैतन्यैकतानमिति** । **प्रत्यगर्थ** इत्यस्यार्थः **आत्मानमिति** ।

**विषयविषयिणोः तमःप्रकाशवत् विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायाम्** इति। कोऽयं विरोधः ? कीदृशो वा इतरेतरभावः अभिप्रेतः ? यस्य अनुपपत्तेः तमःप्रकाशवत् इति निदर्शनम् । यदि तावत् सहानवस्थानलक्षणो विरोधः, ततः प्रकाशभावे तमसो भावानुपपत्तिः । तदसत् । दृश्यते हि मन्दप्रदीपे वेश्मनि अस्पष्टं रूपदर्शनं इतरत्र च स्पष्टम् । तेन ज्ञायते मन्दप्रदीपे वेश्मनि

---

अत आप्तोक्तत्वाद्व्याख्येयमिति व्याख्येयत्वं प्रसाध्य, मङ्गलाचरणं समर्थयता पदद्वयस्य व्याख्यातत्वात्, उत्तरभाष्यं व्याख्यातुं कथ्यमानविरोधा-(द्वा)काङ्क्षिताश्रयस्मरणार्थं द्वितीयपदेन सहोपादत्ते—**विषयेत्यादिना**। तत्र विरोधमाक्षेप्तुं स किं सहावस्थानायोग्यत्वं [उत] तादाम्यायोग्यत्वमिति पृच्छति—**अथ कोऽयमिति** । निर्णीयतां तर्हि कार्येण कारणमित्यत्राह—**कीदृशो वेति**। इतरस्मिन्सति इतरभावः सहावस्थानं वा, इतरस्येतरभावः तादात्म्यं वेति विशेषणसन्देहात् तदभावे कार्येऽपि सन्देह इत्यर्थः ।

यद्यद्यस्तर्हि सहावस्थानायोग्यत्वाख्यविरोधादितरेतरभावासम्भवे दृष्टान्तत्वेन तमःप्रकाशयोरुक्तत्वात्तयोरपि स विरोधो वाच्यः । ततश्च तयोस्सहानवस्थानं स्यादित्याह—**यदीति**। सहानवस्थानं लक्षणं चिह्नं यस्य योग्यत्वाभावस्य स तथाभूतः इति विग्रहः । स्यादेवेत्यत्राह—**तदसदिति** । तत्र हेतुं वक्तुमाह—**दृश्यते हीति**। रूपदर्शनस्यास्पाष्ट्यं स्वभाव इत्यत्राह—**इतरत्रेति**।

---

कार्याभावो यादृशः कारणाभावोऽपि तादृशो निर्णीयत इत्याशङ्क्य, कार्याभावोऽपि सन्दिग्ध इत्याह—**कीदृशो वेति** । इतरस्मिन्नितरस्य भावानुपपत्तिरिति तादात्म्याभाव उच्यते ? इतरस्य इतरभावानुपपत्तिरित्यैक्याभावः ? आहोस्विदितरस्मिन् सतीतरभावानुपपत्तिरिति सहावस्थानाभावः ? इति सन्दिग्ध इत्यर्थः । दृष्टान्तानुगुणतया अर्थनिर्णयः कार्यः, न येन केनचित् प्रकारेणेत्याह—**यस्यानुपपत्तेरिति** । **सहानवस्थानलक्षण** इत्यस्य सहानवस्थानलक्षण इति विग्रहो द्रष्टव्यः । सहानवस्थानं लक्षणं गमकं यस्यायोग्यत्वस्य सः सहावस्थानायोग्यत्वत इति यावत् । रूपदर्शनस्यास्पाष्ट्यं स्वाभाविकमिति ; **तत इति** । तमःप्रकाशशब्दाभ्यां तमएकदेशभूतच्छायां प्रकाशैकदेशातपं च नेत्याह—**इतरत्रेति** ।

**तमसोऽपि ईषदनुवृत्तिरिति । तथा छायायामपि औष्ण्यं तारतम्येन उपलभ्यमानं आतपस्यापि तत्र अवस्थानं सूचयति । एतेन शीतोष्णयोरपि युगपदुपलब्धेः सहावस्थानमुक्तं वेदितव्यम् । उच्यते—परस्परानात्मतालक्षणो विरोधः । न जातिव्यक्त्योरिव परमार्थतः परस्परसम्भेदः सम्भवतीत्यर्थः । तेन इतरेतरभावस्य—इतरेतरसम्भेदात्मकत्वस्य अनुपपत्तिः । कथम् ? स्वतस्तावत्**

---

अस्पष्टरूपदर्शनान्यथानुपपत्त्या तयोस्सहावस्थानं गम्यते । अतः तद्विरोधात् मैवमित्यर्थः । तर्हि तमःप्रकाशशब्दाभ्यां छायातपौ लक्ष्येते इत्यत्राह—**तथेति** । शैत्याभावे एवौष्ण्यव्यपदेशः, नौष्ण्यं तत्रास्तीत्यत्राह—**तारतम्येनेति** । तर्हि तमःप्रकाशशब्दाभ्यां छायातपौ लक्षयित्वा तदाश्रिते शीतोष्णे लक्षितलक्षणया विवक्ष्येते इत्यत्राह—**एतेनेति** । आश्रययोः सहावस्थानकथनेन, अत्यातपे जाह्नवीनिमग्नार्धकायस्य युगपदुपलब्धेश्च, शीतोष्णयोरपि सहावस्थानं भाष्योक्तमिति वेदितव्यमित्यर्थः ।

अध्यासाक्षेप्ता द्वितीयमङ्गीकरोति—**उच्यत इति** । **परस्परानात्मतालक्षण** इत्यस्यापि पूर्ववद्विग्रहः । तत्र फलितं भाष्याभिप्रायमाह —**नेति** । अत इति शेषः । च्चिज्जडयोः परमार्थतः तादात्म्याभावे अध्यासाभावं फलमाह—**तेनेति** । परमार्थतः तादात्म्यहीनयोरेव शुक्तिरूप्ययोरध्यासो दृष्टः । तथेहापि स्यादित्याशङ्कते—**कथमिति** । सत्यम् । तथापि इदंरूप्ययोरन्योन्यां-

---

लक्षयित्वा प्रत्यवस्थाने, तत्रापि सहावस्थाने उदिते, पश्चात् छायागतशैत्यं आतपगतौष्ण्यं च लक्षितलक्षणयोपादाय प्रत्यवस्थाने, तत्रापि **सहावस्थानं** भाष्यकारेण उक्तं वेदितव्यमिति ।

**परस्परानात्मतालक्षण** इत्यत्र लक्षणशब्दस्य पूर्ववद्विग्रहः । सर्वत्रापर्यायशब्दवाच्यानामभेदयोग्यत्वाभावात्तस्य सर्वसाधारणत्वात् प्रमेय(त्व)शब्दवाच्यत्व(सत्त्व)वद्विरोधशब्दार्थत्वं न सम्भवतीत्याशङ्क्य, तत्परिहारायापर्यायशब्दवाच्यजातिव्यक्त्योरभेदयोग्यताया विद्यमानत्वात्तस्य सर्वसाधारणत्वाभावात् विरोधशब्दार्थत्वं भवत्येवेत्याह—**न जातीति** । **तेनेति** । परस्परात्मताऽयोग्यत्वेनेत्य(न्वय)[र्थ]ः । पञ्चस्थलेष्वेव तादात्म्यं सम्भवति । तत्र चिज्जडयोर्जातिव्यक्तिगुणगुणिकार्यकारणक्रियातद्वद्भावानां असम्भवात्

विषयिणः चिदेकरसत्वात् न युष्मदंशसम्भवः। अपरिणामित्वात् निरञ्जनत्वाच्च न परतः। विषयस्यापि न स्वतः चित्सम्भवः, समत्वात् विषयत्वहानेः। न परतः, चितेः अप्रतिसङ्क्रमत्वात्। तद्धर्माणामपि सुतराम् इति। एवं स्थिते स्वाश्रयमतिरिच्य धर्माणां अन्यत्र भावानुपपत्तिः सुप्रसिद्धा इति दर्शयति। इतिशब्दो हेत्वर्थः। यस्मात् एवं उक्तेन न्यायेन इतरेतरभावा-

---

शतादात्म्येन सम्यक्स्थले दृष्टत्वात् अन्यत्र अन्यतरांशदर्शने अन्यतरांशाध्यासः स्यात्। नैवं चिज्जडयोः, अन्योन्यांशत्वाभावात् इति वक्तुं, स्वतश्चितोऽचिदंशत्वं नास्तीत्याह—**स्वत इति**। तर्हि परतोऽस्त्विति; नेत्याह—**अपरिणामित्वादिति**। यथा कालतः परिणामित्वाद्वृक्षादेः शाखाद्यंशत्वं, नैवं चितः। निरवयवत्वेन स्वतः परतश्चापरिणामित्वात्। नापि परसम्बन्धः, असङ्गित्वादित्यर्थः।

अस्तु तर्हि अचितश्चिदंशत्वमितिचेत्, स्वतः परतो वेति विकल्प्याद्यं प्रत्याह—**विषयस्यापीति**। **विषयत्वहानेरिति**। द्रष्टुः द्रष्ट्रन्तरवत् प्रत्यक्षत्वहानेरित्यर्थः। द्वितीयं प्रत्याह—**न परत इति**। परतोऽपि जडस्य चिदाकारपरिणामायोगात् आत्मचैतन्यमनात्मा स्वांशत्वेन स्वीकरोतीति वाच्यम्। तच्च न, चितेः सङ्क्रमायोगादित्यर्थः। तस्माच्चिदचितोरन्योन्यांशतादात्म्येन क्वाप्यदृष्टत्वात् अन्यत्रान्यतरांशदर्शने अन्यतरांशतादात्म्याध्यासो न सम्भवतीत्यर्थः।

उत्तरपदमादत्ते-**तद्धर्माणामिति**। अस्यार्थमाह-**एवं (व्यव)स्थिते इति**। धर्मिणोः तादात्म्ये सत्यपि धर्माणां स्वाश्रयं त्यक्त्वाऽन्यत्र गमनायोगादन्योन्यत्र सत्त्वं नास्ति, तद्धर्मिणोरेव तादात्म्यं नास्तीति स्थिते, सुतरां नास्तीति स्थितिः। ततश्च धर्माणां सम्यक्स्थलेऽन्योन्यत्र दर्शनाभावात् अन्योन्यत्राध्यासः न सम्भवतीत्यर्थः। समाप्त्याद्यर्थत्वं व्युदस्यति-**इतिशब्द इति**। हेत्वर्थतामभिनयति—**यस्मादिति**।

---

परिशेषादंशांशिभावेन प्राप्तं तादात्म्यं(प्रणस्थलेषु) दूषयति—**स्वतस्तावदित्यादिना**। इतिशब्दस्य समाप्त्याद्यर्थत्वं व्यावर्तयति—**इतिशब्द इति**।

सम्भवः, **अतः अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके** इति। अस्मत्प्रत्यये यः अनिदमंशः चिदेकरसः तस्मिन् तद्बलनिर्भासिततया लक्षणतो युष्मदर्थस्य मनुष्याभिमानस्य सम्भेद इव अवभासः स एव अध्यासः। **तद्धर्माणां च** इति। यद्यपि विषयाध्यासे तद्धर्माणामप्यर्थसिद्धः अध्यासः, तथापि विनापि विषयाध्यासेन तद्धर्माध्यासो बाधिर्यादिषु श्रोत्रादिधर्मेषु विद्यते इति पृथक् धर्मग्रहणम्। **तद्विपर्ययेण विषयिणस्तद्धर्माणां च** इति। चैतन्यस्य तद्धर्माणां च इत्यर्थः। ननु

---

उत्तरपदे आदत्ते—**अस्मत्प्रत्ययेति**। आद्यपदस्यार्थमाह—**अस्मदिति**। अस्मत्प्रत्ययो गोचरोऽस्येति अस्मत्प्रत्ययगोचरः, अनिदमंश इत्यर्थः। द्वितीयपदस्यार्थमाह—**चिदेकरस इति**। अहङ्काराख्येदमंशं व्यावर्तयति—**अनिदमंश इति**। प्राभाकरमतं व्यावर्तयति—**चिदिति**। भाट्टमतं व्यावर्तयति—**एकरस इति**। विभक्त्या संयोजयति—**तस्मिन्निति**।

नन्वहङ्कारादिशरीरपर्यन्तेषु अहमित्येव प्रत्ययो न त्विदमित्यतः कथं तेषां युष्मत्प्रत्ययविषयत्वमित्यत्राह—**तद्बलनिर्भासिततयेति**। तस्य चैतन्यस्य बलेन निर्भास्यत्वादहङ्कारादेः प्रतीतौ युष्मदर्थत्वाभावेऽप्यपरोक्षतया अवभास्यत्वेन लक्षणेन युष्मदर्थतेत्यर्थः। **मनुष्याभिमानस्येति**। मनुष्योऽहमित्यभि[मन्य]मानस्येत्यर्थः। अध्यासशब्दार्थमाह-**सम्भेद इवेति**। अर्थप्रधानज्ञानाध्यासो ज्ञानप्रधानार्थाध्यासश्चात्रोक्त इत्याह---**स एवेति**। **धर्म**शब्दसंयोगाद्विषयिशब्दस्य अहङ्काराभिधायित्वभ्रान्तिं निरस्यति—**चैतन्यस्य तद्धर्माणां**

---

अहङ्काराख्येदमंशं व्यावर्तयति— **अनिदमंश इति**। प्राभाकरमतं व्यावर्तयति—**चिदिति**। भाट्टमतं व्यावर्तयति—**एकरस इति**। **चिदेकरस** इत्येतावत्युक्ते (एकरूपस्य) [चिदेकरसस्य] नित्यानुमेयत्वं वदन्ति सांख्याः। तद्व्यावर्तयति—**अनिदमंश** इति। **मनुष्याभिमानस्येति**। मनुष्योऽहमित्यभिमानयुतस्येत्यर्थः। **युष्मत्प्रत्ययगोचरस्येत्यस्य** व्याख्यानं कृत्वा, भाष्य(स्या)[स्था]ध्यासशब्दं (तद्धर्मणां चेति) [व्याचष्टे संभेद इवेति]। **अध्यासो मिथ्येत्युक्ते** मिथ्या मिथ्येति भवितुं युक्तमिति पुनरुक्तिदोषं

विषयिणः चिदेकरसस्य कुतो धर्माः, ये विषये अध्यस्येरन्? उच्यते—आनन्दो विषयानुभवो नित्यत्वमिति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिव अवभासन्ते इति न दोषः। अध्यासो नाम—अतद्रूपे तद्रूपावभासः। सः मिथ्येति भवितुं युक्तम् इति। मिथ्याशब्दो द्व्यर्थः—अपह्नववचनः अनिर्वचनीयतावचनश्च। अत्र अयमपह्नववचनः। मिथ्येति भवितुं युक्तम्—अभाव एवाध्यासस्य युक्तः इत्यर्थः। यद्यप्येवं, तथापि नैसर्गिकः प्रत्यक्-

---

चेति। विषयिणश्चिदेकरसत्वेन धर्माभावादप्राप्तनिषेधोऽयमित्याशङ्क्यापवदति-**नन्वित्यादिना**। नन्वेषामभिन्नत्वात् कथं धर्मतेत्याशङ्क्य, अन्तःकरणवृत्त्युपाधौ मिथ्याभेदावभासादारोपितधर्मतास्तीत्याह—**अपृथक्त्वेऽपीति**। पूर्वाध्यासपदसन्निधौ पठितत्वात्तदतिरिक्तार्थत्वं प्राप्तं प्रत्याह—**अध्यासो नामेति**। अध्यासस्याध्यासात्मकत्वापादनमिष्टमित्यत्राह—**मिथ्याशब्द इति**। ततः किमित्यत्राह—**अत्रायमिति**। तदेवाभिनयति—**मिथ्येति**।

आत्मानात्मनोस्सम्यक्स्थले तादात्म्यादर्शनादन्यत्राध्यासो न सम्भवतीति वदतः, सम्यग्दर्शनस्य केवलव्यतिरेकाभावेन अध्यासाप्रयोजकत्वात् योग्यत्वस्य वा सादृश्यस्य वा निरुपाधिकाध्यासव्यापकस्य कस्याप्यभावादात्मन्यहङ्कारादेः शरीरान्तस्य निरुपाधिकभ्रमस्य अध्यासो न सम्भवति, अत एव कर्तृत्वादेरप्यध्यासो न सम्भवति अहङ्काराद्युपाधिनिमित्तभ्रमत्वादित्यभिप्रेतमङ्गीकरोति—**यद्यपीति**। गुणावयवसामान्यादिसादृश्याद्यभावेऽपि निरुपाधिकभ्रमोऽध्यक्षसिद्धः तस्यापवादायोगात्, केतकीगन्धसदृशः सर्पगन्ध इत्यादाविव सादृश्यादिकं वा, शङ्खपीतिमादाविव कारणान्तरं वा कल्प्यमित्याह—**तथापीति**। तथाप्ययमन्यस्यान्यात्मतावभासो लोकव्यवहार इत्यन्वयः।

---

परिहरति—**मिथ्याशब्द इति**। मिथ्याशब्दस्य साधारणत्वादर्थसन्देहं प्राप्तं व्युदस्यति—**अत्रेति**। आक्षेपप्रकरण इत्यर्थः।

लोकप्रसिद्धाध्यासकारणाभावेऽपि अत्राध्यासाक्षेपो न युक्त इत्याह—**यद्यप्येवं, तथापि नैसर्गिक इति**। नैसर्गिकशब्देनानादित्वमनपनोद्यत्वं च प्रतीयते। अत्र

**चैतन्यसत्तामात्रानुबन्धी, अयम् युष्मदस्मदोः इतरेतराध्यासात्मकः। अहमिदं ममेदमिति लोकव्यवहारः। तेन यथा अस्मदर्थस्य सद्भावो न उपालम्भमर्हति, एवमध्यासस्यापि इत्यभिप्रायः। 'लोकः' इति मनुष्योऽहमित्यभिमन्यमानः प्राणिनिकायः उच्यते। व्यवहरणं व्यवहारः। लोक इति व्यव-**

---

**अय**मित्यध्यक्षत्वमभिनयेनाह। अध्यासमाक्षिप्य कथं लोकव्यवहारः समाधीयत इत्यत्राह—**युष्मदस्मदोरिति**। अध्यासमभिनयति—**अहमिदं ममेदमिति**। कारणान्तर[प्रमान्तर]संस्कारस्तावत् कल्पयितुं न शक्यः। आत्मानात्मनोः तादात्म्यस्यान्यत्रादृष्टत्वादित्याह—**नैसर्गिक इति**। स्वाभाविकः। कस्येत्यत्राह—**प्रत्यगिति**। अहङ्कारानुबन्धित्वमासेधति—**चैतन्येति**। तटस्थब्रह्मचैतन्याद्यनुबन्धित्वं निषेधति—**प्रत्यगिति**। कार्यानुबन्धित्वं धुनोति—**सत्तेति**। तर्हि तत्सत्तो(क्तो)[त्तर]कालत्वात् स्यादेतदित्यत्राह—**मात्रेति**। अनादिचैतन्यानुबन्धित्वादनादिरित्यर्थः। ततः किमित्यत्राह—**तेनेति**। अध्यासस्य प्रवाहोपादानाविद्यारूपेणानादितया सुषुप्तादौ संस्कारशेषतयाऽवस्थानात् पूर्वपूर्वाध्याससंस्कारस्य उत्तरोत्तराध्यासहेतुत्वकल्पनान्नाध्यासापलापो युक्त इत्यर्थः।

लोकव्यवहारशब्देन कथमध्यासोऽभिधातुं शक्यते इत्यत्राह—**लोक इतीति**। मनुष्योऽहमित्यभिज्ञाभिवदनरूपत्वादित्यर्थः। अन्यस्यान्यात्मतावभासोऽध्यास इत्युक्ते, शुक्लः पट इत्यादिज्ञानस्याप्यध्यासत्वं प्राप्तं निरसितुं, सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासोऽध्यास इति स्वसिद्धान्तमुपेत्योक्तम्—

---

त्वनादित्वमर्थ इत्याह **प्रत्यगनुबन्धीति**। सम्यग्ज्ञानपर्यन्तं अनादिचैतन्यानुबन्धित्वादनादिरित्यर्थः। प्रत्यगित्युक्ते अहङ्कारानुबन्धित्वं प्राप्तम्, तद्व्युदस्यति—**चैतन्येति**। चैतन्यमध्यासानुभवत्वेनान्यथासिद्धत्वान्नाध्यासाधिष्ठानमिति; तत्राह—**सत्तेति**। अज्ञानाख्यजाड्याध्यासविशिष्टसत्तायाः सत्ताशब्दवाच्यत्वादध्यासाधिष्ठानत्वं न सम्भवतीति शङ्कां व्युदस्यति—**मात्रेति**। सर्वप्राणिनामनुभवसिद्धत्वाच्चाध्यासस्याक्षेपो न सम्भवतीत्याह—**अयमिति**। अध्यासस्याक्षेपे, लोकव्यवहारस्य नैसर्गिकत्वादपरोक्षतया अनुभूयमानत्वाच्च अध्यासाक्षेपो न युक्त इत्युक्तिरयुक्तेत्याशङ्क्याह—**युष्मदस्मदोरिति**। **तेनेति**।

**हारो लोकव्यवहारः। मनुष्योऽहमित्यभिमानः इत्यर्थः। सत्यानृते मिथुनीकृत्य इति। सत्यं-अनिदं चैतन्यम्। अनृतं-युष्मदर्थः, स्वरूपतोऽपि अध्यस्त (स्वरूप) त्वात्। अध्यस्य मिथुनीकृत्य इति च क्त्वाप्रत्ययः, न पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः। भुक्त्वा व्रजतीतिवत् क्रियान्तरानुपादानात्। 'अध्यस्य नैसर्गिकोऽयं लोकव्यवहारः' इति स्वरूपमात्रपर्यवसानात्। उपसंहारे च 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः' इति तावन्मात्रोपसंहारात्॥**

---

**सत्यानृते मिथुनीकृत्येति।** तद्व्याचष्टे—**सत्यमित्यादिना।** जडव्यावृत्त्यर्थं—**चैतन्यमिति।** साङ्ख्यात्मानं प्राभाकरादिज्ञानं च व्युदस्यति—**अनिदमिति।** अध्यस्तत्वादहङ्कारादेरनृतत्वं वाच्यम्, ततश्चात्मनोऽपि तत् स्यादित्यत्राह—**स्वरूपतोऽपीति॥**

क्त्वाप्रत्ययेनार्थतः क्रियाभेदपूर्वापरीभावावगमात् कथमध्यासमिथुनीकरणलोकव्यवहाराणामेकार्थतेत्यत्राह—**अध्यस्येति।** तदेव कुत इत्यत्राह—**अध्यस्य नैसर्गिक इति।** तथाऽपि क्त्वाप्रत्ययसामर्थ्याद्ध्यासमिथुनीकरणलोकव्यवहाराणामर्थतः क्रियाभेदादिः किं न स्यादित्यत्राह—**उपसंहारे चेति।** न हि प्रत्ययमात्रस्य गौणार्थभयाद्वाक्यार्थोऽध्यासः उपसंहारे नैसर्गिकत्वगुणविशिष्टो

---

—नैसर्गिकत्वादपरोक्षतया अनुभूयमानत्वाच्चेत्यर्थः। लोकव्यवहार[शब्द]योः अध्यासाभिधायित्वं दर्शयति—**लोक इतीति।** **लोक**शब्देन ज्ञानोपसर्जनार्थप्रधानाध्यास उक्तः। **व्यवहार**शब्देनार्थोपसर्जनज्ञानप्रधानाध्यास उक्तो द्रष्टव्यः॥

भाट्टनैयायिकवैशेषिकसांख्याद्यभिमतात्मानं व्यावर्तयति—**अनिदमिति।** प्राभाकराभिमतमात्मानं व्यावर्तयति—**चैतन्यमिति।** [यद्वा] जडात्मवादं व्यावर्तयति—**चैतन्यमिति।** (साङ्ख्याद्यभिमतात्मानं व्यावर्तयति—**अनिदमिति।**) यद्यध्यस्तत्वादहङ्कारादेः अनृतत्वमुच्येत, तदा आत्मनोऽप्यध्यस्तत्वादेवानृतत्वं प्राप्तम्, तस्मात् व्यावृत्तिमाह—**स्वरूपतोऽपीति।** क्त्वाप्रत्ययबलात् कर्त्रध्याहारः कार्य इत्याशङ्क्य, करोतीति [भाव:त] अध्याहारो न सम्भवतीत्याह—**अध्यस्य नैसर्गिक** इति। तर्ह्यनेककर्त्रा क्रियत इत्यध्याहारः कार्य इत्याशङ्क्याह—**उपसंहारे चेति।**

**अतः 'चैतन्यं पुरुषस्य स्वरूपम्' इतिवत् व्यपदेशमात्रं द्रष्टव्यम्। मिथ्याज्ञाननिमित्तः इति। मिथ्या च तदज्ञानं च मिथ्याज्ञानम्। मिथ्येति अनिर्वचनीयता उच्यते। अज्ञानमिति च जडात्मिका अविद्याशक्तिः ज्ञानपर्युदासेन उच्यते। तन्निमित्तः—तदुपादानः इत्यर्थः ॥**

---

मिथ्यात्वविशिष्टश्च उपक्रमे[तौ]तदविशिष्टाविति भेत्तुं युक्तः, वाक्यभेदापातादित्यर्थः। किं तर्हि क्त्वाप्रत्ययोपचारनिमित्तमिति चेत्, एकस्या अप्यध्यासक्रियाया विशेषणभेदाद् भेदोऽस्ति, अत एवाध्यासज्ञानानां वक्तरि पूर्वापरीभावश्चेत्याह—**अतश्चैतन्यमिति**। **व्यपदेशः**—उपचारः ॥

तथाप्युपादानं नास्तीत्याशङ्क्य, **मिथ्याज्ञाननिमित्त** इत्युक्ते, श्रुतिसूत्राभ्यामज्ञानहेतुकत्वं वदद्भ्यां विरोध इत्याशङ्क्याह—**मिथ्या चेति**। मिथ्याशब्दस्य अभावार्थतामासेधति—**मिथ्येतीति**। अज्ञानमिति ज्ञानाभाव उक्त इत्याशङ्कां व्युदस्यति—**अज्ञानमितीति**। सर्वोऽपि प्रपञ्चः कथित इत्यत्राह—**अविद्येति**। साङ्ख्यानां प्रधानं जडत्वादविविक्तरूपेण विवेकज्ञानबाध्यत्वाच्चोक्तमित्यत्राह—**शक्तिरिति**। तर्हि नञोऽर्थशून्यतेत्याशङ्क्य, अन्यार्थतामाह—**ज्ञानपर्युदासेनेति**। यद्वा, ज्ञानेन पर्युदस्यते बाध्यते, तेन ज्ञानविरुद्धत्वादित्यर्थः। सूत्रेण ज्ञानात् निवृत्तिं सूचयता, श्रुत्या च अज्ञानोपादानतोक्ता, अतस्तद्विरोध इत्यत्राह—**तदुपादान इति** ॥

---

**मिथ्याज्ञाननिमित्त** इत्युक्त्या मिथ्याज्ञानलक्षणाध्यासस्य मिथ्याज्ञानमेव कारणमित्युक्तं भवेत्, तन्निवृत्तये मिथ्याज्ञानस्य पूर्वमिथ्याज्ञानं कारणमित्युक्ते, सुषुप्त्याद्यनन्तरमध्यासासम्भवः स्यात्, तद्व्यावृत्त्यर्थं संस्कारद्वारेण पूर्वमिथ्याज्ञानं कारणमित्युक्ते, निर्वाह्यनैसर्गिकत्वमेव तन्निर्वाहकत्वेनोक्तं स्यादिति सर्वथाऽसमञ्जसत्वे प्राप्ते तद्व्युदासाय विगृह्य दर्शयति—**मिथ्या चेति**। **मिथ्या**शब्दस्य साधारणत्वात् तद्व्याकरोति—**मिथ्येति**। **अज्ञान**मित्युक्ते ज्ञानाभावत्वं प्राप्तं व्युदस्यति—**जडात्मिकेति**। साङ्ख्यमतसिद्धप्रधानं प्राप्तं व्युदस्यति—**अविद्येति**। साङ्ख्यमतसिद्धप्रधानजडस्यापि अविविक्तरूपेण विवेकज्ञानबाध्यत्वादविद्यात्वं स्यात्, तद्व्युदस्यति—**शक्तिरिति**। तर्हि नञः अर्थशून्यत्वं प्राप्तमित्याशङ्क्य, अभावार्थत्वाभावेऽप्यन्यत्वार्थत्वात् न प्राप्तमित्याह—**ज्ञान-**

**कथं पुनः नैमित्तिकव्यवहारस्य नैसर्गिकत्वम्? अत्रोच्यते-अवश्यं एषा अविद्याशक्तिः बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिनी अभ्युपगन्तव्या। अन्यथा मिथ्यार्थावभासानुपपत्तेः ॥**

---

एकस्यैवाध्यासस्य सादित्वानादित्वे विरुद्धे इति नैसर्गिकशब्दस्य स्थूलार्थमादाय चोदयति—**कथं पुनरिति।** अध्यासप्रवाहजनकोपादानरूपेणानादित्वं, कार्यव्यक्तिरूपेण सादित्वमित्यविरोधं वक्तुं आत्मनि भावरूपाज्ञानं साधयति—**अवश्यमेषेति। अवश्यमिति** विवादगोचरापन्नं प्रमाणज्ञानमित्याद्यनुमानवत्तामाह। **एषेति**—अहमज्ञः, मामन्यं च न जानामीति प्रत्यक्षत्वमाह। **शक्तिरिति**—आत्मपारतन्त्र्येणात्मनः सर्वकार्योपादानत्वस्य निर्वोढृत्वमाह प्रधानव्यावृत्त्यर्थम्। एकदेशिनां वास्तवी सेत्यत्राह—**अविद्येति**। अज्ञानस्य प्रातीतिकाश्रयविषयावाह—**बाह्येति।** विचारसिद्धमाश्रयं विषयं चाह—**तत्स्वरूपेति। तत्स्वरूपानुबन्धिनीत्युक्ते,** बाह्याध्यात्मिकानामज्ञानकार्याणामज्ञानस्वरूपत्वादज्ञानानुबन्ध्यज्ञानमित्युक्तं स्यात्, तद्व्यावर्तयति-**सत्तेति**। तर्हि सत्तोत्तरकालत्वात् सादितेत्यत्राह—**मात्रेति।** अज्ञानस्याश्रयतया तथा विषयतया च प्रतीयमानेषु यत्तेषां वास्तवस्वरूपं चैतन्यं तिष्ठति तदाश्रया तद्विषया चानाद्यविद्या स्वीकार्येत्यर्थः ॥

अध्यक्षानुग्राहिकामर्थापत्तिं चाह—**अन्यथेति।** आत्मन्यहङ्कारादेर्मिथ्यार्थतदवभासात्मकस्य अध्यासस्य सादिनोऽन्यथानुपपत्तिः। तदुपादानत्वेनानिर्वाच्यमनाद्यज्ञानमात्माश्रयमात्मविषयं च गमयति। सादित्वे ह्युपादा-

---

**पर्युदासेनेति**। अत्र **ज्ञान**शब्देन स्वरूपज्ञानमुच्यते। अज्ञानस्य प्रातीतिकावाश्रयविषयावाह—**बाह्येति**। निरूपणार्हमाश्रयं विषयं चाह—**तत्स्वरूपेति। तत्स्वरूपानुबन्धिनीत्युक्ते** अज्ञानकार्याणां बाह्याध्यात्मिकानामज्ञानं स्वरूपं अतोऽज्ञानानुबन्ध्यज्ञानमित्युक्तं स्यादिति तद्व्यावर्तयति—**सत्तेति। मात्रेति** गतम् ॥

अज्ञानस्य भावरूपत्वे **एषेति** प्रत्यक्षं **अवश्यमिति** तदनुग्राहकानुमानं चोक्त्वा, इदानीं तस्यैवानुग्राहकार्थापत्तिमाह—**अन्यथेति**। मिथ्यार्थतदवभासात्मकस्य ज्ञानज्ञेयाध्यासस्यानुपपत्तेरित्यर्थः। अज्ञानस्य जडवस्त्वाच्छादकत्वेन तद्विषयत्वं प्रयोजनासम्भवेन

**सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति। प्रमाणवैकल्यादेव तदग्रहणसिद्धेः। रजतप्रतिभासात् प्राक् ऊर्ध्वं च सत्यामपि तस्यां स्वरूपग्रहणदर्शनात्। अतः तत्र रूपान्तरावभासहेतुरेव केवलम् ॥**

---

नानवस्थापत्तेरित्यर्थः। आश्रयोऽस्त्वात्मा विषयश्चाज्ञानस्य, अनात्मा विषयः किं न स्यात्? अन्यं न जानामीति प्रतीतेरित्याशङ्क्य, जडत्वादेव नित्यप्रकाशप्राप्त्यभावेन तदावरणातिशयाभावादित्याह—**सा चेति**। नित्यचैतन्यप्रकाशेन जडस्य नित्यसम्बन्धात् नित्यवत् प्रकाशप्राप्तौ तदावरणकृत्यं स्यादित्यत्राह—**प्रमाणवैकल्यादिति**। अनात्मप्रमाणस्य चैतन्यस्यावरणादेवानात्मानवगतिसिद्धेः नानात्मनि पृथगावरणं कल्प्यमित्यर्थः। न च कादाचित्कप्रकाशप्राप्तौ तत्प्रतिबन्धकं मूलाज्ञानं, जडस्य कदाचिदप्यस्फुरणापत्तेरित्यूह्यम् ॥

कालत्रयेऽप्यात्मनि मूलाज्ञाने सत्येवानात्मप्रकाशदर्शनाच्च नानात्मावरणमज्ञानमित्याह—**रजतेति**। तत्र फलमाह—**अत इति**। **एवेति**। न तद्विषयमज्ञानमित्यर्थः। तर्ह्यनात्मनि विपरीतप्रतिभासाख्यातिशयभावादावरणकृत्यं वा अज्ञानस्यानात्मविषयता वा स्यादित्यत्राह—**केवलमिति**। [पुष्कल]कारणान्तरे सति चैतन्यावरणादेव विपरीतप्रतिभासस्य, अन्यं न जानामीति प्रतीतेश्चोपपत्तेरिति हेतुर्द्रष्टव्यः। यद्वा, (मू)[तू]लाज्ञानविषयत्वात् अन्यं न जानामीति प्रतीतिः। तद्विषयत्वे[न] च रूपान्तरावभासोऽतिशयः। मूला-

---

दूषयति—**सा चेति**। तेषां स्वरूपभूतावभासेन सदा भानप्रसक्तौ अज्ञानप्रतिबन्धात् ते नावभासन्त इति पक्षः न शङ्क्यः, जडस्वभावत्वादेव [तेषां] स्वरूपप्रकाशाभावादित्यर्थः। जडपदार्थानां जडत्वादेवान्याधीनप्रतिपत्तित्वात् तत्प्रतिपत्तिहेतुप्रत्यक्षादिप्रमाणानामनुदयलक्षणवैकल्याद्वा, जडवस्तुभानहेतुसाक्षिचैतन्यप्रमाणस्याज्ञानप्रतिबद्धत्वलक्षणवैकल्याद्वा जडवस्तूनामप्रतिपत्तिलक्षणाग्रहणसिद्धेस्ततिसद्ध्यर्थं तेषामज्ञानविषयता व्यर्थेत्याह—**प्रमाणेति** ॥

इदानीं शुक्तौ रजतप्रतिभासात् तत्कारणत्वेन प्रागविद्यायां सत्यामेव शुक्तिप्रतिभासादूर्ध्वं च तस्यां शुक्तौ रजतप्रतिभासात् तद्धेतुत्वेनाविद्यायां सत्यामेव मध्ये शुक्तिस्वरूपावभासादात्माश्रयाज्ञानं शुक्त्याच्छादकं न भवेदित्याह - **रजतप्रतिभासादिति**। अज्ञानस्य शुक्त्यादावाच्छादनातिशयहेतुत्वाभावे विपर्यासातिशयहेतुत्वमपि न सम्भवत्यनात्मनि इत्याशङ्क्याह—**केवलमिति**। आत्मनः स्वरूपप्रकाशेन यथावत् प्रकाशे सति तत्र विपर्यास-

**प्रत्यगात्मनि तु चितिस्वभावत्वात् स्वयम्प्रकाशमाने ब्रह्मस्वरूपानवभासस्य अनन्यनिमित्तत्वात् तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव तस्य अनवभासः। अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति, अहङ्काराद्यतद्रूपप्रतिभास-**

---

ज्ञानस्य (तन्मू)[ तू ]लाज्ञानहेतुत्वात् रूपान्तरावभासहेतुत्वमुक्तम्। **विवरणं** च तदभिप्रायमिति, सविषयाविद्यासिद्ध्यधीनसिद्धिकस्य जडस्य तद्विषयत्वायोगादित्यूह्यम्॥

तर्ह्यात्मन्यपि प्रकाशस्य नित्यत्वार्थस्फुरणस्वभावत्वाभ्यां विनाशप्रतिबन्धयोरभावेनावरणकृत्याभावात्तद्विषयत्वमप्यज्ञानस्य न स्यादित्याशङ्क्य, प्रतिबन्धं वक्तुमात्मनि प्रकाशसामग्रीमाह—**प्रत्यगात्मनीति**। तथाऽपि कथं प्रतिबन्धसिद्धिः, आवरणकृत्यं च किमित्यत्राह—**ब्रह्मस्वरूपानवभासस्येति**। नास्ति न प्रकाशते च ब्रह्मेति व्यवहारालम्बनयोग्यत्वस्य कार्यदर्शनादेव कल्प्यमानस्येत्यर्थः। ततश्चात्मनि अस्ति प्रकाशते च ब्रह्मेति प्रकाशसामग्र्यां सत्यां तथा अनवभासान्यथानुपपत्त्या तद्योग्यत्वमात्मन्यनिर्वाच्याज्ञानप्रतिबन्धः आवरणकृत्यं सिद्ध्यति। अत एव तस्यानिरूपिताकारता च युक्तेति समुदायार्थः। अन्यमानाभावादनवभासमाशङ्क्य, सामग्रीसत्त्वं मत्वा आह—**अनन्येति**। अन्यथोपपत्त्यभावे फलमाह—**अत इति**। कृत्यान्तरं चास्तीत्याह—**अहङ्कारादीति**॥

---

कृत्यासम्भवादाच्छादनातिशयसम्पादनपुरस्सरमेव विपर्यासोत्पत्तिहेतुता अङ्गीकर्तव्या।
इह तु स्वरूपस्य जडत्वादेव स्वसत्तायां यथावत् प्रकाशाभावादज्ञानेन केवलविपर्यासोत्पत्ति-
स्तत्र सम्भवतीत्यर्थः। अज्ञानस्य शुक्तिकादौ विपर्यासातिशयसम्भवात्तज्जनकत्वेन तद्विषयत्वं
टीकाकारेणोक्तं यत् तत् सिद्धान्तत्वेन नोक्तम्। किंन्तु लोकबुद्ध्यनुसारेणोक्तम्। तत् कथं
ज्ञायत इति चेत् **तत्स्वरूपसत्तामात्रानुबन्धिनी**त्युक्तत्वात्, **सर्वलोकसाक्षिकमे-
तदिति** वक्ष्यमाणत्वाच्च ज्ञायत इति, प्रमाणसम्भवात् प्रयोजनसम्भवाच्चाज्ञानेनात्मन्यावरणा-
तिशय उपपद्यते इत्याह—**प्रत्यगिति**। जडात्मवादं व्यावर्तयति (**चित्स्वरूप इति**।
साङ्ख्यमतं व्यावर्तयति)—**चितिस्वभावत्वात् स्वयम्प्रकाशमान इति**॥

इदानीं प्रधानचोद्यं परिहरति—**अत इति**। **अतः**—कारणात्मनेत्यर्थः। मीमांसक-
नैयायिकवैशेषिकबौद्धादिभिरिव कारणात्मना अविद्यमानस्यैव कार्यस्य तस्मादुत्पन्नत्वविधया

**निमित्तं च भवति, सुषुप्त्यादौ च अहङ्कारादिविक्षेपसंस्कारमात्रशेषं स्थित्वा पुनरुद्भवति, इत्यतः नैसर्गिकोऽपि अहङ्कारममकारात्मको मनुष्याद्यभिमानो लोकव्यवहारः मिथ्याज्ञाननिमित्तः उच्यते ; न पुनः आगन्तुकत्वेन । तेन नैसर्गिकत्वं नैमित्तिकत्वेन न विरुध्यते ॥**

**अन्योन्यधर्मांश्च** इति पृथक् धर्मग्रहणं धर्ममात्रस्यापि कस्यचिदध्यासः इति दर्शयितुम् । **इतरेतराविवेकेन** इति । एकतापत्त्यैव इत्यर्थः ॥

---

अग्रहणमिथ्याज्ञानतत्संस्कारकर्मणां प्रतिबन्धकत्वोपपत्तेः न कदाचिदपि अज्ञानमस्तीत्यत्राह—**सुषुप्तादौ चेति** । तदा मिथ्याज्ञानाभावात्, अन्येषां चात्मनः सर्वात्मना स्फुरणाभावप्रसङ्गेनाप्रतिबन्धकत्वात्, अज्ञानस्य तु स्वसाधकसाक्ष्यप्रतिबन्धकत्वेन तदभावात् इत्यर्थः । असङ्गस्यात्मनः संस्काराद्यनादिप्रवाहान्यथानुपपत्त्यापि अनाद्यनिर्वाच्यमज्ञानं तिष्ठतीत्याह—**संस्कारमात्रशेषमिति** । तर्ह्यहङ्कारादेर्जन्माभावात् सादित्वं न स्यादित्यत्राह—**पुनरिति** । अहङ्काराद्यात्मनेति शेषः । अविद्याकार्यत्वं प्रसाध्य, अविद्यारूपेण अनादेरपि कार्यव्यक्तिरूपेण सादित्वमविरुद्धमित्याह—**अत इति** । **न पुनरागन्तुकत्वेनेति** । असत्कार्यवादेष्विव ना(यं)[भिनव]जन्मापेक्षयेत्यर्थः ॥

धर्मिणोरैक्याध्यासोक्त्या धर्माध्यासस्यापि सिद्धत्वात् पृथग्धर्मग्रहणं व्यर्थमित्यत्राह—**अन्योन्येति** । **अविवेकेने**त्युक्त्या प्राप्तामख्यातिं वारयति—**एकतापत्त्येति** ।

---

नैमित्तिकत्वमाचार्येण नोक्तमित्याह—**न पुनरागन्तुकत्वेनेति** । **अविवेकेने**त्युक्त्या प्रसक्तामख्यात्यभ्युपगमशङ्कां परिहरति—**एकतापत्त्यैवेति** । क्षेत्रपुत्रादीनां अहङ्कारपर्यन्तानां सर्वेषां धर्मिणां मध्ये कस्य धर्मिण आत्मन्यध्यास इति संशयस्य, कुत्र वाध्यासः अन्तःकरणस्य, एवं तद्व्यतिरिक्तधर्मिधर्माध्यासः केवलधर्माध्यासश्च शुद्धात्मनि वा अन्तःकरणाध्यासोपहिते वा इति संशयस्य, कथं वा अध्यासः, सर्वत्र तादात्म्याध्यासः उत क्वचित् तादात्म्याध्यासः क्वचित् सम्बन्धमात्राध्यासो वेति संशयस्य, धर्मिव्यतिरेकेण धर्ममात्रस्य क्व पुत्राद्युदाहरणेऽध्यास इति संशयस्य, अनात्मनि आत्माध्यासे च कस्य धर्मिणः, कुत्र वा

**कस्य धर्मिणः कथं कुत्र च अध्यासः, धर्ममात्रस्य वा क अध्यासः, इति भाष्यकारः स्वयमेव वक्ष्यति। अहमिदं ममेदम् इति अध्यासस्य स्वरूप दर्शयति। अहमिति तावत् प्रथमोऽध्यासः। ननु अहमिति निरंशं चैतन्यमात्रं प्रतिभासते, न अंशान्तरं अध्यस्तं अनध्यस्तं वा। यथा अध्यस्तांशान्तर्भावः तथा दर्शयिष्यामः। ननु इदमिति अहङ्कर्तुः भोगसाधनं कार्यकरणसङ्घातः अवभासते, ममेदमिति च अहङ्कर्त्रा स्वत्वेन तस्य सम्बन्धः। तत्र न किञ्चित् अध्यस्तमिव दृश्यते।**

---

क्षेत्रादीनामहङ्कारान्तानां धर्मिणां मध्ये कस्य केवलात्मनि अध्यासः, कस्य वा अन्तःकरणोपहिते, कस्य तादात्म्येनाध्यासः, कस्य वा सम्बन्धित्वेन, धर्ममात्रस्य वा कस्य क अध्यासः इत्यत्राह—**कस्येति**। आत्मनि अनादिसिद्धेऽप्यज्ञानाध्यासे, कार्याध्यासमपेक्ष्याह—**अहमितीति**॥

'इद रजतम्' इतिवदध्यासे द्वैरूप्यमहमित्यत्रापि वाच्यम्, अहमिति च एकरूपावभासान्नाध्यास इति शङ्कते—**नन्वहमिति**। यथा द्वैरूप्येणाध्यासः स्यात्तथा वक्ष्यत इत्याह—**यथेति**। अन्तःकरणेन्द्रियाणामिन्द्रियादिभिरिदम्बुद्धिगृहीतत्वाभावेन केवलसाक्षिवेद्यत्वात् स्वरूपेण संबन्धित्वेन चाध्यस्तत्वमस्तु, देहस्य तु इन्द्रियैरिदम्बुद्धिगृहीतत्वात् केवलसाक्षिवेद्यत्वाभावान्नाध्यस्ततेति शङ्कते—**नन्विति**। देहातिरिक्तस्याबाधितममबुद्धिगृहीततया स्वस्वामिभावसम्बन्धसत्त्वात् सुतरामनध्यस्ततेत्याह—**ममेदमिति**। देहादिपदार्थस्य कार्यतया भोग्यतया प्रमेयतया द्रष्टव्यतया चाध्यस्तकर्तृभोक्तृप्रमातृदोषसंयुक्तात्मार्थत्वात्

---

अध्यासः, केवलस्यात्मनो धर्मिणोऽन्तःकरणादावध्यासः उत केवलस्यान्तःकरणाध्यासः देहे तु स्वस्मिन्नात्माध्यासादपरोक्षस्यान्तःकरणस्य धर्मिणः अध्यास इति संशयस्य च, निरासं **भाष्यकार** एव करिष्यतीत्याह—**कस्य धर्मिण इति**॥

क्षपणकपक्षं व्यावर्तयति—**निरंशेति**। जडस्वभाव आत्मा इति पक्षं व्यावर्तयति—**चैतन्येति**। द्रव्यबोधस्वभाव इति पक्षं व्यावर्तयति—**मात्रमिति**। एकस्यैव द्रष्टुरवभास-

उच्यते—यदैव अहङ्कर्ता अध्यासात्मकः तदैव तदुपकरणस्यापि तदात्मकत्वसिद्धिः। न हि स्वप्नावाप्तराज्याभिषेकस्य माहेन्द्रजालनिर्मितस्य वा राज्ञः राज्योपकरणं परमार्थसत् भवति। एवं अहङ्कर्तृत्वप्रमुखः क्रियाकारकफलात्मको लोकव्यवहारः अध्यस्तः नित्यशुद्धबुद्धमुक्तस्वभावे आत्मनि। अतः तादृग्ब्रह्मात्मानुभवपर्यन्तात् ज्ञानात् अनर्थहेतोः अध्यासस्य निवृत्तिरुपपद्यते इति तदर्थविषयवेदान्तमीमांसारम्भः उपपद्यते ॥

आह—कोऽयमध्यासो नाम इत्याद्यारभ्य अध्याससिद्धिपरं भाष्यम्। तत्रापि कथं पुनरविद्यावद्विषयाणि इत्यतः

---

स्वरूपेणापि मिथ्यात्वं स्वप्नदृष्टान्तेनानुमेयमित्याह—**उच्यत इति**। एकस्यैव द्रष्टुः अवगतत्वात् स्वप्नस्य मिथ्यात्वमस्तु, स्थूलदेहस्य तु सर्वेषामवभासमानत्वात् न मिथ्यात्वमित्यत्राह—**इन्द्र[माहेन्द्र]जालेति**। दार्ष्टान्तिकमाह—**एवमिति**। अध्याससिद्धौ फलमाह—**अत इति**। तादृगद्वितीयं ब्रह्म विषयः तस्य साक्षात्कारशिरस्कात् ज्ञानादात्यन्तिकी बन्धनिवृत्तिः प्रयोजनं च सिध्यतीत्यर्थः। यद्वा ब्रह्मैवानुभवो ब्रह्मानुभवः, तत्पर्यन्तात् तद्विषयादित्यर्थः। विषयप्रयोजनसिद्धौ फलमाह—**तदर्थेति**। ब्रह्मबन्धनिवृत्ती अर्थः प्रयोजनं विषयश्च यस्या इति विग्रहः।

तर्ह्यध्यासस्य समर्थितत्वात् **सर्वलोकप्रत्यक्ष** इत्यन्तस्योत्तरभाष्यस्य वैयर्थ्यमित्याशङ्क्य, तात्पर्यमाह—**आह कोऽयमिति**। अध्यासासम्भवे परोक्तयुक्तिनिरासेनाध्यासस्योपस्थापकमात्रं पूर्वभाष्यम्। उत्तरं तु लक्षणादिभिरध्याससाधकमित्यर्थ.। कथं तर्हि अवान्तरवाक्यभेदप्रतीतिरित्याशङ्क्य, विभज्य अवान्तरतात्पर्यमाह — **तत्रापीति**। **कथं पुनरविद्यावद्विषयाणी**त्यतः

---

मानत्वात् स्वप्नप्रपञ्चस्य मिथ्यात्वमस्तु, अस्य तु स्थूलदेहस्य सर्वेषामवभासमानत्वात् न मिथ्यात्वमिति, नेत्याह—**माहेन्द्रजालेति**। **अहंकर्तृत्वेति**। कर्तृत्वभोक्तृत्वरागद्वेषसंयुक्तत्वाद्युच्यते। फलकल्पनायाः क्रियाकल्पनायाः कर्त्रादिशक्तिकल्पनायाश्च अधिष्ठानत्वाय यथाक्रमं तद्विपरीतरूपमाह—**नित्येत्यादिना**॥

**प्राक् अध्यासस्वरूपतत्सम्भावनाय। तदादि तत्सद्भावनिर्णयार्थं इति विभागः। यद्येवं तत्स्वरूपतत्सम्भावनोपन्यासः पृथक् न कर्तव्यः। न हि अनिर्ज्ञातरूपं असम्भाव्यमानं च निर्णीयते च इति। दुःसम्पादं विशेषतः अध्यक्षानुभवनिर्णये। उच्यते— न देहेन्द्रियादिषु अहंममाभिमानवत एव प्रमातृत्वप्रदर्शनमात्रेण तस्य अध्यासात्मकता सिध्यति ॥**

---

प्राक् **एकश्चन्द्रः सद्वितीयव**दित्यन्तमध्यासस्वरूपपरम्। ततः परं संभावनापरमित्यर्थः ॥

यदि प्रमाणप्रतिपादकं भाष्यमस्ति, तर्हि लक्षणसम्भावने पृथक् न वाच्ये इत्याक्षिपति — **यद्येवमिति**। प्रमाणेन प्रमेयमध्यासं निर्णयता अव्यावृत्ताकारमसम्भावितं च निर्णीयत इति वक्तुमयुक्तत्वादिति हेतुमाह — **न हीति**। युक्तमिति शेषः। अनुमानादिना वस्तुमात्रे ज्ञाते विशेषलक्षणसम्भावने पृथगपेक्ष्येते इत्यत्राह—**दुस्संपादमिति**। अध्यक्षेण त्वसाधारणाकारेण निर्णीतत्वादयुक्तमित्यर्थः। द्रष्टृदृश्यात्मनाऽवभासमात्रे प्रमाणानि वक्ष्यन्ते, न तस्य मिथ्यात्वादाविति समाधत्ते — **उच्यत इति**। तेनैव प्रमाणेन तन्मिथ्यात्वमपि सिध्यति प्रमेयैक्यात्, अध्यक्षात् विशेषसिद्धिश्चोक्तेति शङ्कते

---

**अध्याससिद्धिपरमिति**। व्यावृत्तस्वरूपसिद्धिरेका, अयमत्र सम्भवत्येवेति सम्भावनासिद्धिः द्वितीया, अयमस्त्येवेति निश्चयसिद्धिः तृतीया, एतत्त्रितयसिद्धिपरमित्यर्थः। अवान्तरतात्पर्यकथनसमये **भाष्यत्रयं** प्रत्येकमुपादाय तात्पर्यं वक्तव्यम्, किमिति **भाष्यद्वयस्य** सहोपादानमित्याशङ्का च, तन्त्रेण कृतप्रश्नाक्षेपपरिहारत्वेनैकराशित्वात्, लक्षणसिद्धस्वरूपस्याक्षेपेण शिथिलीकारादसत्समत्वे सम्भावनयैव स्थिरीकृतत्वाच्च, लक्षणसम्भावनाभाष्ययोः सहोपादानमिति परिहारश्च, बहिरेव द्रष्टव्यम्। साक्षिप्रत्यक्षसिद्धेऽध्यासे लक्षणं सम्भावना चोच्यते, अतः साक्षिप्रत्यक्षसिद्धाध्यासस्य यथावदनुवादकस्य **तमेतमित्यादिभाष्यस्य अतः प्रागिति पूर्वभाष्याभ्यां** सहोपादानं कृतम् ॥

साक्षिप्रत्यक्षस्य सर्वप्राणिनामुपदेशनिरपेक्षत्वेन स्वतस्सिद्धत्वात् तदनुवादसम्भावनासाङ्कर्यभ्रमनिवर्तकसम्भावनालक्षणे वक्तव्ये इत्याशङ्क्य, प्रमाणादेवोभयभ्रमनिवृत्तिसिद्धेः तदर्थं ते न वक्तव्ये इत्याह—**पृथगिति**। प्रमाणस्यार्थादुभयभ्रमनिवर्तकत्वसामर्थ्यं प्रदर्श-

**तत् कस्य हेतोः? लोके शुक्तिरजतद्विचन्द्रादिवत् अध्यासानुभवाभावात्। बाधे हि सति स भवति। नेह स विद्यते। तस्मात् अध्यासस्य लक्षणमभिधाय तल्लक्षणव्याप्तस्य सद्भावः कथनीयः॥**

**ननु एवमपि तल्लक्षणस्य वस्तुनः सद्भावमात्रं इह कथनीयम्। न हि यत्र यस्य सद्भावः प्रमाणतः प्रतिपन्नः तत्रैव**

---

—**तत् कस्येति**। न, अनुभवाभावादित्याह—**लोके इति**। माने सति किमित्यनुभवाभाव इति चेत्, मानभेदादित्याह — **बाधे हीति**। बाधानुपपत्तिर्मिथ्यात्वे मानम्। अध्यक्षादयस्तु आत्मन्यनात्मावभासमात्रे इति भावः।

[ननु] अन्यस्यान्यात्मतावभा (से) [सं] विज्ञातुं बाधनिमित्तमन्योन्यभेदज्ञा(नत्वाच्च।)[नमपेक्ष्यते।]अन्यथा स्वस्यैव स्वेनात्मनावभासापत्तेरित्यत्राह—**नेहेति**। युक्त्यादिजन्यं परोक्षं भेदज्ञानमन्यस्यान्यात्मतावभासनिश्चायकमस्ति। अपरोक्षज्ञानस्याभावादपरोक्षभ्रान्तिबाधो नास्ति। अतो न स्पष्टो मिथ्यात्वावभास इति भावः। सर्ववादिनां मानात् पृथक् लक्षणादिकथनं च न स्यादित्यूह्यम्। अतो मिथ्यात्वस्पष्टीकरणाय लक्षणं पृथग्वाच्यमित्याह—**तस्मादिति**॥

तथापि मानादेवासम्भावनानिरासात् मानलक्षणाभ्यामेवाध्याससिद्धेः सम्भावना पृथक् न वाच्येति शङ्कते—**नन्वेवमिति**। दर्पणे प्रतिपन्नस्य मुखस्य तत्रासम्भावना दृश्यत इत्यत्राह—**प्रमाणत इति**। एकस्मिन् देशे काले मानतः प्रतिपन्नस्य घटादेरन्यत्रासम्भावना दृश्यत इत्यत्राह—**तत्रेति**। मानसिद्धस्यापगमे विनाशे च सति तत्राप्यसम्भावना दृश्यत इत्याशङ्क्य, पूर्वकालविशिष्टदेशे प्रतिपन्नस्य घटादेरुत्तरकालविशिष्टदेशे त्वसम्भावना, न तत्रैवेत्याह—**एवेति**। तत्राप्रतिपन्नस्यान्यस्य तत्रासम्भावनाशङ्कां निरस्यति—

---

यति—**न हीति**। **न हि यत्र यस्य सद्भावः प्रतिपन्न** इत्युक्ते, दर्पणे प्रतिपन्नमुखस्य तत्रासम्भावना दृश्यत इत्याशङ्क्य, तद्व्यावर्तयति—**प्रमाणत इति**। (यत्र) भूतले प्रमाणतः प्रतिपन्नस्य घटस्य तस्मादपगमे नाशे वा सति तत्रासम्भवो दृश्यत इत्याशङ्क्य, पूर्वकालविशिष्टदेशे प्रतिपन्नस्य घटस्य उत्तरकालावच्छिन्नदेशे त्वसम्भावना, न तु तत्रैवेत्याह—**तत्रैवेति**। तत्राप्रतिपन्नस्यान्यस्य तत्रासम्भावनाशङ्कां व्युदस्यति—**तस्येति**॥

**तस्य असम्भावनाशङ्का, येन तद्विनिवृत्तये तत्सम्भावना अपरा कथ्येत । सत्यमेवम् । विषयविशेषस्तु प्रयत्नेन अन्विच्छद्भिरपि अनुपलभ्यमानकारणदोषे विज्ञाने, अवभासमानोऽपि पूर्वप्रवृत्तेन सकललोकव्यापिना निश्चितेन प्रमाणेन असम्भाव्यमानतया अपोद्यमानो दृश्यते । तद्यथा—औत्पातिकः सवितरि**

---

**तस्येति ।** मानस्यासम्भावनानिरासमसामर्थ्यं विषयविशेषेऽस्ति, न सर्वत्रेति परिहरति—**सत्यमिति** ॥

व्यभिचारस्थलमाह—**विषयविशेष इति ।** सवितृसुषिज्ञानस्य दुष्टकारणजत्वात् असम्भावनानिराससामर्थ्याभाव इत्यत्राह—**अनुपलभ्यमानेति ।** प्रत्यक्षबाधाभावात् तत्कल्प्यकाचादिदोषो नास्ती(त्येतद)[त्य]र्थः । प्रत्यक्षबाधावकल्प्यकारणदोषाभावेऽपि गुञ्जाप्रवालविषयाग्निज्ञानस्य लक्षणतोऽन्वेषणे सादृश्यादिदोषजत्वं दृश्यते, तद्वदत्रापि स्यादित्यत्राह—**अन्विच्छद्भिरिति ।** पर्वताग्रस्थवृक्षेषु अल्पत्वज्ञानस्य समीपगमनप्रयत्नभावेन दूरस्थत्वदोषजत्वं दृश्यते, तद्वदिहापि स्यादित्यत्राह—**प्रयत्नेनेति ।** असम्भावनाहेतोः ज्ञानस्य कुतः प्राबल्यमित्यत्राह—**पूर्वेति ।** शुक्तिरूप्यादिज्ञानात् व्यावृत्तिमाह—**प्रवृत्तेनेति ।** उष्णं जलं, आदित्यः कूटस्थः इत्यादिज्ञानं व्यावर्तयति—**सकललोकव्यापिनेति ।**

---

प्रमाणस्यासम्भावनाभिभवनसामर्थ्यं क्वचिद्विषयविशेषे, न तु सर्वत्रेत्याह—**सत्यमेवमिति ।** व्यभिचारस्थलमाह—**विषयविशेष इति ।** सवितृसुषिज्ञानस्य दुष्टकारणजन्यत्वादेवासम्भावनातिरस्करणसामर्थ्यं नास्तीत्याशङ्क्य, प्रत्यक्षबाधाभावात्तत्कल्प्यकाचादिदोषहीनमित्याह—**अनुपलभ्येति ।** गुञ्जाप्रवालरागसाङ्कर्यज्ञानस्य प्रत्यक्षबाधयोपलभ्यमानकाचदोषहीनत्वेऽपि लक्षणतोऽन्वेषणेन सादृश्यदोषजन्यत्वं दृश्यते, तद्व्यावृत्त्यर्थमाह—**अन्विच्छद्भिरिति ।** पर्वताग्रवृक्षेष्वल्पत्वज्ञानस्यैतादृशदोषजन्यत्वाभावेऽपि समीपगमनप्रयत्नेन दूरदेशस्थितत्वदोषजन्यत्वं दृश्यते । तद्व्यावृत्त्यर्थमाह—**प्रयत्नेनेति ।** असम्भावनाहेतोर्ज्ञानस्य कस्मात् प्राबल्यमिति, तदाह—**पूर्वेति ।** शुक्तिकारजतादिज्ञानाद्व्यावृत्तिमाह—**प्रवृत्तेनेति ।** उष्णं जलमादित्यः कूटस्थ इत्यादिज्ञानात् व्यावृत्तिमाह—**सकललोकव्यापिनेति ।** ह्रस्वोऽकार इत्यादिज्ञानाद्व्यावृत्तिमाह—**निश्चितेनेति ।** ह्रस्वत्वादिज्ञानमौपाधिकधर्मविषयं वर्णसमवेतधर्मविषयं वेति सन्दिग्धमित्यर्थः ।

**सुषिः। यथा वा महेन्द्रजालकुशलेन प्रासादादेः निगरणम्। एवं अविषये असङ्गे केनचिदपि गुणादिना अध्यासहेतुना रहिते निष्कलङ्कचैतन्यतया अन्यगतस्यापि अध्यासस्य अपनोदन-समर्थे अध्यासावगमः अविभाव्यमानकारणदोषः विभ्रमः इति**

---

ह्रस्वोऽकार इत्यादिज्ञानाद्व्यावृत्तिमाह — **निश्चितेनेति**। ह्रस्वत्वादिज्ञानं किमौपाधिकधर्मविषयं, वर्णधर्मविषयं वेति सन्देह्यमित्यर्थः। सवितृसुषिज्ञानस्य, कस्यचिदेव आसन्नमरणस्योत्पत्तेः दौर्बल्यादपोद्यते इत्यत्राह—**यथा चेति**। तथा पक्षिणामाकाशगमने मानेनैवासम्भावनानिरासोऽपि दृश्यते। तत्रात्मन्य-नात्मावभासः कं पक्षमाश्रीयतामित्याशङ्क्य, असम्भावनापक्षमेवेत्याह—**एवमिति**॥

अधिष्ठानस्याध्यस्यमानेन सह एकज्ञानविषयत्वं वाच्यम्, तद-भावान्नाध्याससम्भव इत्याह—**अविषये इति**। द्रष्टुरन्यस्य कृत्स्नस्य कार्य-करणसङ्घातस्याध्यासात्मकत्वे, द्रष्टर्येव काचादिवद्दोषानुषङ्गो वाच्यः। तदभावान्नाध्याससम्भव इत्याह — **असङ्गे इति**। अधिष्ठानस्याध्यस्यमानेन गुणावयवसादृश्यं वाच्यम्, तदभावान्नाध्याससम्भव इत्याह—**गुणादिनेति**। अधिष्ठानतत्त्वज्ञानं अध्यासविरोधि, तद्भावाच्च नाध्याससम्भव इत्याह—**निष्कलङ्कचैतन्यतयेति**। अधिष्ठानतत्त्वज्ञानं नाध्यासविरोधि, किन्तु तद्विषय-बुद्धिवृत्तिः। लोकेऽपि तद्विषयबुद्धिवृत्तेरेव विरोधित्वात्। अतोऽध्यासविरोध्यहं-ब्रह्मास्मीति बुद्धिवृत्तेरभावात् अध्यासः स्यादित्यत्राह—**अन्येति**। अधिष्ठान-तत्त्वविषयबुद्धिवृत्तेः नाध्यासविरोधः, जडत्वात्। शुक्तिरूप्यादावपि शुक्त्यादि-तत्त्वविषयबुद्धिवृत्तौ प्रतिबिम्बितं चैतन्यमेवाध्यासविरोधि, तत्र किमु वक्तव्यं स्वगताध्यासबाधकत्वे इत्यर्थः॥

---

सवितरि सुषिप्रतिभासः कस्यचिदेवासन्नमरणस्य भवतीति तस्यासम्भावनातो दौर्बल्यं, देहात्माभिमानप्रत्यक्षं तु सर्वजनप्रसिद्धत्वात् प्रबलमित्याशङ्क्योदाहरणान्तरमाह—**यथा [त्रे]चेति**। अधिष्ठानतत्त्वस्फुरणं नाध्यासविरोधि, किन्तु तद्विषयबुद्धिवृत्तिरेव, लोकेऽपि शुक्तितत्त्वविषयबुद्धिवृत्तेरेव विरोधित्वात्। अतोऽत्र अहं ब्रह्मास्मीति ब्रह्मतत्त्व-विषयबुद्धिवृत्त्यभावादध्यासोऽस्त्वित्याशङ्क्य, तत्रापि शुक्त्याकारबुद्धिवृत्तिप्रतिबिम्बिताजडबो-

**आशङ्क्येत, तत् मा शङ्कि इति सद्भावातिरेकेण सम्भवोऽपि पृथक् कथनीयः। तदुच्यते। आह—कोऽयमध्यासो नाम इति किंवृत्तस्य प्रश्ने आक्षेपे च प्रयोगदर्शनात् उभयस्य च इह सम्भवात् तन्त्रेण वाक्यमुच्चरितम्। तत्रापि प्रथमं प्रश्नस्य प्रतिवचनं स्वरूपं आख्याय पुनः तस्यैव सम्भवं आक्षिप्य**

---

**विभ्रम इति।** साधनासमर्थं ज्ञानमित्यर्थः। आत्मन्यविषयादिरूपेऽनवगते नासम्भावनाबुद्धिः। अवगते तु नाध्यास एव तिष्ठति। कुतोऽसम्भावनाबुद्धिरिति चेत्, न; अविषयादिरूपस्यात्मनः परोक्षावभासोऽसम्भावनाबुद्धिहेतुः। अपरोक्षावभासोऽध्यासबाधक इत्युक्तमिति मत्वोपसंहरति— **तन्मा शङ्कीति।** अतः त्रितयं लक्षणसम्भावनाप्रमाणं क्रमेणोच्यते इत्याह—**तदुच्यत इति।** नियमादर्थद्वयपरत्वमयुक्तमित्यत्राह—**तन्त्रेणेति।** युगपदर्थद्वयपरतया वाक्यद्वयमित्यर्थः। अर्थद्वयपरत्वे हेतुमाह—**किंवृत्तस्येति।** शब्दस्यार्थद्वयसाधारणत्वेऽप्यत्रोभयार्थासभवात् उभयपरत्वं न युक्तमित्यत्राह—**उभयस्येति।** लक्षणप्रश्नस्य सम्भावनाक्षेपस्य चेत्यर्थः॥

प्रश्नाक्षेपयोस्तन्त्रेण कृतत्वे तयोः परिहारोऽपि तन्त्रेण कर्तव्यः। अशक्त्या क्रमाश्रयणेऽपि, अध्यासस्वरूपघातकत्वेन आक्षेपस्य प्राबल्यात् प्रथमं स एव परिहरणीय इत्यत्राह—**तत्रापीति।** प्रतिवचनस्य स्वरूपाख्यानत्वात् प्रथमं तत् कृत्वा, तस्योक्तलक्षणस्याध्यासस्य शुक्त्यादौ सम्भवं चाङ्गीकृत्य, पश्चादिह आत्मनि सम्भवमाक्षिप्य समाधीयते। अन्यथा आक्षेपसमाधानयोर्निर्विषयत्वापातादित्यर्थः। अथापि **आहेति** परोक्तिकथनं व्यर्थमित्यत्राह—**तत्रेति।**

---

धस्यैव निवर्तकत्वमित्याह—**अन्यगतस्यापीति।** **विभ्रम इति।** कृत्यं साधयितुमसमर्थप्रतिभास इत्यर्थः॥

प्रश्नाक्षेपपरत्वे कारणमाह—**किंवृत्तस्येति।** शब्दस्यार्थद्वयसाधारणत्वेऽप्यत्रोभयार्थासम्भवादुभयपरत्वमयुक्तमित्याशङ्क्याह—**तन्त्रेणेति।** प्रश्नाक्षेपयोस्तन्त्रेण कृतत्वे तयोः परिहारोऽपि तन्त्रेण कर्तव्यः। अन्याय्यक्रमाश्रयणेऽपि [अध्यास]स्वरूपापहारकत्वेनाक्षेपस्य प्रबलत्वात् प्रथमं स एव परिहरणीय इति, नेत्याह—**तत्रापीति।** उक्तलक्षणाध्यासस्य

**प्रतिविधत्ते। तत्र एवम्भूते विषये श्रोतॄणां सुखप्रबोधार्थं व्याचक्षाणाः प्रतिवादिनं तत्रस्थमिव समुत्थाप्य तेन आक्षिप्तं अनेन पृष्टमिति मत्वा प्रत्युक्तम्, पुनरसौ स्वाभिप्रायं विवृणोति**

---

**एवम्भूते**—दुरवगाह्यपुरुषार्थरूपे। **सुखप्रतिपत्त्यर्थम्** वीतरागाभ्यां पक्षप्रतिपक्षपरिग्रहरूपतया तत्त्वनिर्णयावसाना वादकथा शास्त्रे प्रवृत्तेति ख्यापनार्थं च, परोक्तिकथनेन अपुरस्स्थमपि प्रतिवादिनं पुरःस्थमिवोत्थाप्य प्रत्युक्तमित्यर्थः॥

स्वरूपाख्यानात् प्राङ्निर्विषयत्वादाक्षेपस्य अनवसरदुःस्थत्वमनुक्त्वा किमिति प्रश्नस्योत्तरं दत्तमित्यत्राह—**तेनेति**। अनवसरदुःस्थत्वोक्तावात्मनोऽप्राप्तकारितावुद्ध्या कुण्ठितमतिः प्रश्नस्योत्तरमपि प्रतिपत्तुं न शक्नुयात्, तत्र वादकथातोऽत्रार्थनिर्णयाभावप्रसङ्गात् तस्याज्ञानं स्वस्मिन्नारोप्य, तेन प्रतिवादिना **आक्षिप्तमपि पृष्टमेवेति मत्वेत्यर्थः**। किमिति तर्हि यदुक्तमित्यनुवादरूपेणाक्षेपमवतार्य न समाधीयते ? इत्यत्राह—**पुनरिति**। अनुवादरूपेणाक्षेपेऽवतारिते, मया प्रश्नाक्षेपौ सहकृताविति ज्ञात्वैव प्रबलाक्षेपस्य परिहारमनवसरदुःस्थत्वमनुक्त्वा दुर्बलप्रश्नस्योत्तरं दत्तवान् वादी, अहं तु अप्राप्तकारी इति कुण्ठितमतिः स्यात्, तथा च तत्त्वनिर्णयो न स्यात्, तन्मा भूदिति तस्याज्ञानं स्वस्मिन्नारोप्य

---

शुक्त्यादौ सम्भवमङ्गीकृत्य पुनस्तस्येह आत्मनि सम्भवमाक्षिप्येत्यर्थः। **एवम्भूते इति**। दुरवगाहे [परम]पुरुषार्थरूपे इत्यर्थः। वादकथायामहं प्रवृत्त इति ख्यापनार्थं सुखप्रतिपत्त्यर्थं पुरस्स्थाने प्रतिवाद्यभावेऽपि, **प्रतिवादिनं तत्रस्थमिव समुत्थाप्येति** 'आह' इत्यस्य पदस्यार्थः कथितः। प्रथमप्राप्तप्रश्नस्य प्रथमं परिहारोक्तिरस्तु, अनवसरदुःस्थोऽयमाक्षेप इति किमित्याक्षेपस्तंभो न कृत इत्याशङ्क्य, तथा कृते सति आत्मनोऽप्राप्तकारितां बुद्ध्वा कुण्ठितमतिः प्रश्नपरिहारमवगन्तुं न शक्नोति। तत्र वादकथातोऽर्थनिर्णयो न सिध्यतीति मत्वा तदज्ञानं स्वस्मिन्नारोप्य परिहारमाहेत्याह—**तेनाक्षिप्तमनेन पृष्टमेवेति मत्वेत्यादिना**। आक्षेपावतारसमये यदुक्तमित्यनुवादरूपेण किमित्याक्षेपो नावतार्यत इत्याशङ्क्य, तथा कृते मया प्रश्नाक्षेपौ सह कृताविति जानन्नपि दुर्बलप्रश्नस्य परिहारं प्रथमं विधाय, अनवसरदुस्थत्वादेव प्रबलाक्षेपं परिहरतीत्यतोऽप्राप्तकार्यासं इत्यात्मनोऽप्राप्तकारितां बुद्ध्वा कुण्ठितमतिराक्षेपपरिहारमवगन्तुं न शक्नोति; तदा वादकथातोऽर्थनिर्णयो न सिध्यतीति मत्वा पुनरपि तस्याज्ञानं स्वात्मन्यारोप्य वादकथां प्रवर्तयतीत्याह—**पुनरसाविति**॥

**इति आक्षेपमवतार्य प्रतिविधानं प्रतिपद्यन्ते। सर्वत्र एवंविधे ग्रन्थसन्निवेशे एष एव व्याख्याप्रकारः।**

**स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति प्रश्नवाक्यस्थितं अध्यासं उद्दिश्य लक्षणं अभिधीयते। तत्र, 'परत्र' इत्युक्ते अर्थात् परस्य अवभास[स्य]मानता सिद्धा। तस्य विशेषणं स्मृतिरूपत्वम्। स्मर्यते इति स्मृतिः। असञ्ज्ञायामपि अकर्तरि**

---

**पुनरसौ** प्रतिवादी आक्षेपरूपेण **स्वाभिप्रायं विवृणोतीत्याक्षेपमवतार्य** समाधीयत इत्यर्थः ॥

शास्त्रेषु जल्पवितण्डाभिप्रायेणापि परोक्तिकथनं (चा)[अ]स्ति, कोऽयमिति प्रश्नमात्रं कृतम्, अनन्तरमस्योत्तरं दत्तम्, तदनन्तरमाक्षेपसमाधाने इति व्याख्यानं चैवंविधे ग्रन्थसन्निवेशेऽस्तीति, नेत्याह—**सर्वत्रेति**। परोक्तिकथनाभावे व्यामोहादपि जयापजयसिद्धेः तत्कथनवैयर्थ्यात्, प्रश्नाक्षेपसाधारणोऽपि शब्दः प्रश्नमात्रपरः, अत एव पश्चादपूर्वाक्षेप इति वक्तुमशक्यत्वाच्च तदुभयं न युक्तमित्यर्थः ॥

लक्षणवाक्ये लक्ष्याभिधायिनः पदस्याभावात् साकाङ्क्षवचनमनर्थकमित्याशङ्क्य, अनुषङ्गेण वाक्यं पूरयति—**प्रश्नेति**। परस्य परात्मतावभासोऽध्यास इति वक्ष्यति, तत्र कथमेकेनैव परशब्देन लक्षणं पूर्यते इत्यत्राह—**तत्रेति**। **अवभास्यमानतेति** कर्मव्युत्पत्त्या अर्थाध्यास उक्तः, तर्हि **स्मृतिरूप** इत्यस्यायोग्यत्वात् सामानाधिकरण्यं न स्यादित्यत्राह—**तस्येति**। तर्हि स्मृतिरूपोऽर्थ इति व्याहतिरित्यत्राह—**स्मर्यत इति**। घञादीनां भावे विधानात् कथं स्मृतिशब्दः कर्मणि व्युत्पाद्यत इत्यत्राह—**असंज्ञायामिति**। "अकर्तरि च कारके संज्ञायाम्" इति सूत्रात् कर्तृव्यतिरिक्ते कारके संज्ञायामिव असं[ज्ञा]यामपि प्रयोगो भवति। अतः कर्मव्युत्पत्तिः स्यादित्यर्थः। स्मर्यते

---

**अवभासमानतेति**। कर्मव्युत्पत्त्या अवभासशब्देऽर्थपरत्वेन योजिते, अवभासमानः स्मृतिरूप इति व्याहत्य। विशेषणविशेष्यत्वायोग्यतामाशङ्क्य परिहरति—**तस्य**

**कारके घञादीनां प्रयोगदर्शनात् । स्मर्यमाणरूपमिव रूपं अस्य, न पुनः स्मर्यते एव । स्पष्टं पुरोऽवस्थिततत्त्वावभासनात् । पूर्वदृष्टावभासः इति उपपत्तिः स्मृतिरूपत्वे । न हि पूर्वं अदृष्ट-**

---

चेद् रूपशब्दो व्यर्थ इति चेत्, स्मर्यमाणवस्तुन्युपमासमासार्थत्वान्नेत्याह—**स्मर्यमाणेति** । इदं रूप्यमिति स्मर्यत एव, अत उपमासमासो व्यर्थ इत्यत्राह—**न पुनरिति** । चक्षुरादिप्रमाणाभावात् परिशेषात् स्मर्यत इति, नेत्याह—**पुरोऽवस्थिततत्त्वावभासनादिति** । यथा अन्यत्र इदं रूप्यमयं घट इत्यादौ अन्योन्यसंसृष्टया सामान्यविशेषावपरोक्षाववभासेते, तथेहापि प्रतिभासनात् इत्यर्थः । अपरोक्षशुक्तिज्ञानाविवेकाद् रूप्यस्यापरोक्षतया अवभास इत्यत्राह—[**स्पष्टमिति** ।] विवेकज्ञानसमयेऽप्येतावन्तं कालमिदं रूप्यमित्यभादिति संसृष्टावभासत्वेन प्रत्यभिज्ञायोग्यतयेत्यर्थः ॥

स्मृतिरूपत्वाद्युक्तावतिव्याप्त्याद्यभावात् व्यर्थं **पूर्वदृष्टावभास**पदमित्याशङ्क्य, नैतल्लक्षणविशेषणमित्याह—**पूर्वदृष्टेति** । पूर्वं दृष्टं रूप्यं भ्रान्तौ प्रतीयत इत्यन्यथाख्यातिपक्षः, न त्वसिद्धान्तः, तत्र कथं पूर्वदृष्टावभास इत्युच्यत इत्याशङ्क्य, पूर्वदृष्टार्थः स्वयमेव भ्रान्तौ प्रतीयत इति नोच्यते, किन्तु रूप्यस्य पूर्वानुभवजनितसंस्काराद्भ्रान्तौ रूप्याकारप्रतीतिः, नान्यथेति विवक्षितमित्याह—**न हीति** यदा ज्ञानोपसर्जनोऽर्थोऽध्यासः, तदा स्मर्यमाणसदृशोऽन्यात्मनावभास्योऽन्यार्थोऽध्यास इति लक्षणवाक्यं योजितम् । इदानीं ज्ञानस्य संस्कारजन्यत्वे तदर्थो न युज्यत इत्याशङ्कां व्युदस्यन्, यदा अर्थोपसर्जनं ज्ञानमध्यासः, तदा स्मृतिसमानोऽन्यस्य अन्यात्मना अवभासोऽध्यास इति

---

**विशेषणमिति** । **तस्या**वभासमानस्य **स्मृतिरूपत्वं विशेषण**मिति पुनरपि व्याहतिरेवोक्ता न व्याहतिः परिहृतेत्यत आह—**स्मर्यत इति** ।

[**न पुनः स्मर्यत एवेति** ।] रूप्यस्य स्पष्टत्वादपरोक्षत्वात् पुरःस्थितत्वादादानादिप्रवृत्तिहेतुत्वेन पुरः प्रतिभासनात् तदवस्थिततत्त्वादिदमाकारावच्छिन्नत्वेन प्रतिभासनाच्च न स्मर्यमाणत्वमित्यर्थः । पूर्वदृष्टरजतं भ्रान्तौ प्रतीयत इत्यन्यथाख्यातिपक्षः, न तु सिद्धांतः । तत्र कथं **पूर्वदृष्टावभास** इत्याशङ्क्य, पूर्वदृष्टार्थस्यैव न भ्रान्तौ प्रतीतिरुच्यते, किन्तु पूर्वमनुभूतरजतस्यैव तत्संस्काराद् भ्रान्तौ रजताकारप्रतीतिर्नेतरस्येति विवक्षितमित्याह—

**रजतस्य शुक्तिसम्प्रयोगे रजतं अवभासते। यतः अर्थात् तद्विषयस्य अवभासस्यापि इदमेव लक्षणं उक्तं भवति। कथम्? तदुच्यते—स्मृतेः रूपमिव रूपमस्य, न पुनः स्मृतिरेव। पूर्वप्रमाणविषयविशेषस्य तथा अनवभासकत्वात्। कथं पुनः**

---

योजयितुं शक्यमित्याह—**यत इति**। **अर्थात्**—वाक्यसामर्थ्यात्। अर्थाध्यासपरत्वेन योजितं कथं ज्ञानाध्यासपरत्वेन योजयितुं शक्यम्? कथं चैकस्य वाक्यस्यार्थद्वयं स्यादिति शङ्कते—**कथमिति**। भावव्युत्पत्त्या ज्ञानप्रधानाध्यासपरत्वेनापि योजयितुं शक्यम्। अत एव आवृत्त्या वाक्यद्वयत्वादर्थद्वयं च स्यादित्याह—**तदुच्यत इति**। **पूर्वप्रमाणविषयो** जातिः। **तद्विशेषो** व्यक्तिः। **तथेति**। विशेषणावच्छेदकपरोक्षदेशकालविशिष्टतयेत्यर्थः। देशकालयोरग्रहणेन तद्विशिष्टव्यक्तिग्रहणाभावात् तद्व्यङ्ग्यजातिग्रहणस्याप्यभावेन पूर्वप्रमाणविषये कस्याप्यंशस्यानवभासकत्वादिति हेत्वर्थः। पूर्वप्रवृत्तप्रमाणविषये कस्याप्यंशस्यानवभासकत्वे, स्मृतिसमानत्वमपि न स्यादित्याशङ्कते—**कथं**

---

**न हीति**। ज्ञानस्य संस्कारजन्यत्वेन स्मृतित्वे सति[कथं] तदर्थस्य स्मर्यमाणत्वं नास्ति, अपि तु स्मर्यमाणसदृशत्वमेवेत्युक्तं? इत्याशङ्क्याह—**यत इति**। कथमर्थलक्षणमेव तद्विषयज्ञानस्यापि लक्षणं भवति? कथं वैकस्य वाक्यस्योभयलक्षणपरत्वम्? एतादृशविरुद्धोक्त्या अस्यां शङ्कायां कः परिहारो वोक्तः स्यादित्याक्षिपति—**कथमिति**। अवभासन**मवभासः** स्मरणं **स्मृति**रिति व्युत्पत्त्या अस्य लक्षणवाक्यस्यार्थोपसर्जनज्ञानप्रधानाध्यासलक्षणपरत्वमपि सम्भवति, स्मृतेः रूपमिव रूपमस्येति उपमासमासस्याङ्गीकृतत्वादुक्ताशङ्काया अप्यवकाशो नास्तीत्याह—**तदुच्यत इति**। अथवा—**अवभासः स्मृतिरूप** इत्येतत् पदद्वयं कर्मव्युत्पत्त्या अर्थप्रधानाध्यासलक्षणपरतया योजितं, तयैव व्युत्पत्त्या ज्ञानप्रधानाध्यासपरतया कथं योजयितुं शक्यत इत्याक्षिपति—**कथमिति**। भावव्युत्पत्त्या ज्ञानप्रधानाध्यासलक्षणपरत्वान्नायं दोष इत्याह—**तदुच्यत इति**। स्मृतिहेतु- **तथेति**। **पूर्वप्रमाणविषयो** नाम जातिः, तस्य **विशेषो** नाम तद्व्यञ्जकव्यक्तिः। तदभावात् विशेषावच्छेदकपरोक्षदेशकालविशिष्टतया ग्रहणाभावाद् व्यक्तिग्रहणाभावः। तदभावात् तदेकव्यङ्ग्यजातिग्रहणाभावः, अतः पूर्वप्रमाणविषये कस्यचिदप्यंशस्य अनवभासकत्वात् [न स्मृतित्वमि]त्यर्थः। तर्हि संस्कारजन्यत्वेन स्मृतिसदृशत्वमपि न सिध्यतीति चोदयति

**स्मृतिरूपत्वम् ? पूर्वप्रमाणद्वारसमुत्थत्वात् । न हि असम्प्रयुक्तावभासिनः पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्थत्वमन्तरेण समुद्भवः सम्भवति ॥**

**अपर आह—ननु अन्यसम्प्रयुक्ते चक्षुषि अन्यविषयज्ञानं स्मृतिरेव । प्रमोषस्तु स्मरणाभिमानस्य । इन्द्रियादीनां**

---

**पुनरिति । द्वारं**—संस्कारः । तदुत्थत्वं च पूर्वप्रमाणविषयानवभासकत्वे न स्यादित्यत्राह—**न हीति ॥**

संस्कारजत्वे सिद्धे प्राभाकरः प्रत्यवतिष्ठत इत्याह—**अपर इति ।** प्रत्यवस्थानप्रकारमाह—**नन्विति ।** रूप्यज्ञानं स्मृतिः, अन्यसंयुक्ते चक्षुषि समनन्तरमेव संस्कारजन्यान्यविषयज्ञानत्वात्, गवयादिस्मृतिवदित्यर्थः । स्मृतिश्चेद्रूप्यधीः, प्रसिद्धस्मृतिवद्गृह्यमाणात् स्वार्थं विवेचयेदित्यत्राह—**प्रमोषस्त्विति ।** शुक्तिसम्प्रयोगकाले सर्वसंस्कारेषु (स्वभाव) [सत्सु] रूप्यसंस्कारस्य च तदा सत्त्वे, किमिति तदेव तदैव स्मर्यत इत्यत आह—**इन्द्रियादीनामिति ।** स्मर्यतेऽनेनेति **स्मृति**रिति संस्कार उच्यते । **आदि**शब्द-

---

**—कथं पुनरिति । द्वार**शब्देन प्रमाणजन्यसंस्कार उच्यते । कार्यपर्यवसायिसंस्कारा-धानसामर्थ्यमाह—**पूर्वप्रवृत्तेति ॥**

रूप्यज्ञानं स्मृतिर्भवितुमर्हति; अन्यसंप्रयुक्ते चक्षुषि समनन्तरमेव संस्कारजन्यान्यविषयज्ञानत्वात्, गवयादिस्मृतिवदित्यनुमानमाह—**नन्विति ।** रूप्यज्ञानस्य स्मृतित्वे प्रसिद्धस्मृतिवद्ग्रहणार्थस्वार्थविवेचकत्वं स्यात्, अविवेचकत्वे ग्रहणवन्न स्मृतित्वं स्यादिति अनुमिते, विवेचकत्वाविवेचकत्वे स्मृतित्वास्मृतित्वयोः प्रयोजके न भवतः, किन्तु स्मरणाभिमानवत्त्वतद्रहितत्वे, इयं तु स्मरणाभिमानवत्त्वात् स्मृतिरेवेत्यप्रयोजकत्वे उक्ते, रजतज्ञानं स्मरणाभिमानशून्यं गृह्यमाणात् स्वार्थाविवेचकत्वात् सम्प्रतिपन्नवदित्याशङ्क्य, अप्रमुषितस्मरणाभिमानत्वं विवेचकत्वे प्रयोजकं न तु स्मरणाभिमानवत्त्वमित्यप्रयोजकत्वमाह—**प्रमोषस्त्विति ।** संस्कारादेव रूप्यज्ञानं जायते चेत् सदा संस्कारसद्भावात् सर्वदा किमिति न जायेतेत्याशङ्क्य, उद्बुद्धसंस्कारः कारणमित्याह—**स्मृतिसमुद्बोध इति ।** स्मर्यतेऽनेनेति स्मृतिरिति संस्कार उच्यते । इदमंशस्य रूप्येणाविनाभावादिसम्बन्धाभावादिदमंशदर्शनेन संस्कारोद्बोधो न सम्भवतीत्याशङ्क्य, अत्र दोषः संस्कारोद्बोधक इत्याह—**दोषेति ।** अर्थनाशजन्यसंस्कारोद्बोधकत्वं व्यावर्तयति—**ज्ञानकारणानामिति ।** तत्रापि चक्षुर्गत-

**ज्ञानकारणानां केनचिदेव दोषविशेषेण कस्यचिदेव अर्थविशेषस्य स्मृतिसमुद्बोधः क्रियते। सम्प्रयुक्तस्य च दोषेण विशेषप्रतिभास-हेतुत्वं करणस्य विहन्यते। तेन दर्शनस्मरणयोः निरन्तरोत्पन्नयोः करणदोषादेव विवेकानवधारणाद् दूरस्थयोरिव वनस्पत्योः अनुत्पन्ने एव एकत्वावभासे उत्पन्नभ्रमः। ननु अनास्वादिततिक्तरस-**

---

गृहीतविषयगतसादृश्यदोषेण रूप्यसंस्कारस्यैव तदैवोद्बुद्धत्वादित्यर्थः। अतिसादृश्याच्छुक्त्यन्तरसंस्कार एव किमिति नोद्बुद्ध इत्यत्राह—**विशेषेणेति**। रागादिनेत्यर्थः। मा भूत् स्मृतेः प्रमोषात् स्वार्थविवेचकत्वं, ग्रहणं तु स्वार्थं स्मर्यमाणाद् ग्रहणत्वात् सम्मतवद्विवेचयेत्, इत्यत्राह — **सम्प्रयुक्तस्य चेति**। **विहन्यते**—दोषात् प्रतिबध्यत इत्यर्थः। ग्रहणस्य सामान्यविषयत्वेन स्मृतेः विशेषमात्रज्ञानत्वेन चाप्रवर्तकत्वात् प्रवृत्तिर्न स्यादित्यत्राह—**तेनेति**। तयोर्निरन्तरोत्पत्तिरेव प्रवृत्तिहेतुरित्यर्थः। घटपटबुद्ध्योः निरन्तरोत्पन्नयोरपि घटः पट इति सामानाधिकरण्यव्यवहारहेतुत्वं न दृश्यत इत्यत्राह—**करणेति**। इदं रूप्यमभादिति संसर्गप्रत्ययः प्रत्यभिज्ञायत इति ; नेत्याह—**अनुत्पन्ने इति**। **भ्रमः**—व्यवहारः। जन्मान्तरानुभूतं च न स्मर्यत इति **भाष्यवचनादस्मर्यमाणत्वाच्च** बालस्य तिक्तधीः कथं स्मृतिः स्यादित्याशङ्कते—**नन्विति**। जन्मान्तरानुभूततिक्त-

---

काचादिदोषस्तद्योग्यार्थज्ञानसंस्कारमुद्बोधयतीत्याह—**केनचिदिति**। तत्रापि चक्षुर्योग्या-सदृशार्थज्ञानसंस्कारोद्बोधकत्वं व्यावर्तयति—**एवेति**। कर्मकारकतया ज्ञानजनकार्थ-गतसादृश्यदोषसहितेनेत्यर्थः। अतिसदृशशुक्त्यन्तरज्ञानसंस्कारोद्बोधकत्वं व्यावर्तयति—**दोषविशेषेणेति**। कर्तृकारकतया ज्ञानजनकात्मगतरागदोषेणापि सहितेनेत्यर्थः। **कस्यचिदिति**। चक्षुर्योग्यस्यैवेति, तत्रापि सदृशस्यार्थविशेषस्येति, तत्रापि रागविषयस्येत्यर्थः॥

अधिष्ठानग्रहणस्य सम्प्रतिपन्नग्रहणवत् स्मर्यमाणार्थविवेचकत्वं स्यात्, अविवेचकत्वे स्मृतिवद्ग्रहणत्वं न स्यादित्याशङ्क्य, व्यावर्तकविशेषांशबोधने दोषेणाप्रतिबद्धशक्तीन्द्रिय-जन्यग्रहणत्वं विवेचकत्वे प्रयोजकं न तु ग्रहणत्वमात्रमित्यप्रयोजकत्वमाह—**संप्रयुक्तस्य चेति**। घटपटज्ञानयोः निरन्तरोत्पन्नयोरपि घटः पट इति सामानाधिकरण्यव्यवहार-हेतुत्वं न दृश्यत इत्याशङ्क्याह—**करणदोषादेवेति**॥

**स्यापि बालकस्य पित्तदोषात् मधुरे तिक्तावभासः कथं स्मरणं स्यात्? उच्यते—जन्मान्तरानुभूतत्त्वात्। अन्यथा अननुभूतत्वाविशेषे अत्यन्तं असन्नेव कश्चित् सप्तमो रसः किमिति नावभासेत। तस्मात् पित्तमेव मधुराग्रहणे तिक्तस्मृतौ तत्प्रमोषे च हेतुः। कार्यगम्यत्वात् हेतुभावस्य। एतेन अन्यसम्प्रयोगे अन्यविषयस्य ज्ञानस्य स्मृतित्वतत्प्रमोषौ सर्वत्र व्याख्यातौ द्रष्टव्यौ॥**

---

स्मृतिः कल्प्यत इत्याह—**उच्यत इति**। जन्मान्तरानुभवस्यानुपकारितोक्ता इत्यत्राह—**अन्यथेति**। त्वत्पक्षेऽप्यननुभूततिक्तस्य बालस्य तिक्तभ्रान्त्यभ्युपगमे नृशृङ्गादेरपि तथा प्रतिभासप्रसङ्गाज्जन्मान्तरानुभवस्य उपकारित्वं वाच्यम्। तन्ममापि स्यादित्यर्थः। किमिति तर्हि जन्मान्तरानुभूतं किञ्चिदेव स्मर्यत इति चेत्, दोषबलादित्याह—**तस्मादिति**। तर्हि दोष एव जन्मान्तरानुभूतं सर्वं स्मारयेदित्यत आह—**कार्यगम्यत्वादिति**। अतत्त्वे तत्त्वज्ञानमिति शास्त्रेणैव दर्शितः संसर्गभ्रम इति, नेत्याह—**एतेनेति**। वक्तव्ये भ्रमवादिनाऽपि अविवेके संसर्गज्ञानकल्पनागौरवादख्यातेरेव युक्तत्वात् तत्र सर्वत्र स्मृतित्वतत्सम्प्रमोषौ वाच्यावित्यर्थः॥

स्मरणाभिमानासम्भवान्न तत्सम्प्रमोषात् अविवेको वक्तुं शक्यत इति दूषयति—**उच्यत इति**। असम्भवं वक्तुं स्मरणाभिमानः किं स्मरणत्वेनाभि-

---

स्मृतावभिमन्यत इति स्मरणाभिमान इति व्युत्पत्त्या स्मर्यमाणरजत(त्वस्य)[गतः] पूर्वानुभव(सम्भेदो वा स्व)व्यक्तिसम्भेदो वा? तदवच्छेदकपरोक्षदेशकालसम्भेदो वा? तच्छब्दसम्भेदो वा? उच्यते, [उत]स्मृतित्वेनाभिमन्यत इति व्युत्पत्त्या स्मृतिरेवोच्यते? इति बहिरेव विकल्प्य, एतत्सर्वं स्मरणाभिमानो न भवति, पूर्वानुभवदेशादिविषयस्मृतौ पूर्वानुभवदेशादेः सजातीयपूर्वानुभवदेशान्तरादिविशिष्टत्वेन स्मर्यमाणत्वाभावात् तत्रातिव्याप्तत्वात्, सोऽयमिति भ्रमे सति स्मृतौ स्मर्यमाणस्य पूर्वानुभवादिसम्भिन्नतया स्मर्यमाणत्वेऽपि तस्य पुरोवर्तिव्यक्त्यैक्यभ्रमदर्शनात्तत्राव्याप्तत्वात्, अन्तविकल्पे स्मृतेरेवाभाव-

उच्यते—कोऽयं स्मरणाभिमानो नाम। न तावत् ज्ञानानुविद्धतया ग्रहणम्। न हि अतिवृत्तस्य ज्ञानस्य ग्राह्यविशेषणतया विषयभावः। तस्मात् शुद्धमेव अर्थं स्मृतिरवभासयति, न ज्ञानानुविद्धम्। तथा च पदात् पदार्थस्मृतौ न दृष्टो ज्ञानसम्भेदः। ज्ञानस्यापि शब्दार्थत्वप्रसङ्गात्। तथा इष्टभूभागविषया स्मृतिः 'स सेव्यः' इति ग्राह्यमात्रस्था, न ज्ञानपरा-

---

मन्यमानः ? स्मरणे अभिमन्यमानो वा ? स्मरामीत्यभिमानो वेति विकल्पयति—**कोऽयमिति**। आद्ये स्मृतेरेवासम्भवः स्फुट इति मत्वा, द्वितीयं प्रत्याह—**न तावदिति**। पूर्वानुभवतद्देशकालसइत्याकाराणामन्यतमेन स्मर्यमाणस्य सम्भेदः स्मरणे अभिमन्यमानो न स्मरणाभिमानः, सोऽयमिति प्रत्यभिज्ञाभ्रमे सर्वेषामेवैषां सम्भेदावगमेऽपि गृह्यमाणेनाविवेकदर्शनादित्यर्थः। किं च, स्मर्यमाणे पूर्वानुभवसम्भेदो न सम्भवति इत्याह—**न हीति**। **हिश्चार्थे**। स्मृतिमूलज्ञानेन स्वस्य ग्राह्यविशेषणत्वेनाविषयीकृतत्वात् तज्जन्यस्मृत्यापि न स्वमूलज्ञानं विषयीक्रियते। स्वमूलज्ञानविषयमात्रविषयत्वात् संरकारजस्मृतेरित्यर्थः॥

तत्र फलितमाह—**तस्मादिति**। **शुद्धमिति**। न स्वमूलज्ञानसम्भिन्नमित्यर्थः। स्मर्यमाणे पूर्वानुभवसम्भेदोऽनुभवसिद्ध इत्यत्राह—**एवेति**। अर्थावभासलिङ्गजन्यं यदर्थज्ञानविषयमनुमानज्ञानं तत्संस्कारजन्यस्मृतिविषयः सोऽनुभवो नार्थस्मृतिविषय इत्यर्थः। अत्र किं नियामकमित्यत्राह—**तथा चेति**। अत्रापि ज्ञानसम्भेदः कुतो न स्यात् इत्यत्राह—**ज्ञानस्यापीति**। तथापि तद्व्यतिरिक्तस्मृतेः ज्ञानसम्भिन्नार्थविषयत्वात् तद्विषयोऽनुभवः किं न स्यादित्यत्राह—**तथेति**। **स** इति भूभागमात्रपरामर्शादित्यर्थः। किं च बहीनां

---

प्रसङ्गाच्चेत्याक्षिपति—**कोऽयमिति**। अतिव्याप्त्यव्याप्तिस्मृत्यभावप्रसङ्गदूषणमुक्त्वा इदानीं स्मर्यमाणे वस्तुनि पूर्वानुभवसम्भेदो न सम्भवतीत्याह—**न तावदिति**। **न ज्ञानानुविद्धमिति**। न स्वमूलज्ञानानुविद्धमित्यर्थः॥

**न ज्ञानपरामर्शिनी**त्यस्य हेतू(पपत्त्या)[पन्यासः]**स सेव्य इति**। स्मरणा[भिमान]-

मर्शिनी। अपि च भूयस्यः ज्ञानपरामर्शशून्या एव स्मृतयः। नापि स्वगतो ज्ञानस्य स्मरणाभिमानो नाम रूपभेदः अवभासते। न हि नित्यानुमेयं ज्ञानं अन्यद्वा वस्तु स्वत एव रूपसम्भिन्नं गृह्यते। अत एवोक्तं 'अनाकारामेव बुद्धिं अनुमिमीमहे' इति। अनाकारां—अनिरूपिताकारविशेषां—अनिर्दिष्टस्वलक्षणां इत्यर्थः। अतो न स्वतः स्मरणाभिमानात्मकता। नापि ग्राह्यविशेषनिमित्तः स्मरणाभिमानः। प्रमाणग्राह्यस्यैव अवि-

---

स्मृतीनां ज्ञानासम्भिन्नार्थत्वानुभवात्, कस्याश्चित् स्मृतेः ज्ञानसम्भिन्नार्थत्वानुभवः अर्थावभासलिङ्गजन्यार्थज्ञानविषयानुमानज्ञानसंस्कारजन्यस्मृतिविषयत्वेन नेतव्य इत्याह—**अपि चेति**। तथापि स्मरणाभिमानाख्यो विशेषः स्मृतिगतत्वेन प्रत्यक्ष इत्यत्राह—**नापीति**। विमतं स्वगतविशेषप्रतिपत्तिशून्यं नित्यानुमेयत्वात् शक्त्यादिवदित्यनुमातुं च शक्यमित्याह—**न हीति**। **अन्यद्वा वस्त्विति**। शक्त्यादिवदित्यर्थः॥

नित्यानुमेयत्वं स्वतो रूपभेदशून्यत्वं चासिद्धमित्याशङ्क्य उभयमपि भाष्यसिद्धमित्याह—**अत इति**। **अनाकारामिति** निस्स्वभावत्वमुच्यत इति; नेत्याह—**अनिरूपितेति**। घटज्ञानमित्याकारविशेषो दृश्यत इत्याशङ्क्य, स औपाधिको न स्वत इत्याह—**अनिर्दिष्टेति**। नित्यानुमेयेऽपि लिङ्गविशेषाद्धेतुविशेषानुमानं युक्तमिति चेत्, कोऽसौ लिङ्गविशेषः?

---

लक्षणो विशेषो ज्ञानगतत्वेन नानुभूयत इत्याह—**नापि स्वगत इति**। विप्रतिपन्नज्ञानं स्वतः स्वरूपविशेषप्रतिपत्तिशून्यं नित्यानुमेयत्वात् शक्त्यादिवदिति स्वतो विशेषाभावोऽनुमातुं शक्यत इत्याह—**न हीति**। [**अन्यद्वा**]अन्यवस्त्विव शक्त्यादिवदित्यर्थः। नित्यानुमेयत्वादिति हेतुरसिद्धः, अतः स्वतो रूपभेदाभावश्चासिद्ध इत्याशङ्क्य, उभयमपि भाष्यसिद्धमित्याह—**अत एवेति**। **अनाकारामिति** निस्स्वभावत्वं बुद्धेरुच्यत इति; नेत्याह—**अनिरूपतेति**। [बुद्धि]रित्याकारो निरूपित इति; नेत्याह—**विशे(षादपि)**[**षामिति**]विशेषो घटज्ञानमित्याकारविशेषो दृश्यत इत्याशङ्क्य, स औपाधिकः न स्वत इत्याह—**अनिर्दिष्टेति**। अवच्छेदकविषयभेदाद्धि फलभेदः, न स्वतः, निर्विशेषात्मचैत-

कलानधिकस्य गृह्यमाणत्वात्। नापि फलविशेषनिमित्तः। प्रमाणफलविषयमात्रावच्छिन्नफलत्वात्। यः पुनः क्वचित् कदाचित् अनुभूतचरे 'स्मरामि' इत्यनुवेधः, सः वाचकशब्दसंयोजनानिमित्तः यथा सास्नादिमदाकृतौ 'गौः' इत्यभिमानः। तस्मात् पूर्वप्रमाणसंस्कारमात्रसमुत्थतया तद्विषयावभासित्वमात्रं स्मृतेः। न पुनः प्रतीतितः अर्थतो वा अधिकोऽशः अस्ति,

---

ग्राह्यविशेषः? फलविशेषो वा? नाद्य इत्याह—**नापि ग्राह्येति**। न द्वितीय इत्याह—**नापि फलेति**। यद्वा, स्मृतेः किं स्मरणाभिमानः स्वाभाविकः? नैमित्तिको वा? नैमित्तिकत्वेऽपि, ग्राह्यविशेषो निमित्तम्? फलविशेषो वा? इति विकल्प्य दूषणीयम्—**नापि स्वगत इत्यादिना**॥

तृतीयमनुवदति—**यः पुनरिति**। अस्यानुभवस्यात्यन्तप्रीतिकरे स्मृतेऽपि कदाचिदेव जायमानत्वात् न सर्वस्मृतिगतस्मरणाभिमानात्मतेति दूषयति—**क्वचित् कदाचिदिति**। ग्रहणादिशब्दाद्व्यावृत्तस्मरणादिशब्दसम्बन्धनिमित्तत्वेन ग्रहणादेः स्मरणादेश्च विवेकसिद्ध्युत्तरकालत्वाच्च अस्य न विवेचकस्मरणाभिमानात्मतेत्याह—**स वाचकेति**। वाचकशब्दस्मृतेः वाच्यस्वरूपोपलब्धिरेव हेतुः, न भेदोपलब्धिरित्याशङ्क्य, शब्दविशेषस्मारकत्वेन भेदोपलब्धिरपेक्षितेत्याह—**यथेति**। स्मृत्यनुभवयोरर्थमात्रविषयत्वे को भेद इत्याशङ्कां व्युदस्यन् स्मरणाभिमानासम्भवं निगमयति—**तस्मादिति**। कारण-

---

न्यस्यैव फलत्वात्, एवं सत्युभयस्यैकत्वात् फलभेदोऽपि न भवतीत्याह—**नापि फलविशेषेति**॥

**यः पुनः स्मरामीत्यनुवेधः स क्वचित्** अत्यन्तप्रीतिकरे अत्यन्तविस्मापके अत्यन्तद्वेष्ये वा तत्रापि **कदाचित्** प्रीत्यादिविषयवस्तुज्ञानसंस्कारोद्बोधसद्भावे तत्रापि **अनुभूतचरे** न तु प्रत्यहमनुभूते भवति। अतो न स सर्वस्मृत्यनुगतस्मरणभिमानो भवतीत्यनुवादावसर एवैतद्दूषणमुक्तं द्रष्टव्यम्। विवेकसिद्ध्युत्तरकालभावित्वात् स्वयं विवेचको न भवतीति दूषयति—**स वाचकेति**। वाचकशब्दस्मृतेर्वाच्यस्वरूपोपलब्धिरेव हेतुः न भेदोपलब्धिरित्याशङ्क्य, शब्दविशेषस्मारकत्वोपाधित्वेन भेदोपलब्धिरपेक्षितेत्याह—**यथा सास्नादीति**। तर्हि रजतादिज्ञानस्यैवंरूपस्मृतित्वमविरोधाद्

यस्य दोषनिमित्तः प्रमोषः परिकल्प्येत । न चेह पूर्वप्रमाणविषयावभासित्वमस्ति, पुरोऽवस्थितार्थप्रतिभासनात्, इत्युक्तम् । अतः न अन्यसम्प्रयोगे अन्यविषयज्ञानं स्मृतिः, किंतु अध्यासः ॥

ननु एवं सति वैपरीत्यमापद्यते 'रजतमवभासते शुक्तिरालम्बनम्' इति । नैतत् संविदनुसारिणां अनुरूपम् । ननु शुक्तेः स्वरूपेणापि अवभासने संवित्प्रयुक्तव्यवहारयोग्यत्वमेव आलम्बनार्थः, सैव इदानीं रजतव्यवहारयोग्या प्रतिभासते,

---

भेदादेव भेद इत्यर्थः । अस्तु तर्हि रूप्यज्ञानस्यैवंरूपत्वात् स्मृतित्वमित्यत्राह—**न चेति**। स्मृतिश्चेद्रूप्यधीः स्वार्थधीविवेचिका स्यादित्यस्य निर्दुष्टत्वेन स्मृतित्वानुमानबाधकत्वे सिद्धे फलितमाह—**अतो नेति**। न चेत् स्मृतिः का तर्हि इदं रूप्यमिति धीरित्याशङ्क्य, अन्यथाख्यातिरित्याह—**किं त्विति** ॥

अन्यथाख्यातिर्नाम अन्याकारा ख्यातिरन्यालम्बना वा? वस्तुनो वस्त्वन्तरात्मना ख्यातिर्वा? अन्यथा परिणते वस्तुनि ख्यातिर्वा इति विकल्प्य, आद्यं दूषयति अख्यातिवादी—**नन्वेवमिति**। कुतो वैपरीत्यम्? अत आह—**नैतदिति**। सर्वत्र यदाकारं ज्ञानं तदालम्बनमिति नियमे, रूप्याकारज्ञानविरुद्धं शुक्त्यालम्बनत्वमित्यर्थः। न संविदाकारता आलम्बनता, किं तु संवित्प्रयुक्तव्यवहारविषयतेति शङ्कते—**ननु शुक्तेरिति**। प्रकृते ततः किमित्यत्राह—**सैवेति**। तर्हि व्याघ्रसर्पादिज्ञानाद् दण्डादिषु द्रव्यगुणादिज्ञनाद् गुणद्रव्यादिषु चादीयमानेषु व्याघ्रादिज्ञानस्य दण्डाद्यालम्बनं स्यादिति दूषणं स्फुटमिति नोक्तम्। अस्तु तर्हि द्वितीयः पक्ष इत्याशङ्क्य, किं भेदाभेदवादिना तादात्म्यस्य सत्यत्वमङ्गीकृत्यैवमुच्यते? किं वा अत्यन्तभेदवादिना तदनङ्गीकृत्येति

---

भवेदित्याशङ्क्याह—**न चेति** ॥

शुक्तिः रूप्यज्ञानालम्बनं तज्ज्ञानप्रयुक्तोपादानव्यवहारविषयत्वात्, सत्यरूप्यवदित्यनुमानं **ननु शुक्तेरि**त्यादिनोक्तम्। अस्यानुमानस्य व्याघ्रसर्पादिज्ञानाद्दण्डादिष्वादीय-

तत्र किमिति आलम्बनं न स्यात्? अथ तथारूपावभासनं शुक्तेः पारमार्थिकं? उताहो न? यदि पारमार्थिकं, 'नेदं रजतं' इति बाधो न स्यात् 'नेयं शुक्तिः' इति यथा। भवति च बाधः। तस्मात् न एष पक्षः प्रमाणवान्। अथ शुक्तेरेव दोषनिमित्तो रजतरूपः परिणाम उच्यते, एतदप्यसारम्—न हि क्षीरपरिणामे दधनि 'नेदं दधि' इति बाधो दृष्टः। नापि 'क्षीरमिदं' इति प्रतीतिः। इह तु तदुभयं दृश्यते। किञ्च—रजतरूपेण चेत् परिणता शुक्तिः क्षीरमिव दधिरूपेण, तदा दोषापगमेऽपि तथैव अवतिष्ठेत। ननु कमलमुकुलविकासपरिणामहेतोः सावित्रस्य तेजसः स्थितिहेतुत्वमपि दृष्टं तदपगमे पुनः

---

विकल्पयति—**अथेति**। तत्रानिर्वाच्यानङ्गीकारात् शून्य एव संसर्गः प्रकाशेत, खण्डो गौरित्यादिप्रत्ययाश्च विभ्रमाः प्रसज्येरन्निति द्वितीयं पक्षमाक्षिपति—**आहो इति**। आद्यमनूद्य दूषयति—**यदीति**॥

तृतीयमाशङ्कते—**अथ शुक्तेरेवेति**। मैवम्, बाधाभावापातादित्याह—**एतदिति**। विरोधिशुक्त्यात्मत्वज्ञानाद् बाधः स्यादित्याशङ्क्य, क्षीरस्य दधिरूपपरिणामे, पुनर्विरोधिक्षीरात्मत्वज्ञानाभाववत् शुक्त्यात्मत्वज्ञानमपि न स्यादित्याह—**नापीति**। दोषान्तरमाह—**किं चेति**। निमित्तस्य नैमित्तिकस्थितिहेतुत्वस्यापि दृष्टत्वात् निमित्तापाये नैमित्तिकस्यापाय इति शङ्कते—**ननु कमलेति**। नालद्वारेण पद्मपदं प्रविष्टैः पार्थिवावयवसचिवजलबिन्दुभिः श्लक्ष्णैः

---

मानेषु द्रव्यगुणादिज्ञानप्रयुक्त्या च गुणद्रव्यादिष्वादीयमानेष्वनैकान्तिकत्वं सुप्रसिद्धमिति मत्वा तदनादृत्य मतान्तरमवतारयति—**अथ तथेति**। **उताहो** नेत्यत्र **उत नेति** द्वितीयविकल्पस्य **आहो** इत्याक्षेपरूपेण दूषणम्, तत्तु **विवरणे** द्रष्टव्यम्। विरोधिशुक्त्यात्मत्वज्ञानान्नेदं रजतमिति बाधः स्यादित्याशङ्क्य, क्षीरस्य दधिरूपपरिणामे पुनर्विरोधिक्षीरात्मत्वज्ञानाभाववत् इदमः शुक्त्यात्मत्वज्ञानमपि न भवतीत्याह—**नापि क्षीरमिदमिति**॥

मुकुलीभावदर्शनात्। तथा इहापि स्यात्। न—तथा सति तद्वदेव पूर्वावस्थापरिणामबुद्धिः स्यात्। न बाधप्रतीतिः स्यात्। अथ पुनः दुष्टकारणजन्यायाः प्रतीतेरेव रजतोत्पादः इति मन्येत, एतदपि न सम्यगिव। कथम्? यस्याः प्रतीतेः तदुत्पादः तस्यास्तावत् न तत् आलम्बनम्। पूर्वोत्तरभावेन भिन्नकालत्वात्। न प्रतीत्यन्तरस्य। पुरुषान्तरप्रतीतेरपि तत्प्रसङ्गात्। ननु किमिति पुरुषान्तरप्रतीतेरपि तत्प्रसङ्गः? दुष्टसामग्रीजन्मनो हि प्रतीतेः तत् आलम्बनम्। मैवम्—प्रतीत्यन्तरस्यापि तद्विधस्य रजतान्तरोत्पादनेनैव उपयुक्तत्वात् प्रथमप्रत्ययवत्। अतः अनुत्पन्नसममेव स्यात्। तदेवं पारिशेष्यात् स्मृतिप्रमोष एव अवतिष्ठेत ॥

---

मुकुलीभावाख्यविरुद्धपरिणामोदयाद्विकासविच्छेदः, न त्वादित्यकिरणापायमात्रात्, तथाविधकारणेन विरोधिकार्यानुत्पत्तौ रात्रावपि विकासदर्शनादिति मत्वा दूषयति—**न तथा सतीति** ॥

अन्यथाख्यातावेव परिणाम[प्रकार]भे(दो वा)[दवादी वा] आत्मख्यातिवादी [वा] शङ्कते—**अथ पुनरिति**। जनकप्रतीतेः रूप्यात्पूर्वकालत्वेनातद्विषयत्वात् ज्ञानान्तरस्यादुष्टकारण[ज]स्य तद्विषयत्वे सर्वज्ञानविषयत्वापातात्, दुष्टकारण[ज]स्य च रूप्यजन्यत्वे रूप्यस्यार्थक्रियावत्तया सत्तापातात् अतज्जन्यत्वे तदविषयत्वात्, अप्रतीतमेव रूप्यं स्यादिति दूषयति—**[ए]तदपीति**। दोषान्तरमाह — **प्रतीत्यन्तरस्येति**। उत्पादनव्यापारस्य रूप्यान्तरोपयुक्तत्वेऽपि, बोधनव्यापारेण पूर्वरूप्यबोधकत्वं स्यादित्यत्राह—**प्रथमप्रत्ययवदिति**। अन्यथाख्यातिं निराकृत्य अख्यातिवादी स्वमतं निगमयति—**तदेवमिति** ॥

---

नालद्वारेण पद्मदलं प्रविष्टाः पार्थिवावयवसचिवजलबिन्दवः श्लक्ष्णाः सन्तो मुकुलीभावं जनयन्ति, अतो विरोधिपरिणामोदयात् विकासविच्छेदः, न त्वादित्यकिरणापायमात्रात्, तथाविधकारणेन विरोधिकार्यानुत्पत्तौ रात्रावपि विकासदर्शनादिति परिहारं हृदि कृत्वा, परिणामं दूषयति—**न तथा सतीति**। उत्पादनव्यापारस्य रजतान्तरे उपयुक्तत्वेऽपि बोधनव्यापारेण पूर्वरजतबोधकत्वमस्तीत्याशङ्क्याह—**प्रथमप्रत्ययवदिति**

**ननु स्मृतेः प्रमोषो न सम्भवति इत्युक्तम् । तथा च तन्त्रान्तरीया आहुः 'अनुभूतविषयासम्प्रमो(षा)[षः] स्मृतिः' इति। का तर्हि गतिः शुक्तिसम्प्रयोगे रजतावभासस्य? उच्यते— न इन्द्रियजज्ञानात् संस्कारजं स्मरणं पृथगेव स्मरणाभिमानशून्यं समुत्पन्नम् । किन्तु एकमेव संस्कारसहितात् इन्द्रियात् । कथमेतत् ? उच्यते—कारणदोषः कार्यविशेषे तस्य शक्तिं निरुन्धन्नेव संस्कारविशेषमपि उद्बोधयति । कार्यगम्यत्वात्**

---

अख्यातिदूषणमुक्तं सिद्धान्ती स्मारयति—**ननु स्मृतेरिति** । न स्मृतिः, नापि ग्रहणं चेदलौकिकं इदं ज्ञानं कथमिति शङ्कते—**का तर्हीति** । किं गम्यतेऽनेनेति सामग्री पृच्छ्यते ? गमनं गतिरिति ज्ञानं वा ? गम्यत इति विषयो वा ? इति विकल्प्य सामग्रीप्रश्नस्योत्तरमाह—**उच्यत इति** । अत्र ज्ञानैक्यं सामग्र्यैक्यस्य हेतुत्वेनोक्तमित्यूह्यम् । इन्द्रियसंस्कारौ चेत् सामग्री, सम्यग्ज्ञानमेव स्यात् प्रत्यभिज्ञावदित्याशङ्कते—**कथमिति** । दोषसहकृतत्वात् तृतीयमिदं सामग्र्यमित्याह—**उच्यत इति** । अन्यथाज्ञानं च जनयतीत्यपेरर्थः । दोषो मूषिकाघ्राणादिवत् प्राप्तकार्यविघातको न विपरीतकार्यहेतुरित्याशङ्क्य, व्याध्यादिवद्विप(र्ययत्वाद्धे)[रीतकार्यहे]तुत्वमप्यास्थेयम् । अन्यथा तस्य निर्हेतुकत्वप्रसङ्गादित्याह —**कार्यगम्यत्वादिति** । संस्कारोद्बोधकृच्चेत् दोषः[न]साम-

---

पूर्वमन्यथाख्यातिवादिना अख्यातिर्बहुधा विकल्प्य निराकृता, अनन्तरं तथैवाख्यातिनिरस्ता, अतो गतिशून्याभ्यामख्यात्यन्यथाख्यातिवादिभ्यां मायावादिनं प्रत्युपसन्नाभ्यां भ्रान्तिज्ञानस्य गतिः पृच्छयते—**का तर्हीति** । किं गम्यतेऽनेनेति सामग्री पृच्छयते ? किं वा गमनं गतिरिति ज्ञानम् ? आहोस्वित् गम्यत इति विषयः ? इति विकल्प्य सामग्रीप्रश्नस्य परिहारमाह—**किन्त्विति** । ज्ञानैक्यं सामग्र्यैक्यस्य हेतुत्वेनात्रोक्तमिति द्रष्टव्यम् । दोषो **संस्कारविशेषमप्युद्बोधयति** । तद्द्वारेण अन्यथाज्ञानमप्युत्पादयतीति शेषः । दोषस्य व्याध्यामूषिकाघ्राणादिवत् प्राप्तकार्यनिरोधक एव न तु विपरीतकार्यहेतुरित्याशङ्क्य, दोषस्य व्याध्यादिदोषवत् विपर्ययकार्यहेतुत्वमप्यङ्गीकर्तव्यम्, इतरथा स्वस्य कल्पकाभावादसिद्धिप्रसङ्गादि-
त्याह—**कार्यगम्यत्वादिति** । **संवलितेति** । संवलनात्मिकेत्यर्थः ।

**कारणदोषशक्तेः। अतः संस्कारदुष्टकारणसंवलिता एका सामग्री। सा च एकमेव ज्ञानं एकफलं जनयति। तस्य च दोषोत्थापित-संस्कारविशेषसहितसामग्रीसमुत्पन्नज्ञानस्य उचितमेव शुक्तिगत-मिथ्यारजतमालम्बनमवभासते। तेन मिथ्यालम्बनं ज्ञानं मिथ्या-ज्ञानम्, न स्वतो ज्ञानस्य मिथ्यात्वमस्ति, बाधाभावात्। भिन्न-**

---

ग्र्यामन्तर्भवतीत्यत्राह—**अत इति**। अन्यथाज्ञानहेतुत्वादित्यर्थः। **संवलितेति**। संवलनात्मिकेत्यर्थः। ज्ञानस्वभावश्चेत्पृच्छ्यते, तदाह—**सा चेति**। अन्तःकरण-परिणामात्मकत्वेनाविद्यापरिणामात्मकत्वेन च भेदाङ्गीकारात् त्वत्पक्षे नैकं ज्ञान-मित्यत्राह—**एकफलमिति**। सत्यमिथ्यावस्तुनोरैक्य(विषयग्रहणं) विषया-वच्छिन्नफलस्यैकत्वादुपचारेणैकमित्यर्थः। यद्वा, ज्ञानैकत्वे मान**मेकफलमिति**। तया सामग्र्या सत्यमिथ्यावस्त्वभेदविषयमविद्यापरिणामज्ञानमेकमजनीत्यभ्यु-पेयम्, प्राकट्यस्य वा प्रवृत्तेर्वा फलस्य एकत्वानुपपत्त्येत्यर्थः। विषयः पृष्टश्चेत्त-माह—तस्य चेति। मिथ्यारूप्यालम्बनत्वे युक्तिमाह—**दोषेति**। सम्प्रयोगस्य सामग्र्यां निवेशात् शुक्तिगतं(तच्च)[तत्र च]दोषस्य निवेशात् मिथ्याभूतं(तच्च) [तत्र च]संस्कारविशेषस्य निवेशाद्रूप्यमेवालम्बनं युक्तमित्यर्थः॥

कुतो रूप्यज्ञानस्य मिथ्यात्वम्? येन ज्ञानार्थयोः ख्यात्यन्तराद्वैलक्षण्यं स्यादित्याशङ्क्य, भावाभावज्ञानयोर्मिथ्याप्रसिद्ध्यभावात् तदनुपपत्तिरनिर्वाच्या-र्थत्वे मानमित्याह—**तेनेति**। अर्थवत् ज्ञानस्यापि शुक्त्यवच्छिन्नचिदविद्याकार्य-

---

ज्ञानस्वभावश्चेत् पृच्छ्यते, तदाह—**सा चेति**। ज्ञानैक्ये हेतुः—**एकफल-मिति**। विषयः पृच्छ्यते चेत्तदाह—**तस्य चेति**। उत्थापितत्वात् कार्यकरः संस्कारः, दोषोत्थापितत्वात् मिथ्यार्थज्ञानजनकः, सादृश्यादित्रिविधदोषोत्थापितसंस्कारविशेषत्वाद्‌ रूप्यज्ञानजनकः, एवंविधसंस्कारेण दोषेण [इन्द्रियसं]प्रयो(गत्वास्य)[गेण च समुत्पन्नस्य] स्मृतिग्रहणविलक्षणत्वादिदं रजतमिति ज्ञानस्य तदनुसारेण विषयमाह—**तस्य चेति**। संप्रयोगस्य सामग्रीत्वेन निवेशाच्छुक्तिगतमेवालम्बनमुचितम्, दोषस्य निवेशान्मिथ्यारूपमेवा-लम्बनमुचितम्, संस्कारविशेषस्य निवेशाद्रजतमेवालम्बनमुचितमिति विभागो द्रष्टव्यः। सिद्धान्ते त्वधिष्ठानयाथात्म्याविद्याविलसितत्वाद्रजततज्ज्ञानयोः तयोर्याथात्म्यज्ञानं बाधकं

**जातीयज्ञानहेतुसामग्र्योः कथमेकज्ञानोत्पादनमिति चेत्—नैष दोषः-दृश्यते हि लिङ्गज्ञानसंस्कारयोः सम्भूय लिङ्गिज्ञानोत्पादनम्, प्रत्यभिज्ञानोत्पादनञ्च अक्षसंस्कारयोः। उभयत्रापि स्मृतिगर्भमेकमेव प्रमाणज्ञानम्। संस्कारानुद्बोधे तदभावात्। तस्मात् लिङ्गदर्शनमेव सम्बन्धज्ञानसंस्कारमुद्बोध्य तत्सहितं लिङ्गिज्ञानं जनयतीति वक्तव्यम्। अयमेव च न्यायः प्रत्यभिज्ञानेऽपि। न पुनः ज्ञानद्वये प्रमाणमस्ति। तथा भिन्नजातीयज्ञानहेतुभ्यो**

---

त्वेनानिर्वाच्यत्वेऽपि, परमतं नेदं रूप्यमिति बाधकमङ्गीकृत्यैतदुक्तमित्यूह्यम्। सम्प्रयोगसंस्काराभ्यामन्योन्यानपेक्षज्ञानकारणाभ्यां जन्यत्वान्निरन्तरोत्पन्नं ज्ञानद्वयमेतदित्यख्यातिवादी शङ्कते—**भिन्नजातीयेति**। फलैकत्वान्यथानुपपत्त्या ज्ञानैक्यस्य साधितत्वात् किं कारणभेदेनेति दूषयति—**नैष दोष इति**। निरपेक्षकारणद्वयजन्यत्वात् कार्यभेदोऽप्यनुमीयत इत्याशङ्क्य, लिङ्गिज्ञानप्रत्यभिज्ञयोरनेकान्तत्वान्नेत्याह—**दृश्यते हीति**। तत्रापि ज्ञानभेदाङ्गीकारात् नानेकान्ततेत्यत्राह—**उभयत्रेति**। लिङ्गदर्शनं व्याप्तिस्मृतिश्च लिङ्गिज्ञानकारणम्, न संस्कार इति, नेत्याह—**संस्कारेति**। उद्बुद्धसंस्कारे कारणत्वेनाङ्गीकृते ज्ञानद्वययौगपद्याभावात् कार्याभावप्रसङ्गादित्यर्थः। फलितमाह—**तस्मादिति**॥

प्रत्यभिज्ञायां संप्रयोगः पूर्वानुभूतस्मृतिश्च कारणमस्तु, ज्ञानद्वययौगपद्यप्रसङ्गाभावात्, इत्यत्राह—**अयमेवेति**। ज्ञानात् ज्ञानान्तरोत्पत्तौ व्याप्त्याद्यभावात् संस्कार एव कारणमित्यर्थः। मानान्तरेष्वेवायं निरपेक्षकारणसमाहारो नाभिज्ञाप्रत्यक्षे, अभिज्ञाप्रत्यक्षं च रूप्यज्ञानमित्यत्राह—**तथा भिन्नजाती-**

---

भवेत्, अतः परमतानुसारेण [नेदं र]जतमिति ज्ञानं बाधकमभ्युपगम्य ज्ञानस्य बाधाभावात् बाधितानिर्वचनीयविषयत्वादेव मिथ्यात्वं भवतीत्याह—**तेनेत्यादिना**॥

उद्बुद्धसंस्कारसहितलिङ्गदर्शने[सति लिङ्गि]दर्शनम्, [लिङ्गि]दर्शने सति तद्व्याप्तलिङ्गज्ञानं भवतीत्यन्योन्याश्रयदोषप्रसङ्गात् ज्ञानद्वययौगपद्यप्रसङ्गाच्च उद्बुद्धसंस्कारसहितलिङ्गदर्शनमेव लिङ्गिज्ञानहेतुत्वेन स्वीकर्तव्यम्, न तु व्याप्तिस्मृतिसहितलिङ्गदर्शनमित्याह—**संस्कारानुद्बोधे इति**।

नीलादिभ्य एकं चित्रज्ञानं निदर्शनीयम्। तत्र लैङ्गिकज्ञान-प्रत्यभिज्ञाचित्रज्ञानानामदुष्टकारणारब्धत्वाद् यथार्थमेवावभासः। इह तु कारणदोषादतथाभूतार्थावभासः इति विशेषः। एवञ्च सति नानुभवविरोधः। प्रतिभासमानस्य रजतस्यैवा(व)लम्बनत्वात्। अतो मायामयं रजतम्।

अथ पुनः पारमार्थिकं स्यात्, सर्वैरेव गृह्येत। यतो न हि पारमार्थिकं रजतं कारणदोषं स्वज्ञानोत्पत्तावपेक्षते। यद्यपेक्षेत, तदा तदभावे न तत्र ज्ञानोत्पत्तिः अलोकाभावे इव रूपे। मायामात्रत्वे तु मन्त्राद्युपहतचक्षुष इव दोषोपहतज्ञानकारणा एव

---

येति। प्रत्यभिज्ञानं संस्कारसहितसंप्रयोगात् प्रमाणज्ञानमेव दृष्टम्। तथेहापि स्यादित्याशङ्क्य, अदोषजत्वमुपाधिरित्याह—तत्र लैङ्गिकेति। किञ्च—अख्यातावपरोक्षावभासिनः स्मर्यमाणत्वे अन्यथाख्यातौ प्रतिपन्नस्य संसर्गस्य शून्यत्वेऽपि आत्मख्यातौ बहिरवभासमानस्यान्तरत्वे च अनुभवविरोधः स्यात्, नास्मत्पक्षे इत्याह—एवं चेति। न च सत्त्वेन प्रतिपन्नरूप्यस्यानिर्वाच्यत्वाङ्गीकारादनुभवविरोधः, तस्याविद्यकसत्त्वोपगमादित्यूह्यम्। ख्यात्यन्तरेष्वनुभवविरोधादिदोषे च अनिर्वाच्यख्यातौ अनुभवाद्यनुगृहीते माने च सति, फलमाह—अत इति। अतोऽनिर्वाच्यख्यातिरेवाध्यास इत्यर्थः॥

यथाप्रतिभासं सत्यमेवास्तु रूप्यं अनुभवविरोधादिदोषपरिहारात्, किमित्यनिर्वाच्यतेत्यत्राह—अथ पुनरिति। पारमार्थिकमपि कारणदोषसापेक्षत्वात् न दृश्यमित्यत्राह—यत इति। कारणदोषवतामेव दृश्यमिति, नेत्याह—यदीति। तत्रेति। परमार्थरूप्ये इत्यर्थः। आत्माश्रयाविद्यात्मकत्वेऽपि सर्वैरेव गृह्येतेति तुल्यमिति, नेत्याह—मायामात्रत्वे इति। प्रसिद्धमायावदिति भावः। ज्ञानस्य भ्रान्तित्वप्रसिद्ध्यनुपपत्तिः अनुभवाद्यनुगृहीता मिथ्यार्थज्ञानतां गमयतीत्युक्तम्। इदानीं बाधकप्रत्यक्षं स्वयमेव रूप्यस्य मिथ्यात्वं साधयतीत्याह—किञ्चेति।

पश्यन्तीति युक्तम्। किञ्च 'नेदं रजतं' इति बाधोऽपि माया-मयत्वमेव सूचयति। कथम्? तेन हि तस्य निरुपाख्यतापादनपूर्वकं मिथ्यात्वं ज्ञाप्यते। 'नेदं रजतं मिथ्यैवाभासिष्ट' इति। न च तत् केनचिद्रूपेण रूपवत्त्वेऽवकल्पते। सम्प्रयुक्तशुक्तिवत् निरस्यमानविषयज्ञानवच्च। ननु न व्यापकमिदं लक्षणम्, स्वप्नशोकादावसम्भवात्। न हि स्वप्नशोकादौ केनचित् सम्प्रयोगोऽस्ति, येन परत्र परावभासः स्यात्। अत एव वासनातिरिक्तकारणाभावात् स्मृतिरेव, न स्मृतिरूपता। अत्रोच्यते—न तावत् स्मृतित्वमस्ति, अपरोक्षार्थावभासनात्। ननु स्मृतिरूपत्वमपि नास्ति, पूर्वप्रमाणसंस्कारमात्रजन्यत्वात्।

---

प्रतिपन्नोपाधौ रूप्यादेरभावं बाधो बोधयति, न मिथ्यात्वमित्याशङ्कते—**कथमिति**। बाधकप्रत्यक्षेण रूप्यादेः प्रतिपन्नोपाधौ अभावप्रतियोगित्वस्य बोधनात्तस्यैव मिथ्या[त्वरूप]त्वाद्बाधेन मिथ्यात्वं बोध्यत इत्याह—**तेन हीति**। बाधकज्ञानसिद्धस्य पुनर्मिथ्याशब्देन परामर्शाच्च बाधेन मिथ्यात्वं बोध्यत इत्याह—**नेदमिति**। देशकालान्तरबुद्धिषु सत्त्वादपि रूप्यस्यैव बाधो घटत इत्यत्राह—**न च तत् केनेति**। नेदं रूप्यं, किन्तु तद्रूप्यं बुद्धिर्वेति स्यात परामर्शः, न मिथ्यैवेतीत्यर्थः॥

**स्मृतिरूपशब्देन** कारणत्रितयजन्योऽन्यस्यान्यात्मनाऽवभासो लक्षणं [उक्तं] तल्लक्ष्यं न व्याप्नोतीति शङ्कते—**ननु न व्यापकमिति**। कथं तत्र लक्षणाभाव इत्यत्राह—**न हीति**। सम्प्रयोगांशस्याधिष्ठानांशस्य चाभावादित्यर्थः। कस्तर्हि स्वप्न इति? तदाह—**अत एवेति**। तत्र वासनाजन्यस्मृतिमात्रत्वे भ्रान्तिप्रसिद्धिः गवयादिस्मृतिवन्न स्यादिति दूषयति—**न तावदिति**। कारणत्रितयाभावान्न भ्रान्तिरपीति शङ्कते—**ननु स्मृतीति**।

---

**यद्यपेक्षेतेति**। भ्रान्तिस्थले यद्यपेक्षेतेत्यर्थः। **तत्रेति**। प्रमाणस्थले इत्यर्थः। बौद्धस्य दृष्टान्तः **निरस्यमानेति**॥ बौद्धव्यतिरिक्तानां दृष्टान्तः **सम्प्रयुक्तशुक्तिवदिति**।

**अत्रोच्यते—उक्तमेतत् पूर्वप्रमाणविषयावभासित्वमात्रं स्मृतेः स्वरूपमिति। तदिह निद्रादिदोषोपप्लुतं मनः अदृष्टादिसमुद्बोधितसंस्कारविशेषसहकार्यनुरूपं मिथ्यार्थविषयं ज्ञानमुत्पादयति। तस्य च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिरालम्बनतया विवर्तते। ननु एवं सति अन्तरेव स्वप्नार्थप्रतिभासः**

---

कारणत्रितयजन्यत्वं अन्यस्यान्यात्मनावभासं च सम्पादयामीत्याह—**अत्रोच्यत इति**। सम्प्रयोगाभावादपरोक्षावभासित्वाच्च ग्रहणस्मृतिमात्रत्वे अपास्ते, तृतीयमिदं ज्ञानं स्वयमेवोक्तलक्षणं गमयतीति वक्तुं प्रकारान्तरं व्युदस्यति—**उक्तमेतदिति**॥

स्वप्नप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्य निद्रादिदोषपूर्वानुभवसंस्कारसहितस्य सन्प्रतिपन्नकारणत्रितयत्वात् स्मृतिरूपं स्वाप्नज्ञानमिति ज्ञानान्यथानुपपत्त्या कल्प्यत इत्याह—**तदिहेति**। कथं परत्र परावभास इति? तदाह—**तस्य चेति**। तज्ज्ञानस्य निद्रादिदोषोपप्लुतेनान्तःकरणेनावच्छिन्नचैतन्यस्थाविद्या पुष्कलकारणसंसर्गादध्यासं प्रति पुष्कलकारणतामापद्यमाना मिथ्यार्थालम्बनाकारेण विवर्तते। अतः सत्यमिथ्यावस्तुसम्भेदावभासाख्यः परत्र परावभासोऽस्तीत्यर्थः। इन्द्रियेणापरोक्षस्यैवापरोक्षभ्रमाधिष्ठानत्वनियमादात्मनश्च तदभावान्नापरोक्षभ्रमाधिष्ठानत्वं युक्तमित्याशङ्क्य, अपरोक्षभ्रमाधिष्ठानत्वे अपरोक्षत्वमात्रं प्रयोजकम्, इन्द्रियस्य केवलव्यतिरेकाभावादित्याह—**अपरोक्षेति**॥

---

इन्द्रिय[संप्रयोग]साध्यापरोक्ष्यविशिष्टस्यापरोक्षभ्रमाधिष्ठानत्वं लोके दृष्टम्। इह तदसम्भवात् अपरोक्षभ्रमाधिष्ठानत्वं न सम्भवतीत्याशङ्क्य, अपरोक्षभ्रमाधिष्ठानत्वे अपरोक्षत्वमात्रं प्रयोजकम्, न तु सम्प्रयोगसाध्यापरोक्ष्यवत्त्वं केवलव्यतिरेकशून्यत्वात्, अतः कर्मत्वाभावेऽपि स्वप्रकाशतया अपरोक्षत्वादात्मनोऽपरोक्षस्वप्नभ्रमाधिष्ठानत्वं सम्भवतीत्याह—**अपरोक्षचैतन्यस्थेति**। परमार्थत्वेनाभिमतजाग्रत्प्रपञ्चोऽप्येकचैतन्ये कल्पितः, किमु वक्तव्यं स्वप्नप्रपञ्चः इति वदितुं सर्वगतचैतन्यैक्यं साधयति—**(न)[नैष]दोष इत्यादिना**। अनुभवः सर्वत्रैक एव भवितुमर्हति, स्वतः सर्वत्रैकरूपत्वेनावभासनात्, आकाशगोत्वादि-

स्यात् । को वा ब्रूते नान्तरिति । ननु विच्छिन्नदेशोऽनुभूयते स्वप्नेऽपि जागरण इव । न तदन्तरनुभवाश्रयत्वे स्वप्नार्थस्योपपद्यते । ननु देशोऽपि तादृश एव, कुतस्तत्सम्बन्धात् विच्छेदोऽवभासते ? अयमपि तर्ह्यपरो दोषः । नैष दोषः जागरणेऽपि प्रमाणज्ञानादन्तरपरोक्षानुभवात् न विषयस्था अपरोक्षता भिद्यते, एकरूपप्रकाशनात् । अतोऽ-

---

आकाशवत्सर्वगतमात्मानमनादृत्याहङ्कारावच्छिन्नमादाय चोदयति—**नन्वेवमिति** । आत्मैवाधिष्ठानं चेदिदं रूप्यमितिवत् अहं नीलमित्येव स्वप्नप्रपञ्चो भायादित्यर्थः । निष्कृष्टाहङ्कारं चिन्मात्रमात्मानमादाय चेत्यस्य सर्वत्र चित्सामानाधिकरण्यं चाङ्गीकृत्यापवदति—**को वेति** । पुनरप्यहमवच्छिन्नमात्मानमादाय शङ्कते—**ननु विच्छिन्नेति** । इदमिति पृथक्तयेत्यर्थः । पृथक्त्वावभासोऽप्यन्तरेवेत्युत्तरमाह—**ननु देशोऽपीति** । अनवच्छिन्नचैतन्यसंसृष्टतयैव भेदावभासोऽपीत्यर्थः । पुनश्चाहङ्कारावच्छिन्नमादायाहं भेद इत्यपि भायादित्याशङ्कते— **अयमपीति** । गूढाभिसन्धिरेव पूर्वमुत्तरमुक्त्वा इदानीं सर्वतो विप्रसृतं चैतन्यं सर्वात्मना प्रकाशमानमात्मानं स्पष्टीकुर्वन्नुत्तरमाह—**नैष दोष इति** । प्रातिभासिकभेदं विना मानतो न भिद्यते, एकरूपेणावभासादाकाशगोत्वादिवदित्यर्थः ॥

परमार्थभेदवत्त्वेनाभिमतजाग्रत्कालेऽपि चैतन्यं न भिद्यते, किमु वक्तव्यं कालान्तरे इत्याह —**जागरणेऽपीति** । सर्वत्र चैतन्यैक्यं प्रसाध्य, तेन सह आध्यासिकाभेदसम्बन्धेन सम्बद्ध एव प्रतीयत इति परमार्थत्वाभिमतजाग्रत्प्रपञ्चोऽपि चैतन्ये कल्पितः किमु वक्तव्यं स्वाप्नपदार्थस्य चैतन्याधिष्ठानत्वमित्याह—**अत इति** । अहमवच्छिन्नचैतन्यादन्यान्येव विषयस्थचैतन्यानि किं

---

वदित्याह—**एकरूपेति** । चैतन्यैक्यं सर्वत्र प्रसाध्य इदानीं तस्मिन् जाग्रत्प्रपञ्चस्य कल्पित-

न्तरपरोक्षानुभवावगुण्ठित एव जागरणेऽप्यर्थोऽनुभूयते । अन्यथा जडस्य प्रकाशानुपपत्तेः । यथा तमसाऽवगुण्ठितो घटः प्रदीपप्रभावगुण्ठनमन्तरेण न प्रकाशीभवति, एवम् । यः पुनर्विच्छेदावभासः, स जागरेऽपि मायाविजृम्भितः । सर्वस्य प्रपञ्चजातस्य चैतन्यैकाश्रयत्वात् । तस्य च निरंशस्य प्रदेशभेदाभावात् । प्रपञ्चभेदेनैव हि तत् कल्पितावच्छेदं सदवच्छिन्नमिव बहिरिव अन्तरिव प्रकाशते । अथवा दिगाकाशौ मनोमात्रगोचरौ सर्वत्राध्यासाधारौ विद्येते इति न परत्रेति विरुध्यते ॥

---

न स्युः ? चैतन्येन सह संयोगादिसम्बन्धात् विषयावगतिश्च किं न स्यादित्यत्राह—**अन्यथेति**। विषयस्य स्वतश्चैतन्याभावात् नान्यानि चैतन्यानि सन्ति, संयोगाद्यनिरूपणाद्विषयावभासो मयाऽवगतमिति सम्बन्धावभासश्च न स्यादित्यर्थः । विना सम्बन्धं विषयावभासः किं न स्यादित्यत्राह—**यथेति** ॥

इदानीं परमार्थत्वाभिमतजाग्रद्भेदोऽप्येकचैतन्ये कल्पितः, किमु वक्तव्यं स्वप्नभेदस्य चैतन्याधिष्ठानतेत्याह—**यः पुनरिति**। तत्र हेतुः—**सर्वस्येति**। सर्वप्रपञ्चस्य चैतन्ये कल्पितत्वात् तद्भेदस्यापि तत्र कल्पिततेत्यर्थः । तर्ह्येकमेव चैतन्यं युगपदन्तर्बहिर्भेदादिरूपेण भातीति प्रदेशभेदात् कथं तस्याखण्डाद्वितीयतेत्यत्राह—**तस्य चेति** । निरवयवत्वेन चेत्यभेदसम्बन्धं विना स्वतः प्रदेशभेदानवगमादित्यर्थः । एवं प्रतिपत्तुमशक्तं प्रत्यङ्गीकारवादः—**अथ वेति**। केवलस्य मनसो बहिः प्रत्यक्षसाधनत्वाभावात् ॥

---

त्वमाह—**यः पुनः विच्छेदावभास इति** । देशकालादिप्रपञ्चस्य तत्स्थघटादिप्रपञ्चस्य तत्स्थभेदादिप्रपञ्चस्य च एकचैतन्याधिष्ठानत्वात् तदुपाधिकत्वेन तस्मिंश्चैतन्ये प्रतिभासमानो भेदो मायाविजृम्भित एवेत्याह—**सर्वस्येति** । चैतन्यस्योत्कृष्टप्रदेशेऽहङ्कारादयः कल्पिताः, तत्रात्मत्वव्यवहारः, अपकृष्टे प्रदेशे घटादयः कल्पिताः, तत्रानात्मत्वव्यवहारः इति ; नेत्याह—**तस्य चेति**। तर्ह्यन्तर्बहिर्भेदाद्यवभासः कथमिति ? स्वस्मिन् कल्पितोपाधिभेदादित्याह—**प्रपञ्चभेदेनैवेति** । इत्थमर्थमनुसन्धातुं अक्षमान् मन्दबुद्धीननुसरति—**अथ वेति** ॥

**कथं तर्हि नामादिषु ब्रह्माध्यासः? किमत्र कथम्? न तत्र कारणदोषः नापि मिथ्यार्थावभासः। सत्यम्—अत एव चोदनावशात् इच्छातोऽनुष्ठेयत्वात् मानसी क्रियैषा, न ज्ञानम्। ज्ञानस्य हि दुष्टकारणजन्यस्य विषयो मिथ्यार्थः। न हि ज्ञानमिच्छातो जनयितुं निवर्तयितुं वा शक्यम्, कारणैकायत्तत्वादिच्छानुप्रवेशानुपपत्तेः। ननु स्मृतिज्ञानमाभोगेन जन्यमानं मनोनि-**

---

लक्षणद्वयस्याव्याप्तिः परिहृता। केवलस्वरूपलक्षणस्यातिव्याप्तिमाशङ्कते—**कथं तर्हीति**। तत्र लक्षणसद्भावमाह—**नामादिषु ब्रह्मेति**। लक्ष्याभावमाह—**कथमध्यास इति**। दृष्टिरिति शेषः। नामादिषु ब्रह्मदृष्टिर्न लक्ष्यमित्यर्थः। लक्ष्यलक्षणयोरन्योन्याविनाभूतत्वाल्लक्षणं दृष्टं चेत्तत्र लक्ष्यस्यापि सत्त्वात् न चोद्यमस्तीत्याशङ्कते—**किमत्र कथमिति**। मैवम्—तत्र लक्ष्यादर्शनादित्याह—**न तत्रेति**। दृष्ट इति शेषः। अन्यस्यान्यात्मताज्ञानस्याध्यासलक्षणत्वादस्याश्च मानसक्रियात्वेन तत्र लक्षणस्याभावान्नातिव्याप्तिरिति परिहरति—**सत्यमिति**। हेत्वसिद्धिनिरासार्थं **चोदनावशादिति**। अथाप्यर्थप्रधानज्ञानाध्यासलक्षणस्यातिव्याप्तिरस्तीत्यत्राह—**ज्ञानस्य हीति**। मानसत्वात्तदपि ज्ञानं विधेयमेवेत्यत्राह—**न हीति**। विधिपुरुषेच्छाप्रयत्नानपेक्षमेव ज्ञानम्। अनिच्छतोऽप्यनिष्टज्ञानदर्शनात्। अतो नेच्छाजन्यं स्यादित्यर्थः॥

स्मृतेरिच्छापूर्वमनःप्रवर्तनेन तन्निरोधेन चोत्पत्तिनिरोधयोः दर्शनात् ज्ञानस्येच्छाद्यनपेक्षत्वं असिद्धमिति शङ्कते—**ननु स्मृतीति**। तयोरिच्छामनो-

---

लक्षणद्वयस्याव्याप्तिं परिहृत्य केवलस्वरूपलक्षणस्येदानीमतिव्याप्तिमाशङ्क्य परिहरति—**कथं तर्हीत्यादिना**। अनयोर्लक्ष्यलक्षणयोः अन्योन्याविनाभूतयोः मध्ये लक्षणं दृष्टञ्चेल्लक्ष्यमपि तत्रास्त्येव। अतोऽत्र लक्ष्यांशे चोद्यावसरो नास्त्येवेत्याह—**किमत्र कथमिति**। **अत्र**—लक्ष्यांशे। **कथमिति**—चोद्यम्। **किम्**—तत्र [तस्य] प्राप्तिरेव नास्तीत्यर्थः। लक्ष्यं नास्तीति यदुक्तम्, तत्तथैव, लक्ष्याभावेऽपि लक्षणमस्तीति यदुक्तं, तन्नास्तीत्याह—**सत्यमिति**। **अत एव** लक्षणेन नियतव्याप्यलक्ष्याभावादेव तदविनाभूतलक्षणमपि न सम्भवतीत्याह—**अत एवेत्यादिना**। **आभोगेनेति**। इच्छाधीनमनःप्रवर्तनेनेत्यर्थः।

रोधेन च निरुध्यमानं दृश्यते। सत्यम्— न स्मृत्युत्पत्तिनिरोधयोस्तयोर्व्यापारः, किन्तु कारणव्यापारे तत्प्रतिबन्धे च, चक्षुष इवोन्मीलननिमीलने। न पुनर्ज्ञानोत्पत्तौ व्यापार इच्छायाः। तस्मात् ब्रह्मदृष्टिः केवला अध्यस्यते चोदनावशात् फलायैव, मातृबुद्धिरिव रागनिवृत्तये परयोषिति। तदेवं अनवद्यमध्यासस्य लक्षणं **'स्मृतिरूपः परत्र पूर्वदृष्टावभासः'** इति॥

---

निरोधयोर्न स्मृत्युत्पत्तिनिरोधयोः व्यापारः, किन्तु तत्कारणमनोव्यापारतत्प्रतिबन्धयोरिति परिहरति—**सत्यमिति**। फलपर्यवसानसिद्धये पश्चात् ज्ञानोत्पत्तावपि व्यापारः स्यादित्याशङ्क्य, अतिप्रसङ्गान्नेत्याह—**न पुनरिति**। ज्ञानस्येच्छाजन्यत्वाभावे फलमाह—**तस्मादिति**। **केवलेति**। न ज्ञानरूपेत्यर्थः। विधिनामादिब्रह्मदृष्टेरिच्छाजन्यत्वं न स्यादेवेत्यत्राह—**अध्यस्यत इति**। विधितोऽनुष्ठेयत्वादित्यर्थः। तच्च नास्ति, प्रसिद्धज्ञानक्रियाभ्यां वैलक्षण्येनासम्भावितफलत्वादित्यत्राह—**फलायेति**। **स्मृतिरूप** इति वा, **परत्र परावभास** इति वोक्ते अतिव्याप्त्याद्यभावात् अन्यतरद् व्यर्थमित्याशङ्क्य, आद्यं तटस्थलक्षणं द्वितीयं स्वरूपलक्षणमित्यङ्गीकारात् मैवमिति मत्वोपसंहरति—**तदेवमिति**।

अध्यासे वादिनां विवाददर्शनात् नैकरूपेण लक्षणं स्थापयितुं शक्यमित्याशङ्क्य, अधिष्ठानारोप्ययोः तत्त्वकालदेशेष्वेव विवादो नान्यस्यान्यात्मतावभासमात्रे लक्षणे। तच्च सामान्यविशेषादिसंसर्गज्ञानानां भ्रान्तित्वप्राप्तिं त्यक्तुं सत्यमिथ्यावस्त्वभेदावभास इति बलादायातीत्यङ्गीकृत्य, मतान्तराण्युपन्यस्य-

---

**तयोः**—मनःप्रवर्तननिरोधयोः य इच्छाव्यापारः, स न स्मृत्युत्पत्तिनिरोधयोः पर्यवसितः किन्तु अन्यत्रैवेत्याह—**सत्यमिति**। अर्थाध्यासमन्तरेण ज्ञानाध्यासासम्भवादर्थोऽप्यध्यस्त इति; नेत्याह—**केवलेति**। तर्हि फलदातृब्रह्माध्यासाभावे फलसिद्धिर्न स्यादित्याशङ्क्य, 'योषा वाव गौतमाग्निः' इत्यादाविव विधिवशात् फलं सिध्यत्येवेत्याह—**चोदनावशादिति**॥

अन्यथाख्यात्यादावपि लक्षणस्यानुप्रवेशे तस्यानिर्वचनीयख्यात्यसाधारण्यासम्भवात् तस्यासाधारण्ये अन्यसाधारण्यासम्भवात् परसम्प्रतिपत्त्युपन्यासेन स्वमतस्य परिशुद्धिर्न

**तं केचित्** इत्यादिना अध्यासस्वरूपे मतान्तरमुपन्यस्यति स्वमतपरिशुद्धये । कथम्? **अन्यत्र** शुक्तिकादौ **अन्यधर्मस्य** अर्थान्तरस्य रजतादेः ज्ञानाकारस्य बहिष्ठस्यैव वा **अध्यासः** इति वदन्ति । **केचित्तु यत्र यदध्यासः तद्विवेकाग्रहणनिबन्धनो भ्रमः इति**—यत्र यस्याध्यासः तयोर्विवेकस्याग्रहणात् तन्निबन्धनोऽयमेकत्वभ्रमः इति । वदन्तीत्यनुषङ्गः । **अन्ये तु यत्र यदध्यासः तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते इति** । यत्र—शुक्तिकादौ यस्य—रजतादेरध्यासः तस्यैव—शुक्तिशकलादेः विपरीतधर्मत्वस्य रजतादिरूपत्वस्य कल्पनां—अविद्यमानस्यैवावभासमानतां आचक्षते । **सर्वथापि तु** इति स्वमतानुसारित्वं सर्वेषां कल्पनाप्रकाराणां दर्शयति ।

---

तीत्याह—**तं केचिदिति** । **स्वमतपरिशुद्धये**(च)—स्वोक्तलक्षणस्य सर्वसम्मतत्वेन एकरूपेण व्यवस्थित्यै । मतत्रयस्यैवोपन्यस्तत्वात् कथं **मतान्तर**मित्यविशेषनिर्देश इति शङ्कते—**कथमिति** । तां परिहर्तुमाद्यं अन्यथाख्यातिविशेषविषयत्वेनात्मख्यातिविशेषविषयत्वेन च व्याचष्टे—**अन्यत्रेति** । द्वितीयमख्यातिविषयतया व्याचष्टे—**यत्रेति** । तृतीयमन्यथाख्यातिविशेषविषयत्वेन शुक्तेः स्वाभावरूप्यात्मना ख्यातिरित्यसत्ख्यातिविषयत्वेन च व्याचष्टे—**यत्र शुक्तीति** । **कल्पना**मित्यस्य व्याख्या—**अविद्यमानस्यैवावभासमानतामिति** । तस्मादविशेषनिर्देशो युक्त इत्यर्थः ॥

सर्वपक्षाणां स्वोक्तलक्षणे सम्मतिं दर्शयतीत्याह—**सर्वथेति** । लक्षणोक्तिकाले अनुक्तस्याप्यनुवादादधिकोक्तिः भाष्यकारस्य, तस्याप्यपेक्षितत्वात् अनु-

---

सिध्यतीत्याक्षिपति—**कथमिति** । लक्षण[प्रतिपादन]काले अनुक्तमनुवादकालेऽनुवदति **भाष्यकारः**, अतोऽधिकोक्तिदोषप्रसङ्गः । तावतोऽपेक्षितत्वात् अनुवादश्चेत् तर्हि पूर्वत्रा-

**अन्यस्यान्यधर्मावभासत्वं नाम लक्षणं परत्रेत्युक्ते अर्थात् परावभासः सिद्धः इति यदवादिष्म, तत् न व्यभिचरति। कथम्? पूर्वस्मिन् कल्पे ज्ञानाकारस्य बहिष्ठस्य वा शुक्तिधर्मत्वावभासनात् न व्यभिचारः। द्वितीयेऽपि शुक्तिरजतयोः पृथक् सतोरपृथगवभासः,अभिमानात्। तृतीयेऽपि शुक्तिशकलस्य रजतरूपप्रतिभासनात्। पूर्वदृष्टत्वस्मृतिरूपत्वयोः सर्वत्राव्यभिचारात् न विवादः इत्यभिप्रायः। तत्र 'स्मृतिरूपः पूर्वदृष्टावभासः' इत्येतावति लक्षणे निरधिष्ठानाध्यासवादिपक्षेऽपि निरुपपत्तिके लक्षणव्याप्तिः**

---

वादश्चेत् पूर्वं न्यूनोक्तिरित्यत्राह—**अन्यस्येति** यल्लक्षणमवादिष्मेति पूर्वेण लक्षणशब्देन यच्छब्दस्यान्वयः। नन्ववभास एव केषांचिन्न संमत इत्याक्षिपति—**कथमिति**। आद्ये तावत् सम्मत इत्याह—**पूर्वस्मिन्निति**। तथाऽप्यख्यातिवादिनो न सम्मत इत्यत्राह—**द्वितीयेऽपीति**। प्रवृत्त्यन्यथानुपपत्त्या साधितसंसर्गज्ञानस्य स्वीकारान्न व्यभिचार इत्यर्थः। तृतीये कथं सम्मतिरित्यत्राह—**तृतीयेऽपीति**। **न व्यभिचार** इत्यनुषङ्गः। शुक्लो घट इत्यादिसंसर्गज्ञानानां भ्रान्तित्वप्राप्तिनिरासार्थं सत्यमिथ्यावस्त्वभेदात्मकत्वं च सर्वसम्मतं इत्यर्थः ॥

तथापि तटस्थलक्षणं न सम्मतमित्यत्राह—**पूर्वदृष्टत्वेति**। अविद्यादोषपूर्वभ्रमसंस्काराभ्यां जन्यानि पदार्थमात्रज्ञानानि भ्रमः, अतः सत्यवस्तुतत्सम्प्रयोगाद्यनपेक्षत्वात् **परत्रेति** पदं व्यर्थमिति माध्यमिकमतमाशङ्क्याह—**तत्र स्मृतिरूप इति**। ओमिति, नेत्याह—**निरुपपत्तिके इति**। न च पदार्थमात्रधीर्भ्रमः। शून्यज्ञानस्यापि भ्रमत्वप्रसङ्गात्। किन्त्वन्यत्रान्यज्ञानम्। ततश्चाभ्रमेऽपि

---

पेक्षितस्यानुक्तत्वात् न्यूनोक्तिदोषप्रसङ्गः भाष्यकारस्येत्याशङ्क्य परिहरति—**अन्यस्य इति**। परत्र परावभास इति लक्षणं साङ्ख्यप्राभाकरादिभिर[न]ङ्गीकृतमिति चोदयति—**कथमिति**। प्राभाकरैर(प्यथगव)[पि संसर्गाव]भासाभिमान इत्याद्युक्त्या, साङ्ख्यैर्मानसतृतीयज्ञानाङ्गीकारेण च लक्षणमङ्गीकृतमेवेति मत्वा परिहरति—**द्वितीयेऽपीति**। शून्यवादिपक्षेऽपि लक्षणव्याप्तिरस्तु, को विरोध इत्याशङ्क्याह—**निरुपपत्तिके इति** ॥

स्यादिति तन्निवृत्तये 'परत्र' इत्युच्यते। कथं निरुपपत्तिकोऽयं पक्षः? न हि निरधिष्ठानोऽध्यासो दृष्टपूर्वः संभवी वा। ननु केशोण्ड्रकाद्यवभासो निरधिष्ठानो दृष्टः—न—तस्यापि तेजोऽवयवाधिष्ठानत्वात्॥

ननु रजते संवित् संविदि रजतामिति परस्पराधिष्ठानो भविष्यति, बीजाङ्कुरादिवत्। नैतत् सारम्—न तत्र यतो बीजात् योऽङ्कुरः तत एव तद्बीजम्, अपि तु अङ्कुरान्तरात्। इह पुनः यस्यां संविदि यत् रजतमवभासते तयोरेवेतरेतराध्यासः, ततो

---

पदार्थज्ञाने लक्षणव्याप्तिर्निरुपपत्तिका। अतस्तद्व्यावृत्त्यर्थं **परत्रेति** पदं न व्यर्थमित्यर्थः। इमं भावमज्ञात्वा घटोऽस्तीति पूर्वभ्रमसंस्काराख्यनिमित्तस्य (अर्थपञ्चमा)[असत्प्रपञ्चा]कारविद्याख्योपादानस्य च सम्भवात् ताभ्यामेव घटोऽस्तीत्युत्तरोत्तरभ्रमसम्भवादस्मिन् पक्षे का अनुपपत्तिरित्याक्षिपति—**कथं निरुपपत्तिक इति**। परिहारं सौलभ्याद्विधान्तरेणाह—**न हीति**। हेत्वसिद्धिमाशङ्कते—**ननु केशेति**। परिहारः—**न तस्यापीति**॥

संविद्रूप्ययोरन्योन्याधिष्ठानत्वेन भ्रमत्वसाधिष्ठानत्वसम्भवात् न तृतीयस्य सत्यवस्तुनोऽधिष्ठानता कल्प्येति शङ्कते—**ननु रजते इति**। आरोप्यव्यतिरेकेणाधिष्ठानस्य सिद्धिः वक्तव्या, सा अन्योन्याधिष्ठानत्वे सति अन्योन्यापेक्षसिद्धित्वान्न स्यादित्यत्राह—**बीजाङ्करेति**। न बीजादिषु अन्योन्याश्रयता, किन्तु कारणपरम्परेति परिहरति—**नैतदिति**। इहापि परम्परैवेति, नेत्याह—**इह पुनरिति**। इहापि तर्हि रूप्ये संवित्, रूप्यं पूर्वस्यां संविदि, सा च स्व-

---

घटोऽस्तीति पूर्वभ्रमसंस्कारलक्षणनिमित्तकारणसम्भवा(दर्थपञ्चमा)[दसत्प्रपञ्चा]कारा-विद्योपादानसम्भवाच्च ताभ्यामेव घटोऽस्तीत्युत्तरभ्रमसम्भवादस्मिन् पक्षे काऽनुपपत्तिरित्याक्षिपति—**कथं निरुपपत्तिकोऽयमिति**। कार्योत्पत्तेः प्राक् कार्योत्पत्तिकाले चा(न)वस्थितं स(त्व)[त्]सन्निहितसहकारिव्यापारवशात् कार्यविरोधिपूर्वावस्थां परित्यज्य कार्यरूपेण परिणम्य कार्येण सामानाधिकरण्येन दृष्टत्वादस्य कार्यस्य इदमेव **कारणमिति**

दुर्घटमेतत् । बीजाङ्कुरादिष्वपि न बीजाङ्कुरान्तरपरम्परामात्रेण अभिमतवस्तुसिद्धिः, प्रतीतितो वस्तुतश्चानिवृत्ताकाङ्क्षत्वात् । तथा च 'कुत इदमेवं' इति पर्यनुयोगे 'दृष्टत्वादेवं' इति तत्र च दूरं वा परिधाव्य स्थातव्यम् । अन्यथा हेतुपरम्परामेवावलम्ब्य क्वचिदप्यनवतिष्ठमानो नानवस्थादोषमतिवर्तेत । अपि च, न कश्चिन्निरवधिको 'न' इत्येव बाधावगमो दृष्टः । यत्राप्यनुमानादाप्तवचनाद्वा 'न सर्पः' इत्येवावगमः तत्रापि 'किं पुनरिदं' इत्य-

---

विषये[स]च पूर्वस्यामिति परम्परैवास्त्वित्यत्राह—**बीजाङ्कुरेति** । न परम्परामात्रेण कार्यकारणभावसिद्धिः, किन्त्वनव(स्थये)[स्थे]त्यर्थः । ततः किमित्यत्राह—**तथा चेति** । यद्वा, तर्हि इहापि रूप्ये संवित् रूप्यं च पूर्वस्यां संविदि इत्यादिपरम्परया अन्वय्यधिष्ठानमस्तु । न च पूर्वस्योत्तराध्यासे युगपदवस्थानात् क्षणिकत्वहानिः, बीजाङ्कुरादिष्वदर्शनादित्यत्राह—**बीजाङ्कुरेति** । युगपदस्थानवत्तत्रान्वयिकारणत्वस्यापि सिद्धिर्नास्तीत्यर्थः । तत्र हेतुः—**प्रतीतित इति** । अन्वयिकारणे इति शेषः । अतः [अन्वयिद्रव्यमेव तत्राप्युपादानम्, बीजादेरन्योन्यनिमित्तनैमित्तिकतेति भावः ।] तर्ह्यनन्वय्येव परम्परया अधिष्ठानमित्यत्राह—**तथा चेति** । अनवस्थादोषात् परम्पराकल्पनं न युक्तमित्याक्षेपे, क्वचिद्दृष्टत्वादेव दृष्टिपरम्परात्वान्नानवस्थादोष इति वाच्यम्, तच्च वक्तुं शक्यम्, बीजाङ्कुरयोः कार्यकारणभावस्य दृष्टत्वात्, अदृष्टेऽपि तयोः कार्यकारणत्वकल्पना दृष्टिपरम्परात्वान्नानवस्थादोषापादिकेत्यर्थः । संविद्रूपयोस्त्वधिष्ठानाधिष्ठेयतया निमित्तनैमित्तिकत्वस्य प्रथममेव कल्प्यत्वात्तयोः परम्परा(वद)[अ]न्धपरम्परामेवाप्नोतीत्याह—**अन्यथेति** ॥

भ्रान्तिविष(यस्यां)[ये अं]शांत(र)[राभाव]विशिष्टांशान्तरज्ञानस्य, बाधकत्वाच्च साधिष्ठानो भ्रम इत्याह—**अपि चेति** । अनुमानाप्तवाक्याभ्यां सर्पाभावमात्रमपि कदाचित् गृह्यते, न तदभावविशिष्टमंशान्तरमित्यत्राह—**यत्रापीति** ।

---

वक्तव्यम् । इतरथा प्रतीत्यनवस्था सत्ता[नवस्था]च प्रसज्येतेत्याह—**बीजाङ्कुरादिष्व**

पेक्षादर्शनात् पुरोऽवस्थितं वस्तुमात्रमवधिर्विद्यते । प्रधानादिष्वपि जगत्कारणे त्रिगुणत्वादिबाधः अधिगतावधिरेव । अथवा, सर्वलोकसाक्षिकमेतत् । केशोण्ड्रकादावपि तद्बाधे तदनुषङ्ग एव बोधे बाध्यते न बोधः । अतः तदवधिः सर्वस्य बाधः । तेन तन्मात्रस्य बाधाभावात् स्वतश्च विशेषानुपलब्धेः कूटस्थापरोक्षै-

---

तत्राप्यभावविशिष्टं वस्तुमात्रं गृह्यते विशेषाकाङ्क्षादर्शनादित्यर्थः। प्रधानं नास्तीत्यादौ न तदभावविशिष्टं वस्त्वन्तरं गृह्यते, तस्यान्यत्रानध्यस्तत्वादित्यत्राह—**प्रधानादिष्वपीति** । तर्हि सर्वस्य चैतन्याधिष्ठानत्वं पूर्वोक्तं न स्यात् इत्यत्राह—**अथ वेति** । सर्वलोकसाक्षि अधिष्ठानमवधिश्च यस्य तत् केशोण्ड्रकादि तथोक्तम् । अतः शङ्क्यमाननिरधिष्ठानभ्रमनिरवधिकबाधेष्वपि चैतन्यमेवाधिष्ठानमवधिश्चास्तीत्यर्थः ॥

अधिष्ठेयबाधे तत्प्रतियोगिकाधिष्ठानचैतन्यस्यापि बाधात् कथं निरवधिको बाधो न स्यादित्यत्राह—**केशोण्ड्रकेति** । अधिष्ठेयबाधे तद्वैशिष्ट्यं चैतन्यस्य बाध्यते, न तु तदुपलक्षितं स्वरूपम्, तस्य निष्प्रतियोगिकत्वादित्यर्थः । **अत** इत्युपसंहारः । तं व्यनक्ति—**तेनेति** । तत्तदधिष्ठानचैतन्यस्य सविशेषत्वेन विकारजाड्यभेदवत्त्वात् कूटस्थापरोक्षैकरसात्मावधिः सर्वस्य बाध इति सिद्धान्तासिद्धिरित्यत्राह—**स्वत इति** । सविशेषशुक्त्यादिसंसर्गं विनेत्यर्थः । न

---

**पीति** । **सर्वलोकसाक्षिकमिति** । सर्वलोकस्य साक्ष्येव अधिष्ठानत्वेन साक्षी यस्य(स) [तत् ]तथोक्त(:)[म्] । बाह्यार्थसम्बन्धबाधे सम्बन्धित्वादर्थवच्चैतन्यस्यापि बाध्यत्वं स्यादित्याशंक्य, हेत्वसिद्धिं मन्वान अह—**न बोधः इति** । **तेन तन्मात्रस्येति** । भ्रमात् पूर्वसिद्धतया प्रतिपन्नस्य भ्रमाधिष्ठानत्वात् बाधकज्ञानप्रमेय(तेन)[निषेधाधिकरणत्वेन]लयावधित्वाच्चेत्यर्थः । रजतादिज्ञानं नाम चैतन्यस्य रजतादिसम्बन्धो न भवति, किन्तु चैतन्यविशेषः, अतस्तस्यार्थबाधात् बाधः किमिति नाङ्गीकर्तव्य इत्याशङ्क्याह—**स्वतश्चेति** । [**स्वतो**] **विशेषानुपलब्धे**रित्युक्ते [उपाधितः प्राप्तं तं](विधिः प्राप्तानां) व्युदस्यति—(**ततश्चे**)[**चे**]**ति** । जडाकारस्य जडविशेषेषु सामानाधिकरण्येनानुषङ्गात् यथा तत्कारणत्वं

**करसचैतन्यावधिः सर्वस्य बाधः। नाप्यध्यस्तमप्यसदेव। तथात्वे प्रतिभासायोगात् ॥**

**ननु सर्वमेवेदमसदिति भवतो मतम्। क एवमाह? अनिर्वचनीयानाद्यविद्यात्मकमित्युद्घोषितमस्माभिः। अथ पुनर्विद्योदये अविद्याया निरुपाख्यतामङ्गीकृत्यासत्त्वमुच्येत, काममभिधीयताम्। तथा च बाधकज्ञानं 'नेदं रजतं' इति**

---

च असदेवाधिष्ठानमवधिश्च, यदनुविद्धमारोप्यं भाति तत्तस्याधिष्ठानमिति न्यायादित्यर्थः। भ्रमस्य सदधिष्ठानत्वसाधनप्रसक्त्या अध्यस्तस्यापि शून्यतां निराचष्टे—**नाप्यध्यस्तमिति**। प्रत्यक्षेण रूप्यमिति विशेषप्रतिभासाभावप्रसङ्गात् इत्यर्थः ॥

तेऽप्यध्यस्तं सर्वं शून्यमेवेति मतमित्याशङ्कते—**नन्विति**। शून्याव्यावृत्तिरप्यध्यस्तस्योक्तैवेत्याह—**क एवमिति**। प्रागनिर्वाच्यत्वेऽपि बाधादूर्ध्वमध्यस्तस्य शून्यत्वं तवापि समानमित्याशङ्कते—**अथ पुनरिति**। सर्ववादिनामपि विज्ञानादूर्ध्वमसत्त्वस्येष्टत्वेनादोषत्वादिष्टमित्याह—**काममिति**। युक्तं नाशादूर्ध्वं नष्टस्यासत्त्वम्, सत्त्वे मानाभावात्, बाधितस्य त्वन्यत्र सत्त्वावगमादयुक्तं बाधादूर्ध्वं असत्त्वमित्याशङ्क्य, किं बाधकज्ञानमन्यत्र सत्त्वबोधकम्? किन्तु इहैव बाधानुपपत्तिर्वा? नाद्य इत्याह—**तथा चेति**। नेदं रूप्यम्, किन्तु

---

बाध्यत्वञ्च भवति, एवं चैतन्यस्याप्यनुषङ्गात् कारणत्वं बाध्यत्वञ्च भवितुमर्हतीत्याशङ्क्याह—**कूटस्थेति**। पुमान् हि परिणमते न शक्तिः, अतः केवलश(रे)[क्तेर]परिणामित्वेन कूटस्थाया [अपि] बाध्यत्वं दृष्टम्, तद्वत् चैतन्यस्यापि स्यादित्याशङ्क्य, ततोऽपि व्यावृत्तिमाह—**अपरोक्षेति**। आपरोक्ष्यवत्वमबाध्यत्वे प्रयोजकं चेदापरोक्ष्यस्यापरोक्ष्यवत्त्वाभावात् बाध्यत्वं स्यदित्याशङ्क्य, वस्तुत आपरोक्ष्यैक्यमबाध्यत्वे प्रयोजकमित्याह—**एकरसेति**। तत्र सर्वत्र प्रयोजकमाह—**चैतन्येति**। अधिष्ठानस्य शून्यत्वं निराकृत्य, चिदेकरसतन्मात्रत्वं साधितम्। इदानीमारोप्यस्य शून्यत्वनिराकरणेन तद्वैलक्षण्यं साधयति—**नापीति**। असत्त्वं नाम सद्वैलक्षण्यं चेत् तत्त्विष्टम्, शून्यत्वं चेत् न सम्भवतीत्याह—**असदेवेत्येवकारेण**। सद्विलक्षणमित्युक्त्या असत्त्वमर्थादुक्तमित्याशङ्क्य ततोऽपि वैलक्षण्यमस्माभिरेवोक्तमित्याह—**अनिर्वचनीयेति**। मुखस्य दर्पणसंसर्गमात्रनिषेधवद् रजतमिदं न भवतीति

**विशिष्टदेशकालसम्बद्धं रजतं विलोपयदेवोदेति, न देशान्तरसम्बन्धमापादयति। तथाऽनवगमात्। तथा च दूरवर्तिनीं रज्जुं सर्पं मन्यमानः तन्निकटवर्तिना आप्तेन 'नायं सर्पः' इत्युक्ते सर्पाभावमात्रं प्रतिपद्यते, न तस्य देशान्तरवर्तित्वम्। तत्प्रत्तिपत्तावसामर्थ्यात् वाक्यस्य। नार्थापत्त्या। इह भग्नघटाभाववत् तावन्मात्रेणापि तत्सिद्धेः।**

---

देशान्तरे बुद्धौ वेति अनवगमादित्यर्थः। अवगम्यते मयेति विप्रतिपन्नं प्रत्याह—**तथा चेति**। अत्राप्यन्यत्र सत्त्वं गम्यते विशेषणसामर्थ्यादित्यत्राह—**न तस्येति**। यावदभिधानसामर्थ्यं वाक्यस्यार्थबोधकत्वादनभिहितं देशान्तरवर्तित्वं न वाक्यार्थः। यश्चार्थादर्थो न स चोदनार्थ इति न्यायात्। अतो नाध्यक्षेऽपि विवदितव्यमित्यर्थः।

द्वितीयं प्रत्याह—**नार्थापत्त्येति**। यथा घटस्य प्रतिपन्नोपाधौ निषेधो नाप्रतिपन्नोपाधौ सत्त्वं कल्पयति, तद्वद्रूप्यादेरपीत्यर्थः। यद्यन्यत्रापि सत्त्वं न स्यात्तदा प्रतीतिर्न स्यादिति प्रतीत्यनुपपत्त्या तत्सिद्धिरस्त्वित्यत्राह—**तावन्मात्रेणेति**। तत्रैवानिर्वाच्यवस्तुसद्भावमात्रेणापि तस्याः प्रतीतेः सिद्धेरित्यर्थः। न चैवं पूर्वं रूप्यमभूदिदानीं नेति घटवत् कालभेदेन निषेधः स्यात्। लौकिकपरमार्थरूप्यस्यात्र कालत्रयेऽपि शून्यत्वात्तदपेक्षया निरुपाधिकनिषेधसिद्धेरित्यूह्यम्। नायं सर्प इत्यभावमात्रविषयमपि प्रत्यक्षं न देशान्तरे सर्पसत्त्वं गमयति, किमु वक्तव्यं रज्जुरियमित्यधिष्ठाने पर्यवसिता धीः न कल्पयतीति

---

संसर्गमात्रस्यैव निषेधः, न रूप्यस्वरूपस्येत्याशङ्क्य; मुखं दर्पणस्थं न भवति किन्तु ग्रीवास्थमिति मुखेनाभेदविधानवत् रूप्यमिदं न भवति किन्तु देशान्तरस्थमिति बाधः स्यात्, तथा नास्तीत्याह—**न देशान्तरसम्बन्धमिति**। प्रत्यक्षस्य देशान्तरे रूप्यस्य सत्त्वबोधकत्वाभावेऽपि आप्तवाक्यजन्यज्ञानस्य बोधकत्वमस्त्वित्याशङ्क्य, तत्राप्यसम्भवमाह—**तथा चेति**॥

नायं सर्पः रज्जुरेषेति याथात्म्यविधावेव पर्यवस्यति यत्र बाधकज्ञानं, तत्र बाधक-

यत्रापि सर्पबाधपूर्वको रज्जुविधिरक्षजन्यः तादृशवाक्यजन्यो वा, तत्रापि स एव न्यायः। तथाऽनवगमात्। तदेवं न क्वचिन्निरधिष्ठानोऽध्यासः। तस्मात् साधूक्तं 'परत्र' इति॥

यद्येवं 'परत्र पूर्वदृष्टावभासः' इत्येतावदस्तु लक्षणम्, तथाविधस्य स्मृतिरूपत्वाव्यभिचारात्। सत्यम्, अर्थलभ्यस्य स्मृतित्वमेव स्यात्, न स्मृतिरूपत्वम्। न च स्मृतिविषयस्याध्यासत्वमित्युक्तम्। यद्येवमेतावदस्तु लक्षणं 'परत्र स्मृतिरूपावभासः' इति। तत्र परत्रेत्युक्ते अर्थलभ्यस्य परावभासस्य स्मृतिरूपत्वं विशेषणम्। न हि परस्यासंप्रयुक्तस्य पूर्वदृष्टत्वाभावे स्मृतिरूपत्वसम्भवः। सत्यम्, विस्पष्टार्थं पूर्वदृष्टग्रहणमिति

---

इत्याह—**यत्रापीति**। प्रकृतं निगमयति—**तदेवमिति**। अतोऽसम्भवित्वव्यावृत्त्यर्थत्वात् परत्रेति पदं न व्यर्थमित्याह—**तस्मादिति**॥

**परत्रे**त्यावश्यकं चेदस्तु, **स्मृतिरूपपदं** मा भूत्, **परत्रपूर्वदृष्टावभास**पदाभ्यामेव स्मृतिरूपत्वसिद्धेरित्याशङ्कते—**यद्येवमिति**। पूर्वदृष्टावभासस्य स्मृतित्वेनैव सिद्धेः न स्मृतिरूपत्वं सिध्यतीति परिहरति—**सत्यमिति**। अस्त्विति, नेत्याह—**न चेति**। अतस्तत्सिद्ध्यर्थं स्मृतिरूपपदमपेक्ष्यमित्यर्थः। तर्हि **पूर्वदृष्टावभास**पदं मा भूदित्याशङ्कते—**यद्येवमिति**। तर्हि **परत्र स्मृतिरूप** इति अधिष्ठानमात्रविषया कारणत्रितयजन्या धीरित्युक्तं स्यात्, तथा चासम्भवि लक्षणं स्यादित्यत्राह—**तत्रेति**। तथापि पूर्वदृष्टत्वस्यानन्यथासिद्धत्वात्तदर्थं पूर्वदृष्टपदमपेक्ष्यमित्यत्राह—**न हीति**। **स्मृतिरूपपदेन** किं संस्कारजत्वं स्मृत्या सादृश्यं भ्रान्तेर्विवक्ष्यते? पूर्वानुभवसम्भेदो वेति विचारे, **पूर्वदृष्टस्य** पूर्वदृष्टसजातीयस्यावभासो न दर्शनस्येति संस्कारजत्वं स्पष्टीकर्तुमपेक्ष्यमिति दूषयति—**सत्यं विस्पष्टेति**॥

---

ज्ञानं सर्पस्य देशान्तरसद्भावे, न व्याप्रियते तत्र यो न्यायः स एव नायं सर्प इति बाधकज्ञानेऽप्यङ्गीकर्तव्यः बाधस्यैकरूप्यसिद्धये इत्याह—**यत्रापीति**। भ्रान्तौ न शुक्तिका प्रति-

यथान्यासमेव लक्षणमस्तु। तथा च लोके अनुभवः इत्युदाहरणद्वयेन, लौकिकसिद्धमेवेदमध्यासस्य स्वरूपं लक्षितं किमत्र युक्त्या इति कथयति ॥

**शुक्तिका हि रजतवदवभासते** इति। ननु न शुक्तिका प्रतिभासते, रजतमेव प्रतिभासते, तेन शुक्तिकेति रजतवदिति चोभयं नोपपद्यते। उच्यते—शुक्तिकाग्रहण-मुपरितनसम्यग्ज्ञानसिद्धं परमार्थतः शुक्तिकात्वमपेक्ष्य। वतिग्रहणं तु संप्रयुक्तस्यारजतस्वरूपस्य मिथ्यारजतसम्भेद इवावभासनमङ्गीकृत्य। मिथ्यात्वमपि रजतस्य आगन्तुक-

---

अध्यासस्य सत्यमिथ्यावस्त्वभेदावभासात्मत्वे अन्यथा अतिव्याप्तेरित्याद्या युक्तिरुक्ताऽप्यनपेक्षिता। तथात्वेन लोकसिद्धस्यैव तस्य (तुल्य)[लक्ष्य]त्वादिति भाष्याभिप्रायमाह—**तथा चेति**। **शुक्तिका रजतवदिति** वाक्यं न भ्रान्त्यपेक्षया, तत्र इदं रूप्यमित्येव भानात्, न बाधापेक्षया, तत्र वत्करणाभावादि-त्याक्षिपति—**ननु न शुक्तिकेति**। बाधकमपेक्ष्य शुक्तिका रूप्यमवभासत इति लक्षणप्रदर्शनम्, बाधविषयतया वा तत्सामर्थ्याद्वा सिद्धमध्यासमिथ्यात्वं लक्ष्यमपेक्ष्य वत्करणमिति लक्ष्यलक्षणसङ्गतिर्लोके अनेन वाक्येन प्रदर्श्यते इत्याह—**उच्यत इति**। **सम्भेद इवावभासनमिति**। सम्भेदं तदवभासनं च मिथ्याभूतमपेक्ष्येत्यर्थः। मिथ्यारूप्यमिति विशेषणादन्यत्र सत्यं रूप्यं वक्तव्य-मिति; नेत्याह—**मिथ्यात्वमपीति**। कठिना पृथिवीतिवत्। सर्वस्यापि

---

भासते, किन्तु रजतमेव, अतः भ्रान्त्यपेक्षया शुक्तिरिति रजतवदिति चोभयं नोपपद्यते, बाधे रजतमेव न प्रतिभासते, तेन तदपेक्षयापि रजतमिति वदिति चोभयं नोपपद्यते इत्याक्षिपति—**ननु न शुक्तिकेति**। **मिथ्यारजतसम्भेद इवावभासनमिति**। मिथ्यारजतसम्भेदः त[त्तादात्म्यं]मिथ्येत्यर्थः ॥

ननु मिथ्यात्वं केन सिध्यतीति चेत्, स्वरूपसिद्धिः प्रतीतिसिद्धिर्वा पृच्छयते? यदि स्वरूपसिद्धिः, सापि रजतादेरहङ्कारादेर्वा? यदि रजतादेस्तत्राह—**आगन्तुकेति**।

**दोषनिमित्तत्वादनन्तरबाधदर्शनाच्च कथ्यते, न पुनः परमार्थाभिमताद् रजतादन्यत्वमाश्रित्य। तत्र असंप्रयुक्तत्वाद्रजतस्य नेदन्तावभासस्तद्गतः, किन्तु संप्रयुक्तगत एव। अपरोक्षावभासस्तु संस्कारजन्मनोऽपि रजतोल्लेखस्य दोषबलादिन्द्रियजज्ञानान्तर्भावाच्चेति द्रष्टव्यम्। तत्र शुक्तिकोदाहरणेन संप्रयुक्तस्यानात्मा रजतमिति दर्शितम्। निरञ्जनस्य चैतन्यस्य अस्मदर्थे अनि-**

---

मिथ्यात्वात् निरधिष्ठानता स्यादित्यत्राह—**तत्रेति**। रूप्य इत्यर्थः। अवभास्यत इत्यवभासः। रूप्ये सम्प्रयुक्तत्वाभावे कथमपरोक्षतेत्यत्राह—**अपरोक्षेति**॥

द्वितीयोदाहरणस्याक्षेपसमाधाने तुल्यन्यायत्वान्न कृते द्रष्टव्ये। एकेनोदाहरणेनापेक्षितसिद्धेर्द्वयं व्यर्थमित्याशङ्क्य तयोः तात्पर्यमाह—**तत्र शुक्तिकेत्यादिना**। तत्राद्योदाहरणस्यार्थमाह—**सम्प्रयुक्तस्येति**। तत्राध्यस्तमिति शेषः। तस्य फलमाह—**निरञ्जनस्येति**। प्रतिभासतोऽस्मदर्थे अहमित्यवभास-

---

अहङ्कारादेस्त्वनाद्यविद्यादोषजन्यत्वान्मिथ्यात्वमित्यागन्तुकविशेषणसामर्थ्यादुक्तं द्रष्टव्यम्। यदि प्रतीतिसिद्धिः, सापि रजतादेः इयं शुक्तिरिति ज्ञानबाध्यत्वान्यथानुपपत्त्या नेदं रजतमिति बाधकप्रत्यक्षेण वा भवेदित्याह—**अनन्तरेति**। अहङ्कारादेस्तु मिथ्यात्वप्रतीतिः तत्त्वमसिवाक्यजन्यज्ञानबाध्यत्वान्यथानुपपत्तितः नेति नेति वाक्येन प्रतिपन्नोपाधौ निषेधाच्च सिध्यतीति **च**शब्दादुक्तो द्रष्टव्यः। मिथ्येति विशेषणमपि खं छिद्रमित्यादिवत् स्वरूपपरं नान्यव्यावृत्तिपरमित्यतः काल्पनिकप्रपञ्च इति विशेषणात् सत्यप्रपञ्चस्वीकारो न प्राप्नोतीत्याह—**न पुनरिति**। रजतं [न] मिथ्या, इदमंशज्ञानविषयत्वात्, इदमंशवत्, इदमंशो मिथ्या, रजतज्ञानविषयत्वाद्रजतवदित्याशङ्क्य, उभयत्र हेत्वसिद्धिं मन्वानः परिहरति — **तत्रासंप्रयुक्तत्वादिति**। संस्कारजत्वप्राप्तपरोक्षावभासप्रतिबन्धकमाह — **दोषबलादिति**। आपरोक्ष्यावभाससम्पादकमाह—**इन्द्रियजज्ञानेति**॥

**अस्मदर्थे**—अहमिति प्रतिभासे इत्यर्थः। भाट्टाद्यभिमतात्मनो व्यावृत्तिमाह—**अनिदमंशस्येति**। प्राभाकराभिमतात्मनो व्यावृत्तिमाह—**चैतन्यस्येति**। क्षपणकाभिमतात्मनो व्यावृत्तिमाह—**निरञ्जनस्येति**। किमयमाक्षेपवादी पूर्वोक्तं ज्ञात्वा आक्षिपति?

**दमंशस्य अनात्मा तदवभास्यत्वेन युष्मदर्थलक्षणापन्नः अहंकारः अध्यस्तः इति प्रदर्शनार्थम्। द्विचन्द्रोदाहरणेन जीवेश्वरयोः जीवानां चानात्मरूपो भेदावभासः इति दर्शितम् ॥**

**ननु बहिरर्थे कारणदोषोऽर्थगतः सादृश्यादिः इन्द्रियगतश्च तिमिरादिरुपलभ्यते। तन्निमित्तश्चार्थस्य सांशत्वादंशान्तरावग्रहेऽपि अंशान्तरप्रतिबन्धो युज्येत। न त्विह कारणान्तरायत्ता सिद्धिः, येन तद्दोषादनवभासोऽपि स्यात्। निरंशस्य चैतन्यस्य स्वयंज्योतिषस्तदयोगात्। ननु ब्रह्मस्वरूपमनवभासमानमस्त्येव।**

---

माने[अनि]दमंशस्य चैतन्यस्यानात्मा अहङ्कारः तस्मिन् चैतन्ये अध्यस्त इत्यन्वयः। अहमिति प्रतीयमानस्य कथमनात्मतेत्यत्राह—**युष्मदर्थेति**। तदेव कथमित्यत्राह—**तदिति**। चिदित्यर्थः। अनात्मापि परमार्थतः चित्सम्बन्धी किं न स्यादित्यत्राह—**निरञ्जनस्येति**। तदेव कुत इत्यत्राह—**चैतन्यस्येति**। तदेव कुत इत्यत्राह—**अनिदंमंशस्येति**। **अवभास इति**। अवभासमात्ररूपेऽध्यस्त इत्यर्थः।(?) (अयमि)[**अध्यस्त इ**]त्यत्र चैतन्य इति शेषः गोबलीवर्दन्यायेन उदाहरणद्वयं वृत्तौ (व्यर्थ)[व्यक्त]मित्यर्थः(?) ॥

आत्मन्यनात्माध्यासे लक्षणमाक्षेप्तुं लौकिकरूप्याद्यध्यासे तदङ्गीकरोति—**नन्विति**। अतः कारणत्रितयजत्वमुपलक्षणं सम्भवतीति शेषः। दोषनिमित्तस्यागृहीतविशेषस्य सामान्यग्रहस्याधिष्ठानत्वव्यापकस्य सम्भवात् तत्र परत्र परावभासाख्यस्वरूपलक्षणं चास्तीत्याह—**तन्निमित्तश्चेति**। आत्मन्यनात्माध्यासे तद्विषयज्ञानस्याजन्यत्वे कारणाभावात् कारणत्रितयजत्वं नास्तीत्याह—**न त्विहेति**। कारणाभावादेव दोषनिमित्तस्यागृहीतविशेषस्य सामान्य-

---

उत न? यदि ज्ञात्वा, तर्हि आक्षेपस्य निरवकाशत्वेनार्थस्य प्रतिपादितत्वाद(त्वरसो)[वसरो] नास्ति। यद्यज्ञात्वा, तदापि वादाधिकाराभावादाक्षेपस्यानुद्भवः। तत्र कथं **नन्वि**त्याक्षेप्तुमुपक्रमते? इत्याक्षेपस्यानवतारः। यतो रजताध्यासे लक्षणमङ्गीकृत्य आत्मन्यहंकाराध्यासे लक्षणमाक्षिपतीति। तत्र लौकिकरजतादिभ्रमेषूपलक्षणं सम्भवतीत्याह—**बहिरर्थे इति**। स्वरूपलक्षणं च सम्भवतीत्याह—**तन्निमित्तश्चेति**। आत्मन्यहङ्काराद्यध्यासे उभयं न भवतीत्याह—**न त्विहेति**। आश्रयविषयभेदाभावात् विद्यात्मकत्वाच्च तत्र नाविद्यायाः

**न तदनवभासनाज्जीवेऽनवभासविपर्यासौ भवतः। न हि शुक्तेरग्रहणात् स्थाणावग्रहणं विपर्यासो वा। ननु न ब्रह्मणोऽन्यो जीवः 'अनेन जीवेनात्मना' इति श्रुतेः अतः अतदग्रहणमात्मन एव तत्। एवं तर्हि सुतरामविद्यायास्तत्रासम्भवः, तस्य विद्यात्मकत्वात् 'तस्य भासा सर्वमिदं विभाति' इति**

---

ग्रहस्याधिष्ठानत्वव्यापकस्यासम्भवेन(सर्व) [पर]त्रेत्ययोगात् स्वरूपलक्षणं च तत्र न सम्भवतीत्याह—**येनेति**। विशेषांशस्येति शेषः। हेत्वन्तरमाह—**निरंशस्येति**। अमध्यमपरिमाणत्वादिति शेषः। निरंशोऽप्याकाशादिः न कार्त्स्न्येन भातीत्यत्राह—**स्वयञ्ज्योतिष इति**। 'अत्रायं पुरुषस्स्वयञ्ज्योतिः' इत्यादिश्रुतेरिति शेषः। स्वयञ्ज्योतिषोऽपि संविद्वद्विशेषानवभासः किं न स्यादित्यत्राह—**निरंशस्येति**॥

आत्मन्यगृह्यमाणविशेषत्वमनुभवसिद्धमित्याशङ्कते—**ननु ब्रह्मेति**। तर्हि शुक्ताविव ब्रह्मण्येवानभासविपर्यासौ स्याताम्, न जीवे इत्याह—**न तदिति**। ['अनेन] जीवेनात्मना'[इति] सामानाधिकरण्यमेकद्रव्यनिष्ठं, कार्यकारणादिभावविहीनद्रव्ययोस्सामानाधिकरण्यत्वात्, सोऽयं देवदत्त इतिवत्। अतो द्रव्यैकत्वात् जीवगतावेवानवभासविपर्यासावित्याशङ्कते—**ननु न ब्रह्मण इति**। तर्हि पूर्वोक्तदोषादाश्रयविषयभेदाभावाच्चातिशयेनात्मन्यनवभासो न स्यादित्याह—**एवं तर्हीति**। न ह्यरण्यादावग्नेः सत्त्वं काष्ठविरोधि, किन्तु अभिव्यक्तम्, तथा चैतन्यस्यापीत्यत्राह—**तस्य भासेति**॥

---

सम्भव इत्याह—**सुतरामिति**। अरण्यादावग्नेः सत्ता न काष्ठविरोधिनी, किन्तु अभिव्यक्ता, एवमिहापि चैतन्यसत्ता नाज्ञानविरोधिनी, किन्तु अभिव्यक्तेति विशेषमाशङ्क्य, सोऽपि नास्तीत्याह—**तस्य भासेति**॥

चक्षुषो यथावच्छुक्त्यादिविषयप्रकाशनप्रतिबन्धककाचादिदोषवत् स्वरूपचैतन्यस्यापि यथावत्स्वरूपप्रकाशनप्रतिबन्धकाविद्यादोषो विद्यत इत्याह—**उच्यत इति**। अनादिरयं

**तच्चैतन्येनैव सर्वस्य भासमानत्वात्। उच्यते—विद्यत एव अत्राप्यग्रहणाविद्यात्मको दोषः प्रकाशस्याच्छादकः। कथं [अव] गम्यते? श्रुतेः तदर्थापत्तेश्च। श्रुतिस्तावत् 'अनृतेन हि प्रत्यूढाः' 'अनीशया शोचति मुह्यमानः' इत्येवमाद्या। तदर्थापत्तिरपि—विद्यैव सर्वत्र श्रुतिषु ब्रह्मविषया मोक्षाय निवेद्यते। तेनार्थादिदमवगम्यते—जीवस्य ब्रह्मस्वरूपतानवगमोऽविद्यात्मको बन्धो निसर्गत एवास्तीति॥**

**ननु न जीवो ब्रह्मणोऽन्यः इत्युक्तम्। बाढं, अत**

---

अहङ्काराद्यध्यासे तदधिष्ठानविषयं चैतन्यं विषयविशिष्टरूपेण जन्यम्, तस्य चाविशिष्टचित् कारणम्, तत्राविद्यादोषश्च तावद्विद्यते प्रागुक्तप्रत्यक्षानुमानार्थापत्तिभिरिति मत्वा आह—**उच्यत इति**। **अग्रहणेति** ग्रहणविरुद्धत्वमुक्तम्, तत् कथमित्यत्राह—**प्रकाशस्याच्छादक इति**॥

उक्तं मानं विस्मृत्य पृच्छति—**कथमवगम्यत इति**। तर्हि मानान्तरं चास्तीत्याह—**श्रुतेरिति**। सुषुप्ते मिथ्याज्ञानाभावात्, संस्काराग्रहणकर्मणां चाप्रतिबन्धकत्वात्, स्वरूपचैतन्येनैव ब्रह्मस्वरूपावभासे प्राप्ते, तदवभासप्रतिबन्धकमज्ञानमाह—**अनृतेनेति**। जीवस्य स्वतस्सिद्धेश्वरत्वस्याप्रतिपत्तेः तद्धेतुकशोकस्य च मूलमज्ञानमाह—**मुह्यमान इति**। **आदिपदात्** 'न तं विदाथ' इत्याद्या गृह्यते। अर्थापत्तिरपि ब्रह्मज्ञानात् बन्धनिवृत्तेः श्रुताया ब्रह्मणि प्रागनर्थहेत्वविद्यां विना अनुपपत्तिरित्याह—**तदर्थापत्तिरपीति**। **अनवगम इति**। अवगमविरुद्ध इत्यर्थः॥

जीवब्रह्मणोरात्यन्तिकाभेदाङ्गीकारात् तव नोक्तप्रमाणादविद्या सिध्यतीत्याशङ्कते—**नन्विति**। ऐक्ये सति किमाश्रयविषयभेदाभावात् सा न

---

प्रतिबन्धक इत्याह—**अग्रहणेति**। उष्णोदकच्छन्नतदनुगतवह्निप्रकाशो यथा स्वविषयसम्यग्ज्ञानच्छाद(कं)[के जले] प्रवि(लप्य)[लीय] पुनर्न व्यज्यते, तद्वत् प्राप्तिं व्यावर्तयति—

**एवाऽर्थाज्जीवे ब्रह्मस्वरूपप्रकाशाच्छादिका अविद्या कल्प्यते। अन्यथा परमार्थतस्तत्स्वरूपत्वे तदवबोधोऽपि यदि नित्यसिद्धः स्यात्, तदा तादात्म्योपदेशो व्यर्थः स्यात्। अतः अनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदमेकरसं ब्रह्मेति श्रुतिस्मृतिन्यायकोविदैरभ्युपगन्तव्यम्। तथा च स्मृतिः—'प्रकृतिं पुरुषं**

---

सिध्यति ? ऐक्ये स्वप्रकाशत्वसर्वज्ञत्वयोः भावेनाश्रयत्वासम्भवाद्वा ? प्रकाशमानस्याविद्याविषयत्वासम्भवाद्वा ? नाद्यः—तमोवदावरणात्मकत्वेनाज्ञानस्याश्रयादिभेदानपेक्षत्वात् इति मत्वा, द्वितीयं प्रत्याह—**बाढमिति**। ऐक्ये स्वयम्प्रकाशत्वे सर्वज्ञत्वे सत्येवानवभासानुपपत्त्या भावरूपाविद्याश्रयत्वं कल्प्यते। अन्यथा अनवभासमात्रे [भेदजाड्यकिञ्चिज्ज्ञत्वे]ग्रहणाभाव एव स्यादित्यर्थः। नन्वनवभासदर्शनमेव नास्तीत्यत्राह—**अन्यथेति**। नित्यसिद्ध एवेत्यत्राह—**यदीति**। न च अविद्याश्रयत्वे स्वप्रकाशताविरोधः। अदृष्टत्वात्। न च संविदि दृष्टः, तस्या एवात्मत्वेनाविद्याश्रयत्वसाधनात्। नाप्यसर्वज्ञं ब्रह्म स्यात्। चिन्मात्रसम्बन्धिनोऽप्यज्ञानस्य मुखमात्रसम्बन्धिदर्पणस्य प्रतिबिम्बपक्षपातित्ववत् प्रतिबिम्बोपाधित्वेन प्रतिबिम्बभूतजीवपक्षपातित्वात् इत्यूह्यम्॥

ऐक्यस्य वास्तवत्वे जीवब्रह्मणोर्जीवानां च विभागः किम्मूल इत्यत्राह—**अत इति**। अनादिजीवविभागहेतुत्वादविद्याऽपि अनादिरेवेत्याह—**अनादिसिद्धेति**। **अविद्यावच्छिन्नेति**। अविद्यातो विभक्तेत्यर्थः। अत्र फलम्—**अनन्तजीवनिर्भासेति**। अतो जीवानन्त्यावभासोऽभूद्भ्रम इत्यर्थः। तर्हि किमधिष्ठानमित्यत्राह—**ब्रह्मेति**। चैतन्यमित्यर्थः। श्रुतिसिद्धमैक्यं वास्तवं यतः अतः इति न्यायो दर्शितः। श्रुतिस्तु 'अन्यद्युष्माकमन्तरं बभूव' इत्याद्या।

"विभेदजनकेऽज्ञाने नाशामात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥"

इति स्मृतिः। ब्रह्मणोऽन्यदनादि वस्तु नास्त्येवेत्यत्राह—**तथा चेति**। इयं

---

**अविद्येति**। एकत्वोपदेशान्यथानुपपत्त्या अविद्या अङ्गीकर्तव्येत्याह—**अन्यथेति**।

चैव विद्ध्यनादी उभावपि' इति क्षेत्रक्षेत्रज्ञत्वनिमित्तामनादिसिद्धामविद्यां प्रकृतिशब्देनाह। 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः। अतो मायावच्छिन्नरूपत्वादनन्यदपि ब्रह्मरूपमात्मनो न वेत्ति। तथा चोक्तम्—'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥' इति॥

ननु प्रमाणान्तरविरोधे सति श्रुतिः तदर्थापत्तिर्वा नाविद्यां निवेदयितुमलम्। किं तत् प्रमाणं येन सह विरोधः? निरंशस्य स्वयंज्योतिषः स्वरूपानवभासानुपपत्तिः। ननु भोक्तुः कार्यकारणसंघातात् व्यावृत्तता स्वयंज्योतिषोऽपि न प्रकाशते। ननु न भोक्ता स्वयंज्योतिः, किं त्वहंप्रत्ययेनावभास्यते। यथा स्वयंप्रकाशमानता, अहङ्कारो न प्रत्ययस्तथा वक्ष्यते॥

कथं पुनः भोक्ता स्वयंज्योतिः कार्यकारणसंघातात्

---

स्मृतिः साङ्ख्यानां प्रकृतेरनादित्वं वक्तीत्यत्राह—**मायां त्विति**। जीवस्याविद्यावच्छिन्नत्वे मानसिद्धे प्रकृतोपयोगमाह—**अत इति**। अत्र **गौडाचार्य**वाक्यमाह—**तथा चोक्तमिति**॥

तृतीयमुत्थापयति—**ननु प्रमाणान्तरेति**। एतद्व्यनक्ति—**किं तदि**त्यादिना। अविद्यासम्बन्धस्य प्रतिभासमात्रशरीरत्वात् अलङ्कार एवानुपपत्तिः। प्रतिभासस्तु विद्यत एवेति परिहारे स्फुटेऽपि, सुहृद्भूत्वा परिहारमाह—**ननु भोक्तुरिति**। संविदभेदोऽपरोक्षप्रकाशमानता नाम, शरीराद्भेदश्च स्वप्रकाशात्मप्रकाशेनाभिन्नः तद्धर्मो वा अपरोक्षः, तथापि न प्रकाशते इत्यतो नानुपपत्तिरित्यर्थः। भोक्तुः स्वप्रकाशत्वानुपपत्तिरस्तीत्याशङ्क्यापवदति—**ननु न भोक्तेत्यादिना**। स्वरूपस्यैव भेदत्वात् स्वरूपे प्रकाशमाने भेदस्यापि प्रकाशमानत्वात् न प्रकाशते इत्यसिद्धमिति शङ्कते—**कथं पुनरिति**। मनुष्यो-

---

अनया स्मृत्या सांख्याभिमतप्रकृतेरनादित्वं कस्मान्नोच्यत इत्यत आह—**मायां त्विति**। आगमादनुमानाद्वा व्यतिरेकः सिध्यत्विंत्याशङ्क्य, परोक्षज्ञानं नापरोक्षावभासं बाधितुमल-

व्यावृत्तो न प्रकाशते? मनुष्योऽहमिति मिथ्यैव एकताभिमानात्। ननु गौणोऽयं न मिथ्या। यथा न गौणः तथा भाष्यकार एव वक्ष्यति ॥

ननु अहमिति यदि देहसमानाधिकरणः प्रत्ययः, न तर्हि तद्व्यतिरिक्त आत्मा सिध्यति। अन्यस्य तथाग्राहिणः प्रत्ययस्याभावात्, आगमानुमानयोरपि तद्विरोधे प्रमाणत्वायोगात्। मिथ्यात्वात् तस्य न विरोधः इति चेत्, कुतस्तर्हि मिथ्यात्वम्? आगमादनुमानाद्वा अन्यथाऽवगमादिति चेत्, मैवम्; अन्योऽन्याश्रयता तथा स्यात्—आगमानुमानयोः प्रवृत्तौ तन्मिथ्यात्वं तन्मिथ्यात्वे तयोः प्रवृत्तिरिति। तस्मात् देहादिव्यतिरिक्तविषय

---

ऽहमिति संसर्गाध्यासात् तस्य च भेदाग्रहव्याप्तत्वात् सिद्धमिति दूषयति—**मनुष्य इति**। भेदस्य स्वरूपत्वेन पदार्थे प्रत्यक्षे भेदस्यापि प्रत्यक्षत्वादभेदप्रत्ययो गौणो नाध्यास इति शङ्कते—**नन्विति**। एतत् समन्वयसूत्रे परिहरिष्यतीत्याह—**यथेति**।

उक्तरीत्या यद्यहम्प्रत्ययो देहात्माभेदविषयः तर्हि साधकाभावाद्देहव्यतिरिक्तात्मासिद्धिरिति शङ्कते—**नन्विति**। सिध्यत्यागमादनुमानाद्वेत्याशङ्क्य, परोक्षज्ञानस्यापरोक्षज्ञानविरोधात् न बोधकतेत्याह—**अन्यस्येति**। तर्हि सम्भूय ज्ञानद्वयं बोधकमस्त्विति; नेत्याह—**आगमानुमानयोरिति**। न ह्यन्धाः सहस्रं सम्भूय सूर्यं पश्यन्तीत्यर्थः। सत्यमिथ्यात्वेन विषयभेदान्न विरोध इति शङ्कते—**मिथ्यात्वादिति**। बाधाभावान्न मिथ्येत्याह—**कुत इति**। बाधमाशङ्कते—**आगमादिति**। गौणवादी दूषयति—**मैवमिति**। न चैवं द्विचन्द्रावभासस्यापि मिथ्यात्वासिद्धिर्दोषः, इष्टत्वात्। तत्र विचारानपेक्षं आगमादिना बलाबलचिन्तां विना झटिति बाधेन प्रवृत्त्युच्छेदाख्येन अन्यो-

---

न्याश्रयता तथा स्यादित्याह—**अन्यस्येति**। परोक्षमपि ज्ञानद्वयं सम्भूय प्रत्यक्षावभासं बाधितुं शक्नोतीति; नेत्याह—**आगमानुमानयोरपीति** ॥

एवायमहङ्कारः इत्यात्मवादिभिरभ्युपेयम्। अन्यथा आत्मसिद्धिरप्रामाणिकी स्यात्। अतो गौणो मनुष्यत्वाभिमानः। उच्यते—यद्यपि देहादिव्यतिरिक्तभोक्तृविषय एवायमहङ्कारः, तथापि तथा अनध्यवसायात् तद्धर्मानात्मन्यध्यस्यति। दृश्यते च स्वरूपेणावभासमानेऽपि वस्त्वन्तरभेदानध्यवसायात् तत्सम्भेदेनावभासः। यथा—एकस्मिन्नप्यकारे ह्रस्वादिसम्भेदः।

---

न्याश्रयप्रसक्त्यभावाच्चेति मत्वोपसंहरति—**तस्मादिति**। अहम्प्रत्ययस्य व्यतिरिक्तात्मविषयत्वे व्यतिरिक्तोऽहमिति प्रयोगो व्यतिरेके विवादाभावश्च स्यादित्यत्राह—**अन्यथेति**॥

किं वस्तुतो व्यतिरिक्तात्मविषयोऽहङ्कारः प्रतीतितो वेति विकल्पं मत्वा सिद्धान्त्याह—**उच्यत इति**। तत्राद्यमनूद्य दूषयति—**यद्यपीति**। प्रतिभासतो भेदबुद्धेरध्यासविरोधितया सामानाधिकरण्यस्य गौणत्वापादकाधिष्ठानाध्यस्तविवेकाभावादध्यास एवायमित्यर्थः। सामान्येन गृहीतस्य विशेषाग्रहादध्यासो भवति, आत्मा त्वहमिति विशेषरूपेण गृहीतः, कथं तत्राध्यास इत्यत्राह—**दृश्यते चेति**। केति चेत्, युगपदकारमुच्चारयत्सु बहुषु पुत्रेषु, सर्वदा प्रत्यभिज्ञयैकत्वेनावगते ह्यकाराख्यविशेषरूपेण च वस्त्वन्तरादर्थतो भिन्नत्वेन च गृहीते वस्त्वन्तरात् प्रतिभासतो भेदाग्रहत् ह्रस्वत्वाद्यध्यासवत्यकारे इत्याह—**यथेति**। यदि प्रतिभासतो भेदग्रहाभावादगौणत्वं, तर्हि जिज्ञा-

---

नन्वहम्प्रत्ययस्य व्यतिरिक्तविषयत्वे व्यतिरिक्तोऽहं [इति प्रयोगः] पुनरुक्तः स्यात्, अतः व्यतिरिक्तविषयत्वं नास्तीत्याशङ्कामपनुदति—**अन्यथेति**। अथवा, व्यतिरिक्तात्मविषयसद्भावे विप्रतिपत्तिदर्शनादहम्प्रत्ययस्य व्यतिरिक्तविषयत्वं नास्तीत्याशङ्कामपनुदति—**अन्यथेति**।

**एकस्मिन्निति**। युगपदकारमुच्चरत्सु बहुषु पुरुषेषु सर्वत्र सर्वदा प्रत्यभिज्ञया एकतया अवगत इत्यर्थः। युक्तिज्ञानस्य प्रमाणत्वाभावात्, प्रमाणत्वेऽपि प्रत्यक्षत्वाभावाच्च

अथ पुनरेकान्ततो भिन्न एव देहादेरहङ्कर्ता अवभासेत रसादिव गन्धः, ततः तत्सद्भावे न विप्रतिपत्तिरिति तत्सिद्धये जिज्ञासा नावकल्पेत। जिज्ञासोत्तरकालं तर्हि गौण एव युक्तः। कथम्? जिज्ञासा नाम युक्त्यनुसन्धानम्। न हि युक्तिः पृथक् ज्ञानान्तरजननी, किन्तु सिद्धस्यैवाहंप्रत्ययस्य विषयविवेचिनी। तस्मात् विविक्तविषयत्वात् व्यतिरिक्तात्मानुभवपर्यन्त एवाहंकारो जिज्ञासोत्तरकालं युक्तः। न युक्तः, अकार इव

---

सोत्तरकालं तद्भावाद्गौणत्वं स्यादित्याशङ्कते—**जिज्ञासेति**। ज्ञानेच्छामात्रेण कथं पश्चात्तद्भाव इत्यत्राह—**जिज्ञासा नामेति**। तर्हि युक्तिः पृथङ्निश्चयजननीति; नेत्याह—**न हीति**। विवेकसम्भावनाबुद्धिहेतुरित्यर्थः। ततश्च पश्चात्तत्सहितोऽहम्प्रत्ययः प्रतिभासतोऽपि भेदप्रमितिं जनयतीत्याह—**तस्मादिति**। अतो युक्त्यनुसन्धानोत्तरकालं गौणं सामानाधिकरण्यम्, तत्सामान्यात् प्रागपि तद्गौणमेवेत्यर्थः। देहः स्वव्यतिरिक्तद्रष्टृकः इत्यादियुक्त्याऽपि अहम्प्रत्ययस्य व्यतिरिक्तात्मविषयत्वस्यापादयितुमशक्यत्वात् सदा स्वरूपमात्रविषयः अहम्प्रत्ययः, युक्तिसिद्धस्तु भेदः, अतो युक्त्यनुसन्धाने पूर्ववदध्यास एवेति दूषयति—**न युक्त इति**। यथा अकारे ह्रस्वादिभ्यो भेदे तेषु व्यावृत्तेषु अनुवृत्तत्वात् इत्यादियुक्तिसिद्धेऽपि युक्त्यननुसन्धाने पूर्ववत् ह्रस्वत्वाद्यध्यासः तद्वदित्यर्थः॥

---

अहम्प्रत्ययस्य च सदा आत्ममात्रविषयत्वात् जिज्ञासोत्तरकालीनस्सम्भेदावभासः कथं गौण इति शङ्कते—**कथमिति**। तर्हि किमहम्प्रत्ययसहिता युक्तिः पृथक् ज्ञानान्तरं जनयतीति? नेत्याह—**किन्तु सिद्धस्यैवेति**। अकारविषयश्रोत्रजज्ञानस्य सदा केवलाकारविषयत्वादेव ह्रस्वाद्यैक्यभ्रमविरोधिभेदविषयत्वाभावादनुमानसिद्धभेदस्य परोक्षत्वादेव ह्रस्वाद्यैक्यभ्रमः, तद्वदित्याह—**अकार इवेति**॥

अहम्प्रत्ययस्य देहविषयत्वे देहस्यात्मत्वमापतेत्, व्यतिरिक्तात्मविषयत्वे अहं मनुष्य इति सामानाधिकरण्यव्यवहारस्य गौणत्वमापततीत्युभयथा दोषो भवेदित्याशङ्क्य, अहं

**ह्रस्वत्वाभिमानः। ननु तत्रापि कथम्? अनुभव एव। एवमहङ्कारेऽपि समानश्चर्चः। ननु अनुभवः तर्कबलाद्यथावभासिन्यप्यकारे सम्भवति, ह्रस्वादेः पृथक्सतस्तथानवगमात्। तन्न, एकस्य पृथक्त्वेपि अर्थादितरस्यापि पृथक्त्वात्॥**

**ननु महदेतदिन्द्रजालं यत् तर्कानुगृहीतात् प्रमाणात् यथायथमसाधारणरूपयोरेवावभासमानयोरेकत्वावगमो न गौण इति। बाढं, इन्द्रजालमेवैतत्। अविद्याकृतत्वात्। तथा हि—अहंप्रत्ययस्य स्वविषयप्रतिष्ठितस्यैव सतः तदेकप्रतिष्ठितता-**

---

तत्रापि युक्तिसहिताकारप्रत्यक्षेण भेदसिद्धेर्नाध्यास इत्याशङ्कते—**नन्विति**। अनुभवविरोध इति दूषयति—**अनुभव एवेति**। नन्वहङ्कारे स नास्तीत्यत्राह — **एवमिति**। ह्रस्वादिभ्योऽकारस्य भेदग्रहेऽपि अकारात्तेषां भेदाग्रहादनुभवो घटते इति शङ्कते — **नन्वनुभव इति**। प्रतियोगित्वेनेष्टाद्धर्मिणो भेदे गृहीते, धर्मित्वेनेष्टात् प्रतियोगिनोऽपि भेदो भात्येव, स्वस्मात् स्वस्य भेदग्रहानुपपत्तेरिति दूषयति—**तन्नेति**॥

युक्त्यनुगृहीताहम्प्रत्ययेन प्रतिभासतोऽपि भेदग्रहादहम्प्रत्ययविरुद्धमध्यासत्वं अभेदप्रत्ययस्येत्याक्षिपति—**नन्विति**। अस्त्येव विरोधः, स च अलङ्कारो (ऽपि)[हि]अविद्याकार्यस्येति समाधत्ते—**बाढमिति**॥

किंच अहम्प्रत्ययस्याविद्यया स्वविषयैकनिष्ठताप्रतिबन्धान्नास्ति भेदबोधकतेत्याह—**तथा हीति**। हिश्चार्थे। तत्र मानम्—**देहादीति**।

---

प्रत्ययस्यार्थतो देहविषयत्वाभावाद्देहस्य नात्मत्वम्, व्यतिरिक्तात्मविषयत्वाभावाच्चाविद्यया देहविषयत्वापादनं (च) न विरुद्धमित्याह—**तथा हीत्यादिना**। युक्त्या विषयविवेचनात् प्रागहंप्रत्ययस्य देहप्रतिष्ठत्वमेव नात्मप्रतिष्ठत्वं इत्याशङ्क्य, आत्मप्रतिष्ठत्वमहंप्रत्ययः कदाचिदपि न परित्यजतीत्याह—**स्वविषयप्रतिष्ठस्येति**। तर्हि उभयप्रतिष्ठत्वं स्यादिति, नेत्याह—**एवेति**। **तदेकप्रतिष्ठताप्रतिबन्धकृद्देहादिप्रतिष्ठत्वमपि दृष्टमिति**। तर्हि

प्रतिबन्धकृदनाद्यविद्याकृतं देहादिप्रतिष्ठितत्वमपि दृष्टम्। अतो देहादिविषयत्वाविरोधि स्वविषयप्रतिष्ठत्वमहंप्रत्ययस्य, अतो युक्त्या विषयविवेचनेऽपि स्वविषयोपदर्शनेन तत्प्रतिष्ठत्वमात्रं कृतं नाधिकमादर्शितम्। स्वविषयप्रतिष्ठत्वं च देहादिषु अहं-ममाभिमानेन न विरुध्यते इत्युक्तम्। अतः न्यायतो विषय-विवेचनादूर्ध्वमपि न प्रागवस्थातो विशिष्यते अहंप्रत्ययः। तेन न कदाचिदपि मनुष्योऽहमिति प्रत्ययो गौणः। तदेवं स्वयं-ज्योतिष एव सतो जीवस्य कार्यकरणसङ्घातव्यतिरिक्ततायाः तथा अनवभासदर्शनात् मनुष्योऽहमिति चाध्यासोपलब्धेः

---

प्रतिभासतोऽहम्प्रत्ययस्य भेदग्राहकत्वाभावे फलमाह—**अत इति**। केवला-हम्प्रत्ययस्य प्रतिभासतो भेदग्राहकत्वाभावेऽपि युक्तिसहितस्य तदस्तीत्युक्तम्। दृष्टं च सहकारिवशात् कार्यातिशयकरत्वं हेतूनामित्यत्राह—**अतो युक्त्येति**। केवलाहम्प्रत्ययस्य भेदबोधकत्वाभावादेव युक्तिसहितस्यापि तन्नास्ति। प्रत्यक्ष-ज्ञानस्य ज्ञानान्तरसन्निधानादधिकबोधकत्वादर्शनादित्यर्थः। तथापि देहाद्भिन्न-स्वविषयप्रतिष्ठ[त्व]स्य विरोधः स्यादित्यत्राह—**स्वविषयेति**। कदाचिद्युक्ति-सिद्धेऽपि भेदे पुनर्युक्त्यननुसन्धानात् अनुसन्धानेऽपि परोक्षत्वादपरोक्षाध्यासः पूर्ववदेव स्यादिति पूर्वोक्तं निगमयति—**अतो न्यायत इति**। तत्र फलमाह—**तेनेति**॥

न च अपरोक्षैक्याध्यासस्य बाधकाभावाद्देहातिरिक्तात्मासिद्धिः, युक्ति-सहितागमादिना द्विचन्द्रबाधया एकत्वसिद्धेरिव तत्सिद्धेरिति मत्वा दृष्टान्तानु-वादेन दार्ष्टान्तिकं कथयति—**तदेवमित्यादिना**। दृष्टान्तोक्तं हेतुमनुवदति—

---

लोकायतिकपक्ष एव स्यादिति, नेत्याह—**अनाद्यविद्याकृतमिति**। यस्मादहम्प्रत्ययस्य सर्वदा आत्ममात्रविषयत्वमेव, न व्यतिरिक्तात्मविषयत्वम्, तस्मा(दु)[दित्यु] पसंहरति—**अत इति**॥

**ब्रह्मात्मैकत्वस्यापि तत्स्वरूपस्यानवभासनं पूर्वकालकोटि-रहितप्रकाशाच्छादितमोनिमित्तं श्रुतितदर्थापत्तिसमर्पितं तन्निमि-त्ताहंकाराध्यासश्च सम्भाव्यते। अनादित्वाच्च पूर्वदृष्टत्वं स्मृति-रूपत्वं च। पृथग्भोक्तृविषयानुभवफलाभावात् भोक्तृचैतन्यसंवलि-**

---

**मनुष्योऽहमिति।** दार्ष्टान्तिकं कथयति—**ब्रह्मात्मेति। प्रकाशाच्छादि-तमोनिमित्त**मित्यर्थोपसंहारः। **श्रुतितदर्थापत्तिसमर्पित**मिति प्रमाणोप-संहारः। अनवभाससम्भवे फलमाह—**तन्निमि(त्तश्चे)[त्ते]ति।** स्वयम्प्र-काशस्याप्यज्ञानेन अगृह्यमाणविशेषत्वात् आत्मनोऽधिष्ठानत्वयोग्यत्वकथनेन **पर-त्रेति** लक्षणांशो दर्शितः। कारणत्रितयेऽप्यद्वितीयात्मावभासिचैतन्य-प्रमाणतद्गताविद्याकारणदोषौ दर्शितौ। इदानीं पूर्वदृष्टत्वाभावेन संस्का-राभावात् न कारणत्रितयजत्वं सिध्यतीत्यत्राह—**अनादित्वाच्चेति।** अहङ्का-रादेः प्रतिभासस्य प्रवाहरूपेणानादित्वात् सदा पूर्वदृष्टत्वेन संस्कारोऽस्ति। जन्यत्वञ्चाध्याससाधकचैतन्यस्य विषयविशिष्टरूपेणास्ति। अतः कारणत्रितय-जत्वं संभाव्यत इत्यर्थः।

तथाप्यधिष्ठानारोप्यविषयज्ञानैक्यं लक्षणान्तर्गतं कथं सिध्यतीत्यत्राह—**पृथगिति।** आत्मस्वरूपसाधकानुभवफलात् पृथग्भोक्तुरन्तःकरणस्यानुभवफला-भावादित्यर्थः। तदनुभवस्य अपृथगप्यभावात् कथं ज्ञानैक्यमित्यत्राह—**भोक्तृचैतन्येति।** भोक्तुरहङ्कारस्याधिष्ठानचैतन्येनैक्याध्यासेनैकतया एकानुभव-फलत्वादित्यर्थः। तथापि सत्यमिथ्यावस्त्वभेदाभावात् तदवभासत्वं लक्षणं नास्ती-

---

**प्रकाशाच्छादितमोनिमित्त**मिति अर्थोपसंहारः। **श्रुतितदर्थापत्तिसमर्पित**मिति प्रमाणोपसंहारः। अहं मनुष्य इति पूर्वपूर्वभ्रमसंस्कारादुत्तरोत्तरभ्रमो जायते, अतः सदा पूर्वदृष्टत्वं ततश्च स्मृतिरूपत्वमपि सिध्यतीत्याह—**अनादित्वाच्चेति।** भोक्तुरात्मनः स्वरूपसाधकानुभवरूपफलात् पृथग्भिन्नफलमन्तःकरणस्य नास्तीत्याह—**पृथग्भोक्तृविषयेति।** तर्हि सुषुप्तता अहंकारस्य प्राप्तेत्याशङ्क्य, आत्मचैतन्ये-नैक्याध्यासलक्षणसंवलनादात्मानुभव एवाहंकारस्याप्यनुभव इत्याह—**भोक्तृचैतन्येति।**

**तैकानुभवफलत्वाच्च परत्र परावभासस्यान्योन्यसम्भेदस्य विद्यमानत्वादध्यासलक्षणव्याप्तिरिहाप्युपपद्यते । कोऽयमध्यासो नामेति किंवृत्तस्य प्रश्ने आक्षेपे च समानवर्तिनो विशेषानुपलब्धेः पृष्टमनेनेति मत्वा अध्यासस्वरूपे अभिहिते पुनराक्षिप्तं मयेत्यभिप्रायं विवृणोति—कथं पुनः प्रत्यगात्मन्यविषये अध्यासो**

---

त्यत्राह—**परत्रेति**। अहमिति प्रतीत्यनुपपत्त्येति शेषः। तस्मादात्मन्यनात्माध्यासेऽपि स्वरूपतटस्थलक्षणे स्त इत्युपसंहरति—**इत्यध्यासेति** ॥

**कोऽयमि**त्यत्र कृतमाक्षेपं अनिरस्य आक्षेपान्तरकरणमयुक्तमित्याशङ्क्य, उत्तरभाष्यतात्पर्यमाह—**कोऽयमिति**। किमिति कोऽयमित्यस्याभिप्रायं विवृणोत्युत्तरेण भाष्येण? तत्र पृष्टमेव तस्य प्रत्युक्तं, उत्तरेण तु अपूर्वाक्षेप इति किं न स्यात् इत्यत्राह—**किंवृत्तस्येति**। विशेषहेत्वनुपलब्धेः युगपदुभयमपि कृतं ज्ञातं चेत् तदुभयं युगपदेव परिहरणीयम्, अशक्त्या क्रमाश्रयणेऽपि स्वरूपघातकत्वादाक्षेप एवादौ परीहरणीयः, यदुक्तमित्यनुवादरूपेणाक्षेपश्चावतार्यः, अज्ञातं चेदप्रतिपत्तिर्निग्रहः; इत्यत्राह—**पृष्टमिति**। ज्ञातमेव, तथापि प्रथममाक्षेपस्य समाधाने अनुवादरूपेणाक्षेपावतारे च कृते, स्वरूपेऽनभिहिते आक्षेपोऽयं अनवसरदुस्थ इति परिहारः स्यात्। तथा च पूर्वपक्षिणः कुण्ठितबुद्धित्वाद्वादकथानुष्ठानं न स्यात्। अतः तद्गतमज्ञानं स्वात्मन्यारोप्य पृष्टमेवानेनेति मत्वैव प्रश्नस्योत्तरे स्वरूपेऽभिहिते, पश्चात् आक्षिप्तमपि मयेत्यभिप्रायं

---

अत एव स्वरूपलक्षणमपि सिध्यतीत्याह—**परत्रेति**। अतः स्वरूपलक्षणव्याप्तिरिहात्मन्यहङ्काराद्यध्यासेऽपि विद्यत इत्युपसंहरति—**अध्यासलक्षणेति** ॥

**आह कोऽयमि**त्यत्राक्षेपे च कृते यदुक्तमित्यनूद्य समाधानं कर्तव्यमित्याशङ्क्य, तथा कृते आत्मनोऽप्राप्तकारित्वं ज्ञात्वा पूर्ववादिनो मतिरवकुण्ठिता स्यात्। तदा वादकथानुष्ठानं न सिध्यति, तत्सिद्ध्यर्थं यथा पूर्वं वादिनोऽप्राप्तकारित्वमनुक्त्वा तदज्ञानं स्वात्मन्यारोप्य प्रश्नस्य परिहार उक्तः, तथैवात्रापि आक्षेपावतारः क्रियत इत्याह—**पुनः आक्षिप्तं मयेति**। साधितार्थे अज्ञानं वा तदपलापो वा तस्मिन्ननादरो वा यदि

**विषयतद्धर्माणामिति । बाढमेवंलक्षणोऽध्यासः । स चेह न सम्भवति । कथम् ? यतः सर्वो हि पुरोऽवस्थिते**

---

विवृणोति(वाऽ)[अतो नानुवादरूपेणा]क्षेपोऽवतार्य इत्यर्थः । न च आदावेव कृतत्वात् कृतकरणत्वमाक्षेपसमाधानयोः, प्रकारभेदात् इत्यूह्यम् ॥

साधितार्थे यद्यज्ञानं वा अपलापो वा अनादरो वा स्यात् तदा वादार्हो न स्यात्, अतः पूर्वादी आत्मनः तान् परिहर्तुं अपेक्षितं पूरयन् व्याचष्टे—**बाढमिति ।** आत्मनि विषयाणां तद्धर्माणां अनात्मन्यात्मनः तद्धर्माणां चाध्यासो न सम्भवति, आत्मनः प्रत्यक्त्वेन व्यापित्वेन अविषयत्वेन च अधिष्ठानत्वारोप्यत्वयोः प्रयोजकाभावादित्यर्थः । अविषयादिरूप इत्येतावता कथं प्रयोजकाभाव इत्याशङ्कते—**कथमिति ।** विषयत्वादेः तत्प्रयोजकत्वादित्याह—**यत इति । पुरःस्थिते**—इन्द्रियसंप्रयुक्ततया बहिः स्थिते, **अव**च्छिद्य स्थिते **विषये** आरोप्येण सहैकज्ञानविषयत्वार्हे । आरोप्यत्वेऽप्येतत्सर्वं प्रयोजकमित्याह—**विषयान्तरमिति ॥**

तर्ह्यात्मन्यपि विषयत्वादि कल्प्यताम्, अध्यासस्यावश्यकत्वादित्याशङ्क्य,

---

भवेत् तदा वादार्हो न भवति, अतः पूर्ववादी आत्मनस्तानि परिहरन् प्रत्यवतिष्ठते इत्याह—**बाढमिति ।** लक्ष्यमिह न सम्भवति, अत एव लक्षणं चेह न सम्भवतीति चकारार्थः । अध्यासस्यात्मनि सम्भवमाक्षिप्य समाधानं पूर्वमेव कृतम्, अत इदानीमाक्षेपस्यावसरो नास्तीत्याह—**कथमिति ।** लक्षणाक्षेपाल्लक्ष्यमप्यर्थादाक्षिप्तं पूर्वत्र, इदानीं लक्ष्याक्षेपाल्लक्षणमप्यर्थादाक्षिप्यत इति विभागमभिप्रेत्य लोकसिद्धनियम(व्या)[प्रा]प्तिमाह—**यत इति ।** आत्मन्यधिष्ठानत्वयोग्यत्वाभावादध्यासो न सम्भवतीति वदितुं लोके अधिष्ठान(त्वेन नियम)[त्व]प्रयोजकाकारमाह—**सर्वो हीति ॥**

**पुरःस्थिते**—इन्द्रियसम्प्रयुक्ततया स्थिते, **अवस्थिते**—अवच्छिद्य स्थिते—परिच्छिन्नत्वेन स्थिते, **विषये**—ज्ञानकर्मत्वेन स्थितजडे—अध्यस्यमानेन सहैकज्ञानग्राह्यत्वयोग्ये इत्यर्थः । तर्ह्यात्मनोऽपि लोकसिद्धाधिष्ठानत्वयोग्याकारः कल्प्यतामित्याशङ्क्य,

**विषये विषयान्तरमध्यस्यति। युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। नह्यविषये अध्यासो दृष्टपूर्वः सम्भवी वा। उच्यते—न तावदयमेकान्तेनाविषयः; अस्मत्प्रत्ययविषयत्वात्॥**

**ननु विषयिणश्चिदात्मनः कथं विषयभावः? पराग्भावेन**

---

किं स्वीकृत्यैवाविषयत्वादिकम्? त्यक्त्वा वा? नाद्य इत्याह—**युष्मदिति।** विषयत्वं पुरःस्थत्वं परिच्छिन्नत्वं च न कल्पयितुं शक्यम्, युष्मत्प्रत्ययापेतत्वात् प्रत्यक्त्वात् व्यापित्वाच्चेत्यर्थः। न द्वितीय इत्याह—**अविषयत्वं ब्रवीषीति।** अविषयत्वादेः त्वयोच्यमानत्वात् त्यक्तविषयत्वादिकल्पने अपसिद्धान्तः स्यादित्यर्थः। व्यतिरेकाभावान्न प्रयोजकं विषयत्वादीत्यत्राह—**न हीति।** अदृष्टत्वेऽपि सम्भावितत्वान्न व्यतिरेकनिश्चय इत्यत्राह—**सम्भवी वेति।** विषयत्वादिहीनस्य नृशृङ्गादेः सर्वस्य व्यवहारानर्हत्वाद्व्यतिरेकनिश्चयः स्यादित्यर्थः।

एकस्मिन् ज्ञाने सम्भिन्नतया स्फुरणयोग्यत्वमेवारोप्याधिष्ठानयोः प्रयोजकम्, तस्मिन् सति विषयत्वाद्यभावात् अध्यासाभावस्यादृष्टत्वेन व्यतिरेकाभावात्, तच्चास्त्यात्म(नीति)[नि]प्रतीत्यन्यथानुपपत्त्या इति मत्वा दूषयति—**न तावदिति।** अस्मत्प्रत्ययशब्देनात्मविषयं ज्ञानमुक्तमिति भ्रान्त्या शङ्कते—**नन्विति।** विषयिणो विषयत्वं न सम्भवति, एकस्यां प्रत्यक्षदर्शन-

---

तदशक्यमित्याह—**युष्मत्प्रत्ययेति।** विषयत्वं कल्पयितुं न शक्यते, युष्मत्प्रत्ययापेतत्वात्। इन्द्रियग्राह्यत्वेन पुरःस्थितत्वमपि कल्पयितुं न शक्यते, प्रत्यक्त्वात्। परिच्छिन्नत्वमपि कल्पयितुं न शक्यते आत्मत्वात्—व्यापित्वादित्यर्थः। **अविषयत्वं ब्रवीषि च।** अविषयत्वस्य त्वया अभ्युपगतत्वाद्विषयत्वकल्पनं सिद्धान्तविरुद्धञ्चेत्यर्थः। **अतस्मिन् तद्बुद्धिरि**त्यनेन लक्षणवाक्येन वस्तुत आरोप्यैक्यहीनस्याधिष्ठानस्य आरोप्यबुद्ध्यालम्बनत्वमुच्यते, अतो लक्षणवाक्यविरोधाच्च अविषये अध्यासो न सम्भवतीत्याह—**सम्भवी वेति॥**

**ननु विषयिण इति।** अयमर्थः—विषयिणः विषयत्वं न सम्भवति, स्वात्मनि

**इदन्तासमुल्लेख्यो हि विषयो नाम भवति। तद्वैपरीत्येन प्रत्यग्रूपेणानिदंप्रकाशो विषयी। तत् कथमेकस्य निरंशस्य विरुद्धांशद्वयसंनिवेशः? अत्रोच्यते—अस्मत्प्रत्ययत्वाभिमतोऽ-**

---

क्रियायां गुणभूतकर्तृस्थाने प्रधानत्वेन तद्विरुद्धकर्मकारकस्थाने च युगपदेकस्यैवावस्थानासम्भवादित्यर्थः। चित्त्वादात्मत्वाच्च अचित्त्वानात्मत्वप्रयुक्तं विषयत्वं न सम्भवतीत्याह—**चिदात्मन इति**। अहङ्कारतद्वृत्तिसाक्षितया प्रत्यक्त्वेन तद्वृत्तिकर्मतया पराक्त्वेन, इन्द्रियाग्राह्यतया अनिदन्त्वेन इन्द्रियग्राह्यतया इदन्त्वेन, चित्प्रकाशत्वेन प्रकाश्यत्वेन च, युगपदवस्थानाख्यरूपद्वयापत्तिश्चात्मनः कर्मत्वे स्यादित्याह—**पराग्भावेनेति**। देहस्यैवोत्थाप्योत्थापकत्वविरुद्धधर्मद्वयं दृष्टमित्याशङ्क्य, तत्रापि ततोऽन्यस्य प्राणस्योत्थापकत्वमिति मत्वा आह—**एकस्येति**। कण्डूयनादिष्वेकस्य कर्तृकर्मत्वे विरुद्धे दृष्टे, इत्यत्राह—**निरंशस्येति**॥

सर्वतो विप्रसृतस्य सवितृप्रकाशस्याकाशे विशेषाभिव्यक्तिनिमित्तदर्पणादिवदात्मचैतन्यस्य सविकल्पकतया अभिव्यक्तिनिमित्तं भास्वरद्रव्यं आत्मन्यभेदेनाध्यस्तं अन्तःकरण**मस्मत्प्रत्यय**शब्देन विवक्षितं, नात्मकर्मकं ज्ञानमित्याह—**अस्मत्प्रत्ययेति**। तत्राभिव्यक्तत्वादहङ्कारादिसम्भिन्नतया अवभा-

---

क्रियाविरोधात्। चित्त्वाज्जडस्वभावत्वप्रयुक्तकर्मत्वं न सम्भवति। आत्मत्वादनात्मत्वप्रयुक्तविषयत्वं न सम्भवतीति। **पराग्भावेनेदन्तासमुल्लेख्य इति**। अहङ्कारतद्वृत्तिसाक्षितया प्रत्यक्त्वेन तद्वृ[त्तिमत्त्वेन] पराक्त्वेन, इन्द्रियानवगाह्यतया अनिदन्त्वेन इन्द्रियसम्प्रयुक्ततया इदंत्वेन, चित्प्रकाशत्वेन चिता प्रतिभास्यत्वेन च, युगपदवस्थानलक्षणविरुद्धरूपद्वयापत्तिरात्मनः कर्मत्वे प्रसज्येतेत्यर्थः। उत्थाप्योत्थापकत्वलक्षणविरुद्धरूपद्वयमेकस्य देहस्य दृष्टमित्याशङ्क्य, तत्र प्राणस्योत्थापकत्वं न तु देहमात्रस्येति धर्मिभेदाद्युज्यते, इह तु एकस्य न सम्भवतीत्याह—**एकस्येति**। कण्डूयनादिष्वेकस्यैव कर्तृत्वकर्मत्वे दृष्टे इत्याशङ्क्य, अंशभेदाभावात् तद्वदपि न सम्भवतीत्याह—**निरंशस्येति**॥

आत्मकर्मकबुद्धिवृत्त्यभिप्रायेणास्मत्प्रत्ययशब्दो न प्रयुक्तः, किन्तु [अन्य]कर्मकवृत्त्यवस्थापन्नात्मस्वरूपाभिव्यञ्जकाहङ्काराभिप्रायेणेत्याह—**अस्मत्प्रत्ययत्वेति**। **स चेद्-**

हंकारः। स चेदमनिदंरूपवस्तुगर्भः सर्वलोकसाक्षिकः। तमवहितचेतस्तया निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् स्वानुभवमप्रच्छादयन्तो वदन्तु भवन्तः परीक्षकाः किमुक्तलक्षणो न वा? इति ॥

---

साहंता अस्त्यात्मनः। अतस्तयोरितरेतराध्यासः सम्भवतीत्यर्थः। इदं रूप्यमितिवदध्यस्तत्वे अहमित्यत्रापि द्वैरूप्यावभासो वक्तव्य इत्यत्राह—**स चेदमिति**। जडेऽहङ्कारेऽध्यस्तेन तस्यानात्मत्वं तिरस्कुर्वता चैतन्येनाहङ्कारो गर्भितः। चैतन्यमपि स्वस्मिन्नध्यस्तेन स्वस्यात्मत्वं स्वप्रकाशत्वं च तिरस्कुर्वता अहङ्कारेण गर्भितमित्यर्थः। यद्वा, ग्राह्यत्वादहङ्कार इदंरूपम्, अग्राह्यत्वात् चैतन्यमनिदंरूपम्, ते वस्तुनी गर्भांशौ यस्य समूहस्याहमिति प्रतीयमानस्य, स इदमनिदंरूपवस्तुगर्भः इत्यर्थः। दुःखिप्रेमास्पदत्वेन, परिणामितदागमापायद्रष्ट्रात्मना, अहङ्कारविषयादिषु अनुस्यूतचिद्रूपेण अहमिति व्यावृत्तात्मना च तद्द्वैरूप्यं साक्षिप्रत्यक्षमित्याह—**सर्वलोकेति** ॥

नैवमनुभवोऽस्त्यस्माकम्, अतो न द्वैरूप्यावभासोऽस्तीत्याशङ्क्य, तर्हि जानामीति क्रियाकर्तृत्वेन अनुभवामीत्यनुभवाश्रयत्वेन च द्वैरूप्यमवहितचेतस्तया वीक्षणीयमित्याह—**अवहितचेतस्तयेति**। अत्र, 'भू सत्तायां' 'ज्ञा अवबोधने' इति धातुभेद एव नार्थभेदोऽस्तीत्याशङ्क्य, सकर्मकक्रिया जानात्यर्थः,

---

**मनिदंरूपवस्तुगर्भ इति**। जडरूपाहङ्कारेऽध्यस्तत्वेन तस्यानात्मत्वं तिरस्कुर्वता चैतन्येनाहङ्कारो गर्भितः। चैतन्ये अध्यस्तत्वेन चैतन्यस्य स्वयम्प्रकाशत्वमात्मत्वं च तिरस्कुर्वता अहङ्कारेण चैतन्यञ्च गर्भितमित्यर्थः। **सर्वलोकसाक्षिक इति**। सर्वलोकस्य साक्ष्येव साक्षि यस्य स तथोक्तः। साक्षिप्रत्यक्षसिद्धोऽयमित्यर्थः ॥

अयमर्थः सर्वलोकस्यानुभवसिद्धो न भवतीत्याशङ्क्य, अहं जानामीति क्रियाकर्तृरूपेण, अनुभवामीत्यनुभवाश्रयरूपेण च द्वैरूप्यं दृश्यत इत्यवहितचेतस्तया वीक्षणं कर्तव्यमित्याह—**अवहितचेतस्तयेति**। अत्र धातुभेद एव नार्थभेद इत्याशङ्क्य, जानात्यर्थः सकर्मकक्रिया नानुभव इति निपुणं वीक्षणं कर्तव्यमित्याह—**निपुणमिति**। उभयधात्वर्थयोस्सकर्म-

**ननु किमत्र वदितव्यम्, असम्भिन्नेदंरूप एव अहमित्यनुभवः। कथम्? प्रमातृप्रमेयप्रमितयस्तावदपरोक्षाः। प्रमेयं**

---

अकर्मकः स्वप्रकाशचिदनुभवत्यर्थः, इति निपुणं वीक्ष्यमित्याह—**निपुणमिति**। उभयधात्वर्थयोः सकर्मकत्वमेवेत्याशङ्क्य, यथा गतेः स्वतः सकर्मकत्वम्, तत्फलत्वात् प्राप्तेः सम्बन्धस्य सकर्मकत्वप्रतीतिः, तद्वत् जानातेः स्वतः सकर्मकत्वम्, तद्व्यङ्ग्यत्वेन तत्फलत्वात् स्वरूपचैतन्यस्यानुभूतेः सकर्मकत्वप्रतीतिः न स्वतः सकर्मकत्वमिति निपुणतरं वीक्ष्यमित्याह—**निपुणतरमिति**। अनुभविता प्रमातारं प्रमाणं तद्द्वारेण घटं च 'अनुभवामि' इत्यनुभवन् वर्तते, न तथा बुद्धिकर्तेत्यभिवीक्ष्यमित्याह—**अभिवीक्ष्येति**। सूक्ष्मेक्षणेऽप्युक्तार्थो न दृश्यत इत्यत्राह—**स्वानुभवमिति**॥

अत्र, विषयसंविदाश्रय आत्मा, तत्र 'अहं इदमनुभवामि' इति संविदाश्रयतया प्रतीयमानत्वेनाहङ्कारस्य आत्मत्वेन अग्राह्यत्वान्नेदमंशोऽस्तीति **प्राभाकरो** वक्ति—**ननु किमत्रेति**। यथा सौत्रान्तिकमते विषयस्य नित्यानुमेयत्वम्, तथा अस्मत्पक्षे नित्यानुमेयत्वादात्मनः कथमग्राह्यत्वमिति साङ्ख्यनैयायिकवैशेषिकाश्चोदयन्ति—**कथमिति**। प्रमितिवदपरोक्षानुभवविरोधात् न नित्यानुमेयत्वं तयोरिति परिहरति—**प्रमातृप्रमेयेति**। प्रमेयमपरोक्षमेव, किन्तु विज्ञानाभेदात् इति विज्ञानवादी, तत्राह—**प्रमेयमिति**। इदं पश्यामीत्यनुभवादित्यर्थः। आत्मा

---

कत्वमेवेत्याशङ्क्य, यथा गमनक्रियायाः स्वतः सकर्मकत्वं तत्फलत्वात् प्राप्तेःसंयोगलक्षणायाः सकर्मकत्वप्रतिभानं तद्वज्जानातिधात्वर्थस्य स्वतः सकर्मकत्वं तद्व्यङ्ग्यत्वेन तत्फलरूपत्वादात्मस्वरूपचैतन्यलक्षणानुभवस्य सकर्मकत्वप्रतिभानं न तु स्वतः सकर्मकतेति निपुणतरं वीक्षणं कर्तव्यमित्याह—**निपुणतरमिति**। अनुभविता प्रमातारं प्रमाणं तद्द्वारेण घटञ्च अनुभवामीति प्रमात्रादिकमनुभवन्, तदतिरिक्तं न जाने इत्य(र्थः) ज्ञानं तदवच्छेदकं च सर्वमनुभवन् वर्तते, बुद्धिकर्ता तथा न वर्तत इत्यभिवीक्षणं कर्तव्यमित्याह—**अभिवीक्ष्येति**। उक्तप्रकारेण सूक्ष्मेक्षिकायां कृतायामप्युक्तार्थो न दृश्यत इत्याशङ्क्याह—**स्वानुभवमिति**॥

**कर्मत्वेनापरोक्षम् । प्रमातृप्रमिती पुनरपरोक्षे एव केवलम्, न कर्मतया । प्रमितिरनुभवः स्वयंप्रकाशः प्रमाणफलम् । तद्बलेन इतरत् प्रकाशते । प्रमाणं तु प्रमातृव्यापारः फललिङ्गो नित्यानुमेयः। तत्र अहमिदं जानामीति प्रमातुर्ज्ञानव्यापारः कर्मविषयः, नात्मविषयः । आत्मा तु विषयानुभवादेव**

---

प्रमितिश्च स्वविषयेण मानसप्रत्यक्षेणापरोक्षौ इति वार्तिककारन्यायवैशेषिकमतानुसारिणः, तत्र कथमग्राह्यत्वमात्मन इत्यत्राह— **प्रमातृप्रमिती इति** । तत्र नात्मनो ज्ञानविषयतया सिद्धिः । सम्प्रयोगान्यत्वे सति विषयानुभवसम्बन्धित्वादेव विषयवदात्मसिद्धौ तद्विषयज्ञानान्तरकल्पनायोगात् । न च प्रमितिश्च ज्ञानान्तरविषयत्वेनापरोक्षा, युगपत्फलद्वयप्रसङ्गादित्यर्थः ॥

ननु उभयोः स्वयम्प्रकाशत्वायोगात् अन्यतरस्य स्वप्रकाशत्वे प्राधान्यादात्मैव स्वप्रकाश इत्यत्राह— **प्रमितिरिति** । प्रमितेः अस्वप्रकाशत्वे विश्वस्यैवानवभासप्रसङ्गादित्यर्थः । नैषा फलं, किन्तु हानादि ; इत्यत्राह— **प्रमाणेति** । हानादेरन्योन्यव्यभिचारित्वादित्यर्थः। संवेदनमर्थोपलब्ध्यात्मना फलम्, तदेवार्थसारूप्येण प्रमाणं प्रमीयते अनेनार्थ इति व्युत्पत्त्येति बौद्धाः, तत्राह— **प्रमाणं त्विति । प्रमातृव्यापारः**— चतुष्टयसन्निकर्षः, एकस्य विरुद्धरूपद्वयायोगादित्यर्थः । अहमिदं जानामीत्यात्मानात्मविषयौ अनुभवौ भेदेन प्रत्यक्षसिद्धाविति; नेत्याह— **तत्राहमिति** । अहंशब्दात् कर्मविभक्त्यभावादित्यर्थः । यद्यात्मनः स्वप्रकाशत्वं विषयत्वं च नास्ति, तर्हि अप्रतीतिरेव प्राप्तेत्याशङ्कां व्युदस्यन् अग्राह्यत्वमाह— **आत्मा त्विति । निमित्तादित्यत्र** तदाश्रयतयेति शेषः ।

---

अहङ्कारस्यैवानुभवाश्रयत्वमात्मत्वञ्च साधयितुं **प्राभाकरः** परपक्षव्युदासेन स्वसिद्धान्तमुपन्यस्यति— **प्रमातृप्रमेयप्रमितय इति** । यद्यदपरोक्षतयाऽवभासते तत्सर्वं स्वयं **प्रकाशे** *

---

* अत्र मध्ये महान् ग्रन्थपातः । ग्रन्थो लभ्येत चेत् अन्ते योज्येत ॥

**निमित्तादहमिति फले विषये चानुसन्धीयते ॥**

**ननु नायं विषयानुभवनिमित्तोऽहमुल्लेखः, किं तु अन्य एव आत्ममात्रविषयः अहमिति प्रत्ययः। तस्मिंश्च द्रव्यरूपत्वेनात्मनः प्रमेयत्वं ज्ञातृत्वेन प्रमातृत्वमिति प्रमातृप्रमेयनिर्भासरूपत्वादहंप्रत्ययस्य ग्राह्यग्राहकरूप आत्मा। तस्मादिदमनिदंरूपः। प्रमेयांशस्य इदंरूपत्त्वात्, अनिदंरूपत्वात् प्रमात्रंशस्य। नैतद्युक्तम्—अनंशत्वादपरिणा-**

---

अस्त्वग्राह्यत्वमात्मनः, तथाऽप्यहङ्कारस्य संविदाश्रयतया प्रतीतेः अयो दहतीतिवत् आश्रयकोटिनिक्षिप्तत्वेनापि सम्भवेनात्मत्वाभावात् नानिदंरूपतेत्यत्राह—**अहमिति**। अयों विना वह्नेः दहनक्रियाश्रयत्वदर्शनवत् अहं विना आत्मनः संविदाश्रयत्वादर्शनादहङ्कार आत्मैवेत्यर्थः ॥

यत् भाति तत् ज्ञानविषयतयैव भातीति विषयेषु नियमात् आत्मापि भाति चेत् विषयतयैव, नाश्रयमात्रतया, अतोऽन्यदेव तद्विषयं ज्ञानमिति शङ्कते—**ननु नायमिति**। प्रत्यक्षज्ञानस्य विषयजन्यत्वात् कर्मकारकतापि विषयस्य वक्तव्या, तत्र कथमेकस्यां क्रियायां एकस्यैव युगपद्गुणभूतकर्तृत्वेन प्रधानतया तद्विरुद्धकर्मत्वेन चान्वयः स्यात्? एकस्य रूपद्वये वैरूप्यं च स्यादित्यत्राह—**तस्मिंश्चेति**। तर्हि वेदान्तिमतस्वीकारः स्यादित्याशङ्क्य, अनिदंरूपं चैतन्यं न भवति, किन्तु प्र(यत्न)[मा]कर्तृ, इदंरूपं चैतन्यैक्याध्यासात् प्रतिपन्नं न भवति, किन्तु ज्ञानकर्मतया प्रतिपन्नमित्याह—**प्रमेयांशस्येति**। तत्र सामान्यांशस्यात्मानात्मसाधारण्यात् आत्मत्वायोगाद्विशेषांशस्य निरंशत्वान्न कर्तृकर्मव्यवस्थेति दूषयति—**नै[न चै]तदिति**। निरवयवस्य युगपद्द्रव्यबोधाख्यकार्यद्वयपरिणामायोगाच्चेत्याह—**अपरिणामित्वाच्चेति**। किञ्च—ग्राहकरूपस्यापि विषयतया सिद्धिरस्ति वा न वा? न चेत् संविदाश्रयत्वस्वप्रकाशत्वसिद्धयोरनभ्युपगमादसिद्धिः स्यादिति मत्वा आद्यं प्रत्याह—

मित्वाच्चात्मनः। प्रमेयस्य चेदंरूपतया पराग्रूपत्वादनात्मत्वात्। तस्मात् नीलादिज्ञानफलमनुभवः स्वयंप्रकाशमानो ग्राह्यमिदन्तया ग्राहकं च अनिदन्तया अवभासयति ग्रहणं च अनुमापयतीति युक्तम्। अतो नेदमंशोऽहंकारो युज्यते। उच्यते—तत्रेदं भवान् प्रष्टव्यः—किमात्मा चैतन्यप्रकाशः अनुभवो जडप्रकाशः? उत सोऽपि चैतन्यप्रकाशः? अथवा स एव चैतन्यप्रकाश आत्मा जडस्वरूपः? इति। तत्र न तावत् प्रथमः कल्पः—जडस्वरूपे प्रमाणफले विश्वस्यानवभासप्रसङ्गात्। मैवम्—प्रमाता चेतनः तद्बलेन प्रदीपेनेव विषयमिदन्तया आत्मानं चानिदन्तया चेतयते इति न विश्वस्यानवभासप्रसङ्गः। तन्न—स्वयं चैतन्यस्वभावोऽपि सन् विषयप्रमाणेनाचेतनेनानु-

---

**प्रमेयस्य चेति**। भाट्टमतं निरस्य, तस्मात् संविद्बलादेव त्रितयसिद्धौ संविदाश्रयतया अहमः सिद्धेः नेदमंशोऽहङ्कार इत्युपसंहरति—**तस्मादिति**। अत्र ज्ञानग्रहणशब्दाभ्यां चतुष्टयसन्निकर्षोऽभिधेयः॥

अहङ्कारस्यात्मव्यतिरेकं साधयितुं आत्मनः स्वप्रकाशत्वसाधनाय विकल्पयति—**तत्रेदमिति**। **सोऽपि**-अनुभवोऽपीत्यर्थः। **स एवेति**। अनुभव एवेत्यर्थः। तत्रात्मा चित्स्वभावोऽनुभवो जडप्रकाश इति पक्षो न साधुरित्याह—**न तावदिति**। चैतन्यमेव जडानुभवबलादात्मानं विषयं चावभासयतीति शङ्कते—**मैवमिति**। चित्प्रकाश आत्मा अत्मीयप्रकाशने जडमपेक्षत इति विरुद्धमित्यत्राह—**प्रदीपेनेवेति**। किं चैतन्यस्य विषयसम्बन्धहेतुरनुभवो वेदान्तिनां बुद्धिपरिणामवदिष्यते वा? चैतन्यस्यात्मात्मीयप्रकाशने जडानुभवपारतंत्र्यं वेष्यते? इति विकल्प्य, आद्यः स्यादेवेति मत्वा, द्वितीयं प्रत्याह—**तन्नेति**। अन्धमपेक्ष्य चक्षुष्मान् पश्यति इतिवत् विरुद्धम्। प्रदीपोऽपि चैतन्यस्य विषयसम्बन्धहेतौ बुद्धिपरिणामे अपेक्ष्यते न प्रकाशने इत्यर्थः।

गृहीतः प्रकाशते इति नैतत् साधु लक्ष्यते। किं च—प्रमाणफलेन चेत् प्रदीपेनेव विषयमात्मानं च चेतयते तदा चेतयतिक्रियानवस्थाप्रसङ्गः ॥

द्वितीये कल्पे आत्मापि स्वयमेव प्रकाशेत, किमिति विषयानुभवमपेक्षेत। अथ चैतन्यस्वभावत्वेऽपि नात्मा स्वयंप्रकाशः, विशेषे हेतुर्वाच्यः। न हि चैतन्यस्वभावः सन् स्वयं परोक्षोऽन्यतोऽपरोक्ष इति युज्यते। किं च समत्वान्नेतरेतरापेक्षत्वं प्रकाशने प्रदीपयोरिव। तृतीयेऽपि कल्पे अनिच्छतोऽप्यात्मैव चितिप्रकाश आपद्यते, न तदतिरिक्ततथाविधफलसद्भावे प्रमाणमस्ति। कथम्?

---

चेतयतिक्रियापि किं जडस्वरूपा? स्वप्रकाशा वा? अन्त्ये अनुभवस्यैव सा स्वप्रकाशता किं न स्यादिति मत्वा आद्ये तस्याश्च जडत्वात् क्रियान्तरं वक्तव्यमिति अनवस्थेत्याह— **किञ्चेति** ॥

उभयचैतन्यपक्षं दूषयति—**द्वितीयेऽपीति**। चिद्गुणमपि पुरुषान्तरस्य संवेदनं न पुरुषान्तरस्य स्वयम्प्रकाशं, तथा आत्मा चिद्गुणोऽपि न स्वयम्प्रकाश इति शङ्कते—**अथेति**। अनुभवोऽपि तर्हि स्वयम्प्रकाशो न स्यात्, अव्यवधानान्नेति चेत् आत्मन्यपि तत्तुल्यमित्यर्थः। एतद्व्यनक्ति—**न हीति**। दोषान्तरमाह—**किञ्चेति**। आत्मा जडोऽनुभवः स्वयम्प्रकाशः, तदाश्रयत्वेनात्मनः सिद्धिरिति पक्षं दूषयति—**तृतीयेऽपीति**। आत्मा चित्प्रकाशः संवित्कर्मतामन्तरेणापरोक्षत्वात् संविद्वदित्याह — **अनिच्छतोऽपीति**। आत्मनः स्वयम्प्रकाशत्वे तदधीनत्वेन जगदवभाससिद्धेः तदतिरिक्तस्वयम्प्रकाशवस्तुकल्पकाभावान्न सिध्यतीत्याह—**न तदतिरिक्तेति**। मानान्तरापेक्षया पृच्छति—**कथमिति**। यद्वा—अनुभवस्यात्मानतिरेकेऽपि मानाभावात् कथमात्मनः स्वप्रकाशत्वसिद्धिरिति शङ्कते—**कथमिति** ॥

**प्रमाणजन्यश्चेदनुभवः, तथा सति स्वगतेन विशेषेण प्रतिविषयं पृथक् पृथगवभासेत, सर्वानुभवानुगतं च गोत्ववदनुभवत्वमपरमीक्ष्येत। न च नीलानुभवः पीतानुभवः इति विषयविशेषपरामर्शशून्यः स्वगतो विशेषो लक्ष्यते॥**

**ननु विनष्टाविनष्टत्वेन विशेषः सिध्यति। सिध्येत यदि विनष्टाविनष्टता सिध्येत्। सा च जन्यत्वे सति, तस्यां च सिद्धायां जन्यत्वं, इति परस्परायत्तस्थितित्वेन एकमपि न सिध्येत्। एतेन अतिसादृश्यादनुभवभेदो न विभा-**

---

तत्रात्मैवानुभवः कालाद्यनवच्छिन्नत्वादात्मवदिति मानं (न त्व)[मत्वा अ]नुभवस्य तदनवच्छिन्नत्वं साधयति—**प्रमाणजन्यश्चेदिति**। घटानुभवः पटानुभव इति पृथक्पृथगेवावभासते इत्याशङ्क्य विशिनष्टि—**स्वगतेनेति**। निरुपाधिकभेदभिन्नानुभवव्यक्तिकल्पने तासु जातिकल्पने च गौरवदोषाच्च भेदजन्माभाव इत्याह—**सर्वानुभवेति**। स्वगतो भेदो भात्येवेत्याशङ्क्य, अनुभवविरोध इत्याह—**न चेति**। नीलसंवित्स्थितिकाले पीतसंविदोऽभावात् स्थितिविनाशौ दृष्टौ धर्मिभेदं कल्पयत इति चोद्यमुद्भाव्य परिहरति—**ननु विनष्टेत्यादिना**। विनष्टाविनष्टतैव न सिध्यति, संविद्विनाशस्यासिद्धेरित्यर्थः। साधनसन्निधानादुत्तरसंविदो जातत्वात् संविद्द्वययौगपद्याभावात् विनष्टा पूर्वसंविदिति निश्चीयते इत्याशङ्क्य, उत्तरसंविदो जन्यत्वे सति पूर्वसंविदो विनष्टत्वसिद्धौ विनष्टाविनष्टता सिध्यति, तस्यां च सिद्धायां जन्यत्वसिद्धिः, इत्यन्योन्याश्रयान्नेत्याह—**सा चेति**। न च साधनात् जन्मसिद्धिः, साधनस्य विषयोपरक्तसंविज्जन्महेतुत्वकल्पनातः सिद्धस्यैव संवेदनस्य विषयोपरागहेतुत्वकल्पनाया लघीयस्त्वादित्यर्थः॥

संविदां स्वगतभेदे सत्यप्यतिसादृश्याज्ज्वालायामिव परोपाधिं विना भेदो न विभाव्यत इति सुगतमतमाशङ्क्याह—**एतेनेति**। किञ्च-भेदस्य

व्यते इति प्रत्युक्तम्। भेदासिद्धेः। न हि चित्प्रकाशस्य स्वगतो भेदो न प्रकाशते इति युक्तिमत्, येन तदप्रकाशनात् सादृश्यनिबन्धनो विभ्रमः स्यात्। न च यथा जीवस्य स्वयंज्योतिषोऽपि स्वरूपमेव सत् ब्रह्मरूपत्वं न प्रकाशते तद्वत् स्यादिति युक्तम्। अभिहितं तत्राप्रकाशने प्रमाणम्। इह तन्नास्ति। नहि सामान्यतोदृष्टमनुभवविरोधे युक्तिविरोधे च समुत्तिष्ठति। दर्शिते चानुभवयुक्ती। तस्मात् चित्स्वभाव एवात्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते। अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते, अवधोरित-वनाभिधाननिमित्तैकदेशावस्थाना इव वृक्षा वृक्षादिशब्दैः इत्यभ्यु-पगन्तव्यम्। बाढम्, अत एव विषयानुभवनिमित्तोऽनिदमात्मको

---

ज्ञानान्तरगम्यत्वे भिन्नेषु सादृश्यादभेदभ्रमजन्म स्यात्, स्वयम्प्रकाशस्य तु स्वरूपत्वात् भेदस्य प्रकाशमानतैव युक्तेत्याह—**न हीति**। युक्तिमदिति दृष्टान्तबलादाशङ्क्याह—**न चेति**। एकत्वेन पुष्कलप्रकाशस्याविद्याप्रतिबन्धे मानमुक्तम्, इह तु तदभावेनाप्रतिबन्धपुष्कलकारणत्वादिति हेतुमाह—**अभिहितमिति**। संविदः सादृश्यप्रतिबद्धभेदावभासाः स्थायिप्रकाशबुद्धि-वेद्यत्वात् ज्वालावदिति मानमाशङ्क्याह—**न हीति**। पूर्वापरैकरूपानुभवो भेदस्य च प्रकाशेन भवितव्यमित्यनुभवयुक्ती। कथं तर्ह्यात्मचैतन्यस्य नित्यस्य विषयानुभवत्वमित्यत्राह—**तस्मादिति**। चिद्रूपादात्मनोऽचिद्रूपस्याहङ्कारस्या-न्यत्वेनानात्मत्वादिदंरूपत्वमेष्टव्यमित्याह—**इत्यभ्युपगन्तव्यमिति**॥

आत्मनः स्वयम्प्रकाशत्वं तस्यैव सोपाधिकस्यानुभवत्वं चाङ्गीकरोति—**बाढमिति**। तथाऽपि विषयानुभवस्य सत्त्वादेव तन्निमित्तीकृत्य अहमिति द्रष्टृरूपपरामर्शादात्मत्वादनिदंरूपोऽहङ्कार इति चोदयति—**अत एवेति**। अन्यथा द्रष्ट्रादिपरामर्श-तद्द्रष्टृरूपेण परामर्शस्य विषयानुभवो निमित्तम्।

ऽहङ्कारो वर्ण्यते। सत्यमेवं, किन्तु तथा सति सुषुप्तेपि अहमित्यु-ल्लेखः स्यात्। कथम्? नीलानुषङ्गो यश्चैतन्यस्य स नीलभोगः, नासावहमुल्लेखार्हः। अहमिति आत्मा अवभासते। तत्र यदि नाम सुषुप्ते विषयानुषङ्गाभावादिदं जानामीति विषयतदनुभवपरामर्शो नास्ति? मा भूत्। अहमित्यात्ममात्रपरामर्शः किमिति न भवेत्।

ननु अहमिति भोक्तृत्वं प्रतिभासते, तदभावे कथं तथा प्रतिभासः? नैतत् सारम्। समुत्कालितोपाधिविशेषं चैतन्य-मात्रमस्मदर्थः। ततः सर्वदा अहमिति स्यात्। नैतच्छक्यमुपाधि-परामर्शेन चैतन्यमहमित्युल्लिख्यते इति वक्तुम्। तत्परामर्शो

---

शून्यः चिन्मात्रावभासः स्यादिति भावः। द्रष्टृरूपेण परामर्शमुपेत्य, अहङ्कारस्य सुषुप्तौ स्वयम्प्रकाशतया आत्मावभासे सत्यनवभासान्नात्मत्वम्, परामर्शस्तु द्रष्टृकोटौ निक्षेपादिति दूषयति—**सत्यमिति**। विषयानुभवनिमित्त आत्मनो द्रष्टृरूपावभासोऽहमुल्लेखः, तस्य कथं विषयानुभवशून्ये सुषुप्ते प्रसङ्ग इति शङ्कते—**कथमिति**। विषयानुभवो विषयावभासे निमित्तं स्यात् जडत्वात्, द्रष्टृरूपस्यात्मत्वे स्वयम्प्रकाशत्वात्तदवभासो नित्यमेव भवेदिति दूषयति—**नीलेति**। चैतन्यसम्बन्धी यो विषयानुषङ्गः स नीलं भोजयतीति **नीलभोगः**—विषयावभासकः, नीलशब्दस्योपलक्षणत्वात्, नासावहम्बुद्धौ निमित्तत्वार्ह इति योजना। तत्र फलमाह—**यदीति**॥

पराग्व्यावृत्तं द्रष्टृरूपं भोक्तृत्वम्, तस्य सुषुप्तावभावात् कथमवभासप्राप्ति-रिति शङ्कते—**नन्वहमिति**। न, अहङ्कारस्य त्वया निष्प्रतियोगिकात्ममात्रत्वा-भ्युपगमादिति दूषयति—**नैतदिति**। निष्प्रतियोगिकात्मस्वरूपमपि विषयानु-भवादेव व्यज्यते, अतस्तद्रूपस्याप्यहङ्कारस्य सुषुप्ते विषयानुभवाभावादनवभासो युक्त इत्यत्राह—**नैतच्छक्यमिति**। **उपाधिः**-विषयः, तस्य **परामर्शे** विषयानु-भवे सतीत्यर्थः। तत्र **नीलानुषङ्ग** इत्यादिनोक्तं हेतुं स्मारयति—**तत्परामर्शो**

हि तत्सिद्धिनिमित्तः, न स्वरूपसिद्धिहेतुः। स्वमाहात्म्येनैव तु स्वरूपसिद्धिः। ततश्च विषयोपरागानुभवात्मत्वशून्यः स्वरूपतः अहमिति सुषुप्तेऽप्यवभासेत। दृशिरूपत्वाविशेषात्। भवत्येवेति चेत्-न-तथा सति स्मर्येत ह्यस्तन इवाहङ्कारः। अविनाशिनः संस्काराभावात् न स्मर्यते इति चेत्, ह्यस्तनोऽपि न स्मर्येत।

ननु अस्त्येव सुषुप्ते अहमुल्लेखः, सुखमहमस्वाप्समिति

---

हीत्यादिना। यद्वा, [विषयपरामर्शस्य]पराग्विषयभानहेतुत्वेन तद्विरुद्धप्रत्यग्विषयभानहेतुत्वाभावादित्याह—**विषय[तत्]परामर्शो हीति**। केन तर्हि आत्मभानमित्याशङ्क्य, स्वेनैवेत्याह—**स्वमाहात्म्येनेति**॥

सुषुप्तौ भात्येव निर्विकल्परूपेणाहङ्कार इत्याशङ्क्य, तर्हि विषयानुभवशून्यस्सन् स्वात्मनैव (सवि)[स निर्वि]कल्पकरूपेणापि भायात्, न च भाति, अतो विषयोपरक्तसप्रतियोगिकस्वभावस्याहङ्कारस्यात्मत्वं सौषुप्तानुभवविरुद्धमित्याह—**ततश्चेति**। आत्मनस्तु सर्वात्मत्वान्न पराग्व्यावृत्तता, अहमुपरागादेव तथा भानमित्यर्थः। भात्येवेति शङ्कते—**भवत्येवेति**। अनुभूते वस्तुनि स्मृतिनियमाभावेऽपि, उत्थितेन स्मर्यमाणात्ममात्रत्वात् अहङ्कारस्य स्मर्यमाणता स्यादिति दूषयति—**न-तथा सतीति**। स्मर्यत एवेत्याशङ्क्य, यथा पूर्वस्मिन् दिने अहमित्यभिमन्यमान एवासमिति सविकल्पकस्मृतिः, तथा सुषुप्ते अहमित्यभिमन्यमान एवासमिति स्मृतिः स्यात् उत्थितस्य, न साऽस्तीत्याह—**ह्यस्तन इति**। अहङ्कारभानस्यात्मचैतन्यस्याविनाशित्वेन संस्काराभावान्न स्मृतिप्राप्तिरित्याशङ्कते—**अविनाशिन इति**। दूषयति—**ह्यस्तनोऽपीति**। तथाप्युत्थितस्य सुखमहमस्वाप्समिति स्मृतिरस्ति, अतोऽनुभूतसुखविशिष्टतया सुप्तेऽहङ्कारानुभवोऽस्तीति शङ्कते—**नन्वस्त्येवेति**। सुखमनुभूतं चेत्तस्य विषयजन्यत्वाद्विषयिणोऽन्यत्वेन विषयत्वाच्च विषयानुभवनिमित्तोऽहमुल्लेख

**सुषुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनात्। नात्मनोऽन्यस्य तत्रानुभवः सम्भवति। सत्यमस्ति, न तत् स्वापे सुखानुभवसंस्कारजं स्मरणम्। किं तर्हि? सुखावमर्शो दुःखाभावनिमित्तः। कथम्? स्वप्ने तावदस्त्येव दुःखानुभवः। सुषुप्ते तु तदभावात् सुखव्यपदेशः। तदभावश्च करणव्यापारोपरमात्। यदि**

---

इत्युक्तं स्यात्, तच्चापास्तमित्यत्राह—**नात्मनोऽन्येति**। अतः स्वरूपसुखमेव तत्रानुभूतमित्यर्थः॥

किं सुखविशिष्टाहङ्कारस्मृत्यनुपपत्त्या सुखविशिष्टतया अहङ्कारस्यानुभवोऽस्ति इत्युच्यते? किं वा सुखमात्रस्मृत्यनुपपत्त्या स्वरूपसुखानुभवं परिकल्प्य तस्याश्रयपक्षपातितया अहमुल्लेखात् अहङ्कारानुभवोऽस्तीत्युच्यते? इति विकल्प्य, नाद्यः-अहङ्कारस्य तदानीमनुभूयमानत्वेऽप्यस्य परामर्शत्वोपपत्त्या अहङ्कारावभासस्य स्मृतित्वासिद्धेरिति मत्वा, द्वितीयं दूषयितुं परामर्शमङ्गीकरोति—**सत्यमिति**। अनङ्गीकृतांशमाह—**न तदिति**। स्वरूपसुखतदनुभवयोः आत्ममात्रत्वादात्मनः तदाश्रयत्वं नास्ति, आत्मनः तदाश्रयत्वेऽप्यहङ्कारस्य तदाश्रयत्वात्मत्वयोः असिद्धेः आश्रयपक्षपातितया अहमुल्लेखादित्यसङ्गतमिति दूषणस्य स्फुटत्वात्, प्रौढ्या परमतमाश्रित्य एतदारभ्य **गुरूणीति** इत्यन्तमुक्तमित्यूह्यम्।

सुखावमर्शस्य मुख्यसुखावलम्बनत्वं त्यक्त्वा, कथं विरोधिदुःखाभावे लक्षणा कल्प्यते। शाब्दे च ज्ञाने लक्षणा स्यात्, सुखावमर्शस्तु प्रत्यभिज्ञात्वेन प्रत्यक्षत्वान्न लक्षणामर्हतीत्याक्षिपति—**कथमिति**। मुख्यासम्भवो लक्ष्यनिश्चयश्च लक्षणाप्रयोजकः, तस्य मुख्यसुखाभावेन दुःखादावसम्प्रतिपत्त्या न सत्त्वादित्याह—**स्वप्ने तावदिति**। तत्रापि दुःखानुभवोऽस्ति अवस्थात्वादित्याशङ्क्य, अप्रयोजकत्वमाह—**तदभावश्चेति**। परामर्शसामर्थ्यादेव मुख्यमेव सुखं कल्प्यतामित्याशङ्क्य, स्मरणाभावलिङ्गविरोधान्नेत्याह—**यदीति**।

पुनः 'सुषुप्तः सुखम्' इति च तद्विषयं स्मरणं स्यात् तदा विशेषतः स्मर्येत। न च तदस्ति। व्यपदेशोऽपि 'सुखं सुप्तो न किंचिन्मया चेतितम्' इति हि दृश्यते। यत् पुनः सुप्तोत्थितस्य अङ्गलाघवेन्द्रियप्रसादादिना सुखानुभवोन्नयनमिति, तदसत्-अनुभूतं चेत् सुखं स्मर्येत। न तत्र लिङ्गेन प्रयोजनम्। यद्येवं सुप्तोत्थितस्य कथं कस्यचिदङ्गलाघवं कस्य चिन्न ? इति; उच्यते-जागरणे कार्यकरणानि श्राम्यन्ति। तदपनुत्तये व्यापारोपरमः स्वापः। तत्र यदि सम्यक् व्यापारोपरमः तदा अङ्गानि लघूनि इतरथा गुरूणीति। तदेवं नायं नीलादिप्रत्ययादन्य एवात्मविषयोऽहंप्रत्ययः, नापि विषयानुभवादेवाहमुल्लेखः। तस्मात् ब्रह्मविदामेकपुण्डरीकस्य लोकानुग्रहैकरसतया सम्यग्ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम् ॥

---

**विशेषतः**—विषयविशेषोपरक्ततयेत्यर्थः। स्वरूपसुखत्वात्तथा स्मृत्यभाव इत्याशङ्क्य, दुःखाभाव एव परामर्शविषय इत्यत्र लिङ्गमाह—**व्यपदेशोऽपीति**। सुखानुभवस्यापि लिङ्गमस्ति, इन्द्रियप्रसादादि इत्यत्राह—**यत्पुनरिति**। अनुभूतं सुखं कदाचिद्विशेषतः स्मर्यत इति व्याप्तिं मत्वा आह— **तदसदिति**। सुखानुभवो [यदि] नास्ति, तदभावस्य निर्विशेषत्वात् कथमङ्गलाघवादिवैषम्यं स्यादिति शङ्कते—**यद्येवमिति**। अभावस्य स्वतोऽतिशयाभावेऽपि प्रतियोग्यतिशयोपाधित्वेन अतिशयवत्त्वादिति दूषयति—**उच्यत इति**। स्वयम्प्रकाशत्वाहङ्कारभेदावुक्तावुपसंहरति—**तदेवमिति**। किन्तु स्वयम्प्रकाश आत्मा, न च तद्रूपोऽहङ्कार इति शेषः ॥

यस्मान्नाहङ्कार आत्मा, 'अथातोऽहङ्कारादेशः' 'अथात आत्मादेशः' इत्यहङ्कारात्मनोः भेदेन सर्वात्मत्वोक्त्या, 'महाभूतान्यहङ्कारः' इति क्षेत्रक्षेत्रज्ञत्वोक्त्या च तयोर्भेदबोधकागममूलं **भाष्यं** युक्तमित्याह—**तस्मादिति**। तद्वा-

**तदुच्यते-येयं श्रुतिस्मृतीतिहासपुराणेषु नामरूपं अव्याकृतं अविद्या माया प्रकृतिः अग्रहणं अव्यक्तं तमः कारणं लयः शक्तिः महासुप्तिः निद्रा अक्षरं आकाशं इति च तत्र तत्र बहुधा गीयते चैतन्यस्य स्वत एवावस्थितलक्षणब्रह्मस्वरूपतावभासं प्रतिबध्य जीवत्वापादिका अविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिः सुषुप्ते**

---

त्माविद्यातत्सम्ब(न्धात् जीवभेदाभावाच्चा)[न्धजीवेशतद्भेदेभ्योऽ]न्यत्वादहङ्कारः किमुपादानः? किंनिमित्तः? किंरूपः? किम्प्रमाणकः? किङ्कार्यः? किमिति वा सुषुप्ते न स्यात्? येनानवभास उपपन्नः स्यादिति सुहृद्भूत्वा पृच्छन्तं प्रत्याह—**तदुच्यत इत्यादिना** ॥

**येयमि**त्युपादानमाह। महाप्रलयादावपि नामरूपबीजात्मना अवस्थानमाह—**नामरूपमिति**। विविधं जगत् स्वात्मन्यन्तर्भाव्य महाप्रलयादौ स्थितेत्याह-**अव्याकृतमिति**। वेदान्तजन्यविद्यैकनिवर्त्येत्याह—**अविद्येति**। अत्यन्तानुपपन्नमुपपन्नवदवभासयितुं त्वरिततरेत्याह—**मायेति**। विचित्रप्रपञ्चरूपेण परिणामशक्तेत्याह—**प्रकृतिरिति**। प्रलयादौ चैतन्यस्य ब्रह्मत्वाच्छादिकेत्याह—**अग्रहणमिति**। प्रमाणन्यायैः सत्त्वासत्त्वाभ्यामनिर्वाच्येत्याह—**अव्यक्तमिति**। प्रसिद्धतमोवदाश्रयविषयभेदानपेक्षेत्याह — **तम इति**। स्वातिरिक्तनिमित्तानपेक्षेत्याह—**कारणमिति**। लीयतेऽस्मिन्निति सर्वलयाश्रयत्वमाह—**लय इति**। आत्मनः सर्वकार्यनिर्वोढ्रीत्याह — **शक्तिरिति**। ब्रह्मादिजीवजातस्य स्वरूपबोधशून्यतया शेतुं स्थानमित्याह—**सुषुप्तिरिति**। स्वयमेकाप्येकजीवस्य प्रसिद्धनिद्रावदनन्ततया अवभासिकेत्याह — **निद्रेति**। विद्याव्यतिरिक्तेन केनापि न क्षरतीत्याह—**अक्षरमिति**। वियद्विरिश्चाद्यात्मना प्रकाशत इत्याह-**आकाशमिति**। एतच्च सर्वमुपादानत्वं सेद्धुं द्रष्टव्यम् ॥

प्रागुक्तमनुक्तं चागमं संस्मार्य उक्तामर्थापत्तिं स्मारयति—**चैतन्यस्येति**। एकरूपा चेदविद्या, कथं ततो विचित्रकार्यं स्यादित्यत्राह—**अविद्याकर्मेति**।

**प्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिरनादिरविद्या, तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसंजातज्योतिः स्वयं-प्रकाशमानोऽपरोक्षोऽहङ्कारः, यत्संभेदात् कूटस्थचैतन्योऽनिदमंश आत्मधातुरपि मिथ्यैव भोक्तेति प्रसिद्धिमुपगतः। स च सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः। न चैवं मन्तव्यं आश्रितपरिणतिभेदतयैवाहंकारनिर्भासेऽनन्तर्भूतैव तन्निमित्तमिति। तथा सति अपाकृताहंकृतिसंसर्गो भोक्तृत्वादिस्तद्विशेषः केवलमिदन्तयैवावभासेत, न च तथा समस्ति॥**

---

भ्रान्तिकर्मपूर्वानुभवसंस्कारा इत्यर्थः। सुषुप्तादावभावात् सादिरविद्येत्यत्राह—**सुषुप्ते इति**। अन्यथा पुनरुद्भवानुपपत्तिः अहङ्कारादेरित्यर्थः। निमित्तमाह—**तस्या इति**। स्वरूपमाह—**विज्ञानक्रियाशक्तिद्वयाश्रय इति**। कार्यमाह—**कर्तृत्वेति**। प्रमाणमाह—**कूटस्थेति**। **स्वयम्प्रकाशमान इति**। स्वसत्तायामव्यभिचरितप्रकाश इत्यर्थः। आत्मनि सर्वातदारोपनिमित्तत्वं कार्यान्तरमाह—**यत्सम्भेदादिति**। अविकारिणोऽप्यात्मनो विकार्यहङ्कारैक्याध्यासान्मिथ्यैव भोक्तृत्वं जातमित्यर्थः। किमिति तर्हि सुषुप्ते न स्यादित्यत्राह—**स चेति**। 'यदा सुप्तः स्वप्नं न कश्चन पश्यति अथास्मिन् प्राणे (परमात्मनि) एकधा भवति, तदैनं वाक् सर्वैर्नामभिः सहाप्येति' इति सुषुप्तपुरुषदृष्टिसहितश्रुतेः सर्वस्याविद्याकार्यस्य सुषुप्ते लीनत्वात् प्राणादिदृष्टेश्च भ्रान्तित्वादित्यर्थः॥

यच्चेतनं मायादिशब्दवाच्यं अन्तःकरणाद्युपादानं तर्हि तदहङ्कारनिर्भासे साक्षिणि तच्छक्तित्वेनानन्तर्भूतमेव प्रधानं स्वतन्त्रमेव स्वाश्रिताः याः परिणतयो धर्मलक्षणावस्थाः तद्भेदैः त्रिधा परिणमते, अतो न परमेश्वराधिष्ठितत्वेन कृत्यमित्यत्राह—**न चेति**। अहमिति कृतिः करणं यस्मिन् स साक्षी अहङ्कृतिः, अख्यातेरपास्तत्वात्। यदि तच्छक्तित्वेन अनध्यस्तमुपा-

**स च परिणामविशेषः अनिदञ्चिदात्मनो बुद्ध्या निष्कृष्य वेदान्तवादिभिः अन्तःकरणं मनो बुद्धिरहम्प्रत्ययी इति च विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते, परिस्पन्दशक्त्या च प्राणः इति। तेन अन्तःकरणोपरागनिमित्तं मिथ्यैवाहंकर्तृत्वमात्मनः, स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा। कथं पुनः स्फटिके लोहितिम्नो मिथ्यात्वम्? उच्यते—यदि स्फटिकप्रतिस्फालिता नायनरश्मयो जपाकुसुममुपसर्पेयुः, तदा विशिष्टसंनिवेशं तदेव लोहितं ग्राहयेयुः। न हि रूपमात्रनिष्ठश्चाक्षुषः प्रत्ययो दृष्टपूर्वः।**

---

दानम्, तर्ह्युपादानस्य चित्तादात्म्याभावेन तत्कार्यस्याहङ्कारादेः चित्तादात्म्याभावादनिदन्तया अवभासो न स्यादित्यर्थः। तर्ह्यनिदंरूपेण भानात् कथमस्यानात्मतेत्यत्राह—**स चेति**। **बुद्ध्या**—सुषुप्तेऽनवभासादित्येवमादिरूपया, **निष्कृष्य**—विभिद्य इत्यर्थः॥

नन्वेवं मायापरिणामात्मकमन्तःकरणादिकं नाहङ्कार इत्यत्राह—**अन्तःकरणमिति**। एकस्य कथं बहुधोक्तिरित्यत्राह—**विज्ञानशक्तिविशेषमिति**। कथं तर्ह्यस्य प्राणतेत्यत्राह—**परिस्पन्देति**। कथं तर्हि आत्मनोऽहङ्कर्तृत्वभानमित्यत्राह—**तेनेति**। अन्तःकरणस्य विकारित्वेन तदैकात्म्याध्यासादविकार्यात्मनो मिथ्याहङ्कर्तृत्वप्राप्तिरित्यर्थः। अत्र दृष्टान्तः—**स्फटिकेति**। स्फटिकप्रतिस्फुटितैः नयनरश्मिभिः जपाकुसुमं प्राप्तैः तद्गतमेव लौहित्यं स्फटिकादविविक्तं भाति, न स्फटिकगतं मिथ्यालौहित्यमित्यख्यातिवाद्याक्षिपति—**कथमिति**। दूषयति—**उच्यत इति**। दोषादिन्द्रियस्य कुसुमसंयोगाभावान्न सन्निवेशाख्यद्रव्यग्रहणमित्यत्राह—**न हीति**। संयुक्तसमवायात् संयोगाद्वा गुणग्रहणे द्रव्यमपि संयुक्तमित्यर्थः। अस्तु तर्हि रूपमात्रं प्रतिबिम्बितं स्फटिकात्मना

---

—युः। तदपि तथैवेति चेत्तत्राह—**विशिष्टसन्निवेशमिति**। शब्दगन्धगुणाश्रयद्रव्यं विना श्रोत्रघ्राणेन्द्रियाभ्यां गृह्येते इति, तद्व्यावर्तयति—**नहि रूपमात्रनिष्ठ** इति।

**नापि स्वाश्रयमनाकर्षद्रूपमात्रं प्रतिबिम्बितं क्वचिदुपलब्धपूर्वम्। ननु अभिजातस्येव पद्मरागादिमणेः जपाकुसुमादेरपि प्रभा विद्यते, तथा व्याप्तत्वात् स्फटिकोऽपि लोहित इवावभासते। तथापि स्वयमलोहितो मिथ्यैव लोहित इत्यापद्येत। अथ प्रभैव लोहिता अवभासते न स्फटिकः इति, शौक्ल्यमपि तर्हि स्फटिके प्रकाशेत। अथ प्रभया अपसारितं तदिति चेत्, स तर्हि नीरूपः कथं चाक्षुषः स्यात्। न च रूपिद्रव्य-संयोगात्। वायोरपि तथात्वप्रसङ्गात्। न प्रभानिमित्तं लौहित्यं तत्रोत्पन्नम्। उत्तरकालमपि तथारूपप्रसङ्गात्। अभ्युपगम्य प्रभामिदमुक्तम्। यथा पद्मरागादिप्रभा निराश्रयापि उन्मुखो-पलभ्यते न तथा जपाकुसुमादेः॥**

---

भातीत्यन्यथाख्यातिरित्यत्राह—**नापीति**॥

तर्हि स्फटिके लौहित्यं सद्द्रव्यमेव प्रतिबिम्बितं स्फटिकात्मना भातीति शङ्कते—**नन्वभिजातस्येति**। तथापि संसर्गस्यापरोक्षतया भानान्नासत्त्वं बाधान्न सत्त्वमिति मिथ्यात्वं सिद्धमिति दूषयति—**तथापीति**। यद्यपि प्रभा अस्तीति शेषः। तर्हि प्रभागतमेव लौहित्यं स्फटिकाविविक्तं भातीत्यख्याति-रस्त्विति शङ्कते—**अथेति**। स्फटिकग्रहणे सति संयुक्तसमवायसामग्र्याः सत्त्वाद्रूपमपि गृह्येतेति दूषयति—**तर्हीति**। विरोधिगुणया प्रभया अपसारितं प्रतिबद्धं वा तदिति शङ्कते—**अथ प्रभयेति**। अपसारणे दोषमाह—**स तर्हीति**। प्रतिबन्धस्तु द्रव्यस्यापि समानः गुणद्वारविरोधि[ध]साम्यादित्यर्थः। रूपहीनमपि द्रव्यं रूपिप्रभासंयोगात् चाक्षुषं स्यादित्यत्राह—**न च रूपीति**। तर्हि शौक्ल्यमपसार्य लौहित्यस्योत्पन्नत्वाद्रूपवत्तया चाक्षुषः स्फटिक इत्याशङ्क्य, जपाकुसुमसन्निध्युत्तरकालमपि लौहित्यप्रसङ्गान्नोत्पन्नमित्याह—**न प्रभेति**। जपाकुसुमस्य प्रभामुपेत्यैतदुक्तम्, सा च नास्तीत्याह—**अभ्युपगम्येति**॥

तदेवं स्फटिकमणावुपधानोपराग इव चिदात्मन्यप्यहङ्कारोपरागः, ततः सम्भिन्नोभयरूपत्वात् ग्रन्थिरिव भवतीति अहङ्कारो ग्रन्थिरिति गीयते। तत्र जडरूपत्वादुपरक्तस्य न तद्बलादुपरागस्य साक्षाद्भावः। चिद्रूपस्य पुनरुपरागः तद्विषयव्यापारविरहिणोऽपि तद्बलात् प्रकाशते। तेन लक्षणत इदमंशः कथ्यते न व्यवहारतः। व्यवहारतः पुनः यदुपरागादनिदमात्मनोऽहंकर्तृत्वं मिथ्या, तदात्मनः तद्व्यापारेण व्याप्रियमाणस्यैव व्यापारपूर्वको यस्य परिच्छेदः स एवेदमात्मको विषयः॥

---

उक्तरीत्या सत्ताप्रतीत्योः क्लृप्तकारणाभावाल्लौहित्यस्य मिथ्यात्वे सिद्धे फलमाह—**तदेवमिति**। यथा जपाकुसुमसम्बन्धः स्फटिके मिथ्यालौहित्यहेतुः तथा अहङ्कारसम्बन्ध आत्मनि मिथ्याकर्तृत्वादिहेतुरित्यर्थः। "भिद्यते हृदयग्रन्थिः" इत्यादौ हृदयग्रन्थेरात्मन्यनर्थहेतुत्वं गम्यते, तत्कथमहङ्कारस्योच्यत इत्यत्राह — **ततः सम्भिन्नेति**। आत्मानात्मभ्यामिति शेषः। आत्मा स्वोपरक्ताहङ्कारादि नावभासयेत् उपरक्तत्वात् स्फटिकवदित्याशङ्क्य, जडत्वमुपाधिरित्याह—**तत्रेति**। चेतनस्यापि उपरक्तविषयज्ञानक्रियाशून्यत्वाजाड्याद‌विशेष इत्यत्राह—**चिद्रूपस्येति**। अव्यवधानेन चित्संसर्ग एव प्रतीतिहेतुः न ज्ञानक्रियेत्यर्थः। साक्षिस्वरूपवत् ज्ञानक्रियाव्यवधानं विना अहङ्कारस्य सिद्धौ कथमिदमंशतेत्यत्राह—**तेनेति**। चित्प्रकाश्यत्वेनार्थत इत्यर्थः॥

व्यवहारतः कथम्भूतस्येदमंशतेत्यत्राह—**व्यवहारत इति**। **व्याप्रियमाणस्यात्मनो व्यापारपूर्वको यस्य** देहादेः **परिच्छेदः स एव व्यवहारत इदमात्मको विषय** इत्यन्वयः। कूटस्थत्वान्नात्मनो व्यापारोऽस्तीत्यत्राह—

---

(आत्म)**व्यापारपूर्वको यस्य परिच्छेदः स एव व्यवहारत इदमात्मको विषय** इति पूर्वमन्वयः। कूटस्थचिद्रूपत्वादात्मनो व्यापारो नास्तीत्याशङ्क्याह—**तद्व्यापारेण व्याप्रियमाणस्यैवेति**। देवदत्तव्यापारेण यज्ञदत्तो व्याप्रियमाणो न दृष्ट इत्यत आह—**तदात्मन इति**। परिणाम्यैक्ये आत्मनोपि परिणामित्वं प्राप्तमिति; नेत्याह—

अत एव अहमित्यसम्भिन्नेदमात्मकोऽवभासः इति विभ्रमः केषांचित् । दृष्टश्च लक्षणतः तद्व्यवहारार्होऽपि तमननुपतन् । तद्यथा-अङ्कुरादिफलपर्यन्तो वृक्षविकारो मृत्परिणामपरंपरापरिनिष्पन्नोऽपि घटवल्मीक[कादि]वत् न मृण्मयव्यवहारमनुपतति ॥

---

**तद्व्यापारेणेति** । अहङ्कारव्यापारेणेत्यर्थः । अन्यव्यापारेणान्यस्य व्याप्रियमाणता न दृष्टेत्यत्राह—**तदात्मन इति** । तस्याहङ्कारस्यात्मतामापन्नस्येत्यर्थः । नन्वन्यस्यान्यात्मता न युक्तेत्यत्राह—**मिथ्येति** । उभयत्र सम्बध्यते । अहङ्कारस्य निर्व्यापारत्वात् कथं तदैक्यादात्मनो व्यापारवत्तेत्यत्राह—**यदिति** । यस्याहङ्कारस्येत्यर्थः । अकर्तृशक्तित्वादात्मनोऽहङ्कारोपरागात् कर्तृतेत्युक्तमित्याह —**अनिदमिति** । अविकारीत्यर्थः। चित्त्वमनिदन्त्वं अर्थतः इदन्त्वं तु चेत्यत्वम्, वृत्तिव्यवधानाव्यवधानाभ्यां चेत्यत्वे व्यवहारतः इदन्त्वानिदन्त्वे इत्यर्थः । अज्ञानव्यवहितस्याहङ्कारस्य कथमव्यवधानाद्व्यवहारतोऽनिदन्तेत्यत्राह — **अत एवेति** । अज्ञानमात्रव्यवधानादेवेत्यर्थः। यद्वा, व्यवहारत इदन्त्वं देहादेर्नाहङ्कारस्येत्यत्र वादिनां भ्रान्त्यनुपपत्तिं मानमाह—**अत एवेति** । व्यवहारत इदन्त्वाभावादेवेत्यर्थः ॥

अर्थत इदन्त्वेऽहङ्कारस्य कदाचिदपि तद्व्यवहाराभावो न युक्त इत्यत्राह—**दृष्टश्चेति** । मृत्स्वभावस्याङ्कुरमुद्भाव्य नष्टत्वात् न पश्यतीत्याशङ्क्य, सर्वत्र कथितस्वभावतान्वयान्नेत्याह—**मृत्परिणामेति** । परिणामत्वान्मृन्मयव्यवहाराभाव इत्यत्राह—**घटवल्मीकादिवदिति** । विमर्शेऽपि तत्र मृन्मय-

---

**मिथ्येति** । स्वतः कर्तृत्वशक्तिमत्त्वादात्मनो व्यापारोऽपि स्वत एवास्त्वित्याशङ्क्य, अनिदंचिद्रूपत्वादात्मनश्शक्तिरपि स्वतो न भवतीत्याह—**यदुपरागादिति** । मृत्स्वभावोऽङ्कुरं जनयित्वा नश्यति, न सर्वावस्थास्वनुस्यूततया वर्तते, इत्याशङ्क्य, सर्वत्र कठिनस्वभावतान्वयान्न नश्यतीत्याह—**मृत्परिणामपरम्परापरिनिष्पन्नोऽपीति** । ननु मृत्परिणामत्वं मृन्मयव्यवहारास्पदत्वाभावे अप्रयोजकमित्याशङ्क्याह — **घटवल्मीकादिवदिति । न [मृन्मय] व्यवहारमनुपततीति** । मृन्मयो न भवतीति व्यवहारमनुपततीत्यर्थः ।

व्युत्पन्नमतयस्तु तद्व्यवहारमपि नातीवोल्बणं मन्यन्ते। अत एव निपुणतरमभिवीक्ष्य रूपकपरीक्षकवदहङ्कारं निरूपयतां सम्भिन्नेदंरूपः सः इत्यभिहितम् ॥

यत् पुनः दर्पणजलादिषु मुखचन्द्रादिप्रतिबिम्बोदाहरणम्, तत् अहङ्कर्त्तुरनिदमंशो बिम्बादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरम्, किं तु तदेव तत्, पृथगवभासविपर्ययस्वरूपतामात्रं मिथ्या इति दर्शयितुम्। कथं पुनस्तदेव तत्? एकस्वलक्षणतावगमात्। तथाच यथा बहिःस्थितो देवदत्तो यत्स्वलक्षणः प्रतिपन्नः तत्स्वलक्षण एव वेश्मान्तःप्रविष्टोऽपि

---

व्यवहारो न जायते, अहङ्कारे तु विमर्शे युष्मदर्थता व्यवह्रियते इति त्वयोच्यमानत्वादस्माकमपि कदाचित्तद्व्यवहाराभावो न युक्त इत्यत्राह—व्युत्पन्नेति। उ(त्पन्नं)[ल्बणं] असिद्धमित्यर्थः। यतोऽहङ्कारस्यार्थत इदन्त्वं न व्यवहारतः, अत एव विवेकिनामेवेदन्तावभास इति प्रागभाणीत्याह—अत एवेति। यद्वा, वृक्षादौ विमर्शे मृन्मयव्यवहारो जायते, अहङ्कारे कदाचिदपि नेदन्त्वव्यवहार इत्यत्राह—व्युत्पन्नेति। यतो विवेकिनामिदन्त्वव्यवहारोऽस्ति, अत एव निपुणतरमित्याद्युक्तमित्याह—अत एवेति ॥

यदि स्फटिकोदाहरणेनात्मन्यनात्माध्यासः सिद्धः तर्हि दर्पणाद्युदाहरणं व्यर्थमित्यत्राह—यत्पुनरिति। ब्रह्मणो वस्त्वन्तरत्वाभावे किं तत्र कल्पितत्वं शून्यत्वं वेति, नेत्याह—किन्त्विति। प्रत्यङ्मुखत्वं भेदप्रत्यक्षं च भेदे मानमस्ति, अभेदे तु तन्नास्ति, अतः कथं तदेव तत्स्यादिति शङ्कते—कथं

---

अतोऽहङ्कारस्य लक्षणत इदंत्वं न तु व्यवहारतः, अत एवाविवेकिनां नेदन्ताप्रतिभासः, विवेकिनान्तु तत्प्रतिभास इति पूर्वमेवाभाणीत्याह—अत एवेति।

ब्रह्मणो वस्त्वन्तरत्वाभावे किं तत्र कल्पितत्वमुत शून्यत्वमिति? नेत्याह—[तदेव तदिति।] [आदर्शस्य] मुखाकारपरिणामे स्पर्शेन्द्रियेण मुखनिम्नोन्नततायाः ग्रहणप्रसङ्ग

**प्रतीयते, तथा दर्पणतलस्थितो ऽपि। न तत् वस्त्वन्तरत्वे युज्यते। अपिच-अर्थात् वस्त्वन्तरत्वे सति आदर्श एव विम्बसन्निधावेव तदाकारगर्भितः परिणतः इति वाच्यम्; विरुद्धपरिमाणत्वात् संश्लेषाभावाच्च प्रतिमुद्रेव बिम्बलाञ्छितत्वानुपपत्तेः। तथा सति विम्बसन्निधिलब्धपरिणतिरादर्शः तदपायेऽपि तथैवावतिष्ठेत। न खलु संवेष्टितः कटो निमित्तलब्धप्रसारणपरिणतिः निमित्तापगमे तत्क्षणमेव संवेष्टते यथा, तथा स्यादिति मन्तव्यम्। यतश्चिरकाल-**

---

**पुनरिति**। व्यक्तिप्रत्यभिज्ञानादिति दूषयति—**एकस्वलक्षणेति**। अभिज्ञायां भेदो भाति, स कथं तदपेक्षया प्रत्यभिज्ञया बाध्यते इत्यत्राह—**न तदिति**। ऐक्ये अभिज्ञानुपपत्तेः व्यक्तिगतयोरैक्यभेदज्ञानयोः किं केन बाध्यमित्याशङ्क्य, भेदज्ञानमुपपत्तिहीनत्वादिति वक्तुम्, भेदे सत्यन्यथा व्यक्त्यन्तरोत्पत्त्युपायाभावाद्दर्पणावयवा एव मुखाकारेण परिणता इति वाच्यमित्याह—**अपि चेति**। दर्पणस्य मुखाकारपरिणामे स्पर्शेन्द्रियेण निम्नोन्नतता गृह्येतेत्यत्राह—**गर्भित इति**। मुखलाञ्छितप्रतिमुद्रात्वसम्भवाद्धेत्वसिद्धिरिति; नेत्याह—**विरुद्धेति**। मुद्राया उन्नतो देशः, प्रतिमुद्रायाः निम्नः, प्रतिबिम्बस्य तु अतथात्वेन प्रतिमुद्रातो विरुद्धपरिमाणत्वादित्यर्थः। युक्त्यन्तरं—**संश्लेषेति**। बिम्बेनेति शेषः॥

अस्तु तर्हि परिणामः, न तावतोपपत्तिहीनतेत्यत्राह—**तथा सतीति**। निमित्तापायेऽपि कार्यमपैति, यथा हस्तसंयोगापाये कटविवरणापाय इति; नेत्याह—**न खल्विति**। **संवेष्टते**—नष्टप्रसारणपरिणतिर्भवतीत्यर्थः। हेतुः—**यत इति**। संवेष्टनाहितसंस्कारेणैकप्रकृतौ विरुद्धकार्योदयात् प्रसारणाख्यकार्य-

---

इति; नेत्याह—**तदाकारगर्भित इति**। **निमित्ता(पाये)[पगमे] तत्क्षणमेव संवेष्टते इति**। अपगतप्रसारणपरिणतिर्भवतीत्यर्थः। चिरकालसंवेष्टनाहितसंस्कारेण विरुद्धवेष्टनकार्योदयात् पूर्वप्रसारणपरिणतिनाशः न तु निमित्तापायमात्रादित्याह—(स्व)[य]त इति। सर्वत्र पुष्कलकारणेनै(क)[व] प्रकृ(ति)[त] विरुद्धकार्योदयात् पूर्वकार्यनाशः,

संवेष्टनाहितसंस्कारः तत्र पुनःसंवेष्टननिमित्तम्। तथा च यावत्संस्कारक्षयं प्रसारणनिमित्तानुवृत्तौ न पुनःसंवेष्टनोपजनः। एवं चिरकालसन्निहितबिम्बनिमित्ततदाकारपरिणतिरादर्शः तथैव तदपायेऽपि यावदायुरवतिष्ठेत। न च तथोपलभ्यते। यः पुनः कमलमुकुलस्य विकासपरिणतिहेतोः सावित्रस्य तेजसो दीर्घकालानुवृत्तस्यापि विगमे तत्समकालं पुनर्मुकुलीभावः, स प्रथमतरमुकुलहेतुपार्थिवाप्यावयवव्यापारनिमित्तः। तदुपरमे जीर्णस्य पुनर्मुकुलतानुपलब्धेः। नादर्शे पुनस्तथा पूर्वरूप-

---

नाशः न निमित्तापायादित्यर्थः। अत्र नियामकमाह—**तथा चेति**। निमित्तापायमात्राच्चेद्विवरणापायः, संस्कारापायेऽति संवेष्टेत, वैशेषिकाणां च अपेक्षाबुद्धिनाशात् द्वित्वादिनाश इति प्रक्रियामात्रम्, द्वित्वादेर्वस्तुसहभावित्वादित्यर्थः। इहापि तर्हि पूर्वसंस्थानस्य चिरकालावस्थानसंस्काराद्विरुद्धकार्यस्य तलस्योदये प्रतिबिम्बस्यापायान्न बिम्बापायेऽवस्थानमित्यत्राह—**एवमिति**। एवं सति उत्पन्नमात्रे दर्पणे चिरकालावस्थितमुखपरिणामसंस्कारेऽपि बिम्बापायमात्रात् प्रतिबिम्बापायदर्शनं न स्यादित्यर्थः॥

चिरकालावस्थितविकासपरिणामसंस्कारप्रचयेऽपि सवितृकिरणापाये विकासापायदर्शनवद् बिम्बापाये प्रतिबिम्बापायदर्शनं स्यादिति; नेत्याह—**यः पुनरिति**। **मुकुलीभावः**—विकासापायः। नालद्वारा दलं प्रविष्टपार्थिवाप्यावयवव्यापारजन्यान्मुकुलीभावाद्विकासापायो न निमित्तापायादित्यत्र हेतुः—**तदुपरमे**

---

न तु निमित्तापायमात्रादित्येतत् कुतोऽवगम्यत इति? तत्राह—**तथा चेति**॥ **यः पुनरित्यधिकां** शङ्कामनूद्य, तत्रापि स्वकारणात् विरुद्धकार्योदय एव विकासनाशहेतुः न निमित्तापाय इत्याह—**स प्रथमतरेति**। किं स्वपुष्कलकारणेन विरोधिपरिणामोदयाद्विकासनाशः किं वा निमित्तापायात् इति संशय इति, तत्राह—**तदुपरमे** इति। **जीर्णस्येत्येतत्** मुकुलकार्यपुष्कलकारणव्यापारोपरमस्य सूचकत्वेनोक्तम्॥

**परिणामहेतुरस्ति। अत्राह-भवतु न वस्त्वन्तरम्। तदेव तदिति तु न क्षम्यते। शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्वदर्शनात्। मैवम्-तत्र हि बाधदर्शनान् मिथ्याभावः। नेह स बाधो दृश्यते। यः पुनः दर्पणापगमे तदपगमः, न स बाधः। दर्पणे ऽपि तत्प्रसङ्गात्॥**

---

**इति**। व्यापारोपरमः कुतो ज्ञेय इत्यत्राह—**जीर्णस्येति**। आदर्शेऽपि तर्हि मुखविरुद्धकार्यात्तलाख्यात् मुखापायस्स्यात, अतो बिम्बापाये प्रतिबिम्बस्याप्यपायदर्शनं घटते इत्याशङ्क्य, तलहेतोः कारुव्यापारस्याभावान्नेत्याह—**नादर्श इति**। मुखपरिणामेऽप्येतत्तुल्यम्। न दर्पणादौ मुखव्यक्त्यन्तरमस्ति, तद्धेतुशून्यत्वात्, शशशृङ्गवत् इत्युक्तम्। तर्हि शुक्तिरूप्यवन्मिथ्यात्वापत्तेः न मुखैकत्वमिति शङ्कते—**अत्राहेति**। ननु प्रत्यभिज्ञया एकत्वमवगतमिति; नेत्याह—**शुक्तिकेति**। मिथ्यारूप्येऽपि प्रत्यभिज्ञा दृश्यते मदीयं इदं रूप्यमितीत्यर्थः॥

दूषयति—**मैवमिति**। तत्र नात्र रूप्यं किन्त्वन्यत्र रूप्यमिति देशमात्रबाधया सत्यरूप्येणैकतया न प्रत्यभिज्ञातं रूप्यम्, अतस्तस्य नेदं रूप्यमिति स्वरूपेण बाधात् प्रत्यभिज्ञाभ्रम इत्यर्थः। इह तु नात्र मुखम्, किन्तु (उदङ्मुख)[मदीयं मुख]मिति सत्यमुखेनैकतया प्रत्यभिज्ञायते, अतो मुखस्य स्वरूपेणैव बाधो नास्तीत्याह—**नेहेति**। दृश्यते अध्यक्षेणापगमः इत्याशङ्क्य, न स बाधः, दर्पणस्यापि बाधापातादित्याह—**यः पुनरिति**॥

संसारिणो बाधं विना मोक्षानुपपत्तेः तत्त्वमसिवाक्यं पदार्थबाधकम्, अतो न प्रतिबिम्बस्य दृष्टान्तत्वमिति शङ्कते—**ननु तत्त्वमसीति**। सोऽयं

---

सामानाधिकरण्येन प्रतिपन्नयोस्सामानाधिकरण्यनिषेधोऽन्यतरनिषेधेन व्याप्तो दृष्टो गुणगुण्यादौ, अतो नेदं रजतमित्यत्रापि तादात्म्यनिषेधोऽन्यतररजतनिषेधपुरस्सरो भवितुमर्हतीत्याह—**मैवं—तत्र हीति**। संयोगेनाधाराधेयभावेन प्रतिपन्नयोराधाराधेयभावनिषेधोऽन्यतरनिषेधं विना दृष्टो भूतलघटादौ, अतो मुखदर्पणयोरपि तथैव भवितुमर्हतीत्याह—**नेहेति**॥

ननु तत्त्वमसिवाक्यात् बाधो दृश्यते। मैवम्-तत्र तत्त्वमिति विम्बस्थानीयब्रह्मस्वरूपता प्रतिविम्बस्थानीयस्य जीवस्योपदिश्यते। अन्यथा न तत्त्वमसीति स्यात्, किन्तु न त्वमसीति भवेत् न रजतमस्तीतिवत्। किं च—शास्त्रीयोऽपि व्यवहारः प्रतिबिम्बस्य पारमार्थिकमेव बिम्बैकरूपत्वं दर्शयति "नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" इति॥

यस्तु मन्यते, न पराक्प्रवणप्रवृत्तनायनरश्मिभिः बिम्बमेव भिन्नदेशस्थं गृह्यते, किन्तु दर्पणप्रतिस्फालितैः परावृत्त्य प्रत्यङ्मुखैः स्वदेशस्थमेव बिम्बं गृह्यते इति; तमनुभव एव निराकरोतीति न पराक्रम्यते। कथं पुनः परिच्छिन्नमेकमेकस्वभावं विच्छिन्नदेशद्वये सर्वात्मना अवभास-

---

देवदत्त इतिवत् तादात्म्यपरं न पदार्थबाधपरमिति दूषयति—**मैवमिति**। न च सोऽयं स्थाणुः पुमानेष इतिवत् बाधायां सामानाधिकरण्यम्, फलिनोऽसत्त्वेनानिर्मोक्षापातादित्यर्थः। बिम्बभूतादित्य(वत्)[स्य] प्रतिबिम्बितस्य न **वारिस्थमिति** ईक्षणनिषेधान्यथानुपपत्त्या प्रतिबिम्बं बिम्बमेवेत्याह—**किञ्चेति**॥

अख्यातिवादी 'न बिम्बादन्यत्वेन प्रतिबिम्बं नाम दर्पणे भाति, किन्तु बिम्बमेव दर्पणाविविक्तं भाति' इति वक्ति, तदनुवदति—**यस्तु मन्यत इति**। स्पष्टप्रत्यङ्मुखावभासं दर्पणान्तरनुप्रविष्टमिव स्वमात्मानं पुरुषान्तरवन्निरीक्षमाणमिवेदन्तया भासमानं मुखं तथा न भातीति वदन् कथमाप्तः स्यादिति दूषयति—**तमनुभव इति**। मूर्तद्रव्यस्यैकस्य युगपत् कार्त्स्न्येन देशद्वयवर्तित्वं लोके क्वचिदपि न दृष्टम्, अतो न प्रतिबिम्बस्य सत्यतेति शङ्कते—**कथं पुनरिति**।

---

**कथमुभयत्र पारमार्थिकमिति** पूर्वमन्वयः। आकाशस्य देहद्वये परमार्थत्वं दृष्टमित्याशङ्क्य तद्व्यावृत्त्यर्थमाह—**परिच्छिन्नमिति**। परिच्छिन्नयोर्घटपटयोर्देशद्वये सत्यत्वमस्तीत्याशङ्क्याह — **एकमिति**। परिच्छिन्नस्यैकस्य वा पितापुत्रसम्बन्ध-

**मानमुभयत्र पारमार्थिकं भवति? न वयं विच्छेदावभासं पारमार्थिकं ब्रूमः। किं तु एकत्वम्। विच्छेदस्तु मायाविजृम्भितः। न हि मायायामसम्भावनीयं नाम। असम्भावनीयावभासचतुरा हि सा॥**

---

दृष्टमेकस्याकाशस्य उभयत्रान्यत्वमित्यत्राह---**परिच्छिन्नमिति**। परिच्छिन्नयोर्घटपटयोर्देशद्वये सत्यता दृष्टेत्यत्राह---**एकमिति**। दूरस्थवृक्षेष्वनेकेष्वेकबुद्धिबोध्यत्वेनैकत्वमस्तीति; नेत्याह---**एकस्वभावमिति**। संयोगस्यैकस्य परिच्छिन्नस्य संश्लिष्टावयवद्वये सत्यता दृष्टेत्यत्राह---**विच्छिन्नेति**। उक्तस्वभावस्यापि वंशस्य विच्छिन्नदेशद्वये सत्यता दृष्टेत्यत्राह---**सर्वात्मनेति**। उक्तस्वभावमपि रूप्यमुभयत्र दृष्टमित्यत्राह---**पारमार्थिकमिति**। एकमेकदेशस्थमेव मुखं भ्रमात् भिन्नं भिन्नदेशस्थं च भातीत्युच्यते, न तूभयत्र सत्यतेति दूषयति---**न वयमिति**। किं तर्हि इदमेकस्मिन्नेकदेशे वस्तुनि भिन्नं भिन्नदेशं च भातीत्यत्राह---**विच्छेदस्त्विति**। माया वा कथं मृदादिष्वदृष्टं मानविरुद्धं जनयेदित्यत्राह---**न हि इति**। तर्हि मायावत् कारणान्तरमपि किमित्यनुपपन्नं न जनयेदित्यत्राह---**असम्भावनीयेति**॥

---

स्योभयत्र सत्यत्वं दृश्यत इत्याशङ्क्य, एकत्र पितृत्वमन्यत्र पुत्रत्वमित्युभयात्मत्वात् तस्य न विरोधः, एकस्वभावस्य मुखस्य न तथात्वमित्याह---**एकस्वभावमिति**। एकरूपस्याप्यवयविद्रव्यस्यावयवद्वये सत्यत्वं दृश्यत इत्याशङ्क्य, संश्लिष्टावयवद्वये तस्य सत्यत्वमस्तु, इह तु विच्छिन्नदेशद्वये न सम्भवतीत्याह---**विच्छिन्नदेशद्वये इति**। उक्तस्वभावस्यापि इह वंशस्य विच्छिन्नभित्तिद्वये सत्यत्वं दृश्यते इत्याशङ्क्य, तत्रांशद्वयेनोभयत्र सत्यत्वम्, इह तु सर्वात्मनोभयत्र सत्यत्वं न सम्भवतीत्याह---**सर्वात्मनेति**॥

न मृदादिकारणान्तरेष्वत्यन्तानुपपन्नकार्यजनकत्वं दृष्टम्, तद्वदत्रापि न सम्भवतीत्याशङ्क्याह---**न हीति**। तर्हि कारणान्तराणामपि मायावदत्यन्तानुपपन्नकार्यजनक(त्वमिति) [त्वं कुतो] न भवेदित्याशङ्क्य, लोके हि यदत्यन्तं अनुपपन्नमुपपन्नवदवभासते तत्कारणत्वेन कल्पितस्य मायात्वव्यपदेश इत्याह---**असम्भावनीयेति**॥

ननु सत्येव बिम्बैकतावगमे प्रतिबिम्बस्य तद्गतो विच्छेदादिमिथ्यावभासः, तथा ब्रह्मैकतावगमेऽपि जीवस्य विच्छेदादिमिथ्यावभासो न निवर्तितुमर्हति। उच्यते-देवदत्तस्याचेतनांशस्यैव प्रतिबिम्बत्वात् सचेतनांशस्यैव वा प्रतिबिम्बत्वे प्रतिबिम्बहेतोः श्यामादिधर्मेणेव जाड्येनाप्यास्कन्दितत्वात् न तत् प्रतिबिम्बं बिम्बैकरूपतामात्मनो जानाति अचेतनत्वात्। तथा चानुभवः न बिम्बचेष्टया विना प्रतिबिंबं चेष्टते इति। यस्य हि भ्रान्तिरात्मनि परत्र वा समुत्पन्ना तद्गतेनैव सम्यग्ज्ञानेन सा निवर्तते। यस्तु जानीते देवदत्तः प्रतिबिम्बस्यात्मनोऽभिन्नत्वं न स

---

न जीवो ब्रह्मैकत्वमात्मनो जानाति, प्रतिबिम्बत्वात् सम्मतवत्, किञ्च, ज्ञाने सत्यपि तेन न जीवस्य भेदकर्तृत्वादि निवर्त्यं स्यात्, उपाधिमात्रनिवृत्त्या तु स्यात्, सोपाधिकभ्रमत्वात्, प्रतिबिम्बगतविच्छेदादिवदिति शङ्कते-नन्विति। आद्यचोद्यमादौ दूषयति—**उच्यत इति**। देहस्यैव चेतनत्वान्नाचेतनांशस्य प्रतिबिम्बिततेत्यत्राह—**सचेतनेति**। दर्पणजाड्येन प्रतिबद्धत्वं स्वभावजाड्यं वा उपाधिरित्यर्थः। प्रसिद्धप्रतिबिम्बस्याचेतनत्वे हेत्वन्तरम्—**तथा चेति**। अस्य चेतनत्वे स्वातन्त्र्यात् तच्चेष्टया विनापि इदं चेष्टेतेत्यर्थः। बिम्बस्यैव देवदत्तस्य तत्त्वज्ञानाश्रयत्वं दृष्टम्। एवं बिम्बत्वात् ब्रह्मण एव तत्त्वज्ञानाश्रयत्वं स्यादिति विवक्ष्येतेत्यत्राह—**यस्य हीति**। विषये सप्तम्यौ। न बिम्बत्वकृतं भ्रमनिरासितत्वज्ञानाश्रयत्वम्, किन्तु भ्रान्तत्वकृतम्, तदप्यज्ञत्वकृतम्, तदपि जीवत्वकृतम्, सर्वज्ञत्वात् ब्रह्मण इत्यर्थः॥

तर्हि जीवैकत्वं ब्रह्म स्वस्य वेत्ति वा? न वा? न चेत् सर्वज्ञताहानिः, वेत्ति चेत् ब्रह्म स्वात्मन्येव संसारं पश्येदित्याशङ्क्य, आद्यमुपेत्याह—**यस्त्विति**। देवदत्तः स्वात्मानमादर्शे अल्पत्वादिगुणं पश्यन्नपि तत्त्वज्ञानप्रतिहतत्वात् नानुशोचति, एवं जीवाख्यप्रतिबिम्बे स्वात्मनि संसारं पश्यदपि ब्रह्म तत्त्वज्ञानित्वान्न शोचति, तत्त्वज्ञानसंसारौ चावदातश्यामत्वादिवन्नान्योन्यत्र गच्छत इत्यर्थः।

तद्गतेन दोषेण संस्पृश्यते। नापि ज्ञानमात्रात् प्रतिबिम्बस्य निवृत्तिः तद्धेतोः दर्पणादेः पारमार्थिकत्वात्। जीवः पुनः प्रतिबिम्बकल्पः सर्वेषां नः प्रत्यक्षश्चिद्रूपः, नान्तःकरणजाड्येनास्कन्दितः। स चाहंकर्तृत्वमात्मनो रूपं मन्यते, न बिम्बकल्पब्रह्मैकरूपताम्। अतो युक्तस्तद्रूपावगमे मिथ्यापगमः॥

ननु तत्र विभ्राम्यतो विभ्रमहेतुर्दर्पणालक्तकादि परमार्थवस्तु संनिहितमस्ति, न तथेह किञ्चित् सर्वत्रैव

---

एकत्वज्ञाने सत्यपि तेन विच्छेदादि न निवर्त्यत इत्युक्तं दूषयति—**नापीति**। उपाधेरज्ञानजन्यत्वं प्रतिबिम्बगतविच्छेदादेः ज्ञानानिवर्त्यत्वे प्रयोजकमित्यर्थः। तर्हि जीवो न प्रतिबिम्बः चेतनत्वात् देवदत्तवदित्याशङ्क्य, "रूपं रूपं प्रतिरूपो बभूव", "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" "अतएव चोपमा सूर्यकादिवत्" इति श्रुतिस्मृतिसूत्रैः नेत्याह—**जीव इति**॥

तर्हि जीवस्य स्वभावजाड्यं अन्तःकरणजाड्येन प्रतिबद्धत्वं वा स्यात् प्रतिबिम्बत्वात् सम्मतवदित्याशङ्क्य, अध्यक्षबाधमाह—**प्रत्यक्ष इति**। तर्हि अहङ्कारोऽप्यज्ञानाजन्यः उपाधित्वादित्यत्राह—**स चेति**। अज्ञानजन्याहङ्कारोपाधिना इति उक्तमिति शेषः। अतः तत्त्वज्ञानेनोपाधिनिवृत्तेः भेदकर्तृत्वादिनिवृत्तिः सिद्धेत्याह—**अतो युक्त इति**। अज्ञानोपाधिना सूक्ष्मरूपेणेश्वरात् भिन्नस्यैव अज्ञानकार्याहङ्कारेण पुनः स्थूलरूपेण भेदमाश्रित्याहङ्कारोपाधिकत्वं जीवभेदस्योक्तमिति भावः। न चैवमुपाधिभेदात् जीवभेदः स्यात्, स्वतन्त्रोपाधिभेदे जीवभेद इत्यङ्गीकारादित्यूह्यम्॥

अहङ्कारोपाधिकस्य जीवब्रह्मभेदस्य कर्तृत्वाद्यध्यासस्य च दृष्टान्तद्वयेनैव सिद्धेः किं रज्जुसर्पदृष्टान्तेन वेदान्तोक्तेनेत्यत्राह—**ननु तत्रेति**। कर्तृत्वाद्य-

---

अहंकर्तृत्वतदभिमानलक्षणज्ञानज्ञेयाध्यासकार्यस्य त्वज्ञानेनानन्यथासिद्धान्वयव्यतिरेकवत्त्वेन तद्विलसितत्वात् तत्त्वज्ञाननिवर्त्यत्वमाह—**स चेति**॥

चिद्विलक्षणे विभ्रमविलासाभिमानिनः इति मा भूदाशङ्केति रज्जुसर्पमुदाहरन्ति ॥

ननु तत्रापि यदि नामेदानीमसन्निहितः सर्पः, तथापि पूर्वनिर्वृत्ततदनुभवसंस्कारः समस्त्येव। बाढम्, इहाप्यहङ्कर्तृतातत्संस्कारयोर्बीजाङ्कुरयोरिवानादेः कार्यकारणभावस्य वक्ष्यमाणत्वात् तत्संस्कारो विभ्रमहेतुः विद्यते। तत्र यद्यपि अनिर्वचनीयतयैव अरुणादिना स्फटिकादेः सावयवत्वेन सम्भेदयोग्यस्यापि असम्भेदावभासः सिद्धः, तथापि तदासङ्गीव स्फटिकप्रतिबिम्बमुत्प्रेक्षते। रज्ज्वां पुनः सर्पबुद्धिरेव, न तत्सम्भिन्नत्व-

---

ध्यासोपाधेरहङ्कारस्य निरुपाधिकत्वेनाध्यासं वक्तुमित्यर्थः। सर्पाध्यासोऽपि सोपाधिक इति शङ्कते—**ननु तत्रापीति**। दृष्टान्ते संस्कारमङ्गीकृत्य, दार्ष्टान्तिकेऽपि सोऽस्ति स्वतन्त्रपदार्थोपाधिरेव निरस्य इति दूषयति—**बाढमिति**। न च पूर्वप्रमाणसंस्कारस्यैवोपाधित्वात् पूर्वाहङ्कारसंस्कारस्य भ्रान्तिजन्यस्य नोपाधितेति वाच्यम्; संस्कारे सति मानजन्यत्वाभावापराधेन भ्रान्त्यभावस्यादृष्टत्वेन प्रमाणविशेषणस्याप्रयोजकत्वादित्यर्थः। सोपाधिकस्य निरुपाधिकस्य च आत्मनि दृष्टान्तत्रयेणैव सिद्धत्वान्न घटाकाशदृष्टान्तेन वेदान्तोक्तेन कृत्यम्। न च असङ्गत्वसिद्ध्यर्थम्, तस्यापि स्फटिकलौहित्यदृष्टान्तेनैव सिद्धेरित्यत्राह—**तत्रेति**। स्फटिकलौहित्यदृष्टान्ते इत्यर्थः। **अरुणादिना स्फटिकादेः** गुणगुणित्वेन **सम्भेदयोग्यस्यापि अनिर्वचनीयतया** अरुणादेरसम्भेदावगमः **सिद्ध** इत्यन्वयः। तर्हि रज्जुसर्पदृष्टान्तेन सिध्यतीत्यत्राह—**रज्ज्वां पुनरिति** ॥

---

अहङ्कारभ्रमस्य मुखभेदस्फटिकलौहित्यादिभ्रमवत् भ्रमत्वादेव दर्पणादिवत् स्वतन्त्रोपाधिना भवितव्यमित्युच्यते? किं वा पूर्वानुभवसंस्कारलक्षणोपाधिना भवितव्यमित्युच्यते? इति विकल्प्य, रज्जुसर्पोदाहरणे व्यभिचारादाद्यः कल्पो नाङ्गीकृतः, द्वितीयोऽङ्गीकृतः; तत्रापि प्रमाणसंस्कारो नाङ्गीकृतः, संस्कारमात्रे सत्येव तस्य प्रमाणसंस्कारत्वाभावापराधेन भ्रमानुदयादर्शनादित्याह—**बाढमिति** ॥

मसम्भिन्नत्वं वा तस्याम्। तेन 'असङ्गो नहि सज्जते' 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतिसमर्पितासङ्गता आत्मनो न स्पष्टं दर्शितेति तदर्थं घटाकाशोदाहरणम्। तत्र हि तत्परामर्शाद्दृते न भेदरूपकार्यसमाख्याः स्वगता दृश्यन्ते। एतच्च सर्वमुदाहरणजातं श्रुतितन्न्यायानुभवसिद्धस्य तत् असम्भावनापरिहाराय बुद्धिसाम्यार्थं च, न वस्तुन एव साक्षात् सिद्धये॥

तदेवं यद्यपि चैतन्यैकरसोऽनिदमात्मकत्वादविषयः, तथाप्यहङ्कारे व्यवहारयोग्यो भवतीति गौण्या वृत्त्या अस्मत्-

---

घटाकाशदृष्टान्तेन कथमसङ्गत्वं सिध्यतीत्यत्राह—**तत्र हीति**। घटाकाशस्य (सर्व)[अन्य]स्माद्भेदः अल्पत्वादिपरिमाणं रूपम् अत्र दशशत[अन्नघृतशाकादि]पदार्थानां स्थित्यवकाशोऽस्तीत्यादि कार्यं घटाकाश इत्याख्या च घटाद्युपाधिपरामर्शं विना स्वगताः—स्वसम्बद्धाः न दृश्यन्ते इत्यर्थः। दृष्टान्तैरेवाविकारित्वैकत्वासङ्गत्वानां सिद्धत्वान्नागमेन कृत्यमित्यत्राह—**एतच्चेति**। प्रतिदृष्टान्तसम्भवात् मानं विना दृष्टान्तमात्रादर्थसिद्ध्ययोगात् श्रुत्या तत्रोक्तन्यायाच्चानुभवसिद्धस्य एतत्सर्वं यस्मात्, **तत्**—तस्मात् असम्भावनाविपरीतभावनाव्यावृत्त्यर्थम्, तद्वदिदमपि सम्भवतीति बुद्धिसिद्ध्यर्थं च। अतो नागमवैयर्थ्यम्। नापि दृष्टान्तस्येत्यर्थः॥

**अस्मत्प्रत्ययविषयत्वादिति भाष्यं** आत्मन्यध्यासोपपत्त्यर्थम्। तत्रासत्प्रत्ययं तन्निमित्ताध्यासं चोक्त्वा, विषयशब्दार्थमाह—**तदेवमिति**। उक्तेन प्रकारेणाहमिति प्रतीयमानस्येदमनिदंरूपत्वादहङ्कारोऽध्यस्तोऽस्ति यस्मात्तस्मादित्यर्थः। गौण्या वृत्त्या विषयशब्दप्रयोगे किं गुणसाम्यमिति; तदाह—

---

**भेदरूपकार्यसमाख्या इति**। घटावाकाशस्य (सर्व)[अन्य]स्माद्भेदः अल्पत्वमहत्वादिपरिमाणविशेषो रूपं अत्र दशशतसहस्रपदार्थानां स्थित्यवका[शोऽस्तीत्यादि][शदानादि]कार्यम् घटाकाश इत्याद्याख्या च घटाद्युपाधिपरामर्शं विना न दृश्यत इत्यर्थः। **बुद्धिसाम्यार्थमिति**। तद्वदिदमपि सम्भवतीति बुद्धिसिद्ध्यर्थमित्यर्थः॥

**प्रत्ययविषयतोच्यते। प्रमेयस्य च व्यवहारयोग्यत्वाव्यभिचारात्॥**

**ननु व्यवहारयोग्यत्वे अध्यासः, अध्यासपरिनिष्पन्नाहम्प्रत्ययबलात् व्यवहारयोग्यत्वं इति प्राप्तमितरेतराश्रयत्वम्, न—अनादित्वेन प्रत्युक्तत्वात्। तत्र एवम्भूतस्य अहङ्कर्तुरिदमंशस्य ज्ञानसंशब्दितो व्यापारविशेषः सकर्मत्वात् कर्मकार-**

---

प्रमेयस्य चेति॥

सविकल्पकाध्यासस्य सविकल्पकमेवाधिष्ठानमिति व्याप्तेः चितो निर्विकल्पकत्वाच्च अहङ्काराध्यासेन सविकल्पे चैतन्ये अहङ्काराध्यास इति वाच्यम्, तच्चायुक्तमिति शङ्कते—**नन्विति**। अहङ्काराध्यासस्य प्रवाहरूपेणानादित्वात् पूर्वाहङ्काराध्यासेन सविकल्पकचैतन्ये स्यादुत्तराहङ्काराध्यास इत्याह—**न अनादीति**॥

आत्मनो निर्विकारत्वादहङ्कारस्याचेतनत्वाच्च ज्ञानक्रियाभावात् प्रमात्रादिव्यवहारो न स्यात्, न च स्वरूपचैतन्यस्य विषयप्रकाशत्वात् व्यवहारः स्यात्, तस्याविशेषात् सर्वगतत्वाच्च सदा सर्वप्रकाशः स्यात् इत्यव्यवस्थेत्यत्राह—**तत्रेति**। आत्मन्यन्तःकरणाध्यासे सिद्धे सति इदमनिदंरूपस्याहङ्कर्तुर्ज्ञानक्रियाऽस्तीत्यन्वयः। तर्हि चितोऽपि तत्रान्तर्भावात् विकारः स्यादित्यत्राह—**इदमंशस्येति**। अन्तःकरणस्य सत्त्वप्रधानतया प्रकाशस्वभावत्वात् सावयवत्वाचादृष्टेन्द्रियादिसाचिव्यात् ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणामः ज्ञायते अनेनेति व्युत्पत्त्या ज्ञानमिति शब्द्यते न मुख्यज्ञानमित्याह—**ज्ञानसंशब्दित इति**। रागादिव्यापारं व्यावर्तयति—**विशेष इति**। अथापि कथमन्तःकरणस्य विषयविशेषसम्बन्धः स्यादित्यत्राह—**सकर्मत्वादिति**।

---

**एवम्भूतस्याहङ्कर्तुरिति**। इदमनिदंवस्तुगर्भितस्येत्यर्थः। सतुषतण्डुलं परिणमते इत्युक्ते तुषस्य तण्डुलस्य च परिणामवदहङ्कारचैतन्योरपि परिणामप्राप्तिपरिहाराय निष्कृष्याह—**इदमंशस्येति**: [**ज्ञानसंशब्दित**] इति। ज्ञानमिति शब्द्यते केवलम्, न तु मुख्यज्ञानमित्यर्थः। रागादिव्यापारात् व्यावर्तयति—**व्यापारविशेष इति**।

काभिमुखं स्वाश्रये कञ्चिदवस्थाविशेषमादधाति। स्वाश्रयविकार-हेतुत्वात् क्रियायाः। स च प्राप्नोतिक्रियाहितकर्तृस्थविशेषवत् कर्म-सम्ब[न्धात्]न्धो ज्ञातुः ज्ञेयसम्बन्धः इति गीयते। तेन विषय-विशेषसम्बद्धमेवान्तःकरणं चैतन्यस्यावच्छेदकं। कर्मकारकमपि प्रधानक्रियासिद्धौ स्वव्यापाराविष्टं चैतन्यविवर्त्तत्वात् प्रधान-

---

अभिमुखं—सम्बद्धमित्यर्थः। स चेति। विशेषः। अथाप्यात्मनः कथं विषय-विशेषावभासः? येनाव्यवस्था न स्यादित्यत्राह—तेनेति। सर्वत्राविद्याच्छन्नमपि चैतन्यमन्तःकरणं येन येनाकारेण विवर्तते तेन तेनाकारेण व्यज्यते, तस्य सत्त्वगुणत्वात्, अयःपिण्डेन चतुष्कोणत्वाद्यवस्थेनाग्निरिव। अतो विषयविशेषसम्बद्धान्तःकरणावच्छिन्नचैतन्यस्य विषयविशेषाकारेण भानात् तत्सिद्धिरित्यर्थः॥

प्रमातृरूपावच्छिन्नं चैतन्यं तद्रूपेण भायात्, न विषयाकारेण, अतो न विषयप्रकाश इत्यत्राह—कर्मेति। अन्तःकरणस्य सत्त्वप्रधानतया स्वस्मिन्निव स्वसम्बद्धेऽपि चिदभिव्यक्तियोग्यत्वापादकत्वात् कर्मकारकमप्यन्तःकरण-परिणामे सति तेन स्वव्याप्तेन परिणामेन चिदभिव्यक्तियोग्यतां प्राप्तं सदपरोक्षता-मभिव्यनक्ति, स विषयावभास इत्यर्थः। तत्राविद्यमानं कथं व्यञ्जयेदित्यत्राह—चैतन्यस्येति। अवच्छेदकभेदे अवच्छिन्नचिद्भेदात् कथं मातृमेयसंविदोः

---

सत्त्वगुणप्रधानाहङ्कारस्य प्रकाशगुणवत् प्रभापरिणाम इत्यर्थः। अवस्थाविशेषस्य यथा स्वेन समानाश्रयसमानविषयविकारान्तरहेतुत्वं नास्ति, तद्वत् ज्ञानरूपपरिणामस्यापि न सम्भव-तीत्याशङ्क्य, प्राप्तेरेवंरूपविकारान्तराहेतुत्वेऽपि, गमनस्य सकर्मकक्रियात्वादेवंविधप्राप्ति-लक्षणविकारहेतुत्वं दृष्टम्, एवमिहापि सम्भवतीत्याह—स्वाश्रयविकारेति। प्राप्नोति-क्रियेति। प्राप्तिफलहेतुक्रियेत्यर्थः। कर्मसम्बन्धात्। कर्मकारकाभिमुखावस्थाविशेष-रूपत्वादित्यर्थः। घटे चैतन्यस्यापि विद्यमानत्वात् कथमपरोक्षतां घटः स्वात्मन्यभिव्यञ्जये-दित्याशङ्क्याह—चैतन्यविवर्तत्वादिति॥

**क्रियाहितप्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपामपरोक्षतामभिव्यनक्ति । ततश्चात्मनोऽन्तःकरणावस्थाविशेषोपाधिजनितो विशेषो विषयानुभवसंशब्दितो विषयस्थापरोक्षैकरसः फलमिति क्रियैकविषयता फलस्य युज्यते । एवं चाहङ्कर्त्ता स्वांशचैतन्य-**

---

तादात्म्यम् ? अतादात्म्ये वा कथं मयेदमवगतमिति मातृमेयसम्बन्धसंविदेका स्यात् ? संविद्भेदे मातृमेययोरेकस्यां संविद्यवभासायोगात् इत्यत्राह—**प्रधानेति**। **प्रधानक्रियाहितेति** प्रधानक्रियैवोपचारात् कथ्यते। मातृमेयसम्बद्धस्य परिणामस्यैकत्वेन व्यञ्जकाभेदात् व्यङ्ग्याभेद इत्यर्थः। यद्वा, मातृमेयसम्बन्धस्यैकत्वात् तदवच्छिन्नसंविदैक्यमित्यर्थः ॥

अन्तःकरणे घटे चाभिव्यक्तौ किं घटावच्छिन्ना चित् प्रमाता ? किं वा अन्तःकरणावच्छिन्नेति विशेषो न स्यादित्यत्राह—**ततश्चेति**। **विशेष** इत्यत्र प्रमातेति शेषः। कर्तुः प्रमातृत्वात् कर्त्राख्यान्तःकरणावच्छिन्ना चित् प्रमातेत्यर्थः। चैतन्यस्यैकत्वात् मातैव मानफलं चेति विरुद्धं स्यादित्यत्राह—**विषयेति**। विषयाश्रितत्वात् फलस्य विषयावच्छिन्ना चित् फलम्, मानस्य क्रियात्वात् परिणामावच्छिन्ना चित् मानमित्यर्थः। अन्तःकरणात्माश्रयत्वेन भिन्नाश्रयत्वात् घटान्तःकरणविषयत्वेन भिन्नविषयत्वात् क्रियाफलयोरेकाश्रयत्वैकविषयत्वनियमो न स्यादित्यत्राह—**इति क्रियेति**। **विशेष** इत्यत्राश्रयस्याप्युपलक्षणम्। अन्तःकरणात्मनोरैक्याध्यासात् एकाश्रयत्वम्, चैतन्यस्यापि घटावच्छेदकत्वादेकविषयत्वमित्यर्थः। सर्वगतस्याप्यात्मनोऽविद्यावृतस्यान्तःकरणोपाधिना अहङ्कर्तृत्वं प्राप्तस्य इदमंशस्य परिणामित्वादनिदमंशस्य चिद्रूपत्वाच्च परिच्छिन्नान्तःकरणोपाध्यभिव्यक्तिमपेक्ष्य विषयविशेषप्रमातृत्वं सिद्धमित्युक्तं निगमयति—**एवं**

---

**प्रधानक्रियाऽऽहितेति**। प्रधानक्रियाजनितावस्थाविशेषाख्यसम्बन्धविशिष्टान्तःकरणावच्छिन्नेत्यर्थः। **एवञ्चाहंकर्तेति**। इदमनिदंवस्तुरूपवस्तु[द्वय]गर्भाहङ्कर्ता स्वैकदेशानिदंचैतन्यबलेन प्रतिबिम्बेनानुभविता भवति, स्वांशेदमात्मकजडाकारेण बुद्धि-

**बलेन व्यापाराविष्टतया च प्रमाता इति 'बुद्धिस्थमर्थं पुरुषश्चेतयते' इत्युच्यते। तत्र च प्रमातुः स्वयंज्योतिषो विषयसम्बन्धसञ्जातविशेषो ऽनुभवो ऽपरोक्षतया सर्वान् प्रत्यविशिष्टोऽपि कारकाणां सम्भूय प्रधानक्रियासाधनत्वात् येन सह साधनं तन्निष्ठ एव, नान्यत्र। कर्मकारकमपि येन सह साधनं तस्यैवापरोक्षम्, गन्तृसम्बन्ध इव ग्रामस्य॥**

---

**चेति**। बुद्धिस्थमर्थं पुरुषश्चेतयते इति साङ्ख्याः, तद्विरुद्धं आत्मा स्वचैतन्योपरक्तं चेतयत इति; तत्राह—**इति बुद्धिस्थमिति**। अख्यातेरपास्तत्वात् पूर्वं बुद्धिस्थं बुद्ध्यात्मतां प्राप्तः पश्चाच्चेतयत इति मत्वा तद(पी)[भिधीयते इ]त्यर्थः। घटे अभिव्यक्तस्यापि वर्तिस्थदीपवत् सर्वप्रकाशकत्वं किं न स्यादित्यत्राह—**तत्र चेति**। तत्रैवाभिव्यक्तिः नान्यत्रेति स्थिते **कारकाणां सम्भूय क्रियासाधनत्वात्** कर्मणा सह तानि साधनम्, ततश्च **येन** कर्मणा **सह** तानि **साधनम्, तन्निष्ठमेव** तैः साध्यक्रियाफलं ग्रामजन्यगतिक्रियाफलवदित्यर्थः। तर्हि तेनैवातिशयेन स घटः सर्वद्रष्टॄणां प्रकाशेत डित्थप्रक्षिप्तप्रदीपेनेवान्येषामित्यत्राह—**कर्मकारकमपीति**। **येनेति**। प्रमातृविशेषेणेत्यर्थः। **गन्तृसम्बध इव ग्रामस्येति**। येन गन्तृविशेषेण सह ग्रामो गतिसाधनं तस्यैव यथा तद्गतिसाध्या ग्रामप्राप्तिः तद्वदित्यर्थः॥

विषयस्य चैतन्यविवर्तत्वात् तदभिन्नस्यापि चैतन्यस्याहंसंविदैक्यमुक्तम्।

---

व्यापारकर्तृत्वेन प्रमाता च भवतीत्यर्थः। **बुद्धिस्थमिति**। बुद्धौ प्रतिबिम्बितं बुद्ध्यभिव्यक्तस्वप्रतिबिम्बचैतन्येनैक्याध्यासापन्नं चार्थं पुरुषः स्वाभासद्वारेण चेतयत इत्यर्थः। **येन सह साधनं तन्निष्ठ एवेति**। येन कर्मकारकेण सह कर्ता बुद्धिलक्षणक्रियां सम्पाद्य तद्द्वारेण फलं निष्पादयति, तत् गमनक्रियाफलप्राप्तिवत् तत्कर्मनिष्ठमेवेत्यर्थः। **कर्मकारकमपीति**॥ येन कर्त्रा सह कर्मकारकं प्रधानक्रियां निष्पाद्य तद्द्वारेण फलं निष्पादयति तत्फलं प्राप्यमाणग्रामवत् तेनैवानुभूयते नान्येनेत्यर्थः॥

ननु नीलादिविषयोऽपि चेदपरोक्षस्वभावः, नीलात्मिका संविदित्युक्तं स्यात्। अतः स एव माहायानिकपक्षः समर्थितः। नैवम्—परस्परव्यावृत्तौ नीलपीताववभासेते। अपरोक्षता तु न तथा, एकरूपावगमाद्विच्छेदावभासेऽपि। अतः न तत्स्वभावा। यदि स्यात्, तद्वदेव व्यावृत्तस्वभावताऽप्यवभासेत। न तथा।

किं च तैरपि नीलात्मकसंविदोऽन्य एव पराग्व्यावृत्तोऽपरोक्षः प्रत्यगवभासः स्वरूपमात्रे पर्यवसितो विकल्प उपेयते

---

तत्र बौद्धराद्धान्तप्राप्तिं चोदयति—**ननु नीलादीति**। एतद्दूषयितुं संविदैक्यं साधयति—**नैवमिति**। अतः तौ व्यावृत्ताविति शेषः। तद्वत् संविदपि व्यावृत्तेति, नेत्याह—**अपरोक्षतेति**। संवित् संविदिति प्रत्यभिज्ञया एकत्ववत् घटसंवित् पटसंविदिति अभिज्ञया भेदोऽपि भाति। अतः कथमनुवृत्तिनिश्चय इत्यत्राह—**विच्छेदेति**। स्वरूपप्रत्यभिज्ञायाः परोपाधिभेदप्रतीत्या विरोधाभावात् तन्निश्चय इत्यर्थः। तत्रानुवृत्तं व्यावृत्ताद्भिन्नं अनुवृत्तत्वात् घटादेराकाशादिवदिति फलितमाह—**अतो नेति**। अनुवृत्तत्वमस्तु [संविदः नीलादेर्विषयात्] भेदो मा भूत्, को बाध इत्यत्राह—**यदीति**। प्रत्यक्षश्च नीलसंविदोर्भेद इत्याह—**किञ्चेति**। कथं प्रत्यक्ष इति वक्तुं तेषां संविदात्मस्वीकारप्रकारमाह—**तैरपीति**॥

---

अनुवृत्तस्य व्यावृत्तान्नाभेदः अनुवृत्तत्वात घटादिभिराकाशादेरिवेत्यनुमानमाह—**अतो न तत्स्वभावतेति**। व्यक्तिभिर्जातिरिवाभेदः स्यादिति शङ्कते—**यदि स्यादिति**। त्वया जातिर्नाभ्युपगम्यते, मया तत्रापि वास्तवाभेदो नाभ्युपगम्यते, अतो नायं दृष्टान्त इति मत्वा परिहरति—**तद्वदेवेति**। नीलपीतयोरिव निरुपाधिकत्वेनेत्यर्थः। **किञ्चेति**। [अ]विरुद्धभेदं व्यावर्तयति—**अन्य एवेति**। नीलव्यावृत्तपीतादि व्यावर्तयति—**पराग्व्यावृत्त इति**। धर्माधर्मादि व्यावर्तयति—**अपरोक्ष इति**। सुखदुःखादि व्यावर्तयति—**प्रत्यगिति**। अहङ्कारं व्यावर्तयति—**अवभास इति**॥ अथवा—आत्मा न [नीलादिः]

**प्रतीयते च। नीलसंवित् प्रत्यग्व्यावृत्तेदन्तया ग्राह्यरूपा। ततश्च वस्तुद्वयं ग्राह्यग्राहकरूपमितरेतरव्यावृत्तं सिद्धम्। नैतत्--द्वयोरपि स्वरूपमात्रनिष्ठयोः कुतो विषयविषयिभावः। कथं पुनरिद-**

---

**नीलात्मकसंविदः**—नीलोपलक्षितानात्मनः **विकल्पः**—संविदाख्यात्मा **अन्यः**—विलक्षणः **उपेयते** इत्यन्वयः। जातिव्यक्त्योरिवावैलक्षण्यमप्यस्तीति, नेत्याह—**एवेति**। तथापि नीलपीतयोरिव वैलक्षण्यं इत्यत्राह—**पराग्व्यावृत्त इति**। धर्मादिवत् परोक्षः इत्यत्राह—**अपरोक्ष इति**। सुखदुःखादिवत् विलक्षण इत्यत्राह—**प्रत्यगिति**। अहंवत् विलक्षण इत्यत्राह—**अवभास इति**। सोऽहमिति पदार्थयोरिव वैलक्षण्यं इत्यत्राह—**स्वरूपमात्रपर्यवसित इति**। तत्रोभयनिष्ठसामानाधिकरण्यप्रतीतेरवैलक्षण्यम्, इह त्वहम्बुद्धेः स्वमात्रनिष्ठत्वात्तन्नास्तीत्यर्थः। नोपेयते मानाभावादित्यत्राह—**प्रतीयते चेति**। अनात्मनोऽप्येवंरूपेण भावात् न भेदभानमित्यत्राह—**नीलसंविदिति**। नीलोपलक्षितानात्मेत्यर्थः। अतः अहं नीलं पश्यामीति प्रत्यक्पराक्त्वेन इदन्त्वानिदन्त्वेन चेतनकर्तृकर्मत्वेन च भेदः प्रत्यक्षसिद्ध इत्याह—**ततश्चेति**॥

तर्हि नीलसंविदोर्भिन्नयोरप्यभेदसम्बन्धाभावात् अन्यस्य च सम्बन्धस्यानिरूप्यत्वात् ग्राह्यग्राहकभावो न स्यादिति शङ्कते—**नैतदिति**। सोऽपि प्रत्यक्षो न तर्कनिरस्य इति दूषयति—**कथं पुनरिति**। नैतत् त्रयविषयमेकं

---

विरुद्धतयावभासमानत्वात्—आत्मनः नित्यमपरोक्षत्वेन प्रतिभासमान[त्वात्](विषयत्वा) विषयस्य च परोक्षत्वेन प्रतिभासमानत्वात् तयोः भेदः प्रत्यक्षसिद्ध इत्यर्थः॥

विरुद्धत्वेनावभासमानयोरपि सोऽयमिति वाक्ये देवदत्तप्रभेदप्रतिभासवदत्र भेदप्रतिभासस्योपाधिभेदाभासविषयतया अन्यथासिद्ध्यभावात् 'स एवायमयमेव सः' इति तद्बुद्धेरिदमर्थे पर्यवसानवदिदंबुद्धेरात्मनि पर्यवसानाभावाच्च वस्तुतो भेदप्रतिपत्तिरेष्टव्येत्याह—**स्वरूपमात्रे पर्यवसित इति**। आत्मनः प्रत्यक्त्वेनानिदन्त्वेन ग्राहकत्वेन च प्रतिभासमानत्वाद्विषयस्य च पराक्त्वेन इदन्त्वेन ग्राह्यत्वेन च प्रतिभासमानत्वात्तयोः भेदः आबालपण्डितं प्रत्यक्षसिद्धः इत्युपसंहरति—**ततश्चेति**॥

महं जानामीति तयोर्ग्राह्यग्राहकतावभासः ? नायं तदवभासः किंतु अहमिति इदमिति जानामीति च परस्परव्यावृत्ता विकल्पा एते। कथं पुनः तेषु कटाक्षेणाप्यन्योन्यमनीक्षमाणेष्वयं सम्बन्धावगमः? तद्वासनासमेतसमनन्तरप्रत्ययसमुत्थं सङ्कलनात्मकं प्रत्ययान्तरमेतत्, नेह सम्बन्धावगमः। किं पुनरेवमनुभवानारूढामेव प्रक्रियां विरचयति भवान्? क्षणविध्वंसिनः क्रियानुपपत्तेः। स्थायित्वे हि सत्यहमुल्लेख्यस्य स्थायिनैव नीलादिना क्रियानिमित्तः सम्बन्धः ततश्च क्रियानिमित्तैव नीलादेरप्यपरोक्षता स्यात्। न च स्थायित्वमस्ति। यद्येवं अहमिति संविदः प्रतिक्षणं स्वलक्षणभेदेन भाव्यम्। स किं विद्यते नवेति स्वसंविदमगूहमानैरेवाभिधीयताम्। अथ

---

ज्ञानम्, किन्तु क्रमवर्तिज्ञानत्रयमिति शङ्कते—**नायमिति**। क्रमवर्तित्वे अन्यसंवित्काले अन्यन्न भासेत, इदं तु त्रयं युगपत् प्रत्यक्षम्, अतः प्रत्यक्षविरुद्धः क्रम इति दूषयति—**कथं पुनस्तेष्विति**। अहमिति नीलमिति ये ज्ञाने, ते एव वासने ताभ्यां सहितात् जानामीति ज्ञानात् जातं त्रितयाकारं ज्ञानम्, न सम्बन्धविषयमिति शङ्कते—**तद्वासनेति**। प्रत्ययत्रयदर्शनं विना प्रथममेवाहमिदं जानामीति ज्ञानदर्शनात् अनुभवविरुद्धमेतदपीति दूषयति—**किं पुनरिति**॥

क्षणिकस्य क्रियाशून्यत्वेन तन्निमित्तसम्बन्धाभावात् अनुभवो भ्रान्तिरिति शङ्कते—**क्षणेति**। स्थायिनोऽपि सा तुल्येत्याशङ्क्य, उक्तमर्थं व्यतिरेकमुखेन विशदयति—**स्थायीति**। प्रतिकर्मव्यवस्थायामुक्तरीत्येति शेषः। अस्तु तर्हि स्थायितेति; नेत्याह—**न चेति**। किं प्रत्यक्षेण क्षणिकत्वं ब्रूषे ? अनुमानाद्वा? नाद्य इत्याह—**यदीति**। भात्येव भेदः सादृश्यादस्पष्टमिति शङ्कते—**अथेति**।

---

**क्रियानिमित्त इति**। प्रतिकर्मव्यवस्थायां वर्णितप्रकारेण क्रियानिमित्तः सम्बन्धः स्यादित्यर्थः॥

अत्यन्तसादृश्यात् न भेदोऽवभासते इति, संविदोऽपि चेत् स्वरूपं नावभासते आयातमान्ध्यमशेषस्य जगतः ॥

अपि च-तद्रूपप्रतिभासे सादृश्यकल्पना प्रमाणविरुद्धा निष्प्रमाणिका च। तद्रूपप्रतीतेः व्यामोहत्वात् न प्रमाणविरुद्धता नाप्यप्रामाणिकता निर्बीजभ्रान्त्ययोगादिति चेत्, न; इतरेतराश्रयत्वात्। सिद्धे व्यामोहे सादृश्यसिद्धिः प्रमाण-विरोधाभावात् प्रमाणसद्भावाच्च, सिद्धे च सादृश्ये तन्निमित्ता व्यामोहसिद्धिः ॥

स्यादेतत्-अव्यामोहेऽपि तुल्यमेतत्, सिद्धे हि सादृश्य-कल्पनाया अप्रामाणिकत्वे प्रमाणविरोधे च तद्रूपप्रतीतेरव्यामोह-त्वम्, अव्यामोहत्वे चास्याः सादृश्यकल्पनायाः निष्प्रमाणकत्वं

---

किं भेद्यसंविदोऽन्यद्भेदज्ञानम्? अनन्यद्वा? नाद्यः—धर्मिप्रतियोगिसंविदोः संविदन्तराविषयत्वेन भेदग्रहासम्भवादिति मत्वा, द्वितीयं प्रत्याह—**संविदोऽपीति** ॥

किञ्च, ऐक्यज्ञाने सति सादृश्यकल्पना मानविरुद्धा, भेदस्याग्राह्यसिद्धेः; भिन्नयोरैक्यभ्रमस्य सादृश्यप्रमाणस्याभावान्मानहीना च। अतो न सादृश्य-सिद्धिरित्याह—**अपि चेति**। ऐक्यबुद्धेर्भ्रमत्वान्न मानविरुद्धा, ऐक्यभ्रान्त्यनु-पपत्तिसिद्धत्वात् न मानहीना चेति शङ्कते—**तद्रूपेति**। ऐक्यबुद्धेर्भ्रमत्वे सिद्धे तस्या अमानत्वे मानविरोधाभावात् ऐक्यभ्रान्त्यनुपपत्तिसिद्धत्वेन मानसम्भवाच्च सादृश्यसिद्धिः, सिद्धे सादृश्ये तन्निमित्तत्वादैक्यबुद्धेः भ्रान्तित्वसिद्धिरित्यन्यो-न्याश्रयतया दूषयति—**नेतरेति** ॥

मानविरोधान्मानाभावाच्च सादृश्यासिद्धौ तन्निमित्तत्वाभावादैक्यबुद्धेः मानत्वसिद्धिः, तत्सिद्धौ च मानविरोधात् मानाभावाच्च सादृश्यस्यासिद्धि-रित्यन्योन्याश्रयता तवापि तुल्येति शङ्कते—**स्यादेतदिति**। बुद्धेः स्वतः-

**प्रमाणविरोधश्च। नैतत्—स्वारसिकं हि प्रामाण्यं प्रतीतेरनपेक्षम्। तथा च तत्प्रामाण्यात् सादृश्यकल्पना निष्प्रमाणिकी प्रमाणविरुद्धा च। न तु सादृश्यकल्पना स्वतःसिद्धा, येन प्रामाण्यमावहेत्। अप्रामाण्यपूर्विकैव सा। अथान्ते क्षयदर्शनादादौ क्षयानुमानं, अतो भिन्नत्वात् सादृश्यकल्पनेति। आदौ सत्तादर्शनादन्तेऽपि सा किं नानुमीयते। क्षयानुभवविरोधादिति चेत्, इहापि तद्रूपसत्त्वानुभवविरोधः। न ह्युभयोरनुभवयोः कश्चिद्विशेषः॥**

---

प्रामाण्यान्नेत्याह—**नैतदिति**। ततः किमित्यत्राह—**तथा चेति**। तस्याः—ऐक्यबुद्धेः। स्वत इति शेषः। तथा सादृश्यमपि स्वतस्सिद्धमित्यत्राह—**न त्विति**। कुतस्तर्हि सादृश्यसिद्धिरिति, तत्राह—**अप्रामाण्येति**। भिन्नेष्वैक्यभ्रमः सादृश्यकल्पकः स च सादृश्यपूर्वकः, अप्रामाण्यस्य परतस्त्वादित्यर्थः। (अत)[**अथान्ते**]**इति**। घटस्य नाशानन्तरपूर्वक्षणविशिष्टं सत्त्वमन्त इत्युच्यते, तस्य स्वसत्ताक्षणादुत्तरक्षणे नाशो दृष्टः, तत्र अन्त्यक्षणावच्छिन्नघटसत्त्वात् पूर्वक्षणावच्छिन्नघटसत्त्वान्यादिरित्युच्यन्ते, तान्यपि स्वसत्ताक्षणादुत्तरक्षणे नाशव्याप्तानि घटसत्तात्वात् अन्त्यक्षणावच्छिन्नघटसत्त्ववदित्यनुमानम्, ततश्च सतोऽनन्तरनाशात् क्षणिकत्वसिद्धिरित्यर्थः। अत्र प्रत्यनुमानमाह—**आदौ सत्तेति**। आदिरिति घटसत्तावच्छेदकाः क्षणा उच्यन्ते, **अन्त इति** नाशावच्छेदकत्वेनाभिमताः क्षणाः, ते घटसत्तया व्याप्ताः, कालत्वात्, सत्तावच्छेदककालवदित्यर्थः॥

अनुभवविरुद्धमेतदिति शङ्कते—**क्षयेति**। तर्ह्यन्त्यक्षणात् पूर्वक्षणावच्छिन्नघटसत्त्वानामनन्तरक्षयानुमानमपि प्रत्यभिज्ञाविरुद्धमिति दूषयति—**इहापीति**।

---

**न ह्युभयोरनुभवयोरिति**। प्रत्यक्षपरोक्षकालोपलक्षितस्वरूपप्रतिपत्तिपूर्वकं तृतीयक्षणे प्रत्यभिज्ञया प्रमेयप्रतिपत्तिः, धर्मिग्रहणप्रतियोगिस्मरणानन्तरं तृतीयक्षणे अभावप्रतिपत्तिरिति तृतीयक्षणे प्रमेयप्रतिपत्तिरुभयत्र तुल्येत्यर्थः॥

अथ मन्येत—योऽसौ स्थिरत्वेनाभिमतोऽहमुल्लेखः, स किं कांचिदर्थक्रियां कुर्याद्वा? न वा? यदि न कुर्यात् असल्लक्षणप्राप्तेः न परमार्थवस्तु। अथ कुर्यात्, न तर्हि स्थायी। स्थायिनोऽर्थक्रियाऽयोगात्। कथमयोगः? इत्थमयोगः—स तां कुर्वन् क्रमेण कुर्याद्यौगपद्येन वा?। न तावत् क्रमेण, पूर्वोत्तरकालयोः तस्य विशेषाभावेऽपि किमिति पूर्वस्मिन्नेव काले उत्तरकालभाविनीमपि न कुर्यात्। नापि यौगपद्येन, यावज्जीवकृत्यमेकस्मिन्नेव क्षणे कृतमित्युत्तरकाले तद्विरहादसल्लक्षणप्राप्तेः। अतोऽर्थक्रियाकारित्वादेव न स्थायी। तेन प्रतिक्षणं भिन्नेष्वहमुल्लेखेषु तद्बुद्धिः सादृश्यनिबन्धनेति।

---

क्षयानुभवो हि अभिज्ञाज्ञानत्वादनुमानं बाधते, न प्रत्यभिज्ञा अनुमानात् दुर्बला, इत्यत्राह—**न हीति**। पूर्वापरकालद्वयोपलक्षितस्वरूपधीपूर्वकं तृतीयक्षणे प्रत्यभिज्ञयाऽर्थप्रतीतिवत् धर्मिप्रतियोगिधीपूर्वकं तृतीयक्षणे भेदप्रतीतिरित्यर्थः। स्थिरस्यैव निमित्तसंयोगादन्यथाभूतस्य क्रियापूर्वकं कार्यं कर्तुं सामर्थ्यम्, न क्षणिकस्य इति सिद्धान्ती शङ्कते—**कथमयोग इति**। **इत्थमित्यादि** परिहारः। **क्रमेणेति**। अनेकानि कार्याणि सातत्येनेत्यर्थः। **यौगपद्येनेति**। एकमनेकं वा कार्यं सकृत्कृत्वोपरमते इत्यर्थः। क्रमपक्षं प्रत्याह—**न तावदिति**। अनेकानि कार्याणि कर्तुं समर्थश्चेत् पुष्कलकारणस्य भावादेकस्यानेककार्यदर्शनाच्च सकृदेव कुर्यात्, असमर्थश्चेत् कालान्तरेऽपि न कुर्यादित्यर्थः। द्वितीयं पक्षं प्रत्याह—**नापीति**। अर्थक्रियाकारित्वलक्षणत्वात् सत्त्वस्येति भावः। स्थायिनोऽर्थक्रियाऽनुपपन्ना यतोऽतः सर्वे भावाः क्षणिकाः, अर्थक्रियाकारित्वात्, यदक्षणिकं न तदर्थक्रियाकारि, यथा नृशृङ्गं इति सिद्धमित्याह—**अत इति**। क्षणिकत्वे सिद्धे फलितमाह—**तेनेति**॥

स्थायिनः सकृत्कार्यं कृत्वा तूष्णीम्भूतस्यापि नासत्त्वम्, सत्त्वस्य

**उच्यते—अथ केयमर्थक्रिया ? यदभावादसल्लक्षणत्वप्राप्तिः । स्वविषयज्ञानजननम्, प्राप्तं तर्हि सर्वासामेव संविदां स्वसंविदितरूपत्वेन स्वविषयज्ञानाजननादसल्लक्षणत्वम् । न सन्तानान्तरेऽपि तज्जननम् ; अनैन्द्रियकत्वात् । अनुमानेऽपि अर्थजन्यत्वाभावात् । सर्वज्ञेऽपि न साक्षात् स्वसंविदं जनयति, संसारसंविदेकरूपत्वप्रसङ्गात् । अतद्रूपत्वे तद्विषयत्वायोगात् । अथ क्षणान्तरोत्पादोऽर्थक्रिया । चरमक्षणस्या-**

---

अर्थक्रियाकारित्वलक्षणत्वाभावात् इति दूषयति—**उच्यत इति** । (अभावं) [क्षणिकत्वाभावं] वक्तुं अर्थक्रिया किं स्वविषयज्ञानजननम्, स्वजातीयक्षणान्तरोत्पादो वेति विकल्पयति—**केयमिति** । आद्यं शङ्कते—**स्वविषयेति** । तर्हि बाह्यार्थेषु लक्षणस्य सत्त्वेऽपि ज्ञानेष्वभावादव्याप्तिरिति दूषयति—**प्राप्तमिति** । तासामपि पुरुषान्तरे स्वविषयज्ञानजननमस्तीत्यत्राह—**न सन्तानेति** । **अनैन्द्रियकत्वात्**—अप्रत्यक्षत्वादित्यर्थः । अस्तु तर्हि पुरुषान्तरज्ञानस्य पुरुषान्तरे अनुमानजनकतेत्यत्राह—**अनुमानेऽपीति** । अजनकतेति शेषः । प्रत्यक्षमेवार्थजन्यं नानुमानादीति तेऽपि मतमित्यर्थः ॥

सर्वं ज्ञानं सर्वज्ञज्ञानस्य विषयतया जनकम्, तस्य सर्वविषयप्रत्यक्षत्वादित्यत्राह—**सर्वज्ञेऽपि इति** । **साक्षात्**—मुख्यामुपप्लवविशिष्टामित्यर्थः। तत्र हेतुः—**संसारेति** । संविद्विषययोः अभेदोपगमात् सांसारिकज्ञानैः सोपप्लवैः सर्वज्ञज्ञानं दूषितं स्यादित्यर्थः । न च सर्वोपप्लवयुक्तमपि तत्त्वज्ञानबाधितत्वात् अदुष्टम्, प्राप्तिबाधयोः एकक्षणे असम्भवेन तस्य ज्ञानस्य, ज्ञानान्तरस्य च तदनूद्य बाधे सोपप्लवत्वापातेनाबाधकत्वादित्यूह्यम् । तर्हि विनोपप्लवं सर्वज्ञज्ञाने अन्यज्ञानानि सम्बध्यन्तामित्यत्राह—**अतद्रूपत्वे इति** । अतः सोपप्लवज्ञानानां सर्वज्ञज्ञानाजनकत्वात् अव्याप्तिः सिद्धा, लोकोपप्लवाभानात् सर्वज्ञस्योपदेष्टृता च न स्यादित्यर्थः । द्वितीयं शङ्कते—**अथेति** । दूषयति—**चरमेति** ।

**सल्लक्षणत्वप्रसङ्गः । न च सर्वज्ञज्ञानजननेनार्थवत्त्वम्, चरमत्वानुपपत्तेः मुक्त्यभावप्रसङ्गात् । न च संवित् संविदो विषयः, संविदात्मना भेदाभावात् प्रदीपस्येव प्रदीपान्तरम् । किञ्च—नार्थक्रियातः सत्त्वं भवति । स्वकारणनिष्पन्नस्य कार्यजननात् । अतः प्रतीतिः वक्तव्या । तत्र तस्या अन्यतः सत्त्वप्रतीतिः तस्या अप्यन्यतः इत्यनवस्थानात् न कचित् सत्तावगमः इति शून्यं जगदभविष्यत् । ननु स्वज्ञाना-**

---

दुःखस्वलक्षणक्षणिकशून्याख्यचतुर्विधभावनाप्रकर्षपर्यन्तात् समनन्तरप्रत्ययात जन्यं सर्वोपप्लवशून्यं ज्ञानं संसारसन्तानस्यान्त्यत्वाच्चरमम्, तस्य कार्याभावादसत्त्वे क्रमेण पूर्वं सर्वमसदेवेत्यसम्भवि लक्षणमित्यर्थः ॥

चरमक्षणस्य स्वसन्तानज्ञानाजनकत्वेऽपि सर्वज्ञज्ञानजनकत्वादस्त्यर्थक्रियेत्यत्राह—**न चेति** । तुल्यस्वभावयोः कार्यकारणभावस्यैकसन्तानत्वात् चरमक्षणसर्वज्ञज्ञानयोः विशुद्धतया तुल्यस्वभावयोः कार्यकारणभावात् सन्तानैक्याच्चरमत्वानुपपत्तेः सन्तानाविच्छेदः स्यादित्यर्थः । ओमिति चेत् सन्तानविच्छेदस्य मोक्षत्वेनेष्टत्वान्नेत्याह—**मुक्तीति** । सर्वज्ञसन्तानस्य तुल्यस्वभावत्वेन विषयतया तज्जनकत्वात् सन्तानैक्यमस्ति असर्वज्ञसन्तानस्य, तदेव मुक्तिरिति चेत्, तर्हि विषयतया जनकत्वैव नास्तीत्याह—**न च संविदिति** । तत्र हेतुः—**संविदात्मनेति** । संवित् संविदो न संविदाकारेण भिन्ना प्रतियोगिनोऽसंवित्त्वप्रसङ्गात्, नाप्यसंविदाकारेण, धर्मिणोऽसंवित्त्वापातादित्यर्थः । अर्थक्रिया हि कार्यं कारणस्योत्पत्तौ ज्ञाप्तौ वा हेतुः, नाद्य इत्याह—**किञ्चेत्यादिना** । (कारणा)[कार्या]त् प्रागेव का(र्य)[रण]स्योत्पत्तेरित्यर्थः । न चोत्पन्नमप्यर्थक्रियातः पूर्वमसत्, नृशृङ्गतुल्यत्वेनाकारणत्वापातादित्यर्थः ॥

तस्मात् द्वितीयः शिष्यत इत्याह—**अत इति** । अस्तु तर्हि द्वितीय इत्यत्राह—**तत्रेति** । स्वेषां पूर्वज्ञानानां कार्याण्युत्तरज्ञानान्यर्थक्रिया, तस्याः स्वयं सिद्धत्वात् नानवस्थेत्यत्राह—**स्वज्ञानेति** । तर्हि अनादिप्रवाहिनां सर्वेषा-

र्थक्रियायाः स्वयंसिद्धत्वात् न अनवस्था, न तर्ह्यर्थक्रियातः सत्तावगमः। न हि स्वरूपमेव स्वस्यार्थक्रिया। यत् पुनः क्रमेणार्थक्रिया न युज्यते, पूर्वोत्तरकालयोः तस्य विशेषाभावादिति। नैष दोषः—स्थायिनोऽपि कारणस्य सहकारिसव्यपेक्षस्य जनकत्वात् विशेषाभावादित्ययुक्तम्। अथ कारणस्यान्यापेक्षा न युक्ता, अकारणस्यापि नतरामित्यसहकारि विश्वं स्यात्। अथाकारणं कारणोत्पत्तयेऽपे-

---

मपि ज्ञानानां पूर्वज्ञानं प्रत्यर्थक्रियात्वेन स्वतःसिद्धत्वादर्थक्रियातः सत्त्वावगमो न स्यादिति दूषयति--**न तर्हीति**। स्वस्यैवार्थक्रियात्वात् अर्थक्रियातः सत्त्वावगतिरित्यविरुद्धं, इत्यत्राह—**न हीति**। तस्मान्नार्थक्रियाकारित्वलक्षणं सत्त्वं किन्तु स्वाभाविकमिति सकृत् कार्यं कृत्वा तूष्णीम्भूतस्यापि स्थायिनः सत्त्वमविरुद्धम्॥

इदानीं क्रमेणापि कार्यं कृत्वा सत्त्वमविरुद्धमिति वक्तुं उक्तमनुवदति—**यत् पुनरिति**। शक्तस्यापि सहकारिसन्निधानविशेषक्रमापेक्षया कार्यक्रमसम्भवात् नेति दूषयति—**नैष दोष इति**। कारणशब्देन शक्तमुच्यते। शक्तस्य विनापि सहकारिणं स्वयं शक्तत्वेन पुष्कलकारणस्य सम्भवात् सहकार्यपेक्षा न युक्तेति शङ्कते—**अथ कारणस्येति**। अशक्तस्यापि सहकारिसङ्घसन्निधानेऽपि स्वयमशक्तत्वान्न सहकार्यपेक्षा युक्तेति गूढाभिसन्धिः उत्तरमाह—**अकारणस्येति। तरामिति**। अपेक्षायामप्यशक्तत्वादित्यर्थः। मा भूत्तर्हि शक्तस्याशक्तस्य च तदपेक्षेत्यत्राह—**असहकारीति**। शक्तस्यैव सहकार्यपेक्षया कार्यकरत्वानुभवविरोध इत्यभिसन्धिः। सहकार्यपेक्षामात्र एवानुभवः, स चाशक्तानामेव पदार्थानां शक्तस्य सामग्र्यस्य उत्पत्तये अन्योन्यापेक्षायामपि सम्भवति, अतो नानुभवविरोध इति शङ्कते—**अथेति**॥

कार्यं प्रत्यशक्ता अपि पदार्थाः सामग्र्याख्यकारणं प्रति शक्ता वा न वेति

---

**अथ [कारणस्येति]**। शक्तस्येत्यर्थः॥

क्षते इति चेत्, अथ तत् कारणस्य कारणमकारणं वा? कारणं चेत् नापेक्षितुमर्हति। अकारणं चेत् न तराम्। अथ नापेक्षा हेतूनां सहकारिणीति ब्रूयात्, दर्शनेन बाध्येत। दृष्टं हि सहकार्यपेक्षत्वं हेतूनाम्। तस्मात् यथैव हेतोः हेतुत्वं सति कार्ये केनाप्यतर्कणीयेन क्रमेण ज्ञायते सत्येव हेतौ कार्यस्य दर्शनात्, तथा समेतसहकारिण्येव दर्शनात् सहकार्यपेक्षस्य तद्विज्ञेयम्॥

यस्तु मन्यते, सहकारिजनितविशेषो हेतुः कार्यं जनयति, अन्यथाऽनुपकारिणोऽपेक्षायोगादिति। स वक्तव्यः— विशेषस्य स हेतुरहेतुर्वा? अहेतुश्चेत्, विशेषोत्पत्तौ ना-

---

विकल्पयति—**अथ तत् कारणस्येति**। कल्पद्वयं क्रमेण दूषयति—**कारणं चेदिति**। **अथ नापेक्षेत्यादि** व्याख्यातम्। ततश्च किंविषयोऽनुभव इति वीक्षायामशक्तस्यैव अशक्तान्यविषय इति स्वीकारे तु (अशक्तमेवेति मशक्यं) [अशक्तैव मृत् अशक्तं]चक्रमपेक्ष्य क्षीरं कुर्यादित्यतिप्रसङ्गात् शक्तस्यैव शक्तसहकार्यपेक्षाविषय इति वाच्यं, तथा च पूर्वोक्तानुभवविरोधः स्यादेवेत्यर्थः। तथाप्यसम्भवात् शक्तस्य सहकार्यपेक्षया कथं कारणत्वं विज्ञेयमित्याशङ्कां व्युदस्यन् निगमयति—**तस्मादिति**। असता कार्येण विशेषसम्बन्धाभावेऽपि हेतोः कार्यविशेषं प्रत्यनिरूपितरूपेण हेतुत्वं अन्वयव्यतिरेकाभ्यां यथा निश्चीयते, तथा अन्वयव्यतिरेकाभ्यां सहकार्यपेक्षस्यैव अनिरूपितरूपेण हेतुत्वं विज्ञेयमित्यर्थः॥

अस्ति हेतोः सहकार्यपेक्षा स्वरूपविशेषोत्पत्तये न कार्यार्थम्, अनुपकारिणः सहकारिणोऽपेक्षाऽयोगादिति मतान्तरमनुवदति—**यस्त्विति**। यः सहकारिणमपेक्षते, स स्वात्मनि विशेषोत्पत्तौ शक्तो वा? न वा? नान्त्य इत्याह—**विशेषोत्पत्ताविति**। अशक्तस्य सहकारिसहस्रसन्निधानेऽपि किञ्चि-

---

**सहकार्यपेक्षस्य तद्विज्ञेयमिति**। हेतुत्वं विज्ञेयमित्यर्थः॥

पेक्षेत। तत्र केवला एव सहकारिणो विशेषमुत्पादयेयुः। ततश्च कार्यं स्यात्। अथ हेतुः, सहकारिभिरजनितविशेषस्तमेव कथं कुर्यात्? विशेषस्य वा जनने अनवस्था। अथ मतम्—न सर्वं कार्यं सहकारिजनितात्मभेदहेतुजन्यम्, समग्रेषु हेतुषु तावत्येवाभवदङ्कुरादि। तथा किञ्चित् सन्निहितसहकारिहेतुजन्यम्, यथा अक्षेपकारीन्द्रियादिज्ञानम्। तत्र आद्यो विशेषः सहकारिसन्निधानमात्रलभ्यः अक्षेपकारीन्द्रियादिज्ञानवदिति नानवस्था। अनुपकुर्वन्नपि तर्हि सहकारी अपेक्ष्येत। न हि तत्र हेतोः सहकारिभ्य आत्मभेदः। नानुप-

---

त्करत्वादर्शनाद्धेतुः सहकारिणं विशेषोत्पत्तये नापेक्षेत, ततश्च सहकार्यपेक्षया हेतोः कार्यकरत्वायोगात् केवला एव सहकारिणो विशेषमुत्पाद्य कार्यं कुर्युरित्यर्थः। आद्यं दूषयति—**अथेति**। विशेषस्यापि कार्यत्वात्तज्जन्मार्थमपि हेतौ विशेषजन्माऽस्ति? न वा? न चेद्विशेषाख्यं कार्यं न कुर्यात्, अस्ति चेत्तस्याप्येवमित्यनवस्थेत्यर्थः। एतज्जिहासया शङ्कते—**अथ मतमिति**। सहकारिजनितः स्वरूपविशेषो यस्य हेतोः तज्जन्यमित्यर्थः। कथमर्धवैशसं लभ्यमित्यत्राह—**समग्रेष्विति**। **तावत्येव** उच्छूनतादिविशेषे सत्येव जन्यं विशेषापेक्षम्, असति जन्यमनपेक्षमिति यथादर्शनं व्यवस्थेत्यर्थः॥

तत्र आद्यो विशेषः कं पक्षमवलम्बतामित्याशङ्क्य, तत्र विशेषादर्शनादनपेक्षपक्षमित्याह—**तत्राद्य इति**। तर्हि शक्तिमता कारणेन स्वात्मन्यनुपकुर्वन्नपि सहकार्यपेक्ष्यत इति त्वयैव स्वपक्षोक्तं निरस्तमिति दूषयति—**अनुपकुर्वन्निति**। **तत्रेति**। विशेषजनने इत्यर्थः। आह साक्षात्क्षणिकवादी—

---

**सहकारिजनितात्मभेदहेतुजन्यमिति**। सहकारिजनितः स्वरूपविशेषो यस्य स तथोक्तः, तस्माज्जन्यमित्यर्थः। **न हि तत्र हेतोरिति**। **तत्र**—आद्यविशेषजनने। हेतोः—कारणस्य। **सहकारिभ्यः आत्मभेदः**—स्वस्मिन् स्वरूपभेदः नास्तीत्यर्थः॥

कुर्वन्नपेक्ष्यते, अतिप्रसङ्गात्। स्वरूपे तु नोपकरोति, किन्तु कार्ये। तत्सिद्धेस्तन्नान्तरीयकत्वात्। नित्योऽपि तर्ह्यनाधेयातिशयो भावः कार्यसिद्धये क्षणिक इव सहकारिणमपेक्षते इति किं नाभ्युपेयते? यथैव क्षणिको भावः सहकारिसमवधाने एव कार्यं जनयति सामग्रीसाध्यत्वात्, तथा नित्योऽपि स्वरूपानुपयोगित्वेऽपि सहकारिसमवधानं कार्योपयोगादपेक्षेत। अथ मतम्—क्षणिकोऽपि नैवापेक्षते, अन्यजनकस्य स्वयमन्यापेक्षानुपपत्तेः। कार्यं तु यदन्यसन्निधौ भवति तत्। तस्यान्यसन्निधावेव भावात् अन्यथा चाभावात्। नित्यस्य तु जनकस्य सर्वदा जननप्रसङ्गः। को हेतुरन्यापेक्षायाः। क्षणिकस्तु यो जनको भावः स न

---

**नानुपकुर्वन्निति**। सर्वस्यापि सहकारित्वापातादित्यर्थः। [**तत्सिद्धेः**।]कार्यसिद्धेः। [**तन्नान्तरीयकत्वात्**।]सहकारिव्यतिरेकेणाभावात्। कार्यं हि सहकारिजन्यं तेनोपक्रियत इत्यर्थः तर्हि क्षणिकस्येव नित्यस्यापि कार्योपकाराय सहकार्यपेक्षास्त्विति दूषयति—**नित्योऽपीति**। एतद्व्यनक्ति—**यथैवेति**। **सामग्रीसाध्यत्वात्**—बहुकारणसाध्यत्वादित्यर्थः॥

पुनश्चोप[कार्यं]कार्यमेवोपकारिणं सहकारिणमपेक्षते नानुपकार्यं कारणमित्याशङ्कते—**अथेति**। **यदन्यसन्निधौ भवति तदपेक्षते** इत्यन्वयः। अन्यत् कार्यं तज्जनकस्य सहकारिणोऽन्येन हेतुना अपेक्षाऽयोगादित्यर्थः। नित्यकारणपक्षेऽपि तर्हि कार्यमेव सहकारिणमपेक्ष्य क्रमेण भविष्यतीति; नेत्याह—**नित्यस्येति**। सहकारिणो हेतोश्च सदा सत्त्वात् सदा कार्यं स्यादित्यर्थः। क्षणिकादपि सहकारिसन्निधेरप्यपेक्ष्यत्वात् कथं सदा कार्यं स्यादित्यत्राह—**को हेतुरिति**। कारणसहकारिणोः सम्बन्धः कार्यं चेत् सोऽपि ताभ्यामेव सिद्ध इति सदा कार्यं स्यादित्यर्थः। क्षणिकादपि सहकारिसव्यपेक्षात् सदा कार्यजन्म किं न स्यात्? विशेषवति सत्ताक्षणे कार्याजन्माभावात्, पूर्वोत्तरकालयोश्च विशेषाभावादित्यत्राह—**क्षणिकस्त्विति**। सत्ताक्षणादुत्तरक्षणसम्बन्धो विशेष इत्यर्थः॥

**पुरस्तात् न पश्चादिति न पूर्वोत्तरकालयोः कार्योत्पादः॥**

**इदमयुक्तं वर्तते। किमत्रायुक्तम्? सति नियमेऽपि निरपेक्षत्वम्। तथा हि—यः कश्चित् कस्यचित् कचिन्नियमः स तदपेक्षाप्रभावितः। अनपेक्षत्वे नियमानुपपत्तेः। एवं हि कार्यकारणभावसिद्धिः, कार्यार्थिभिश्च विशिष्टानां हेतूनामुपा-**

---

क्षणिकयोरग्निधूमस्वलक्षणयोः अन्वयव्यतिरेकदर्शनासम्भवेन हेतुहेतुमत्त्वस्य ज्ञातुशक्यत्वात्तयोः सन्तानोपाधौ हेतुहेतुमत्त्वं ज्ञातव्यम्, तत्र सन्तानोपाधावग्नेः सदा सत्त्वात् सदा कार्यप्राप्तौ ह्यन्वयव्यतिरेकनियमादपेक्षितसहकारिसम्बन्धस्यापादकचेतनाभावात् सदा कार्याभाव इति वाच्यम्, तच्चासत्पक्षेऽपि तुल्यम्, तथा च सदा कार्यं स्यादित्यापादनमयुक्तमिति दूषयति—**इदमयुक्तमिति**। अन्वयव्यतिरेकनियमेऽपि [अनुपकारिणः] सहकारिणोऽनपेक्ष्यत्वात् सदा कार्यं स्यादित्यापादनं नायुक्तमिति शङ्कते—**किमत्रेति**। सहकारिणां कार्येण सहान्वयव्यतिरेकनियमे सति नोपकार्योपकारक[त्व]सम्बन्ध इत्युक्तिविरुद्धेति दूषयति—**सतीति**। अन्वयव्यतिरेकनियमस्योपकार्योपकारकत्वसम्बन्धव्याप्तिः क्व दृष्टेति चेत्, दृष्टा कार्यकारणयोरित्याह—**तथा हीति**। **कस्यचित्**—कार्यविशेषस्य, **क्वचित्**—उपादानविशेषे इत्यर्थः। उपकार्योपकारक-(योरेकत्व)[त्वसंबन्धा]भावे जलधूमयोरिव अन्वयव्यतिरेकनियमो न स्यादित्यर्थः॥

ययोरग्निधूमस्वलक्षणयोः कार्यकारणभावो दृष्टः तयोरन्वयव्यतिरेकनियमः नाग्निधूमसन्तानयोः, अतो न सामान्योपाधौ कार्यकारणभावप्राप्तिरित्यत्राह—**एवं हीति**। सामान्यौपाधो कार्यकारण[भाव]योग्यतानियमस्वीकारे। अन्यथा अनन्तव्यक्तिष्वन्वयव्यतिरेकग्रहणासम्भवात् कार्यकारणभावो न सिध्येदित्यर्थः। मृज्जातीयस्य घटजातीये हेतुतां दृष्ट्वा घटजातीयान्तरार्थिनो मृज्जातीयान्तरोपादानमप्येवं सति सिध्यति नान्यथेत्याह—**कार्यार्थिभिश्चेति**। यद्वा,

---

**तथा हि यः कश्चित् कस्यचिदिति**। **कस्यचित्** कार्यविशेषस्य, **क्वचित्**—उपादानकारणविशेषे, **यः कश्चित्** अन्वयव्यतिरेक इत्यर्थः। **एवं हीति**। अन्वय-

दानम् । तत्र यदि न क्षणिकं कारणं सहकारिणमपेक्षते नापि तत् कार्यम्, कथं नियमः। तथा हि—हेतुपरम्पराप्रतिबन्धात् न हेतुः स्वरूपे सहकारिणमपेक्षते। न कार्ये, स्वयंजननशक्तेः। नापि कार्यम्, एकस्यापि शक्तिमत्त्वेन प्रसह्यजननात् तत्र सहकारिसन्निधिनियमोऽनर्थकः स्यात्। काकतालीयमुच्यते। तथा च कार्यकारणव्यवहाराः सर्व एवोत्सीदेयुः। तस्मात् क्षणिकस्यापि भावस्य स्वयं जनकस्य

---

तत्राप्युपकार्योपकारकसम्बन्धो नास्तीत्यत्राह—**एवं हीति**। उक्तसम्बन्धे सतीत्यर्थः। उपकार्योपकारकत्वाभावे [कुतो] मृद्घटयोरेव कार्यकारणभावः, किमिति वा घटा(दि)[र्थि]ना मृदुपादीयते इत्यर्थः। ततः किमित्यत्राह—**तत्र यदीति**। एतत्प्रपञ्चयति—**तथा हीति**। अनवस्थाप्रसङ्गात् कारणस्य स्वयं शक्तत्वाच्चेत्यर्थः। **नापि कार्यं** सहकारिणमपेक्षते, कारणादेव तस्य जननादित्यर्थः।

वह्निस्वलक्षणाद्धूमजन्मनि काष्ठसंसर्गस्यापि सन्निधानात्तदपि सहकारि कल्प्यतां, किमिति व्यतिरेकेणेत्यत्राह—**काकतालीयमिति**। प्रागप्यग्निस्वलक्षणस्य धूमोत्पादनयोग्यस्य काष्ठस्वलक्षणसम्बन्धाभावात् तदहेतुत्वाख्यव्यतिरेकदर्शनं विना अन्वयमात्रान्न सहकारित्वसिद्धिः अतिप्रसङ्गादित्यर्थः। मा भूत्तर्हि सहकार्यपेक्षेति चेत्, कारणमपि मा भूदित्याह—**तथा चेति**। यथैकस्मादग्निस्वलक्षणात् समानदेशेऽग्निः उपरिष्टाद्धूमः अधस्तात् भस्म पुरुषे विज्ञानमिति सहकारिभेदाद्देशभेदेनानेकानि कार्याणि उत्पद्यन्ते, तथैकस्मात् कारणात् कालभेदेन सहकारिभेदात् कार्यभेदा इति क्षणिकनित्ययोः सहकारिसन्निधानक्रमस्याविशेषात् कारणत्वमविशिष्टमित्युपसंहरति—**तस्मादिति**। तत्र

---

व्यतिरेकनियमस्योपकार्योपकारकसम्बन्धनिर्वाह्यत्वेन तद्गमकत्वे अन्वयव्यतिरेकाभ्यां सामान्योपहितव्यक्तिमात्रे सामर्थ्यग्रहणे च सतीत्यर्थः। **काकतालीयमुच्यते** इत्यस्यार्थः प्रथमं चोद्यत्वेन योजनीयः। दृष्टान्तेऽन्वयमात्रं न व्यतिरेकनियमः, अत्रान्वयव्यतिरेक-

स्वरूपानुपयोगिन्यपि सहकारिणि कार्यसिद्धये अपेक्षा वाच्या; कार्यस्यैव वा सामग्रीसाध्यत्वात्, तत्र नियमात्; तथा नित्येऽपीति न विशेषं पश्यामः ॥

तदेवमहंकर्तुः सदा एकरूपावगमात् स्थायित्वेऽप्यर्थक्रियासम्भवात् न नीलस्य स्वगतापरोक्षत्वमात्रेण माहायानिकपक्षः समर्थ्यते। किन्तु ग्राहकस्याहङ्कर्तुरात्मनः स्थायिनोऽभावे। स चैकरूपः अनुभवात् युक्तिबलाच्च प्रसाधितः। ननु नानुमेयादिष्वपरोक्षता दृश्यते। उच्यते—नानुमेयादिष्वपरोक्षत्वम्। स्वज्ञानोत्पत्तावव्यापृतत्वात्। लिङ्गादीनामेव कुतश्चित् सम्बन्धविशेषाद्विशिष्टैकार्थज्ञानहेतुत्वात्। प्रमेयस्य च

---

**नियमादिति**। सामग्र्याख्यसहकारिष्वन्वयव्यतिरेकनियमात् कार्यस्येत्यर्थः ॥

उक्तमनूद्य महाप्रकृतं निगमयति—**तदेवमिति**। अहंसंवेदनस्याद्वयत्वं विषयस्य ततो भेदेनार्थक्रियासमर्थतया स्थायित्वं च सिद्धमिति शेषः। तत्र किं यत्किञ्चित्साम्याद्विज्ञानवादे प्रवेशं ब्रूषे? सर्वसाम्याद्वा? नाद्य इत्याह—**न नीलस्येति**। न विषयस्याहंसंविदैक्यमात्रेण तत्प्रवेशः, किञ्चित्साम्यात् सर्वसिद्धान्तानां सङ्करापातादित्यर्थः। सर्वसाम्ये तु स्यात्, तच्च नास्ति, संविदैक्यादेः साधितत्वादित्याह—**किन्त्विति**। विषयस्यापि चैतन्यव्यञ्जकत्वेनापरोक्षत्वे अनुमेयादिष्वपि तथा स्यात्, न तथा दृश्यते इत्याशङ्कते—**ननु नानुमेयादिष्विति**। अन्तःकरणपरिणामसंसर्गकृतयोग्यत्वापत्त्या विषयस्य चैतन्यव्यञ्जकत्वम्, न तदनुमेयादिषु, अवर्तमानत्वसम्भवेन वर्तमानधर्मद्वयासम्भवात्, अतो नापरोक्षतेति दूषयति—**उच्यत इति**। **अव्यापृतत्वादिति**। कारकत्वव्यञ्जकत्वधर्मद्वयानुपपत्तेरित्यर्थः ॥

अनुमेयादिषु विषयव्यापाराभावे कथं तद्विषयज्ञानोत्पत्तिरित्यत्राह—**लिङ्गादीनामिति**। लिङ्गादिवद्विषयस्यापि हेतुता किं न स्यादित्यत्राह—

स्वज्ञानोत्पत्तिहेतुत्वे प्रमाणाभावात् । अलं प्रसङ्गागतप्रपञ्चेन । स्वावसरे एवैतत् सुगतमतपरीक्षायां निपुणतरं प्रपञ्चयिष्यामः ॥

तदेवमहङ्कारग्रन्थिरस्मच्छब्दसंशब्दितः, प्रत्ययश्चासौ; आदर्श इव प्रतिबिम्बस्य अनिदञ्चित्सम्बलितत्वेन तस्याभि-

---

**प्रमेयस्य चेति** । अनुमेयादिषु अन्वयव्यतिरेकाभावेनेति शेषः । न च विषयव्यापाराभावे तदाकारता ज्ञानस्य न स्यात् । विषयाकारताया ज्ञान-व्यापारत्वात् । न चातीते वर्तमानविषयत्वजन्मवत् कारकत्वाद्यपि स्यात्, विषयत्वस्य सुषुप्त्यभावमात्रत्वेन तद्धर्मत्वाभावात् । न च जानातेः सकर्मकत्व-प्रसिद्धिबाधः, कचित् सकर्मकत्वेऽपि तदुपपत्तेरित्यूह्यम् । शक्तस्य क्रमकारित्वे मध्ये अर्थक्रियाशून्यत्वेनासत्त्वप्राप्तेः क्षणिकता स्यादित्याशङ्क्य, सत्त्वस्यार्थ-क्रियाकारित्वलक्षणताया निरस्तत्वान्नेति मत्वा आह—**अलमिति** । सहकारि-जन्यातिशयाच्चेत् क्रमेण कार्योत्पत्तिः तर्हि तस्यैव क्षणिकस्य कारणत्वं प्राप्ता-प्राप्तविवेकेनेत्यत्राह—**स्वावसर इति** । देशभेदेन क्रमकार्येऽपि सहकारि-जन्यातिशयस्यैव कारणत्वेन मृदादेरकारणत्वात् चतुर्विधान् हेतून् (प्रतीत्यै-कान्त्यादिभाषा स्या)[प्रतीत्येत्यादिभाषा न स्या]दित्यादिदिशा निराकरिष्याम इत्यर्थः । कोऽसाववसर इत्यत्राह—**सुगतेति** ॥

**अस्मत्प्रत्ययविषयत्वादिति** भाष्यव्याख्यानं निगमयति—**तदेव-मिति** । **उपचारेणे**त्यादिना सम्बध्येत । कथं तर्हि उक्तेऽर्थे **भाष्यस्य** योजनेत्यत्राह—**अहङ्कारग्रन्थिरित्यादिना** । तर्हि दर्पणवत् बिम्बाच्चैतन्यात् अन्यदेशस्थमन्तःकरणमिति साङ्ख्यमतं व्यावर्तयति—**अनिदंचित्संवलितत्वेनेति**

---

नियमे सति काकतलीयसमत्वकथनं काकतालीयं असम्बन्धकथनमिति परिहारेऽपि योजनीयः । **प्रमाणाभावादिति** । तद्वदिदमपि भवेदिति साधयितुं सपक्षाभावात् कर्म-कारकत्वनिर्वाह्यत्वेन तद्रसकापरोक्ष्याभावाच्चेत्यर्थः ॥

दर्पणस्य बिम्बादन्यदेशस्थत्ववत् चैतन्यव्यञ्जकान्तःकरणस्यापि चैतन्यादन्यदेशस्थत्वं प्राप्तम्, तद्व्यावृत्त्यर्थं साङ्ख्यपक्षव्यावृत्त्यर्थञ्चाह—**अनिदंचित्संवलितत्वेन** । चैतन्येनैक्ये-

**व्यक्तिहेतुत्वात् । अतः तस्य विषयवत् भवतीत्युपचारेण अनिदम्चिदात्मधातुरस्मत्प्रत्ययविषय उच्यते । स पुनरेवम्भूतो जाग्र-[गृ]त्स्वप्नयोरहमुल्लेखरूपेण सुषुप्ते तत्संस्काररञ्जिताग्रहणाविद्याप्रतिबद्धप्रकाशत्वेन च गतागतमाचरन् 'संसारी जीवः विज्ञानघनः विज्ञानात्मा प्राज्ञः शरीरी शारीरः आत्मा सम्प्रसादः पुरुषः प्रत्यगात्मा कर्ता भोक्ता क्षेत्रज्ञः' इति च श्रुतिस्मृति-**

---

चैतन्येऽध्यस्तैकत्वेनेत्यर्थः । शारीरः क्षेत्रज्ञ इत्यादिबहुविधोपाधिसंसृष्टमात्मानं वक्ति श्रुतिः, तत्र कथं अहङ्कारस्योपाधितेत्याशङ्क्य, अहङ्कारतत्संस्कारोपरक्ताज्ञानोपाधिकस्यैवात्मनो बाह्यबहुविधोपाध्यन्तरनिमित्तेयमुक्तिरित्याह — **स पुनरिति । गतागतमाचरन्** इत्यनेकोपाध्युपराग उच्यते ॥

इहलोकपरलोकगन्तृत्वात् **संसारी**, विज्ञानाख्यलिङ्गशरीराभेदाध्यासा**द्विज्ञानघनः**, लिङ्गशरीरान्तरतया तत्साक्षित्वा**द्विज्ञानात्मा**, सुषुप्तौ सर्वविशेषशून्यत्वेनाखण्डाज्ञानसाक्षित्वेनाखण्डबोधत्वात् **प्राज्ञः**, स्थूलशरीरान्तरात्मत्वेन तत्साक्षित्वाच्**छरीरी**, भोगायतनत्वेन निर्मिते देहे भोक्तृत्वेन सदा भवतीति **शारीरः**, सर्वस्यानुपचरितस्वरूपत्वा**दात्मा**, स्थूलसूक्ष्मोपाधिसम्पर्कजदुःखशून्यत्वात् सुषुप्ते सम्यक् प्रसीदतीति **सम्प्रसादः**,(सर्वपुरुष)[सर्वासु पूर्षु]साक्षित्वेन

---

नाध्यस्ततयेत्यर्थः । इहलोकपरलोकसंसरणशीलत्वात् **संसारी**त्युच्यते । कार्यकारणोपाधिभिरनेकैस्तिरस्कृतोऽपि तत्साक्षित्वेन सदा जीवति प्राणान् धारयति इति च जीव इत्युच्यते । विज्ञानाख्यलिङ्गशरीराभिमानभेदाध्यासवत्त्वा**द्विज्ञानघन** इत्युच्यते । लिङ्गशरीरान्तरात्मत्वाभिप्रायेण **विज्ञानात्मे**त्युक्तः । सुषुप्तौ सर्वविशेषविज्ञानशून्यतया अज्ञानतमस्साक्ष्यखण्डज्ञानस्य योगविवक्षया वा **प्राज्ञ** इत्युक्तः । स्थूलशरीरान्तरात्मत्वेन तत्साक्षिताभिप्रायेण **शरीरी**त्युक्तः । कर्मणा कर्मफलभोगायतनत्वेन निर्मितेन शरीरेण कर्मफलभोक्तृत्वेन सदा भातीति **शारीर** इत्युक्तः । अनुपचरितस्वरूपत्वेन सर्वात्मत्वविवक्षया **आत्मे**त्युक्तः । स्थूलोपाधिसम्पर्कजदुःखशून्यत्वात् स्वप्ने प्रसीदति, सूक्ष्मोपाधिसम्पर्कनिमित्तदुःखेनापि शून्यत्वात् सुषुप्ते तु सम्यक् प्रसीदतीति विवक्षितत्वात् सम्प्रसाद

**प्रवादेषु गीयते। किञ्च—न केवलमस्मत्प्रत्ययविषयत्वादध्यासार्हः। अपरोक्षत्वाच्च। तत्साधनार्थमाह प्रत्यगात्मप्रसिद्धेरिति। न ह्यात्मन्यप्रसिद्धे स्वपरसंवेद्ययोः विशेषः। न च संवेद्यज्ञाने-नैव तत्सिद्धिः, अकर्मकारकत्वादतिप्रसङ्गात्। न च ज्ञानान्तरेण। भिन्नकालत्वे संवेद्यसम्बन्धानवगमात् स्वपरसंवेद्याविशेषात्।**

---

शयनात् **पुरुषः**, सर्वान्तरात्मत्वात् **प्रत्यगात्मा**, आसम्यग्ज्ञानात् सदा कर्म-करणात् **कर्ता**, तत्फलभोक्तृत्वाद्भोक्ता, समष्टिव्यष्टिरूपं सर्वं क्षेत्रं स्वाभासद्वारा जानातीति **क्षेत्रज्ञः** उच्यते॥

सविकल्पकेऽधिष्ठाने सविकल्पकाध्यास इति वदतः पूर्वाहङ्काराध्यासेन सविकल्पके(ऽपि) उत्तराध्यास इति उत्तरमुक्त्वेदानीं निर्विकल्पकेऽपि सविकल्पकाध्यासः सम्भवतीत्याह—**किञ्चेति**। नित्यानुमेय आत्मा कथमपरोक्षतया सिद्ध इति; नेत्याह—**न हीति**। आत्मनोऽनुमेयत्वे स्वपरयो-र्मयेदं विदितमित्यपरोक्षसम्बन्धबुद्ध्यभावाविशेषात् परज्ञानमिव स्वज्ञानमपि परं प्रति न बोधयेदित्यर्थः। अस्तु तर्हि विषयसंविदाश्रयत्वेनापरोक्षतेत्यत्राह—**न च संवेद्येति**। संवित् आश्रयस्यापि साधिका तस्याः स्वोपाधिसाधकत्वा-दित्याशङ्क्य, चक्षुरादेरपि साधकत्वापातान्नेत्याह—**अतिप्रसङ्गादिति**॥

अस्तु तर्हि आत्मविषयज्ञानान्तरादित्यत्राह—**न चेति**। तत ज्ञानान्तरं विषयानुभवाद्भिन्नकालं? एककालं वा? आद्ये दोषमाह—**भिन्नकालत्वे इति**। सम्बन्धिनोरेककालीने सम्बन्धज्ञाने प्रकाशासम्भवेन

---

इत्युक्तः। सर्वपुरेषु साक्षित्वेन शयनात् **पुरुष** उक्तः। सर्वान्तरात्मत्वविवक्षया **प्रत्य-गात्मा** उक्तः। क्रियाविज्ञानसमर्थलिङ्गोपाधिकस्सन् आसम्यग्ज्ञानादनवरतं कर्माणि करोति तत्फलानि च भुङ्क्त इति विवक्षितत्वात् **कर्ता भोक्ते**त्युक्तः। समष्टिव्यष्टिरूप-सर्वक्षेत्रेषु प्रतिबिम्बितः सन् स्वाभासद्वारेण सर्वं क्षेत्रं जानातीत्यभिप्रायेण **क्षेत्रज्ञ** उक्तः॥

आत्मा क्षणिकः, स्वयंप्रकाशत्वात्, संवेदनवत् इत्याशङ्क्य, संवेदनशब्देन सोपाधिकं निरुपाधिकं वा चैतन्यमुच्यते? प्रथमे साधनविकलता, द्वितीये साध्यविकलता, असपक्षता

न ह्येककालं विरुद्धविषयद्वयग्राहिज्ञानद्वयोत्पादः। न हि देवदत्तस्याग्रपृष्ठदेशस्थितार्थव्यापिगमनक्रियाद्वयावेशो युगपत् दृश्यते। आह—मा भूत् चलनात्मकं क्रियाद्वयं युगपत्, परिणामात्मकं तु भवत्येव। मैवम्—परिस्पन्दात्मकमपि भवत्यविरुद्धम्, यथा गायन् गच्छतीति। परिणामात्मकमपि न भवति विरुद्धम्, यथा यौवनस्थाविरहेतुः। तस्मात् प्रत्यगात्मा स्वयंप्रसिद्धः सर्वस्य हानोपादानावधिः स्वयमहेयोऽनुपादेयः स्वमहिम्नैवापरोक्षत्वादध्यासयोग्यः॥

**ननु न क्वचिदपरोक्षमात्रेऽध्यासो दृष्टपूर्वः, सर्वत्राक्षिसम्प्रयोगितया पुरोवस्थितापरोक्ष एव दृश्यते, इत्याशङ्क्याह—न**

---

स्वपरयोः सम्बन्धबुद्ध्यभावाविशेषात् परज्ञातवत् स्वज्ञातमपि परं प्रति न बोधयेदित्यर्थः। द्वितीयं प्रत्याह—**न ह्येकेति**। निरवयवस्य युगपदेकदेशेन वा कात्स्न्येन वा व्यापारद्वयायोगादित्यर्थः। एकस्य युगपत् कात्स्न्येंन परिस्पन्दद्वयं न सम्भवति, परिणामस्तु सम्भवतीत्याशङ्कते—**मा भूदिति**। परिणामद्वयमपि युगपत् कात्स्न्येंन न सम्भवति इति दूषयति —**मैवमिति**। परिशेषात् स्वयम्प्रकाशत्वेनापरोक्ष इति निगमयति—**तस्मादिति**। नात्मा स्थिरः स्वप्रकाशत्वात् संविद्वदित्याशङ्क्य, संविदिति निरुपाधिकं सोपाधिकं वा चैतन्यमुच्यते? आद्ये पक्ष एव दृष्टान्तः साध्यविकलश्च, द्वितीये साधनविकल इति मत्वा आह—**सर्वस्येति**। सर्वस्य जन्मादिसाक्षित्वेन तदधिष्ठानत्वान्नियमेनौपाधिकजन्मादिप्रतिभासित्वाच्च स्वतो जन्मादिषड्भावविकारशून्य इत्यर्थः॥

---

च पक्षानतिरेकादिति मत्वा आह—**सर्वस्येत्यादिना**। सर्वस्य जन्मविनाशयोः साक्षित्वेन तदधिष्ठानत्वात् नियमेन परोपाधिनिबन्धनेन जन्मादिप्रतिभासत्वाच्च स्वतो जन्मादिषड्भावविकारशून्य इत्यर्थः। **सर्वत्रेति**। इन्द्रियसम्प्रयोगितया पुरःस्थिते अवच्छिद्य स्थिते

चायमस्ति नियमः **इति** । **अप्रत्यक्षेऽपि ह्याकाशे** इति । परोक्षे इत्यर्थः । अथवा अक्षव्यापारमन्तरेणाप्यपरोक्षे आकाशे । **बालाः**—अयथार्थदर्शिनः । **तलम्**—इन्द्रनील(तमाल)[मात]पत्र-सदृशम्, **मलिनतां च** धूमादिकमन्यच्च नीलोत्पलसमानवर्णतादि **अध्यस्यन्ति** । **एवमविरुद्धः** इति सम्भावनां निगमयति । यथा आकाशस्याक्षव्यापारमन्तराप्यपरोक्षता तथा दर्शयिष्यामः ॥

ननु ब्रह्मविद्यामनर्थहेतुनिबर्हणीं प्रतिजानता अविद्या अनर्थहेतुः सूचिता । ततः सैव कर्तृत्वाद्यनर्थबीजमुपदर्शनीया । किमिदमध्यासः प्रपञ्च्यते? इत्याशङ्क्य, आह—**तमेतमेवंलक्षण-मध्यासं पण्डिताः**—प्रमाणकुशलाः **अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः**—अध्यस्ता-तद्रूपसर्पविलयनं कुर्वत् वस्तुस्वरूपं रज्जुरेवेत्यवधारयत् विज्ञानं

---

अध्यस्यमानेनैकेन्द्रियग्राह्यत्वमधिष्ठानस्य वक्तव्यम्, नापरोक्षतामात्रेण कृत्यमित्याशङ्क्य आकाशदृष्टान्तः इति भाष्यतात्पर्यमाह—**ननु न क्वचिदिति** । **पुरोऽवस्थितेति** । पुरःस्थिते अवच्छिद्य स्थिते चेत्यर्थः ।—**इन्द्रिय[अक्ष]-सम्प्रयोगितयेति** । अध्यस्यमानेनैकेन्द्रियग्राह्यतयेत्यर्थः । अपरोक्षमाकाशमिति मतमनुसृत्याह—**अथ वेति । अक्षव्यापारमन्तरेणेति** । साक्षिवेद्यतया मनोमात्रगम्यतया वेत्यर्थः। सर्वथा अध्यस्यमानेनैकेन्द्रियग्राह्यत्वादिनियमो नास्ती-त्यर्थः । इन्द्रनीलवन्नीलमित्यर्थः । कथं [आकाशस्य] विना अक्षव्यापारमपरोक्षते-त्यत्राह—**यथेति** । चाक्षुषत्वे रूपस्पर्शवत्त्वयोरपि प्रसङ्गात् मनसश्च केवलस्य

---

चेत्यर्थः । अपरोक्षतया प्रतिपन्नस्यैवापरोक्षभ्रमाधिष्ठानत्वं त्वयाप्यङ्गीक्रियत इति ; तत्राह—**अथ वेति** ॥

सुषुप्ते केवलाविद्यायाः पुरुषार्थत्वादेव पुरुषस्य तन्निवृत्त्यपेक्षा न भवेत्, पुरुषेच्छायाः कर्तृत्वादिसंसारानर्थनिवृत्तिविषयत्वात् तन्निवर्तकज्ञानाय विचारः कर्तव्य इत्युक्ते कथ-मनर्थस्य ज्ञाननिवर्त्यत्वं सम्भवतीत्याकाङ्क्षायां तस्याध्यासात्मकत्वं अनुपपत्त्या अत एवाविद्या-

विद्येति प्रसिद्धमेव लोके ब्रह्मविदो वदन्ति। यद्येवं अध्यास इति प्रक्रम्य पुनस्तस्याविद्याभिधानव्याख्याने यत्नगौरवात् वरमविद्येत्येवोपक्रमः कृतः। नैतत् सारम्—अविद्येत्येवोच्यमाने आच्छादकत्वं नाम यत् तस्यास्तत्त्वं तदेवाभिहितं स्यात्, न अतद्रूपावभासितया अनर्थहेतुत्वम्। अतोऽतद्रूपावभासित्वमध्यासशब्देन प्रकृतोपयोगितया उपक्षिप्य पुनस्तस्याविद्याशब्दतया विद्यामात्रापनोदनार्हत्वं दर्शनीयम्। तदेतदाह—**यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न सम्बध्यते** इत्यवस्तवमनर्थं दर्शयति। वास्तवत्वे हि न ज्ञानमात्रात् तद्विगमः इति प्रतिज्ञा हीयेत।

एवं तावत् युष्मदस्मदित्यादिना मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इत्यन्तेन भाष्येण सिद्धवदुपन्यस्तमात्मानात्मनो-

---

बहिर्व्यापारात् अपरोक्षभ्रमाधिष्ठानत्वेनापरोक्षत्वस्य च वक्तव्यत्वाच्च आकाशस्य साक्षिप्रत्यक्ष[विषय]तां वक्ष्यामः। तस्मादपरोक्षमेवापरोक्षभ्रमाधिष्ठानमिति नियमेऽपि न विरोधः। अधिष्ठानारोप्ययोरेकज्ञानयोग्यतामात्रं [अध्यासे] प्रयोजकं तच्चास्त्येवेत्यर्थः। **[यत्र यदध्यास इत्यादि**। अविद्याध्यासस्यानादितया] तद्रूपपरिणामाभावात् कादाचित्काध्यासपरिणामस्याविद्योपादानत्वेनाविद्यासम्भिन्नात्माश्रयत्वाच्च [आत्मनः अध्यासपरिणामितया आश्रयत्वप्रयुक्तदोषगुणाभावः] सिध्यतीत्यर्थः। **प्रतिज्ञेति** सूत्रकारस्य ज्ञानेन बन्धनिवृत्तेरर्थात् सूत्रणमुच्यते॥

वृत्तकीर्तनपूर्वकमुत्तरभाष्यतात्पर्यमाह—**एवं तावदिति**। अध्यास-

---

कार्यत्वेन अविद्यात्मकत्वान्निवर्त्यत्वं सम्भवतीति पश्चाद्वक्तव्यमित्याह—**नैतत् सारमिति**। **प्रकृतोपयोगितयेति**। अनर्थनिबर्हणाय ज्ञानं सूत्रितं तदुपयोगितयेत्यर्थः। सिसाध-

रितरेतरविषयमविद्याख्यमध्यासं सिषाधयिषुः तस्य लक्षणमभिधाय तत्सम्भवं चात्मनि दर्शयित्वा पुनस्तत्र [तत्-]सद्भावनिश्चयमुपपत्तित उपपादयितुमिच्छन्नाह—**तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति।** मोक्षपरत्वं च शास्त्रस्य विधिप्रतिषेधविरहिततया उपादानपरित्यागशून्यत्वात् स्वरूपमात्रनिष्ठत्वमङ्गीकृत्य पृथक् क्रियते। **कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति।**

---

मित्यत्र विस्तृत्य लक्षणसम्भावनाप्रमाणैरिति शेषः। प्रथमभाष्ये **अयमिति** सूचितं साक्षिप्रत्ययनिश्चयं विवृत्त्यार्थापत्त्यादिभिः संवादरूपैः द्रढीकर्तुमुत्तरं भाष्यमिति [तात्पर्यम्। अत्र च] मातृमानमेयकर्तृकर्मकार्यभोक्तृभोगभोग्याख्यव्यवहारत्रयं देहेन्द्रियादिषु अहंममाध्यासं पुरस्कृत्य प्रत्यक्षसिद्धमिति प्रत्यक्षं भाष्ये विवृतम्। **विधिप्रतिषेधपराणी**त्येवालम्, तन्निष्ठत्वात् सर्वशास्त्राणामित्यत्राह—**मोक्षपरत्वमिति। पृथक्क्रियते** इत्यनेनान्वयः। पृथक्कारे हेतुः—**शास्त्रस्ये**त्यादि। उक्तमुपेत्य व्यवहारत्रयमध्यासोपादानम्, तत्र मानान्तरप्रश्नार्थं **कथं**

---

**यिषुरिति।** लक्षणसम्भावनासद्भावप्रमाणैः सिसाधयिषुरित्यर्थः। **तत्सद्भावनिश्चय**मित्यत्र लक्षणसिद्धस्वरूपं तदित्युच्यते। सम्भावनासि[द्ध]स्वरूपं **सम्भव** इत्युच्यते। पूर्वत्र भाष्ये **नैसर्गिकोऽय**मित्यनेन पदेन अत्र भाष्ये **पुरस्कृत्ये**ति पदेन चाध्यासस्य साक्षिप्रत्यक्षसिद्धत्वमुक्तम्। तत् प्रत्यक्षं **निश्चय**शब्देन उच्यते। साक्षिप्रत्यक्षस्य सर्वेषां निसर्गसिद्धत्वात् तत्सम्पादनं कृतकरणमिति मत्वा, तत्समर्थनकारणभूतार्थापत्तिव्यतिरेक्यनुमानादिभिरुपपत्तिशब्दार्थभूतैः साक्षिप्रत्यक्षमहंममाभिमानलक्षणाध्यासविषयं भूत्वा लौकिकवैदिकव्यवहारकारणं भवतीति स्थापयितुमारभत इत्याह—**उपपत्तित इति।** आत्मनोवादाधिकारं दर्शयितुमध्यासस्योक्तलक्षणसम्भावने मया ज्ञाते अङ्गीकृते चेति दर्शयति—

बाढमुक्तलक्षणा अविद्या प्रत्यग्दृश्यपि सम्भवेत्, न एतावता तत्सम्भवः सिध्यति। तेन निदर्शनीयः सः। प्रमातारमाश्रयन्ति प्रमाणानि। तेन प्रमाता प्रमाणानामाश्रयः, नाविद्यावान् अनुपयोगादित्यभिप्रायः। अथवा **कथमविद्यावद्विषयाणि प्रत्यक्षादीनि शास्त्राणि च प्रमाणानीति** सम्बन्धः। अविद्यावद्विषयत्वे सति आश्रयदोषानुगमादप्रमाणान्येव स्युरित्याक्षेपः। उच्यते—**देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति** भाष्यकारस्य वस्तुसंग्रहवाक्यम्। अस्यैव प्रपञ्चः **नहीन्द्रियाण्यनुपादाये-त्यादिः**। न हि देहेन्द्रियादिष्वहंममाभिमानहीनस्य सुषुप्तस्य

---

पुनरित्यादि भाष्यमित्याह—**बाढमित्यादिना**। **प्रत्यक्षादीनीति** (अ)-तद्गुणसंविज्ञानो बहुव्रीहिः। प्रश्नपक्षे **विषयशब्दस्य** मुख्योऽर्थः। आक्षेपपक्षे त्वाश्रये गौणः। अस्यैव भाष्यस्याक्षेपार्थमाह—**प्रमातारमिति**। विधान्तरेण [तस्मि]न् भाष्यं योजयति—**अथ वेति**। अविद्यावदाश्रयत्वे का प्रामाण्यानुपपत्तिरित्यत्राह—**अविद्यावदिति**। **उच्यते** इत्यादि परिहारभाष्यं विभागेनावतारयति—**उच्यत इति**॥

व्यवहारत्रयमध्यासोपादानमित्यत्र अर्थापत्तिव्यतिरेकानुमाने वक्तुं यत्र यत्र अध्यासाभावः तत्र व्यवहारो न दृष्ट इति व्यतिरेकव्याप्तिं भाष्यार्थमाह—**न हीति**। देहेन्द्रियादिष्वहमभिमानः कदाचिदपि नास्तीत्याशङ्क्य, विभाге-

---

**बाढमिति**। **बाढ**मित्यत्राङ्गीकृतांशमाह—**उक्तेति**। अनङ्गीकृतांशमाह—**नैतावतेति**। **प्रमातारमिति**। प्रमाणाख्यकार्याणि प्रमातृत्वशक्तिमन्तमेव कारणत्वेन स्वीकृत्योद्भवन्ति इति यतः **तेने**त्यर्थः। **देहेन्द्रियादि**ष्वेकैकस्मिन् **अहंममाभिमानहीनस्य** पुंसः प्रमातृत्वाभावश्चेदेकस्मिन् उभयाभिमानासम्भवान्न कदाचिदपि प्रमातृत्वं सम्भवति। एतत्परिहारार्थं देहेऽहमभिमानः इन्द्रियादिषु ममाभिमान इति विभागेनान्वयेऽपि, देहो-

प्रमातृत्वं दृश्यते। यतो देहे अहमभिमानः इन्द्रियादिषु ममाभिमानः। आदिशब्देन बाह्याद्यवयवग्रहणम्। देहशब्देन सशिरस्को मनुष्यत्वादिजातिसम्भिन्नोऽवयवी अभिमतः न शरीरमात्रम्। देहोऽहमिति प्रतीत्यभावात्। सर्वो हि 'मनुष्योऽहं देवोऽह'मिति जातिविशेषैकाधिकरणे चैतन्ये एव प्रवर्तते इति स्वसाक्षिकमेतत्। न स्वत्वेन संबन्धिना मनुष्यावयविना

---

नाध्यासमाह—**यत इति**। देहेऽप्यहमभिमानः नास्तीत्यत्राह—**देहशब्देनेति**। अतो न दोष इति शेषः। जातिविशेषा[धिकरणे अ]वयविन्यपि प्रतीत्यभावस्तुल्य इत्याशङ्कां शमयन् प्रागुक्तं प्रत्यक्षमनुवदति प्रमाणान्तरं वक्तुम्—**सर्वो हीति**। मनुष्यत्वादिजातिविशेषस्याधिकरणं देहः, तस्मिन्नहमवभासे सत्येवेत्यर्थः। डित्थस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपूर्वकप्रमातृत्वादिव्यवहारवन्तौ, तस्यैव सुषुप्तिकालान्यकालत्वात्, यः कालस्तथाविधव्यवहारवान्न भवति, न स तस्यैव सुषुप्तिकालादन्यकालः, यथा तस्यैव सुषुप्तिकालः इति व्यतिरेकि। व्यवहारत्रयमध्यासं विना अनुपपन्नं, अध्यासाभावे व्यवहारादर्शनात् सुषुप्ते इत्यर्थापत्तिः। कर्तृकरणयोः संबन्धमात्रं व्यवहारे अपेक्ष्यते नाध्यासिकतादात्म्यं इत्याशङ्क्य, परिशेषानुमानार्थापत्तिसिद्धये सम्बन्धान्तराणि व्यावर्तयन् न तावत् स्वस्वामिसम्बन्ध इत्याह—**न स्वत्वेन संबन्धिनेति**। सुषुप्तेऽपि तस्य भावादित्यभ्युच्चयः॥

---

ऽहमित्यभिमानाभावात् तन्मूलप्रमातृत्वासम्भवस्तदवस्थ एवेत्याशङ्क्याह—**यतो देहे इति**। **देहेऽहमभिमानः इन्द्रियादिषु ममाभिमान** इति **यतः** अतस्तन्मूलप्रमातृत्वं सम्भवतीत्यर्थः। देहेऽहमभिमानासम्भवात् तन्मूलत्वेन प्रमातृत्वं न सम्भवतीति चोद्यस्य परिहारोपयोगित्वेन देहशब्दार्थमाह—**देहशब्देनेति**। भाष्यकारेण केवलदेहेऽहमभिमान उक्तः, कथं युष्माभिः विशेष्यत इत्याशङ्क्याह—**न शरीरमात्रमिति**। अर्थापत्तेरन्यथाप्युपपत्त्यभावं अनुमानस्य [व्या.क]विशेषविरुद्धत्वाभावं च दर्शयति—**न स्वत्वेनेत्यादिना**॥

तदनुस्यूतेन वा चक्षुरादिना प्रमात्रादिव्यवहारः सिध्यति। भृत्यादिमनुष्यावयविनापि प्रसङ्गात् ॥

अपर आह—आत्मेच्छानुविधायित्वं कार्यकरणसंघातस्यात्मना सम्बन्धः, तस्यापि तस्य यथेष्टविनियोजकत्वं तेन सम्बन्धः, तत आत्मनः प्रमात्रादिकः सर्वः क्रियाकारकफलव्यवहारः। तथा च उतिष्ठामीति इच्छयोत्तिष्ठत्युपविशति च। न च भृत्यादिषु तदस्ति। तेन तत्र प्रमात्रादिव्यवहाराभावः, न मिथ्यामुख्याभिमानाभावादिति। नैतत् संविदि बहुमानवतो युक्तम्। तथाहि 'मनुष्योऽह'मिति स्वसाक्षिका संवित्। न 'मे मनुष्यः' इति। गौणीति चेत्, भवानेवात्र प्रमाणम्।

---

इच्छानुविधायित्वमेव व्यवहारनिमित्तं सम्बन्धः, तदभावात् सुषुप्ते व्यवहाराभाव इत्याशङ्कते—**अपर आहेत्यादिना**। अस्तु इच्छामात्रेण विनियोज्यविनियोजकसम्बन्धः, ततः किमित्यत्राह—**तत आत्मन इति**। एतत्सम्बन्धमूलो व्यवहार इत्यत्र मानमाह—**तथा चेति**। भृत्यादीनामपि तदिच्छानुविधायित्वात् तच्छरीरेणापि व्यवहारः स्यादित्यत्राह—**न च भृत्यादिष्विति**। तत्राध्यासिकतादात्म्यानुभवाभावात् प्रमात्रादिव्यहाराभाव इत्यत्राह—**न मिथ्येति**। क्लृप्तहेतौ सति अक्लृप्तकल्पनानुपपत्तेरित्यर्थः। इच्छानुविधायित्वं चेत् व्यवहारमूलं सम्बन्धस्तर्हि [मे मनुष्य इति भायात्, मनुष्योऽहमि]ति तु भाति, अतोऽनुभवविरुद्धमेतदिति दूषयति—**नैतदिति**। तथाऽपि [शरीरादौ ममेति भेदप्रत्यये सति] अहं इति भानात् पुत्रोऽहमितिवत् गौणी

---

**तस्यापि तस्येति**। **तस्यापि**—आत्मनः, **तस्य**—देहस्येति यावत्। आत्मनो देहं प्रति यथेष्टविनियोजकत्वमेव देहेन सम्बन्ध इत्यर्थः। **ततः**—उक्ताद्विनियोज्यविनियोजकत्वलक्षणात् सम्बन्धादित्यर्थः॥

**न मे मनुष्य इति**। अयं **मे मनुष्यः** अतो मदिच्छानुविधायीति स्वदेहे

**अपि च इच्छापि परिणामविशेषः, स कथमपरिणामिन आत्मनः स्यात् परिणाम्यन्तःकरणसम्वलिताहङ्कर्तृत्वमन्तरेण। तथा चानुभवः 'अहमुत्तिष्ठामी'ति इच्छयोतिष्ठत्युपविशति च। तस्मात् यत्किञ्चिदेतत्। अतः स्वयमसङ्गस्याविकारिणोऽविद्या-**

---

इयं संविदिति [शङ्कते—**गौणीति चेदिति**। अस्मदादिदेहदाहादिष्विव स्वदेहदाहादिष्वपि व्यथानुसन्धानं न स्यात्, अतोऽनुसन्धानात् तादात्म्यभानं मुख्यं ममत्वभानं गौणमिति [समाधत्ते—**भवानेवेति**।] किञ्च, इच्छानुविधान-योग्यत्वं चेत् सम्बन्धः, सुषुप्तेऽपि सोऽस्तीति तत्रापि व्यवहारः स्यात्, इच्छया अनुविधीयमानत्वं चेदत्यातुरे नास्तीति प्रमातृत्वादिव्यवहारो न स्यादिति मत्वा आह—**अपि चेति**। इच्छापि अन्तःकरणाध्यासमूलैवेत्याह—**इच्छापीति**। अत्र मानं—**तथा चानुभव इति**। न चाव्यवधानेन भोग्यत्वं स्व[कर्मारभ्य-त्वस्वेन्द्रियाधि]ष्ठेयत्वादि वा देहसम्बन्धः, भोगाद्यध्यासापेक्षत्वात्, न च संयोगसमवायौ, सुषुप्तेऽपि भावात् इति मत्वोपसंहरति—**तस्माद्यत्कि-[ञ्चिदिति**। अतः] परिशेषादर्थापत्त्यनुमानाभ्यामाध्यासिकतादात्म्यमूलं व्यवहार इति सिद्धमित्याह—**अत इति**॥

अविद्या(ऽप्यु)[द्यु]पाधित एवात्मनः सङ्गित्वादि [भाति न स्वत इति वक्तुं कारण]सहकारिभ्यां सम्बन्धायोग्यतामाह—**असङ्गस्येति**। क्रियासम्बन्धायोग्यतामाह—**अविकारिण इति**। प्रश्नस्योत्तरं [सम्प्रति] वक्ति—

---

सम्बन्धानुभवो नास्तीत्यर्थः। पुत्रोऽहमितिवदहं मनुष्य इत्यस्यापि गौणत्वे पुत्रादि-देहदाहच्छेदादिव्यथानुसन्धानाभाववत् स्वदेहदाहच्छेदादिव्यथायामात्मधर्मत्वेनानुसन्धानं न स्यात्, तद्दर्शनात् भेदप्रतिपत्तिं मुख्यार्थगुणसम्बन्धप्रतिपत्तिञ्च विनैव सामानाधिकरण्य-प्रत्ययाच्च न गौणत्वमित्याह—**भवानेवेति**। अविद्याद्युपाधित एवात्मनस्सङ्गितादिप्रतिभासः न स्वतः इत्यात्मनः सङ्गित्वादिप्रतिभासस्यान्यथासिद्धिमाह—**स्वयमिति**। शक्तसहकारि-सम्बन्धायोग्यतामाह — **असङ्गस्येति**। तत्साध्यपरिणामक्रियासम्बन्धायोग्यतामाह — **अविकारिण इति**। प्रमाणप्रश्नोत्तरं परिसमाप्य अ(द्या)[था]क्षेपमनूद्य परिहरति—

ध्यासमन्तरेण न प्रमातृत्वमुपपद्यते। तेन यद्यपि प्रमातृत्वशक्तिसन्मात्रं [सद्भावमात्रं] प्रमाणप्रवृत्तौ निमित्तम्। तदेव तु अविद्याध्यासविलसितमित्यविद्यावद्विषयता प्रमाणानामुच्यते। तथा निरपेक्षाणां स्वसामर्थ्येनार्थसिद्धिं विदधतां बाधानुपलब्धेः प्रामाण्यं अविद्यावद्विषयत्वं च विधिमुखोपदर्शितं न नेति शक्यमपह्नोतुम्। दोषस्तु आगन्तुक एव मिथ्यात्वे हेतुः। न नैसर्गिकः। तथोपलब्धेः। न च सर्वसाधारणे नैसर्गिके दोषबुद्धिः। तथाहि—क्षुत्पिपासोपजनिते सन्तापे शश्वदनुवर्तमाने जाठराग्निकृतविकारे अन्नपानानिष्यन्दे वा न रोगबुद्धिर्जनस्य। मुहूर्त्तमात्र-

---

**तेनेति**। द्वितीयाक्षेपं सम्प्रतिवक्ति—**तथेति**। सापेक्षत्वलक्षणाप्रामाण्यं नेत्याह—**निरपेक्षाणामिति**। अ[बोधकत्वलक्षणाप्रामाण्यं नेत्या]ह—**अर्थसिद्धिमिति**। संशयविपर्ययाप्रामाण्यं नेत्याह—**बाधानुपलब्धेरिति**। प्रत्यक्षादेरिष्टं [कीदृशं प्रामाण्यं हीयेतेत्युच्यते] व्यावहारिकं प्रामाण्यं तत्वावेदकं वा? नाद्यः। तदर्थस्य व्यवहारकाले बाधाभावात्। न द्वितीयः। केनापि प्रकारेणाद्वयस्याबाध्यत्वादि[ष्टापत्तेः। तदेवं प्रत्यक्षादीनां प्रा]माण्यं प्रत्यक्षानुमानार्थापत्तिसिद्धमध्यासमूलत्वं चोभयं [न] निरस्यमित्याह — **प्रामाण्यमिति**। प्रमाणदुष्टकारणजन्यज्ञानस्य[न]वि[षयतो]बाधाभाव इत्यत्राह—**दोषस्त्विति**। प्रमाणकारणकारणेषु सत्सु पश्चाद्भवन् दोष आगन्तुकः, स दोष इत्युच्यते। प्रमाणकारणभूतो यो दोषः [स न दोषः, कारणत्वात,] पापानुमाने काचादिवदित्यर्थः।

तथोपलब्धिं प्रपञ्चयति—**न च सर्वेति**। आगन्तुके दोषे दोषबुद्धिः

---

**तथेति**। प्रत्यक्षादिप्रमाणानां सापेक्षत्वलक्षणाप्रामाण्यं नास्तीत्याह—**निरपेक्षाणामिति**। अनुत्पत्तिलक्षणाप्रामाण्यन्नास्तीत्याह—**अर्थसिद्धिमिति**। संशयविपर्ययाप्रामाण्यद्वयं नास्तीत्याह—**बाधानुपलब्धेरिति**। शक्तिमत्करणा(दित्य)[दीन्या]श्रित्य तच्छक्त्युपपादकत्वेन प्रा(प्त:)[प्त]कार्यनिरोधको यस्स दोषोऽप्रामाण्यहेतुः, न तु करणादिस्वरूपसम्पादक इत्याह—**दोषस्त्विति**। दोषत्वमात्रप्रयुक्तमेवाप्रामाण्यमित्याशङ्क्याह—न

परिवर्तिनि मन्दे ज्वरे प्रतिश्याये वा अल्पकफप्रसूतावपि रोगबुद्धिः। अनैसर्गिकत्वात्। अनैसर्गिकं च दोषमभिप्रेत्योक्तं 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः' इति।

इतश्चैतदेवं—पश्वादिभिश्चाविशेषात्। तथाच पश्वादयः प्रमातृत्वादिव्यवहारकाले प्रवृत्तिनिवृत्त्यौदासीन्यं भजमानाः कार्यकरणसङ्घाते एवाहंमानं कुर्वन्तीति प्रसिद्धं लोके। तदेकरूपयोगक्षेमा हि मनुष्या जन्मत एव पश्वादिभ्योऽधिकतरविवेकमतयः शास्त्राधेयसाम्परायिकमतिसामर्थ्या अपि। अतः तदेकरूपकार्यदर्शनात् कार्यकरणसङ्घातेऽप्यात्माभिमानः

---

न नैसर्गिके, इत्येताव[न्मात्रे दृष्टान्तः। भा]ष्ये दोषजत्वं ज्ञानस्य विषयतोऽपि मिथ्यात्वे हेतुरुक्त इति; नेत्याह—**अनैसर्गिकं चेति**। अप्रामाण्यस्योत्पत्तौ हेतुः—**यस्य चेति**। ज्ञप्तौ हेतुः—**यत्र चेति**। अतो मिथ्याद्वैतस्फुरण एव दोषत्वं अविद्याया नान्यत्रेत्यर्थः। नन्वविवेकिनां व्यवहारोऽध्यासमूलोऽस्तु, न [विवेकिनां,] ज्ञानित्वात् इत्याशङ्क्य, विवेकिव्यवहारोऽध्यासमूलः स्वेनाबाधितव्यवहारत्वात् पश्वादिव्यवहारवदित्याह—[**इतश्चैतदेवं पश्वादिभिश्चेति**। शरीरा]त्मनोः स्वरूपस्य भेदत्वेन बाह्यमानसप्रत्यक्षाभ्यां भेदज्ञानित्वात् कथं [पश्वादीनां]व्यवहारस्याध्यासमूलतेत्यत्राह—[**तथा चेति**। भेदज्ञानस्य शास्त्र] सापेक्षत्वात् तत्र चानधिकारात् पश्वादेरित्यर्थः। उपनयमाह—**तदेकेति**। शास्त्रार्थज्ञानिनां कथं पश्वादितु[ल्यत्वमित्याशङ्क्य, अ]कर्त्रात्मज्ञानाभावात् तत्रोक्तहेतुरस्तीत्याह—**जन्मत एवेति**। निगमनमाह—**अतस्तदेकरूपेति**॥

---

**चेति**। अप्रामाण्योत्पत्तिकारणमाह—**यस्य चेति**॥

इदानीं विवेकिव्यवहारोऽध्यासमूलः व्यवहारत्वात् पश्वादिव्यवहारवदि(तीत्यन्वयः। अनु)[त्यन्वय्यनु]मानमाह—**इतश्चेति**। तेषां कार्येण **एकरूपकार्यदर्शनात्** व्यवहारलक्षणकार्यहेतुभूताध्यासोऽपि पश्वादिसमानो युक्त इत्याह—**कार्यकरणेति**। भेदस्य स्वरूप-

समानो युक्तः। ननु पश्वादीनामपि कार्यकरणसङ्घाते अहङ्कारानुबन्ध इति कुतोऽवसीयते ? येन सिद्धवदभिधीयते। उच्यते—प्रौढमतिभ्य एव प्रत्यक्षादिवृत्तकुशलैरात्मा व्युत्पाद्यते। अन्यथा तदनर्थकत्वप्रसङ्गात्। एवमेव प्रमाणविचारविरहं सर्वः संप्रतिपद्येत ॥

ननु गोपालाङ्गनादयः प्रमाण[विचार]विरहमेव वर्त्तमान-देहपातेऽपि स्थायिनं भोक्तारं मन्यमानाः तदर्थमाचरन्ति। न तदभिज्ञव्यवहारमात्रप्रमाणकत्वात्। तथाच ते पृष्टाः कः परलोकसम्बन्धीति न विद्मो विशेषतः, प्रसिद्धो लोके इति प्रतिब्रुवन्ति। तस्मात् युक्तमुक्तं 'पश्वादीनां च प्रसिद्धोऽविवेक-पूर्वकः प्रत्यक्षादिव्यवहारः, तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समानः' इति। एवं तावत्

---

तथापि पश्वादिदृ[ष्टान्ते अध्यासो]नास्तीत्याशङ्कते—**ननु पश्वादीनामिति**। दैवगत्या भिन्नयोर्ज्ञाने सति, प्रत्यक्षादिभिः भेदाप्रतिपत्तावध्यासः परिशिष्यत [इत्याह—**प्रौढमतिभ्य इति**।] देहातिरिक्तज्ञानार्थत्वात् कथमानर्थक्यमित्यत्राह—**एवमेवेति**। विचारहीनानामप्यदृष्टार्थव्यवहारदर्शनात् विना विचारं [प्रत्यक्षेणैव]भेदो गृह्यत इत्याशङ्कते—**ननु गोपालेति**। न प्रत्यक्षेण तेषां भेदग्रहः, किन्त्वाप्तवाक्यादिति दूषयति—**न तदभिज्ञेति**। प्रत्यक्षेण [चेत्तेषां भेदग्रहः विशेषतः प्रत्यगात्मानं प्रतिपद्येरन्] न तदस्तीत्याह—**तथा चेति**। अतो निगमनभाष्यं युक्तमित्याह—**तस्माद्युक्तमिति**। **प्रत्यक्षादि-**

---

त्वादेव पश्वादिशरीरतदात्मनोश्च स्वरूपग्राहिबाह्यमानसप्रत्यक्षाभ्यां (तयोः)[तस्य]। प्रभि[तिरिति]चोदयति—(**अन्यथेति**।) [**नन्विति**] दूषणान्तरमाह—**एवमेवेति**। [यथा पश्वादीनां] अहम्प्रत्ययः एवमे(वेति)व। अहंप्रत्यय एव देहादिव्यतिरिक्तस्वात्मग्राहीत्यत्र साधकमाह—**नन्विति** ॥

प्रत्यक्षादीनि प्रमाणानि चक्षुरादिसाधनानि, तानि च नाधिष्ठान-शून्यानि व्याप्रियन्ते, अधिष्ठानं च देहः, न तेनानध्यस्तात्मभावेनासङ्गस्याविकारिणः चैतन्यैकरसस्यात्मनः प्रमातृत्वमुपपद्यते, इत्यनुभवारूढमविद्यावद्विषयत्वं प्रत्यक्षादीनामुपदिश्य ; पश्वादिव्यवहारसाम्येन कार्यतोऽप्यापाद्य, शास्त्रं पुनः प्रतिपन्नात्मविषयमेव तेन न तत्राध्यासपूर्विका प्रवृत्तिः इति विशेषमाशङ्क्य, तस्याप्यविद्यावद्विषयत्वप्रदर्शनायाह—**शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा आत्मनः परलोकसम्बन्धमधिक्रियते इति ।**

---

व्यवहार इत्यध्यासो लक्ष्यते । स च (मान एवाज्ञान....इति)[**तत्कालः समान इति** ।]तस्य व्यवहारस्य काल एव कालो यस्य देहाद्यध्यासस्य स **समानः** पश्वादिभिर्विवेकिनामित्यर्थः । यद्वा, व्यवहा[रपदेन मुख्य एवार्थो गृह्यते । तस्याध्यास]व्यभिचारमाशङ्क्याह—**तत्काल इति** । (व्यवहार)[अध्यास]काल एव कालो यस्य व्यवहारस्य [स] समानोऽध्यासमूल[क इ]त्यर्थः ॥

**एवं तावदित्युक्तानुवादः** । रूप्याद्यध्यासवत् देहाद्यध्यासो व्यवहारे निमित्तं उपादानं चात्मा, [इत्याशङ्कानिवर्त]कं **न तेनानध्यस्तेत्यादि** भाष्यं पूर्वं न व्याख्यातम् । तदनुवादग्रन्थे व्याचष्टे—**न तेनानध्यस्तेति** । सुषुप्ते [केवलात्मनि व्यवहारादर्शनात्] व्यवहाराश्रयकोटिनिक्षिप्तत्वाच्चान्वयव्यतिरेकसिद्धस्य देहाद्यध्यासस्यान्तरङ्गोपादनतेत्यर्थः । [शास्त्रीये तु इत्याद्युत्तरभाष्यस्य] तात्पर्यमाह—**शास्त्रं पुनरिति । प्रतिपन्नात्मविषयमिति** । देहादिभ्यो भेदेन प्रतिपन्नात्माधिकारमित्यर्थः । **आहेति** अदृष्टार्थप्रवृत्तौ भेदज्ञा[नमभ्यनुजानाति ।]

---

**प्रतिपन्नात्मविषयमिति** । देहेन्द्रियादिभ्यो व्यतिरिक्तत्वेन प्रतिपन्न 'आत्मा यस्य स तथोक्तः ॥

मन्त्रार्थवादादीनां स्वार्थे प्रामाण्यमनङ्गीकुर्वतां मीमांसकानां न विधिप्रामाण्यसिद्ध्यर्थं देहव्यतिरिक्तात्मापेक्षा अस्ति, शारीरकभाष्यकारस्तु मन्त्रार्थवादादीनां स्वार्थे प्रामाण्यमङ्गी-

**ननु फलनैयमिकनैमित्तिकप्रायश्चित्तचोदना वर्तमानशरीरपातादूर्ध्वकालस्थायिनं भोक्तारमन्तरेणापि प्रमाणतामश्नुवत एव। यथा चैतदेवं तथा 'एक आत्मनः शरीरे भावात्' इत्यधिकरणारम्भे दर्शयिष्यामः। सत्यमेवम्, तथापि सकलशास्त्रपर्यालोचनापरिनिष्पन्नं प्रामाणिकमर्थमङ्गीकृत्याह भाष्यकारः। तथाच विधिवृत्तमीमांसाभाष्यकारोऽप्युत्सूत्रमेवात्मसिद्धौ पराक्रान्तवान्। तत् कस्य हेतोः?। धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञाय**

---

अभ्यनुज्ञानमाक्षिपति—**ननु फलेति**। स्वर्गाख्यप्रीतेः पश्चादेश्चास्मिन्नेव देहे लब्धुं शक्यत्वात् फलचोदना न देहातिरिक्तात्म[ज्ञानम]पेक्षते। नैयमिकनैमित्तिकप्रायश्चित्तचोदना सुतरां फलशून्यत्वात् फलवत्त्वेऽपि दुःखनिवृत्तेः अस्मिन्नेव देहे लब्धुं शक्यत्वात्, अलाभे च कारीर्यादिवदङ्गवैकल्यादिकल्पनात् न देहातिरिक्तमपेक्षत इत्यर्थः। देशान्तरकालान्तरसम्बन्धिस्वर्गभोगः कथमस्मिन् देहे स्यादित्याशङ्क्य, मन्त्रौषधादिसिद्धे सम्भवतीति वक्ष्यत इत्याह—**यथा चेति**॥

देवताधिकरणन्यायेन मन्त्रादिप्रामाण्यात्, तत्सिद्धं विशिष्टदेहादिभोग्यं स्वर्गादिकमङ्गीकृत्या[भ्यनु]ज्ञेति परिहरति—**सत्यमेवमिति**। मन्त्रादिप्रामाण्यमनपेक्ष्य चोदनाभिरेव व्यतिरिक्तात्मा अपेक्ष्यते, धर्ममात्रनिर्णयप्रवृत्तेन भा[ष्यकारेणा]त्मनो निरूपितत्वादित्यत्राह—**तथा चेति**। विधिभिरात्मा अपेक्षितश्चेत् सौत्रोऽपि स्यादित्यर्थः। अनपेक्षितस्यासूत्रितस्य भा[ष्यकारेण प्र]तिपादनमयुक्तमित्याक्षिपति—**तत् कस्येति**। 'तत् प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सूत्रांशेन मन्त्रादिप्रामाण्यद्वारा [परंपरया सूत्र]त एव आत्मा सिध्यति। अपेक्षितश्च, भूतेऽर्थे प्रामाण्ये सति देहातिरिक्तात्मसिद्धेः विशिष्टदेहान्तरादिभोग्यत्वात् स्वर्गादेरित्यपवदति — **धर्मजिज्ञासेति**। परम्परया

---

क्वत्य तत्सिद्धस्य देशान्तरे कालान्तरेणोपभोग्यस्य स्वर्गादिफलस्य साधनयागविधीनां प्रामाण्यसिद्ध्यर्थमेव देहव्यतिरिक्तात्मान (श्रुतः त)मभ्यनुजानातीत्याह—**सत्यमित्यादिना**।

तदवगमस्य प्रामाण्ये अनपेक्षत्वं कारणमनुसरता सूत्रकारेण विशेषाभावात् स्वरूपनिष्ठानामपि वाक्यानां प्रामाण्यमनुसृतं मन्यते। तथा 'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्' इति वदन् चोदनाशेषत्वेनापि स्वरूपावगमेऽनपेक्षत्वमविशिष्टमवगच्छतीत्यवगम्यते। स च स्वरूपावगमः कस्मिन् कथं वेति धर्ममात्रविचारं प्रतिज्ञाय तत्रैव प्रयतमानेन भगवता जैमिनिना न मीमांसितमुपयोगाभावात्, भगवांस्तु पुनर्बादरायणः पृथक् विचारं

---

भूतेऽप्यर्थे प्रामाण्यमनुसृतमाश्रित्य आत्मविचारोऽकारि न चोदनासामर्थ्यमाश्रित्येत्यत्र किं मानमित्यत्राह—**तथा चोदनेति**॥

तर्हि चोदनापेक्षितत्वात् समन्वयोऽप्यत्रैव विचारणीय इत्यत्राह—**स चेति**। **कस्मिन्निति**। वेदान्तानां चोदनाशेषात्माद्यर्थे प्रामाण्यं स्वतन्त्रभूतेऽर्थे वेत्यर्थः। **कथमिति**। शेषार्थेऽपि विध्युद्देशेन पदैकवाक्यतया प्रामाण्यं वाक्यैकवाक्यतया वा ? स्वतन्त्रपक्षेऽप्यखण्डे संसर्गादौ वा ? इत्यर्थः। धर्मं निर्णयताऽपि तेनापेक्षितत्वादात्मनोऽपि विशेषो विचार्य इत्यत्राह—**उपयोगेति**। अखण्डाकर्तृब्रह्मरूपत्वमनपेक्षितं विरुद्धं च, देहव्यतिरेकमात्रं त्वपेक्ष्यम्, तदपि फले, न धर्मे, फले च न मुखतः प्रवर्तते जैमिनिरित्यर्थः। फलमप्यपेक्षते चेत्,

---

**कस्मिन्निति**। वेदान्तादीनां चोदनाशेषभूतात्माद्यर्थे प्रामाण्यम्? आहोस्वित् स्वतन्त्रे इत्यर्थः। **कथं वेति**। शेषार्थेऽपि तु विध्युद्देशवाक्येन पदैकवाक्यतया प्रामाण्यम्? आहोस्वित् वाक्यैकवाक्यतया? स्वतन्त्रपक्षेऽपि त्वखण्डैकरसार्थे प्रामाण्यम्? उत संसर्गे इत्यर्थः॥

ब्रह्मैव प्रत्यगात्मा नान्य इति प्रतिपादयत्याचार्यः, न स्वर्गफलं तदपेक्षितदेहव्यति-

प्रतिज्ञाय व्यचीचरत् समन्वयलक्षणेन । तत्र च देहान्तरोपभोग्यः स्वर्गः स्थास्यति। तच्च सर्वं कार्यकरणसंघातादन्येन भोक्त्रा विना न सिध्यति । तत्सिद्धिश्च न आगममात्रायत्ता। प्रमाणान्तरगोचरस्य तदभावे तद्विरोधे वा शिलाप्लवन-वाक्यवदप्रामाण्यप्रसङ्गात् । अतस्तत्सिद्धौ पराक्रान्तवान् तेन। सत्यं विनापि तेन सिध्येत् प्रामाण्यम्। अस्ति तु तत्। तस्मिन् विद्यमाने न तेन विना प्रामाण्यं सिध्यति फलादिचोदनानां इति मत्वा आह—**शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसंबन्ध-मधिक्रियते** इति। **तथापि न वेदान्तवेद्यमिति** ।

किं तदिति ? अत आह **असंसार्यात्मतत्वम्**, न तत् **अधिकारेऽपेक्ष्यते अनुपयोगादधिकारविरोधाच्च**। अश-

---

तत्र तदपेक्षिते मुखतः प्रवृत्तिर्युक्तेत्याशङ्क्य, अन्यथासिद्धत्वात् नेत्याह—**भगवांस्त्विति**। तत्रापि ब्रह्मैव प्रत्यपादि, न चोदनाफलमित्यत्राह—**तत्र चेति**। अन्यस्मिन् प्रतिपादिते कथं अन्यत् स्थास्यतीत्यत्राह—**तच्चेति**। कथमनुपयोगोऽधिकारविरोधो वेत्याशङ्क्य, सुखदुःखादिसंसारशून्यता[या]ः भोक्त्रन्वयविरोधित्वादित्याह—**असंसार्यात्मतत्त्वमिति** ॥

कर्मस्वामिनो विकारिणो भोक्तृत्वादधिकारित्वे सति कथं भोक्त्रन्वय-[विरोध] इत्याशङ्क्य, ब्राह्मण्यादिनिमित्तशून्यत्वेनानियोज्यत्वादधिकारान्वय-

---

रिक्तसंसार्यात्मानं चेत्याशङ्क्य, [आह—**भगवांस्तु इत्यादि**]ना। सिद्धार्थे प्रामाण्ये साधिते मन्त्रादीनामपि स्वार्थे प्रामाण्यमर्थात् सिद्धं भवतीत्याह—**तत्र चेति**। सिद्धान्ते चैतन्यस्यैकत्वात् पूर्वमहंप्रत्ययगम्यस्य पश्चाद्वेदान्तगम्यत्वेऽर्थाधिक्यं न सम्भवतीत्याक्षिपति—**किं तदिति**। चैतन्यस्यैकत्वेऽपि कर्तृत्वादिसंसारकलुषितताद्विनिर्मुक्तरूपेण भेदोऽस्तीति परिहरतीत्याह—**अत आहेति**। **अधिकारे इति**। भोक्तृत्वेनान्वये इत्यर्थः।

नायाद्यतीतमित्यसंसार्यात्मतत्त्वं दर्शयति। अशनायाद्युपप्लुतो हि सर्वो जन्तुः स्वास्थ्यमलभमानः प्रवर्तते। तदपाये स्वास्थ्ये स्थितो न किंचिदुपादेयं हेयं वा पश्यति। **अपेतब्रह्मक्षत्त्रादिभेदं** इति प्रपञ्चशून्यमेकरसं[रसान्तरशून्यं]दर्शयति। **प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं** शास्त्रमविद्यावद्विषयत्वं **नातिवर्तते** इति। तत्त्वमसीतिवाक्यार्थावगमादर्वागविद्याकृतं संसारमहमुल्लेखमाश्रित्य प्रवर्तमानं शास्त्रं नाविद्यावद्विषयत्वमतिवर्तते। तस्मात् युक्तमुक्तं प्रत्यक्षादीनां प्रमाणानां शास्त्रस्य च अविद्यावद्विषयत्वम्।

तदेव दर्शयति—**तथाहि ब्राह्मणो यजेतेत्यादीनि**

---

विरोधित्वमाह—**अपेतब्रह्मक्षत्रादिभेदमिति**। कर्तुरधिकारात् [नियोज्य]त्वे सति कथमधिकारान्वयाभाव इत्याशङ्क्य, इच्छादिशून्यतया कर्त्रन्वयबाधकत्वमाह—**अशनायाद्यतीतमिति**। यद्वा, भोक्त्रन्वयनिरासानन्तरं कर्त्रन्वय[निरासः।] ततः किमित्याशङ्क्य, फलितं वक्तुं उत्तरभाष्यमित्याह—**प्राक्चेत्यादिना**। (व्यवहार)[व्यतिरेक]बुद्धेरुत्पत्तावपि परोक्षत्वेनापरोक्षाध्यासाद्दुर्बलत्वा[त् अपरो]क्षत्वेऽपि ब्रह्मज्ञानात् पूर्वं मूलाज्ञानानिवृत्त्या तत्कार्याध्यासस्य पुनरुत्पत्तेः तद्वत्तामाश्रित्य शास्त्रप्रवृत्तिरित्यर्थः। शास्त्रस्याध्यासवन्तमाश्रित्य प्रवर्तमान[त्वम]भिनेतुम्, आगमोऽपि विधेः बोद्धारमधिकारिणं ब्राह्मणादिशब्दैरनुवदंश्चेतनाचेतनयोरैक्याध्यासं दर्शयतीति वक्तुं च तथाहीत्यादिभाष्यमित्याह—**तदेव दर्शयतीति**॥

---

**अधिकारविरोधात्** विधिसम्बन्धोपमर्दकत्वं चेत्यर्थः। **न किञ्चिदुपादेयमिति**। कर्तव्यत्वेन न पश्यतीत्यर्थः। आत्मनो नियोज्यस्वान्वयप्रापकब्राह्मण्यादिप्रपञ्चशून्यत्वं दर्शयतीत्याह—**प्रपञ्चशून्यमिति**। **रसान्तरशून्यमिति**। ब्रह्मस्वभावविपरीतस्वभावान्तरशून्यमित्यर्थः॥

शास्त्राण्यात्मन्यतदध्यासमाश्रित्य प्रवर्तन्ते । वर्णवयोऽध्यासः—अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिः । आश्रमाध्यासः—न ह वै स्नात्वा भिक्षेतेति । अवस्थाध्यासः—यो ज्योगामयावी स्यात् स एतामिष्टिं निर्वपेदिति । आदिशब्देन यावज्जीवं जुहुयादिति जीवनाध्यासः । एवमध्याससद्भावं प्रसाध्य 'स्मृतिरूपः' इत्यादिना 'सर्वथाऽपि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति' इत्यन्तेन भाष्येण लक्षितं निरुपचरितमतदारोपं **अध्यासो नाम अतस्मिँस्तद्बुद्धिरित्यवोचाम** इति परामृशति । कस्य युष्मदर्थस्य कस्मिन्नस्मदर्थे तद्विपर्ययेण चाध्यासः इति विवेकतः प्रदर्शयितुम् । **अतस्मिन्** अयुष्मदर्थे अनिदंचिति **तद्बुद्धिः** युष्मदर्थावभासः इत्यर्थः । तदाह—तद्यथा पुत्र-

---

**ज्योगामयावीति** । उज्ज्वलामयवानित्यर्थः । पूर्वमन्यदध्यासलक्षणमवादि, इदानीं चान्यदुच्यते इत्यत्राह—**स्मृतिरूप इत्यादिनेति** । तर्हि व्यर्थमित्यत्राह—**परामृशतीति** । सोऽपि किमर्थ इत्यत्राह—**कस्य युष्मदर्थस्येति** । ........(क्षो)[कस्मिन्नु]दाहरणे धर्मिणो धर्मस्य चाध्यासः ? क च (के......कर्मण्य)[केवलं धर्मस्या]ध्यासः ? धर्माध्यासस्थलेऽपि [कस्य] धर्मस्य तादात्म्याध्यासः ? कस्य सम्बन्धमात्राध्यास इति आरोप्यार्थविषयः प्रश्नः । (उत) **तद्विपर्ययेणेति** । अनात्मन्यात्माध्यासस्थले किं केवलात्मनोऽहङ्कारेऽध्यासः अध्यस्तात्मभावाहङ्कारस्येतरेष्वध्यासः ? किं वा सर्वत्र केवलात्माध्यास

---

**कस्य युष्मदर्थस्येति** । क्वोदाहरणे धर्मिणो धर्मस्य चाध्यासः ? क च केवलधर्मस्याध्यासः ? धर्माध्यासस्थलेऽपि कस्य धर्मस्य तादात्म्याध्यासः ? कस्य च सम्बन्धमात्राध्यासः ? इत्यारोप्यार्थविषयः प्रश्नः । **कस्मिन्नस्मदर्थे इति** । किं सर्वत्र चिन्मात्रैकरस एव आत्मन्यध्यासः ? आहोस्वित् आन्तरान्तराध्यासोपहिते चैतन्ये बाह्यबाह्याध्यासः ? इत्यधिष्ठानविषयः प्रश्नः । **तद्विपर्ययेणेति** । अनात्मन्यात्माध्यासस्थले किं केवल

आर्यादिष्वित्यादि ॥

ननु प्रणव एव विस्वरः नहि पुत्रादीनां वैकल्यं साकल्यं वा आत्मनि मुख्यमध्यस्यति । मुख्यो ह्यतदारोपो दर्शयितुं प्रारब्धः । सत्यम् । स एव निदर्श्यते । कथम् ? तद्यथा बालके प्रातिवेश्यमात्रसंबन्धिना केनचित् वस्त्रालङ्कारा-

---

इत्यर्थः । अनूदितं लक्षणं प्रकृते योजयति—**अतस्मिन्नित्यादिना** । यदर्थो लक्षणानुवादः तद्दर्शयतीत्याह—**तदाहेति** । मुख्याध्यासं वक्तुं प्रवृत्तेन प्रथममेवामुख्याध्यासकथनं विरुद्धमिति शङ्कते—**ननु प्रणव इति** । मुख्यस्यैव कथनान्नेति दूषयति—**सत्यमिति** । पुत्रादिषु [छिन्नहस्तेषु] छिन्नहस्तोऽह-मिति प्रतीत्यभावात् कथं मुख्यतेति चोदयति—**कथमिति** ॥

सर्वत्राभावेऽपि कस्मिंश्चिदवस्थाविशेषे पुत्रादिधर्माणां पित्रादिषु मुख्य एवाध्यासो भवत्येवेत्याह—**तद्यथेति** । पूजिते पुत्रे पूजितोऽहमित्य-भिमानसमर्थे पितुः पूजितोऽहमित्यभिमानो नास्ति, तद्व्यावर्तयति—**बालके इति** । स्वमातुलादिना पूजिते पितुः तथाभिमानो नास्ति, तद्व्यावर्तयति—**प्रातिवेश्येति** । स्वगृहसमीपस्थं गृहमुच्यते । भक्ष्यादिना पूजितेऽपि स नास्ति, तद्व्यावर्तयति—**वस्त्रेति** । पूजयित्रा निरुपाधिकस्नेहेन तस्मिन्

---

आत्मा अहङ्कारेऽध्यस्तः अध्यस्तात्मभावो वा अहङ्कार इतरेष्वध्यस्तः ? किं वा सर्वत्र केवला-त्मैवाध्यस्तः ? इति ग्रन्थार्थः ॥

सामानाधिकरण्यव्यवहारमात्रमस्ति चेत् तावताऽलमित्याशङ्क्याह—**मुख्यो ह्यतदारोप इति** । पुत्रादिषु छिन्नहस्तेषु छिन्नहस्तोऽहमिति प्रतीतिर्नास्ति, तत्र कथं मुख्यत्वमिति चोदयति—**कथमिति** । सर्वत्राभावेऽपि कस्मिंश्चिदवस्थाविशेषे मुख्यत्वेन धर्माध्यासो भवत्येवेत्याह—**तद्यथेति** । पूजितपुत्रस्य पूजितोऽहमनेनेत्यभिमानसामर्थ्ये सति, तस्मिन् पूजिते पितुरहमेव पूजित इत्यभिमानाभाव एव स्यात्, तद्व्यावर्तयति—**बालके इति**। स्वमातुला(दीनां)[दिभिः]बालके पूजितेऽपि पितुरभिमानाभाव एव स्यात्, तद्व्यावर्तयति—**प्रातिवेश्येति** । तेन भक्त्यादिना पूजितेऽपि तथैव स्यात्, तद्व्यावर्तयति—**वस्त्रेति** । पूजयित्रापि बालविषयनिरुपाधिकस्नेहेन बालके पूजितेऽपि

दिना पूजिते निरुपचरितमात्मानमेव पूजितं मन्यते पिता। पूजयितापि पितरमेवापूपुजमिति मन्यते। यतो न बालकस्य पूजितत्वाभिमानः अव्यक्तत्वात्। तथैव राजानमुपहन्तुकामोऽनन्तरो विजिगीषुः तद्राष्ट्रे ग्राममात्रमप्युपहत्य तमेवोपघ्नन्तमात्मानं मन्यते। सोऽप्युपहतोऽस्मीति संतप्यते। तदेवं प्रसिद्धव्यतिरेकस्यात्मनि मुख्य एवाध्यासो दृष्टः, किमु वक्तव्यं कृशस्थूलाद्यभिमानस्य मुख्यत्वमिति कथयितुमाह—**अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति**। बाह्येषु पुत्रादिषु पूजादेः धर्ममात्रस्यैव युष्मदर्थस्याध्यासः॥

**अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न एवानिदंचिदंशो विषयः,**

---

पूजितेऽपि स नास्तीति तद्व्यावर्तयति—**पूजयितापीति**। अन्यगतस्य पूजादेरेवान्यस्मिन् मुख्योऽध्यासः न तद्विपरीतस्येत्यत्राह—**तथैवेति**। किमिति मुख्याध्यासं वक्तुं प्रवृत्तः प्रसिद्धमुख्याध्यासेषु कृशस्थूलादिषु सत्सु प्रथममेवामुख्यं बाह्यधर्माध्यासं दर्शयतीत्याशङ्कां व्युदस्यन् फलितमाह—**तदेवमिति**। **प्रसिद्धव्यतिरेकस्येति**। प्रत्यक्षतः तटस्थतया प्रतिपन्नधर्मिगतस्येत्यर्थः॥

अत्र उत्तरोत्तराध्यासविशिष्टे पूर्वपूर्वाध्यास इति वक्तुं आत्मन्यध्यस्यतीत्यत्रात्मशब्दार्थमाह — **अस्मदर्थश्चेति**। **अहम्प्रत्ययिसम्भिन्नः**—अविद्योपहिते अहङ्काराध्यासोपहित इत्यर्थः। **विषयः**—अधिष्ठानमित्यर्थः।

---

तथैव स्यात्, तद्व्यावर्तयति—**पूजयितापीति**। **प्रसिद्धव्यतिरेकस्येति**। पुरस्तात् स्थिततया प्रतिपन्नधर्मिगतस्येत्यर्थः॥

**अस्मदर्थश्च** इत्यत्र अविद्योपहिते आत्मन्यहङ्काराध्यासाङ्गीकारादात्मनः कार्याध्यासोपहितत्वानुपहितत्वेन शुद्धत्वाशुद्धत्वे अभिप्रेते। **अहंप्रत्ययिसम्भिन्नः**—अहंकारोपहित इति यावत्। **विषयः**—अधिष्ठानमित्यर्थः। धर्मस्य प्राधान्येन ग्रहणे हेत्वन्तर-

न पुनः शुद्ध एवाहंप्रत्ययिन इवाध्यासे अध्यासान्तरानास्कन्दितः। **तथा देहधर्मान् कृशत्वादीनिति** धर्मिणोऽपि। धर्मशब्दस्तु मनुष्यत्वादिधर्मसमवायिन एवाध्यासः न देहोऽहमिति इति कथयितुम्। तन्निमित्तश्च शास्त्रेणेतश्चेतश्च नियमः क्रियते। **तथेन्द्रियधर्मान् मूकत्वादीनिति** धर्ममात्रम्। **तथा अन्तःकरणधर्मान् कामादीनिति** धर्मग्रहणम्। अन्तःकरणमित्यहंप्रत्ययिनो विज्ञानशक्तिभागोऽभिधीयते। तस्य धर्माः कामादयः। **एवमहंप्रत्ययिनमिति** धर्मिग्रहणम्। प्रत्ययाः कामादयोऽस्येति प्रत्ययी, अहं चासौ प्रत्ययी चेत्यहं-

---

अहङ्काराध्यासात् कार्याध्यासानुपहितत्वमत्र शुद्धत्वमभिप्रेतम्। देहोऽप्यध्यस्यते न धर्मा एवेत्यत्राह—**धर्मिणोऽपीति**। ग्रहणमिति शेषः। धर्मग्रहणं तर्हि किमर्थमित्यत्राह—**धर्मशब्दस्त्विति**। शास्त्रीयव्यवहारमूलत्वेन धर्माध्यासस्य प्राधान्याच्च प्राधान्येन ग्रहणमित्याह—**तन्निमित्तश्चेति**। नन्वन्तःकरणधर्माः कामादयो दण्ड्यादिवत्(नु)संबन्धितया भानान्नाध्यासमर्हन्तीत्यत्राह—**तथाऽन्तःकरणेति**। सत्यन्तःकरणे सन्ति असति च सुषुप्ते न सन्तीत्यन्वयव्यतिरेकाभ्यां अन्तरङ्गबहिरङ्गयोरन्तरङ्गविषयाविति न्यायसहिताभ्यां अन्तःकरणस्य कामाद्युपादानत्वावगमात् अन्तःकरणधर्माः कामादयो ममत्वेन अध्यस्यन्ते नाहन्त्वेनेत्यर्थः॥

अहम्प्रत्ययिनः क्रियाशक्तिभागेन कामादेः अन्वयव्यतिरेकाभावात् कथं तद्धर्मतेत्यत्राह—**अन्तःकरणमिति अहम्प्रत्ययिन इति**। तर्हि धर्माध्यासो न विवक्षित इत्यत्राह—**अहम्प्रत्ययिनमितीति**। **प्रत्ययाः कामादयोऽस्येति** विग्रहो विज्ञानशक्तिभागपरः। अहं **चासाविति** विग्रहो

---

माह—**तन्निमित्तश्चेति**। धर्ममात्रग्रहणे कारणमाह—**अन्तःकरणमितीति**। भागस्य पृथक् (गु......वित्तस्य) [ग्रहणं क्रियाशक्तिभागस्य] सामानाधिकरण्यप्रतिपत्त्यभावात् (धर्मि)[तद्धर्म]ग्रहणाभावाच्चेत्यभिप्रायः। **कामादयोऽस्येति** विग्रहो विज्ञानशक्तिभाग-

प्रत्ययी, तम्। अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्येति स्वशब्देन अहङ्कारग्रन्थिः संसारनृत्यशालामूलस्तम्भोऽभिधीयते। तस्य प्रचारः- कामसङ्कल्पकर्तृत्वादिरनेकविधः परिणामः, यन्निमित्तं ब्रह्मादिस्थावरान्तेषु प्रदीप्तशिरा इव परवशो जन्तुर्बंभ्रमीति।

तं प्रचारमशेषमसङ्गितया अविकारित्वेन च हानोपादानशून्यः साक्षादव्यवधानेनावभासयति चितिधातुः। स एव देहादिष्विदन्तया बहिर्भावमापद्यमानेषु प्रातिलोम्येनाञ्चतीवोपलक्ष्यते

---

विज्ञानक्रियोभयशक्तिमदंशिपरः। स्वशब्दार्थमाह—**स्वशब्देनेति**। विषयेषु प्रविभक्तरूपेण चरतीति व्युत्पत्तिप्राप्तमाह—**तस्येति**। नास्मिन् प्र(वाहे) [चारे] कामानां [कर्तृत्वं] इत्याशङ्कां व्युदस्यन् सर्वयोनिषु प्रकर्षेणात्मनः चारयन्तीति व्युत्पत्तिसिद्धार्थमाह—**यन्निमित्तमिति**। साक्षिशब्दार्थमाह—**असङ्गितयेति**। सक्तिकारणसम्बन्धशून्यतयेत्यर्थः। क्रियाशून्यत्वमाह—**अविकारीति**। अत एव क्रमद्रष्टृत्वाद्यभावमाह—**हानोपादानेति**। साक्षाच्छब्दार्थमाह—**अव्यवधानेनेति**। स्वविषयं सर्वं साधनसाध्यक्षणिकेक्षणनिरपेक्षं स्वसत्तासन्निधिमात्रेणेक्षत इत्यर्थः। अत्र हेतुः—**चितिधातुरिति**॥

कथं पुनः सर्वान्तरस्यात्मनः प्रत्यगञ्चनमित्याशङ्क्य, आत्मत्वेन भात-

---

परः, **अहञ्चासाविति** विग्रहो विज्ञानक्रियाशक्तिमद(न्वयपि)[न्तःकरण]परो द्रष्टव्यः। विषयेषु प्रविभक्तरूपेण चरतीति **प्रचारः** इति व्युत्पत्तिप्राप्तार्थमाह—**तस्येति**। ब्रह्मादिस्थावरान्तेषु योनिभेदेषु प्रकर्षेणात्मानं चारयन्ति परिभ्रमयन्तीति व्युत्पत्तिप्राप्तार्थमाह—**यन्निमित्तमिति**॥

सक्तिकरणसम्बन्धराहित्यमाह—**असङ्गितयेति**। दर्शनक्रियाशून्यत्वमाह—**अविकारित्वेनेति**। अत एव क्रमे[ण] द्रष्टृत्वा(न्य)[द्य]भावमाह—**हानोपादानेति**। **साक्षा**च्छब्दार्थमाह—**अव्यवधानेनेति**। बुद्ध्यादिकं स्वविषयं सर्वं साधनसाध्यक्षणिकेक्षणनिरपेक्षस्वसत्तासन्निधिमात्रेणेक्षते इत्यर्थः। तत्र हेतुः **चितिधातुरिति**। इदन्त-

**इति प्रत्यगुच्यते, आत्मा च निरुपचरितस्वरूपत्वात्, तत्राध्यस्य। तं च प्रत्यगात्मानमिति। यदि युष्मदर्थस्यैव प्रत्यगात्मनि अध्यासः स्यात्, प्रत्यगात्मा न प्रकाशेत। न हि शुक्तौ रजताध्यासे शुक्तिः प्रकाशते। प्रकाशते चेह चैतन्यमहङ्कारादौ। तथा यदि चैतन्यस्यैवाहङ्कारादावध्यासो भवेत्तदा नाहङ्कार-प्रमुखः प्रपञ्चः प्रकाशेत। तदुभयं मा भूदित्यनुभवमेवानुसरन्नाह —तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तः-**

---

देहादेः दृश्यत्वेन आत्मनो भेदप्रतिपत्तिकाले प्रातिलोम्यगमनभ्रमापेक्षयेत्याह— **स एवेति। निरुपचरितेति।** स्वाधीनेत्यर्थः। सप्तम्यर्थमाह—**तत्रेति।** अनात्मन्यात्माध्यासप्रदर्शकं भाष्यमादत्ते—**तं चेति।** इतरेतराध्यासे द्वयोर-प्यारोप्यत्वात् मिथ्यात्वं स्यात् द्वयोरप्यधिष्ठानत्वात् विशेषभानं न स्यादि-त्याशङ्क्य, किमनात्माध्यास एव स्यादिति ब्रूषे? [उत]आत्माध्यास एवेति विकल्प्य आद्यं प्रत्याह—**यदीति। न प्रकाशेते**त्यत्र स्वविशेषचिद्रूपेणेति शेषः। अध्यासविशेषभानस्याध्यस्ततत्वप्रयुक्तत्वेन दृष्टत्वादित्याह—**न हीति।** न चैवमात्मनो मिथ्यात्वापातः, तस्य संसृष्टरूपेणैवाध्यासात् स्वरूपेणानध्यासात्। द्वितीयं प्रत्याह—**तथेति।** स्वविशेषजडत्वेनेति शेषः। अत्रोक्तो हेतुः। न च द्वयोर[धिष्ठानत्वे]विशेषभानासम्भवः, स्वधर्मिनिष्ठत्वेनाभानात् धर्म्यन्तर-(साम्य)[धर्म]तया च भानादित्यूह्यम्। अहं चेतन इत्यहङ्कारादौ चैतन्यस्य, चेतनोऽहमिति चैतन्ये अहङ्कारादेश्चाध्यासानुभवमनुसृत्य भाष्यकारः प्राहेत्याह —**अनुभवमेवेति।** किं प्राहेत्यत्राह—**तं चेति।** द्वयोश्च विशेषभानादय-

---

**या बहिर्भावमापद्यमानेषु।** विवेकतः समाध्यवस्थायामिति शेषः। **निरुपचरि-तेति।** स्वाधीनस्वरूपत्वादित्यर्थः। सप्तम्यर्थमाह—**तत्रेति।** चेतनोऽहमिति चैतन्येऽहङ्कारा-ध्यासः प्रतीयते, अहं चेतन इत्यहङ्कारे चैतन्याध्यास इत्येवंरूपमनुभवमनुसरन्नाह भाष्यकार इत्याह—**अनुभवमेवेति।** चैतन्यस्य देहादिष्वध्यासाभावे कथं तेषामात्मत्वप्रतीतिरित्या-शङ्क्य, चैतन्यैक्याध्यासबलेन तप्तायःपिण्डवत् तद्भावापन्नाहङ्काराध्यासबलादित्याह

करणादिष्वध्यस्यतीति। नात्र विवदितव्यं इतरेतराध्यासे पृथगवभासनात् न मिथ्या गौणोऽयमिति। तथा अनुभवाभावात् मुख्याभिमानात्। नहि दृष्टेऽनुपपन्नं नाम॥

ननु अन्तःकरणे एव प्रत्यगात्मनः शुद्धस्याध्यासः, अन्यत्र पुनः चैतन्याध्यासपरिनिष्पन्नापरोक्ष्यमन्तःकरणमेवाध्यस्यते। अत एव 'तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्' इत्युक्तम्। अन्यथा चैतन्य-

---

मध्यास एव न भवति, सामानाधिकरण्यमस्ति चेत् गौणमित्यत्राह—**नात्रेति**। मुख्याभिमानोऽपि नेत्यत्राह—**मुख्येति**। तथापि विशेषा(भानात्)[वभासात्] अध्यासोऽनुपपन्न इत्यत्राह—**न हीति**॥

अहङ्कारोपहितस्यैव बहिरध्यासात् **अन्तःकरणादिष्वध्यस्यति** इत्यादिशब्दोक्तदेहादौ शुद्धचिदध्यासोक्तिर्विरुद्धेत्याह—**नन्विति**। देहादौ चैतन्याध्यासाभावे कथमात्मप्रतीतिरित्याशङ्क्य, चैतन्यैक्याध्यासेन तप्तायःपिण्डवत् तद्भावापन्नाहङ्काराध्यासादित्याह—**चैतन्येति**। अन्तःकरणोपहितस्यैव बहिरध्यास इति कुत इत्यत्राह—**अत एवेति**। अत्रापि विषयिशब्दबलात् शुद्धचिदुक्तेत्यत्राह—**अन्यथेति**। धर्मशब्दबलात् विषयिशब्दोऽहङ्कारमपि वक्तीत्यर्थः।

देहादौ सचित्कोऽहङ्कारोऽध्यस्यते इत्युक्तमुपेत्य, चिदेव देहादौ भाति नाहङ्कार इति प्रतीत्यभिप्रायेण देहादौ शुद्धचिदध्यासोक्तिरिति

---

पूर्ववादी—**चैतन्याध्यासेति**। तत्रापि **विषयि**शब्दबलात् साक्षिचैतन्यमेवोक्तमित्याशङ्कामपनुदति—**अन्यथेति**। **विषयि**शब्दोऽपि धर्माश्रयत्वयोग्यं प्रत्ययिनमहङ्कारमेव ब्रवीतीत्याह—**चैतन्यमात्रैकरसस्येति**॥

अहङ्कारस्य देहेऽस्मिन्ननुगतिर्विद्यते, सा तस्मिन्नध्यस्तत्वनिबन्धना न भवतीत्याह—

मात्रैकरसस्य कुतो धर्माः येऽध्यस्येरन्। सत्यमाह भवान्। अपि तु अन्यत्रान्तःकरणं सचित्कमेवाध्यस्यमानं यत्राध्यस्यते तस्यैवात्मनः कार्यकरत्वमापाद्य स्वयमविद्यमानमिव तिरस्कृतं तिष्ठति, चिद्रूपमेव सर्वत्राध्यासे स्वतः परतो वा न विशिष्यते। तेनोच्यते—**तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यतीति**। अत एव बुद्ध्यादिष्वेव चिद्रूपमनुस्यूतमुत्प्रेक्षमाणा बुद्धिमनःप्राणेन्द्रियशरीरेष्वेकैकस्मिन् चेतनत्वेनाहङ्कर्तृत्वं योजयन्तो भ्राम्यन्ति। **एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः** इति निगमयति॥

**ननु उपन्यासकाले 'नैसर्गिकोऽयं लोकव्यवहारः'**

---

समाधत्ते—**सत्यमाहेति**। तस्यैव विषयस्यात्मानं प्रति **कार्यकरत्वं**—चिदभिव्यक्तियोग्यत्वं आपाद्येत्यर्थः। तथापि(चिदति)[चित् क्वचित् ति]रस्कृता तिष्ठतीति; नेत्याह—**चिद्रूपेति**। **स्वतः परतो वेति**। अन्तःकरणे स्वच्छे स्वतः प्रकाशते अन्यत्रान्तःकरणसम्बन्धादित्येतावत्, प्रकाशस्तु न विशिष्यत इत्यर्थः। बहिरप्यहङ्कारस्य चैतन्यवत् सम्बन्धो भाति अहं मनुष्य इत्यादावित्यत्राह—**अत एवेति**। चिन्मात्रभानादेव देहादावात्मत्वभ्रमः, [अन्यथा] (न) चिदैक्यात् अहङ्कारस्यैवात्मत्वभानापातादित्यर्थः। लोकव्यवहारं प्रक्रम्याध्यासोपसंहारात् भ्रान्तोऽ(ह)[य]मित्याह—**ननूपन्यासेति**। नैसर्गिकत्वस्या-

---

**सत्यमिति**। तर्हि सा (किमर्थेति) [किन्निबन्धनेति;] तदाह—**अपि त्विति**। **सचितिकमन्तःकरणं** यस्य देहस्य अनुगतं भवति **तस्य** देहस्य स्वसंश्लेषा**दात्मनः कार्यकरत्वं** मालिन्यतिरस्कारेणाभिव्यक्तियोग्यता**मापाद्य स्वयम**नध्यस्तं **तिष्ठती**त्यर्थः। **स्वतः परतो वेति**। चैतन्यं स्वभावतः चैतन्याभिव्यक्तियोग्यान्तःकरणे **स्वतः**—द्वारमनपेक्ष्य अध्यस्यते, **परतः**—अन्तःकरणद्वारेण अभिव्यक्तियोग्यतामापन्नदेहादावध्यस्यते इत्येतावत्। सर्वत्राध्यस्यमानं तु केवलचिन्मात्रमेवान्तःकरणे शुद्धमन्तःकरणविशिष्टमि[तरत्रे]ति **न विशिष्यत** इत्यर्थः॥

इति लोकव्यवहारो नैसर्गिक उक्तः, कथमिहाध्यासो निगम्यते ? अनादिरिति चाधिकावापः। अत्रोच्यते—तत्रापि प्रत्यगात्मन्यहङ्काराध्यास एव नैसर्गिको लोकव्यवहारोऽभिप्रेतः। स च प्रत्यगात्मा अनादिसिद्धः। तस्मिन् नैसर्गिकस्यानादित्वमर्थसिद्धम्। अतः प्रक्रमानुरूपमेव निगमनम्। नचाधिकावापः॥

ननु भवेदनादिः, अनन्तः कथम्? यदि स्यात्तत्प्रहाणाय कथं वेदान्ता आरभ्यन्ते ?। अन्तवत्त्वेपि तर्हि कथम्? स्वतोऽन्यतो वा तत्सिद्धेः। तस्मात् अनन्तस्य प्रहाणाय वेदान्ता

---

ध्यास एवोपपत्तेः लोकव्यवहारशब्दोऽध्यासाभिधायीत्याशङ्क्य, अस्यैव नैसर्गिकत्वमाह—**नैसर्गिक उक्त इति**। अनादित्वगुणविशिष्टत्वेनार्थभेदाद्वाक्यभेदश्चेत्याह—**अनादिरिति**॥

व्यवहारशब्दस्याभिज्ञाभिवदनात्मके अध्यासे मुख्यत्वात् स एवोपक्रान्त इति समाधत्ते—**अत्रोच्यत इति**। तर्हि नैसर्गिकत्वविरोध इति; नेत्याह—**नैसर्गिक इति**। नैसर्गिकशब्दस्यानादित्वमर्थो नानपनोद्यत्वमिति स्पष्टीकर्तुं अनादिरित्युक्तार्थम्, नाधिकावापः [वाक्यभेद]श्चेत्याह—**स चेति**। अथाप्यनन्तत्वं मानहीनमिति शङ्कते—**ननु भवेदिति**। भावत्वे सति अनादित्वं मानमित्यत्राह—**यदि स्यादिति**। अन्तवत्त्वेऽप्येतत्तुल्यमित्याह—**अन्तवत्त्वेऽपीति**। किं तर्हि विवक्षितमित्याशङ्क्य, अत एवानन्तत्वं सङ्कुचितं विद्यैवान्तहेतुरितीत्याह—**तस्मादिति**। लक्षणादिभिर्मिथ्यात्वं प्रसाध्य तदुप-

---

प्रथमभाष्यगत**नैसर्गिक**पदेनानपनोद्यत्वं न विवक्षितं किन्त्वनादित्वमेवेति स्पष्टीकरणार्थमत्रा**नादि**रित्युक्तम्, अतो नाधिकावाप इत्याह—**न चाधिकावाप इति**। अभावविलक्षणत्वे सत्यनादित्वादनन्ते आत्मनि नैसर्गिकत्वाच्चानन्त्यं स्यादिति शङ्कते—**यदि स्यादिति**। **स्वतोऽन्यतो वेति**। क्षणिकश्चेत् **स्वतः**, स्थायी चेद्वेदान्तारम्भा-

आरभ्यन्ते इत्युक्ते अर्थादेष एव प्रहाणहेतुः असत्यस्मिन् अनन्तः इति निश्चीयते। **मिथ्याप्रत्ययरूपः** इति रूपग्रहणं लक्षणतस्तथा रूप्यते न व्यवहारतः इति दर्शयितुम्। **कर्तृत्वभोक्तृत्वप्रवर्तकः** इति अनर्थहेतुत्वं दर्शयति हेयतासिद्ध्यै। **तेन कर्तुर्भोक्तुश्च सतो मिथ्याज्ञानं दोषप्रवर्तनमिति येषां मतं** तन्निराकृतं भवति। **सर्वलोकप्रत्यक्षः** इति 'देहेन्द्रियादिष्वहंममाभिमानहीनस्ये'त्युपन्यस्य 'नहीन्द्रियाण्यनुपादाये' त्यादिना योऽनुभवो मिथ्यात्वसिद्ध्ये अनुसृतः तं निगमयति॥

---

संहारकाले मिथ्याप्रत्ययरूप इति तत्सपक्षत्वं विरुद्धमभाणीत्यत्राह—**रूपग्रहणमिति**। तथाप्युत्तरपदं व्यर्थमित्यत्राह—**कर्तृत्वेति**॥

साङ्ख्यव्यतिरिक्ताः स्वतः कर्तृत्वादिशक्तिमत आत्मनः प्रवृत्तिमात्रनिमित्तमध्यास इति वदन्ति, तान्निराकरोति—**तेन कर्तुरिति**। द्वितीयभाष्ये अयमित्युत्थापितोऽनुभव एवाध्यासे मानं अर्थापत्त्यादयस्तु तत्साधका इत्येके*, अर्थापत्त्यादयोऽपि अध्याससाधका इत्येके, पक्षद्वयेऽप्यर्थापत्त्यादिना अनुभवदार्ढ्यमस्तीति मत्वा आह—**सर्वलोकेति**। **अयं** लोकव्यवहार इत्युत्थाप्य, देहेन्द्रियादिष्वित्यादिना संक्षेपतोऽर्थापत्त्याद्युपन्यासेन उपपाद्य,

---

दन्यतोऽपि **तस्य** प्रहाणस्य **सिद्धत्वात्** तदापि वेदान्तारम्भो व्यर्थ एवेति प्रतिबन्दिमाह—**अन्तवत्त्वेऽपीति**। केवलकर्मणा ज्ञानसमुच्चितेन वा मोक्षो न सिध्यति, किन्तु सम्यग्ज्ञानेनैवेत्यभिप्रेत्यैवमुक्तवानाचार्य इत्याह—**तस्मादिति**। लक्षणादिभिर्मिथ्यात्वं प्रसाध्य तदुपसंहारकाले **मिथ्याप्रत्ययरूप** इति तत्सदृशत्वं विरुद्धमुक्तमिति शङ्कां व्युदस्यति—**रूपग्रहणमिति**॥

**सर्वलोकप्रत्यक्षः**। [इतीति।] अध्यासप्रमाणसाक्ष्यनुभवस्थापकत्वादर्थापत्तिव्यतिरेक्यनुमानयोः संक्षेपविस्ताराभ्यामुपन्यासकभाष्येणाध्यास**सिद्ध्ये** यः **साक्ष्यनुभवोऽनुसृतः**—साधित इत्यर्थः। (अनिवर्त्यत्वे) [सादित्वानादित्वे] निवर्त्यत्वानिवर्त्यत्वयोर्न प्रयोजके, किन्तु विरोधिसन्निपातासन्निपाताविद्याशङ्क्य, व्यभिचारं दर्शयति

---

* तत्त्वदीपनकाराः।

एवं तावत् सूत्रेणार्थादुपात्तयोः विषयप्रयोजनयोः सिद्धये जीवस्याब्रह्मस्वरूपत्वमध्यासात्मकमुपदर्श्य 'अस्यानर्थहेतोः प्रहाणाये'ति प्रयोजनं निर्दिशति। हेतोः प्रहाण्या हि हेतुमतः प्रहाणिरात्यन्तिकी यतः। ननु अनर्थहेतुरध्यासोऽनादिः, स कथं प्रहीयते। तथा हि—मनुष्यादिजातिविशेषमात्राध्यासः ततो विविक्तेऽपि न्यायतः अहंप्रत्यये अनादित्वात् पूर्ववदविकलो वर्तते। नायं दोषः—तत्त्वमसीत्यादिवाक्याद्ब्रह्मरूपावगाहि-

---

न हीत्यादिना अर्थापत्त्यादिप्रपञ्चनेनाध्याससिद्धये दृढीकृतो योऽनुभवः तं निगमयतीति योज्यम्। वृत्तकीर्तनपूर्वकमस्यानर्थहेतोरिति भाष्यस्य तात्पर्यमाह—**एवं तावदिति**। अध्यासमुपवर्ण्यानन्तरं प्रयोजनकथनमसङ्गतमित्यत्राह—**विषयप्रयोजनयोः सिद्धये इति**। अनर्थस्य प्रहाणायेति वाच्यम्, तस्य पुमर्थत्वात्, न हेतोः प्रहाणायेत्यत्राह—**हेतोरिति**। अत्र अनर्थशब्देन तन्मूलाभोक्तृत्वानर्थहेतुतया अनर्थत्वादध्यासोऽप्युक्तः, (अध्यास)[हेतु]शब्देन तन्मूलाविद्यैवोक्तेति हेतुबलादूह्यम्। विमतं न निवर्तते भावत्वे सत्यनादित्वात् आत्मवत्, अतः तत्प्रहाणोक्तिर्विरुद्धेत्याक्षिपति—**नन्वनर्थेति**। अनादिभावस्य मिथ्याज्ञानप्रवाहादेर्निवृत्तेरिष्टत्वाद्बुद्ध्यादिनां न भावत्वे सति सादित्वानादित्वे निवृत्त्यनिवृत्त्योः प्रयोजके, किन्तु बलवद्विरोधिसम्पर्कासम्पर्कौ, अतो ज्ञानादज्ञाननिवृत्त्या अध्यासहानं स्यादित्याशङ्क्य, प्रत्यक्षविरोधान्नेत्याह—**तथा हीति**॥

ज्ञानान्तरस्यैवाध्यासनिवर्तकत्वेनेष्टत्वात् न विरोध इति समाधत्ते—**नायमिति**। विवेकज्ञानादस्य को विशेष इत्याशङ्क्य, तत्त्वावेदकप्रमाणजत्वमित्याह—**तत्त्वमसीत्यादिवाक्यादिति**। तदेव कथमित्यत्राह—

---

पूर्ववादी—**तथा हीति**। **जातिविशेषमात्रेति**। मनुष्योऽस्मि देवोऽस्मि कृमिरस्मीत्यादिरूपेणात्मन्यनात्माध्यासमात्रमनादिसिद्धमित्यर्थः। अनिवर्त्यत्वे अनादित्वमप्रयोजकं विरोधिसन्निपात एव निवर्त्यत्वे प्रयोजक इत्येतत् द्रढयति—**नायं दोष इति**। **सपरि-**

ज्ञानान्तरोत्पत्तेरिष्टत्वात् । तद्धि ब्रह्मणोऽवच्छिद्यैव चैतन्यस्य ब्रह्मरूपत्वप्रच्छादनेन जीवरूपत्वापादिकामनादिसिद्धामविद्या-महङ्कारादिविक्षेपहेतुं निराकुर्वदेवोत्पद्यते । ततः कारणनिवृत्तौ तत्कार्यं अहमिति जीवे भोक्तृरूपता सपरिकरा निवर्तते इति युज्यते । अहंप्रत्ययः पुनरनादिसिद्धोऽनादिसिद्धेनैव कार्यकरण-मात्रेण सहभावादविरोधात् न स्वरूपविवेकमात्रेण निवर्तते । नापि ज्ञानान्तरमुत्पन्नमिति विशेषः ॥

**ननु निरतिशयानन्दं ब्रह्म श्रूयते, ब्रह्मावाप्तिसाधनं च**

---

ब्रह्मरूपतावगाहीति । ब्रह्माज्ञानजन्यत्वाच्चाध्यासस्य तज्ज्ञानान्निवृत्तिः स्यादि-त्याह—**तद्धीति**। हिश्चार्थे। **सपरिकरेति**। मानादित्रयभोगादित्रयद्वेषादि-त्रयेण सहेत्यर्थः । विवेकज्ञानस्याप्यभेदाध्यासविरोधित्वान्मानजन्यत्वाच्च बलवद्विरोधित्वमस्तीत्यत्राह—**अहम्प्रत्यय इति**। न निवर्तयतीति शेषः। प्रवाहरूपेणानादित्वेऽपि स्वरूपेण सादित्वाद्वस्तुवृत्त्या ब्रह्मविषयत्वाच्चाध्यासा-निवर्तकत्वं विवेकज्ञानस्य कुत इति चेत्, यथा इदमिति ज्ञानस्य वस्तुतः शुक्तिविषयत्वेऽपि शुक्तित्वविशेषस्यानवभासकत्वात् रूप्याध्यासानिवर्तकत्वम्, तद्वत् ब्रह्मत्वविशेषानवभासकत्वादित्याह—**न स्वरूपेति**। तर्हि यौक्तिकविवेक-ज्ञानमज्ञाननिवर्तकं [इति चेत्, न, [अ]मानत्वादित्याह—**नापीति**। **विशेष इति**। विवेकज्ञानब्रह्मज्ञानयोरित्यर्थः ॥

आनन्दाप्तेर्विद्याफलत्वादज्ञानहानेः फलत्वोक्तिर्विरुद्धेत्याक्षिपति—**ननु**

---

**करेति**। प्रमाणादित्रयेण, क्रियादित्रयेण, रागादित्रयेण, द्वेषादित्रयेण सह **निवर्त्यंते** इत्यर्थः। **भोक्तृरूपतेति** प्रमात्रादिरूपाणामुपलक्षणम्। (द्रव्यं) **न स्वरूपविवेकमात्रे-णेति**। देहादिभ्यो व्यतिरिक्तात्मसाधकतर्कसन्निधावपि सर्वदा वर्णमात्रविषयश्रोत्रप्रत्यक्षवत् अहंप्रत्ययोऽपि दैवगत्या व्यतिरिक्तमात्मस्वरूपमात्रमेव सदा गृह्णाति, न व्यतिरिक्ततया। अतो नाध्यासविरोधीत्यर्थः ॥

ब्रह्मण आनन्दस्वरूपत्वेऽपि तस्य वेदान्तारम्भसाध्यविद्याफलत्वाभावात् तदनुक्तिर्न

ब्रह्मविद्या 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतिभ्यः, तस्मान्निरतिशयसुखावाप्तये इति वक्तव्यम्, किमिदमुच्यते अनर्थहेतोः प्रहाणायेति। ननु चानर्थस्यापि समूलस्य प्रहाणं श्रूयते ब्रह्मविद्याफलम् 'तरति शोकमात्मवित्' 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति च। उभयं तर्हि वक्तव्यं श्रूयमाणत्वात् पुरुषार्थत्वाच्च। न वक्तव्यम्। कथम्? 'आत्मैकत्वविद्याप्रतिपत्तये' इत्यात्मनो जीवस्य ब्रह्मात्मकता शास्त्रस्य विषयः, तेनानन्दात्मकब्रह्मस्वरूपताप्राप्तिः जीवस्य विषयतयैव संवृत्ता। न च सा विषयाद्बहिः, येन पृथङ्निर्देशार्हा स्यात्, समूलानर्थहानिस्तु बहिः शास्त्रविषयाद्ब्रह्मात्मरूपात्।

---

**निरतिशयेति**। अस्तु विद्याफलमेतत्, तावता अज्ञानहानं शास्त्रफलं किं न स्यादित्यत्राह—**तस्मादिति**। शास्त्रजन्यविद्याफलस्यैव शास्त्रफलत्वादित्यर्थः। सकार्याज्ञानहानस्यापि विद्याफलत्वेन श्रुतत्वात् न विरोध इति समाधत्ते—**नन्वर्थस्येति**। तर्हि न्यूनोक्तिरित्याक्षिपति—**उभयं तर्हीति**। न, आनन्दाप्तेरपुमर्थत्वादित्यत्राह—**पुरुषार्थेति**। समाधत्ते—**न वक्तव्यमिति**। उक्तमेवेत्यर्थः। आनन्दादिपदं नास्ति, कथमुक्तमिति शङ्कते—**कथमिति**। विषयनिर्देशादिति मत्वा तन्निर्देशमाह—**आत्मैकत्वेति**। आत्मैकत्वशब्दार्थमाह—**आत्मन इति**। निर्दिष्ट इति शेषः। तावता कथमानन्दाप्तिः, अतो फलत्वसिद्धिरित्यत्राह—**न सा विषयादिति**। ब्रह्मात्मतैवानन्दाप्तिः, शास्त्रविषयविषयोक्तिरेव तदुक्तिरित्यर्थः। अनर्थहानिरपि फलवचनविषयत्वाच्छास्त्रविषय इति; नेत्याह—**समूलेति**। ब्रह्मात्मैकत्वमेव शास्त्रविषयः, फलं त्ववगतिसामर्थ्यगम्यं अनूद्यत इति भावः॥

---

दोषायेत्याशङ्क्याह—**ब्रह्मावाप्तिसाधनं चेति**। **न वक्तव्यमिति**। उक्तमेवेत्यर्थः। आनन्दावाप्तये इत्युक्तिर्न दृश्यत इति चोदयति—**कथमिति**॥

अनर्थहेतुप्रहाणमपि तर्हि न पृथङ्निर्देष्टव्यम्, यतः सर्वेषु वेदान्तेष्वलौकिकत्वाद्ब्रह्मणस्तत्प्रतिपादनपूर्वकमेव जीवस्य तद्रूपता प्रतिपाद्यते। तद्यथा—'सदेव सोम्येदमग्र आसी' दित्युपक्रम्य 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मे' त्यवसानं निरस्तसमस्तप्रपञ्चं वस्तु तत्पदाभिधेयं समर्पयदेकं वाक्यम्। तथा सति तादृशेन तत्पदार्थेन संसृज्यमानः त्वंपदार्थः पराकृत्यैव निर्लेपमनर्थहेतुमग्रहणमन्यथाग्रहणं च तथा निश्चीयते इति। यद्येवं ब्रह्मात्मावगतिनान्तरीयकं अनर्थहेतोरविद्यायाः प्रहाणम्, न शब्दस्य तत्र व्यापारः, तेन पृथङ्न निर्दिश्यते। युक्तं चैतत्।

---

तर्ह्येकत्वशास्त्रविषयोऽनर्थहानमिति शङ्कते—**अनर्थहेत्विति**। तत्त्वमस्यादिवाक्येष्वनर्थहानिः विषयतया न भातीत्यत्राह—**यतः सर्वेष्विति**। अनर्थाभावविशिष्टब्रह्मैकत्वविषयत्वाद्वाक्यस्य सोऽपि विषय इत्यर्थः। नानर्थाभावविशिष्टं ब्रह्म(ास्ति)[प्रतिपाद्यते]तद्बोधकवाक्याभावादित्यत्राह—**तद्यथेति**। तर्हि वाक्यभेद इत्यत्राह—**समर्पयदेकं वाक्यमिति**। अलौकिकत्वाद्ब्रह्मपदार्थं प्रतिपाद्य एकत्ववाक्येनैकं वाक्यमिति। तथापि जीवेऽनर्थसद्भावान्नैकत्ववाक्यस्याशेषानर्थहानं विषय इत्यत्राह—**तथा सतीति**। **तथेति**। ब्रह्मत्वेनेत्यर्थः। यद्यपि प्रपञ्चाभावः शास्त्रविषयः, तथापि स्वाभाविकप्रपञ्चाभावः तद्विषयः, नाविद्यकप्रपञ्चाभावः, तस्य ब्रह्मप्राकट्यसामर्थ्यगम्यत्वादिति परिहरति—**यद्येवमिति**। प्राकट्यगम्यत्वेऽपि शास्त्रस्यासङ्कोचात् तद्विषयतापि स्यादित्यत्राह—**न शब्दस्येति**। "अनन्यलभ्यः शब्दार्थः" इति

---

**तथा निश्चीयत इति**। निष्प्रपञ्चब्रह्मरूपेण महावाक्यैर्निश्चीयत इत्यर्थः। **युक्तं चैतदिति**। सम्यग्ज्ञानोत्पत्तिनान्तरीयकतया प्रहाणस्य निष्पन्नत्वं युक्तमित्यर्थः॥

न हि विपर्यासगृहीतं वस्तु तन्निरासादृते तत्त्वतो निर्णेतुं शक्यम्। तस्मात् पूर्वावसितमतद्धर्मं निरस्यदेव तत्त्वावद्योति वाक्यं तत्त्वमवसाययति।

ननु च नञादेः निरासकृतो निरस्यमानवाचिनश्च पदस्याश्रवणात् कथं तन्निरस्यदेवेति? उच्यते—नेदं रजतमिति यत्र विपर्यासमात्रं निरस्यते न वस्तुतत्त्वमवबोध्यते तत्र तथा भवतु। इह पुनः विज्ञानमेव तादृशमुत्पन्नं यत् विरोधिनिरा-

---

न्यायात् सङ्कोच इत्यर्थः। अतोऽनर्थाभावोपलक्षितस्वरूपस्यैव शास्त्रविषयत्वेना-नर्थहानेः विषयनिर्देशसामर्थ्यात् फलत्वासिद्धेः पृथक्कथनं युक्तमित्याह—**तेनेति**॥

प्राकट्यस्यानर्थहानिं विना अनुपपत्त्याद्यभावात् तस्याः तद्धर्म्यत्वमयुक्त-मित्यत्राह—**युक्तं चैतदिति**। **तन्निरासात्**—तस्य विपर्यासस्याभावबोधात् **ऋते** तत्त्वप्राकट्यं कर्तुमशक्यं मानेन हि—यस्मात् तस्मादस्त्यनुपपत्तिरित्यर्थः। तत्र फलमाह—**तस्मादिति**। महावाक्यं स्वव्यापारजन्यप्राकट्यान्यथानुप-पत्त्या ह्यतद्धर्ममनर्थं **निरस्यदेव**—नास्तीति बोधयदेव ब्रह्मणि प्राकट्यं करोती-त्यर्थः। नेदं वाक्यमभावबोधकं अभावतत्प्रतियोगिवाचकपदशून्यत्वादिति शङ्कते—**ननु नञादेरिति**। **निरासो** ह्यभावबोधकः, शब्दस्याकारकत्वादि-त्यूह्यम्। यत्र वाक्यमध्यस्तवस्त्वभावज्ञानेन तदभावबोधकं तत्र नञाद्यपेक्षा वाक्यस्य, यत्र विरोधिभावान्तरज्ञानेन प्राकट्यानुपपत्त्या अध्यस्तवस्त्वभाव-बोधकं तत्र तु नैवमित्याह—**उच्यत इति**। महावाक्यं तर्हि कस्मिन् पक्षे निक्षेप्यमित्याशङ्क्य, उक्तानुपपत्त्या अभावबोधकत्वादनपेक्ष[पक्षे] इत्याह **इहेति**। ब्रह्मणीत्यर्थः। **तादृशमिति**। अध्यासविरोधीत्यर्थः॥

सर्वोऽपि व्यापारः स्वविषयमेव साधयति न स्वकार्यानुपपत्त्या अर्था-न्तरमपि, अतो न (इष्टा)[युक्तं]अवगतिसाम(र्थ्यं चोद्यत्वाद)[र्थ्यबोध्यत्वम्]नर्थ-

करणमन्तरेण न स्वार्थं साधयितुमलम्, तुलोन्नमनव्यापार इव आनमननान्तरीयकः। तथा हि—उन्नमनव्यापारः स्वविषयस्य तुलाद्रव्यस्योर्ध्वदेशसम्बन्धं न साधयितुमलं तत्कालमेव तस्याधोदेशसम्बन्धमनापाद्य। न चोन्नमनकारकस्य हस्तप्रयत्नादेरानमनेऽपि कारकत्वम्। प्रसिद्ध्यभावादनुभवविरोधाच्च। तदेवं विपर्यासगृहीते वस्तुनि तत्त्वावद्योतिशब्दनिमित्त आत्मनो ज्ञानव्यापारो नाहं कर्ता ब्रह्माहमिति ग्राहयति, नेदं रजतं शुक्तिकेयमिति यथा। तस्मात् शुक्तिकेयमित्येव निराकाङ्क्षं वाक्यम्, नेदं रजतमित्यनुवादः॥

---

हानेरित्यत्राह—**तुलोन्नमनेति**। उन्नतिहेतोर्व्यापारस्य स्वकार्यानुपपत्त्या अवनतिसाधकत्वमभिनयति—**तथा हीति**। स व्यापारो विषयतया उभयसाधकः, तथा ब्रह्मज्ञानमपि विषयतया अनर्थाभावस्यापि बोधकमिति वाच्यम्, तथा च शास्त्रविषयता अनर्थाभावस्येत्यत्राह—**न चोन्नमनेति**। उद्देश्यस्य विषयतया साधकत्वानुपपत्त्या अपरस्य सिद्धौ सत्यामुभयविषयत्वकल्पनागौरवं चशब्देन सूचितम्। यस्मात् प्राकट्यानुपपत्तिः नञाद्यनपेक्षता च, तस्मात् ब्रह्मावगत्यनुपपत्तिगम्यः [आत्मनि अ]शेषानर्थाभाव इति निगमनम्[—**तदेवमिति**।] तद्गम्यत्वमभिनयति—**नाहं कर्ता ब्रह्माहमिति**। व्युत्क्रमेणान्वयः।

एकविषयस्य वाक्यस्य नान्तरीयकतया अर्थान्तरबोधकता न दृष्टेत्यत्राह—**नेदं रजतमितीति**। यथा इयं शुक्तिरिति वाक्यं शुक्तिरियं न रूप्यमिति नान्तरीयकमभावं बोधयति, तद्वदित्यर्थः। एतद्वाक्यमभावस्यापि विषयतया बोधकं किं न स्यादित्यत्राह—**तस्मादिति**। यस्मादभावं विषयतया न बोधयति वाक्यं तस्मान्निराकाङ्क्षमिति प्रसिद्धिः, अन्यथा नञादिसाकाङ्क्षत्वात् सा न स्यादित्यर्थः। तावता निराकाङ्क्षत्वे कचिन्नेदं रूप्यमिति प्रयोगो न स्यादित्यत्राह—**अनुवाद इति**। वाक्यार्थज्ञाननान्तरीयकसिद्धस्येति शेषः।

अत एवाख्यातपदस्य वाक्यत्वे क्रियाज्ञानादेव तत्साधनमात्रेऽपि प्रतीतिसिद्धिः पदान्तराणि नियमायानुवादाय वेति न्यायविदः। तथाचाहुः—'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वा'दिति।

अपरे तु 'यज्ञं व्याख्यास्यामः—द्रव्यं देवता त्यागः' इति। कथं क्रियामात्रवाचिनो द्रव्यदेवताभिधानं नान्तरीयकं तद्विषय-

---

अन्यविषयवाक्येनान्यस्य नान्तरीयकविधिं परिकल्प्य तद्वाचकपदस्यानुवादत्वकल्पने न्यायविरोधात् अप्रयोगस्थले साकाङ्क्षत्वकल्पना युक्तेत्यत्राह—**अत एवेति**। अनुवादस्यैव न्याय्यत्वादित्यर्थः। वाक्यार्थभूतक्रियावाचकत्वादाख्यातस्य वाक्यत्वम्, क्रियाज्ञानसामर्थ्यादेव सर्वसाधनानां विकल्पेन क्रियान्वयप्रतिपत्तौ पदान्तराण्यन्यतमनियमार्थानि, नित्यवदन्वयप्रतिपत्तावन्यतमानुवादमुखेनान्यनिवृत्त्यर्थानीत्यर्थः। सूत्रकारैरनुक्तत्वादविवक्षितार्थमिदं भाष्यमित्यत्राह—**तथा चेति**। भेदहस्वत्वादिशब्दवत् नित्यसापेक्षत्यागवाचित्वाद्यजतेः तदपेक्षितद्रव्यदेवतयोरपि नान्तरीयकतया बोधकत्वाभावे साकाङ्क्षता स्यात्, अतः श्रुत्यर्थाभ्यां द्रव्यदेवताक्रियं बोधयति, तस्मिन् बोधिते निराकाङ्क्षत्वादित्यर्थः॥

तथापि न याज्ञिकानामत्र सम्मतिरित्यत्राह—**अपरेत्विति**। यज्ञव्याख्यां प्रतिज्ञाय द्रव्यदेवते च वदन् तयोर्यज्ञशब्देन नान्तरीयकबोधमकथयदित्यर्थः। उक्तोदाहरणेषु वाचकत्वेन वा श्रुतार्थापत्त्या वा अर्थान्तरबोधोऽभाणीत्यत्राह—**कथं क्रियेति**। वाचकत्वे क्रियामात्रवाचिता न स्यात्, श्रुतार्थापत्तिबोध्यत्वे बोधकता न स्यात् शब्दस्य पर्यवसितत्वात्, न च नान्तरीयकाख्यश्रुत्यर्थापत्तिबोध्यत्वेऽप्येतत्तुल्यम्, शब्दस्यापर्यवसानादित्यर्थः॥

---

**अत एवेति**। लोके क्वचित् वाक्यव्यापारो मुखत एकं फलं साधयति, तदनुपपत्त्या नान्तरीयकतया अन्यत् फलं साधयतीति यतोऽत एव **न्यायविदो**ऽप्येवमाहुरित्यर्थः॥

**द्रव्यदेवताक्रियमिति**। बोधयतीति शेषः। भेदहस्वत्वादिशब्दवन्नित्यसापेक्ष-

ज्ञाननिमित्तत्वं विहाय। प्रत्यक्षबाधस्याप्ययमेव प्रकारः, असंप्रयुक्तविषयत्वाद्बाधस्य। तदेवमशाब्दमविद्याविलयं मन्वानः श्रुतिन्यायकोविदो भगवान् भाष्यकारो विषयात् पृथक् निर्दिशति—'अस्यानर्थहेतोः प्रहाणाये'ति। चतुर्थीप्रयोगोऽपि विद्यासामर्थ्यसिद्धिमभिप्रेत्य, न तदर्थमुपादानम्। प्रयोजनत्वं च

---

अध्यासविरोधिभावान्तरज्ञानात् परोक्षान्नान्तरीयकोऽध्यासा[भावा]वबोधः, तज्ज्ञानं चापरोक्षमध्यासाभावविशिष्टभावान्तरविषयत्वादध्यासाभावविषयम्, तथा ब्रह्मविद्याप्यपरोक्षज्ञानत्वात् बन्धाध्यासाभावविशिष्टब्रह्मविषयत्वादनर्थाभावविषयं वाच्यम्, तथा चानर्थहानेः शास्त्रविषयतेत्यत्राह—**प्रत्यक्षेति**। अभावबोधस्य भावग्राहकचक्षुराद्यसम्प्रयुक्तविषयत्वात्तद्विषयस्याभावस्य तत्संप्रयुक्तमात्रविषयभावप्रत्यक्षविषयत्वायोगादित्यर्थः। ब्रह्मावगतिनान्तरीयकबोध्यत्वे फलमाह—**तदेवमिति**। तथा मनने हेतुः—**श्रुतिन्यायेति**। **श्रुतिः** भावरूपैकविषया, **न्यायो**ऽनन्यलभ्यः शब्दार्थ इति, तत्र पण्डित इत्यर्थः। अत्र हेतुः—**भगवानिति**। अनर्थहानेर्विद्याफलत्वात् तत्प्रहाणाय वेदान्ता इत्ययुक्तमित्याशङ्क्य, वेदान्तारम्भसाध्यविद्यात्वानुपपत्त्या शास्त्रफलत्वसिद्धेस्तत्सामर्थ्यसिद्धत्वात् तथोक्तमित्याह—**चतुर्थीप्रयोगोऽपीति**। **उपादानम्**—वेदान्तारम्भ(उक्त) इत्यर्थः। विषयोक्त्यैवानन्दाप्तिरुक्ता अस्तु, तथापि तस्याः फलत्वं वाच्यमित्यत्राह—**प्रयोजनत्वमिति**। अधिकारी वेदान्तारम्भफलमाकाङ्क्षमाणः उक्ता-

---

त्यागवाचित्वाद्यजतेः तदपेक्षितद्रव्यदेवतयोरपि नान्तरीयकतया बोधकत्वाभावे साकाङ्क्षत्वेनानर्थक्यप्रसङ्गात् ते अपि बोधयित्वैव निराकाङ्क्षतया पर्यवस्यतीत्याह—**समुदाये इति**। उक्तोदाहरणेष्वपि सर्वस्यैवाभिधायकत्वेन बोधकत्वमुक्तमित्यनभ्युपगम्य, एकस्य मुखतो बोधकत्वमर्थादितरेषां बोधकत्वमुक्तमिति किमित्यभ्युपगम्यते इत्याशङ्क्य, आह—**कथं हीति**। **प्रत्यक्षबाधस्याप्ययमेव प्रकार इति**। इयं शुक्तिरिति प्रत्यक्षबाधस्यापि सम्प्रयुक्तार्थविशेषणतया विशेष्यतया वा न निवृत्तिबोधकत्वम्, किन्तु नान्तरीयकतयैवेत्यर्थः। तत्र हेतुः **असम्प्रयुक्तेति**॥

**विद्यासामर्थ्यसिद्धिमिति**। वेदान्तारम्भसाध्यविद्यासामर्थ्यलभ्यत्वं प्रहाण-

पुरुषाकाङ्क्षाया एवास्तु। न हि विद्या गवादिवत् तटस्था सिध्यति, येनाप्तिः पृथगुपादीयेत। सा हि वेदित्राश्रया वेद्यं तस्मै प्रकाशयन्त्येवोदेति। सत्यमेवमन्यत्र। प्रकृते पुनर्विषये विद्या उदिताऽपि न प्रतिष्ठां लभते। असम्भावना-विपरीतभावनाभिभूतविषयत्वात्। तथा च लोके अस्मिन् देशे काले चेदं वस्तु स्वरूपत एव न सम्भवतीति दृढभावितं, यदि तत् कथं चित् दैववशादुपलभ्येत, तदा स्वयमीक्षमाणोऽपि तावन्नाध्यव-

---

मानन्दाप्तिं फलत्वेन प्रतिपद्यते, अतो न फलत्वमपि वक्तव्यमित्यर्थः ॥

प्रतिपत्तिपदं किं ज्ञप्त्यर्थं प्राप्त्यर्थं वा ? नाद्य इत्याह—**न हीति**। [न हि] स्वयम्प्रकाशत्वाद्विद्या गवादिवदज्ञातोत्पद्यत इत्यर्थः। प्राप्तिपक्षेऽपि किमाश्रय-प्राप्तिः विषयप्राप्तिर्वा ? नाद्य इत्याह—**तटस्थेति**। अस्य वेदित्रनाश्रया इत्यर्थः। अन्त्यमपाकुर्वन्नुत्पत्तिप्रकारमाह—**सा हीति**। वेद्येन नित्य(स्ता)[संबद्धा] विद्या इत्यर्थः। तथापि फलतो विषयाप्राप्तिः स्यादित्यत्राह—**प्रकाशयन्त्येवेति**। अतो व्यर्थं प्रतिपत्तिपदमित्याक्षेपः। अपरोक्षसम्यग्विद्या विषयान्तरेषु सम्यक् प्राकट्यं कुर्वन्त्येवोत्पद्यते इत्युक्तमुपेत्य, ब्रह्मण्यसंभावनाद्यभिभूतविषयत्वात् सन्देहफला विपर्ययफला वोत्पद्यते न सम्यक्फला, ततः फलतोऽप्राप्तेः न व्यर्थ-मिति समाधत्ते—**सत्यमित्यादिना**। **विद्येति**। अपरोक्षा शक्तितात्पर्यविचार-सचिवशब्दजा, **प्रतिष्ठां**—सम्यक्फलतां नाप्नोतीत्यर्थः ॥

अपरोक्षात् सम्यग्ज्ञानात् सम्यक्फलानुत्पत्तिः न दृष्टेत्यत्राह—**तथा चेति**। महाराष्ट्रादिदेशे ह्यार्द्रमरीचादौ जाताऽप्यपरोक्षसम्यग्दृष्टिः न सम्यक्-

---

स्याभिप्रेत्योक्तम्, न तु वेदान्तारम्भस्य साक्षात् तत्साधनत्वात् तदर्थं वेदान्तारम्भ इत्युक्ति-रित्यर्थः। जन्मतो विद्या न केवलं स्वरूपत एव प्राप्ता भवति, किन्तु विषयप्रकाशलक्षण-प्राकट्यफलशिरस्कतयापि प्राप्तैवेत्याह — **वेद्यमिति**। अप्रतिबन्धफलशिरस्का इति एवार्थः। **काले चेति**। यत्र देशे निष्पत्तिस्तस्मिन्नपि देशे **अन्यस्मिन् काले** इत्यर्थः॥

स्यति यावत् तर्केण तत्सम्भवं नानुसरति । तेन सम्यग्ज्ञानमपि स्वविषयेऽप्रतिष्ठितमनवाप्तमिव भवति । तेन तत्स्वरूपप्रतिष्ठायै तर्कं सहायीकरोति । अत एव 'प्रमाणानामनुग्राहकस्तर्कः' इति तर्कविदः ॥

अथ कोऽयं तर्को नाम ? युक्तिः । ननु पर्याय एषः, स्वरूपमभिधीयताम् । इदमुच्यते—प्रमाणशक्तिविषयतत्सम्भवासम्भवपरिच्छेदात्मा प्रत्ययः । नन्वेवं तर्कसापेक्षं स्वमर्थं साध-

---

फलं करोति असम्भावनाद्यभिभूतविषयत्वादित्यर्थः । **कथञ्चिदिति** । नौयानादिनेत्यर्थः । **दैववशादिति** । (य)[प]क्ष्यादिनेत्यर्थः । यथा तत्र पुनः सम्यक्प्राकाट्यानुपपत्तिः तथा ब्रह्मण्यपि स्यादित्यत्राह—**यावत्तर्केणेति** । अस्तु ज्ञानात् सम्यक्फलानुपपत्तिः, ततः किमित्यत्राह—**तेनेति** । विषये नित्यं प्रतिष्ठैव ज्ञानस्य ज्ञातताश्रयत्वादित्यत्राह—**अनवाप्तमिति** । फलाभावमात्रात् कथं ज्ञानस्य स्वविषयाप्राप्तिरित्यत्राह—**इवेति** । तथापि स्वेनैव विषयसम्भावनया पश्चात् प्राप्तिसिद्धेः न सहायापेक्षेत्यत्राह—**तेनेति** । प्राक् स्वेनाप्राप्तत्वेनेत्यर्थः । मानादजातं फलं कथं तर्कात् स्यादित्यत्राह—**अत एवेति** । सहकारिसम्पत्तौ कार्यसिद्धिः प्रसिद्धेत्यर्थः ॥

तर्कस्य मानत्वे कथं मानद्वयादेकं [ज्ञानं] स्यात्, अमानत्वे वैधर्म्यात् कथं सहकारिता इति मत्वा आह—**अथेति** । इमं भावमजानन्निव उत्तरयति—**युक्तिरिति** । स्वान्तस्थं व्यनक्ति—**नन्विति** । अमानमपि तर्कः मानसहकारी प्रत्ययविशेषत्वात् मृदि अमृद्रूपभूतविशेषवत् इति परिहरति—**प्रमाणेति**। प्रमाणादीनां तत्त्वं तदित्युच्यते, तस्य सम्भवासम्भवप्रत्ययः तर्को न निश्चय इत्यर्थः । तर्कापेक्षया अर्थनिश्चायकत्वे ज्ञानानां स्वतः प्रामाण्यं न स्यादित्याह—**नन्वेव-**

---

**कथञ्चिदिति** । नौयानादिनेत्यर्थः । **दैववशादिति** । (य)[प]क्ष्यादिनेत्यर्थः । तज्ज्ञानस्य अनुपहतसामग्रीजन्यत्वमाह—**स्वयमिति**। **विष**(यतया सम्भावना)[**यासं-**

यतोऽनपेक्षत्वहानेरप्रामाण्यं स्यात् । न स्यात्, स्वमहिम्नैव विषयाध्यवसायहेतुत्वात् । क तर्हि तर्कस्योपयोगः ? विषयासम्भवाशङ्कायां तथा अनुभवफलानुत्पत्तौ तत्सम्भवप्रदर्शनमुखेन फलप्रतिबन्धविगमे । तथा च तत्त्वमसिवाक्ये त्वंपदार्थो जीवः तत्पदार्थब्रह्मस्वरूपतामात्मनोऽसम्भावयन् विपरीतं च रूपं मन्वानः समुत्पन्नेऽपि ज्ञाने तावत् नाध्यवस्यति यावत्तर्केण विरोधमपनीय तद्रूपतामात्मनो न सम्भावयति । ततः प्राक् विद्या उदितापि वाक्यात् अनवाप्तेव भवति । अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्टः साक्षादनुभवफलोद्देशेन । तेनोच्यते— विद्याप्रतिपत्तये इति ॥

---

मिति । परिहरति—**न स्यादिति** । तर्हि तर्को व्यर्थ इत्याशङ्कते—**क तर्हीति** । सम्यक्प्राकट्योत्पत्तिप्रतिबन्धाख्यासम्भावनादिव्यावृत्त्यर्थत्वान्नेत्याह—**विषयेति** । ननु अस्तु जडे प्रतिबन्धसम्भवादप्राप्तिः, नात्मनि स्वप्रकाशत्वादित्यत्राह—**तथा चेति** । अनन्तदुःखिनो मे नानतिशयानन्दब्रह्मता सम्भवति, अपि तु अब्रह्मैवाहमित्यसम्भावनादिप्रतिबन्धात् फलाप्राप्तिः ब्रह्मण्यनुभवसिद्धेत्यर्थः ॥

तर्कशब्देनात्र, मानानुग्राहकत्वसाम्यात् शमादिसहकारिणः कथ्यन्ते, प्रसिद्धतर्कस्य प्रथमज्ञानेऽन्तर्भूतत्वात् । अतः फलाभावात् ज्ञानस्य विषयप्राप्तिरप्राप्तितुल्येत्याह—**तत इति** । ज्ञानस्य फलोत्पत्तौ तर्कातिरिक्तशमाद्यपेक्षा लोके न दृष्टेति चेत्, सत्यम्, तथापि श्रुतिसामर्थ्यात् कल्प्येत्याह—**अवाप्तीति** । अवाप्तितुल्यत्वे प्रतिपत्तिपदस्यावैयर्थ्यं फलमाह—**तेनोच्यत इति** ।

---

**भवाशङ्कायां]** विपरीतभावनाप्रतिबन्धेनेत्यर्थः । **तथा अनुभवफलानुत्पत्ताविति ।** असम्भावनादिप्रतिबन्धाहितैकत्वापरोक्ष्यलक्षणफलानभिव्यक्तौ सत्यामित्यर्थः । तत्सम्भवेति । अयं न न सम्भवति इत्थं सम्भवत्येवेति विषयसम्भवप्रदर्शनमुखेन इत्यर्थः ।

ननु आत्मैकत्वविद्याप्रतिपत्तिः नानर्थहेतुप्रहाणाय प्रभवति । तथाहि—जीवस्य कार्यकरणसंघातादन्यत्वप्रतिपत्तेः ब्रह्मस्वरूपताप्रतिपत्तिः न विशिष्यते, उभयत्राप्यहङ्कारग्रन्थेः मनुष्याभिमानपर्यन्तस्याविकलमनुवर्तमानत्वात् । उच्यते—भवतु तत्राविद्याया अनिवर्तितत्वात् तत् । इह पुनरपसारिताविद्यादोषं ब्रह्मात्मज्ञानमुदयमासादयत् कथं तन्निमित्तं भोक्त्रादिग्रन्थिप्रवाहं नापनयति । नहि जीवस्य ब्रह्मात्मावगमः तद्विषयानवगममबाधमानः उदेति ॥

---

ननु ब्रह्मापरोक्षज्ञानं नानर्थनिवर्तकं सत्यपि तस्मिन् अनर्थानुवृत्तिदर्शनात्, अन्यथा सद्यः शरीरपातः स्यादिति शङ्कते—**नन्वात्मैकत्वेति**। व्यतिरेकज्ञानात् तत्त्वज्ञानस्य विशेषः प्रादर्शि [इति] चेत्, सत्यम्, फलतो न विशेष इत्याह—**तथा हीति** ॥

अन्यत्वबुद्ध्यविशेषात् किं नानर्थनिवर्तकं ज्ञानत्वात् अन्यत्वबुद्धिवदिति साध्यते? किं वा अन्यत्वज्ञानमपि अनर्थं निवर्तयेत् आत्मज्ञानत्वात् ब्रह्मज्ञानवदिति? यद्वा, अनर्थानुवृत्त्यन्थानुपपत्त्या अन्यत्वबुद्धिवत् अज्ञानानिवर्तकतेति? [इति] वाच्यम्। आद्ये कारणानिवर्तकत्वमुपाधिरित्याह— **भवत्विति**। मध्ये कारणनिवर्तकत्वमुपाधिरित्याह—**इह पुनरिति**। तर्हि ब्रह्मज्ञानं नाज्ञाननिवर्तकं आत्मज्ञानत्वादन्यत्वज्ञानवदिति वा, अन्यत्वज्ञानं ब्रह्माज्ञाननिवर्तकं आत्मज्ञानत्वात् ब्रह्मज्ञानवदिति वा साध्यते इत्याशङ्क्य, ब्रह्मत्वानवभासकत्वावभासकत्वे [अज्ञानानिवर्तकत्वे तन्निवर्तकत्वे च] प्रयोजके इत्याह— **न हीति** ॥

---

**अविद्याया अनिवर्तितत्वादिति**। संसारकारणाज्ञानस्य भेदाज्ञानत्वाभावात् भेदज्ञानेनानिवर्तितत्वादित्यर्थः ॥

उपकोसलदहरादिपरब्रह्मोपासनानि क्रममुक्तिफलानि, 'असौ वा आदित्यो देवमधु' इत्यादीन्यैश्वर्यफलानि, 'आदित्यो ब्रह्म' इत्यादिप्रतीकोपासनानि अभ्युदयफलानि, उद्गीथादि-

**ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्याहङ्कारग्रन्थेः तत्कालमेवाभावः प्रसज्येत । न—संस्कारादप्यग्रहणानुवृत्तेः सम्भवात् भयानुवृत्तिवत् । तथाहि—सम्यग्ज्ञानात् निवृत्तमपि भयं स्वसंस्कारादनुवर्तते कम्पादिनिमित्तं च भवति, तथा अग्रहणमपि स्वसंस्कारादनुवर्तते अहङ्कारग्रन्थेश्च निमित्तं भवतीति न किञ्चिदनुपपन्नमस्ति ॥**

**ननु न सर्वे वेदान्ता विद्यार्थमेवारभ्यन्ते । तदेकदेशः क्रममुक्तिफलाय ऐश्वर्याय अभ्युदयार्थं कर्मसमृद्धये चोपासनानि**

---

अन्त्यं शङ्कते—**ननु ब्रह्मज्ञानादिति** ॥

अन्यथोपपत्त्या दूषयति—**संस्कारादिति**। निवृत्तस्याज्ञानस्यानुवृत्ति-र्व्याहतेत्यत्राह—**भयेति**। तत्रापि सा तुल्येत्यत्राह—**तथा हीति**। रज्वज्ञानसर्पभ्रान्तिजभयस्य तज्जानान्नष्टस्यानुवृत्तिरनुभवसिद्धा नापलपनीयेत्यर्थः। अस्त्यनुवृत्तिः, अर्थक्रिया तु नास्ति असत्त्वादित्याशङ्क्य, साप्यनुभव-सिद्धेत्याह—**कम्पादीति**। दार्ष्टान्तिकमाह—**तथेति**। न च संस्कारस्य स्वोपादानाश्रयत्वनियमात् अज्ञानाभावे अनुपपत्तिः, "भूयश्चान्ते विश्वमाया-निवृत्तिः" इति श्रुतिसामर्थ्यसिद्धाविद्यालेशस्यैव तमोलेशवत् संस्कारशब्दोक्त-त्वादित्यर्थः ॥

उपकोसलदहराद्यपरब्रह्मोपासनानि क्रममुक्तिफलानि, "असावादित्यो देवमधु" इत्यादीन्यैश्वर्यफलानि, "आदित्यो ब्रह्म" इत्यादिप्रतीकोपासनान्यभ्युदय-फलानि, उद्गीथादिकर्माङ्गोपासनानि कर्मसमृद्ध्यर्थानि, अतो वेदान्तैकदेशस्य उपासनार्थत्वात् सर्वशब्दोऽनुपपन्नार्थ इत्याक्षिपति—**ननु न सर्वे इति**। उपासनावाक्यस्यापि निष्प्रपञ्चब्रह्मैकत्वे महातात्पर्यात् न इति वक्तुमुपलब्धिमुपेत्य

---

कर्माङ्गोपासनानि कर्मसमृद्ध्यर्थानीति द्रष्टव्यम्। उक्तफलसाधनत्वे उपासनानां गोदोहनादि-नियमवन्निष्प्रपञ्चब्रह्मप्रतिपत्तिशेषतया प्राप्तसप्रपञ्चब्रह्मप्रतिपत्तिमाश्रित्य विहितत्वादद्वितीय-

विविधान्युपदिशन् उपलभ्यते। सत्यम्। उपासनाकर्म तु ब्रह्म, तच्च अपाकृताशेषप्रपञ्चं जीवस्य निजं रूपमिति निरूपयितुं अखिलप्रपञ्चजन्मादिहेतुतया प्रथमं सर्वात्मकं सर्वज्ञं सर्वशक्ति च ब्रह्म लक्षितम्। अस्यां चावस्थायामनपाकृत्यैव ब्रह्मणि प्रपञ्चं तेन तेन प्रपञ्चेनोपधीयमानं ब्रह्म तस्मै तस्मै फलायोपास्यत्वेन विधीयते दर्शपूर्णमासार्थाप्प्रणयनमिव गोदोहनोपरक्तं पशुभ्यः। तस्मात् तदर्थोपजीवित्वादितरस्य **आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इति न विरुध्यते ॥**

---

उपास्यं सप्रपञ्चं ब्रह्मेत्याह—**सत्यमिति**। ततः किमित्यत्राह—**तच्चेति**। तच्च सप्रपञ्चमध्यारोपापवादन्यायेन निष्प्रपञ्चब्रह्मैकत्वविद्याङ्गत्वेन उपदिष्टम्, तस्मादेकत्वविद्याङ्गमाश्रित्योपासनविधानमित्यर्थः ॥

निराकरणप्रत्ययविरोधात् निराक्रियमाणं सप्रपञ्चमाश्रित्य कथमुपासनाविधिरित्याशङ्कां व्युदस्यन् आश्रित्यविधानं विशदयति—**अस्यां चेति**। अविद्यावस्थायामित्यर्थः। कथमङ्गमाश्रित्य स्वतन्त्रफलाय विधिः स्यादित्यत्राह—**दर्शपूर्णमासेति**। यथा दर्शपूर्णमासाङ्गं अपां प्रणयनमाश्रित्य गोदोहनं स्वतन्त्रपशुफलाय विधीयते तद्वत् स्यादित्यर्थः। न च तद्वदेवाधिकृताधिकारात् मुमुक्षोरेवोपासनास्वप्यधिकारः। तत्र दर्शपूर्णमासानधिकारिणः प्रणयनप्राप्त्यभावादधिकृताधिकारः, इह तु अमुमुक्षोरपि शब्दात् सप्रपञ्चब्रह्मप्रतिपत्त्युपपत्तेः नाधिकृताधिकार इत्यूह्यम्। एकत्वविद्याङ्गोपजीवित्वादुपासनविधेः तद्वाक्यानामात्मैकत्वे महातात्पर्यात् सर्वशब्दो न विरुद्ध इति निगमयति—**तस्मादिति** ॥

अथाप्यब्रह्मोपासनवाक्यानां आत्मैकत्वे तात्पर्याभावात् सर्वशब्दो

---

ब्रह्मप्रतिपत्तिशेषत्वमपरित्यज्यैव ऐश्वर्यादिफलसाधनत्वेन तानि विधीयन्त इत्याह—**सत्यमित्यादिना** ॥

**ननु अब्रह्मोपासनान्यपि वेदान्तेषु दृश्यन्ते प्राणादिविषयाणि। सत्यम्। तान्यपि कार्यब्रह्मावाप्तिक्रमेण मुक्तिफलान्येव। वक्ष्यत्येतत् सूत्रकारः—'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' इति। 'यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः' इति प्रतिज्ञातेऽर्थे वेदान्तानां तात्पर्यमुपदर्शयितुं समन्वयसूत्रप्रमुखैः सूत्रवाक्यैः ग्रथितो न्यायः इति दर्शयति। शरीरमेव शरीरकम्। शरीरके भवः शारीरको जीवः। तमधिकृत्य कृतो ग्रन्थः शारीरकः। तदिह वेदान्तानां**

---

विरुद्ध इत्याशङ्कते—**नन्वब्रह्मेति**। [सत्यं **तान्यपीति**।] तेषामपि मुक्तिफलत्वान्यथानुपपत्त्या तत्साधनविद्यार्थत्वस्य महातात्पर्यद्वारोपेयत्वात् न विरोध इत्यर्थः। अब्रह्मोपासनस्य मुक्तिफलता स्वोत्प्रेक्षासिद्धेत्यत्राह—**वक्ष्यतीति**। ब्रह्मलोकस्यात्यये प्राप्ते तदध्यक्षेण हिरण्यगर्भेण सहोपासका मुच्यन्ते, कार्यात्ययादूर्ध्वं तेषां 'परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति मुक्तेरुक्तत्वादित्यर्थः। तथापि विचारशास्त्रस्य विषयप्रयोजनाभावादनारम्भः स्यादित्याशङ्क्य, वेदान्तविषयप्रयोजने एव तस्यापि स्तः इति वक्तुं उत्तरभाष्यम्, तदादत्ते—**यथा चेति**। अस्य तात्पर्यमाह—**प्रतिज्ञाते इति**। विचार्यतया प्रतिज्ञाते ब्रह्मात्मैक्ये वेदान्तानां शक्तितात्पर्यनिर्णायको न्यायः सूत्राख्यविचारशास्त्रेणोक्तः, अतो वेदान्ताख्यकरणं प्रति विचारशास्त्रस्य 'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति न्यायेनेतिकर्तव्यतात्वात् करणेतिकर्तव्यतयोश्चैकविषयत्वात् वेदान्तविषयप्रयोजने एव विचारशास्त्रस्यापि स्यातामित्यर्थः॥

शास्त्रं नाम ग्रन्थः, तस्य कथं शारीरकतेत्यत्राह—**शरीरमेवेति**। अस्तु तर्हि वेदान्तानां शारीरकता, सा कथं विचारशास्त्रस्येत्यत्राह—**तदिहेति**।

---

यत्र धात्वर्थे प्रवृत्तेः हितसाधनता लिङादिभिरुपदिश्यते तस्य धात्वर्थस्य सामान्येन हितसाधनत्वेन प्रतीतस्य अर्थात् विशेषे पर्यवसानमन्तरेणानुपपत्तेः काम्यमानहितविशेष-

**जीवस्य तत्त्वमधिकृत्य प्रवृत्तानां ब्रह्मरूपतायां पर्यवसानमिति कथयितुं प्रणीतानां शारीरकं जीवतत्त्वमधिकृत्य कृतत्वमस्तीति शारीरकाभिधानम् । मुमुक्षुत्वे सति अनन्तरं ब्रह्मज्ञानं कर्तव्यमिति यद्यप्येतावान् सूत्रस्य श्रौतोऽर्थः, तथापि अर्थात् ब्रह्मज्ञानस्य मोक्षः प्रयोजनं निर्दिष्टं भवति । तथा हि—पुरुषार्थवस्तुकामनानन्तरं यत्र प्रवृत्तिरुपदिश्यते तस्य तत्साधनत्वमप्यर्थान्निर्दिष्टं प्रतीयते । तथा सति कुतः तत् मोक्षसाधनं ब्रह्मज्ञानं भवतीत्यपेक्षायां अर्थात् अस्माच्छास्त्राद्भवतीति शास्त्रस्य ब्रह्मज्ञानं विषयो निर्दिष्टः। तदेवं मुमुक्षुत्वानन्तरं ब्रह्मज्ञानकर्तव्यतोपदेशमुखेन वेदान्तानां विषयप्रयोजननिर्देशोऽप्यार्थं सूत्रस्य व्यापारं**

---

सा सूत्रेष्वप्यस्तीत्यर्थः । एतद्व्यनक्ति—**वेदान्तानामिति**। प्रणीतानामित्यत्र सूत्राणामिति शेषः । विचारकर्तव्यतामात्रस्य सूत्रार्थत्वादसौत्रे विषयप्रयोजने भाष्यकृता नोपपाद्ये इत्याशङ्क्य, ते **चार्थात् सूत्रिते** इत्युक्तमनुवदति । अर्थात् कथं सूत्रिते इति वक्तुं **मुमुक्षुत्वे सतीति** । तं प्रकारमाह—**तथा हीति** । यत्कामनानन्तरं यस्मिन् धात्वर्थे हितसामान्यसाधनतोपदिश्यते तस्य धात्वर्थस्य तत्काम्यसाधनत्वमर्थात् निर्दिष्टं प्रतीयते । सामान्यप्रतीतेः विना विशेषमपर्यवसितायाः अधिकारिविशेषणतया बुद्धिस्थविशेषे पर्यवसानात् । अतो मुमुक्षुं प्रति हितसामान्यसाधनत्वसूत्रणेनान्यथानुपपत्त्या विचारस्य स्वसाध्यब्रह्मज्ञानद्वारा अधिकारिविशेषणमोक्षफलता सूत्रितेत्यर्थः । अथापि कथं विषयस्यार्थात् सूत्रणमित्यत आह—**तथा सतीति** । ब्रह्मज्ञानद्वारा मोक्षफलत्वे सूत्रिते सति, तदन्यथानुपपत्त्या ब्रह्मज्ञानजनकता सूत्रिता विचाराख्यशास्त्रस्य ब्रह्मविषयत्वं विना अनुपपन्नेति तद्विषयतापि सूत्रितेत्यर्थः। ब्रह्म च तत् ज्ञानं चेति विग्रहः ॥

कार्यकारणभावेन पूर्वोत्तरभाष्ययोः साङ्गत्य वक्तुं वृत्तं कीर्तयति—**तदेव-**

---

साधनत्वं फलवचने(नान्विधायिता)[नाधिकार्यभिधायिना]साधनवचनेन लिङादिना अवगतमित्याह—**तथा हीति** ॥

**दर्शयित्वा तदपेक्षितमप्यर्थात् सूत्रितमविद्यात्मकबन्धमुपवर्ण्य प्रतिज्ञातार्थसिद्धये हेत्वाकाङ्क्षायामस्मिन्नेव तं प्रदर्शयिष्याम इति व्याख्येयत्वमुपक्षिप्य व्याख्यातुकामः प्रथमं तावत् प्रयोजनविषययोरुपादाने निमित्तमाह—वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्-अथातो ब्रह्मजिज्ञासेति। अयमस्यार्थः—शास्त्रस्यादिरयम्। आदौ च प्रवृत्त्यङ्गतया प्रयोजनं विषयश्च दर्शनीयः। सूत्रं चैतत्। अतो यः कश्चिदर्थः शब्दसामर्थ्येनार्थबलाद्वा उत्प्रेक्षितः स सर्वः तदर्थ एवेति भवत्ययमर्थकलापः तन्महिमाधिगतः। एवं सूत्रस्यादित्वेन कारणे**

---

**मिति। अर्थादिति।** विषयादिसूत्रणानुपपत्त्येत्यर्थः। तर्हि इदं आदिसूत्रं इदं अन्त्यसूत्रं इत्यादि वक्तुमयुक्तमित्याशङ्क्य, उत्तरभाष्यतात्पर्यमाह—**प्रथमं तावदिति।** प्रथमाध्याये प्रथमसूत्रे इत्यर्थः। विषयः समन्वयाध्यायेन गम्यते, प्रयोजनं तु चतुर्थाध्यायेन प्रमीयते, किमिति अत्र विषयादि सूच्यत इत्याशङ्क्य, तत्र निमित्तमाहेत्यर्थः। किमत्र निमित्तमुक्तमित्यत्राह — **अस्यायमिति।** एकस्य सूत्रवाक्यस्यानेकार्थता न युक्तेत्यत्राह—**सूत्रं चैतदिति।** विश्वतोमुखत्वस्य सूत्रलक्षणत्वात्तन्त्रेणानेकं वाक्यं सूत्रमित्यर्थः॥

अथाप्यनुपपत्तिसिद्धत्वान्न विषयादेः सूत्रार्थतेत्यत्राह—**अत इति।** व्यासूत्रत्वादेवाल्पाक्षरत्वे सति विश्वतोमुखत्वेन सूच्यमानसर्वार्थत्वादित्यर्थः। व्याख्यातस्यैवास्य सूत्रस्य व्याख्यानात् पुनरुक्तिरित्याशङ्क्य, वृत्तं कीर्तयन् **तत्राथशब्द** इत्यादेः तात्पर्यमाह—**एवमित्यादिना।** पदव्याख्या चेत् प्रतिपदं कर्तव्ये-

---

**अतो यः कश्चिदिति।** सारवत् विश्वतोमुखमिति यतः सूत्रलक्षणं अत इत्यर्थः। **अर्थबलाद्वेति।** शब्दशक्तिप्रतिपन्नार्थानुपपत्तितो वेत्यर्थः॥

॥ इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां प्रथमवर्णकं समाप्तम्॥

---

**सूत्रतया च विषयप्रयोजनं तत्सिद्धिकरं चाविद्याख्यं बन्धं तत्सामर्थ्यावगतमापाद्य तत्र सूत्रसामर्थ्यं दर्शयितुं प्रतिपदं व्याख्यामारभते ॥**

॥ इति पञ्चपादिकायां प्रथमवर्णक समाप्तम् ॥

---

त्यत्राह—**प्रतीति**। पिष्टपेषणं सेति; नेत्याह—**तत्रेति**। अत्र सविषयप्रयोजनविचारकर्तव्यत्वे सूत्रिते, गतार्थत्वाशङ्कायां अगतार्थत्वस्य पृथगारम्भान्यथानुपपत्त्या सूत्रितत्वात् पदव्याख्यानभाष्यात् उत्तरमगतार्थत्ववर्णनं न सङ्गतमिति मत्वा **इदमादिमं सूत्र**मित्येतद्व्याख्याय **तत्राथशब्द** इत्यादेः तात्पर्यं चोक्त्वा, टीकायामगतार्थत्वं वर्ण्यते । **भाष्ये तु वेदान्तमीमांसाशास्त्रस्ये**त्युक्त्या (तच्चेत्ग)[तच्चाग]तार्थमिति प्रसङ्गात् अगतार्थतोक्तेत्यूह्यम् ॥

इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां प्रथमवर्णकं समाप्तम् ॥

## ॥ अथ द्वितीयवर्णकम् ॥

**सिद्धैव ननु ब्रह्मजिज्ञासा, 'अथातो धर्मजिज्ञासे'ति सकलवेदार्थविचारस्योदितत्वात्, ब्रह्मज्ञानस्य च चोदनालक्षणत्वेन धर्मस्वरूपत्वात्, अतः सिद्धैव ब्रह्मजिज्ञासापि, अभ्यधिकाशङ्काभावादिति ॥**

**अत्र केचिदभ्यधिकाशङ्कां दर्शयन्तो ब्रह्मजिज्ञासां पृथगारभन्ते । केयमत्राभ्यधिका शङ्का? 'चोदनालक्षणोऽर्थो धर्मः' इति ब्रुवता विधेः प्रामाण्यं दर्शितम् । अत्र केषुचिद्वा-**

---

**अथातो धर्मजिज्ञासे**त्यादिसूत्रैस्सर्ववेदार्थनिर्णायकं न्यायं सूत्रयता वेदान्तार्थनिर्णायकन्यायस्यापि सूत्रितत्वान्न तदर्थं सूत्रमारब्धव्यमित्याक्षिपति—**सिद्धैवेति** । विधिवाक्यार्थो धर्मः तत्र निर्णीतः धर्मग्रहणात्, न ब्रह्मेत्यत्राह—**ब्रह्मज्ञानस्य चेति** । ब्रह्मज्ञानस्य धर्मत्वेन तद्विशेषणं ब्रह्मापि साध्यतया धर्मत्वात् धर्मनिर्णायकतन्त्रेण निर्णीतमित्यर्थः । क्रियाविधिस्तत्र निर्णीतः, ज्ञानविधिनिर्णयायेदमारभ्यमित्यत्राह—**अत इति** । उत्पत्तिविनियोगाधिकारप्रयोगाणां विध्यपेक्षितरूपाणां क्रियाज्ञानयोरविशेषेण निरूपितत्वादित्यर्थः । यथा पूर्वतन्त्रे प्रत्यध्यायमाशङ्कान्तरनिरासेन विध्यंशभेदः व्यवस्थापितः, तथा ज्ञेयस्य ब्रह्मणोऽध्यक्षाद्यसिद्धत्वात् ज्ञानविध्ययोगाशङ्कानिरासायेदमारभ्यमित्यत्राह—**अभ्यधिकेति** । यूपाहवनीयादिवत् ब्रह्मणः सिद्धिः, असिद्धौ चारोपितत्वेनोपासना सिध्यतीत्यर्थः ॥

अत्र पूर्ववादी वेदान्तानां विधिपरतामूरीकृत्य राद्धान्तैकदेशीयान् दूषयितुं तेषामारम्भप्रकारमाह—**अत्र केचिदिति** । तां शङ्कां वक्तुं जिज्ञास्यत्वात् धर्मः किम्प्रमाणक इति प्रथमाकाङ्क्षितं प्रमाणं चोदनाख्यविधिप्रमाणकः इति ब्रुवता मुखतो विधेः प्रामाण्यं दर्शितम्, अर्थात्तु लक्षणमित्याह—**चोदनेति** ।

---

सहस्राधिकरणैः मुखतः प्रसङ्गाच्च निरूपितन्यायकलापैरनिवर्तिता शङ्का न केनापि दर्शयितुं शक्यत इत्याक्षिपति अनारम्भवादी—**केयमिति** । चोदनासूत्रप्रक्रमबलात् केवल-

क्येषु विधिरेव न श्रूयते 'सदेव सोम्येदमग्र आसीत्' इत्येवमादिषु। यत्रापि विधिः श्रूयते 'आत्मा वा अरे द्रष्टव्यः' 'तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति, तत्र यद्यपि कृत्या अविशेषेण विधौ स्मर्यन्ते, तथापि यो भावाभिधायी तव्यप्रत्ययः स क्रियाप्रधानत्वात् क्रियायां पुरुषं नियोक्तुं शक्नोति। यत्र पुनः कर्म प्राधान्येनोच्यते तत्र द्रव्ये गुणभूतां क्रियां न कार्यान्तरसम्बन्धित्वेन विधातुं शक्नोति। द्रव्यपरत्वे च

ततश्च कचिद्विधेरश्रवणात् अप्रामाण्याशङ्केत्याह—**अत्रेति**। मैवम्—समानप्रकरणे विधेः श्रवणात् तदाकाङ्क्षितानुबन्धसमर्पणेन तदेकवाक्यत्वेन प्रामाण्योपपत्तेरित्यत्राह—**यत्रापीति**। तत्रापि सोऽनुपपन्न इति भावः। 'कृत्याश्च' इत्यविशेषेण कृत्यानां विधौ स्मरणात् तेन ज्ञानविधाने का अनुपपत्तिरित्यत्राह—**यद्यपीति**। तथापि इह विधिर्न घटत इति शेषः। गन्तव्यमिति गतिविधिवत् ज्ञानविधिः किं न स्यादित्यत्राह—**यो भावेति**। 'भावकर्मणोः' इति सूत्रोक्तक्रियाकर्मणोः विधिविषयतया अन्वयसम्भवात् भावकर्मविशिष्टो विधिः 'कृत्याश्च' इति सूत्रार्थः। ततश्च गन्तव्यमित्यत्र पुरमित्यादिकर्मानिर्देशात् क्रियाभिधायित्वेन कृत्यः क्रियाप्रधानत्वात् तां विधातुं शक्नोति, आत्मा द्रष्टव्य इत्यादौ तु कर्मनिर्देशेन कर्माभिधायित्वात् तां विधातुं न शक्नोतीत्यर्थः॥

ग्रामो गन्तव्य इत्यादौ कर्माभिधायिनोऽपि कृत्यस्य क्रियाविधायकता दृष्टेत्याशङ्क्य, सत्यं कर्मगुणभूततया तां विधत्ते न प्रधानतयेत्याह—**यत्र पुनरिति**। तर्हि तथैव ज्ञानविधिः स्यादित्याशङ्क्य, तत्र किं स्वतन्त्रफलाय? कर्मकारकगतफलाय वा? नाद्यः, ग्रामो गन्तव्य इत्यादिष्वदर्शनादित्याह—**न कार्यान्तरेति**।

समन्वयस्य प्रामाण्याभावः सूत्रितः, अतो वेदान्तानामपि विधिनिष्ठता अभ्युपगन्तव्या, अत्र विधिस्तु न श्रूयते इत्याह आरम्भवादी—**चोदनालक्षण इत्यादिना**। **भावाभिधायीति**। क्रियावच्छिन्ननियोगाभिधानमुखेन क्रियायां पर्यवसित इत्यर्थः। **क्रियाप्रधानत्वादिति**। क्रियायाः कर्मण्यतिशयहेतुत्वेन तत्प्रति गुणभूतत्वाभावात् स्वतन्त्रफलसाधनत्वेन विधानमुपपन्नमित्यर्थः। **न कार्यान्तरसम्बन्धित्वेनेति**। द्रव्ये उत्पत्त्याद्यतिशय-

**अनुत्पाद्यत्वादविकार्यत्वादनाप्यत्वादसंस्कार्यत्वात्। संस्कृतस्य च कार्यान्तरे उपयोगाभावादसंस्कार्यत्वम्। अतः 'आत्मानमुपासीते'त्यात्मन ईप्सिततमत्वं न सम्भवति। अथ पुनः विपरीतो गुणप्रधानभावः सक्तुन्यायेन कल्प्येत, तत्रापि न ज्ञायते—किं तदुपासनम्? कथं चात्मना तत् क्रियते? इति। अथ ज्ञायते—**

---

अन्त्येऽपि, किमुत्पत्तिर्विकृतिराप्तिः संस्कृतिर्वा फलम्? नाद्यः, नित्यस्यात्मनः संयवनेन पिण्डवत् ज्ञानेनोत्पत्त्यभावादित्याह—**द्रव्यपरत्वे चेति**। न द्वितीयः, कूटस्थस्यातञ्चनेन क्षीरवदविकार्यत्वादित्याह—**अविकार्येति**। न तृतीयः, गमनेन ग्रामवत् ज्ञानेनाप्राप्यत्वात् सर्वव्यापितया नित्याप्तस्येत्याह—**अनाप्येति**। अनाधेयातिशयस्य प्रोक्षणेन व्रीहिवदसंस्कार्यत्वान्नान्त्य इत्याह—**असंस्कार्येति**। तथापि ज्ञानेनात्मनि अज्ञानमलापनयात् कथमसंस्कार्यतेत्यत्राह—**संस्कृतस्येति**। तर्हि आत्मकर्मकमुपासनं विधीयतां इत्यत्राह—**अत इति**। उत्पत्त्याद्यसम्भवादेव आत्मनः ईप्सितत्वासम्भवेनाकर्मत्वान्न तत्प्रधा(नेन)[नतया] विधिरित्यर्थः॥

यथा 'सक्तून् जुहोति' इत्यत्र होमस्य द्वितीयया सक्तुप्रधानतया गुणकर्मत्वेन संस्कारकर्मत्वे प्राप्ते संस्कृतसक्तूनां भूतभाव्युपयोगाश्रवणात् वाक्यवैयर्थ्यायोगाच्च 'सक्तुभिर्जुहोति' इति सक्तुगुणो होमः प्राधान्येन विहितः, तथा द्वितीयया आत्मनः श्रुतं प्राधान्यमुपासनस्योपेत्य आत्मनोपासीतेत्यात्मगुणतया उपासना प्राधान्येन विधेयेति शङ्कते—**अथेति**। तत्र सक्तूनां शब्दतः करणत्वेऽप्यर्थतः कर्मत्वात् सकर्मकक्रियाविधिः स्यात्, इह तु कर्माभावात् सकर्मकोपास्तिः तद्धेतुत्वं चात्मनो न ज्ञायते, अतः कुत्र विधिः स्यादिति दूषयति—**तत्रापीति**। तदापीत्यर्थः। इहाप्यात्मनः शब्दतः करणत्वेऽपि अर्थतः कर्मत्वात्तदुभयहेतुत्वेन तद्गुणभूतां क्रियां न स्वतन्त्रफलसाधनत्वेन विधातुं शक्नोतीत्यर्थः॥

कथञ्चिदात्मनः संस्कृतत्वसम्भवेऽपि दूषणमाह—**संस्कृतस्येति**। किं उपेत्यासनमुपासनम्? आहोस्विदात्मकर्मकप्रत्ययावृत्तिः? प्रत्ययावृत्तित्वेऽपि आत्म[नः]शब्दप्राप्तकर्मत्वाभावेऽप्यर्थतः कर्मत्वं(सं)[सक्तु]वदङ्गीकर्तव्यम्, तन्न सम्भवतीत्यभिप्रेत्याह—**किं तदुपासनमिति**। गुणाधानलक्षणसंस्कारासम्भवेऽपि मलापकर्षलक्षणसंस्कारः सम्भवति

ज्ञानमुपासनम्, आत्मा च विषयभावेन तन्निर्वर्तयतीति। एवं तर्हि तदेवायातं ज्ञानेनात्मा आप्यते इति। तच्च कृतकरणमनर्थकम्, नित्याप्तत्वादात्मनः। संस्कार्यत्वे चोपयोगाभाव उक्तः। अतो विध्यभावादविवक्षितार्था वेदान्ता इति धर्मजिज्ञासानन्तरं स्नाने प्राप्ते इदमारभ्यते—'अथातो ब्रह्मजिज्ञासे'ति। अनन्तरं ब्रह्म जिज्ञासितव्यं न स्नातव्यमित्यभिप्रायः। कर्माभिधायिनोऽपि कृत्यप्रत्ययात् नियोगसंप्रत्ययात् न नियोक्तृत्वं निराकर्तुं शक्यते, कटस्त्वया कर्तव्यः ग्रामस्त्वया गन्तव्यः इतिवत्। यत्तूक्तम्—द्रव्यपरत्वे प्रयोजनाभावादानर्थक्यं नियोगस्येति, तदसत्—अविद्योच्छेदस्योपलभ्यमानत्वात्। अविद्या च संसार-

---

ज्ञायत इत्याशङ्कते—**अथ ज्ञायत इति**। कर्मत्वेऽप्यात्मन्यन्यस्यासम्भवात् आप्त्याख्यातिशयवत्त्वं वाच्यम्। तच्चापास्तमित्याह—**एवं तर्हीति**। तर्हि आपरोक्ष्येणाप्तिरात्मनि ज्ञानात् स्यादित्यत्राह—**तच्चेति**। स्वप्रकाशतया ज्ञप्त्या नित्याप्तत्वादित्यर्थः। अस्तु तर्हि संस्कार्यतेत्याशङ्क्य, सापि दत्तोत्तरेत्याह—**संस्कार्यत्वे चेति**। एवं निष्कर्मकतया ज्ञानस्याविधेयत्वे फलमाह—**अत इति**॥

अभ्यधिकां शङ्कामुक्त्वा आरम्भमाह—**इति धर्मेति**। अतः तद्विचारस्याननुष्ठेयत्वादित्यर्थः। तावता कथं स्नानान्निवृत्तिरित्यत्राह—**अनन्तरमिति**। नञाद्यभावात् कथमेवं विशिष्टार्थतेत्यत्राह— **अभिप्राय इति**। कर्माभिधायिकृत्यस्य पुरुषं नियोक्तुमश(क्य)[क्त]त्वात विध्यभावेनाविवक्षितार्था वेदान्ता इत्युक्तम्, अतः कथं तदर्थविचारारम्भ इत्यत्राह— **कर्माभिधायिनोऽपीति**। कर्मकारके फलाभावान्निष्फलो विधिरित्युक्तमनूद्य प्रत्याह—**यत्त्वित्यादिना**। संस्कृतस्योपयोगाभावान्नाविद्यापनयसंस्कारः फलमित्युक्तमित्यत्राह—**अविद्या**

---

तस्य च स्वयं पुरुषार्थरूपत्वात् नान्यत्र विनियोगापेक्षेत्याह— **तदसत् अविद्योच्छेद-**

**हेतुभूता ॥**

**अपरे पुनरेवमारभन्ते—ब्रह्मणि प्रत्यक्षादिप्रत्ययान्तराणामसंभवात् परिनिष्पन्ने वस्तुनि प्रतिपत्तिहेतुतया सम्भावितसामर्थ्यानामपि आम्नायस्य पुनः कार्यविषयतया सुतरामसंभवं मन्वानस्य भवति संकर्षपर्यन्ते एव वेदार्थविचारावसानमिति बुद्धिः, तन्निरासार्थं पुनः प्रतिज्ञातम् । इहापि सर्वेष्वेवात्मज्ञानविधानेषु**

---

**चेति**। स्वयमपुरुषार्थस्य पुरुषार्थत्वायोपयोगापेक्षा, आत्मनस्तु स्वयं पुरुषार्थत्वान्न तदपेक्षेत्यर्थः ॥

एकदेश्यन्तराणामारम्भप्रकारमाह—**अपरे पुनरिति** । ज्ञानविध्यपेक्षितचतुर्विधन्यायस्य पूर्वतन्त्रोक्तत्वेऽपि तदपेक्षितस्य ज्ञेयस्य ब्रह्मणो विचारारम्भसम्भवात् का अभ्यधिकाशङ्केत्यत्राह—**ब्रह्मणीति** । रूपादिहीने ब्रह्मणि प्रत्यक्षाद्यसम्भवेऽपि आम्नायो मानमित्याशङ्क्य, तस्य कैमुतिकन्यायेनासम्भवं वक्तुं प्रत्याक्षा(दिभिर्वि)[दीन् वि]शिनिष्टि—**परिनिष्पन्नेति** । यं वक्तुं विशिनिष्टि तमाह—**आम्नायस्येति**। तर्ह्यनारम्भ एव शास्त्रस्येत्यत्राह—**मन्वानस्येति** । ब्रह्मणोऽविचार्यत्वादिति शेषः । **सङ्कर्षशब्दो** देवताकाण्डवाची । तन्मध्येऽवसानं मा भूदित्याह—**पर्यन्त इति** । न वेदान्तपर्यन्त इत्याह—**एवेति** ॥

अभ्यधिकाशङ्कामुक्त्वा आरम्भमाह—**तन्निरासार्थमिति**। राद्धान्ता-

---

**स्येति**। तदुच्छेदस्य सुखावाप्तिदुःखपरिहारयोरन्तर्भावाभावात् पुरुषार्थत्वं न सेत्स्यतीलाशङ्क्याह—**अविद्या चेति** ॥

धर्मे प्रमाणान्तराभावो यथा न दोषः एवमिहापीत्याशङ्क्य, अत्र प्रमाणानुदयोऽर्थाभावपर्यवसायीत्याह—**परिनिष्पन्ने इति** । अर्थस्य प्रमाणान्तरायोग्यत्वे तत्र व्युत्पत्त्यसम्भवात् शब्दस्य कार्यसंसृष्टे गृहीतशक्तित्वात्, पुरुषार्थसिद्धेः कार्याधीनत्वात्, तात्पर्यस्यापि कार्यैकपरत्वात्, इति हेतुत्रयमभिप्रेत्याह—**सुतरामिति**। सङ्कर्षशब्दो देवताकाण्डवाची। अवस्थात्रयेऽप्यात्मज्ञानस्य सिद्धत्वात् न तस्य विध्यर्हता। अथ ब्रह्मभावज्ञानस्य विधेयत्वाङ्गीकारः तदापि ब्रह्मभावोऽप्रतिपन्नश्चेदवच्छिन्नज्ञानमनूद्य विधानासम्भवः, प्रति-

कार्यनिष्ठतां वर्णयन्ति समाम्। तत्त्वावबोधश्च कार्यम्, अधिकारिनियोगविषयतया अवगमादिति। ततः तद्विचारार्थं शास्त्रमारब्धव्यमिति॥

अत्रोच्यते—नारब्धव्यम्, गतार्थत्वात्। कथम्? यस्तावत् प्रथम आरम्भप्रकारः कर्मणि कृत्यप्रत्यये न नियोगसंप्रत्यय इति, तत् स्वयमेव विधायकत्वं दर्शितम्। प्रसिद्धं चैतत् 'स्वाध्यायोऽध्येतव्यः' इत्येवमादीनां विधायकत्वम्। नात्राधिकाशङ्काकारणं किञ्चित्। ननु चतुर्विधस्यापि क्रियाफल-

---

दस्मिन् पक्षे को विशेष इत्यत्राह—इहापीति। यथा आत्मज्ञानोत्पादकवाक्येषु कार्यनिष्ठतां(वृथा)[पूर्वा]रम्भवादिनो वर्णयन्ति, तथैतेऽपि वर्णयन्ति। कथमित्यत्राह—तत्त्वेति। ब्रह्मविद्यापि विधितोऽनुष्ठेया, मुमुक्षोर्ज्ञातव्य इति यो नियोगः तस्य विषयतया भानात् यागवत्, इत्यर्थः। अथापि ब्रह्मणि मानाभावे कथं विचारारम्भ इत्याशङ्क्य, विशिष्टकार्यनिष्ठस्याम्नायस्य विशेषणे तत्त्वेऽपि मानत्वात् नान्तरीयकतया बोधकत्वादित्याह—तत इति॥

आरम्भद्वयनिरासं युगपत् प्रतिज्ञाय क्रमेणापास्ते—अत्रोच्यत इत्यादिना। यद्यपि लोकप्रसिद्धतया मया व्युत्पादितम्, तथापि पूर्वं वेदे त्वप्रसिद्धत्वात् शङ्कास्तीत्यत्राह—प्रसिद्धं चेति। अथापि पूर्वतन्त्रे ह्यसूत्रितत्वात् आशङ्केत्याशङ्क्य, आद्यसूत्रेणाध्ययनविधिमङ्गीकुर्वता सूत्रितमिति मत्वा आह—नात्रेति। तत्राक्षरावाप्तिफलभावात् स्वाध्याये कर्मणि कृत्यस्य विधायकत्वम्, इह तु फलाभावान्न विधायकतेति चेत्, दत्तोत्तरमित्याह—नन्वित्यादिना। अत्र उपासनेति ज्ञानमुच्यते? तत्सन्तानो वा? नाद्यः, शब्दतः करणत्वेऽप्या-

---

पक्षे(त्वर्थं तर्क)[त् व्यर्थं तर्हि] ज्ञानविधानमित्याशङ्क्य, परोक्षतया प्रतिपन्ने अपरोक्षज्ञानं वा अपरोक्षतया प्रतिपन्नेऽपि सन्दिग्धे निश्चयज्ञानं वा विधेयमित्याह—तत्त्वावबोधश्चेति। तद्विचारार्थमिति। विधेयज्ञानविषयब्रह्मविचारार्थमित्यर्थः॥

**स्यात्मन्यसंभव उक्तः। यद्येवं सक्तुन्यायो भविष्यति। तदपि न आत्मविषयज्ञानस्य नित्यसिद्धत्वादित्युक्तम्। सिद्धस्यैव पुनरभ्यासो विधिनिमित्त उपासनाख्यो भविष्यति, अभ्युदयफले हिरण्यधारणवत्। ननु न विधानतोऽप्यात्मविषयज्ञानसन्तानः कर्तव्यः, स तु नित्यमात्मनि जाग्रतः सिद्धः। एवं तर्ह्यर्थाविरुद्धेषु कालेष्वात्मन्येव चेतस्समाधानं भविष्यति। यत् पुनरात्मज्ञानादविद्योच्छेदः तदुच्छेदात् संसारनिवृत्तिः फलमित्युपन्यस्तम्, तदसत्—अहमित्यात्मानं नित्यमेव जानाति सर्वो लोकः। न च संसारो निवृत्तः। अथ पुनरहंप्रत्ययावसेयादन्यदेवा-**

---

त्मनोऽर्थतः कर्मत्वे स्वप्रकाशतया नित्यापरोक्षस्य विधेयज्ञानजन्यज्ञप्त्यतिशयायोगात् न निष्कर्मकज्ञानं विधेयमित्युक्तत्वादित्याहैकदेशी—**तदपि नेति**। पूर्ववादी अन्त्यमङ्गीकरोति—**सिद्धस्यैवेति**। यथा 'हिरण्यं भार्यम्' इति कर्माभिधायिकृत्येन कर्तृसमावाय्यभ्युदयफलाय रागतः पक्षे प्राप्तहिरण्यधारणे नियमविधिः, तथा कर्तृसमवायिमोक्षफलाय पक्षप्राप्तज्ञानाभ्यासनियमविधिः स्यादित्यर्थः ॥

एकदेशी आत्मज्ञानस्यानन्दापरोक्षतया तस्मिन् जाते तदभ्यासस्य नित्यप्राप्तत्वान्न नियमविधिरिति शङ्कते—**नन्विति**। तर्हि अनात्मप्रतीतिनिवृत्तये परिसङ्ख्याविधिरदृष्टार्थः स्यादिति दूषयति—**एवं तर्हीति**। शौचाचमनादिकाले कथं तन्निवृत्तिः स्यादित्यत्राह—**अर्थाविरुद्धेष्विति**। अभ्यधिकाशङ्काभावमुक्त्वा तन्निरासोऽपि न शक्य इत्याह—**यत् पुनरित्यादिना**।

---

सक्तुन्यायेन विध्यभ्युपगमेपि किमयमपूर्वविधिः ? किं वा नियमविधिः ? इति विकल्प्य अपूर्वविधिं दूषयति—**तदपि नेति**। तर्हि हिरण्यधारणविधिवन्नियमविधिः स्यादि(ति, तत्राह)[त्याह] अनारम्भवादी—**सिद्धस्येति**। विधिं दूषयति आरम्भवादी—**नन्विति**। तर्हि परिसंख्याविधिः स्यादि(ति तत्राह)[त्याह]—अनारम्भवादी—**एवं तर्हीति**। **अर्थाविरुद्धेष्विति**। नित्यकर्मदेहयात्राऽविरोधिकालेष्वित्यर्थः ॥

त्मरूपं पराकृतभोक्तृभोक्तव्यभोगग्रन्थि ज्ञेयत्वेनात्मज्ञानविधिना ज्ञाप्यत इति, तदसत्—विधिर्हि समान्यतः सिद्धस्य क्रियात्मनो विशेषसिद्धौ प्रभवति, नात्यन्तमसिद्धसद्भावे। तद्यदि नाम ज्ञानं लोके सिद्धम्, तथापि निरस्तप्रपञ्चात्मविषयमसिद्धं आकाश-मुष्टिहननवत् न विधातुं शक्यम्। अथ तादृगात्मज्ञानं सिद्धम्, किं विधिना?

यदपि मतान्तरम्—प्रत्यक्षादेरगोचरत्वात् शास्त्रस्य च कार्यार्थत्वात् संकर्षपर्यन्त एव विचारे वेदार्थपरिसमाप्तौ प्राप्तायां वेदान्तेष्वपि कार्यनिष्ठता समाना, ब्रह्मतत्त्वावबोधश्च कार्यम्, अधिकारिनियोगविषयतया अवगमात्, अतः तद्वि-चाराय शारीरकारम्भः इति। तदप्युक्तेन न्यायेन ब्रह्मावगमस्य सिद्धत्वे असिद्धत्वे च कार्यत्वासंभवेन प्रत्युक्तम्॥

---

आत्मज्ञानमिति ब्रह्मात्मत्वावभासि विवक्षितमिति शङ्कते—**अथ पुनरिति**। एतत् प्रतिवक्तुं ज्ञातस्याज्ञातो धर्मो विधेय इत्याह—**तदसदिति**। तर्हि प्रसिद्ध(स्य)यागसामान्य(स्य)व्यक्तित्वेन प्रसिद्धसोमयागस्येव प्रसिद्ध(स्य)ज्ञान-सामान्य(स्य)व्यक्तित्वेन ज्ञातस्य तादृगात्मज्ञानस्य कर्तव्यता बोध्येत्यत्राह—**तद्यदीति**। तादृगात्मज्ञानस्य तद्व्यक्तितैव(नास्ति)[न ज्ञाता]अलौकिकत्वादि-त्यर्थः। अलौकिकमपि तद्व्यक्ति(र्मानत्वादित्याह)[त्वेन ज्ञातमित्यत्राह—] —**अथ तादृगिति**। तादृगात्मज्ञाने ज्ञाते तद्विशेषणस्यात्मनोऽपि ज्ञातत्वात् विधिर्व्यर्थ इत्यर्थः॥

ज्ञानविधिनिष्ठस्य वेदस्य ब्रह्मापि विषयः, न च ज्ञानस्याप्रसिद्धत्वे विध्यसम्भवः, यागमात्रप्रसिद्ध्यापि अप्रसिद्धयागविशिष्टकर्तव्यतावत् ज्ञान-मात्रप्रसिद्ध्याप्यप्रसिद्धज्ञानविशिष्टकर्तव्यताबोधकत्वोपपत्तेरिति मतान्तरं शङ्कते

---

ज्ञेयत्वेनेति। विधेयज्ञानविषयत्वेनेत्यर्थः॥

**अपरं मतम्**—सत्यं कार्यविषयो वेदः, न तु तावन्मात्रे। तस्मिन् सति यो योऽर्थोऽवगम्यते स स वेदार्थः। यथा रूपे सति चक्षुषः प्रवृत्तिः। न च रूपमात्रं चक्षुषो विषयः, किं तु तस्मिन् सति द्रव्यमपि। एवमिहापि वस्तुतत्त्वमपि विषयः। कथम्? तदुच्यते—'इदं सर्वं यदयमात्मे'ति न तावत् सर्वात्मरूपता आत्मन उपदिश्यते। यदि सर्वरूपता आत्मन उपदिश्येत ततः सर्वस्य अचेतनत्वात् तद्रूपत्वे बोद्धृत्वहानौ बोधकत्वं शब्दस्य हीयेत। अतः सर्वस्य आत्मस्वभावता विधीयते। अनात्मस्वभावविलयेन हि वस्तुनोऽवगतिर्दृष्टा। नन्वत्र विधिः

---

—**अपरं मतमिति**। विरुद्धमिदमर्थान्तरपराच्छब्दादर्थान्तरमित्यत्राह—**तस्मिन् सतीति**। विधिप्रमाणात् विधिसंसृष्टतया अन्येऽप्यर्थाः प्रमीयन्ते तदपेक्षिता इत्यर्थः। यथा रूपविषयस्य चक्षुषः तत्संसर्गि सर्वं विषय इति दृष्टान्तमाह—**यथेति**। द्रष्टव्य इत्यादौ नापरोक्षज्ञानं विधेयम्, सुखापरोक्षत्वेन पुरुषार्थत्वात् स्वर्गवत्। नापि शाब्दम्, तत्र विधेरश्रवणादिति शङ्कते—**कथमिति**। अस्ति शाब्दे विज्ञाने विधिरित्याह—**उच्यत इति**। अत्रात्मनोऽनात्मत्वं बोध्यते, अतोऽपुरुषार्थत्वान्न विधेयमित्यत्राह—**न तावदिति**। प्रतिपन्नमुद्दिश्य अप्रतिपन्नात्मत्वप्रतिपादनादित्यर्थः। विपक्षे बाधमाह—**यदीति**। किं तर्हि प्रतिपाद्यमित्यत्राह—**अतः सर्वस्येति**। नेति नेत्यादिवाक्यालोचनेऽप्यनात्मन आत्मत्वं प्रतिपाद्यं सर्पत्वेन प्रतीतस्य रज्जुत्ववदित्याह—**अनात्मेति**॥

---

**अपरं मतमिति**। पूर्वोक्तारम्भप्रकारयोः पश्चात्तनमित्यर्थः। वेदान्तेषु विधिरस्ति, स च आत्ममात्रज्ञानस्य नित्यप्राप्तत्वेऽप्यात्मतत्त्वावबोधविषयो भविष्यति। अतो वेदान्तानां विधिद्वारेण रूपादिहीनतया प्रमाणान्तरायोग्यब्रह्मबोधकत्वमपि सम्भवति। अतो ब्रह्मणि प्रमाणसद्भावात् तद्विचाराय शास्त्रारम्भ उपपद्यते (इत्यत) इति स्वमतमुपपादयति प्रतिपत्तिविधिवादी—**सत्यं कार्यविषय इति**। अनात्मस्वभावविलयनेन हि आत्मवस्तुनः नेति नेतीत्यादिवाक्येषु अवगतिर्दृष्टा। अतस्तदेकवाक्यतासिद्ध्यर्थमत्राप्येवमेव [वक्तव्य]-मित्याह—**अनात्मस्वभावे[स्वरूपे]ति**। प्रपञ्चस्य सत्यत्वमङ्गीकृत्य तन्निरासाय

न श्रूयते। एवं तर्हि कल्प्यतां विधिः। किं प्रतीते विध्यर्थे विधिः कल्प्यते? उत अप्रतीते? इति। यदि प्रतीते कल्प्यते, कल्पना-वैयर्थ्यम्। अर्थप्रतीत्यर्थं हि शब्दो मृग्यते। प्रतीतेऽर्थे शब्दं कल्पयता किं कृतं स्यात्। अथ अप्रतीते एव विध्यर्थे विधिं कल्पयित्वा ततोऽर्थः प्रतिपत्तव्य इति अपूर्वं प्रमाणकौशलम्। ननु अश्रूयमाणविधिष्वपि 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' इत्यादिषु विधिः कल्पितः। सत्यम्। युक्तं तत्र पूष्णः पिष्टद्रव्यसम्बन्धः समासाभिहितो न सिद्धो वर्तते, नापि कुतश्चिद्भविष्यतीति, प्रमाणाभावात्। नापि विधिना केनचित् पदैकवाक्यता। येन वपोत्खननादिवत् कथंचिदालम्बनं कल्प्येत। अतो निरालम्बनत्वपरिहाराय कार्यपरता कल्प्यते इति॥

---

ननु आत्मनोऽद्वितीयत्वप्रतिपादनपरमेतद्वाक्यम्, नात्र ज्ञाने वस्तुनि वा नियोगोऽवगम्यते इत्याशङ्कते—**नन्वत्रेति**। 'पूषा प्रपिष्टभागः' इत्यादाविव कल्प्यतामित्याह—**कल्प्यतां तर्हीति**। कालत्रयास्पृष्टे अनुष्ठानयोग्ये कर्मणि शब्दसामर्थ्यात् प्रतीते तदन्यथानुपपत्त्या च विध्यर्थे नियोगेऽवगते विधिपदं कल्प्यते? किमेवंविधेऽर्थेऽनवगते वा? इति विकल्प्य, नाद्य इत्याह—**यदीति**। वैयर्थ्यं व्यनक्ति—**अर्थप्रतिपत्तीति**। अन्त्यमन्वाचष्टे—**अथेति**। तर्हि सर्वत्र विधिपदकल्पनया विध्यर्थावगतिः स्यादित्यतिप्रसङ्गेन दूषयति—**अपूर्वमिदमिति**। विकल्पदूषणयोः सर्वत्राविशेषात् क्वचिदपि विध्यध्याहारो न स्यादिति चोदयति—**नन्विति**। तत्र द्रव्यदेवतासम्बन्धः कालत्रयास्पृष्टः प्रमितः स्वस्य व्यापकं यागं गमयत्यन्यथानुपपत्त्या, यागान्यथानुपपत्त्या च विध्यर्थो नियो(गाद्यापृतो)[गोऽध्याहृतो]न शाब्द इति दूषयति—**सत्यमिति**। ननु वपोत्खननादिवत् प्राशस्त्यपरत्वेन वाक्यस्यार्थवत्त्वात् न नियोगोऽध्याहर्तव्य इत्यत्राह—**नापि विधिनेति**। **कथञ्चिदिति**। प्राशस्त्यविषयतयेत्यर्थः॥

**ननु अत्राप्यात्मपदं चेतनस्य भोक्तुर्वाचकम् । स च नियोज्यत्वान्नियोगमाक्षिपति । नैतत् सारम् — नियोगो हि पुरुषविशेषमनाश्रित्य अनुपलब्धो लोके तमाक्षिपेत् विश्वजिदादिषु । पुरुषः पुनः किं नियोगमन्तरेण नोपलब्धो लोके ? येन विधिकल्पना भवेत् । अथापि भवतु नाम विधिः, नासौ धातुना विना केवलो लभ्यते । धातुनैव सह कल्प्यते । कोऽसौ धातुः ? यदि तावत् कर्तव्यमिति, तत्र अनात्मस्वभावता न निवृत्ता प्रपञ्चस्य । यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति पिष्टस्वभावता न निवृत्ता, इतिकर्तव्यता चानिर्दिष्टा । तत्र साकाङ्क्षं वचनमनर्थकं स्यात् । अथ ज्ञातव्य इत्यध्याहियेत, एवमपि स एव दोषः अनात्मस्वभावता**

---

तर्हि इहापि प्रतीतस्यात्मनोऽनुपपत्त्या नियोगोऽध्याहर्तव्य इत्याशङ्कते—**नन्वत्रापीति** । नियोगस्य बोद्धारं विना अनुपपत्तिवत् बोद्धुः नियोगं विना अनुपपत्त्यभावात् नेत्याह—**नैतत् सारमिति** । यः कश्चिद्वेदे संसर्गः प्रतीतः स साक्षाद्वा परम्परया वा विधिसंसृष्ट एव । 'वायुर्वै क्षेपिष्ठा' इत्यादावपि परम्परया विधिसंसर्गाभ्युपगमादित्याशङ्क्य अङ्गीकरोति—**अथापीति** । भावार्थविषयत्वान्नियोगस्येत्यर्थः । तर्हि संसर्गस्य भावार्थं विनाप्यनुपपन्नत्वात् सोऽपि कल्प्यते इत्याशङ्कते—**धातुनेति** । सर्वधात्वर्थदोषविवक्षया पृच्छति—**कोऽसाविति** । सर्वधात्वर्थसामान्यत्यागे हेत्वभावात् कृतिधात्वर्थमुत्थापयति—**यदीति** । [तत्र दूषणमाह—]**तत्रेति** । दोषान्तरमाह—**इतिकर्तव्यतेति** । शमादेः ज्ञानेतिकर्तव्यत्वादित्यर्थः । धात्वर्थान्तरमाशङ्क्यापवदति—**अथेत्यादिना** । न हि योषिदादिष्वग्न्यादिभावेन ज्ञातेषु योषिदादिभावो निवर्तते,

---

ज्ञानविधानमिति पक्षं दूषयति—**अथ ज्ञातव्य इति** ॥

**न निवृत्तेति। अशक्यार्थोपदेशश्च। न हि वस्तु वस्त्वन्तरात्मना ज्ञातुं शक्यते। एवं तर्हि ज्ञातव्य इत्यध्याह्रियेत, तत्र धात्वर्थानुवादः प्रत्ययो विधायकः। कुतः प्राप्तेरनुवादः? अभिधानत इति ब्रूमः। एवं तर्हि विधानमनर्थकम्, स्वाध्यायकाले एव निष्पन्नत्वाज्ज्ञानस्य। पुनः कर्तव्यतया यथा चोद्यते, मन्त्रेषु। प्रयोगवचनः तत्र विधायकः इति इहापि प्रयोगवचनो विधायकः॥**

---

विधेयबुद्धेरमानत्वादित्यर्थः। पक्षद्वयेऽपि दोषान्तरमाह—**अशक्या(र्थ)-[र्थोपदेश]श्चेति**। रूप्यं शुक्त्यात्मना ज्ञायते क्रियते च ज्ञानेनेत्यत्राह—**न हीति**। प्रपञ्चो हि पारमार्थिक इत्यर्थः॥

दृश्यत्वेन जगतो मिथ्यात्वात् मिथ्यारूप्यबाधेन शुक्तिनिश्चायकप्रमाणवत् मिथ्याप्रपञ्चबाधेन आत्मनिश्चायकं प्रमाणज्ञानमन्यतः प्राप्तमनूद्य विधिमात्रमध्याह्रियत इति शङ्कते—**एवं तर्हीति**। अस्मिन् पक्षे लाभमाह—**तत्रेति**। विधिवाक्यार्थप्रमितिं विना ब्रह्मज्ञानस्य प्राप्तिरेव नेति दूषयति—**कुत इति**। विधिपदादन्येभ्यो वेदान्तेभ्योऽस्तीति शङ्कते—**अभिधानत इति**। तर्हि विधिं विना अभिधानादेव ब्रह्मज्ञानसिद्धेः विधिर्व्यर्थ इति दूषयति—**एवं तर्हीति। स्वाध्यायकाल इति**। शक्तितात्पर्यालोचनकाल इत्यर्थः। यथा मन्त्रेषु तदर्थज्ञानस्य शक्त्याद्यालोचनकालसिद्धस्य मन्त्राध्ययनार्थवत्त्वाय कर्मानुष्ठानकाले पुनः कर्तव्यता बोध्यते, तथा वेदान्ताध्ययनार्थवत्त्वाय तदर्थज्ञानस्य पुनः कर्तव्यता बोध्येति शङ्कते—**पुनरिति**। साङ्गे कर्मण्यनुष्ठापको विधिः प्रयोगवचनस्तत्र विधायकोऽस्ति, इह स नेति दूषयति—**प्रयोगेति**। इहाप्यध्याहृतो विधिः साङ्गज्ञानानुष्ठापकोऽस्तीति शङ्कते—**एवमिति। [इहापीति।]**

---

आत्माविद्याविलसितत्वं प्रपञ्चस्याङ्गीकृत्याह—**एवं तर्हीति**।

क्रियायाः फलसाधनत्वं विध्येकायत्तमित्यभिप्रेत्य चोदयति—**पुनः कर्तव्यतयेति। प्रयोगवचनो विधायक इति**। द्वितीयप्रत्ययस्यानुष्ठापक इत्यर्थः॥

ननु मन्त्रेषु स्वार्थस्यान्यतः सिद्धत्वात् प्रत्ययपरत्वं युज्यते, इह तु स्वार्थविधिपराणां शब्दानां प्रत्ययपरत्वं विरुध्यते। नैष दोषः—अन्यार्थमपि कृतमन्यार्थं भवति। तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्यते च। एवमिहापि। यथा वा पदार्थानां विधायकः शब्दः क्रमस्यापि विधायकः, एवं स्वार्थस्य विधायकः शब्दः प्रत्ययस्यापि विधायको भविष्यति। तदेतदनिरूपितमिव दृश्यते। कथम्? मन्त्राः स्वाध्याय[अध्ययन]विधिनोपादापिताः स्वार्थस्यान्यतः सिद्धत्वात् तं प्रमातुमशक्नुवन्तः प्रमाणत्वात् प्रच्युताः व्रीह्यादिवत् प्रमेयतामापन्नाः श्रुत्यादिप्रमाणैः युक्तं यद्विनियुज्येरन्,

---

मन्त्राणां फलवदज्ञातार्थाबोधकत्वात् अपूर्वोपकारिज्ञानपरत्वं युज्यते, अतः तत्र विधिः स्यात्; वेदान्ते तु फलवदज्ञातार्थबोधकत्वात् विधेयज्ञानपरत्वं विरुध्यते, अतो न तज्ज्ञाने विधिरिति दूषयति—**ननु मन्त्रेष्विति**। उभयमेकस्याविरुद्धमिति दृष्टान्तात् शङ्कते—**नैष इति**। कुल्यादेः शक्तिद्वारत्वात् अनेककार्यशेषता, शब्दस्य तु तात्पर्यद्वारत्वान्नैवमित्यत्राह—**यथा वेति**। ब्रह्मण्याभिधानिकब्रह्मज्ञानोपगमे तेनैव पुरुषार्थः सिध्यति [अतो] विधि(श्च)[र्न] कल्प्य इति मत्वोक्तं वैलक्षण्यमिति दूषयति—**तदेतदिति**। तद्विशदयति—**कथमित्यादिना**। स्वार्थस्यान्यतो ब्राह्मणात् सिद्धौ वैयर्थ्यं किं न स्यादित्यत्राह—**अध्ययनविधिनेति**॥

---

**अन्यत इति**। ब्राह्मणवाक्यादित्यर्थः। **प्रत्ययपरत्वमिति**। अनुष्ठेयार्थविषयस्मृतिपरत्वेन नियोगशेषत्वमित्यर्थः। **स्वार्थविधिपराणामिति**। अज्ञातस्वार्थप्रमितिपराणामित्यर्थः। **प्रत्ययपरत्वं विरुध्यत इति**। विधेयद्वितीयप्रत्ययजनकत्वेन विधिशेषत्वं विरुध्यत इत्यर्थः। येन केनचित् प्रकारेण फलं प्राप्यैव पर्यवसानमित्यत्र हेतुमाह—**स्वाध्यायेति**। प्रमितिजननेनापि सप्रयोजनत्वाभावे हेतुमाह—**स्वार्थस्येति**। **अन्यत इति**। ब्राह्मणवाक्यादित्यर्थः। प्रमाणस्य प्रमाणान्तरेणापूर्वशेषतया वियोज्यत्वासम्भवमाशङ्क्य, विनियोज्यत्वयोग्यतामाह—**प्रमेयतामापन्ना इति**। विनियुक्तानां केन द्वारेणा-

**विनियुक्ताश्चानुष्ठेयस्यानुष्ठानकाले स्मृत्यपेक्षस्य स्मारकतया गृह्णेरन्निति। इह तु 'इदं सर्वं यदयमात्मे'ति यत् पदसमन्वयनिमित्तं सर्वस्यात्मस्वभावताग्राहिविज्ञानं तत् स्वविषयस्य अन्यतोऽसिद्धत्वात् प्रमेयपरत्वात् न विधेर्विषयः। अथ विधेर्विषयो न प्रमेयमवगमयितुमलम्। न च युगपदुभयं सम्भवति, वैरूप्यप्रसङ्गात् ॥**

**नन्वेवं सति गुणकर्मणां सर्वत्र विधानं निराकृतं स्यात्। न निराकृतं स्यात्। यत्र प्रमाणान्तरसिद्धं गुणकर्मणः कर्म-**

---

प्रमेयपरस्यापि द्वितीयज्ञानस्य क्रमात् युगपद्वा विधिविषयता किं न स्यादित्याशङ्क्य, नाद्यः विरम्य व्यापाराभावादित्याह--**न विधेर्विषय इति**। नान्त्य इत्याह–**न च युगपदिति**। ब्रह्मणो ज्ञानं प्रति प्रमेयत्वात् प्राधान्यं विधेयत्वोपादेयत्वे, विधेयं ज्ञानं प्रति विशेषणत्वात् गुणत्वं उद्देश्यत्वानुवाद्यत्वे चेति एकस्यां प्रमितौ विरुद्धत्रिकद्वयापातादिति हेत्वर्थः। 'व्रीहीन् प्रोक्षति' इत्यादौ व्रीह्यादेर्विधेयप्रोक्षणादिविशेषणत्वात् गुणत्वोद्देश्यत्वानुवाद्यत्वम्, प्रोक्षणजन्यातिशयभाक्त्वेन साध्यत्वात् प्रधानत्वोपादेयत्वविधेयत्वं चेत्येकस्यां प्रमितौ वैरूप्यापातात् क्रत्वङ्गकारकसंस्कारार्थानां कर्मणां विधानं न स्यात्, अतो वैरूप्यं न दोष इति शङ्कते—**नन्वेवमिति**। व्रीह्यादेर्मानान्तरसिद्धत्वात् तत्सामर्थ्येन उद्देश्यत्वादित्रिकं प्रतीयते, शाब्दज्ञानसामर्थ्यात् प्राधान्यादित्रिकमेव प्रतीयते, ततो न वैरूप्यं तत्रेति दूषयति—**न निराकृतमिति**। तर्हि इहाप्युद्देश्यत्वादित्रिकं मानान्तरात् सिध्यत्वित्याशङ्क्य, ब्रह्मणः तदगम्यत्वान्नेत्याह—

---

पूर्वोपकारकत्वमित्यपेक्षायाम्, दृष्टे सत्यदृष्टकल्पना न न्याय्येति न्यायात् शेषिणश्च न्यायसिद्धदृष्टद्वारापेक्षित्वाच्च स्मारकतया प्रयोगवचनेन गृह्येरन्निति युज्यत इत्याह—**विनियुक्ताश्चेति** ॥

एकपुरुषार्थपरत्वेनैकतात्पर्यवत्त्वाद्वेदान्तानां प्रमेयद्वयपरत्वं न सम्भवतीत्याह—**न च युगपदुभयमिति**। पदैकवाक्यवादिनोऽवान्तरवाक्याभावादेव तस्यार्थान्तरे ब्रह्मणि

कारकं तत्र तस्योत्पत्त्याद्यन्यतमं फलम्, तद्विधीयते। यत्र पुनः प्रमाणान्तरादसिद्धो ज्ञानस्य कर्मभूतो विषयः स तेनैव प्रमीयमाणो न सिद्धवदुद्देश्यः, येन तदुद्देशेन तत्रातिशयाधानाय ज्ञानं विधीयेत। तस्मादत्र युगपदुभयासम्भवात् भवत्येव वैरूप्यप्रसङ्गः। न च स एव समन्वयः स्वावयवाद्विभक्तः कार्यक्षमः, अवान्तरवाक्यस्य प्रमाणत्वायोगात्। अथार्थवादपदानामिव परस्परतः संसृज्य कञ्चिदर्थमवबोध्य विधिसम्बन्धमनुभवेदित्यभिप्रायः, तदसत्—युक्तमर्थवादपदानि स्वार्थफलरहितानि तत्र पर्यवसानाभावात् फलवदङ्गतामश्नुवीरन्निति। इह पुनरपरामृष्टविधिः पदसमन्वयः स्वार्थमवगमयन् निरस्तनिखिलप्रपञ्चावग्रहमपास्तातिशयानन्दनित्यानुभवैकरसं शिव-

---

**यत्रेति**। तथापि त्रिकयोरेकत्र दृष्टत्वेन विरोधाभावान्न विरुद्धत्रिकद्वयापत्तिरित्यत्राह **तस्मादिति**। **अत्रेति**। एकस्यां प्रमितौ। विरुध्यते इत्यत्र हेतुः **युगपदिति**। इहापि विधिपदादन्यपदकदम्बस्य पृथक् ब्रह्म प्रतिपाद्य पुनः तदनुवादद्वारा विधिपदेन पदैकवाक्यत्वान्न वैरूप्यमित्यत्राह—**न च स एवेति**। तर्हि विधिपदेन यानि पदैकवाक्यभूतानि तद्व्यतिरिक्तपदानां पृथगन्वयेन ब्रह्मावबोध्य विधिशेषता स्यात्, ततश्च तत्सिद्धं ब्रह्मोद्दिश्य तत्रातिशयाधानाय ज्ञानविधाने न वैरूप्यमिति शङ्कते—**अथ अर्थवादेति**। मा भूद्वैरूप्यमर्थवादानाम्, सन्निधौ विधिश्रवणात्तदाकाङ्क्षितप्राशस्त्यसमर्पणेन विधिशेषत्वं प्रयोजनाकाङ्क्षित्वात् युक्तम्, समन्वयस्य तु फलवत्त्वात् विध्यश्रवणाच्चाकाङ्क्षाभावान्न विधिशेषतेति दूषयति—**तदसदिति**। **अपरामृष्टेति**। कल्प्येत्यर्थः। अस्यापि भूतार्थत्वादर्थवादवत् विधिशेषता अर्थवादता वेत्याशङ्क्य,

---

प्रमाणत्वायोगादित्याह—**अवान्तरवाक्यस्येति**। वाक्यैकवाक्यतापि येनाङ्गीकृता, सोऽप्याह—**अथार्थवादेति**। सुखापरोक्ष्यलक्षणफले इच्छालक्षणप्रवृत्तिः विधिं विना [illegible]

मद्वैतमात्मतत्त्वमवगमयेत्। तत्र कुतो विधिशेषता कृतं कृत्यं प्राप्तं प्रापणीयम्। 'आत्मलाभान्न परं विद्यते' इति स्मृतेः। अथ पुनः शाब्दज्ञानान्न तथा अनुभवः, तेन साक्षात्करणाय विधिरिति। किं तत् ज्ञानमनुभवाय विधीयते ? प्रत्यक्षादीनां तावदगोचरः। 'न चक्षुषा गृह्यते' इत्यादिमन्त्रवर्णात्। शाब्दं च नेष्यते भवता। सत्यम्, न शाब्दज्ञानं विधिविकलमनुभवायालम्, विहितं तु अनुभवहेतुरिति। तदयुक्तम्—यत्तावत् स्वाध्यायाध्ययनविधिग्राहितात् पदसमन्वयात् स्वभावतः समुत्पन्नं तत् तावन्न विधीयते प्रमेयपरतया विधिविषयत्वानुपपत्तेरित्युक्तम्। अथ पुनस्तदेव ज्ञानं सन्तनुयादिति विधीयते, तत् कथं लभ्यते उपास्तिध्यायत्योः ज्ञानसन्तानवाचिनोरन्यतरस्याप्युपादानमन्तरेण ? नापि ज्ञानेनैव स्वसन्तानो लक्ष्यते,

---

फलवत्त्वाय तदुभयं न भूतार्थत्वात्, अस्ति चेह फलमित्याह—**तत्र कुत इति**॥

शाब्दज्ञानादनर्थाख्यमिथ्याज्ञानतत्संस्काराविद्यानिवृत्त्या कृतकृत्यता यथा स्यात्तथा साक्षात्कारो नाजनि, किन्त्वग्रहणापायमात्रम्, अतः साक्षात्त्वाय विधिः स्यात्, न चापरामृष्टे विधिः, 'आत्मन्येवात्मानं पश्ये'दिति श्रवणादिति शङ्कते—**अथ पुनरिति**। तर्हि विधेयज्ञानस्य व्रीह्यादिवत् करणं वाच्यमित्याह—**किं तदिति**। प्रत्यक्षा(दौ)[दि] यदपरोक्षज्ञा(नं)[नकरणं] तदस्त्वित्यत्राह **प्रत्यक्षेति**। अस्तु तर्हि शब्द इत्यत्राह—**शाब्दं चेति**। आपरोक्ष्यफलं ज्ञानमिति शेषः। शाब्दमपि विहितमापरोक्ष्यं फलिष्यत्यादरनैरन्तर्येण अनुष्ठानादिति शङ्कते—**सत्यमिति**। तत् किं प्राथमिकज्ञानं ? तत्सन्तानो वा ? नाद्य इत्याह—**तदयुक्तमिति**। **प्रमेयपरतये**त्यत्र युगपत् क्रमेण चेति शेषः। अन्त्यमाशङ्क्यापवदति—**अथ पुनरित्यादिना**। तर्हि ज्ञानस्याविधेयत्वात् सन्तानो लक्षणया विधेय इत्यत्राह—**नापीति**। सम्बन्धमात्रा-

साहचर्याद्यन्यभिचरितसम्बन्धाभावात्। नाप्यभ्यासात् साक्षाद्भावः सिद्धः नापि श्रूयते, येन तदुद्देशेन ज्ञानसन्तानो विधीयेत। ननु किमत्र श्रवणेन? स्वयमेव साक्षात्कारकरणाय पुरुषार्थत्वादभिमुखः पुरुषः। सिद्धश्च ज्ञानाभ्यासः शास्त्रश्रवणादौ साक्षात्करणे हेतुः। यद्येवं किं विधिना? स्वयमेव पुरुषार्थे निर्ज्ञाते हेतौ प्रवर्तते। यत् पुनः निदर्शनं शाल्यर्थं कुल्याः प्रणीयन्ते इति, युक्तं तत्र प्रत्यक्षत उभयार्थताया उपलभ्यमानत्वात्। इह पुनः न्यायतः प्रतिपत्तव्यम्। स च न्यायो[नास्तीति]

---

दपि लक्षणा स्यात्। श्रूयते च "आत्मेत्येवोपासीत" इत्यादौ ज्ञानाभ्यासे विधिः, अतः साक्षात्त्वफलाय स विधेय इत्यत्राह—**नाप्यभ्यासादिति**। न अभ्यासस्यामानत्वादर्थस्यासम्प्रयुक्तत्वाच्चाभ्यासानिमित्ताभ्यासाक्षाद्भावो दृष्टो न वस्तुन इत्यर्थः। तत् किं दृष्टं फलम्? "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रुतं वा? नाद्य इत्युक्तम्। नान्त्य इत्याह—**नापीति**। औपनिषदत्वश्रुतेः, ध्यायमा(नोऽपि)[नः]ऐकाग्र्यात् (शाब्द)ज्ञानप्रसादेन पश्यतीत्यन्वयोपगमान्न श्रूयत इत्यर्थः॥

अमानस्याप्यभ्यासस्य दृष्टैकाग्र्यद्वारा वस्तुसाक्षात्कारहेतुत्वं दृष्टमेवेत्याशङ्क्यापवदति—**नन्वित्यादिना**। **यत्पुनरि**त्युक्तानुवादः। कुल्यादेः शक्तिद्वारत्वादनेकार्थता युक्ता, शब्दस्य तात्पर्यद्वारत्वान्नेति मत्वा आह—**युक्तं तत्रेति**। क्रमाद्युगपद्वा न सम्भवतीति स च न्यायो नास्तीत्युक्तमिति [अन्वयः] (शेषः)। 'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति पञ्चवाक्यानि पञ्चपदार्थांस्तत्क्रमं च विदधति, अतः

---

एवोत्पन्ना, तदन्वयव्यतिरेकप्रमाणनिर्ज्ञातहेतुत्वात् सुखापरोक्ष्यसाधनज्ञानेऽपि इच्छालक्षणप्रवृत्तिः तदभ्यासलक्षणप्रवृत्तिश्च स्वत एव सिद्धा, अतो विधिवैयर्थ्यमित्याह—**यद्येवं किं विधिनेति**॥ कुल्यायाः सांशत्वात् स्थायित्वाच्चोभयार्थत्वं युगपत् क्रमेण च सम्भवति, तत्र प्रमाणञ्च प्रत्यक्षम्, अतो नायं दृष्टान्त इत्याह—**युक्तं तत्रेति**। अत्रोभयपरत्वे विरुद्धत्रिकद्वयापत्तिरुक्ते(त्यत्रा)[त्या]ह—**स च न्याय इति**॥

न युगपत् सम्भवतीत्युक्तम्। यदपीदमुक्तम्—पदार्थानां विधायकः शब्दः क्रमस्यापि विधायकः, एवमैकात्म्यस्य प्रतिपादकः समन्वयो विधिविषयमपि ज्ञापयिष्यतीति। तदप्यपेशलम्—यत् तावत् प्रत्येकं प्रयाजादिविधयः तैः पुनः (न) तेषामेव विधानम्। नापि ते क्रमशब्दाभिधेयाः। प्रयोगवचनोऽपि प्रयुञ्जानः तानेव प्रयुङ्क्ते। न ते क्रम इत्युक्तम्। नच क्रमो नाम एकान्ततो नास्त्येव। तद्बुद्धिशब्दयोः निरालम्बनत्वप्रसङ्गात्। तत्र क्रमो नाम वस्तुभूतो धर्मो विद्यत एव। त एव केनचिदुपाधिना वनवत् क्रमबुद्धिशब्दालम्बनं भवेयुः।

---

शब्दस्यैवोभयार्थता दृष्टेत्युक्तमनुवदति—**यदपीति**। तदप्यसिद्धं वाक्यभेदापातादित्याह—**तदपीति** ॥

एतद्व्यनक्ति—**यत्तावदिति**। ये तावत् प्रयाजादिविधयः तेषामेव विधानम्। न क्रमस्य अपदार्थत्वादिति शेषः। पदार्था एव क्रमोऽस्तु तर्हीत्यत्राह—**नापीति**। तर्ह्युभयविधायकत्वं च नेत्यपेरर्थः। अपदार्थस्यापि क्रमस्य विहिताङ्गप्रयोजकेन प्रयोगवचनेन प्रयोज्यत्वाद्विधेयत्वे पदार्थविधिरेव विधिरेष्टव्यः विध्यन्तराभावात्, न च वाक्यभेदो दोषः गत्यभावादित्यत्राह—**प्रयोगेति**। विहितस्यैव तत्प्रयोज्यत्वाद्विहितार्थान् पदार्थानेव स प्रयुङ्क्ते न क्रमम्, तस्य विहितत्वे तत्प्रयोज्यत्वं तत्प्रयोज्यत्वे विहितत्वमित्यन्योन्याश्रयत्वादित्यर्थः। पदार्था एव क्रमः, अतः तमपि प्रयुङ्क्ते इति; नेत्याह—**न ते क्रम इति** ॥

एकैकस्मिन्नदर्शनात् अनेकाश्रयत्वे च पदार्थयौगपद्यात् अयौगपद्ये चानेकाश्रयधर्मायोगात् नास्त्येव क्रमः इत्युत्तरं सुकरमित्यत्राह—**न चेति**। का तर्हि गतिरित्यत्राह—**तत्रेति**। न च पदार्थयौगपद्ये अनेकाश्रयधर्मत्वात् क्रमायोगः, क्रमत्वादेव यौगपद्यानपेक्षणादित्यर्थः। देशकालवस्तूपाधिपरामर्शं विना क्रमो न दृष्टः कथं निरुपाधिकः स्यादित्यत्राह—**त एवेति**। अनुष्ठेय-

स्मृतिविज्ञानमेव वा अनुष्ठानकाले यथोपलब्धि पदार्थान् परामृशेत्। सर्वथा अस्ति तावत् एकैकपदार्थालम्बनज्ञानातिरिक्तं ज्ञानान्तरम्। तच्च एकत्वात् कर्तुः अनेकत्वाच्च पदार्थानां युगपदनुष्ठानासम्भवादपेक्षितं सन्निहितं च प्रयोगवचनेन गृह्यते इति युक्तम्। न तथेह ज्ञानद्वयमस्ति, यदैकात्म्ये विधिविषयत्वे च वर्तेत। तस्मादिह विधेयाभावाद्विधानाश्रवणादध्याहारे च प्रमाणाभावात् न प्रयोगवचनोऽस्ति, यो मन्त्राणामिव ज्ञानस्यापि पुनः प्रयोगं विधास्यते। तस्मादसदेतत् कार्यविषयोऽपि वेदो वस्तुतत्त्वं अवगमयतीति॥

---

पदार्थानामनिष्पन्नस्वभावत्वात् कथं देशकालवस्तुक्रम इत्यत्राह—**स्मृतिविज्ञानमिति**। पाठक्रम एव स्मर्यमाणोऽनुष्ठेयपदार्थानां क्रम इत्यर्थः। अतः पदार्थातिरिक्तक्रमोऽवश्योपेय इत्याह—**सर्वथेति**। तथापि प्रयाजादिविधेः क्रमविशिष्टपदार्थविधायकत्वात् उभयविधायकत्वमस्तीत्याशङ्क्य, एकस्यानेकपदार्थानुष्ठानानुपपत्त्या प्राप्तत्वात् क्रमस्य न तद्विशिष्टविधिरित्याह—**तच्चेति**। तथापि क्रमविशेषस्याप्राप्तत्वात् तद्विशिष्टविधिः स्यात्, अविधेयत्वे च क्रमस्य प्रयोगवचनग्राह्यता न स्यादित्यत्राह—**अपेक्षितमिति**। पदार्थानामर्थक्रमः सन्निहितः अनन्तरं पाठक्रमश्च, अतः सान्निध्यात् प्राप्तः प्रयोगविधिना स्वस्यानुष्ठापकत्वार्थमपेक्षितत्वात् अभ्यनुज्ञायते, न प्रयुज्यते, तदा हि विधेयत्वापेक्षेत्यर्थः। तर्हि यथा क्रमज्ञानस्य पदार्थज्ञानस्य च अर्थद्वयपरत्वं तथा वेदान्तजस्यापि प्रथमज्ञानस्य ब्रह्मपरता द्वितीयज्ञानस्य विधिशेषता चास्त्वित्यत्राह—**न तथेति**। भिन्नप्रमाणजं ज्ञानद्वयं नास्ति, एकवाक्यजस्य ज्ञानद्वयस्य अर्थद्वयपरत्वे वाक्यभेदः स्यादित्यर्थः। मन्त्राद्वैलक्षण्यमुक्तं निगमयति—**तस्मादिति**। **इहेति**। वेदान्तेषु क्वचिदित्यर्थः। अतो न वेदान्तानां कार्यविषयत्वं न तद्विषयस्य ब्रह्मविषयत्वमपीति सिद्धमित्याह—**तस्मादिति**।

यत् पुनः निदर्शनम्—चक्षू रूपे सति द्रव्यमपि बोधयति एवं कार्ये सति तत्त्वमपि वेदोऽवगमयतीति। युक्तं तत्र यद्यदवबोधयति चक्षुः तत्र स्वतन्त्रमेव प्रमाणम्। इह पुनः यत्र तात्पर्यं तस्य प्रमेयता, न यद्यत् प्रतीयते तस्य तस्य इति वैषम्यम्।

आह—मा भूज्ज्ञानद्वयम्। योऽयमाभिधानिकः प्रत्ययः स विधिविषय एव भवतु। तस्मिन् विहिते अर्थात् सर्वस्यात्मस्वभावता सिध्यति, सविषयत्वादवगमस्य। एवमपि अविवक्षितोऽर्थः शब्दात् विवक्षितस्त्वर्थादिति शोभतेतरां वाक्यार्थवित्ता। न च नियोगतः प्रतिपत्तिविधिः वास्तवं संसर्गं गमयति। भवन्ति हि परिकल्पितविषया अपि प्रतिपत्तयश्चोदनालक्षणाः

---

चक्षुषः सम्प्रयुक्तेषु प्रतिपदार्थं (प्रत्येकं) अन्यसम्प्रयुक्ताक्षनिरपेक्षप्रमाणत्वाद्युक्तं रूपे सति तस्मिन् अन्यस्मिंश्च प्रामाण्यम्, शब्दस्य तु सम्भूयैकत्र तात्पर्यतः प्रमाणत्वाद्वेदान्तस्य कार्यपरत्वे तत्रैव प्रामाण्यात् ब्रह्मणि प्रामाण्यमयुक्तमिति दूषयति—**युक्तं तत्रेति**॥

मा भूत् ज्ञानद्वयं एकं वा अर्थद्वयपरम्, किन्त्वेकमेव ज्ञानं विधिविषयतया तच्छेष एवास्त्विति शङ्कते—**आहेति**। न चैवं ब्रह्मणोऽसिद्धिः, श्रुतार्थापत्त्या तत्सिद्धेरित्याह—**तस्मिन्निति**। एकस्मिन् ब्रह्मण्याद्यं श्रुतिजं चाप्रमाणं ज्ञानं, द्वितीयं श्रुतार्थापत्तिजं प्रमाणम्, उपक्रमादिलिङ्गाद्विवक्षितं ब्रह्म अर्थापत्त्या गम्यते तदभावादविवक्षितो विधिः श्रुत्या इति सा(ध्य)[धु]ते वाक्यार्थज्ञानितेति दूषयति— **एवमिति**। अपिशब्दसूचितमर्थदोषमाह—**न चेति**! **नियोगत इति**। नियमेनेत्यर्थः। क्व तर्हि व्यभिचार इत्यत्राह—**भवन्तीति**। फलवत्त्वान्यथानुपपत्त्या वास्तवत्वं सिध्यतीत्यत्राह—**फलवत्य**

---

**नियोगत इति**। नियमेनेत्यर्थः॥

फलवत्यः 'वाचं धेनुमुपासीते'त्येवमाद्याः ॥

एतदेवात्र युक्तम्, अतत्परस्य प्रत्यक्षादिविरोधे तथाध्यवसायहेतुत्वायोगात्। तस्मात् कार्यनिष्ठे वेदे वस्तुतत्त्वसिद्धिः मनोरथ एव। अतः अहंप्रत्ययावसेय एवात्मा, न तस्य शब्दावसेयमतीन्द्रियं रूपान्तरमस्ति। शब्दस्य तत्र सामर्थ्याभावात्। एवं च सति 'अयमात्मा ब्रह्म' 'एष त आत्मान्तर्याम्यमृतः' इति ब्रह्मान्तर्याम्यादिशब्दा अहंप्रत्ययावसेये एवात्मनि कथंचिद्वर्तन्ते। तेन 'स आत्मा तत्त्वमसि' इति विद्यमानैरारोपितैश्च गुणैरात्मो-

---

इति। ब्रह्मणो बुद्धेर्बाधाभावाद्वास्तवत्वं युक्तमित्यत्राह — एतदेवेति। विरोधेऽपि परबलीयस्त्वन्यायेन आगमबुद्धेरेव बाधकता किं न स्यादित्यत्राह— अतत्परस्येति। विधेयज्ञानस्यापि स्वार्थप्रमितिरेव दृष्टं फलम्, तत्त्यक्त्वा आरोपितार्थत्वेऽ(प्य)दृष्टकल्पना स्यादित्याशङ्क्य, उक्तादेव हेतोः दृष्टकल्पना न युक्तेत्याह—तस्मादिति। प्रसिद्धस्यात्मनः कथं निरास इत्याशङ्क्य, अलौकिकात्मासिद्धौ फलमाह—अत इति ॥

एवमेकदेशिनि निरस्ते, सत्यं स एवात्मा वेदवेद्यब्रह्मरूपः तन्मात्रनिष्ठश्च वेदान्त इत्याशङ्क्याह—न तस्येति। तस्मिन् किं मानान्तरं शक्तम्? अशक्तं वा? आद्ये पूर्ववृत्तेन तेनैव सिद्धेः शब्दस्यासामर्थ्यम्, अन्त्ये ततोऽपि दुर्बलत्वात् सङ्गत्यग्रहाच्चासामर्थ्यमित्यर्थः। तर्हि वेदान्तानामानर्थक्यमित्याशङ्क्य, किं निर्विषयत्वं निष्फलत्वं वा? नाद्य इत्याह—एवं चेति। कथञ्चिदिति। आत्मादिशब्दा अनुवादत्वेन ब्रह्मादिशब्दास्त्वारोपितत्वेनेत्यर्थः। अन्त्यं प्रत्याह—तेनेति। आत्मन्यन्यस्मिंश्च विद्यमानैः काण्व्यविद्यमानैः सर्वज्ञत्वादिभिश्च विशेष(णान्यनुभवेनाविशिष्टा)[णैः अनुभवेन विनापि वैशिष्ट्या]रोपोपपत्तेः मोक्षकामेनात्मोपास्य इत्यर्थवादतः फलं रात्रिसत्रन्यायेन कामेन सङ्क्रमय्य विधीयत इत्यर्थः। अतः श्रोतव्यविधेर्विधेयविचारस्य

पासनं मोक्षफलं च विधीयते इति युक्तम्। अतः कार्यानुरक्तस्य वेदार्थस्य सम्भवात् तस्य च सर्वात्मना विचारितत्वात् किमपरमवशिष्टम्? यत् ब्रह्मजिज्ञासारम्भं प्रयुञ्जीत ॥

उच्यते—स्यादेतदेवम्, यदि सर्व एव वेदार्थो विचार्यत्वेन 'अथातो धर्मजिज्ञासे'ति उपक्रान्तो विचारितश्च स्यात्। यावता कार्यनिष्ठ एव वेदभागो विचारितो न वस्तुतत्त्वनिष्ठः। तथा हि—शास्त्रारम्भो व्याख्यातृभिरेवं निरूपितः। कथम्? धर्मो नाम कश्चित् साधयितुः कालान्तरे श्रेयस्साधनो लोकाख्यप्रमाणाभासोऽथेन ज्ञानेन सामान्यतो विषयीकृतः। तद्विशेषं

---

अध्ययनविध्यवरुद्धत्वेनाप्रयोजकत्वात् तत्प्रयोज्यं विचारशास्त्रं पूर्वतन्त्रेण गतार्थत्वादनारभ्यमित्युपसंहरति—**अत इति** ॥

शब्दानां कार्यान्विते सामर्थ्यात् सर्वो वेदः कार्यपरत्वान्निरूपित इत्युच्यते? सूत्रकारादिवाक्यसामर्थ्याद्वा? नाद्यः, **समन्वयसूत्रे** निरस्तत्वादिति मत्वा, अन्त्यं प्रत्याह सिद्धान्ती—**उच्यत इति**। धर्मस्यैव प्रक्रान्तत्वेऽपि प्रसङ्गात् ब्रह्मापि निरूपितमित्यत्राह—**विचारितश्चेति**। अत्र सूत्रभाष्यवार्तिकसामर्थ्यादिति हेतुमाह—**यावतेति**। एतदेव कथमित्यत्राह—**तथा हीति**। 'वेदवाक्यानि विचारयेत्' इत्यादिभाष्यलिङ्गात् सर्ववेदार्थविचारोऽवगम्यत इत्याशङ्कते—**कथमिति**। सामान्यप्रसिद्धिविशेषविप्रतिपत्त्योः भाष्यकृता धर्मे दर्शितत्वात् स एव विचार्यत इत्याह—**धर्मो नामेति**। धर्म एव पूर्वपक्षमपि

---

वेदार्थोपाधौ विचारावतारस्य अथातश्शब्दाभ्यां प्रतिपन्नत्वेऽपि धर्मजिज्ञासेति विशेषितत्वान्न वेदार्थोपाधौ विचार इत्याह—**स्यादेतदेवमिति**। लोकप्रसिद्धिः निरूप्यमाणा प्रत्यक्षादिष्वन्यतमे अन्तर्भूय तत्सिद्धार्थविशेषे प्रमाणत्वेन पर्यवस्यति, आपाततस्तु सामान्यविषयप्रतीतिमात्रं भवतीत्यभिप्रेत्याह—**लोकाख्यप्रमाणाभासेति** ॥

प्रति विप्रतिपन्ना: परीक्षका:। केचिदग्निहोत्रादिकं धर्ममाचक्षते। केचिच्चैत्यवन्दनादिकम्। तत्र अग्निहोत्रादिलक्षण एव धर्मोऽभिप्रेतः न तत्प्रतिपादकानां वेदवाक्यानां विचारावसरो नापि विवक्षितार्थत्वम्। अतः चैत्यवन्दनादीनामेवान्यतमो धर्मः, तत्प्रतिपादकानां बुद्धादिवाक्यानामेवान्यतमं विचार्यम्, न वा तदपि। न हि पौरुषेये वाक्ये शब्दशक्त्यनुसारेणार्थः, अपि तु तेन विवक्षितः इति। एवमाशङ्किते धर्माय वेदवाक्यानि विचारयिष्यन् तदर्थविवक्षाविचारावसरप्रदर्शनार्थं 'अथातो धर्मजिज्ञासा' इति सूत्रयामास जैमिनिः। वेदमधीत्य अनन्तरं धर्मजिज्ञासा

---

वक्तीत्याह—**तत्राग्निहोत्रादीति**। नकार: पूर्वेणापि सम्बध्यते, हिंसात्मकत्वात् ब्रह्महत्यावदित्यर्थ:। तत्र फलमाह—**न तत्प्रतीति**। तेनेति शेष:॥

अथाप्यध्ययनविधेर्दृष्टार्थावबोधफलत्वाद्विवक्षितार्थो वेदो विचार्य इत्यत्राह—**नापीति**। 'स्वाध्यायोऽध्येतव्य:' इति कर्मणि कृत्यप्रत्ययात् अध्ययनविधाने कर्मकारकगतं दृष्टं फलं वाच्यम्। तच्च न सम्भवति, अतोऽध्ययनत्वसाम्यात् नित्यस्वाध्यायफलं घृतकुल्यादिकं(वा)[आ]दाय 'घृतकुल्यादिकाम: स्वाध्यायेनाधीयीत' इति गुणत्वप्राधान्यवैपरीत्येन स्वतन्त्रादृष्टफलो विधि: स्यात्, तथा चान्यार्थत्वाद्वेदस्य विषनिगरणादिवाक्यवदविवक्षितार्थतेत्यर्थ:। अत्र फलमाह—**अतश्चैत्येति**। साक्षात्पूर्वपक्षमाह—**न वेति**। वाशब्द: एवकारार्थ:। तत्र हेतु:—**न हीति**। ततश्च विवक्षाज्ञापकप्रमाणेनैव धर्मसिद्धेरधीत्य स्नातव्यं न किञ्चिद्विचार्यमित्यर्थ:॥

राद्धान्तसूत्रं तदर्थकथनेनावतारयति। धर्मायेति श्रौतोऽर्थ:। आर्थिकार्थमाह—**तदर्थेति**। **तस्याम्नायस्यार्थे विवक्षा च** विग्रहवाक्यगतषष्ठ्यन्ततच्छब्दस्यानुषङ्गात् तस्यैव **विचारावसरश्च** तयोरिति योज्यम्। विवक्षा-

---

**अग्निहोत्रादिलक्षण एवेति**। अत्राग्निहोत्रादिर्धर्म एव न भवतीत्येवकारार्थ:॥

**कर्तव्या, न स्नानं गुरुकुलनिवृत्तिरूपमिति दर्शयितुमिति। एवं स्थिते शास्त्रारम्भे न सर्ववेदार्थविषयं शास्त्रमिति प्रतीतिः। किन्तु धर्मातिरिक्तोऽपि सिद्धरूपो वेदार्थोऽस्ति, स च पर्युदस्तो जैमिनिना न्यायान्तरविषयत्वादिति गम्यते॥**

---

विचारावसरधर्मविचारान् सूत्रार्थान् योजनया दर्शयति—**वेदमधीत्येति**। धर्माख्यवेदार्थविचारप्रतिज्ञासामर्थ्याद्वेदस्यार्थे विवक्षाविचारावसरौ च सूचितौ द्रष्टव्यौ। न ह कर्मकारके स्वाध्याये फलाभावः, अवाप्तेः संस्कारस्य च सम्भवात्, संस्कृतस्य च अध्ययने श्रुतसंस्कारकर्मत्वनिर्वाहान्यथानुपपत्तिसहितोत्तरक्रतुविध्युपादानप्रामाण्यात् क्रतौ विनियोगात्, फलवदर्थावबोधहेत्वक्षरग्रहणादिदृष्टसमवाय्यदृष्टसम्भवे स्वतन्त्रादृष्टकल्पनायोगात्, अध्ययनविधेरदृष्टार्थत्वेन वेदस्याविवक्षितार्थत्वे अध्ययनविधिवाक्यस्यापि अविवक्षितार्थत्वात् सोऽपि विधिर्न स्यात्। अतोऽध्ययनविधेः दृष्टार्थत्वाद्विवक्षितार्थं वेदं अध्ययनानन्तरं धर्माय विचारयेदिति राद्धान्तोऽभ्यधायीत्यर्थः॥

ततः किमायातमित्यत्राह—**एवं स्थिते इति**। किं तर्हि विवक्षितं गम्यते इत्यत्राह—**किन्त्विति**। स्वार्थविचारहेतुत्वेन स्वाध्यायस्य अथातश्शब्दाभ्यां पूर्वनिर्वृत्ततया विचारहेतुत्वकथनात् विवक्षाविचारावसरप्रदर्शनात्, वेदाध्ययनविधिप्रयोज्यत्वकथनाच्च वेदार्थविचारे[कर्तव्य इति] वक्तव्ये, तद्वाचित्वेन सम्प्रतिपन्ने वेदार्थशब्दे च सति, तद्वाचित्वेनासम्प्रतिपन्नतदपर्यायधर्मशब्दग्रहणात् सूत्रकारादिभिः धर्मशब्दो वेदार्थविशेषवाची धर्मवत्तदतिरिक्तं ब्रह्मापि वेदार्थोऽस्ति, तयोर्मध्ये अत्र धर्मो विचार्यते, न ब्रह्म, तस्य सिद्धार्थप्रतिपादकन्यायान्तरविषयत्वात् इति विवक्षितं गम्यत इत्यर्थः। **यदिदं पूर्वोक्तं** हेतुत्रयं **तत्** धर्मविचारे **कथं** स्यात्? अतो बाधकाद्धर्मशब्देन वेदार्थो विवक्षित

---

**न्यायान्तरविषयत्वादिति।** उत्पत्त्यादिविधिभेदनिर्णायक[न्यायाविषय]त्वात् सिद्धरूपस्य ब्रह्मण इत्यर्थः॥

तत् कथम् ? यत् तावदिदम् । उच्यते—धर्मो नाम लोकप्रवादात् सामान्यतः सिद्धः। तस्य स्वरूपप्रमाणयोः विप्रतिपत्तावग्निहोत्रादिरपि वेदार्थो धर्मतया विचारपदवीमुपारोहति। यतः तस्यापि विचारावसरो विद्यते, तेन विवक्षितोऽसौ । न चाध्ययनमात्रात् कृतकृत्यता । अतोऽध्ययनानन्तरं न गुरुकुलान्निवर्त्तितव्यम्, किन्तु वेदार्थो धर्मः किं वा अन्य एवेति जिज्ञासामर्हतीति वदितुं धर्मग्रहणं युक्तं 'अथातो धर्मजिज्ञासे' ति, न वेदार्थजिज्ञासेति । यतो न वेदार्थतया ज्ञाने प्रवृत्तिः ॥

---

इति गम्यते इत्याशङ्कते—**तत् कथमिति** । विचार्यमाणप्रधानाभिधायिधर्मशब्दसामर्थ्यात्, धर्मस्य विप्रतिपत्त्या पुरुषार्थसाधनतया च जिज्ञासितत्वात्, वेदप्रामाण्यसमर्थनात् प्राग्वेदार्थस्य सामान्यप्रसिद्धिविशेषविप्रतिपत्तिपुरुषार्थसाधनत्वानवगमेनाजिज्ञासितत्वाच्च, धर्म एव विचार्यत्वेन विवक्षित इत्याह—**उच्यत इति** । अत्र धर्मस्य जिज्ञासितत्वोक्त्या अर्थाद्वेदार्थस्य अजिज्ञासितत्वं चोक्तं द्रष्टव्यम् ॥

तर्हि अग्निहोत्रादेर्वेदार्थस्य विचारो न युक्त इत्यत्राह—**अग्निहोत्रादिरिति** । तर्हि उक्तहेतुत्रयं व्यर्थमित्यत्राह—**यत इति** । यस्माद्वेदार्थस्य विवक्षित धर्मतया विचारप्राप्तिः अतः, (तस्मात्) [तेन] असौ स्वाध्यायो विवक्षित (इत्यादि) [इत्युक्त] हेतुत्रयं न व्यर्थमित्यर्थः । पुरुषार्थत्वाच्चेत् धर्मविचारः तर्हि अध्ययनादेव तत्सिद्धेः किं विचारेणेत्यत्राह—**न चाध्ययनेति** । अतो बाधकाभावात् साधकसद्भावाच्च धर्मविचारविवक्षया धर्मग्रहणं युक्तं न वेदार्थविचारविवक्षयेत्याह—**अत इति** । धर्मविवक्षाफलमाह—**अध्ययनानन्तरमित्यारभ्य वदितुमित्यन्तेन** । वेदार्थविवक्षयापि धर्मग्रहणं युक्तं वेदार्थस्य धर्मत्वा-

---

अथातश्शब्दाभ्यां वेदस्यार्थविवक्षाप्रदर्शनं धर्मविचारस्यापि हेतुर्भवत्येवेत्याह—**अग्निहोत्रादिरपीति** । अग्निहोत्रादिर्हि धर्मविप्रतिपत्तिस्कन्धत्वात् दैवगत्या च धर्मत्वात् अभ्युदयार्थिभिः विचारयितव्य इत्याह—**धर्मतया विचारपदवीमिति** । वेदार्थो

**यत् पुनः धर्मस्य स्वरूपप्रमाणकथनाय द्वितीयं सूत्रम्, तत् वेदप्रमाणको धर्म इति स्यात् किमिदं चोदनालक्षण इति ?। तत् नूनं न सर्वो वेदो धर्म एव कार्यात्मके पर्यवस्यति, कश्चिदस्य भागः कार्यताशून्ये वस्तुतत्त्वेऽपि वर्तते इति मन्यते ॥**

---

दित्यत्राह—**यतो नेति**। वेदार्थस्याजिज्ञासितत्वेन तद्बुद्ध्या विचारे सूत्रकारादिभिरप्रवृत्तेः विचारारम्भे वेदार्थत्वविवक्षया धर्मग्रहणं विरुद्धमित्यर्थः ॥

वेदार्थाजिज्ञासितत्वधर्मजिज्ञासितत्वधर्मग्रहणैराद्यसूत्रं धर्मपरमेवेत्यभाषि। अथोत्तरसूत्राणां वेदार्थपरत्वादाद्यमपि तथा नेयमित्यत्राह—**यत् पुनरिति**। मुखतो लक्षणं वक्ति अर्थात् प्रमाणमिति प्राभाकराः, मुखतः प्रमाणं वक्ति अर्थाल्लक्षणमिति भाट्टाः, तदाह—**स्वरूपप्रमाणेति**। धर्मं पूर्वसूत्रोक्तविचार्यं अनूद्य तत्र लक्षणादिकथनात् उत्तरसूत्राण्यपि धर्मपराण्येवेत्युक्त्वा विपक्षे बाधकमाह—**तद्वेदेति**। वेदार्थे विचार्ये तस्मिन् वेदमात्रस्य मानत्वादिति शेषः। चोदनाया वेदत्वात्तद्ग्रहणं च युक्तमित्यत्राह—**किमिदमिति**। वेदमात्रे वक्तव्ये तद्विशेषोक्तिः विरुद्धा। न च चोदनाधर्मौ वेदतदर्थपर्यायौ, निखण्ट्वादिविरोधादित्यर्थः। ततः किमित्यत्राह—**तन्नूनमिति**। न तथा सूत्रं यस्मात् तस्मादवश्यं धर्मातिरिक्तो वेदार्थोऽस्ति, अथाप्यत्र धर्म एव विचार्यः, सिद्धब्रह्मनिष्ठोऽपि वेदांशोऽस्ति, स च न धर्मे प्रमाणमिति विवक्षतीत्यर्थः ॥

---

**धर्म इति**। किं वेदार्थभूताग्निहोत्रादिः धर्मः ? किं वा अन्यश्चैत्यवन्दनादिरिति जिज्ञासामर्हतीति वदितुमित्यर्थः। धर्मशब्देन वेदार्थ एवोच्यत इत्याशङ्क्य, अधीतवेदस्य वेदार्थे निश्चयज्ञानेन भवितव्यमिति नापेक्षा, किन्तु पुरुषार्थसाधने निश्चयज्ञानेन भवितव्यमिति ; अतो धर्मशब्दस्य धर्मविषयतैव युक्तेत्याह—**यतो न वेदार्थतयेति** ॥

अध्येतव्य इति तव्यप्रत्ययगता शब्दभावना स्वाध्यायस्यार्थभावनया भाव्यस्य पुरुषार्थत्वाभावे, पुरुषार्थभाव्यभावकत्वेन स्वरूपेण वा पुरुषार्थत्वहीनार्थभावनायास्तद्भाव्यकशब्दभावनायाश्च [अनुपपत्त्या फलवद्विज्ञानजननेन] स्वाध्यायस्य पुमर्थत्वसम्पादनेन तद्भाव्यकार्थ-

**ननु चोदनाग्रहणस्यान्यदेव प्रयोजनम् । 'चुद प्रेरणे' इति प्रेरणकर्मणश्चोदनेति रूपम् । ततः प्रेरणात्मको विधिरपुरुषार्थे प्रेरयितुमशक्नुवन् पदान्तराभिहितमपि स्वर्गादिकं भावनाकर्मतामापादयति एकपदोपादानात् संनिहिततरं धात्वर्थं विहायेति कथयितुमिति । नैतत् सारम्—अध्ययनविधिरध्ययने माणवकं प्रेरयन् अध्ययनस्य पुरुषार्थरूपार्थावबोधकत्वमनापाद्य न शक्नोति प्रेरयितुम्, पारम्पर्येणाप्यपुरुषार्थे विधेरपर्यवसानात् । अतः तदर्थं न चोदनाग्रहणम्, वेदग्रहणेनापि तत्सिद्धेः ।**

---

चोदनाग्रह(णमथ वेति । तेनै)[णं वेदै]कदेशस्य न धर्मे प्रामाण्यं(त्य) [व]क्तुम्, किन्त्वन्यार्थमिति शङ्कते—**ननु चोदनेति** । किं तदन्यदिति वक्तुं चोदनाशब्दनिष्पत्तिमाह—**चुद प्रेरण इति** । अतः प्रेरणात्मको विधिः लिङादिशब्दः तद्व्यापारो वा शब्दभावना पुरुषप्रवृत्त्याख्यार्थभावनाभाव्या स्वज्ञानकरणिका स्तुत्यादिज्ञानेतिकर्तव्यताका चोदनेत्युच्यते । सा पुरुषार्थहीने धात्वर्थे अर्थभावनां निष्पादयितुं न शक्नोति । अतः सा स्वयं प्रवर्तनात्मत्वान्यथानुपपत्त्या धात्वर्थकरणिकायाः प्रयाजादीतिकर्तव्यताकायाः अर्थभावनाया भाव्यत्वेन पदान्तरोक्तमपि स्वर्गादिकं ज्ञापयित्वा अर्थभावनां निष्पादयतीति द्योतयितुमित्यर्थः । नैतत् चोदनाग्रहणस्य प्रयोजनं वेदग्रहणेऽपि सिद्धेरिति मत्वा आह—**नैतदिति** । कथं सिध्यतीति वक्तुं अध्ययनविधेः पुरुषार्थपर्यवसानमाह—**अध्ययनविधिरिति** । उक्तांशत्रयवती शब्दभावना अध्ययन(स्या) [भावनाया अ]ध्ययनकरणिकायाः प्राङ्मुखत्वादीतिकर्तव्यताकायाः फलवदर्थावबोधभाव्यत्वमज्ञापयित्वा पुरुषप्रवृत्त्याख्यार्थभावनां निष्पादयितुं न शक्नोतीत्यर्थः । अस्तु तर्हि अधीतो वेदः फलवदर्थावबोधकः, ततः किमायातमित्यत्राह—

---

भावनामध्ययनकरणिकां भावयित्वा पर्यवस्यति, नेतरथा ; अतो वेदग्रहणेनापि तत् सिद्धमित्याह—**नैतत् सारमित्यादि** ॥

**अपि च वेदग्रहणमेव युक्तम्, असन्देहात्। चोदनाग्रहणे हि सन्देहः स्यात् , लोकेऽपि विद्यमानत्वात् । अथ वेदाधिकरणे 'वेदाँश्चैके सन्निकर्ष' मिति विशेषाभिधानात् वैदिकत्वसिद्धिरिति। सोऽयमाभाणको लोके 'पिण्डमुत्सृज्य करं लेढी' ति। सूत्रकारस्याप्यकौशलं प्रदर्शितं स्यात् । अतश्चोदनाग्रहणादचोदनात्मकोऽपि वेदभागोऽभिप्रेत इति गम्यते, येन वेदार्थमात्रस्य**

---

**अत इति**। अतो वेदग्रहणेऽपि विधिः स्वस्य स्वाश्रयस्य वा फलवदर्थावबोधकवेदत्वान्यथानुपपत्त्या पदान्तरोक्तमपि स्वर्गादिकमर्थभावनाभाव्यत्वेनापाद्य तां निष्पादयतीति द्योतकत्वसिद्धेर्न तत् द्योतयितुं चोदनाग्रहणमित्यर्थः ॥

तर्हि उभयथापि द्योतकत्वसिद्धेः चोदनाग्रहणमपि युक्तमित्यत्राह—**अपि चेति**। त(था)[दा] वेदार्थे वेदस्य प्रमाणत्वकथनात् असन्देह इत्यर्थः। चोदनाग्रहणेऽपि न सन्देहः तस्य विधौ प्रसिद्धत्वादित्यत्राह—**चोदनेति**। (तथापि) [तदा] वेदार्थे चोदनाया मानत्वकथनात् तस्याश्च लोकेऽपि सत्त्वात् किं वैदिकी चोदना विवक्षिता किं वा चोदनाशब्दासङ्कोचाल्लौकिक्यपीति सन्देहात् असूत्रत्वं स्यादित्यर्थः। सूत्रान्तरे वेदग्रहणाद्वैदिक्येवेति निश्चीयत इति शङ्कते—**अथेति**। तर्हि सा गाथा अत्र आगतेत्युपहसति—**सोऽयमिति**। उपहसता किं दूषणमुक्तमित्यत्राह—**सूत्रकारस्येति**। लक्षणसूत्रे प्राप्तं वेदग्रहणमन्यत्र करोतीत्याचार्यं चाबुद्धिपूर्वकारिणं करोषीति स्यात्। अतश्चोदनाग्रहणात् धर्मातिरिक्तोऽपि वेदार्थोऽस्ति, अथाप्यत्र धर्म एव विचार्यते, चोदनातिरिक्तोऽपि वेदांशोऽस्ति, स च न धर्मे प्रमाणमिति विवक्षतीत्याह—**अतश्चोदनेति**॥

कार्यादन्यो वेदार्थो नास्तीति वक्तुं धर्मग्रहणम्, अतः कथं सिद्धोऽपि वेदार्थोऽस्ति तन्निष्ठोऽपि वेदांशोऽस्तीति प्रतीतिरिति; अत्राह—**येनेति**। यदि कार्यमेव वेदार्थ इति विवक्षितं तर्हि वेदग्रहणमेव कुर्यात् वेदमात्रस्य धर्मे

---

**आभाणकः**—लोकवादः ॥

**धर्मत्वं मा भूदिति चोदनेत्यब्रोचत्। तदेवं सूत्रकार एव स्वशास्त्रविषयातिरिक्तं वेदभागमविचारितमसूसुचत्। ननु 'दृष्टो हि तस्यार्थः कर्मावबोधनम्' 'तद्भूतानां क्रियार्थेन समाम्नायः' 'आम्नायस्य क्रियार्थत्वात्' इति च सर्वस्य कार्यार्थत्वं दर्शितम्। सत्यम्, तत् प्रक्रमबलात् तन्निष्ठे वेदभागे इति गम्यते न सर्वत्र। अपि च—'दृष्टो हि तस्यार्थः कर्मावबोधन'-मिति न सर्वस्य कर्मावबोधनमर्थ उच्यते। कथम्? वेदाध्य-**

---

प्रमाणत्वात्। अतः सर्ववेदार्थस्य कार्यत्वं मा भूदिति चोदनाग्रहणात् सिद्धोऽपि वेदार्थोऽस्ति तन्निष्ठश्च वेदांशोऽस्तीति विवक्षतीत्यर्थः। न च चोदनैकवाक्यतया सर्वोऽपि वेदः चोदनेति सूचयितुं चोदनाग्रहणम्। तदा सर्ववेदार्थस्य चोदनाप्रमाणकत्वात् तत एव कार्यत्वसिद्धेः चोदनालक्षणो वेदार्थ इति ब्रूयादित्यूह्यम्। तस्मात्तदुक्तरीत्या ब्रह्माख्यो वेदार्थः तन्निष्ठश्च वेदान्तो न विचार्य इति सूत्रभाष्यवार्तिककृतां विवक्षितमित्याह—**तदेवमिति**॥

तेषामेव कृत्स्नवेदस्य धर्मे विनियोजकं वाक्यमस्तीत्याशङ्कते—**ननु दृष्टो हीति**। तर्हि भूतार्थानामध्ययनमनर्थकमित्यत्राह—**तद्भूतानामिति**। तत्र वेदे भूतार्थानां शब्दानां कार्यशेषत्वेन अर्थवत्त्वात् पाठ इत्यर्थः। अस्तीदमुत्तरं सामान्यवाक्यम्, तत् धर्मचोदनासूत्रप्रक्रमसामर्थ्यात् प्रकृतविशेषकर्मकाण्डे प्रयुक्तमिति निर्णीयते इत्याह—**सत्यमिति**। सामान्येनोत्तरमुक्त्वा प्रत्येकमाह—**अपि चेति**। **सर्वस्य** आम्नायस्य **कर्मावबोधनमर्थो** नान्य इति **नोच्यत इति**। प्रकृताम्नायमात्रपरामर्शकतच्छब्दे कर्मशब्दे च सति कथं नोच्यत इत्याशङ्कते—**कथमिति**। आम्नायार्थसद्भावमात्रपरत्वादस्य भाष्यस्येति वक्तुमर्थसद्भावस्यैव आकाङ्क्षासन्निधियोग्यत्वमाह—**वेदाध्ययनेति**॥

अधीत्य स्नायादित्य[ध्ययना]नन्तरं स्नानश्रवणाद्वेदोऽनर्थकः, अतः तद्विचारो न कर्तव्यः, अन्यथा तस्य कर्तव्यत्वाद[ध्ययना]नन्तरं स्नानश्रवणं न स्यादित्याशङ्किते, अतिक्रमिष्यामोऽर्थविचारेणेममाम्नायं, तथानतिक्रामन्तोऽर्थवन्तं

यनानन्तरं स्नानविधायकमाम्नायमुपलभ्य वेदस्यानर्थकत्वे आशङ्किते 'अतिक्रमिष्याम इममाम्नायम्, अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्यर्थसद्भावः प्रदर्शितो नार्थान्तरासद्भावः। सोऽयमयोगव्यवच्छेदो नान्ययोगव्यवच्छेदः। कर्मशब्देन धर्म एव कार्यत्वादभिहितः। यतः तदवबोधप्रवृ[त्तौ]त्तो वेदस्यार्थवत्त्वं मृगयते—किं वेदस्यार्थो विद्यते ? न वा ? स च धर्मत्वेनावगन्तुं शक्यते न वा ? इति। तस्मात् न कर्मावबोधनमेव वेदार्थोऽभिप्रेतो भाष्यकृतः। यत् पुनः 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना' मिति। तत्र यद्यानर्थक्यमर्थाभावः,

---

वेदमर्थशून्यं कल्पयेमेति विपक्षे बाधपूर्वकमर्थविचारः साधितः। तत्राम्नायोऽनर्थकः इत्युक्तमित्याकाङ्क्षायां इदं भाष्यं प्रवृत्तम्, न हि युक्त्याभासात् दृष्टोऽर्थो निरस्यत इत्यर्थसद्भावमात्रं वक्तुम्। तत्र यथा प्रत्यक्षस्यार्थवत्त्वे रूपमुदाहरणत्वेनोच्यते तद्वत् कर्मावबोधनमिति उक्तमित्यर्थः। ततः किमित्यत्राह—**सोऽयमिति**। अतो वेदस्य कर्मावबोधेन सम्बन्धोऽस्तीत्युच्यते, अर्थान्तरसम्बन्धो नास्तीति नोच्यत इत्यर्थः। कर्मशब्दो विषयमात्रपरतया धर्मब्रह्मणोरविशिष्ट इत्युत्तरं सुकरमित्यत्राह—**कर्मशब्देनेति**। क्रियायां विषये च प्रसिद्धस्य कुतः क्रियामात्रपरत्वं इत्याशङ्क्य, प्रकरणादित्याह—**यत इति**। **मृगयते**—विचारयति। विचारप्रकारमाह—**किं वेदस्येति**। धर्मावबोधप्रवृत्तौ वेदस्यार्थवत्त्वं किमर्थं विचार्यत इत्यत्राह—**स चेति**। मत्वेति शेषः। भाष्यस्य विशेषोत्तरत्वं निगमयति—**तस्मादिति**॥

सूत्रस्य विशेषोत्तरत्वं वक्तुं तदनुवदति—**यत् पुनरिति**। सूत्रे अर्थ-

---

**तदवबोधप्रवृत्ताविति**। अधीतवेदार्थस्य निर्णयहेतुविचारप्रवृत्तौ प्रसक्तायामित्यर्थः। **अर्थवत्त्वमिति**। प्रयोजनवत्त्वमित्यर्थः॥

तदसत्—यतः 'एवमेव [भूतमर्थमन्वाचक्षते] भूतार्थमनुवदन्ती'ति दर्शितोऽर्थः। अथ निष्प्रयोजनत्वम्, स्वाध्यायाध्ययनविधिर्निष्प्रयोजनमक्षरमात्रमपि न ग्राहयतीति; भवतु 'सोऽरोदीत्' इत्यादीनाम्, अपुरुषार्थप्रतिपादकत्वात् एकवाक्यत्वात् पृथक्कार्यकल्पनानुपपत्तेः कल्पयितुं चाशक्यत्वात्। यानि पुनः अपास्ताशेषाशिवमात्मानमनुभवपर्यन्तं अवबोधयन्ति वाक्यानि तान्यनवद्यप्रयोजनत्वाद्भवन्तितरामेव प्रयोजनवन्ति। अतः स्वयमपुरुषार्थत्वात् तदर्थोपकारितया कथञ्चित् पुरुषार्थस्तावकत्वेन प्रयोजनवत्त्वमुक्तम्, न सर्वस्यैवाक्रियार्थत्वेन आनर्थक्यमाशङ्क्य क्रियार्थत्वेनार्थवत्त्वमुक्तम्। तथा च तद्विधान्येव तत्र वाक्यान्युदाहृतानि ॥

---

शब्दः किं विषयवाची? प्रयोजनवाची वा? नाद्य इत्युक्ते च द्वितीयं शङ्कते—अथेति। ननु आप्तवाक्यस्येदं दूषणं कथमपौरुषेये वेदे स्यादित्यत्राह—स्वाध्यायेति। कर्मकाण्डपठितानामकार्यार्थवाक्यानां अस्मिन् पूर्वपक्षसूत्रे निष्फलत्वमाशङ्क्य, 'स्तुत्यर्थेन विधीनां स्युः' इति सिद्धान्ते विध्यपेक्षितस्तावकत्वेनार्थवत्त्वमुक्तम्। अस्तु तेषामपुरुषार्थप्रतिपादकत्वादिति दूषयति—भवत्विति। तथापि किमिति स्तावकत्वं, स्वार्थे फलवत्त्वाय विधिः कल्प्यतामित्यत्राह—एकवाक्येति। पूर्वेणैकवाक्यस्याप्युपरिधारणस्येव स्वतन्त्रतया विधेयत्वसम्भवाद्विधिः कल्प्यताम्, इत्याशङ्क्य, कालत्रयास्पृष्टद्रव्यदेवतासम्बन्धस्य कल्पकस्य अभावादशक्यमित्याह—कल्पयितुं चेति। तर्हि वेदान्तवाक्यान्यपि निष्फलत्वात् कार्यार्थानि इत्यत्राह—यानीति। अतः सूत्रं क्रियाप्रकरणपठितवाक्यपरत्वात न वेदान्तपरमित्याह—अतः स्वयमिति। अत्र लिङ्गमाह—तथा चेति।

---

आनर्थक्यमित्यनिष्टप्रसङ्ग उक्तः, तत्र निष्प्रयोजनत्वस्य कथमनिष्टतेति; तत्राह—स्वाध्यायाध्ययनेति ॥

**यदपि केचित् शास्त्रप्रस्थानमन्यथा वर्णयन्ति—न हि किलैवं शास्त्रं प्रस्थितम्—किं वेदलक्षणो धर्मः? उत बुद्धवाक्यादिलक्षणः? इति। किं तर्हि? अधीतवेदस्य योऽर्थोऽवगतः तत्रैव विप्रतिपत्तयः सन्ति 'किमयमसावुतायम्' इति, तन्निराकरणार्थः शास्त्रारम्भ इति। तत्रापि न निखिलवेदार्थविचारप्रतीतिः। तत् कथम्? तथा सति 'अथातो वेदार्थजिज्ञासा' इति स्यात्। यतो न धर्म इति कृत्वा विचारः किन्तु वेदार्थ इति। सत्यम्।**

---

किमपि वेदान्तवाक्यं नार्थवादाधिकरणे क्रियाशेषत्वेन उदाहृतमित्यर्थः ॥

वेदाध्ययनविधेः अर्थावबोधपरत्वानुपपत्त्याक्षिप्तत्वेन वेदार्थविषयत्वात् विचारस्य वेदार्थविचारारम्भकं प्रथमसूत्रमिति प्राभाकराणां शास्त्रारम्भप्रकारमाह—**यदपीति**। धर्मविप्रतिपत्त्या तद्विचारारम्भकं कथं वेदार्थपरमित्यत्राह—**न हीति**। वेदार्थे सामान्यप्रसिद्धिविशेषविप्रतिपत्तिपुरुषार्थसाधनत्वाभावेनाजिज्ञासितत्वात् कथं तद्विचार इत्यत्राह—**किं तर्हीति**। अधीतवेदस्य पुरुषार्थसाधनतया सामान्येनावगतेऽर्थेऽपि 'उद्भिदा यजेत पशुकामः' इत्यादिना किं पशुकाममुद्दिश्य यागो विधीयते? यागविधिमुद्दिश्य पशुकामाधिकारो वा? किं वा उभयमपि? इति विप्रतिपत्तिभिः जिज्ञासितत्वात्तद्विचारार्थमित्यर्थः। एवं वेदार्थोपाधिविचारेऽपि धर्मग्रहणसामर्थ्यात्तदेकदेशो विचारित इत्याह—**तत्रापीति**। कृत्स्नाध्यापनविधिप्रयुक्तो विचारः कथमेकदेशे स्यादिति शङ्कते—**तत् कथमिति**। सर्ववेदार्थविचारे धर्मग्रहणं न स्यात्। अतः सिद्धो वेदार्थो न विचार्य इति वक्तुं धर्मशब्दः, रूपं पश्येदिति विधिप्रयुक्त्या रूपैकदेशनीलदर्शनवत् कृत्स्नविधिप्रयुक्त्या एकदेशविचारश्चाविरुद्ध इत्याह—**तथा सतीति** ॥

कार्यातिरिक्तो वेदार्थोऽस्ति, स चात्र न विचार्यत इति वक्तुं न धर्मग्रहणम्, किन्तु वेदार्थो धर्मत्वेनेष्टसाधनतया जिज्ञासितः मत्प्रवृत्तिश्च

तथापि शास्त्रकाराणां पुरुषार्थसिद्ध्यर्थं शास्त्रप्रणयनम्, ततश्च पुरुषार्थकथनार्थं धर्मग्रहणमिति। एवं तर्हि धर्म इत्येव कृत्वा विचारो भवतु, तस्य पुरुषार्थत्वात् संदिग्धत्वाच्च। तथा च उत्तरमपि सूत्रमनुगुणं भवति—'चोदनालक्षणोऽर्थो धर्मः' इति धर्मस्वरूपविप्रतिपत्तिनिरासपरम्। इतरथा वेदार्थविप्रतिपत्तौ तन्निरासार्थं 'चोदनालक्षणो वेदार्थः' इति स्यात्। यतो न धर्मग्रहणे सति वेदार्थविप्रतिपत्तिः शक्या निराकर्तुम्। कथम्?

---

पुरुषार्थर्थेति वक्तुमित्याशङ्कते—**सत्यमिति**। तर्हि यदुपासनं पुरुषार्थहेतुत्वात् जिज्ञासितं तद्धर्मोपाधौ विचारोऽस्त्विति दूषयति—**एवं तर्हीति**। कार्यमेव वेदार्थो नान्य इति वक्तुं वेदार्थस्थाने कार्यविशेषधर्मग्रहणम्, अतः कथं धर्मोपाधौ विचारः स्यादित्यत्राह—**तथा चोत्तरमपीति**। धर्मोपाधौ विचारे सूत्रद्वयमपि धर्मशब्दोपेतमर्थवत् स्यात्, अन्यथा चोदनाप्रमाणकत्वोक्त्यैव कार्यमेव वेदार्थ इति सिद्धे धर्मशब्दद्वयस्यापि व्यर्थत्वात् वेदार्थग्रहणद्वयमेव स्यादित्यर्थः। इतोऽप्येकदेशस्यैव विचार इत्याह—**धर्मस्वरूपेति**। किन्तु चैत्यवन्दनादिरग्निहोत्रादिर्वेति धर्मविप्रतिपत्तिनिरासार्थं नोत्तरं सूत्रम्, अर्थवादादिलक्षणश्चोदनालक्षणो वेति वेदार्थविप्रतिपत्तिनिरासायेत्यत्राह—**इतरथेति**। हेतुः—**यतो नेति**। श्येनादेः वेदार्थस्य धर्मत्वाभावात् धर्मस्य चैत्यवन्दनाद्यात्मना विप्रतिपन्नत्वात् वेदा(र्थता)[र्थे तद]भावाच्च, धर्मशब्दस्य वेदार्थवाचित्वाभावादिति शेषः॥

धर्मशब्देन वेदार्थो लक्षणयोद्दिश्यते, ततः कथं तन्निरासोऽशक्य इत्याशङ्कते—**कथमिति**। बुद्धिपूर्वकारिणो वेदार्थवाचके सति धर्मशब्देन तल्लक्षणायां प्रयोजनं चोदनालक्षणस्यार्थस्य धर्मत्वज्ञापनं वा? तस्य धर्म इति नामकरणं वा?। आद्ये धर्मशब्दस्य तद्बोधे चरितार्थत्वात् पुनस्तल्ल-

**यत् तावत् चोदनालक्षणो योऽर्थः स धर्म इति धर्मत्वं ज्ञाप्येत, तदा स एव वेदार्थो नान्य इति न लभ्यते। अथ पुनः स धर्म इति नामनामिसम्बन्धो विधीयते, तदप्रक्रान्तम्, निष्प्रयोजनम्, अतिप्रसङ्गश्च आपद्येत॥**

---

क्षणा न स्यात्। अतश्चोदनालक्षणो वेदार्थो नान्य इति निर्णयो न स्यादित्याह— **यत्तावदिति**। अन्त्ये धर्मविचारे प्रक्रान्ते नामानुशासनं प्रक्रमविरोधीत्याह—**अथ पुनरिति**। यथा शब्दानुशासने प्रक्रान्ते विध्यादिनामकरणं तद्वत् पारिभाषिकनामकरणमविरोधीत्यत्राह—**निष्प्रयोजनमिति**। तदुत्तरकाले व्यवहारः फलं तदिह नास्ति, उत्तरसूत्रेषु बहुशो धर्मशब्दाभावादित्यर्थः। न च उपाध्यायादिनाम[वत्]वैशिष्ट्यार्थम्, तत्र वैशिष्ट्यस्य गो(दोहना)[दाना]दिफलत्वादिह तदभावात्। तथा सौत्रेण धर्मशब्देन अधर्मस्य श्येनादेरपि[धर्मत्व] प्रतीतिः, धर्मस्य अग्निहोत्रादेः अधर्मत्वावगतिश्च स्यादित्याह—**अतिप्रसङ्गश्चेति**॥

तर्हि अल्पाक्षरत्वार्थं गङ्गादिपदवल्लक्षणार्थमित्याशङ्क्य, गङ्गादिपदानां वाच्यार्थस्य वाक्यार्थे अन्वयायोग्यत्वात् तद्योग्ये तीरादौ लक्षणा(दि) स्यात्, धर्मशब्दस्य वाच्यार्थस्य जिज्ञासितत्वाच्चोदनालक्षणार्थत्वाच्च वाक्यार्थे अन्वययोग्यत्वात् वेदार्थस्य चोदनाशब्देन निष्फलबह्वक्षरेण वेदशब्दे सति वेदस्य

---

अजहल्लक्षणाश्रयणेऽपि यो धर्मस्स चोदनालक्षणः यश्चोदनालक्षणस्स धर्म इति वा उच्यमाने वेदार्थे धर्मत्वं चोदनालक्षणत्वं च विद्यत इत्येतावत् सिध्यति, न त्वन्यस्य वेदार्थत्वाभाव इत्याह—**यत्तावदिति**। यदि तावदित्यर्थः। प्रतिज्ञातधर्मे लक्षणप्रमाणकथनं विहाय संज्ञाकथनं प्रस्तुतानुपयोगीत्याह—**अप्रक्रान्तमिति**। संज्ञाविधाने कार्यान्तरे विनियोगार्थं दृष्टम्। अत्र तु विनियोगादर्शनात तद्व्यर्थं इत्याह—**निष्प्रयोजनमिति**। उत्तरसूत्राणामपि नामविधानपरत्वं स्यादित्याह—**अतिप्रसङ्ग इति**॥

॥ इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां द्वितीयवर्णकं समाप्तम् ॥

**अथापि कथंचित् धर्मशब्देन वेदार्थ एवोच्यते इति कल्प्येत, तथा सति चोदनालक्षणो वेदार्थो नार्थवादादिलक्षण इति सिद्धप्रामाण्यवेदार्थविचारोऽयं स्यात् उत्तरलक्षणवत्। तत्रानन्तरं प्रामाण्यप्रतिपादनं न युज्येत, 'वृत्तं प्रमाणलक्षण'मिति च। मन्त्रार्थवादेषु च कार्यार्थत्वे विप्रतिपत्तिः न स्यात्। सा**

---

[च]निष्फललक्ष्यत्वापातेन (च) वाक्यार्थान्वयायोग्यत्वाच्च न वेदार्थे लक्षणा स्यादित्यरुच्या अङ्गीकरोति—**अथापीति**। तवेष्टकार्याख्यवेदार्थे लक्ष्ये अर्थशब्दवैयर्थ्यलक्षणसामर्थ्यादेव चोदनाप्रमाणत्वसिद्धेः चोदनापदवैयर्थ्यम्, तस्य लक्ष्यस्य एकदा(प्य)[पि]चोदनालक्षणत्वेनाप्रतीतस्य चोदनालक्षणो न वेति विवादाभा(वाय)[वेन]सूत्रवैयर्थ्यं चेति मत्वा आह—**कथञ्चिदिति** ॥

दोषान्तरं—**तथा सतीति**। वेदस्य प्रमाण्यादर्थवत्त्वे निश्चिते, सोऽर्थश्चोदनालक्षणो नार्थवादादिलक्षण इति वक्तुं सूत्रं स्यादित्यर्थः। सत्यम्, द्वितीयाद्यध्यायवत् पूर्वसूत्रेणार्थवत्त्वे निश्चित एवेदं सूत्रं प्रवृत्तमित्यत्राह—**तत्रानन्तरमिति**। तत्राध्यापनविधिप्रयुक्ताप्रामाण्यमात्रनिरासेनार्थवत्तोक्ता, पौरुषेयत्वापौरुषेयत्वमानान्तरयोग्यार्थत्वादिनिमित्ताप्रामाण्यनिरासेनार्थवत्ता तु उत्तरत्र उच्यते, तन्न स्यात् निश्चितेऽर्थवत्त्वे तस्य वैयर्थ्यादित्यर्थः। किञ्च, आद्यसूत्रेण प्रामाण्ये निश्चिते चेत् द्वितीयादिसूत्राणां प्रवृत्तिः, तर्हि द्वितीयाध्यायादौ 'वृत्तं प्रमाणलक्षण'मिति उक्तकीर्तनभाष्यं च न स्यादित्याह—**वृत्तं प्रमाणलक्षणमिति चेति** ॥

किञ्च, आद्ये सूत्रे वेदस्यार्थवत्त्वे अस्मिन् सूत्रे तस्य कार्यत्वे च निर्णीते मन्त्रार्थवादादेरपि सम्भावितस्तुत्यादिद्वारा का(र्यत्व)[यार्थत्वेन]चोदनान्व(यो)[यस्य]निर्णीतत्वादकार्यार्थत्वादिति विरुद्धा प्रतिपत्तिर्न स्यात्, ततः पूर्वपक्षाभावात् अर्थवादाधिकरणं न स्यादित्याह—**मन्त्रार्थेति**। धर्मनिर्णयार्थेन शास्त्रेण तस्य सर्वो वेदार्थः कार्यत्वान्निर्णीत इति भाट्टाशयं, वेदार्थनिर्णायकेन शास्त्रेण

**चोत्तरत्रैव निरस्यते। अतः पूर्वोक्तेन न्यायेन कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तो विचारितश्च न वस्तुनिष्ठः, इत्यतो वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यते—'अथातो ब्रह्मजिज्ञासा' इति ॥**

॥ इति पञ्चपादिकायां द्वितीयवर्णकं समाप्तम् ॥

---

कार्यतया निरूपितत्वात् सिद्धो वेदार्थो नास्ति(चेत्)[अ]विचारित इति प्राभाकरमतं च अपास्तं निगमयति—**अत इति**। सूत्रद्वयाभ्यामप्रक्रान्तः पर्युदस्तश्चाधर्मः परिहाराय न्यरूपि, तद्वत् ब्रह्मापीत्यत्राह—**विचारितश्चेति**। द्वादशाध्याय्यां प्रत्यक्षरं निरूपणेऽपि ब्रह्मविचाराभावादित्यर्थः ॥

॥ इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां द्वितीयवर्णकं समाप्तम् ॥

---

## ॥ अथ तृतीयवर्णकम् ॥

तत्र अथशब्द आनन्तर्यार्थः परिगृह्यते नाधि-
कारार्थः। ब्रह्मजिज्ञासाया अनधिकार्यत्वात् इत्यादिभाष्यम्।
तत् जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वे युज्यते। अधिक्रिया-
योग्यस्य ब्रह्मणस्तज्ज्ञानस्य वा प्राधान्येनानिर्देशात् प्रधानस्य च
इच्छाया अनधिकार्यत्वात्। अयं तु जिज्ञासाशब्दो विचार-
वचनो मीमांसापरपर्यायः प्रयुक्तोऽभियुक्तैः—'इदमतो जिज्ञा-
सन्ते—किं क्रतुगुणकमुपासनं स्वामिकर्म? उत ऋत्विक्कर्मेति'।
'इदं तु जिज्ञास्यम्—किं नु खल्विमौ तप्यतापकावेकस्यात्मनो

---

व्याचिख्यासितस्येति सूचितमगतार्थत्वं प्रासाधि। अथपदव्या-
ख्यानभाष्येषु आदिभाष्यमयुक्तम्, ब्रह्मणः तज्ज्ञानस्य वा विचारद्वारा आर-
म्भार्हत्वादित्याशङ्क्य, जिज्ञासाशब्दस्यावयवार्थत्वाद्युज्यते इत्याह—(अ)[तत्रा]-
थशब्द इति। इति च तत् आदिभाष्यं चेति विग्रहः। कथमित्यत्राह—
अधिक्रियेति। तर्हि प्रधानस्यारम्भार्थोऽथशब्दः इत्यत्राह—प्रधानस्येति।
इच्छाया विषयसौन्दर्यात् स्वयं जन्यत्वेन पुरुषप्रयत्नानर्हत्वात् तदुत्तरत्र प्रत्यधि-
करणमप्रतिपाद्यत्वाच्चेति शेषः। विचारे रूढत्वान्नास्यावयवार्थता रूढिर्यो-
गमपहरतीति न्यायादिति शङ्कते—अयं त्विति। कथं रूढत्वं इत्यत्राह—
मीमांसेति। यतः सन्दिग्धः सप्रयोजनश्च अतो विचार्यते इति वक्तव्ये,
अस्मद्भाष्य विचारपर्यायतया भाष्यकारैः जिज्ञासाशब्दप्रयोगादित्यर्थः।

---

जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वेऽप्येतद्भाष्यं न युज्यते, कथम्? ब्रह्मजिज्ञासाशब्दा-
वयवार्थभूतज्ञानस्यानुष्ठेयत्वात् ब्रह्मणोऽपि साध्यप्रमितिविशिष्टरूपेण साध्यत्वादिति; तत्राह-
अधिक्रियायोग्यस्येति। इच्छाविशेषणं ज्ञानम्, ब्रह्म च ज्ञानविशेषणम्, इत्युभयोरुप-
सर्जनत्वात् नोपसर्जनं पदं पदान्तरेण सम्बध्यते इत्यारम्भवाचकाथशब्देन तदुभयं न
सम्बध्यत इत्यर्थः। तर्हि अवयवार्थ एव स्वीक्रियताम्, तथा सति भाष्यस्योपपन्नत्वादित्या-
शङ्कयाह—अयं त्विति॥

भेदौ? उत जात्यन्तरम्? इति। धर्ममीमांसाभाष्यकारोऽपि संघातमेव प्रयुङ्क्ते 'धर्मं जिज्ञासितुमिच्छे' दिति। संघातवाच्यत्वात् विचारस्य। अन्यथा एवमवक्ष्यत् 'धर्मं ज्ञातुमिच्छे' दिति। अत एव 'धर्माय जिज्ञासा धर्मजिज्ञासे' ति संघातस्यार्थवत्त्वमङ्गीकृत्य चतुर्थीसमासो दर्शितः। तदनुसारेण चैतानि भाष्याणि—'एवं वेदवाक्यान्येवैभिर्विचार्यन्ते' 'वेदवाक्यानि विचारयितव्यानि' 'कथं वेदवाक्यानि विचारये' दिति च। पुनश्च 'क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' 'क्रत्वर्थपुरुषार्थौ जिज्ञास्येते' इति। इहापि भाष्यकारो वक्ष्यति 'तस्माद्ब्रह्म जिज्ञासितव्य' मिति। पुनश्च 'वेदान्तवाक्य-

---

एव प्रयोगान्तरमिदन्त्विति। शाबरेऽपि प्रयोगोऽस्तीत्याह—**धर्ममीमांसेति**। ज्ञानेच्छायामेवायं प्रयोगः किं न स्यादित्यत्राह—**अन्यथेति**। तस्य स्वशब्देनैवोक्तत्वात् सन् व्यर्थस्स्यादित्यर्थः॥

इतोऽपि रूढ इत्याह—**अत एवेति**। तदेव कुत इत्यत्राह—**चतुर्थीति**। विचारविवक्षया तस्य प्रथमं फलाकाङ्क्षित्वात्तादर्थ्यचतुर्थीसमासो दर्शितः। अन्यथा इच्छायाः प्रथमं कर्माकाङ्क्षित्वात् कर्मणिषष्ठीसमासं कुर्यादित्यर्थः। शाबरे सर्वत्र जिज्ञासाशब्दो विचारे प्रयुक्त इत्यत्र जिज्ञासाशब्दस्थाने विचारपदप्रयोगोऽपि लिङ्गमित्याह—**तदनुसारेणेति**। पूर्वत्रैव प्रयोगान्तरं—**पुनश्चेति**। अस्मिन् सूत्रेऽपि असद्भाष्यकृत्प्रयोगोऽप्यस्तीत्याह-**इहापीति**। तैः तत्पदस्थाने मीमांसाशब्दोऽपि प्रयुक्त इत्याह—**पुनश्चेति**।

---

**सङ्घातमिति**। अखण्डशक्तिमाश्रित्येत्यर्थः। जिज्ञासापदस्याखण्डशक्त्यभावे धर्ममिच्छितुं इच्छेदिति अर्थो व्याहतः स्यात्, अतोऽखण्डशक्त्या विचारविषयत्वमेवाङ्गीकृत्यैवमुक्तवानित्याह—**सङ्घातवाच्यत्वादिति**। अखण्डशक्त्या विचारार्थत्वमङ्गीकृत्य दुःखरूपविचारस्य फलमेव प्रथमं दर्शनीयं यतः, अत एव धर्मायेति विगृहीतवानित्याह—**अत एवेति**॥

**मीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते इति। अतः संघातस्यार्थवत्त्वादधिकारार्थता युज्यते। शास्त्रवचनो हि जिज्ञासाशब्दः। तेन ब्रह्मजिज्ञासा अधिकृता वेदितव्येति ॥**

**उच्यते—नायं जिज्ञासाशब्दः परित्यक्तावयवार्थः केवलमीमांसापर्यायः प्रयुज्यमानो दृश्यते। नापि स्मरणमस्ति। न चावयवार्थेनार्थवत्त्वे सम्भवति समुदायस्यार्थान्तरकल्पना युक्ता। ननु न वयं कल्पयामः, दर्शितः शिष्टप्रयोगः। न—तस्यान्यथासिद्धत्वात्। कथमन्यथासिद्धत्वम्?। अन्तर्णीतविचारार्थत्वा-**

---

रूढौ फलमाह—**अत इति**। तर्हि विचा (रस्यानर्ह) [रस्य अधिकारार्ह]-त्वमुक्तं स्यात् न शास्त्रस्येत्यत्राह—**शास्त्रवचनो हीति**। शास्त्रस्य(विचारार्ह)-[अधिकारार्ह]त्वात् विचारवाची जिज्ञासाशब्दः शास्त्रवाची, अतः तदारम्भार्थोऽथशब्द इत्यर्थः ॥

**उच्यत इत्यादिः** परिहारः। किं प्रयोगाद्रूढिरुच्यते? पाणिन्यादिस्मरणाद्वा? न्यायात् कल्प्यते वा? नाद्य इत्याह—**नायमिति**। न मध्यम इत्याह—**नापीति**। नान्त्यः, रूढिर्योगमपहरतीति न्यायस्य क्लृप्तरूढिविषयत्वात् क्लृप्तकल्प्ययोः क्लृप्तं बलवदिति न्यायाच्चेत्याह—**न चावयवेति**। क्लृप्तावयवप्रयोगाभावं साधयितुं चोदयति—**नन्विति**। प्रयोगस्य नैवम्, शक्त्या अन्यथासिद्धत्वान्न तद्बलाद्रूढिः कल्प्येत्याह—**न तस्येति**। **कथमन्यथेति**। विचारस्य जिज्ञासाशब्दावयवार्थत्वाभावादिति शङ्कते—**अन्तर्णीतेति**। अन्तर्गतो विचारो यस्मिन्नर्थे तदर्थत्वादवयवस्येत्याह—

---

**शास्त्रवचनो हीति**। विचारवचन इत्यर्थः। एवं सत्यारम्भार्थत्वमुपपन्नमित्याह—**तेनेति** ॥

अवयवार्थद्वारेण लक्षणया अन्तर्णीतं विचारं विवक्षित्वा आचार्याः प्रयुञ्जते नाखण्डशक्त्येति परिहरति—**उच्यत इति**। **स्मरणमिति**। पाणिनिस्मरणमित्यर्थः। अखण्ड-

**जिज्ञासाशब्दस्य। तथा हि—विचारपूर्वकसाध्यज्ञानविषयेच्छा जिज्ञासाशब्दात् प्रतीयते, नोपदेशमात्रसाध्यज्ञानविषया। एवं प्रयोगप्रत्यययोर्दर्शनात्। तेन जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वात् युक्तमुक्तं 'ब्रह्मजिज्ञासाया अनधिकार्यत्वा' दिति॥**

**नन्वेवमपि कुत एतत्? अन्तर्णीतं विचारमाश्रित्य शब्दतो गुणत्वेऽप्यर्थलक्षणेन प्राधान्येन ब्रह्मतज्ज्ञानयोरधि-**

---

तदेव कुत इत्यत्राह—**तथा हीति**। ततश्च विचारस्य अवयवार्थत्वाभावेऽपि अवयवार्थसम्बन्ध[रूप]लक्षणया विचारे जिज्ञासाशब्दप्रयोगोऽन्यथासिद्ध इत्यर्थः। यद्वा, विचारविशिष्टज्ञानस्य अवयवार्थत्वाद्विचारोऽप्यवयवार्थ इत्यर्थः। जानातेरिच्छार्थसन्नन्तस्य कथं विचारविशिष्टार्थतेत्यत्राह—**एवमिति**। सर्वात्मना ज्ञातेऽज्ञाते च ज्ञानेच्छायोगात् सन्दिग्धतया अर्थे परोक्षतया ज्ञाते शब्दैकगम्ये विचारेण निश्चयेच्छायां अपरोक्षेच्छायां वा त्वदुक्तप्रयोगप्रत्यययोर्दर्शनादित्यर्थः। स्मरणाभावस्य चासाधकत्वात् युक्तमुक्तं भाष्यमित्याह—**तेनेति**॥

ब्रह्मतज्ज्ञानयोः शब्दतो गुणत्वेऽपि ज्ञेयतयोत्पाद्यतया वा उद्देश्यत्वेन प्राधान्यादन्तर्णीतं विचारमाश्रित्यारम्भयोग्यत्वाच्च तदारम्भार्थता अथशब्दस्य किं न स्यात्? शब्दतः प्रधानेनान्वयो न त्वर्थतः इत्यत्र नियामकाभावादिति शङ्कते—**नन्वेवमपीति**। एतद्व्यनक्ति—**अन्तर्णीतेति**। यद्वा, शाब्दान्वये शब्दतः प्रधानेनैव (तेन)अन्वयः अन्यथा प्रयाजादेः स्वर्गादिना अन्वयापातादित्यत्राह—**अन्तर्णीतमिति**। ब्रह्मण इष्यमाणतज्ज्ञानस्य चानुष्ठानानर्हत्वेन वाक्यतो गुणत्वेऽपि (पदा) [अ]र्थतो मुख्यत्वेन तद्द्वारा अन्तर्णीतं विचारं लक्षणया वा अवयवार्थत्वेन वा स्वीकृत्य तस्य अनुष्ठानयोग्यत्वेन वाक्यतात्पर्याय शब्दतः प्राधान्याद(न)ारम्भयोग्यत्वाच्च विचारारम्भार्थोऽथशब्दः किं

---

शक्त्या विचारार्थत्वं मा भूत्, क्लृप्तावयवशक्त्या विचारार्थत्वसम्भवात् अनधिकार्यत्वादिति भाष्यासङ्गतत्वं दुष्परिहरमित्याक्षिपति—**नन्वेवमिति**। आरम्भार्थत्वे सत्यनारभ्यत्वं

कार्ययोग्यत्वाच्चाधिक्रियमाणत्वमङ्गीकृत्याधिकारार्थत्वं किमिति न गृह्यते ? येन शब्दलक्षणेन प्राधान्येनेच्छाया अनधिकार्यत्वादानन्तर्यार्थत्वमेव परिगृह्यते इति । उच्यते—शास्त्रस्यानारम्भप्रसङ्गादधिकारार्थत्वानुपपत्तेः । अधिकारार्थत्वे ह्यप्रयोजनं शास्त्रं काकदन्तपरीक्षावदनारभ्यं स्यात् । तत्र कस्याधिकार उच्येत ॥

ननु ब्रह्मज्ञानं प्रयोजनम्, तदर्थः शास्त्रारम्भः । न—ब्रह्मज्ञाने अर्थित्वानुपपत्तेः । ब्रह्मज्ञानाद्धि मनसोऽपि वियोगात् निखिलविषयानुषङ्गनिवृत्तिः श्रूयते । सा च सार्वभौमोपक्रमं

---

न स्यादित्यर्थः । मुख्यार्थेनेतरान्वयो न लक्ष्यादिनेत्यत्राह—**येनेति** । वाक्यतः प्रधानेनान्वयनिय(मो न)[मेन]मुख्येनान्वयेनानन्तर्यार्थता स्यादित्यर्थः। इच्छाया इति ब्रह्मतज्ज्ञानयोरप्युपलक्षणम् । यया कयाचिन्नीत्या विचारेणाथशब्दार्थान्वयोऽस्तु, तथापि नारम्भार्थता शास्त्रानारम्भापातादित्याह—**उच्यत इति** । कथमनारम्भापात इत्यत्राह—**अधिकारार्थत्वे इति** । प्रयुज्यते अनेनेति प्रयोजनमधिकारः । आरम्भार्थत्वे अथशब्दस्य आनन्तर्याभिधानमुखेन साधनचतुष्टयाख्यविशिष्टाधिकारासमर्पकत्वादनधिकारं शास्त्रं अनारभ्यं स्यादित्यर्थः ॥

अस्तु तर्हि फलतः सर्वाधिकारं शास्त्रमित्याशङ्कते—**ननु ब्रह्मेति** । अनुपपत्तिं व्यक्तीकर्तुमाह—**ब्रह्मज्ञानाद्धीति** । ततः किमित्यत्राह—**सा चेति** ।

---

स्यादित्यसङ्गतमिति ; तत्राह—**अधिकारार्थत्वे इति** । [अथशब्देन] आनन्तर्याभिधानमुखेन नित्यानित्यविवेकादिपुष्कलकारणं पर्यवसानवृत्त्या अवबोध्य शास्त्रीयाधिकारिविशेषणं च तदेव न्यायेनोपपाद्य सामान्येन हितसाधनत्व[पर]विध्यपेक्षितविशेषोऽपि इष्यमाणमोक्ष एवेति चोपपाद्य तत्कामिनं चाधिकारित्वेन न्यायत उपपादयति अथशब्दः इत्यनङ्गीकारे, प्रयोजनाधिकारिणो[र]भावा[द]नारभ्यत्वात् कस्यारम्भमथशब्दो [वदेदित्यर्थः।] न-आनन्तर्याभिधानमुखेन रात्रिसत्रन्यायेनार्थवादस्थमोक्षफलस्य तत्साधनज्ञानस्य च न्यायेनोपपादनानङ्गीकारे तत्कामिनोऽधिकारित्वेनान्वयोऽनुपपन्न इत्यभिप्रेत्याह—**न-ब्रह्मज्ञान इति** ॥

ब्रह्मलोकावसानमुत्कृष्टोत्कृष्टसुखं श्रूयमाणं सोपायं निवर्तयति। अतो ब्रह्मज्ञानादुद्विजते लोकः, कुतस्तत्र प्रवृत्तिः। ननु आनन्दरूपतापि ब्रह्मज्ञानादाप्यते अतस्तदर्थी प्रवर्तते तत्र। नैवम्—न हि ब्रह्मानन्दोऽननुभूतपूर्वोऽनुभूतभोग्यसुखाभिलाषं मन्दीकर्तुमुत्सहते, येन तदुज्झित्वा ब्रह्मज्ञाने प्रवर्तेत। ननु परितृप्तरूपतापि ब्रह्मज्ञानात्, अतः परितृप्तः किं कामयते? अतृप्तिनिमित्तकत्वात् कामस्य। तथा च श्रुतिः—'आप्तकामः आत्मकामः' इति। स्मृतिरपि-'आत्मलाभान्न परं विद्यते' 'एतद्-बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' इति। न—तृप्तेरेवोद्वेग-दर्शनात् विषयविच्छेदात्मिकायाः। तथा च वक्तारो भवन्ति—'अहो कष्टं किमिति सृष्टिरेवं न बभूव, यत् सर्वदैव भोक्तुं सामर्थ्य-मतृप्तिर्भोग्यानां चाक्षयः' इति। रागिगीतं श्लोकमप्युदाहरन्ति—'अपि बृन्दावने शून्ये सृगालत्वं स इच्छति। न तु निर्विषयं मोक्षं

---

निवृत्तिरुच्यते। ततः किमित्यत्राह—**अत इति**। 'ब्रह्मविदाप्नोति परम्' इत्या-दिश्रुतेर्ब्रह्मानन्दरूपताप्यवाप्यते, ततः तदर्थिनः प्रवृत्तिः स्यादित्याशङ्कते—**नन्वानन्देति**। ब्रह्मानन्दोऽननुभूतजातीयोऽनभिलषितोऽनुभूतजातीयसुखे-च्छामप्युत्पन्नां न मन्दीकरोति, कुतः तत् त्याजयित्वा अन्यत्र प्रवर्तयतीत्याह—**नैवमिति**। ब्रह्मज्ञानात् तृप्तिः प्राप्यते नित्यतृप्तश्रुतेः, अतः कृतकृत्यः स्यात्; तथा च तृप्तिकामी ज्ञानसाधने प्रवर्तेत इत्याशङ्कते—**ननु परितृप्तेति**। ज्ञानात् कृतकृत्यता स्यादित्यत्र मानम्—**तथा चेति**। तृप्तेरुद्वेजकत्वस्यापि दर्शनात् तत्रापि न सर्वेषां कामितेत्याह—**न तृप्तेरिति**। अत्र लिङ्गम्—**तथा चेति**। तर्हि आत्मन्यानन्दात्मनि च मोक्षे न सर्वेषामिच्छेत्यत्र मानम्—**रागीति**॥

सर्वत्रैवर्णिकाधिकाराध्ययनविधिप्रयोज्यत्वाद्वेदार्थविचारः सर्वाधिकारः,

कदाचिदपि गौतम ॥' इति । मा भूत् ब्रह्मज्ञानार्थिता, वेदार्थत्वादेव ब्रह्मज्ञानं कर्तव्यम्, स्वाध्यायाध्ययनस्यार्थावबोधफलकत्वात् । स्यादेतदेवम्, यद्यर्थावबोधफला अध्ययनक्रिया स्यात् । सा ह्यधीयमानावाप्तिफलत्वादक्षरग्रहणान्ता । अथाक्षरग्रहणं निष्प्रयोजनमिति न तत्र पर्यवसानं विधेः, भवतु तर्हि सक्तूनां गतिः । तदपि न, अक्षरेभ्यः प्रयोजनवदर्थावबोधदर्शनात् । न तर्हि निष्प्रयोजनान्यक्षराणि । अतः तत्पर्यन्त-

---

अतो ब्रह्मणोऽपि वेदार्थत्वात् सर्वैः विचारः कर्तव्य इति विधितः सर्वाधिकारं शास्त्रमस्त्वित्याशङ्कते—**मा भूदिति**। विधेः कथं स्वविषयतदुपकार्यन्यविचारप्रयोजकतेत्याशङ्क्य, विधेः स्वविषयस्य दृष्टार्थज्ञानफलकत्वात् फलपर्यन्तव्यापारादवघातविधेः आवृत्तिप्रयोजकत्ववद्युक्तेत्याह—**स्वाध्यायेति** । तत्र आपातज्ञानस्य विचारासाध्यत्वात् तत्साध्योऽर्थनिश्चयः, स किमध्ययनस्य अन्वयव्यतिरेक[सिद्धं]दृष्टं फलम् ? विधेः फलपर्यन्ततासामर्थ्यकल्प्यं वा ? तदुद्देशेन विधानादधिकारिविशेषणतया शास्त्रीयो वा ? नाद्यः, अध्ययनादावृत्तिगुणकादप्यर्थनिश्चयानुदयादित्याह—**स्यादेतदिति** । न मध्यमः, तव्यप्रत्ययेन कर्मकारके स्वाध्याये फलाभिधानात् तत्रावाप्तेरन्वयव्यतिरेकदृष्टायाः सत्त्वेन शब्ददर्शनाभ्यां विरोधादित्याह—**सा हीति**। साक्षात् परम्परया वा आप्तेरपुरुषार्थत्वात् न विधिफलतेति शङ्कते—**अथाक्षरेति** । तर्ह्यर्थनिर्णयस्याध्ययनमात्रादनिष्पत्तेः, दृष्टश्रुतायाश्चाप्तेरफलत्वात्, अध्ययनस्य च दुःखरूपत्वात्, 'स्वाध्यायेनाधीयीत' इति स्वतन्त्रादृष्टफलो विधिः कल्प्यत इत्याह सिद्धान्ती—**भवतु तर्हीति** ॥

व्याकरणाद्यङ्गसहिताध्ययनादर्थनिश्चयो दृष्टः, तस्य विरोधनिरासाय विचारः प्रयुज्यते, अतो दृष्टे सति अदृष्टकल्पना न न्याय्येति शङ्कते—**तदपि नेति** । तर्ह्यवाप्ताक्षराणां परम्परया पुरुषार्थत्वाद्विधिफलता स्यादिति दूषयति

मध्ययनं न निष्फलम्। अतोऽक्षरग्रहणादेव नियोगसिद्धेः फलप्रयुक्त एवार्थावबोधः। अपि च अक्षरग्रहणान्तो विधिर्निष्प्रयोजन इति न सर्वत्र प्रयोजनवदर्थावबोधपर्यन्तता कल्पयितुमपि शक्यते। तत्रावश्यं कल्पनीया अक्षरग्रहणान्तता। तद्यथा— राजन्यस्य सत्रवैश्यस्तोमबृहस्पतिसवानामाम्नानं वैश्यस्य चाश्वमेधराजसूयसत्राणां पाठः। न च तेषामनध्ययनमेव। स्वाध्यायशब्देन सकलवेदवाचिना अध्ययनस्य विहितत्वात्॥

ननु च अश्रूयमाणाधिकारोऽध्ययनविधिः। दृष्टश्चाक्षरग्रहणे अर्थावबोधः। स कल्पनामधिकारस्य निरुन्धन्

---

**न तर्हीति**। नन्वक्षरावाप्त्यन्ते विधिव्यापारे फलवदर्थधीः निर्निमित्ता स्यादित्यत्राह—**फलप्रयुक्त इति**। विवक्षादेः प्रतिबन्धकव्यावर्तकत्वाल्लौकिकवाक्यमपि स्वयमेवार्थधीहेतुः, अतः स्वीकृतस्वाध्यायनिमित्तैव फलवदर्थधीरित्यर्थः। असार्वत्रिकी च फलवदर्थधीरित्याह—**किं चेति**। [**अपि चेति**] अतो यस्य यस्मिन् कर्मण्यनधिकारः, तस्य तद्वाक्याध्ययनं न स्यात्, प्रवृत्त्यादिफलाभावात्। तथा सत्यवश्यकल्प्या अक्षरावाप्त्यन्ततेत्यर्थः। अथ तथा वाक्यं नेत्यत्राह—**तद्यथेति**। अस्तु तर्हि तेषामनध्ययनमित्यत्राह—**न च तेषामिति**। अत्र वेदशब्दः (स्य शाब्दापरः) [स्वशाखापरः] अन्यथा अध्ययनाङ्गिमात्रेऽप्यसमर्थत्वात् मनुष्याणामनधिकारापातात्॥

अन्त्यं शङ्कते—**ननु चेति**। श्रुताधिकारे कथमर्थज्ञानमुद्दिश्य विधिरित्यत्राह—**अश्रूयमाणेति**। अधिक्रियतेऽनेन कर्मणीत्यधिकारो विधिपुरुषसम्बन्धहेतुजीवनकामादिः। श्रुताया अपि अक्षरावाप्तेः कामाश्रवणात् नाधिकारश्रवणम्। रात्रिसत्रन्यायेन कामोपबन्धकल्पनायां त्व(क्षर)[र्थ]ज्ञानहेतुत्वोपाधौ कल्प्यत्वात् उपजीव्यत्वे सति दृष्टस्यार्थज्ञानस्यैव तत्कल्पना युक्तेत्यर्थः। तर्हि विश्वजिन्न्यायात् स्वर्गकामः, वाजसनेयिनां 'ब्रह्मचर्यमागा'मित्यादिप्रकरणादुपनयनं वा अधिकारः कल्प्यत इत्याशङ्क्य, दृष्टबाधमाह—**दृष्टश्चेति**।

स्त्वयमधिकारस्य हेतुः संपद्यते। दृष्टाधिकारेषु प्रत्यक्षतस्त-
दुपलब्धावधिकारसिद्धिः। अतोऽर्थावबोधपर्यन्तः स्वाध्याया-
ध्ययननियोगः। तेन नियोगसिद्ध्यर्थमेव सकलवेदार्थविचारः॥

अत्रोच्यते—भवेदध्ययनविधेरर्थावबोधः प्रयोजनम्। नाधि-
कारहेतुता, अध्ययनात् प्रागसिद्धत्वात्। प्राक् चाधिकारज्ञानेन
प्रयोजनम्। अतो न विधेः दृष्टाधिकारत्वेनार्थावबोधसिद्धिः।
यद्येवमधिकाराश्रवणादर्थावबोधे च(प्रतिपक्ष)[प्रत्यक्षे]कल्पनानु-
पपत्तेः तस्य चाधिकारहेतुत्वानभ्युपगमादप्रवृत्तिरेवाध्ययने प्राप्ता॥

---

अस्त्वध्ययनेनार्थज्ञानं भावयेदिति विधिः, तथापि कथं तस्य विचारप्रयोजक-
तेत्यत्राह—**दृष्टाधिकारेष्विति**। दृष्टफलेषु कर्मसु विधिषु वा अध्यक्षतः
फलोपलब्धौ कर्मणो नियोगस्य वा निष्पत्तिः। अतो विधेः अर्थधीपर्यन्तं
व्यापारात् तत्प्रयोजकतेत्यर्थः। अर्थावबोधस्य योग्यतया विधिफलत्वेऽपि
अज्ञातत्वात् प्रवृत्तिहेतुत्वं नास्ति। अतो न तदुद्दिश्य विधिरित्याह—
**अत्रोच्यत इति**। न च योग्यतया स्वीकृतफलार्थं विचारप्रयोजकता
विधेः, तस्य आनुषङ्गिकफलत्वेन तद्विना अनुपपत्त्यभावादित्याशयः।
अध्ययनात् प्रागर्थस्याज्ञातत्वेनार्थविशिष्टबोधस्याज्ञातत्वेऽपि ऊर्ध्वं तदस्तीत्या-
शङ्क्य, व्यर्थमित्याह—**प्राक् चेति**॥

सम्प्रति अध्ययनविधेर्नित्याधिकारतां वक्तुं आक्षिपति—**यद्येवमिति**।
अत्राध्ययनात् प्रागर्थावबोधस्यासिद्धत्वेनाप्र(वृत्त)[वर्तक]त्वेऽपि, नाधिकारकल्पना
अध्ययनस्य। 'उपनीताध्यापयीत' इति आत्मनेपदात् श्रुताधिकारा(ध्ययन)-
[ध्यापन]विधिप्रयुक्तानुष्ठानत्वेन प्रतिबद्धप्रवर्तकभावतया विधेः प्रवर्तक-

---

**दृष्टाधिकारेष्विति**। दृष्टफलेष्वित्यर्थः। **अधिकारसिद्धिरिति**। नियोग-
सिद्धिरित्यर्थः। **नाधिकारहेतुतेति**। काम्यमानतया विधिपुरुषसम्बन्धनिमित्तता
नेत्यर्थः। **प्राक्चाधिकारज्ञानेन प्रयोजनमिति**। फलज्ञानेन प्रयोजनमध्ययनात्

अत्र केचिदाहुः—आचार्यकरणविधिप्रयुक्तस्याध्ययनस्यानुष्ठानमाधानस्येव कामश्रुतिप्रयुक्तस्येति। तदयुक्तमित्यपरे। कथम्? 'अष्टवर्षं ब्राह्मणमुपनयीते'ति यद्ययमाचार्यस्य नियोगः, माणवको न नियुक्तो भवति। अनियुक्तस्य च स्वाध्यायाध्ययने प्रवृत्तिर्न सम्भवति। किंचान्यत्—आचार्यकरणविधिरनित्यः। 'ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः' इति वृत्त्यर्थोऽधिकारः। अतः स्वेच्छातः प्रवृत्तिः। उपनयनाख्यस्तु संस्कारो नित्यः। अकरणे दोषश्रवणात्—'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।

---

त्वानुपपत्त्याख्यकल्पकाभावादिति प्राभाकराः प्राहुरित्याह—(अत्रा)[अत्र केचिदा]हुरिति। अध्ययनस्याध्यापनविधिविषयतदङ्गत्वयोरभावात् कथं तत्प्रयोज्यतेत्याशङ्क्य, अधिकारशून्यत्वे सति उपकारित्वात्, यथा आधानस्य स्वोपकार्येण प्रकटप्रवर्तकभावतया स्वानुष्ठापनशक्तिना काम्यक्रतुविधिना प्रयोज्यत्वं तद्वदित्याह—**आधानस्येति**॥

माणवकस्यैवायं विधिः, अन्यथा तस्य प्रेक्षावत्त्वात् स्वाधिकारनियोगाप्रेरितस्याध्ययने प्रवृत्त्यसम्भवादध्यापनं न सिध्येत्, ततश्च आचार्यस्य विधेरभावात् न तत्प्रयोज्यता अध्ययनस्य इत्याह—**तदयुक्तमिति**। आचार्य[करण]विधेः सत्त्वेऽप्यनित्यत्वात् न नित्याध्ययनप्रयोजकतेत्याह—**किञ्चेति**। अध्ययनस्य नित्यतां वक्तुं उपनयनस्य तामाह—**उपनयनाख्यस्त्विति**। 'अष्टवर्षं ब्राह्मणम्' इति द्वितीयाश्रुत्या माणवकगुणकर्मत्वप्रतीतेः तत्संस्कारकर्म उपनयनम्, तच्च नित्यम्—अवश्यं कर्तव्यमित्यर्थः। **अत इति**। आ-

---

प्रागेव, तत्कामिनः तत्साधनत्वलक्षणविधिना अध्ययने प्रेरितस्य अध्ययनानुष्ठानोपयोगित्वादित्यर्थः। प्रागेवाधिकारलक्षणफलज्ञाने प्रतिपन्नार्थविषयज्ञानलक्षणार्थावबोधज्ञाने सत्यर्थज्ञानं (कर्म)[कमि]विषयतया अध्ययनफलं न भवेत् अर्थज्ञानस्याध्ययनात् पूर्वमेव सिद्धत्वात् इत्येवं (पार्थ)[तात्पर्यम्।] प्रयोजकस्यानित्यत्वे प्रयोज्यस्याप्यनित्यत्वमर्थसिद्धं. भवेदित्याशङ्क्याह—**उपनयनाख्य** [इति।] [जीवन] कामनया जीवनसाधनार्थे कामना

सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्। ब्राह्मान् यौनांश्च संबन्धानाचरेद्ब्राह्मणः क्वचित् ॥' इति। संस्कारश्च स्वाध्यायाध्ययनार्थः। एवं च स्वाध्यायाध्ययनमपि नित्यम्। तथा च निन्दाश्रवणम्—'अश्रोत्रिया अननुवाक्या अनग्नयः शूद्रसधर्माणो भवन्ती'ति। एवं चेत् कथं नित्यमनित्येन प्रयुज्यत इति वाच्यम्। ननु कथमाचार्यकरणविधिरनित्यः? यावता वृत्त्यर्थो हि सः। नहि कश्चिद्विना धनेन जीविष्यति। तथा चोक्तम्—'जीविष्यति विना धनेनेत्यनुपपन्न'मिति। अतः सर्वेषां सर्वदा समीहितफलः सन् कथमनित्यः स्यात्?। भवेदेवं नित्यता फलवशेन, न शब्दात्। तथाहि—फलस्य नित्यसमीहितत्वादवश्यकर्तव्यता वास्तवी। तत्र असति

---

षोडशात् ब्राह्मणस्य आद्वाविंशात् क्षत्रियस्य आचतुर्विंशाद्वैश्यस्येत्युत्तरकालादित्यर्थः। **यथाकालमसंस्कृता इति**। विहितकाले अनुपनीतत्वादित्यर्थः। किमायातमित्यत्राह **अपूतैरिति**। उपनयनेनासंस्कृतैरित्यर्थः। तेनाध्ययनस्य किमायातमित्यत्राह—**संस्कारश्चेति**। 'आचार्याधीनो वेदमधीष्व' इति नियमविधानादध्ययनविधिरुपादानप्रमाणादाचार्योपगमनं स्वाङ्गत्वेन स्वीकरोति, उपनयनविधिश्च दृष्टसमवेतादृष्टसम्भवे स्वतन्त्रादृष्टकल्पनानुपपत्तेरुपनयनाख्यदृष्टद्वारोपगन्तृसमवेतसंस्कारस्याध्ययनाङ्गतां प्रमापयति, इत्युभयविध्युपादानादध्ययनाङ्गमुपनयनमित्यर्थः। तथा च अङ्गस्यावश्यकत्वं अङ्गिनोऽवश्यकर्तव्यतां विना न सिध्यतीत्यध्ययनस्य नित्यता सिद्धेत्याह—**एवं चेति** ॥

इतोऽपि नित्यत्वमित्याह—**तथा चेति**। **अश्रोत्रियाः अननुवाक्याः** एकां शाखामनुवाकं चानधीयाना इत्यर्थः। वृत्त्यर्थत्वादेवासौ नित्य इत्याशङ्कते—**ननु कथमिति**। फलतो नित्यत्वमुपेत्य दूषयति—**भवेदिति**। शब्दाद्वा फलसामर्थ्याद्वा अवश्यकर्तव्यं चेत् किं मानविशेषेणेत्यत्राह—**तथा हीति**।

**शब्दव्यापारे इच्छातः कर्तव्यताप्रतिपत्तिः स्यात् न कर्तव्यताप्रतिपत्तेरिच्छा। शाब्द्यां हि नित्यकर्तव्यताप्रतिपत्तौ शब्दस्य सर्वदा सर्वान् प्रत्येकरूपत्वादिच्छापि तद्वशवर्तिनी तथैव स्यात्, औचित्यादिभावेऽपि कस्यचित् कथंचित् कचित् कदाचिदिच्छायाः। प्रमाणतस्तावन्नित्यः। तेन नित्येन तथाविधमेव प्रयुज्यत इति न नित्यानित्यसंयोगविरोधः। फलवशात्तु तत्कर्तव्यताप्रतिपत्तौ**

---

वास्तवी—वस्तुसामर्थ्यनिबन्धनेत्यर्थः। तेनाध्यापनस्य नित्यकर्तव्यत्वे किमायातमित्यत्राह—**शाब्द्यां हीति**। अध्यापनविधिर्हि शब्दान्नित्यतया प्रतिपन्नश्चेदविशेषेण स्वाधिकारोपाधौ सर्वदा सर्वान् प्रत्यनुष्ठेयेच्छामुत्पाद्य प्रवर्तयति, प्रामाणिककर्तव्यताबुद्धेः स्वोपाधौ सङ्कोचाभावात्। इच्छाधीने कर्तव्यताज्ञाने त्विच्छासङ्कोचे कर्तव्यताबुद्धिसङ्कोचान्न नित्यमध्यापने प्रवृत्तिरिति विशेषोऽस्तीत्यर्थः॥

प्रामाणिकनित्यकर्तव्यताधीनापीच्छा कचिद्देशे काले वस्तुनि च कारकसामर्थ्याभावादिनौचित्यात् प्रतिहन्यते, तत्र कथं नित्यकर्तव्यताधीननित्येच्छया नित्यप्रवृत्तिरित्यत्राह—**औचित्यादिभावेऽपीति**। प्रमाणतः तावन्नित्योऽध्यापनविधिः प्रत्यवायभयादिद्वारेण यावच्छक्यमनुष्ठापयतीत्यर्थः। ततश्च नित्येनाध्यापनविधिना नित्यमध्ययनमनुष्ठाप्यत इति युक्तमित्याह—**तेनेति**। प्रमाणतो विधिनित्यत्ववदिच्छातोऽपि कर्तव्यतानित्यत्वं किं न स्यादित्यत्राह—**फलवशात्त्विति**। अनित्यैव सा स्यादिति शेषः। (अध्य-

---

स्यात् अर्थकामनया अर्थार्थोपनेतृत्वाध्यापयितृत्वकामना स्यादित्याह—**अवश्यकर्तव्यता वास्तवीति**। **कस्यचिदिति** व्याध्या(भ्युपवृत्ताविति)[द्युपद्रव]निमित्तः कर्तृनिबन्धनः सङ्कोच उक्तः। **कथञ्चिदिति** इति कर्तव्यतादौर्लभ्यादिनिमित्तः सङ्कोच उक्तः। **कचिदिति** देशोपप्लवादिनिमित्तः सङ्कोच उक्तः। **कदाचिदिति** दुष्कालादिनिमित्तः सङ्कोच उक्तः। **इच्छाया औचित्यादिभावेऽपीति**, एतैर्निमित्तैरेतावदिदानीमुचितमिति सङ्कोचेनेच्छायाः परिपूर्णतया अनुष्ठापकत्वासम्भव उक्तः। नित्यविधिरनुष्ठानसङ्कोचसहोऽपि तत्स्वरूपलोपं न सहत इत्याह—**प्रमाणत इति**॥

**यद्यपि नित्याभिलषितं फलम्, तथाप्युपायान्तरादपि तत्सिद्धेः तदेकोपायत्वेऽप्यालस्यादायासासहिष्णुतया वा कामस्य कुण्ठीभावे न कर्तव्यतायाः प्रतिपत्तिरित्यनित्यत्वे सति न तेन नित्यस्य प्रयोज्यत्वमुपपद्यते ॥**

**ननु पितुः पुत्रोत्पादनविधिरनुशासनपर्यन्तः श्रूयते— 'तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः तस्मादेनमनुशासती'ति । अतः पुत्रोत्पादनस्य नित्यत्वात् तस्य चानुशासनपर्यन्तत्वात् तदाक्षिप्तत्वाच्चोपनयनाध्ययनयोः कथमाचार्यकरणविधिरनित्यः स्यात्? कथं वा अध्ययनस्यार्थावबोधपर्यन्तता न भवेत्?**

---

यनस्य)[अर्थस्य]नित्येष्टत्वात् कर्तव्यताधीनिमित्तेच्छापि नित्येत्यत्राह— **यद्यपीति । उपायान्तरात्** याजनादिनेत्यर्थः । अन्यत्राशक्तस्य नित्या सा स्यादित्यत्राह—**तदेकेति** । प्रतिग्रहे कस्याप्यशक्तिर्नैत्यपेरर्थः ॥

आचार्य[करण]विधेः स्वयमनित्यत्वेऽपि नित्यपुत्रोत्पादनविधिशेषत्वात् नित्यतां वक्तुमाह—**ननु पितुरिति** । इदमिदं च कुर्विति कर्तव्यम(प्य)नुष्ठापितो लोकार्हः, तस्मादेवमनुष्ठापितं पुत्रं लोक्यमाहुः, यस्माच्चैवमाहुः तस्मात् पुत्रमनुष्ठापयेदिति विधीयत इत्यर्थः । ततश्च नित्यपुत्रोत्पादनविधेः अनुष्ठापनान्तत्वात् (तदेकदेशयो)[तच्छेषयो]रुपनयनाध्यापनयोर्नित्यपुत्रोत्पादनविध्याक्षिप्ततया नित्यत्वात् विधेर्नित्यता सिद्धेत्याह—**अतः पुत्रोत्पादनस्येति** । अनुशासनम्—सर्वकर्तव्योपदेशः, स चोपनीय सर्वकर्तव्यबोधकवेदाध्यापनात् तयोः नित्यपुत्रोत्पत्तिविध्याक्षिप्तत्वात् नित्यतेत्यर्थः । अनुष्ठापनान्तत्वे तच्चाध्येतुरनुष्ठातुरर्थज्ञानं विना न शक्यमित्यध्ययनस्यार्थज्ञानफलतापि स्यादित्याह— **कथं वेति** । यद्वा, सर्वोपदेशोऽर्थज्ञानफलः श्रोतुरध्येतुरित्यध्ययनस्यार्थधीफलत्वं च स्यादित्याह—**कथं वेति** ॥

उच्यते—नानेन पुत्रानुशासनं विधीयते पुत्रोत्पादनविधिशेषत्वेन स्वतन्त्रमेव वा। किन्तु सम्प्रत्तिकर्मविधिशेषोऽयमर्थवादः। तेनैकवाक्यत्वात्। अतो यथाप्राप्तमनुशासनमनुवदति। किं तदनुशासनम्? कथं वा तत् प्राप्तवदनूद्यते? उच्यते—नित्यस्य पुत्रोत्पादनविधेः प्रयोजनं यत् पितॄणां लुप्तपिण्डोदकक्रियाणां नरकपातश्रवणात् पितृपिण्डोदकक्रियाद्यनुष्ठानेन नरकपातत्राणम्। न च शास्त्रीयेण परिज्ञानेन विना तदनुष्ठानं सम्भवति। तेन पित्रा नित्यमात्मनः पुत्रोत्पादनाधिकारं परिसमापयितुं पुत्रस्य अवश्यकर्तव्यार्थविषयं गर्भाष्टवर्षेण ब्राह्मणेन त्वयोपनयनाख्यः संस्कारः कारयितव्यो यः स्वाध्यायाध्ययनार्थो विहित इति यदनुशासनं तदिहानूद्यते 'तस्मादेनमनुशासति' इति। तथा च

---

दूषयति—**उच्यत इति**। अस्तु तर्हि स्वतन्त्रविधिः तथापि नित्यपुत्रानुशासनविध्यनुष्ठेयत्वात् नित्यता स्यादित्यत्राह—**स्वतन्त्रमेव वेति**। 'अथातः सम्प्रत्तिः' इत्यादिना उक्तानां वेदतदर्थतत्फलानां स्वानुष्ठेयानां मरणकाले पुत्रे समर्प्यमाणानां पुत्रेणानुष्ठेयतया स्वीकारः सम्प्रत्तिकर्म। नन्वेकवाक्यत्वेऽप्युपरिधारणवद्विधिः स्यादित्याशङ्क्य, अनुवादत्वादर्थवाद इत्याह—**अत इति**। स्वाभीष्टमनुशास(नम)[ना]नुवादं(तद्य)[व्य]क्तीकर्तुं चोदयति—**किं तदिति**। अस्योत्तरं वक्तुं पुत्रोत्पत्तिविधेः फलमाह—**नित्यस्येति**। ततः किमित्यत्राह—**न चेति**। अतः पुत्रोत्पत्तिविध्याक्षिप्ततया प्राप्तानुशासनं सम्प्रत्तिकर्मविधिशेषे तत्स्तुत्यर्थमनूद्यत इत्याह—**तेनेति**। मा भूदेतद्वाक्यमनुशासनविधायकम्, तथापि नित्यपुत्रोत्पत्तिविध्याक्षिप्तानुशासनत्वादुपनयना(ध्यय)[ध्याप]नयोः नित्यता प्राप्तेत्यत्राह—**गर्भाष्टवर्षेणेति**। सर्वकर्तव्यानुष्ठापनपर्यन्तं पितुरायुर्नियमाभावात् उपदेशोऽनुशासनं नानुष्ठापनमित्यर्थः। यद्वा, उपनयनान्तं पितुरायुर्नियमाभावात्तयोः कारयितव्यत्वोपदेशोऽनुशासनमित्यर्थः। अत्र नियामकम्—**तथा चेति**॥

लिङ्गम्—'श्वेतकेतुर्हारुणेय आस। तं ह पितोवाच। श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति' इति। तदेवमनित्येनाचार्यकरणविधिना कथं नित्यं प्रयुज्यते इति वाच्यम्। किं च, आचार्ये प्रेते आचार्यान्तरकरणं न प्राप्नोति। न ह्यधिकारी प्रतिनिधीयते। नाप्यधिकारः। अधिकारी स्वाधिकारसिद्ध्यर्थं साधनान्तरभ्रेषे साधनान्तरं प्रतिनिधाय स्वाधिकारं निर्वर्तयतीति युक्तम्। एवमेषा बहुदोषा कल्पना दृश्यते। तस्मात् माणवकस्यैष नियोगः। कथं गुणकर्तृव्यापारसंबद्धो विधिः प्रधानकर्तृस्थो भवति ?

---

माणवकस्य एकस्मिन्नाचार्ये [मरणादिना]निवृत्ते आचार्यान्तरादध्ययननित्यता सिध्यतीत्यत्राह—**किञ्चेति**। इयं च शङ्का नेत्यर्थः। यद्वा, अध्ययनस्याध्यापनविधिप्रयुक्तौ दोषान्तरम्—**किञ्चेति**। माणवकस्य स्वविध्यप्रेरितत्वादाचार्यप्रेरणाभावाच्चाध्ययनसिद्ध्यर्थं आचार्यान्तरकरणायोगादित्यर्थः। पूर्वमेवाचार्येणाध्ययनसमाप्तौ प्रेरितत्वात् माणवकस्य प्रतिनिधिन्यायेनाचार्यान्तरकरणं स्यादित्यत्राह—**न हीति**। **अधिकारीति** तत्र हेतुः। ततः कस्तस्य प्रतिनिधिं कुर्यादिति शेषः। न च माणवकस्य नष्टे यजमाने ऋत्विग्भिः सामिकृतकर्मसमाप्तिवदध्यापनसमाप्त्यर्थं वा, सामिकृते यागे निवृत्ताधिकारसमाप्तिवत् अध्ययनसमाप्त्यर्थं वा स्वस्याध्ययनानन्तरमध्यापनार्थं वा आचार्यान्तरगमनम्, ते[षां] पुनरुपनयनाभावेन स्वाध्यापनार्थं स्वीकारायोगादिति मत्वा आह—**एवमेषेति**। अध्यापने विधिमुपेत्याध्ययनस्य तत्प्रयुक्तिकल्पनेत्यर्थः॥

ननूप(नय)[गम]नाध्ययनयोः स्वविधिप्रयुक्तत्वे सति तेनैवोपनयनाध्यापनयोः प्रयुक्तिसिद्धेः तयोः वि(ध्य)[ध्यानर्थक्यं] इत्याशङ्कां व्युदस्यन्निगमयति—**तस्मादिति**। एतद्विरुद्धमिति चोदयति—**कथमिति**। किं शब्द-

---

**नाप्यधिकार इति**। विधिपुरुषसम्बन्धनिमित्तजीवनादीत्यर्थः॥

यथा 'एतया ग्रामकामं याजयेत्' इति ग्रामकामस्य यागो विधीयते गुणकर्तृव्यापारः प्राप्तोऽनूद्यते तस्य याजनस्य वृत्त्यर्थत्वात्, एवमिहापि गुणकर्तृव्यापारो वृत्त्यर्थत्वेन प्राप्तोऽनूद्यते ॥

(अत्रैके प्रत्यवतिष्ठन्ते—)युक्तं याजयेदिति प्रधानकर्तृव्यापाराभिधायिनो यजतेः परस्य गुणकर्तृव्यापाराभिधायिनः शब्दान्तरस्य णिच उपादानात् तस्य चाविधेयत्वात् प्रधानकर्तृव्यापारस्याभिधानम् । इह पुनरेको नयतिः माणवकस्य व्यापारं ब्रूयादाचार्यस्य वा । न तावन्माणवकस्य नयत्यर्थे कर्तृत्वम् । कर्मकारकत्वात्तस्य । अतोऽनभिधेयव्यापारः कथं नियुज्येत । न हि परव्यापारे परो नियोक्तुं शक्यते । स्वव्यापारे हि पुरुषस्य नियोगः । तस्मान्नैष माणवकस्य नियोगः । तदेवमाचार्यकरणविधिप्रयुक्तत्वादध्ययनस्य नात्राधिकारचिन्तया मनः खेदयितव्यमिति ॥

---

विरोधः ? न्यायविरोधो वा ? नाद्यः, अन्यत्रापि दर्शनादित्याह—**यथैतयेति** । नान्त्यः, प्राप्तानुवादेन अप्राप्तविधानादिति सदृष्टान्तमाह—**ग्रामकामस्येति** । याजयेदित्यत्र प्रधानकर्तृव्यापारस्य धातुनोक्तत्वात् गुणकर्तृव्यापारस्य णिचोक्तस्य प्राप्तत्वेनाविधेयत्वाच्च विधेयत्वं युक्तम्, उपनीयेत्यत्र तु प्रधानकर्तृव्यापारस्य अभिधायकाभावेनाप्रतीतत्वान्न विधेयता, अतो दक्षिणाद्यभावादप्राप्तो गुणकर्तृव्यापारो विधेय इति शङ्कते—**युक्तमिति** । अस्तु तर्हि अध्यापयेत् इत्यत्र प्रधानकर्तृव्यापारविधिरित्याशङ्क्य, उपनयीतेत्यत्र यत्कर्तृको व्यापारो विहितः तत्कर्तृकव्यापारस्यैव विधेयतया अध्यापयीतेत्यत्रापि वाक्यसारूप्याय प्रत्यभिज्ञायमानत्वान्नैवमिति मत्वा आह—**तस्मान्नेति** ॥

आचार्यस्य विधेयाभावात् परिशेषान्माणवकस्यैवायं विधिरिति दूषयति

उच्यते—माणवकस्यैवायं नियोगः। नाचार्यस्येह किञ्चिद्विधेयमस्ति। कथम्? यत्तावत् उपनयीतेत्यस्याभिधानतो न्यायतश्च निरूप्यमाणोऽर्थ एतावान् प्रतीयते—आत्मानमाचार्यं कर्तुं कञ्चिदात्मसमीपमानीयाध्यापयेदिति। एतच्च सर्वं वृत्त्यर्थत्वेन ब्राह्मणस्यान्यत एव प्राप्तम्, नात्र विधातव्यम्। तत्र कमध्यापयेदिति विशेषाकाङ्क्षायां ब्राह्मणमष्टवर्षमिति विशेषस्य विधायकमेतत् स्यात्। तत्र च प्राप्ते व्यापारे अर्थद्वयविधानमेकस्मिन् वाक्ये न शक्यते वक्तुम्। वाक्यभेदप्रसङ्गात्। अतो नाचार्यस्य किञ्चिद्विधेयमिहास्ति। ननु

---

—उच्यत इति। प्रयोजकव्यापारे श्रूयमाणे कथमाचार्यस्य विधेयाभाव इति शङ्कते—कथमिति। तदभावं वक्तुं प्रतीतमर्थमाह—उपनयीतेति। माणवकमुपनयीतेत्युक्ते माणवकस्याचार्यसमीपगमनं शब्दात् प्रतीयते नाचार्यस्य माणवकसमीपगमनम्, अन्यथा माणवकमुपगच्छेदिति स्यात्, न्यायतश्चैवं प्रतीयते; अक्षरशिक्षके बालानामेव गुणभावदर्शनादित्यर्थः। ततः किमित्यत्राह — एतच्चेति। गुरुदक्षिणाद्यङ्गोपेतोपगमनादिविधानादाचार्यव्यापारो वृत्त्यर्थत्वेन प्राप्स्यते। अतो भाविनीं प्राप्तिमनूद्य कदाप्यप्राप्तो विधेय इत्यर्थः। अथाप्याचार्यव्यापारं प्राप्तमनूद्याधिकारस्य गुणस्य वा विधिः किं न स्यादित्याशङ्क्य, अष्टवर्षत्वब्राह्मणत्वयोः प्रयो(जायितृ)[ज्य]विशेषणत्वे(ना)[न]प्रतीतत्वे चान्यस्यासम्भवा(त्स)[त् गुणविधिः]परिशिष्यते इत्याह—तत्र कमिति। ततः किमित्याशङ्क्य, प्राप्ते कर्मणि अनेकगुणविशिष्टैककर्मविधानासम्भवात् गुणयोर्गुणिप्राधान्येन वैशिष्ट्यासम्भवाच्च एकस्मिन् वाक्ये प्र(थम)[त्येकं]गुणद्वयविधानाद्वाक्यभेदः स्यादित्याह—तत्र चेति। तस्मादुत्पत्त्यधिकारगुणविधयः प्रयोजकव्यापारे न युक्ता इत्याह—अतो नेति॥

---

नयतेः उपरिस्थितात्मनेपदेन प्राप्तमाह—आत्मानमाचार्यमिति। आत्मानमाचार्यं कर्तुं कञ्चिदध्यापयेदित्याभिधानिकार्थः। आत्मसमीपमानीयेति न्यायसिद्धोऽर्थ

माणवकस्यापि न किंचिद्विधेयमस्ति। अस्तीति ब्रूमः। कथम्? यदैव उपनयीतेति शब्दतो न्यायतश्च आत्मानमाचार्यं कर्तुमुपनयनेन संस्कृत्य कंचिदध्यापयेदिति प्रतीयते, तदैव यागश्रुतौ द्रव्यदेवतामात्रप्रतीतिवदध्ययनायोपनयनसंस्कार्योऽपि सामान्यतः प्रतीयते। तस्य च प्रेक्षावतो निष्प्रयोजने प्रवर्तयितुमशक्यत्वात् विद्यमानस्याप्यध्ययनेऽर्थावबोधस्य प्रागसिद्धेः प्रवृत्तिहेतुत्वासिद्धेः विधितोऽवश्यकर्तव्यतां प्रतिपद्य स्वयमेव प्रवर्तते। तेन 'अष्टवर्षं ब्राह्मणमुपनयीत' इति अष्टवर्षो ब्राह्मण उपसर्पेदाचार्यमित्यर्थः। ग्रामकामं याजयेत् ग्रामकामो यजेतेति यथा। नन्वेवमप्यधिकारो न लभ्यते। अस्त्यत्राधिकारहेतुर्नित्यं

---

प्रधानकर्तृव्यापारस्यापि न विधेयतेत्युक्तम्, अतः (प्राप्तिः) [प्रतीतिः] नास्तीत्याशङ्कते—**नन्विति**। दूषयति—**अस्तीति**। अप्रतीतिरुक्ता, तस्य कथं विधेयतेति शङ्कते—**कथमिति**। वाच्यत्वेन प्रतीत्यभावेऽपि धातुना लक्षणया अस्ति उपगमनस्य वाच्यार्थाविनाभावादित्याह—**यदैवेति**। यद्वा, शब्दात् जातिप्रतीतौ व्यक्तेरिवापर्यवसानवृत्त्या वा नयतेर्गमयत्यर्थत्वात् साक्षाद्वा उपगमनस्य प्रतीतिरस्तीत्यर्थः। **संस्कार्योऽपीति**। उपगन्तापीत्यर्थः। तथाप्यस्याचार्यप्रेरणया सिद्धेः किमर्थो विधिरित्यत्राह—**तस्य चेति**। उपगमनस्याविधेयत्वे दक्षिणाद्यभावात् आचार्यव्यापार एव नास्ति। अस्तित्वे बुद्धिपूर्वकारित्वाद्बटोर्न प्रवृत्तिरित्यर्थः। तर्हि काम्यविधिः स्यादित्यत्राह—**विद्यमानस्येति**॥

कस्तर्हि विधिरिति? परिशेषान्नित्य इत्याह—**विधित इति**। कथं तर्हि वाक्यविपरिणाम इत्यत्राह—**तेनेति**। येन वटोर्विधिरयमित्यवेक्ष्य सोऽधीते इति शेषः। तथापि विधिपुरुषसम्बन्धहेतुर्नास्तीत्याशङ्कते—**नन्वेवमपीति**। जातिवयसोरेकैकस्य क्रियासम्बन्धेऽपि 'अरुणया एकहायन्या'

**निमित्तं वयोविशिष्टा जातिः जातिविशिष्टं वयो वा। ननु जातिवयसी विशेषणमुपादेयस्य, अनुपादेयविशेषणमधिकारहेतुरिति स्थितिः। सत्यमस्तीयं स्थितिः। किन्तु कर्तुरधिकार इत्यपि स्थिता न्यायविद:। किं च, इह न माणवको जातिवयोविशिष्ट**

---

इत्यादिवत् क्रियाभिधानमुखेनार्थात् परस्परवैशिष्ट्यात् जातिविशिष्टं वयः शब्दद्वयतात्पर्यात् शाब्दमधिकारोऽस्तीत्याह — **अस्त्यत्रेति**। **नित्यमिति**। जीवज्जन्तोर्नियतभावीत्यर्थः। कर्तृविषयकप्रयोजकव्यापारे वटोः कर्मत्वबोधनी द्वितीया स्वव्यापारे कर्तृत्वं बोधयति। तस्य च कर्तृव्यापारे विधिसम्बन्धस्वीकारमात्रेणात्यागाच्छब्दाद्वटोः प्रथमं कर्तृत्वेनान्वयात् कर्तुरनुष्ठेयाख्योपादेयस्य विशेषणं जातिविशिष्टं वयो नाधिकारहेतुः, अनुपादेयविशेषणमधिकारहेतुरिति राद्धान्तादिति[शङ्कते]—**ननु जातीति**॥

उपगमनविधौ क्रियान्वयाभावेन शब्दयोः प्रथमान्ततया विपरिणामान्नैवं चोद्यम्, तथाप्यङ्गीकरोति—**सत्यमिति**। नियोगस्य कस्येत्यपेक्षत्वात् स्वर्गकामादेः प्रथमं नियोज्यत्वेनान्वयः; अनन्तरं मन्नियोगसाधनत्वान्मदीयमिदं कर्मेति कर्मण्यैश्व(र्या) [र्यलक्षणा]धिकारान्वयपूर्व(कत्वात्)[कः] कर्त्रन्व(या)[यः, अ]धिकारिणा(न)नुष्ठेयत्वात्। अयं राद्धान्तो नियोगपक्षेऽस्तीत्यर्थः। भावनायाः क्रिया(र्थ)त्वेन कर्त्राकाङ्क्षत्वात् प्रथमं स्वर्गकामादेः कर्तृत्वेनान्वयेन कर्त्रन्वयपूर्वकत्वात् अधिकारान्वयस्योपादेयकर्तृविशेषणकामादेरधिकारहेतुत्वान्नायं राद्धान्तो भावनापक्षेऽस्ति, अतः तमाश्रित्योत्तरं सुकरमित्याह—**कर्तुरधिकार इत्यपीति**॥

अथ(तवेष्ट)वा, इष्टसाधनं विधिः, तस्य कस्येति स्वामित्वेन अधिकाराकाङ्क्षत्वात् प्रथमं स्वर्गकामाद्यधिकारान्वयपूर्वकत्वात् कर्त्रन्वयस्य तवायं राद्धान्तो नास्तीत्याह—**किञ्चेति**। यदा त्विष्टसाधनत्वाख्यो विधिः वाक्याद्बोध्यते तदैव (वश)[स्व]गतं संस्काराख्येष्टविशेषमुद्दिश्य तत्साधनता (वश)[स्व] व्यापारे

उपादेय उपनयने। किं तूपनयनमेव तदर्थं विधीयते। संस्कारस्य संस्कार्योद्देशेन विधानात्। अतः संस्कार्यस्याव-च्छेदकत्वं वयोजात्यवच्छिन्नं सद्भवति नित्यनिमित्तं माणवकस्य संस्कार्यत्वे इति। तदेवमुपनयनस्याध्ययनार्थत्वात् तस्य च साधिकारत्वात् तेन चाधिकारेण साधिकारोऽध्ययन-विधिः। अक्षरग्रहणमात्रेण चाधिकारसिद्धिः, अर्थावबोधस्तु कारणान्तरादिति॥

ननु चैवं अधीतो वेदो धर्मजिज्ञासाया हेतुर्ज्ञातः अनन्तरं धर्मो जिज्ञासितव्यः इति वेद एवाधीतोऽन्यनिरपेक्षो

---

बोधिता स्यात्। तथा चास्मिन् वाक्ये कर्तृत्वस्य शाब्दत्वेऽपि प्रधानभूतेष्ट-साधनत्वेन प्रथमाकाङ्क्षिताधिकारान्वयपूर्वकः कर्त्रन्वय इति नोपादेयविशेषणं जातिविशिष्टं वय इत्यर्थः। अथाप्यध्ययनस्य न साधिकारतेत्यत्राह—**तदेव-मिति**। सर्वस्मृतिभिः वाजसनेयिनां ब्रह्मचर्यमागा(दि)[मि]ति प्रकरणा(य)[त्] प्रागुक्तविधिद्वयसामर्थ्या(य)त् सोऽधीयीतेत्युपनीतस्य अध्ययने विनियोगाच्च उपनयनस्याध्ययनाङ्गत्वादुपनीतोऽधिकारीत्यर्थः। नित्याधिकारेणाप्यध्ययन-विधिना अर्थावबोधो भाव्यतां दृष्टत्यागायोगादित्यत्राह—**अक्षरेति**। प्रणाड्या पुरुषार्थत्वात् दृष्टत्वाच्च स्वाधीनोच्चारणार्हत्वाख्याक्षरावाप्तिरेव भाव्येत्यर्थः। **कारणान्तरात्**। अधीतवेदादित्यर्थः॥

अधीतवेदस्यैवान्यनिरपेक्षतया विचारहेतुत्वं वदन् भाष्यकारः अध्ययन-विधेरर्थविचार[हेतुत्व]माह, तदेवेदमुक्तं स्यादिति चोदयति—**ननु चैवमिति**।

---

इति द्रष्टव्यम्। **उपनयनमेव**—उपनयनाक्षिप्तोपगमनमेव। **तदर्थम्**—माणवकसंस्कारार्थं **विधीयत इति**। [कुत इति] अत आह—**संस्कारस्येति**। संस्क्रियतेऽनेनेति **संस्कारः**—उपगमनमित्यर्थः। **संस्कार्यं**—संस्कारफलभोक्तारं **उद्दिश्य**—अधिकारित्वेन स्वीकृत्य तस्याभिलषितसंस्कारसाधनत्वेनोपगमनस्य **विधानात्**—बोधनादित्यर्थः। **कारणान्तरादिति**। प्राप्तस्वाध्यायसामर्थ्यादित्यर्थः। अधीतवेदस्य क(र्तु)-

धर्मजिज्ञासाया हेतुरिति वदन्ति । सत्यम् । तथैव तत् । को वा अन्यथा वदति । अधीतवेदो ह्यवश्यकरणीयानि नित्य-नैमित्तिकान्यकरणे प्रत्यवायजनकानि कर्माणि प्रतिपद्यते । तान्यनन्तरमेवावश्यविचारणीयानि कथमेतान्यनुष्ठेयानीति । अतः प्रागध्ययनादप्रतिपत्तेरयोग्यत्वादधीतवेदत्वमेवान्यनिरपेक्षमर्थावबोधहेतुरिति गीयते । न तथा ब्रह्मज्ञानमवश्यकर्तव्यं अकरणे प्रत्यवायहेतुरिति प्रमाणमस्ति । तस्मादधीतवेदेनावश्यकर्तव्या धर्मजिज्ञासा नैवं ब्रह्मजिज्ञासा । तदेवं ब्रह्मजिज्ञासाया अधि-

---

विचारस्य प्रयोजकोत्तरक्रतुविधिप्रदर्शनद्वारेण स्वाध्यायस्य विचारहेतुत्वमुक्तं नाध्ययनविधिविधेयतयेति परिहरति—**सत्यमिति** । स्वाध्याया(भावादज्ञानो) [दापातप्रतिपन्नो]त्तरविधिरनिश्चितः कथं विचारं प्रयोजयतीत्यत्राह—**अधीतवेदो हीति** । अथाप्यध्ययनमपि उत्तरविधिप्रयुक्तं किं न स्यात् विना(य)ध्ययनं विचारनिर्णयक्रत्वनुष्ठानाद्यनुपपत्तेरित्यत्राह—**अतः प्रागिति** । अध्ययनात् प्रागुत्तरविधीनामनन्तानां श्रवणायोगात् अध्ययनविधिस्त्वेकः पित्रादिभ्यः श्रूयमाणः सन्ध्योपासनादिवत् प्रवर्तयतीत्यर्थः ॥

तर्हि उत्तरविध्यपेक्षत्वात् कथमन्यनिरपेक्षमध्ययनविचारहेतुता वेदस्ये-त्याशङ्क्य, इममेव हेतुमुपजीव्याह—**अधीतवेदत्वमेवेति** । अस्तु तर्हि [ब्रह्मज्ञानस्यापि] सर्वत्रैवर्णिकाधिकृतोत्तरनित्यविधिप्रयुक्ततया सर्वाधिकारते-त्यत्राह—**न तथेति** । न च धर्मब्रह्मविभागसिद्ध्यर्थं नित्याग्निहोत्रादिविधिरेव ब्रह्म विचारयति तयोः सिद्धसाध्यतया स्फुटविभागत्वादिति मत्वा अवान्तर-प्रकरणं निगमयति—**तस्मादिति** ॥

महाप्रकरणं निगमयति—**तदेवमिति** । नारम्भार्थतेति शेषः ॥

---

[र्म]विषयसंशयास्पदवाक्यज्ञानजननद्वारेण जिज्ञासाहेतुत्वं अत एव धर्मजिज्ञासाहेतुत्व-मध्ययनविधेरर्थज्ञानफलावसानत्वाय न भवतीत्याह—**सत्यमिति** ॥

कारानर्हत्वात् अर्हयोश्च ब्रह्मतज्ज्ञानयोरनर्थ्यमानत्वात् जिज्ञासा अनुपपन्ना। मङ्गलस्यापि वाक्यार्थे समन्वयाभावात् श्रुतिमात्रोपयोगाच्च साधूक्तम्—अथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थ इति। ननु प्रक्रियमाणात् पूर्वप्रकृतमपि किञ्चिन्नियमेन प्रतीयते अथशब्दात्, ततस्तत्प्रतिपत्त्यर्थं किमिति न गृह्यते? उच्यते—नैतदानन्तर्याद्यतिरिच्यते। कथम्? एवं तत् प्रक्रियमाणस्य नियमेन पूर्ववृत्तं भवति यदि तस्यानन्तरं तन्मात्रापेक्षं तत् प्रक्रियेत, एवं सति प्रक्रियमाणस्य हेतुभूतोऽर्थः पूर्वनिर्वृत्तो भवति। अन्यथा यस्मिन् कस्मिंश्चित्

---

'ओङ्कारश्चाथशब्दश्च' इत्यादिस्मृतेरथशब्दस्य मङ्गलार्थत्वात्तस्य शास्त्रारम्भे ह्यविघ्नसमाप्त्यर्थमाचरणीयत्वाच्च तदर्थोऽथशब्द इत्यत्राह—**मङ्गलस्यापीति**। सूत्रस्य स्तुतिपरत्वापातात् सामानाधिकरण्येन ब्रह्मजिज्ञासायां कर्तृकरणकर्मत्वाभावाद्वैयधिकरण्येन चान्वयो नास्तीत्यर्थः। अथापि कर्तव्यं मङ्गलाचरणमित्यत्राह—**श्रुतिमात्रेति**। शङ्खध्वन्यादिवत् श्रवणमात्रेण अथशब्दस्य मङ्गलप्रयोजनोपपत्तेः न तदर्थोऽथशब्द इत्यर्थः। तर्हि अथैवं मन्यसे इत्यादिवत् प्रकृतादर्थादर्थान्तरपरोऽथशब्दः स्यादित्याशङ्कते—**ननु प्रक्रियमाणादिति**। हेतुफलभावेनानन्तर्याभिधाने प्रकृतादर्थादर्थान्तरत्वमपि अन्तर्णीततया सिध्यतीति न पृथग्वक्तव्यमित्याह—**नैतदिति**। अर्थान्तरोक्तौ वा आनन्तर्यमन्तर्णीतं किमिति न गृह्यत इति शङ्कते—**कथमिति**। किं नियमेन पूर्ववृत्तं पुष्कलकारणं अथेति द्योत्यते? किं वा यत्किञ्चित्पूर्ववृत्तम्? आद्ये आनन्तर्ये मुख्ये ह्यर्थान्तरमन्तर्भवति न त्वर्थान्तरे मुख्यमानन्तर्यम्, यत्किञ्चित्प्रकृतादप्यर्थान्तरत्वसम्भवात् इत्याह—**एवं तदिति**। अन्त्यमनूद्यापवक्ति—**अन्यथेति**।

---

कुतोऽस्य प्रकृतस्य पुष्कलकरणतायां पूर्वप्रकृतत्वमित्यपेक्षायाम्, तस्मिन् सति भवत्येवेत्यानन्तर्यार्थकथनेन पूर्वप्रकृतस्य पुष्कलकारणत्वकथनाद्वरं प्रथमत एव आनन्तर्यकथनमितीममर्थमभिप्रेत्याह आचार्य इत्याह (एतदिदमिति।) [एवं तदिति।] एवंशब्दार्थमाह—**यदि तस्यानन्तरमिति**॥

पूर्ववृत्ते अपेक्षायामनुवादादृष्टार्थत्वयोरन्यतर(त्व)प्रसङ्गात्। अतो हेतुभूतोऽर्थोऽपेक्षितव्यः। तदिदमाह—पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकादिति। सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते एवं ब्रह्मजिज्ञासापि यत् पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम्। स्वाध्यायानन्तर्यन्तु समानमिति। येन विना नियमेन अनन्तरस्य न प्रक्रिया स तादृशो हेतुः पूर्वनिर्वृत्तो वक्तव्यः। यस्यानन्तरं ब्रह्मजिज्ञासा प्रक्रियते। स्वाध्यायाध्ययनन्तु समानम्—साधारणो हेतुर्धर्मब्रह्मजिज्ञासयोः। अतश्च 'अथातो ब्रह्मजिज्ञासा' इति पुनरथशब्देन तन्मात्रापेक्षणं व्यर्थं स्यात्। अथ वा, समानम्—नात्यन्तमपेक्षितम्, न स्वयमेव सामर्थ्यं

---

तस्मादाद्य एव स्वीकारार्ह इत्याह—अतो हेत्विति। उक्तेऽर्थे भाष्यमवतारयति—तदेतदाहेति [तदिदमाहेति]॥

ब्रह्म विचारयतः तज्जिज्ञासाख्यं फलं दृश्यते चेत् किं तत्सामग्रीद्योतकेनाथशब्देनेत्याशङ्क्य, फलपर्यन्तेच्छाविचारादिप्रवृत्तौ सामग्रीं वक्तुमित्याह—सति चेति। उक्तैव सा धर्मजिज्ञासासूत्रे इत्यत्राह—स्वाध्यायेति। भाष्यार्थं विवृणोति—येन विनेति। सोऽध्ययनमेवेति, नेत्याह—स्वाध्यायेति। ततः किमित्यत्राह—साधारण इति। सोऽपि वक्तव्य इत्यत्राह—अतश्चेति। अध्ययनस्य वेदार्थविचारहेतुताया धर्मजिज्ञासासूत्रे अथशब्देनोक्तत्वादत्राप्यथेति तत्कथनं व्यर्थं पुनरुक्तं स्यादित्यर्थः। धर्मजिज्ञासासूत्रस्य वेदार्थविचारपरत्वे ह्येवम्, धर्मविचारपरत्वे तु स्वाध्यायस्य धर्मविचारहेतुतायाः तत्रोक्तत्वात् अत्र ब्रह्मविचारहेतुत्वोक्तौ न पुनरुक्तिरित्यत्राह—अथ वेति। उत्पत्त्यनुत्पत्त्योः साधारणं कारणमात्रं न सामग्री। सा हि वक्तव्या। तस्यां चोक्तायां कारणमन्तर्भूततया सिध्यतीत्यर्थः॥

जनयितुं प्रयोक्तुं च शक्तम्। अतः समानो हेतुः नावश्यं निष्पादक इत्यर्थः ॥

ननिवह कर्मविधिबोधानन्तर्यं विशेषः। तथा च वृत्त्यन्तरे वर्णितम्—कर्मणामधिकारपरम्परया वा संस्कारतया वा शब्दतो यथाविभागं तादर्थ्यावगमान्निःश्रेयसप्रयोजनत्वाच्च आनन्तर्यवचनोऽथशब्दः अधिगतानन्तरमिति [इति]। अन्यैरपि स्ववृत्तौ वर्णितम्। तत्र अथातःशब्दौ प्रथमे एव अध्याये प्रथमसूत्रे वर्णितौ—अथेति पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्य अनन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः। अत इति पूर्वनिर्दिष्ट-

---

तर्हि ब्रह्ममीमांसाया धर्ममीमांसयैव कार्यत्वात्तत्सामग्रीत्वं अथेति द्योत्यतामिति शङ्कते—**नन्विहेति**। कथं तदुपकार्यतेत्यत्राह—**तथा चेति**। **अधिकार इति** विधिपुरुषसम्बन्धः प्रवृत्तिः फलं वोच्यते। **संस्कारतयेति**। पुरुषसंस्कारतया वेत्यर्थः। तत्र मानं [आह] **शब्दतः** इति। 'यज्ञेन'इत्यादितो ब्रह्मज्ञानार्थत्वात्कर्मणां धर्मब्रह्मजिज्ञासयोरुपकार्योपकारकतेत्यर्थः। एकाध्ययनविधिना अधीतवेदस्यैकनिरतिशयफलत्वान्यथानुपपत्त्या धर्मब्रह्मजिज्ञासयोरेकमोक्षफलत्वाच्च उपकार्योपकारकतेत्याह—**निःश्रेयसेति**। **अधिगतानन्तरम्**। धर्माधिगत्यनन्तरमित्यर्थः। अत्र संवादान्तरम्—**अन्यैरपीति**। कुत्रेत्यत्राह—**तत्रेति**। कथमित्यत्राह—**अथेति पूर्वेति**। तत्रैकफलत्वं तिष्ठतु, जिज्ञास-

---

**नन्विह कर्मावबोधानन्तर्य**मित्यस्मिन् भाष्ये कर्मशब्देन क्रियतेऽ(स्मिन्)[स्मै] फलायेति व्युत्पत्त्या कर्मजन्यसंस्कारानन्तर्यं कर्मफलभोगानन्तर्यं चोक्तम्, कृतिः कर्मेति कर्मानुष्ठानानन्तर्यं चोक्तम्, अवबोधशब्देन भावव्युत्पत्त्या कर्मनिश्चयानन्तर्यं करणव्युत्पत्त्या न्यायसहस्रानुष्ठानानन्तर्यं चोक्तमित्यूरीकृत्यैतान् पक्षान् क्रमेणोत्थाप्य दूषयतीति द्रष्टव्यम्। **अधिकारपरम्परयेति**। अधिकृतिर**धिकार** इति कर्मानुष्ठानानन्तर्यपक्षानुवादः, **अधिकारः** फलमिति संस्कारफलभोगानन्तर्यपक्षयोरनुवादः। **अधिगतानन्तरमिति** कर्मावबोधानन्तर्यपक्षानुवादः। **अथेति** न्यायसहस्रानुष्ठानानन्तर्यपक्षानुवादः। **धर्म-**

स्यैवार्थस्य हेतुतामाचष्टे ब्रह्मजिज्ञासां प्रतीति । अत्राह—न-धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति। वेदान्ताध्ययनं यद्यपि केवलं न पुष्कलं कारणम्, तथापि न तेन विनोत्पद्यते ब्रह्मजिज्ञासा । उत्पद्यते तु धर्मविबोधनं विनापीत्यभिप्रायः । कथम् ? तत्र तावत् धर्मजिज्ञासायां त्रयं वृत्तम्—द्वादशलक्षणे प्रतिपादितन्यायसहस्रं तदनुग्रहोपजातश्च वाक्यार्थनिर्णयः वाक्यार्थश्चाग्निहोत्रादिकं कर्म। तत्र यः प्रथमसूत्रे अथशब्दोपादानसूचितो न्यायः स्वाध्यायस्य अर्थावबोधोपयोगप्रतिपत्तिहेतुः, यदप्यौत्पत्तिकसूत्रे शब्दार्थयोः सम्बन्धनित्यत्वेन वेदा(न्ता)नां चापौरुषेयत्वेन कारणेनानपेक्षत्वं नाम प्रामाण्यकारणमुक्तम्, तदुभयमिहाप्युपयुज्यताम् । अपेक्षितत्वात् । इतरस्य पुनः न्यायकलापस्य न ब्रह्मजिज्ञासाया-

---

योरुपकार्योपकारकत्वं तावन्नेत्याह—**न धर्मेति** । भाष्यं विवृणोति—**वेदान्तेति**। धर्ममीमांसायां व्युत्पन्नवेदप्रामाण्यपदपदार्थवाक्यार्थापेक्षितन्यायेन ब्रह्म विचारयितुं शक्यते, अतः कथं तद्विनोपपत्तिरिति शङ्कते—**कथमिति** ॥

तां वक्तुं धर्ममीमांसां विभजते—**तत्र तावदिति** । तत्र न्यायसहस्रमध्ये वेदप्रामाण्यनिर्णायकः प्रथमपादोक्तो यावान्न्यायः स ब्रह्मजिज्ञासायामुपयुज्यते, अथापि तस्य न्यायस्य 'शास्त्रयोनित्वात्' 'अत एव च नित्यत्वम्' इत्यादाविहैव सूत्रितत्वान्न धर्ममीमांसोपकार्यतेत्यत्राह—**तत्र यः प्रथमेति** । श्रुतिलिङ्गादेरिहाप्यपेक्ष्यत्वादितरोऽपि न्यायः सामग्रीत्वेनापेक्षित इति ; नेत्याह—**इतरस्येति**। कार्यार्थासाधारणन्यायस्य न सिद्धे वस्तुन्युपयोगः, विरोधात्। श्रुत्यादयस्तु लोकसिद्धा एवापेक्ष्यन्त इत्यर्थः । कार्यशेषत्वाद्ब्रह्मणोऽपि न्यायः

---

**जिज्ञासायाः प्रागपी**त्यत्र **जिज्ञासा**शब्देन **कर्मावबोध**शब्दोक्ताः पक्षा विवक्षिताः इत्यभिप्रेत्याह—**(क)[ध]र्मावबो(धेन)[धनं] विनेति** ॥

मुपयोगोऽस्ति। यतो न निरस्ताशेषप्रपञ्चं ब्रह्मात्मैकत्वं प्रतिज्ञातं तत्र, न तत्प्रतिपादने तत्प्रतिपादनसामर्थ्ये वा शब्दानां कश्चिन्न्यायोऽभिहितः॥

यत् पुनः प्रथमतन्त्रसिद्धन्यायोपजीवनं अस्मिन्नपि तन्त्रे तत् सगुणविद्याविषयम्। तत्र च मानसी क्रिया उपासना विधेया अनित्यफला धर्मविशेष एव। तदेवं न्यायकलापस्य न ब्रह्मजिज्ञासायामुपयोगः। अतो न तदपेक्षोऽथशब्दः॥

यत् पुनः स्वाध्यायस्यार्थावबोधोपयोगे अनपेक्षत्वेन स्वतःप्रामाण्यसिद्धौ च न्यायद्वयम्, तत् अपेक्षितमपि न केवलं ब्रह्मजिज्ञासाकारणम्। स्वाध्यायवदेव। तेन न तदपेक्षोऽथशब्दः। यः पुनर्वाक्यार्थनिर्णयः, स न कथमपि ब्रह्मजिज्ञासायामुपयुज्यते। न ह्यन्यविषयं ज्ञानमन्यत्र प्रवृत्तौ हेतुः। प्रतिपत्तौ कदाचित् स्यादपि यथा अनुमानादौ। तदपीह नास्ति।

---

तत्रोक्त इति; नेत्याह— **यत इति**। अप्रतिज्ञातस्याप्यपेक्षितो न्यायोऽन्यार्थत्वेनोक्त इति; नेत्याह—**न तत्प्रतिपादने** इति। गुणोपसंहारादौ कार्यापेक्षितोऽपि न्याय उपजीव्यत इत्यत्राह—**यत् पुनरिति**। सगुणविद्यापि ज्ञानमेवेत्यत्राह—**तत्र चेति**। क्रियात्वे हेतुः—**अनित्यफलेति**॥

तर्हि वेदप्रामाण्यनिर्णयानन्तर्यं स्यादित्यत्राह—**यत् पुनरिति**। यद्वा, प्राक् न्यायद्वयमुपयुज्यत इत्युक्तम्, तदनूद्य परिहरति— **यत् पुनरिति**। न हि वेदः प्रमाणमित्येतावता अनन्तायासे ब्रह्मविचारे कश्चित् प्रवर्तेत इत्यर्थः। तर्हि धर्मनिर्णयानन्तर्यं अथेति द्योत्यतामित्यत्राह—**यः पुनरिति**। धर्मनिर्णयः किं ब्रह्मविचारप्रवृत्तौ हेतुः? ब्रह्मनिर्णये वा? नाद्य इत्याह—**न हीति**। नान्त्य इत्याह—**तदपीहेति**। कार्यकारणसम्बन्धोऽस्ति चेत्तदा घटेनापि

---

**तत्र च मानसी क्रियेति**। विधेयत्वात् इच्छातोऽनुष्ठेयत्वात्, अनित्यफलत्वा-(दन्य)[त् य]थार्थत्वनियमाभावाच्च, क्रियैव सेत्यर्थः॥

धर्मब्रह्मणोः सम्बन्धानिरूपणात् । अतः कर्मणामुपयोगः परिशिष्यते। तथा च तैरप्युक्तम्—कर्मणामधिकारपरम्परया *शब्दतो वा संस्कारतया वा यथाविभागं तादर्थ्यावगमादिति ॥

अत्रेदं निरूप्यते—केयमधिकारपरम्परा? कथं वा तादर्थ्यमिति ? यथा तावत् प्रासादमारुरुक्षोः सोपानपरम्परा क्रमशः प्राप्यमाणा प्रासादारोहणहेतुः न तथेह ब्रह्मजिज्ञासां चिकीर्षोः कर्माणि सहस्रसंवत्सरपर्यन्तानि तत्क्रियाहेतुतया स्थितानि । प्रमाणाभावात् ॥

अथ कामोपहतमानसः तदभिमुखो ब्रह्मजिज्ञासायां नावतरति, कर्मभिस्तु कामावाप्तौ तदुपशमात् ब्रह्मजिज्ञासायामवतरति, तथा च सार्वभौमत्वाद्युत्तरोत्तरशतगुणोत्कर्षा-

---

ब्रह्मानुमानान्न धर्मनिर्णयापेक्षेत्यूह्यम् । परिशेषात् कर्मणामुपयोग इत्याह—**अतः कर्मणामिति**। एवं सति इदमपि यथाश्रुतार्थं स्यादित्याह—**तथा चेति**॥

अस्तु तर्हीत्यत्राह—**केयमिति** । नित्याधिकारेणा विहितकर्मलयः अनन्तरं स्वर्गकामाद्यधिकारेण देहात्मत्वादिलयः इत्येवमादिविधिपुरुषसम्बन्धपरम्परया प्रपञ्चविलयद्वारिकया कर्मणां न ज्ञानोपकारितेत्यर्थः ॥

तर्ह्यनुष्ठानपरम्परेयं सन्ध्योपासनमारभ्य पूर्वपूर्वाल्पतरकर्मत्यागेनोत्तरोत्तरमहत्तरकर्मोपादानात् सहस्रसंवत्सरे निरतिशये कर्मणि स्थितो ब्रह्मज्ञानेऽवतरतीति, नेत्याह—**यथा तावदिति**। **तत्क्रिया**—ब्रह्मज्ञानप्रवृत्तिः । तर्हि उत्तरोपादानात्पूर्वत्यागे परिशेषात् ब्रह्मज्ञानावतारे च मानं नेत्यर्थः । परमानन्दकामनया च परम्परया कृत्स्नकर्मफलावाप्तौ तत्र कामाभावान्निष्कामः तदेव प्रपञ्चयति—**तथा** ज्ञानेऽवतरतीति शङ्कते—**अथ कामेति**।

---

**तत्क्रियाहेतुतयेति** । ब्रह्मजिज्ञासानुष्ठानहेतुतयेत्यर्थः ॥

---

* शब्दतः तादर्थ्यावगमात् इति योजना ॥

वस्थितान् ब्रह्मलोकावाप्तिपर्यन्तान् कामानवापयन्ति अधिकार-परम्परया कर्माणि, ब्रह्मलोकात् परं कामयितव्याभावात् निर्विषयस्य च कामस्यानुपपत्तेः दग्धेन्धनाग्निवत् कामोपशमे ब्रह्मजिज्ञासां करोति। कर्मानुष्ठानानन्तर्यं तर्हि वक्तव्यम्। न धर्मावबोधानन्तर्यम्। कथं वा कामाप्तिः कामोपशमहेतुः?

दृष्टान्तसामर्थ्यात्। यथा हविषा कृष्णवर्त्मा वर्धमानोऽपि सर्वहविःप्रक्षेपे सर्वं दग्ध्वा स्वयं शाम्यति, एवं विषयेन्धनः कामो यावद्विषयं वर्धमानोऽपि तत्क्षये क्षीणेन्धनाग्निवत् स्वयं शाम्यतीति युक्तम्। सत्यं युक्तम्, यदि हिरण्यगर्भोपभोगो न क्षीयेत। क्षीयते तु कृतकत्वात् परिच्छिन्नविषयत्वाच्च। तत्क्षये पूर्ववदनवाप्तोऽवाप्तव्य इति कामः समुल्लसत्येव। अतो विषयस्य क्षयादिदोषदर्शनात् कामोपशमो हिरण्यगर्भस्यापि। तथा च

---

सार्वेति। **अधिकारः**—फलम्। कृत्स्नकर्मफलावाप्त्यानन्तर्यं तर्हि वक्तव्यम्, तथा च हिरण्यगर्भैकाधिकारं शास्त्रं स्यादिति दूषयति—**कर्मानुष्ठानेति**। फलावाप्तेः कामोपशमहेतुत्वे युक्तिश्च नेत्याह—**कथं वा कामेति**। तामाशङ्कते—**दृष्टान्तेति**। 'न जातु कामः कामानाम्' इत्यादिस्मृतिविरोधे कथं दृष्टान्तात् तद्धेतुत्वसिद्धिरित्यत्राह—**यथेति**। हैरण्यगर्भभोगानां प्रतिक्षणं क्षयात् पुनश्च कर्मभिः रागादि[ना]भोगे पूर्वसमे निकृष्टे च 'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इति न्यायात् कामोपपत्तेः न कामक्षयः। अग्नेस्तु पश्चाद्धविःप्राप्त्यभावात् उपशमः स्यादिति दूषयति—**सत्यमिति**॥

केन तर्हि सर्वेषां कामक्षय इत्यत्राह—**अतो विषयस्येति**। अन्वयव्यतिरेकाभ्यामिति शेषः। अस्मदादेर्दोषदर्शनहेतुः कामक्षयः, हिरण्यगर्भतां प्राप्तस्य तु फलस्य उत्कृष्टत्वेन दोषदर्शनाभावात् फलभोगात्तत्क्षय इत्यत्राह—**तथा चेति**। तस्य निष्प्रतिबन्धं स(त्यज्ञा)[म्यग्ज्ञा]नमुक्त्वा वैराग्योक्तेर्दोषद-

उक्तम्—

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम् ॥ इति ॥

तस्मात् सर्वत्र कामस्य विषयदोषदर्शनमेवोच्छेदकारणं नित्यवस्तुदर्शनं च 'रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति स्मृतेः। न चैवंलक्षण आगमोऽस्ति हिरण्यगर्भोपभोगात् निखिलविषयावाप्तौ कामोच्छेदो भवतीति ॥

ननु कामावाप्तौ स्वस्थहृदयः कार्यान्तरक्षमो भवतीति सर्वेषां स्वसंवेद्यमेतत् । सत्यम् । तदुत्कलिकोपशमात् । तदुत्कलिकोपशमश्च तदा सामर्थ्यहानेः । सति च सामर्थ्ये स्वच्छन्दोपभोगसम्भवात् । यदि पुनरेकान्ततो निवृत्तकामो भवेत् न तं विषयं पुनः सङ्कोपायेत् । तस्मात् न कर्मणां

---

र्शनादेव कामक्षयः, तच्चास्तीत्यर्थः । कामक्षये कारणान्तरम्—नित्यवस्त्विति । तत्रान्वयव्यतिरेकानुवादिनीं स्मृतिमाह—[**रसवर्जमिति** ।] **रसोऽपीति** । कामोऽपीत्यर्थः। सर्वविषयावाप्तौ कामक्षयात् ज्ञानेऽवतरतीति किं शास्त्रादुच्यते ? अन्वयव्यतिरेकाभ्यां वा ? नाद्य इत्याह—**न चेति** । अन्त्यमाशङ्कते—**ननु कामेति** । **सत्यमित्यादिः** परिहारः। ननु उपभोगमात्रात् कामस्योपशमश्चेत् सर्वात्मनोपभोगे सर्वात्मनोपशमः स्यादित्यत्राह—**तदुत्कलिकोपशमश्चेति** । सत्यपि सामर्थ्ये केषाञ्चिदुपशमो दृश्यते ; इत्यत्राह—**सतीति** । उत्क्रमानस्यासङ्कोचात् सर्वात्मना क्षयः कस्मान्न कल्प्यत इत्यत्राह—**यदीति** । फलावाप्तेः कामक्षयहेतुत्वाभावे फलमाह— **तस्मादिति** ॥

---

ऐश्वर्येण सह वैराग्यस्य वर्तनात्तस्मिन् अनित्यत्वादिदर्शनादेव वैराग्यमित्यभिप्रेत्याह—**ज्ञानमप्रतिघमिति** ॥

कामनिबर्हणद्वारेण ब्रह्मजिज्ञासायोग्यतापादनम् । अतो न कर्मावबोधापेक्षोऽप्यथशब्दः ।

भवतु तर्हि संस्कारद्वारेण कर्मणां पूर्ववृत्तत्वं 'यस्यैते(ऽष्टा)चत्वारिंशत्संस्कारा अष्टौ चात्मगुणाः स ब्रह्मणः सायुज्यं गच्छति' इति, 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति,

'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।
यथाऽऽदर्शतलप्रख्ये पश्यन्त्यात्मानमात्मनि ॥' इति च स्मृतेः । 'विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेन' इति, 'येन केनचन यजेत अपि दर्विहोमेन अनुपहतमना एव भवति' इति च श्रुतेः ।

---

उपच्छन्दनयनवत् कर्मणां फलोपदर्शनेन ब्रह्मज्ञानार्थत्वं तु स्वर्गादेरबाधितोद्देश्यत्वप्रतीतिविरुद्धम् । तर्हि कर्मणां पुरुषसंस्कारद्वारा ब्रह्मज्ञानार्थत्वात् कर्मानुष्ठानानन्तर्यार्थोऽथशब्दोऽस्त्विति शङ्कते—**भवत्विति** । अत्र प्राक् सूचितं मानं व्यनक्ति—**यस्यैते इति** ॥

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामान्नादनचौलोपनय(न)व्रतचतुष्टयम् ॥
स्नानं विवाहः पञ्च यज्ञाः सन्धानं च त्रिसप्तकम् ।
भुक्तिं त्यक्त्वा वेदपाठः कर्णे च प्रायणे जपः ॥
भस्मव्यूहःसञ्चयनं श्राद्धत्रयसपिण्डकम् । (?)

इत्येते यस्येत्यर्थः । **आत्मगुणाः** — शौचसन्तोषतपस्स्वाध्यायार्जवमार्दवशमदमाः । श्रवणादिसहकारिभावे परब्रह्मसायुज्यं ज्ञानेन **गच्छति**, अभावे त्वपरब्रह्मसालोक्यमिति योज्यम् । देवयज्ञो भूतयज्ञो ब्रह्मयज्ञः पितृयज्ञो मनुष्ययज्ञ इति पञ्च **महायज्ञाः**। यज्ञास्त्वग्निष्टोमादयः । **ब्राह्मी**—ब्रह्मविचारयोग्येत्यर्थः । **दर्विहोमः**—प्रकृतिविकृतिभ्यामन्यो यागः । न चासां

**वक्ष्यति च सूत्रकारः अत एव आश्रमकर्मापेक्षाम्। 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति च। सत्यमेवम्। यदि समानजन्मानुष्ठितमेव कर्म संस्कुर्वत् ब्रह्मजिज्ञासायोग्यत्वहेतुः स्यात्। न च नैयोगिके फले कालनियमोऽस्ति। तेन पूर्वजन्मानुष्ठितकर्मसंस्कृतो धर्मजिज्ञासां तदनुष्ठानं चाप्रतिपद्यमान एव ब्रह्मजिज्ञासायां प्रवर्तते इति न नियमेन तदपेक्षोऽथशब्दो**

---

श्रुतिस्मृतीनां कर्मप्राधान्यश्रुतिस्मृतिविरोधः, श्रवणादिसहकारे संस्कारत्वं कर्मणां अन्यथा प्राधान्यमिति व्यवस्थोपपत्तेरित्यूह्यम् ॥

यद्वा, उत्पत्तिविध्युक्तकर्माणि संयोगभेदेन जीवनकाम्याधिकारवत् ज्ञानार्थतया ब्रह्मज्ञानकामो यज्ञादीन् कुर्यादिति विधेयानीत्याह—**यज्ञेनेत्यादिना**। यथा कुण्डपायिनामयने 'मासमग्निहोत्रम्'इत्यत्राग्निहोत्रं प्रसिद्धाग्निहोत्रात् कर्मान्तरं प्रकरणान्तरात्, तथा 'यज्ञेने'त्यत्रापि प्रसिद्धयज्ञादिभ्यः कर्मान्तराण्येव विधेयानीत्यत्राह—**अत एवेति**। दृष्टान्ते अग्निहोत्रशब्दस्यालौकिकस्य सन्निहिताख्यातपरतन्त्रतया व्यवहितकर्मपरामर्शकत्वायोगात् कर्मान्तरत्वम्, यज्ञादिशब्दानां तु लौकिकत्वात् व्यवहितकर्मपरामर्शकत्वसम्भवात् प्रसिद्धानां कर्मणामेव ज्ञानापेक्षेत्यर्थः। दृष्टप्रमाणसामग्रीकत्वात् ज्ञानस्य दृष्टादौ शमादौ चापेक्षा न युक्तेत्यत्राह—**सर्वेति**। लोके ज्ञानस्य मानमात्रजत्वेऽपि ब्रह्मज्ञानस्य अदृष्टाद्यपेक्षाप्यस्ति श्रुतत्वादित्यर्थः। **अश्ववदिति**। यथा अश्वो रथचर्यायामपेक्ष्यते योग्यत्वात् नान्यत्र, तथा ज्ञानस्योत्पत्तौ कर्मापेक्षा न फले इत्यर्थः ॥

अस्तु कर्मणां संस्कारतया अन्यथा वा बुद्धिशुद्धिद्वारा आत्मजिज्ञासायोग्यताजनकत्वम्, तथाप्यनेकजन्मव्यवहितकर्मणां च तज्जनकत्वेन ब्रह्मजिज्ञासोः तदनुष्ठानस्य ज्ञातुमशक्यत्वात् न ज्ञाततया प्रवर्तकत्वं अधिकारिविशेषणत्वं नैवेत्यर्थः। एतज्जन्मद्योतकाथशब्दार्थतेत्याह—**यदीति**। **न नियमेनेति**।

युज्यते। एतेन ऋणापाकरणद्वारेणापि नियमेन पूर्ववृत्तत्वं प्रत्युक्तम्। तथा च श्रुतिस्मृती—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' 'तस्याश्रमविकल्पमेके ब्रुवते'। इति। तस्मात् साधूक्तम्—'धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते'-रिति॥

अथापि स्यात् न हेतुत्वेन अनन्तरवृत्तकर्मावबोधापेक्ष-मथशब्दं ब्रूमः। अपि तु क्रमप्रतिपत्त्यर्थम्। यथा 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इति। तदेतदयुक्तं न्यायसूत्रे। अपि च एककर्तृकाणां बहूनां युगपदनुष्ठानासम्भवाद-वश्यम्भाविनि क्रमे ब्रूयादपि तन्नियममथशब्दः। एककर्तृकत्वं च शेषशेषिणोः शेषाणां च बहूनामेकशेषिसम्बद्धानामधि-

---

प्रयुक्तस्य ऋणत्रयस्य एतज्जन्मानुष्ठितकर्मभिः अपाकर्तुः मोक्षसाधने ब्रह्मविचारे अधिकारत् समानजन्मानुष्ठितकर्मानन्तर्यार्थोऽथशब्दोऽस्त्वित्यत्राह—**एतेनेति**। जन्मान्तरानुष्ठितकर्मभिरपि ब्रह्मजिज्ञासायोग्यताजननेन ऋणापाकरणस्याकर्त-व्यत्वादित्यर्थः। तर्हि 'त्रिभिः ऋणवा जायते' 'ऋणानि त्रीण्यपाकृत्य' इत्यादिश्रुतिस्मृतिविरोध इत्याशङ्क्य, एषा अर्थवादश्रुतिः तन्मूला स्मृतिश्च विधिश्रुतिस्मृतिभ्यां बाध्येत्याह—**तथा चेति**॥

नानन्तर्याभिधानमुखेनाधिकारिविशेष(ण)द्योतकोऽथशब्दः, किन्तु तन्मुखेन क्रमसूचक इति शङ्कते—**अथापीति**। किं स्वयमेव क्रमसूचकः? मानान्तरसिद्धक्रमन्यायसूचको वा? नाद्य इत्याह—**तदेतदिति**। आगमत्वा-भावादित्यर्थः। नान्त्यः, धर्मब्रह्मजिज्ञासयोः क्रमापेक्षाहेतोरेकविधिप्रयुक्ता-नुष्ठेयत्वस्याभावादित्याह — **अपि चेति**। उक्तेऽर्थे भाष्यमवतारयति —

---

सर्ववेष्टनस्मृति [वत् ऋ]णानीति [स्मृतिरविरक्तविषये] व्यवस्थि(तिः) [तेः अप्रमा-णाम्] प्रत्यक्षविधिश्रुतिविरोधादित्याह—**तथा च श्रुतिस्मृती इति**॥

कारान्तरप्रयुक्त्युपजीविनां च भवति। नेतरथा । न हि धर्म-ब्रह्मजिज्ञासयोरेतेषामन्यतमत्वे प्रमाणमस्ति । तदिदमाह—**यथा च हृदयाद्यवदानानामानन्तर्यनियमः क्रमस्य विवक्षितत्वात् न तथेह क्रमो विवक्षितः, शेषशेषित्वे अधिकृताधिकारे वा प्रमाणाभावाद्धर्मब्रह्मजिज्ञासयोरिति।** अथापि स्यात्—यथा आग्नेयादीनां षण्णां यागानामेकं फलं स्वर्गविशेषः एवं धर्मब्रह्मजिज्ञासयोरप्येकं फलं स्वर्गः, ततः क्रमापेक्षायां तन्नियमार्थोऽथशब्द इति । यथा वा द्वादशभिरपि लक्षणैः धर्म एको जिज्ञास्यः प्रतिलक्षणमंशान्तरपरिशोधनया । यथा वा अस्मिन्नपि तन्त्रे चतुर्भिरपि लक्षणैरेकं ब्रह्म जिज्ञास्यम्। तत्र चांशान्तरपरिशोधनेन लक्षणानां क्रमनियमः । एवं तन्त्र-द्वयेन एकं ब्रह्म जिज्ञास्यम् । तत्र क्रमनियमार्थोऽथशब्दः इत्याशङ्क्याह—**फलजिज्ञास्यभेदाच्च** । धर्मब्रह्मजिज्ञासयोरिति सम्बन्धः । तमेव भेदं कथयति—**अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षम्।** अभ्युदयः फलं धर्मज्ञानस्येति प्रसिद्धमेव। अपि तु न कस्यचिद्विसंवादः । तदपि न ज्ञानस्य फलम् ।

---

**तदिदमाहेति**। तर्हि एकफलप्रयुक्त्या अनुष्ठेयत्वात् एकप्रमेयजिज्ञासाप्रयुक्त्या अनुष्ठेयत्वाद्वा धर्मब्रह्मजिज्ञासयोः कर्त्रैक्यादपेक्षितक्रमस्य न्यायसूचकोऽथ-शब्दोऽस्तु इति उत्तरभाष्यस्याशङ्कामाह—**अथापीत्यादिना** । अवतारित-भाष्यस्याकाङ्क्षामनुषङ्गेण पूरयति—**धर्मब्रह्मेति** ॥

उत्तरभाष्यतात्पर्यमाह—**तमेव भेदमिति** । तद्विवृणोति—**अभ्युदयेति।** किञ्च, धर्मज्ञानस्य फलमौपचारिकं ब्रह्मज्ञानस्य तु मुख्यमित्याह—

---

**अधिकारान्तरप्रयुक्त्युपजीविनां** गोदोहनादिनियमानामिति शेषः ॥

ज्ञेयस्य। तस्यापि न ज्ञेयत्वादेव फलम्। किं त्वनुष्ठीयमानत्वात्। निःश्रेयसफलं तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षमिति। ब्रह्मज्ञानस्य फलमपवर्गः। स च नित्यसिद्धोऽव्यवहितः स्वसंवेद्यः। यतोऽविद्या संसारहेतुः। न चाविद्यामनिवर्तयन्ती विद्योदेति। तदेवमत्यन्तविलक्षणत्वात् प्रस्थानभेदाच्च न फलद्वारेणाप्येकोपनिपातः। तेन न क्रमाकाङ्क्षा तन्त्रद्वयस्य। जिज्ञास्यं पुनरत्यन्तविलक्षणम्। यतः कार्यो धर्मः पुरुषव्यापारतन्त्रः स्वज्ञानकालेऽसिद्धसत्ताकः प्रथमे तन्त्रे जिज्ञास्यः। इह तु नित्यनिर्वृत्तं पुरुषव्यापारानपेक्षं ब्रह्म जिज्ञास्यम्। किं च—

---

तदपि नेति। न चानुष्ठानान्तरापेक्षमिति सूचितप्रतिकोटिमाह—तस्यापीति। भाष्यमादत्ते—निःश्रेयसेति। तद्विवृणोति—ब्रह्मज्ञानस्येति। निरुपाधिकभेदमुक्त्वा सोपाधिकानाह—स चेति। मोक्षस्य ब्रह्मरूपत्वादित्यर्थः। संसारव्यवधानात् कथमव्यवहितत्वमित्यत्राह—यत इत्यादिना। उपक्रमभेदाच्च फलभेद इत्याह—प्रस्थानेति। यद्येकं फलमध्यायान्तरवत् सिद्धसाध्यवस्तुभ्यां पृथक्शास्त्रतया उपक्रमो न स्यादित्यर्थः। अतः फलैक्यादप्येकस्मिन् कर्तरि कर्मब्रह्मजिज्ञासयोः प्राप्तिर्नेत्याह—न फलद्वारेति। अत्र फलम्—तेनेति॥

प्रमेयभेदानाह—जिज्ञास्यमिति। न च मानभेदः क्रमबाधकः, अतो

---

उत्पत्तिविकृती मोक्षे न सम्भवत इत्याह—नित्यसिद्ध इति। आप्तिरपि न सम्भवतीत्याह—अव्यवहित इति। गुणाधानलक्षणसंस्कारोऽपि न सम्भवतीत्याह—स्वसंवेद्य इति। अविद्यानिवृत्तिरूपत्वाच्च मोक्षस्य कर्मफलविलक्षण इत्याह—यत इति। अविद्यानिवृत्तेः पुरुषार्थत्वं नास्तीति; तत्राह—अविद्या संसारहेतुरिति। जिज्ञासामात्रसाध्यत्वात् समुच्चयफलत्वं च न सम्भवतीत्याह—न चेति। सिद्धसाध्यत्वरूपवैलक्षण्यं चाह—अत्यन्तेति। [कर्म]ज्ञानसाधनानुष्ठानेन सम्पाद्यं [ब्रह्म] ज्ञानोत्पत्तिमात्रेण सम्पाद्यमिति वैषम्यमाह—प्रस्थानभेदादिति। [धर्मचोदनायां] प्रेरणाव्यापारस्य प्राधान्यम्, तत्सिद्ध्यर्थं बोधनव्यापारो नान्तरीयको दृष्टः, ब्रह्मचोदनायामपि तद्वत् स्यात्, प्रेरणाभावे तदाक्षिप्तबोधनमपि न स्यात् वेदवाक्यत्वाविशेषात् इत्याशङ्क्य, उभयोरनुमानयोरप्रयोजकत्व-

**चोदनाप्रवृत्तिभेदाच्च** । इदमपरं प्रमाणोपाधि प्रमेयवैलक्षण्यम् । धर्मचोदना हि प्रेरयन्ती पुरुषमसति विषये प्रेरयितुमसमर्था सती विषयमप्यवबोधयति । ब्रह्मप्रमाणं पुनः बोधयत्येव केवलम्, नावबोधे पुरुषः प्रेर्यते । अवबोधो हि यथावस्तु यथाप्रमाणं चोदेति । न पुरुषस्येच्छामप्यनुवर्तते । तत्र कुतः प्रेर्येत । यथा अक्षार्थयोः सन्निकर्षे सति तेन सन्निकर्षेण अक्षावगम्यार्थज्ञाने पुरुषो न नियुज्यते, तद्वत् । अनिच्छतोऽपि स्वयमुत्पत्तेः । ब्रह्मणि तु नित्यसिद्धत्वान्न प्रेरणा सम्भवति । न ब्रह्मचोदनेति चोदनाशब्दो भाष्ये प्रमाणविवक्षाप्रयुक्तः, प्रेरणाविवक्षया । तदाह—**या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना पुनः पुरुषमवबोधयत्येव केवलम् । अवबोधस्य चोदनाजन्यत्वात् । न पुरुषोऽवबोधे नियुज्यते । यथा अक्षार्थसन्निकर्षेणार्थावबोधे तद्वत् ।** तदेवं जिज्ञास्यैक्यनिबन्धनापि

---

मेयभेदे वक्तव्ये कथं मानभेदं वक्तीत्यत्राह—**इदमपरमिति** । धर्मप्रमाणं प्रवर्तकमेव सत् स्वविषये अर्थभावनाख्ये नियोगे वा अज्ञाते प्रवर्तकत्वानुपपत्तेः प्रवर्तकत्वार्थं विषयं बोधयति, ब्रह्मज्ञानं तु बोधकमेव, अतः कारकत्वबोधकत्वा-भ्यां भेद इत्याह—**धर्मचोदनेति** । ब्रह्ममानमप्यवबोधे प्रवर्तकं अतो न भेद इत्यत्राह—**नावबोधे इति** । अनिच्छतोऽपीत्यत्र अहिदुर्गन्धाविति शेषः । तर्हि ब्रह्मणि प्रवर्तकमिति; नेत्याह—**ब्रह्मणि त्विति** । तर्हि कथं भाष्ये चोदनात्वमुक्तमित्यत्राह—**ब्रह्मेति** । अस्मिन्नर्थे भाष्यमवतारयति–**तदाहेति** । अनन्तरप्रकृतं परमप्रकृतं च निगमयति–**तदेवमित्यादिना** पूर्ववादी(निगमयती)-

---

मभिप्रेत्याह—**ब्रह्मप्रमाणमिति** । वेदवाक्यत्वमप्रयोजकम्, सिद्धसाध्यार्थत्वमेव प्रेरणाद्-भावाभावयोः प्रयोजकमिति भावः ॥

न क्रमापेक्षा तन्त्रद्वयस्य। येन तदपेक्षोऽथशब्दो व्याख्यायेत। अत उपसंहरति—तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यते इति॥

उच्यते—नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमदमादिसाधनसम्पत् मुमुक्षुत्वं च इति। उक्तं पुरस्तात् अधिकारार्थत्वे अथशब्दस्य शास्त्रारम्भवैयर्थ्यं प्रवृत्त्यभावादिति। प्रवृत्त्यभावे च कारणमुक्तम्—अखिलसुखभोगाद्धिरण्यगर्भावाप्तिपर्यन्तान्निवर्तयति ब्रह्मजिज्ञासा क्रियमाणा, तेन तत उद्वेगो लोकस्य, कुतस्तत्र प्रवृत्तिरिति। तस्मात् यावदस्य हिरण्यगर्भावाप्तिपर्यन्तस्य भोगस्योत्पादपरिच्छेदाभ्यां

---

त्याह—अत इति॥

'तद्यथेह कर्मचितो लोकः क्षीयते' इत्यादिना 'सोऽन्वेष्टव्यः'—इत्यादिश्रवणविधिप्रकरणे पठिततया नित्यानित्यवस्तुविवेकादेः श्रवणाङ्गत्वादङ्गस्यापि प्रदोषादिकालवत् अधिकारिविशेषणत्वसम्भवात् तस्य शास्त्रीयाधिकारिविशेषणस्य द्योतकोऽथशब्द इति भाष्येणैवोत्तरमाह—**उच्यत इति**। तेषु हि सत्सु इत्युत्तरं भाष्यं साधनचतुष्टयस्य ब्रह्मानुभवपर्यन्तविचारादिप्रवृत्तावन्वयव्यतिरेकसिद्धहेतुतामाह। तद्व्याकुर्वन् मुमुक्षुत्वं विना तावन्न प्रवृत्तिरित्याह—**उक्तं पुरस्तादित्यदिना**। तस्मात् मुमुक्षुत्वं तावदिष्यमाणसाधने प्रवृत्तिहेतुरित्यर्थः। फलकामनायां सत्यामन्यधर्माभावात् प्रवृत्त्यभावो न दृष्ट इति चेत्, सत्यम्। पूर्वपूर्वस्योत्तरोत्तरस्वरूपोपाधित्वेन प्रतिपन्नतया मुमुक्षुत्वोपाधित्वात् प्रवृत्तिहेतुतेत्याह—**तस्माद्यावदस्येत्यादिना**। सर्वमनित्यं (कार्यत्वाद्घटवदिति)[सत्त्वात्

---

अर्थवादवाक्यसिद्धमोक्षस्य फलत्वसम्भावनां शास्त्रीयाधिकारिविशेषणतां विचारफलतां च यद्यथशब्दो न्यायेन न समर्पयति तदानीं विचारप्रवृत्तिरेव न स्यादित्युक्तमनुसारयति—**उक्तं पुरस्तादिति**। पुरुषे विद्यमानतया प्रतिपन्नस्य पूर्वस्य पूर्वस्योत्तरोत्तरोत्पत्ति-

विनाशित्वादनित्यत्वं नावैति, विनश्यदपीदं कूटस्थनित्यवस्तु-पर्यन्तमेव विनश्यति अन्यथा निरुपादानस्य पुनरुत्पत्त्यसम्भव इति वर्तमानस्याप्यसम्भवादभावोऽभविष्यदिति निरूपणात् नित्यानित्यवस्तुविवेको यावन्न जायते, यावच्चाभिमुखं विनाश-दर्शनात् भुञ्जानस्यापि भोगान् स्रक्चन्दनवस्त्रालङ्कारभोगा-निवाग्निप्रवेशार्थं भोगार्थव्यापारजनितदुःखानुभवाच्च तन्निमित्तां निर्वृतिमप्यलभमानो भोगाद्विरक्तस्ततो मुमुक्षुत्वं तत्साधनशमद-मोपरमतितिक्षासमाधानसम्पन्नो भूत्वा यावन्नालम्बते, तावत् ब्रह्मजिज्ञासां कः प्रतिपद्येत? कथंचित् वा दैववशात् कुतूहलाद्वा बहुश्रुतत्वबुद्ध्या वा प्रवृत्तोऽपि न निर्विचिकित्सं ब्रह्म आत्मत्वे-नावगन्तुं शक्नोति यथोक्तसाधनसम्पत्तिविरहात् अनन्तर्मुखचेता

---

स्वप्नवदिति ;] नेत्याह—**विनश्यदपीति**। अत्र मानं — अन्यथेति। पूर्वकल्पस्य शून्यतापर्यन्तं विनष्टस्य स्वोपादानशेषतया संस्कारावस्थानाभावात् सजातीयाकारेण पुनर्जन्माभाववत् वर्तमानस्यापि [निरुपादनतया] जन्माभाव-प्रसङ्गादित्यर्थः ॥

**भोगान् भुञ्जानस्य भोक्तुः सह भोगैः अभिमुखविनाशदर्शनात्** इति योजना। अत्रैवमन्वयः—यावदनित्यत्वन्नावैति तावन्नित्यं वस्तु न प्रति-पद्यत इत्यध्याहारः। यावन्नित्यानित्यवस्तुविवेकः न जायते तावद्विरक्तो न जायते इत्यध्याहारः। **यावच्चाभिमुखं विनाश** इत्यत्र यावच्छब्दो नकार-मध्याहृत्य विरक्तशब्देन सम्बध्यते यावच्च न विरक्त इति। तावन्मुमुक्षुत्वं नालम्बत इत्यध्याहारः। यावन्मुमुक्षुत्वं नालम्बते तावद्ब्रह्मजिज्ञासां कः प्रतिपद्येतेति साधनकलापाभावे न विचारप्रवृत्तिः इति व्यतिरेकोऽयं दर्शितः; स नास्ति। साधनकलापाभावेऽपि विचारप्रवृत्तिदर्शनादित्यत्राह—**कथञ्चिद्वेति**।

बहिरेवाभिनिविशमानः। तस्माद्वर्णितवस्तुकलापादानन्तर्यमभिप्रेत्य अथशब्दं प्रयुक्तवानाचार्यः। तदाह भाष्यकारः—**तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये। तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते इति।**

**अतःशब्दो हेत्वर्थ इति।** स्यादेतत्—कृतकत्वपरिच्छेदौ नैकान्ततः क्षयिष्णुतां गमयतः, परमाणुषु पाकजलोहितस्य कृतकस्य तेषां च परिच्छिन्नानां नित्यत्वाभ्युपगमात्, वेदेऽपि 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'अपाम सोमममृता अभूम' इत्यादिपुण्यफलस्याक्षयत्वश्रवणात्, अतो न विषयभोगान्नियमेन विरागो विवेकिनामपि। नापि कूटस्थ-

---

अन्वयस्तु प्रसिद्ध ऐवेति मत्वा आह—**तस्माद्वर्णितेति**। उक्तेऽर्थे भाष्यमवतारयति—**तदाहेति** ॥

अथशब्देनैव हेतुत्वस्योक्तत्वात् अतश्शब्दो व्यर्थ इत्याशङ्क्य, अधिकाशङ्कामाह—**स्यादेतदित्यादिना**। यदा तु भावत्वे सति कृतकत्वाद्यनुमानं अनैकान्तिकं तदा कर्मफलस्य कृतकस्यानित्यत्वनियमाभावान्नित्यपुरुषार्थकामिनः तत्रापि प्रवृत्तिः स्यात्। अतो नित्यानित्यवस्तुविवेको न ब्रह्मणि प्रवृत्तेरेव हेतुरित्यर्थः। कर्मफलस्य नियमेनानित्यत्वाभावेऽपि न नित्यत्वे मानमस्तीत्यत्राह—**वेदेऽपीति**। तथापि ब्रह्मविचारस्य किमायातमित्यत्राह—**अतो विषयेति**। अतो वैराग्यादिद्वारकमुमुक्षुत्वाभावात् न ब्रह्मणि प्रवृत्तिरित्यर्थः। तथापि चातुर्मास्यादिव्यतिरिक्तविषयाद्विरक्तस्य ब्रह्मणि विकल्पेन प्रवृत्तिः स्यादित्यत्राह—**नपि कूटस्थेति**। विरुद्धयोः तादात्म्याभावेऽपि संयोगलक्षणा ब्रह्मप्राप्तिः

---

स्थितिनिर्वाहकत्वमनेन प्रकारेण सिद्धं साधनकलापस्य शास्त्रीयाधिकारिविशेषणत्वं च न्यायतस्साधयितुमथशब्दप्रयोग इत्याह—**तस्माद्वर्णितेति** ॥

नित्यवस्त्ववष्टम्भेन मुमुक्षुत्वम् । ततश्च न शमदमादिपरिग्रहः । यतो न तादात्म्यं भोक्तुः सम्भाव्यते । नापि तदवाप्तिः । दुःखाभावेऽपि सुखभोगाभावान्नानवद्यः पुरुषार्थः । अतोऽजीर्ण-भयान्नाहारपरित्यागो भिक्षुभयान्न स्थाल्या अनधिश्रयणम् । दोषेषु प्रतिविधातव्यमिति न्यायः । अतो न तस्य ब्रह्मजिज्ञासायां हेतुत्वमित्य ः तस्य हेतुत्वप्रदर्शनार्थोऽतःशब्दः । कथम् ?

**यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति–'तद्यथेह कर्मजि(चि)तो लोकः क्षीयते एवमेवामुत्र पुण्यजि(चि)तो लोकः क्षीयते' इत्यादिना ॥**

---

स्यादित्यत्राह—**नापीति** । आनन्दापरोक्ष्यस्य पुरुषार्थत्वाज्जीवस्यानानन्दस्य ब्रह्मणो भेदेन ब्रह्मानन्दापरोक्ष्यासम्भवात् अपुरुषार्थतेत्यर्थः । अतोऽन्यस्य पुरुषार्थस्याभावात् कर्मफलस्यानित्यत्वेऽपि नित्यं फलभोगो यथा स्यात् तथा अतिनैरन्तर्येण कर्माण्येवानुष्ठेयानीति मत्वा आह—**अतोऽजीर्णेति** ॥

यतो नित्यपुरुषार्थार्थिना कर्मैवानुष्ठेयं अतो न ब्रह्मणि प्रवृत्तिहेतुता साधनकलापस्येत्याशङ्कानिरासेन तस्य हेतुत्वदार्ढ्यार्थत्वात् नातश्शब्दो व्यर्थ इत्याह—**अतो नेति** । कथं शङ्कानिरासकमानसूचकता अतश्शब्दस्येति पृच्छति—**कथमिति** । भाष्यमेव तत्सूचकत्वमभिनयतीति मत्वा आह—**यस्मादिति** । ब्रह्मातिरिक्तस्य पुरुषार्थजातस्यानित्यत्वमाहेत्यर्थः । अर्थेयं

---

**नापि तदवाप्तिरिति** । ब्रह्मणस्सर्वगतत्वेन नित्यसंयुक्तत्वान्न तत्संयोगः साध्यः । असर्वगतत्वे तु परिच्छिन्नत्वात् ब्रह्मणोऽनित्यत्वप्रसङ्गः । संयोगस्य वियोगान्तत्वादपुनरावृत्तिश्च न सिध्यतीत्यभ्युच्चयः । भोगः स्वसिद्ध्यर्थं पूर्वं साधनानुष्ठापनेन क्लेशयति स्वकाले क्षयशङ्कया दुःखयतीति विषयभोगसाधनकर्मकलापपरित्यागेन दुःखनिवृत्तिहेतुभूत-ब्रह्मप्राप्तिसम्पादनं युक्तमित्याशङ्क्याह—**अतोऽजीर्णेति** ॥

ननु पुण्यस्याप्यक्षयफलत्वं वेद एवाहेत्युक्तम्। न—तस्य वस्तुबलप्रवृत्तानुमानविरोधे अर्थवादस्य नित्यत्वप्रतिपादनासामर्थ्यात्। परमाणूनां पाकजस्य च तद्गुणस्यानित्यत्वात्। अतो भवत्यनित्यत्वदर्शनं विषयभोगानां मुमुक्षुत्वे हेतुः। यत् पुनः मुमुक्षुत्वाभावे निमित्तमुक्तं तत्राह—**तथा ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयति—'ब्रह्मविदाप्नोति परम्' इत्यादि।** अत उपसंहरति—**तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति।** यतः परिपूर्णो हेतुरनन्तरमवश्यं कार्यमारभते अतः कर्तव्येत्यावश्यकतामाह भाष्यकारः। यतो द्वैतानुषङ्गादतितरामुद्विजमानेन ब्रह्मात्मत्वं च हस्तप्राप्तमिव मन्यमानेन प्रवर्तितव्यमेव ब्रह्मजिज्ञासायां प्रदीप्तशिरसेव जलराशौ स्पृशतेव च सुस्वादु

---

सामान्यश्रुतिश्चातुर्मास्यादिविशेषादन्यत्र वर्ततामित्याशङ्कते—**ननु पुण्यस्येति।** चातुर्मास्यश्रुतिस्तावत् सुकृतस्याक्षयत्वमाह, न फलस्य। सत्यपि सुकृते फलस्यानुपभोगवत् क्षयोपपत्तेर्वाक्यस्य श्रुतार्थं त्यक्त्वा फलक्षयार्थकल्पना व्याप्तिबलप्रवृत्तानुमानानुगृहीतश्रुतिविरुद्धेत्याह—**न तस्येति।** 'अपाम सोम'मित्यादिष्वपि अयमेव न्यायः॥

अथोक्तानुमानस्यानैकान्त्यमित्याशङ्क्य, परमाणोः तल्लौहित्यस्य चानित्यत्वस्य साधनान्नेत्याह—**परमाणूनामिति।** तथापि दोषस्य तुल्यत्वान्न ब्रह्मण्यपि प्रवृत्तिरित्यत्राह—**यत्पुनरिति। परमिति।** ब्रह्मैक्यमित्यर्थः। विरुद्धयोर्न तादात्म्यमित्यनुमानं 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिविरुद्धम्, बिम्बप्रतिबिम्बवच्चैक्यम्। अतो ब्रह्मानन्दानुभवादनवद्यपुरुषार्थतेत्यर्थः। उपसंहारभाष्यं विवृणोति—**यतः परिपूर्ण इति।** यतो नित्यपुरुषार्थार्थिनो नान्यत्र प्रवृत्तिरिति शेषः। साधनचतुष्टयस्य व्यतिरेकमुखेनावश्यारम्भकत्वं प्रतिपाद्येदानीमन्वयमुखेन तत् प्रतिपादयति—**यतो द्वैतेति।** 'तद्यथेह कर्मचित'

फलमङ्गुल्यग्रेणाग्रपादस्थेन । एवं सत्यर्थाद्धर्मजिज्ञासा नियमेन पूर्ववृत्तत्वमथशब्देन पूर्वोक्तेन न्यायेन निराक्रियते ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति । अन्तर्णीतविचारान्वये हि चतुर्थीसमासः स्यात् न शब्दाभिधेये इत्यवयवार्थमङ्गीकृत्य षष्ठीसमासो दर्शितः । ब्रह्मशब्दस्यार्थनिर्देशावसरे प्राप्ते सूत्रकार एव निर्देक्ष्यतीति कथयति—ब्रह्म च वक्ष्यमाणलक्षणं जन्माद्यस्य यत इति । तत्र यदन्यैर्वृत्तिकारैः ब्रह्मशब्दस्यार्थान्तरमाशङ्क्य निरस्यते—'न खलु ब्राह्मणजातिरिह गृह्यते प्रत्यक्षसिद्धत्वाजिज्ञास्यत्वाभावात् । नापि तत्कर्तृका जिज्ञासा त्रैवर्णिकाधिकारात् । नापि जीवपरिग्रहः तत्कर्तृत्वे विशेषणानर्थक्यात् कर्मत्वे नित्यसिद्धत्वात् । न शब्दराशेर्ग्रहणम्, तस्य धर्मजिज्ञासौत्पत्तिकसूत्राभ्यामर्थवत्त्वप्रमाणत्वयोर्निरूपितत्वात् । नापि हिरण्यगर्भस्य । तदवाप्तेरपि विरक्तस्य ब्रह्मजिज्ञासोपदेशात् । नापि

---

इत्याद्यागमात् नित्यपुरुषार्थार्थिनोऽन्यत्र प्रवृत्त्यसम्भवाख्यार्थापत्त्या च साधनचतुष्टयस्यावश्यारम्भकत्वे सिद्धे तत्सूचकेन अथशब्देन तदुभयमानहीनस्य धर्मविचारस्य हेतुताप्यर्थादपास्तेत्याह—**एवं सतीति** ॥

धर्माय जिज्ञासेतिवच्चतुर्थिसमासः किं न स्यादित्यत्राह—**अन्तर्णीतेति**। इच्छाप्राधान्ये हीच्छायाः कर्मप्रयोजनयोरैक्यात् कर्मणि षष्ठीसमासः स्यात्। विचारप्राधान्ये तु कर्मप्रयोजनयोर्भेदात् प्रयोजनविवक्षया चतुर्थीसमासोऽपि स्यादित्यर्थः । किं तत् ब्रह्मेच्छायाः कर्म प्रयोजनं चेत्यत्राह—**ब्रह्मशब्दस्येति**। **न जात्याद्यर्थान्तरमाशङ्कनीयमिति** अप्रसक्तप्रतिषेध इत्याशङ्क्य, वृत्तिकारैः ब्रह्मशब्दस्य जात्याद्यर्थत्वमाशङ्क्य तेषां ब्रह्मजिज्ञासया कर्तृत्वेन कर्मत्वेन चान्वयायोगेन निरासः कृतः तदप्यनपेक्षितं सूत्रकृतैव ब्रह्मशब्दार्थोक्ताविति वक्तीत्याह—**तत्र यदन्यैरित्यादिना** ॥

तत्कर्तृकता, ज्ञानवैराग्ययोः सहसिद्धत्वात्' इति, तदपि न कर्तव्यमित्याह—**अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यमिति**।

**ब्रह्मण इति कर्मणि षष्ठी**। वृत्त्यन्तरे तु शेषलक्षणा व्याख्याता, तां निरस्यति—**न शेषे इति**। तत्र हेतुमाह—**जिज्ञास्यापेक्षत्वाज्जिज्ञासाया इति**। अथापि स्यात्—अन्यजिज्ञास्यमिति, तदर्थमाह—**जिज्ञास्यान्तरानिर्देशाच्चेति**। पुनः शेषषष्ठीवाद्याह—**ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते सम्बन्धसामान्यस्य विशेषनिष्ठत्वादिति**। यद्यपि 'शेषे षष्ठी'ति सम्बन्धमात्रे षष्ठी विहिता, तथापि व्यवहारो विशेषमवलम्बते। बहवश्च सम्बन्धविशेषाः। तत्रावश्यमन्यतमः प्रतिपत्तव्यः। अन्यथा व्यवहारानुपपत्तेः। तत्र प्रकरणोपपदयोर्विशेषहेत्वोरभावादर्थाद्विशेषक्रियोपादानात् कारकत्वेनैव सम्बन्धः। तत्रापि सकर्मिकायाः कर्मकारकमभ्य-

---

सामान्यविशेषयोर्विशेषस्यैव ग्राह्यत्वात् कर्मणि षष्ठीत्युक्तिर्व्यर्थेत्यत्राह—**वृत्त्यन्तरे इति**। तर्हि **जिज्ञास्येति** व्यर्थमिति; नेत्याह—**हेतुमाहेति**। यद्यपि सम्बन्धसामान्ये षष्ठी, तथापि ब्रह्मणो जिज्ञास्यत्वं सिध्यतीति शङ्कते—**यद्यपीति**। अस्तु तर्हि एकः सम्बन्धविशेष इति, तत्राह—**बहवश्चेति**। तथापि कथं कारकत्वेन सम्बन्धसिद्धिरित्यत्राह—**तत्र प्रकरणेति**। तथापि ब्रह्मणः कथं कर्मत्वसिद्धिरित्यत्राह—**तत्रापीति**। जिज्ञासायाः सकर्मकत्वात् तदन्तरङ्गकर्मत्वं ब्रह्मणः सिध्यतीत्यर्थः। शाब्दे ब्रह्मणः कर्मत्वे सम्भवति तत्त्यक्त्वा सामान्यं शाब्दं स्वीकृत्य तद्द्वारा परिशेषानुमानात्

---

**कर्मकारकमभ्यर्हितमिति**। क्रियास्वरूपोत्पत्तिहेतुत्वात् क्रियासाध्यफलशालितया

हिंतं इति कर्मत्वं ब्रह्मणो न विरुध्यते। एवमपि साधारणे शब्दे अभिप्रेतमर्थं विहायार्थान्तरं परिगृह्य पुनस्तद्द्वारेणाभिप्रेतमर्थं प्रतिपद्यमानस्य व्यर्थः प्रयासः स्यात्। तदाह—

**एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यादिति ॥**

ननु किमिति व्यर्थः? शेषषष्ठीपरिग्रहे सामान्येन यत् किञ्चित् ब्रह्मसम्बन्धि येन येन जिज्ञासितेन विना ब्रह्म जिज्ञासितं न भवति तत् सर्वं जिज्ञास्यत्वेन प्रतिज्ञातं स्यात्। अतो न विशिष्टसम्बन्धो विवक्ष्यते सामान्ये तस्याप्यन्तर्भावात् इति यद्युच्यते, तदाह—**न व्यर्थः ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेदिति।** स्वयमेव परोक्तमाशङ्क्योत्तरमाह—**न—प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वादिति।** संक्षेपतो वस्तुसङ्ग्रहवाक्यम्। एतदेव प्रपञ्चयति—**ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानम्। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि। यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वदिति।** यस्मात् ब्रह्मावाप्तिः पुरुषार्थः तेन तत्

कर्मत्वकल्पनेऽपि अर्थगौरवं स्यादित्युत्तरभाष्यं व्याकुर्वन् दूषयति—**एवमपीति।** पुनरुक्तिनैरवैयर्थ्यचोद्यं तदुत्तरभाष्यं व्याचष्टे—**ननु किमितीत्यादिना।** फलं हि ... त्याह—**एतदेवेति।** प्रपञ्चनभाष्यं विवृणोति—**यस्मादिति।**

फलरूपत्वाच्चेत्यर्थः। **साधारणे इति।** शेषार्थे च विहितत्वादित्यर्थः। महदाद्यणुपर्यन्तस्य प्रपञ्चस्य ब्रह्मकार्यत्वेन तत्सम्बन्धित्वमस्तीति तद्व्यावर्तयति—**येन येनेति।** सर्वग्रन्थेषु परमतानुवादानामर्थमाह—**स्वयमेवेति ॥**

ज्ञानेनाप्तुमिष्टतमम्। अतस्तदर्थत्वात् प्रवृत्तेः प्रधानं तत्। तस्मिन् प्रधाने जिज्ञास्यमाने येन जिज्ञासितेन विना न सम्पूर्णा जिज्ञासा तत् सामर्थ्यादेव तादर्थ्येन जिज्ञास्यते। न पृथगभिधानेन कृत्यमस्ति। यथा राजासौ गच्छतीत्युक्ते यावता परिवारेण विना राज्ञो गमनं न सम्पद्यते तावतो गमनमर्थाक्षिप्तमिति न पृथगभिधीयते लोके तद्वदिहापि स्वरूपप्रमाणयुक्तिसाधनप्रयोजनानि ब्रह्मज्ञानपरिपूर्णतार्थमर्थादेव जिज्ञास्यत्वान्न पृथक् सूत्रयितव्यानि। किं च, शास्त्रप्रवृत्तिरेव कर्मणि षष्ठीं गमयति। कथम्? एवं हि शास्त्रमारब्धव्यम्, 'पुण्यचितो लोकः क्षीयते' इत्यादिश्रुतेः न्यायतश्च पुण्यस्य क्षयदर्शनाद्विरक्तस्य 'ब्रह्मविदाप्नोति परम्'इत्यादिश्रुतेर्ब्रह्मज्ञानात् पुरुषार्थसिद्धिः परा इत्यतः तज्ज्ञातुमिच्छतः श्रुत्या 'यतो वा इमानि भूतानि जायन्ते' इत्येवमाद्यया तत्प्रतिपादनपूर्वकं 'तद्विजिज्ञासस्व' इति साक्षादेव

---

प्रधानमित्यर्थः। कानि तानि ब्रह्मापेक्षितानीत्यत्राह—**स्वरूपेति**। अतो न तेषां जिज्ञास्यत्वप्रतिज्ञानं प्रयोजनमित्यर्थः॥

सूत्रारम्भोऽपि कर्मणि षष्ठ्यां मानमित्याह—**किञ्चेति**। विचारविध्यपेक्षितन्यायसूचनार्थं कथमेतद्गमयतीति शङ्कते—**कथमिति**। तदुक्तं विचारविधिना आक्षिप्तः सूत्रारम्भ इत्याह—**एवं हीति**। विजिज्ञासस्वेत्यादौ विचारविधिरेव न विवक्षितोऽधिकाराश्रवणादित्यत्राह—**पुण्यचित इति**। ननु न वैराग्यमात्रमधिकारः, किन्तु तदुपाधिका मुमुक्षा जिज्ञासा च, ते न स्तः इत्यत्राह — **ब्रह्मविदिति**। सर्ववेदान्तप्रत्ययन्यायेन वैराग्यादिकं फलवाक्यसामर्थ्यात् मुमुक्षुत्वं जिज्ञासुत्वं च अधिकारिविशेषणमस्तीत्यर्थः। यदि विजिज्ञासस्वेति ब्रह्मविचारो विधित्सितः तर्हि प्रतिपादनीयं तत् ब्रह्मेत्यत्राह—**श्रुत्येति**। **तद्विजिज्ञासस्वेति**। विचारो विहित इति शेषः। तत्र शब्दादेव

---

अथशब्दस्य मूलश्रुतिमाह—**पुण्यचित इति**॥

कर्मतया ज्ञेयत्वेनानुशासनं यत्, तदिदं 'अथातो ब्रह्मजिज्ञासा' इति सूत्रितम्। तेन कर्मषष्ठीपरिग्रहे श्रुतिन्यायसूचनपरं सूत्रं तदनुगतं भवति। अन्यथा लक्ष्याननुगतमसम्बद्धं स्यात्। तदाह—श्रुत्यनुगमाच्चेति। वस्तुसङ्ग्रहवाक्यम्। तत्प्रपञ्चः—'यतो वा इमानि भूतानि जायन्ते' इत्याद्याश्च श्रुतयः 'तद्विजिज्ञासस्व तद् ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासा-कर्मत्वं दर्शयन्ति। तच्च कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्मात् ब्रह्मण इति कर्मणि षष्ठी ॥

ज्ञातुमिच्छा जिज्ञासेति जिज्ञासापदस्यावयवार्थं कथयति इच्छाप्रदर्शनार्थम्। ततश्चेच्छायाः फलविषयत्वात्तज्ज्ञानस्य अवगतिपर्यन्तता सूत्रिता भवति। तदाह—अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म फलविषयत्वादि-च्छाया इति। अवगतिरिति साक्षादनुभव उच्यते। ज्ञानं तु परोक्षेऽनुभवानारूढेऽपि सम्भवति संनिहितेऽप्यसम्भावितविषये

---

ब्रह्मणो निर्दिष्टस्य कर्मत्वस्यात्र सूत्रितत्वात् सूत्रे तत्कर्मत्वं शाब्दमेव वाच्यम्। तच्च कर्मणि षष्ठीं विना नोपपद्येत। तत् सूत्रस्य श्रुत्यनुगमान्यथानुपपत्त्यापि कर्मणि षष्ठी स्वीकार्येत्याह—साक्षादेवेति ॥

विचारकर्तव्यतापरे सूत्रे अवयवार्थोक्तिर्व्यर्थेत्यत्राह—जिज्ञासापद-स्येति। तद्वा किमर्थमित्यत्राह—ततश्चेति। (त)[अ]थावगतिफलकं ज्ञानम्, अतो ब्रह्मणि ज्ञाते अज्ञाते च तदिच्छा न सम्भवतीत्यत्राह—अवगतिरि-तीति। अतो ब्रह्मणि परोक्षे ज्ञाते ह्यपरोक्षज्ञानार्थमिच्छा स्यात्, अपरोक्षतया

---

ज्ञानमात्रस्येष्यमाणत्वायोगाद्विचारसाध्यविशेषज्ञानस्येष्यमाणत्वप्रदर्शनार्थं तस्य मुमु-क्षोरिच्छाविषयत्वाय निरतिशयानन्दापरोक्ष्यफलशिरस्कत्वप्रदर्शनार्थं च अननुष्ठेयाया अपीच्छाया वाक्यार्थत्वकथनमित्याह—इच्छाप्रदर्शनार्थमिति ॥

अनवसितरूपमित्युक्तं पुरस्तात्। तदाह—**ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः।** ब्रह्मरूपतासाक्षात्करणमित्यर्थः। तदेतच्छास्त्रान्तर्भूतं सूत्रम्। अनेन च प्रयोज्यसम्बन्धिन्योर्जिज्ञासामुमुक्षाक्रिययोरेकस्याः कारणान्तरसिद्धायाः पूर्ववृत्ततया हेतुत्वमर्थादुपात्तम्। इतरस्यास्तदनन्तरं तत्प्रयुक्तायाः कर्तव्यता श्रुत्या अभिहिता। तत्र जानात्येवासौ

---

त्वसम्यक्त्वेन ज्ञाते सम्यग्ज्ञानार्थं वा सा स्यादित्यर्थः। **प्रमाणेनेति।** अपरोक्षसम्यग्ज्ञानेनेत्यर्थः। हेतुमाह—**ब्रह्मावगतिर्हीति।** पूर्वोक्तमेवावगतिशब्दार्थं स्पष्टयति—**साक्षात्करणमिति।** अस्य सूत्रस्य शास्त्रान्तर्भूतत्वे किं आरम्भकं सूत्रान्तरम्? स्वयमेव वा? आद्ये अनवस्था, अन्त्ये तु आत्माश्रयता, अनन्तर्भावे त्वव्याख्येयत्वान्न वाक्यार्थो वाच्यः इत्यत्राह—**तदेतदिति।** श्रवणविधायकवेदान्तविचारार्थत्वेनारब्धत्वाद्वेदान्तविचारशास्त्रे अन्तर्भूतम्, तस्य वेदान्तस्य स्वार्थे समन्वयद्वारा श्रोतव्ये ब्रह्मणि स्पष्टलिङ्गानां वाक्यानां समन्वयहेतुत्वात् समन्वये प्रथमे पादे अन्तर्भूतं चेत्यर्थः॥

अथापि पदार्थोक्तावर्थाद्वाक्यार्थसिद्धेः न वाक्यार्थो वाच्य इत्याशङ्क्य, अर्थसिद्धमनुवदति—**अनेन चेति।** अधिकारिसम्बन्धिन्योर्जिज्ञासामुमुक्षयोर्मध्ये मुमुक्षाया वैराग्याद्युपाधिसिद्धाया हेतुत्वं अथशब्देनानन्तर्योक्तिसामर्थ्यादुक्तम्। अतश्शब्दस्य श्रुत्या हेत्वर्थस्यापि आशङ्कानिरासे तात्पर्यात्, जिज्ञासायास्तु मुमुक्षाजन्यायाः कर्तव्यता श्रुत्योक्ता, अनुवादे फलाभावेन कर्तव्यपदाध्याहारादित्यर्थः। तर्हि इच्छायाः कर्तव्यत्वायोगादिष्यमाणतया साध्यतावगमाच्च ज्ञानस्य कर्तव्यत्वं वाक्यार्थत्वेनोक्तं भवतीति किमुत्तरभाष्येणेत्यत्राह—**तत्र जानातीति।** इष्यमाणं ज्ञानं कर्तव्यमिति स्वयमेव जानाति, प्रयत्नाजन्यं च तत् मानमात्रायत्तत्वात्, अतो न तत्कर्तव्यता वाक्यबोध्येत्यर्थः॥

किं तर्हि बोध्यमित्याशङ्क्य, अज्ञातत्वात् प्रयत्नजन्यत्वाच्च विचारस्य

**मयैतत्कर्तव्यमिति । उपायं तु न वेद । ततः तस्योपायः कथनीयः। शास्त्रस्य च सम्बन्धाभिधेयप्रयोजनानि वक्तव्यानि। इतरथा प्रेक्षारहितमिव सर्वमापद्येत। अतोऽनेनैव सूत्रेणेदमपि सर्वं सूत्रितमिति कथयितुमाह—तस्मात् ब्रह्म जिज्ञासितव्य- मिति। अन्तर्णीतविचारार्थविधेयत्वाङ्गीकारेण मीमांसितव्य- मित्यर्थः। एतदुक्तं भवति—ब्रह्मज्ञानकामेनेदं शास्त्रं श्रोतव्यम्।**

---

तत्साधनत्वं बोध्यम्, कृत्यर्हेष्ट(स्य)साधनस्य विधित्वादित्याह—**उपायं त्विति**। तर्हि ब्रह्म विचार्यमिति वाक्यार्थो वाच्यो न **विजिज्ञासितव्यमिती**त्यत्राह ---**शास्त्रस्येति**। सम्बन्धाद्यनुक्तौ उन्मत्तादिकृताविव श्रोतृप्रवृत्तिः न स्यादि- त्याह—**इतरथेति**। तथा च मुमुक्षूणां ब्रह्मानुभवाय विचारः कर्तव्य इति वाक्यार्थकथनार्थमुत्तरभाष्यमर्थवदित्याह—**(तत्रा)[अतोऽ]नेनेति**। सूत्र- भाष्ययोर्विचारवाचकाभावात् कथं तत्कर्तव्यता वाक्यार्थत्वेनोक्तेत्यत्राह— **अन्तर्णीतेति**। इच्छादेर्विधेयत्वानुपपत्त्या तत्सम्बन्धिविचारस्य लक्षणया विधेयत्वाङ्गीकारात् विचारः कर्तव्य इति वाक्यार्थो विवक्षित इत्यर्थः॥

अथापि शारीरकश्रवणे किमायातम्? को वा ब्रह्मविचारः? इत्यत्राह— **एतदुक्तमिति**। शारीरकं हि ब्रह्मविचारः, अतः तच्छ्रोतव्यमित्युक्तं स्यादि-

---

**ब्रह्मज्ञानकामेनेदं शास्त्रं श्रोतव्यमिति। इदं शास्त्रं श्रोतव्यं**—श्रवणार्हमेव इत्यव्यवहितविषयेण सम्बन्धः सूत्रितः। **श्रोतव्यमेव**—न पूर्वमीमांसाश्रवणेन श्रुतं इत्य- व्यवहितविषयः सूत्रितः। **ब्रह्मज्ञानकामेनेति**। ब्रह्मात्मैकत्वज्ञानकामेनेत्यर्थः। तत्र वेदान्तविचारसाध्यज्ञानेनैकत्वमवगन्तुं शक्यमिति व्यवहितसम्बन्ध उक्तः। अनेनैव तदव- गन्तुं शक्यं नान्येनेति व्यवहितविषय उक्तः। कामनाविषयत्वेन ज्ञानस्योक्तत्वात्तस्य निरति- शयानन्दापरोक्ष्यनिश्शेषसंसारनिवृत्तिलक्षणमोक्षसाधनत्वं सूत्रितम्। तदेव साक्षात्प्रयोजनं ज्ञानं तु तत्साधनत्वेन द्वारप्रयोजनमिति ग्रन्थार्थः॥

॥ इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां तृतीयवर्णकं समाप्तम्॥

**यस्मात् ब्रह्मज्ञानमनेन शास्त्रेण निरूप्यते। तेन प्रयोज्यस्य अभिमतोपायः शास्त्रमित्यर्थाच्छास्त्रस्य सम्बन्धाभिधेयप्रयोजनं कथितं भवति ॥**

॥ इति पञ्चपादिकायां तृतीयवर्णकं समाप्तम् ॥

---

त्यर्थः। ज्ञानसाधनत्वाच्छास्त्रस्य मुमुक्षोरिष्टसाधनत्वमेव नास्ति, अतः कथं तद्वाक्येनोच्यत इत्यत्राह—**यस्मादिति**। यतो मोक्षशिरस्कं ज्ञानमुत्पाद्यते शास्त्रादतो मुमुक्षोरिष्टोपायः शास्त्रमित्यर्थः। अथापि कथमेतद्भाष्येण सम्बन्धाद्युक्तिरित्यत्राह—**इत्यर्थादिति**। अतः इष्टोपायत्वोक्त्या शास्त्रस्य अर्थात् ज्ञानद्वारा काम्यमानः मोक्षः फलम्, शास्त्रत्वे सति ब्रह्मज्ञानसाधनत्वात् ब्रह्मविषयम्; तद्विषयत्वात्तेन सम्बद्धमिति चोक्तं स्यादित्यर्थः ॥

॥ इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां तृतीयवर्णकं समाप्तम् ॥

## ॥ अथ चतुर्थवर्णकम् ॥

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं न जिज्ञासितव्यम्। अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति प्रयोजनविषयसम्बन्धानाक्षिपति। कथम्?। प्रसिद्धशब्देन प्रतिपन्नमुच्यते। तद्यदि प्रतिपन्नमन्येन केनचित् तदा अस्य शास्त्रस्य न विषयः। कस्मात्?। प्रतिपाद्यत्वेन हि विषयता। प्रतिपन्ने च तस्मिन् अकिञ्चित्करं शास्त्रमिति नास्य विषयः स्यात्। ततश्चानेनानवगमान्नास्य प्रयोजनं ब्रह्मावगतिः स्यात्। अतः प्रयोजनमप्याक्षिप्तम्। अथाप्रसिद्धं न शक्यं जिज्ञासितुम्। कथम्?। यन्न कदाचिदपि बुद्धौ समारूढविशेषं

---

**तत् पुनर्ब्रह्मेत्यादेः** पूर्वेणासङ्गतिमाशङ्क्य, तात्पर्यमाह—**प्रयोजनेति।** विधिसामर्थ्यादेव प्रयोजनादिषु ज्ञातेषु कथमाक्षेप इति चोदयति—**कथमिति।** प्रतिपन्नमनूद्य प्रतिपादयितुं शक्यत्वात् कथं अविषय इत्याह—**कस्मादिति।** अज्ञातार्थत्वाभावादिति दूषयति—**प्रतिपाद्यत्वेनेति।** विषयावगमद्वारप्रयोजनस्य पूर्वावगमेन सिद्धत्वात् प्रयोजनं च नास्येत्याह—**ततश्चेति।** प्रयोजनकामोऽधिकारीति सोऽप्याक्षिप्त इत्यपेरर्थः। **अथेति** अप्रसिद्धपक्षे सम्बन्धप्रयोजनाधिकारिण आक्षिपति। अथानधिगतार्थ एव मानेन प्रतिपाद्यते प्रयोजनं च तत्रेति चोदयति—**कथमिति।** परिहारः—**यन्न कदाचिदिति।** प्रत्यक्षादिमानैर्विचारानपेक्षैरत्यन्ताज्ञातोऽर्थो बोध्यते। यत्र विचारापेक्षया मानेनार्थो ज्ञाप्यते तत्राप्रतिपन्नमुद्दिश्य विचारायोगात् प्रतिपन्ने विमर्शदर्शनान्नाज्ञातार्थो बोध्यत इत्यर्थः। अतो विचारवेदान्तयोर्ब्रह्मप्रतिपादनाशक्तेः ब्रह्मणा प्रतिपाद्यप्रतिपादकत्वसम्बन्धो नास्तीत्याह—

---

**प्रतिपन्नमिति।** प्रमितमित्यर्थः। **यन्न कदाचिदपीति।** यद्वस्तु कदाचिदपि बुद्धौ सामान्यरूपेण समारूढं असमारूढविशेषं च **कथं तत्प्रतिपाद्येते**त्यन्वयः। अथवा, यत् कदाचिदपि बुद्धौ सामान्यरूपेण वा विशेषरूपेण वा न भातीत्यर्थः। तत् कथं बुद्धाव-

कथं तत् प्रतिपाद्येत । अतः प्रतिपादनाशक्तेर्न तत् स्पृशत्यपि शास्त्रम् । प्रसिद्धं पुनर्यदि नामानेन प्रतिपाद्यते प्रसिद्धत्वादेव तथापि न तेनार्थेन निरालम्बनम्, अप्रसिद्धं पुनरालम्बनमपि न स्यात् । अतो न केनचिदर्थेन सम्बद्धं शास्त्रमिति सम्बन्ध आक्षिप्तः ॥

अस्ति तावत् ब्रह्मेत्यादिना त्रितयमपि समाधत्ते श्रोतृप्रवृत्त्यर्थम् । ननु प्रेक्षावता अविसंवादकेन प्रणीतं शास्त्रम्, नेदृशो निष्प्रयोजनं निर्विषयमसंबद्धं चारभते इति तद्गौरवादेव प्रवर्तन्ते श्रोतारः । किमनेन प्रयासेन ? । सत्यम्, भवति सामान्येन प्रयोजनवत्त्वप्रतीतिः प्रणेतृगौरवात् । न तु तावन्मात्रेण प्रवृत्तिः । अभिप्रेतप्रयोजनाय हि प्रवर्तन्ते । न तन्निर्देशादृते शक्यतेऽवगन्तुम् । एवमपि प्रयोजनविशेष एव

---

अत इति । नन्वप्रसिद्धपक्षे किमिति सम्बन्धाक्षेपः प्रसिद्धपक्षे न ; इत्यत्राह— **प्रसिद्धं पुनरिति** । प्रसिद्धे अतिशयजनकत्वाभावेऽपि अनुवादवदालम्बनभावात् तेन सम्बन्धः स्यात्, अप्रसिद्धस्य सत्तैव नेति न सम्बन्धशङ्केत्यर्थः ॥

सामान्यज्ञातस्य वा[विशेषरूपेण]विशेषतोऽप्यापातज्ञातस्य वा विशेषनिर्णयाय मानानुग्राहकः तर्क इति न्यायात् ब्रह्मणोऽप्यनिश्चितविशेषधीगोचरतया विचारयोग्यत्वप्रदर्शनेन समाधत्त इति भाष्यतात्पर्यमाह—**अस्ति तावदिति**। समन्वयाध्याये ब्रह्मविषयत्वं सम्बन्धश्च सिध्यति, फलाध्याये मोक्षफलत्वं च, अतोऽत्र समाधानं व्यर्थमित्यत्राह—**श्रोतृप्रवृत्तीति**। फलविशेष एव प्रवृत्त्यङ्गम्, न विषयसम्बन्धाविति चोदयति—**एवमपीति**।

---

समारूढविशेषं प्रतिपाद्येतेत्यन्वयः । **न तत् स्पृशत्यपीति** । अस्मिन् पक्षे न केवलं विषयस्यैवासम्भवः, किन्तु सम्बन्धस्यापीत्यर्थः । विषयशब्दस्यानन्यसाधारणत्वमर्थ इति

निर्दिश्यताम्। न च विषयभावमनापन्नमशक्यप्रतिपादनं च प्रयोजनं भवति। छिदिक्रियाविषय एव वृक्षश्छिन्नः प्रयोजनमित्युच्यते। दण्डादेरपि मृद्विषयस्य मृदेव घटावस्था प्रयोजनम्। सत्यमेवम्। तथापि, यथा चिकित्साज्ञाने चरकसुश्रुतात्रेयप्रभृतीनि बहूनि, यथा वा तण्डुलनिष्पत्तिप्रयोजना अवघातनखनिर्भेददलनक्रिया बह्व्यः, तत्र नावश्यमेकत्रैव प्रवृत्तिः; तथेहाप्यन्यस्मादपि कथंचिद्ब्रह्मावगतिसिद्धौ नावश्यमत्रैव प्रवृत्तिः। अतोऽनन्यसाधारणो विषयो वक्तव्यः। यथा अर्जुनस्यायं विषय इत्यनन्यसाधारणता प्रतीयते। तेनानन्यसाधारणत्वाय

---

विषयं शक्यसाध्यं च अज्ञात्वा फलज्ञानात् प्रवृत्तिर्न दृष्टेत्यत्राह—**न च विषयेति**। विषयस्यैव फलसाधनं प्रवृत्तिविषयो न फलं इत्यत्राह— **छिदिक्रियेति**। विषयस्यैव साध्यातिशयविशिष्टस्य फलत्वात् फलोक्तौ तावप्युक्ताविति न पृथग्वक्तव्याविति अर्थः। कुलालदण्डादिव्यापारो मृद्विषयो घटफल इति विषयफलयोः भेदाद्विषयसम्बन्धौ पृथग्वाच्यावित्यत्राह—**दण्डादेरिति**॥

फलोक्तौ विषयादेरपि अर्थादुक्तिमुपेत्य समाधत्ते — **सत्यमिति**। **तथापि विषयः पृथक् निर्देश्य** इति उत्तरत्रान्वयः। किमर्थमिति वक्तुमेकस्य ज्ञानस्य बहुकारणजन्यत्वे दृष्टान्तः उच्यते—**यथा चिकित्सेति**। तद्वत् शास्त्रान्तरादपि ब्रह्मज्ञानोत्पत्त्या तद्द्वारकफलसिद्धिशङ्कया अस्मिन्नेव शास्त्रे प्रवृत्तिर्न स्यादित्यर्थः। तथापि फलक्रियानियमात् ब्रह्मज्ञानकरणेष्वेवेति प्रवृत्तिनियमः स्यादित्यत्राह—**यथा(चे)[वे]ति**। तद्वत् क्रियान्तरादपि ब्रह्मावगत्युत्पत्त्याशङ्कया तत्रापि नियमो न स्यादित्याह—**तथेहापीति**। अतः (करणा)[श्रवणा]ख्यशास्त्रस्यासाधारणो विषयो वाच्य इत्याह—**अतोऽनन्येति**। किमिदमसाधारणत्वमित्याशङ्क्य, व्यावर्तकतेत्याह —**यथेति**॥

अथापि कथं प्रवृत्तिनियम इत्यत्राह—**तेनेति**। ब्रह्मविषयं शास्त्रं प्रयोजनस्य

---

क दृष्टमिति; तदाह—**यथार्जुनस्येति**। अयं—कर्णो **विषय** इत्यर्थः।

विषयः [पृथक्] निर्देश्यः प्रवृत्त्यङ्गत्वेन। सम्बन्धोऽपि वक्तव्यः प्रवृत्त्यङ्गत्वेनैव। यथा साधुशब्दपरिज्ञानं व्याकरणारम्भात् प्राक् न केनचित् साध्यते। तेन न केनचित् सम्बद्धम्। अतस्तदर्थी न क्वचित् प्रवर्तते। यथा वौदननिष्पत्तिरेकक्रियानियतापि न गमनाद्येकक्रियासाध्या। तेन न तया सम्बन्धः। ततश्च न गमनादिक्रियायामोदनार्थी प्रवर्तते। तेन पुरुषार्थरूपता अनन्यसिद्धता तत्प्रतिपाद्यता चेति भिद्यन्ते विषयसम्बन्धप्रयोजनानि। तानि च त्रीण्यपि प्रवृत्त्यङ्गम्। नापुरुषार्थे काकदन्तपरीक्षायां तुषखण्डने वा प्रवर्तते प्रेक्षावान्। नापि पुरुषार्थे चिकित्साज्ञाने सुश्रुतादिसिद्धे चरके नियमेन प्रवर्तते। नापि तण्डुलेषु दलनसिद्धेष्ववघाते। नाप्यनन्यसिद्धेऽपि साधुशब्दपरिज्ञाने

---

मोक्षफलमित्युक्ते तदर्थिनः तत्र नियता प्रवृत्तिः यस्मात् तस्मात् प्रवृत्तिनियतत्वाय विषयो हिरुग्वाच्य इत्यर्थः। विषयस्य सम्बन्धित्वेनान्तर्णीतसम्बन्धत्वात् सम्बन्धो न पृथग्वाच्य इत्यत्राह—**सम्बन्धोऽपीति**। तत्रानन्यप्रतिपाद्यत्वात् साधनान्तरासम्बन्धात् अन्यत्वात् सम्बन्धः पृथग्वाच्य इति(वाच्यम्,) [वक्तुं] अन्यत्वं दृष्टान्तेन साधयति—**यथा साध्विति**। अन्यत्वेऽपि कथं प्रवृत्तिहेतुतेति चेत् अन्वयव्यतिरेकाभ्यामित्याह—**अतस्तदर्थीति**। तर्हि सम्बन्धे सम्बन्धिनो विषयस्यापि अन्तर्भावात् सम्बन्धाद्धिरुक् न वाच्य इत्यत्राह—**यथा (चे)[वे]ति**। तत्र फलमाह—**तेन पुरुषार्थेति**। पृथग्वाच्यानीति शेषः। ननु स्वरूपभेदे पृथग्वाच्यत्वेऽपि कथं त्रितयं सम्भूय प्रवृत्त्यङ्गमित्याशङ्क्य, व्यतिरेकमुखेन तथात्वं दर्शयति—**तानि चेत्यादिना**। यद्यपि फलोक्तौ प्रवृत्त्यङ्गं सर्वमर्थादुक्तं स्यात्, तथापि फलद्वारा विषयादिप्रति-

---

व्यतिरेकमुखेन प्रवृत्त्यङ्गत्वं साधयति—**नापुरुषार्थ इति**। विषयस्यापि व्यतिरेकमुखेनैतत् साधयति—**नापीति**। सम्बन्धस्यापि तथैव साधयति—**नाप्यनन्यसिद्ध इति**॥

**पुरुषार्थे अतत्साधने वैद्यकादौ कश्चित् प्रवर्तते। गमने वा अनोदनसाधने। तत्र विप्रतिपत्त्या एकान्ततः प्रसिद्धतामप्रसिद्धतां च निरस्य शक्यप्रतिपाद्यमानतामनन्यसिद्धतां च दर्शयन् विषयसम्बन्धौ समर्थितवान्। निःश्रेयसप्रयोजना प्रस्तूयते इति च प्रयोजनम् ॥**

**ननु [च] ब्रह्म वेदान्तानां विषयः। शास्त्रं च तेषां ब्रह्मप्रतिपादनानुसरणोपायन्यायविषयम्। तत् कथं शास्त्रस्य विषयसम्बन्धौ भवतः? प्रयोजनं तु कदाचित् स्यादपि प्रणाड्या धर्मार्थविषययोरिव शास्त्रयोः कामावाप्तिः। नन्वाग्नेयादीनां**

---

पत्तौ सन्देहादिना मन्दमतेर्झटिति प्रवृत्तिः न स्यात्, अतो झटिति नियतप्रवृत्त्यर्थं पृथग्वक्तव्यानीति भावः ॥

वक्तव्यमपि त्रितयं प्रसिद्धाप्रसिद्धपक्षयोरनुपपन्नमित्युक्तमिति तत्परिहारायोत्तरभाष्यस्य आ अधिकरणसमाप्तेः तात्पर्यमाह—**तत्र विप्रतिपत्त्या एकान्तत इत्यादिना**। तथापि विचारशास्त्रस्य विषयसम्बन्धौ न साधिताविति शङ्कते—**ननु चेति**। ननु ब्रह्मजिज्ञासेति शास्त्रस्यापि स हि विषयो निर्दिष्टः, अतस्तस्य प्रतिपाद्यत्वसम्बन्धोऽपि स इति; नेत्याह—**शास्त्रं च तेषामिति**। सूत्राणि न्यायविषयाणि न्यायाश्च मानमेयसम्भावनाविषया इत्यर्थः। तर्हि सम्भावनाज्ञानमेव प्रयोजनमपीति; नेत्याह—**प्रयोजनं त्विति**। **[प्रणाड्येति।]** परम्परयापीत्यर्थः। धर्मार्थाभ्यां हि सुखमेव प्राप्यत इति तयोः तत्परता ॥

अथाग्नेयादिषड्यागानां स्वर्गफलानामारादुपकारकाणि प्रयाजादीनि सन्निपत्योपकारकाणि प्रोक्षणादीनि चेतिकर्तव्यता, तद्वत् ब्रह्मावबोधफलानां वेदान्तानां मीमांसा शक्तितात्पर्यविषया स्वरूपोपकारितया ज्ञेयविषया, फलोपकारितया चेतिकर्तव्यता, 'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति वाक्यादिति चोदयति—**नन्वाग्नेयादीनामिति**। अतः करणेतिकर्तव्यतयोरेकफलत्वात्

स्वर्गफलानां प्रयाजादीतिकर्तव्यतावद्वेदान्तानामप्यर्थमवबोधयतामितिकर्तव्यता मीमांसा, तेनार्थावबोधे वेदान्तानामुपकारकत्वाद्भवति शास्त्रमपि तद्विषयम्। न हि शालिबीजस्याङ्कुरं जनयतः सहकारिणो जलादेरङ्कुरो न कार्यम्। तेन यद्यपि वेदान्ता एव ब्रह्मावबोधे कारणं मीमांसा चेतिकर्तव्यताभागं पूरयति, तथापि ब्रह्मविषयैव। न हि च्छेत्तुरुद्यमननिपातनलक्षणो व्यापारः परशुविषयो न वृक्षविषयः। तदर्थत्वात्, करणस्य च द्वारत्वात्। अन्यथा अन्यत्र कर्तृव्यापारोऽन्यत्र फलमिति वैयधिकरण्यं स्यात्॥

उच्यते—विषम उपन्यासः। युक्तं यत्र यदुपकार-

---

ब्रह्मावबोधफला मीमांसा तत्फलवेदान्तवत्तद्विषयेत्याह—**तेनेति**। इतिकर्तव्यतायाः करणोपकारफलत्वान्न तयोरेकफलतेत्यत्राह—**न हीति**। तथापि ब्रह्मावबोधे वेदान्ताः करणम्, मीमांसा तु तदुपकारकं सम्भावनाज्ञानं जनयति, अतः कथं तदेकफलतया तदेकविषयतेत्यत्राह—**तेन यद्यपीति**। करणेतिकर्तव्यतयोरेकफलत्वस्याङ्कुरादौ दृष्टत्वेन सम्भावनाज्ञानद्वारा ब्रह्मधीफलत्वस्वीकारात्तद्विषयतेत्यर्थः॥

यत्त्वेकफलत्वेऽपि न्यायद्वारा सम्भावनाविषयत्वान्न ब्रह्मविषयतेत्युक्तं तत्राह—**न हि छेत्तुरिति**। तत्रापि कथमित्यत्राह—**तदर्थत्वादिति**। तर्हि कथं कुठारविषयतेत्यत्राह—[**करणस्य च**] **द्वारत्वादिति**। द्वारोद्देश्यत्वाभ्यामेकस्यानेकविषयता न्याय्येत्यर्थः। अव्यवधानात् कुठार एव विषयोऽन्यस्त्वार्थिक इत्यन्याय्यमि(त्यत्रा)[त्या]ह—**अन्यथेति**। यत्रेतिकर्तव्यतात्वे मानमस्ति तत्रेकविषयत्वं युक्तम्, मीमांसायास्तु वेदान्तेतिकर्तव्यतात्वेऽन्वयव्यतिरेकयोर्विचारविधेश्चासम्भावनादिप्रतिबन्धाभावे(ऽपि)शब्देनैव सम्यग्ज्ञानोत्पत्त्या मानत्वाभावान्न ब्रह्मविषयतेत्येवं सिद्धान्तिनं परिहरति—[**उच्यते**]**विषम**

मन्तरेण फलोत्पत्तिरेव न सिध्यति तस्यापि तद्विषयत्वम् । इह पुनर्विनापि मीमांसया सम्बन्धग्रहणतदनुस्मरणबुद्धिसन्निधानमात्रोपकृतं वाक्यमर्थमवगमयति, नापरमपेक्षते । ननु संशयविपर्यासनिरासद्वारेण निर्णयहेतुत्वात् निर्णयस्य च निर्णेयप्रधानत्वाद्भवति निर्णेयं वस्तु निर्णयहेतोर्विषयः । नैतत् सारम्—यत्र ह्यनेकं विज्ञानं वाक्यश्रवणे सति जायते मीमांसानिरपेक्षमेव तत्रैकं वाक्यजन्यम् । एकार्थनियतत्वादेकस्मिन् प्रयोगे वाक्यस्य । इतराणि पुनः सामान्यतोदृष्टनिबन्धनानि । तत्र मीमांसया लोकप्रसिद्धशब्दशक्त्यनुसारिण्या इदं शब्दजनितं ज्ञानमिति तदालम्बनं वेदार्थ इति ज्ञात्वा अन्यदुपेक्षते । न पुन-

---

**इति** । सम्यग्ज्ञाने हेतुरेव शब्दः शक्तितात्पर्याज्ञानादिदोषात् संशयादिहेतुः, अतः तद्दोषनिरासेन संशयादिनिरासान्यथानुपपत्तिर्विचारस्य शब्देतिकर्तव्यतात्वे मानमिति शङ्कते—**ननु संशयेति** ॥

तत्र किं शब्द एव दोषात् संशयादिहेतुः विचारोऽपि तन्निरासेन सम्यग्ज्ञानहेतुरित्युच्यते ? किं वा शब्दः सम्यग्ज्ञानस्यैव हेतुः दोष एव संशयादेः विचारः तस्य प्रतिबन्धस्यैव निरासकः ? इति वाच्यम् । तत्र शब्दस्य संशयादिहेतुत्वं नेत्याह—**नैतत् सारमिति** । दृष्टं हि संशयाद्यनेकं ज्ञानमित्यत्राह—**यत्र हीति** । तच्च सम्यगेव स्वतःप्रामाण्यादित्यर्थः । तर्हि संशयादीनि किन्निमित्तानीत्यत्राह—**इतराणीति** । शब्दानां प्रयोगान्तरेषु अन्यथान्यथा शक्तितात्पर्योन्नयनदर्शनादिहापि तथा तथा विदित्वा सामान्यतोदृष्टेनै(का)[वा]र्थविरोधबुद्ध्या च पुरुषदोषादेवोत्पद्यन्त इत्यर्थः । विचारस्यावैयर्थ्यं वदन् सम्यग्ज्ञानहेतुता नेत्याह—**तत्र मीमांसयेति** । [विचारः]शक्तितात्पर्यसंशयादिनिरासेनार्थसंशयाद्याख्यप्रतिबन्धनिरासहेतुः न सम्यग्ज्ञाने शब्दस्यैव तत्र हेतुत्वादित्यर्थः । यथा सम्यग्ज्ञानहेतोः चक्षुरादेर्दोषात् संशयादि-

निर्णयज्ञानोत्पत्तौ व्यापारः शास्त्रस्य। यथा चक्षुः कुतश्चिन्निमित्तात् संप्रयुक्तेऽपि स्थाणुः पुरुषो वेति संशयात्मकं पुरुषएवेति वा विपर्ययस्वरूपं ज्ञानमुत्पाद्य पुनर्निमित्तान्तरानुगृहीतं सत् निर्णयात्मकं सम्यग्रूपं ज्ञानमुत्पादयति, नैवं शब्दो मीमांसायाः प्राक् संशयितं विपर्यस्तं वा ज्ञानमुत्पाद्य पुनः तदनुग्रहात् निर्णयात्मकं सम्यग्ज्ञानं वा जनयति। किन्तु प्रागेव मीमांसानुग्रहात् स्वसामर्थ्यजन्यं ज्ञानमजीजनदेव। तस्मान्न ब्रह्मविषयं शास्त्रम् ॥

अत्रोच्यते—यद्यपि वाक्यार्थज्ञानं शास्त्रानुग्रहात् प्रागेवोदेति। तथापि स्वोत्पत्तिसमकालसमुत्थेन सामान्यतोदृष्टनिबन्धनेनार्थान्तरनिवेशिना समकक्षाभिमतेन ज्ञानेन

---

हेतुता, पश्चाद्दोषापकर्षणात् सम्यग्ज्ञानहेतुता च, एवं शब्दस्यापि किं न स्यादित्यत्राह—**यथा चक्षुरिति**। एकवाक्यस्यैकप्रयोगे ह्येकज्ञाननियमात् पुरुषेन्द्रियसमवायिदोषाणां शब्देष्वभावाच्चेत्यर्थः। द्वितीये तु मीमांसायाः संशयादिनिरासकत्वस्य प्रतिबन्धनिरासकत्वेनैवोपपन्नत्वात् न शब्देतिकर्तव्यतात्वे मानमस्तीति कृत्वा उपसंहरति—**तस्मादिति** ॥

एवमपराद्धान्ते पूर्ववादिना अपास्ते, सिद्धान्तयति—(उ)[अत्रो]च्यत इति। अत्र मीमांसा व्यर्थेत्याशङ्क्य, अर्थवत्तां वक्तुं प्रतिबन्धमाह—**यद्यपीति**। प्रागुक्तेन सामान्यतोदृष्टानुमानेन अर्थान्तरविषयेण तुल्यबला-

---

शुक्तिज्ञानेन रूप्यज्ञानवत् शब्दादुत्पन्नज्ञानेन विपरीतार्थज्ञानं किं न बाध्येतेति; तत्राह—**स्वोत्पत्तीति**। शब्दज्ञानेन सहोत्पन्नत्वे तस्यापि शब्दान्वयव्यतिरेकात् कारणान्तरानुपलम्भाच्च शब्दजन्यत्वमेष्टव्यमित्याशङ्क्य, कारणान्तरमाह—**सामान्यत इति**। सामान्यतोदृष्टशब्दजन्ययोरेकविषयत्वे विरोधो न स्यादिति, तत्राह—**अर्थान्तरेति**। चन्द्रैकत्वज्ञानेनोक्तविशेषणद्वित्वज्ञानस्य बाध्यत्ववच्छब्दज्ञानेनेतरज्ञानं किं न बाध्येतेति; तत्राह—**समकक्ष्ये[क्षे]ति** ॥

विरोधादुन्मज्जननिमज्जनमिवानुभवत् अस्याञ्चावस्थायां संशयज्ञानकोटिनिक्षिप्तं सत् मीमांसया शब्दशक्त्यनुसरणे सति प्रतिपक्षज्ञानस्यानुत्पत्तौ निमज्जनाभावान्निश्चलं निर्णयज्ञानमिव जातमिति लक्षणया मीमांसया निर्णयः क्रियत इत्युच्यते। न पुनः साक्षान्निर्णयज्ञानहेतुत्वात्। तदेवं लक्षणया वेदान्तानां ब्रह्मविषयाणां सहकारिकारणं मीमांसेति ब्रह्मज्ञानविषयं शास्त्रमभिधीयते। तच्चेदं त्रयमप्यवश्यं वक्तव्यम्—प्रयोजनं विषयः सम्बन्धश्च शास्त्रादौ श्रोतुः प्रवृत्त्यङ्गत्वेन। यद्यपि प्रणेतृगौरवादेव सप्रयोजनत्वं शास्त्रस्य, तथापि न प्रयोजनविशेषसिद्धिस्तत्प्रत्ययमात्रेण निर्देशादृते। तस्मात् तन्निर्देश्यम्। निर्दिष्टेऽपि तस्मिन् तस्याशक्यप्रतिपादनतां मन्वानो विहतश्रद्धत्वान्न प्रवर्तेतेति साध्यो निर्देश्यः। शक्यप्रतिपादनप्रतिपत्तावप्यन्यतःसिद्धेऽर्थे निर्दिष्टे नैव प्रवृत्तिरित्यनन्यसाध्योऽपि निर्देश्यः। तदेतत् त्रयमेकत्र समवेतं विभक्तं चोपलभ्यते इत्यलमतिविस्तरेण॥

अस्ति तावद् ब्रह्मेत्यादिना प्रसिद्धत्वप्रदर्शनेनाप्रसिद्धतां

---

भिमतेन प्रतिबद्धफलं स्यादित्यर्थः। ततः किमित्यत्राह—**अस्यां चावस्थायामिति**। अस्त्ववैयर्थ्यं तथापि कथं तया निर्णीयत इत्युच्यते इत्यत्राह—**लक्षणयेति**। उपचारेणेत्यर्थः। 'इतिकर्तव्यताभागं मीमांसा पूरयिष्यती'त्यपि वाक्यं प्रतिबन्धनिरासाभिप्रायमित्यर्थः। तर्हि कथं ब्रह्म जिज्ञासितव्यमित्याद्युक्तिरित्यत्राह—**तदेवमिति**। **तच्चेदं त्रयमित्यारभ्य अतिविस्तरेणेत्यन्तेन** उक्तं संक्षिप्य उपसंहरति विषयादिसमर्थनं दर्शयितुम्। त्रयमपि भाष्ये उपलभ्येतेत्याशङ्क्य, **तस्मात् ब्रह्म जिज्ञासितव्यमित्यादौ** समवेतं **निःश्रेयसप्रयोजने**त्यादौ विभक्तं चोपलभ्यत इत्याह—**तदेतत त्रयमेकत्रेति**॥

---

तर्हि कदाचिदपि बाध्यत्वं न सम्भवतीति; तत्राह—[**मीमांसयेति**।]

निराकुर्वन् शक्यप्रतिपाद्यतया सम्बंधं समर्थितवान्। कथम्? ब्रह्मशब्दस्तावज्जातिजीवकमलासनशब्दराशीनां नान्यतमाभिप्रायेण सूत्रे प्रयुक्तः अनुपपत्तेरित्युक्तम्। अतो नूनमन्यदेव किंचिदभिधेयमभिप्रेत्यायं प्रयुक्त इति गम्यते। तेन स्वर्गापूर्वदेवताद्यर्थवत् पदप्रयोगादेव कश्चिदर्थोऽस्तीत्यवसीयते। नैतत्सारम्—न हि पदं चक्षुरादिवदप्रतीतपूर्व एवार्थे झटिति विज्ञानं जनयति। येनापूर्वमन्यतोऽसिद्धमर्थं पदप्रयोगादेव प्रतीमः। स्वर्गाद्यर्थोऽपि नैव पदप्रयोगादेव सिद्धः। अत्रोच्यते—यस्मिन् वाक्ये एकं पदं मुक्त्वा इतरेषां पदानामर्थः प्रसिद्धः, स

---

न ब्रह्म सामान्येनापि लोके ज्ञातुं शक्यं मानान्तरागोचरत्वात्। नाप्यागमात्, तत्र प्रयुक्तब्रह्मशब्दस्यानिर्ज्ञातार्थत्वात्। न च पदमात्रादर्थान्तरसिद्धिः, जात्याद्यर्थेषु प्रसिद्धत्वात्। अतो न प्रसिद्धमुद्दिश्य विचारविधिरिति चोदयति—**कथमिति**। श्रुतिसूत्रयोः ब्रह्मपदप्रयोगादेव जात्याद्यतिरिक्तं वस्तु ज्ञातुं शक्यमित्यत्राह—**ब्रह्मशब्दस्तावदित्यादिना**। अथार्थान्तरसत्त्वे किं मानमिति? प्रयोगार्थापत्तिरित्याह—**अतो नूनमिति**। श्रौतप्रयोगानुपपत्तिः नापूर्वमर्थं गमयति लोकप्रयोगाधीनत्वात् श्रौतप्रयोगस्येत्यत्राह—**तेन स्वर्गेति**। **अपूर्वमिति** 'तानि धर्माणि प्रथमान्यासन्नि'त्यादिधर्मशब्दप्रयोगोऽभिप्रेतः। वाक्ये प्रयुक्तं पदं मानान्तरासिद्धमर्थं न बोधयति, पदार्थांशे पदस्यानुवादकत्वादित्याह—**नैतत् सारमिति**। न प्रत्यक्षवत्, सम्बन्धग्रहणाभावान्नानुमानादिवच्चेत्यर्थः। ननु दर्शितं स्वर्गादिवदिति; नेत्याह—**स्वर्गाद्यर्थोऽपीति**। सन्निहितानेकपदार्थसामर्थ्यलभ्यः स्वर्गाद्यर्थ इत्यर्थः॥

तत्र वाक्यार्थप्रमितिविवक्षया प्रसिद्धार्थपदैः सहप्रयोगानुपपत्तिरेवाप्रसिद्धार्थपदवाच्यत्वेनापूर्वमर्थं सङ्गतिग्रहणाद्विना गमयतीति परिहरति—**यस्मिन्वाक्य इति**। विप्रलम्भभ्रान्त्यादिदोषहीनश्रुतिसूत्रवाक्यार्थनिर्णयस्या-

---

प्रसिद्धार्थपदानामनेकत्वादप्रसिद्धार्थपदस्य चैकत्वादनेकानुसारेण एकस्यार्थो गृहीतव्य इति न्यायमाश्रित्याह—**यस्मिन् वाक्य इति**। प्रधानवाक्यार्थत्यागो न युक्तः, किन्तु

किमेकपदार्थानवगमापराधेन त्यज्यताम्, उत बहुपदार्थप्रसिद्धि-बलेनाप्रसिद्धोऽपि कथंचिदवगम्येतेति । तत्र निगमनिरुक्तव्या-करणानामेवंरूपपदार्थानुगमहेतूनां विद्यमानत्वात् तद्बलेनार्थ-मनुगम्य वाक्यार्थावगतिर्युक्ता । न पुनरेकाप्रसिद्ध्या प्रसिद्ध-पदार्थसंसर्गस्त्यक्तुं युक्तः । न हि प्रसिद्धिरप्रसिद्ध्या त्यज्यते । प्रसिद्धिबलेनाप्रसिद्धमपि कल्प्यते इति न्यायात् ॥

ननु निगमादिवशेनार्थानुगमे सर्वत्रैव कथंचिदर्थान्व-यस्यावगन्तुं शक्यत्वादव्यवस्थितः पदार्थः स्यात् । ततश्च वाक्यार्थो नावधार्येत । न तर्हि निगमादीनामर्थवत्ता । भवत्यर्थ-वत्ता । यत्र स्वार्थादन्यत्रापि विनियोगात् प्रयोगः तत्र कथ-

---

वश्यलभ्यत्वादिति भावः । सहप्रयोगानुपपत्तिः नियामकाभावात् जात्या-द्यतिरिक्तं यं कञ्चिदर्थं द्योतयेदित्यत्राह—**तत्र निगमेति** । **निगमः** प्रसिद्धा-र्थतदवयवौ त्यक्त्वा शब्दस्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः । **निरुक्तं** शब्दस्य सर्वावयवार्था(न्तरा)नुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः । **व्याकरणं** प्रत्यय-विधानसामर्थ्यादर्थनिर्णयः । यद्वा, **निगमो** वेदनिखण्डुः, **निरुक्तिः** तद्व्याख्या यास्कोक्ता, **व्याकरणं** प्रसिद्धम् । ननु प्रसिद्धबलेनाप्रसिद्धमादेयं नाप्रसिद्ध-बलेन प्रसिद्धं त्याज्यमित्यत्र को हेतुरित्यत्राह—**न हि प्रसिद्धिरिति** । **अप्रसिद्धिः** प्रागभावोऽनादिः, तस्य प्रसिद्धपदार्थैः सह वाक्यार्थनिर्णयाय प्रयोगानुपपत्तिरागन्तुकी बाधिका इत्यर्थः ॥

अथावयवार्थसामान्यानुगमानां सर्वत्र सम्भवेनोपादेयार्थनियमाभावात् वाक्यार्थनियमो न स्यादिति शङ्कते—**ननु निगमादीति** । गूढाभिसन्धि-रुत्तरमाह—**न तर्हीति** । **विनियोगो** वाक्यार्थज्ञानाय प्रयोगान्यथानुपपत्ति-

---

तदुपसर्जनपदार्थं निगमादिभिः स्वीकृत्य तेन वाक्यार्थपूरणं युक्तमित्याह—**तत्र निगमेति** । न्यायान्तरमाह—**न पुनरिति** । पदगतावयवरूपस्यार्थान्तरवाचिपदेऽन-

मभिदध्यादित्यपेक्षायां तद्गतस्यैवावयवार्थान्वयलेशस्यानुगमात् । एवं तर्हि एकार्थनियमाय प्रयोगपरतन्त्रता मृग्यते । तदन्तरेणापि प्रयोगमेकार्थनियम एव कथंचिन्निगमादि व्याप्रियेतेति न कश्चिद्दोषः । तदत्र ब्रह्मशब्दे व्युत्पाद्यमाने बृंहतेर्धातोर्वृद्धिकर्मणोऽर्थानुगमात् प्रयोगानुगमे वा असति विशिष्टार्थविषयस्यापेक्षिकमहत्त्वस्यापरिग्रहात् सर्वतो निरवग्रहमहत्त्वसम्पन्नं वस्तु वाक्यार्थान्वयि ब्रह्मपदादनुगम्यते । ततश्च कालकृतावच्छेदनिमित्तस्याल्पत्वस्याभावात् सदा सत्त्वान्नित्यं किंचिद्वस्तु ब्रह्मपदात् प्रतीयते । तथा रूपान्तरसद्भावे तद्रूपविकलत्वात् तदवच्छेदकृतमल्पत्वं स्यात् । तच्च ब्रह्मपदादेवापास्यते । तस्मादेकरसमद्वैतं वस्तु ब्रह्मपदात् प्रतीयते । एतेन

---

निगमादिवशेन सन्निहितपदार्थैः संसर्गयोग्यतया फलपर्यन्तमर्थं बोधयति इत्यर्थः। [सिद्धान्ती]गूढाभिसन्धिं विवृणोति—**एवं तर्ह्येकार्थेति** । प्रयोगानुपपत्तिः निगमाद्यनुगृहीता फलपर्यन्तवाक्यार्थान्वयिपदार्थाकाङ्क्षानुगृहीता च पदार्थनियमे रूढेर्न विशिष्यते इत्यर्थः । अथापि कथं ब्रह्मशब्दस्य जात्याद्यन्ये निरतिशयफले मुमुक्षोर्जिज्ञासायोग्येऽर्थे प्रवृत्तिरिति ; तत्राह—**तदत्र ब्रह्मशब्दे इति** । अथाप्यापेक्षिकमहद्वस्तु अनुगम्यतामिति ; नेत्याह—**प्रयोगेति** । तत्र हेतुः—**वाक्यार्थान्वयीति** । आपेक्षिकमहद्वस्तु अनित्यत्वादिदोषदुष्टत्वेन मुमुक्षोर्जिज्ञासाऽयोग्यत्वान्न वाक्यार्थान्वयीत्यर्थः ॥

कालदेशवस्तुपरिच्छेदाख्ये अल्पत्वे सति कथं निरतिशयमहत्त्वमित्याशङ्क्य, तदभावो महत्त्वं वाक्यार्थान्वयित्वात् ब्रह्मपदासङ्कोचादनुगम्यत इत्याह—**ततश्चेत्यादिना** । वस्तुपरिच्छेदाभावेन कथं देशपरिच्छेदोऽपास्त इत्यत्राह—

---

यात् पदार्थान्तराभिधानानुगमनं निगमः, पदगतावयवार्थलक्षणलेशस्य पदार्थान्तरेऽन्वय[स्यैव]वार्थयुक्तार्थान्तराभिधायित्वं निरनुगमनं निरुक्तम् ,(?) तदुभयमाह—**तद्गतस्यैवेति** । निगमादिवशेन पदार्थस्वीकारस्यातिप्रसङ्गपरिहारेण सङ्कोचकमाह—**वाक्यार्थान्वयीति** । **एतेनेति** । देशस्य भिन्नपदार्थत्वात् वस्तुपरिच्छेदनिरासेन देशपरिच्छेदोऽपि निराकृत इत्यर्थः ॥

देशकृतोऽपि परिच्छेदो निराकृतो वेदितव्यः। वस्त्वन्तरसद्भावे हि तदपेक्षया एतावति सद्भावो नातः परमस्तीति स्यादेतस्माद्व्यावृत्त इति। तदभावे न परिच्छिन्नबुद्धिर्भवति। बुद्धत्वं च बृहत्यर्थान्वयादेव। कथम्? अबोधात्मकं हि वस्तु भोग्यम्। अतो भोक्तारं प्रति शेषत्वान्निकृष्टम्। चेतनः पुनर्न कस्यचिद्गुणभावमेति। तेनोत्कृष्टं सर्वस्मात् बुद्धस्वरूपं किंचिदिति बृहत्त्यर्थान्वयमेवानुसृत्य गम्यते। मुक्तमिति च। अविद्याकामकर्मपरतन्त्रः तैरितश्चामुतश्च पशुवन्नीयमानो निकृष्टो भवति। ब्रह्मशब्दस्तु स्वार्थप्रक्षेपेण वाच्यं किंचिद्गमयन् सदैवाविद्यादिसंसारबीजानाकलिततया तस्योत्कृष्टमहत्त्वमावेदयति। सर्वज्ञं सर्वशक्तिसमन्वितं च तदिति ब्रह्मशब्दादेवावगम्यते। कथम्? यदि किंचिदविदितं तेन कुतश्चिद्वा कार्यात् व्यावर्तते शक्तिः, आपेक्षिकस्तदोत्कर्षः स्यात्। न तद्युक्तं अन्यतोऽसिद्धस्य वस्तुनः पदप्रयोगादेव प्रतिपत्तौ। सिद्धे हि वस्तुनि प्रयोगे

---

**वस्त्वन्तरेति**। सरिच्चैत्यादिवस्त्वन्तरे सति ह्येतावति देशेऽस्य सत्त्वान्न सरितः परमिति परिच्छेदः स्यात्। वस्त्वन्तराभावे देशस्यैवापरिच्छेदात् तदेतस्माद्देशात् व्यावृत्तमिति परिच्छेदधीः न स्यादित्यर्थः। तथापि तस्य न गुणतो महत्त्वम्, अचेतनत्वादित्यत्राह—**बुद्धत्वं चेति**। अनुगम्यत इत्यनुषङ्गः। महत्त्वमात्रे प्रवृत्तबृहत्यर्थान्वयात् कथं बुद्धत्वानुगम इति शङ्कते—**कथमिति**। गुणत उत्कृष्टमहत्त्वाय तदप्यनुगम्यत इति परिहारः। अथाप्यस्येष्टं मुक्तत्वसर्वज्ञत्वादि न सिध्यतीति चेत् गुणतो निकृष्टस्यामहत्त्वप्रसिद्धेर्महत्त्वार्थं तदप्यनुगम्यत इत्याह—**मुक्तमिति चेत्यादिना**। बृहद्गेहमित्यादावापेक्षिकमहत्त्वं भाति, नैतादृक्, तथात्रापि युक्तमित्यत्राह—**न तद्युक्तमिति**। तत्र मानान्तरसिद्धेऽर्थे प्रयोगात् तत्त्वं युक्तम्, नात्रेत्यर्थः। एतद्व्यनक्ति—**सिद्धे हीति**।

तस्य यथासिद्धमेव महत्त्वं निरुच्यते। शब्दादेव तदर्थान्वय-प्रतीतौ निरङ्कुश एवार्थोऽभ्युपेतव्यः। एवं च बृंहतेरर्थः परिपूर्णो भवति यदि सर्वमस्य साक्षादेव संविद्गोचरे वशे च वर्तेत। तदेतदाह—**अस्ति तावत् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते। बृंहतेर्धातोरर्थानुगमादिति ॥**

नन्वेवमपि व्युत्पत्त्यनुसरणेन भवत्येवमात्मके वस्तुनि प्रतीतिः। न पुनरेतावता तस्य सिद्धिः पदमात्रस्याप्रमाणत्वात्। सत्यमेवम्। अत एव जिज्ञासा धर्मस्येव लोकाख्यप्रमाणाभाससिद्धस्य। इदमपरं ब्रह्मशब्दार्थस्य सिद्धौ कारणमुच्यते साध्यत्वसिद्ध्यर्थं—**सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिरिति।** तदेव दर्शयति—**सर्वो ह्यात्मास्तित्वं प्रत्येति न नाह-**

---

तत्रोपपदाद्यभावेऽपि मानान्तरं सङ्कोचकमस्तीत्यर्थः। व्यतिरेकमुखेनोक्तमन्वयमुखेनाह—**एवं च बृंहतेरिति।** त्रिविधपरिच्छेदशून्यस्यैव नित्यत्वात् भाष्ये नित्यशब्दः तच्छून्यत्वार्थः ॥

बृहतेर्महत्त्वमात्रे स्मरणात् सङ्कोचकाभावाच्च 'तद्विजिज्ञासस्व' इत्यादिश्रौताद्ब्रह्मपदान्निरतिशयमहद्वस्तुप्रतीतिः स्यात्, तथापि न(तत्प्रतीतिः) [तत्सिद्धिः], पदमात्रस्य स्मारकत्वेनामानत्वादित्याशङ्कते—**नन्वेवमपीति।** तर्हि तस्यैकप्रकारेण ज्ञातत्वे सति प्रकारान्तरेणाप्रतीतत्वात् प्रतिपाद्यत्वं वाक्यार्थान्वयार्हत्वं च सिद्धमिति दूषयति—**अत एवेति।** तर्हि किमर्थमुत्तरभाष्यमिति; तस्य तात्पर्यमाह—**इदमपरमिति।** आत्मन्यपि न मानमस्ति अध्यक्षाद्यविषयत्वात्, अप्रामाणिकं चासदिति; नेत्याह—**सर्वो ह्यात्मेति।** शून्य एवात्मा भाति, तस्य कथमस्तित्वप्रसिद्धिरिति शून्यवादमाशङ्क्याह—

मस्मीति। यदि न आत्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्मेति। कथं पुनरात्मा ब्रह्म ?। वेदान्तेष्वात्मनि ब्रह्मशब्दप्रयोगात्। आत्मानमेव च लोकः अहमिति व्यपदिशति। तदेवमहंप्रत्यये एव ब्रह्मणः प्रसिद्धत्वान्नाप्रसिद्धिशङ्का। यदि तर्हि लोके ब्रह्म आत्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नमिति विषयमाक्षिपति। असिद्धं हि वस्तु साध्यमानं विषयः। सिद्धं तु न पुनः साध्यते इति नास्य शास्त्रस्य विषयः। न—तद्विशेषं प्रति विप्रतिपत्तेरिति विषयसम्बन्धौ समर्थ्येते। किन्तु सत्यं अहमित्यात्मनि प्रत्ययः। आत्मा च ब्रह्म।

---

**यदि नात्मेति**। आत्मनि प्रत्यक्षे कथं ब्रह्मसिद्धिरित्यत्राह—**आत्मा चेति**। ब्रह्मशब्दस्यात्मनि वृद्धप्रयोगाभावात् कथं ब्रह्मशब्देनात्मा जिज्ञास्यत्वेनोपादीयत इति शङ्कते—**कथमिति**। लोके प्रयोगाभावेऽपि 'अयमात्मा ब्रह्म' इत्यादौ वेदेऽस्तीति दूषयति—**वेदान्तेष्विति**। वेदैकवेद्य आत्मा नाहंधीगम्य इत्यत्राह—**आत्मानमेव चेति**। अतः प्रसिद्धस्य विचारार्हत्वात् प्रतिपाद्यत्वसम्बन्धः सिद्ध इत्याह—**तदेवमिति**॥

तर्हि प्रत्यक्षत्वादनन्यसाधारणत्वरूपं विषयत्वं न स्यादित्याक्षिपति—**यदि तर्हीति**। अस्य भाष्यस्यानुत्थानशङ्कां त्यक्तुं तात्पर्यमुक्त्वा प्रयोजनमाह — **असिद्धं हीति**। **न तद्विशेषमिति** समाधानभाष्यं सम्बन्धसाधने(विवेकहेतुश्चे)[विषयसाधने च हेतुरि]त्याह—**विषयसम्बन्धाविति**। तद्विवृणोति—**सत्यमहमिति**। कथमन्यविप्रतिपत्त्या अन्यसिद्धच-

---

**असिद्धं हीति**। प्रमाणान्तरेणाप्रसिद्धमनेनैव शास्त्रेण प्रतीयमानं विषयो भवति। अप्रतिपन्नं तु विचारसापेक्षप्रमाणेन प्रमा(णेन)[तुं]प्रमातुः न शक्यत इत्यर्थः॥

तस्मिन्नेव विप्रतिपत्तयः अयमसावयमसाविति। ताश्च वस्तुतो ब्रह्मपदार्थविषया एव। तदेकार्थत्वात् ब्रह्मशब्दस्य। ततः सामान्यतः सिद्धमपि विशेषतोऽसिद्धेरसिद्धकल्पमेवेति भवत्यस्य विशेषसिद्धिहेतोः विषयः। सामान्यतः सिद्धत्वाच्छक्यते विशेषतः प्रतिपादयितुमिति भवति तस्य शास्त्रं साधनमिति सम्बन्धोऽपि समर्थितः। विप्रतिपत्तिं दर्शयति—**देहमात्रमित्यादि**। तद्यथा—गोशब्दस्य व्यक्त्याकृतिजातिक्रियागुणसास्नाद्यनेकार्थसंनिधौ प्रयुज्यमानस्य कैश्चिज्जातिरन्यैर्व्यक्तिरित्याद्यभिधेयं प्रतिपन्नम्। एवं सचैतन्यकार्यकारणसंघातसन्निधावहंप्रत्ययस्योत्पद्यमानस्य कैश्चित् किंचिदालम्बनं प्रतिपन्नम्। तदाह—**देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना**

---

सिद्धौ स्त इत्यत्राह—**ताश्चेति**। कथमेकरसस्यैकदैव ज्ञानाज्ञाने स्त इत्यत्राह—**ततः सामान्यत इति**। शरीरेन्द्रियमनोबुद्धिशून्यकर्तृभोक्तृसर्वज्ञब्रह्मात्मनां पराग्व्यावृत्तप्रत्यग्धर्मानुगमेन सामान्यमस्ति। अतः प्रत्यग्धर्मानुगमेन सिद्ध्यन्नात्मा विशुद्धब्रह्मरूपोऽपि सामान्यतो ज्ञात इत्युच्यते। ततः प्रत्यक्त्वानुरक्तधर्मान्तरैः विप्रतिपद्यते। तत्र विशेषान्तरसम्बन्धविरोधिना विशेषरूपेणाज्ञातो निर्णीयत इत्यर्थः॥

कथं विप्रतिपत्तिरिति ?। भाष्यमेवोत्तरमित्याह—**विप्रतिपत्तिमिति**। प्रत्यक्षार्थविषययोरहम्बुद्धिशब्दयोरनेकार्थविप्रतिपत्तिरित्यत्र दृष्टान्तः—**यथा गोशब्दस्येति**। जातिर्वैदिकैः, व्यक्तिः, साङ्ख्यादिभिः, उभयं पाणिनीयैः, आकृतिरवयवसंस्थानमार्हतादिभिः, एतत्त्रयं नैयायिकैः, क्रियादयो वा[यथादर्शनम्,] इति यथा गोशब्दप्रयोगे अन्वयव्यतिरेकनियमात् जात्यादीनां शब्दार्थत्वाशङ्का, तथा अहंशब्दाद्यन्वयादिनियमात् देहादीनां तदर्थत्वाशङ्केत्यर्थः। स्थूलसूक्ष्मादितारतम्यात् निरासक्रमसिद्धेश्च देहमारभ्य विप्रतिपत्तिमाह भाष्यम्, तत् उक्तेऽर्थे पातयति—**तदाहेति**। अत्र सन्द(र्भस्यादिग्रहं नैकदेशः)[र्भे वादिनां

**लोकायतिकाश्च प्रतिपन्ना इति** । तथा हि—मनुष्योऽहमित्यात्मनि मनुष्यत्वाभिमानो गच्छामीति च गन्तृत्वाभिमानो देहविषयत्वे उपपद्यते । **देहमात्र**मिति सशिरस्कपिण्डाभिप्रायं द्रष्टव्यम् । मात्रशब्देन न देहातिरिक्तं स्वतन्त्रं चैतन्यमन्यविशेषणं वा, किन्तु देहाकारपरिणतभूतचतुष्टयान्तर्भूतमेवेति दर्शयति । **आत्मेति** । अहंप्रत्ययालम्बनमित्यर्थः । **प्राकृता इति** । शास्त्रोपदेशासंस्कृतमतयो दृष्टमात्राविकल्पितव्यवहारिण इत्यर्थः । **लोकायतिका इति** । भूतचतुष्टयतत्त्ववादिनः प्रसिद्धाः । **एवं इन्द्रियाण्येव चेतनानि आत्मेत्यपरे** । शरीरे इन्द्रियाणां चक्षुरादिमनःपर्यन्तानामेकैकस्मिन्नसत्यपि रूपादिज्ञानानामभावात् तेषामेव व्यस्तानां चेतनत्वमहंप्रत्यय-

---

शरीराद्यात्मत्वग्रहे हेतुः न]विशेषेणोपात्तः, तमुपपादयति—**तथा हीति** । अथ अहमिति धीर्देहादन्यविषयत्वेऽपि सम्भवति । अतः कथं तेन देह एवात्मा स्यादित्यत्राह—**मनुष्योऽहमिति** । यथा विप्राय देयमित्यत्र विप्रैकदेशोक्तिरेवं देहशब्दे तदेकदेशोक्तिमाशङ्क्याह—**सशिरस्केति** । तर्हि देहशब्देनैव तत्साकल्यस्योक्तत्वान्मात्रचो वैयर्थ्यमित्यत्राह—**मात्रशब्देनेति** । भूतचतुष्टयतत्त्ववादिनां पञ्चमं चैतन्यतत्त्वं शिष्यत इत्यधिकव्यावृत्त्यर्थ इति भावः । परिच्छिन्नदेहस्य कथं व्याप्यात्मत्वं विधित्सतीत्यत्राह—**आत्मेत्यहमिति** ॥

ज्ञानाश्रयस्य चेतनत्वात् मनुष्योऽहंजानामीत्येवावगमात् इन्द्रियाणां तदभावात् न चेतनतेत्यत्राह—**इन्द्रियाणामिति** । सत्यपि देहे ज्ञानानामिन्द्रियान्वयव्यतिरेकनियमात् कारणतया अन्वयव्यतिरेककल्पनादाश्रयतया कल्पनस्याभ्यर्हितत्वात् तेषां ज्ञानाश्रयतया चेतनतेत्यर्थः । तर्हि एकस्य बहुचेतनाधिष्ठितत्वात् एकस्य स्थितीच्छायामन्यस्य गतीच्छायां सर्वव्यवहारो [लुप्येत]

---

साङ्ख्यवेदान्तवादिनोर्मतं निराकरोति—**स्वतन्त्रं चैतन्यमिति** । नैयायिकादिमतं निराकरोति—**अन्यविशेषणं वेति** ॥

विषयत्वं च मन्यन्ते क्रमेण च वरगोष्ठीवदितरेतरगुणभावं च। तथा चेन्द्रियधर्मसामानाधिकरण्यमहंप्रत्ययस्य दृश्यते 'काणोऽहं मूकोऽह'मित्यादि ॥

मनः एव चेतनमहंप्रत्ययस्य विषयमन्ये मन्यन्ते दृश्यते हि स्वप्ने इन्द्रियदशकोपरमेऽपि मनस एव अहमिति सर्वव्यवहारास्पदत्वमिति वदन्तः ॥

विज्ञानमात्रं क्षणिकमित्येके इति। मात्रग्रहणेन न अहमित्यकारादिवर्णत्रयातिरिक्तं किंचिदवभासते यदहंप्रत्ययस्य विषयः कल्प्येत। तेन विज्ञानमेव स्वरसभङ्गुरमविरतोदयम-

---

रूपादिज्ञानाख्यभोगश्च युगपत्स्यान्न स्याद्वेत्यत्राह—**क्रमेणेति**। यथैकस्मिन् वरे प्रवृत्ते अन्ये विवाहार्हास्तं [प्रति] गुणभावं भजन्ते, तथा एकस्मिंश्चेतने भोगादावुन्मुखे अन्ये तद्गुणभावं भजन्त इत्येवं सर्वेषां क्रमेणान्योन्यगुणभावेन ऐकमत्यात् भोगादिक्रमः योऽहं शब्दमश्रौषं स एवाहं रूपमद्राक्षमिति प्रत्यभिज्ञा च सिद्ध्यतीत्यर्थः। अथ अहम्प्रत्ययालम्बनस्यैवात्मत्वादिन्द्रियाणां च तदभावात् कथमात्मतेत्यत्राह—**तथा चेति**। देहस्याहम्बुद्ध्यालम्बनत्वज्ञानान्वयव्यतिरेकवत्त्वे इन्द्रियात्मनामाश्रयत्वादप्युपपद्येते इति भावः ॥

एवेत्यत्र किं मानमित्यत्राह—**दृश्यते हीति**। चक्षुराद्यभावेऽपि स्वप्ने केवले मनसि ज्ञानाश्रयत्वाहम्बुद्धिविषयत्वयोः पूर्णयोर्दर्शनादाश्रयान्तरसिद्धौ च ज्ञानानां चक्षुराद्यन्वयव्यतिरेकयोः करणविषयतयोपपत्तेरहम्बुद्धेश्च देह इव करणे कर्तृत्वोपचारादुपपत्तेः तदेवात्मेत्यर्थः। विज्ञानं इत्युक्त एव पक्षान्तरव्यावृत्तेः किं मात्रचेत्यत्राह—**मात्रग्रहणेनेति**। ज्ञाताहमिति भाति, अतः कथं ज्ञानस्यात्मतेत्याशङ्क्य, अहमित्यकारादिवर्णत्रयातिरिक्तं विज्ञानं विना तत्कर्तृ किञ्चिन्न भाति, अहं जानामीति विज्ञानमेव ग्राहकरूपं भाति, अतो न विज्ञानाश्रयस्यात्मतेत्युच्यत इत्यर्थः ॥

खिललोकयात्रानिलयमनुभवभग्नपक्षान्तरमहमित्युत्पद्यत इत्यन्ये मन्यन्ते ॥

**शून्यमित्यपरे इति।** सुषुप्ते विज्ञानलेशस्याप्यभावादकस्मादेवाहमिति समुदयदर्शनादकारणस्य कादाचित्कस्य परमार्थवस्तुत्वाभावादसदवभास एवाहङ्कार इत्यपरे सङ्गिरन्ते ॥

**अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे इति।** अहमुल्लेखशून्यस्य भोक्तृत्वस्यादर्शनात् तस्य च प्रत्यभिज्ञानात् स्थिरत्वसिद्धेः स्थिरस्य चावधिहेत्वनुपलब्धेर्नित्यत्वम्। निर्विकारस्य च भोगासम्भवात् विकारस्य च क्रियाफलत्वात्

---

*कस्तर्ह्यात्मेत्यत्राह—**तेनेति**। *तर्हि साङ्ख्यादेरिवाद्यन्तशून्यः स इति; नेत्याह—**स्वरसभङ्गुरमिति**। *कथं तर्हि प्रत्यभिज्ञयैकत्वज्ञानम्, किमिति वा भङ्गो न भातीत्यत्राह—**अविरतोदयमिति**। (जाल)[ज्वाला]वत् सादृश्येन सन्ततोदयादित्यर्थः। न तर्हि क्षणिकत्वात् कर्मज्ञानबन्धाद्याश्रयतेत्यत्राह—**अखिललोकेति**। विज्ञानानां हेतुफलसन्तत्या कर्माद्याश्रयतेत्यर्थः। स्थाय्यात्मन्येकस्मिन्नेषां मुख्यता सिध्यतीत्यत्राह—**अनुभवेति** ॥

अहम्बुद्ध्यालम्बने विज्ञाने कथं शून्यस्यात्मतेत्यत्राह—**सुषुप्ते इति**। सुषुप्ते विज्ञानलेशस्याप्यभावेन उत्थानप्रत्ययस्य समनन्तरप्रत्ययाभावात् अकारणकत्वेन वस्तुविषयत्वायोगात् शून्यालम्बन(सत्त्व)[स्य] भ्रान्तितैवेति सर्वाप्यहंधीः शून्यालम्बनेत्यर्थः। कथं विज्ञानव्यतिरिक्तात्मसिद्धिरित्यत्राह—**अहमुल्लेखेति**। ममप्रत्ययालम्बनस्य विज्ञानस्य भोक्तृत्वायोगात् विषयसंविदाश्रयो भोक्ता अहमिति भाति, तस्य चाबाधितप्रत्यभिज्ञागोचरस्य सुषुप्तेऽप्यभावायोगात्तत्सिद्धिरित्यर्थः। स्थिरत्वेऽपि कदाचिदभावः स्यादित्याशङ्क्य, निरवयवस्य हेतूपरागायोगात् नाभावः परत इति मत्वा, न स्वत इत्याह—**स्थिरस्य चेति**। स्वसत्ताप्रयुक्तविनाशहेतुत्वानुपपत्तेः क्षणिकस्यैव तथात्वादित्यर्थः।

---

* एतेषां मूलं 281-पुटे

क्रियावेशात्मकत्वाच्च कर्तृत्वस्य एवमात्मकत्वाच्च संसारित्वस्य देहादेश्च बुद्धिपर्यन्तस्य भोक्तृत्वानुपपत्तेः तद्व्यतिरिक्तः संसारी कर्ता भोक्ता अहंप्रत्ययविषय इत्यपरे प्रतिजानते ॥

कथं पुनस्तद्व्यतिरिक्तत्वं मन्यन्ते ? । तस्य भोक्तृत्वानुपपत्तेरित्युक्तम्। कथं तस्य भोक्तृत्वानुपपत्तिः ? इति । उच्यते— भूतसंघातस्तावच्छरीरम् । तत्र व्यस्तानां समस्तानां वा युगपत् क्रमेण वा भोगः परिकल्प्येत । सर्वथाप्यसम्भवः । यदि तावद्व्यस्तानां युगपत् परिकल्प्येत ततः स्वार्थप्रयुक्तत्वात् प्रवृत्तेरङ्गाङ्गिभावो नावकल्पेत। न चाङ्गाङ्गिभावमन्तरेण संघात उपपद्यते । तस्मान्न व्यस्तेषु युगपद्भोगः । अस्तु तर्हि क्रमेण विरोधाद्वरगोष्ठीवदिति । नैतदेवं युक्तम् । तत्र

---

तर्हि कथं कर्तृत्वसंसारित्वे ? इति ; तदाह — **निर्विकारस्येत्यादिना** । **एवंरूपत्वात्** । [**एवमात्मकत्वात्**।] भोक्तृत्वादि[रूपत्वादि]त्यर्थः ॥

दोषं वक्तुं सम्प्रतिपन्नांशमाह—**भूतसङ्घात इति** । अत्रावयव्यारम्भमनपेक्ष्य सङ्घातमात्रस्याभोक्तृत्वं वक्तुं विभजते—**तत्र व्यस्तानामिति** । व्यस्तानां भोगो युगपत् क्रमेण वा स्यात् ? नाद्य इत्याह—**यदि तावदिति** । अत्र दूषणम्—**ततः स्वार्थेति** । [स्व]प्रयोजनार्थत्वात् प्रवृत्तेः स्वप्राधान्यभङ्गाय प्रवृत्त्ययोगान्नाङ्गाङ्गितेत्यर्थः। मा भूत् सा तर्हीत्यत्राह—**न चेति**। तर्हि असङ्गतानां भोगायतनत्व(मपी)[मि]त्याशङ्क्य, देहादन्यत्रापि भोगापातान्नेत्याह— **तस्मान्नेति**। द्वितीयं शङ्कते—**अस्तु तर्हीति**। अत्रापि न भोक्तॄणां सङ्घात इत्यत्राह—**वरगोष्ठीवदिति** । परिहर्तुं दृष्टान्तवैषम्यमाह—**नैतदेव-**

---

**भोक्तृत्वानुपपत्तेरिति** । विषयानुभवितृत्वलक्षणभोक्तृत्वानुपपत्तेरित्यर्थः । भोगान्वयसिद्ध्यर्थं भूतसंहतिस्तैस्तैर्लोकायतैरभ्युपेयते, तदुपजीव्य सर्वत्र विकल्प्य दूषणं (वा)कृतम् । लोकायतमतमनुवदति—**तत्रेति** । यस्यां मनश्चक्षुषोरित्यस्माद्वाक्यात् ज्यो-

भोग्यस्यासाधारणत्वात् । असाधारणत्वं च प्रतिपुरुषनियमात् । इह पुनर्विपरीतम् । बहूनां सन्निधौ साधारणे च भोग्ये प्रतिनियतभोगव्यवस्थाहेत्वसम्भवात् । अस्तु तर्हि समूहस्य तिलज्वालावच्चेतनासमन्वयोपपत्तेः, मा भूत् प्रत्येकं युगपत् क्रमेण वा। नैतदेवम्—भोगेषु समूहासम्भवात् । कथमसम्भवः ? भोक्तुर्भोगं प्रति प्राधान्यात् । ननु भोगेऽपि समूहो दृष्टो यथा स्त्रीपुंसयोः । नैतत् सारम्—संदिग्धत्वात् समूहस्योत

---

मिति । दृष्टान्ते कन्याख्यभोग्यवत् दार्ष्टान्तिके भोक्तुर्भोग्यरूपादेः नियमाभावात् क्रमभोगे हेतुर्नास्ति, नियमे च युगपत्सर्वभोक्तृभोग्यसन्निधानान्न क्रम इत्याह—**इह पुनरिति** ॥

समस्तपक्षमाशङ्कते—**अस्तु तर्हीति** । अथ एकैकस्मिन् भूते नास्ति चैतन्यम् , कथं समुदाये स्यात् येन भोगः स्यादित्यत्राह—**तिलज्वालावदिति** । सङ्घातस्य भूतेभ्यो भेदे पञ्चमतत्त्वापत्तेः भूतान्येव सङ्घात इति तेषां भोक्तृत्वात् भोक्तॄणामेवागामिभोगार्थं सङ्घातापत्तिरिति उक्तं स्यात् तच्चायुक्तम् , भोक्तॄणां भोगं प्रति प्राधान्यात् केषाञ्चिद्गुणभूततया सङ्घातापत्त्ययोगात् इति दूषयति—**नैतदेवमिति** । भोगात् पूर्वं कर्तृत्वाद्गुणभावः स्यादित्याशङ्कते—**कथमिति** । तथापि भोगसमये समप्राधान्यान्न सङ्घातापत्तिरित्याह—**भोक्तुरिति** । भोगे शेषिणि तादर्थ्येन समूहो दृष्टः, अतोऽविरुद्धमेतदिति शङ्कते—**ननु भोगेऽपीति** । तत्रापि भोक्त्रोर्देहयोः समूहस्य न भोगार्थं समूहापत्तिः, किन्तु तदन्यात्मनोः भोगार्थं भोग्ययोः देहयोः समूहापत्तिरिति परिहरति—**नैतत् सारमिति** ॥

---

तिश्शास्त्रसिद्धनक्षत्रदिनगणाद्यानुकूल्याच्च एकस्या एकं प्रत्येवासाधारणत्वं नेतरान् प्रतीत्याह—**भोग्यस्येति** । सन्निहितमुहूर्तमप्येकस्यैवानुकूलं नेतरेषामित्यपि नियमोऽस्तीत्यतस्तत्र क्रमो युक्त इत्याह—**प्रतिपुरुषनियमादिति** ॥

तद्व्यतिरिक्तस्येति। तिलज्वालायां तु विपरीतम्। समूहकार्ये समूहिनां गुणभावोपपत्तेः। अस्त्वेकस्य तर्हि नियतो भोगः। न—तत्रापि कस्यैकस्येत्यनवधारणात्। किमवधारणेन, विनापि तेन विवक्षितार्थोपपत्तेः। यद्येवं समेषु केषांचिद् गुणभावानुपपत्तेरयुक्तः कार्यात्मकेषु॥

एवं करणात्मकेष्वपि समानश्चर्चः। भूतस्वाभाव्याविशेषात्। तथोभयात्मके समूहे। तस्माद्देहादिव्यतिरिक्त-

---

ज्वालार्थं तिलानामिव सङ्घातः स्यात् भोगार्थमिति; नेत्याह—**तिलज्वालायां त्विति**। यथा भोगस्य फलत्वात् फलिनां प्राधान्यमेव न तथा तिलानाम्, किन्तु ज्वालायाः कार्यत्वात् तत्साधनतया गुणभाव एव। अतस्तेषां (सङ्घातापत्तिः स्यादेव) भोक्तृप्रेरितानां गुणप्राधान्येन सङ्घातापत्तिः स्यादित्यर्थः। तर्हि एकस्यैव भूतस्य भोगोऽस्त्विति शङ्कते—**अस्त्विति**। तथापि भूतानां चतुष्टयात् भोक्तुरवधारणा न स्यादित्याह—**न तत्रापीति**। मा भूदवधारणम्, तद्विनापि देहातिरिक्तात्माभावसिद्धेरित्याशङ्कते—**किमवधारणेनेति**। चतुर्णां भोगान्वयदर्शनात् विशेषनिर्धारणाभावाच्च चतुर्षु भोक्तृषु सङ्घातायोगात् न देहात्मकभूतेषु भोग इति दूषयति—**यद्येवमिति**॥

**इन्द्रियाण्येव भूतान्यात्मेति मध्यमलोकायतमतम्**। तत्र उक्तं दोषमतिदिशति—**एवं करणेति**। एकैकेन्द्रियस्य एकैकभूतजत्वेन वा सर्वेन्द्रियस्य सर्वभूतजत्वेन वा भूतचतुष्टयसङ्घातत्वमिन्द्रियाणां स्यात्, उभयथापि प्रत्यभिज्ञासङ्घातादेरसम्भव इत्यर्थः॥

**कार्यकरणात्मकः सङ्घातो भोक्तेत्युत्कृष्टलोकायतमतम्**। तत्राह—**तथोभयात्मके इति**। प्रत्यभिज्ञासङ्घाताद्यसम्भव इत्यर्थः। **मन एवात्मेति**

---

**तिलज्वालायां त्विति**। ज्वालायाः कार्यत्वात्तां प्रति कर्तृत्वेनान्वितानां तिलानां

महंप्रत्ययविषयं मन्यन्ते ॥

भोक्तैव केवलं न कर्तेत्येके इति। पूर्वोक्तस्यैव देहादिव्यतिरिक्तस्य कर्तृत्वमतत्स्वभावं मन्वाना भोक्तैव केवलोऽहंप्रत्ययविषय इत्येके प्रस्थिताः। करोमि जानामि भुञ्जे चेति न सर्वदा अहंप्रत्ययेनानुषङ्गः। तेन नायं तद्विषयः। यदि स्यात् न तदुल्लेखविकल उदियात्। ननु भोक्तापि तर्हि नासौ तदुल्लेखाभावात्। नैतदेवम्। अहमिति चेतनत्व-समुल्लेखात् तदर्थत्वात् सर्वस्य तदात्मकमेव भोक्तृत्वमिति भोक्तैव केवलमिति युक्तं मन्यन्ते ॥

अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति

---

ततोऽपि उत्कृष्टा लोकायताः। तदपीन्द्रियत्वादेवापास्तमिति मत्वोपसंहारः—तस्मादिति ॥

एवं मीमांसकमतमुक्त्वा साङ्ख्यमतमाह—**भोक्तैवेति**। भोक्तृत्वानुपपत्त्योक्तं कर्तृत्वं कथं नेत्यत्राह—**कर्तृत्वमिति**। नात्मनः परिस्पन्दपरिणामाख्यक्रियान्वयः सर्वगतत्वान्निरवयवत्वात्, न च बुद्धेः कर्तृत्वमात्मनि, असत्यातिवादिनः तादात्म्याध्यासाभावादित्यर्थः। अथाहङ्करोमीत्याद्यनुभवे कथं न कर्तृतेत्यत्राह—**करोमीति**। नात्मनः कर्तृत्वं स्वाभाविकम्, आत्मप्रतीतिव्यभिचारात्, नापि आगन्तुकम्, निरवयवस्य हेतूपरागाभावादित्यर्थः। तर्हि एवमेव भोक्तृतापि न स्यादित्याशङ्कते—**ननु भोक्तापीति**। भोक्तृत्वं दृश्यस्मरणशक्तत्वम्, न अहं सुखी दुःखीति सुखाद्यन्वयः, अतः तदव्यभिचारि कर्तृत्वं विनोपपद्यते आत्मनश्चिद्रूपत्वादिति परिहरति—**नैतदेवमिति** ॥

ब्रह्मण आत्मत्वप्रयुक्तां विप्रतिपत्तिमुक्त्वा [ब्रह्म]त्वप्रयुक्तामाह—**अस्ति**

---

भवतु गुणभूतत्वम्, चैतन्यस्य भोगत्वात्तं प्रति भोक्तृत्वेनान्वितानां भूतानां प्राधान्यात् गुणप्रधानभावो नोपपद्यत इत्यर्थः ॥

केचिदिति। तस्मादपि देहादिव्यतिरिक्तादहंप्रत्ययविषयादन्यः सर्वस्येशिता। ततश्चेशितव्यस्य सर्वात्मना वेत्ता नियमनशक्तिसम्पन्नश्च शरीरिणां मनसापि अचिन्त्यरूपात् तनुभुवनविरचनकार्यात् प्रेक्षावत्कर्तृकत्वमन्तरेणासम्भाव्यमानात् कुलालादिरिव घटादिकार्यात् प्रतिपन्नः। सातिशयानां काष्ठाप्राप्तिः परिणामानामुपलब्धा। सातिशयं च ज्ञानम्। अतः क्वचित् काष्ठां प्राप्तं सर्वविषयमिति वा सर्ववित् सर्वदा सिद्ध ईश्वरः प्रतिपन्नो ब्रह्मशब्दार्थ इति केचित् प्रतिपेदिरे॥

ननु अहमिति सर्वो लोक आत्मानं प्रत्येति आत्मा

---

तद्व्यतिरिक्त इति। एतद्भाष्यं व्याचष्टे--तस्मादपीति। तस्मादपि देहादिव्यतिरिक्तादन्य ईश्वरः सिद्ध इत्युत्तरत्रान्वयः॥

तत्सिद्धौ वैशेषिकानुमानमाह — शरीरिणामित्यादिना। विमतं भूतभौतिकाख्यं तनुभुवनविरचनकार्यं स्वरूपोपादानसम्प्रदानप्रयोजनोपकरणादिविज्ञानवत्कर्तृकं विविधविन्याससरूपकार्यत्वात् प्रासादादिवदिति कल्पनालाघवात् [एककर्तृकत्वोपादानात्]सर्वज्ञत्वादिसिद्धिरित्यर्थः। साङ्ख्ययोगानुमानमाह—सातिशयानामिति—विमताः ज्ञानैश्वर्यशक्तयः क्वचित् सर्वविषयज्ञानैश्वर्यशक्त्यविनाभूताः, तरतमभावेनोत्कृष्यमाणविषयव्यापिधर्मत्वात्, स्वविषयदेशव्यापिपरिमाणधर्मवदिति। काष्ठाप्राप्तिः असर्वविषयत्वेऽपि भवेदिति सर्वविषयमिति वेत्युक्तम्, अनुमाने तथैवोक्तत्वादिति। स[र्व]दा सिद्ध ईश्वर इति नैयायिकाद्यनुमानमाह, विमतानि धर्माधर्मफलानि तत्फलतत्कर्मसम्प्रदानोपकरणादिविज्ञानवतः प्रदेयानि, व्यवहितकर्मफलत्वात्, सेवाफलवदित्यर्थः॥

विप्रतिपन्नप्रत्यगात्मसम्बन्धितया स्कन्धभेदोक्तिर्विप्रतिपत्तिः, न च तदतिरिक्त ईश्वरः तद्विशेषस्कन्ध इति न शरीरादिवत् स्कन्धविशेषत्वेन वाच्य इत्याशङ्कते—नन्वहमिति सर्व इत्यादिना। न प्रत्यगात्मविप्रतिपत्तिर्वा(तया)

च ब्रह्म इत्यहंप्रत्ययविषयस्यात्मनो ब्रह्मत्वेन तद्विप्रतिपत्तौ ब्रह्म-विप्रतिपत्तिं दर्शयितुं प्रक्रान्तम्, तत् कथमनहंप्रत्ययविषये अनात्मनीश्वरे ब्रह्मत्वविप्रतिपत्तिः प्रदर्श्यते ? । उच्यते—ब्रह्मणि विप्रतिपत्तिप्रदर्शनस्य प्रक्रान्तत्वादहंप्रत्ययविषयविप्रतिपत्त्यापि प्रणाड्या ब्रह्मविप्रतिपत्तिरेव निर्दिश्यते । यतो नाहंविषयवि-प्रतिपत्तिप्रदर्शनेन किञ्चित् कृत्यमस्ति । तस्मात् साध्वेतत् ॥

**आत्मा स भोक्तुरित्यपरे इति** । योऽयमहमित्युल्लिख्य-मानश्चेतनो भोक्ता स ब्रह्मेति कैश्चित् प्रतिपन्नः । तस्याहं-प्रत्ययसिद्धो भोक्तृत्वावभासः । स मिथ्यैवानिर्वचनीयानाद्यविद्या-विलसितः । परमार्थतस्तु यः सर्वज्ञ ईश्वरोऽहंप्रत्ययेऽनन्तर्भूतः प्रमाणान्तरानवसितः सोऽस्यात्मा स्वरूपम् । एवमसौ बृंहत्य-

---

[तटस्थ]ब्रह्मविप्रतिपत्तिर्वा प्रक्रान्ता, किन्तु ब्रह्ममात्रविप्रतिपत्तिः, तत्र प्रत्यगा-त्मनो वस्तुवृत्त्या ब्रह्मत्वात्तद्विप्रतिपत्तिरुक्ता, सा ब्रह्मण एवेति दूषयति—उच्यत इति । प्रसङ्गात् लोकप्रसिद्धप्रत्यगात्मन एव सा किं न स्यादित्यत्राह—**यतो नेति** । तस्य चेत् सोक्ता व्यर्था स्यात् प्रतिपाद्यत्वेनाप्रकृतत्वात् । अतो ब्रह्मणोऽस्तिनास्तित्वेन जीवभेदाभेदेन विप्रतिपत्तिकथनं युक्तमित्यर्थः । भाष्ये 'अन्ये व्यतिरिक्तोऽव्यतिरिक्तश्चेश्वरो नेति मन्यन्ते' इत्यप्यत्र उक्तं द्रष्टव्यम् ॥

स्वमतमाह—**आत्मा स भोक्तुरिति** । व्याचष्टे—**योऽयमिति** । प्रतीतं मिथ्या संसारिणः कथमसंसार्यैक्यमिति ; तत्राह—**तस्याहमिति** । **परमार्थतस्त्विति** । चेत् कोऽहमिति वीक्षापन्नस्य वास्तवं वाच्यमित्यत्राह—**परमार्थतस्त्विति** ।

---

ब्रह्म देहादिभिर्विकल्प्यमानप्रत्यगात्मभूतं ततोऽन्यद्वेति विकल्पपर्यवसानमेष्टव्यम्, तन्निर्णयाय प्रवृत्तत्वादित्याह—**उच्यत इत्यादिना** । पूर्वविकल्पनिरासेनार्थनिर्णये किञ्चित् प्रयोजनं नास्ति, अन्त्यविकल्पनिरासेनार्थनिर्णये मोक्षाख्यप्रयोजनसिद्धिरस्ति, अतस्तत्रैव विकल्पपर्यवसाने तात्पर्यमेष्टव्यमित्याह—**यतो नाहमिति** ॥

र्थान्वयात् ब्रह्मशब्दाभिधानीयतां लभते। इतरथा तद्रूपविकल्पस्य न निरङ्कुशं बृहत्त्वमिति न ब्रह्मशब्दाभिधेयः स्यात्। एवं बहवो विप्रतिपन्नाः युक्तिवाक्यतदाभाससमाश्रयाः सन्तः इत्युपसंहरति॥

एवमुक्तेन प्रकारेण केचित् किञ्चित् ब्रह्मेति प्रतिपन्नाः। किमेवमेव मनोरथमात्रेण ; नेत्याह—युक्तिम्—प्रमाणानां स्वविषयनिश्चये अनुग्राहिकां तर्कशब्दपर्यायां वाक्यं च—प्रतिवेदान्तं यथावद्ब्रह्मस्वरूपप्रतिपादनपरमालोचयन्तः। आत्मा स भोक्तुरिति युक्तिवाक्याभ्यामन्त्यं पक्षं निश्चितवन्तः सम्यग्दर्शिनः। इतरे तु युक्तय इवावभासन्त इति युक्त्याभासाः न परमार्थतो युक्तयः ताः समाश्रित्य, वाक्यानीवावभासन्ते न तानि वाक्यान्यतत्परत्वात् तानि वाक्याभासानि परिगृह्य

---

अहं ब्रह्मैवेति विशेषोपसंहारः न शरीरादीत्यत्र मानमाह—**एवमसाविति**। जीवेभ्यो भेदेऽपि बृहत्यर्थो लभ्यते देशकालव्यापित्वादित्यत्राह—**इतरथेति**। भाष्यतात्पर्यमुक्त्वा योजयति—**एवमुक्तेनेति**। अत्र सर्वत्र प्रत्यगात्मा ब्रह्मशब्दार्थः। अतः तद्विप्रतिपत्तिमध्ये तस्यैव ईश्वराद्भिन्नाभिन्नत्वविप्रतिपत्तिकथनं युक्तं नाहम्प्रत्ययविषयविप्रतिपत्त्युक्त्या किञ्चित्कृत्यम(स्तीति) [स्ति]। टीका तु तटस्थजीवविषयेत्येके॥

अथ न विप्रतिपत्तिमात्रात् प्रतिपाद्यता, किन्तु मानयुक्तिमूलायाः, तस्या एव निराकार्यत्वात् इत्याशङ्क्योत्तरं भाष्यम्, तत् साशङ्कं व्याचष्टे—**किमेवमेवेत्यादिना**। युक्तिवाक्याभ्यां वेदान्तिनोऽन्त्यं पक्षं निश्चितवन्तः, इतरे तु तदाभासाभ्यामितरपक्षानित्यर्थः। कथं तावद्युक्त्याभासता बाह्यपक्षा-

---

**ब्रह्मेति प्रतिपन्ना इति**। प्रत्यगात्मा इति प्रतिपन्ना इत्यर्थः॥

पक्षान्तरेषु विप्रतिपन्नाः । युक्त्याभासत्वं लेशतो दर्शितमेव देहादिव्यतिरिक्तात्मपक्षं दर्शयद्भिः । इतरेषां च युक्त्याभास-सिद्धत्वं स्वावसरे दर्शयिष्यामः । दर्शितं च लेशत उत्तरोत्तर-पक्षग्रहणकारणप्रदर्शनेन । वाक्याभासतां तु तत्र तत्राधिकरणे सिद्धान्तयिष्यन्तः प्रदर्शयिष्यामः ॥

**तत्राविचार्य यत्किञ्चित् प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येतानर्थं चेयादिति ।** तत्र—एवं स्थिते मुमुक्षुर्ब्रह्म-ज्ञानेन परं निःश्रेयसमाप्तुकामः **अविचार्य**—एतच्छास्त्रमश्रुत्वा प्रवर्तमानोऽन्त्यपक्षादर्वाचीनं कञ्चित् पक्षं परिगृह्णीयात् । तदा मोक्षस्य सम्यग्ज्ञानफलत्वात् तस्य च अतथाभावात् निःश्रेय-सात् प्रतिहन्येत—मोक्षफलं न प्राप्नुयात् अनर्थं च प्रति-पद्येत—'अन्धन्तमः प्रविशन्ति' 'ये के चात्महनो जनाः' इति

---

णामित्यत्राह—**युक्त्याभासत्वमिति** । तथापि कथं मीमांसकादिपक्षाणां युक्त्याभासतेत्यत्राह—**इतरेषामिति** । किञ्च, उक्तमित्याह—**दर्शितं चेति** । 'स वा एष पुरुषोऽन्नरसमयः' 'पृथिवीमय आपोमयः' इत्यादीनि देहात्मवादे वाक्यानि, 'ते ह वाचमूचुः'इत्यादीनि इन्द्रियात्मवादे 'मन उदगायत्' इति मनोवादे 'योऽयं विज्ञानमयः' इत्यादि विज्ञानवादे 'असद्वा इदमग्र आसीत्' इत्याद्यसद्वादे 'कर्ता बोद्धा विज्ञानात्मा' इति कर्त्रात्मवादे 'अनश्नन्नन्योऽभिचाक-शीति' इति भोक्त्रात्मवादे 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति'इति तटस्थेश्वरवादे, तेषां कथमाभासतेत्यत्राह—**वाक्याभासतां त्विति** ॥

तथापि यस्य यस्मिन् रुचिरुत्पद्यते स तं पक्षमाश्रित्य पुरुषार्थं साधयेत् किं विचारेणेत्याशङ्क्य, **तत्राविचार्येति** भाष्यम्, तद्व्याचष्टे—**तत्रैवं स्थिते इति** । मा भूदन्त्यात् पक्षात् अन्यपक्षेषु तत्त्वज्ञानाभावात् मोक्षः, किमित्यनर्थ-प्राप्तिरिति; अत्राह—**अन्धं तम इति** । अथाप्यन्धं तम इति आत्महननात्

श्रुतेः । अनात्मदर्शनेनात्मनोऽसत्कल्पत्वापादनं आत्महननम् । एवंरूपस्यात्महननस्य कृतत्वात् । अन्यथा आत्मनो हननासम्भवात् प्राणत्यागस्य प्रकृतानुपयोगादिति ॥

तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निश्श्रेयसप्रयोजना प्रस्तूयते इति । ब्रह्मजिज्ञासोपन्यासव्याजेन जिज्ञासापदेन अन्तर्णीतमीमांसा वेदान्तवाक्यानामारभ्यते । अथ वा, ब्रह्मज्ञाने कर्तव्यतयोपदिष्टे तज्ज्ञानाय प्रवृत्तेभ्योऽर्थादेव तत्प्रतिपादनं प्रतिज्ञातमिति तदर्थं वेदान्तमीमांसा आरभ्यते । किंप्रयोजना किमुपकरणा चेति ?। उच्यते—तदविरोधितर्कोपकरणा निश्श्रेयसप्रयोजना चेति । तैः वेदान्तैरविरोधी तर्को युक्तिः

---

तत्रानर्थप्राप्तिरुक्ता न तत्त्वज्ञानाभावादित्यत्राह—**अनात्मदर्शनेनेति**। मुख्यात्महननमेवानर्थहेतुत्वेनोक्तं किं न स्यादित्यत्राह—**अन्यथेति**। नित्यत्वेऽप्यात्मनः प्राणत्यागः स इत्यत्राह—**प्राणेति**। यस्मात् (मयेत्यादि)[विषयप्रयोजनादि]सम्भवः **तस्मादिति** सूत्रार्थोपसंहारभाष्यम्, तद्व्याचष्टे—**ब्रह्मजिज्ञासेति**। जिज्ञासापदेनान्तर्णीतं विचारमुपलक्ष्य तत्कर्तव्यतापरं सूत्रमिति शब्दबलवादमाश्रित्य वाक्यार्थमुक्त्वा वस्तुबलवादमाश्रित्याह—**अथ वेति**। जिज्ञासा कर्तव्येत्युक्ते अर्थादिष्यमाणं ज्ञानं साध्यत्वात् कर्तव्यमित्युक्तं स्यात्, तथा च ज्ञानकर्तव्यताज्ञानाय प्रवृत्तेभ्यः सूत्राक्षरेभ्यो योग्यतया अर्थात् ज्ञानसाधनब्रह्मविचारः कर्तव्यत्वेन प्रतिज्ञात इति तद्विचारार्थं शास्त्रमारम्भणीयमिति योज्यम्। तर्हि वाक्यार्थस्योक्तत्वात् पदद्वयं व्यर्थमित्यत्राह—**किम्प्रयोजनेति**। भाष्यं योजयति—**तैरिति**॥

ननूत्तरसूत्रे भाष्यकृता अनुमानोपकरणत्वमुक्तम्, अतो युक्तिरि-

---

**तत्प्रतिपादनं प्रतिज्ञातमिति**। विचारकर्तव्यताप्रतिपादनमित्यर्थः॥

**उपकरणमितिकर्तव्यता सहकारिकारणमिति यावत्। अथ वा, तर्कः अनुमानं वेदान्तैरविरुद्धम्, तदर्थप्रतीतेरेव दृढत्वहेतुतयोपकरणमस्या इत्यर्थः ॥**

इति पञ्चपादिकायां चतुर्थवर्णकं समाप्तम्।

॥ जिज्ञासाधिकरणं च ॥

---

त्ययुक्तमित्याशङ्क्याह—**अथ वेति**। तदविरुद्धत्वमात्रं चेद्वेदान्तानां अनीषत्करं शास्त्रमित्यत्राह—**तदर्थेति**। **उपकरणमस्या** इति विग्रहो निश्श्रेयसप्रयोजनमस्या इत्यस्याप्युपलक्षणम्। अर्थशब्दो योजनापरः। अपास्तसमस्तकर्तृत्वाद्यध्यासापाकृतद्वैतदर्शनानतिशयानन्दापरोक्षब्रह्मरूपावस्थानमोक्षफलवेदान्तावगतिप्रतिबन्धनिरा(सातत्तद्धीव)[सस्य तदधीन]त्वादुपचारेण मोक्षफलेत्यर्थः ॥

इति श्रीनरसिंह्मस्वरूपपूज्यपादशिष्यस्य आत्मस्वरूपभगवतः कृतौ
पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां
चतुर्थवर्णकं समाप्तम्।
॥ जिज्ञासाधिकरणं च ॥

---

---

**सहकारिकारणमिति**। शब्दार्थविषयप्रतिबन्धनिरासेन श्रवणोपकारकत्वादुपचारतः सहकारिकारणमित्युक्तम् ॥

इदानीं विवक्षितार्थं स्वयमेवाह—**तदर्थप्रतीतेरिति** ॥

इति श्रीमत्परमहंसपरिव्राजकश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यस्य
विज्ञानात्मभगवतः कृतौ तात्पर्यार्थद्योतन्यां
चतुर्थवर्णकं समाप्तम्।
॥ जिज्ञासाधिकरणं च ॥

## ॥ अथ पञ्चमवर्णकम् ॥

**ब्रह्म जिज्ञासितव्यमित्युक्तमिति।** ब्रह्मज्ञानकामेनेदं शास्त्रं श्रोतव्यमित्युक्तमित्यर्थः। यदैवेदमित्युक्तं तदैव ब्रह्मणो लक्षणं प्रमाणं युक्तिः साधनं प्रयोजनमिति सर्वं व्याख्येयत्वेन प्रतिज्ञातम्। तत्र स्वरूपस्याभ्यर्हितत्वात् तत् प्रथमं निर्देष्टव्यम्। **किंलक्षणं पुनस्तद् ब्रह्मेति?** अत आह भगवान् सूत्रकारः- **'जन्माद्यस्य यतः'** इति। युक्तिरपि लक्षणनिर्णये अर्थात् सूत्रितैव। **जन्म उत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिरिति** पदच्छेदः पदार्थः पदविग्रह इत्येतत् त्रितयमपि

---

वृत्तकीर्तनभाष्यस्यान्तर्णीतमर्थसिद्धं वा विचारमादायार्थमाह—**ब्रह्मेति**। ब्रह्मविचारमात्रं प्रतिज्ञातम्। अतोऽप्रतिज्ञातलक्षणादिविचारो न युक्त इत्यत्राह—**यदैवेदमिति**। प्रधानोक्तौ तदपेक्षितानामर्थाक्षिप्तत्वादिति भावः। तथापि लक्षणमेव किमिति प्रथमं निर्दिश्यत इत्यत्राह—**तत्रेति**। वृत्तमुक्त्वा उत्तरेणा-काङ्क्षापूर्वकं सङ्गतिमाह—**किंलक्षणमिति**। पूर्वाधिकरणस्याकाङ्क्षाद्वारा हेतुत्वात् हेतुहेतुमत्त्वं वा पूर्वत्र प्रतिज्ञातस्योत्तरं निर्वाहकमिति निर्वाह्यनिर्वाहकत्वं वा पूर्वाधिकरणप्रकरणाभ्यां सङ्गतिः। ब्रह्मणि स्पष्टलिङ्गवाक्यानां हेतुत्वात् शास्त्रे अध्याये पादे च सम्बन्धात् पञ्च संङ्गतयः स्युः। षट्कसङ्गतिस्तु न वाच्या षट्काभावादित्यर्थः। अव्याप्त्यतिव्याप्तिशून्यतया लक्ष्याविनाभूतलक्षण-निर्णयो न मानयुक्ती विना सिध्यति, अतः कथं लक्षणपरतेत्यत्राह—**युक्ति-रपीति**। अपेर्मानमपीत्यर्थः। तदुभयमध्यायद्वयेन निर्णीयत इति शेषः। सन्देहाद्यभावादेतद्व्याख्यानं व्यर्थमित्यत्राह—**पदच्छेद इति**॥

तद्गुणाख्यविशेषणस्यापि सम्यग्विज्ञानं स्यात् येन बहुव्रीहिणेति व्युत्पत्तेः **तद्गुणसंविज्ञान** इत्युक्त्यैव त्रितयं समासार्थ इति सिद्धत्वात् व्यर्था पुनः

---

प्राप्तलिङ्गबहुवचननिर्देशं विहाय तृतीयलिङ्गनिर्देशः समाहारलक्षणैकाकारकबली-कारेण त्रयाणामेकबुद्धिसङ्ग्रहार्थः तत्रापि संहतेरवस्तुत्वात् तत्कारणत्वं लक्षणं न भवति,

व्याख्यानाङ्गं सम्पादयति । तद्गुणसंविज्ञाने प्रयोजनमाह—जन्मस्थितिभङ्गं समासार्थ इति । तृतीयलिङ्गनिर्देशात् संहतिप्रधानं समासार्थः । नन्वादिः पूर्वकालकोटिमतो भवति, तदभावे प्रपञ्चस्य को नामादिः? इत्याशङ्क्याह—जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं चेति । यदनेन सूत्रेण लक्षितं ब्रह्म तत्स्वरूपकथनपरं वाक्यं तत्रादौ जन्म निर्दिष्टमिति तस्य आदित्वम् । वस्तुस्वभावापेक्षमपि । न हि वस्तु प्रलीय तिष्ठति स्थित्वा वा जायते । नापि जनित्वैव प्रलीयते । क्षणिकत्वनिराकरणात् । अतो जनित्वा स्थित्वा प्रलीयते । एवमनादिरयं

---

तदुक्तिरित्यत्राह—**तद्गुणेति** । सामान्ये शब्दे ह्यतद्गुणसंविज्ञानं किं न स्यात्? इत्याशङ्क्य, तथा सति स्थितिभङ्गयोरेव समासार्थत्वात् जन्मकारणता नोक्ता स्यात् । अतः त्रितयकारणत्वं वक्तुं तद्गुणसंविज्ञानता स्वीकार्येति वक्तीत्यर्थः । तथापि त्रयाणां समासार्थत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्राच्च कथमेकत्वनपुंसकत्वे?। 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वाक्यादिति चेत्, तर्ह्युभयथा प्रयोगोपपत्तौ पक्षपातहेतुर्वाच्य इत्यत्राह—**तृतीयलिङ्गेति** । अन्यथा पृथक् समुदायस्य समासार्थतया लाघवेन कारणत्वं वक्तुं तथोक्तम् । अन्यथा पृथक् पृथक् कारणत्वोक्त्या यत्नगौरवापातादित्यर्थः ॥

जन्मादेरा(द्यन्तमध्य)[दिमध्यान्त]तामाक्षिपति—**नन्वादिरिति** । परिहारभाष्यं व्याचष्टे—**यदनेनेति** । सर्वं जनित्वैव नश्यति न कञ्चित्कालं तिष्ठति स्वसत्ताप्रयुक्तत्वान्नाशस्येत्यत्राह—**क्षणिकत्वेति** । कथं तर्हि जगतोऽनादितेत्यत्राह—**अत इति** । प्रवाहरूपेणानादित्वात् स्वरूपेण जन्मादिक्रम-

---

कबलीकृतत्वेनैकबुद्धिप्रतिपन्नजन्मादिकारणत्वमेव लक्षणमिति दर्शयितुं भाष्ये[तृतीय]लिङ्गनिर्देश इति कथयति—**तृतीयलिङ्गनिर्देशादिति** । धर्मिणः अभिनवोत्पत्तौ तु तस्मिन् धर्मिणि जन्मन आदित्वं स्थित्यन्तयोश्चारम्भ्यश्चोपपन्नमिति जन्मन आदित्वोक्तिः सङ्गच्छते । सत्कार्यवादे तु प्रपञ्चस्य स्थायिनः घटीयन्त्रवदनिशमावर्तमानेषु जन्मादिधर्मेषु को नामादिर्भवेत् इत्याह — **नन्वादिरिति** । **एवमनादिरयमिति** । पूर्वपूर्वकल्प-

प्रपञ्चः। अस्येत्यादिभाष्येण पदभागस्येदमः प्रातिपदिकमात्रस्यार्थ-निर्देशः। तथाहि—सर्वत्र सर्वनाम प्रक्रमादिकारणान्तरबलेन कतिपयाभिधेयपरम्। तदभावे स्वमहिम्ना प्रमाणविषयमात्राभिधायकम्। तेनाह—**प्रत्यक्षादिसन्निधापितस्य धर्मिण इदमा निर्देश इति। षष्ठी जन्मादिधर्मसम्बन्धार्थेति सर्व एवेह** सम्बन्धः सम्भवति न तद्विशेष आदरणीय इति कथयति। **यत इति कारणनिर्देश इति** प्रकृतित्वनिबन्धना हि पञ्चमी नान्यनिबन्धनेति दर्शयति॥

---

नियतिर्न विरुद्धेत्यर्थः। अथ अस्येत्युपादाय इदमा निर्देश इत्युक्तिः व्यर्थेत्याशङ्क्य, प्रातिपदिकार्थं पृथक् करोतीत्याह—**अस्येत्यादीति**। अतो नोत्तरभाष्यस्य पुनरुक्तिशङ्कापीत्यर्थः। इदंशब्दः किञ्चिदेव सन्निहितं गमयति नाखिलं जगदित्यत्राह—**तथा हि इति**। षष्ठ्याः स्वप्रातिपदिकार्थसन्निहितपदार्थेन सम्बन्धमात्रार्थता प्रसिद्धा, विशेषः तत्र वाच्य इत्यत्राह—**सर्व एवेति**। एकदेशव्यावृत्त्यर्थं भाष्यमित्यर्थः। जगत्कारणकं जन्मादि कार्यं आश्रयनिमित्तत्वात् आश्रयिसद्भावस्येत्यादिदिशा कार्यकारणत्वसामान्यविशेषत्वादिः सर्वोऽप्यूह्यः॥

अथास्मिन् भाष्ये निमित्तं वा उपादानं वा उभयं वा उच्यते? तत्राद्ययोरन्यतरस्य पृथगवस्थानाद्वस्तुतः परिच्छेदात् लक्ष्यस्य ब्रह्मशब्दार्थता न स्यादित्यतल्लक्षणत्वम्, अन्त्ये तु मानाभावेन अप्रमितत्वादलक्षणतेत्यत्राह—**प्रकृतित्वेति**। निमित्तोपादानयोः तन्त्रेण प्रयुक्तेयं पञ्चमी, तथापि 'अकर्तर्यृणे पञ्चमी' इति सूत्रस्थपञ्चमीपदस्य पदान्तरं विनाप्यन्वयात् 'हेतौ' इति सूत्रेण निमित्ते पञ्चमी प्रसिद्धेति न वक्ति। किन्तु 'जनिकर्तुः प्रकृतिः' इति सूत्रबलेन अपादाने पञ्चमी इति वक्ति। न चैकस्य निमित्तोपादानत्वे मानाभावः,

---

समाननामरूपत्वेनोत्तरोत्तरकल्पस्य सृज्यमानत्वादनादित्वम्, न तु दण्डायमानतया स्थितत्वादित्यर्थः। **प्रत्यक्षादिसन्निधापितस्ये**त्येतद्भाष्यमुपपादयति—**तथा हीति**। **सर्व एवेति**। अनेक एवेत्यर्थः॥

**अस्य जगतः** इत्यादिना भाष्येण लक्ष्यस्य ब्रह्मणः स्वरूपलक्षणं कथयितुमुपक्रमते। द्विविधं हि लक्षणम्—उपलक्षणं विशेषलक्षणं च। तत्रेदं लक्षणं प्रपञ्चधर्मत्वात् पृथग्भूतमेव कारणमुपलक्षयति, न विशेषणत्वेन। अतः पृथक्स्वलक्षणकथनम्। **नामरूपाभ्यां व्याकृतस्येति**। कार्यप्रपञ्चं केचित् कथंचित्

---

विमतमुभयात्मकं चेतनत्वात् सुखादेर्निमित्तोपादानजीववदित्यनुमानादित्यर्थः। तर्हि निमित्तोपादान[त्व]लक्षणस्योक्तत्वात् पदार्थोक्त्यैवार्थाद्वाक्यार्थसिद्धेश्च किमुत्तरभाष्येणेत्यत्राह—**लक्ष्यस्येति**। लक्षणं चेदुक्तं तत् स्वलक्षणमेव अन्यस्याभावादित्यत्राह—**द्विविधं हि इति**। लक्ष्येऽनन्तर्गतं व्यावर्तकमुपलक्षणम्, यथा शाखाग्रं चन्द्रे लक्ष्ये, अन्तर्गतं व्यावर्तकं स्वलक्षणं, यथा प्रकृष्टप्रकाशत्वादीत्यर्थः। तर्हि उक्तमेव स्वलक्षणमस्तु, न हि तस्मिन्नुक्ते अन्यापेक्षेत्यत्राह—**तत्रेदमिति**। नानाविधकार्यक्रियावेशात्म[त्वस्य]तत्त्वप्रसवशक्त्या(त्मत्व)[यत्त]स्योक्तस्य विशुद्धब्रह्मानन्तर्गतत्वात् प्रपञ्चान्तर्गतत्वाच्चोपलक्षणमेव तदन्य(म्)[त]लक्ष्यात्।] न चोपलक्षणेनैवार्थसिद्धिः, सामान्येन लक्ष्यपदार्थः कश्चिदस्तीत्येतावद्बोधकतया स्वभावविशेषासिद्धेः। न च स्वलक्षणमेवालम्, नानापदार्थसङ्कीर्णेऽर्थे (ऽप्यु)[उ]पलक्षणात् पूर्वं स्वलक्षणस्यानवतारात्। अत उपलक्षणानन्तरं पृथक् स्वलक्षणं वाच्यमित्यर्थः॥

तर्हि **नामरूपाभ्यां व्याकृतस्येति** व्यर्थमित्याशङ्क्य, प्रसज्ञातपरोक्तप्रपञ्चभेदनिरासायेत्याह—**कार्यप्रपञ्चमिति**। 'नामरूपाभ्याम्' इति श्रुतिबलात् द्वैराश्यं चेत्, 'त्रयं वा इदं नाम रूपं कर्म' इति श्रुतेः त्रैराश्यं किं न स्यात्?। लाघवानुग्रहात्तथा चेत्, रूप्यत इति रूपमिति व्युत्पत्त्या सर्वं रूपमेव

---

**लक्ष्यस्येति**। जन्मादिकारणत्वोपलक्षितस्येत्यर्थः। **प्रपञ्चधर्मत्वादिति**। प्रपञ्चसापेक्षधर्मत्वादित्यर्थः। लक्षणभेदज्ञानस्य तन्निमित्तलक्ष्यभेदज्ञानस्य च भेदज्ञानत्वादेवान्योन्याश्रयत्वादिदोषदूषितत्वमभिप्रेत्याह—**कथञ्चिदिति**॥

स्वप्रक्रियानुसारेण विभजन्ति। तद्व्युदासाय प्रसिद्धार्थानुवादश्रुतिबलेन द्वैराश्यं कृत्वा आह—**नामरूपाभ्यामिति**। इत्थंभावे तृतीया। व्याक्रियमाणं हि वस्तु अभिधेयस्वरूपं स्वनामगर्भं विकल्पपूर्वमेव व्याक्रियत इति स्वसंवेद्यमेतत्। **अनेककर्तृभोक्तृसंयुक्तस्येति** कर्तृत्वभोक्तृत्वमपि नामरूपात्मकत्वात् प्रपञ्चानुयायीति दर्शयति। **प्रतिनियतदेशकाल-**

---

स्यात् तस्यात्यन्तलाघवादित्यत्राह—**प्रसिद्धार्थेति**। लाघवप्रसिद्ध्यनुगृहीतश्रुत्या द्वैराश्यमेव। अतः केनचिद्वेदान्तिना उक्तं त्रैराश्यं च न स्यात्। तथा च दूरे वैशेषिकाद्युक्तषट्पञ्चत्वादीत्यर्थः। तर्हि जगच्छब्देन सामानाधिकरण्यार्थं षष्ठी स्यात् न तृतीयेत्यत्राह—**इत्थम्भावे इति**। तृतीयाविधाने प्रकृत्यादिभ्य उपसङ्ख्यानात् नाम रूपमेव यथा स्यात्तथा व्याकृतस्येति व्याक्रियाद्वारा जगद्द्वै(रूप्ये)[राश्ये] तात्पर्यात्तृतीया युक्तेत्यर्थः। कथं तर्हि व्याकृतेरित्थम्भावप्रसिद्धिरित्यत्राह—**व्याक्रियमाणं हीति**। लोके कुम्भं चिकीर्षुः कुलालः पूर्वं कुम्भशब्दविकल्पितं पृथुबुध्नोदराकाररूपविकल्पितं च बुद्धावाविर्भावयति। पश्चाद्यथाविर्भावितं कुम्भशब्दालम्बनयोग्यं पृथुत्वाद्याकाररूपितं च करोति। एवं मूलकारणमपि नामरूपाभ्यां स्वचित्याविर्भावितं सर्वं पश्चाद्व्यनक्तीति इत्थम्भावः प्रसिद्धः। अत एव सर्वजगतोऽपि रूपद्वयमस्ति। तत् पृथक् राशीकृत्य द्वैराश्यं मयोक्तं प्रपञ्चात्मनैकराशेर्द्वैरूप्यविवक्षयेत्यर्थः॥

जीवलोकपालहिरण्यगर्भेभ्यो नैकेभ्यः उत्पत्त्यादिसम्भवान्न सर्वज्ञत्वे सर्वशक्तित्वे वा स्वलक्षणे मानमस्तीत्याशङ्क्य, तेषामकारणत्वं (सेद्धुं) [साधयितुं] कार्यान्तःपातमाह अनन्तरपदम्, पूर्वोक्त एव हेतुरित्याह—**कर्तृत्वेति**। तर्हि

---

रूपशब्दस्य व्याख्या—**अभिधेयेति**। कर्तृभोक्तृस्वभावमात्मानं साङ्ख्यव्यतिरिक्ताः सर्वे वादिन आहुः, तद्व्यावृत्त्यर्थं कर्तृभोक्तृरूपमपि नामरूपात्मकत्वेन 'नामरूपे व्याकरवाणि' इति श्रुत्या कार्यकोटावन्तर्भावितत्वलिङ्गशरीरत्वेन प्रपञ्चान्तःपातीत्याह—**कर्तृत्वेति**॥

**निमित्तक्रियाफलाश्रयस्येति**। प्रतिकर्मफलोपभोगे नियतो देशः। स्वर्गफलस्य मेरुपृष्ठम्। ग्रामादिफलस्य भूमण्डलम्। कालोऽपि, स्वर्गफलस्य देहपातादूर्ध्वं, पुत्रफलस्य बालभावात्। निमित्तमपि उत्तरायणादि मरणस्य। **मनसाऽप्यचिन्त्यरचनारूपस्येति**। न हि अर्वाग्दर्शी कश्चिद्बहिर्लोकसन्निवेशप्रकारं अध्यात्मं च प्रतिनियतार्थक्रियासमर्थावयवशिराजालसन्निवेशं निरूपयितुमपि समर्थः, किं पुनर्विरचयितुम्। **जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणात् भवति तत्** ब्रह्मेति वाक्यशेष इति साकाङ्क्षस्य सूत्रवाक्यस्याकाङ्क्षितपदपूरणं उपलक्षितब्रह्मस्वरूपं लक्षणं च दर्शयति ॥

**ननु अन्येऽपि परिणामादयो भावविकाराः सन्ति। ते किमिति न संगृह्यन्ते? इत्याशङ्क्य आह—अन्येषामपीति।** न

---

तेभ्योऽन्यस्मादणोरभावात् स्वभावादन्यस्माद्वा कस्माच्चिदसर्वज्ञादुत्पत्त्याद्याशङ्क्य सर्वज्ञतां सेद्धुमुत्तरपदम्, तद्व्याचष्टे—**प्रतिकर्मेति** ॥

अथापि कथं सर्वशक्तितेत्याशङ्क्य, साप्येवं सति कैमुतिकन्यायसिद्धे-त्याह—**मनसापीति**। **अर्वाग्दर्शीति**। असर्वज्ञ इत्यर्थः। पूर्वटीकास्थस्य 'इति दर्शयति' इत्यस्य उत्तरभाष्यपदयोः टीकाद्वये अनुषङ्गः। एवं विशिष्ट-जगत्कारणत्वान्यथानुपपत्त्या सर्वज्ञत्वादिसिद्धौ फलितं दर्शयतीत्याह—**साका-ङ्क्षस्येति**। वाक्ययोजनां च व्याख्यानाङ्गत्वात् सम्पादयतीति चकारार्थः। न च विषयोपाधिधर्मत्वात् सर्वज्ञत्वायोगः, **सर्वज्ञ**शब्देनाविषयोपाधिकस्य सर्वावभासक्षमचिन्मात्रस्य **सर्वशक्ति**शब्देन सर्वविवर्ताधिष्ठानक्षमसन्मात्रस्य च प्रतीतेः तयोः 'विज्ञानमानन्दम्' इत्यादावेकत्वानन्दत्वप्रतीतेश्च लाघवेन सदिति वा चिदिति वोक्ते सच्चित्सुखाखण्डब्रह्मसिद्धेः चिदित्येव ब्रह्मस्वलक्षणमित्यर्थः ॥

अथान्तर्भावोक्तेः का प्राप्तिरित्यत्राह—**नन्वन्येऽपीति**। **आदिपदात्**

क्वचि[क्श्चि]द्वस्तुनोऽवस्थाविशेषो विनाशरहितः। नाप्यनिर्वृत्त-जन्मनोऽस्थितस्वभावस्य विनाशः। अतस्त्रिष्वेवान्तर्भावान्न पृथगुपन्यासस्तेषाम् ॥

ननु षट् भावविकारा इति नैरुक्ताः, तेषां ग्रहणे अन्तर्भावोक्तिप्रयासोऽपि परिहृतः स्यादित्याशङ्क्याह—**यास्कपरिपठितानां तु जायतेऽस्तीत्यादीनामिति।** पृथिव्यप्तेजस्सु जगद्रचनारूपस्थितेषु तन्मयानां भावानामेव ते सम्भाव्यन्ते। ततस्तद्ग्रहणे तेषामेव ब्रह्मत्वेन लक्षितत्वाशङ्का स्यात्। न च तद्युक्तम्। अतः सूत्रार्थवत्त्वाय श्रुतिनिर्दिष्टा एवोत्पत्त्यादयो गृह्यन्ते। तदर्थनिर्णयार्थत्वात् सूत्राणाम् ॥

---

वृद्ध्युपक्षयौ गृह्येते। कथमन्तर्भाव इति; तदाह—**न कश्चिदिति**। सर्वोऽपि विकारः पूर्वावस्थानाशपूर्वकस्वोत्पत्त्यादिस्वस्थितिमध्यस्वनाशान्त एव। अतः त्रिभ्योऽतिरिक्तरूपाभावात् त्रिष्वेवान्तर्भाव इत्यर्थः। (किन्तु)[किं सा]निर्मूलिका स्यादित्यत्राह—**प्रयासोऽपीति**। सापि परिहृता स्यात् यास्कवाक्यमूलत्वादित्यर्थः। अनुमानादेरस्माकमपि प्रवृत्तेः श्रुतौ च विकारत्रयस्यैव भावात् यास्कवाक्यस्य मूलं प्रत्यक्षमेव स्यात्। तच्च भूतपञ्चकस्थित्यवस्थायां भौतिकधर्माणामेव षड्विकाराणां सम्भवतीति भौतिकविकारकारणत्वस्य लक्षणत्वापत्त्या भूतपञ्चकं ब्रह्मत्वेन लक्षितं स्यात्। श्रुतौ तु मूलमानानपेक्षत्वात् सर्वस्य विकारधर्मकस्य मूलकारणं ब्रह्मेति लक्षितं स्यात्। अतः श्रुत्युक्ता एव त्रयो विकाराः सूत्रेण ग्राह्या इति परिहारभाष्यार्थमाह— **पृथिवीत्यादिना। ते सम्भाव्यन्ते इति**। षड्विकाराः प्रत्यक्षतया सम्भाव्यन्त इत्यर्थः ॥

किञ्च, श्रुत्यर्थपरत्वात्सूत्राणां श्रुतिरेव जन्मादिसूत्रमूलमित्याह—**तदर्थेति**।

---

**सर्वज्ञादिति** स्वरूपलक्षणं **सर्वशक्ते**रित्युपलक्षणम्। उत्तरसूत्राणां श्रुतिमूलत्वेन तदर्थनिर्णायकत्वदर्शनात् तद्वैपरीत्येनास्यैकस्य पौरुषेयवाक्यमूलत्वं न सम्भवतीत्याह—**तदर्थनिर्णयार्थत्वादिति**। श्रुतिमूलत्वे मूलकारणलक्षणपरत्वेन सूत्रस्य अर्थवत्त्वं च

**अतो यद्वष्टम्भो विश्वो विवर्तते प्रपञ्चः तदेव मूलकारणं ब्रह्मेति सूत्रार्थः ॥**

**ननु श्रुतिनिर्दिष्टग्रहणे सूत्रमर्थशून्यं स्यात्। न हीमां पृथिवीं जायमानां पश्यामः, नापो न तेजः। कथं सिद्ध-**

---

'मायां तु प्रकृतिम्' 'इन्द्रो मायाभिः' इत्यादिभिर्मायायाः, ब्रह्मणश्च 'आत्मन आकाशः सम्भूतः' इत्यादिभिर्निमित्तोपादानत्वश्रवणात् माया-विशिष्टं ब्रह्म जगत्कारणमिति मायायामतिव्याप्तमुपलक्षणमित्याशङ्क्य, तथापि उक्तस्वलक्षणेन मायाव्यावृत्तेर्विशुद्धं ब्रह्म सिध्यतीत्युक्तं स्थूलं मत्वा स्वाभीष्टमाह—**अत इति**। यतः श्रुत्युक्ता गृह्यन्त इत्यर्थः। **विश्वशब्दः** सर्ववाची। 'देवात्मशक्तिं स्वगुणैः' इति श्रुतेर्मायाशक्तिम(त्त्वा)द्वा, 'मायां तु प्रकृतिम्' इत्यादेर्जगदुपादानमायाश्रयो वा ब्रह्म कारणम्। अतो मायाया ब्रह्मपरतन्त्रत्वेन तत्कार्यस्याप्यंशुतन्त्रतन्त्वारब्धपटस्यांशुतन्त्रत्ववत् ब्रह्मपरतन्त्रत्वात् सर्वकार्या-श्रयोपाधित्वमुपलक्षणम्, चित्त्वं तु स्वलक्षणमिति सूत्रार्थत्वादुपलक्षणस्या-तिव्याप्त्यभावाद्विशुद्धब्रह्मसिद्धिरित्यर्थः ॥

यद्वा, 'देवात्मशक्तिम्' इति श्रुत्यविरोधाय 'मायां तु प्रकृतिम्' इत्यादेः मायायाः परिणामितया ब्रह्मानुगुणद्वारकारणत्वमर्थः, 'माया शक्तिः श्रु(तेः)[ता] ब्रह्म प्रकृ(त्ये)[तिरि]'त्यादिश्रुतेश्च ब्रह्मैवोपादानादीति श्रुतित्रयबलात् सविकार मायाद्वारा कूटस्थं ब्रह्मैव जगन्निमित्तोपादानम्, कर्मनिर्वर्तनक्षमव्यक्तिद्वारा जातेः तद्व्यावर्तिकाया अङ्गत्ववत्। अतो मायाया अनिर्वाच्यत्वेनाज्ञानत्वात् तद्द्वारा निखिलविवर्ताधिष्ठानत्वमेव श्रुत्युक्तमिति तदेवोपलक्षणम्, स्वलक्षणं च चित्त्वमे-वेति सूत्रार्थत्वेनोपलक्षणस्याप्यतिव्याप्त्यभावाद्विशुद्धचिदा(द्य)[त्मकम]खण्डं ब्रह्म सिध्यतीत्यर्थः। **विवर्तते इति**। पूर्वरूपात्यागेनासत्यनानारूपेण भातीत्यर्थः ॥

भौतिकानां भूतोपादानत्वात् भूतानां च जन्माद्यदर्शनात् श्रुत्युक्तम-सम्भावितं जगत्कारणत्वं न लक्षणत्वेनादातुं शक्यमिति शङ्कते—**ननु श्रुति-निर्दिष्टेति**। विमताः पृथिव्यादयो जन्मादिमन्तः पृथिव्यादिबुद्धिबोध्यत्वात्

---

सेत्स्यतीत्याह—**अतो यदवष्टम्भ** इति ॥

वल्लक्षणत्वेनोपादीयते इति। उच्यते—तेजसस्तावदरणिनिर्मथनादिषु दृश्यते जन्म। इन्धनक्षये विनाशः। अपामपि चन्द्रकान्तादिषु जन्म। क्रमेण च शोषः। पृथिव्या अप्यवयवसंयोगविभागदर्शनात् तन्निमित्तौ जन्मविनाशावनुमीयेते। दृश्येते चाद्याप्यवयवसंयोगविभागकृतौ पृथिव्येकदेशस्य जन्मविनाशौ। वाय्वाकाशकालदिशामपि 'यावद्विकारं तु विभागो लोकव'दिति वक्ष्यमाणेन न्यायेन स्त एव जन्मविनाशौ। **न यथोक्तविशेषणस्येत्यादिना** भाष्येण युक्तिरपि ब्रह्मस्वरूपनिर्णयाय अनेनैव सूत्रेण तन्त्रेण आवृत्त्या वा जन्माद्यस्य यतः

---

तदेकदेशवदिति दूषयति—**उच्यत इति**। दृष्टान्तो न साध्यविकल इत्याह—**तेजस इत्यादिना**। विमताः पृथिव्यादयो न जन्मादिमन्तः महाभूतत्वादाकाशवत्, आकाशादयश्च न जायन्ते अनवयवद्रव्यत्वादात्मवत्, इत्यत्राह—**वाय्वाकाशेति**॥

अथ अस्मिन् सूत्रे लक्षणं सूचितम्, उत्तरसूत्रे मानम्, ततः परमध्यायद्वये तयोर्दार्ढ्यम्, पुनश्चाध्यायद्वये साधनफले, ततो युक्तिः क सूत्रितेत्याशङ्क्य, लक्षणस्याव्याप्त्यादिनिरासकयुक्तिश्चेत् लक्षण(सूत्रे सामर्थ्यात्) [निर्णये अर्थात्] सूत्रितेत्युक्तम्। ब्रह्मणोऽसम्भावनादिनिरासकयुक्तिश्चेत् तत्राह—**युक्तिरपीति**। अनेकवाक्यस्य एकरूपेण सकृत्प्रयोगः **तन्त्रम्**। यथा श्वेतो धावतीत्यस्य शुक्लवर्णाश्वादिद्रुतगतौ श्वित्रिशोधने च। यस्त्वेकेन एकस्य वाक्यस्य योजनाभेदाख्यवैरूप्येण सकृत्प्रयोगः, यथा—अस्यैव वाक्यस्यार्थान्तरे च, श्वा इतो धावतीति योजनाविवक्षया श्वगतौ च, सोऽर्थान्तरप्रतिपत्तेः पुनःपाठापेक्षत्वादावृत्तिः। अतो वैरूप्ये सति कथं तन्त्रतेत्यत्राह—**आवृत्त्या वेति**। तामभिनयति—**जन्मादीति**। यतोऽस्य जगतो ब्रह्मत एव जन्मादि सम्भवति अतः तत्सिध्यतीति सूत्रिता यस्मात् तस्मात्तां दर्शयतीति योज्यम्॥

सम्भवति इति सूत्रितेति दर्शयति । अस्य जगतो नामरूपाभ्यां व्याकृतस्येत्याद्यभिहितविशेषणचतुष्टयस्य, यथोक्तविशेषणमीश्वरं मुक्त्वेति—सर्वज्ञं सर्वशक्तिं विहाय, न अन्यतः—परपरिकल्पितात् प्रधानादेरचेतनात् चेतनादपि परिच्छिन्नज्ञानक्रियाशक्तेः संसारिणो हिरण्यगर्भात् उत्पत्त्यादि सम्भावयितुमपि शक्यम् । अचेतनात् तावदचेतनत्त्वादेवानुपपन्नम् । चेतनादपि परिच्छिन्नज्ञानक्रियाशक्तित्वात् । अभावात् पुनः न अचेतनत्वादेव केवलादनुपपत्तिः अपि तु निरुपाख्यत्वादतीत-

---

प्रधानादेरेव वा तस्यापि वा जगत्कारणत्वादसम्भव्यतिव्याप्तं वोपलक्षणम्, तेन सामान्यतः सिद्धे लक्ष्ये स्वलक्षणप्रवृत्तेः स्वलक्षणं चासम्भवि, प्रधानादेरेव जगद्धेतुत्वात् ब्रह्माख्यः कश्चिन्न सम्भवति नास्तीति चाशङ्क्य, अतिव्याप्त्यादिनिरासे चासम्भावनादिनिरासे च सूत्रितयुक्तेरेकत्वात्तन्त्रेण उभयत्र युक्तिकथनेन उभयं निराचष्ट इति भाष्यतात्पर्यमुक्तम् । तद्व्याचष्टे—**नान्यत इति**। न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशङ्क्य, विशेषणैरुक्तां युक्तिं व्यनक्ति—**अचेतनात्तावदिति** । मा भून्निरीश्वरात्प्रधानादेर्विचित्रकार्यरचना, सेश्वरादण्वादेः तद्बुद्धिबलात् सा स्यादित्यत्राह—**चेतनादिति** । कुलालादिदृष्टान्तेनानुमेयस्येश्वरस्य तेनैव दृष्टान्तेन देहादिपरिच्छिन्नज्ञानशक्तित्वाज्जगद्रचना अनुपपन्नेत्यर्थः ॥

यत्तु शून्यालम्बनं जगदिति, तत्राह—**अभावात्पुनरिति** । कार्यस्यासदन्वयापाताच्चेत्याह—**अपि त्विति** । किञ्च, निरुपाख्यस्य जगद्धेतुत्वे पूर्वकल्पस्य निरन्वयनाशात् संस्काराभावात् पुनः सजातीयकार्योत्पादनियामकाभावात्, व्यवहारिणामृषीणां निरन्वयनाशाच्च, कल्पादौ पूर्वकल्पानुभूतपश्वाद्यनुसन्धाय तत्सजातीये पश्वादिशब्दं व्यवहरन्ति नान्यत्र[इति]नियमाभावात्, धर्मादेर्मानान्तरागोचरत्वादेक एव जीवः सर्वज्ञः सर्वसङ्केतक इत्यत्र

कल्पसंस्काराभावात् पूर्वकल्पैकरूपो वर्तमानोऽपि कल्प इति प्रमाणाभावात् सर्व एव व्यवहारो यादृच्छिक इति न क्वचित् कश्चिन्नियमोऽभविष्यत् । **न च स्वभावतः विशिष्टदेशकालनिमित्तोपादानादिति** । स्वभावो नाम अन्यानपेक्षा । तेन अपेक्षैवानुपपन्ना, कुतो नियमसम्भवः? । अतो युक्त्यापि वस्त्वन्तरस्य कारणत्वसम्भावनानिराकरणेन पारिशेष्यात् पूर्वोक्तविशेषण ईश्वर एव कारणमिति सिद्धम् ॥

**एतदेवानुमानमिति** । येयं युक्तिरभिहिता यथोक्तविशेषणमीश्वरं मुक्त्वा नान्यतो जगतो जन्मादि सम्भवतीति एतदेव स्वतन्त्रमनुमानमीश्वरसिद्धौ सर्वज्ञत्वसर्वशक्तित्वसिद्धौ

---

मानाभावेनापूर्वसङ्केतायोगाच्च, स्वेच्छातः सर्वत्र सर्वशब्दादिव्यवहारे अकृताभ्यागमः कृतविप्रणाशश्च स्यादित्यर्थः ॥

लोकायतमतं प्रत्याह—**न चेति** । देशादिनियमापेक्षया क्रमोत्पत्तिरेव स्वभाव इत्यत्राह—**स्वभावो नामेति** । स्वस्माद्वा अन्यानपेक्षया वोत्पत्तिः? उभयथापि देशाद्यपेक्षा न युक्ता, अन्यथा अस्मदीयकारणस्य तव स्वभाव इति संज्ञा स्यादित्यर्थः । अतिव्याप्त्यादेरसम्भावनादेश्चोद्धारं निगमयति—**अतो युक्त्येति** । वक्ष्यमाणमानतश्चेत्यपेरर्थः ॥

नन्वनुमानेनैव यथोक्तमीश्वरं स्थापयन्ति तार्किकाः । किं युक्तिसहितश्रुत्येत्यत्राह—**एतदेवेति** । युक्तिः सम्भावनाबु(द्धिः) [द्धिमात्रजननी] साहचर्यमात्रापेक्षा, अनुमानं तु निश्चयोत्पादकं व्याप्त्यपेक्षम् । तत्र सर्वं कार्यं स्वरूपोपादानोपकरणसम्प्रदानप्रयोजनादिविज्ञानवत्कर्तृकं विविधविन्यासकार्यत्वात् घटादिवदिति **वैशेषिकोक्तम्**, सर्वं कर्मफलं कर्मतत्फलतद्भोक्तृदेशकालादिज्ञानवता देयं व्यवहितकर्मफलत्वात्, सेवादिफलवदिति **नैयायिकोक्तं** च, देहेन्द्रियादिमद्बहुकर्तृदातृकत्वेऽपि दृष्टान्तसम्भवादेकेश्वरा(दि)सिद्धेः युक्तिमात्रम् । ज्ञानैश्वर्यशक्तयः क्वचित् सर्वविषयज्ञानैश्वर्यशक्तिमति पर्यवस्यन्ति तरतमभावेनोत्कृष्यमाणधर्मत्वात् परिमाणवदिति

च तस्य प्रमाणं किं वेदवाक्यैरितीश्वरकारणिनः कणादप्रभृतयो मन्यन्ते जन्मादिसूत्रलक्षितान्यपि वाक्यानि 'यतो वा इमानि भूतानि जायन्ते' इत्यादीनि परार्थानुमानवाक्यसमानि दृश्यन्ते इति वदन्तः ॥

नन्विहापि तदेवोपन्यस्तमिति । यथा धूमविशेषस्यागरुसम्भवत्वं तथा प्रपञ्चसन्निवेशविशेषस्य सर्वज्ञत्वादिगुणकारणत्वमिति । न—वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणामिति । सत्यम् । तदेवोपन्यस्तमुपकरणत्वेन । न तत्र तात्पर्यम् । तात्पर्यं तु वेदवाक्यग्रथने । तदेव प्रपञ्चयति—वेदान्तवाक्यानीति । समन्वयसूत्रप्रमुखोपात्तैः शब्दशक्त्यनु-

---

साङ्ख्ययोगोक्तं च गुरुत्वरागद्वेषदुःखादिष्वनैकान्तिकत्वात् युक्तिमात्रमज्ञानादनुमानं मन्यन्त इत्यर्थः ॥

वाक्येषु सत्सु किमित्यनुमानक्लेशः इत्याशङ्क्य, अनुमानसिद्धार्थानुवादकत्वात् तेषामित्याह—जन्मादिसूत्रेति । सूत्रेऽप्येतान्येवानुमानानि स्वातन्त्र्येणार्थनिश्चायकत्वेनोक्तानि, तद्विरुद्धं आगमगुणभूतेयं युक्तिरिति उक्तमिति शङ्कते—नन्विहापीति । कार्यात् कर्तृमात्रं सिध्यति, कथं सर्वज्ञत्वादिसिद्धिरित्यत्राह—यथेति । युक्तित्वेन सूत्रितानीत्युक्तं प्राक्, तद्विरुद्धं न-वेदान्तेति परिहारभाष्यमित्याशङ्क्य, व्याचष्टे—सत्यमित्यादिना । श्रुतिशिरसामेव सूत्रैः शब्दसामर्थ्यात्प्रत्यभिज्ञायमानत्वात्तान्येव प्राधान्येन सूत्रितानीत्यर्थः ॥

किञ्च, कार्यात् कर्तृमात्रं सिध्यति । कार्यवैशिष्ट्यात् विशिष्टकर्तृसाधने देहादिमदल्पज्ञबहुकर्तृकत्वप्रत्यक्षविरोधात् । इह तु सत्यज्ञानानन्दसर्वज्ञप्रत्यग्भूतब्रह्मावगतिः साध्या । अन्यथा ब्रह्ममीमांसात्वायोगात् । सा च वेदान्तैरेव जन्या । अतः त एव सूत्रिता इत्याह—समन्वयेति । कथं तर्हि युक्तिः

सारिभिर्न्यायैर्वाक्यानां ब्रह्मणि तात्पर्याध्यवसाननिर्वृत्ता ब्रह्माव-गतिः । नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्सु तु वेदान्तवाक्येषु तदविरोध्यनुमानमपि भवन्न निवार्यते । श्रुत्यैव सहायत्वेन तर्कस्याप्यभ्युपेतत्वात् । तथा हि— श्रोतव्यो मन्तव्य इति श्रुत्या यथा श्रवणं ब्रह्मावगतिहेतु-रनूद्यते तथा मननस्यापि सिद्धवदनूद्यमानत्वात् । तथा अपरा श्रुतिः 'पण्डितो मेधावी'त्यादिः 'आचार्यवान् पुरुषो वेद' इति पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । यत् आचार्येण श्रुत्यनु-सारिणा स्फटिकादिनिदर्शनेन शिष्येभ्यः प्रत्ययदार्ढ्यापादनं तत् 'आचार्यवान् पुरुषो वेद' इत्यनूद्यते । न धर्मजिज्ञासामिवेत्या-दिना युक्तिसाहाय्यापेक्षणे कारणमाह । श्रुत्यादय इति । श्रुतिः पदान्तरनिरपेक्षः शब्दः । आदिशब्देन लिङ्गवाक्यादयः शब्द-प्रकारा गृह्यन्ते । न त एव ब्रह्मणि प्रमाणम्, किं तु अनुभवाद-

---

सूत्रितेत्यभाषीत्यत्राह—**सत्स्वति** । श्रुत्यैवाभीष्टसिद्धेः किं युक्त्येत्यत्राह—**श्रुत्यैवेति** । तदेव कुत इत्यत्राह—**तथा हीति** । यथा वेदान्तानां प्रत्यग्ब्रह्मणि शक्तितात्पर्यावधारणं नियम्यते, तथा युक्तिः सम्भावना च तदङ्गत्वेन नियम्यते । अतः सहायत्वात् सापि सूत्रितेत्यर्थः ॥

नन्वियं श्रुतिः बुद्धिसाहाय्यं स्वस्या दर्शयति न युक्तिसाहाय्यमित्य-त्राह—**यदाचार्येणेति** । वेदान्तानां युक्त्यपेक्षास्तीत्यत्र मानमुक्त्वा युक्तिं वक्ति उत्तरभाष्यमित्याह—**न–धर्मेति** । [पदान्तरनिरपेक्षः शब्दः श्रुतिः ।] श्रुतसामर्थ्यं लिङ्गम् । पदसामर्थ्यं वाक्यम् । वाक्यसामर्थ्यमारभ्याधीतविषयं प्रकरणम् । क्रमवर्तिपदार्थानां क्रमवर्तिपदार्थैर्यथाक्रमं सम्बन्धः स्थानम् । संज्ञासाम्यं समाख्या । **अनुभवादयोऽपीति** । अनुभवोऽपरोक्षज्ञानं तावत् ब्रह्मणि

---

वाक्यार्थावगतिं प्रति श्रवणमननयोरन्वयव्यतिरेकसिद्धसाधनत्वात्तयोः नियमविधि-विषयत्वमेव सम्भवति नापूर्वविधिविषयत्वमित्यभिप्रेत्याह—**तथा हि श्रोतव्य इति** ।

योऽपि। तत्र हेतुमाह—**अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्येति**। सिद्धे हि वस्तुनि सम्भवत्यनुभवः तदवसाना आकाङ्क्षानिवृत्तिर्यतः। ननु धर्मजिज्ञासायां विनाप्यनुभवेन शब्दशक्त्यनुसरणमात्रेणैव निराकाङ्क्षं फलपर्यन्तं ज्ञानं भवति न तर्कगन्धमप्यपेक्षते तथेहापि स्यात् प्रमाणत्वाविशेषाद्वेदान्तवाक्यानां इत्याशङ्क्य, विशेषमाह—**कर्तव्ये हि विषये** इत्यादिना **ब्रह्मज्ञानमपि वस्तुतन्त्रमेव भूतवस्तुविषयत्वात्**

---

प्रमाणम्, तच्च मननाख्ययुक्त्यनुसन्धानं निदिध्यासनाख्यचिन्तनं चापेक्ष्य जन्यते, सूक्ष्मार्थापरोक्षत्वात्, रत्नतत्त्वप्रत्यक्षवत्, अतस्ते प्रमीयते अनेनेति व्युत्पत्त्या प्रमाणमित्यर्थः। यद्वा, अनुभवः सम्भावना अनु(भवो)[मानं]युक्तिः, आदिशब्दान्निदिध्यासनं चित्तैकाग्र्यादि च गृह्यते ॥

शब्दस्य ब्रह्मनिश्चयेन कृतार्थत्वात् नापरोक्षार्थप्रवृत्तिः नापि शब्दप्रमेयमपरोक्षार्हमित्यत्राह–**अनुभवेति**। आपरोक्ष्यमुच्यते। हेतुद्वयं व्युत्क्रमेण विवृणोति—**सिद्धे हीति**। यद्वा, वेदस्य धर्मे युक्त्याद्यनपेक्ष्य सम्यग्ज्ञानोत्पादकत्वेन सिद्धत्वात् युक्त्याद्यपेक्षा न युक्तेत्यत्राह—**अनुभवेति**। ब्रह्मज्ञानं युक्त्याद्यपेक्षं सूक्ष्मार्थापरोक्षत्वाद्रत्नतत्त्वादिप्रत्यक्षधीवदित्यर्थः। शब्दप्रमेयस्यापरोक्षत्वे न मानमस्तीत्यत्राह—**भूतेति**। विमतमपरोक्षं सन्निकृष्टत्वे सति भूतत्वात् घटवदित्यर्थः। विमतं नापरोक्षं शब्दप्रमेयत्वात् धर्मवदित्याशङ्क्य, साध्यत्वमुपाधिरित्याह–**सिद्धे हीति**। तथापि शब्दो ब्रह्म निश्चित्य कृतार्थत्वान्नापरोक्षार्थं प्रवर्तत इत्यत्राह—**तदवसानेति** ॥

वेदान्तोऽपरोक्षं विना निराकाङ्क्षः वेदत्वात् धर्मवाक्यवत्, अत एव न तर्काद्यपेक्षश्चेत्याशङ्क्य, साध्यार्थत्वमुपाधिरिति वक्ति उत्तरभाष्यमित्याह—**ननु धर्मेति**। तर्हि धर्मोऽप्यपरोक्षार्हो युक्त्याद्यपेक्षश्च वेदार्थत्वात्

---

**ननु धर्मजिज्ञासायामिति**। तत्तत्कार्यप्रतिपादकवाक्यशक्तितात्पर्यनिर्णायकतद्व्यतिरेकेणार्थविषयोऽनुभवाङ्गभूतस्तर्को नापेक्ष्यत इत्यर्थः ॥

इत्यन्तेन भाष्येण। कथम्? कर्तव्यं हि कर्तव्यत्वादेवासिद्धस्वभावं नानुभवितुं शक्यमिति न तदाकाङ्क्षा। इह तु सिद्धस्य साक्षाद्रूपेण विपर्यासगृहीतस्य सम्यग्ज्ञानेन साक्षात्करणमन्तरेण न मिथ्याज्ञानोदयनिवृत्तिः। द्विचन्द्रादिषु तथा दर्शनात्। न हि कर्तव्यसिद्धार्थनिष्ठयोः प्रमाणत्वसाम्यादवबोधनप्रकारेऽपि साम्यम्। यदि स्यात् पुरुषेच्छावशनिष्पाद्यत्वमपि स्यात्। ततो विधिप्रतिषेधविकल्पसमुच्चयोत्सर्गापवादबाधा-

---

ब्रह्मवदित्याशङ्कते—**कथमिति**। दूषयति—**कर्तव्यं हीति**। अथ सिद्धेऽप्यर्थे अनुमानाप्तवाक्यगम्ये क्वचिन्नापरोक्षाकाङ्क्षा, अन्यथा तेभ्योऽप्यपरोक्षा धीः स्यादित्याशङ्क्य, वैलक्षण्यं वदन्मानमाह—**इह त्विति** ब्रह्मवाक्यमपरोक्षज्ञानजनकं अपरोक्षरूपेण विपर्यस्तार्थत्वे सति प्रमाणत्वात् चन्द्रद्वित्वबाधकाप्तवाक्यप्रत्यक्षे इवेत्यर्थः। धर्मब्रह्मणोरुभयोरपि वेदार्थत्वादापरोक्ष्यं युक्त्याद्यपेक्षा च स्यात् न स्याद्वा, अन्यथा अन्यतरस्यावेदार्थत्वापातादित्यत्राह—**न हीति**॥

अस्त्वित्यत्राह—**ततो विधिप्रतिषेधेति**। यजेत न भक्षयेदितिवत् ब्रह्म कर्तव्यं न कर्तव्यं स्यादित्यर्थविकल्पः। व्रीहिभिर्यवैर्वेतिवत् ब्रह्म स्थाणुर्वेति इच्छाविकल्पः। षड्यागसमुच्चयवत् ब्रह्म च स्थाणुश्चेति समुच्चयः। आहवनीये जुहोतीतिवत् सामान्यप्रतिपन्नस्य ब्रह्मणो विशेषे सङ्कोचः उत्सर्गापवादः। प्रकृतेरतिदिष्टानां कुशमयबर्हिषां विकृतावुपदिष्टशरमयबर्हिर्भिः बाधवत् ब्रह्मणोऽपि क्वचित् प्राप्तस्य पदार्थान्तरेण बाधः। प्राकृतानां नारिष्ठहोमानां वैकृतैरुपहोमैः समुच्चित्यानुष्ठानवत् ब्रह्मणोऽप्यतिदिष्टस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः। उदिते जुहोति अनुदिते जुहोति इति शाखाभेदेन व्यवस्थावत् क्वचिद्ब्रह्म भवति न भवतीति व्यवस्था व्यवस्थितविकल्पः। अस्त्वेवं धर्मसाम्यमित्यत्राह

---

**मिथ्याज्ञानोदयेति**। मिथ्याज्ञानमुदेत्यस्मादित्यज्ञानमुच्यते। प्रतिबन्दीमाह—**पुरुषेच्छेति**॥

भ्युच्चयव्यवस्थितविकल्पादयोऽपि प्रसज्येरन् । न वस्तुनि युक्तमेतत् । निस्स्वभावत्वप्रसङ्गात् । तथा च एकस्मिन् वस्तुनि स्थाणुः पुरुषो वेति विकल्पो न वैकल्पिकद्रव्ययागज्ञानवत् सम्यग्ज्ञानं भवति स्थाणुरेवेति निश्चितैकार्थतापरमार्थे । यतो वस्तुस्वभावपरतन्त्रं सिद्धवस्तुज्ञानं न ज्ञानपरतन्त्रं वस्तु । यदि स्यात् शुक्तिरजतमपि तथा स्यात् । कर्तव्यज्ञानं पुनर्वैपरीत्येऽपि सम्यगेव । 'योषा वाव गौतम अग्नि'रित्यादिषु दर्शनात् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव भूतवस्तुविषयत्वात् । अतो युक्तो युक्तेरनुप्रवेशः अनुभवापेक्षा च । नेतरत्र ॥

—न वस्तुनीति ॥

वैकल्पिकद्रव्य(या)[त्या]गवत् सत्स्वभावः किं न स्यादित्यत्राह—**तथा चेति** । असम्यक्त्वे हेतुमाह— **एकस्मिन्निति** । अविकल्पितैकवस्तुनि विकल्पितानेकार्थज्ञानस्य मिथ्यात्वात्तद्विषयशुक्तिरूप्यतादात्म्यवन्निस्स्वभावता स्यादित्यर्थः । किं तर्हि सम्यग्ज्ञानमित्यत्राह—**स्थाणुरेवेति** । यथा वैकल्पिकद्रव्ययागे विकल्पज्ञानस्यैव सम्यक्ता तथेहापि स्यादित्यत्राह—**यत इति** । शुक्तिस्यैव यागस्येव वस्तुनो ज्ञानतन्त्रता किं न स्यादित्यत्राह—**यदीति** । तर्हि रूप्यतादात्म्यधियोऽपि यथाज्ञानं वस्तुसद्भावात् सम्यक्ता स्यादित्यर्थः । सिद्धार्थधीवत साध्यार्थज्ञानमपि वैकल्पिकमसम्यगेव स्यादित्यत्राह—**कर्तव्येति** । आरोपितार्थत्वेऽपि सम्यगिति न वस्तुतन्त्रतेत्यर्थः । कर्तव्यज्ञानं ह्येवमेवं च कर्तव्यमिति ज्ञायते, न त्वेवं वस्तु अस्ति नास्तीति वा, ततश्च(न)तेन रूपेण कर्तव्यत्वासम्भवे तस्यायथार्थत्वात् असम्यक्ता स्यान्नान्यथेत्यर्थः ॥

अस्तु तर्हि सिद्धार्थज्ञानस्य वस्तुतन्त्रता, ततः किमित्यत्राह—**तत्रैवमिति** । एवं अविकल्परूपे ब्रह्मणि विकल्पादिज्ञानस्य मिथ्यात्वात्तद्विषयब्रह्मणः शुक्तिरूप्यवत् वस्तुतो निस्स्वभावत्वापातात् कर्तव्यसिद्धार्थनिष्ठयोः अवबोधयोः अवबोधनप्रकारवैषम्ये फलितमाह—**अतो युक्त इति** । नानुमानादि-

---

तदपीष्टमेवेति ; तत्राह—**न वस्तुनीति** ॥

अपरः परिचोदयति—ननु भूतवस्तुविषयत्वे इत्यादिना। अयमभिप्रायः—भूतत्वाद्युक्तेरपि चेदनुप्रवेशः, तथा सति किं वेदवाक्यैर्विचारितैः ?। यथाहुरीश्वरकारणिनस्तथा भवतु, पूर्वसूत्रेण प्रतिज्ञानिर्देशः अनेन च हेत्वभिधानमिति। उत्तरमाह—न-इन्द्रियाविषयत्वेन सम्बन्धाग्रहणादित्यादिना। इन्द्रियाणि प्रपञ्चमात्रं गृह्णन्ति न तत्कारणम्। यदि तद्ग्रहणमपि स्यान्नानुमानोपन्यासेन कृत्यमस्ति। सामान्यतोदृष्टमपि न प्रमाणमतीन्द्रिये ब्रह्मणि। अत उपसंहरति—तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं किं तर्हि वेदान्तवाक्यप्रदर्शनार्थमिति॥

युक्तिमपि तदुपकरणां तदर्थानुभवप्रयोजनां सूचयतीत्युक्तम् ॥

नन्वेवं सति कथं युक्तिरब्रह्मविषया सती तद्विषयाणां

---

प्रमाणान्तरनिर्वृत्ता ब्रह्मावगतिरित्युक्तत्वात् पुनः कथमनुमानवादिनश्चोद्योदय
इत्यत्राह—अयमभिप्राय इति। अनागमगम्यं चेदनुमानगम्यत्वे किमपराद्ध-
मित्यर्थः। [ननु] अनुमानपरं सूत्रं न भातीति; [अतः] तेषामुक्तिमाह—
पूर्वसूत्रेणेति। ज्ञानानन्दप्रत्यग्भूतं ब्रह्म चक्षुरादिना सामान्यमात्रविषयानु-
मानैश्च नानुभवितुं शक्यं, युक्तेश्चासम्भावनादिप्रतिबन्धनिरासकत्वं न ब्रह्म-
विषयतेति परिहरति—न-इन्द्रियेति ॥

करणतदुपकरणयोरेकविषयत्वात् युक्तेरब्रह्मविषयत्वे तद्विषयकरणोप-
करणता न स्यादिति शङ्कते—नन्वेवमिति। मृदादिदृष्टान्तैरुपादानव्यति-

ब्रह्मणि प्रवर्तमानमनुमानं विशेषतोदृष्टं सामान्यतोदृष्टं वा ? न तावत् प्रथममित्याह—
इन्द्रियाणीति। नापि द्वितीयमित्याह—सामान्यत इति। सामान्यतोदृष्टमपि
कारणमात्रविषयं न ब्रह्माख्यविशेषविषयमित्यर्थः ॥

ब्रह्मण्यनुमानप्रवृत्तिनिराकरणेन युक्त्यनुप्रवेशो निराकृतः, एवं सति युक्तेः ब्रह्म-
विषयत्वाभावे कथं सा तद्विषयाणां वाक्यानां उपकरणं भवतीति चोदयति—नन्वेवं
सतीति ॥

वाक्यानामुपकरणं भवति ?। उच्यते—ब्रह्मपरेषु वाक्येषु मृदादिदृष्टान्तैर्युक्तय उपन्यस्यन्ते। ताश्च विधिप्रतिषेधवाक्ययोः प्रवर्तकत्वनिवर्तकत्वाकाङ्क्षितस्तुतिनिन्दार्थवादवत् स्वरूपवाक्यस्य फलपर्यन्तापेक्षितसम्भावनार्थवादतां प्रतिपद्यमानाः तत्र श्रुतिसाहाय्ये वर्तन्ते इत्युच्यते। **किं पुनस्तद्वेदान्तवाक्यं यत् सूत्रेणेह लिलक्षयिषितमिति** सर्वस्मिन्नेव वेदान्तवाक्ये ब्रह्मपदस्याप्रसिद्धत्वान्न स्वार्थं विशेष्यत्वेन विशेषणत्वेन वा वाक्यार्थे समर्पयितुमलमित्याक्षिपति। येषां वेदान्तवाक्यानां येन संनिवे-

---

रेकेण कार्यस्यानिरूपणादद्वितीयता सम्भाव्यते। स्फटिकलौहित्यप्रतिबिम्बरज्जुसर्पघटाकाशदृष्टान्तैरात्मनि कर्तृत्वादेरारोपितत्वजीवब्रह्मैक्यब्रह्मव्यतिरिक्तप्रपञ्चास्वातन्त्र्यासङ्गत्वद्वारेण विशुद्धाद्वितीयब्रह्मात्मत्वं सम्भाव्यते। अतो युक्तेः शब्दावगतब्रह्मासम्भावनादिनिरासकत्वात् श्रुतिं प्रति उपकरणत्वमुपचर्यते न मुख्य(पर)मिति परिहरति— **ब्रह्मपरेष्विति** ॥

'तद्विजिज्ञासस्व' इत्यादेः जिज्ञासासूत्रलक्ष्यस्य 'यतो वा इमानि' इत्यादेः जन्मादिसूत्रलक्ष्यस्य च सूत्राभ्यामेव प्रत्यभिज्ञायमानत्वान्न चोद्योदय इत्याशङ्क्य, आक्षेपपरं भाष्यमित्याह—**सर्वस्मिन्नेवेति**। सच्चिदानन्दाद्वितीयप्रत्यग्ब्रह्मभूतसर्वज्ञब्रह्मपदार्थस्या[प्र]सिद्धत्वात् न ब्रह्मपदं सङ्गतिग्रहकाले[अप्र]सिद्धं स्वार्थं वाक्यार्थे सम्बन्धितया सारयितुमलम्, एवम्भूतब्रह्मसिद्धौ च (विध्य)[सिद्धा]नुवादवा(क्य)[क्यत्वम्, अ]तो न ब्रह्मप्रतिपादकं वाक्यमस्तीत्याक्षेपः। तं समाधा(नं वक्तुं)[तु]मेकस्य सूत्रस्य लक्ष्यमाक्षिप्य सूत्रान्तरस्यापि लक्ष्यं तत्र वक्तुमयुक्तं, प्रसङ्गात्तत्कथनेऽप्यस्य सूत्रस्य लक्ष्यमुक्त्वा पश्चाद्वक्तव्यमित्याशङ्कां तावद्व्यवच्छिनत्ति—**येषां वेदान्ता[न्तवाक्या]नामिति**। स्वाध्यायपाठक्रमेण नार्थप्रतिपत्तिः, किन्तु वैपरीत्येन, 'आत्मन आकाशः सम्भूतः, स आत्मा, सत्यं ज्ञानमनन्तं ब्रह्म' 'त(य)स्मादेतद्ब्रह्म

शक्रमेण ब्रह्मप्रतिपादने समन्वयः स्वाध्यायपाठे स्थितः तल्लक्षणार्थं सूत्रद्वयमिति तथैवोदाहरणमाह—**भृगुर्वै वारुणिरिति।** अथशब्दोपात्तन्यायेन प्रथमसूत्रस्योदाहरणम्। 'यतो वा इमानि भूतानी'ति जन्मादिसूत्रस्य। कथम्?। पूर्वोक्तेन न्यायेन पृथिव्यादीनां जन्मादिदर्शनात् तत्कारणे एकत्वनानात्वयोरन्यतरावगमे प्रमाणाभावात् बुद्धिमत्कारणपूर्वतामात्रे प्रतिपन्ने 'यतो वा इमानी'ति कारणस्यैकवचननिर्देशात् तदर्थमात्रस्यैव विधित्सितत्वादर्थात् सर्वज्ञं सर्वशक्ति जगत्कारणमिति कारणविशेषो वाक्यादवगम्यते। पुनः तद्विजिज्ञासस्वेत्यनूद्य तत् ब्रह्मेति तत्र ब्रह्मशब्दप्रयोगात् बृहत्यर्थान्वयेन सर्वतोऽनवच्छिन्नस्वभावं जगत्कारणं ब्रह्मपदस्यार्थ इति गम्यते। तस्य च निर्णयवाक्यमप्यानन्दाद्ध्येव खल्विति प्रसिद्धावद्योतकेन हिशब्देन

---

नामरूपमन्नं च जायते यः (स) सर्वज्ञः सर्ववित्' इत्यादावित्याशङ्क्य, अधिकारिज्ञानकर्तव्यताब्रह्मप्रतिपादनानां क्रममभिप्रेत्यैतदुक्तमिति [आह—**तथैवोदाहरण**मिति। जगत्कारणे नानात्वस्यापि प्रतिपत्तेः कथं तदनुवादेन ब्रह्म प्रतिपादनीयमिति] आशङ्कते—**कथमिति।**

जगत्कारणे नानात्वाशङ्कायां **यत** इत्येकत्वनिर्देशात् मानान्तरासिद्धत्वाच्च एकं ब्रह्म जगत्कारणमात्रानुवादेन विधीयते इति दूषयति—**पूर्वोक्तेनेति।** ततः किमायातमित्यत्राह—**अर्थादिति।** तथापि ब्रह्मपदार्थसिद्धावसिद्धौ चोक्ताक्षेपोऽस्तीत्यत्राह—**बृहत्यर्थेति।** **चतुर्थवर्णको**क्तरीत्या बृहत्यर्थानुगमाद्वा सत्यादिपदसमभिव्याहाराद्वा सि(द्धं)[द्धस्य]सत्याद्यात्म(कं)[कस्य]लक्षणया

---

**अर्थादिति।** विहितैकत्वसामर्थ्यादित्यर्थः। तदित्युक्तविशेषणकारणमनूद्य तस्य मुमुक्षुणा जिज्ञास्यत्वविधानात् पुनः तद्ब्रह्मेति तत्र ब्रह्मशब्दप्रयोगाच्च जगत्कारणं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तीति च प्रतिपादितमित्याह—**पुनस्तद्विजिज्ञासस्वेति।**

**संयुक्तं आनन्दावद्योतकमुपपद्यते। अनानन्दात्मके हि जगत्कारणे ब्रह्मशब्दप्रयोगो न युज्यते। न हि तस्योपेक्षणीये विषये स्वार्थप्रक्षेपेण वृत्तिः समञ्जसा। तस्मात् ब्रह्मपरे वाक्ये जन्मादिधर्मजातस्योपलक्षणत्वात् ब्रह्मसंस्पर्शाभावात् सर्वज्ञं**

---

ब्रह्मपदात्प्रतीतेः स्वर्गकामपदसमभिव्याहारसिद्धापूर्वस्येव मानान्तरासिद्धत्वेन सिद्धानुवादकत्वाप्रसक्तेः तावन्मात्रमेव ब्रह्मवाक्यात्प्रमीयत इत्यर्थः। सङ्गतिग्रहकाले सिद्धं बृहत्त्वमात्रं लक्षणया तदधिष्ठानमात्रं पदात्प्रतीयते, वाक्यात्तु विशिष्टब्रह्मसिद्धिरित्येके आक्षेपं परिहरन्ति।

वाक्यबलेन सतश्चिद्रूपस्यानन्दत्वं ब्रह्मत्वं च प्रतिपादयितुं **तस्य च निर्णयवाक्यमिति भाष्यम्**, तदयुक्तम्। आनन्दस्य ब्रह्मपदानुगमासम्भवेनाब्रह्मत्वादित्यत्राह — **(ततोनिर्णयेति।)** [**प्रसिद्धेति।**] यद्यानन्दो ब्रह्मपदेन नानुगम्येत, तदा ब्रह्मण आनन्दात्मत्वस्यासिद्धत्वात् सिद्धावद्योतकं वाक्यं न स्यादित्यर्थः। अथाप्यनुपपत्त्यभावात् कथमनुगमः स्यादित्यत्राह—**आनन्दात्मके हीति।** यद्यपि दुःखतत्साधनवत् द्वेष्ये तृणदिवदुपेक्ष्ये वा ब्रह्मपदवृत्तिरयुक्ता, तथापि सुखाश्रयतयोपादेयत्वात् सा युक्तेत्यत्राह—**न हीति।** सुखाश्रयतयोपादेयत्वे स्वत उपेक्ष्यत्वात् सुखत्वेऽपि तस्य सातिशयत्वानित्यत्वादिदोषादुपेक्ष्यत्वेनामहत्वात् अनतिशयानन्द एव ब्रह्मपदवृत्तिर्युक्तेति सोऽप्यनुगम्यत इत्यर्थः॥

ब्रह्मप्रतिपादनपरं चेद्वाक्यं लक्षणत्वेन संज्ञासंज्ञिसम्बन्धपरं न स्यात्, तत्परं चेद्ब्रह्मपतिपादनपरं न स्यात, उभयपरं चेद्वाक्यभेदः, इत्याशङ्कां शमयन् वाक्यस्य सच्चिदानन्दब्रह्मप्रतिपादकत्वसम्भवे फलितमाह—**तस्मादिति।**

---

परापरसामान्यपर्यवसानभूमिरानन्द एवेत्युक्तम्, इदानीं ब्रह्मशब्दार्थभूतमहत्त्वपर्यवसानभूमिरपि स एवेत्याह—**अनानन्दात्मके हीति॥**

इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां पञ्चमवर्णकं समाप्तम्॥

॥ जन्माद्यधिकरणञ्च समाप्तम्॥

**सर्वशक्तिसमन्वितं परमानन्दं ब्रह्मेति जन्मादिसूत्रेण ब्रह्मस्वरूपं लक्षितमिति सिद्धम् ॥**

॥ इति पञ्चपादिकायां पञ्चमवर्णकं समाप्तम् ॥

॥ जन्माद्यधिकरणं च ॥

---

ब्रह्मप्रतिपादनपरमेव वेदान्तवाक्यं तस्मिन् जगदधिष्ठानत्वस्योपलक्षणत्वात् सच्चिदानन्दमिति स्वलक्षणमिति ताभ्यां च लक्षणाभ्यां यज्जगदधिष्ठानं सच्चिदानन्दाद्यखण्डं तद्ब्रह्मेत्यर्थात् तदेव वाक्यं संज्ञां च बोधयतीति योज्यम् । अधिकरणार्थं निगमयति--**जन्मादीति ॥**

॥ इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां पञ्चमवर्णकं समाप्तम् ॥

॥ जन्माद्यधिकरणं च ॥

---

## ॥ अथ षष्ठं वर्णकम् ॥

**शास्त्रयोनित्वात्** । अयमपरः प्रपञ्चकारणस्य ब्रह्मणः सर्वज्ञत्वे हेतुः । अनेकनानाविधविषयविद्यास्थानोपबृंहितस्य वेदाख्यस्यापि शास्त्रस्य प्रपञ्चान्तःपातित्वात् तत एव जन्म । न च तेनाविषयीकृतस्य सद्भावे प्रमाणमस्ति । अतः सर्वविषयत्वात् सर्वज्ञं तत् । कल्पप्प्रत्ययप्रयोगो भाष्ये बोद्धृत्वाभावादीषद-

---

**शास्त्रयोनित्वादिति** सूत्रं पूर्वाधिकरणशेष इत्येके । अधिकरणान्तरमित्यन्ये । पक्षद्वयेऽपि सङ्गतिमाह—**अयमपर इति** । तत्राद्ये सङ्गतिः स्फुटा । द्वितीये तु, सर्वाधिष्ठानत्वेन ब्रह्मणः युगपत् सर्वावभासक्षमापरिच्छिन्नचित्त्वमुक्तम् । तदयुक्तम् । वेदानां नित्यत्वेन तत्स्वरूपोपादानसम्प्रदानप्रयोजनादिविषयज्ञानशक्त्यभावादित्याशङ्क्य, हेतुत्वेनास्याधिकरणस्योत्थानात् पूर्वाधिकरणमस्य हेतुः इदमधिकरणं वा पूर्वोक्तस्य हेतुरिति हेतुहेतुमत्त्वं वा, पूर्वोक्तं विषयीकृत्य तन्निर्वाहकत्वेनास्योत्थानाद्विषयविषयित्वं वा, निर्वाह्यनिर्वाहकत्वं वा, पूर्वाधिकरणप्रकरणाभ्यां सङ्गतिः । 'अस्य महतो भूतस्य' इत्यादिवेदान्तानां ब्रह्मणि स्पष्टलिङ्गानां समन्वयहेतुत्वात् शास्त्रे अध्याये पादे च सङ्गतयः सन्तीत्यर्थः ॥

ननु 'अस्य महतो भूतस्य निःश्वसितम्' इत्यादिवाक्यं [न] वेदानां ब्रह्मविवर्ततां प्रतिपादयति अनुग्राहकयुक्त्यभावादित्यत्राह—**अनेकेति** । विमतं ब्रह्मविवर्तः प्रपञ्चत्वात् मृदादिवदित्यर्थः । **अनेकविचित्रविषयैः**—पुराणं न्यायः मीमांसा धर्मशास्त्रं षडङ्गानि च इति **दशविद्यास्थानैश्चोपबृंहितस्येति न चेति** उत्तरग्रन्थार्थे हेतुः । तर्हि मानान्तरेणार्थमुपलभ्य वेदरचनाभावात् ब्रह्मणः कथं सर्वज्ञानशक्तिः स्यादित्याशङ्क्य, वेदस्य तावत् तां साधयति—**न चेति** । तत्र फलमाह—**अतः सर्वेति** । भाष्ये कल्पप्प्रत्ययेन सर्वज्ञानाभावः सूचितः इत्यत्राह— **कल्पप्प्रत्ययेति** । स प्रत्ययार्थस्येषदसमाप्त्या न तु प्रकृत्यर्थस्य ज्ञानस्येषदसमाप्त्येत्यर्थः ॥

---

**प्रपञ्चान्तःपातित्वादिति** । 'नामरूपे व्याकरवाणि' इत्यादौ वेदस्य कार्यकोटौ निवे-

परिसमाप्त्या। ततश्च तस्य कारणं तद्विषयादप्यधिकतरग्रहणसमर्थं गम्यते। दृश्यते ह्यद्यापि शास्त्रकाराणां तथाभावः॥

नन्वेवं सति बुद्धिपूर्वत्वात् सापेक्षं स्यात्। न स्यात्। ब्रह्मवदनादित्वात् कूटस्थनित्यत्वाच्च। कथं पुनस्ततो जन्म?। तत्परतन्त्रत्वात् रज्जुसर्पवत्। तथा च श्रुतिः 'निःश्वसितमेतत्'

---

अस्तु वेदस्य सर्वज्ञानशक्तिः तेन ब्रह्मणः सर्वज्ञत्वे किमायातमित्यत्राह—**ततश्च तस्येति**। वेदः स्वविषयादधिकतरज्ञानशक्तिमता प्रणीतः वाक्यप्रमाणत्वात् पाणिन्यादिशास्त्रवदिति श्रौतोऽर्थः। वेदः स्वशक्तेरधिकतरशक्तिमतो विवर्तः विवर्तत्वात् स्रक्सर्पवदिति हृदयम्। साध्यविकलता नेत्याह—**दृश्यते हीति**। स्रजि स्वविवर्तसर्पशक्तितोऽधिकतरशक्तिमत्ता दृश्यत इत्यर्थः। विवर्तत्वे वेदस्य सादित्वे सति प्रमाणवाक्यत्वात् पाणिन्यादिवाक्यवन्मानान्तरेणार्थमुपलभ्य रचनाख्यपौरुषेयत्वापत्तिरित्याशङ्कते—**नन्वेवमिति**। विमतं सृष्टिकालीनं वेदाध्ययनं पूर्वपूर्वतथाविधवेदाध्ययनानुस्मृतिनिबन्धनं वेदाध्ययनत्वात् सम्प्रतितनवेदाध्ययनवदित्यादिना विशेषणासिद्धेर्नैवमित्याह—**न स्यादिति**॥

अनादित्वेऽपि पुराणादिवदन्यथासन्निवेशप्रणयनात् कथं न पौरुषेयतेत्यत्राह—**कूटस्थेति**। 'अग्निमीळे' इत्यादेः ईळे वह्निमित्यादिरूपेणान्यथाप्रणेतृसरणाभावादात्मवदित्यर्थः। तर्हि कथं ब्रह्मविवर्ततेति शङ्कते—**कथं पुनरिति**। तदधिष्ठानीकृत्य तद्विपरीतरूपान्तरेण भानादित्याह—**तत्परतन्त्रेति**। न चैवं सति वेदस्य मिथ्यात्वात् अप्रामाण्यापत्तिः, स्वप्नवाक्यस्येव स्वरूपमिथ्यात्वेऽपि यावद्विषयबाधं प्रामाण्योपपत्तेरित्यर्थः। बुद्धिपूर्वं न रचितः, किन्तु रज्ज्वां सर्पवद्विवर्त इत्यत्र श्रुतिमाह—**तथा चेति**। नन्वियं श्रुतिः

---

शितत्वात्, तस्याकार्यत्वं मीमांसकैरभ्युपगतं श्रुतिविरुद्धमित्यर्थः। **ईषदपरिसमाप्त्येति**। **ईषदपरिसमाप्त्ये**त्युक्त्या **ततोऽप्यधिकतरग्रहणसमर्थ**मित्युक्तिर्विरुद्धा न भवति, यतः शब्दस्य सामान्यप्राधान्येनैव सर्वार्थबोधकत्वम्, ब्रह्मणस्तु सामान्यप्राधान्येन विशेषप्राधान्येन च सर्वार्थबोधकत्वं 'यःसर्वज्ञस्सर्ववित्' इत्यादिश्रुत्या दर्शितमिति।

इति। यथा अपेक्षारहितैव लोके निःश्वासप्रवृत्तिः तथा अस्यापीति न सापेक्षतादोषः ॥

नन्वेवं सति कथं सर्वज्ञता ?। तस्यैव ज्ञानशक्तिविवर्तात्मकत्वात् नाम(विकल्प)प्रपञ्चस्य । रूपप्रपञ्चस्यापि तदाश्रित्य विवर्तनात् तज्जन्मता । नासतः प्रादुर्भावात् ॥

॥ इति पञ्चपादिकायां षष्ठं वर्णकं समाप्तम् ॥

---

निःश्वाससाम्येन सकर्तृकत्वं वदन्ती बुद्धिपूर्वकत्वाख्यं पौरुषेयत्वं गमयतीत्यत्राह—**यथेति**। निःश्वासस्य सकर्तृकत्वेऽपि बुद्धिपूर्वकत्वं नास्ति, अतः तद्वत् बुद्धिपूर्वकत्वं निषेधतीत्यर्थः।

विवर्तत्वे वेदस्याविद्याजृम्भितत्वेन जडत्वात् कथं सर्वज्ञता ? तया च कथं ब्रह्मणः सर्वज्ञता ? ब्रह्मपरिणामत्वाभावात् सत्यमिथ्यात्वेनात्यन्तविलक्षणत्वाच्चेत्यत्राह—**नन्वेवं सतीति**। ब्रह्मणः उद्दामनिस्सीमसत्त्वप्रधानमायाशक्तिविवर्तत्वाद्वेदः सर्वावभासक्षम इत्यर्थः। रज्ज्वामध्यस्तसर्पमालादौ रज्जु-(मात्मत्वेन)[रात्मा, तेन]तच्छक्तेः रज्जुशक्तेश्च सत्त्वात् रज्जोः स्वविवर्तापेक्षया अधिकतरशक्तिमत्त्ववत् सर्वाभासक्षमवेदस्य ब्रह्मविवर्तत्वात् ब्रह्म ततोऽप्यतिशयेन सर्वावभासक्षममित्यावृत्त्या योज्यम्। नामप्रपञ्चस्य ब्रह्मविवर्तत्वेन मिथ्यात्वात् रूपप्रपञ्चस्य ब्रह्मजन्यत्वेन वास्तवत्वाच्च प्रपञ्चवैरूप्यं स्यादित्यत्राह—**रूपप्रपञ्चस्येति**। आरम्भपरिणामयोरसम्भवादित्यर्थः॥

॥ इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां षष्ठवर्णकं समाप्तम् ॥

---

अखण्डसत्त्वगुणोपहितचित्प्राधान्येन शब्दसृष्टिः इतरसृष्टिरितरगुणात्मकमायोपाधिप्राधान्येनेत्यभिप्रायेणाह—**तस्यैवेति**। नाम्नो रूपप्रपञ्चोत्पत्तिकारणत्वान्न ब्रह्मणस्सर्वोपादानतेत्याशंक्य, नामावस्थापन्नब्रह्मकार्यत्वाद्रूपप्रपञ्चस्य नामकार्यत्वोक्तिः, अतो न विरोध इत्याह—**रूपप्रपञ्चस्येति**। कारणे अविद्यमानं प्रकाशनसामर्थ्यं कार्ये न जायते, किन्तु कारणे विद्यमानमेव कार्येऽपि भवतीत्याह—**नासत इति**॥

॥ इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां षष्ठं वर्णकं समाप्तम् ॥

---

## ॥ अथ सप्तमं वर्णकम् ॥

अथ वा यथोक्तमृग्वेदादीत्यादिना सूत्रस्य प्रमाणप्रतिज्ञामर्थान्तरमाह । अपेक्षितत्वात् । कथं पुनरेकस्य सूत्रस्य अर्थद्वयम् ? सूत्रत्वादेव । तथा च पौराणिकाः—

'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥' इति ॥

विश्वतोमुखमिति नानार्थतामाह । अतोऽलङ्कार एव सूत्राणां यदनेकार्थता नाम ॥

ननु पूर्वसूत्रे शास्त्रमुदाहरता ब्रह्मावगमे शास्त्रं प्रमाणं प्रतिज्ञातमेव । सत्यं एतत्सूत्रबलेन तदुदाहृतम् । अन्यथा सूत्रे शास्त्रोपादानाभावादनुमानाशङ्कायां 'यतः सर्वज्ञात् सर्व-

---

अथवेत्यादिभाष्यमस्यैव सूत्रस्य व्याख्यान्तरम् । तस्य पूर्वव्याख्यानाद्विरुद्धं तात्पर्यमाह—**अथ वेत्यादिना** । पूर्वोक्तार्थेन सूत्रस्यार्थवत्त्वात् व्याख्यान्तरमयुक्तमित्याशङ्क्य, सूत्रार्थवत्त्वेऽपि अपेक्षितार्थस्यानन्यथासिद्धत्वात् युक्तमित्याह—**अपेक्षितेति** । सूत्रस्यार्थद्वित्वाद्वाक्यभेद इत्याशङ्कते—**कथमिति** । तेन कथं न वाक्यभेद इत्याशङ्क्य, सूत्रलक्षणमाह—**तथा चेति** । ततः किमित्यत्राह—**विश्वतोमुखमिति** । ततो वा किमित्यत्राह—**अत इति** । 'अर्थैकत्वादेकं वाक्य'मिति न्यायस्य सूत्रान्यविषयत्वान्न वाक्यभेद इत्यर्थः । यद्वा, तत्रावृत्त्यादिना बहुवाक्यत्वस्य सूत्रलक्षणत्वाद्वाक्यभेदो गुण इत्यर्थः । एतद्व्याख्यान्तरं व्यर्थं पूर्वेणैव गतार्थत्वादिति शङ्कते—**ननु पूर्वेति** । दूषयति—**सत्यमिति** । पूर्वसूत्रेण शास्त्रप्रत्यभिज्ञानात् तद्बलेनैव तदुदाहृतमितीत्यत्राह—**अन्यथेति** । मुखतः सूत्रे शास्त्रोपादानाभावात् श्रुतिशीलिनां श्रुतिप्रत्यभिज्ञानेऽपि अनुमानशीलिनामनुमानप्रत्यभिज्ञाशङ्का स्यादित्यर्थः ॥

को दोष इत्यत्राह—**यत इति** । यो यत्कर्ता स तज्ज्ञानीति व्याप्तेः सर्वं कार्यं सकर्तृकमित्यनुमानं सर्वज्ञत्वादौ मानमस्ति, किमिति अप्रमाणकत्व-

**शक्तेः कारणात् जगतो जन्मादि भवति तत् ब्रह्मेति वाक्यशेषः' इत्यस्योपस्कारस्याप्रमाणत्वप्रसङ्गः । प्रतिप्रपञ्चं पृथक्कारण-जन्यताया अपि सम्भवात् सर्वज्ञत्वसर्वशक्तित्वासिद्धेः । लोके च जगत्कारणे ब्रह्मशब्दप्रयोगादर्शनात् । अतो 'जन्माद्यस्य यतः शास्त्रप्रमाणक'मित्येतावदिदं सूत्रं सत् असंदिग्धम् । अनुमान-शङ्कानिवृत्तेः । पृथक्करणं तु प्रपञ्चान्तःपातिनः शास्त्रस्यापि हेतु-त्वेन सर्वज्ञत्वं सुसम्पादमिति व्याख्यानान्तरेण कथयितुम् ॥**

॥ इति पञ्चपादिकायां सप्तमं वर्णकं समाप्तम् ॥

॥ शास्त्रयोनित्वाधिकरणं च ॥

---

प्रसङ्ग इत्यत्राह—**प्रतिप्रपञ्चमिति । नामरूपाभ्यां** व्याकृतस्येत्याद्युक्त-विशेषणविशिष्टस्य जगतः कारणत्वान्यथानुपपत्त्या सर्वज्ञत्वादि सिध्यतीत्याशङ्क्य, जगद्वैशिष्ट्यस्यापि श्रुतिं विना असिद्धेः स्वतन्त्रप्रमाणत्वायोगात् नेत्याह—**सर्वज्ञत्वेति ।** अस्तु **सर्वज्ञात् सर्वशक्ते**रित्यस्योपस्कारस्यामानकत्वप्रसङ्गः, किमिति ब्रह्मेत्यस्यामानकत्वप्रसङ्गः ? इत्यत्राह—**लोके चेति ।** यद्यनुमानाशङ्का, तर्हि 'जन्माद्यस्य यतः' इत्यस्यासन्दिग्धत्वाभावात् असूत्रतेत्यत्राह–**अत इति ।** यत एवं (शङ्केति)[शङ्कोदेति] पूर्वं अत इति सूचितम् । सूत्रैकत्वे मानमर्था-पत्तिं व्यनक्ति—**सदसन्दिग्धमिति ।** तर्हि पृथक्करणं व्यर्थमित्यत्राह—**पृथगिति ।** पूर्वोक्तसर्वज्ञत्वे हेत्वन्तरं वक्तुं वा वेदानां नित्यत्वात् न सर्व-जगत्कारणत्वेन सर्वज्ञत्वमित्याशङ्कां त्यक्तुमधिकरणान्तरार्थं वा इत्यर्थः ॥

॥ इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां सप्तमं वर्णकं समाप्तम् ;

शास्त्रयोनित्वाधिकरणं च ॥

---

**प्रतिप्रपञ्चं पृथक्कारणजन्यताया अपि सम्भवात् ।** सपक्षे तथैव दृष्टत्वादिति शेषः । जगत्कारणस्य एकत्वात् तन्निमित्तसर्वज्ञत्वाद्यसम्भवेऽपि ब्रह्मशब्दस्य तत्र रूढत्वात् ब्रह्मेत्युपस्कारः सम्भवतीत्याशङ्क्याह—**लोके चेति ।** तर्हि लक्षणसूत्रे किमनुमानमुक्तं उत शास्त्रमुदाहृतमिति संशयः स्यात् अर्थनिर्णायकत्वं न सिध्यतीत्याशङ्क्याह—**जन्माद्यस्येति ॥**

॥ इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां सप्तमं वर्णकं समाप्तम् ॥

॥ शास्त्रयोनित्वाधिकरणं च ॥

---

## ॥ अथ अष्टमं वर्णकम् ॥

**कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते ?। यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यमक्रियार्थत्वात् । यद्यपि प्रदर्शितानि वाक्यानि सर्वज्ञत्वादिगुणकं ब्रह्म जगत्कारणं प्रतिपादयन्ति, तथापि तत्र परिनिष्ठिते वस्तुनि प्रत्यक्षादीनामपि प्रवृत्तिसम्भवात् तैरसंवादे न प्रामाण्यं प्रतिलभन्ते ॥**

**नन्वपौरुषेयत्वात् तज्जन्यस्वार्थपरिच्छेदे अनपेक्षं कथ-**

---

जगज्जन्मादिकारणं ज्ञानानन्दात्मकं ब्रह्मेति च लक्षितम्, तस्मिंश्च वेदान्ताः प्रमाणमिति प्रतिज्ञातम् । तदयुक्तम्, भूतेऽर्थे शब्दप्रामाण्यायोगात् इत्याशङ्क्य, हेतुत्वेनास्याधिकरणस्योत्थानाद्धेतुहेतुमत्त्वं वा, विषयविषयित्वं वा, निर्वाह्यनिर्वाहकत्वं वा, पूर्वाधिकरणप्रकरणाभ्यां सङ्गतिः । सत्यज्ञानादिवाक्यानां ब्रह्मणि स्पष्टलिङ्गानां समन्वयहेतुत्वात् शास्त्रे अध्याये पादे च सङ्गतयः । ब्रह्मणि वेदान्ताः प्रमाणं न वेति सिद्धे शब्दप्रामाण्यसम्भवासम्भवाभ्यां सन्देहे पूर्वपक्षमाह—**कथं पुनरिति** । अथाक्षेपः किंनिबन्धन इति चेत्, सूत्रप्रामाण्यादित्याह—**यावतेति** । तर्हि किं वेदान्तानां क्रियापरत्वमुच्यते ? नैरर्थक्यं वा ? । नाद्यः, आदिमध्यावसानेषु तात्पर्येण ब्रह्मण्येव पर्यवसानादित्यत्राह—**यद्यपीति** । तथापि तत्र न सम्भवति प्रामाण्यमित्यर्थः । यत्र शब्दस्य शक्तितात्पर्ये तत्र प्रामाण्यम्, न विषयविशेषापेक्षम्, विषयस्य शब्दप्रामाण्यहेतुत्वाभावादित्यत्राह—**परिनिष्ठिते इति** । असाध्यस्वभावे इत्यर्थः ॥

पौरुषेयवाक्यस्य मानान्तरसापेक्षत्वात् तत्संवादविसंवादाभ्यां प्रामाण्यमप्रामाण्यं च स्यात्, वेदान्तानां त्वपौरुषेयत्वेनानपेक्षमेव प्रामाण्यमिति चोदयति—**नन्वपौरुषेयेति** । अनपेक्षप्रमाणयोरपि चक्षुस्स्पर्शयोरिव अहं

मप्रमाणम्?। सत्यम्, तथापि यथा चाक्षुषं स्पार्शनगोचरचित्र-निम्नोन्नतज्ञानं तेनासंवादादप्रमाणं तथेहापि स्यात्। किं च-पुरुषार्थशून्यत्वादप्यप्रामाण्यम्। पुरुषार्थो हि नाम सुखावाप्तिः दुःखपरिहारश्च। तौ च असिद्धत्वाद्धानोपादानविषयौ न सिद्धवस्तुन्यक्रियाशेषे सम्भवतः। ततो न क्वचिद्वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा। किं च–प्रत्यक्षाद्यविषये न शब्दमात्रस्य प्रामाण्यम्। शास्त्रस्यैष स्वभावो यदनवगतार्थबोध-

---

मनुष्य इति प्रत्यक्षविसंवादादेकत्वश्रुतेः अप्रामाण्यमिति दूषयति—**सत्यं तथापीति**। ब्रह्मणि वेदान्तानां तात्पर्यमुपेत्य मानान्तरविसंवादाद्विपर्यस्तबोधकत्वलक्षणमप्रामाण्यमुक्त्वा, अपुरुषार्थे तात्पर्यायोगात् अपुमर्थत्वलक्षणं चाप्रामाण्यमस्तीत्याह—**किं चेति**। 'दध्ना जुहोति' इत्यादौ सिद्धेऽपि दध्यादौ तौ दृश्येते इत्यत्राह—**अक्रियाशेषे इति**। ननु तत्त्वमस्यादिवाक्यादहेयानुपादेयाक्रियाशेषवस्त्ववगतौ कृतकृत्यता अनुभूयते उपपद्यते च रज्जुतत्त्वावगतौ सर्पभ्रान्तिनिवृत्तिवत् असंसार्यात्मतत्त्वावगतौ संसारभ्रमनिवृत्तिरित्याशङ्कां शमयन् निगमयति—**ततो नेति**॥

यथासङ्गतिग्रहणं अर्थबोधकत्वेन विधायकपदव्यतिरिक्तपदसमुदायस्य अनधिगतार्थबोधकत्वायोगात् अबोधकत्वलक्षणं चाप्रामाण्यमस्तीत्याह—**किञ्च प्रत्यक्षेति**। यथा कार्यस्य साध्यतया मानान्तरागोचरत्वात् कार्यपदोपेतवाक्यस्यानधिगतार्थबोधकत्वम्, तथा ब्रह्मणोऽपि रूपादिहीनतया तदगोचरत्वात् तद्वाक्यस्यापि सा किं न स्यादित्यत्राह—**शास्त्रस्येति**। प्रवर्तकवाक्यत्वं हि

---

प्रमाणान्तरस्य विरोधित्वेनोदये बाधात् अविरोधित्वेनोदयेऽनुवादात् अनुदयेऽर्थाभावात् सर्वथा अप्रामाण्यमेव वेदान्तवाक्यस्येत्याह—**तथापीति**। सिद्धस्यापि क्रियाशेषत्वेन दध्यादिवत् पुरुषार्थशेषता स्यादित्याशङ्क्याह—**अक्रियाशेषे इति**। वेदप्रामाण्यस्य अनुमानागम्यत्वात् सपक्षाभावो न दोषायेत्याशङ्क्याह—**उपपन्ना वेति**। **शब्दमात्रस्येति**। विधिपदरहितवाक्यस्येत्यर्थः। **शास्त्रस्येति**। विधिपदयुक्तवाक्यस्येत्यर्थः।

कत्वम्। शब्दमात्रस्य पुनः प्रमाणान्तरगृहीतार्थप्रकाशन एव सामर्थ्यं दृष्टम्। नानवगतार्थप्रकाशने। तस्मादनर्थका वेदान्ताः न तेषां ब्रह्मणि प्रामाण्यं इति। अत एव वेदोषरा वेदान्ता इति केषांचिदुद्गारः। यत्पुनर्भाष्यकारेण कर्तृदेवता-स्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानां प्रकरणान्तरभया-दनभ्युपगम्य स्ववाक्यगतोपासनाकर्मपरत्वमुक्तम्, तदयुक्तम्—उपासनाविधिशेषत्वेऽपि संवादाभावात् जगत्कारणे न सर्वज्ञत्वादि-सिद्धिः। सत्यम्। अनुमानतोऽनिर्दिष्टविशेषे तस्मिन्नवगते

---

अनधिगतबोधकत्वे प्रयोजकम्। अवगतार्थे ब्रह्मणि तात्पर्यप्रतीत्या क्रियापरत्वायोगादुक्तरीत्या ब्रह्मण्यर्थवत्त्वायोगात् आनर्थक्यमाश्रितमित्यर्थः। ब्रह्मण्यर्थाभावेऽपि वेदान्तानां ब्रह्मणि प्रामाण्यं किं न स्यादित्यत्राह—**न तेषामिति**। अथ वेदैकदेशस्य वेदान्तस्याप्रामाण्ये वेदत्वात् कर्मकाण्डस्यापि तत् स्यादित्यत्राह—**अत एवेति**। यतो वेदान्तस्याप्रामाण्यमत एव तस्य वेदाभासत्वमुक्तम्। तथा च प्रवर्तकवाक्यस्यानधिगतबोधकत्वेन वेदत्वात् प्रामाण्यम्, वेदान्तानां तु तदभावेन वेदाभासत्वात् अप्रामाण्यं युक्तमित्यर्थः॥

वेदान्तानां कस्यचित् कर्मविशेषस्य प्रकरणेऽनधीतत्वेन 'सोऽरोदीत्' इत्यादिवद्विधिसमवायायोगात् कर्मणां कर्ता ह्यकर्त्रसंसारि ब्रह्मेति स्तुतिप्रतिपादनयोः कर्मप्रवृत्तावनुपयोगित्वेन कर्तृद्वारेण सर्वक्रतुशेषार्थवादतायाश्च पर्णमयीवाक्यवदयोगाच्च स्वप्रकरणगतसगुणोपासनासु सम्बन्ध इति भाष्यार्थमनूद्याक्षिपति—**यत्पुनरित्यादिना**। तदापि विशिष्टब्रह्मरूपासिद्धिः इत्याक्षेपहेत्वर्थः। न ह्युपासनाशेषतया ब्रह्मणः सिद्धिः भाष्येऽभिप्रेता, किन्तु उपास्यगुणप्र(दर्शन)[क्षेप]द्वारेण वेदान्तानामुपासनसम्बन्धितेति परिहरति—**सत्यमिति**। महाप्रकरणभेदाभावेऽप्यवान्तरप्रकरणभेदात् वेदान्तानामुपासन-

---

**अनुमानतोऽनिर्दिष्टविशेषे इति**। कार्यस्य कारणेन भवितव्यमिति सामान्यतो दर्शनेन जगत्कारणमात्रेऽवगत इत्यर्थः। सर्वत्र फलश्रुतयो वर्तमानापदेशित्वादपेक्षितफल-

**समारोपितैर्धर्मैरुपासनानियोगः सेत्स्यति । एवं चाध्ययनविधि-ग्राहितानां वेदान्तानामेकान्ततो नानर्थक्यं भविष्यति, फलं च तत्र (रात्रिसत्रवाक्यानामिव) अर्थवादसमर्पितं भविष्यति इत्य-भिप्रायः ॥**

**तत्तु समन्वयात्। तत् ब्रह्म सर्वज्ञत्वादिगुणकं वेदान्त-शास्त्रात् प्रतीयत इति प्रतिजानीते। हेतुं चाचष्टे—समन्वयादिति। तत्र तात्पर्येण वेदान्तवाक्यानां समन्वयादित्यर्थः । सम्यगन्वयः समन्वयः। अथ केयं सम्यक्ता अन्वयस्य ? । पदानां परस्परा-**

---

प्रकरणादपि व्युत्थितानां स्वार्थमात्रपर्यवसितानां नोपासनासम्बन्धः, नापि तेषूपासना कल्पयितुं शक्या कल्पकाभावादित्यत्राह—**एवं चेति**। (पूर्व)-[तेषा]मर्थवत्त्वेऽपि कथं फलवत्तेत्यत्राह—**फलं चेति** ॥

राद्धान्तसूत्रमवतार्य योजयन्नाह—**तदित्यादिना**। 'उपक्रमोपसंहा-रावभ्यासोऽपूर्वता फलमर्थवादोपपत्ती चे'ति लिङ्गैर्गम्यते तात्पर्यं तदर्थप्रमिति-शेषत्वाख्यः शब्दधर्मः। तेन कारणेन वेदान्तानां ब्रह्मणि पर्यवसितत्वादिति हेत्वर्थः ॥ सम्यक्शब्दस्यान्वयादधिकार्थाभावात् सूत्रे संपदमयुक्तमिति चोदयति—**अथ केयमिति**। अन्योन्याविशिष्टार्थतया एकरसे वस्तुनि पर्यवसानं सम्यक्त्वम्, अन्वयस्त्वन्योन्यविशिष्टार्थानां संसर्गे विशिष्टे वा पर्यवसानम्, अतोऽधिकार्थतेति परिहरति—**पदानामिति**। **पदानाम(नुगमः)** **[न्वयः]सम्यक्केति** सम्बन्धः ॥

तत्र क्रियाकारकसंसर्गविषयतया पदानां अन्वयं व्यावर्तयति—**पर-स्परानवच्छिन्नार्थानामिति**। उद्भिदादिशब्दस्य यजतिसामानाधिकरण्येन

---

समर्पणे सामर्थ्यहीनाः, अतः उपासनाविधीनां वैयर्थ्यं प्राप्तमित्याशङ्क्याह—**फलं चेति** ॥

तच्छब्दस्य आद्याधिकरणार्थपरामर्शकत्वमाह—**ब्रह्मेति**। द्वितीयाधिकरणार्थपरामर्शकत्वं चाह—**सर्वज्ञत्वादीति**। तृतीयाधिकारणार्थपरामर्शकत्वं चाह—**वेदान्तशास्त्रादिति**। योग्यानामन्वयोऽस्ति, अयोग्यानामन्वय एव नास्ति, तत्र कुतोऽन्वयस्य सम्यक्त्वमित्याक्षिपति—**अथ केयमिति**। गवानयननीलोत्पलवाक्याभ्यां व्यावृत्तिमाह—**परस्परेति**। उद्भि-

**नवच्छिन्नार्थानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः सोऽयमित्यादिवाक्यस्थपदानामिव । प्रकृष्टप्रकाशशब्दयोरिव चन्द्रपदाभिधेयार्थकथनेन । तथा च व्यक्तिविशेषः कश्चित् चन्द्रप्रातिपदिकाभिधेयः केनचित् पृष्टः 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्रो नाम' इति। तस्य प्रतिवचनम्—प्रकृष्टप्रकाशश्चन्द्र इति।**

उद्भिद्यागमात्रवर्तिनोरुद्भिद्यागशब्दयोरन्योन्यानवच्छिन्नार्थत्वेऽपि नियोगाकाङ्क्षास्ति तथेहापि स्यादिति ; नेत्याह—**अनन्याकाङ्क्षाणामिति** । एवं शब्दानां क्रियावाक्येभ्यो वैलक्षण्यमुक्त्वा अर्थवैलक्षण्यं वदन् क्रियाकारकसंसर्गेभ्यो वैलक्षण्यमाह—**अव्यतिरिक्तेति**। अथ नीलोत्पलवत् भेदाभेदविषयतयापि अभिधेयाव्यतिरेक इति, नेत्याह—**एकरसेति**। उद्भिद्यागशब्दयोः यागविशेषैकरसार्थवर्तिनोरप्यर्थस्य नियोगाकाङ्क्षावत् इहापि स्यादित्यत्राह—**प्रातिपदिकार्थेति**। तथाप्यर्थस्य लिङ्गसङ्ख्यावैशिष्ट्यात् विशिष्टार्थवर्तितेत्यत्राह—**मात्रेति** । अनेकेषां पदानामेकरसवृत्तिता न दृष्टेत्याशङ्क्य, दृष्टा लक्षणादिद्वारेणेति दृष्टान्तपदं महावाक्यस्यैकरसवृत्तित्वे तावदाह—**सोऽयमिति** । कोऽयं देवदत्त इति देवदत्तस्वरूपमात्रं पृच्छन्तं प्रति प्रत्यभिज्ञयैवावगतदेवदत्तैक्याख्यस्वरूपमात्रप्रतिपादनाय प्रयुक्तत्वात् पदत्रयं देवदत्तैक्यमात्रपर्यवसितमित्यर्थः ॥

अवान्तरवाक्यस्यैकरसवृत्तित्वे दृष्टान्तमाह—**प्रकृष्टेति**। 'कश्चन्द्र' इति चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरत्वेन प्रयुक्तत्वात् प्रकृष्टप्रकाशशब्दौ चन्द्रैकरसे पर्यवसिताविव्यर्थः । एतद्व्यनक्ति—**तथा चेति**। यथा अवान्तरवाक्यस्यैकरसे प्रवृत्तिः तथा दृष्टान्तोऽस्तीत्यर्थः । कोऽसवित्याकाङ्क्षायां **प्रकृष्टप्रकाशश्चन्द्र** इतीत्यन्वयः । कथं प्रकृष्टादिपदस्यैकरसवृत्तितेत्यत्राह—**चन्द्रप्रातिपदिकेति** ।

दादिवाक्याद्यावृत्तिमाह—**अनन्याकाङ्क्षाणामिति** । क्रियाकारकभावेनान्वयं व्यावर्तयति—**अव्यतिरिक्तेति** । गुणगुण्यादिभावेनान्वयं व्यावर्तयति—**एकरसेति**। उद्भिद्यागपदार्थवदन्वयं व्यावर्तयति—**प्रातिपदिकेति**। लिङ्गाद्यर्थोऽपि न प्रमेयमनुप्रविशतीत्याह—**मात्रेति** ॥

तत् एवं प्रतिवचनं भवति—यदि यथा चन्द्रपदेनोक्तं तथा आभ्यामपि पदाभ्यामुच्येत। एवं च सति नीलोत्पलवदयुतसिद्धपरस्परावच्छिन्नविशेषणविशेष्यभावेनाप्यन्वयो दुर्लभः। कुतः पृथक्सिद्धक्रियाकारकलक्षणः सम्बन्धः। तथाविधान्युदाहरति—सदेव सोम्येदमग्र इत्यादीनि ॥

ननु जन्मादिसूत्रोदाहरणेष्वेव प्रामाण्यं दर्शनीयम्, किमुदाहरणान्तरेण?। बाढम्। अस्त्यत्राभिप्रायो भाष्यकारस्य। तत्र ब्रह्मणो लक्षणं वक्तव्यमिति तटस्थस्यैव ब्रह्मणो निरूपकाणि वाक्यान्युदाहृतानि। इह तु 'तत्त्वमसि' इति जीवस्य ब्रह्मात्मतावगतिपर्यन्तानि वेदान्तवाक्यानि न तटस्थमेव जगत्कारणं प्रति-

---

नन्वेतत्प्रतिवचनं विशिष्टार्थवृत्तित्वेऽपि घटते इत्यत्राह—**तदेवमिति**। स्वरूपे पृष्टे तस्य प्रकृष्टत्वादिगुणवदिति प्रश्नाननुगुणं प्रतिवचनं स्यादित्यर्थः। गुणगुण्यन्वयः क्रियाकारकान्वयो वा किं न स्याद्वेदान्तानाम्? किमित्यखण्डवृत्तिता? इत्यत्राह—**एवं चेति**। 'एकमेवाद्वितीयम्' 'एकधैवानुद्रष्टव्यम्' 'नेह नानास्ति किञ्चन' 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्यादिप्रतिषेधात् अखण्डार्थवृत्तित्वे स्वीकार्ये सतीत्यर्थः। यद्यखण्डार्थवृत्तिता विवक्ष्यते तर्ह्यसौ प्रतिपाद्या भाष्यकारैरित्यत्राह—**तथाविधानीति**। यद्यपि सा न प्रतिपाद्यते, तथापि सा विवक्षिता, अतः तथाविधानि वाक्यान्युदाहरति भाष्यकारः, अन्यथा तन्न स्यादित्यर्थः ॥

जगज्जन्मादिकारणे ब्रह्मणि प्रमाणं जन्मादिसूत्रोदाहरणम्, अतः तस्यैव प्रामाण्यं साध्यम्, अतः उदाहरणान्तरोक्तिः तत्प्रामाण्योक्तिश्च व्यर्थेति शङ्कते—**ननु जन्मेति**। ब्रह्मणो लक्षणं वक्तव्यमित्यभिप्रायेण मायया तटस्थस्य ब्रह्मणो निरूपकाणि वाक्यानि तत्रोदाहृतानि, इह तु परमार्थत एकरसत्वाद्ब्रह्मणः तत्प्रतिपादकानि वाक्यानि इत्यभिप्रायेण एतान्युदाहृतानीत्युदाहरणान्तरोक्तिः तस्यैव प्रामाण्योक्तिश्च युक्तेत्यपवदति—**बाढमस्तीति** ॥

पाद्य पर्यवस्यन्तीत्यतस्तथाभूतान्येव वाक्यान्युदाहृतानि 'सदेव सौम्येदमग्र आसीत्' इत्येवमादीनि। यत् पुनः सिद्धे वस्तुनि प्रत्यक्षादिसम्भवात् तदभावे मिथ्यात्वाशङ्कायामप्रामाण्यमिति। तत् रूपाद्यभावान्नेन्द्रियगोचर इति प्रत्युक्तम्॥

ननु इन्द्रियागोचरत्वादेव प्रत्यक्षाद्यविषयत्वान्न शब्दमात्रस्य तत्र प्रामाण्यमित्युक्तम्। उच्यते—यद्यपि शब्दमात्रस्य प्रत्यक्षादिविषय एव प्रयोगो दृष्टः। व्युत्पत्त्या तु कथं व्युत्पद्यते इति वाच्यम्। श्रोतृव्यवहारो हि मूलं बालानां व्युत्पत्तेः। स च श्रोतुर्ज्ञानान्तरानिमित्ततापरिशुद्धः शब्दसामर्थ्यावगमहेतुः। अतो न प्रतिपत्तुर्ज्ञानान्तरासिद्धार्थावबोधकत्वं सामर्थ्यावगमकाले अवगतम्। तेनानवगम्यैव तद्विषयं ज्ञानं सामर्थ्यावगमः। यथावगमं च विज्ञानोत्पत्तिः॥

यत्पुनरिति वृत्तकीर्तनम्। दूषयति—तद्रूपादीति। प्रत्यक्षाद्यसम्भवकथनेन प्रत्युक्तमित्यर्थः। अत्र चोदयति—नन्विन्द्रियेति। तर्हि मानान्तरागोचरे कार्येऽपि शब्दप्रामाण्यं न स्यादित्यत्राह—मात्रस्येति। विधिपदरहितपदकदम्बस्य लोके गृहीतसम्बन्धत्वेन प्रत्यक्षादिविषय एव प्रयोगस्य दृष्टत्वादित्यर्थः॥

तस्य प्रत्यक्षादिविषय एव प्रयोगस्य दृष्टत्वेऽपि व्युत्पत्तिकाले शब्दस्य मानान्तरसिद्धार्थ(बोधकत्वस्य)ज्ञाने सामर्थ्याग्रहणान्न मानान्तरसिद्धार्थबोधकतेति दूषयति—उच्यत इति। इमं परिहारं व्यक्तीकर्तुमुक्तहेतुमङ्गीकुर्वन् व्युत्पत्तिविषयो विमृश्य इत्याह—यद्यपीति। तं विषयं वक्तुं व्युत्पत्तिहेतुमाह—श्रोतृव्यवहार इति। स च व्यवहारः शब्दज्ञानात् ज्ञानान्तरानिमित्ततया परिशुद्धः शब्दशक्त्यवगमहेतुरित्याह—स चेति। तस्मादज्ञात्वैव प्रत्यक्षादिजन्यं शब्दशक्तिप्रतियोगिकार्थविषयं ज्ञानं शक्तिग्रहः, अतो न मानान्तरगृहीतार्थबोधने शक्तिग्रह इत्यर्थः। ततः किमित्यत्राह—यथेति। यथासङ्गतिग्रहं शब्दात् ज्ञानोत्पत्तिः, अतो [न] मानान्तरसिद्धबोधकत्वं शब्द-

यदा पुनर्व्युत्पन्नः स स्वयं प्रयुयुक्षते परप्रतिपत्तये तदा ज्ञानान्तरसन्निधापितं स्वसाक्षिकं विवक्षन् सामर्थ्यावगमकालेऽपि तयोः सत्तां प्रतिपद्यते केवलम् । न ज्ञानोत्पत्तौ तयोरुपयोगम् । तस्मान्न शब्दस्य प्रमाणान्तरगृहीतार्थप्रकाशने सामर्थ्यं व्युत्पत्तिकाले अवगतम् । किन्तु चक्षुरादिवदन्यनिरपेक्षो यथावगतसामर्थ्यं च शब्दो विज्ञानं जनयति । तस्मान्न प्रमेयस्य प्रत्यक्षादिविषयत्वं शब्दस्य विज्ञानजनन उपयुज्यते ॥

अपि च—अपौरुषेये शब्दे चक्षुषीव विज्ञानोत्पत्तावनपेक्षे कथमप्रामाण्यमाशङ्क्येत ॥

ननूक्तमाशङ्काकारणं स्पार्शनगोचरचित्रनिम्नोन्नतविषयस्य

---

स्येत्यर्थः । तथापि स्वयं व्युत्पन्नः स मानान्तरगृहीतेऽर्थे शब्दं प्रयुञ्जानः पूर्वमुत्तमवृद्धस्यापि तत्रैव शब्दप्रयोगः अतो मानान्तरगृहीतार्थबोधने शब्दशक्तिरिति पश्चात् कल्पयतीत्यत्राह—**यदा पुनरिति** । गृहीतसम्बन्धोऽपि सन् मानान्तरेणार्थमुपलभ्य विवक्षित्वा परस्मै शब्दं प्रयुञ्जान आत्मानं पश्य(तःतस्य) [ति] आत्मदृष्टान्तेन पूर्वमपि मध्यमवृद्धेभ्यः शब्दं प्रयुञ्जानाः मानान्तरेण अर्थमुपलभ्य विवक्षित्वा प्रयुञ्जत इत्यनुमिमीते इत्यर्थः ॥

तथापि शब्दशक्तिविषयतयैव प्रमाणान्तरं अनुमिमीते इत्यत्राह—**केवलमिति । तयोः**—विवक्षामानान्तरयोः मध्ये यथा विवक्षायाः स्वात्मनि शब्दप्रयोगनिमित्ततां पश्यति तथा मानान्तरस्यापि स्वात्मनि निमित्ततां पश्यन् अन्यत्रापि तथैवानुमिमीते इत्यर्थः । सङ्गतिग्रहप्रकारं शब्दस्यार्थबोधनप्रकारं च क्रमेण निगमयति—**तस्मान्न शब्दस्येत्यादिना** । वेदान्तस्यापौरुषेयत्वेन अनपेक्षत्वाच्च मानान्तरसंवादविसंवादाभ्यां न किञ्चिद्धीयत इत्याह—**किञ्चेति**। [**अपि चेति** ।] अत्र पूर्वपक्षी स्वोक्तं स्मारयति—**ननूक्तमाशङ्केति** । किमत्र विसंवादाद्विपर्यस्तबोधकत्वमप्रामाण्यमुच्यते ? किं वा संवादलक्षणं प्रामाण्यं

---

**तस्मान्न प्रमेयस्येति** । प्रत्यक्षादिप्रमाणं शब्दप्रमेयविशेषणत्वेन प्रमेयं सत् शब्दाद्विज्ञानजनने नोपयुज्यत इत्यर्थः । प्रमेयस्य कर्मकारकतया स्वविषयज्ञानजनकत्वगमक-

**चाक्षुषस्य प्रत्ययस्य तत्संवादाभावादप्रमाणत्वम् । न तत् साधूक्तम् । अदुष्टकरणत्वादस्य । तस्य च तदभावात् । तथा हि —शब्दस्तावदपौरुषेयत्वाददुष्टः । प्रमेयस्य पुनर्ज्ञानहेतुत्वे न प्रमाणमस्ति । शब्दस्यैव तदेकनिष्ठत्वेन तन्नियमात् । चित्रस्य तु चाक्षुषज्ञाने सामग्र्यन्तःपातिनः श्यामादिरेखासन्निवेशविशेषो दोषः । तदभावे तिमिराभाव इव सम्यग्दर्शनोत्पत्तेः । अतः प्रवर्तमानमपि प्रमाणं संवादकमेवेति नाप्रामाण्यमावहति । न च संवादलक्षणं प्रामाण्यं अपि तु बोधलक्षणमिति प्रमाणविदां**

तदभावे न सिध्यतीति ? । नाद्यः, स्पर्शगोचरचित्रनिम्नोन्नतज्ञानस्य चाक्षुषानपेक्षत्वेऽपि दुष्टकारणजत्वादप्रामाण्यम् , ब्रह्मज्ञानस्य तु अदुष्टकारणजत्वात् विसंवादेऽपि प्रामाण्यं युक्तमिति दूषयति—**न तत् साध्विति** ॥

कथं ब्रह्मज्ञानस्यादुष्टकारणतेत्यत्राह—**तथा हीति** । ज्ञेयस्यापि ज्ञानकारणत्वात्तद्दोषेण दुष्टकारणतेत्यत्राह—**प्रमेयस्येति** । अतीतादेरपि शब्दप्रमेयत्वदर्शनादिति हेतुः । ज्ञेयस्य ज्ञानहेतुत्वाभावे यदर्थजं यत् ज्ञानं तत्तद्विषयमिति नियमासंभवाच्छाब्दज्ञानानां कथमर्थासाङ्कर्यं स्यादित्यत्राह–**शब्दस्यैवेति** । यत्परश्शब्दस्स शब्दार्थ इति नियमादित्यर्थः । तर्हि कथं चाक्षुषस्य चित्रनिम्नोन्नतज्ञानस्य दोषजत्वमित्यत्राह—**चित्रस्येति** । अत्रान्वयव्यतिरेकौ मानमाह—**तदभावे इति** । ब्रह्मज्ञानस्य अदुष्टकारणजत्वे फलितमाह—**अत इति** । ततश्च ब्रह्मणि अदुष्टकारणजमानान्तरं चेत् स्यात् तर्हि तत्संवाद्येव स्यान्न विसंवादि, विसंवादि तु अहं कर्तेत्यादि प्रत्यक्षं मिथ्याकर्तृत्वादिविषयं दुष्टकारणजत्वाद्बाध्यमेव ब्रह्मज्ञानेनेत्यर्थः । द्वितीयं प्रत्याह—**न च संवादेति** । संवादलक्षणत्वे संवादस्यापि तदपेक्षया अनवस्थापातादित्यर्थः । बोधलक्षणत्वे

भूतमापरोक्ष्यं नास्ति, अतो गमकाभावात् गम्यं नास्ति इत्याह—**प्रमेयस्येति** । असम्भावितसकलदोषनिरपेक्षप्रमाणत्वात् वेदान्तवाक्यस्य प्रमेये प्रवर्तमानमपि प्रमाणान्तरं न प्रामाण्योपपादकमित्याह—**अतः प्रवर्तमानमपीति** । प्रत्यक्षादिष्वनवगतार्थावगन्तृत्वं प्रामाण्यत्वेन स्वीकृतम् , अतः प्रामाण्यैकरूप्यसिद्ध्यर्थं शब्देऽपीदमेव प्रामाण्यं तेन

स्थितिः । अतो यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यं एवं स्वरूपवाक्यानामपि । अनवगतार्थपरिच्छेदसामान्यात् ॥

ननु विधिवाक्यानामेव प्रामाण्यं युक्तं क्रियार्थत्वादाम्नायस्य । न—इतरेतराश्रयत्वात् । विधिवाक्यानामेव हि प्रामाण्ये सिद्धे क्रियार्थत्वमाम्नायस्य सिध्येत् क्रियार्थत्वे च सिद्धे तेषामेव प्रामाण्यमितीतरेतराश्रयत्वं स्यात् । न ह्येकमप्यन्यतः सिद्धम् । अतो यदवगमयत्याम्नायस्तदर्थः सः । तस्माद्यथा कार्यमवगमयंस्तदर्थः एवमैकात्म्यमप्यवगमयंस्तदर्थो भवितुमर्हति । प्रतीतिकृतत्वात् प्रामाण्यस्य । प्रतीतिस्तु कार्यैकात्म्ययोस्तुल्या । प्रत्यक्षादिष्वप्येतदेव प्रमाणवृत्तं यदनवगतमवगम्यते ॥

---

फलमाह—अतो यथेति ॥

अत्रैव पूर्वपक्षी स्वोक्तं सारयति—ननु विधीति । दूषयति—नेतरेतराश्रयत्वादिति । एतद्व्यनक्ति—विधिवाक्यानामिति । विधिवाक्यस्यैव प्रामाण्यमिति सिद्धे अन्येषाममानत्वात् मानस्य च क्रियैवार्थ इति आम्नायस्य क्रियार्थत्वं सिध्येत् । सिद्धे तस्मिन् अक्रियार्थानां अमानत्वात् क्रियार्थविधिवाक्यमेव मानमिति सिध्यतीत्यर्थः । आम्नायस्य क्रियार्थत्वमाप्तवाक्यसिद्धमिति चेत्, न—तस्यैवामूलत्वादित्याह—न ह्येकमिति । आम्नायस्य क्रियार्थत्वनियमासम्भवे फलमाह—अतो यदिति । कार्यार्थत्वनियमाभावे फलमाह—तस्मादिति । तर्हि अध्यक्षादेः संवादलक्षणं प्रामाण्यं आगमस्यानधिगतगन्तृत्वमिति वैरूप्यं स्यादित्यत्राह—प्रत्यक्षादिष्वपीति । तत्रापि संवादानवस्थायाः तुल्यत्वादित्यर्थः । पूर्वपक्षी उक्तमपुमर्थत्वलक्षणाप्रामाण्यं सोपस्कारं सारयतीत्याह—आह–युक्तमिति* । अथवा प्रवर्तनालक्षणं प्रामाण्यं न बोधलक्षणमित्यत्राह—प्रत्यक्षादिष्वपीति । द्विविधमेव मानलक्षणं प्रत्यक्षादौ

---

कार्यवादिनाप्यङ्गीकर्तव्यमित्याह—प्रत्यक्षादिष्विति ॥

* एतत्प्रतीको ग्रन्थः ३२९ पृष्ठे द्रष्टव्यः ॥

आह—युक्तं प्रत्यक्षादीनां तावत् प्रामाण्यम्, अपेक्षान्तराभावात्। आम्नायस्य त्वध्ययनविधिनोपादापितस्य न पुनः पुरुषार्थमप्राप्य पर्यवसानं लभ्यते। विधानानर्थक्यप्रसङ्गात्। तस्मादैकात्म्यवाक्यानां स्वार्थमात्रनिष्ठता न युक्ता। उच्यते—पुरुषो ह्येतावदपेक्षते इष्टं मे स्यादनिष्टं मे मा भूदिति। न त्वित्थमन्यथा वेति। न चास्य स्वयमीष्टे। द्विविधं चेष्टं प्रेप्सति। किंचित् प्राप्यं यथा ग्रामादि। किञ्चित्प्राप्तमपि भ्रान्त्या। यथा हस्तगतमेव विस्मृतसुवर्णादि। अनिष्टमपि द्विविधं परिजिहीर्षति। किञ्चित् परिहार्यं यथा गर्तादि। किञ्चित् परिहृतमपि भ्रान्त्या।

---

वस्तुमात्रबोधः शब्दे तु प्रवर्तनेति कल्प्यते, श्रोतुः पुरुषार्थमुद्दिश्य प्रवृत्तत्वेन शब्दस्य प्रवृत्तिनिवृत्तिफलपर्यन्तव्यापारात्, प्रत्यक्षादेश्च तदभावात, अतः प्रवृत्तिनिवृत्तिशून्ये भूतेऽर्थे न शब्दप्रामाण्यमिति शङ्कते—आह **युक्तमिति**। श्रोतुः पुरुषार्थमुद्दिश्य प्रयोगात् पुंवाक्यस्य प्रवृत्त्यादिफलपर्यन्तत्वापेक्षा अस्तु, नैवाम्नायस्यापौरुषेयस्य, उद्दिश्य प्रयोक्तुरभावादित्यत्राह—**आम्नायस्य त्विति**। अध्ययनविधेरानर्थक्यापातात् तत्त्यागार्थं विध्यायत्तपुमर्थपर्यवसानाय विधिपरत्वमेष्टव्यमित्यर्थः ॥

स्वरूपमात्रनिष्ठत्वेऽपि पुमर्थावसानसिद्धेर्न विधिसम्बन्धापेक्षेति दूषयति—**उच्यत इति**। प्रवृत्तिनिवृत्तिसाध्यं पुरुषार्थः अतः कथं स्वरूपमात्रनिष्ठानां पुरुषार्थावसानमित्यत्राह—**पुरुषो हीति**। प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारयोः सतोः प्रवृत्त्यादिसाध्यत्वाभावापराधेनापुमर्थत्वादर्शनान्नेत्यर्थः। साध्यासाध्यावपि पुरुषार्थौ पुरुषः साध्यावेव करोति। अतो नासाध्यः पुमर्थोऽस्तीत्यत्राह—**न चास्येति**। सर्वः साध्य एव पुमर्थः प्रेप्सागोचरः स्यात्, अन्यथा तत्र स्यादित्यत्राह—**द्विविधं चेति**। द्विविधे हि पुमर्थे साध्यस्व-

---

**प्राप्तमपीति**। **भ्रान्त्या** अप्राप्तं मन्वानः **प्रेप्सती**त्यन्वयः। **परिहृतमपीति**। **भ्रान्त्या** अपरिहृतं मन्वानः **परिजिहीर्षती**त्यन्वयः ॥

॥ इति पञ्चपादिकाव्याख्यायां तात्पर्यार्थद्योतन्यां अष्टमं वर्णकं समाप्तम् ॥

यथा रज्ज्वादि सर्पादिबुद्धिगृहीतम् । तत्र प्राप्यपरिहार्ययोः साधनज्ञानायत्तत्वात् पुरुषार्थस्य विधिप्रतिषेधावर्थवन्तौ। इतरयोः तावत् [तु] भ्रान्तिमात्रव्यवहितत्वान्न तदपनयादन्यत् पुरुषार्थत्वेन अपेक्षते । तदपनयश्च तत्त्वज्ञानाद्भवति । नान्यथा । एवमपि लभ्यमानं पुरुषार्थमनुमन्यते एव पुरुषः सुतरां चाभिनन्दति । साधनायत्तो ह्यायासाल्लभ्येत । ज्ञानायत्ते त्वायासोऽपि परिह्रियते। तेनानेकानर्थकलुषितमिवात्मानं मन्यमानस्य भ्रान्तस्य सर्वानर्थशून्यात्मतत्त्वप्रतिपादनादेव पुरुषार्थसिद्धेरैकात्म्य-वाक्यानां स्वार्थमात्रनिष्ठत्वेऽपि न विध्यानर्थक्यप्रसङ्गः । तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणत्वम् ॥

॥ इति पञ्चपादिकायामष्टमं वर्णकं समाप्तम् ॥

---

भावता न व्यावर्तते इत्याशङ्क्य, नेति दर्शयति—**तत्र प्राप्येति** । तथापि ज्ञानमात्रसाध्यः पुमर्थो न लभ्यते इत्यत्राह—**इतरयोस्त्विति** ॥

हस्तगतविस्मृतहेमादिप्राप्तिं आरोपितसर्पादेर्निवृत्तिञ्च तत्त्वज्ञानात् पुरुषार्थतया नानुमन्यते क्रियासाध्यस्यैव पुमर्थत्वप्रसिद्धेरित्यत्राह—**एवमपीति** । प्रसिद्धेः स्वानुभवबाधादित्यर्थः। क्रियासाध्यात् ज्ञानप्राप्तस्यातिशयेन पुमर्थता-माह—**सुतरां चेति** । कुत इत्यत्राह—**साधनेति** । स्वरूपनिष्ठे हि ब्रह्म-वाक्ये न क्रियासाध्यो नापि ज्ञानलभ्यः पुमर्थ इति कथं नाध्ययनविध्यानर्थक्य-मित्यत्राह—**तेनेति** । अत्र सिद्धनिष्ठस्यापि वाक्यस्य पुमर्थपर्यवसायितया अनधिगतबोधकत्वेन प्रामाण्यकथनाय प्रवर्तनालक्षणं शब्दप्रामाण्यमिति प्रवर्तकवाक्यस्यैवाज्ञातार्थगन्तृत्वं न शब्दमात्रस्येति च अर्थादपास्तमेवेति मत्वा, ब्रह्मणि वेदान्ताः प्रमाणमिति सिद्धं निगमयति—**तस्मादिति** ॥

॥ इति पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां अष्टमं वर्णकं समाप्तम् ॥

## ॥ अथ नवमं वर्णकम् ॥

अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रेण प्रमीयते ब्रह्म, तथापि विधिसंस्पर्शिना । न तद्रहितेन । कस्मादेवम्? । अन्यथा शब्दप्रयोगानुपपत्तेः । पुरुषेच्छासमुत्थापितो हि शब्दप्रयोगः। सा चेष्टानिष्टप्राप्तिपरिहारविषया । न च पारम्पर्येणापि सुखदुःखे विहायेष्टानिष्टे सम्भवतः । न च विस्मृतसुवर्णारोपितसर्परशनाप्रतिपत्ताविव तदनन्तरं शास्त्रादपि ब्रह्मात्मप्रतिपत्तौ सुखावाप्तिर्दुःखपरिहारश्च दृश्यते । पूर्ववदेव संसारित्वोपलब्धेः । [शाब्द]प्रतीत्युत्तरकालं च ध्यानोपदेशात् ॥

योग्येतरान्विते शब्दशक्तिमुपेत्य विधिपरत्वेनैव वेदान्तानां फलपर्यन्तं प्रामाण्यं वाच्यमिति या शङ्का सापास्ता। सम्प्रति कार्यान्विते शक्तिं मन्वानाः कार्यपरतयैव सिद्धे प्रामाण्यं न स्वत इति प्रत्यवतिष्ठन्ते इत्याह—**अत्रापर इति** । लौकिकवचसां भूतेऽप्यर्थे प्रयोगप्रत्यययोर्दर्शनात् तदनुसारेणान्योन्यान्विते शक्ति-(कल्पना)ग्रहात् कुतो विधिसम्बन्ध इत्याक्षिपति—**कस्मादेवमिति** । समाधत्ते—**अन्यथेति** । श्रोतुः साध्यमेव प्रयोजनमुद्दिश्य प्रवृत्तिं विवक्षित्वा प्रवर्तकज्ञानाय प्रयोक्ता [शब्दं प्रयुङ्क्ते] स न स्यात् पूर्वं कार्यान्विते शक्तिग्रहाभावे, अतः कार्यान्विते सर्वपदानां शक्तिग्रहात् कार्यसम्बन्धं विना न भूतेऽप्यर्थे वेदप्रामाण्यमित्यर्थः । किञ्च, नियोगसामर्थ्याधीनप्रवृत्तिनिवृत्तिसाध्यप्रयोजनं विना वाक्यप्रयोगायोगात् नियोगपर्यवसितं वाक्यमित्याह—**पुरुषेच्छेति** ॥

नानर्थनिवृत्तिः ब्रह्मप्राप्तिश्च कालान्तरभावि नैयोगिकं फलम् , किन्तु हस्तस्थविस्मृतहेमादिप्राप्तिवत् अन्वयव्यतिरेकसिद्धं सम्यग्ज्ञानफलम्, अतो न नियोगाधीनमित्यत्राह—**न च विस्मृतेति** । ब्रह्मज्ञानं स्वविषयारोपितप्रपञ्चभ्रमं निवर्तयदेवोत्पद्यते तदधिष्ठानयाथात्म्यधीत्वात् रज्जुतत्त्वधीवत् इति चेत्, न–प्रत्यक्षविरोधादित्याह—**पूर्ववदिति** । ब्रह्मणि शाब्दज्ञानोत्तरकालं मननादिविधानाच्च नानन्तरमेव फलावाप्तिरित्याह—**प्रतीत्युत्तरकालं चेति** । लोके भूतार्थनिष्ठतया फलपर्यन्तानि रज्जुरियं नाहिरित्यादीनि दृश्यन्ते, तद्वदिहापि

**शाब्दप्रतीत्युत्तरकालमिति** । श्रोतव्य इति शाब्दप्रतीत्युत्तरकालं शाब्दज्ञानवतो

तस्मात् सन्तु नाम लोके विधिरहितान्यपि पुरुषार्थपर्यन्तानि वाक्यानि। वेदे तु न तद्रहितानां तत्पर्यन्तता। तस्माद्यद्यपि जिज्ञास्यवैलक्षण्यं धर्मब्रह्मजिज्ञासयोः सिद्धसाध्यविषयत्वेन, तथापि 'सोऽन्वेष्टव्यः' 'स विजिज्ञासितव्यः' इत्यादिविधिषु कोऽसावात्मेत्याकाङ्क्षायां सर्व एव ब्रह्मस्वरूपपरः पदसमन्वयस्तत्समर्पकत्वेनोपयुक्तः। न स्वतन्त्रमेव ब्रह्म प्रतिपादयितुमलम्। अतो विधीयमानज्ञानकर्मकारकत्वेनैव ब्रह्म प्रतिपाद्यते इति॥

यः पुनः 'तस्मात् प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्म अभ्युपगन्तव्य'मिति भाष्ये पूर्वपक्षोपसंहारः तत्र प्रतिपत्तिशब्दः सर्व एव मनोव्यापारः प्रमाणात्मक इतरो वा ब्रह्मसंस्पर्शित्वेन विधेयः कैश्चित् कथंचित् कल्पितः तस्य सर्वस्य सङ्ग्रहार्थो द्रष्टव्यः॥

---

स्यादित्यत्राह—**तस्मादिति**। धर्मजिज्ञासा ब्रह्मजिज्ञासेति सिद्धसाध्यभेदेन जिज्ञास्यवैलक्षण्यं वदता ब्रह्मजिज्ञासाकरणेन वेदान्तेन प्रतिपाद्यं ब्रह्मेति सूचितम्, तद्विरुद्धा प्रतिपत्तिविध्यादेः वेदान्तवेद्यत्वोक्तिरित्यत्राह—**तस्माद्यपीति**। तथापि प्रतिपत्त्यादिविधिशेषतयैव ब्रह्म प्रतिपाद्यम्, न स्वतन्त्रम्, अन्यथा फलपर्यन्तत्वायोगादित्यर्थः॥

फलाकाङ्क्षित्वेऽपि ब्रह्मप्रतिपादनपराणां कथं प्रतिपत्तिविधिशेषतया अन्वयः? तेषूपयोगाभावादित्यत्राह—**सोऽन्वेष्टव्य इति**। अथोपसंहारभाष्ये प्रतिपत्तिपदेन किं प्रमाणज्ञानं ब्रूषे? उपासनं वा?। आद्ये ह्युपासनप्रकरणस्थवाक्यानां विधिशेषता न स्यात्, अन्त्ये तु ज्ञानविधिप्रकरणस्थानां सा न स्यादित्यत्राह–**यः पुनः तस्मादिति**। कथं ज्ञानस्येच्छा[न]धीनस्य विधेयता? कथं वा आरोपितत्वेनाप्युपपन्नोपासनविधाने ब्रह्मसिद्धिः? इत्यत्राह–**कथञ्चिदिति**।

---

निदिध्यासितव्य इति ध्यानोपदेशादित्यर्थः। शाब्दज्ञानस्य विधेयत्वं कैश्चित् कल्पितम्, कैश्चित् तदभ्यासस्य, कैश्चिच्छाब्दज्ञानविलक्षणतृतीयज्ञानस्य, अन्यैः सम्पदादिरूपध्यानस्य, विधेयत्वं कल्पितम्, तस्य सर्वस्य सङ्ग्रहार्थमुपलक्षणार्थो भाष्ये **प्रतिपत्तिशब्द** इत्याह–**तस्य सर्व**-

अत्रोच्यते—किमिदं ज्ञानं ब्रह्मकर्मकं विधीयते ?। न तावच्छब्दजन्यम्। स्वाध्यायपाठादेव तत्सिद्धेः। अथ शब्दजन्यस्यैव ज्ञानस्याभ्यासो विधीयते इति। न तस्य प्रयोजनं पश्यामः। ननु इष्टविषयस्य ज्ञानसन्तानस्य सुखसन्तानहेतुत्वं दृश्यते। यद्येवं तद्वदेव विध्यानर्थक्यम्। अथ पुनः साक्षात्करणाय ज्ञानसन्तानविधिरुच्यते, नैतद्युक्तम्—न हि दृष्टाधिकारो विधिरसम्भावितदृष्टफलो भवति। न हि लैङ्गिकोऽर्थो

ज्ञानपक्षे तत्प्रामाण्याय विधिरेष्टव्यः, उपासनपक्षे विषयवास्तवत्वस्य औत्सगिकत्वात् ब्रह्मसिद्धिरित्यर्थः ॥

नियोगमुखेन ब्रह्मावगतिमिच्छतो नियोगब्रह्मणी न प्रमातुं शक्येते इति तावदाह—अत्रोच्यत इति। तत्र विधेयाभावात्तद्विशिष्टो विधिः प्रमातुं न शक्यत इत्याह—किमिदं ज्ञानमिति। तत्र न तावच्छाब्दं ब्रह्मविषयं ज्ञानं विधातुं शक्यमित्याह—न तावदिति। गृहीतपदपदार्थसम्बन्धस्याधीयमानाद्वाक्यात् ब्रह्मणि विधिवाक्यादिव विध्यर्थे ज्ञानं जायते, तदेव विचारेणापि स्थाप्यते, तत्प्रामाण्यं च ज्ञानसामग्रीमात्रजं न विध्यपेक्षमित्यर्थः। तस्यैव सजातीयस्मृतिसन्तानो विधेय इति शङ्कते—अथेति। तद्विधेः फलं न तावददृष्टम्, मुक्तेः स्वर्गादिवदनित्यत्वापातात्। दृष्टफलत्वेऽपि न किञ्चित्फलं निरूप्यते इत्याह—न तस्येति। मर्दनसुखवत् प्रत्यक्षं सुखमिति शङ्कते—नन्विष्टविषयस्येति। तर्हि अन्वयव्यतिरेकसिद्धसाधनत्वान्नाभ्यासो विधेय इत्याह—यद्येवमिति। तर्हि स्मर्यमाणस्य साक्षात्कारः फलमिति शङ्कते—अथ पुनरिति। साक्षात्कारस्य मानसत्वेन अदृष्टमात्राजन्यस्यादृष्टफलत्वायोगात् दृष्टफलत्वं वाच्यम्, तच्च नेत्याह—नैतद्युक्तमिति। दृष्टफलासम्भवेऽपि यथा स्वर्गाद्यर्थो विधिः तद्वदिहापि स्यात्; इत्यत्राह—न हि दृष्टाधिकार इति। दृष्टफल इत्यर्थः। असम्भावितत्वं दृष्टान्तेनाह—न हि लैङ्गिकोऽर्थ इति। अतः परोक्षज्ञानेभ्यः (ते) वस्तुसाक्षात्कारो न सम्भवतीति शेषः ॥

स्येति। किमिदं ज्ञानमिति। किंकारणकमित्यर्थः ॥

लिङ्गजन्मनैव ज्ञानेन सहस्रशोऽप्यभ्यस्यमानेन साक्षात्क्रियते। मा भूत् शाब्दज्ञानादेवाभ्यस्यमानात् साक्षाद्भावः, तज्जन्मनो ज्ञानान्तराद्भविष्यति। नेत्थंभावे प्रमाणमस्ति। अस्तु तर्हि शब्दात् प्रतिपन्नस्य यथाप्रतिपत्ति ध्यानं नाम मनोव्यापारो विधीयते इति। किमर्थं तस्य विधानम्?। ध्येयसाक्षात्काराय [चेत्]। न तस्य संभवः। न हि परोक्षं ध्यायमानं साक्षाद्भावमापद्यमानं दृष्टम्। ननु दृष्टं परोक्षमपि ध्यायमानं साक्षाद्भावमापन्नं कामाद्युपप्लवे। मैवम्—न तत् ध्यायमानम्। अपि तु अविद्यात्मकम्। अन्यथा बाधो न भवेत्॥

ननु 'द्रष्टव्य' इति दर्शनमनूद्य 'निदिध्यासितव्य' इति

---

शङ्कते—**मा भूच्छाब्देति**। अतः तत् ज्ञानान्तरं फलमस्त्वित्यर्थः। स्मृतिसन्तानात् साक्षात्कारफलं ज्ञानान्तरं भविष्यतीत्यत्र मानं नेत्याह—**नेत्थम्भावे इति**। यदि वस्तुतत्त्वापेक्षस्मरणाभ्यासो न विधेयः तर्हि तदनपेक्षं ध्यानं विधेयमस्तु इति शङ्कते—**अस्तु तर्हीति**। अस्यापि किं अदृष्टं फलम्? दृष्टं वा?। नाद्यः, मुक्तेः स्वर्गादिवदनित्यत्वापातात्। नापि दृष्टम्, ध्यानानन्तरं मुक्तेरदर्शनात्, इत्याक्षिपति—**किमर्थमिति**। तर्हि ध्येयसाक्षात्कारः फलमिति शङ्कते—**ध्येयेति**। सोऽपि नादृष्टम्, मानजन्यत्वात्। दृष्टं फलं चेत्तदपि न, असम्भवात् इत्याह—**न तस्येति**। कथमसम्भव इति चेत् अन्यत्रादृष्टत्वादित्याह—**न हि परोक्षमिति**। कामाद्युपप्लवे सति काम्यस्य नष्टकामिन्यादेः परोक्षस्य ध्यानात् अपरोक्षता दृष्टेति शङ्कते—**ननु दृष्टमिति**। तत् ध्येयतुल्याकारमविद्यया अध्यस्तम्, न ध्येयवस्त्विति दूषयति—**मैवमिति**। ज्ञानस्य स्वतःप्रामाण्यात् वस्त्वेव किं न स्यादित्याशङ्क्य, बाधात् अप्रामाण्यान्नेत्याह—**अन्यथेति**॥

विध्युद्देशबलात् साक्षात्कारफलकं (ज्ञानान्तरं ध्यानफलमस्तीति) [ध्यानमिति] शङ्कते—**ननु द्रष्टव्य इति**। (तदपि ज्ञानान्तरं) [साक्षात्कारः]

ध्यानं दर्शनफलं विधीयते। उक्तमेतत् न दृष्टाधिकारो विधिः असंभावितदृष्टफलो भवतीति। न हि ध्यानं ध्येयसाक्षाद्भावहेतुः क्वचित् दृष्टम्। अथापि भवतु नाम ध्यानात् ध्येयसाक्षाद्भावः। ध्येयस्य तथात्वे किं प्रमाणम्?। शब्दस्तावत् साक्षात्करणोपायोपासनविधाने पर्यवसितः न तत्सद्भावे। सत्यम्, तथापि तत्त्वं सिध्यति वक्ष्यमाणेन देवताविग्रहवत्त्वन्यायेन। विषम उपन्यासः। तत्र हि न तथात्वे साधकं बाधकं वेति प्रतीतिशरणैस्तथा अभ्युपेयते। न तथेह सर्वस्यात्मत्वे। प्रत्यक्षादिविरोधात्। आरोपितरूपेणापि ध्यानोपपत्तेः। पूर्वोक्तेष्वपि ज्ञानविधिपक्षेष्वनयैव दिशा वस्तुतथात्वसिद्धिर्निराकार्या॥

यत् पुनः कैश्चिदुच्यते—शाब्दज्ञानादन्यदेव ज्ञानान्तर-

---

नादृष्टतया विधिफलं मानजन्यत्वादनुभवस्य। दृष्टफलत्वं चेत्तत्राह—**उक्तमेतदिति**। विधेयसद्भावमुपेत्य ध्यानाख्योपासनाविधिपरत्वे ब्रह्मात्मैक्यं न सिध्यतीत्याह—**अथापीति**। शब्दात्सिध्यतीति; नेत्याह—**शब्दस्तावदिति**। ध्यानविधिवाक्यातिरिक्तावान्तरवाक्यानां ब्रह्मणि समन्वयात् तत्सिध्यतीति शङ्कते—**सत्यं तथापि तत्त्वमिति**। विरोधानुवादयोरभावे अवान्तरवाक्याद्वस्तुसिद्धिः तत्रोक्ता, नेह तथा, विरोधात् इति दूषयति—**विषम इति**। अनेन हेतुना विषयवास्तवत्वस्यौत्सर्गिकत्वात् ब्रह्मसिद्धिरप्यपास्ता। तस्माद्विधिपरत्वे नास्ति वस्तुसिद्धिरिति सर्वविधिभेदेष्वतिदिशति—**पूर्वोक्तेष्वपीति**। स्मृतिसन्तान(ज्ञा)[ध्या]नयोरपास्ते विधौ, तृतीयज्ञाने साक्षात्कारफले विधिमाशङ्कते—**यः पुनरिति**। **ज्ञानान्तरम्**इत्यभ्यासध्याने व्युदस्येते॥

---

**ध्येयस्य तथात्वे इति**। ब्रह्मणः सच्चिदानन्दैकरसत्वे प्रत्यक्त्वे चेत्यर्थः। वेदान्तमहातात्पर्यमुपासनाविधिपरं भवतु, अवान्तरतात्पर्येण तत्त्वं सिध्यतीत्याह—**सत्यमिति**। सकर्मकध्यानक्रियाविधानानुपपत्त्या कर्मभूतब्रह्मसिद्धिः स्यादित्याशङ्क्य, सर्वप्रमाणाविरुद्धप्रकारेणान्यथाप्युपपत्तिमाह—**आरोपितेति**। **शाब्दज्ञानादन्यदिति**। संसर्गविषयात् परोक्षाच्छाब्दज्ञानात् भिन्नमेकरसार्थविषयमपरोक्षमित्यर्थः॥

मलौकिकं वेदान्तेषु कर्तव्यत्वेन विधीयते इति, तत्र वदामः —तत् पुनः किंसाधनं किंकर्म चेति वक्तव्यम् ?। न ह्यनवगत-कर्मकारकं ज्ञानं विधातुं शक्यम्। अवगते च तस्मिन् विधानानर्थक्यम्। साधनमपि न विहितम्। तेन विना साकाङ्क्षं वचनमनर्थकं भवेत्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना वचनेन साधनं वेदानुवचनादि विहित-मेवेति चेत्, प्रमाणान्तरस्य तर्हि प्रमाणं शब्दः नात्मतत्त्वस्य। नैतदुपपद्यते। कार्यगम्यं हि प्रामाण्यं न विधिगम्यम्। तदुक्तम्—'गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात्'

---

तत्र विधेयज्ञानस्य प्रत्यक्षाद्यजन्यत्वात् दर्शपूर्णमासवदलौकिककरणेति-कर्तव्यताविषयविधानैः सह तद्विधेयम्, तन्न दृश्यते इत्याह—**तत्पुनरिति**। ज्ञानविधिर्ज्ञानमपेक्षते न ज्ञेयमित्यत्राह—**न हीति**। ज्ञेये ह्यज्ञाते तदवच्छिन्न-ज्ञानस्याज्ञातत्वादित्यर्थः। तर्हि शब्दावगते ब्रह्मणि तज्ज्ञानं विधीयता-मित्यत्राह—**अवगते चेति**। **किंसाधनमिति** करणेतिकर्तव्यताक्षेपः। तं व्यनक्ति—**साधनमपीति**। वेदानुवचनयज्ञदानतपोऽनशनशमादीतिकर्तव्यताकैः श्रवणमनननिदिध्यासनैः करणैर्मोक्षकामो ब्रह्मण्यपरोक्षफलं ज्ञानं कुर्यादिति विधीयत इत्याशङ्कते—**तमेतमिति**॥

साधनादिसहितं ज्ञानं विधत्ते चेद्वेदः तर्हि तस्मिन् ब्रह्मप्रमाणे प्रमाणं न ब्रह्मणीति स्यादिति दूषयति—**प्रमाणान्तरस्येति**। युक्तमेतत् विधिगम्य-त्वेन प्रामाण्यस्य विधेयविषयत्वादित्यत्राह—**नैतदिति**। अर्थप्रमित्याख्य-कार्यगम्यं लौकिकप्रामाण्यम्। अलौकिकं तु विधिगम्यम्, अन्यथा तयोर्भे-दायोगादित्यत्राह—**तदुक्तमिति**। अत्र लौकिकशब्दानां मुख्यार्थाभिधान-मुखेन वैदिकार्थप्रतिपादनासम्भवे किं वेदे पृथक्सम्बन्धं गृह्णीमः? किं वा वृत्त्यन्तरद्वारेणापि लौकिकादेव संबन्धात् वैदिकार्थं प्रतिपद्यामहे? इति विशये

इति । तदेवमयुक्तमेतत् विधिसमन्वये शास्त्रप्रमाणत्वं ब्रह्मणः ॥

अथापि 'अथ यदतः परो दिवो ज्योतिः' इति प्रपञ्चातिरिक्तब्रह्माभ्युपगमे देवताविग्रहवत्त्वन्यायसंभवात् मोक्षकामस्य ब्रह्मोपासनं विधीयते । तथा च श्रुतिः 'विद्यया तदारोहन्ति' इति । न च साध्यत्वेऽप्यन्तवत्त्वम् । शब्दगम्यत्वादनावृत्तेः—'न च पुनरावर्तते' इति । न ह्येष तर्कगम्यः, येन तर्केणास्य तत्त्वं व्यवस्थाप्येत । शब्दगम्यस्य तु शब्दादेव तत्त्वव्यवस्था इति मन्वानस्योत्तरमाह भाष्यकारः—**न-कर्मब्रह्मविद्याफलयोर्वैलक्षण्यादिति** । वस्तुसङ्ग्रहवाक्यमेतत् । अस्यैव प्रपञ्चः—**अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त** इत्येतदन्तं भाष्यम् ॥

---

लौकिकादेव प्रतिपत्तुं युक्तमलौकिककल्पनादित्युक्तम्, तथा लौकिकमेव प्रामाण्यं युक्तं अलौकिककल्पनादित्यर्थः । तस्मात् ज्ञानादिविधिपरत्वे ब्रह्मात्मैक्यसिद्धिः असिद्धेत्याह—**तदेवमयुक्तमिति** ॥

उत्तरभाष्यमादत्ते—**अथाप्यथ यदिति** । कथमत्रोपासनविधिः शङ्क्यते ? विधिपरत्वे ब्रह्मासिद्धेरुक्तत्वात् इत्याशङ्क्य, तात्पर्यमाह—**प्रपञ्चातिरिक्तेति** । विकारावर्तित्वेन ब्रह्मणः सद्वितीयतया मानान्तराविरोधाद्देवताधिकरणन्यायेन सिद्धिः, ततश्च सद्वये ब्रह्मणि आरोपितैक्यविषयमुपासनं मोक्षादृष्टफलं स्वर्गादृष्टफलयागवत् विधीयत इत्यर्थः । 'मोक्षकामो ब्रह्मैक्यमुपासीत' इति न वाक्यमस्तीत्यत्राह—**तथा चेति** । 'विद्यया अमृतं-कैवल्यं आप्नुवन्ति' इति इदमेव वाक्यं तथा परिणमत इत्यर्थः । नन्वदृष्टफलत्वे मोक्षस्य स्वर्गादिवदनित्यतेत्यत्राह—**न च साध्यत्वेऽपीति** । श्रुतिरनित्यत्वानुमानविरुद्धा कथमनावृत्तिं साधयेदित्यत्राह—**न ह्येष इति** । श्रुत्यनुमानयोर्विरुद्धाव्यभिचारित्वात् संशयहेतुतेत्यत्राह—**शब्दगम्यस्येति** । अनुमानाच्छ्रुतिर्बलीयसीत्यर्थः । अस्य परिहारत्वेन भाष्यमवतारयति—**उत्तरमाहेति** । गन्वनेन पुनरुक्तमुत्तरभाष्यमित्यत्राह—**वस्तुसङ्ग्रहेति** ॥

अस्यायमर्थः संक्षेपतः——श्रुतितो न्यायतश्च मोक्षस्य नित्यसिद्धत्वप्रतीतेर्न क्रियासाध्यो मोक्ष इति। कथम्?। यदि सन्ध्योपासनवत् मानसं ब्रह्मकर्मकमुपासनं नाम धर्मो मोक्षफलः स्वर्गादिफलयागवद्विधीयते, तथा सति शरीरवतैव तत् फलं भोक्तव्यमिति 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्यशरीरमोक्षानुवादो योग्यप्रियाप्रियस्पर्शनाभावानुवादश्च निरालम्बनौ स्याताम्। न चाशरीरत्वमेव धर्मकार्यम्, स्वाभाविकत्वात् तस्य। तेनानुष्ठेयफलविलक्षणं मोक्षाख्यमशरीरत्वं स्वभाव-

---

स्वर्गादिकर्मफलस्य मोक्षस्य च नित्यत्वानित्यत्वादिवैलक्षण्यात् नित्यमोक्षार्थमनित्यफलसाधनमुपासनक्रिया न विधेयेत्युक्तम्, तदयुक्तम्—मोक्षस्याप्युपासनाख्यकर्मजत्वेन वैलक्षण्यासिद्धेरित्याशङ्क्य, अस्य भाष्यस्य तात्पर्यमाह—**अस्यायमर्थ इत्यादिना**। 'ब्रह्म वेद ब्रह्मैव भवति' 'विद्ययामृतमश्नुते' 'अथायमशरीरः' इत्यादिश्रुत्या पुनरावृत्तौ पुनर्बन्धान्मोक्षशब्दस्य उपचरितार्थता स्यादिति न्यायाच्च नित्यसिद्धत्वप्रतीतेः न क्रियासाध्यतेत्यर्थः। किं मोक्षायोपासनं विधीयते, अतः क्रियाजन्य(त्वान्नि)[त्वेऽपि नि]त्यसिद्धता न स्यादिति शङ्कते—**कथमिति**। क्रियाजन्यत्वेऽभ्युदयफलवच्छरीरेन्द्रियादिसम्बन्धः क्षयिष्णुतोपचयादिमत्त्वं च स्यादित्याह—**यदीत्यादिना**। को दोष इत्यत्राह—**अशरीरं वाव सन्तमिति**। यथा उपचयादिमत्क्षयिष्णुशरीरेन्द्रियादिभोग्यं च कर्मफलं एवं तद्विपरीताशरीरामृतत्वरूपा च मुक्तिः कर्मसाध्येत्येव स्यात् कर्मणां पश्वादिविविधफलहेतुत्वदर्शनादित्यत्राह—**न चाशरीरत्वमेवेति**॥

तत्किं देहादौ मिथ्याज्ञाननाशः? परमार्थसम्बन्धाभावो वा? इति विकल्प्य, आद्यपक्षनिरासे तस्य सम्यग्ज्ञानैकसाध्यत्वेन कर्मणा असाध्यत्वादिति हेतुमुक्त्वा अन्त्यपक्षनिरासे हेतुमाह—**स्वाभाविकेति**। अतः परमार्थसम्बन्धाभावाख्याशरीरत्वस्य कर्माजन्यत्वे सिद्धे फलितं निगमयति—**तेनेति**।

---

अशरीरत्वस्य नैयोगिकफलत्वमनुपपन्नं विद्वदनुभवसिद्धफलत्वेनानूद्यमानत्वात्तस्य सम्यग्ज्ञानैकायत्तत्वमेवाङ्गीकर्तव्यमित्यभिप्रेत्याह—**न च अशरीरत्वमिति**॥

सिद्धं नित्यमिति सिद्धम्। तत्रापि कथंचित् परिणामिनित्यं स्यात् स्यादपि कदाचिद्धर्मकार्यम्। इदं तु कूटस्थनित्यं ब्रह्म जिज्ञास्यत्वेन प्रकान्तम्। यत्स्वरूपावगमो जीवस्य मोक्षोऽभिप्रेयते। तत्र यदि हस्तगतविस्मृतसुवर्णादिवत् भ्रान्तिमात्रव्यवहितं मोक्षं प्रत्याख्याय ब्रह्मविषयध्यानक्रियातो देवताविषययागादिवत् प्रीतिविशेषो भोग्यो मोक्षः कल्प्येत, ततस्तेष्वेव तारतम्यावस्थितेषु प्रीतिविशेषेषु यागफलेष्वयमपि तथाभूतः स्यात्। ततः 'तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति लिङ्गदर्शनोपबृंहितन्यायावगतानित्यत्वो मोक्षः प्रसज्येत। न च तथाभ्युपगमो मोक्षवादिनाम्। अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त इत्युपसंहारः॥

यत्पुनः 'न च पुनरावर्तते' इति शास्त्रावगतं नित्यत्वं

---

अथेयमशरीरत्वाख्या मुक्तिः नित्यापि कर्मभिः परिणम्यते अतः कर्मसाध्येत्यत्राह—**तत्रापीति**। नित्येऽपीत्यर्थः। परिणामित्वे नित्यत्वं विरुद्धमिति सूचयन्नङ्गीकरोति—**कथञ्चिदिति**। निष्क्रियत्वश्रुतेः कूटस्थं ब्रह्मास्तु, ततो मुक्तिः परिणामिनीति किं न स्यादित्यत्राह—**यत्स्वरूपेति**। अस्तु कूटस्थनित्यब्रह्मरूपा मुक्तिः, तथाप्युपासनाफलं स्यात् ज्ञानत्वादुपासनस्येत्यत्राह—**तत्र यदीति**। उपासना विधेयतया पुरुषप्रयत्नसाध्यत्वाद्यागवत् क्रियैव। अतः तत्साध्यत्वे मुक्तेः स्वर्गादिवत् प्रीतिविशेषत्वं कल्प्यं स्यादित्यर्थः। अस्त्वित्यत्राह—**ततस्तेष्विति**। अस्तु तर्हि तारतम्यावस्थितो मोक्ष इत्यत्राह—**तद्यथेहेति**। अस्त्वनित्यतेत्यत्राह—**न च तथेति**। मुक्तेः कर्मासाध्यत्वेन वैलक्षण्ये सिद्धे, फलितमाह—**अतो नेति**॥

'तद्यथेह' इत्यादिश्रुतिः यत् कृतकं तदनित्यमित्यनुमानं च सामान्यालम्बिनी अपुनरावृत्तिश्रुतिस्तु मोक्षविषया बलीयसी इत्युक्तमनुवदति—**यत्पुनः**

---

**लिङ्गदर्शनोपबृंहितेति**। लोकप्रसिद्धनियतव्याप्तिदर्शनोपबृंहितेत्यर्थः॥

न तर्केणापनेतुं युक्तमिति, तदयुक्तम्—वर्तमानापदेशत्वेन तथाभावे प्रमाणापेक्षणात् । न च कार्यस्य नित्यत्वे प्रमाणमस्ति । परमाणूनां पाकजो गुणो नित्यत्वे नोदाहरणम्, प्रक्रियामात्रसिद्धत्वात् । किं च—'तेषामिह न पुनरावृत्तिः' 'इमं मानवमावर्तं नावर्तन्ते' इति श्रुतिः इह इममिति विशेषणादस्मिन् कल्पे अनावृत्तिं दर्शयति नानवधिकामनावृत्तिम् । अपि च—अभ्युपेत्य ब्रह्मणः क्रियानुप्रवेशं मोक्षस्यानित्यत्वदोष उक्तः । न तु क्रियानुप्रवेशं क्षमते वेदान्तवाक्यगतः पदसमन्वयः । तथा च 'ब्रह्म वेद ब्रह्मैव भवति' इत्याद्याः श्रुतयो ब्रह्मविद्यानन्तरं

---

न चेति । अभिसम्पत्तिसमयेऽप्राप्तपुनरावृत्तिप्रतिषेधापत्त्या श्रुतार्थत्वायोगात् न च पुनरावर्तिष्यते इत्यश्रुतकल्पनाया न्यायानुगृहीतसामान्यश्रुतिविरोधाच्चार्थवादमात्रत्वान्नेत्याह—तदयुक्तमिति । किञ्च, अभिसम्पत्तिकाले पुनरावृत्त्यभावस्य वर्तमानापदेशत्वेन पापश्लोकाश्रवणवत् संवादप्रमाणापेक्षत्वात् तस्य चाभावादर्थवादमात्रं इत्याह—वर्तमानेति । विमतं नित्यं अदृष्टसंस्काराभ्यां अन्यत्वे सति अस्मदादीन्द्रियायोग्यत्वात् परमाणुगतपाकजगुणवदित्यत्राह—परमाणूनामिति ॥

एवं सामान्यश्रुत्यनुमानाभ्यां साध्यत्वे मोक्षस्यानित्यता दर्शिता । सम्प्रति पुनरावृत्तिश्रुतिसामर्थ्यादेवान्तवत्त्वमाह—किञ्चेति । 'इमं' 'इह' इति विशेषणमेतस्मिन् कल्पे प्राप्तानां कल्पान्तरे आवृत्तिं दर्शयतीत्यर्थः । ब्रह्मैकत्ववाक्यैरधिकारिणः तदैवाशेषानर्थनिवर्तकज्ञानं उत्पादयद्भिः ज्ञातस्य ब्रह्मणः कार्यशेषत्वं वार्यते, अतः तद्विरोधाद्ब्रह्मणः क्रियाशेषत्वमेव न सम्भवतीत्याह—अपि चेति । ब्रह्मप्राप्तिवाक्यविरोधाच्च न ब्रह्मणः क्रियाशेषतेत्याह—तथा च....श्रुतय इति ॥

---

**तथात्वे[भावे]प्रमाणापेक्षणात्** तत् नास्तीति शेषः । न केवलं प्रमाणान्तराभाव एव, प्रत्युत तद्विरोध एवेत्याह—**न च कार्यस्येति** । अनित्यत्व एवास्तीति शेषः । विदुषा अनुष्ठितं कर्म मोक्षसाधनं भवतीत्येष पक्षो ज्ञानमोक्षयोः एककालत्वप्रतिपादकश्रुतिविरुद्ध इत्याह—**तथा चेत्यादिना** ॥

मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति। वेदनब्रह्मभवनयोरेककालत्वनिर्देशात्। अतो न विदितस्य क्रियायां विनियोगः। तथा 'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे' इति ब्रह्मदर्शनसर्वात्मभावयोरेककालत्वनिर्देशात् मध्ये क्रियान्तरं वारयति पश्यन्निति शतृप्रत्ययः। 'लक्षणहेत्वोः क्रियायाः' इति क्रियायाः हेतुभूताद्धातोः शतृप्रत्ययस्मरणात्। क्रियायाश्चान्याव्यवहिते हेतुमति हेतुत्वात्। यथा तिष्ठन् गायतीति तिष्ठतिगायत्योर्मध्ये क्रियान्तराभावः प्रतीयते तद्वत्। अत्र न स्थितिक्रियासामर्थ्यादेव गीतिक्रियानिर्वृत्तिः। अपि तु प्रयत्नान्तरात्। शब्दतः न तयोर्मध्ये क्रियान्तरप्रतीतिरित्येतावता उदाहरणम्। इह पुनर्न सर्वात्मभावस्य ब्रह्मदर्शनातिरेकेण प्रयत्नान्तरापेक्षा विद्यते॥

किं च—'तस्मै मृदितकषायाय तमसः पारं दर्शयति' इत्याद्याः श्रुतयः तमसो मिथ्याज्ञानस्य मोक्षव्यवधायिनोऽप-

---

ब्रह्मप्राप्तिवाक्यान्तरविरोधाच्चेत्याह—**तथा तद्धैतदिति**। 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्याद्याभिरेककालत्वश्रवणात् ब्रह्मज्ञानमुक्त्योर्मध्ये कार्यान्तरं वार्यते, 'पश्यन् प्रतिपेदे' इत्यत्र कथं कार्यान्तरवारणेत्यत्राह—**पश्यन्निति**। अस्तु (तर्हि) हेतौ शतृप्रत्ययः ततः किमित्यत्राह—**क्रियायाश्चेति**। शतृप्रत्ययेन मध्ये क्रियान्तराभावप्रतीतौ दृष्टान्तः—**तिष्ठन् गायतीति**। तिष्ठतेः गायतिहेतुत्वाभावात कथं तयोर्मध्ये क्रियान्तराभाव इत्यत्राह—**प्रतीयत इति**। यथा तत्र क्रियान्तराभावः प्रतीयते तथा अत्राव्यवहितहेतुमति हेतुत्वात् क्रियान्तराभावः प्रतीयत इत्यर्थः। एतद्विवृणोति—**न स्थितिक्रियेति**। **प्रयत्नान्तरात्**—ताल्वोष्ठादिव्यापारादित्यर्थः॥

अविद्यानिवृत्तिवाक्यैर्विरोधाच्च न क्रियाशेषतेत्याह—**किञ्चेति**। आरोपितरूपेणाप्युपासनसम्भवात्तेनाविद्यानिवृत्तेरयोगात् सम्यग्ज्ञानसाध्याम-

---

क्रियायाः क्षणिकत्वादेव तज्जन्मव्यापारेणैव तत्फलसिद्धिरङ्गीकर्तव्येत्याह—**क्रियायाश्चेति**॥

नयनमात्रं दर्शयन्ति मोक्षम्, न क्रियासाध्यम्। इतश्चैतदेवम्-अन्येऽपि न्यायविदो मिथ्याज्ञानापाये तदनन्तरं दुःखाभावं निर्वाणं दर्शयन्ति। मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति। न क्रियातः। कथं गम्यते?। 'इन्द्रो मायाभिः पुरुरूप ईयते' इति मिथ्यैव भेदावभासः तस्य प्रतिपक्षादभेदावभासादपनय इति गम्यते॥

अथापि स्यात् न एकत्वविज्ञानं यथावस्थितवस्तुविषयम्, येन मिथ्यारूपं भेदावभासं निवर्तयेत्। अपि तु संपदादिरूपं विधितः पुरुषेच्छया कर्तव्यमिति। संपन्नाम अल्पमपि वस्तु आलम्बनीकृत्य केनचित् सामान्येन दर्शनमात्रात् महद्वस्तुसम्पा-

---

विद्यानिवृत्तिं मोक्षं दर्शयद्भिर्वाक्यैर्ब्रह्मणः क्रियानुप्रवेशो मोक्षस्य क्रियासाध्यता चापास्तेत्यर्थः। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गेषु अनादिमिथ्याज्ञानस्य तेषां तत्त्वज्ञानवैमल्यादपाये तेषु रागद्वेषमोहा नोत्पद्यन्ते, ततः प्रवर्तकाभावात् प्रवृत्तिनिवृत्ती न स्तः, ततः प्रवृत्तिविवृत्तिभ्यामुपचितकर्मशून्यतया ब्रह्मादिस्तम्बान्तयोनिषु जन्माख्यदेहसम्बन्धं नाप्नोति, ततः तन्निमित्ते सुखदुःखे न स्तः, इति तत्त्वज्ञानसाध्यान्मिथ्याज्ञानापायान्मोक्षं दर्शयद्भिः नैयायिकैश्च मुक्तेः क्रियासाध्यता अपास्तेत्याह—**इतश्चैतदेवमिति**। ब्रह्मात्मैक्यमिथ्याज्ञानापायोऽपि निकटोपसर्पणादिना रज्जुमिथ्याज्ञानापायवत् तद्विरुद्धेन कर्मणा किं न स्यादित्यत्राह—**मिथ्येति**। निकटोपसर्पणेऽपि रज्जुतत्त्वज्ञानाभावे तन्मिथ्याज्ञाननिवृत्त्यदर्शनात् ब्रह्मज्ञानादेव तदपाय इत्यर्थः॥

ननूक्ततत्त्वज्ञानेष्वपि मिथ्याज्ञानप्रतिपक्षेषु किमित्यैक्यज्ञानादेव तदपाय इत्याशङ्कते—**कथं गम्यत इति**। दूषयति—**इन्द्रो मायाभिरिति**। नैक्यबुद्धेर्मिथ्याज्ञाननिवर्तकत्वम्, सम्पदादिरूपत्वात्तस्य, इत्याशङ्कते—**अथापि स्यादिति**। मिथ्याज्ञानानिवर्तकत्वे फलमाह—**विधित इति**। उपासनं कचिद्यथार्थं च, सम्पदादि त्वयथार्थमेवेति भेदः। तत्र सम्पदो लक्षणमाह—

दनम्। ततश्च तत्फलावाप्तिः। फलस्यैव वा संपादनम्। यथा मनसो वृत्त्यनन्तत्वसामान्येनानन्तविश्वदेवसंपादनं कृत्वा अनन्तलोकजयः। एवं जीवस्य चिद्रूपत्वसामान्येन ब्रह्मरूपसंपादनं कृत्वा ब्रह्मफलमवाप्यते इति। अध्यासस्तु अब्रह्मणि मनआदित्यादौ ब्रह्मदृष्ट्या उपासनं जीवस्यापि ब्रह्मदृष्ट्या उपासनम्। संपदि आलम्बनमविद्यमानसमं कृत्वा संपाद्यमानस्यैव प्राधान्येन मनसा अनुचिन्तनम्। अध्यासे त्वालम्बनस्यैव प्राधान्येनानुचिन्तनम्। क्रियायोगो वायोरग्न्यादीनां संहरणात् संवर्गगुणत्वेनोपासनम्। एवं जीवस्य स्वगतेन बृंहत्यर्थयोगेन ब्रह्मेत्युपासनम्। कार्यान्तरे(ण) गुणभूतस्य ब्रह्मदृष्टिः संस्कारः आज्यस्येवावेक्षणम् ॥

---

**सम्पन्नामेति**। पक्षान्तरमाह—**फलस्यैव वेति**। **सम्पादनं**—चिन्तनमित्यर्थः। तत्रोदाहरणं—**यथा मनस इति**। तथापि ब्रह्मसम्पादनं कीदृशमित्यत्राह—**एवं जीवस्येति**। आदिपदोक्तोऽध्यासः कीदृगित्यत्राह—**अध्यासस्त्विति**। नन्वध्यासात् सम्पदः को भेद इत्यत्राह—**सम्पदीति**। तर्हि सम्पद्रूपादध्यासस्य को भेद इत्यत्राह—**अध्यासे त्विति**। सामान्यनिमित्तत्वाविशेषात् सम्पदध्यासाभ्यां **क्रियायोगः** स्यादिति शब्दोक्तस्य को भेद इत्याशङ्क्य तत्स्वरूपमाह—**क्रियायोग इति**। **संवरणात्**—संहरणादित्यर्थः। अथापि कथं ब्रह्मणि क्रियायोग इत्यत्राह—**एवं जीवस्येति**। **बृंहत्यर्थयोगः**—वृद्धिक्रियायोगः। नन्वादिशब्दोक्तः संस्कारः कथं ब्रह्मणि स्यादित्यत्राह—**कार्यान्तरे इति**। ज्योतिष्टोमादिकार्याङ्गस्य कर्तुः ब्रह्मदृष्टिरित्यर्थः॥

---

**यथा मनस इति**। अत्र अनन्तविश्वदेवसम्पादनं कृत्वा अनन्तलोकसम्पादनं वा कृत्वेत्यध्याहारः। सम्पदध्यासयोरन्यत्रान्यबुद्ध्यारोपणस्य समत्वात् वैलक्षण्यं न सिध्यतीत्याशङ्क्याह—**सम्पदीति**। **बृहत्यर्थयोगेनेति**। ब्रह्म आकाशादिभ्यो महत्, जीवो देहादिभ्यो महान्, इति ब्रह्मगतमहत्त्वयोगेनेत्यर्थः। एकदेशिमतान्युपन्यस्य मीमांसकमतमाह—**कार्यान्तरे(णे) इति**। तत्त्वमसीति नवकृत्व उपदेशं असीत्यनुभवसिद्धत्वेनैक्योपदेशं

अत्रोत्तरं—संपदादिरूपे हीत्यादि। तथा सति तत्त्वमस्यादिवाक्यानां निरुपचरितब्रह्मात्मैकत्वावगमपरः पदसमन्वयो विना कारणेन स्वेच्छामात्रेण संपदादिपरः परिकल्प्येत। तदवगमनिमित्तं च मिथ्याज्ञानापायपूर्विका विस्मृतहस्तगतसुवर्णावाप्तिवत् ब्रह्मावाप्तिः फलमनुभवारूढमपह्नूयेत। 'नेह नानास्ति किंचन' इति च भेदाभावश्रुतिरुपरुध्येत। तस्मान्न संपदादिवत् पुरुषव्यापारतन्त्रा ब्रह्मविद्या। किन्तु प्रत्यक्षादिजनितज्ञानवदपरामृष्टहानोपादानवस्तुस्वरूपमात्रनिष्ठेत्यभ्युपगन्तव्यम्। तत्रैवं सति कथं ब्रह्म प्रतिपत्त्युत्तरकालं कर्मकारकतां नीयेत तज्ज्ञानं वा तदधिगमफलपर्यन्तं सत् विधिविषयो भवेत्। अतो मिथ्यैव

---

अत्रोत्तरं भाष्यम्, तदवतारयति—**अत्रोत्तरमिति**। तत्र किं समन्वयस्यैक्ये तात्पर्याभावात् सम्पदादिरूपता? मानान्तरविरोधाद्वा? इति वाच्यमित्याह—**तथा सतीति**। नाद्यः, षड्विधतात्पर्यलिङ्गानामैक्ये दर्शनादित्याह—**तत्त्वमसीति**। नान्त्यः, जीवपरयोर्मानान्तरायोग्यत्वेन तद्विरोधाभावादित्याह—**विना कारणेनेति**। किञ्च, सम्पदादिरूपत्वे तस्य क्रियात्वात् तेन मिथ्याज्ञानानिवृत्तेः विद्वदनुभवविरोधः फलवाक्यविरोधश्च स्यादित्याह—**तदवगमेति**। भेदनिषेधवाक्यैः विरोधः स्यादित्याह—**नेह नानेति**। सम्पदादिरूपत्वाभावे फलमाह—**तस्मादिति**। **सम्पदादिवदिति**। मनो ब्रह्मेत्यादिवदित्यर्थः। एवं ब्रह्मज्ञाने विधिं विनैवापरोक्षफलपर्यन्ते साध्यान्तराभावान्न ज्ञेयस्य ब्रह्मणो विधेयक्रियाकर्मतेत्याह—**तत्रैवं सतीति**। ज्ञानस्य विधेयत्वे कथं ब्रह्मणः तदभाव इत्यत्राह—**तज्ज्ञानं वेति**॥

किं तर्हि प्रमाणफलमित्याशङ्कां व्युदस्यन् ऐक्यबुद्धेः सम्पदाद्यात्मत्वाभावेन सम्यग्ज्ञानत्वे फलमाह—**अतो मिथ्येति**। मुक्तेः क्रियासाध्यत्वमपाकुर्वतो 'तरति शोकमात्मवित्' इति अर्थात् तत्त्वज्ञानमेव मोक्षसाधनमित्युक्तम्। ततः 'तरति शोकमात्मवित्' इत्यपि श्रुत्या ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायाच्च अविद्यानिवृत्तिमात्रं मोक्ष इत्यपि

---

चाभिप्रेत्याह—**तत्त्वमसीति**। मूलाज्ञानं निर्विकल्पचिन्मात्रमाश्रित्याच्छाद्य तत्राहङ्कारमुत्पादयति 'अहं कारोमि' इति (तं) [सः] प्रमाता, अज्ञानच्छन्नं प्रमेयम्, तत्राहङ्कारमिलित-

भेदावभासः । तस्य प्रतिपक्षादभेदावभासादपनयः । तस्मात् मिथ्याज्ञाननिवृत्तिमात्रं मोक्ष इति श्रुतिन्यायाभ्यां सिद्धम् ॥

ननु विदिक्रियाकर्म तावद्भवति ब्रह्म । ततः क्रियासम्बन्धे संभाविते भवति विधेरवसर इत्याशङ्क्याह—न च विदिक्रियाकर्मत्वेनेत्यादि । आह—सोऽयं शान्तिकर्मणि वेतालोदयः । ब्रह्मणः क्रियानुप्रवेशं निराकर्तुं ज्ञानक्रियाया अपि विषयत्वं निराकुर्वता तत एव शास्त्रयोनित्वमपि निराकृतमेव । तदाह—अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेदिति । अत्रोत्तरम्—न—अविद्याकल्पितेत्यादि । शास्त्रं हि सोयमित्यादिलौकिकवाक्यवत् ब्रह्मणि प्रमाणम् । तथा हि—सोयमिति देशकालभेदोपाधि-

सिद्धमित्याह— तस्मादिति ।....(खे)[पूर्वमेव भाष्यप्रमुखे]न ब्रह्मणः क्रियाकर्मतेत्युक्तत्वात् कथं पुनरपि सा शङ्क्यते येनोत्तरभाष्यं अर्थवत् स्यादित्याशङ्क्य, किं ब्रह्मणो विदिक्रियाकर्मता अस्ति वा ? न वा ?। अस्ति चेत्तद्वदेव विधेयक्रियाकर्मतापि स्यादित्याशङ्क्य उत्तरं भाष्यमित्याह—ननु विदिक्रियेति । राद्धान्तिना अन्त्यपक्षे स्वीकृते पूर्वपक्षी तत्र विरोधं वक्तीत्याह—आह सोऽयमिति । कथं विरोध इत्यत्राह—ब्रह्मण इति । ब्रह्मणः (स्वातन्त्र्येण शास्त्रयोनित्वं साधयता क्रियासम्बन्धद्वारापि) [क्रियासम्बन्धद्वारा शास्त्रयोनित्वमपाकुर्वता स्वातन्त्र्येणापि] शास्त्रयोनिता अपास्तेत्यर्थः । अस्मिन्नर्थे भाष्यं संवादयति—तदाहेति ॥

अत्र भाष्यमेवोत्तरमित्याह—अत्रोत्तरमिति । स्वयम्प्रकाशतया स्वविषयप्रकाशजननानपेक्षस्यापि ब्रह्मणः शास्त्रजन्यज्ञानाकारतया तद्व्यावर्तकस्य अविद्यादोषनिवृत्तिफलवत्तया शास्त्रप्रमेयतेति भाष्योक्तम्, तदयुक्तम्, अनधिगतार्थप्रकाशनं विना प्रमाणव्यापारस्य निष्फलत्वादित्यत्राह—शास्त्रं हीति । तत्रापि अर्थाधिगतिं विना कथं तन्निवृत्तिमात्रे प्रमाणव्यापार इत्यत्राह—तथा

प्रमातारमाश्रित्य अज्ञानावृतं प्रमेयत्वेन स्वीकृत्य 'अहं ब्रह्मास्मि' इति बुद्धिरुत्पद्यते, सा

प्रविलयेनाभेदोऽवगम्यते। तथा त्वंपदार्थोऽप्यात्मानमहंरूपं मन्यमानस्तत्त्वमसिवाक्यात्तत्पदार्थैकतामुपगच्छन् सोयमितिवदहमात्मकेदमंशोपाधिकृतवेद्यवेदितृवेदनात्मकप्रपञ्चेन अर्थात् प्रलीयमानेन अवच्छिद्यमानानिदंप्रकाशः प्रमाणफलं दर्शितः। तदप्यवच्छेदकविनाशे तदैव विजहन्निर्विशेषतामापद्यते। तेन प्रमात्रादिचतुष्टयस्य युगपत् प्रलयेऽपि तदवच्छेदानु-

---

हीति। देवदत्तैक्यस्याभिज्ञायामेव सिद्धत्वात्तदाकारज्ञानहेत्वोः प्रत्यभिज्ञावाक्ययोः उपाधिकल्पितभेदनिरासेन प्रामाण्यमित्यर्थः। ब्रह्मात्मनि विपर्ययाभावान्न तन्निरासेनापि प्रामाण्यमित्यत्राह—**तथेति**। केन तर्हि प्रमाणाकारेण भ्रमनिरास इत्यत्राह—**तत्पदार्थेति**। तत्त्वम्पदाभ्यां लक्ष्यब्रह्मात्मैक्यं मानाकार इत्यर्थः। किं तर्हि तदाकारज्ञाननिवर्त्यमित्यत्राह—**अहमात्मकेति**। मानस्य मेयप्रमितिमात्रोपक्षीणत्वात् कथं भ्रमनिरासकतेत्याशङ्क्य, प्रतीयमानवस्तुसामर्थ्यादित्याह—**अर्थादिति**॥

मानजन्मा संवित् मानफलम्। अन्यथा तत्फलत्वायोगात्। तेन च भ्रमापायः। सादिप्रकाशस्यैवानाद्यप्रकाशविरोधित्वात्। नित्यचित्प्रकाशे तु मानफलमेव नास्ति, कुतो भ्रमापायः इत्यत्राह—**अवच्छिद्यमानेति**। मातृमानगतचिदभेदेन मानव्याप्तेऽर्थे अभिव्यक्ता चित् मानफलम्। लोकेऽपि चितो जन्माभावात्। तेन च भ्रमापायः, अभिव्यक्तेः सादितया मानजत्वेनाभिव्यक्तचितोऽनाद्यप्रकाशविरोधित्वादित्यर्थः। तर्हि तस्य फलस्य सविशेषतया यावत्कालमवस्थानात् सद्वितीयतेत्यत्राह—**तदपीति**। अभिव्यञ्जकनाशे अभिव्यक्त्याख्यविशेषनाशात् निर्विशेषं ब्रह्मैव स्यादित्यर्थः। शास्त्रजन्यज्ञानेनाप्रकाश्यं चेत् ब्रह्म अशास्त्रगम्यं स्यादित्यत्राह—**तेनेति**॥

---

प्रमाणम्, अज्ञानाहङ्कारबुद्ध्युपहितं चिन्मात्रं फलम्, इत्येतदभिप्रेत्याह—**अहमात्मकेदमंशेति**। अहङ्कारादित्रयोपहितचिन्मात्ररूपफलेन अज्ञानविलयात् तत्कार्यभूताहङ्कारप्रमाणेऽपि लीने, तेषां विलयाच्चैतन्यस्य तदवच्छेदे विलीने स्वाभाविकनिर्विशेषतैवावशिष्यत इत्याह—**तदपीति**॥

भवफलं वाक्यनिबन्धनम् । अतो वेदैकगोचरो निर्वाणमिति वेदविदः प्रतिपेदिरे। तथाचैवंविधस्य प्रमाणव्यापारस्य प्रकाशका मन्त्रब्राह्मणवादा भाष्ये दर्शिताः। एवं च नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः ॥

**यस्य तूत्पाद्यो मोक्षः इत्यादिना—तस्मात् ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते इत्यन्तेन** भाष्येण अविद्यानिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणं मोक्षं विहाय क्रियानुप्रवेशं कल्पयतोऽपि न तस्य तत्र संभव इति दर्शितम्। कथम् ?। यदि तावदुत्पाद्यो विकार्यो वा मोक्षः तदा यद्यपि

---

मेयेऽभिव्यक्ता चित् फलं तेन चार्थादविद्यानिवृत्तिरित्युक्तम्। तदयुक्तम्—'मनसैवानुद्रष्टव्यम्' 'तं त्वौपनिषदम्' इत्यादिवाक्यैर्ब्रह्मणो ज्ञानजन्यफलाधारत्वोक्तेरित्यत्राह—**तथा चेति**। 'अविज्ञातं विजानतां' 'यतो वाचो निवर्तन्ते' इत्याद्या **भाष्योक्ताः**। ताभिः ब्रह्मणो ज्ञानजन्यफलाधारत्वस्य बाधात् तत् औपनिषदमित्यादिश्रुत्या नोच्यते। किन्तु वेदान्तजन्यापरोक्षज्ञानस्य आकारसमर्पकतया तद्व्यावर्तकतेत्यर्थः। तर्हि मोक्षस्य ज्ञानसाध्यत्वादनित्यतेत्यत्राह-**एवं चेति**। ज्ञानेन प्राप्यस्य ब्रह्मणो नित्यत्वात् ज्ञानसाध्यस्याविद्यादिक्षयस्य लोके क्षयादर्शनेनाविद्याक्षयस्य तन्निमित्तब्रह्मप्राप्तेश्च नित्यत्वादित्यर्थः ॥

तर्हि उत्तरभाष्यं व्यर्थमित्यत्राह—**यस्य तु उत्पाद्य इति**। ज्ञानमात्रान्नित्यमोक्षसिद्धौ ज्ञातस्य क्रियासम्बन्धकल्पना न युक्तेति प्रागुक्तम्। इदानीं तत्कल्पनेऽपि क्रियाफलस्य मोक्षे सम्भवो नेत्युच्यत इत्यर्थः। विकार्यत्वादेः सम्भवात् कथमसम्भव इत्याशङ्कते—**कथमिति**। किं यागादिवत् कर्तृसमवेतापूर्वफलाय ज्ञानं विधेयम् ? कर्मकारकेऽतिशयाय वा ?। नाद्यः, '**न—कर्मब्रह्मविद्याफलयोर्वैलक्षण्यादित्यारभ्य** अपा(स्त इत्युक्तं)[स्तत्वात्। अन्त्यं] प्रत्याह—**यदि तावदिति**। आप्यत्वेऽपि ब्रह्म किं आत्मनोऽभिन्नम् ? भिन्नं

क्रियानुप्रवेशो युक्तः, तथापि मोक्षस्य ध्रुवमनित्यत्वमित्युक्तं 'न—कर्मब्रह्मविद्याफलयोर्वैलक्षण्या'दित्यादिभाष्येण । अथानित्यत्वपरिहाराय स्थितस्यैवाप्यत्वमुच्यते । तदपि न—आत्मस्वरूपस्य क्रियापूर्वकाप्यत्वानुपपत्तेः । व्यतिरेकेऽपि सर्वगतत्वेन नित्यप्राप्तत्वादाकाशेनेव न क्रियापेक्षा प्राप्तिः । अथ विकारावर्तिनोऽपि 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रूयमाणस्य प्राप्तये क्रियापेक्षेति । न—विकारदेशेऽपि ब्रह्मणो विकारसंस्पर्शाभावादविशेषात् । अथ विकारावर्त्येव ब्रह्म न विकारदेशेऽस्ति तेन तत्प्राप्तये क्रियापेक्षेति । सा तर्हि तत्प्राप्तिरात्मनस्तादात्म्यापत्तिरुत स्वेनैव रूपेण तत्रावस्थानम्?। यदि पूर्वकल्पः, तदा स्वरूपनाशः । अथ द्वितीयः, संयोगस्य विप्रयोगा-

---

वा ?। नाद्यः, स्वरूपत्वेन नित्याप्तत्वादित्याह—**तदपि नेति** । भिन्नत्वेऽपि ब्रह्म सर्वगतं प्रादेशिकं वा ?। नाद्य इत्याह—**व्यतिरेकेऽपीति** । भिन्नद्रव्ययोः संयोगात् अन्या प्राप्तिर्नास्ति, सा च सर्वगतत्वे नित्यसिद्धेत्यर्थः ॥

अन्त्यं शङ्कते—**अथेति** । सर्वगत्वश्रुतेः सर्वगतमेव ब्रह्म विकारासम्बन्धार्थं विकारावर्तीति च कल्प्यते ? [उत] 'अथ यदतः परो दिवः' इत्यादिशास्त्राद्विकारावर्त्येव ब्रह्म सर्वगतत्वं चौपचारिकमिति ?। नाद्यः, तस्यासङ्गत्वेनोपपत्तेरित्याह—न—**विकारेति** । अन्त्यमाशङ्कते—**अथेति** । विमतं न ब्रह्म परिच्छिन्नत्वात् घटवदित्यादिन्यायानुगृहीतसर्वगतत्वश्रुत्या बाधात् । 'अथ यदतः परो दिवः' इत्यादेः प्रदेशविशेषेऽभिव्यक्तिबोधकत्वाच्च तत्रामानत्वेऽपि अङ्गीकृ(तदोषं)[त्य दूषयितुं] विकल्पयति—**सा तर्हीति** । आद्यं प्रत्याह—**अथ यदीति** । जीवत्वनाशं विना ब्रह्मत्वायोगादित्यर्थः । द्वितीयं प्रत्याह—**अथ द्वितीय इति** । अपुनरावृत्तिश्रुतेः (रज्जु)[अज]संयोगवन्नित्यता कल्प्येत्यत्राह—

वसानत्वात् पुनरावृत्तिः । न चापुनरावृत्तिश्रुतिर्वर्तमानापदेशिनी तथाभावे प्रमाणान्तरमपेक्षमाणा स्वयं प्रमाणीभवति । संस्कार्यत्वमपि न सम्भवति, गुणदोषयोराधेयापनेययोस्तत्रासम्भवात् । अथ विद्यमानस्याभिव्यक्तिरादर्शस्येव निघर्षणेन, तच्च न—आत्मनः क्रियारहितत्वात् । अन्याश्रयायास्तु न विषयः, प्रत्यग्रूपत्वात् ॥

नन्वीश्वराभिध्यानात् मलापगमो भविष्यति दीपप्रभयेव घटावगुण्ठनेन तमोऽपनयः । उच्यते—किमसौ मलः परमार्थसन् ? । उताविद्यात्मकः ? । यदि परमार्थसन्, न तर्हि स्वाश्रयविकारमन्तरेणापसारयितुं शक्यः । न हि विकार आत्मनः संभवति, अविकारित्वश्रुतेः । अथाविद्यात्मकः, न तर्ह्यविद्यावद्रतेन सम्यग्ज्ञानेन विना तस्यापनयः । लोके तथा दृष्टत्वात् ।

---

न चेति । अस्तु तर्हि संस्कार्यं ब्रह्मेत्यत्राह—संस्कार्यत्वमपीति ॥

गुणाभावेऽपि जीवरूपे ब्रह्मणि विद्यमानब्रह्मत्वानभिव्यक्तेर्दोषोऽस्ति, अतः तदपनयेन ब्रह्मत्वाभिव्यक्त्यर्थः संस्कारः स्यादिति शङ्कते—अथेति । स किमात्माश्रयक्रियया स्यात् अन्याश्रयया वा ? । नाद्यः, जीवस्याक्रियत्वादित्याह—तच्च नेति । नान्त्यः, जीवस्य सर्वान्तरत्वेन क्रियाश्रयद्रव्यैस्संयोगाभावादित्याह—अन्याश्रयायास्त्विति । संयोगाभावेऽपि डित्थाश्रयध्यानात् डपित्थे विषापायवत् बुद्ध्याश्रयध्यानात् जीवे दोषापनयः स्यात् इत्याशङ्कते—नन्वीश्वरेति । एतत् दूषयति—उच्यत इति । 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति न्यायमाश्रित्याह—न तर्हि स्वाश्रयेति । अस्तु तर्ह्यात्मा विकारीत्यत्राह—न हि विकार इति । अन्त्ये न क्रियातः संस्कार इत्याह—अथेत्यादिना । शास्त्रीयकर्मभिरात्मनो गुणाधानाख्यः स्यादिति ॥

---

अन्याश्रयायास्त्विति । कर्मत्वं न सम्भवतीति शेषः । तत्र हेतुः—प्रत्यग्रूप-

अन्यथा चादृष्टत्वात्। न च स्नानादिक्रिययेव संस्कार्यत्वसम्भवः, अहंकर्तुरिदमंशस्यैव तत्र संस्कार्यत्वात्। तस्मान्न संस्कार्योऽपि मोक्षः इत्युपसंहरति। अथापि त्वन्यदपि क्रियाफलमस्ति तद्द्वारेण मोक्षस्य क्रियानुप्रवेशः स्यादित्याशङ्क्याह—अतोऽन्यन्मोक्षं प्रतीत्यादि। न हि दृष्टमदृष्टं वा क्रियाफलमुत्पत्त्यादिचतुष्टयातिरिक्तं शक्यं केनचिद्दर्शयितुम्। तस्माज्ज्ञानस्यैव मोक्षो गोचरो न क्रियायाः॥

ननु ज्ञानस्यापि न गोचरो ब्रह्मेत्युक्तम् 'न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः' इति वदता। सत्यम्। कर्मत्वं ज्ञानं प्रति निषिद्धम्, न पुनरनुपयोग एवैकान्ततो ज्ञानस्याभिहितः। तथा च तत्रैवोपयोगप्रकारो दर्शितः भाष्येण। अविद्यापरिकल्पितभेदनिवृत्तिपरत्वादित्यादिना

---

संस्कारः श्रूयते, अतोऽस्त्याधेयो गुण आत्मनीत्यत्राह—न—च स्नानादीति। 'विज्ञानं यज्ञं तनुते' इति श्रुतेः देहेन्द्रियादिकरणप्रेरकत्वाच्च चित्संवलितोऽहङ्कारः कर्ता भोक्ता च। अतः तस्य स्नानादिभिः संस्कारो न शुद्धात्मनः। अतो नायं दृष्टान्त इत्यर्थः॥

करणोपकारकत्वेन करणावान्तरव्यापारत्वेन मोक्षस्य क्रियासाध्यता स्यादित्याशङ्क्य, तयोरप्युत्पाद्यादिष्वन्तर्भावात् नैषा शङ्केति वक्तुमुत्तरं भाष्यमित्याह—अथापि त्विति। इममर्थं व्यनक्ति— न हि दृष्टमिति। मोक्षस्य क्रियाफलत्वाभावे फलमाह—तस्मादिति। अत्र ब्रह्मणो ज्ञानगोचरत्वमुक्तम्, तत्पूर्वेण विरुद्धमिति चोदयति—ननु ज्ञानस्यापीति। उक्तांशमङ्गीकरोति —सत्यमिति। किं तर्हि नोक्तमित्यत्राह—न पुनरिति। 'तदभिप्रायेणेह विज्ञानगोचरत्वमुक्तम्' इति भाष्येणेत्यस्यानन्तरं द्रष्टव्यम्। यद्येवं ज्ञानगोचरो ब्रह्म, तर्हि क्रियालेशस्याप्यनुप्रवेशो ब्रह्मणि नोपपद्यते इत्ययुक्तमिति शङ्कते—

मा तर्हि वोचः 'क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते' इति, ननु ज्ञानं मानसी क्रिया। न—वैलक्षण्यादित्युत्तरम्। कथं वैलक्षण्यम्?। अजन्यफलत्वात्। उक्तमजन्यफलत्वमहङ्कारटीकायाम्॥

इदमपरं वैलक्षण्यम्। ज्ञानं न चोदनाजन्यम्। वस्तुजन्यं हि तत्। वस्तु च ज्ञानात् प्रागेव स्वरूपे व्यवस्थितम्। अतस्तत्तन्त्रं ज्ञानम्। न [च] तत् ज्ञानेनान्यथा कर्तुं शक्यम्। अथापि स्यात्—भवेत् प्रत्यक्षं वस्तुजन्यम्, अनुमानादिषु कथम्?। तत्रापि लिङ्गादिपरतन्त्रम्, न चोदनायास्तत्रानुप्रवेशः। किं च—न चोदनाजन्यं ज्ञानमेकान्ततो

---

**मा तर्हीति**। कथञ्चिज्ज्ञानगोचरत्वमस्तीत्येतावता क्रियागोचरत्वप्रतिषेधः किं न स्यादित्याशङ्क्य, ज्ञानस्य क्रियाविशेषत्वादित्याह — **ननु ज्ञानमिति**। दूषयति—**न–वैलक्षण्यादिति**। उक्तं वैलक्षण्यं विशदयति— **कथमिति**॥

जन्याजन्यफलत्वेन क्रियाज्ञानयोः वैलक्षण्यमुक्तम्। इदानीं इच्छाजन्यत्वाजन्यत्वाभ्यां हेतुतो वैलक्षण्यमाह–**इदमपरमिति**। ज्ञानं न **चोदनाजन्यं**–पुरुषेच्छादिजन्यं अनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनादित्यर्थः। इतोऽपि न चोदनाजन्यमित्याह—**वस्तुजन्यं हीति**। ज्ञानस्य वस्तुजन्यत्वेऽपि वस्तुनो ज्ञानतन्त्रत्वात् ज्ञानस्य चोदनाजन्यता स्यादित्यत्राह—**वस्तु चेति**। ज्ञानात् प्राक् ज्ञप्त्यभावेऽपि सत्तया स्थितं वस्त्वित्यर्थः। स्थितमपि वस्तु ज्ञानेनान्यथा क्रियते तर्केण पयोवत् अतो ज्ञानतन्त्रमित्याशङ्क्य, अकारकत्वान्नेत्याह—**न चेति**। मा भूत् प्रत्यक्षस्यार्थजन्यता, शब्दादेस्तु तदभावात् चोदनाजन्यतेत्याशङ्कते—**अथापि स्यादिति**। दूषयति—**तत्रापीति**। इतरसामग्र्यां सत्यां चोदनां विनैव ज्ञानोत्पत्तिदर्शनादित्यर्थः। ज्ञानस्य क्रियात्वेऽपि चोदनाजन्यता वस्तुविषयस्य ज्ञानस्य नेत्याह—**किञ्चेति**। क्रिया चेत् कस्मान्न चोदना-

वस्तुपरिच्छेदकम्। योषादिष्वग्न्यादिदृष्टिविधानदर्शनात्। अतो वस्तुविषयस्य ज्ञानस्य क्रियात्वेऽपि न चोदनाजन्यत्वम्। न वा पुरुषतन्त्रत्वम्। अपितु प्रमाणवस्तुपरतन्त्रत्वम्। एवं सम्यग्ज्ञानत्वोपपत्तेः अग्नाविवाग्निज्ञानस्य। एवं सति ब्रह्मात्मैकत्वविज्ञानस्यापि यथाभूतवस्तुविषयत्वान्न चोदनाजन्यत्वम्। अतो न विधेरत्रावकाशः। अतः श्रूयमाणा अपि विधयः केवलप्रमाणवस्तुपरतन्त्रे ज्ञाने अकिंचित्करत्वात् कुण्ठीभवन्ति। अतोऽर्थवादतया आत्मज्ञानस्तावकत्वेन तदुन्मुखीकरणात् सामर्थ्यसिद्धबहिर्मुखतानिरोधाच्च विधिकार्यलेशस्य विद्यमानत्वाद्विधय इव लक्ष्यन्ते। तथा च श्रवणं नाम आत्मावगतये वेदान्तवाक्यविचारः शारीरकश्रवणं च। मननं वस्तुनिष्ठवाक्यापेक्षितदुन्दुभ्यादिदृष्टान्तजन्मस्थितिलयवाचारम्भणत्वादियुक्त्यर्थवादानु

---

जन्यतेत्यत्राह—**न चोदनेति**। तदेव कुत इत्यत्राह—**योषिदादिष्विति**। फलितमाह—**अतो वस्त्विति**। क्रियात्वे पुरुषतन्त्रत्वात् कथं न चोदनाजन्यतेत्यत्राह—**न वा पुरुषेति**। अत्र नियामकं—**सम्यग्ज्ञानेति**। अस्तु, प्रस्तुते किं स्यादित्यत्राह—**एवं सतीति**॥

नन्वात्मा द्रष्टव्य इत्यादौ ब्रह्मज्ञाने विधयः श्रूयन्ते, कथं तर्केण निरस्यन्ते इत्यत्राह—**अतः श्रूयमाणा इति**। विधेयाभावाद्विधेरभावे शब्दवैयर्थ्यं स्यादित्यत्राह—**अत इति**। अर्थवन्त इति शेषः। अर्थवादान्तरवत् स्तावकत्वे विधिपदमर्थशून्यं स्यादित्यत्राह—**तदुन्मुखीकरणादिति**। यैः श्रवणादिभिः आत्मा स्तूयते कानि तानीत्यत्राह — **तथा चेति**। नन्विह श्रवणादिभिः सह आत्मदर्शनमङ्गि विधीयताम्, किमिति स्तावकतेत्याशङ्क्य,

---

**वस्तुविषयस्य ज्ञानस्य क्रियात्वेऽपीति**। तमःपरिणामत्वसाम्येऽपीत्यर्थः। विधिगतप्रवर्तकत्वनिवर्तकत्वगुणद्वयात् विधिच्छायानि श्रोतव्य इत्यादीनि वाक्यानीत्याह—**अतोऽर्थवादतयेति**। **शारीरकश्रवणमिति**। समन्वयाध्यायश्रवणमित्यर्थः।

संधानं वाक्यार्थाविरोध्यनुमानानुसंधानं च । निदिध्यासनं मननोपबृंहितवाक्यार्थविषये स्थिरीभावः । विधेयस्योपासनापर्यायस्य निष्फलत्वात् । दर्शनं ततो वाक्यार्थे स्थैर्यान्निरस्तसमस्तप्रपञ्चावभासविज्ञानघनैकतानुभवः । कः पुनरत्रार्थवादः ?। इदमत्र प्रस्तुतम्—क्रियाकारकफलात्मकात् संसारात् विरक्तायै मैत्रेय्यै मुमुक्षवे मोक्षसाधनमात्मज्ञानं प्रतिपिपादयिषन् 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इति पत्यादेरीप्सितत्वं प्रतिषिध्य आत्मन ईप्सिततमत्वमाह । ननु नैवात्मन ईप्सिततमत्वमुच्यते । किन्तु पत्यादीनामेवात्मार्थतयेप्सितत्वमुच्यते 'आत्मनस्तु कामाय पतिः प्रियो भवती'ति। मैवम्—न हि तस्मिन्ननिष्टे तदर्थमिष्टं भवति । तस्मादनेनोपायेनात्मन एवेप्सितत्वमुक्तम्। ईप्सितश्चेत् 'द्रष्टव्यः श्रोतव्यः' इत्येषोऽर्थ-

उक्तं स्मारयति—**विधेयस्येति**। न विधेयमिति शेषः। श्रवणादिभिः किं श्रेयः स्यात्? येनोत्कर्षवद्भिरेतैर्विषयीकरणादात्मनः स्तवः स्यादिति ; तदाह—**ततो वाक्येति** ॥

विधेयस्यैव अर्थवादसम्बन्धः स्तुतेः प्रवृत्तिफलत्वात्, न सिद्धे वस्तुनीत्याक्षिपति—**कः पुनरिति**। फलप्रशंसाया अपि प्रवृत्त्युपयोगित्वात् फलरूपात्मप्रशंसापि श्रवणादिप्रवृत्त्युपयोगिनीति वक्तुमात्मनः फलरूपतामाह—**इदमत्रेति** ॥

इति न्यायसिद्धेऽर्थे कथिते श्रौतमर्थमाश्रित्याशङ्कते—**ननु नैवेति**। यद्धि यदर्थं प्रियं तत्ततोऽपि अतिशयेन प्रियमिति न्यायमाविष्कुर्वन् दूषयति—**मैवमिति**। यद्यात्मन एवेप्सिततमत्वं विवक्षितम्, तर्हि अन्यस्य सर्वस्येप्सितत्वोक्तिरयुक्तेत्यत्राह—**तस्मादिति**। अस्तु फलरूप आत्मेत्याशङ्क्य, तर्हि दर्शनादि कर्तव्यमिति तत्स्तुतये अर्थवादः स्यादित्याह—**ईप्सित इति**।

निदिध्यासितव्य इति ध्यानं विधीयते इत्येकदेशीयमतं पूर्वमेव निरस्तमित्याह—**विधेयस्येति**। **तत इति**। ताभ्यां श्रवणमननाभ्याम्, वाक्यार्थे मनसः स्थैर्यलक्षणनिदिध्यासनाच्चेत्यर्थः ॥

वादः। एतच्च सर्वं प्रथमसूत्रेणैव सूत्रितं विवृतं च भाष्ये। अपि च नैवायं विधौ कृत्यः। किं तर्हि? 'अर्हे कृत्यतृचश्च' इत्यर्हे कृत्यः। एतेन 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' इत्येवमादीनि विधिच्छायानि वाक्यानि व्याख्यातानि वेदितव्यानि। अतो हानोपादानशून्यात्मावगमादेव कृतकृत्यता प्रतीयते। श्रुतिस्मृतिवादानां च तथा प्रस्थितत्वात्। **तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणमित्युपसंहरति।** अस्यायमर्थः—न प्रमाणात्मकेनेतरेण वा ज्ञानव्यापारेण विधीयमानत्वेन कल्पितेन संस्पर्शो ब्रह्मणः इति॥

---

सम्यग्ज्ञानस्य फलरूपत्वान्मानाधीनत्वाच्चाविधेयत्वात् तस्यार्थवादता स्यात्, श्रवणादयस्तु क्रियारूपत्वात् सम्यग्ज्ञानस्य दृष्टादृष्टोपकारितया विधेया एवेति। तदाह—**एतच्चेति**। मनननिदिध्यासनाङ्गकस्य श्रवणस्य विधेयत्वमङ्गीकृत्य आद्यसूत्रं प्रवृत्तमित्यर्थः। विधीनामपि सतां स्तावकत्वमुक्तम्। इदानीं कृत्यस्यार्थान्तरमाह—**अपि चेति**। यद्यपि विधावपि कृत्यं स्मर्यते, तथापि विधेयाभावादर्हार्थतया आत्मा दर्शनार्ह इति स्तूयत इत्यर्थः॥

मा भूत् ज्ञानविधयः, उपासनाविधयः श्रूयन्ते ते सन्त्वित्यत्राह—**एतेनेति**। सर्वत्र एवकारश्रवणादहमिति स्वभावप्राप्तप्रत्ययावृत्त्यनुवादेन विषयविशेषः प्रतिपाद्यत इत्यर्थः। यद्वा, ज्ञानविधेः स्तावकत्वकथनेन फलरूपत्वादात्मनः तदुपासना कर्तव्येति उपासनाविधेश्च स्तावकतोक्ता, आत्मन्यज्ञाते ज्ञाते चोपासनाविध्ययोगादित्यर्थः। उपासने ज्ञाने च विध्यभावे फलमाह—**अत इति**। 'ज्ञानादेव तु कैवल्यं' 'नान्यः पन्था विद्यते' इत्यादिवाक्याच्चैवमित्याह—**श्रुतिस्मृतीति**। प्रकृतं निगमयति—**तस्मादिति**। सर्वस्यापि मनोव्यापारस्याविधेयत्वमुक्तम्, कथं कस्यचिदेव तन्निगमयतीत्यत्राह—**अस्यायमर्थ इति**॥

यदपि केचिदाहुरित्यादि। अस्यायमर्थः—यदि स्वरूपमात्रनिष्ठोऽपि वेदभागोऽस्ति तत इदं पूर्वोक्तं प्रतिष्ठां लभते। अन्यथा क्रियानुप्रवेशातिरिक्तमवेदार्थ एव स्यादिति। अस्योत्तरम्—तन्न-औपनिषदस्य पुरुषस्यानन्यशेषत्वादिति वस्तुसंग्रहवाक्यम्। अस्यैव प्रपञ्चः—योऽसावुपनिषत्स्वेवाधिगत इत्यादिः। अस्यायमर्थः—योऽयमहंप्रत्ययविषयात् क्रियासम्बन्ध्यात्मनोऽतिरिक्तः सम एकः सर्वभूतेष्वहंकर्तुरपि साक्षिभूतो न स केनचित् प्रमाणेन सिद्धः। येन क्रियाशेषतां नीयेत। न हि प्रमाणान्तरासिद्धः क्रियासम्बन्धितयोपदेष्टुं

---

मोक्ष[फल]ज्ञान[विषय]ब्रह्मनिरूपणेन वेदान्तानां ब्रह्मणि विधिनिरपेक्षं प्रामाण्यं द्वितीयवर्णकोक्तं, तन्निरूपणेन मानान्तरानपेक्षं प्रामाण्यं प्रथमवर्णकोक्तं चाक्षिपति—**यदपि केचिदिति**। कथं युक्तिं विना आक्षेप इत्यत्राह—**अस्यायमर्थ इति**। अहम्प्रत्ययवेद्यश्चेत् आत्मा वेदान्तवेद्यः तदा तस्य क्रियायामङ्गत्वात् विधिवाक्यैः वेदान्तानामेकवाक्यता। तद्व्यतिरिक्तश्चेत्तदा किञ्चिदुद्दिश्य किञ्चित्प्रतिपाद्यमिति उद्देश्याभावात् प्रतिपादनं न स्यात्। तस्यापि चेतनत्वे क्रियाङ्गत्वात् वेदान्तानां विधिपरतैव। अतो वर्णकद्वयोक्तमयुक्तमित्यर्थः। चेतनत्वेऽपि तस्य कर्तृत्वाद्यभावात् न कर्माङ्गतेत्यत्राह—**अन्यथेति**। 'अग्निहोत्रफला वेदाः' इत्यादिस्मृतिभिः सर्वस्य वेदस्य क्रियायामेव विनियुक्तत्वात् क्रियासम्बन्धशून्यस्यावेदार्थतैव स्यादित्यर्थः॥

समाधानभाष्यमादत्ते—**अस्योत्तरमिति**। उपनिषदः कल्पद्वयेऽप्यात्मपरत्वेऽपास्ते कं पक्षमाश्रित्योपनिषदर्थः सिध्येदित्यत्राह—**अस्यायमर्थ इति**। सोऽपि चेतनश्चेदहम्बुद्धिगम्यतया कर्माङ्गमित्यत्राह—**न स केनचिदिति**। शास्त्रैकगम्यस्यापि कर्माङ्गता किं न स्यादित्यत्राह—**न हीति**।

---

वेदान्तप्रमेयस्यात्मनः क्रियासंम्बन्ध्यात्मनोऽतिरिक्तत्वे हेतुः—**सर्वभूतेष्वेक इति**। घटरुचकादिकार्येषु मृत्सुवर्णादिवत् सर्वभूतेष्वेकत्वेन वृत्तिं व्यावर्तयति—**सम इति**। तत्र हेतुः—**अहङ्कर्तुरपीति**। अपिशब्दात् तद्व्यतिरिक्तस्यापि सर्वस्य साक्षिभूत इत्यर्थः।

**शक्यः । न च स न प्रतीयते इति युक्तं वक्तुम् । तत्प्रतिपादकोपनिषत्पदसमन्वयस्य दर्शितत्वात् । अत एवौपनिषदत्वविशेषणम्, अनन्यविषयत्वात् । तच्च वेदान्तानां तत्परत्वेऽवकल्पते । नैष प्रतीयमानोऽपि शुक्तिरजतवन्मिथ्येति शक्यं वक्तुम् । बाधाभावात् । इतश्च न शक्यते मिथ्येति वदितुम् । तस्मिन्नौपनिषदे पुरुषे 'स एष नेति नेत्यात्मा' इति आत्मशब्दप्रयोगात् । आत्मनश्चानिराकार्यत्वात् । य एव निराकर्ता तस्यैवात्मत्वप्रसङ्गात् । न च तस्य कदाचिदभावः सम्भवति । अभावहेतूनामविषयत्वात् । न च निर्हेतुको विनाशः । चितेरेकरूपाव-**

---

अधिकारिणं कर्तारं च मानान्तरसिद्धमनूद्य विधिमात्रं प्रतिपाद्यम् । अन्यथा वाक्यभेदादित्यर्थः । नन्वात्मा मानान्तरागम्यत्वाच्छास्त्रेणापि न गम्यत इत्यत्राह—**न च स न प्रतीयत इति**। 'सर्वे वेदा धर्मे विनियुक्ताः' इत्युक्तमित्यत्राह—**अत एवेति**। तद्धितश्रुतेः 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैः' इति श्रुतिस्मृतिभ्यां च ब्रह्मपरा वेदान्ताः स्मृतयस्तु बाध्याः इत्यर्थः। पदसमन्वयाज्जातमपि ब्रह्मज्ञानं प्रत्यक्षादिबाधान्मिथ्येति; नेत्याह—**नैष इति**। ननूद्देश्याभावादुपादेय प्रमातुं न शक्यमित्यत्राह—**इतश्च न शक्यत इति** । अहम्प्रत्ययगम्यमात्मानमुद्दिश्य तस्याद्वितीयज्ञानानन्दब्रह्मत्वं प्रतिपाद्यमित्यर्थः। तथाप्यात्मनोऽवस्तुत्वान्निरालम्बनत्वं ज्ञानस्येत्यत्राह—**आत्मनश्चेति**। तथापि असङ्गत्वेनाभावहेतुसम्बन्धाभावाच्च नावस्तुत्वमित्याह—**न च तस्येति**। तथापि निर्हेतुकविनाशादसत्त्वं स्यात् इत्यत्राह—**न च निर्हेतुक इति** ॥

---

**अत एवेति**। प्राधान्येनोपनिषद्भ्यो विज्ञेयत्वादित्यर्थः। अन्यशेषतया विज्ञेयत्वे तत् न सिध्यति, किन्तु स्वतन्त्रतया इत्याह—**अनन्यविषयत्वादिति**। तदेव स्पष्टीकरोति—**तच्चेति**। वेदान्तानां तत्परत्वे प्राधान्येन च तत्परत्वे, तत् सम्भवतीति चकारार्थः। आत्मनः(शब्द) [सर्व] स्य साक्षित्वं निरुपचरितस्वरूपत्वं चाङ्गीकृत्याह—**स एष नेतीति**। तत्र निराकर्तृनिराकरणतत्फलानामपि स्वरूपत्वात् साक्षित्वाच्च तन्निराकरणमशक्यमित्याह—**आत्मनश्चेति**। **अभावहेतूनामिति**। निरंशत्वात्, प्रत्यक्त्वात्, निस्सङ्गत्वात्,

भासेन क्षणभङ्गनिराकरणात्। अतोऽवच्छेदत्रयशून्ये तस्मिन् स्वयंप्रकाशमाने सर्वस्य पुरुषावधिर्विनाशः। 'सा काष्ठा सा परा गतिः'। तदेवमसंसार्यात्मनि प्रमाणान्तरागोचरे वेदान्तवाक्यसमन्वयात् प्रतीयमाने कथं तत्परो वेदभागो न भवेत्?। कथं वा प्रतीयमानो निराक्रियेत?॥

ननु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'इत्यक्रियार्थानां पदानामर्थशून्यत्वं शास्त्रतात्पर्यविद आहुः। तस्मात् प्रवृत्तिनिवृत्तिव्यतिरिक्तार्थवादिनां निरालम्बनत्वात् ततो वस्त्व-

---

भावत्वे सति अविनाशित्वान्मा भूत् कालपरिच्छेदः, तथापि देशतो वस्तुतश्च परिच्छेदोऽस्तीत्याशङ्क्य, सोऽपि कालतोऽपरिच्छेदान्यथानुपपत्त्या नास्तीति मत्वा आह—**अतोऽवच्छेदेति**। अथाप्याकाशवज्जडोऽसावित्याशङ्क्य, परिच्छेदत्रयशून्यत्वान्यथानुपपत्त्या स्वप्रकाश इत्याह—**स्वयम्प्रकाशमाने इति**। सर्वं हि नश्यत् शून्यान्तं नश्यति अतः शून्यं तत्त्वमित्याशङ्क्य, एवंविधात्मनि सति तदवधिः नाशः असतोऽवधित्वायोगादित्याह—**सर्वस्येति**। पुरुषातिरिक्तवस्तुनः पुरुषावधिर्विनाशश्चेत् पुरुषस्याप्यन्यावधिः विनाशो वस्तुत्वात् स्यादित्याशङ्क्य, उक्तरीत्या नाशाभावे अवध्यन्तराभावमप्रतिषेधं च मत्वा आह—**सा काष्ठेति**। उक्तार्थं सप्रमाणं निगमयति—**तदेवमिति**। प्रतीयमानस्याप्यसत्वं अन्यथात्वं वा स्यात् अतो न तत्र तात्पर्यमित्यत्राह—**कथं वेति**। अबाधितानधिगतफलत्वादात्मबोधकत्वान्यथानुपपत्त्या वेदान्तानां तत्परता सिद्धेत्यर्थः॥

क्रियार्थतयैवानादिप्रवृत्तप्रयोगप्रत्ययव्यवहारबलात् सूत्रकारैः सर्वो वेदः क्रियायामेव विनियुक्त इति शङ्कते—**नन्वाम्नायस्येति**। ततः किमित्यत्राह—**तस्मादिति**। वाक्यश्रवणानन्तरं भूतेऽप्यर्थे प्रमितिर्जायते, ततः कथं निरालम्बनतेत्यत्राह—**तत इति**। शब्दश्रवणानन्तरं क्रियावाक्येऽपि सिद्ध-

---

सुखसंवित्त्वाच्च अभावसत्ताप्रतीतिहेतूनामविषय इत्यर्थः। 'अव्यक्तात् पुरुषः परः' इत्यादिश्रुतीरनुसृत्यार्थं साधयति—**सर्वस्येति**। सर्वप्रमाणभावो मिथ्यार्थत्वमापादयति न

वगमः सामान्यतोदृष्टनिबन्धनो भ्रमः। तेन प्रवृत्तिनिवृत्त्यनुपयोगि वस्तु न शब्दादवगम्यते। अत एव च तन्मिथ्येति शक्यते वक्तुम्। प्रमाणान्तरस्यापि तद्विषयस्यासम्भवात्। कथं पुनः प्रवृत्तिनिवृत्त्यनुपयोगि वस्तु न शब्दादवगम्यते?। शब्दस्य तत्र सामर्थ्याग्रहणात्। न चागृहीतसामर्थ्य एव शब्दश्चक्षुरादिवद्विज्ञानं जनयति। सामर्थ्यग्रहणं च ज्ञानकार्योन्नेयम्। ज्ञानं च विशिष्टार्थविषयं तद्विषयप्रवृत्त्या अवगम्यते। तदभावे कुतः सामर्थ्यकल्पना स्यात्?। अक्लृप्तसामर्थ्यश्च शब्दोऽक्रियाशेषेऽर्थे कथं विज्ञानं जनयेत्? ॥

उच्यते—नैव सूत्रकारभाष्यकारयोरभिप्रायो लौकिको

---

पददर्शनेन संसर्गदर्शनादिहापि तद्दर्शनात् संसर्गभ्रम इत्यर्थः। सामान्यतोदृष्टनिबन्धनत्वे फलमाह—**तेनेति**। अज्ञातब्रह्मज्ञानं कथं मिथ्येत्याशङ्क्य, मानाभासजत्वादित्याह—**अत एव चेति**। मिथ्यात्वे अभ्युच्चयमाह—**प्रमाणान्तरस्येति**। एवं सूत्रविरोधेऽपि वेदस्य बलवत्तरत्वात्तेन ब्रह्म कस्मान्नावगम्यमिति शङ्कते—**कथं पुनरिति**। सिद्धे सङ्गत्यग्रहणाख्यन्यायमूलत्वात्सूत्रस्येत्याह—**शब्दस्येति**। अथ विनैव सङ्गतिग्रहणं तत् ब्रह्म बोध्यतामित्याशङ्क्य, स्त्रीबालादेश्च वेदप्रमित्यापत्तेः नेत्याह—**न चेति**। गृह्यतां तर्हीत्यत्राह—**सामर्थ्यग्रहणं चेति**। मध्यमवृद्धप्रवृत्त्या ज्ञानमनुमाय तेन ज्ञानेन सामर्थ्यं कल्पनीयम्, सा च प्रवृत्तिः साध्ये, न सिद्धेऽर्थे इति। मा भूत् सिद्धे सामर्थ्यकल्पना, ततः किमित्यत्राह—**अक्लृप्तेति**। अतोऽर्थापत्तेरनुदय इत्यर्थः॥ विरोधं न्यायसूत्राभ्यां विरुद्धमेतदिति दूषयति—**उच्यत इति**।

---

त्वेकप्रमाणाभाव इत्याशङ्क्याह—**प्रमाणान्तरस्येति** ॥

एतत्सर्वं सूत्राक्षराभिप्रायापरिज्ञानादेवोक्तमिति परिहरति—**उच्यत इति**। '**दृष्टो हि तस्यार्थः**' इत्यादिभाष्योक्त एव सूत्रार्थ इति; तत्राह—**भाष्यकारेति**। [सूत्रकारभाष्यकारयोरभि] प्रायो वृद्धव्यवहारव्युत्पत्तितोऽवगत इति; तत्राह—**लौकिक**

वा न्यायः सम्यगवगतो भवता। पश्यतु भवान्। 'देवदत्त गामभ्याज शुक्लां दण्डेने'ति प्रवर्तकाभ्याजेतिपदातिरेकिणां देवदत्तादिभूतार्थवादिनामप्रवर्तकानामपि प्रवर्तकादेव वाक्यात् भूतवस्तुविषयमपि सामर्थ्यं प्रतीयते न वेति। प्रतीयते चेत् निष्प्रयोजनत्वमानर्थक्यम्, न निरालम्बनत्वम्। तदाह भाष्यकारः—

**अपिच आम्नायस्य क्रियार्थत्वादित्यादिना भाष्येण।**

प्रयोजनं चानन्तरं पारम्पर्येण वा सुखावाप्तिर्दुःखपरिहारो वा स्यात्। अतस्तदर्थक्रियानुपयोग्यर्थवाचिनां 'सोऽरोदीत्' इत्यादिपदानां भवत्वानर्थक्यम्। ब्रह्मात्मत्वावगतिसमन्वितानां तु परमपुरुषार्थफलानां कथं निष्प्रयोजनत्वम्। स्यादेतत्—यद्यपि प्रवर्तकादेव वाक्यात् भूतार्थविषयमपि सामर्थ्यं प्रतीयते, तथापि

---

वक्तुं (परा)[वि]मर्शमाह — **पश्यतु भवानिति**। (आद्ये) [अन्त्ये]सर्वपदानां कार्यमात्रालम्बनत्वापत्तिं मत्वा (अन्त्येन) [आद्ये]तत्प्रतीत्यन्यथानुपपत्त्याख्यन्यायादालम्बनं सिद्धे सामर्थ्यं चास्ति, अतो न्यायेन तन्मूलसूत्रेण च विरुद्धं त्वयोक्तं निरालम्बनत्वमित्याह—**प्रतीयते चेदिति**। उक्तेऽर्थे **भाष्यमवतारयति—तदाहेति**। अस्तु तर्हि निष्प्रयोजनत्वं आनर्थक्यमित्याशङ्क्य, तदपि न वेदान्तानामिति वक्तुं प्रयोजनं तावदाह—**प्रयोजनं चेति**। ततः किमित्यत्राह—**अतः तदर्थेति**। तर्हि वेदान्तानामपि सुखदुःखप्राप्तिपरिहारौ प्रयोजनं यस्याः तस्यां क्रियायामनुपयोग्यर्थवाचित्वान्निष्प्रयोजनत्वं स्यादित्यत्राह—**ब्रह्मात्मेति**। स्वार्थबोधेनैव फलवत्त्वान्न क्रियानुपयोगित्वान्नैष्फल्यमित्यर्थः॥

अत्र **प्राभाकरः** शङ्कते—**स्यादेतदिति**। अनन्वितस्य वा अन्यान्वितस्य वा भूतार्थस्यावगतिर्न सम्भवति, तस्य सङ्गतिग्रहकाले शब्दसामर्थ्य-

---

इति। सोऽपि मया दर्शित इति; बाढम्, न सम्यगवगत इत्याह—**सम्यगिति**। भाट्टं प्रति परिहारमाह—**पश्यतु भवानिति**। अत्र प्राभाकरः प्रत्यवतिष्ठते—**स्यादेतदिति**॥

नाप्रतिपन्नभूतार्थावगतेः संभवः। क्रियार्थतयैव संसर्गावगमात्। न हि गोपदात् तदर्थः सास्नादिमत्पिण्डधर्मत्वेनावगतो व्युत्पत्तिकाले पुनः प्रयोगान्तरेष्वप्रतिष्ठितः केसरादिमत्पिण्डधर्मत्वेन वा प्रतीयते। विषम उपन्यासः। गोपदस्याभिधेयसम्बन्धे न नानाविधसामर्थ्यमुपलब्धम्। अतो युक्ता एकरूपैव प्रतीतिः। शब्दान्तरार्थान्वये पुनः प्रतिविभक्ति प्रतिपदार्थान्तरं च प्रयोगभेदादन्यथान्यथा च सम्बन्धग्रहणकाले एवावापोद्वापनिबन्धनः समन्वयो दृश्यते। तेन द्रव्यगुणक्रियाभिधायिभिः पदैः सम्बन्धयोग्यताभिधायिविभक्तिसंयुक्तैः प्रयोगैदम्पर्यवशादनियतः सम्बन्धो व्युत्पत्तिकाले निरूपितः। तथा च 'वषट्कर्तुः प्रथमभक्षः' 'तस्मात्पूषा प्रपिष्टभागः' इत्येवमादौ क्रियाशून्यानां

---

विषयत्वेनाप्रतिप्रन्नत्वात् कार्यशेषत्वेनैव तदा संसर्गावगमाच्चेत्यर्थः। एतत् दृष्टान्तेन विशदयति—**न हि गोपदादिति**। विषमो दृष्टान्तः। गोपदस्य व्युत्पत्तिकाले नानाभूतेऽर्थे सामर्थ्यस्याप्रतिपन्नत्वादेकरूपा प्रतीतिर्युक्ता अभिहितान्वयवादे। अन्यान्विताभिधाने त्वन्येषां नानात्वेन नानासामर्थ्यस्यावगमात् शब्दानां न कार्यशेषत्वेनैवैकरूपसंसर्गप्रतीतिः अयुक्तत्वादिति दूषयति—**विषम इति**। प्रथमावगतकार्यपरतायाः त्यागापातादेकरूपैव शक्तिर्गृह्यते मयापीत्या(शङ्कते—**न द्रव्येति**)[शङ्क्याह—**तेन द्रव्येति**।] अन्विते कार्ये शक्तिनियमेऽपि यथा 'पूषा प्रप्रिष्टे'त्यादौ केवलभूतसंसर्गः प्रतीतः तथा वेदान्तेऽपि स्यादित्याह—**तथा(पी)[चे]ति**। तत्रापि क्रियासम्बन्धनिमित्त

---

**प्रतिविभक्तीति**। गौः गच्छति, गामानय, गवा सह गच्छ, गवे घासो दीयताम्, गोर[धो गच्छेः] (श्चे) गोः पयः, गवि लोमानि, इत्याद्यन्वयभेदो द्रष्टव्यः। **प्रतिपदार्थान्तरमिति**। गां पश्य, आनय, प्रतिनय, प्रतिगच्छ, बधान, इत्यादिद्वितीयाविभक्तिनिर्दिष्टस्य प्रतियोग्याद्यन्यपदार्थैरन्वयभेदो द्रष्टव्यः। अन्यास्वपि विभक्तिषु प्रत्येकमेवमेवोह्यम्॥

समन्वयो दृश्यते। यस्तु कर्तव्य इति क्रियासम्बन्धः स समन्वयनिमित्तः। न तन्निमित्तः समन्वयः॥

यत्तु 'तद्भूतानां क्रियार्थेन समाम्नायः' इति सूत्रयामास जैमिनिः, तदपि सिद्धेषु रूपादिष्वर्थेषु वर्तमानानां सामानाधिकरण्याद्यर्थत्वेन समाम्नायः—समुच्चारणमिति यतो दर्शितः समन्वयो विशेषणविशेष्यत्वेनापि। क्रियार्थेनेति तु धर्मजिज्ञासोपक्रमात् प्रकृतोपयोगितया सूत्रितम्। तथा च भाष्यकारोऽपि—'दृष्टो हि तस्यार्थः कर्मावबोधन'मित्यर्थसद्भावमात्रे कथनीये 'कर्मावबोधनम्' इति प्रकृतोपयोगित्वेनैवोक्तवान्। तदेतदाह भाष्यकारः—**यदपि शास्त्रतात्पर्यविदामनुक्रमणमित्यादि-भाष्येण**। अत एव पूर्वेण तन्त्रेणागतार्थत्वाच्छारीरकारम्भः॥

संसर्गावगम इत्याशङ्क्य, वैपरीत्यमित्याह—**यस्त्विति**। भूतसंसर्गस्यावगमजन्याकाङ्क्षाधीनत्वात् अध्याहारस्येत्यर्थः॥

सूत्रकारेणैव वृद्धव्यवहारानुसारिणा कार्यशेषत्वेनैव संसर्गज्ञानमुक्तं तद्भूतानामिति ; इत्यत्राह—**यत्त्विति**। तदप्यनुगुणम्, रूपादौ वर्तमानानां गुणगुण्यादिशब्दानां सामानाधिकरण्यार्थत्वेन यदुच्चारणमिति गुणगुण्यादीनां विशेषणविशेष्यभावेनापि संसर्गावगमस्य भाष्य एवोक्तत्वादित्यर्थः। **समाम्नाय** इत्यस्यार्थः समुच्चारणमिति। सामानाधिकरण्याद्यर्थत्वे क्रियार्थेनेति वचनं कथं स्यादित्यत्राह—**क्रियार्थेनेति**। एवं वेदान्तैः सिद्धवस्त्ववगमस्वीकारेऽप्याम्नायस्य कर्मावबोधनमर्थ इति भाष्यविरोधः स्यादित्यत्राह—**तथा च भाष्यकारोऽपि** इति। सर्वाम्नायस्य कर्मावबोधोऽर्थ इति विवक्षया न भवतीति कुतोऽज्ञायीत्यत्राह—**अर्थसद्भा(वेऽपि)[वमात्रे] इति**। वेदस्यानर्थकत्वे शङ्किते अर्थमात्रसम्बन्धोक्त्या ह्ययोगव्यवच्छेदे तात्पर्यादित्यर्थः। पृथक् शास्त्रारम्भान्यथानुपपत्त्यापि ब्रह्मपरा वेदान्ता इत्याह—**अत एवेति**॥

तद्भूतानामिति सूत्रस्य शाबरभाष्यकारव्याख्यां दर्शयति—**तदपीति**।

तत्र हि वेदस्य विवक्षितार्थत्वं स्वतःप्रामाण्यं स्वरूपे च विज्ञानोत्पत्तौ शब्दस्य सामर्थ्यमित्येतत् सर्वमवगतम्। क्रियार्थेन समाम्नाय इति तु धर्मजिज्ञासाप्रतिज्ञानुसारेण सूत्रितम्। इह पुनः 'तत्तु समन्वयात्' इति विशेषणविशेष्यात्मकमपि गौणमपि सामानाधिकरण्यं विहायैकस्मिन्निरंशेऽधिकरणे 'तत्त्वमसि' इति समन्वयो मुख्यः प्रदर्शितः। तथा च भगवान् पाणिनिरव्यतिरिक्ते प्रातिपदिकार्थमात्रे प्रथमां स्मरति। न अस्तिक्रियाकर्त-

---

नन्वर्थाभेदे कथं पृथगारम्भ इति, भेदमाह—**तत्र हीति**। साध्यो धर्मः (सर्व)[तत्र]शब्दार्थः, इह तु भूतं ब्रह्म जिज्ञास्यमिति विशेषः। तत्र 'आम्नायस्य क्रियार्थत्वात्' इति सर्वस्य वेदस्य क्रियापरत्वमुक्तम्, इह तु वेदान्तानां ब्रह्मनिष्ठत्वमुक्तम्, अतः शास्त्रं पूर्वतन्त्रविरोधादनारभ्यमित्यत्राह—**क्रियार्थेनेति**। तत्र कर्मोपक्रमानुसारेण कर्मकाण्डस्य तन्निष्ठत्वमुक्तम्, इह तु ब्रह्मप्रक्रमानुसारेण 'तत्तु समन्वयात्' इति ब्रह्मनिष्ठत्वं ब्रह्मकाण्डस्योक्तम्, अतो न विरोध इत्यर्थः। यद्वा, द्वादशलक्षण्यां तत्तदाशङ्कानिरासेन वेदप्रामाण्यं निरूपितम्, चतुर्लक्षण्यां च तदेव निरूप्यमित्यर्थाभेदात्पृथगारम्भ एव न युक्त इत्यत्राह—**तत्र हीति**। तत्र कर्मकाण्डस्य कारकादिक्रियायां प्रामाण्यं निरूपितम्। इह त्वेकरसे वस्तुनि निरूपितमिति भेदोऽस्तीत्यर्थः। नन्विहापि 'तत्त्वमसि' इति अस्तिक्रियाश्रवणात् क्रियानिष्ठं वाक्यमित्यत्राह—**विशेषणेति**। भेदनिषेधश्रुतेः सामानाधिकरण्यस्य मुख्यतया विशेषणविशेष्यत्वेनाप्यन्वयायोगेन क्रियाकारकान्वयस्य सुतरामसम्भवात् एकरसनिष्ठमित्यर्थः॥

प्रातिपदिकार्थानां एकरसतया अन्वयेऽपि प्रथमाविभक्तेः अव्यभिचारात् तदर्थस्य कारकत्वस्यान्वयात् कथमेकरसता? कथं च न क्रियानिष्ठता? इत्यत्राह—**तथा चेति**। क्रियापदाभावे प्रथमादिपुरुषत्रये गम्यमाने अस्तिधातुः प्रत्ययान्तोऽध्याहार्य इति वदता **कात्यायनेन** अध्याहार्यस्य कर्तृवाचकत्वात् समानाधिकृतप्रथमाविभक्तिः अस्तिक्रियाकर्तरि स्मृता सर्वस्य

येनातिरिक्तेऽर्थे। तेन च कात्यायनस्य 'अस्तिर्भवन्तीपरः[प्रयोक्तव्यः प्रथमपुरुषे गम्यमाने'] इति मतं नानुमन्यते। दृश्यते च 'फलिता अमी द्रुमाः' 'राज्ञोऽयं पुरुष' इत्यस्तिक्रियाशून्यः समन्वयः। न तत्रापि ये फलिता द्रुमास्ते सन्ति यो राज्ञः पुरुषः सोऽस्तीति विवक्षितम्। अपि त्वेते द्रुमाः फलिताः अयं पुरुषो राज्ञ इति सम्बन्धमात्रावसितं वाक्यम्। एवं सामान्यतः सिद्धस्य जग-

---

वाक्यस्य क्रियानिष्ठता चेत्यत्राह—तेनेति। पाणिनीयविरोधात्तद्वाक्यार्थमुपेक्षते असत्सूत्रकार इत्यर्थः। न चार्थात् द्योत्यलिङ्गसङ्ख्याद्यन्वयादेकरसत्वविरोधः, 'प्रज्ञानघन एव' 'अद्वितीयम्' इत्यादिवाक्य(भेदेन)[विरोधेन] अनिर्वाच्यत्वात्तेषामित्यूह्यम्॥

नन्वस्तिक्रियामप्यपहायान्वयो न दृष्ट इत्यत्राह—दृश्यते चेति। तत्राप्यस्तिक्रिया विवक्षितेत्यत्राह—न तत्रापीति। क तर्हि वाक्यं पर्यवसितमित्याशङ्क्य, आकाङ्क्षायाः संसर्गमात्रज्ञानान्निवृत्तेः प्रवृत्तेश्चावगतसंसर्गसामर्थ्यादेव सिद्धेः संसर्गमात्रे इत्याह—अपि त्विति। नाकाङ्क्षानिवृत्तिरुक्तक्रियावाक्येऽपि शक्येत्यूह्यम्। अतः तद्वदेव क्रियामपहाय पर्यवसिता वेदान्ता इत्याह—एवं सामान्यत इति। यद्यस्तिक्रियान्वयो न

---

तेनेति। येन पाणिनिस्मरणस्य प्रयोगानुसारित्वं कात्यायनस्मरणस्य प्रयोगाननुसारित्वं तेनेत्यर्थः। अस्तिर्भवन्तीपरः प्रयोक्तव्यः प्रथमपुरुषे गम्यमाने इति। अस्तिधातुः भवन्तीपरः—लट्परः। प्रथमपुरुषे इति। घटोऽस्तीति प्रयोगे [यावान्] तावान् घट इति प्रयोगोपि भवेदित्यर्थः। पाणिनिस्मरणस्य प्रयोगानुसारित्वं दर्शयति—दृश्यते चेति। कात्यायनीयमतस्य प्रयोगाननुसारित्वं दर्शयति—न तत्रापीति। सामान्यतोदर्शनानुमानसिद्धजगत्कारणमनूद्य तस्य सच्चिदानन्दैकरसब्रह्मत्वमद्वितीयत्वञ्च 'सत्यं ज्ञान'मित्याद्यवान्तरवाक्यानि अवान्तरतात्पर्येण प्रतिपादयन्ति, अहंप्रत्ययसिद्धप्रत्यगात्मनोऽवान्तरवाक्यप्रतिपादितब्रह्मात्मैक्यं तत्त्वमस्यादिमहावाक्यानि तात्पर्येण प्रतिपादयन्ति इति प्रतिज्ञातम्, तत्सिद्धमित्याह—एवं सामान्यत इति॥

त्कारणस्य सर्वज्ञत्वादिस्वभावत्वे त्वम्पदार्थस्य च ब्रह्मात्मतायां समन्वयो वेदान्तवाक्यानां सिद्धः। न तत्रास्तिक्रियाया वस्तुस्वरूपान्तर्वर्तिन्या अप्यनुप्रवेशः। दूरत एव बाह्यायाः॥

किञ्च, 'ब्राह्मणो न हन्तव्यः' इति प्रतिषेधवाक्यसमन्वये न क्रिया क्रियार्थो वा अवगम्यते। किन्तु क्रियानिवृत्तिरेव नियमेन प्रतीयते। व्रतशब्दसमन्वयात्तु प्रजापतिव्रतादिषु 'नेक्षेतोद्यन्तमादित्यम्' इत्यादिष्वनीक्षणं मानसी संकल्पक्रिया प्रतीयते। अनीक्षणं कुर्यात्—नेक्षेऽहमिति संकल्पयेदिति। न नञः समन्वयमात्रात्। तस्य समन्वीय-

---

युक्तः तर्हीतरक्रियान्वयः स्यादित्यत्राह—दूरत इति। सत्तातिरेकेणानिरूप्यतया वस्तुस्वरूपान्तर्भावयोग्यायाः श्रुताया अस्तिक्रियायाः क्रियाकारकादिभेदासहत्वेनान्वयायोगे किमुत तद्विपरीताया इत्यर्थः॥

अन्विते कार्ये सङ्गतिग्रहेऽपि 'पूषा प्रपिष्टभागः', 'फलिता द्रुमाः' इत्यादिदृष्टान्तबलात् केवलसिद्धनिष्ठत्वं वेदान्तानामसाधि, संप्रति प्रतिषेधवाक्यदृष्टान्तादपि तत्सिद्धमित्याह—**किञ्चेति**। ब्राह्मणहननाभावोऽपि क्रिया क्रियार्थो वा, अतः क्रियापर्यवसितं तद्वाक्यमित्यत्राह—**न क्रिया क्रियार्थो वेति**। प्राप्तक्रियानिवृत्तित्वादित्यर्थः। 'नेक्षेतोद्यन्तमादित्यम्'इत्यादौ यथा नेक्षे इति ईक्षणविरुद्धा सङ्कल्पक्रिया विधीयते, तथा न हन्यादिति हननविरुद्धा सङ्कल्पक्रिया विधीयतामिति; नेत्याह—**व्रतशब्देति**। नञः स्वसम्बध्यमानपदार्थाभावो मुख्यार्थः, तस्यानुष्ठेयाभिधायिव्रतशब्दोपक्रमेण च बाधात् नेक्षेत्यादौ स्वसम्बन्धिपदार्थविरुद्धा क्रिया लक्षणया विधीयते नेह तथा अन्वयोऽस्तीत्यर्थः। यथा नञः स्वसम्बन्धिपदार्थाभावो मुख्योऽर्थः तथा तदन्यतद्विरुद्धावपि, अतो नञ्सम्बन्धमात्रात्तत्र विधिर्न लक्षणेत्यत्राह—**न नञः**

---

प्रमाणान्तरविरोधाभावे नञः सर्वत्र निवृत्तिरेवार्थ इत्याह—**नियमेनेति**।

मानार्थाभावकरत्वात् । न च स्वभावप्राप्तहन्त्यर्थानुरागेण इत्यादिभाष्यस्यायमर्थः—स्वभावत एव रागादिनिमित्ताच्छास्त्रमन्तरेणैव हननक्रिया प्राप्ता यदि नञा अनुरज्यते—विशेष्यते तदा भवत्यहननमिति । ततश्चाहननं कुर्यादिति वाक्यार्थः स्यात् । न हननं न कुर्यादिति हननक्रियानिवृत्त्यौदासीन्यम् । अतो न हन्यामिति मानसी संकल्पक्रिया अपूर्वा अभिहिता स्यात् । न चैतद्युक्तम् । नञः सम्बन्ध्युपमर्दरूपत्वात् । अनीक्षणे तु व्रतशब्दबलात् तथा समन्वयो न नञः सामर्थ्यादित्युक्तम् ॥

---

स(म्बन्धे)[मन्वये]ति । अनेकार्थत्वस्यान्याय्यत्वेनाभाव एव मुख्यत्वादन्यत्र लक्षणेत्यर्थः ॥

तर्हि कथं पुनः सङ्कल्पविधिशङ्का यतः तन्निरासकमेतद्वाक्यं स्यादित्यत्राह—(अ)[भाष्य]स्यायमिति । अस्मिन् वाक्ये किं ब्राह्मणस्य नञा सम्बन्धः प्रत्ययार्थस्य वा ? प्रकृत्यर्थस्य वा ?। नाद्यौ, ब्राह्मणस्य कार्यस्येष्टसाधनत्वस्य वा प्रत्ययार्थस्य प्रतिषेधायोगात् । यद्यन्त्यः, तदा हननस्य प्रवृत्तत्वात् 'नामधात्वर्थयोगी'ति न्यायाच्च तदभावबोधकत्वायोगात् हननविरुद्धसङ्कल्पविधिरहननं कुर्यादिति वाक्यार्थः स्यात् हननं न कुर्यादिति हननक्रियानिवृत्त्याख्यमौदासीन्यं वाक्यार्थो न स्याच्च। अतो न हन्यामिति सङ्कल्पो विधेय इत्याशङ्केत्यर्थः। तत्र किं मुख्यार्थतया सङ्कल्पो विधेयः ? मुख्यार्थे बाधात् लक्षणया वा ?। नाद्य इत्याह—नैतद्युक्तमिति। नञो ह्यभावो मुख्योऽर्थः। न च भावान्तरस्यैवाभावत्वात् सङ्कल्पो मुख्योऽर्थः, भावस्य निष्प्रतियोगिकत्वेनाभावत्वायोगादित्यर्थः । अनीक्षणवदिहापि मुख्यार्थतेति, तत्रापि नेत्याह —अनीक्षणे त्विति ॥

---

**अर्थाभावकरत्वादिति**। अर्थाभावबोधकत्वादित्यर्थः। **न हननं न कुर्यादिति**। **हननक्रियानिवृत्तिः** हनने भ्रान्त्या प्रतिपन्नहितसाधनतानिवृत्तिरित्यर्थः। हननं न कुर्यादिति तां प्रत्ययार्थभूतहितसाधनतानिवृत्तिं प्रमेयत्वेन स्वीकृत्य अर्थसिद्धौदासीन्यलक्षणप्रयोजने पर्यव-

**ननु नञर्थे नियोगः प्रतिषेधेषु। तेन यागाद्यनुष्ठानादिव नञर्थानुष्ठानान्नियोगः साध्यः। किमुच्यते क्रियानिवृत्त्यौदासीन्यं प्रतीयत इति ?। वार्तमेतत्। नञर्थो हि नाम न क्रिया नापि साधनम्। अपि तु येन संसृज्यते तस्याभावः न तत्सिद्धिहेतुः। एवं प्रतिषेधस्य विधेरन्यत्वं सिध्यति। अन्यथा विधिरेव सर्वं स्यात्। तस्मात् संसृज्यमानाभावमात्रे प्रतिषेधवाक्यं पर्यवस्यति। तत्र न विधिगन्धोऽपि विद्यते। तच्च संसृज्यमानं विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नाभ्यनुज्ञानानामभावात् प्रतिपाद्यधर्मः प्रतिषिध्य-**

---

अत्र साक्षात् प्राभाकरः शङ्कते—**ननु नञर्थे इति**। अस्तु भावातिरिक्ताभाव एव नञो मुख्यार्थः, तथापि तेन नियोगं साधयेदिति नियोगपर्यवसितं वाक्यम्। न च अभावत्वात्तत्र नियोगायोगः, याग इव श्रुत्युक्तत्वादेवोपपत्तेरित्यर्थः। क्रियानिवृत्त्याख्यौदासीन्ये प्रतीयमाने कथं नियोगो वाक्यार्थः स्यादित्याशङ्क्य, प्रत्ययार्थवैयर्थ्यापातान्नेत्याह— **किमुच्यत इति**। नियोगे हि क्रियातत्साधनयोर्दृष्टो हेतुभावः, हननाभावस्य त्वतद्रूपस्य (त्व)[अ]सम्भवी, न च श्रुत्युक्तत्वात्सम्भवः, असम्भावितस्य श्रुत्युक्तत्वासिद्धेरिति दूषयति—**वार्तमेतदिति**। **तत्सिद्धीति**। नियोगनिष्पत्तीत्यर्थः। विधिनिषेधव्यवस्थान्यथानुपपत्त्यापि न नियोगावसानं वाक्यमित्याह—**एवमिति**। न च नियोगस्वरूपाविशेषेऽपि भावविषयो नियोगो विधिः अभावविषयो निषेध इति व्यवस्था। सर्वविधीनां विषयवैलक्षण्याद्विध्यन्तरापेक्षया निषेधत्वापत्तेरित्यर्थः॥

द्वितीयं दूषयति—**तच्चेति**। प्रत्यक्षादिव्यवहारस्य पुरुषान्तरनिबन्धन-

---

सितं न भवति वाक्यमित्यर्थः। अभावस्य नियोगविषयत्वयोग्यता नास्ति इत्याह—**नञर्थो हीति**। नियो(ग:ब) [गसंब] न्ध(वि)दूषणमाह— **अपि तु येनेति**। **तच्च संसृज्यमानं** पुरुषद्वयसापेक्षविध्यादिकं न सम्भवति। परिशेषात्, **प्रतिपाद्यधर्मः** हननक्रियाधर्म इत्यर्थः। तदेव स्पष्टीकरोति—**प्रतिषिध्यमानेति**। क्रियासाध्यफलाय क्रिया प्रार्थ्यत इति

मानक्रियाफलप्रार्थना प्रतिषेधवाक्ये लिङाद्यर्थः। तेन तदभावः प्रतिषेधार्थः। स च प्रागभावः स्वभावसिद्धः। तस्मात् सं[तत्सं]स्कारोद्बोधनिमित्तसन्निधावपि तत्प्रतिबन्धे प्रयत्न आस्थेयः। स च यद्यपि साध्यः, तथाप्यन्वयव्यतिरेकगम्यो न शब्दार्थः। तत्प्रतिपादकपदाभावाच्च। एकवाक्ये संसृष्टपदार्थव्यतिरेकेण

---

त्वाभावेन विध्यादीनामभावादनुष्ठेयधात्वर्थधर्मो हितसाधनत्वं प्रत्ययार्थः। तेन प्रधानेन नञ् सम्बध्यते। अतः तदभावे मुख्यार्थे बोध्ये बाधाभावान्न लक्षणा स्यात्। न च हननस्येष्टसाधनत्वबोधकाध्यक्षबाधः। सुखस्य स्वसम्बन्धिदुःखाधिकस्येष्टशब्दार्थत्वेन स्वसाध्यसुखादधिकतरदुःखसाधनस्य हननस्यानिष्टसाधनत्वेन भ्रान्तित्वात् प्रत्यक्षाभिमतस्यैव नेदं रूप्यमित्याप्तवाक्यादिव पूर्वाबाधन्यायेन बलवच्छ्रुत्या बाधोपपत्तेरित्यर्थः। तस्यापि साध्यत्वान्न सिद्धनिष्ठं वाक्यमित्यत्राह—**स चेति**॥

अथापीष्टसाधनत्वभ्रान्तिहेतुरागाद्युत्पादकतत्संस्कारस्योद्बोधकपापादेः सन्निधानात् पुनश्च तद्भ्रान्त्या प्रवृत्तिः स्यात्, अतः तद्विरुद्धसङ्कल्पनिष्ठता वाक्यस्य वाच्येत्यत्राह—**तस्मादिति**। मानबाध्यसर्वभ्रान्तीनां पुनरावृत्त्यापातान्न तत्सन्निधिर्वक्तुं शक्या, तथापि तन्नाशे यत्नः कार्य इत्यर्थः। तर्हि तद्विधिनिष्ठं वाक्यमिति, नेत्याह—**स चेति**। हननं नेष्टसाधनमनिष्टसाधनं चेति श्रुत्या अर्थाच्चावगतौ, तद्विरुद्धभ्रान्तिहेतूद्बोधकपापादिनाशके पुण्यादावन्वयव्यतिरेकाभ्यामेव प्रवृत्तेः न शब्दापेक्षेत्यर्थः। वाक्यस्य तद्विधौ सामर्थ्याभावाच्चेत्याह—**तत्प्रतिपादकेति**। अनिष्टसाधकत्वज्ञापकशब्दसामर्थ्याच्चेत्तत्र

---

**क्रियाफलप्रार्थना** हितसाधनतेत्यर्थः **प्रागभाव इति**। अत्यन्ताभाव इत्यर्थः॥

**तस्मात् तत्संस्कारेति**। हितसाधनत्वभ्रमहेतुभूतसंस्कारोद्बोधनिमित्तभूतस्वार्थलाभादेः **सन्निधावपी**त्यर्थः। **तत्प्रतिबन्धे इति**। तस्य भ्रमहेतुभूतसंस्कारस्य प्रतिबन्धे इति यावत्। **प्रयत्नो** नाम विपरीतभावनाजनितसंस्कारप्रचयसंपादनम्। पदाभावे पदार्थत्वं न स्यात्, वाक्यार्थत्वं किमिति न भवेदित्याशङ्क्याह—**संसृष्टपदार्थेति**। नञर्थ-

**अन्यत्र वाक्यार्थत्वाभावाच्च। अतो यश्चार्थादर्थो न स चोदनार्थः। वाक्यं तु क्रियाशून्यमेवावसितम्। न साध्यं किञ्चित्तेन विषयीकृतम्। औदासीन्यमात्रावसितत्वात्तस्य॥**

**अथ पुनर्नञर्थविषयो नियोग एव प्रतिषेधेऽपि वाक्यार्थ इत्यभिनिवेशः। भवतु, तथापि प्रतिषिध्यमानक्रियानिवृत्त्या स सिध्यति। क्रियोपादाने च तत्फलप्रार्थनैव हेतुरिति तत्कारण-प्रतिबन्धे प्रयत्नास्थानान्नियोगसिद्धिः। तच्चान्वयव्यतिरेकाव-**

---

प्रवृत्तिः, तर्हि तत्पर्यवसितं वाक्यमिति, नेत्याह—**यश्चार्थादिति**। क्व पर्यवसितं तर्हीत्यत्राह—**वाक्यं त्विति**। मा भूत् केवलार्थिकार्थे साध्येऽवसितम्, श्रौतविशिष्टे तु स्यादित्यत्राह—**न साध्यमिति**। अर्थसि(द्धे)[द्ध]देहादेरपि शब्दार्थत्वापत्तिमूलेन यश्चार्थादर्थ इति न्यायेनाभावमात्रनिष्ठत्वान्नेत्यर्थः॥

लिङादेरपूर्वे सङ्गतिग्रहणात् प्रत्ययेनापूर्वं भाति, तस्य विषयनियमात अन्यस्य तद्विषयत्वायोगाच्च निषेधवाक्येन नञर्थविषयो नियोगोऽर्थः। अतः कथमिष्टसाधनत्वाभावनिष्ठमित्याशङ्क्य, अपूर्वमन्यच्च सर्वमप्रामाणिकमिति सूचयन्नङ्गीकरोति—**अथ पुनरिति**। हननक्रियानिवृत्तेरौदासीन्यमात्रत्वे तस्याः साध्यत्वाभावान्नियोगसिद्धिर्न स्यादिति दूषयति—**तथापीति**। स चानुपपन्न इति शेषः। कृत्य[वच्छेदक]भावा(द्द)[द]र्शनेन कार्यबुद्धेः सत्त्वेऽप्यप्रयोजकत्वादित्यर्थः। निवृत्त्या तत्सिद्धिमुपेत्य दोषं वक्तुं हननक्रियायां प्रवृत्तौ हेतुमाह—**क्रियोपादाने** (वे)[चे]ति। तस्य हेतोः स्वहेतुनाशेन नाशं विना हनननिवृत्त्ययोगात्तद्धेतुनाशे यत्नः कार्यः, तेन नियोगनिष्पत्तिश्च स्यादित्याह—**तत्कारणेति**। अतो वाक्यं तर्हि तद्विधौ वाक्यं पर्यवस्यति, तन्नेत्याह—**तच्चेति**। पुण्यादि।

---

**विषय इति**। नञर्थविषयक इत्यर्थः। अहितसाधनत्वभावनाप्रकर्षजनितसंस्काराद्धितसाधनत्वभ्रमहेतुसंस्कारनिवृत्तिः [तया] भ्रमनिवृत्तिः, हननानुष्ठापकभ्रमनिवृत्त्या हनननिवृत्तिः, एष क्रमोऽन्वयव्यतिरेकप्रमाणसिद्धः। अतो नियोगाधीनानुष्ठेयत्वाभावात् हनन(मि)[म]तिनिवृत्तेः नियोगाधीनत्वानुष्ठानेन नियोगनिष्पादकत्वं न सम्भवतीत्याह—**भवत्विति**। तर्हि

सेयमिति पूर्वोक्तान्मार्गान्न विशिष्यते । तदेवं वृद्धव्यवहारानुसारेणैव समन्वयानुसरणे सति तद्गम्यं ब्रह्म न धर्मवच्चोदनागम्यम् । दर्शितानि च वेदान्तवाक्यानि कारणसामान्ये सिद्धे तद्विशेषावगमाय समन्वितानि 'यतो वा इमानि भूतानि जायन्ते' इत्यादीनि 'तत्त्वमसि' इत्यादीनि च ॥

यत्पुनरुक्तम् — प्रतिपन्नब्रह्मात्मभावस्यापि पूर्ववत् संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमस्य, ततो न तन्मात्रे तस्य पर्यवसानमिति; अत्रोत्तरम्—**नावगतब्रह्मात्मभावस्येत्यादि** ॥

अस्यायमर्थः—न कर्मनिमित्तस्तावच्छरीरसम्बन्धः । इतरेतराश्रयदोषात् क्रियादिरहितत्वाच्च चैतन्यस्य । अनादि-

---

प्रवृत्तेः प्रागेव पुण्याद्यनुष्ठानाद्धनननिवृत्त्यां नियोगस्य सिद्धत्वात्सिद्धनिष्ठं वाक्यं व्यर्थं च स्यादित्याह—**इति पूर्वोक्तादिति** । उक्तदृष्टान्तैरननुष्ठेयसमन्वये विध्यसंस्पृष्टकेवलसमन्वयगम्यं ब्रह्मेति सिद्धमित्याह—**तदेवमिति** ॥

तर्हि जगत्कारणत्वेन ब्रह्मणः सिद्धत्वात् वेदान्तवैयर्थ्यं अनुवादे प्रयोजनाभावादित्यत्राह—**दर्शितानीति** । **नावगतब्रह्मेत्यादिभाष्यं** पूर्वासङ्गतमित्यत्राह—**यत्पुनरुक्तमित्यादिना** । कर्मनिमित्तः सुखदुःखानुभवाख्यः संसारः कथं ब्रह्मावगमान्न स्यादित्यत्राह—**अस्यायमर्थ इति** । देहसम्बन्धादात्मनि कर्मोत्पत्तिः कर्मणा च देहसम्बन्ध इत्यन्योन्याश्रयत्वादविक्रियत्वाच्चात्मनो न कर्मनिमित्तो देहसम्बन्ध इत्यर्थः । एतद्देहसम्बन्धः पूर्वेण कर्मणा तच्च कर्म ततः पूर्वस्माद्देहसम्बन्धात् स च ततः पूर्वेण कर्मणेति बीजाङ्कुरवदनादित्वान्नान्योन्याश्रयः, नाप्यनवस्था मूलक्षयायेत्यत्राह—**अनादीति** । बीजाङ्कुरपरम्परायाः सम्प्रति दृष्टत्वात्, पूर्वकालोऽपि तत्परम्परावान् कालत्वात्

---

शरीरेन्द्रियसम्बन्धमनपेक्ष्य केवलात्मनैव कर्मारभ्यतामिति ; तत्राह—**क्रियादिरहित-**

त्वेऽप्यन्धपरम्परावदप्रतिष्ठत्वात् । तन्निमित्तत्वे च पुत्रादि-शरीरेष्विव गौणत्वप्रसङ्गात् । तथानुभवाभावात् प्रसिद्धगौणत्व-प्रकारासम्भवात् । पुत्रादिशरीरेणेव स्वशरीरेणापि प्रमातृत्वाभाव-प्रसङ्गात् । [परिशेषात् ]पारिशेष्यादविद्यानिमित्तः शरीरसम्बन्धः । तस्यां च निवृत्तायां तत्सम्बन्धनिवृत्तौ कथं पूर्ववत् तन्निमित्तः सुखदुःखानुभवः । तथा च श्रुतिस्मृतिवादा ब्रह्मविदः सर्वसंसार-प्रवृत्त्यभावं दर्शयन्त उदाहृता भाष्ये । तस्मान्न ब्रह्मात्मा-भिमानिनः पूर्ववत् संसारित्वम्, तदभिमानविरोधात् । वैषयिकस्तु

---

एतत्कालवदित्यनादित्वकल्पना युक्ता, कर्मादिपरम्परायास्त्वदृष्टत्वेनाप्रामाणिकानादित्वकल्पनायोगात् मूलक्षयः स्यात् , तत्कल्पने चातिप्रसङ्गः स्या-दित्यर्थः ॥

किञ्च, स्वदेहसम्बन्धो गौणः कर्मनिमित्तत्वात् पुत्रादिदेहसम्बन्ध-वदित्याह—**तन्निमित्तत्वे चेति** । गुरुमते सिद्धसाध्यतामाशङ्क्याह—**तथेति** । तदभावः सर्षपादौ तैलशब्दबुद्धिवत् देहे अहम्बुद्धिशब्दयोश्चिरा-भ्यासादित्यत्राह—**प्रसिद्धेति** । भेदेनानुभूयमानयोः अभेदव्यवहारो गौण-लक्षणं [इह] तु तदभावान्न गौणतेत्यर्थः । कर्मनिमित्तत्वे गौणत्वे च दोषान्तरम्—**पुत्रादीति** । अतः परिशेषाख्यव्यतिरेकानुमानात् अविद्या-निमित्तत्वे सिद्धे तस्यां विद्यया निवृत्तायां तज्जदेहादिसम्बन्धनिवृत्तौ तज्जन्यः संसारो न स्यादित्युक्तम् । तत्र विद्वदनुभवोपबृंहितमागममाह—**तथा चेति** ॥

प्रत्यक्षः संसारः पूर्ववत् कथं न स्यादित्यत्राह—**वैषयिकस्त्विति** । उक्तश्रुतिस्मृतिन्यायविद्वदनुभवैर्विरोधात्, 'सचक्षुरचक्षुरिव' 'तद्यथा अहि-

---

**त्वादिति** । देहादिष्वहमभिमानो गौण एव भवत्वित्याशङ्क्याह-**तथानुभवाभावादिति** । अतोऽविद्यामूलाहमभिमान एव शरीरसम्बन्ध इत्युपसंहरति—**परिशेषादिति** । **तन्निमित्त इति** । अहमभिमाननिमित्त इत्यर्थः । **संसारप्रवृत्त्यभावमिति** । सुख-दुःखलक्षणः संसारः प्रवर्त्यते येनात्माभिमानेन स तथोक्तः ॥

साक्षादनुभवाभिमानः संसारविषय आरब्धकर्मशेषनिमित्तः तिमिरनिमित्तद्विचन्द्रवत्। मनननिदिध्यासनयोर्न ब्रह्मावगत्युत्तरकालीनता, किन्तु श्रवणवदवगत्युपायतया पूर्वकालतैवेत्युक्तम् ॥

तदेवं सिद्धस्य वस्तुनः स्वरूपसत्तामात्रेणाप्रतिपन्नस्य प्रमाणविषयतया प्रमेयत्वात् विधीयमानक्रियाकर्मत्वे तु कारकत्वस्य प्रमाणान्तरसिद्ध्यपेक्षत्वात् ततः सिद्ध्यनुपपत्तेः वाक्यभेदप्रसङ्गात् प्रत्यक्षादिविरोधे देवताधिकरणन्यायासिद्धेः वाक्यान्तरसिद्धस्य कर्मकारकत्वे चतुर्विधस्यापि कर्मकार्यस्य तत्रासम्भवात्

---

निर्वयिनी' इत्यादिवाक्याच्च द्वैतदर्शनाभासः स इत्यर्थः। द्वैतदर्शनोपादानाज्ञाननिवृत्तौ कथं तद्दर्शनं स्यादित्यत्राह—**आरब्धकर्मेति**। न चारब्धकर्मणोऽपि स्वोपादाननिवृत्तेः सर्वकर्मक्षयागमाच्चाभावः, जीवन्मुक्तिश्रुतेः विद्यासम्प्रदायाभावप्रसङ्गाख्यन्यायाच्च यावदारब्धफलभोगं तदुपादानाविद्यावस्थाया ज्ञानेनाविरोधस्वीकारादित्यूह्यम्। यत्तु श्रवणोत्तरं मनननिदिध्यासनयोर्विधानात् साध्यान्तरमस्तीत्युक्तम्, तत्राह—**मननेति**। श्रवणजन्यावगत्युत्तरं (स्मृतिसंवादो ना)[स्मृतिसंवादाय] ज्ञानात्मकं किञ्चिन्न विधीयते। किञ्च, आपातश्रवणात् तथाविधज्ञानोत्तरमवगतिसाधनं श्रवणक्रिया यथा विधीयते तथा श्रवणं प्रति फलोपकार्यङ्गतया अवगतिसाधनमननादिक्रिया विधीयत इत्यर्थः ॥

वर्णकद्वयोक्तं संक्षिपति—**तदेवमिति**। मानान्तरानपेक्षं वेदान्तगम्यत्वं ब्रह्मणः प्रथमवर्णकोक्तमित्यर्थः। तच्छास्त्रगम्यत्वं विधेयज्ञानादिक्रियाकर्मत्वेन ब्रह्मण इत्यत्राह—**विधीयमानेति**। कारकस्यापि ब्रह्मणः क्रियावाक्येन सिद्धिः किं न स्यादित्यत्राह—**तत इति**। वेदान्तादित्यर्थः। देवताधिकरणन्याये-नोभयनिष्ठत्वेऽपि न वाक्यभेद इत्यत्राह—**प्रत्यक्षादीति**। तर्हि वाक्यान्तरसिद्धस्य ब्रह्मणः कर्मतेत्यत्राह—**चतुर्विधस्येति**। कुतोऽसम्भव (इत्यत्राह—

तत्कर्मकोपासनाद्देवताकर्मयागादिवत् स्वर्गोपमो मोक्षः फलं कल्प्येत, तस्य तद्वद्देवानित्यत्वप्रसङ्गात् 'ब्रह्म वेद ब्रह्मैव भवती'-त्यादिभ्यो ब्रह्मवेदनमोक्षफलयोर्निरन्तरत्वप्रतिपादकेभ्यो वाक्येभ्यो-ऽर्थादन्तराले क्रियानुप्रवेशनिराकरणात् 'तरति शोकमात्मवि'-दित्यादिश्रुतिभ्यो मोक्षप्रतिबन्धनिवृत्तिमात्रस्यैवात्मज्ञानफलस्य दर्शितत्वात् साध्यान्तराभावे क्रियानुपपत्तेः ब्रह्मात्मावगमस्य च मुख्यैक्याधिकरणस्य संपदादिवद्विकल्पनानुपपत्तेः प्रमाणजन्याया अपि विदिक्रियायाः कर्मत्वनिषेधात् विधीयमानोपास्तिक्रियाविषय-त्वस्य दूरनिरस्तत्वात् विदिक्रियाविषयत्वेऽपि समारोपितनिवर्तन-मुखेन नित्यसिद्धचैतन्यस्य ब्रह्मस्वरूपतासमर्पणात् वाक्यविषय-त्वोपपत्तेः सत्यपि वा विदिक्रियाकर्मत्वे तस्य च विध्यनायत्तत्वात् विधिच्छायानां संस्तावकत्वेनाहार्यत्वात् संसारनिवृत्तेश्च ज्ञान-फलस्य दृष्टत्वात् अतो विधिनिरपेक्षं स्वतन्त्रमेव ब्रह्म शास्त्र-प्रमाणकम् , वेदान्तवाक्यसमन्वयादिति सिद्धम् ॥

एवं च सति[पदानां]वेदान्तानां परस्परसमन्वयजनितवि-ज्ञानातिरेकेण चक्षुरादिवत् प्रवर्तकत्वस्याभावात् तद्विषयः शास्त्रा-

---

देवतेति हेत्वन्तरं ब्रह्मकाण्डस्येत्यर्थः ।) [इत्यत्र हेत्वन्तरम्—तत्कर्मकेति । ब्रह्मकर्मकेत्यर्थः ।] विदिक्रियाकर्मत्वस्वीकारवद्विधेयक्रियाया अपि स्यादित्यत्राह —**प्रमाणजन्येति** । अक्रियार्थानां निष्फलत्वात् फलपर्यवसानार्था वेदान्तानां क्रियाशेषता वाच्येत्यत्राह—**संसारेति**। (मानान्तराधिगत....) तत्र फल-माह—**अतो विधीति** । **स्वतन्त्रमेवेति** । मानान्तरानपेक्षमित्यर्थः ॥ **एवं चेति** ।

पृथक् शास्त्रारम्भानुपपत्त्याप्येतत् सिद्धमित्याह—एवं चेति । ब्रह्मणो विधिशेषतया शास्त्रगम्यत्वेऽपि ब्रह्मनिरूपणाय वेदान्तविषयः पृथगारम्भ

---

बहिरङ्गीभूततया पदार्थसाधकप्रमाणन्यायकलापमाश्रित्यार्थस्साधितः। इदानीं स्वरूप-

रम्भः पृथगुपपद्यते। अन्यथा अत्रापि बोधकत्वातिरेकेण प्रवर्तकत्वमपि चेत्, 'अथातो धर्मजिज्ञासे'त्येवारब्धत्वान्न पृथगारभ्येत। अथाप्यबहिस्साधनत्वात्ततः परिशेषितमिति, तथापि 'अथातः परिशिष्टधर्मजिज्ञासे'ति प्रतिज्ञा स्यात्, प्रवर्तकविशेषजिज्ञासनात्। तदेवं ब्रह्मावगमात् प्रागेव विधिविधेयप्रमाणप्रमेयव्यवहारः। परतस्तु प्रमातुः विधिविषयस्य चाभावान्न तत्सद्भाव इति। **अपि चाहुरिति** प्रसिद्धमेतत् ब्रह्मविदामिति पूर्वोक्तं न्यायं संक्षेपतः श्लोकैः संगृह्णाति। **गौणमुख्यात्मन इति।** गौणोऽहंमानः ममत्वेन सम्बन्धात् पुत्रदारादौ। अतः

उपपद्यत इत्यत्राह—**अन्यथेति**। तदा वेदान्तस्यापि प्रवर्तकत्वात्तद्विषयः पृथगारम्भो व्यर्थ इत्यर्थः। केवलमानसकर्मत्वाद्वेदान्तप्रतिपाद्यं ब्रह्म [देहेन्द्रियरूपबाह्य]साधनोपेतकर्मनिरूपकेण शास्त्रेणावशेषितम्। अतः तन्निरूपणाय पृथगारम्भः स्यादित्याशङ्कते—**अथापीति**। अन्तर्बहिस्साधनभेदेऽपि धर्मस्वरूपभेदाभावान्न धर्ममात्रमुद्दिश्य प्रवृत्तेन शास्त्रेण अवशेषितव्यमिति अरुच्या अङ्गीकृत्य दोषमाह—**तथापीति**। ब्रह्मात्मावगमात् देहसम्बन्धापाये भोक्तृत्वाख्यं संसारित्वं न स्यादित्युक्तम्, तदयुक्तं तस्य साक्षाद्धेतौ विध्यादिव्यवहारे सतीत्याशङ्क्य, सोऽपि नास्ति उक्तेन प्रकारेण देहसम्बन्धापायादित्याह—**तदेवमिति**। स कथं न स्यात् तस्य साक्षाद्धेतोर्मानादिव्यवहारे सतीत्यत्राह—**प्रमाणप्रमेयेति**। सोऽपि कथं न स्यात् प्रमात्रादौ सतीत्यत्राह—**परतस्त्विति**। ब्रह्मज्ञाने जाते देहसम्बन्धाख्यमिथ्याभिमानाभावात् प्रमातृत्वादिनिवृत्त्या विधिव्यवहारनिवृत्तेः संसारित्वं न स्यात्, प्राक् तु बाधाभावात् प्रामाणिकः सर्वोऽपि व्यवहारः प्रवर्तत इत्यर्थः॥

श्लोकत्रयं सुन्दरपाण्ड्यप्रणीतं प्रमाणयतीत्याह—**प्रसिद्धमिति**। तत्राद्यस्यावान्तरतात्पर्यं स्फुटमिति मत्वा योजनामाह—**गौणोऽहमिति**। ब्रह्मा-

तथा अन्तरङ्गीभूयार्थसाधकं विद्वदनुभवप्रमाणमाश्रित्यार्थः साध्यत इत्याह—**प्रसिद्धमेत**-

स गौण आत्मा। मिथ्या देहादारभ्याहङ्कर्तुरिदमंशमर्यन्तोऽहंमानः, अनात्मन्यात्माभिमानात्। अतः स मिथ्यात्मा। तयोभयस्याप्यात्मनो मुख्यपरमार्थब्रह्मात्मावगमेन तदाधारपुत्रदेहादिबाधनादसत्त्वे तन्निमित्तं शास्त्रीयं नियोज्यत्वं शारीरं च भोक्तृत्वं [संसारित्वं च] निमित्ताभावान्न कथंचिदुद्भवेदित्यर्थः। तदेतत् द्रढयन्नाह—**अन्वेष्टव्यात्मेति**। 'सोऽन्वेष्टव्य' इत्याद्युपक्रमेणोपदिष्टापास्ताशेषसंसाररूपब्रह्मात्मावगमात् प्रागेव प्रमातृत्वाभिमानः प्रत्यक्चितेः। यदा पुनस्तद्रूपं विस्मृतसुवर्णवदवाप्तम्, तदा स एव प्रमातृत्वाभिमतो निरस्तसंसारदोषः संपन्नः। कुतस्तस्य कर्तृत्वभोक्तृत्वे भवतः॥

यद्ययमहमुल्लेखप्रमुखप्रमातृत्वादिव्यवहारः कल्पितः कथमिदानीमस्य प्रामाण्यमित्याशङ्क्याह—**देहात्मप्रत्यय इति**। यथा देहे विशिष्टजातीये तद्व्यतिरिक्तस्याहङ्कर्तुरहंमानसम्बन्धः

---

वगमे सति गौणमिथ्यात्मनोराश्रयपुत्रदेहादिबाधात्तयोरसत्त्वे सति तत्कार्यं नियोज्यत्वं न स्यात्, ततश्च तत्कार्यभोक्तृत्वं न स्यादित्यर्थः। ततः संसारित्वाभावे किं जातमित्यत्राह—**संसारित्वं चेति**। मध्यस्यावान्तरतात्पर्यम्—**तदेतदिति**। अन्त्यस्यावान्तरतात्पर्यम्—**यद्ययमहमुल्लेखेति**। एवं ज्ञानबाध्यत्वे कल्पितत्वात् प्रत्यक्षादेः कर्मकाण्डस्य च तदुपकरणप्रमातृत्वादेः तद्विषयस्य च कल्पितत्वादप्रामाण्यं स्यात्, ब्रह्मकाण्डस्य तु विषयाबाधेऽपि स्वस्य स्वोपकरणस्य च कल्पितत्वादप्रामाण्यमित्याशङ्कां शमयन् उक्तं द्रढयतीत्यर्थः। ब्रह्मज्ञानादुत्तरमप्रामाण्यं स्याच्चेदिष्टम्, प्राक् चेत् तदापि अबोधकत्वात् अनिश्चितबोधकत्वात् बाधितबोधकत्वाद्वेति कल्पत्रयं निरस्यन् व्याचष्टे—**यथेति**। **प्रमाणत्वेने-**

---

**दिति**। विपरीताधिष्ठानप्रमित्या विपरीतभ्रमनिवृत्तिरित्यभिप्रेत्य गौणमिथ्यात्मनोः विपरीतरूपमाह—**मुख्यपरमार्थेति**। बाह्याभ्यन्तरत्वेन व्यवह्रियमाणद्वैतभ्रमहेतुमूलाज्ञानबाधेन

कल्पितोऽपि स्वनिबन्धने लोकशास्त्रव्यवहारे यथाऽवगति-(तत्त्व)हेतुः तथाऽयं कल्पितोऽप्यलौकिकात्मस्वरूपप्रतिपत्तेः प्राक् प्रमाणम्, निश्चितप्रत्ययोत्पादनाद्बाधानुपलब्धेश्च इति ॥

इति नवमवर्णकं समाप्तम् ॥

समन्वयाधिकरणं च ॥

इति श्रीमच्छङ्करभगवत्पादाचार्यवर्यान्तेवासिवरसनन्दनापराभिधान-
श्रीपद्मपादाचार्यविरचितायां पञ्चपादिकायां चतुस्सूत्रीभागः समाप्तः ॥

---

त्यस्यार्थो **यथावगतिहेतुरिति**। **तुशब्दात्मशब्दयोः** मध्यस्थस्याङ्गोऽर्थः **प्रागिति**। कस्यापि देहोऽहमिति धीर्नेत्याशङ्क्य, मनुष्यत्वादिविशिष्टे अस्तीत्याह—**विशिष्टजातीये इति**। प्रतीयते अनेनेति व्युत्पत्त्या **प्रत्ययशब्दे**नोक्तो [देहात्म]सम्बन्धः, स तादात्म्याख्यः सम्बन्धिनः कल्पितत्वात् कल्पितस्स[न् प्रमाणमित्यर्थः।] **प्रमाणमित्यादि**। विमतानि प्रमाणानि ब्रह्मज्ञानात् प्राक् (प्रा............क्तेरित्यूह्यम्) [निश्चितप्रत्ययोत्पादकत्वात् अबाधितबोधकत्वाच्च] इत्यूह्यम् ॥

तदेवं ब्रह्मज्ञानात् प्रमात्रादिसाधनैः सहाशेषानर्थोच्छित्त्या अनतिशयानन्दाब्धौ मग्नस्य साधनप्रयोजनयोरभावेन पुनः कर्तव्यताभावाद्वेदान्तानां

---

तन्निमित्तपुत्रदेहादिलक्षणद्वैतबाधनादित्यर्थः। केवलदेहेऽहमभिमानाभावान्मनुष्यत्वादिजातिविशिष्टेऽभिमान इत्याह—**विशिष्टजातीये इति**। अनुत्पत्तिलक्षणाप्रामाण्याभावमाह—**प्रत्ययोत्पादनादिति**। संशयलक्षणाप्रामाण्याभावमाह—**निश्चितेति**। विपर्यासलक्षणाप्रामाण्याभावमाह—**बाधानुपलब्धेश्चेति** ॥

इति श्रीमत्परमहंसपरिव्राजकश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यस्य
श्रीविज्ञानात्मभगवतः कृतौ पञ्चपादिकाव्याख्यायां
तात्पर्यार्थद्योतन्यां नवमवर्णकं समाप्तम् ॥

समन्वयाधिकरणञ्च समाप्तम् ॥

मानान्तरानधिगतकेवलसिद्धबोधने शक्तितात्पर्या(भा)व[धारणात् वेदान्ताव]-गम्यं सच्चिदानन्दप्रत्यग्भूतं ब्रह्मेति सिद्धमित्यधिकरणार्थोपसंहारः ॥

श्रीनृसिंहस्वरूपस्य शिष्येणेयं मयेरिता ।
आत्मस्वरूपनाम्ना हि **प्रबोधपरिशोधिनी** ॥

सेव्यतां सर्वदा सर्वैः सद्भिः सन्न्यायवित्तमैः ।
सदानन्दापरोक्ष्याय सतां सन्तोषसाधनी ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीनरसिंहस्वरूपपूज्यपादशिष्यस्य
आत्मस्वरूपभगवतः कृतौ पञ्चपादिकाव्याख्यायां
प्रबोधपरिशोधिन्यां नवमवर्णकं समाप्तम् ॥

समन्वयाधिकरणं च ॥

---

# ॥ ब्रह्मसूत्रशाङ्करभाष्यम् ॥

## ॥ चतुस्सूत्रीभागः ॥

### ॥ प्रथमवर्णकं द्वितीयवर्णकं च ॥

एतत्पुस्तकान्तर्गत- पञ्चपादिका- ग्रन्थपुटसङ्ख्या

*युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः तमःप्रकाशवद्विरुद्ध- 7—19
स्वभावयोः इतरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरां इतरेतर- 21
भावानुपपत्तिः इत्यतः अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्म- 22
त्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां च अध्यासः तद्विपर्ययेण विषयिणः 22
तद्धर्माणां च विषये अध्यासः मिथ्येति भवितुं युक्तम् ॥ 23

तथापि अन्योन्यस्मिन् अन्योन्यात्मकतां अन्योन्यधर्मांश्च अध्यस्य 23
इतरेतराविवेकेन अत्यन्तविविक्तयोः धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः 31
सत्यानृते मिथुनीकृत्य अहमिदं ममेदं इति नैसर्गिकोऽयं लोकव्यवहारः ॥

आह—कोऽयं अध्यासो नामेति ॥ 32—38

उच्यते— स्मृतिरूपः परत्र पूर्वदृष्टावभासः ॥ 39—60

तं केचित् अन्यत्र अन्यधर्माध्यासः इति वदन्ति ॥ 61

केचित्तु यत्र यदध्यासः तद्विवेकाग्रहनिबन्धनो भ्रमः इति ॥ 61

अन्ये तु यत्र यदध्यासः तस्यैव विपरीतधर्मत्वकल्पनां आचक्षते ॥ 61

सर्वथापि तु अन्यस्य अन्यधर्मावभासतां न व्यभिचरति । तथा च 61—69
लोके अनुभवः—शुक्तिका हि रजतवद्भासते, एकश्चन्द्रः सद्वितीयवत्
इति ॥

कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ? सर्वो 82—84
हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च
प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ॥

उच्यते— न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्, 84—134
अपरोक्षत्वाच्च । प्रत्यगात्मप्रसिद्धेः । न चायमस्ति नियमः—पुरोऽव- 135—137

* स्थूलाक्षराणि पञ्चपादिकायां प्रतीकत्वेन धृतानि ॥

137 स्थिते एव विषये विषयान्तरमध्यसितव्यमिति । अप्रत्यक्षेऽपि ह्याकाशे
बालाः तलमलिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः ॥

तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन
138 च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासः तत्कृतेन
दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यते ॥

139 तमेतमविद्याख्यं आत्मानात्मनोः इतरेतराध्यासं पुरस्कृत्य सर्वे
प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि
विधिप्रतिषेधमोक्षपराणि ॥

कथं पुनः अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि
चेति ?

140 उच्यते—देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ
प्रमाणप्रवृत्त्यनुपपत्तेः । न हि इन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः
संभवति । न च अधिष्ठानमन्तरेण इन्द्रियाणां व्यापारः संभवति । न च अनध्य-
स्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न चैतस्मिन् सर्वस्मिन्नसति असंगस्य
आत्मनः प्रमातृत्वं उपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति ।
तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च [इति] ॥

145 पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां
संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततः निवर्तन्ते ; अनुकूले च
प्रवर्तन्ते ; यथा दण्डोद्यतकरं पुरुषं अभिमुखमुपलभ्य मां हन्तुमयमिच्छति इति
पलायितुं आरभन्ते ; हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति;
एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत
उपलभ्य ततो निवर्तन्ते ; तद्विपरीतान् प्रति प्रवर्तन्ते ; अतः समानः पश्वादिभिः
पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपुरस्सरः प्रत्यक्षा-
दिव्यवहारः । तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यव-
हारः तत्कालः समानः इति निश्चीयते ॥

147 शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा आत्मनः
150 परलोकसंबन्धमधिक्रियते ; तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेत-

ब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते, अनुपयोगादधिकार- 150
विरोधाच्च। प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्याव- 151
द्विषयत्वं नातिवर्तते। तथा हि—ब्राह्मणो यजेत इत्यादीनि शास्त्राणि 152
आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासं आश्रित्य प्रवर्तन्ते॥

अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम। तद्यथा—पुत्र-
भार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मान् 154
आत्मनि अध्यस्यति। तथा देहधर्मान्—स्थूलोऽहम्, कृशोऽहं गौरोऽहम्, 155
तिष्ठामि, गच्छामि, लङ्घयामि चेति। तथेन्द्रियधर्मान्—मूकः, काणः,
क्लीबः, बधिरः, अन्धोऽहमिति। तथा अन्तःकरणधर्मान् कामसंकल्पविचि-
कित्साध्यवसायादीन्। एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्म- 156
न्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्व- 157
ध्यस्यति॥

एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः मिथ्याप्रत्ययरूपः 159
कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः॥

अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता 162–175
आरभ्यन्ते। यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीर- 176
कमीमांसायां प्रदर्शयिष्यामः॥

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य इदमादिमं सूत्रम्— 178

अथातो ब्रह्मजिज्ञासा॥ १॥ इति॥ 215

॥ इति प्रथमवर्णकं द्वितीयवर्णकं च॥

---

॥ अथ तृतीयवर्णकम्॥

तत्र अथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः, ब्रह्म- 216
जिज्ञासाया अनधिकार्यत्वात्। मङ्गलस्य च वाक्यार्थे समन्वयाभावात्।
अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति। पूर्वप्रकृतापेक्षा- 238
याश्च फलत आनन्तर्याव्यतिरेकात्॥

238 सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं
नियमेनापेक्षते एवं ब्रह्मजिज्ञासापि यत् पूर्ववृत्तं नियमेनापेक्षते तद्वक्त-
व्यम् ॥

स्वाध्यायानन्तर्यं तु समानम् ॥

नन्विह कर्मावबोधानन्तर्यं विशेषः ॥

240 न—धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः।
248 यथा च हृदयाद्यवदानानां आनन्तर्यनियमः क्रमस्य विवक्षितत्वात् न
तथेह क्रमो विवक्षितः, शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावात्
धर्मब्रह्मजिज्ञासयोः। फलजिज्ञास्यभेदाच्च। अभ्युदयफलं धर्मज्ञानम्,
249 तच्चानुष्ठानापेक्षम्। निःश्रेयसफलं तु ब्रह्मज्ञानम्, न चानुष्ठानान्तरापेक्षम्।
भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति। पुरुषव्यापारतन्त्रत्वात्। इह तु भूतं
250 ब्रह्म जिज्ञास्यं नित्यनिर्वृत्तत्वान्न पुरुषव्यापारतन्त्रम्। चोदनाप्रवृत्तिभेदाच्च।
या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषं अवबोध-
यति। ब्रह्मचोदना तु [पुनः] पुरुषमवबोधयत्येव केवलम्। अव-
बोधस्य चोदनाजन्यत्वात् न पुरुषोऽवबोधे नियुज्यते। यथा अक्षार्थ-
सन्निकर्षेणार्थावबोधे तद्वत् ॥

251 तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यते इति ॥
उच्यते—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः,
253 शमदमादिसाधनसंपत्, मुमुक्षुत्वं च। तेषु हि सत्सु प्रागपि धर्म-
जिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये।
तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यमुपदिश्यते ॥

254 अतश्शब्दः हेत्वर्थः। यस्माद्वेद एवाग्निहोत्रादीनां श्रेयस्साध-
नानां अनित्यफलतां दर्शयति—'तद्यथेह कर्मचितो लोकः क्षीयते
255 एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिः। तथा ब्रह्मज्ञानादपि
परं पुरुषार्थं दर्शयति–'ब्रह्मविदाप्नोति परम्' इत्यादिः। तस्माद्यथोक्त-
साधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च वक्ष्यमाणलक्षणं 256
'जन्माद्यस्य यतः' इति। अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तर- 257
माशङ्कितव्यम् ॥

ब्रह्मणः इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च ॥

ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणः जिज्ञासाकर्मत्वं न विरुध्यते, संबन्धसामान्यस्य विशेषनिष्ठत्वात् ॥

एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं 258
कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात् ॥

न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेत्—

न—प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात्। ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानम्। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैः विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येव इति न पृथक् सूत्रयितव्यानि। यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत्। श्रुत्यनुगमाच्च। 'यतो वा 260
इमानि भूतानि जायन्ते' इत्याद्याः [च] श्रुतयः, 'तद्विजिज्ञासस्व तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्मात् ब्रह्मणः इति कर्मणि षष्ठी ॥

ज्ञातुं इच्छा—जिज्ञासा। अवगतिपर्यन्तं ज्ञानं सन्वाच्यायाः इच्छायाः कर्म, फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनाव- 261
गन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्। तस्मात् ब्रह्म जिज्ञासितव्यम् ॥

॥ इति तृतीयवर्णकम् ॥

---

॥ अथ चतुर्थवर्णकम् ॥

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं न जिज्ञा- 264
सितव्यम्, अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति ॥

277 उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृंहतेर्धातोरर्थानुगमात्। सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्वो ह्यात्मास्तित्वं प्रत्येति न न 'अहमस्मि' इति।
278 यदि [हि] नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको न 'अहमस्मि' इति प्रतीयात्। आत्मा च ब्रह्म ॥

यदि तर्हि लोके ब्रह्म आत्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् ॥

न—तद्विशेषं प्रति विप्रतिपत्तेः ॥

279 देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जनाः लोकायतिकाश्च प्रतिपन्नाः ॥

280 इन्द्रियाण्येव चेतनान्यात्मेत्यपरे ॥

281 मनः इत्यन्ये ॥

विज्ञानमात्रं क्षणिकमित्येके ॥

282 शून्यमित्यपरे ॥

अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे ॥

286 भोक्तैव केवलं न कर्तेत्येके ॥

अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् ॥

288 आत्मा स भोक्तुरित्यपरे ॥

289 एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः।
290 तत्राविचार्य यत्किंचित् प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येत, अनर्थं
291 चेयात्। तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥ १ ॥

॥ इति चतुर्थवर्णकं समाप्तम्; जिज्ञासाधिकरणं च ॥

॥ अथ पञ्चमवर्णकम् ॥

ब्रह्म जिज्ञासितव्यमित्युक्तम् । किंलक्षणं पुनः तत् ब्रह्म इत्यत 293
आह भगवान् सूत्रकारः—

**जन्माद्यस्य यतः ॥ २ ॥ इति ॥**

जन्म उत्पत्तिः आदिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। जन्म- 294
स्थितिभङ्गं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं
च। श्रुतिनिर्देशस्तावत्, 'यतो वा इमानि भूतानि जायन्ते' इति, अस्मिन्
वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्। वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य
धर्मिणः स्थितिप्रलयसंभवात् । अस्येति प्रत्यक्षादिसन्निधापितस्य धर्मिणः 295
इदमा निर्देशः। षष्ठी जन्मादिधर्मसंबन्धार्था। यत इति कारणनिर्देशः ॥

अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य 296
प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचना-
रूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति
वाक्यशेषः। अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थिति- 298
नाशानामिह ग्रहणम्। यास्कपरिपठितानां तु 'जायते अस्ति' इत्यादीनां 299
ग्रहणे तेषां जगतः स्थितिकाले सम्भाव्यमानत्वात् मूलकारणादुत्पत्तिस्थिति-
नाशा जगतो न गृहीताः स्युः इति आशङ्क्येत, तन्मा शङ्कीति योत्पत्तिर्ब्रह्मणः
कारणात् तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते। न यथोक्तविशेषणस्य 301
जगतो यथोक्तविशेषणमीश्वरं मुक्त्वा अन्यतः प्रधानादचेतनादणुभ्योऽ- 302
भावात् संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम्। न च स्वभावतः, 303
विशिष्टदेशकालनिमित्तानामिहोपादानात् ॥

एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्ते ईश्वर-
कारणिनः ॥

नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे ॥ 304

न—वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम् । वेदान्त-
वाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता
हि ब्रह्मावगतिः, नानुमानादिप्रमाणान्तरनिर्वृत्ता ॥ 305

**सत्सु तु वेदान्तवाक्येषु** जगतो जन्मादिकारणवादिषु तदर्थग्रहण-
**दार्ढ्यायानुमानमपि[तदविरोधि]**वेदान्तवाक्याविरोधि प्रमाणं **भवन्न निवा-
र्यते, श्रुत्यैव च सहायत्वेन तर्कस्याप्यभ्युपेतत्वात्। तथा हि**—'श्रोतव्यो
**मन्तव्यः**' इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान्
पुरुषो वेद' इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति। **न धर्मजिज्ञासा-
यामिव श्रुत्यादय** एव प्रमाणं ब्रह्मजिज्ञासायाम्। किन्तु श्रुत्यादयोऽनु-
306 भवादयश्च यथासंभवमिह प्रमाणम्, **अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च
ब्रह्मज्ञानस्य। कर्तव्ये हि विषये** नानुभवापेक्षास्तीति श्रुत्यादीनामेव
प्रामाण्यं स्यात्। पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य। कर्तुमकर्तुं अन्यथा वा
कर्तुं शक्यं लौकिकं वैदिकं च कर्म। यथा—अश्वेन गच्छति पद्भ्यामन्यथा वा,
न वा गच्छतीति। तथा 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं
गृह्णाति' 'उदिते जुहोति अनुदिते जुहोति' इति। विधिप्रतिषेधाश्च
अत्रार्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च। न तु वस्तु एवं नैवं अस्ति नास्तीति
वा विकल्प्यते। विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः। न वस्तुयाथात्म्यज्ञानं पुरुष-
बुद्ध्यपेक्षम्। किं तर्हि? वस्तुतन्त्रमेव तत्। न हि स्थाणावेकस्मिन् स्थाणुर्वा
पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति। तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम्,
स्थाणुरेवेति तत्त्वज्ञानम्, वस्तुतन्त्रत्वात्। एवं भूतवस्तुविषयाणां प्रामाण्यं
308 वस्तुतन्त्रम्। **तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तुविषयत्वात्**॥

309 **ननु भूतवस्तुविषयत्वे** ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्य-
विचारणा अनर्थिकैव प्राप्ता। **न—इन्द्रियाविषयत्वेन संबन्धाग्रहणात्**। स्व-
भावतो विषयविषयाणीन्द्रियाणि, न ब्रह्मविषयाणि। सति हीन्द्रियविषयत्वे
ब्रह्मणः, इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत। कार्यमात्रमेव तु गृह्यमाणं किं
ब्रह्मणा संबद्धं किमन्येन केनचिद्वा संबद्धमिति न शक्यं निश्चेतुम्॥

**तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थम्। किं तर्हि? वेदान्त-
वाक्यप्रदर्शनार्थम्**॥

310 **किं पुनः तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम्?** 'भृगुर्वै
**वारुणिः**, वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह—
'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसं-

विशन्ति, तद्विजिज्ञासस्व तद्ब्रह्मेति।' [इति।]तस्य च निर्णयवाक्यम्—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ति' इति। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ॥२॥

॥ इति पञ्चमवर्णकं समाप्तम्; जन्माद्यधिकरणं च ॥

---

## ॥ अथ षष्ठवर्णकम् ॥

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, तदेव द्रढयन्नाह—

## शास्त्रयोनित्वात् ॥ ३ ॥ इति ॥ 314

महतः ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति। यद्यद्विस्तरार्थं शास्त्रं यस्मात् पुरुषविशेषात् संभवति यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके। किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोः ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्य अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ॥

॥ इति षष्ठवर्णकम् ॥

---

## ॥ अथ सप्तमवर्णकम् ॥

अथवा—

**यथोक्तमृग्वेदादिशास्त्रं योनिः** कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे। शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः। शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि ॥ 317

किमर्थं तर्हि इदं सूत्रं यावता पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम्? उच्यते—तत्र सूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादिसूत्रेण केवलमनुमानमुपन्यस्तमित्याशङ्क्येत, तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते शास्त्रयोनित्वादिति ॥ ३ ॥

॥ इति सप्तमवर्णकं समाप्तम् ; शास्त्रयोनित्वाधिकरणं च ॥

---

॥ अथ अष्टमवर्णकम् ॥

319 **कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम्। अतो वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात्।** कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम्, उपासनादिक्रियान्तरविधानार्थत्वं वा। न हि परिनिष्ठितवस्तुप्रतिपादनं संभवति, प्रत्यक्षादिविषयत्वात् परिनिष्ठितवस्तुनः। तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात्। अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति स्तावकत्वेनार्थवत्त्वमुक्तम्। मन्त्राणां च 'इषे त्वा' इत्यादीनां
320 क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम्। **न क्वचित् [अपि] वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टा उपपन्ना वा।** न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः। तस्मात् कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम्। अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम्। तस्मान्न ब्रह्मणः शास्त्रयोनित्वं इति प्राप्ते, उच्यते—

322 **तत्तु समन्वयात् ॥ ४ ॥ इति ॥**

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते। कथम्? समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि। 'सदेव
324 सोम्येदमग्र आसीत् एकमेवाद्वितीयम्'; 'आत्मा वा इदमेक एवाग्र आसीत्'; 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यं अयमात्मा ब्रह्म सर्वानुभूः'; 'ब्रह्मैवेदममृतं पुरस्तात्' इत्यादीनि। न च तद्गतानां पदानां ब्रह्मस्वरूपविषये

निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च तेषां कर्तृदेवतादिस्वरूपप्रतिपादनपरता अवसीयते 'तत्केन कं पश्येत्' इत्यादिक्रियाकारकफलनिराकरणश्रुतेः। न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्। यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति; नैष दोषः—हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः। देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः। न तु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति। एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः। न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत। यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टम्, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वात् न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम्। न चानुमानगम्यं शास्त्रप्रामाण्यम्, येनान्यत्र दृष्टं निदर्शनमपेक्षेत। तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम्॥

॥ इति अष्टमवर्णकम् ॥

---

॥ अथ नवमवर्णकम् ॥

**अत्रापरे प्रत्यवतिष्ठन्ते**—यद्यपि शास्त्रप्रमाणकं ब्रह्म, तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य। तथा हि शास्त्रतात्पर्यविदामनुक्रमणम्—'दृष्टो हि तस्यार्थः कर्मावबोधनं नाम' इति। 'चोदनेति क्रियायाः प्रवर्तकं वचनम्' 'तस्य ज्ञानमुपदेशः' "तद्भूतानां क्रियार्थेन समाम्नायः' 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति च। अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत् कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्। तच्छेषतया चान्यदुपयुक्तम्। तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम्॥

नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्—कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति । तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति । नार्हत्येवं भवितुम् । कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात् । 'आत्मा वा अरे द्रष्टव्यः' 'य आत्माऽपहतपाप्मा....सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिविधानेषु सत्सु कोऽसावात्मा? किं तद्ब्रह्म? इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः—नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यति । कर्तव्यविध्यननुप्रवेशे तु वस्तुमात्रकथने हानोपादानासंभवात्, सप्तद्वीपा वसुमती राजासौ गच्छति इत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात् । ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्। स्यादेतदेवम्, यदि रज्जुस्वरूपश्रवणमात्रेणेव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत । न तु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारदर्शनात् । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'
332 इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात् । **तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति** ॥

337 अत्राभिधीयते—न । **कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्** । शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यम्, यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा' इति सूत्रिता । अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय । तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे । मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते । ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते । धर्मतारतम्यादधिकारितारतम्यम् । प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम् । तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम्, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम्, तत्रापि सुखतारतम्यं तत्साधनतार-

तम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' इत्यस्माद्गम्यते। तथा मनुष्यादिषु स्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः। तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते। एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथा च श्रुतिः—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्येत। अशरीरत्वमेव धर्मकार्यमिति चेत्, न—तस्य स्वाभाविकत्वात् 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥' 'अप्राणो ह्यमनाः शुभ्रः' 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतिभ्यः। अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्॥

तत्र किंचित् परिणामिनित्यं यस्मिन् विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते। यथा पृथिव्यादि जगन्नित्यत्ववादिनाम्। यथा च साङ्ख्यानां गुणाः। इदं तु पारामार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिस्स्वभावम्। यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते। तदेतदशरीरत्वं मोक्षाख्यम्, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्, अन्यत्र भूताच्च भव्याच्च' इत्यादिश्रुतिभ्यः। अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता। तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्। तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत, नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो 339
युक्तः॥

अपि च, 'ब्रह्म वेद ब्रह्मैव भवति' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे', 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' 'अभयं वै जनक प्राप्तोऽसि' 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्'

'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरमेव मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति ॥

तथा 'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम्। यथा तिष्ठन् गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते। 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति ॥

तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति ॥

मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति। न चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम्। यथा 'अनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति' इति। न चाध्यासरूपम्। यथा 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः। नापि विशिष्टक्रियायोगनिमित्तं 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' इतिवत्।
344 नाप्याज्यावेक्षणादिकर्मवत् कर्माङ्गसंस्काररूपम्। **संपदादिरूपे हि** ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन्। 'ब्रह्म वेद ब्रह्मैव भवति' इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिरूपत्वे न सामञ्जस्येनोपपद्येरन्। तस्मान्न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम्। अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या। किं तर्हि, प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रैव। एवंभूतस्य ब्रह्मणस्तज्ज्ञा-
345 नस्य वा न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम्। **न च विदि-**
345 **क्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः,** 'अन्यदेव तद्विदितादथो अविदितादधि' इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन

विजानीयात्' इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति— 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य, 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते' इति। **अविषयत्वे ब्रह्मणः शास्त्रयोनि-** 345
**त्वानुपपत्तिरिति चेत्, न—अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य ।** 345
न हि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि, प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति । तथा च शास्त्रम्—'यस्याऽमतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥' 'न दृष्टेर्द्रष्टारं पश्येः' 'न विज्ञातेर्विज्ञातारं विजानीयाः' इति चैवमादि । अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । **यस्य तूत्पाद्यो मोक्ष-** 347
स्तस्य मानसं वाचिकं कायिकं वा कार्यमपेक्षत इति युक्तम् । तथा विकार्यत्वे च । तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । न हि दध्यादि विकार्यम्, उत्पाद्यं वा घटादि, नित्यं दृष्टं लोके । न चाप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वम्, सर्वगतत्वेन नित्याप्तस्वरूपत्वात् सर्वेण ब्रह्मणः आकाशस्येव । नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्यात् दोषापनयनेन वा । न तावद्गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वात् मोक्षस्य । नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वात् मोक्षस्य । स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते, यथा आदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेत्, न—क्रियाश्रयत्वानुपपत्तेरात्मनः । यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते । यद्यात्मा स्वाश्रयक्रियया विक्रियेत अनित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानिष्टम् । तस्मान्न स्वाश्रया क्रिया आत्मनः संभवति । अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तया आत्मा संस्क्रियते ॥

ननु देहाश्रयया स्नानाचमनयज्ञोपवीतधारणादिकया क्रियया देही संस्क्रियमाणो दृष्टः । न—देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् । तया देहाश्रयया तत्संहत

एव कश्चिदविद्यया आत्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलम्, अहमरोग इति यत्र बुद्धिरुत्पद्यते । एवं स्नानाचमनयज्ञोपवीतधारणादिना अहं शुद्धः संस्कृत इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स च देहेन संहत एव । तेनैव ह्यहंकर्त्रा अहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति मन्त्रवर्णात्, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति च । तथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥' इति 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' इति च एतौ मन्त्रावनाधेयाति-
350 शयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः । ब्रह्मभावश्च मोक्षः । **तस्मान्न**
350 **संस्कार्योऽपि मोक्षः । अतोऽन्यत् मोक्षं प्रति** क्रियानुप्रवेशद्वारं न शक्यं
347 केनचिद्दर्शयितुम् । **तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते ॥**

351 **ननु ज्ञानं नाम मानसी क्रिया । न—वैलक्षण्यात्** । क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च । यथा—'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति 'सन्ध्यां मनसा ध्यायेत्' इति चैवमादिषु । ध्यानं चिन्तनं यद्यपि मानसम्, तथापि पुरुषेण कर्तुं अकर्तुं अन्यथा वा कर्तुं शक्यम्, पुरुषतन्त्रत्वात् । ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयम्, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम्, केवलं वस्तुतन्त्रमेव तत् । न चोदनातन्त्रम्, नापि पुरुषतन्त्रम् । तस्मात् मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथा च 'पुरुषो वाव गौतमाग्निः' 'योषा वाव गौतमाग्निः' इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति । केवलचोदनाजन्यत्वात् क्रियैव सा पुरुषतन्त्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा । नापि पुरुषतन्त्रा । किं तर्हि ? प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् । तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम् । तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात् कुण्ठीभवन्ति उपलादिषु

प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात्। किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः इष्टं मे भूयादनिष्टं मा भूदिति, न च तत्रात्यन्तिकं पुरुषार्थं लभते, तं आत्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात् कार्यकरणसङ्घातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि। तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते— 'इदं सर्वं यदयमात्मा' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्……केन कं विजानीयात् विज्ञातारमरे केन विजानीयात्' 'अयमात्मा ब्रह्म' इत्यादिभिः॥

यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलङ्कारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। तथा च श्रुतिः—

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत्॥' इति,
'एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत'

इति च स्मृतिः। **तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः** 354
**समर्पणम्**॥

**यदपि केचिदाहुः**—'प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवल- 355
वस्तुवादी वेदभागो नास्ति' इति; **तन्न—औपनिषदस्य पुरुषस्यानन्यशेष-** 355
**त्वात्। योऽसावुपनिषत्स्वेवाधिगतः** पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतु- 355
र्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्तीति नाधिगम्यते इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात्॥

नन्वात्मा अहंप्रत्ययविषयत्वात् उपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम्; न—तत्साक्षित्वेन प्रत्युक्तत्वात्। न हि अहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा। अतः स न केनचित् प्रत्याख्यातुं शक्यो विधिशेषत्वं वा

नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो हि विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः । अत एव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्स्वेव प्राधान्येन प्रकाश्यमानत्वे उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् ॥

361 **यदपि शास्त्रतात्पर्यविदां अनुक्रमणं**—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् ॥

**अपि च 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'** इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः । प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः ? न हि भूतमुपदिश्यमानं क्रिया भवति । अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेत् ; नैष दोषः—क्रियार्थत्वेऽपि क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति ? उच्यते—अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति, तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन ॥

अपि च 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिरुपदिश्यते । न च सा क्रिया, नापि क्रियासाधनम् । अक्रियार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न
365 हन्तव्यः' इत्यादिनिवृत्त्युपदेशानां आनर्थक्यं प्राप्तम्, तच्चानिष्टम् । न च
365 **स्वभावप्राप्तहन्त्यर्थानुरागेण** नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण । नञश्चैष स्वभावः, यत् स्वसंबन्धिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्यकारणम् । सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति । तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् ॥

यदप्युक्तम् — कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं
स्यात् ‘ सप्तद्वीपा वसुमती ’ इत्यादिवदिति ; तत्परिहृतम् । रज्जुरियं नायं
सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् । ननु श्रुतब्रह्मणोऽपि
यथापूर्वं संसारित्वदर्शनात् न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम् । अत्रोच्यते—
**नावगतब्रह्मात्मभावस्य** यथापूर्वं संसारित्वं शक्यं दर्शयितुम् । वेदप्रमाणजनि- 369
तब्रह्मात्मभावविरोधात् । न हि शरीराद्यात्माभिमानिनः दुःखभयादिमत्त्वं दृष्टमिति
तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञान-
निमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् । न हि धनिनो गृहस्थस्य
धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमान-
रहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । न च कुण्डलिनः कुण्डलित्वाभि-
माननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य
तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति । तदुक्तं श्रुत्या— ‘ अशरीरं वाव
सन्तं न प्रियाप्रिये स्पृशतः ’ इति । शरीरे पतितेऽशरीरत्वं स्यात् , न जीवत
इति चेत् ; न— सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । न ह्यात्मनः शरीरा-
त्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुम् ।
नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्व-
मिति चेत्, न–शरीरसंबन्धस्यासिद्धत्वात् धर्माधर्मयोरात्मकृतत्वासिद्धेः । शरीर-
संबन्धस्य धर्माधर्मयोः तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैषा अनादित्व-
कल्पना, क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः । सन्निधानमात्रेण राज-
प्रभृतीनां दृष्टं कर्तृत्वमिति चेत् , न— धनदानाद्युपार्जितभृत्यसंबन्धित्वात्तेषां
कर्तृत्वोपपत्तेः । न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिभावसंबन्ध-
निमित्तं किंचिच्छक्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षः संबन्धहेतुः ।
एतेन यजमानत्वमात्मनो व्याख्यातम् ॥

अत्राहुः— देहादिव्यतिरिक्तस्यात्मनः आत्मीये देहादावहममिमानो
गौणो न मिथ्येति चेत् , न— प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः । यस्य
हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंह-
शब्दप्रत्ययभाक् मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्या-
दिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य तस्मिन् पुरुषे सिंहशब्दप्रत्ययौ गौणौ

भवतः नाप्रसिद्धवस्तुभेदस्य। तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ। यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्माद्रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वद्देहादिसङ्घाते अहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम् ॥

आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः। तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव, न गौणः। तस्मान्मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम्। तथा च ब्रह्मविद्विषया श्रुतिः—'तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते। अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च। स्मृतिरपि—'स्थितप्रज्ञस्य का भाषा' इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति। तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्। यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभावः इत्यनवद्यम् ॥

यत्पुनरुक्तं श्रवणात् पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति, तन्न—श्रवणवत् अवगत्यर्थत्वान्मनननिदिध्यासनयोः। यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम्। न तु तदस्ति। मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्। तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम्। एवं च सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक् शास्त्रारम्भ उपपद्यते। प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वान्न पृथक् शास्त्रमारभ्येत। आरभ्यमाणं चैवमारभ्येत—'अथातः परिशिष्टधर्मजिज्ञासा' इति, 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इतिवत्। ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः—'अथातो ब्रह्मजिज्ञासा' इति। तस्मात् 'अहं ब्रह्मास्मि' इत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि। न ह्यहेयानु-

पादेयाद्वैतात्मावगतौ सत्यां निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितु-
मर्हन्तीति ॥

**अपि चाहुः—** 373

'**गौणमिथ्यात्मनोऽसत्त्वे** पुत्रदेहादिबाधनात् । 373
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥

**अन्वेष्टव्यात्मविज्ञानात्** प्राक् प्रमातृत्वमात्मनः । 374
अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः ॥

**देहात्मप्रत्ययो** यद्वत् प्रमाणत्वेन कल्पितः । 374
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥' इति ॥ ४ ॥

॥ इति नवमवर्णकं समाप्तम्, समन्वयाधिकरणं च ॥

॥ चतुस्सूत्री समाप्ता ॥

---

## ॥ द्वितीयो भागः ॥

## PART II

# विवरणम् [पञ्चपादिकाव्याख्यानम्]

Vivaraṇam (Commentary on the Pañcapādikā)

चित्सुखीय-तात्पर्यदीपिका—नृसिंहाश्रमीय-भावप्रकाशिका-
व्याख्याद्वयसंवलितम्

With two Commentaries—Tātparyadīpikā of Citsukha
and Bhāvaprakāśikā of Nṛsiṃhāśrama.

॥ श्रीः ॥

# पञ्चपादिकाविवरणम्

श्रीप्रकाशात्मविरचितम्

पालने विमलसत्त्ववृत्तये जन्मकर्मणि रजोजुषे लये ।
तामसाय जगतः पराकृतद्वैतजालवपुषे नमः सते ॥ १ ॥

## तात्पर्यदीपिका

पञ्चपादिकाविवरणव्याख्या

श्रीचित्सुखाचार्यविरचिता

स्वमाननखनिर्भिण्णमहामोहामरारये ।
नमोऽस्तु नरसिंहाय सच्चिदानन्दरूपिणे ॥
प्रणम्य नरवारीन्द्रं चित्सुखाख्येन योगिना ।
विरच्यते विवरणे सैषा तात्पर्यदीपिका ॥

चिकीर्षितस्य ग्रन्थस्य अविघ्नपरिसमाप्तये प्रचयगमनाय च विशिष्टेष्ट-देवतानमस्कारं मङ्गलाचरणं विशिष्टशिष्टाचारपरिप्रापितं संपादयति—'**पालने**'

## भावप्रकाशिका

पञ्चपादिकाविवरणव्याख्या

श्रीनृसिंहाश्रमविरचिता

यत्सत्त्वचैतन्यसुखानुलिप्तं विश्वं हितं सत् स्फुरतीव भाति ।
स मां निरस्ताखिलभेद आत्मा पायादबोधाद्विपदो नृसिंहः ॥
श्रीमद्गुरुपदद्वन्द्वमद्वैतात्मप्रसिद्धये ।
हृदये सततं भा(भू)यान्निगूढात्माञ्जनं परम् ॥
श्रीमद्गुरुकृपालेशादद्वैतब्रह्मगोचरे ।
कचित् कचिद्विवरणे गूढो भावः प्रकाश्यते ॥

निर्विशेषब्रह्मप्रतिपादकग्रन्थकरणस्य तत्प्रतिपत्तिं विना अयोगात् तस्याश्च 'यमेवैष वृणुते तेन लभ्यः' इत्यादिशास्त्रात् परमात्मप्रसादाधीनत्व-

*ता. इत्यादिना प्रथमश्लोकेन। **जगतः पालने** प्रयोजनत्वेन विषयभूते **विमलसत्त्ववृत्तये**—विमलं च तत् सत्त्वं च इति विमलसत्त्वं-रजस्तमोभ्यां अस्पृष्टं इति यावत्, तस्मिन् वृत्तिः—वर्तनं—तदुपाधिकतया अवस्थानं यस्य स तथोक्तः, तस्मै। यद्वा, विमला सङ्गमलरहिता सत्त्वे वृत्तिः यस्य स तथा। एवं जगतः **जन्मकर्मणि**—जननव्यापारे **रजोजुषे**—रजोगुणोपाधिकाय। एवं जगतः **लये तामसाय**—तमोगुणस्थिताय। तत् अनेन 'जन्माद्यस्य यतः' इति वक्ष्यमाणं तटस्थलक्षणं ब्रह्मणो दर्शितम्। स्वरूपलक्षणं दर्शयितुमाह—**पराकृतेति**। पराकृतं—निराकृतं द्वैतजालं येन तत् पराकृतद्वैतजालं, तत् वपुः यस्य तस्मै **पराकृतद्वैतजालवपुषे**। **सते**—सत्स्वरूपाय 'सदेव सोम्येदमग्र आसीत एकमेवाद्वितीयम्' इत्यादिश्रुतिप्रतिपन्नाखण्डसद्रूपाय, **नमः** इति सम्बन्धः ॥१॥

---

*भा. प्रतीतेः विषयप्रयोजने दर्शयन् परमात्मानं नमस्करोति—**पालने** इति। **सते**—परमात्मने, तस्यैव कदाचिदपि केनापि बाधाभावेन तदयोग्यतया सत्पदार्थत्वात्। **नमः**—स्वापकर्षबोधानुकूलो व्यापारविशेषः अस्त्विति शेषः॥

ननु नमस्कर्तुरसत्त्वे मुक्त्ययोगेन तदर्थात्मज्ञानतत्सिद्ध्यनुकूलग्रन्थकरण-तद्धेत्वात्मविद्याविचारवैयर्थ्येन तदङ्गनमस्कारवैयर्थ्यात्, सत्त्वे च नमस्कार्य-भिन्नस्य तस्य ब्रह्मभावापत्तिरूपमुक्त्यसम्भवेन उक्तदोषानपायात् अभेदो वाच्यः, तथा च कथं तस्य नमस्कर्तृत्वम्? न हि स एव तमेव प्रति उत्कृष्टोऽपकृष्टश्च इत्याशङ्क्य, अविद्यादिप्रतिबिम्बचैतन्यं सत् जीवरूपेण नमस्कर्तृ बिम्बचैतन्यात्मकं सत् नमस्कार्यमिति भेदमभिप्रेत्य जीवव्यावृत्तरूपं नमस्कार्यं दर्शयति—**विमलसत्त्वेति** ॥

**पालने** इत्युपलक्षणम्। सर्जनेऽपीत्यर्थः। जगतो दुःखपरिहारसुख-प्रापकत्वलक्षणपालनस्य कार्यानुकूलज्ञानवत्त्वलक्षणकर्तृत्वस्य च सत्त्वाधीनत्वात्। 'सत्त्वात् सुखं च ज्ञानं च' इति स्मृतेः। ततश्च जगतस्सर्जने पालने चोद्देश्ये—(न) सकर्तृकव्यापारमात्रे उद्देश्ये इति यावत्। **विमलस्य**—केवलस्य **सत्त्वस्य वृत्तिः**—वर्तनं स्थितिः यस्मिन् बिम्बचैतन्ये परमात्मनि तस्मै, सत्त्व-मात्रसहितायेति यावत् ॥

---

* ता० = तात्पर्यदीपिका। * भा० = भावप्रकाशिका ॥

भा. न चैवं '**जन्मकर्मणि रजोजुषे**' इत्यादि व्यर्थं स्यात्, तस्य अन्यार्थत्वात्। किं कार्यानुकूलज्ञानवत्त्वलक्षणं कर्तृत्वं ब्रह्मणो रजोगुणाधीनं तेन प्रतिपाद्यत इत्युच्यते? उत पराभिमतचिकीर्षाप्रयत्नवत्त्वलक्षणम्? नाद्यः, ज्ञानस्य चिकीर्षादिप्रवृत्तिस्वभावरजोगुणाकार्यत्वात्। न द्वितीयः, हिरण्यगर्भस्येव परमात्मनः तादृशकर्तृत्वाभावात्। अन्यथा ब्रह्मणश्चिकीर्षादिकर्तृत्वार्थमपि चिकीर्षाद्यन्तरप्रसङ्गेन आद्यचिकीर्षादिविरहप्रसङ्गात्, प्रलयेऽपि चिकीर्षादिमालाप्रसङ्गात्। कृतिचिकीर्षयोः स्वसमानाधिकरणतदजन्यत्वनियमात्। प्रलये चिकीर्षादिगोचरचिकीर्षादिसत्त्वेऽपि प्रपञ्चगोचरयोस्तयोरसम्भवात्। ज्ञानवत्त्वात्मककर्तृत्वे तु ज्ञानस्य स्वरूपत्वेन नोक्तदोष इति पञ्चमे वक्ष्यते। अत एव तत्र आचार्य एव जीवस्य सुखदुःखादौ कर्तृत्वं वक्ष्यति। तस्मान्न रजः कर्तृत्वादिप्रयोजकतया तत्रोक्तम्। किन्तु बिम्बचैतन्यस्य सतः कर्तृत्वे जगदुपादानस्य ततो भेदो वाच्यः। लोके निमित्तोपादानयोः भेददर्शनात्। ततश्च उपादानस्यासत्त्वे श्रुतिविरोधः। 'सदेव सोम्ये' त्यादिश्रुतेः सत एव तत्प्रतिपादनात्। सत्त्वे च तस्य बिम्बभिन्नस्य[प्रतिबिम्बाभ्देदेन प्रति]बिम्बस्य जीवस्य न तद्भावापत्तिर्मुक्तिरिति पूर्वोक्तदोषः स्यात् इत्याशङ्क्य, चिकीर्षादिविक्षेपस्वभावरजोगुणवदविद्याधिष्ठानं बिम्बचैतन्यमेवोपादानम् 'सच्च त्यच्चाऽभवत्' इत्यादिश्रुतेः तद्भेदकल्पने प्रमाणाभावात् अनुमानस्य चाप्रयोजकत्वादित्यभिप्रेत्य **जन्मकर्मणि** इत्याद्युक्तम्। एवं तमोऽपि संहारहेतुतयोक्तमिति द्रष्टव्यम् ॥

ननु **सत्त्ववृत्तये** इति सत्त्वविशिष्टस्य पालनादिकर्तृत्वमुक्तम्, तथा सति विशिष्टस्य नमस्कार्यत्वेन तस्य रजआदिविशिष्टत्वानुपपत्तेः विशिष्टभेदेन नमस्कार्यभेदः स्यात्। न चाग्नीषोमयोरिव कथञ्चिदत्र नमस्कार्यैक्यं सम्भवति, प्रमाणाभावात्। अतः सदादिपदावृत्तेः वाक्यभेदः स्यात्। न च तन्त्रेण युगपदनेकपदार्थोपस्थितिसम्भवात् न वाक्यभेदः, अत एव 'यदग्नये' इत्यादिवाक्ये अग्निप्रजापत्योरिव वाक्यभेदपरिहाराय एकत्व-

**यस्याः प्रसादमवलम्ब्य जगद्गुरूणा-**
**मप्यस्खलद्बहुगुणाः प्रसरन्ति वाचः ।**
**सा वेदशास्त्रपरिनिर्मितवन्द्यदेहा**
**भूयात् समग्रवरदैव सरस्वती नः ॥ २ ॥**

---

ता. द्वितीयश्लोकेन सरस्वतीप्रसादप्रार्थनाख्यं आशीर्लक्षणं मङ्गलाचरणं संपादयति—**यस्याः** इति । **जगद्गुरूणां** वाचस्पतिप्रभृतीनाम् । न स्खलन्ति

---

भा. कल्पना अस्त्विति निरस्तम् , तां विनाप्येकवाक्यतासम्भवादिति वाच्यम् । प्रत्येकमेकार्थसमर्थानामनेकनमस्काराणां व्रीहियवयोरिव युगपदननुष्ठानप्रसङ्गात् । न हीश्वरनमस्कारः प्रत्येकमसमर्थः समुदितस्समर्थ इति वक्तुं शक्यते । असमर्थसमुदायस्याप्यसामर्थ्यात् । न च दण्डचक्रयोरिव आग्नेयादीनामिव वा समुच्चये किंचिन्मानमस्ति । न वा तत्तन्नमस्कारकर्तुः फलान्तरमभिलषितम् । अतोऽयं नमस्कारोऽसंगत इत्याशङ्क्य, न हि सत्त्वादिविशिष्टं पालनादिकारणम् , येनायं दोषः स्यात् । किन्तु कुलाल इव दण्डेन बिम्बचैतन्यं सत्त्वेन सहितं तद्धेतुरिति पालनादित्रितयकर्ता एक एव परमेश्वरो नमस्कार्य इत्यभिप्रेत्य **सत्त्ववृत्तये रजोजुषे** इत्यादिसहप्रयोगः कृत इति द्रष्टव्यम् ॥

ननु कथं परमात्मैव सन् ? अविद्यादेरप्यबाधितसद्बुद्धिविषयत्वादि-
त्याशङ्क्य, हेत्वसिद्धिमाह—**पराकृतेति** । **पराकृतस्य**—'नेह नानास्ति किञ्चन'
इत्यादिश्रुत्या दृश्यत्वादियुक्त्या च बाधितस्य **द्वैतजालस्य वपुः** स्वरूपं तस्मै
इत्यर्थः । अथ वा ब्रह्मण उपादानत्वे सप्रपञ्चत्वमेव स्यादित्याशङ्क्याह—
**पराकृतेति** । श्रुत्यादिबाधितस्य प्रपञ्चस्य रजतादिवदविद्याकार्यत्वात् ब्रह्मस्वरूपं
शुक्तिस्वरूपमिव अरजतं निष्प्रपञ्चमित्यर्थः । अनेनैव विषयप्रयोजने दर्शिते ॥१॥

यद्यपि एक एव परमेश्वरनमस्कारः सर्वस्मै फलाय पर्याप्तः, तथापि
परमेश्वरः तत्क्रतुन्यायेन कामनानुसारेणैव फलं प्रयच्छतीति दर्शयन् सरस्वत्यादि-
रूपापन्नं ब्रह्म प्रार्थयते—**यस्या** इत्यादिभिः । न च गुरुनमस्कारस्य 'यस्य

**विघ्नाभितापमभिहत्य मदीयकृत्य-**
**बीजं प्रवृद्धमदनुग्रहवर्षपातैः ।**
**सम्प्रार्थितः सिततरोऽपि गणेशमेघः**
**सिञ्चन्नभीष्टफलमङ्कुरयत्वमोघम् ॥ ३ ॥**

**श्यामोऽपि श्रुतिकमलावबोधरागः**
**शान्तः सन्नयति तमोविनाशमन्तः ।**

---

बहवो गुणाः याभ्यः ताः तथोक्ताः **वाचः** । सरस्वत्याः स्वरूपमाह— **सा वेदे**ति । वेदाश्च शास्त्राणि च **वेदशास्त्राणि,** धर्मशास्त्रादीनामपि सरस्वतीरूपत्वात् । **तैः परिनिर्मितः वन्द्यः देहः** यस्याः सा तथोक्ता **सा समग्रवरदा भूयात् एव** इत्यन्वयः ॥ २ ॥ ता

स्वकीयविद्यां ग्रन्थस्वरूपेण विकासयितुं विघ्नेश्वरप्रसादं आशास्ते— **विघ्ने**ति । श्लेषालङ्कारेण तं मेघत्वेन रूपयति । यथा मेघः तापमपहत्य वर्षपातैः सिञ्चन् बीजं अङ्कुरयति तथा गणेशोऽपि विघ्नाख्यं अभितापं निरस्य मयि अनुग्रहाख्यवर्षपातैः चिकीर्षितग्रन्थाख्यं बीजं सिञ्चन् **अभीष्टफलं**— अविघ्नेन परिसमाप्तिप्रचयगमनलक्षणफलवत् यथा भवति तथा प्ररोहयतु । अत्र **सिततरोऽपि** इति व्यतिरेकश्लेषः । कालो हि मेघो वर्षतीति लोकप्रसिद्धम् । अयं तु अतिशयेन धवलोऽपि वर्षपातैः सिञ्चति इति ॥ ३ ॥

इदानीं शारीरकशास्त्रप्रणेतारं बादरायणमाचार्यं भानुना व्यतिरेकश्लेषेण वर्णयन् नमस्करोति—**श्यामोऽपि** इति । वर्णतः **श्यामोऽपि श्रुतिकमलाव-**

---

देवे परा भक्तिः' इत्यादिशास्त्रात् ब्रह्मनमस्कारवद्विद्याङ्गत्वप्रतीतेः सरस्वत्यादिनमस्कारात् प्रागेव अनुष्ठानेन भवितव्यम्, विदुष एव ग्रन्थकरणाय सच्छब्दरचनाप्रतिबन्धकाभावयोरपेक्षितत्वादिति वाच्यम् । प्रागेव नमस्कृतत्वात् । पाठक्रमस्याविवक्षितत्वात् । अथ वा समाप्त्यनन्तरभाविप्रचयगमनकामनयापि गुरुनमस्कारोऽनुष्ठित इति ज्ञापनाय प्रकृते समाप्तिमात्रप्रयोजकसरस्वत्यादिनमस्कारानन्तरं आचार्यस्य गुरुनमस्कार इति द्रष्टव्यम् ॥ २, ३ ॥ भा.

**नीरूपं प्रथयति योऽपि गोसहस्रैः**

**तं व्यासं नमत जगत्यपूर्वभानुम् ॥ ४ ॥**

---

ता. **बोधरागः**—श्रुतय एव कमलानि, तेषां अवबोधने विकासने रागः अनुरागः यस्य स तथा। भानुः रक्त एव कमलावबोधं करोति, असौ पुनः श्यामोऽपि इति व्यतिरेकः। खरतरो भानुः बहिस्तमो विनाशयति, अयं पुनः **शान्तः सन् अन्तस्तमः** अज्ञानलक्षणमन्धकारं निवर्तयति। भानुः रूपवन्तमर्थं रश्मिसहस्रैः प्रकाशयति। अयं पुनः वाक्सहस्रैः **नीरूपं**—रूपशून्यं ब्रह्म प्रकाशयति इति अलौकिको भानुः। **तं नमत** इति सम्बन्धः ॥ ४ ॥

---

भा. **तं व्यासं नमत** इति। अत्र जीवे प्रतीयमानं कर्तृत्वं अन्तःकरणस्यैव, जीवस्तु न कर्ता इति दर्शयितुं अवस्थाभेदेन बहुत्वमापन्नं अन्तःकरणं प्रति **नमत** इत्युक्तमिति द्रष्टव्यम् ॥ ४....८ ॥

ननु **अनाद्यानन्दे**ति टीकाकृता मङ्गलाचरणं सम्पादितम्, तत् कस्मात्? प्रयोजनाभावात्। प्रारिप्सितसमाप्तिः प्रयोजनमिति चेत्, तद्धि न तावत् प्रत्यक्षेण गृह्यते। प्रमत्ताद्यनुष्ठितसमाप्तिस्थले समाप्तेस्तेन विनापि दर्शनात्। न हि तेन विनापि संभवन्त्याः समाप्तेः तत् हेतुरिति ग्रहीतुं शक्यते। न च तत्र जन्मान्तरीयमङ्गलमस्तीति वाच्यम्। तत्र मानाभावात्। अन्योन्याश्रयेण समाप्त्या तत्कल्पनायोगात्। अत एव मङ्गलं समीहितसाधनं अभ्रान्ताचारत्वात् इति सामान्यतः फलसिद्धौ, मङ्गलं न समाप्तीतरफलकं तदुद्देशेन विना अक्रियमाणत्वात् ग्रन्थकरणवदिति इतरनिषेधे समाप्तिः फलं सिद्ध्यतीति निरस्तम्। व्यतिरेकव्यभिचारेण कारणत्वासम्भवात्। तथा च आचरानुमितश्रुत्यापि न तस्य समाप्तिसाधनत्वग्रहः ॥

ननु प्रमत्ताद्यनुष्ठितसमाप्तिस्थले जन्मान्तरमङ्गलाभावानिश्चयात्तत्संशय एव, तथा च तत्कारणत्वेऽपि संशय एवेति परिशेषानुमानादिना तत्कारणत्वग्रहः सम्भवतीति चेत्, न—शिष्टानामपि प्रारब्धपरिसमाप्तिकामनयैव मङ्गलानुष्ठानदर्शनेन जन्मान्तरमङ्गलस्याहेतुत्वनिश्चयात्। ननु अस्तु विघ्नध्वंस एव

फलम्। प्रमत्तादीनां विघ्नाभावात् न तद्ध्वंस इति न व्यभिचारः। न चैवं कृतमङ्गलस्य प्रारब्धसमाप्तिनियम इति वाच्यम्। कतिपयविघ्नध्वंसेऽपि विघ्नान्तरेण प्रतिबन्धसम्भवात्। यावद्विघ्नशङ्कया च मङ्गलानुष्ठानमिति। मैवम्—किं विघ्नशब्देन दृष्टं समाप्त्यनुत्पादकं ज्वराद्युच्यते? तत्प्रयोजकः अदृष्टविशेषो वा? नाद्यः, विज्वराद्यनुष्ठितमङ्गलस्य वैफल्यप्रसङ्गात्, मङ्गलानन्तरज्वराद्यनिवृत्तेश्च। न द्वितीयः, सकलपापनिवर्तकत्वेन चोदितहरिध्यानादितोऽपि भवतः तस्य मङ्गलाजन्यत्वात्। न च हरिध्यानमात्रं पारिभाषिकं मङ्गलम्। न च इतराजन्यविघ्नध्वंसो मङ्गलफलम्। इतरजन्यत्वयोग्यताभावस्य तस्मिन्नसत्त्वात्, तत एव तत्सम्भवे मङ्गलशास्त्रवैफल्याच्च। न च तेन मङ्गलस्य विकल्पः, असमफलत्वात्। नापि विघ्नानुत्पादः फलम्, दुरितानुत्पादस्य निषिद्धवर्जनादेव सिद्धत्वात्, विद्यमानविघ्नस्य पुरुषस्य मङ्गलाननुष्ठानप्रसङ्गाच्च। अतः प्रयोजनाभावात् मङ्गलं नानुष्ठेयमिति आशङ्क्य, आह—**प्रारिप्सितेति**॥ भा.

सत्यं विघ्नध्वंसमात्रं न फलं व्यभिचारात्, दुरितध्वंसस्य कल्पने मानाभावाच्च। न च निर्विघ्नं परिसमाप्यतामित्याचारानुमिता श्रुतिस्तद्दर्शयतीति वाच्यम्। विघ्नो हि नाम प्रारिप्सितप्रतिबन्धकदुरितं न दुरितमात्रम्, तत्र तत्पदाप्रयोगात्। प्रतिबन्धकं चोत्तेजकाभावविशिष्टमेव सर्वत्र लोके दृष्टमित्युत्तेजकाभावविशिष्टदुरितविशेषाभाव एवावश्यमपेक्षितः श्रुत्यर्थोऽस्तु। मङ्गलं चोत्तेजकं भवतु। एकस्य दुरितस्य मण्यादेरिवानेककार्यप्रतिबन्धकत्वसम्भवाच्च। न प्रतिमङ्गलं विघ्ननाशसम्भवः। तन्नाशस्य समयान्तरे अन्यतोऽपि सम्भवात्। प्रायश्चित्तनाश्यदुरितस्य तु अप्रतिबन्धकत्वात् ततस्तस्यानाश एव। किन्तु विघ्नाभावप्रयोज्या समाप्तिरेव मङ्गलफलम्। न चेयं समाप्तिर्मङ्गलं विनापि क्वचित् दृश्यते॥

ननु विघ्नध्वंसातिरिक्तो विघ्नाभावः प्रमत्तादेरप्यस्तीति चेत्, न—तदीयप्रारिप्सितप्रतिबन्धकविघ्नस्यासत्त्वेन तदभावस्याभावात्। यदि पुनः

**उद्धृत्य वेदपयसः कमलामिवाब्धे-**
**रालिङ्गिताखिलजगत्प्रभवैकमूर्तिम् ।**
**विद्यामशेषजगतां सुखदामदाद् यः**
**तं शङ्करं विमलभाष्यकृतं नमामि ॥ ५ ॥**

---

ता. इदानीं भगवता नारायणेन श्लेषालंकारपुरस्सरं भगवत्पादाचार्यं नमस्करोति—**उद्धृत्य** इति । वेदा एव पयांसि क्षीराणि यस्य अब्धेः सः वेदपयाः, तस्मात् **वेदपयसः कमलामिव** विद्यां **उद्धृत्य यः अदात्** इति सम्बन्धः । इदानीं विद्यायाः कमलया श्लेषमाह—**आलिङ्गिताखिलजगत्प्रभवैकमूर्तिम्** इति । आलिङ्गिता अखिलजगत्प्रभवस्य—विष्णोः एका मूर्तिः यया सा तथोक्ता ताम् । विद्ययापि अखिलजगत्कारणस्य—ब्रह्मणः एकाअद्वितीया मूर्तिः आलिङ्गिता—अभिव्याप्ता भवतीति लक्ष्मीसाम्यम् । कमलापि

---

भा. प्रतिमङ्गलं विघ्नध्वंसः परेण कल्प्येत प्रमत्तादावपि विघ्नात्यन्ताभावोऽस्तीत्युच्येत, तर्हि विघ्नध्वंसजन्या समाप्तिरेव मङ्गलफलमस्तु । न तु स एव, तस्य तेन विनापि सम्भवात् । तर्हि समाप्तिरपि तत एव भवतीति चेत्, न—तस्यामेव समाप्तौ मङ्गलस्य श्रुत्या हेतुत्वप्रतिपादनात् ॥

अत एव मङ्गलमदृष्टद्वारकं कल्प्यते । विघ्नध्वंसस्य अन्यतोऽपि सम्भवात् । क्वचिद्विघ्नध्वंसोऽपि अपूर्वफलम् । अपूर्वस्य स्वफलानुकूलसम्पादकत्वस्वाभाव्यात् । न चैवं कृतमङ्गलस्य प्रारब्धापरिसमाप्तिर्न स्यादिति वाच्यम् । विघ्नान्तरभावे तदभावादेव फलबलात् मङ्गलापूर्वस्यैकविघ्ननिवृत्तिमात्रसम्पादकत्वस्वभावकल्पनात् । तत्राङ्गवैगुण्यादपूर्ववैफल्यं वा कल्प्यताम् । तस्माद्यथा स्वर्गकामादिवाक्येन सामान्याकारेणापि स्वर्गविशेषं प्रत्येव साधनत्वमग्निहोत्रादेर्बोध्यते, तथा आचारानुमितश्रुत्या समाप्तित्वसामान्याकारेण तद्विशेष एव मङ्गलस्य साधनत्वं बोध्यते । तत्र श्रुतिः प्रत्यक्षा अत्र त्वनुमेयेति विशेषोऽकिञ्चित्करः । 'निर्विघ्नं परिसमाप्यता'मिति कामनानुमितश्रुत्या च विशिष्यैव तत्साधनत्वं बोध्यते इति न किञ्चिदनुपपन्नमिति ॥

**वन्दे तमात्मसम्बुद्धस्फुरद्ब्रह्मावबोधतः ।**
**अर्थतोऽपि न नाम्नैव योऽनन्यानुभवो गुरुः ॥ ६ ॥**
**प्रकाशात्मा यतिः सम्यक्प्राप्तविद्याशुशुत्सया ।**
**यथाश्रुतं यथाशक्ति व्याख्यास्ये पञ्चपादिकाम् ॥ ७ ॥**
**विदितसकलवेद्यैर्न प्रशंसन्ति लोके**
**ग्रथितमपि महद्भिः किं पुनर्मादृशेन ।**

---

अशेषजगतां सुखदा, ब्रह्मविद्यापि अविद्यानिरसनेन निरतिशयस्वात्मानन्दं अभिव्यनक्ति इति अशेषजगतां सुखदा भवतीति साधर्म्यान्तरम् । विमलम्—ग्रन्थतः अर्थतश्च सर्वदोषरहितं भाष्यम्, तत् करोतीति **विमलभाष्यकृत् तं शंकरं नमामि** इति योजना ॥ ५ ॥ ता.

इदानीं स्वगुरुं नमस्करोति—**वन्दे** इति । तमेव विशिनष्टि—**योऽनन्यानुभव** इति । न नाममात्रमेतत्, तदनुरूपो वाच्यार्थोऽप्यस्ति इति व्युत्पादयति—**आत्मसम्बुद्धे**ति । आत्मसंबुद्धतया सदा स्फुरति ब्रह्म, न तु घटादिवत् परतः । तथाभूतब्रह्मानुभवात् तत्साक्षात्करणात् गुरुरपि **अनन्यानुभवः**—न विद्यते अन्यो यस्मात् असौ अनन्यः, तस्मिन् अनुभवः साक्षात्कारो यस्य इति व्युत्पत्त्या ब्रह्मसाक्षात्कारवत्तया गुरोरुत्कर्षो दर्शितः । वस्तुतस्तु अनन्यश्चासौ अनुभवश्चेति अद्वितीयबोधरूपत्वमेव नाम्नोऽर्थः । तत्त्वंपदार्थयोरेकत्वपरत्वात् परमहंसानामिति द्रष्टव्यम् ॥ ६ ॥

यदर्थं मङ्गलाचरणं संपादितं तत् कार्यं स्वनामग्रहणपुरस्सरं निर्दिशति—**प्रकाशात्मा** इति । **प्राप्तविद्याशुशुत्सया**—विद्वज्जनेषु विद्यायाः शोधनार्थम् । ग्रन्थे हि क्रियमाणे सति उपपत्त्यनुपपत्तिनिरूपणेन विद्या शोधिता भवति । **यथाश्रुतं** इति संप्रदायवत्तां दर्शयति । संप्रदायवत्त्वेऽपि न प्रतिपादनसामर्थ्यमिति ; अत्राह—**यथाशक्ति** इति । यद्वा, श्रुतिमात्रं न भवति स्वयं ऊहापोहसामर्थ्यमप्यस्ति इत्याह—**यथाशक्ति** इति ॥ ७ ॥

इदानीं दुर्जनेषु अविनयं सज्जनेषु विनयं च दर्शयति—**विदिते**ति । सर्वज्ञकल्पैः उत्तमगुणैः अपि विरचिते ग्रन्थे दुर्जनाः निन्दामेव कुर्वन्ति । तेन

**इति विफलसमेऽस्मिन् वाग्व्ययेऽहं प्रवृत्तः**
**स्वमतिविमलतायै क्षन्तुमर्हन्ति सन्तः ॥ ८ ॥**

**प्रारिप्सितग्रन्थस्य अविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च अभिलषितदेवतापूजानमस्कारः कर्तव्यः, शास्त्रार्थश्च तत्त्वम्पदार्थविवेकोपायलभ्यः प्रत्यग्ब्रह्मणोरेकत्वलक्षणः सङ्क्षेपतो दर्शनीयः कृत्स्नस्य भाष्यस्य तत्र तात्पर्यकथनाय, इति त[देत]दुभयं श्रुत्य-**

---

ता. न काचन तेषां क्षतिः, एवं अस्माकमपि इत्यभिप्रायः। समत्सरैरपरिग्रहात् विफलं विमत्सरैः परिग्रहाच्च सफलमिति विफलसमम्। 'अफलानि दुरन्तानि समव्ययफलानि च। अशक्यानि च वस्तूनि नारभेत विचक्षणः॥' इति न्यायात् किमर्थं तर्हि प्रवर्तसे इति; अत आह—**स्वमती**ति। 'तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः। हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा॥' इति न्यायात् सत्सु ग्रन्थरूपेण प्रकाश्यमानायां विद्यायां स्वमतेः विमलता भवतीति भावः। **क्षन्तुमर्हन्ति** इति सत्सु विनयप्रदर्शनम् ॥ ८ ॥

इदानीं पञ्चपादिकाव्याख्याने प्रवृत्तः प्रथमश्लोकस्य तात्पर्यमाह—**प्रारिप्सि**तेति। अविघ्नेन परिसमाप्तिप्रचयगमनयोरपि दृष्टप्रयोजनत्वात् समस्य चतुर्थीद्विवचनेन कथनम्। शिष्टाचारपरिपालनस्य एकस्यैव अदृष्टप्रयोजनत्वात् पृथक्कथनम्। **पूजानमस्कारः**—पूजापूर्वको नमस्कारः। पूजा च अत्र गुणसंकीर्तनलक्षणा स्तुतिः। तस्याः पूजाङ्गत्वात् 'यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा' इति दर्शनात्। तेन 'ब्रह्मणे नमः' इत्येतावतैव नालम्। किन्तु,' अनाद्या-

---

भा. **प्रचयगमने**ति। न च मङ्गलस्य समाप्त्यतिरिक्तफलकल्पे(वत्त्वे) वक्ष्यमाणग्रन्थकरणाङ्गत्वोक्तिविरोधः, स्वतोऽफलस्यैव फलवत्संनिधिपठि(पति)तस्य तदङ्गत्वादिति वाच्यम्। न तावत् प्रचयगमनं फलं नमस्कारस्य तदङ्गत्वविरोधि, तद्धि तस्य समाप्तिद्वारा फलं न साक्षात्— असमाप्तस्य तदयोगादिति तत् ग्रन्थकरणस्यापि फलमेव। नापि शिष्टाचारपरिपालनाख्यं फलं तदङ्गत्वविरोधि। तद्धि शिष्टानुष्ठानप्रवाहाविच्छेदः। स च मङ्गलानुष्ठानमात्रात् सिद्ध्यति न त्वनुष्ठितमङ्गलात्। तस्य तत्रानुपयोगात्। फलसाधनत्वेन(ना)श्रुतस्य

**र्थाभ्यां सङ्क्षेपतो दर्शयति**—अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने। अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नमः॥ **इति। कृत्स्नस्य भाष्यस्य ब्रह्मात्मैकत्वे तात्पर्यं अत्र दर्शितम्। उत्तरत्र विभज्य तात्पर्यदर्शनात्॥** * पञ्चपादिका पुटम्-पङ्क्तिः 1 . 1

ता. नन्दे' त्यादिविशेषणान्युपादायैवालम्, कृतमितरविशेषणैः इति; अत आह—**तत्त्वंपदार्थेति**॥

अत्र पूर्वार्धेन त्वंपदार्थः परिशोधितः। उत्तरार्धेन तत्पदार्थः। तथा हि—परमप्रेमास्पदत्वात् प्रत्यगात्मा परमानन्दरूपः प्रमीयते। न च आनन्दस्य विषयेन्द्रियसंप्रयोगजन्यत्वात् आत्मरूपत्वं न संभवतीति मन्तव्यम्। जन्मादिप्रतिभासस्य अन्तःकरणवृत्त्युपाधिकतया अन्यथासिद्धत्वात्। एवं ज्ञानस्य कूटस्थत्वादिकमपि समर्थनीयम्। तदेवं पूर्वार्धेन त्वंपदार्थपरिशोधनं क्रियत इति युक्तम्। ब्रह्मणि च जगत्कारणे सप्रपञ्चत्वनिरासाय 'अभूतद्वैतजालाय' इति विशेषणम्। तदेवं शोधितयोः 'साक्षिणे ब्रह्मणे नमः' इति सामानाधिकरण्येन एकत्वमाह। तस्मात् न कस्यापि विशेषणस्य वैयर्थ्यमिति भावः। ननु कृत्स्नशास्त्रार्थः कथमेकेन प्रतिपादयितुं शक्यत इति; अत आह—**संक्षेपत** इति। तथापि शास्त्रस्यादौ प्रदर्शनं किमर्थमिति; अत आह—**कृत्स्नस्य** इति। तात्पर्यकथनं च श्रोतॄणां सुखप्रतिपत्त्या प्रवृत्तिसिद्ध्यर्थमिति द्रष्टव्यम्॥

ननु "अर्थैकत्वादेकं वाक्यम्" इति न्यायात् एकस्य श्लोकस्य कथमर्थद्वयपरत्वमिति; अत आह—**तदेतत्** इति। श्रुत्या मुखतः मङ्गलाचरणं अर्थाच्च शास्त्रार्थः प्रदर्शित इति विभागः॥

ननु उत्तरत्रापि तात्पर्यं प्रदर्श्यते, ततः पौनरुक्त्यमापन्नमिति; अत आह—यद्वा पूर्वापरविरोधः इत्याशंक्याह— **कृत्स्नस्य** इति। **विभज्य** इति।

भा. तस्य तत्र प्रमाणाभावाच्च। वस्तुतस्तु नमस्कारो नाङ्गमिति वक्ष्यत इति। यद्यपि नमस्कार इव ब्रह्मस्वरूपमपि शब्देन प्रतीयते, तथाऽपि तस्यान्याप्रतिपाद्यत्वरूपं विषयत्वं न शाब्दम्, स्वरूपविशेषज्ञानेनार्थात् ज्ञायते इति श्रुत्यर्थाभ्यामित्युक्तमिति द्रष्टव्यम्॥

* मदरास्‌राजकीयप्राच्यामुद्रितग्रन्थसङ्ग्रहणकोशस्थानाधिकारिभिः प्रकाशितसटीकाद्वयपञ्चपादिकापुस्तकानुसारेण इदं पुटपङ्क्त्योः अङ्कनम्॥

अत्र देवतागुरुविषया पूजानमस्काराद्युपबृंहिता भक्तिः वक्तुः उक्तप्रयोजनसम्पादिन्यपि श्रोतॄणामपि विद्याङ्गभावं प्रतिपद्यते इति
5 - 1 **वाङ्मनःकायप्रणिधानैः गुरूनभिपूजयति**—नमः श्रुतिशिरःपद्मषण्डमार्तण्ड-मूर्तये—इत्यादिभिः त्रिभिः श्लोकैः । **यत्कार्यमुद्दिश्य मङ्गलाचरणं**
6 . 9 **सम्पादितं तत् निर्दिशति**—पदादिवृन्तभारेण इति ॥

---

ता. लक्षणसंभावनासद्भावप्रमाणादिपरतया तत्र अवान्तरतात्पर्यमेव दर्शितम्, तेन न पौनरुक्त्यम्, नापि पूर्वापरविरोधः, महातात्पर्यस्य अवान्तरतात्पर्येण अविरोधादित्यर्थः ॥

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥'

इत्यादिश्रुतिभ्यो देवताभक्तेरिव गुरुभक्तेरपि विद्याप्रतिपत्त्यङ्गताप्रतिपादनात् अत्र गुरुं नमस्करोति उत्तरैः त्रिभिः श्लोकैः इत्याह—**वाङ्मन** इति । श्लोकानां वाग्रूपत्वात् वाचिकं प्रणिधानं वाचो मनःपूर्वत्वात् मानसं नमामीति प्रह्वीभावस्य कथनात् कायिकं च प्रणिधानं लभ्यत इति द्रष्टव्यम् ॥

ननु तथापि ग्रन्थात् बहिरेव किमिति देवतानमस्कारो न कृत इति; अत आह—**अत्र** इति । प्राप्तविद्योऽप्याचार्यः देवतागुरुविषयां भक्तिं वाचनिकीं समाचरति चेत् किंपुनर्न्यायेन शिष्याणामपि तद्विषया भक्तिः अनुष्ठेया इति मतिरुपजायते, अन्यमनस्कानामपि श्लोकोच्चारणेन अर्थात् नमस्कारः सिद्ध्यति, तदर्थमित्यर्थः ॥

इदानीं चतुर्थश्लोकस्य तात्पर्यमाह—**यत्कार्यं** इति ॥

---

भा. **यत्कार्यमिति । यस्य**—प्रारब्धस्य **कार्यं**—फलं **उद्दिश्य मङ्गलाचरणं** कृतमित्यर्थः । न तु यदर्थं मङ्गलाचरणं कृतमिति । मङ्गलस्य लौकिकग्रन्थ-करणाङ्गत्वेन[यथाश्रुते अर्थे प्रतिपाद्यमाने](श्रुतेः स्वार्थप्रतिपादने) तद्द्योतक-मानसापेक्षत्वप्रसङ्गात्, फलसाधनत्वेनैव श्रुतस्य तदङ्गत्वे प्रमाणाभावाच्च ।

**नन्वेदं भाष्यं व्याख्यानपदवीमुपारोढुमर्हति, भाष्यलक्षणाभावात् । 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥' इति हि भाष्यलक्षणं वदन्ति । तत्र 'अथातो ब्रह्मजिज्ञासा'इति सूत्रे अनुवादपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च 'कर्तव्या' इति पदमध्याहर्तव्यम् । तत्र जिज्ञासापदेन अन्तर्णीतं विचारमुपलक्ष्य अनुष्ठानयोग्यतया**

---

ता. ननु भाष्यमेवेदं न भवति भाष्यलक्षणाभावात्, इत्याक्षिपति—**ननु** इति । किं तत् भाष्यलक्षणमिति ; अत्राह—**सूत्रार्थ** इति । **सूत्रार्थो वर्ण्यते यत्र तत् भाष्यं** इत्यभिधाने वृत्तिग्रन्थस्यापि भाष्यत्वप्रसङ्गः । तद्व्यावृत्त्यर्थं **वाक्यैः** इति विशेषणम् । वार्त्तिकादिव्यावृत्त्यर्थं **सूत्रानुकारिभिः वाक्यैः** इति । **स्वपदानि वर्ण्यन्ते** इत्येतावन्मात्राभिधाने सङ्ग्रहविवरणरूपप्रकरणेष्वतिव्याप्तिः, इत्यत उक्तं **सूत्रार्थो वर्ण्यते** इति ॥

किं तर्हि सूत्रम् ; को वा तस्यार्थः ; इत्याकाङ्क्षायां सूत्रं पूरयित्वा तस्यार्थमाह—**तत्र** इत्यादिना । किमित्यध्याहर्तव्यमिति ; अत आह—**अनुवादे**ति । 'सप्तद्वीपा वसुमती' इत्यादिवत् अनुवादो मा भूदिति कर्तव्यपदमध्याहर्तव्यमित्यर्थः । तथापि पदान्तराध्याहारप्रसक्तिं परिहरति—**पुरुषप्रवृत्ती**ति । ननु अध्याहृतेऽपि कर्तव्यपदे तस्य जिज्ञासापदेन संबन्धो नोपपद्यते, ज्ञानतदिच्छयोः कर्तुमकर्तुमन्यथा च कर्तुमशक्यत्वादिति ; अत आह—**तत्र जिज्ञासे**ति । इष्यमाणज्ञानस्य विचारसाध्यतया विचाराविनाभावात् इच्छाज्ञानयोर्मध्ये विचारो लभ्यते स च जिज्ञासापदेनोपलक्ष्यते

---

भा. उपकारकत्वमात्रेण वृद्धानां तत्राङ्गत्वव्यवहारः इति। **ननु नेदं भाष्यमिति** । इदं भाष्यं सन्न व्याख्येयमित्यर्थः । ननु कर्तव्यपदं नाध्याहारयोग्यं प्रकृतिप्रत्ययार्थयोः ज्ञानेच्छयोरन्यतरस्यापि कृतिसाध्यत्वाभावादित्याशङ्क्य, आनर्थक्यपरिहाराय प्रवृत्तये च अध्याहृतकर्तव्यपदार्थस्य लक्षितविचारेणान्वयमाह—**तत्र जिज्ञासेति** । **अन्तः**—ज्ञानेछयोर्मध्ये इच्छासाध्यत्वेन ज्ञानसाधनत्वेन प्राप्तमिति लक्ष्यस्य लक्षणाबीजं सम्बन्धो दर्शितः ॥

**साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्यः इति सूत्रवाक्यस्य श्रौतोऽर्थः सम्पद्यते, अर्थात् अधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञान-**

---

ता. इति यावत् । इदानीमथशब्दार्थमाह—**साधनचतुष्टयसंपन्नस्य** इति ॥

ननु श्रौतार्थेन संबन्धाभावेऽपि आर्थिकार्थेन संबन्धो भविष्यति इत्याशंक्य तेनापि संबन्धो नास्तीति दर्शयितुं आर्थिकार्थमाह—**अर्थात्** इति।

---

भा. ननु न तावत् जिज्ञासापदसमुदाये लक्षणा, जिज्ञासापदस्य यौगिकतया समुदायस्याशक्तत्वात्, शक्तपदस्यैव लक्षकत्वात् । नापि सन्प्रत्यये अजहल्लक्षणा । इच्छाविचारयोरेकक्रियानन्वयित्वेन छत्रिपदवदजहल्लक्षणानुपपत्तेः । नापि तत्र जहल्लक्षणा। इच्छापरित्यागे ज्ञानस्य साध्यताप्रतीत्यभावेन अनाकांक्षितत्वात् तस्य साधनेन विचारेणान्वयायोगात् ज्ञानायेति साध्यत्वाकारेण अन्वयायोगाच्च । नापि ज्ञानपदे अजहल्लक्षणा, ज्ञानविचारयोरेकवृत्त्युपस्थितयोः परस्परान्वयासम्भवेन साध्यसाधनत्वेनान्वयानुपपत्तेः । न ह्येकवृत्त्युपस्थितानामपि परस्परमन्वयो व्युत्पत्तिसिद्धः । शक्यलक्ष्यसमुदायस्य एककार्यान्वयाभावाच्च न तत्राजहल्लक्षणा । नापि तत्र जहल्लक्षणा, ज्ञानाय विचारः कर्तव्य इति श्रौतान्वयायोगात् इच्छाया अनन्वयप्रसङ्गात् कर्तव्यस्य विचारस्य इच्छया अन्वयासम्भवात् विचारातिरिक्तस्य लक्ष्यमाणार्थस्याभावाच्चेति ॥

मैवम्—इच्छापदेन विचारो जहल्लक्षणयोपस्थाप्यते। ज्ञानपदमपि सिद्धावस्थज्ञानवाचकं 'पञ्चदशान्याज्यानी'त्यत्र सिद्धावस्थस्तोत्रनामाज्यपदमिव पञ्चदशत्वसङ्ख्यागुणान्वयाय साध्यावस्थं स्तोत्रं, विचारान्वययोग्यं साध्यावस्थं ज्ञानं लक्षयति, श्रूयमाणस्य शब्दस्य स्वाभिप्रेतन्यूनाधिकार्थकल्पनायां लक्षणादेरावश्यकत्वादिति पदद्वयेऽपि जहल्लक्षणा । न च पदद्वये लक्षणा अनुपपन्ना, 'अर्धमन्तर्वेद्यर्धं बहिर्वेदी'त्यादौ 'विषं भुङ्क्ष्वे'त्यादौ च तस्या दृष्टत्वादिति भावः। एवं च विचारमुपलक्ष्येत्यत्र विचारपदं साध्यावस्थज्ञानस्याप्युपलक्षणम् ॥

**श्रौतोऽर्थस्सम्पद्यत इति**। यद्यप्यथशब्दस्य किञ्चिन्निरूपितानन्तर्यमात्र-

मिति सिध्यति, सन्निधानाच्च वेदान्तवाक्यविचारः इति श्रुत्यर्थाभ्यां साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रवाक्यस्य तात्पर्येण प्रतिपाद्योऽर्थोऽवगतः । तत्र इदं भाष्यं न सूत्रार्थकलामपि प्रतिपादयति, अतो न व्याख्यानार्हं इत्येतं शङ्कितं दोषं परिहरन् भाष्यखण्डस्य सूत्रेण अर्थादुपात्तविषय-प्रयोजनप्रतिपादने तात्पर्यं दर्शयति—युष्मदस्मत्प्रत्ययगोचरयोः इत्यादि 7.1
अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इत्यन्तं भाष्यं अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इत्यनेन भाष्येण पर्यवस्यत् शास्त्रस्य विषयः प्रयोजनं च अर्थात् प्रथमसूत्रेण सूत्रिते इति प्रतिपादयति इति। तत्र **'नैसर्गिकोऽयं लोकव्यवहारः इत्यन्तं भाष्यम्' इति ग्रन्थः 'शास्त्रस्य विषयं प्रयोजनं च प्रतिपादयति' इत्युत्तरेण सम्बध्यते ॥**

---

ता. आर्थिकमर्थान्तरमाह—**सन्निधानाच्च** इति। वेदान्तेषु ब्रह्मणः प्रतिपाद्यत्वेन प्रसिद्धत्वात् इत्यर्थः। अस्तु, प्रकृते किमायातमिति ; अत आह—**तत्रेदम्**

---

भा. मर्थः, तथापि सामान्यशब्दस्य नियतविशेषपरत्वव्युत्पत्तिः श्रुत्यनुभवसिद्धः प्रतियोगिविशेषोऽपि शब्दार्थ इत्यर्थः। **सन्निधानाच्च वेदान्तवाक्यविचार** इति। योग्यतया स्मृतिरत्र सन्निधानम्। 'तं त्वौपनिषद'मित्यादिश्रुत्या वेदान्तानां तत्प्रमितियोग्यतया 'नावेदवि' दित्यादिश्रुत्या तदितरमानानां तदयोग्यत्वेन च अवगतत्वात्। श्रोतव्यादिवाक्यसन्निधौ च वेदान्तानां पाठात् तस्य तानि सन्निहितानि इति तन्मूलकसूत्रस्यापि तानि सन्निहितानीति वा अर्थः ॥

**अर्थादुपात्तेति**। ज्ञानस्य स्वतोऽपुरुषार्थत्वात् पुरुषार्थसाधनत्वेनेच्छा वाच्या। स च न स्वर्गादिः, ततो विरक्तस्यैवात्राधिकारात् दृष्टे सम्भवति अदृष्टकल्पनायोगाच्च। न च ततोऽन्यः कश्चिद्भावरूपो ज्ञानसाध्योऽधिकारिविशेषणं मोक्षोऽस्तीति बन्धनिवृत्तिरेव तत्साध्येति बन्धस्य मिथ्यात्वम्। अत एव अद्वितीयमेव ब्रह्म जिज्ञास्यमिति तदुभयमप्यार्थिकमित्यर्थः ॥

ननु किमध्यासभाष्यं मुख्यया वृत्त्या विषयप्रयोजने उपस्थापयति लक्षणया गौण्या वा ? नाद्यः, तस्य तत्राशक्तेः ; न द्वितीयः, अन्वयानु-

**ननु कथं भाष्यद्वयमेव विषयप्रयोजने प्रतिपादयति ? । शास्त्रारम्भनिमित्तविषयप्रयोजनसिद्धिहेतोः अध्यासस्य उपस्थापकत्वात् इति ब्रूमः । हेतुवचनं हि प्रतिज्ञातार्थमेव साधयति ॥**

---

ता. इति । विषयप्रयोजनप्रतिपादकत्वं भाष्यद्वयस्योक्तमाक्षिपति—**ननु** इति । भाष्यद्वयमेव विषयप्रयोजने प्रतिपादयतीति कथम् ? 'अस्यानर्थहेतोः' इत्यस्यापि भाष्यस्य तत्प्रतिपादकत्वात्, भाष्यद्वयं विषयप्रयोजने एव प्रतिपादयतीति कथम् ? अध्यासस्यापि प्रतिपादकत्वात्, विषयप्रयोजने प्रतिपादयत्येवेति (वा) कथम् ? अध्यासस्य प्रतिपादकत्वात् इत्यर्थः । समाधत्ते-**शास्त्रे**ति । शास्त्रारम्भे निमित्तं विषयप्रयोजने, तयोश्च सिद्धिहेतुरध्यासः, तस्य उपस्थापकं—ज्ञापकं इदं भाष्यद्वयम्, तस्मात् इत्यर्थः । तथापि अध्यासोपस्थापकस्य विषयप्रयोजनसाधकत्वं कथमिति ; अत आह—**हेतुवचनं हि** इति । यथा धूमवत्त्वात् इति वचनं प्रतिज्ञातार्थं अग्निमत्त्वमेव साधयति, तथा तद्वत् बन्धस्याध्यासात्मकत्ववचनं हेतुतया विषयप्रयोजने एव साधयति, अस्यानर्थहेतुवचनत्वात् इदमेव विषयप्रयोजनाख्यं प्रतिज्ञातार्थं साधयति, अस्यानर्थहेतोरिति भाष्यं एतत्सिद्धानुवादकम्, हेतुवचनत्वात् प्रतिज्ञातार्थं साधयत्येव-न साधयतीति न, इति त्रिधा योजनया आक्षेपत्रयपरिहारो द्रष्टव्यः ॥

कथमस्य भाष्यद्वयस्य हेतुवचनत्वम् ? कोवा प्रतिज्ञार्थः ? विषयप्रयो-

---

भा. पपत्त्याद्यभावात् ; न तृतीयः, गुणसम्बन्धाप्रतीतेः ; नापि तात्पर्येण, तस्य अवृत्तित्वात् ; अन्यथा तस्य वृत्त्यन्तराननुगमप्रसङ्गात् इत्याशङ्क्य, आह—**हेतुवचनं हीति** । यथा वह्नौ तात्पर्येण प्रयुक्तं धूमवत्त्वादितिवाक्यं तत्प्रतीतिमन्तरेणापर्यवस्यत् मुख्यवृत्त्यैव वह्निं प्रतिपादयति, एवं विषयप्रयोजनतात्पर्येण प्रयुक्तमध्यासभाष्यमपि । तदुक्तं नयविवेकटीकायां वरदराजेन—'मुख्यार्थमभिदधतः शब्दस्य यस्य यस्मिन्नर्थे तात्पर्यं तस्य तत्र मुख्यैव वृत्तिः, यथा स्वर्गकामपदस्य कक्ष्यान्तरितनियोज्यपरस्य' इति । वस्तुतस्तु नैवम्, लक्षणोच्छेदप्रसङ्गात् । किन्तु हेतुद्वारा भाष्यस्य विषयादौ तात्पर्यमिति द्रष्टव्यम् ॥

**तथा हि–एतत् शास्त्रं आरम्भणीयम्, सम्भावितविषयप्रयोजनत्वात्, कृष्याद्यारम्भवत्; शास्त्रं च सम्भावितविषयप्रयोजनम्, अविद्यात्मकबन्धप्रत्यनीकत्वात्, जाग्रद्बोधवत्, इति॥**

---

ता. जनयोर्वा कथं शास्त्रारम्भनिमित्तत्वम्? इत्याकाङ्क्षायां अनुमानाभ्यां दर्शयति–**तथा हि** इति। हेतोरसिद्धिमाशंक्य परिहरति—**शास्त्रं च** इति। शास्त्रस्य कथं सत्यबन्धप्रत्यनीकत्वमिति; अत आह—**अविद्यात्मके**ति। तस्मात

---

भा. भाष्यस्य विषयप्रयोजनतात्पर्यवर्णफलमाह—**एतदिति**। 'अथातो ब्रह्मजिज्ञासे'ति सूत्रसमुदायात्मकं शास्त्रमित्यर्थः। **आरम्भणीयम्**—प्रेक्षावत्कृतिसाध्यमित्यर्थः। प्रेक्षावन्तश्च त एव, ये निष्प्रयोजनं निर्विषयं च न कुर्वन्ति। अत एव एतदेव साध्यं बौद्धादिशास्त्रविलक्षणमिह सिसाधयिषितं न तु कृतिसाध्यत्वमात्रमिति भावः। **सम्भावितेति**। प्रयोजनवत्त्वमात्रं हेतुः, सम्भावितविषयपदं तु प्रवृत्त्युपयोगितया प्रयोजनेन सह भाष्यकारेण तस्य प्रतिपादनात् संपातायातम्, न तु हेतुशरीरोपयोगि, तेन विना व्यभिचारादेरभावात्। ननु एवमपि ब्रह्मसाक्षात्कारे दैववशसम्पन्नेष्टज्ञानादौ च व्यभिचारः, तस्य कृतिसाध्यत्वाभावात्, अन्यथा ज्ञानस्य विधेयत्वनिराकरणायोगादिति चेत्, न—कृतिसाध्यत्वे सति प्रयोजनवत्त्वस्य विवक्षितत्वात्, तस्य च ज्ञाने अभावात्। **कृष्याद्यारम्भवदिति**। आरभ्यमाणकृष्यादिक्रियावदित्यर्थः॥

उक्तहेतोरसिद्धिमाशङ्क्य, भाष्याभिप्रेतं हेतुद्वयमाह—**शास्त्रं चेति**। 'अथात' इत्यादिसूत्रसमुदाय इत्यर्थः। तथा च शास्त्रत्वस्य हितसाधनत्वरूपस्य एतद्धेत्वधीनत्वादिति यो दोषस्स इह नास्तीत्यर्थः। **बन्धप्रत्यनीकत्वादिति** हेतुः। बन्धनिवृत्त्यनुकूलत्वादित्यर्थः। अतो बन्धस्य ज्ञानैकनिवर्त्यत्वेऽपि नासिद्धिः। **जाग्रद्बोधवदिति**। जाग्रति भयनिवर्तकरज्ज्वादिज्ञानवदित्यर्थः, न तु स्वप्ननिवर्तकजाग्रद्बोधवदिति। मूलाविद्याकार्यस्य[स्वप्नस्य]स्वकारणविनाशादेव विनाशात्, ज्ञानस्य तद्धेत्वविद्यानिवर्तकस्यैव तन्निवर्तकत्वात्। अन्यथा तन्त्वादिज्ञानात् पटादिनिवृत्तिप्रसङ्गात् इति भावः। न चायं हेतुरसिद्ध इत्याह—**अविद्येति**। बन्धो ज्ञाननिवर्त्यः, अविद्यात्मकत्वात्

तदेवं शास्त्रस्यारम्भनिमित्तविषयप्रयोजनवत्त्वप्रत्यनीकस्य बन्धस्य
अविद्यात्मकत्वं निर्दिशत् भाष्यद्वयं विषयप्रयोजने प्रतिपादयति इति।
ननु बन्धस्याविद्यात्मकत्वलक्षणो हेतुरसिद्धः, कथमसिद्धं असिद्धेन
7 - 3 साध्यते इति; अत आह—सर्वे वेदान्ता आरभ्यन्ते इत्यनेन भाष्येण पर्यवस्यत्
इति। विषयादिसिद्धिहेतोः अध्यासस्य सिद्धिहेतुभूतानि लक्षण-
सम्भावनासद्भावप्रमाणानि प्रतिपादयता भाष्येण सह लक्षणादिभिः
स्वार्थं अध्यासं साधयित्वा विषयप्रयोजने साधयति इत्यर्थः। अत
एव व्यवधानाव्यवधानाभ्यां विषयादेः साधकत्वात् 'एतदन्तम्'
'अनेन पर्यवस्यत्' इति भाष्यस्य विभागेन उपादानं कृतम् ॥

ननु तर्हि 'सर्वलोकप्रत्यक्षः' इत्यनेन पर्यवस्यत् इति वक्तव्यम्।
सत्यम्। 'अस्यानर्थहेतोः' इति भाष्यस्य विषयप्रयोजनयोः वेदान्तवा-
क्यसम्बन्धकथनद्वारेण विचारशास्त्रसम्बन्धप्रतिपादनपरत्वात् विचार-
शास्त्रीयविषयप्रयोजनसाधने सव्यवधानत्वसाम्येन पूर्वभाष्येण सह
उपादानं कृतम् ॥

---

ता. सूत्रसङ्गतमिदं भाष्यं इत्युपसंहरति—**तदेवम्** इति। **विषयादि** इत्यादिशब्देन
प्रयोजनमुच्यते। लक्षणसंभावनासद्भावप्रमाणानि अध्यासं साधयन्ति, भाष्यद्वयं
पुनः तत्सिद्धाध्यासानुवादेन विषयप्रयोजने एव साधयतीत्यर्थः। **विषयप्रयोजने**
**साधयति** इति। भाष्यद्वयमिति शेषः। अयं विभागः टीकाकारस्याभिप्रेत
इति कथमवसीयत इति; अत आह—**अत एव** इति ॥

ननु तथापि 'अस्यानर्थहेतोः इत्यनेन पर्यवस्यत्', इति न वक्तव्यम्,
तस्य लक्षणादिभाष्यवत् अध्यासासाधकत्वात् इत्याक्षिपति—**ननु** इति।
यद्यपि अध्याससाधकत्वं न भवति, तथापि शास्त्रीयविषयप्रयोजनयोः व्यवधानेन
साधकम्, तेन व्यवधानेन साधकत्वसाम्यात् लक्षणादिभाष्यैः सह उपादानं कृतं
इति परिहरति—**सत्यम्** इति। कस्य अधिकारिणः कं पुरुषार्थं जिज्ञासितं निर्णेतुं

---

भा. मिथ्यात्वादिति यावत्, सम्मतवदिति हेतुद्वयं विवक्षितम्। अत एव
वक्ष्यति—'**ननु बन्धस्याविद्यात्मकत्वलक्षणो हेतुरसिद्धः**' इति ॥

**ननु एवमपि असूत्रसम्बन्धिनी विषयप्रयोजने किमिति प्रतिपाद्येते इति ; अत आह**—विषयः प्रयोजनं च अर्थात् प्रथमसूत्रेण सूत्रिते इति इति। इतिशब्दो हेतौ। **यस्मात् प्रथमसूत्रेण अर्थात् सूत्रिते तस्मात् प्रतिपादयति इति ॥** 8 · 1

**कः पुनरस्य सूत्रस्य प्रसङ्गः इति ॥**

---

कस्य वा मूलभूतप्रमाणवाक्यस्य अर्थनिर्णयाय इदं सूत्रं प्रवृत्तम् ? इति पृच्छति— ता.
यद्वा—ब्रह्मप्रतिपादनायेदं शास्त्रं प्रवृत्तं नचात्र ब्रह्मस्वरूपं प्रमाणं वा प्रतिज्ञायते निर्णीयते वा इति असंगतमिदं सूत्रं इत्याक्षेपः—**कः पुनः** इति।

---

एवं भाष्यस्य सूत्रार्थासंस्पर्शितया अभाष्यत्वादव्याख्येयत्वमिति शङ्कां परिहृत्य, इदानीं सूत्रमेवासङ्गतमिति तन्मूलं भाष्यमपि अव्याख्येयमित्याह—**कः पुनरिति**। अयं भावः—अधिकारिणो ब्रह्मज्ञानाय विचारकर्तव्यतानिर्णयापेक्षायां तदर्थं न्यायोऽनेन सूचनीयः। तन्निर्णयापेक्षा च तस्य विचार्यमाणब्रह्मजिज्ञासायां सत्यामेव। विचारस्य विचार्यमाणार्थ[निर्णयेच्छारूप]जिज्ञासासाध्यत्वात्। सा च न युज्यते। ब्रह्मणोऽप्रसिद्धेः। सन्दिग्धे हि जिज्ञासा, न च अत्यन्ताप्रसिद्धे। तस्य धर्मिज्ञानसाध्यत्वाच्च। तच्च न ब्रह्मणि प्रत्यक्षादिना, तस्य तदयोग्यत्वात्। नापि वेदान्तात्, तस्य विचाराधीनशक्तितात्पर्यप्रतिपत्तिकस्य विचारं विना स्वतोऽर्थाप्रतिपादकत्वात् ॥ भा.

ननु स्वयम्प्रकाशत्वात् ब्रह्मणो धर्मिज्ञानं स्वयमेव भविष्यतीति चेत्, न—तथापि ब्रह्मणो भवद्भिरविद्यावृतत्वाभ्युपगमेन तदसम्भवात्। तदनङ्गीकारे च प्रकाशमाने तस्मिन् संशयादेरभावादविचार एव। ननु अधीतसाङ्गस्वाध्यायस्य पदपदार्थसम्बन्धज्ञानात् वेदान्तैरापततो ब्रह्म प्रतिपन्नमिति चेत्, केयमापाततः प्रतिपत्तिः ? विचारं विनोत्पन्नज्ञानमिति चेत्, न—तस्य निश्चयत्वे जिज्ञासाऽयोगात्। न च सामान्यविषयमेव तदिति वाच्यम्। निर्विशेषब्रह्मज्ञानस्य तद्रूपत्वायोगात्। तदप्रतिपत्तौ च केवलब्रह्मजिज्ञासाऽसम्भवात्। तदसम्भवे च 'अथातो ब्रह्मजिज्ञासा' इत्यस्य तद्विचारतात्पर्यवर्णनाऽयोगात्। निर्विशेष-

भा. ब्रह्मविषयं संशयरूपमापातज्ञानमिति चेत्, न—सत्यादिवाक्ये कोट्यन्तरोपस्थापकपदाभावात् ॥

न च 'द्वा सुपर्णा' इत्यादिवाक्यमस्तीति वाच्यम्। तच्छ्रवणात् पूर्वमेव विदितपदपदार्थसम्बन्धस्य सत्यादिवाक्यान्निर्णयज्ञानोपपत्तेः। पदार्थज्ञानाभावे च भेदवाक्यश्रवणेऽपि तत्संशयायोगात्। न च वाक्यद्वयात् क्रमेण विरुद्धानेककोट्युपस्थितौ मनसा संशय इति वाच्यम्। प्रथमज्ञानेनैवाविद्यादिप्रपञ्चनिवृत्तौ तदयोगात्। ततस्तदा तदनिवृत्तौ पश्चादपि ततस्तदयोगेन विचारशास्त्रवैयर्थ्यप्रसङ्गः। ननु तत् परोक्षज्ञानमेव, ततः ततो न बन्धनिवृत्तिः। नापि जिज्ञासावैयर्थ्यम्, अपरोक्षज्ञानस्येष्यमाणत्वादिति चेत्, न—प्रथममपि शब्दादपरोक्षज्ञानस्यैवोत्पत्तेः। अन्यथा वेदस्य अप्रामाण्यप्रसङ्गात्। भवद्भिरपि तथैवाभ्युपगतत्वाच्च ॥

ननु प्राथमिकं ज्ञानमपरोक्षमपि प्रतिबद्धत्वादविद्यां न निवर्तयति, विचारादिना प्रतिबन्धो निवर्त्यत इति चेत्। न—ज्ञानस्याविद्यानिवृत्तौ प्रागभावनिवृत्ताविव अन्यानपेक्षणात्, आत्मनोऽज्ञातत्वाभावेन जिज्ञासाऽयोगाच्च। न हि सम्भवति प्रत्यक्षप्रमाणेनार्थः प्रकाशते अज्ञातश्चेति। किञ्च, न तावदविद्यया प्रतिबन्धः। तस्याः ज्ञानैकनिवर्त्यायाः विचारानिवर्त्यत्वात्। निवर्त्यस्यैव निवृत्तौ प्रतिबन्धकत्वायोगाच्च। नाप्यसम्भावनाविपरीतभावनारूपसंशयादिः प्रतिबन्धकः, निर्णितेऽर्थे अविद्यावत् तस्याप्ययोगात्। नापि कर्म, तत्यापि तत्त्वसाक्षात्कारनिवर्त्यत्वश्रुतेः। तस्मादापाततो बोधादात्मनि जिज्ञासेति मनोरथमात्रम्। ततश्च जिज्ञासायां सत्यां विचारः, तदधीनधर्मिज्ञानसाध्या च सेत्येका असङ्गतिः ॥

किञ्च, न्यायसूचकं सूत्रं न्यायानुग्राह्यं प्रमाणमपेक्षते। तच्च न प्रत्यक्षम्। ब्रह्मविचारकर्तव्यत्वस्य तदगोचरत्वात्। ननु ब्रह्म विचार्यं पुरुषार्थत्वात् वेदार्थत्वाद्वा धर्मवत्, वेदान्तवाक्यानि विचारणीयानि वेदवाक्यत्वात् चोदनावाक्यवत्, इत्यनुमानमेव तत्र मानमस्त्विति चेत्, न—ब्रह्मपक्षकानुमानस्य विचाराधीनब्रह्मतत्पुरुषार्थत्वादिनिर्णयसाध्यत्वेनान्योन्याश्रयात्।

वाक्यपक्षकानुमानेन च सत्यादिवाक्यस्य 'वायुर्वै क्षेपिष्ठा' इत्यादिवाक्यवत् धर्मविचारात् पृथग्विचार्यत्वासिद्धेः सूत्रस्य तन्मूलत्वायोगात् ॥ भा.

ननु अध्ययनविधिरेव धर्मजिज्ञासासूत्रस्येव अस्यापि मूलमिति चेत्, न—तस्याक्षरावाप्तिमात्रे पर्यवसन्नस्य विचारद्वयेऽप्यप्रयोजकत्वात्। नाप्यधीतवेदान्ता एव तन्मूलम्, तेषां भेदशास्त्रादप्यर्थनिर्णयोपपत्तेः। न च 'श्रोतव्यः' इत्यादिवाक्यं विचारं विदधत् जिज्ञासासूत्रमूलम्। तस्यापि भिन्नाभिन्नात्मसाधारणज्ञानाय विचारं विदधतोऽद्वैतब्रह्मविचारकर्तव्यतापरसूत्रमूलत्वानुपपत्तेः। अत एव भेदवादिनोऽपि स्वशास्त्रमूलत्वेनेदं वाक्यमुदाजह्रुः। तस्य निरधिकारत्वेन विधित्वानुपपत्तेश्च। न तावत् श्रवणविधिर्नित्यः, अनावश्यकत्वेन अकरणे प्रत्यवायाश्रवणात्। ज्ञानफलाय विचारकर्तव्यताप्रतिपादकसूत्रस्य तन्मूलत्वानुपपत्तेश्च ॥

ननु आर्थवादिकामृत[त्वो] [त्वसाधनज्ञानो]द्देशेन विचारस्य विधानात् काम्यत्वं 'अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' इति अकरणे प्रत्यवायश्रवणात् नित्यत्वं चेति तत् जिज्ञासासूत्रमूलं भवतीति चेत्, तिष्ठतु तावत् काम्यत्वम्। नित्यत्वं तु न वर्णितप्रकारेण विचारसहम्। उदाहृतवाक्यस्य ब्रह्मविद्याप्रशंसापरत्वात्। 'यद्यातुरस्स्यात् मनसा वाचा वा संन्यसेत्' इत्यातुरसंन्यासविधिविरोधेन तद्वाक्यस्य श्रवणविधुरसंन्यासिन इन्द्रयातनापरत्वकल्पनायोगाच्च। संन्यासिनः श्रवणाकरणे प्रत्यवायेऽपि मुमुक्षुत्रैवर्णिकाधिकारश्रवणविधेर्नित्यत्वानुपपत्तेश्च। भगवत्पादानां मते ब्राह्मणस्यैव संन्यासाधिकारात् ॥

अपि च, इदं वाक्यं 'रौति यथार्थं ब्रह्म शब्दयतीति रुत् वेदान्तवाक्यं तत् मुखे येषां नास्ति तान् अरुन्मुखान्' इति न यतेः श्रवणाकरणे प्रत्यवायपरम्। संन्यासिनो वेदान्तावृत्तेः 'सर्वेषु वेदेष्वारणमावर्तये' दिति विहितत्वात्। यदि च वेदान्तार्थपरो रुच्छब्दः, तथापि तस्मिन् मुखम्—आभिमुख्यं श्रद्धा विश्वासो येषां नास्ति त एव अरुन्मुखा इति वेदान्तार्थविश्वासशून्यानामेव इयमिन्द्रयातना, न तु श्रवणशून्यानाम्। तत्र तद्वाचकपदाभावात्। अविश्वासे निरस्ते सर्वतो विरक्तस्य उपनिषदर्थे दृढतरविश्वासवतः स्वत एव श्रवणे प्रवृत्तिसम्भवात् ॥

भा. अथवा, इदं वाक्यं ज्ञानानधिकारिणां संन्यासनिन्दापरमस्तु। अन्यथा यतिग्रहणवैयर्थ्यात्। न च संन्यासिन एव श्रवणेऽधिकार इति तस्याधिकारिणः तदकरणे दोषं दर्शयतीति वाच्यम्। मुमुक्षुमात्रस्यैव श्रवणेऽधिकारात्, संन्यासस्य च ज्ञान एव साधनत्वादिति वक्ष्यते। अस्य वाक्यस्य श्रवणाकरणे प्रत्यवायपरत्वकल्पने आवृत्त्यधिकरणं व्यर्थं स्यात्। श्रवणे संन्यासिनो यावज्जीवानुष्ठेयत्वस्य प्रथमसूत्रत एव सिद्धत्वात्। न चात्र श्रवणविधिमात्रं निरूपितं तस्य तत्र नित्यत्वं सिध्यतीति वाच्यम्। दृष्टार्थत्वहेतूक्तिविरोधात्। किञ्चैवं वाक्यार्थनिर्णयानन्तरमपि यावज्जीवं संन्यासिनोऽनुष्ठेयं स्यात्। अन्यथा किं नाम नित्यं भवेत्॥

किञ्च, अस्य वाक्यस्य श्रवणाकरणप्रत्यवायपरत्वेऽपि श्रवणस्य मोक्षसाधनज्ञानफलत्वाभ्युपगमे न नित्यत्वम्। 'यस्सत्रायावगुरेत स विश्वजिता यजेत' इति प्रायश्चित्तदर्शनेन प्रारब्धकाम्यसत्राकरण इव प्रारब्धकाम्यश्रवणाकरणेऽपि प्रत्यवायोपपत्तेः। संन्यासिन एव गुरुमुखात् वाक्यतात्पर्यावधारणस्य प्रारब्धत्वात्। तस्य चात्र श्रवणत्वे प्रथमाश्रमे प्रसादिताचार्यपरमेश्वरस्य संन्यासानन्तरमेव गुरूपदिष्टतत्तात्पर्यावधारणात् तदुभयप्रसादेन आत्मतत्त्वं निश्चित्य निदिध्यासने प्रवृत्तस्यापि इन्द्रयातना स्यात्॥

किञ्च, अस्य नित्यत्वे स्वर्गकामनां विना याग इव जिज्ञासां विनैव कदाचित् श्रवणे प्रवर्तेत। अन्यथा आवश्यकत्वा(नुपपत्तेः)योगात्। अजिज्ञासोर्विचारकर्तव्यताप्रतिपादकं च सूत्रं न पश्यामः। अस्य मुमुक्षुमात्राधिकारविचारविषयत्वात्। तथैव भाष्यकारादिभिरस्याभिप्रायवर्णनात्। एतेन 'नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना' इत्यादिस्मृतिरपि व्याख्याता॥

किञ्च, इदं प्रत्यवायश्रवणं संन्यासिनामेव। न तु मुमुक्षुमात्रस्य श्रवणाधिकारिणः। ततश्चैकमेव श्रवणं क्वचित् केवलकाम्यं क्वचिदुभयरूपमिति वैरूप्यम्। न च संन्यासिनामेव श्रवणाधिकार इति न वैरूप्यमिति वाच्यम्। तत्र प्रमाणाभावात्। न च 'शान्तो दान्त उपरतः' इत्यादिवाक्यं तत्र प्रमाणमिति। तद्धि वाक्यं 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिवाक्यविहितसंन्यासस्यान्वयव्यतिरेकाभ्यां मुमुक्षाद्वारा ज्ञानसाधन-

शान्त्यादेश्च स्वरूपानुवादेन शान्त्यादिविशिष्टकर्तृकश्रवणेन शान्त्यादिना वा संन्यासस्य समुच्चयपरम्, न शान्त्यादिस्वरूपविधिपरम्, शान्तिदान्त्योरिन्द्रियव्यापारोपरमरूपयोरतिदृढवैराग्ये सति प्रवर्तकरागाभावेन स्वतः सिद्धत्वात्। ताभ्यां विना मुमुक्षाया असम्भवेन तयोस्तद्द्वारा ज्ञानसाधनत्वस्याप्यन्वयव्यतिरेकाभ्यां सिद्धत्वात् ॥ भा.

न च तयोस्साक्षात् ज्ञानसाधनत्वमन्यतोऽसिद्धं श्रुत्या प्रतिपाद्यत इति वाच्यम्। दृष्टमुमुक्षादिद्वारा तद्धेतुत्वे सम्भवति अदृष्टद्वारा तत्कल्पनायोगात्। श्रुतेरप्यन्यपरत्वात्। नाप्युपरतिशब्दवाच्यसंन्यासस्वरूपं तस्य ज्ञानसाधनत्वं वा अनेन विधीयते, तस्यापि व्युत्थानवाक्येन उदाहृतवाक्येन च कमिपदयुक्तेन सिद्धत्वात्। तितिक्षाया अपि द्वन्द्वसहनस्यात्यर्थं विरक्तेः स्वतः सिद्धत्वात्। द्वन्द्वपरिहारोपायखिन्नस्य मुमुक्षाया असम्भवेन तस्याः तद्द्वारा ज्ञानोपायत्वस्याप्यन्यतस्सिद्धत्वात्। एवं श्रद्धाया अपि। न चैवं साधनचतुष्टयस्य श्रवणहेतुत्वं न स्यात् अन्यथा तदन्तःपातिनः उपरतिरूपसंन्यासस्यापि तत् स्यादिति वाच्यम्। विवेकादेर्हि वैराग्यादिद्वारा मुमुक्षां सम्पाद्य तद्धेतुत्वं नान्यथा। आवश्यकदृष्टद्वारकत्वे सति तद्विपरीतकल्पनायोगात्। टीकाकृतापि तथैव वर्णनात्। तथा च यस्य मुमुक्षासम्पादकत्वं स एव तद्धेतुः, संन्यासस्तु न तथेति न श्रवणहेतुः न वा तदधिकारिविशेषणम्। तदानन्तर्यं तु तस्य वक्ष्यमाणविधयाप्युपपद्यते ॥

किञ्च, ज्ञानोद्देशेन शान्त्याद्यनेकधर्मविधाने वाक्यभेदापत्तिः। न च शान्त्यादिविशिष्टज्ञानविधिरिति वाच्यम्। ज्ञानस्याविधेयत्वात्। ज्ञानपदेन विचारो लक्ष्यते लिङर्थान्वयानुपपत्तेरिति चेत्, न—शान्त्यादिसाध्यत्वेन प्राप्तस्य तथैवानुवाद इति लिङ्पद एव लक्षणाया न्याय्यत्वात्। विचारलक्षणायामपि श्रोतव्यादिवाक्यसिद्धस्यैव तस्यात्र अनुवाद इति नास्य वाक्यस्य विशिष्टविधिपरत्वम्। शान्त्यादेरत्र विशिष्टविधिविधया विधेयत्वमधिकारिविशेषणत्वं चाङ्गीक्रियते चेत्, मुमुक्ष्वधिकारात् 'श्रोतव्यः' इत्यादिवाक्यविहितविचारात् भेदप्रसङ्गः; कामाधिकाराग्निहोत्रान्नित्याधिकाराग्निहोत्रवत् ॥

भा. न च 'श्रोतव्यः' इत्यादिवाक्यं विचारांशे अनुवाद एवेति वाच्यम्। अ[न्य]त्रास्फुटत्वाद्विचारविधेः। आर्थवादिकफलकल्पनया मुमुक्ष्वधिकार-कल्पनानुपपत्तेः। तस्य वाक्यस्य तदानीं मनननिदिध्यासनमात्रविधिपरत्वात्। तयोश्चाङ्गतया निरधिकारत्वात्। विचारस्य शान्त्यादिवाक्येन साधिकारत्वेन प्रमितत्वात्। अत एव शान्त्यादिवाक्ये उत्पत्तिविधिः, श्रोतव्यादिवाक्ये अधि-कारविधिरिति प्रत्युक्तम्। तत्रैवाधिकारश्रवणात्। अत्र चाश्रवणात्। श्रोतव्य इत्यादिवाक्यसिद्धविचारानुवादेन शान्त्यादिविधाने वाक्यभेदापरिहारात्। मुमुक्ष्वधिकारतया प्रमितविचारानुवादेन शान्त्यादिविधौ विध्यनाकाङ्क्षितत्वेन शान्त्यादेरधिकारिविशेषणत्वानर्हतया केवलाङ्गत्वे स्थिते संन्यासस्यानधि-कारत्वात् तदनन्तरं विचाराकरणे प्रत्यवायः कथं तस्य नित्यत्वं गमयेत्॥

वस्तुतः संन्यासोऽङ्गमेव न भवति। 'इच्छन्तः प्रव्रजन्ति' इति ज्ञान-कामनया विहितस्य तस्य श्रवणस्येव ज्ञानसाधन(घटक)तया अफलत्वाभावात् तदङ्गत्वे प्रमाणाभावाच्च। उभयोरप्येकफलकत्वेन प्रकरणित्वात्। अत एव 'इमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' 'संन्यस्य श्रवणं कुर्यात्' इत्यादि न तत्र प्रमाणम्। तस्य 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिवत् संन्यासश्रवणयोः परस्परानपेक्षोत्पत्तिकतया क्रममात्रपरत्वाच्च। अन्यथा तस्य वैयर्थ्यात्। स च संन्यासो जन्मान्तरीयोऽप्युपयुज्यते। ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारकस्य तस्य जन्मान्तरीयत्वेऽपि जिज्ञासाप्रतिबन्धकदुरितनिवृत्तिद्वारकयज्ञादिवदुपयो-गसम्भवात्। अन्यथा 'यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्' इति विहित-संन्यासवैयर्थ्यप्रसङ्गः। संन्यासस्याङ्गत्वे श्रवणसमकालत्वे वा तस्य तदुभया-सम्भवात्॥

न चेदं परमहंसस्य न भवतीति वाच्यम्। 'अयज्ञोपवीती कथं ब्राह्मणः' इत्युपक्रमस्य 'अथ परिव्राड्विवर्णवासा मुण्डः' इत्यादिपूर्ववाक्यस्य 'एष पन्था ब्रह्मणा हानुवित्त' इत्युत्तरवाक्यस्य च तद्विषयत्वेनास्यापि तद्विषयत्वात्। 'एष पन्थाः' इति प्रस्तुतसंन्यास(मात्र)स्यैव ब्रह्मसाक्षात्कारोपायत्वनिर्देशात्। न च संन्यासान्तरस्य तदस्ति। न चायमपि विधिः अग्रे जीवननिश्चयवत् इति वाच्यम्। व्या(घ्रा)ध्यादिना चोरादिना वा अभिभूतस्यातुरस्य तदसम्भवात्। प्रैषोच्चारणमात्रेऽपि सामर्थ्यहीनस्य मनसा संन्यासविधानात् तस्य तन्निश्चयायो-

गात्। अन्यथा तदानीं तस्य श्रवणाभावेन तद्विधानवैयर्थ्यप्रसङ्गात्, तदानीं सिद्धिं गतस्य संन्यासिधर्मविधायकस्मृतिविरोधाच्च। तावन्मात्रस्यैव मृ(श्रु)-तत्वाच्च। न चायं संन्यासो ब्रह्मलोकार्थ इति वाच्यम्। ज्ञानात् पूर्वं विविदिषासंन्यासातिरिक्तपरमहंससंन्यासाभावात्, ब्रह्मलोकादपि विरक्तस्यैव पारमहंस्याधिकारितया तदर्थं तद्विधानायोगाच्च ॥ भा.

न चैवं 'संन्यासात् ब्रह्मणः स्थानम्'इति स्मृतिः निर्विषयेति वाच्यम्। तस्याः संन्यासान्तरविषयत्वात्, जिज्ञासासंन्यासानन्तरमपि बाधिर्यादिदोषेण श्रवणाभावे तदाश्रमधर्मसहितात् परमहंससंन्यासात् परिपूर्णश्रवणाभावेऽपि वा तस्मिन्नान्तरीयकतया तदुपपत्तेश्च। अत एवाह 'ते ब्रह्मलोके तु' इति। 'एष पन्थाः' इति तस्य ब्रह्मसाक्षात्कारहेतुत्वोक्तिविरोधाच्च। अत एवायं विद्वत्संन्यास इति निरस्तम्। तदुक्तं विज्ञानेश्वरेण—'न केवलमैहिकमेव पारिव्राज्यं ज्ञानसाधनम्, अपि तु जन्मान्तरीयमपि'इति। श्रीमत्संक्षेपशारीरकेऽपि 'वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः कर्मण्यध्वे'त्यादिना तथोक्तम्॥

ननु एवं मुमुक्षुणा संन्यासात् पूर्वं कृतश्रवणस्य वैयर्थ्यं स्यात्। न च संन्यासात् पूर्वं मुमुक्षैव न भवतीति वाच्यम्। तृणीकृतब्रह्मलोकस्य शान्त्यादि-संपन्नस्य वेदार्थे दृढतरविश्वासवतोऽध्ययनमात्रादुत्पन्नज्ञानान्मुमुक्षासम्भवात्। अन्यथा संन्यासस्यापि मुमुक्षानन्तरभाविदृढजिज्ञासाप्रयोज्यस्यासम्भव इति चेत्, न—जन्मान्तरीयसंन्यासेनापि क्रमोपपत्तेः। संन्यासश्रवणयोरेकफलत्वेन दर्शपूर्णमाससोमयागादितो विशेषस्य सत्त्वात्। आग्नेयादितोऽपि विशेष ऊहनीयः॥

किञ्च, श्रवणस्य (चाशास्त्रीयस्य) शास्त्रीयक्रमाभावे (नियमाभावे) नियमापूर्वांश एव न सिध्यति, न तु दृष्टासम्भावनादिनिवृत्तिरपि। तुषनिवृत्तेरिव शास्त्रीयावहननक्रमातिक्रमेऽपि असम्भावनानिवृत्तेः तदा प्रत्यक्षसिद्धत्वाच्च। ततो जन्मान्तरीयसंन्यासाभावे श्रवणानन्तरमपि संन्यस्य श्रवणं कर्तव्यमित्येतावदेव, न तु पूर्वश्रवणस्य वैयर्थ्यम्। तस्मात् न संन्यासोऽङ्गम्, न वा श्रवणाधिकारिविशेषणम्, नापि श्रवणं नित्यमिति। नापि श्रवणविधिः काम्यः। विध्युद्देशे फलाश्रवणात्। न च रात्रिसत्रन्यायेनार्थवादिकममृतत्वसाधनं

उच्यते—

---

भा. ज्ञानं फलं कल्प्यम्, श्रुतश्रवणानां तददर्शनेन तदयोगात्। नापि नैमित्तिकः प्रायश्चित्तविधिर्वा, निमित्तादेरश्रवणात्। तथात्वे जिज्ञासासूत्रमूलत्वानुपपत्तेश्च। समन्वयाद्यनिरूपणादस्य शास्त्रान्तर्भावतदादित्वानुपपत्तेश्च। तस्मात् इदं सूत्रं असंगतं इति ॥

तत्र प्रथमं दोषं परिहरति—**उच्यते** इत्यादिना। साङ्गाध्ययनवतो विदितपदपदार्थसङ्गतिपदसमूहाद्वाक्यात् विचारात् प्रागेवापाततो ब्रह्मप्रतिपत्तेस्तज्जिज्ञासेति नोक्तान्योन्याश्रय इत्यर्थः। प्रथमं हि वाक्यात् जातं सत्यत्वादिविशिष्टब्रह्मविषयं ज्ञानमविद्यानिवृत्त्यनर्हत्वादापाततोबोधो भवति। अखण्डविषयकाज्ञानस्य तज्ज्ञानेनैव निवर्त्यत्वात्। न चैवं कथमखण्डब्रह्मजिज्ञासेति वाच्यम्। विशिष्टोपस्थितेरपि विशेष्यब्रह्मस्वरूपविषयत्वेन तज्जिज्ञासाहेतुत्वोपपत्तेः। न च सत्यत्वादिधर्मिणि निश्चयरूपत्वात् सा कथं धर्मिजिज्ञासाहेतुरिति वाच्यम्। निवर्त्याज्ञानकार्यविषयस्याज्ञाननिवृत्त्यनर्हतया तदर्हज्ञानेच्छासम्भवात्। अथवा, अखण्डब्रह्मज्ञानस्य प्रतिबद्धफलत्वमापातत्वम्, (तदेव धर्मिजिज्ञासानिमित्तमिति।) न च ज्ञानस्य प्रागभावनिवृत्ताविव अविद्यानिवृत्तावपि न प्रतिबन्धसंभव इति वाच्यम्। ज्ञानस्यैव प्रागभावनिवृत्तित्वेन तस्याः तदसाध्यत्वात्। अविद्यानिवृत्तेस्तु ज्ञानसाध्यत्वेन इच्छादिप्रागभावनिवृत्ताविव तत्रापि प्रतिबन्धसंभवात् ॥

किञ्च, यथा प्रतिबिम्बभ्रमं विशेषदर्शनं प्रतिबद्धं न निवर्तयति एवमविद्यामपि इति न दोषः। न च तत्र विशेषदर्शनं भ्रमविरोध्येव न भवति, विशेषादर्शनजन्यभ्रमं प्रत्येव तस्य विरोधित्वादिति वाच्यम्। तस्यापि विशेषदर्शनविषयविरुद्धविषयत्वेन भ्रमान्तरवत्तन्निवर्त्यत्वात्। किञ्च, व्यावृत्त[व्याप्यवत्ता]ज्ञानाभावलक्षणस्य पराभिमतविशेषार्शनस्य न भ्रमहेतुत्वम्, प्रमाणाभावात्। तत्प्रयोजकदोषादेरेव तदुपपत्तेः। भ्रममात्रे तदभावाच्च। न हि शङ्खे पीतभ्रमे तदभिमतं विशेषादर्शनमस्ति। न च निरुपाधिकभ्रमे तदव्यभिचार इति वाच्यम्। चन्द्रप्रादेशिकत्वादिभ्रमे तदभावात् ॥

भा· किञ्च, सवृत्तिताद‍ृशविशेषदर्शनस्यासार्वत्रिकत्वेन भ्रमस्थले तदभावस्याप्यनियतत्वात्। न हि प्रतियोगिनं विना तदभावोऽस्ति। परकीयतदभावस्त्वतिप्रसक्त इति न तस्य भ्रमहेतुत्वम्। असदभिमतविशेषादर्शनजन्यत्वं तु प्रतिबिम्बादिभ्रमस्याप्यस्तीति स्वस्थाने वक्ष्यत इति तदपि ज्ञाननिवर्त्यत्वयोग्यमेव। तथा चोपाधिना प्रतिबद्धत्वादेव न तत्त्वज्ञानात्तन्निवृत्तिः॥

अपि च, परेषामपि आत्मनि शरीराभेदबुद्धिर्निरुपाधिकभ्रम एव, उपाध्यन्तराभावात्। शरीरस्यैवोपाधित्वे तस्मिन् सति न तन्निवृत्तिरिति तदर्थं तत्त्वज्ञानं व्यर्थं स्यात्। अस्ति च तत्रापि तदभिमतं विशेषदर्शनम्। तथा च यदि तत्त्वज्ञानं प्रतिबन्धात् न भ्रमं निवर्तयति इति नोच्येत, तदा परेषां कथं शास्त्रारम्भः स्यात्। न च ईश्वरसाक्षात्काराभावात् तत्र भ्रमो न निवर्तते न तु प्रतिबन्धादिति वाच्यम्। ईश्वरसाक्षात्कारस्य भिन्नविषयस्य साक्षात्तदनिवर्तकत्वात्। जीवसाक्षात्कारस्तु इदानीमपि विद्यत एव। ईश्वरसाक्षात्कारस्याप्यलौकिकस्येदानीमपि सत्वात्। लौकिकस्य सर्वदा असम्भवात्। न च इदानीं परमते शरीरादौ भ्रम एव नास्ति अहमितिप्रत्ययस्य विविक्तात्मविषयत्वादिति वाच्यम्। अहं मनुष्य इत्यादिप्रत्ययस्य भ्रमत्वात्। निवर्त्यमिथ्याज्ञानाभावे शास्त्रानारम्भप्रसङ्गात्। इदानीमात्मनो भ्रान्त्यनाश्रयत्वे ऊषरे तस्मिन् धर्माधर्माद्यसम्भवेन नित्यमुक्तत्वापत्तेश्च। तस्मात् तत्रात्मज्ञानं केनचित् प्रतिबद्धं सत् न भ्रमं निवर्तयतीति वाच्यमिति अस्मन्मतेऽपि तत्तथा। प्रतिबन्धकाश्चानादिप्रवृत्तदृढतरभेदादिवासना एव। ताश्च श्रवणमननादिभिः नङ्क्षयन्ति(क्षीयन्ते)। ततो वाक्यादुत्पन्नसाक्षात्कारादविद्या निवर्तते। न चैवं मोक्षस्य प्रतिबन्धकाभावसाध्यत्वात् ज्ञानैकसाध्यत्वविषयश्रुतिविरोधः। प्रतिबन्धकाभावस्य सर्वत्राप्यहेतुत्वात्। अप्रतिबद्धज्ञानं च प्राङ्नास्तीति न जिज्ञासा व्यर्था। न च निवर्त्यस्येव तत्कार्यस्यापि न तन्निवृत्तिप्रतिबन्धकत्वमिति वाच्यम्। फलबलकल्प्यप्राबल्येन विरुद्धविष(यायां च वि) यतया अविद्यायामुक्तदोषाभावेन च कार्यस्य प्रतिबन्धकत्वसम्भवात्। अप्रतिबद्धज्ञानोद्देशेन श्रवणादिविधानसामर्थ्याच्च ततः प्रतिबन्धनिवृत्तिः कल्प्यते॥

भा. ननु विचारात् प्राक् कथं निर्विशेषात्मप्रतीतिः, यया तज्जिज्ञासा वर्ण्यते। सा हि लक्षणया वाच्या। सा च नान्वयानुपपत्त्या। अन्वीयमान-पदार्थान्तराभावात् वाक्यस्याखण्डार्थत्वाच्च। तात्पर्यानुपपत्तिश्च न विचारात् प्रागुपस्थिता भवतीति चेत्, न—मुख्यं सामानाधिकरण्यं वाक्यस्यैकव्यक्तिमात्र-निष्ठत्वेन तत्रैव तत्प्रयोजकस्य एकार्थत्वस्य मुख्यत्वादिति सामानाधिकरण्य-वाक्यत्वेन जानतोऽस्थूलादिवाक्यार्थं विशेषनिषेधं ब्रह्मपदसामर्थ्यं च प्रति-संदधतस्तात्पर्यज्ञानेन लक्षणया तदापि तत्प्रतीत्युपपत्तेः॥

अथवा, प्राग्वाक्यान्निष्पन्नं ज्ञानमखण्डब्रह्मैकाकारमपि विपरीतवासना-दोषादनभ्यासदशायां जलादिज्ञानमिव सत्तानवधारणं सत् संशयकोटिनिक्षि-प्तमिति न ततोऽविद्यादिनिवृत्तिः। सत्तावधारणसाक्षात्कारस्यैवाविद्यानिव-र्तकत्वात्। अन्यथा तत्र जलादिसंशयो न स्यात्। न च तत्र ज्ञानप्रामाण्य-संशयादेव संशयो न तु स्वत इति वाच्यम्। प्रामाण्यस्य परतस्त्वेऽपि जलत्ववैशिष्ट्यज्ञानस्य सत्तानिश्चयरूपत्वे तत्रापि तदयोगात्। न हि जलादिज्ञानप्रामाण्यमखण्डधर्मः, किन्तु तत्र जलत्ववैशिष्ट्यघटितम्, विशिष्टं च न तदन्यदिति कथं जलत्ववत्तया निश्चिते तत्र तदभाववैशिष्ट्यमप्रामाण्यसंशयो विषयीकुर्यात्। न च तत्संशयात् पूर्वं धर्मिज्ञानेन तस्य नष्टत्वात् न तदनुपपत्ति-रिति वाच्यम्। स्वप्रकाशव्यवसायस्यैव धर्मिज्ञानत्वात्। परमते निश्चयानुव्यव-सायस्यैव धर्मिज्ञानत्वात् निश्चयानुव्यवसायस्यापि तत्र तत्सत्तानिश्चयरूपत्वाच्च। अन्यथा इष्टादिज्ञानस्यान्वयव्यतिरेकाभ्यां न सुखादिहेतुत्वं गृह्येत। इष्टता-वच्छेदकवैशिष्ट्यांशे तस्यानिश्चयरूपत्वेन इष्टज्ञानत्वानिश्चयात्॥

अत एव 'एकविशेष्यकविरुद्धानेकप्रकारकज्ञानं संशयः, न च सत्या-दिवाक्यजन्यं ज्ञानं तथेति न तत् संशयः, नापि चेन्निश्चयः किमिदमलौकिकं ज्ञान'मिति प्रत्युक्तम्। नानाप्रकारकत्वाभावेनोक्तसंशयलक्षणानाक्रान्तत्वेऽपि उक्तविधया तस्य जलादिज्ञानस्येव निश्चयत्वायोगात्॥

किञ्च, निश्चयत्वं न जातिः। साक्षात्कारत्वादिना साङ्कर्यात् अव्याप्य-वृत्तेश्च। नापि संशयान्यज्ञानत्वम्। परमते धर्म्यंशज्ञाने तदभावात्। किन्तु

**नित्येनैव अध्ययनविधिना अधीतस्वाध्यायः वेदान्तवाक्येषु आपातदर्शनेन इदमवगच्छति–'आत्मनस्तु कामाय सर्वं प्रियम्' इत्युपक्रमात् सर्वतो विरक्तस्य आत्मप्रेप्सोः 'आत्मनि विज्ञाते सर्वमिदं विज्ञातम्' 'एतावदरे खल्वमृतत्वम्' इत्युपसंहारात् अमृतत्वसाधनं आत्मदर्शनं**

---

ता॰ इदानीं प्रसङ्गं दर्शयितुं वेदान्तवाक्येषु आपाततः प्रतीयमानमर्थं दर्शयति— **नित्येन** इति। काम्यत्वे हि वेदाध्ययनस्य इतरेतराश्रयता, अर्थावबोधे सति कामना कामनायां च सत्यां षडङ्गाध्ययने प्रवृत्तस्य अर्थावबोध इति, तत् व्यावर्तयति—**नित्येनैव** इति। विचारव्यतिरेकेण साङ्गाध्ययनवतो यत् वेदार्थज्ञानं भवति तत् आपातदर्शनम्। किमवगच्छतीति ; अत्राह—**आत्मनस्तु** इति। आत्मशेषतयैव अन्यस्य सर्वस्य प्रियत्वं इत्युक्तत्वात् आत्मव्यतिरिक्ते विरक्तिः निश्चीयते। 'आत्मनो वा अरे दर्शनेन' इत्युपक्रम्य 'एतावदरे खल्वमृतत्वम्' इत्युपसंहारात् आत्मदर्शनममृतत्वसाधनं इति प्रतिपाद्य दर्शनस्याविधेयत्वात् तत्साधनं श्रवणं मनननिदिध्यासनाभ्यामङ्गाभ्यां सह विधीयत इत्यर्थः ॥

---

भा॰ एकविशेष्यकस्वप्रकारविरोधिप्रकारकज्ञानविरोधिज्ञानत्वमेवेति तस्य तदभावात् तदपि संशय एव। न चैवम्भूतज्ञानजनकत्वे वेदस्याप्रामाण्यम्। तज्जन्यज्ञानस्याबाधितार्थकत्वात्। यदि चोक्तसंशयत्वानधिकरणज्ञानत्वं निश्चयत्वम्, तदेदमपि ज्ञानं निश्चयो भवतु। सत्तानवधारणरूपस्यापि तस्य पारिभाषिकनिश्चयत्वाविरोधात्। तस्मात् विचारात्पूर्वमेव वाक्यरूपब्रह्मनिर्णयसामग्र्यां सत्यामपि तात्पर्यज्ञानविपरीतवासनादिरूपपुरुषापराधप्रतिबन्धात् न तन्निर्णयो जायते, किन्तु सत्तानवधारणरूपमेव ज्ञानं जायते। विचारादिना निवृत्ते प्रतिबन्धे वाक्यादेव तज्जायत इति सुष्ठूक्तम् ॥

जिज्ञासाप्रयोजकतया **'आपातदर्शनेनेदमवगच्छति'** इति इदमा परामृष्टमर्थमाह—**आत्मनस्त्वित्यादिना**। 'आत्मनस्तु कामाये'त्युपक्रमोपसंहारप्रदर्शनेन वाक्यार्थस्याद्वैतात्मनः तत्प्रतिपत्तिप्रतिबन्धविगमाय विशिष्टाधिकारिकसाङ्गश्रवणकर्तव्यतायाश्च आपातप्रतिपत्तिं दर्शयता ब्रह्मनिर्णयफलो-

'द्रष्टव्यः' इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नाम अङ्गि विधीयते इति। स च, तत्र कियद्विशेषणपर्यन्तः अधिकारी? किम्प्रमाणकश्च? को वा असौ वेदान्तवाक्यविचारः? अन्यतः प्राप्तः अप्राप्तो वा? कथं च आत्मज्ञानं मोक्षसाधनम्?

---

ता. ननु श्रवणात् पराचीनयोः मनननिदिध्यासनयोः कथं तदङ्गत्वमिति; अत आह—**फलोपकारी**ति। नावघातादिवत् स्वरूपोपकारित्वम्, किन्तु प्रयाजादिवत् फलोपकार्यङ्गत्वात् न विरोधः। एतेन विरक्तस्य मुमुक्षोः ब्रह्मज्ञानाय विचारः कर्तव्य इति श्रुतितोऽवगच्छतीत्यर्थः॥

ननु तर्हि सर्वस्य आगमत एव प्रतिपन्नत्वात् जिज्ञासाभावात् अधिकारिरहितत्वेन सूत्रमनर्थकं प्राप्तमिति; अत आह—**स च** इति। **कियद्विशेषणपर्यन्त** इति। किं वैराग्यमात्रमधिकारिविशेषणम्, उत अन्यदपि? अस्ति चेत् किं तत्र प्रमाणम्? इत्यधिकार्यनुबन्धे संशय इत्यर्थः। विषयानुबन्धे संशयमाह—**को वा** इति। **अन्यतः प्राप्त** इति। पूर्वमीमांसया गतार्थोऽगतार्थो

---

भा. त्तरविचारतत्कर्तव्यतानिर्णयफलप्रथमसूत्रविचारयोर्निमित्तस्य जिज्ञासाया मूलं दर्शितम्। आत्मदर्शनं अप्रतिबद्धं सत्तावधारणरूपं वा। **तादर्थ्येने**ति। तत्प्रतिबन्धासम्भावनादिविगमाय निर्णयज्ञानाय चेत्यर्थः॥

विचारात् पूर्वं धर्मिज्ञानोपपादनफलमाह—**स चेति**। **सः**—आपातदर्शी सन्देहात् **इति जिज्ञासते च** इत्यन्वयः। इत्यर्थमाह—**कियदि**त्यादिना। स्वस्मिन् यावत् दृष्टं विवेकवैराग्यादि तावदेव किं अधिकारिविशेषणं उत अन्यदपि? यथा विवेकादीनां विशकलितशाखास्थानामपि अधिकारिविशेषणत्वं एवं अनधीतशाखान्तरेऽपि कस्यचिद्विशेषणस्य सद्भावसंशयात् एतेषां वा कस्यचिदन्यथासिद्धत्वशङ्कया आद्यः संशयः। वैराग्यादिकमपि मयि दृश्यमानं प्रामाणिकं न वा? कर्मफलनित्यत्वानित्यत्वश्रुत्योर्विशेषादर्शनादित्यभिप्रेत्य संशयान्तरमाह—**किम्प्रमाणेति**। विचारस्य नित्यकाम्यत्वादिविशेषानवधारणात् अङ्गत्वप्राधान्यादि[विशेषानवधारणात्] भिन्नाभिन्नात्मविषयत्वविशेषानवधारणाद्वा सन्दिग्धे—**को वेति**। स्वस्य निर्विशेषात्म-

**किम्प्रमाणकं च तत्? किं वा तत् आत्मतत्त्वम्? किम्प्रमाणकं च? इति जिज्ञासते। तं च जिज्ञासुं पुरुषार्थकामं उपलभमानो भगवान्**

---

ता. वा? इत्यर्थः। **कथं वा** इति। कर्मसमुच्चितं केवलं वा? इत्यर्थः। समुच्चयपक्षे असमुच्चयपक्षे वा किं प्रमाणम्? इति संशयमाह—**किम्प्रमाणकं च** इति। फलानुबन्धे जिज्ञासामाह—**किं वा** इति। सप्रपञ्चं निष्प्रपञ्चं वा? ब्रह्मणा भिन्नमभिन्नं वा? इत्यर्थः। **किम्प्रमाणकम्** इति। वेदान्तानां विध्यस्पृष्टे वस्तुनि प्रामाण्यमस्ति वा न वा? इति संशेते इत्यर्थः। काकदन्तजिज्ञासोरिव उपेक्षणीयत्वं व्यावर्तयति—**पुरुषार्थकामम्** इति॥

---

भा. जिज्ञासैव किं मुधैवेत्यभिप्रेत्य विमृशति—**अन्यत** इति॥

यदि विधिमीमांसया वेदान्तानां अवगतार्थत्वं तदा ब्रह्मणः कर्मशेषत्वमुपासनाविधिशेषत्वं वेति न निर्विशेषं ब्रह्म। यदा त्वनवगतार्थत्वं तदा विधिविषयत्वाभावात् निर्विशेषे वेदान्तानां प्रामाण्यं सम्भवतीति तज्जिज्ञासा युज्यते, न च तन्निर्णेतुं शक्यते। अथपदेन कृत्स्नवेदाध्ययनानन्तर्यप्रयुक्तत्वेन प्रतिज्ञातस्य विचारस्य वेदार्थमात्रनिर्णयफलकत्वस्योचितत्वं धर्मग्रहणसामर्थ्याद्विध्यर्थमात्रनिर्णयफलकत्वस्य वेति विशेषानवगमादिति भावः। श्रुतौ क्वचित् केवलज्ञानस्य क्वचित् कर्मसमुच्चितस्य मुक्तिहेतुत्वश्रवणात् किं तत्त्वम्, ततश्च संन्यासो ज्ञानसाधनं न वा, इत्यभिप्रेत्य विमृशति—**कथमिति**। वेदान्ततात्पर्यजिज्ञासापि मम किं व्यर्थेत्यभिप्रेत्य प्रकारान्तरेण विमृशति—**किम्प्रमाणकमिति**। कस्मात् प्रमाणात् तत्त्वज्ञानं भवति? किमात्मनः सिद्धत्वादनुमानादिना तन्निर्णयः उत 'नावेदवि'दित्यादिश्रुत्या तस्य तत्र प्रामाण्यनिषेधात् वेदादेव? आद्ये वैशेषिकादिशास्त्रसिद्धमेव ब्रह्मेति तत्रैव प्रवर्तितव्यमिति भावः॥

जिज्ञास्यब्रह्मस्वरूपे संशयमाह—**किं वेति**। सविशेषं निर्विशेषं वेत्यर्थः। तत्संशयबीजमाह—**किम्प्रमाणकं चेति**। विरोधादेकस्मिन्नुभयश्रुत्यर्थवत्त्वानुपपत्तेः सविशेषवाक्यं निर्विशेषवाक्यं वा तस्मिन् प्रमाणमित्यर्थः॥

**बादरायणः साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारं विदधतो विधेः अपेक्षिताधिकारिविषयफलानुबन्धत्रयं आगमिकमपि न्यायेन निर्णेतुं सूत्रयामास—'अथातो ब्रह्मजिज्ञासा'**

---

ता. सूत्रस्य अन्यतोऽप्राप्तं प्रयोजनमाह—**न्यायेन** इति। ननु अस्यैव विधेरपेक्षितार्थसूचनपरं सूत्रमिति कथमवगम्यत इति? अत आह—श्रुति-

---

भा. अनुग्राह्यप्रमाणाभावप्रयुक्तदूषणं परिहरति—**विधेरिति**। 'श्रोतव्य' इत्यादिवाक्यस्येत्यर्थः। तस्य नैयायिकादिशास्त्रमूलत्वं व्यावर्तयति—**वाक्यविचारं विदधत** इति। न हि तत् वाक्यविचारात्मकं किन्त्वनुमानादिविचाररूपमिति न तत्तन्मूलमित्यर्थः। ननु तैरपि शब्दप्रामाण्याभ्युपगमात् वाक्यार्थनिरूपणं कृतमित्याशङ्क्य, वेदान्तवाक्यानामसाधारण्येन तैर्विचारो न कृत इत्याह—**वेदान्तेति**। 'श्रोतव्य' इत्यादिवाक्यैः वेदान्तवाक्यविचार एव विधीयत इति कुतो निर्णीतमिति चेत्, न—शब्दशक्तितात्पर्यावधारणानुकूलचेतोव्यापारविशेष एव ह्यत्र श्रवणशब्दार्थः न तु शब्दज्ञानमात्रम्, तस्य सिद्धत्वेनाविधेयत्वात्। स च शब्दोऽत्र वेदान्तवाक्यमेव तदन्यस्य ब्रह्मणि प्रामाण्यासम्भवात् सन्निधानाच्च (इत्युक्तम्) इति युक्तम्। अपि च 'इदं सर्वं यदयमात्मा' 'आत्मनि विज्ञाते सर्वमिदं विज्ञात'मित्यादितत्प्रकरणस्थवाक्यादद्वैतात्मपरमेवात्मपदमिति तद्विचार एव श्रोतव्य इत्यादिवाक्यार्थ इति गम्यते। अतो नान्यत्र तस्माद्विधेः प्रवृत्तिरित्याह—**ब्रह्मज्ञानायेति**। निखिलभेदशून्यमेव मुख्यं ब्रह्म भवतीत्यर्थः। किञ्च 'आत्मनस्तु कामाये'त्यादिना 'एतावदरे खल्वमृतत्व'मित्यन्तेन वाक्येन विरक्तस्य मुमुक्षोरधिकारः प्रतीयते। अन्यथा तदुपन्यासवैयर्थ्यात्। न च शास्त्रान्तरे मुमुक्षुप्रवृत्तिः सम्भवति, दुःखाभावस्य स्वतोऽपुरुषार्थत्वात् जन्यसुखस्य मुक्तावसम्भवात् नित्यस्य चात्मातिरिक्तस्य तस्येदानीमवाप्त्यभावादिति मुमुक्षोर्विचारकर्तव्यताबोधकमिदं वाक्यं नान्यस्य मूलमित्याह—**साधनचतुष्टयेति**। मुमुक्षैवाधिकारिविशेषणं तत्र क्रमेण तद्धेतुतया इतरत्रयं प्रविशतीति **साधनचतुष्टयेत्युक्तम्**। अनेन च श्रवणविधेः काम्यत्वमुक्तम्। न च कृतश्रवणानामपीदानीं फलादर्शनान्न तत् काम्यमिति वाच्यम्,

इति। श्रुतिसूत्रयोः ऐकरूप्यावगमात्। मनननिदिध्यासनयोश्च श्रवणाङ्गत्वं उत्तरत्र वक्ष्यामः। ननु 'श्रोतव्यः' इति विधिः मोक्षसाधनब्रह्मात्मज्ञानाय वेदान्तवाक्यविचारं साधनचतुष्टयसम्पन्नस्य विधातुं न

ता. सूत्रयोः इति। तदेवं शास्त्रारम्भकर्तव्यताप्रतिपादनपरं सूत्रं उपोद्घातप्रक्रियया शास्त्रारम्भसमर्थनार्थत्वात् शास्त्रेण संगतं इति आक्षेपस्य परिहारो द्रष्टव्यः॥

ननु विरुद्धमिदम्, सूत्रकारः प्रतिपादनप्रक्रियायां प्रवृत्तः, न उपोद्घातप्रक्रियायां इति विवरणकारैः निराकरणात् इति चेत्—मैवम्—आद्यसूत्रार्थवर्णने यथा भाष्यकारेणाध्यासं वर्णयता उपोद्घातः कृतः, नैवमध्यासे सूत्रकारेण उपोद्घातः कृतः इत्येतावन्मात्रपरत्वात् सूत्रस्य शास्त्रं प्रत्युपोद्घातत्वस्य तैरनिकारणात्। पूर्वमीमांसायामपि 'अथातो धर्मजिज्ञासा' इति प्रथमं सूत्रस्य शास्त्रारम्भकर्तव्यताप्रतिपादनपरस्य उपोद्घातन्यायेनैव शास्त्रसंगतेरुक्तत्वेन इहापि तथाङ्गीकरणस्योचितत्वात्॥

ननु श्रवणमननादीनां त्रयाणामाग्नेयादिवत् समप्रधानत्वं, वैपरीत्येन वा अङ्गाङ्गिभावः किं न स्यादिति; अत आह—**मननेति**॥

इदानीं श्रोतव्य इति मूलविधिरेव न संभवति इत्याक्षिपति—**ननु** इति। अन्वयव्यतिरेकसिद्धसाधने हि न विधिरुपपद्यते इत्यर्थः। ननु तण्डुल-

भा. आवृत्तेरपि तदुपायान्तरस्य शास्त्रीयत्वादिति भावः॥

ननु अन्येष्वपि वाक्येषु सत्सु किमिति 'श्रोतव्य' इत्यादिवाक्यमेव जिज्ञासासूत्रमूलमिति; तत्राह—**श्रुतिसूत्रयोरिति**। मुमुक्षोर्ब्रह्मज्ञानाय विचारकर्तव्यताप्रतिपादकत्वेन तयोस्तुल्यत्वादित्यर्थः। नन्वेवं 'मन्तव्य' इत्यादिमननादिविधानं न्यायशास्त्रमूलमस्तु, तयोर्युक्तिविषयतया ऐकरूप्यादित्याशङ्क्याह—**मननेति**। **श्रवणाङ्गत्वम्**—श्रवणोपसर्जनत्वम्। तथा च मननादेर्विचार(विधिना) समानविषयत्वात् एकात्मविषयत्वेनैव श्रवणादित्रयस्य श्रवणात् श्रुतस्यैव मन्तव्यत्वात् श्रवणमननाभ्यां स्थिरीकृतस्यैव ध्येयत्वाच्च तेषां समानविषयत्वमिति मननादिवाक्यस्य न तन्मूलत्वमित्यर्थः॥

शक्नोति, श्रवणादीनां विषयावगमं प्रति अन्वयव्यतिरेकसिद्धसाधनत्वात्। न च अवघातादिवत् उभयार्थता सम्भवति, दृष्टादृष्टप्रकारद्वयसाध्यापूर्ववत् इह अदृष्टसाध्यस्याभावात् आत्मावगमस्य दृष्टोपायमात्रसाध्यत्वात् इति। नैतत् सारम्। आत्मतत्त्वापरोक्ष्यस्य सर्वादृष्टसाध्यत्वस्य वक्ष्यमाणत्वात् अवघातादिवत् उभयर्थतया विधानोपपत्तेः।

---

ता. निष्पत्तिफलतया दृष्टफलेऽप्यवघाते 'व्रीहीनवहन्ति' इति यथा नियमविधिः, तथा इह 'श्रोतव्य' इति विधिः किं न स्यादिति; अत आह—**न च** इति। अन्वयव्यतिरेकसिद्धश्रवणादिजन्यात्मज्ञाने अदृष्टस्य अङ्गत्वाभावात् इत्यर्थः। तत्र हेतुः—**आत्मावगमस्य** इति। श्रवणादावदृष्टाभावापराधेन वाक्यार्थज्ञानाननुभवादर्शनात् इत्यर्थः। धर्मविषयपरोक्षज्ञानं प्रति वैदिकशब्दस्यान्वयव्यतिरेकसिद्धसाधनत्वेऽपि विधितः तस्याध्ययनस्वीकृतस्यैव तत्र फलवदर्थावबोधजनकत्वम्, इह पुनः ज्ञानमात्रमेव साध्यं न भवति, किन्तु साक्षात्काररूपम्, तेन अदृष्टसाध्यत्वं सुतरां स्यात् इत्यभिप्रेत्य परिहरति—**नैतत्** इति॥

---

भा. **अन्वयव्यतिरेकेति**। विचारत्वादिनैव विचार्यमाणार्थनिर्णयहेतुत्वं तत्र तत्र प्रसिद्धमित्यर्थः। **अदृष्टसाध्यस्येति**। नियमापूर्वसाध्यपरमापूर्वस्याभावादित्यर्थः। **वक्ष्यमाणत्वादिति**—'सर्वापेक्षा चे'ति सूत्रे इत्यर्थः। न च यज्ञादिनैव नियमापूर्वस्योपयोगाभावः, कल्मषनिवृत्तेः तत्साध्यत्वात्। न च यज्ञादिनैव सा सिद्धेति वाच्यम्। जिज्ञासाप्रतिबन्धककल्मषनिवृत्तेस्तत्साध्यत्वेऽपि ब्रह्मनिर्णयप्रतिबन्धकतन्निवृत्तेरेतत्साध्यत्वादिति संन्यासापूर्ववत्तस्यार्थवत्वादिति भावः॥

ननु श्रवणे न नियमविधिरुपपद्यते, व्यावर्त्याभावात्। तत्र किमात्मा विचारितवेदान्तैरेव ज्ञातव्य इति वेदान्तो नियम्यते, किं वा वेदान्तानां विचारेणैव ज्ञातव्य इति विचारः, अथवा मुमुक्षुणा मोक्षसाधनज्ञानाय आत्मैव श्रोतव्य इत्यात्मा? । नाद्यः, आत्मनि वेदान्तातिरिक्तप्रमाणाप्रसक्तेर्व्यावर्त्याभावात्। ननु लौकिकतुषनिवृत्तौ उपायान्तरस्येव लौकिकात्मज्ञाने

मनः प्रमाणं प्रसक्तमिति चेत्, न—सिद्धान्ते मनसोऽप्रमाणत्वात्। उपादानतया तस्य शब्देनाप्यपेक्षितत्वात्। नाप्यनुमानं व्यावर्त्यम्, 'नैषा तर्केणे'ति निषेधशास्त्रादेव तस्य सिद्धेः। श्रुतिसमानविषयस्य तस्य 'मन्तव्य' इति श्रुत्यैव सहायत्वेनाङ्गीकृतत्वात् भिन्नविषयस्य तस्य विवक्षितश्रुत्यर्थे ब्रह्मण्यप्रसक्तेर्न निवृत्त्यर्थत्वम्। नापि पुराणवाक्यं व्यावर्त्यम्। 'इतिहासपुराणाभ्यां वेदं समुपबृंहये'दिति तस्यापि वेदार्थावगमोपायत्वावगमात्। नाप्यात्मविषयप्राकृतगाथा व्यावर्त्यते, 'न म्लेच्छित वै' इत्यादिवाक्यादमुमुक्षूणामपि वेदाधिकारिणां तस्या आहत्य निषिद्धत्वात्॥ भा.

नापि विचारनियमः। तत्रापि व्यावर्त्याभावात्। न च गुरुमुखाध्ययनमिव गुरुमुखश्रवणं नियम्यत इति वाच्यम्। 'तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छे'दिति ज्ञानार्थं गुरूपसदनविधिसामर्थ्यादेव श्रवणविध्यभावेऽपि स्वतंत्रश्रवणस्य व्यावर्तितत्वात्। अन्यथा तद्विधेरदृष्टार्थतापत्तेः। उपगमनं तु अध्ययनविध्यभावे नेति न ततो गुरुमुखाध्ययनसिद्धिः। न वा अन्यतः, 'आचार्याधीन' इत्यादिस्मृतीनामपि तन्मूलकत्वात्। न च अविचारितवेदान्तवाक्यं व्यावर्त्यम्, प्रयोजकज्ञानजनकमात्राद्वाक्यान्निर्णयानिष्पत्तेः। विचारं विना प्रतिबन्धानिवृत्तेश्च। नापि तृतीयो नियमः। आत्मनोऽविधेयत्वात्। अनात्मविचारस्य मुमुक्षुजिज्ञासितात्मज्ञानानुपायत्वेन स्वत एव व्यावृत्तत्वाच्च। न चान्यः कश्चिन्नियमप्रकार इति॥

उच्यते—मुमुक्षूणामद्वैतात्मविषयवेदान्तविचारो नियम्यते। 'श्रोतव्य' इत्यादिविधेर्हि वेदान्तवाक्यश्रवणेन शमादीतिकर्तव्यताकेनाद्वैतात्मज्ञानं भावयेदित्यर्थः। तथा च यथा 'व्रीहीनवहन्ती'त्यादौ दृष्टपुरोडाशहेतुभूततण्डुलनिष्पत्तिमात्रस्य साधनान्तरसाध्यत्वेऽप्यपूर्वजनकत्वांशेऽवहननं नियम्यते, एवमत्रात्मज्ञानमात्रस्य तर्कितसाधनान्तरसाध्यत्वयोग्यतायामपि अविद्यानिवृत्तिसमर्थाद्वैतात्मज्ञानसाधनीभूतवेदान्तश्रवणं पक्षे अप्राप्तं विधीयते। अर्थाच्च प्राग्विधिप्रवृत्तेर्नखविदलनादिवत् भ्रमगृहीतसाधनान्तरव्यावृत्तिः। अहंकारस्य दृश्यत्वेन तदतिरिक्ताष्टगुणस्य च परसिद्धेश्वरस्य अहमनुभवे अप्रकाशमानतया आत्मपदानर्हतया अद्वितीयचैतन्यस्यैव तदर्थत्वात्। तद्वाक्यस्थात्मशब्दस्य 'इदं सर्वं

ननु विधिपरत्वे वेदान्तानां तन्निष्ठतया ब्रह्मस्वरूपस्य असिद्ध्यादिदोषप्रसङ्गात् नास्ति श्रवणादिविधानं इति भाष्यकारैरेव दर्शितम्। सत्यम्। ज्ञानविधिः तत्र निराकृतः, न श्रवणादिविधिः। तत्र उक्त-

---

ता शङ्कते—ननु इति। विधिपरत्वेऽपि अवान्तरतात्पर्येण ब्रह्मस्वरूपसिद्धिः किं न स्यात् देवताधिकरणन्यायेन इति नाशङ्कनीयम्, ब्रह्मण्यद्वैते प्रत्यक्षादिविरुद्धतया देवताधिकरणन्यायानवतारात् इति भावः। असिद्ध्यादि इति

---

भा. यदयमात्मा' 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इत्येवमादितत्प्रकरणस्थवाक्यपर्यालोचनया अद्वैतात्मप्रतिपादनपरत्वाच्च भिन्नात्मविषयवाक्यश्रवणं व्यावर्त्यते ॥

न चैवं ततो मुक्तिसाधनज्ञानासम्भवात् मुमुक्षुः स्वतो निवृत्त इति वाच्यम्। आपातज्ञानदशायां 'द्वा सुपर्णा' इत्यादिवाक्यात् 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति भेदज्ञानात् शोकनिवृत्त्यादिफलप्रतीतेः मुक्तिसाधनज्ञानार्थिनो विचारनियमविध्यभावे नियमेन ततो निवृत्त्यसम्भवात्। न च आपातज्ञानदशायां 'उदरमन्तरं कुरुते' इत्यादिवाक्याद्भेदज्ञानस्यानर्थहेतुत्वप्रतिपत्तेः न मुमुक्षोस्तत्र प्रवृत्तिरिति वाच्यम्। (तदध्ययनादिकारी बिभेत्यभेदज्ञानेऽपि।) 'तस्मादेकाकी बिभेति' इति अभेदज्ञानादपि तद्दशायां भयप्रतीतेः ॥

'नान्योऽतोऽस्ति द्रष्टा' इति निषेधश्चात्ममात्रभेदविषयः ईश्वरभेदविषयो वेति न तदा निश्चेतुं शक्यते। तस्मात् विचारात्पूर्वमर्थनिर्णयासम्भवात्तदर्थं कदाचित् भेदप्रवणचित्तस्तच्छास्त्रेऽपि प्रवर्तेत। तन्मा भूदिति दयावती श्रुतिराह 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यः' इति। न हि वस्तुतो यत् साधनं तदेव व्यावर्त्यमिति नियमः। किन्तु नियम्यमानस्य पाक्षिक्यप्राप्तिः नियमेऽपेक्ष्यते। अलौकिके तुषविमोकेऽपि नखविदलनादेर्वस्तुतस्साधनत्वाभावात्। तज्जातीयसाधनत्वन्तु प्रकृतेऽपि, शरीरातिरिक्तात्मज्ञानमात्रे भेदशास्त्रस्यापि साधनत्वात्। अयमेवार्थः तत्त्वदीपनकृतामप्यभिप्रेतः। स्वातन्त्र्येण पुराणवाक्ये प्रवृत्तिर्निवर्त्येति केचित् ॥

दोषप्रसङ्गाभावात्। कथम्? दर्शनविधाने हि ब्रह्म कर्मतया गुणभूतं प्रसज्यते। ब्रह्मदर्शनमुद्दिश्य विचारविधाने तु स्वप्रधानफलभूतदर्शनविशेषणतया ब्रह्मापि स्वप्रधानं भवति न तु गुणभूतं इति वेदान्तैः ब्रह्मणि स्वप्रधाने प्रतिपाद्यमाने तद्दर्शनाय श्रवणादिविधानं नैव विरुध्यते॥

ननु एवमपि उपक्रमोपसंहाराभ्यां एकस्मिन् आत्मप्रतिपादनपरे वाक्ये कथं अवान्तरवाक्यैः श्रवणादिविधानं कल्प्यते? इति। अवान्तरवाक्यभेदेन 'विविदिषन्ति' इति यज्ञादीनां ज्ञानसंयोगविधानवत्, 'उपरि हि देवेभ्यः' इति उपरिधारणविधानवत् मलवद्वाससो व्रतकला-

ता. आदिशब्देन प्रमित्यभावात् सत्ताया अप्यभावः कथ्यते। 'श्रूयमाणा अपि विधयः कुण्ठीभवन्ति' इति समन्वयसूत्रे भाष्यकारैः दर्शितमित्यर्थः। कोऽसौ दोषः? कथं तत्प्रसंगाभावः? इति पृच्छति—**कथम्** इति। दर्शनविधाने अयं दोष इति दर्शयति—**दर्शने**ति। 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येन' इति न्यायेन प्रत्ययार्थस्य प्राधान्यात् दर्शनस्य च प्रकृत्यर्थतया गुणभूतत्वेन तद्विशेषणस्य ब्रह्मणोऽपि सुतरां गुणभूतत्वं स्यादित्यर्थः। विचारविधाने पुनः नायं दोष इत्याह—**ब्रह्मे**ति। फलितमाह—**वेदान्तैः** इति॥

किं वेदान्त्येकदेशिनामिदं चोद्यम्, उत तान्त्रिकाणाम्,? यदि आद्यः, तत्राह—**विविदिषन्ति** इति। यदि द्वितीयः, तत्राह—**उपरि हि** इति। दर्शपूर्णमासप्रकरणे 'तिस्रो रात्रीर्व्रतं चरेत्' इति रजस्वलायाः व्रतकलापविधानवत् इत्यर्थः॥

भा. **कर्मतये**ति। ज्ञानस्येति शेषः। संस्कारस्यानुपयोगादसम्भवाच्च न ज्ञानं गुणकर्मेत्यर्थः। **गुणभूतं ब्रह्मे**ति। कर्मत्वे तत्कर्तृतया आत्मरूपब्रह्मणो गुणत्वं स्यादित्यर्थः। **दर्शनविशेषणतये**ति। विषयतयेति शेषः। दर्शनविषयतया विशेषणस्य प्रधानत्वादिति भावः। भेददर्शनप्राबल्यदशायां सूत्रकारेण निदिध्यासनविधेरङ्गीकृतत्वादन्यत्रापि विधिर्युज्यत एवेत्यभिप्रेत्य* विषय-

* सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम्। पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा॥ इति भट्टवार्तिकवचनम्।

पविधानवच्च इति ब्रूमः। अथवा—'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादिवाक्यं श्रवणादिविधायकमस्तु, तस्य तत्परत्वात्। सूत्रकारेण च वक्ष्यमाणत्वात्। सर्वथा तावत् मनननिदिध्यासनाभ्यां अङ्गभूताभ्यां सह श्रवणविधानं अस्त्येव। अतः तदपेक्षितानुबन्धत्रयनिर्णयाय सूत्रमारब्धम्। कर्तव्ये च अधिकारिणा मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारे प्रथमसूत्रेण प्रतिपादिते स च कर्तव्यो विचारः जन्मादिसूत्रमारभ्य प्रवर्तिष्यते इति। तत्र विध्यपेक्षितेषु अधिकारिविषयफलानुबन्धेषु विषयफलयोः उपपादनाय बन्धस्य मिथ्यात्वं अत्र वर्ण्यते इति सूत्रसङ्गतमेवेदं भाष्यं व्याख्येयं इति॥

ननु यदि अर्थात् विषयप्रयोजने सूत्रिते, तर्हि भाष्यकारेण साक्षादेव सूत्रस्य तत्र व्यापारं दर्शयित्वा आक्षेपसमाधानपूर्वकं

---

ता. ननु तदपि कहोळब्राह्मणं आत्मतत्त्वप्रतिपादनपरमिति; अत आह—**सूत्रकारेण** इति। 'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्' इति वदता श्रवणादिविधिपरत्वं **तस्य** इति। तदेव कथमिति; अत आह—**सूत्रकारेण** इति। पक्षद्वयेऽपि श्रवणादिविधानमस्त्येव इत्युपसंहरति—**सर्वथा** इति॥

**अस्तु**, प्रकृते किमायातमिति; अत आह—**अतस्तदपेक्षिते**ति। ननु एवं सूत्रस्य मूलभूतविधिवाक्यार्थनिर्णयपरतया प्रसङ्गोऽस्तु, तथापि कथमादौ प्रसङ्ग इति; अत आह—**कर्तव्ये च** इति। एवं अधिकारिणो विचारकर्तव्यतायां प्रतिपादितायां विचारप्रवृत्तिरनन्तरमेव भविष्यति इत्याह—**स च** इति। अस्त्वेवं शास्त्रसंगतं सूत्रम्; भाष्यस्य पुनरध्यासवर्णनपरस्य कथं सूत्रसंगतिरिति; अत आह—**तत्र** इति। **सूत्रस्य तत्र व्यापारं**—तत्प्रतिपादनसामर्थ्यं, **साक्षात्**-मुखतः इत्यर्थः। ननु विषयप्रयोजनयोः

---

भा. व्याप्त्यर्थमुदाहरणान्तरमाह—**अथ वेति**। अथ वा श्रोतव्य इति पदस्य न विचारे अवयवशक्तिरस्ति। तत्र वृद्धव्यवहाराभावात् नापि रूढिः इत्यरुच्या आह—**अथ वेति**। [**वक्ष्यमाणत्वादिति**।] तृतीयचतुर्थे [इति शेषः। सूत्रा-] नुपपत्तिं परिहरति—**कर्तव्ये चेति**। **प्रतिपादिते** इति सतिसप्तमी॥

प्रतिपादनीये विषयप्रयोजने, अन्यथा सूत्रकारभाष्यकारयोः तत्र तात्पर्याभावप्रसङ्गात् इति ; तत्राह—एतच्च तस्माद् ब्रह्म जिज्ञासितव्यमित्यादिभाष्ये 8 - 2
स्पष्टतरं भाष्यकारेणोक्तम् इति। प्रतिपादयिष्यामः इत्यध्याहारः।

प्रथमग्रन्थोक्तमेवार्थं आक्षेपसमाधानपूर्वकं अतितरां स्पष्टीकर्तुं चोदयति—अत्राह यद्येवम् इति। ननु 'अस्यानर्थहेतोः' इति भाष्यवत् 9 - 1
पूर्वभाष्यमपि विषयादिकमेव प्रतिपादयति, कुतः तत्र पर्यनुयोगः इति ; नेत्याह—अहं मनुष्य इति देहेन्द्रियादिषु इत्यादिना। अत्र विचारकर्त- 9 - 5
व्यताविषयप्रयोजनाध्यासानां उत्तरोत्तरेण पूर्वपूर्वस्य साध्यत्वस्य सूत्रेणैव सूचितत्वात् अध्याससाधनद्वारेण विषयप्रयोजने साधयित्वा विचार-
कर्तव्यता साधनीया इति क्रमनियमं विवक्षन् आह—उच्यते इत्यारभ्य 10 - 1
वक्ष्यति चैतत् इत्यतः प्राक्तनेन ग्रन्थेन ॥ 13 - 5

ननु ब्रह्मज्ञानप्रयोजनां विचारकर्तव्यतां सूचयता सूत्रेण कथं

---

अर्थात् प्रतिपादनेऽपि का क्षतिरिति, अत आह—**अन्यथा** इति। **ता.** सूत्रकारभाष्यकारयोरन्यतरेणापि मुखतोऽप्रतिपादने तयोः तत्र तात्पर्यमवगन्तुं न शक्यं इत्यर्थः। 'तस्मात् ब्रह्म जिज्ञासितव्यम्' इति भाष्यात् यत् पूर्वं भाष्यं 'अवगतिपर्यन्तं ज्ञानम्' इत्यादि, तत्र भाष्यकारेणोक्तं वयं प्रदर्शयिष्याम इत्यर्थः। केचित् पुनः 'तस्मात् ब्रह्म जिज्ञासितव्यम्' इति भाष्यमारभ्य 'तत् पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा' इत्यादिना उक्तं इति प्रदर्शयिष्याम इति वर्णयन्ति। अन्यथा आदिशब्दस्य अर्थाभावात् ॥

पौनरुक्त्यमाशंक्य परिहरति—**प्रथमे**ति। ननु तत्रापि विभज्य तात्पर्यं स्पष्टमेवोक्तमिति ; तत्राह—**अतितराम्** इति। तदेव कथमिति ; अत आह—**आक्षेपसमाधानपूर्वकम्** इति। परिहारटीकायाः तात्पर्यमाह—**अत्र** इति। अध्यासेन विषयप्रयोजने साधनीये, ताभ्यां च विचारकर्तव्यता साधनीया इति क्रमः ॥

10 - 1 बन्धनिवृत्तिः विचारज्ञानयोः प्रयोजनत्वेन सूचिता इति; तत्राह—ब्रह्मज्ञानं
हि सूत्रितं अनर्थहेतुनिबर्हणम् इति। विचारसाध्यज्ञानस्य प्रयोजनं
आकाङ्क्षन् विचारविधिः अधिकारिविशेषणं मोक्षं प्रयोजनत्वेन प्रमिमीते
इत्यर्थः। ननु अनर्थः नरकपातादिलक्षणः अन्य एव, शरीरादि-
प्रतिभासस्य च मिथ्यात्वं साध्यते, इति किं केन सङ्गतमिति; नेत्याह—
10 - 2 अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वम् इति। निवर्ततां तर्हि ज्ञानेन
,, - ,, वस्तुभूतमेव प्रमातृत्वकर्तृत्वभोक्तृत्वमिति; नेत्याह—तद्यदि वस्तुकृतम्
इति। तथा हि—चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं स्वविषयं वा

---

ता.　**नीलविशिष्टद्रव्यज्ञानम्** इति चित्रावयविगतावयवद्रव्यापेक्षयोक्तम्' चित्ररूपस्य एकत्वेन तत्र नीलरूपाभावात्॥

---

भा.　**अधिकारिविशेषणं मोक्षं प्रयोजनत्वेनेति**। स च मोक्षो बन्धध्वंस एव, मुचेर्धातोस्तत्रैव प्रसिद्धेः अन्यस्य ज्ञानेनापनेयस्यासम्भवाच्चेति भावः॥

सत्यस्य प्रपञ्चस्य ज्ञानान्निवृत्तिर्दर्शनबलादुच्यते? आगमबलाद्वा? आद्येऽपि ब्रह्मज्ञानं स्वविषयगतं प्रपञ्चं निवर्तयति इत्युच्यते? अथ वा स्वाश्रयजीवगतम्? उभयगतं वा? प्रथमेऽपि प्रपञ्चविशिष्टविषयं ज्ञानं तन्निवर्तयति? उत निवर्त्य-प्रपञ्चाविषयम्? न सर्वथाऽपि, लोके तथा अदर्शनात् इत्याह—**चित्रावयविनीत्यादिना**।

ननु सिद्धान्तेऽपि किमिति नैवम्? न च रूपादेर्व्यावहारिकत्वान्न तस्य ज्ञाननिवर्त्यत्वमिति वाच्यम्। ब्रह्मज्ञानादप्यनिवृत्तिप्रसङ्गात्। परपक्षेऽपि यत्किञ्चिद्वैषम्यस्य वक्तुं शक्यत्वादिति चेत्, न—सिद्धान्ते अविद्यानिवर्तक-ज्ञानस्यैव तत्कार्यनिवर्तकत्वात्। रूपादेश्च ब्रह्माज्ञानकार्यत्वात्। परस्य तु नैवम्। न च परमतेऽप्युपादाननिवर्तकं ज्ञानं तत्कार्यं निवर्तयतीति न रूपादे-र्निवृत्तिरिति वाच्यम्। शुक्तिरजतस्य ब्रह्मोपादानकप्रपञ्चस्य च शुक्तिब्रह्मज्ञानाभ्यां निवृत्तिप्रसङ्गादिति भावः॥

ननु चित्रावयविनि नीलरूपाभावात् कथं **नीलविशिष्टद्रव्यज्ञानम्** इत्युक्तम्? चित्ररूपस्य विजातीयरूपत्वात्। न च तदारम्भकनीलावयव एव

स्वविषयसमवेतं वा रसादिकं विरोधिनं वा पीतिमादिगुणं न निवर्तयति, स्वविषयानवबोध एव केवलः तेन निवर्त्यते। स्वाश्रयगतं वस्तु ज्ञानेन निवर्तत इति चेत्, न–घटादिज्ञानेन आत्मगतधर्माधर्मादिगुणानिवृत्तेः। न च आश्रयविषयोभयसम्बन्धि वस्तु ज्ञानेन निवर्तते। आत्मनः शरीरविषयज्ञानेन देहात्मसम्बन्धाद्यनिवृत्तेः इति। ननु न दृष्टसामर्थ्यात् ज्ञानात् बन्धनिवृत्तिः, येन अविद्यात्मत्वं वर्ण्येत, किं तु आगम एव ज्ञानात् बन्धनिवृत्तिं श्रावयति। ननु श्रुतोपपत्त्यर्थमेव बन्धस्य अविद्यात्मत्वं

---

ता. ननु श्रुतं श्रुतत्वादेव उपपन्नम्, किं तत्र तत्सहायतया अविद्यात्मकत्ववर्णनेन इति चोदयति—**ननु न दृष्टेति**। आह सिद्धान्ती—**ननु श्रुतेति**।

---

भा. विवक्षित इति वाच्यम्। **स्वविरोधिन**मिति ग्रन्थानुपपत्तेः। न च नीलावयवे पीतरूपमस्ति इति चेत्, न—चित्रावयव्यारम्भकपीतावयवे नीलोऽयमासीदिति ज्ञानस्य नीलमिति ज्ञानस्य वा विवक्षितत्वात्। न हि तत् ज्ञानं वर्तमानं पीतं निवर्तयति। न च वर्तमानविषयकज्ञानमेव स्वविषयविरोधिनिवर्तकमिति वाच्यम्। पारमार्थिकप्रपञ्चवादिनस्तत्काले तद्विरोध्यभावासम्भवेन निष्प्रपञ्चब्रह्मज्ञानस्य प्रपञ्चनिवृत्तेः पूर्वं वर्तमानप्रपञ्चाभावविषयत्वासम्भवेन ततः प्रपञ्चनिवृत्त्यसम्भवात्॥

वस्तुतश्चित्ररूपं नानारूपसमाहार एव। तथैव प्रतीतेः कारणे चित्ररूपाभावेन कार्ये तदयोगाच्च। शुक्लादिरूपस्य समानजातीयरूपारम्भकत्वनियमात्। नानारूपवदवयवारब्धद्रव्यरूपस्याव्याप्यवृत्तित्वं चानुभवबलात् स्वीकर्तव्यम्। अभावान्तरे मूर्तगुणान्तरे वा अदृष्टस्यापि तस्य संयोगे तदभावे च दर्शनबलेन अभ्युपगमात्। एकस्यैव संयोगात्यन्ताभावस्य व्याप्याव्याप्यवृत्तित्वाभ्युपगमे किमपराद्धं तव तेन एकजातीयरूपे इति भावः॥

ज्ञानस्याज्ञाननिवर्तकत्वं तु नानुभवविरुद्धमित्याह—**स्वविषयानवबोध इति**। **निवर्त्यत एवेति** सम्बन्धः। द्वितीयमाशङ्कते—**नन्विति**। 'तथा विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुतौ सत्यपदाभावान्नेयं श्रुतिः सत्यस्य ज्ञानान्निवृत्तौ प्रमाणम्, कल्प्यते चेद्विपरीतकल्पनैव न्याय्येत्याह—**ननु श्रुतेति**।

भा. ननु अपूर्वकल्पना युक्ता । चिरध्वस्तात् कर्मणः स्वर्गाद्यनुपपत्तेः । न चैवं मिथ्यात्वमन्तरेण ज्ञाननिवर्त्यस्यानुपपत्तिः । सत्यस्यैव दुरितस्य 'सेतुं दृष्ट्वा समुद्रस्य' इत्यादिना सेतुदर्शननिवर्त्यत्वस्मरणत् ॥

ननु निवर्त्यातिरिक्तकारणानपेक्षज्ञानजन्यध्वंसप्रतियोगित्वलक्षणज्ञानैकनिवर्त्यत्वं मिथ्यात्वनियतम् । दुरिते तु नैवम् । तस्य श्रद्धादिसहितज्ञाननिवर्त्यत्वात् । न च तत्त्वज्ञानमपि यज्ञादिसहितमेव प्रपञ्चं निवर्तयतीति वाच्यम् । विविदिषावाक्येन यज्ञादीनां ज्ञानं प्रत्येव साधनत्वावगमात् । न चैवमपि श्रवणादिनियमापेक्षा अस्तीति वाच्यम् । तस्यापि ज्ञानप्रतिबन्धकदुरितनिवृत्तावेवोपयुक्तत्वात् । अन्यथा दर्शनोद्देशेन श्रवणादिविधानं न स्यात् । मुक्तेर्ज्ञानातिरिक्तोपायसाध्यत्वनिषेधश्रुतिविरोधाच्च ॥

न चैवं भाषाप्रबन्धादिनोत्पन्नमपि ज्ञानं बन्धनिवर्तकं स्यादिति वाच्यम् । स्त्रीशूद्रादौ ततस्तस्येष्टत्वात् । त्रैवर्णिकस्य तु तन्निषेधेन निषेधातिक्रमे दुरितापूर्वेण प्रतिबद्धत्वात् न तत्त्वापरोक्ष्यम् । न चैवमपि मुक्तौ कालादृष्टादिसाधारणकारणापेक्षेति वाच्यम् । कार्ये हि तदपेक्षा । कार्यं च प्रागभावप्रतियोग्येव । मुक्तेश्च न प्रागभावः । अनादिमुक्तेरपि साध्यत्वसम्भवान्न ज्ञानवैयर्थ्यम् । मुक्तेः कालादिसाध्यत्वे 'नान्यः पन्थाः' इत्यादिश्रुतिविरोधाच्च ।

किञ्च, न तावत् कालादि प्रपञ्चनिवृत्तौ कारणम् । तस्यापि ज्ञानात् प्रपञ्चेन सहैव निवृत्तेः । नाप्यविद्यानिवृत्तौ, कालो ह्यधिकरणत्वेन घटादौ कारणम् । न चाविद्यानिवृत्तेस्तत्कार्यं तत्सम्बन्धो वा काल आधारः । एवं दिगपि न कारणम् । ज्ञानसाध्यात्यन्तिकनिवृत्तौ क्वचिद्व्यभिचारेण कालादीनामहेतुत्वेन शुक्तिरजताद्यात्यन्तिकनिवृत्तावपि तेषां न हेतुता । एवमीश्वरप्रसादोऽपि ज्ञान एव हेतुः । 'यस्य देवे' इत्यादिशास्त्रेण तथैवावगमात् । अतस्तत्त्वज्ञानं बन्धनिवृत्तौ निवर्त्यान्नान्यदपेक्षत इति ॥

मैवम्—प्रपञ्चनिवृत्तावविद्याध्वंसस्यापि कारणत्वेन प्रपञ्चे वर्णितरूपाभावात् । किञ्च, सुहृज्ज्ञानं दुःखनिवर्तकम्, न च तत्र ज्ञानस्य निवर्त्यातिरिक्तं श्रद्धादिकं पापनिवृत्ताविव अपेक्षितम् । न वा दुःखस्य मिथ्यात्वं तत्र प्रयोजकम् । ननु अधिष्ठानज्ञानासहकृतसामग्र्ययोग्यध्वंसप्रतियोगित्वं मिथ्या-

**वर्णनीयमेव, यथा आग्नेयादीनां षण्णां यागानां अधिकारापूर्वविषय-तया अपूर्वकरणभावे श्रुतेऽपि कालान्तरभाविप्रधानापूर्वसाधनत्वोपपत्त्यर्थं क्रमभावियागकर्मजन्यानि मध्यवर्तीनि अवान्तरापूर्वाणि कल्प्यन्ते, यथा वा श्रुतस्यैव स्वर्गसाधनत्वस्य उपपत्तये अपूर्वं कल्प्यते, तद्वत्। ननु तत्र क्षणिकानां कर्मणां कालान्तरवर्तिफलसाधनत्वाभावव्याप्तिनियमात्**

---

ता. अत्र प्राभाकराणां भाट्टानां च संमतिं क्रमेण दर्शयति—**यथा** इति । तत्र आग्नेयोऽष्टाकपालः, अग्नीषोमीय एकादशकपालः, उपांशुयाजमन्तरा यजति इति पौर्णमासत्रयम्, आग्नेयोऽष्टाकपालः, ऐन्द्रं दधि, ऐन्द्रं पयः, इति दर्शत्रयम्, इति आग्नेयादयः षड्यागाः, तेषां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति साधिकारतया श्रूयमाणनियोगावच्छेदकतया नियोगप्रतीत्युपयोगिविषयत्वम्, तत्र चापूर्वस्य साध्यत्वेन प्रमितेः तस्य करणान्तराप्रतीतेः 'यजेत' इति एकपदोपादानलक्षणया श्रुत्या नियोगनिष्पादकत्वं नाम करणत्वमपि प्रतीयते। यजिसमानार्थत्वाद्दर्शपूर्णमासशब्दयोः। एवं श्रुतेऽपि कालान्तरभाव्यधिकारा-पूर्वं प्रति करणत्वस्यानुपपत्तिशंकायां क्रमभाविषड्यागजन्यानि अवान्तरापूर्वाणि तदुपपत्तये कल्प्यन्ते यथा इत्यर्थः। **यथा वा** इति। 'स्वर्गकामो यजेत' इत्यत्र यागावच्छिन्नभावनायाः शब्दार्थत्वात् तस्यां च भावनायां भाव्याकाङ्क्षत्वात् एकपदोपादानलक्षणया श्रुत्या धात्वर्थस्य भाव्यत्वे प्राप्तेऽपि तस्य दुःखरूपस्य पुरुषार्थतया भाव्यत्वानुपपत्त्या तावत् अधिकारिविशेषणतया श्रूयमाणः स्वर्गः पदान्तरोपात्तोऽपि पुरुषार्थतया योग्यत्वात् भाव्यत्वेन प्रतीयते। ततश्च 'यागेन स्वर्गं भावयेत्' इति वाक्यार्थः संपद्यते। तस्य यागस्य आशुतर-विनाशिनः कालान्तरभाविस्वर्गसाधनतानुपपत्तेः मध्ये अपूर्वं कालान्तरस्थायि कल्प्यते इति भाट्टा मन्यन्ते इत्यर्थः।

---

भा. त्वनियतम्, अविद्यायां चैवंरूपं प्रतियोगित्वमस्ति, तस्याः ज्ञानं विना अनिवृत्तेरिति चेत्, न—प्रपञ्चस्याधिष्ठानज्ञानं विनापि प्रलयदर्शनात् रजता-देश्च नैवंरूपतया व्याप्तिसंवेदनस्थलाभावादित्यभिप्रेत्याशङ्कते—**ननु तत्र क्षणिकानामिति** ॥

लोके, वेदेऽपि स्वर्गापूर्वसिद्ध्यै मध्ये अपूर्वाणि कल्प्यन्ते श्रुतोपपत्तये इति।
10-3 तर्हि इहापि व्याप्तिनियतिः अस्ति इत्याह—यतो ज्ञानं अज्ञानस्यैव निवर्तकम्
इति। अतः सूत्रस्यैव बन्धस्य अविद्यात्मकत्वे व्यापारात् सूत्रार्थ-
विचारकर्तव्यतोपपत्त्यर्थप्रयोजनसाधनाय अध्यासो वर्णनीयः इत्याह—
11-1...5 तत् यदि **इत्यादिना** सूत्रार्थोपपत्त्युपयोगितया इत्यन्तेन ग्रन्थेन। ननु

---

ता. **सूत्रार्थेति।** सूत्रार्थः विचारकर्तव्यता, सा याभ्यामर्थप्रयोजनाभ्यां विषयफलाभ्यामुपपद्यते तत्साधनायेति योजना॥

---

भा. सत्यं मिथ्यात्वं विना न ज्ञानमात्रनिवर्त्यत्वस्यानुपपत्तिः, तथापि निवर्त्यातिरिक्तस्वासाध्यानपेक्षज्ञानजन्यध्वंसप्रतियोगिनो मिथ्यात्वं वाच्यम्, स्वासाध्येति वा न विवक्षितम्। प्रपञ्चोऽप्यविद्यानिवृत्तौ तादृशज्ञानेनैव निवर्तत इति नात्र तदभावः। तथा हि—शुक्तिरजतादिः स्वाश्रयविशेषज्ञानान्निवर्तते न तु पटादिरिति सर्वानुभवसिद्धम्। सत्यस्य स्वाश्रयगोचरतादृशज्ञान-निवर्त्यत्वे नेयं व्यवस्था स्यात्। न च तत्र रजताभावविशिष्टप्रमा निवर्तिका तन्त्वादौ तु तदभावान्न पटादिनिवृत्तिरिति वाच्यम्। शुक्तिरिति ज्ञानादपि रजतादिनिवृत्तेर्दृष्टत्वात्। अभावविशिष्टज्ञाननिवर्त्यत्वे निवर्त्यस्य मिथ्यात्वमेव प्रयोजकमिति वाच्यम्। अन्यथा तत्काले तदभावविशिष्टप्रमाया असम्भवात्॥

ननु शुक्तिज्ञानं रजतोपादानाज्ञानं निवर्तयतीति तदपि निवर्तयति, तन्त्वादिज्ञानं तु न पटोपादानं तन्तुं निवर्तयतीति न पटं निवर्तयतीति चेत्, न—ब्रह्मज्ञानस्याप्यनादिप्रपञ्चोपादानानिवर्तकस्य प्रपञ्चानिवर्तकत्वप्रसङ्गात्। किञ्च, किं रजतोपादानं मिथ्यात्वात् ज्ञानेन निवर्तनीयम्? उत अविद्यात्वात्? आद्ये मिथ्यात्वमेव तत्र प्रयोजकमित्युक्तं स्यात्। द्वितीये प्रपञ्चमप्यविद्यानिवृत्तिद्वारा ज्ञानं निवर्तयतीति वाच्यम्। साक्षात् सत्योपादाननिवृत्तिद्वारा वा ज्ञानस्य प्रपञ्चनिवर्तकत्वे तन्तुज्ञानादपि पटादिनिवृत्तिप्रसङ्गात्। तथा च सिद्धं नः समीहितम्, अविद्यातत्कार्ययोर्मिथ्यात्वात्। सुहृज्ज्ञानं च न दुःखनिवर्तकम्। उत्पन्नानुत्पन्नदुःखयोस्तदनाश्यत्वात्। किन्तु ततस्सुखमेवोत्पद्यते, ततो दुःखानुत्पादः। अत एवाधिष्ठानज्ञानासहकृतसाम-

ग्रययोग्यध्वंसप्रतियोगित्वमपि मिथ्यात्वव्याप्तम्। रजतादेश्चात्यन्तिकनिवृत्तिः भा. तादृशसामग्रययोग्यैव। ज्ञानत्वेन तन्निवर्त्यं वा मिथ्येति नियमः। परमते व्यवहारप्रागभावादेः निर्विकल्पकाद्यनिवर्त्यत्वान्न तथेति न व्यभिचारः॥

ननु एवमप्यज्ञानमेव ज्ञाननिवर्त्यं भवतु, ज्ञानाज्ञानस्वरूपप्रयुक्तत्वात् तदुभयविरोधस्य। अज्ञाननिवृत्त्यैव चान्यन्निवर्त्यतामिति किं मिथ्यात्वेनेति चेत्, न—प्रपञ्चस्यापि ज्ञाननिवर्त्यत्वेन श्रुतत्वात् अज्ञानकार्य(त्व)स्य मिथ्यात्वनियमाच्च। अज्ञानगोचरस्य सर्वदा तदभाववत्त्वनियमात्। स्वसमान-विषयाज्ञानं हि ज्ञानं निवर्तयति, लोके तथा दर्शनात्। तथा च यदि निखिलोऽपि प्रपञ्चः स्वोपादनाज्ञाननिवृत्त्या निवर्तेत इत्युच्यते, तर्हि निष्प्रपञ्चब्रह्मैव निवर्त-कज्ञाने गोचरो वाच्यः। अन्यथा प्रपञ्चस्याज्ञानकार्यत्वायोगात्। तथा च प्रपञ्चोपादानाविद्यानिवर्तकप्रपञ्चाभावात्मकनिष्प्रपञ्चब्रह्मविषयज्ञानस्य साक्षा-त्कारत्वप्रमात्वाभ्यां प्रागेव प्रपञ्चाभावो वाच्य इति प्रपञ्चस्यात्यन्ताभावेन स्ववैयधिकरण्यानधिकरणेन सह समानः काल इति मिथ्यैव। तत्त्वस्य तल्लक्षणत्वात्। [किञ्च, अज्ञानमपि मिथ्यात्वमन्तरेण न ज्ञानं निवर्तयितुमर्हति। सत्यस्य ज्ञाननिवर्त्यत्वादर्शनात्] अज्ञानत्वस्य ज्ञाननिवर्त्यत्वमिथ्यात्वान्यतरघटि-तत्वाच्च। अतो मिथ्यात्वादेवाज्ञानमपि ज्ञानान्निवर्तते॥

एतावांस्तु विशेषः—ज्ञानं केवलमविद्यां निवर्तयति, तन्निवृत्तिसहितं प्रपञ्चं इति। न चात्र प्रमाणाभावः; मिथ्यात्वेन अज्ञानकार्यस्य ज्ञान-निवर्त्यत्वयोग्यत्वं तावत् सिद्धम्। न चाज्ञानमेव तद्योग्यं अज्ञानत्वस्यैव तत्प्रयोजकत्वादिति वाच्यम्। अज्ञानत्वस्यैव तद्घटितत्वादित्युक्तत्वात्। न च उपादानत्वमेव तस्य तत्प्रयोजकमिति वाच्यम्। ब्रह्मण्यपि तत्सत्त्वात्। जडत्वे सतीति विशेषणे च तदेव प्रयोजकमिति कार्यमपि तथा। न च ज्ञानमात्रात् तन्निवृत्तिः। इदमिति वा द्रव्यमिति वा ज्ञानाद्रजतादेरात्यन्तिकानिवृत्तेः। आत्यन्तिकनिवृत्तावेव च ज्ञानं हेतुः। स्वोपादाने तत्सूक्ष्मरूपतारूप-तन्निवृत्तेः कारणाभावादपि दर्शनात्॥

ननु अज्ञाननिवर्तकज्ञानादेव अज्ञानकार्यस्यात्यन्तिकनिवृत्तिरस्त्विति चेत्, न—तत्त्वेन तस्य हेतुत्वे अज्ञाननिवृत्तिः प्रथमं वाच्येति तस्यास्तत्र

सूत्रेण प्रथमप्रतिपन्नं प्रतिपाद्यं अर्थं उल्लङ्घ्य किमिति चरमप्रतिपन्न
11 - 5 आर्थिकार्थमेव भाष्यकारः प्रथमं वर्णयति इति; तत्राह—सकलतन्त्रोपोद्घातः
इति। प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनं उपोद्घातः
प्रतिपाद्यं बहिरेव प्रतिज्ञाय पश्चात् तत्सिद्धिहेतूपवर्णनं प्रतिपादनं इति
विभागः। तन्त्रं इति तन्त्रार्थो ब्रह्मात्मैकत्वमुच्यते। ननु भवतु प्रयोजन-
सिद्धिहेतुः अध्यासः, कथं तन्त्रार्थसिद्धिहेतुः ? इत्याशङ्क्य, तत्कथनाय
12 - 1 तन्त्रार्थं प्रथमं कथयति तथाचास्य शास्त्रस्य इति। ऐदम्पर्यं प्रतिपादितं

---

ता. कस्तर्ह्युपोद्घात इति ; अत आह—**प्रतिपाद्यम्** इति। अर्थान्तर-(रोप)वर्णनमुपोद्घात इत्येतावत्युक्ते असंबद्धार्थकथनस्यापि उपोद्घातता स्यात्, अत उक्तं—**तदर्थमिति। बुद्धौ संगृह्य** इति। न बहिः प्रतिज्ञाय इत्यर्थः। तथापि बुद्धौ संगृहीतस्यैव वर्णनमुपोद्घातो मा भूदित्युक्तं—**अर्थान्तरेति**। किं तर्हि प्रतिपादनमिति ; अत आह—**प्रतिपाद्यम्** इति। **बहिरेव प्रतिज्ञाय** इति उपोद्घातव्यावृत्त्यर्थम्। अवयवविपर्यासेन अप्राप्तकालतां व्यावर्तयति—**पश्चात्** इति। प्रतिज्ञानन्तरमेव हेतुवर्णनं विना उदाहरणादीनामुपन्यासं व्यावर्तयति—**तत्सिद्धिहेतूपवर्णनम्** इति। अध्यासवर्णनस्य साक्षाद्विषयप्रयोजन-सिद्धिहेतुत्वात् तदुपोद्घातत्वमेव युक्तम्, न तु शास्त्रोपोद्घातत्वमित्याशंक्याह—**तन्त्रम्** इति।

---

भा. हेतुत्वात्। अविद्यासमानविषयमेव ज्ञानं अज्ञानं तत्कार्यं च युगपन्निवर्तयतीति चेत्, न—स्वेन रूपेण ज्ञानस्य कार्यनिवृत्तौ हेतुत्वे प्रमाणाभावात्। अनुत्पादितभ्रमाज्ञाननिवृत्तौ ज्ञानस्य तेन रूपेणान्वयव्यतिरेकदर्शनेन अविद्यानिवृत्तावेव तस्य तथा हेतुत्वात्। अविद्यानिवृत्तिव्यतिरेकादेव कार्यस्यात्यन्तिकानिवृत्त्युपपत्तेश्च। अतोऽविद्यानिवृत्तिरपि कार्यस्यात्यन्तिकनिवृत्तौ हेतुरिति केवलं ज्ञानमज्ञानस्यैव निवर्तकम्, तत्सहकृतं तु प्रपञ्चस्येत्यभिप्रेत्याह—**तर्हीहापीति** ॥

**कथं तन्त्रार्थेति**। जीवान्यत्वेऽपि ब्रह्मणः संदेहात् जिज्ञास्यत्वोपपत्तेरित्यर्थः। अन्यज्ञानादन्यबन्धनिवृत्त्यनुपपत्तेर्ब्रह्मात्मैक्यं जिज्ञास्यम्। तच्चाध्यासाधीनज्ञानमित्याह—**तत्कथनाय इति** ॥

इत्युत्तरेण सम्बन्धः। तदेव ऐदम्पर्यं दर्शयति—सुखैकतानेत्यादिना। 12 - 1
अयमर्थः—'ब्रह्मात्मैकत्वे वेदान्ताः पर्यवस्यन्ति' इति यदिदं
वेदान्तशास्त्रस्य ऐदंपर्यं तत् सूत्रभाष्याभ्यां प्रतिपादितं इति।
तन्त्रार्थं प्रदर्श्य तस्य अध्याससिद्धयधीनतया अध्यासस्य
प्रथमवर्णनीयतां दर्शयति—तच्चाहं कर्ता सुखी दुःखी इति। ननु 12 - 4
शास्त्रमेव प्रत्यक्षाभिमतमपि बन्धं आभासीकृत्य ब्रह्मात्मैकत्वं प्रतिपाद-
यिष्यति, किं पृथक् अध्यासवर्णनेन इति; तत्राह—तावत् जरद्गवादिवाक्यवत् 13 - 3
इति। ननु शास्त्रार्थसिद्धिः अध्यासपराधीना चेत् स एव तर्हि अध्यासः
सूत्रकारेण मुखतो वर्णनीयः, तस्य प्राधान्यात्, अन्यथा तत्र अतात्पर्य-
प्रसङ्गात्, इति तत्राह—वक्ष्यति च एतत् इति। तर्हि उपोद्घातत्वात् प्रथम- 13 - 5
मेवाध्यासविषयं सूत्रं प्रणेतव्यमिति चोदयति—यद्येवं इति। अर्थनिर्णय- 14 - 1
प्रधानत्वात् वादकथालक्षणायां प्रतिपादनप्रक्रियायां प्रवृत्तः सूत्रकारः
न उपोद्घातप्रक्रियायां इति परिहरति—मैवं अर्थविशेषोपपत्तेः इति। तर्हि 14 - 1
भाष्यकारेणापि यथासूत्रक्रममेव प्रवर्तितव्यं न तु सूत्रक्रममतिलङ्घ्य
इति; तत्राह—भाष्यकारस्तु इति। सुखप्रतिपत्त्यर्थम्—प्रवृत्त्यङ्गभावाय 14 - 4-5
इत्यर्थः॥

---

ननु यथा पुरोवर्तिविषयप्रमाणं अध्यासं निवर्तयदेव शुक्त्यादितत्त्वं    ता.
निश्चाययति, तथा शास्त्रमेव ब्रह्मैकत्वं निश्चाययत् अध्यासमपि निवर्तयतु इति
शंकते—ननु इति। यावत् बन्धस्य मिथ्यात्वं न वर्ण्यते, तावत् ब्रह्मात्मनोरेकत्व-
प्रतिपादनवाक्यस्य अन्वयप्रतीतिरेव न संभवति, यथा—

'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः॥'

इति वाक्य इवेति परिहरति—तावत् जरद्गवादि इति। अर्थादप्युक्तं उक्तमेव
भवति, किं तत्र मुखतः प्रतिपादनेनेति; अत्राह—अन्यथा इति। प्रधानस्य
मुखतः अप्रतिपादने तत्र अतात्पर्यात् प्राधान्यमेव न सिध्येत् इत्यर्थः। (यद्यपि)
वादकथा द्विविधा प्रतिपादनरूपा उपोद्घातरूपा च इति, तत्र प्रतिपादन-
प्रक्रियायां सूत्रकारस्य प्रवृत्तत्वात् न विरोध इति परिहरति—अर्थनिर्णयेति॥

ननु एवमपि न व्याख्येयमिदं भाष्यम्, शास्त्रादौ मङ्गलाचरणाभावात्, विघ्नोपसंसृष्टतया शास्त्रार्थे अप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्तिसम्भवात्, शिष्टाचारपरिपालनहीनतया च अनाप्तप्रणीतत्वप्रसङ्गात्
15 - 1 इति चोदयति—ननु च ग्रन्थकरणादिकार्यारम्भे इति। ननु शिष्टानां
15 - 3 निष्ठीवनादिप्रवृत्तिः किमन्येन अनुसरणीया इति; नेत्याह—शिष्टाचारश्च
नः प्रमाणं इति। आचारः इति धर्मः इत्येवानुष्ठीयमानं कर्म, प्रमाणं-
कर्तव्यं इत्यर्थः। ननु प्रयोजनाभावात् किं मङ्गलाचरणेन इति;
15 - 4 नेत्याह—प्रसिद्धं च मङ्गलाचरणस्य इति। ननु अत्र विघ्न एव नास्ति
15 - 5 अल्पारम्भत्वात् इति; नेत्याह—महति च इति। ननु सम्भावना-
16 - 1 मात्रात् न प्रवृत्तिः विघ्नशान्तये, किन्तु निश्चयात् इति; अत्राह—प्रसिद्धं
च इति। ननु लोकप्रसिद्धिः निर्मूला न विघ्ननिश्चयहेतुः इति; अत

---

ता. 'ननु ग्रन्थकरणादि' इत्याक्षेपग्रन्थसन्दर्भस्य कार्यमाह—नन्वेवमपि इति। ननु प्रयोजनाभावात् किं मङ्गलाचरणेन? इत्याशंक्याह—विघ्नोपसंसृष्टतया इति। ननु ग्रन्थस्य परिसमाप्तिदर्शनात् नास्ति विघ्नोपसंसृष्टत्वमिति; अत आह—शास्त्रार्थे इति। ग्रन्थापरिसमाप्तिरेव विघ्नस्य कार्यं न भवति, किन्तु शास्त्रार्थाप्रतिपत्तिः विप्रतिपत्तिश्च इत्यर्थः। नन्वनुपलभ्यमानविधिः अश्रूयमाणनिषेधः त्रैवर्णिकैः 'विहितम्' इति क्रियमाण आचारः शिष्टाचारः। स च प्रमाणम्। मूलभूतस्मृत्यनुमानद्वारेण श्रुत्यनुमापकत्वात्। तथा चोक्तं भट्टपादैः—

आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनात्।
तेन व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते॥ इति।

तत् न युक्तं विवरणकारस्य 'प्रमाणं कर्तव्यं' इति व्याख्यानं इति चेत्, सत्यम्; तथापि 'शिष्टाः प्रवर्तन्ते' इत्यभिधाय 'शिष्टाचारश्च नः प्रमाणम्' इति वदता कर्तव्यत्वस्य विवक्षितत्वात् प्रस्तुतोपयोगितया प्रमाणशब्देन कर्तव्यता उपलक्ष्यते इत्यङ्गीकृत्य व्याख्यानात् न दोषः॥

ननु संभावनामात्रात् इति। अदृष्टविषयत्वात् न कृष्यादाविव

आह—विज्ञायते च इति। उपसंहरति—तत् कथं इति। 16 - 13

'सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः॥'

इति स्मृतेः, शिष्टाचारपरिपालनाय विघ्नोपशान्तये च विशिष्ट-देवतातत्त्वानुस्मरणलक्षणं मङ्गलाचरणं कृतं इत्याह—अतोच्यते इति। 16 - 5
किं तत्र प्रमाणं इति; अत आह—युष्मदस्मदित्यादि इति। इत्यन्तमेव भाष्यं 16 - 6
प्रमाणं इत्यर्थः, मङ्गलाचरणं इति वा। कथमिदं विशिष्टदेवतानु-
स्मरणं गमयति इति; तत्राह—अस्य च अयमर्थः इति। ननु नेह विशुद्धा- 16 - 6
त्मतत्वदेवता अनुस्मर्यते, किंतु अध्यासाभावो वर्ण्यते इति। सत्यम्।
तादर्थ्येन तत्वमप्यनुस्मर्यते इत्याह—तत् कथंचन इति। ननु अन्यपरत्वात् 18 - 1
देवतानुस्मृतिः अविवक्षिता न कार्यकरी इति; नेत्याह—तदन्यपरादेव 18 - 2
इति। अन्यार्थमपि देवतानुस्मरणं स्वभावादेव विघ्नोपप्लवं धक्ष्यति, धूमार्थ
इव वह्निः तृणादिकं इत्यभिप्रायः। व्याख्येयत्वं प्रतिपादितमुपसंहरति 18 - 4
—तस्मात् इति। अन्यार्थप्रवृत्तेन युष्मदस्मदित्यादिपदद्वयमर्थाद्व्याख्यातम्।

---

ता. सन्देहेऽपि प्रवृत्तिरित्यर्थः। धूमार्थ इव वह्निः इति। ननु तत्र दृष्टत्वादुपपद्यते; इह कथम्? इति चेत्, मैवम्—

'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः'॥

इति प्रमाणसद्भावात् इति भावः॥

पदद्वयं अर्थात् व्याख्यातम् इति। किमत्र स्वरूपेण पदद्वयमात्रं विवक्षितम्, किं वा समस्तम्? यदि आद्यं तदा 'प्रत्ययगोचरयोरित्याददाति' इति वक्तव्यम्, न 'विषयविषयिणोः' इति। यद्युत्तरं तदा 'तमःप्रकाशवत्' इति

---

भा. अधिष्ठानसामान्यांशस्याध्यस्यमानविशेषांशस्य च अभेदप्रमाजन्यसंस्कारस्य तदुभयसादृश्यस्य चाध्यासकारणस्याभावादात्मनि नानात्मनोऽध्यासः संभवतीति विषयप्रयोजनाभावान्न शास्त्रमारम्भणीयमित्युक्तं युष्मदस्मदित्यादिना। तत्र किमिति टीकाकारेण तद्व्याख्यानमुपेक्षितमित्याशङ्क्याह—अन्यार्थेति।

19-1 **उत्तरपदं व्याख्यातुं भाष्यमाददाति**—विषयविषयिणोः इत्यादिना।
**तत्र द्विविधो विरोधः द्विविधा च इतरेतरभावानुपपत्तिः** । कथम् ?
**द्वयोः पदार्थयोरेकदेशकालावस्थानसामर्थ्याभावः पदार्थधर्मो विरोधः**
**तन्निमित्तः अवस्थानलक्षणकार्याभावः इतरेतरभावानुपपत्तिः** इत्येक-
**स्कन्धः । अपरस्तु पदार्थयोरितरेतरात्मतासामर्थ्याभावः पदार्थधर्मो**
**विरोधः तन्निमित्तः इतरेतरात्मतालक्षणकार्याभावः इतरेतरभावानुप-**
19-2 **पत्तिः इति । अतः द्वैविध्यात् पृच्छति**—कोऽयं विरोधः इत्यादिना।
19-4 **तत्र प्रथमं पक्षं दूषयति** यदि तावत् **इत्यादिना** सहावस्थानमुक्तं इत्यन्तेन
20-3 **ग्रन्थेन । तत्र तमःप्रकाशशब्दाभ्यां छायातपशीतोष्णग्रहणमङ्गीकृत्य**
**तत्रापि सहावस्थानमुक्तं वेदितव्यम्। इदानीं द्वितीयं पक्षमवलम्बते**—

---

ता. वक्तव्यम् । तस्मात् 'पदद्वयं व्याख्यातम्' इति उभयथाप्यसंगतमिति चेत्, सत्यम्; समस्तपदाभिप्रायेणैतत् 'पदद्वय'मित्युक्तम्। तथापि व्याख्यातस्यैव पुनरुपादानं वक्ष्यमाणविरोधस्य धर्मिनिष्ठतया स्फुटीकरणाय इत्यदोषः ॥

ननु प्रश्नस्यावकाशो नास्ति विरोधशब्दस्य प्रसिद्धार्थत्वात् इत्याशंक्य, गोशब्दवदनेकार्थत्वात् विवक्षितार्थनिर्णयाय प्रश्नो युक्त इति मन्वानो विरोधशब्दस्य अनेकार्थत्वमाह—**तत्र द्विविधः** इति। ननु इतरेतरभावानुपपत्तेरेकत्वात् तद्धेतुभूतो विरोध एक एवायमिति निर्णयो लभ्यते तत्र कुतः प्रश्न इत्याशंक्य, सापि द्विविधेत्याह—**द्विविधा च** इति ॥

ननु विरोधप्रदर्शनाय तमःप्रकाशयोरेव उदाहृतत्वात् छायातपयोः शीतोष्णयोश्च सहावस्थानं किमित्युपपाद्यते इत्याशंक्य, तमःप्रकाशशब्देन तयोरपि ग्रहणसंभवात् न दोष इत्याह—**तत्र तमःप्रकाशेति** ॥

ननु अस्मिन् पक्षे सहानवस्थानलक्षणविरोध एव न स्यात् उदाहरणावयवसन्निवेशविशेषभावात् इति चेत्, मैवम्—सूक्ष्मावयवानां सहावस्थानेऽपि प्रतीक-

---

भा. मङ्गलाक्षेपसमाधानमन्यशब्दार्थः। **भाष्यमाददातीति**। भाष्यं व्याख्यातुं प्रतीकग्रहणं आस्यविहरणं विना अनुपपन्नमित्यास्यविहरणस्य विवक्षितत्वात् नात्मनेपदमिति द्रष्टव्यम्। केवल आकार एवायं न त्वाङिति नात्मनेपदमिति केचित्॥*

*केचित् तत्त्वदीपनकाराः। ऋजुविवरणकारास्तु आस्यविहरणविवक्षया परस्मैपदं समर्थयन्ते॥

उच्यते—परस्परानात्मतालक्षणो विरोधः इत्यादिना ॥ 20 - 4

**ननु तमो नाम आलोकाभावमात्रं इति केचित्, रूपदर्शनाभावमात्रं इत्यन्ये, तत् कथं दृग्दृश्ययोः भावरूपयोः इदं दृष्टान्तत्वेन आद्रियते इति। उच्यते—उपचयापचयाद्यवस्थाभेदविशेषविशिष्टं रूपवत्तया च उपलभ्यमानं तमः कथं द्रयीमभावविधां आसीदेत्। बहुलालोकवितते-**

---

ता. विशिष्टानां सहानवस्थानलक्षणविरोधोऽस्त्येव तमःप्रकाशादीनामिति द्रष्टव्यम् ॥

**आलोकाभावमात्रम्** इति तार्किकाणां मतम्। **रूपदर्शनाभावमात्रम्** इति प्राभाकराणाम्। विशिष्टरूपवत्वं असिद्धमिति; अत आह—**उपलभ्यमानम्** इति। [यद्वा] ननु तमसो भावरूपत्वमसिद्धमित्यत आह—**उपलभ्यमानमिति**।

---

भा. 'तमःप्रकाशवद्विरुद्धस्वभावयोः' इति भाष्येण आत्मा नानात्माज्ञानाहङ्काराद्यभिन्नः तद्विरुद्धस्वभावत्वात् यदेवं तदेवं यथा तमोविरुद्धः प्रकाशः इत्यभिप्रेतम्। तत्र तमःप्रकाशयोर्भावाभावरूपत्वादेव परस्परानात्मत्वमिति हेतोरप्रयोजकत्वशङ्कां निराकर्तुं वक्ष्यमाणाविद्यानुमाने दृष्टान्तस्य साध्यवैकल्यशङ्कां परिहर्तुं वा तमसो भावत्वसिसाधयिषया प्रथममाक्षिपति—**नन्विति**। तमश्शब्दवाच्यो भावो न भवति आलोकाजन्यचाक्षुषज्ञानविषयत्वात् सम्मतवत्। ततः परिशेषादालोकाभावो निमीलितनयनस्य अबाधिततमःप्रतीत्या रूपप्रत्यक्षाभावो वा तम इत्यर्थः ॥

तमश्शब्दवाच्यो नाभावः स्वमात्रवृत्तिधर्मप्रकारकप्रतियोगिज्ञानाजन्यजन्यप्रत्यक्षविषयत्वात् घटादिवत्, अन्यथा उक्तरूपाभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वेन आलोकज्ञानं विना [रूपप्रत्यक्षज्ञानं विना च] तमोज्ञानानुपपत्तिरित्यभिप्रेत्याह—**उच्यत इति**। किञ्च, तमो द्रव्यं अवस्थावत्त्वात् रूपवत्त्वाद्वा प्रकाशवत्। न चासिद्धिः, 'ईषत्तमः' 'गाढं तमः' 'तमालमालाश्यामलं तमः' इत्यनुभवादित्यभिप्रेत्याह—**उपचयेत्यादिना**। न चैवमालोकाजन्यचाक्षुषज्ञानविषयत्वानुपपत्तिरिति वाच्यम्, आलोकस्य घटादिप्रत्यक्षेऽप्यहेतुत्वात् ॥

**ऽपि देशे निमीलितनयनस्य गोलकान्तरवर्तितमोदर्शनं अन्धकारोपलब्धिः पिहितकर्णपुटस्य आन्तरशब्दोपलब्धिवत् न विरुध्यते। आलोकविनाशितस्य च तमसः पुनः मूलकारणादेव झटिति महाविद्युदादिजन्मवत् जन्म सिद्ध्यति॥**

---

ता. ननु तमसो भावरूपत्वमङ्गीकुर्वतापि आलोकनिवर्त्यत्वमङ्गीक्रियते, तथापि वितालोकेऽपि देशे निमीलिताक्षेण गृह्यमाणं तमः न बाह्य [म् । आन्तर] मिति चेत्, मैवम्—बहिः प्रवृत्तानामेव नायनरश्मीनां विषयग्राहकत्वात्, निमीलितनयनस्य च तदभावात्, अन्यथा अञ्जनस्यापि नयनस्थस्य निमीलितनयनेन ग्रहणप्रसङ्गादिति अभाववादिनां चोद्यमपाकरोति—**बहुलेति**। तत्र सूक्ष्माणां तेजोवयवानामन्धकारेण सहावस्थानमङ्गीकृत्य 'बहुल' इति विशेषणम्। **अन्धकारोपलब्धिः** इति 'आलोकानुपलम्भमात्रं तमः' इति पक्षव्यावृत्त्यर्थम्। ननु भावरूपत्वे तमसः कथमालोकनिवृत्त्यावृत्तिभ्यां खण्डावयविपरम्पराविलम्बमन्तरेण जन्मनाशौ स्याताम्? द्रव्यस्य उत्पत्तौ चतुर्णामेव भूतानां कारणत्वात् स्पर्शशून्यस्य तमसः तेभ्यो जन्मासम्भवात् न द्रव्यान्तरत्वम्, इत्याशंक्याह—**आलोकेति**॥

---

भा. आलोकविषयसंयोगो हि रूपविशिष्टप्रत्यक्षे अपेक्ष्यते इत्यालोकोऽप्यपेक्ष्यत इति वाच्यम्, तस्य पृथगन्वयव्यतिरेकाभावात्। तत्संयोगश्च संयोगत्वेनैव हेतुः न संम्बन्धत्वेन, तस्य तदपेक्षया गुरुत्वात्, संयोगाद्यन्यान्यत्वव्यतिरिक्तसम्बन्धत्वाभावाच्च। परंपरासम्बन्धस्यापि तत्सम्बन्धत्वेन व्यवहितालोकेनापि चाक्षुषज्ञानप्रसङ्गाच्च। तथा च न तत्संयोगो यत्र हेतुस्तत्र नालोकोऽपि हेतुरिति स्थिते, आलोकप्रत्यक्षे व्यभिचारान्नालोकसंयोगो हेतुरिति सोऽपि न हेतुः। न च तत्रापि तदवयवावयवेन संयोगोऽस्तीति वाच्यम्, त्रसरेण्वादिसंयोगस्य चाक्षुषप्रत्यक्षाप्रयोजकत्वात्। न च चक्षुरालोकसंयोग एव विषयालोकवृत्तिसंयोगत्वेनापि तत्र हेतुरिति वाच्यम्, तत्र प्रमाणाभावात्। आलोकाकाशसंयोगेऽपि तद्रूपस्य सत्त्वात्। आलोकेन्द्रियसंयोगत्वेनैव तस्य हेतुत्वाच्च। घटादावालोकसंयोगस्यापि तमोनिवृत्त्यर्थत्वोपपत्तेश्च। अत आलोकतदभावप्रत्यक्षादौ व्यभिचारात् नालोको रूपादिप्रत्यक्षे हेतुरिति॥

**नतु रूपवतो द्रव्यस्य स्पर्शवत्त्वनियमात् तद्रहितं तमः कथं रूपवत् द्रव्यं अवगम्यते। [न] नैष दोषः–वायोरन्यत्र स्पर्शवद्द्रव्यस्य रूपवत्त्वनियमेऽपि रूपरहितस्य स्पर्शवतो वायोरभ्युपगमात् तद्वत् दर्शननियमादेव स्पर्शहीनस्य रूपवत्तमसः सिद्धेः। धूमस्य च रूपवतः चक्षुःप्रदेशादन्यत्र स्पर्शानुपलब्धिः, तद्वत् सर्वस्पर्शहीनं तमः किं न स्यात्। सवितृकिरणविततेऽपि देशे प्रदीपालोकजन्मविनाशयोः प्रागभावप्रध्वंसाभावेतरेतराभावेषु तमोबुद्ध्यदर्शनात् नालोकाभावमात्रं तमः।**

---

तमः रूपशून्यम्, स्पर्शशून्यत्वात्, आकाशवत् इति शङ्कते–**ननु** इति। ता॰
सिद्धान्ती प्रतिबन्दिन्यायमवलम्ब्य प्रत्यक्षविरोधेन परिहरति–**न वायोः** इति। 'यत् स्पर्शवत्, तत् रूपवत्' इति घटादौ व्याप्तेः दर्शनात् रूपरहितत्वात् वायुः स्पर्शशून्यः आकाशवत् इत्यस्यानुमानस्य प्रत्यक्षविरोध एव परिहारः। सोऽत्रापि तुल्य इत्यर्थः। स्पर्शरहितत्वमङ्गीकृत्य एतत् अवोचाम, तमसः स्पर्शवत्त्वेऽपि न कश्चिद्विरोधः इत्याह—**धूमस्य च** इति। अनुपलम्भस्तु स्पर्शस्य नयनप्रदेशादन्यत्र धूमस्पर्शस्येव न विरुध्यते। **सर्वस्पर्शहीनम्**—स्पर्शवदपि सर्वत एव अनुपलभ्यमानस्पर्शं इति यावत्। न चेदमसंभावनीयम्। आकरजन्यस्य तेजसः स्वर्णादेः स्वपरप्रकाशकभास्वररूपस्य उष्णस्पर्शस्य च कदाचिदप्यनुपलभ्यमानस्य सत्तावत् उपपत्तेः इति भावः॥

आलोकाभावेषु उपलभ्यमानेष्वपि अनुपलभ्यमानत्वात् न आलोकाभावमात्रं तमः इत्याह—**सवितृकिरणे**ति। किमेकैकालोकाभावा एकैकं तमः? उत सर्वं तमः एकैकस्यालोकस्याभावः? यद्वा सर्वे आलोकाभावाः सभूयैकैकं

---

रूपवत्त्वहेतोरसिद्धिं शङ्कते—**ननु रूपवत** इति। **रूपवत्तमसः सिद्धेरिति**। न च नीलरूपमात्रे पृथिवीसमवायिकारणगन्धादिव्याप्तिश्च अस्तीति वाच्यम्, पाकजस्यैव तस्य तथात्वात्। अन्यथा अभास्वरशुक्लरूपेऽपि तद्दृष्टमिति जलेऽपि शुक्लरूपं न स्यात्। तद्दर्शनं तु प्रकृतेऽपि तुल्यमिति भावः। **धूमस्येति**। न चा[लं]पि धूमस्य हस्तादिस्पर्शनेऽपि ग्रहणात् नायं नियम इति वाच्यम्, तस्य धूमनिमित्तत्वेऽप्यधूमत्वादिति भावः। भा॰

**सर्वालोकाभावश्चेत् सर्वालोकासन्निधाने तर्हि न निवर्तेत। बहुलान्धकारसंवृतापवरकान्तरवस्थितस्यापि बहिः रूपदर्शनेन सह अपवरकान्तः तमोदर्शनात् न रूपदर्शनाभावमात्रं तमः इति अलमतिप्रसङ्गेन॥**

---

ता. तमः? नाद्यः—अनियमेन दीपादौ तमोनिवृत्त्यर्थिनां प्रवृत्त्यनुपपत्तेः। न द्वितीयः—प्रदीपाद्यालोकस्य क्वचिज्जन्मनि जगदुदरवर्तिनः तमसः सर्वस्याभावप्रसङ्गात्। नापि तृतीयः इत्याह—**सर्वालोकेति**। इदानीं 'रूपदर्शनाभावः तमः' इति पक्षं निराकरोति—**बहुलेति**॥

---

भा. किमेकैकालोकाभावस्तमः? उत सर्वालोकाभावो वा? आद्येऽपि न प्रागभावादिः प्रत्येकं मिलितो वा तमः अतिप्रसङ्गादसम्भवाच्चेत्युक्त्वा द्वितीयमनूद्य दूषयति—**सर्वालोकेत्यादिना**॥

सर्वालोकाभावरूपस्य तमसोऽभावस्य तावद्भावत्वनियमात् सर्वालोक एव तदभाव इति एकालोकसत्त्वेऽपि तमसोऽभावो न स्यात्। न च किञ्चिदालोकसत्त्वे तस्यैवालोकस्याभावाभावात् न सर्वालोकाभावरूपं तम इति कथं [न] तदसत्त्वमिति वाच्यम्, अभावसमुदायस्य तमस्त्वे समुदायस्यापि समुदायिनोऽतिरिक्तत्वे हि न तदा तत्सत्त्वम्, एकाभावेऽपि तद्घटितसमुदायाभावात्। समुदायस्यानतिरिक्तत्वे तु निखिलालोकाभावाभावास्तावन्त एव आलोका इत्येकालोकदशायां कथं तमोऽभावः स्यादिति तदा न तमो न वा तदभाव इति महत् सङ्कटं परस्य॥

ननु आलोकसामान्याभाव एव तम इति यत्किञ्चिदालोकेऽपि तन्निवर्तत इति चेत्, तर्हि प्रागभावादेरतमस्त्वेन नष्टं तमः उत्पन्नं तम इति बुद्धेर्निर्विषयत्वप्रसङ्गः। किञ्च, सामान्याभावो न सामान्यप्रतियोगिकः। रूपे विद्यमानेऽपि घटे रूपत्वाभावात् रूपं नास्तीति प्रतीतिप्रसङ्गात्। परम्परासम्बन्धेन घटे तद्वृत्तौ च घटे रूपत्वं नास्तीति बुद्धिर्न स्यात्। सामान्याधारा व्यक्तय एव तत्प्रतियोगिन्य इति चेत्, तर्हि प्रतियोग्यनधिकरणस्याभावाधिकरणत्वनियमेन घटरूपानधिकरणे पटे तत्प्रतियोगिकरूपसामान्याभावः स्यात्। न च यावत्प्रतियोग्यनधिकरणमेवाभावाधिकरणमिति वाच्यम्, प्रतियोग्यनधिकरणत्वस्यैव लाघवेन यावदर्थासम्भवेन च अभावाधिकरणत्वव्याप्यत्वेन

विशेषाभावाधिकरणे गृहीतत्वात् । अन्यथा विशेषाभावाधिकरणे नैव प्रतियोगी [स्यात्]तत्प्रतियोगित्वाविशेषादन्योऽपि[वा]प्रतियोगी स्यादिति महत् सङ्कटं स्यात्॥ भा.

तादृशाभावे प्रमाणाभावाच्च। न च निखिलतत्तद्रूपाभाववत्तया निश्चिते वायौ रूपं न वेति संशयो दृश्यते, स च न निश्चिताभावविषय इति सामान्याभावो वाच्य इति वाच्यम्। वायुवृत्तिधर्मस्य कस्यचिद्रूपत्वेन संशयदशायां निश्चितेष्वेव तत्संशयोपपत्तेः । अन्यथा वायौ रूपं भविष्यति न वेति संशयात् तत्प्रागभावोऽपि सामान्याभावात्मा सिध्येत्। अपि च, त्वन्मते समानप्रकारकनिश्चयस्यैव संशयविरोधित्वेन पूर्वं रूपाभावत्वप्रकारकनिश्चयाभावात्तदुपपत्तेः । अस्ति च रूपत्वाधिकरणप्रतियोगिकात्यन्ताभावेषु प्रागभावादिष्विव रूपाभावत्वं नाम सामान्यम् । प्राक् तदज्ञानं च सामान्याभावस्यैव कल्पनीयम् ॥

किञ्च, अतिरिक्तसामान्याभावाभ्युपगमे तत्तद्रूपमात्रप्रतियोगिकाः सर्वे रूपाभावाः सन्तीत्याप्तवाक्यादवगमेऽपि वायौ रूपं न वेति संशयः स्यात्। त्वदभिमतसामान्याभावस्य तदाप्यज्ञातत्वात्, सामान्याभावनिश्चयात् पूर्वं तेषु तद्व्याप्यत्वज्ञानानुपपत्तेश्च । अन्यथा त्वदभिमतसंशयोऽपि न स्यात् । अत एव तमःप्रतीतिसिद्ध्यर्थमेव सामान्याभावः स्वीकर्तव्य इति निरस्तम् । तस्मादेकावच्छेदेन वर्तमाना विशेषाभावा एव वृक्षा इव वनमिति रूपं नास्ति इत्येकत्वेन प्रतीयन्त इति न विशेषाभावातिरिक्तः सामान्याभाव इति पूर्वोक्तदोषस्तदवस्थ एवेति भावः ॥

ननु विषयिणः चिदेकरसत्वादिभिरहङ्कारादिसम्भेदनिराकरणं पूर्वपक्षिणोऽनुपपन्नम्। अरजते रजततादात्म्यस्येव चिदेकरसेऽपि तत्तादात्म्यभ्रमः सम्भवतीति (पूर्वं) शङ्कितत्वात् । न च तस्य वास्तवमेव तादात्म्यं तेन निराक्रियते प्रमाजन्यसंस्काराभावायेति वाच्यम्, अधिष्ठाने आरोप्यप्रमाया अन्यत्र क्वापि भ्रमाहेतुत्वात् । न हि कोऽप्यनुन्मत्त एवं वदति —यत्र यदारोपस्तत्रैव तत्प्रमाजन्यसंस्कारोऽपि हेतुरिति न वा आत्मातिरिक्ते चिदेकरसत्वादिकमस्तीति चेत्, न—अध्यासवादिना तावदधिष्ठान-

ननु दृग्दृश्ययोः इतरेतरभावानुपपत्तिः तयोः विभ्रमनिमित्तं तादात्म्यावभासं न निरुणद्धि, शुक्तिकारजतयोरपि हि तादात्म्यहीनयोरेव विभ्रमनिमित्तं ऐकाधिकरण्यमवभासते, तद्वत् इहापि स्यात्
20 - 6 इति चोदयति—कथं इति। सत्यं इदमंशमात्रस्य अधिष्ठानस्य रजतस्य च अध्यस्यमानस्य क्वचित् तादात्म्यमस्त्येव। ततश्च अधिष्ठानसामान्यांशस्य अध्यस्यमानविशेषांशस्य च क्वचित् सामान्यविशेषभावेन वा गुणगुणिभावेन वा समानाधिकृतस्य अन्यत्र अन्यतरांशवतः पदार्थस्य दर्शनात् अन्यतरांशाध्यासो विभ्रमो दृष्टः। तद्वत् इह अधि-
20 - 6 ष्ठानस्य चितः अध्यस्यमानस्य च अनात्मनो नास्ति इत्याह—स्वतः तावत् विषयिणः चिदेकरसत्वात् न युष्मदंशसम्भवः इत्यादिना॥

अयमाशयः—द्रष्टुः अचिदंशः स्वाभाविको वा स्यात् आगान्तुको

---

ता. इतरेतरभावानुपपत्तिः तयोः तदात्म्यावभासं न निरुणद्धि इत्यन्वयः। तत्र हेतुः **इतरेतरभावानुपपत्तिः** इति। यतः इतरेतरभावो नास्ति अत एव तादात्म्यप्रतीतिः विभ्रमः। इतरेतरभावे पुनः विषयस्य सत्वात् तत्प्रतीतिः यथार्थैव स्यात् इत्यर्थः। अथवा, विभ्रम-अवभास-शब्दाभ्यां कारणफले कथ्येते। विभ्रमो निमित्तं यस्य तादात्म्यावभासस्य स तथा तं इति यावत्। अस्तु, प्रकृते किमायातमिति; अत आह-**तद्वदिह** इति॥

एवं समुदायतात्पर्यमभिधाय अवयवशो योजयितुमाह—**अयमाशयः** इति।

---

भा. सामान्येनाध्यस्यमानस्य वास्तवं तादात्म्यं वाच्यम्। अन्यथा प्रमाहितसंस्कारासम्भवात्। अधिष्ठानस्यात्मनः चैतन्यमेव भ्रमे प्रतीयमानतया सामान्यम्। ततस्तस्यैवाहङ्कारादितादात्म्यं वाच्यम्। तथा चेत् चैतन्यस्यैवात्मतया अधिष्ठानत्वेन तत्र तस्य वास्तवत्वे तदध्यस्तत्वं न सिध्यति। मा भून्नाम, न ह्यध्यासाक्षेपवादिनस्तदनिष्टम्। तच्च वस्तुतो न सम्भवति विषयिणश्चिदेकरसत्वादित्याक्षेपाभिप्रायं मत्वा, संस्काराभावप्रयुक्ताक्षेपसिद्ध्यर्थं चिदेकरसत्वादिति हेतोः मामहं जानामीत्यनुभवविषयाहङ्कारत्वेनात्मनो जडत्वादसिद्धिमाशङ्क्याह—**अयमाशय इति**॥

वा (इति)। न स्वाभाविकः इत्याह—स्वत इति। चेत्यं हि जडं 16 - 6
चैतन्यस्य कर्मकारकतया अवभासते। तत् कथमेकस्यां क्रियायां कर्तुः
विपरीतस्थानगतं कर्मकारकं आत्मा स्यात् इत्यभिप्रायः। आगन्तु-
कश्चेत् सहेतुरहेतुर्वा (सहेतुकोऽहेतुको वा)। निर्हेतुश्चेत् तत्राह—
अपरिणामित्वात् इति। न हि निरवयवं वस्तु स्वतः सावयवाकारेण 21 - 1
परिणममानं दृष्टं इत्यभिप्रायः। न सहेतुः इत्याह—निरञ्जनत्वात् इति। 21 - 2

---

ता. असंभवमुपपादयति—**चेत्यं हि** इति। अवभासतां तथापि किमिति; अत आह—**तत् कथम्** इति। ननु गमनादिक्रियाकर्तुः ज्ञानक्रियाकर्मत्वं दृश्यते इति; अत आह—**एकस्यां** इति। तत्क्रियाकर्तुः तामेव क्रियाव्यक्तिं प्रति कर्मत्वं न दृश्यत

---

भा. अचिदंशो जडः अहङ्कारादिः अन्तःकरणातिरिक्ताहमनुभवविषयः न स्वद्रष्टृकः दृश्यत्वात् घटवत्। न च ब्रह्मणि व्यभिचारः, तस्मिन् चैतन्यविषयत्वलक्षणदृश्यत्वाभावात्। चैतन्यं चार्थप्रकाशः सर्वसम्मतः। न च अप्रयोजकत्वम्, लाघवेन दृश्यत्वमात्रस्यैव स्वद्रष्टृत्वाभावेन व्याप्तत्वात्। प्रपञ्चयिष्यते चैतत् स्वस्थाने। अहङ्कारस्य च स्वद्रष्टृकत्वनिरासे दृश्यत्वमहिम्ना तदतिरिक्तदृग्रूपात्मसिद्धौ तद्भेदे प्रमाणाभावात् दुःखित्वादीनामहङ्कारधर्मत्वात् अभेदे चाबाधितश्रुतेरेव मानत्वात् आत्मैक्यम्। अन्यथा नानात्मकल्पने गौरवम्। किञ्च, आत्मनः स्वसमवेतप्रत्यक्षविषयत्वे तत्प्रति कारणत्वात् कर्मकारकत्वम्, न त्वनुमेयादिवद्विषयत्वमात्रम्। कर्मकारकं च परसमवेतक्रियाफलशालि। स्वसमवेतक्रियाफलशालिनो देवदत्तस्य गमिक्रियां प्रति अकर्मत्वादिति द्रष्टृदृश्यभेदः। किञ्च, कर्मकारकस्य क्रियाजन्यफलवत्तया प्राधान्यम्। कर्ता तु तां प्रति निर्वर्तकतया गुण एवेति कथमेकस्मिन्नेकक्रियानिरूपितप्राधान्याप्राधान्ये विरुद्धे स्याताम्। अतो जीवस्य स्वरूपमहमनुभवविषयादहङ्कारादन्यदेव चिद्रूपमित्यभिप्रेत्याह—**चेत्यं हीत्यादिना**॥

**वैपरीत्येन**—भिन्नत्वेन प्राधान्येन दृश्यतया वा **स्थानं**—अवस्थानं **गतं**—प्राप्तं येनाहङ्कारादिना तत्तथोक्तमित्यर्थः। **सहेतुकोऽहेतुको वेति**। आत्मातिरिक्तो हेतुस्तस्मिन्नस्ति न वेत्यर्थः। **अञ्जनं**—मलिनात्मना जडेन सम्बन्धः तद्रहितत्वा-

**न हि निरवयवमाकाशं हेतूपरागात् परिणममानं दृष्टं इत्यर्थः ।** तर्ह्य-

---

ता. इत्यर्थः । निरञ्जनत्वस्य हेतुत्वमुपपादयति—**न हि निरवयवमाकाशं** इति।

---

भा. दिति टीकार्थः । द्रव्यत्वादात्मनोऽपि केनचित्सम्बन्धः सम्भवतीत्यत आह—**न हि निरवयवमिति ।** आत्मनस्सावयवत्वे अनित्यत्वादिप्रसङ्गान्निरवयवत्वं सुप्रसिद्धम् । न हि निरवयवस्य केनचित् संयोगः सम्भवति । स्वात्यन्ताभावसमानाधिकरणस्य तस्यावयवभेदोपाधिकभेदरहिते तस्मिन्नसम्भवात् । न ह्यत्यन्ताभावतत्प्रतियोगिनोः युगपदेकत्र वृत्तिः सम्भवति । परस्परविरहरूपिणोः तयोस्तदसम्भवात् । न चावच्छेदकभेदे सत्येकत्रापि तदुभयवृत्तिरविरुद्धेति वाच्यम् । एकत्राविरुद्धयोर्घटपटाभावयोरवच्छेदकभेदानपेक्षणात् । विरुद्धयोस्त्वधिकरणभेदं विना एकत्रावृत्तेः ॥

न चावच्छेदकभेदादौपाधिकोऽधिकरणभेदोऽस्त्विति वाच्यम् । औपाधिकस्य वास्तवत्वे तदभिन्ने तद्भेदानुपपत्तेः । अवास्तवस्तु कथमप्यध्याससमर्थनादृते न सिध्यति । न वा निरवयवे अवच्छेदकभेदोऽस्ति, विरुद्धावच्छेदकयोरप्येकदा एकत्रासमवायात् । न च संयोगो व्याप्यैव वर्तत इति वाच्यम् । तथा अननुभवात् । विभुविशेषगुणानां निमित्तसंयोगप्रदेश[गत]तया त्वदभ्युपगतानां सर्वत्रोपलम्भप्रसङ्गात्, कुड्यादिपरभागे चक्षुरादिसंयोगासम्भवाच्च । निरवयवसंयोगे प्रमाणाभावाच्च । न च द्रव्यत्वेन तदनुमानम्, मूर्तत्वस्योपाधित्वात् । उक्तबाधकेन मूर्तत्वस्यैव गुरुशरीरस्यापि संयोगजनकतावच्छेदकत्वात् । वस्तुतो घटादिषु गुणवत्त्वाविषयद्रव्यत्वसाधकानुगतबुद्ध्यभावेन न तदतिरिक्तद्रव्यत्वमस्ति । अतः स्पर्शवत्त्वमेव संयोगजनकताप्रयोजकमिति । तस्मात् सावयवेषु स्थूलावयववृत्तित्वेन कथञ्चित्तदवच्छिन्नाधिकरणभेदेनावयव[वि]वृत्तित्वेन वा मायावादे संयोगो वक्तुं शक्यते न तु निरवयवे इति निरञ्जन आत्मेति भावः ॥

ननु चैतन्यरूपे आत्मनि अचितोऽहङ्कारादेस्तादात्म्याध्यासे चिदचितोः तादात्म्यप्रमाजन्यसंस्कारमात्रं कारणम्, न तु चैतन्याधिकरणकाचित्तादात्म्यप्रमासंस्कारः, तत्र बीजाभावात् । स चात्र सुसम्पादः, अहमुपलम्भे इति तस्य

**नात्मैव अधिष्ठानं आत्मांशात्मकं क्वचित् दृष्टं इति; नेत्याह**—विषय- 21.2
स्यापि इति ॥

समत्वात् इति। **अयमर्थः—यथा द्रष्टुः द्रष्ट्रन्तरं न प्रत्यक्षगोचरः,** 21.3
**अपि तु अनुमेयमेव तत्, एवं विषयोऽपि स्यात् इति। परतोऽपि न**
**अनात्मनः चिदाकारपरिणामः। जडोपादानस्यापि कार्यस्य जडत्वात्।**
**तर्हि आत्मचैतन्यमेव अनात्मा स्वांशत्वेन स्वीकरोति इति चेत्;**
तत्राह—चितेः अप्रतिसंक्रमत्वात् **इति** ॥ 21.3

---

'न प्रत्यक्षगोचर' इति किमर्थमुच्यते न गोचर इत्येव कस्मान्नोच्यते; इत्यत आह— ता.
**अपि त्विति**। अनात्मा कर्ता आत्मचैतन्यं अंशत्वेन स्वीकरोतु 'स्फुरति घटः' इति जडस्य भाट्टैः प्राकट्याश्रयत्वेन स्वीकारात् इति शङ्कते—**तर्हि** इति। निष्क्रियत्वात् असंगत्वाच्च आत्मचैतन्यस्य अनात्मांशत्वगमनं वस्तुतो नोपपन्नमित्यर्थः ॥

---

चित्तादात्म्यानुभवादित्याह—**तर्ह्यनात्मेति**। किं विषयस्य चिदभेदः कल्पितः भा.
वास्तवो वा? नाद्यः, अध्यासकारणनिरूपणात् पूर्वं तदसम्भवात्। न द्वितीय इत्याह—**यथेति**। **एवं विषयोऽपीति**। अहङ्कारादेरपि स्वधर्मज्ञानादेव अपरोक्षत्वात् साक्षिप्रत्यक्षविषयत्वाभ्युपगमो न स्यादिति भावः ॥

अथ वास्तवचित्सम्भेदो न भेदाभेदघटिततादात्म्यम्, विरोधात्। नापि समवायः तस्यैवासत्त्वात्, इत्यत्यन्ताभेदो वाच्यः। ततश्च दृश्यत्वेन तस्यानात्मत्वसाधनं न स्यात्। एवं च तदध्यस्तत्ववर्णना मुधैवेति भावः। आगन्तुकश्चित्प्रकाशश्चेत्, तदतिरिक्तसाक्षिप्रत्यक्षविषयत्वाभ्युपगमपीडादोषस्तदवस्थ एव। तथापि दोषान्तरमाह—**जडत्वादिति**। ननु दर्पण इव मुखस्य सन्निधानमात्रात् जडे अहङ्कारे आत्मचैतन्यस्यैवायं संसर्गावभासोऽस्त्वित्याशङ्क्य, बिम्बप्रतिबिम्बभावोऽप्यतात्त्विक इति नाध्यासं विना सिद्ध्यति इत्यभिप्रेत्याह—**चितेरिति**। तस्मान्न प्रमाहितः संस्कारः सम्भवतीति भावः ॥

ननु लाघवात् संस्कारमात्रमध्यासे कारणम्, स च भ्रमजन्योऽत्र सुलभ इति चेत्, न—अन्योन्याश्रयात् स्वप्रकाशात्मनि भ्रमस्यासम्भवाच्च।

**तस्मात् क्वचिदपि तादात्म्यादर्शनात्** अन्यत्र अन्यतरांशदर्शनेन
21 - 4 **अन्यतरांशाध्यासो नोपपद्यते इति।** तद्धर्माणामपि सुतरां इत्यारभ्य
23 - 6 आभाव एवाध्यासस्य युक्तः इत्यतः **प्राक्तनो ग्रन्थः स्पष्टार्थः ॥**

**ननु अहङ्कारादिषु शरीरान्तेषु अहमित्येव प्रत्ययः, न तु इद-**
22 - 2 **मिति, कथमेषां युष्मत्प्रत्ययगोचरत्वं इति;** तत्राह – तद्बलनिर्भासिततया
**इति। तस्य—अस्मत्प्रत्ययगोचरस्य चैतन्यस्य बलेन निर्भास्यत्वात्**
**अहङ्कारादेः प्रतिभासतो युष्मदर्थत्वाभावेपि** अपरोक्षतया अवभास्यत्वेन
23 - 2 **लक्षणेन युष्मदर्थभावो युज्यते इत्यर्थः।** अपृथक्त्वेऽपि चैतन्यात्
पृथगिव अवभासन्ते इति। **अन्तःकरणवृत्त्युपाधौ नानेव अवभासन्ते
इत्यर्थः ॥**

**भूयोऽवयवसामान्यसादृश्याभावात् आत्मनि कर्तृत्वादेः अहङ्का-
राद्युपाधिनिमित्तभ्रमत्वेऽपि, शरीराद्यध्यासस्य सोपाधिकभ्रमत्वाभावात्
द्रष्टरि अहङ्कारादिशरीरान्तपदार्थाध्यासस्य असम्भवं प्राप्तं अङ्गीकरोति-**

---

ता. ननु 'लोहितः स्फटिकः' इत्यादौ सादृश्याभावेऽपि अध्यासो दृश्यते इत्याशंक्य, सोपाधिकभ्रमेष्विव कर्तृत्वादिभ्रमेषु सादृश्यापेक्षाभावेऽपि शरीराद्यध्यासस्य निरुपाधिकत्वात् सादृश्यापेक्षा विद्यते इत्याह–भूयोऽवयवेति। निष्क्रियत्वात् निर्गुणत्वाच्च परिदृश्यमानभ्रमकार्यस्य कारणाभावेनापलापायोगात्

---

भा. एवं निर्गुणस्य निरवयवस्यात्मनोऽध्यस्यमानेन गुणावयवसामान्यरूपसादृश्याभावादपि नाध्यासः। न च प्रतिबिम्बादिभ्रमे सादृश्याभावान्न तत् भ्रममात्रे हेतुरिति वाच्यम्, निरुपाधिकभ्रमे तस्य हेतुत्वात्, शरीराद्यध्यासस्य च निरुपाधिकत्वादित्यभिप्रेत्योपसंहरति–**तस्मादिति ॥**

**बाधिर्यादिष्वित्यादि**टीकायाः अयमर्थः—बाधिर्यादिकं हि न श्रोत्रादेरभावः। लिङ्गशरीरान्तर्गतस्य तस्य आमोक्षमनपायात्। किन्तु तच्छक्तिप्रतिबन्धः। तथा च स इन्द्रियधर्म एवेति बधिरोऽहमित्याद्यध्यासः इन्द्रियधर्माध्यास एव। इन्द्रियस्यातीन्द्रियतया तत्र अप्रतीतेरिति। **भूयोऽवयवसामान्यसादृश्येति** प्रमाहितसंस्कारस्याप्युपलक्षणम्, उभयविरहेणैवाध्यासस्याक्षिप्तत्वात्।

यद्यप्येवं इति। **निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि** 23-7
**'केतकीगन्धसदृशः सर्पगन्धः' इतिवत् सादृश्यान्तरं वा शङ्खपीति-**
**मादाविव कारणान्तरं वा कल्पयति** इत्याह—**तथापि इत्यादिना** 23-7
एवमध्यासस्यापि इत्यभिप्रायः **इत्यन्तेन ग्रन्थेन । नैसर्गिकशब्दार्थमाह** 24-3
—प्रत्यक्चैतन्यसत्तामात्रानुबन्धी **इति । कथम्? आत्मनि कर्तृत्वभोक्तृ-** 23-7

---

ता. गुणावयवसामान्यलक्षणसादृश्याभावेऽपि गन्धयोरिव चिदचितोः सादृश्यं अन्यत् कल्पनीयम्, निरुपाधिकभ्रमत्वेऽपि 'शङ्खः पीतः' इत्यादेः भ्रमस्य सादृश्यानपेक्षस्य दर्शनात् विषयदोषलक्षणसादृश्याभावेऽपि रागकाचकामलादिवत् कर्तृकरणदोषादिलक्षणं कारणान्तरमेव कल्पनीयं इत्याह—**निरुपाधिके**ति ॥

ननु अध्यासस्य कार्यत्वात् अनादित्वं अयुक्तं इत्याक्षिपति—**कथम्** इति। तस्यापि अध्यासस्य प्रवाहरूपेण अनादित्वं वक्तुं अध्यासस्य स्वरूपमाह—**आत्मनि** इति ॥

---

भा. **सादृश्यान्तरं वेति**। अहमितिप्रतीतियोग्यत्वमित्यर्थः। निरुपाधिकभ्रमेऽपि सर्वत्र सादृश्यं न कारणं तस्य व्यभिचारादित्याह—**शङ्खेति**। यदि शङ्खे पीतिमाध्यासोऽपि सोपाधिक एवेति ब्रूयात् तदापि [अ]तद्गुणसंविज्ञानबहुव्रीह्यर्थो नभोनीलिमादि द्रष्टव्यम्। न च नभसोऽपि द्रव्यत्वेन रूपवत्सादृश्यमस्ति इति वाच्यम्। तथाप्यारोप्यसादृश्याभावात्। रूपमात्रस्यैवारोप्यत्वात्। यत्किञ्चिद्धर्मसाम्यस्य मेरुसर्षपयोरपि सत्त्वेन तस्यारोपनिमित्तसादृश्यव्यवहाराविषयत्वात् इति भावः ॥

**कारणान्तरमिति**—सादृश्यव्यतिरिक्तसंस्कारादिरेव कारणमित्यर्थः। अध्यासस्यानादित्वान्न भ्रमजन्यसंस्कारस्य कारणत्वेऽन्योन्याश्रय इत्युक्तं **नैसर्गिक** इत्यत्र। अनादेस्तस्य संस्कारजन्यत्वं कथमिति शङ्कते—**कथमिति**। प्रवाहरूपेणानादित्वान्न तद्विरोध इत्यभिप्रेत्य कार्यद्वारा अहङ्कारादेरनादित्वमाह — **आत्मनीत्यादिना**। **दोषो** रागादिः। ननु **लोक इति मनुष्योऽहमिति** टीकाग्रन्थेन लोकव्यवहारपदमध्यासपरतया व्याख्यातम्।

त्वदोषसंयोग एव अध्यासः। तत्र भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते। अकर्तुर्भोगाभावात्। कर्तृत्वं च रागद्वेषसंयोगाध्यासमपेक्षते। तद्रहितस्य कर्तृत्वाभावात्। दोषसंयोगश्च भोक्तृत्वमपेक्षते। अनुपभुक्ते अतज्जातीये वा रागाद्यनुपपत्तेः। एवं बीजाङ्कुरवत् हेतुपरम्परया अनादित्वात् अध्यासस्य नैसर्गिकत्वं इति। लोकव्यवहारशब्दः

24 - 4 अध्यासाभिधायी इति दर्शयति—लोकः इति मनुष्योऽहं इत्यादिना। व्यवहारः—अभिज्ञा अभिवदनं उपादानं अर्थक्रिया इति चतुर्विधः। अतः मनुष्योऽहं इति ज्ञानाभिधाने व्यवहारशब्दं अर्हतः इति भावः॥

---

ता. तावता कथं प्रवाहरूपेण अनादित्वमिति; अत आह—तत्र इति। ननु अध्यासस्य अनादित्वे वक्तव्ये लोकव्यवहारस्य अनादित्वं वक्तुमयुक्तम्, इत्याशङ्क्य, परिहरति—लोकेति। (लोके शब्दार्थव्यवहारयोः) [लोकव्यवहारशब्दाध्यासशब्दयोः] एकार्थत्वं दर्शयितुं (लोकप्रसिद्धार्थत्वं) [व्यवहारशब्दस्य लोकप्रसिद्धार्थं] तावदाह—व्यवहारः—अभिज्ञा इति॥

---

भा. तत् कस्मात्? लोकस्य व्यवहार इति प्रसिद्धार्थे बाधकाभावात्। न चाध्यासे आक्षिप्ते भाष्यकारस्य व्यवहारप्रदर्शनमसङ्गतमिति तथा व्याख्यातमिति वाच्यम्, तस्य तत्कार्यत्वेन तत्र प्रमाणतया तदुपन्यासोपपत्तेरित्याशङ्क्य, तस्य प्रमाणभाष्येणैव सिद्धत्वादद्यापि व्यवहारस्याध्यासकार्यत्वस्यासिद्धत्वाच्च तथा व्याख्यातमित्याह—लोकेति॥

लोकव्यवहारपदे टीकाकृत् मध्यमपदलोपिसमासमाह — लोक इतीति। लोकव्यवहारसिद्धस्याध्यासस्य स्वरूपनिर्देशो भाष्ये 'अहमिदम्, ममेदम्' इति। तत्सन्निधानाल्लोकव्यवहारपदस्य पर्यवसन्नमर्थं टीकाकृदाह—मनुष्योऽहमित्यभिमान इत्यर्थ इति। ममेदमित्यस्याप्युपलक्षणम्। अध्यस्य मिथुनीकृत्य लोकव्यवहार इति भाष्ये पृथक्तया प्रतीयमानाध्यासमिथुनीकरणलोकव्यवहाराणां टीकायामेकार्थत्वमुक्तं युक्तमेव। सत्यानृतयोः परस्पराध्यासव्यतिरेकेण मिथुनीकरणाभावात्। न चारोपात् पूर्वमेकबुद्ध्युपस्थितत्वमेव मिथुनीकरणं इति वाच्यम्। तत्पूर्वं तन्नियमाभावात्, आरोप्यसंस्कार

अन्यस्य अन्यात्मतावभासः अविद्या इत्युक्ते 'शुक्लः पटः' इत्यादिप्रत्ययानां अविद्यात्वप्रसङ्गो मा भूत् इति सत्यस्य वस्तुनः मिथ्यावस्तुसम्भेदावभासः अविद्या इति स्वसिद्धान्तमङ्गीकृत्य 'सत्यानृते मिथुनीकृत्य' इत्युक्तम्, तत् व्याचष्टे— सत्यं अनिदं चैतन्यं इत्यादिना। 25 - 2
ननु क्त्वाप्रत्ययोपादानात् अर्थतः क्रियाभेदः पूर्वापरीभावश्च अङ्गीकर्तव्यः, तत् कथं अध्यासमिथुनीकरणलोकव्यवहाराणां एकार्थत्वं इति ; नेत्याह—अध्यस्य मिथुनीकृत्य इत्यादिना। ननु किमिति स्वरूप- 25 - 3
मात्रपर्यवसानम्? क्रियाभेद एव क्त्वाप्रत्ययसामर्थ्यादुपादीयतां इति, नेत्याह—उपसंहारे च इति। न हि पदमात्रवैयर्थ्यभयात् वाक्यार्थः 25 - 8
नैसर्गिकत्वगुणविशिष्टः विशेष्यपदार्थः अध्यासः उपक्रमोपसंहारयोः भेत्तुं युक्तः इत्यभिप्रायः। किं तर्हि क्त्वाप्रत्ययावलम्बनं इति ; प्रतिपत्तितः क्रियाभेदपूर्वापरीभावौ इत्याह—अतः चैतन्यं पुरुषस्य स्वरूपं 26 1
इतिवद्व्यपदेशमात्रं इति। उपचारमात्रं इत्यर्थः। कथम्? एकोऽप्यध्यासः अन्योन्यात्मता सत्यानृते अहमिदं ममेदं इति च विशेषणभेदात् विशिष्टः (अध्यासः) परोपाधौ भिद्यते, विशिष्टाश्च प्रत्ययाः क्रमेण

---

'सत्यानृते मिथुनीकृत्य' इत्यस्य तात्पर्यमाह—**अन्यस्य** इति। ता. अद्याप्यसमर्थितत्वात् 'अङ्गीकृत्य' इत्युक्तम्। सत्यानृतमिथुनीकरणलोकव्यवहारशब्दयोरेकार्थत्वमुक्तं अयुक्तं इति शङ्कते—**ननु** इति। **न हि पदमात्रे**ति। अयमर्थः:—पदमात्रवैयर्थ्यात् अनेकपदार्थानां वैयर्थ्यकल्पनं गौरवात् अयुक्तं इति। एकस्मिन्नेव अध्यासे कथं प्रतिपत्तितः क्रियाभेदः पूर्वापरीभावश्च इत्याक्षिपति—**कथं** इति। विशेषणानां भेदात् अयं अदोषः इति परिहरति—**एकोऽपि** इति। तथापि प्रत्ययभेदः कथमिति; अत आह—**विशिष्टाश्च** इति ॥

---

स्वरूपेणैव कारणत्वात्, आरोप्यतदधिष्ठानयोर्गृह्यमाणस्मर्यमाणयोरेकज्ञानविषयत्वायोगाच्च। लोकव्यवहारोऽप्यध्यास एवेत्युक्तम्; इति स्थिते क्त्वाप्रत्ययसामर्थ्याद्भेदमाशङ्क्य परिहरति—**ननु क्त्वेति** ॥ भा.

**वक्तुः भवन्ति इति प्रतिपत्तितः पूर्वापरीभावं विशेषणभेदाच्च विशिष्टक्रियाभेदं च अङ्गीकृत्य क्त्वाप्रत्ययः इति। तत्र अज्ञानं इत्युक्ते ज्ञानाभावमात्रं उक्तं स्यात् , मिथ्या इत्युक्ते भ्रान्तिज्ञानं इति स्यात् , तदु-**
26 - 2 **भयव्यावृत्त्यर्थं निरुच्य पदार्थौ दर्शयति**—मिथ्या च तत् अज्ञानं च **इत्यादिना ॥**

**ननु कथं मिथ्याज्ञानं अध्यासस्य उपादानम्? तस्मिन् सति**

---

ता. मिथ्याज्ञाननिमित्तत्वे प्रमाणं पृच्छति—**ननु** इति । अन्वयव्यतिरेकयो

---

भा. **प्रतिपत्तितः पूर्वापरीभावमिति** । वस्तुतस्तु क्रियान्तरा(ध्या)[व्या]-हारेऽपि **अध्यस्य मिथुनीकृत्य लोकव्यवहार** इति पदानामुक्तविधया विजातीयार्थभेदासम्भवात् एकार्थत्वेऽपि पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यासे हेतुत्वात् समानकर्तृकक्रियाव्यक्तिभेदः पूर्वापरीभावश्चास्तीति नैसर्गिकपदसूचितानादित्वं प्रवाहरूपेणेति भाष्यकारोऽनेन सूचयतीति मुख्य एव क्त्वाप्रत्यय इत्यभिप्रेत्य **विशिष्टक्रियाभेदं चेति** चशब्दः प्रयुक्त इति द्रष्टव्यम् ॥

ननु भ्रमजन्यसंस्कारोऽपि नात्र सम्भवति, न हि यथावत्प्रकाशमाने चिद्रूपात्मनि भ्रमस्संभवतीति कुतस्तत्संस्कार इत्याशङ्क्य, अज्ञानावृतत्वादात्मनस्तस्मिन्नध्यासः सम्भवतीति संस्कारोपपिपादयिषयोक्तं भाष्ये 'मिथ्याज्ञाननिमित्तः' इति। तद्व्याख्यानटीकाभिप्रायमाह—**तत्रेति** । न च सिद्धान्ते अहङ्काराध्यासे अज्ञानस्योपादानत्वात् कथं तस्य निमित्तत्वोक्तिरिति वाच्यम्। अज्ञानशबलेश्वरस्य अज्ञानमुपादानं निमित्तदोषोऽपि इति ज्ञापनार्थत्वात्। अज्ञानस्य निमित्ततयोक्तमिति केचित्*। तथा चाहङ्काराध्यासे अज्ञानमुपादानं निमित्तं दोषश्च, अहङ्कारादिकर्तृत्वात्तस्य निमित्तकोटावप्युपयोगोऽस्तीत्युपादानमपि निमित्ततयो- भ्रमसंस्कारोऽपि निमित्तं सादृश्यं चास्तीति नाध्यासानुपपत्तिरिति भावः ॥

अज्ञानस्य नाध्यासोपादानत्वं, प्रमाणाभावादित्याक्षिपति—**नन्विति**। शुक्तिरजतादावन्वयव्यतिरेकाभ्यां शुक्त्याद्यज्ञानस्योपादानत्वे निर्णीते अहङ्का-

---

* केचित् तत्त्वदीपनकाराः ।

**अध्यासस्य उदयात् असति च अनुदयात् इति ब्रूमः। ननु अध्यासस्य प्रतिबन्धकं तत्त्वज्ञानं, तदभावश्च अज्ञानं इति प्रतिबन्धकाभावविषयतया अज्ञानस्य अध्यासेन अन्वयव्यतिरेकौ अन्यथासिद्धौ। नैतत् सारम्—पुष्कलकारणे हि सति कार्योत्पादविरोधि प्रतिबन्धकम्। न च अध्यासपुष्कलकारणे सति तत्त्वज्ञानं कार्यप्रतिबन्धकतया ज्ञायते।**

---

ता. रन्यथासिद्धिमाशङ्कते—**ननु अध्यासस्य** इति। तत्त्वज्ञानस्य प्रतिबन्धकत्वाभावं दर्शयितुं प्रतिबन्धकलक्षणं तावदाह—**पुस्कलकारणे हि** इति। 'विरोधि प्रतिबन्धकं' इत्युक्ते पूर्वज्ञानविरोधिनि उत्तरज्ञाने अतिव्याप्तिः, तत्परिहारार्थं **कार्योत्पाद**ेति विशेषणम्। सामग्र्यभावे अतिव्याप्तिपरिहारार्थं च **पुष्कलकारणे सति** इति विशेषणम्। **न च अध्यासे**ति। अयमर्थः—दोषस्यापि अध्यासकारणत्त्वम्, दोषाभावे एव तत्त्वज्ञानोदयात्, न तत्वज्ञानं अध्यासपुष्कलकारणे सति भवति इति ॥

---

भा. रादेरपि तत्कारणमनुमातुं शक्यत इत्यभिप्रेत्याह—**तस्मिन् सतीति**। तत्त्वज्ञानस्य प्रतिबन्धकलक्षणविधुरत्वान्न तदभावः प्रतिबन्धकाभाव इति नाज्ञानान्वयव्यतिरेकावन्यथासिद्धाविति अस्मदभिमतमेवाज्ञानं ताभ्यां कारणं सिध्यतीत्यभिप्रेत्याह—**नैतदिति**। कारणाभावे अतिव्याप्तिवारणाय **सति पुष्कलकारणे इति**। सामग्रीकालीनकार्यानुत्पादप्रयोजकं इत्यर्थः। ततः किम्? तत्राह—**न चेति**। दोषे सति तत्त्वज्ञानानुत्पत्तेरित्यर्थः ॥

ननु कारणाभावोऽपि प्रतिबन्धकोऽस्तु, तदाह उदयनः—'प्रतिबन्धो विसामग्री' इति, ततस्तत्त्वज्ञानमपि प्रतिबन्धकमिति तदभावः प्रतिबन्धकाभाव इति चेत्, न—व्यवहारानुसारेण हि व्यवहर्तव्यस्य लक्षणम्। अन्यथा जलस्य गन्धः पृथिव्याश्च स्नेहो लक्षणं किमिति नोच्येत। न हि वह्नेर्दाह्यस्य वा विरहदशायां दाहः प्रतिबद्ध इति व्यवहरन्ति, दाह्यवह्निसंयोगदशायां तु दाहाभावे प्रतिबद्धो दाह इति व्यवहरन्तीति सामग्रीकालीन एव प्रतिबन्धकः। न चैवमसमवायिकारणकालीनकार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वमस्त्विति वाच्यम्। मनस्संयोगे सत्यपि घटादिविरहात्तदज्ञाने तज्ज्ञानं प्रतिबद्धमित्यव्यवहारात् ॥

भा. न च मण्याद्यभावातिरिक्तकारणकालीनकार्याभावप्रयोजकत्वं प्रतिबन्धकत्वमिति वाच्यम्। यत्किञ्चित्कारणविवक्षायां कारणतत्कारणाभावयोरतिप्रसङ्गात्। निखिलकारणविवक्षायां तु व्यर्थविशेषणत्वात्। न च चरमकारणकाले कार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वम्, प्रतिबन्धकध्वंसे तदनन्तरोत्पत्तिके सति तव प्रतिबन्धकालस्य चरमकारणकालत्वाभावात्। न च स्वोत्पत्त्यनन्तरकालोत्पत्तिकभावकारणानपेक्षत्वं चरमकारणत्वम्, तच्च प्रतिबन्धकालीने कारणेऽप्यस्तीति वाच्यम्। तन्निरुक्तौ भावपदवैयर्थ्यात्। न च प्रतिबन्धकस्य चरमकारणकालीनत्वाय तदिति वाच्यम्। प्रतिबन्धकाभावस्याहेतुत्वेनापि तत्सम्भवात्॥

न चैवं तदन्वयव्यतिरेकविरोधः, तद्ग्राह्यस्य कार्यानुकूलत्वस्याकारणत्वेऽपि प्रतिबन्धकाभावस्य दण्डत्वादेरिव सत्त्वात्। अनन्यथासिद्धनियतपूर्ववर्तित्वरूपस्य शक्तिमत्त्वलक्षणस्य वा कारणत्वस्यैव तस्मिन् निराकरणात्। प्रतिबन्धके हि कार्योत्पादविरोधिनि सति सहस्रमपि कारणानि न कार्योत्पत्तये प्रभवन्तीति स्वोत्पत्तिविरोध्यभावतया सोऽपि कार्येण कारणमिवार्थ्यत इति तदकारणमप्यनुकूलमित्युच्यते। अत एवानन्यथासिद्धान्वयव्यतिरेकाभ्यां तस्य कारणत्वमेवोचितमिति प्रत्युक्तम्। चरमकारणकालीन[कार्यानुत्पत्तिप्रयोजक]प्रतियोगिकस्य तस्य कारणत्वायोगात्॥

किञ्च, दण्डत्वादिनोपस्थितदण्डादेः कार्येणान्वयसहचारदर्शनमा (त्रे तत्तर्का)त्रेण तर्कावतारे यथा कारणत्वं गृह्यते न तथा प्रतिबन्धकाभावस्य। तस्य तद्देशीयघ[प]टाद्यभाववैलक्षण्याज्ञानदशायां तत्र कारणताया अग्रहदर्शनात् (कारणताग्रहादर्शनात्)। किन्तु मण्यादौ सति न कार्यमिति प्रतियोगिनः कार्योत्पत्तिविरोधित्वे अवगत एव स दृश्यते। तथा च कथं न विरोध्यभावत्वेन अन्यथासिद्धिः। अन्वयव्यतिरेकावगतकार्यसम्बन्धित्वस्य दण्डत्वादेरिव कारणत्वादृतेऽपि सम्भवात्॥

किञ्च, व्यभिचारान्न मण्याद्यभावः कारणमिति उत्तेजकाभावविशिष्टमण्याद्यभावत्वेन स हेतुर्वाच्यः। तत्र यद्युत्तेजकत्वं प्रतिबन्धकविरोधित्वं तदा भावकारणताग्रहाधीनप्रतिबन्धकत्वग्रहापेक्षतया तस्य चक्रकापत्तिः। न चान्यत

**किं तु असत्येव अध्यासकारणे तत्त्वज्ञानोदयः। तस्मात् न अज्ञानान्वयव्यतिरेकौ प्रतिबन्धकाभावविषयौ। तथापि विरोधिसंसर्गाभाव इति चेत्, न—कार्यस्य कारणापेक्षा हि प्रथममुत्पद्यते, न विरोधिसंसर्गाभावापेक्षा। तस्मात् प्रथमापेक्षितकारणक्लृप्तिमेव अन्वयव्यतिरेकौ न्यायसहितौ कुर्वाते।**

---

ता. ननु तत्त्वज्ञानं अध्यासविरोधि तत्त्वज्ञानाभावश्च अज्ञानम्, इति विरोधिसंसर्गाभावविषयौ अन्वयव्यतिरेकौ इति शङ्कते—**तथापि** इति। **विरोधिसंसर्गाभावः**—तत्त्वज्ञानाभावः। अज्ञानं इति शेषः। अथवा विरोधिसंसर्गाभावे इति विषयसप्तमी। **न्यायसहितौ** इति। 'अन्तरङ्गबहिरङ्गयोः अन्तरङ्गं बलवत्' इति न्यायोपेतौ इत्यर्थः॥

---

भा. वक्तुं शक्यते। यदि चोत्तेजकत्वेनाभिमततत्तद्विशेषाभाव एव प्रतिबन्धके विशेषणं तर्हि तेषामानन्त्यादननुगतत्वाच्च व्यभिचारान्न कारणत्वम्। अपि चैवं मण्यादिकालीनस्फोटादिकार्यविशेषे उत्तेजको हेतुरिति व्यभिचारान्न प्रतिबन्धकाभावो हेतुः। प्रपञ्चस्तु **अद्वैतदीपिकायां** द्रष्टव्यः। तस्मान्न प्रतिबन्धकाभावः कारणमिति **सति पुष्कलकारणे कार्योत्पादविरोधि प्रतिबन्धकं** इति सुष्ठूक्तम्।

ननु मा भूत्तत्त्वज्ञानाभावः प्रतिबन्धकाभावत्वेन हेतुः, विवेकाग्रहत्वेन हेतुरस्त्विति चेत्, न—किमेतन्मते ज्ञानाभावातिरिक्तमज्ञानमेव नास्ति? उतास्ति? नाद्यः, तस्यानुपदमेव साधयिष्यमाणत्वात्। द्वितीये तु अधिष्ठानज्ञानस्य तद्विरोधितया तदभावस्य कार्येऽन्यथासिद्धिरेव। न चैवमज्ञानमपि नेदं रजतमिति विवेकग्रहस्याभावप्रयोजकतया अन्यथासिद्धमिति वाच्यम्। रज्ज्वज्ञाने सत्यपि नायं सर्प इति धीदर्शनेन तस्य तदभावाप्रयोजकत्वादिति भावः। **विरोधीति**। कार्यस्थितिविरोधितत्त्वज्ञानस्याभाव इत्यर्थः॥

उत्पन्नस्य हि स्थितये विरोध्यभावापेक्षा पूर्वं तूत्पत्तेः कारणापेक्षैवेति अज्ञानस्य कारणत्वमेव कल्पयितुमुचितमित्यभिप्रेत्याह—**न कार्यस्येति**। **न्यायसहिताविति**। अनपेक्षितविषयत्वकल्पनादपेक्षितविषयत्वकल्पनस्यो-

**ननु क्लृप्तं विषयेन्द्रियादिदोषः कारणं इति। सत्यम्। निमित्तं तु तत्। उपादानापेक्षायां अज्ञानमनुप्रविशति। सर्वं च कार्यं**

भा. चितत्वादिति न्यायसहितावित्यर्थः। कारणाकाङ्क्षाप्यन्यतः शान्तेत्याशङ्क्याह—**सत्यमिति। निमित्तं तु तदिति।** नोपादानमिति शेषः॥

ननु शुक्तिरजतं न सोपादानं भावविलक्षणत्वात् ध्वंसवत्। न चासिद्धिः। अनिर्वचनीयरजतस्य तद्रूपत्वात्। न चैवमभावान्यकार्यत्वात् घटवत् सोपादानमिति वाच्यम्। सोपादानत्वे लाघवेन भावकार्यत्वस्यैव तन्त्रत्वात्। किञ्च, रजतस्य सोपादानत्वे सकर्तृकत्वेन भवितव्यम्। न चेश्वरस्तत्कर्ता, घटादिवत्तस्य व्यावहारिकत्वप्रसङ्गात्। न च जीवः, तस्य तच्चिकीर्षाद्यजन्यत्वात्। अतो न शुक्तिरजतस्योपादानापेक्षेति; तत्राह—**उपादानेति।** घटादिवत् अनिर्वचनीयस्यापि रजतस्य घटादाविव पराभिमतं भावत्वमस्त्येव। घटादिवत् रजतमिति विधिरूपतयैव तस्य प्रतीतेः। आत्मन इव सद्रूपत्वं तु भावत्वं न घटादावपि। न वा तस्य सोपादानत्वप्रयोजकत्वम्, परमते ध्वंसस्यापि सत्कार्यत्वात्॥

न च सत्ताश्रयकार्यं सोपादानम्, बाधायोग्यत्वरूपसत्तायाः घटादावपि अभावात् परमते ध्वंसेऽपि सत्त्वाच्च। पारिभाषिकसत्ताजातौ प्रमाणाभावात्। अधिष्ठानसत्तादात्म्यादेव घटादेः सद्बुद्धिविषयत्वात्। तत्सत्त्वे वा शुक्तिरजतादिकमपि तदाश्रयोऽस्तु। नापि तस्मिन् कर्त्रनिरूपणम्, जीवेश्वरयोरुभयोरपि तत्कर्तृत्वसम्भवात्। ईश्वरकर्तृकत्वेऽपि दोषविशेषजन्यतया तत् प्रातिभासिकमेव। जीवस्यापि घटादिकर्तृत्वं तदनुकूलज्ञानवत्त्वमेव, न तु चिकीर्षादिमत्त्वम्। चिकीर्षादावेव तदभावप्रसङ्गात्। तथा च जानामीत्याद्यनुभवविरोधप्रसङ्गः। स्वप्नेऽपि 'स हि कर्ता' इति श्रुतिसिद्धजीवकर्तृकत्वाभावप्रसङ्गाच्च। ज्ञानं चानुकूलं शुक्तिरजतादावपि तस्य सुलभम्॥

अस्तु वा भावकार्यमपि रजतमकर्तृकम्। परमते ध्वंसस्य कार्यत्वेऽप्यकर्तृकत्वात्। तथा च रजतस्योपादानापेक्षायामन्यस्य तदयोगादन्वयव्यतिरेकाभ्यामनुमानाच्चाज्ञानमुपादानं सिध्यतीत्याह मज्ञानमेव ततः सिध्यतीति भावः।

**सोपादानम्, भावकार्यत्वात्, घटादिवत्, इत्यनुमानात्। क्रिया-गुणादेरपि साश्रयस्यैव उत्पत्तेः उत्पद्यमानाश्रयस्यैव उपादानत्वात्।**

---

ता. ननु प्रध्वंसवत् अनुपादानमपि जायतां इति; अत आह—**सर्वं च** इति। भावत्वे सति कार्यत्वात् सोपादानमेव इत्यर्थः। क्रियागुणादेः कार्यस्यापि उपादानं न दृश्यते, आश्रयेण सहैव उत्पद्यमानत्वदर्शनात् यौगपद्याच्च सव्येतर-गोविषाणयोरिव कार्यकारणभावानुपपत्तेः उपादानान्तराभ्युपगमे च तद्गतत्वेन घटादिगतत्वानुपपत्तेः अनुपादानत्वमेव तस्य इत्याशङ्क्य, आह—**क्रियेति**। उत्पद्यमानस्य घटादेः यः आश्रयः मृदादिः तस्यैव उपादानत्वादित्यर्थः। न च क्रियादेरुपादानान्तराभ्युपगमे घटादिनिष्ठत्वानुपपत्तिः, कार्यकारणयोरत्यन्तभेदा-भावेन मृदादिगतस्यैव तत्कार्यगतत्वादित्यर्थः। यद्वा, 'क्षणमगुणं तिष्ठति' इति न्यायेन पूर्वोत्पन्नं आश्रयद्रव्यमेव क्रियागुणादेरुपादानं इत्यर्थः। अस्मिन् पक्षेऽपि उत्पद्यमानस्य क्रियादेः यः आश्रयः घटादिः तस्यैव क्रियागुणादिकं प्रति

---

भा. —**सर्वमिति**। प्रातीतिकसत्ताकं सर्वं सोपादानम्, कार्यत्वात्, घटवत्। न च ध्वंसे व्यभिचारः। कार्यस्य सूक्ष्मरूपावस्थानव्यतिरिक्ताभावरूपध्वंसे प्रमाणा-भावात्। सूक्ष्मरूपं च विशिष्य निर्वक्तुमशक्यमपि असत उत्पत्त्यनुपपत्ते-रङ्गीकार्यम्। न चैवं घटो नष्ट इति प्रत्यक्षबुद्धिर्न स्यादिति वाच्यम्। इन्द्रिय-प्रत्यासत्त्यभावेनाभावमात्रस्याप्रत्यक्षत्वात्। कपालविशेषज्ञानं विना नष्ट इति बुद्ध्यदर्शनेन तस्यानुमेयत्वाच्च। अस्तु वा भावत्वे सतीति विशेषणमिति भावः॥

घटादिरूपपरिमाणादीनां तेन सहैवोत्पत्तेस्तदुपादानत्वायोगात् तत्र व्यभिचार इत्याशङ्क्य, सहोत्पत्तिरसिद्धेत्याह—**क्रियेति**। **साश्रयस्य**—स्वाश्रय-समवेतस्य। अथ वा, क्रियागुणादेराश्रयेण सहोत्पत्तावपि न निरुपादानत्वम्, उत्पद्यमानघटादेराश्रयस्यैव मृदादेस्तत्राप्युपादनत्वादित्यर्थः। न चात्र प्रमाणा-भावः, घटाद्युत्पत्त्यनन्तरमेव तदनुभवात्। न च तृतीयक्षण एव सोऽनुभूयत इति वाच्यम्। नियमेन तृतीयक्षणकल्पने प्रमाणाभावेन द्वितीयक्षणेऽपि तत्सम्भवात्। न चैवं गुणगुणिनोः सामग्रीभेदो न स्यादिति वाच्यम्।

**ननु आत्मा अन्तःकरणं वा भ्रान्तिज्ञानोपादानं भविष्यति। न–आत्मनः अपरिणामित्वात्। अन्तःकरणस्य च इन्द्रियसंयोगादिसापेक्षत्वात्। मिथ्यार्थे च प्रत्ययमात्रविपरिवर्तिनि तदयोगात्, अधिष्ठानज्ञानेन**

---

ता. उपादानत्वात् इति योजना। अर्थाध्यासं अनादृत्य ज्ञानाध्यासमेव अङ्गीकृत्य चोदयति—**ननु आत्मा** इति। आत्मनः अनुपादानत्वमाह—**न आत्मनः** इति। तर्हि अन्तःकरणं उपादानमस्तु इति; अत आह—**अन्तःकरणस्य च** इति। आदिशब्देन लिङ्गादि गृह्यते। अस्तु तर्हि इन्द्रियसंयोगादिसापेक्षत्व-मिति; अत आह—**मिथ्यार्थे च** इति। मिथ्यार्थस्य प्रत्ययमात्रशरीरत्वात् प्रत्ययात् प्राक् असिद्धेः तत्संयोगात् तद्विषयः प्रत्ययो जायते इति अयुक्तं इत्यर्थः। तर्हि कथं भ्रान्तिज्ञानस्य इन्द्रियान्वयव्यतिरेकादि इति; अत आह—**अधिष्ठाने**ति ॥

---

भा. तन्तुरूपादिघटिततत्सामग्र्याः पटादिसामग्रीतो भिन्नत्वात्। द्रव्यस्यैव रूपा-दीनां स्वासमवायिकारणसमानाधिकरणत्वानियमात् स्वसमवायिकारणा-वृत्तित्वसम्भवेन पटादिवृत्तित्वोपपत्तेश्च। न चातिप्रसङ्गः, स्वोपादानोपादान-काश्रयत्वस्यानुभवबलात् कल्प्यत्वात्। एवं घटस्योत्पत्तिकाले महत्त्वपरिमाणा-भावे अणुपरिमाणत्वप्रसङ्गः। तदभाववद्द्रव्यत्वमात्रस्यैव तद्व्याप्यत्वात्। तस्मात् पटादौ तद्रूपादावपि तन्त्वादिरेवोपादानमिति न कुत्रापि व्यभिचार इति भावः॥

एवं सामान्यतः शुक्तिरजतोपादानं प्रसाध्य, शुक्तिरजतमज्ञानोपादानकं तदितरानुपादानकत्वे सति सोपादानत्वात् यदेवं तदेवं यथा घटादिरिति परिशेषानुमानमभिप्रेत्य, विशेषणासिद्धिमाशङ्क्य, परिहरति—**न आत्मन इत्यादिना**। (सर्वसंमतस्या)सर्वगस्याप्यात्मनो निरवयवस्य स्वतस्सावयव-रजताद्यात्मना, [ज्ञान]निमित्तसंयोगाभावेन ज्ञानरूपेण च परिणामायोगादित्यर्थः। ननु **इन्द्रियसं(प्र)योगे**ति। अन्यथा अन्धादेरपि रजतभ्रमः स्यादित्यर्थः। ननु इदमंशसम्प्रयुक्तचक्षुस्सहकृतमन्तःकरणं रजताकारेण परिणमतामित्याशङ्क्य, भ्रमविषयस्य प्रातिभासिकस्य तज्ज्ञानं विना स्थित्यनुपपत्तेः तज्ज्ञानं वाच्यम्।

**अन्यथासिद्धत्वाच्च तदन्वयव्यतिरेकयोः । अन्तःकरणस्य च जडत्वात् अज्ञातृत्वात् । आत्मनः अभ्रान्तत्वप्रसङ्गाच्च । तस्मात् मिथ्यार्थतज्ज्ञाना-**

---

ता. ननु अधिष्ठानसंप्रयोगादेव भ्रान्तिज्ञानजन्मसंभवात् न मिथ्यार्थसंप्रयोगापेक्षा इति चेत्, मैवम्—तत्संयोगाभावे तत्प्रतीत्यनुपपत्तेः । न च संस्कारोपनीततया 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञायां तत्तांशवत् तत्प्रतीतिः, तद्वदेव अभ्रान्तत्वापत्तेः । न च संसर्गांशस्य असत्त्वात् भ्रान्तित्वम्, तर्हि तस्य असत्त्वेन संप्रयोगायोग्यतया अपरोक्षत्वाभावप्रसंगात् इति भावः ॥

दूषणान्तरमाह—**अन्तःकरणस्य च** इति । अज्ञातृत्वे हेतुः **जडत्वात्** इति । युक्त्यन्तरमाह—**आत्मन** इति । भ्रान्तिसम्यग्दर्शनबन्धनिवृत्तीनां एकाश्रयत्वनियमात् अन्तःकरणस्य भ्रान्तत्वे तस्यैव एतानि स्युः, न आत्मनः इत्यर्थः । परिशेषात् अज्ञानमेव अध्यासस्य कारणं लभ्यत इति उक्तयुक्तीः अनुवदन् उपसंहारव्याजेन आह—**तस्मात्** इति । उभयोरपि भ्रान्तिज्ञानतदर्थयोः

---

भा. तत्र च नान्तःकरणमुपादानम् । केवलस्य तस्य बहिरप्रवृत्तेः । न च तत्र बाह्येन्द्रियसंयोगः सम्भवतीत्याह—**मिथ्येति** । भ्रान्तेरन्तःकरणपरिणामत्वे तदेव तदाश्रयो वाच्यम्, न च तदुपपद्यत इत्याह—**अन्तःकरणस्येति** ॥

ननु परमते मा भूद्रजतस्यान्तःकरणमुपादानम्, सिद्धान्ते तत्तथा किं न स्यात्, नापि प्रतीत्यनुपपत्तिः, साक्षिणः सत्त्वादिति चेत्, न—सिद्धान्ते अन्तःकरणस्याज्ञानकार्यतया तदुपादानतया क्लृप्ताज्ञानस्यैव तत्रान्वयव्यतिरेकाभ्यां उपादानत्वकल्पनात् ॥

अथ वा, उपादानापेक्षायामेतत् सद्विलक्षणकार्यत्वाद्रजते नोपादानापेक्षा इत्युक्तविधया आशङ्क्य, घटादिसाधारण्येन रजतस्यापि तदस्तीत्युक्तं **सर्वं च कार्यमित्यत्र** । ननु भवत्वर्थाध्यासे अज्ञानमुपादानम्, ज्ञानाध्यासे तु आत्मादिकमुपादानं किं न स्यादित्याशङ्क्य परिहरति—**नात्मन इत्यादिना** ॥

ननु अज्ञानमपि नोपादानं भवति, यद्धि यदनुविद्धतया प्रतीयते तत्तस्योपादानम्, न चाज्ञानं रजतानुविद्धतया प्रतीयते, शुक्तिशकलादि वा किमित्युपादानं न स्यादित्याशङ्कामुपसंहारव्याजेन निराकरोति—**तस्मादिति** ।

त्मकं मिथ्याभूतं अध्यासं उपादानकारणसापेक्षं प्रति अनाश्रयस्थानतया काचादिनिमित्तकारणेषु भिद्यमानेषु मिथ्याभूतस्यैव सर्वकार्यस्वभावानुकूलस्य सर्वत्र अनुगमात् अज्ञानस्य आत्माश्रयतया भ्रान्तिज्ञानाश्रय-

ता. मिथ्यात्वात् मिथ्याभूतस्यैव अज्ञानस्य उपादानत्वं युक्तं इत्यभिप्रेत्य आह—**मिथ्यार्थे**ति। ज्ञानस्यापि सत्यत्वं निवारयति—**मिथ्याभूतं** इति। 'सर्वं कार्यं सोपादानम्' इत्युक्तं स्मारयति—**उपादाने**ति। दोषादीनां उपादानत्वशङ्कां निवारयति—**अनाश्रये**ति। भ्रान्तिज्ञानस्य य आश्रयः तत्स्थमेव तदुपादानं वक्तव्यम्, तच्च निमित्तकारणेषु काचादिषु नियतं न भवति इत्यर्थः। **भिद्यमानेषु** इति एकस्यैव उपादानत्वं लाघवात् युक्तं न तु बहूनां इति दर्शयितुं उक्तम्। यद्वा, **भिद्यमानेषु** इति अध्यासं प्रति उपादानकारणभावात् वैलक्षण्यं आपद्यमानेषु इति योजना। उक्तं दूषणजातं अज्ञाने नास्ति इत्याह—**मिथ्ये**ति॥

ननु रजताध्यासः शुक्तिकागतः प्रतीयते न अज्ञानाश्रयात्मगत इति; तत्राह—**आत्मे**ति। ननु देशोऽपि तादृशः' 'को वा ब्रूते न अन्तः इति। (पञ्च-57) इत्यत्र एतत् उपपादयिष्यते इत्यर्थः॥

भा. इदंत्वाकारेणानुगतस्य भ्रमानुगततया प्रतीयमानस्यापि न शुक्तीदमंशस्योपादानत्वम्, सत्यस्य मिथ्यावस्तुपरिणामित्वानुपपत्तेः। रजतं च बाधबलान्मिथ्येति सिद्धम्। न च सिद्धान्ते आत्मैव सत्यमपि किमित्युपादानं न स्यादिति वाच्यम्, परिणामस्य परिणामिसमानसत्ताकत्वनियमात्। आत्मा त्वधिष्ठानतयोपादानम्, अधिष्ठानं चारोप्यात्यन्ताभाववदिति नियमेन तयोरसमानसत्ताकत्वस्यैव वक्तव्यत्वादित्यभिप्रेत्याह—**मिथ्याभूतमि**ति॥

काचादेरनुपादानत्वे हेत्वन्तरमप्याह—**अनाश्रये**ति। अनाश्रयत्वादननुगतत्वाच्चेत्यर्थः। **आत्माश्रयतया**—शुक्तीदमंशावच्छिन्नचैतन्याश्रयतया। **ज्ञाने**त्यर्थस्याप्युपलक्षणम्। न च रजते अज्ञानाश्रयत्वं न प्रतीयत इति वाच्यम्। सामान्ये विशेषस्य कल्पितत्वेन रजतानुगतरजतत्वादेरेव अज्ञानस्वरूपत्वात्। न च रजतत्वादिकं जातिरेव, एवं जडत्वादिकमपि ज्ञानान्यत्वादिकमिति किं तत्राज्ञानमिति वाच्यम्। रजतत्वं हि अनादिवृद्धव्यवहारनिमित्ततया अनाद्यपि न नित्यम्, येनाज्ञानादन्यत् स्यात्। सर्वमुक्तिकाले तत्सत्त्वे कस्यचित् प्रमाणस्य

**कोटिनिक्षिप्तत्वाच्च मिथ्याज्ञानमेव अध्यासोपादानम्, न आत्मान्तःकरणकाचादिदोषाः इति सूक्तम्। *आत्माश्रयाध्यासस्य शुक्तिकासंसर्गो विभ्रम इति वक्ष्यते। एकस्यैव अध्यासस्य नैसर्गिकत्वं नैमित्तिकत्वं च विरुद्धं इति चोदयति**—कथं पुनः इति ॥ 27 . 1

---

भा. अभावात्। न हि तदनन्तरमपि तद्व्यवहारोऽस्ति। न चानादिभावत्वेन तन्नित्यत्वमनुमेयम्, तस्य तत्राप्रयोजकत्वादिति वक्ष्यमाणत्वात्। तस्मान्न रजतत्वादिकं पराभिमता जातिः। किन्तु अनादिज्ञाननिवर्त्याज्ञानमेव उपादानतया तत्तत्कार्यविशेषानुगतं घटत्वपटत्वाद्यात्मना व्यवह्रियते। एवं च नानन्तजातिकल्पनागौरवमपि ॥

न चैवं घटेऽपि पटबुद्धिप्रसङ्गः, पटप्रत्यक्षस्य तद्व्यक्तिजन्यत्वात् घटस्य च ततोऽन्यत्वात्। न च घटपदशक्यस्य घटत्वस्य पटेऽपि वृत्तौ सोऽपि घटपदात् प्रतीयेतेति वाच्यम्। सर्वा सर्वगता जातिरिति पक्षेऽपि तद्दोषस्य तुल्यत्वात्। न च तत्र व्यक्तिविशेष एव तत्तादात्म्यं नान्यत्रेति वाच्यम्। सिद्धान्तेऽपि व्यक्तिविशेषतादाम्यावच्छिन्नाज्ञानस्यैव घटत्वादिव्यवहारविषयत्वात्। घटे घटत्वमिति धीश्चेत् विद्यते तस्य तदधिकरणत्वांशे सा भ्रान्तिरेव। तस्याः तदभिन्ने तदधिकरणत्वविषयत्वात्। अतिरिक्तजातौ प्रमाणाभावेन तत्प्रमात्वानुपपत्तेः ॥

किञ्च, अनुगतं कारणमुपादानमित्येव, नानुगततया प्रतीयमानम्। द्व्यणुकादेः त्र्यणुकादौ प्रकृतेश्च घटादावप्रतीतेः। अनुगतिमात्रं चाज्ञानेऽप्यस्तीति भावः। ननु आत्माश्रयाज्ञानकार्यत्वे रजतस्याज्ञानमात्मा चाश्रयः स्यात् न त्विदमंशः, प्रतीयते चेदं रजतमिति, तत्राह—**आत्माश्रयेति। विभ्रम इति** सप्तमी। **वक्ष्यत इति**। (पञ्च 28.3)अतस्तत्र **रूपान्तरे**त्यत्रेत्यर्थः। तस्मादज्ञानं शुक्तिरजतादेः उपादानमित्यहङ्कारादेरपि तदेवानुमीयत इति भावः॥

ननु **एषेति** अविद्यायां प्रत्यक्षं प्रमाणं सूचितम्, तदनुपपन्नम्—न तावदहमज्ञ इत्यनुभवस्तत्र प्रमाणम्, अहङ्कारस्य भावरूपाज्ञानानाश्रयत्वेन तस्य तदाश्रयज्ञानाभावविषयत्वात्। अन्यथा तत्प्रामाण्यानुपपत्तेः। अत एव

---

 * अस्य ग्रन्थस्य तात्पर्यदीपिका 72 पृष्ठे द्रष्टव्या ॥

तत्र प्रथमं तावत् अध्यासप्रवाहजन्मना उपादानकारणरूपेण नैसर्गिकत्वं कार्यव्यक्तिरूपेण नैमित्तिकत्वं इति अविरोधं दर्शयितुं
27 - 2 आत्मनि भावरूपमज्ञानं साधयति—अवश्यमेषा अविद्याशक्तिः इति। 'अवश्यं' इति 'एषा' इति च प्रमाणद्वयवत्तामाह। प्रत्यक्षं तावत् अहमज्ञः मामन्यं च न जानामि इत्यपरोक्षावभासदर्शनात्। ननु ज्ञानाभावविषयः अयमवभासः? न—अपरोक्षावभासत्वात् 'अहं सुखी' इतिवत्। अभावस्य च षष्ठप्रमाण(गोचर)त्वात्। प्रत्यक्षाभाववादिनोऽपि न आत्मनि ज्ञानाभावावगमः सम्भवति। 'मयि ज्ञानं नास्ति' इति प्रतिपत्तौ आत्मनि धर्मिणि प्रतियोगिनि च अर्थे अवगते तत्र ज्ञानसद्भावात् ज्ञानाभाव-

---

ता. ननु आक्षेपस्य परिहारं अनुक्त्वा अप्रस्तुतं कस्मादुच्यते इत्याशङ्क्य; अत आह—**तत्र प्रथमं** इति। कारणस्य अनादित्वे कार्यस्य किमायातं इति; अत आह—**अध्यासप्रवाहजन्मना** इति। अध्यासस्य प्रवाहेण जन्म यस्मात् कारणात् तत् तथोक्तम्, तेन रूपेण—सर्वकार्यानुगतेन कारणरूपेण नैसर्गिकत्वमिति भावः। **एषा** इत्यपरोक्षत्वद्योतकेन पदेन **अवश्यं** इति च युक्त्युपेतत्वप्रकाशकेन शब्देन प्रमाणद्वयसत्त्वमुक्तं इत्याह—**अवश्यं** इति। **षष्ठप्रमाणत्वात्**, षष्ठप्रमाणकत्वात् इति यावत्॥

ननु अयं प्रतिभासो ज्ञानाभावविषयतयापि उपपद्यते तार्किकमते प्रत्यक्षत्वादभावस्य इत्याशङ्क्य, आह—**प्रत्यक्षे**ति। कुतो न संभवतीति; अत आह—**मयि** इति। यत्र हेतुसद्भावेऽपि कार्यस्यानुदयः तत्र किमु वक्तव्यं हेत्व-

---

भा. 'त्वदुक्तमर्थं न जानामि' इत्यनुभवोऽपि न तत्र प्रमाणम्। परोक्षज्ञानस्य भावरूपाज्ञानानिवर्तकत्त्वेन तत्सत्वेऽपि तथा अनुभवप्रसङ्गाच्च। मयि ज्ञानं नास्तीति ज्ञानाभावविषयात् अहमज्ञ इत्याद्यनुभवस्य विशेषणविशेष्यभावव्यत्यय-व्यतिरेकेण विषयभेदाननुभवाच्चेत्याशङ्क्याह—**प्रत्यक्षं तावदिति**। भाट्टं प्रत्याह—**अपरोक्षेति**॥

**ज्ञानाभावप्रतीत्ययोगादिति**। अहमज्ञ इति तावत् सर्वानुभवसिद्धं प्रत्यक्षम्। तत्र च ज्ञानसामान्यविरोधिपदार्थोऽनुभूयते अरूपो वायुरिति यथा।

**प्रतिपत्त्य(प्रतीत्य)योगात् । अनवगतेऽपि धर्म्यादौ सुतरां अभावानवगमात् । षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेऽपि ज्ञानाभावे आत्मादौ अवगते अनवगतेऽपि आत्मनि ज्ञानाभावप्रतिपत्त्ययोगात् ॥**

ता. भावे कार्यं नोदेति इति, इत्यभिप्रेत्य उक्तं **सुतरां** इति । तार्किकमते दर्शितं दूषणं भट्टमतेऽपि अतिदिशति—**षष्ठेति** ॥

भा. न च अयमनुभव एव न भवतीति वाच्यम् । अनुभवमपलपतः कथानर्हत्वात् । सर्वत्र ममायमनुभवो नास्तीत्यपलापस्य सुकरत्वात् । अज्ञानमिति शब्दस्य ज्ञानसामान्यविरोधिवाचिनोऽसति बाधके निर्विषयत्वप्रसङ्गाच्च । न च ज्ञानप्रतियोगिकाभावमात्रं [ज्ञान] सामान्यविरोधीति वाच्यम् । ज्ञानत्वस्य प्रतियोगितावच्छेदकत्वानुभवेन तदनुपपत्तेः । तस्य चानुपस्थितस्य संसर्गमर्यादया प्रतीत्युपपत्तेः । तस्य बाधके सत्येव त्याज्यत्वात् । अन्यथा काप्यवच्छेदकत्वं न सिद्ध्येत ॥

किञ्च, इदं रजतं न भवतीति वाक्यादपि संशयविरोधिज्ञानाभावप्रसङ्गः । न च तत्रापि रजतत्वाधिकरणनिखिलरजताभाव एव शब्दार्थ इति वाच्यम् । तस्य असंसर्गस्यापदार्थस्य निखिलत्वस्याशब्दार्थत्वात् । सामान्यपदबलात्तत्सिद्धौ प्रकृतेऽपि तदबाधितमेव । त्वन्मतानुसारेण तस्य बाधकल्पने सर्वत्रानिर्णीतप्रतिवादिमतेन बाधकः सुलभ इति न किञ्चित् सिध्येत् । किञ्च, अवच्छेदकत्वमपि तव नेतरावृत्तित्वघटितम् , तदितरावृत्तित्वस्य घटत्वावच्छिन्नप्रतियोगिताधिकरणमात्रवृत्तिषु कम्बुग्रीवादिमत्त्वादिषु तदनवच्छेदकेष्वपि सत्त्वात् तदितरावृत्तित्वज्ञानार्थमपि तदितरज्ञानप्रसङ्गेन तस्य ज्ञातुमशक्यत्वाच्चेति स्वरूपविशेष एवावच्छेदकत्वम् । तस्य च लघुशरीरस्य संसर्गमर्यादया शाब्दधीः सुलभैव ॥

न च यत्किञ्चिज्ज्ञानकालेऽपि तथानुभवान्न तस्य ज्ञानसामान्यविरोधिविषयत्वमिति वाच्यम्, अज्ञानमित्यनुभवस्य तथाभूतार्थविषयत्वस्यैव वक्तव्यत्वात् अनुभवानुसार्यर्थसम्भवे तस्य तदविषयत्वकल्पनायोगात् । स चेदभावः वायौ रूपाभाव इव ज्ञानसामान्याभावो वा यावद्विशेषाभावो वा वाच्यः । न

**इह च 'त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामि' इति विषयव्यावृत्तमज्ञानमनुभूय तच्छ्रवणादौ प्रवर्तते ॥**

---

ता. ननु धर्म्यादिप्रतिपत्तौ अनुभव एव नास्तीति; अत आह—**इह च** इति। अर्थे ज्ञातेऽपि तत्संख्याया अज्ञातत्वात् न जानामि इत्युक्तिः न विरुद्धा इति; अत आह—**संख्यां** इति। यत्संख्याविषयः प्रश्नः तत्संख्यायाः संख्यान्तराभावात् संख्यां न जानामि इत्युक्तिः अनुपपन्ना स्यात् इत्यर्थः। परोक्षतया ज्ञातेऽप्यपरोक्षतया ज्ञानाभावाभिप्रायेण न जानामि इत्युक्तिरिति; अत आह—**शास्त्रार्थं** इति। स्वर्गापूर्वदेवतादीनां नित्यपरोक्षत्वेन अपरोक्षत्व-

---

भा. च तदुपपद्यते। अभावज्ञानस्य तद्धेतुधर्म्यादिज्ञानस्य च तदा सत्त्वेन तत्सत्त्व-तदनुभवयोरसम्भवात्। ज्ञानस्य स्वसत्तायां प्रकाशाव्यभिचारात् परमते तदनुभवसामग्र्यवश्यम्भावात् ॥

किञ्च, निखिलज्ञानप्रागभावप्रध्वंसा एकत्र न सङ्गच्छन्ते। अत्यन्ताभावस्तु न परमते आत्मनि सम्भवति। भावरूपाज्ञानं तु सर्ववृत्त्यधिष्ठानतया तत्र ज्ञानबुद्धिप्रयोजकज्ञानत्वसामान्यभूतचैतन्यनिवर्त्यम्, चैतन्यं चैकमेवेति ज्ञानसामान्यविरोधीति स एव तस्य विषयः। तस्य चाहङ्कारसमानाश्रयत्वात् स्थूलो गच्छतीतिवदहमज्ञ इत्यनुभव इति भावः ॥

एवं ज्ञानसामान्यविरुद्धं अहमज्ञ इत्यनुभवसिद्धं अज्ञानं भावरूपमेवेत्युक्त्वा, विशेषाज्ञानमपि भावरूपमेवेत्याह—**इह चेति**। त्वदुक्तमर्थं न जानामि इति अर्थेन सहैवाज्ञानानुभवात् कथं तज्ज्ञानाभावः स्यात्। न च तत्सङ्ख्याविशेषज्ञानाभाव एवाज्ञानं तच्च तत्राप्यस्तीति वाच्यम्। न जानामीत्यनुभवस्य नियमेन तद्विषयत्वे सङ्ख्यां न जानामीत्यननुभवप्रसङ्गात्। तत्र सङ्ख्याभावात्। न च तत्रान्यदेव विषय इति वाच्यम्। एकाकारानुभवस्य नानाविषयत्वानुपपत्तेः। न च सर्वत्रापरोक्षज्ञानाभाव एवाज्ञानमिति वाच्यम्। धर्मं न जानामीत्यननुभवप्रसङ्गात्। तद्विषयापरोक्षज्ञानस्यासत्त्वेन तदभावासम्भवात् ॥

ननु यस्यार्थस्य यः असाधारणो धर्मस्तद्विषयज्ञानाभाव एव तदज्ञानमिति चेत्, न—घटं न जानामीति घटत्वविशिष्टज्ञानेन सहैवाज्ञानस्यानुभवात्।

संभावनाया अप्यभावात् तदभिप्रायेण न जानामि इत्युक्तिः न संभवति इत्यर्थः। ज्ञाते एव वैयात्यात् न जानामि इत्युक्तिः इति शङ्कां परिहरति— तच्छ्रवणादौ इति ॥ ता.

---

भा. तद्व्यवस्थापकासाधारणधर्मविशेषस्य ज्ञानं तत्रापि नास्तीति चेत, न—विशिष्य इदं न जानामीति ज्ञाने तद्विशेषस्याप्यनुभूयमानत्वात्। न च वस्तुतो यस्य यो विशेषस्तत्प्रकारकज्ञानाभाव एवाज्ञानं स च तत्राप्यस्तीति वाच्यम्। तस्यापि चन्द्रादौ सत्त्वात् तत्प्रकारकनिखिलज्ञानानामात्मन्यसम्भवेन तन्निखिलज्ञान-प्रागभावानां कदाप्यसम्भवाच्च। यत्किञ्चिद्विशेषज्ञानप्रागभावस्तु निर्णितेऽप्यस्तीति तदापि न जानामीत्यनुभवसंशयादिप्रसङ्गः। न च तत्र ज्ञानान्तरस्य ज्ञानमेव तत्प्रतिबन्धकं तत्संशयोऽपि ज्ञानान्तरादेव भवतीति वाच्यम्। अधिकरणे प्रतियोग्यतिरिक्तज्ञानोपलम्भस्याभावज्ञानाप्रतिबन्धकत्वात्, य(दज्ञा)ज्ज्ञानस्य प्राक् संशयप्रयोजकता तत्सत्त्वे तत्संशयानिवारणाच्च। तव विशेषादर्शनविरहरूप-विशेषदर्शनस्यैव तद्विरोधित्वात् ॥

किञ्च, यस्मिन् कदापि न विशेषज्ञानम्, अथ च न जानामीत्यनुभूयते तत्र कथमज्ञानम्, प्रतियोग्यसत्त्वेन तत्प्रागभावासम्भवात्। न च स्वस्यैव समयान्तरे युक्तावस्थायां तज्ज्ञानमस्तीति वाच्यम्, जीवेषु तदवस्थानियमे प्रमाणाभावात् तदा विनष्टस्य तस्य प्रत्यक्षासम्भवाच्च। तद्व्याप्यलिङ्गाद्यनुसन्धाना-सम्भवेन तदनुमित्यादेरप्ययोगात्। पुरुषान्तरे प्रसिद्धस्य तस्यात्यन्ताभावस्तु त्वदभिमतेश्वरेऽपि वर्तत इति सोऽप्यज्ञः स्यात्। ततच तत्र भावरूपाज्ञानमेव अज्ञानानुभवविषय इति क्लृप्तत्वादन्यत्रापि तदेवाज्ञानम् ॥

न च भावरूपाज्ञानवादेऽपि सकृत् ज्ञातेऽपि त्वदुक्तमर्थं न जानामीत्यनु-भवप्रसङ्गः अज्ञानान्तरस्य सत्त्वात् अन्यथा तत्र समयान्तरेऽपि भ्रमाभावप्रसङ्गा-दिति वाच्यम्, तत्तद्देशादिविशिष्टस्वरूपविषयाज्ञानसम्भवेऽपि स्वरूपावरणा-ज्ञानासंभवात्। अन्यथा प्रथममिव तदाप्युपदेशापेक्षाप्रसंगात्। तस्योप-देशाधीनप्रत्यक्षनिवर्त्यत्वात्। यस्य तु स्वरूपावरणमज्ञानान्तरमप्यस्ति तेन तन्न जानामीत्यनुभूयत एव। तदेवात्यन्तविस्मरणं नाम। देशादिविशिष्टस्वरूपा-

भा. वरणाज्ञानसत्त्वादेव समयान्तरे भ्रम उपपद्यते । अत एव सकृदज्ञाते इदानीं कुत्रेति न जानामीत्यनुभवः, न तु प्रागिव तन्न जानामीति ॥

किञ्च, प्रागभाव एव नास्ति, तन्मात्रे प्रमाणाभावात् । न तावदुत्पन्नमात्रतन्तुषु पटो नास्तीति बुद्धिः तत्र प्रमाणम्, पटत्वावच्छिन्नप्रतियोगिकाभावविषयिण्यास्तस्याः प्रागभावाविषयत्वात् । न ह्यत्यन्ताभाव इव प्रागभावोऽपि कश्चित् सामान्याभावोऽस्ति, यावद्विशेषात्मकपटादिसामान्यरूपकार्याभावात् । पटादिविशेषकार्यस्य विशेषप्रागभावकार्यत्वात् । अन्यथा प्रागभावस्य प्रतियोगिजनकमात्रविनाश्यत्वेन एकविशेषजनकेनापि सामान्यप्रागभावस्य विनाशप्रसङ्गात् । न हि प्रतियोग्यजनकः कश्चित् प्रागभावोऽस्ति । यावद्विशेषाभाववत्येव सामान्याभाव इति नियमेन विशेषप्रागभावानामेकत्रासम्भवादपि न सामान्यप्रागभावः । अतस्तत्र पटो नास्तीति बुद्धिर्भूतले पटो नास्तीति बुद्धिवन्न प्रागभावविषया । सम्भवति च परमते प्रतियोगिदेशे समयविशेषे तदत्यन्ताभावः । भविष्यतीति बुद्धिरपि घटादेस्तत्कालासत्त्वे सत्युत्तरकालसम्बन्धमेव विषयीकरोति, न तु पराभिमतप्रागभावप्रतियोगित्वम् । गन्धाधारसमयानाधाराभावत्वस्य प्रतियोगिजनकाभावत्वस्य वा तद्बुद्धिविषयत्वायोगात् । तत्समयासत्त्वं च प्रागभावं विनापि सिध्यति । अन्यथा अयं पाकानन्तरं रक्तो भविष्यतीति बुद्ध्या घटे रक्ततास्तित्वसंशयो न निवर्तेत । भविष्यतीति बुद्धेः परस्य रक्ततास्तित्वाविषयत्वात्तदस्तित्वाप्रकारकत्वाच्च ॥

न च प्रागभावेन तदनुमीयते । प्रागभावाश्रयस्य तत्प्रतियोग्युपादानत्वयोग्यत्वेऽपि तदुपादानत्वनियमाभावात् । न च प्रागभावस्य प्रतियोगिजनकत्वनियमात्तदनुमितिरिति वाच्यम् । उपादानान्तरमादायापि तस्य तदुपपत्तेः । न च अनुत्पादितपटेषु तन्तुषु पटप्रागभावे प्रमाणाभावः । पटो भविष्यतीति बुद्धेः त्वदभिमतप्रागभावविषयत्वेन बाधकाभावेन तत्प्रमाणत्वात् ॥

किञ्च, एवं पाकानन्तरं अयं रक्तो भविष्यतीति बुद्धिर्न स्यात् । घटस्य तदा प्रागभावाभावात् । विशिष्टस्य परमते अनन्यत्वात् । घटो रक्तो भविष्यतीति बुद्धेः विशिष्टघटभविष्यत्ताविषयिण्याः रूपमात्रप्रागभावप्रतियोगित्वविषयत्वानुपपत्तेश्च । विशिष्टस्य घटस्य तदा असत्त्वं परस्यापि प्रागभावं विनैव सम्प्रतिपन्नम् ॥

न च प्राक्काल इति व्यवहार एव प्रागभावे मानं प्रागभाव-विशिष्टकालस्यैव प्राक्कालत्वादिति वाच्यम्। घटप्रागभावः तत्प्राक्काले वर्तत इति व्यवहाराभावप्रसङ्गात्। प्रागभावस्य प्राक्कालावृत्तित्वे अकारणत्वप्रसङ्गाच्च। कस्तर्हि प्राक्काल इति चेत्, प्रतियोगितद्ध्वंसानाधारकाल एवेति गृहाण। ध्वंसश्च कादाचित्काभाव इति न तदर्थोऽपि प्रागभावोऽपेक्ष्यते। नापि इदं मा भूदिति कामनाविषयतया प्रागभावसिद्धिः। तस्या(प्य)साध्यत्वात्। प्रतियोगिजनकविघटनेन तत्सम्बन्धस्येवात्यन्ताभावस्यापि सम्बन्धस्य साध्यत्वात्॥ भा.

ननु उत्पन्नस्य पुनरुत्पत्त्यभावात्तदा सामग्र्यभावो वाच्यः, सामग्रीविरहश्च प्रागभावविरहादेव, अन्यकारणानां तदापि सत्त्वादिति प्रागभावसिद्धिरिति चेत्, न—अत्यन्ताभावेनापि तदुपपत्तेः, उत्पन्नस्यैव स्वोत्पत्तिप्रतिबन्धकत्वाच्च। किञ्च, सामग्री कार्यसत्त्वे प्रयोजिका, न तु तस्याद्यसमयसम्बन्धरूपोत्पत्तौ। आद्यसमयसम्बन्धो हि स्वसमानकालिकपदार्थप्रतियोगिकध्वंसानाधारसमयाधारत्वम्। तत्र सामग्री कार्यस्य समयाधारत्वांशे प्रयोजिका, न तु समयस्य स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारत्वांशे। तस्यान्यत एव सिद्धत्वात्। नापि पाकस्थले रूपरसादिवैचित्र्यार्थं प्रागभावः कारणं वक्तव्यमिति तत्सिद्धिः। अग्निसंयोगभेदात् पूर्वरूपादिध्वंसभेदाद्वा तदुपपत्तेः। प्रतियोगिभेदं विना प्रागभावभेदानुपपत्तेश्च। न च उपादानत्वव्यवस्थापकतया प्रागभावः स्वीकर्तव्य इति वाच्यम्। तन्तुत्वादिनैव तद्व्यवस्थासिद्धेः। अन्यथा प्रागभावस्यैव प्रतिसम्बन्धिविशेषः कुतः स्यात्॥

किञ्च, प्रागभावाङ्गीकारे मुमुक्षोर्ब्रह्महत्याद्यनुष्ठानप्रसङ्गः। तेन विना निरतिशयदुःखप्रागभावस्य स्वप्रतियोगिजनकत्वायोगात्। न वा प्रतियोग्युत्पादनं विना प्रागभावो नश्यति। प्रतियोगिन एव तन्नाशत्वात्। नापि प्रागभावस्य नाशादृते(तत्)[तदसमानकालीनत्वं]सिद्ध्यति। न वा मोक्षः। दुःखप्रागभावासमानकालीनस्य दुःखध्वंसस्य सुखस्य वा मोक्षत्वात्। न च निरतिशयदुःखप्रागभावोऽपि सञ्चितं पापान्तरमासाद्य प्रतियोगिनमुत्पादयतीति वाच्यम्। तस्य स्वप्रतियोगिमात्रजनकत्वात्। निरतिशयदुःखे च पापान्तरस्याजनकत्वात्।

भा. सुख इव दुःखे च वैजात्यस्य सर्वप्रसिद्धत्वात् । ब्रह्महत्याजन्यदुःखे च वैजात्याभावे अनुभूतमेव दुःखं तज्जातीयं वा तत्फलमिति बुद्ध्या बह्वायाससाध्ये प्रायश्चित्ते कोऽपि न प्रवर्तेत। प्रागभावस्य च यत्किञ्चित्प्रतियोगिजनकत्वे उत्पन्नस्यैवोत्पत्त्यापत्तिस्तवैव वज्रलेपायते, तदाश्रये प्रागभावान्तरस्य सत्वात् । तस्माच्चीर्णप्रायश्चित्तस्य परमते मुमुक्षोः ब्रह्महत्यादिप्रवृत्तिर्वाच्या इति महत् सङ्कटं परस्य ॥

दुःखप्रागभावानां परिमितत्वे तत्त्वज्ञानं विनापि तत्क्षयसंभवात् तदर्थं प्रयासो व्यर्थस्स्यात्। अपरिमितत्वे ज्ञानेनापि न मोक्षः। न च ज्ञानसामर्थ्यादेव प्रागभावविरह इति वाच्यम् । प्रतियोगिजननं विना ज्ञानसहस्रेणापि तद्विरहासम्भवात् । न च ज्ञाने सति समाहृत्य भोगान् भुञ्जानस्य प्रागभावक्षय इति वाच्यम् । इयत्तारहितानां कोटिजन्मनापि क्षयासम्भवात् । लक्षादिसंख्यापरिमितत्वे च शास्त्रात्प्रागपि तत्क्षयसम्भवात् । एतेन तत्त्वज्ञानासम्भवे मिथ्याज्ञानिनः पुण्यपापसम्भवान्न दुःखविच्छेद इति निरस्तम्। तद्वतोऽपि प्रागभावाभावे दुःखासम्भवात्। मिथ्याज्ञानपुण्यापुण्यप्रागभावाभावे तत्त्वज्ञानविधुरस्यापि भ्रान्त्याद्यसम्भवेन तत्त्वज्ञानवैयर्थ्यदोषतादवस्थ्यात् ।

किञ्च, प्रागभावस्य ज्ञानमपि न सङ्गच्छते । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं ह्यभावज्ञाने कारणम् । न हि प्रागभावप्रतियोगिता घटत्वादिना अवच्छिद्यते, किन्तु तत्तद्धटत्वादिना। न च तेन रूपेण जनिष्यमाणघटादिकं पूर्वमधिगन्तुं शक्यते। तदुत्पत्त्यनन्तरं तु प्रागभावाभावान्न तस्य प्रत्यक्षता । न जानामीत्य[ज्ञान]ज्ञानं च प्रत्यक्षमिति न तत् प्रागभावविषयम्। यत्तु ज्ञानत्वसामान्याकारेण ज्ञानज्ञानमेव ज्ञानप्रागभावज्ञाने कारणमिति, तन्न—अन्यत्राभावज्ञाने क्लृप्तकारणं प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं विना कार्यानुपपत्तेः । पक्षादन्यत्रैवायं नियम इत्यभिधाने च सर्वोऽपि नियम उच्छिद्येत ॥

न च अभावज्ञानं प्रतियोग्यंशे यत्प्रकारकं तत्प्रकारकमेव प्रतियोगिज्ञानं सर्वत्र कारणमिति वाच्यम् । प्रतियोगिनि प्रकारीभूतस्य धर्मस्य तत्त्वावच्छेदकत्वानियमे प्रतीतिबलेन सामान्याभावस्यासिद्धिप्रसङ्गात्, तद-

**भावरूपाज्ञानप्रत्यक्षवादे तु सत्यपि आश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि न अनुपपत्तिः नियन्तुं शक्यते ।**

---

ता. ननु भावरूपाज्ञानवादिमतेऽपि ज्ञाननिवर्त्यत्वादज्ञानस्य सति धर्म्यादिज्ञाने कथं अज्ञानसद्भावः इति ; अत आह—**भावरूपे**ति। यथा भावे सति

---

भा. न्यस्य तन्मानस्याभावात् अन्यधर्मनिरूपितस्याभावस्यान्यधर्मावच्छिन्नप्रतियोगिताकत्वे घटो नास्तीति प्रतीयमानस्यान्याभावत्वप्रसङ्गाच्च ॥

किञ्चैवं एकघटवत्तया ज्ञातेऽपि घटान्तराभावे घटो नास्तीति प्रतीयेत। तत्र च घटज्ञानस्य प्रतिबन्धकत्वे प्रकृतेऽप्यधिकरणादिज्ञानं प्रतिबन्धकमिति न ज्ञानप्रागभावोनुभूयेत । यदपीदानीं ब्रह्मज्ञानप्रागभावज्ञाने यत् तव कारणं तदेव ममापीति, तत्तुच्छम्—मम प्रागभावस्यैवाभावात् ममात्मनः कस्यचिन्निरूप्यस्याभावाच्च । तस्मान्नजानामीत्यनुभवो न पररीत्या (भवद्रीत्या) अभावविषयो युज्यते । सिद्धान्तेऽपि न प्रागभावविषयः, तस्यैवाभावात् । अनुत्पत्स्यमानविशेषज्ञानस्य विषयस्य न जानामीत्यनुभवाच्च । नाप्यत्यन्ताभावो ध्वंसो वा न जानामीति अज्ञानानुभवस्य विषयः, समयान्तरे ज्ञानेन तद्विनाशस्य तदर्थं प्रवृत्तेश्च दर्शनात् । 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इत्यादिभगवद्वचनादपि ज्ञाननिवर्त्यस्यैवाज्ञानत्वनिश्चयात् ॥

अज्ञानं विना असङ्गस्यात्मनोऽभावसंबन्धासंभवेन आवश्यके तस्मिन् तस्यैव न जानामीत्यनुभवविषयत्वस्य कल्पयितुमुचितत्वात् । अत एव मयि ज्ञानं नास्ति न जानामि इत्यनुभवयोर्विशेषणविशेष्यभावव्यत्यय एवेति प्रत्युक्तम्। न जानामीत्यनुभवस्याभावविषयत्वानुपपत्तेः । तस्याप्येवमभावविषयत्वमनुपपन्नमिति चेत् ; तदप्यज्ञानं भावरूपमस्तु, अज्ञानस्यैव स्वाभावचैतन्यात्मकज्ञानत्वसामान्यस्याभावरूपत्वात् इति । तस्मात् भावरूपाज्ञानमेव ज्ञानात्मकचैतन्यस्य विरोधि न जानामीत्यनुभवविषय इति ॥

ननु भावरूपाज्ञानं ज्ञानसामान्यविरुद्धं चेत् कथं न नित्यनिवृत्तं स्यात् ? कथं वा तदवच्छेदकार्थविषयः चैतन्येन प्रतीयते ? तस्यैव चैतन्यस्य तज्ज्ञानसामान्यरूपत्वात् , न हि प्रकाशेन तमः प्रकाशते इत्याशङ्क्याह—**भाव-**

**न च आश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यं भावान्तरस्य अज्ञानस्य निवर्तकम् । तस्य अज्ञानविषयप्रतिभासत्वात् । न हि स्वज्ञानेनैव स्वयं निवर्तते ॥**

---

ता. अभावो निवर्तते नैवं विरोधिभावान्तरे सति भावान्तरं निवर्तते इति भावः। अङ्गीकृत्य एतदुक्तम्, धर्म्यादिविषयज्ञानस्य साक्षिचैतन्यरूपत्वेन न अज्ञाननिवर्तकत्वम्, प्रमाणज्ञानं च नास्ति इत्याह—**न च** इति । तथापि तेन निवृत्तिरस्तु इति ; अत आह—**न हि** इति ॥

---

भा. **रूपाज्ञानेति । आश्रयेति** दृष्टान्तार्थमुक्तम् । यद्यपि तज्ज्ञानसामान्यात्मकं चैतन्यं तदज्ञाननिवर्तकम्, तथापि तद्विषयापरोक्षवृत्तिप्रतिबिम्बितमेव चैतन्यं ज्ञानत्वसामान्यरूपचैतन्यात्मना निवर्तकम् । अविद्यानिवृत्तिप्रतिबन्धकावरणाभिभवस्य तदानीमेव सत्वात् । अपरोक्षवृत्त्यन्वयव्यतिरेकाभ्यामज्ञानस्य न जानामीति ज्ञानसामान्यविरुद्धत्वानुभवेन च तथैव कल्प्यत्वात् । अतोऽभावस्येव भावस्यापि न स्वविषयज्ञानेन विरोध इति भावः ॥

किञ्च, अज्ञानविषयविषयकापरोक्षवृत्त्यनभिव्यक्तमन्तःकरणावच्छिन्नं चैतन्यं नाज्ञाननिवर्तकम्, तत्साधकत्वात् । यत् यत्साधकं न तन्मात्रं तन्निवर्तकं यथा घटज्ञानमित्यभिप्रेत्याह—**न चाश्रयप्रतियोगीति** । न चाप्रयोजकत्वं साधकमात्रस्य निवर्तकत्वे पटादेरपि स्वज्ञानान्निवृत्तिप्रसङ्गादित्यभिप्रेत्याह—**न हीति** ॥

ननु अज्ञानविषयानुमितेरज्ञानाविषयत्वे वैयर्थ्यम्, तद्विषयत्वे वा तदवच्छेदकोऽर्थोऽपि प्रमाणविषय इति कथं तस्मिन्नज्ञानम् । न च परोक्षज्ञानमज्ञाननिवर्तकं न भवतीति वाच्यम् । प्रमाणज्ञानमात्रस्यैव तन्निवर्तकत्वात्। अन्यथा परोक्षज्ञानविषये न जानामीत्यनुभवप्रसङ्गः। ततो व्यवहारोऽपि न स्यादिति चेत्, न—परोक्षज्ञानस्य प्रमाणज्ञानत्वेऽप्यविद्याया अनिवर्तकत्वात् । अन्यथा प्रत्यक्षदृष्टवह्नेरिव पर्वतो वह्निमानित्याप्तवचनात् लिङ्गाद्वा अवगतवह्नेरपि पुंसः इदानीमस्मिन् पर्वते वह्निर्नवेति संशयो न स्यात् । विद्यात्वात् तदभावे इदानीमपि किमस्मिन् पर्वते वह्निर्विद्यत इति प्रश्नो न स्यात् ।

**ननु अज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येन अवभास्यते, प्रमाणायत्तत्वात् विषयसिद्धेः इति ; उच्यते—सर्वं वस्तु ज्ञाततया वा**

ता. ननु घटाज्ञानव्यावर्तकस्य घटस्य साक्षिवेद्यत्वमनुपपन्नं प्रमाणायत्तत्वाद्बाह्यविषयसिद्धेः, न च प्रमाणसिद्धस्यैव अज्ञानव्यावर्तकत्वं प्रमाणनिवर्त्यत्वादज्ञानस्य इति शङ्कते—**ननु** इति। केवलस्य घटादेः साक्षिवेद्यत्वाभावेऽपि ज्ञाताज्ञातत्वधर्मविशिष्टस्य साक्षिवेद्यत्वं स्वीक्रियत एव इति परिहरति—**उच्यते** इति ॥

भा. मानवह्निवैशिष्ट्यस्याप्तवाक्यादिना निश्चितत्वात् तद्विषयाविद्यानिवृत्तौ प्रत्यक्षवह्नेरिव तस्य स्फुटत्वाविशेषाच्च ॥

न च एतत्कालावच्छेदेन पर्वते (तज्ज्ञानाभावात्) तदज्ञानसम्भवात् संशय इति वाच्यम्। प्रत्यक्षप्रमाया अपि तदविषयत्वात्। न हि चक्षुरादि नीरूपं कालं गृहीतुं शक्नोति। न च उपनीतकालवैशिष्ट्यं वह्न्यधिकरणे प्रत्यक्षं विषयीकरोतीति वाच्यम्। अपरोक्षज्ञानमात्रे तन्नियमाभावात्। शब्दाद्यनन्तरभाविन्यपि तत्सम्भवात् पर्वतांशेऽपि प्रत्यक्षे तत्सम्भवाच्च। वाक्यादिजन्यं ज्ञानं न तत् विषयीकरोतीति चेत्, न—वर्तमानकालविशिष्टवह्निवैशिष्ट्ये पर्वतस्याज्ञाननिवृत्तौ वाक्यकरणकज्ञानानन्तरमुपनीतकालवह्न्योर्युगपद्विशिष्टज्ञानसम्भवात्। तत्सामग्र्यास्सत्वात् ॥

तज्ज्ञानं सत्तानिश्चयरूपं न भवतीति चेत्, सत्यम्। तदेव तत्प्राकट्यरूपाविद्यानिवृत्त्य(न)ङ्गीकारे कुतः ? प्रत्यक्षवह्न्याश्रयोपनीतकालवैशिष्ट्यज्ञानस्यैव तत्रापि प्राकट्ये सति तत्प्रसङ्गात्। अन्यथा प्रत्यक्षमपि तथा न स्यात्। तज्ज्ञानसमानप्रकारकसंशयाभावस्तु तस्य ग्राह्यनिश्चयतया तत्प्रतिबन्धकत्वादेवोपपद्यते। न च अपरोक्षज्ञानमहिम्नैव प्रत्यक्षदृष्टवह्नेर्न संशय इति वाच्यम्। तथापि परोक्षदृष्टवह्न्यादावविद्यानिवृत्तौ कारणाभावेन संशयानुपपत्तेः त्वदभिमतापरोक्षज्ञानस्य तत्रापि सम्भवाच्च। लौकिकप्रत्यक्षस्यैव संशयविरोधित्वे शुक्तिरजतस्वप्नगजादिप्रत्यक्षस्य तद्विरोधित्वं न स्यात् ॥

किञ्च, दूरस्थवृक्षे आप्तवाक्यात् परिमाणविशेषावगमेऽपि तदज्ञानतद्विपरीतभ्रमौ दृश्येते। तस्यैव चतुष्टयसन्निकर्षेण परिमाणविशेषापरोक्षज्ञाने

**अज्ञाततया वा साक्षिचैतन्यस्य विषयः एव। तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते, अन्यस्तु सामान्याकारेण विशेषाकारेण वा अज्ञानव्यावर्तकतया सदा भासते, इति उपपत्तिसहितं अज्ञानप्रत्यक्षं भावरूपमेव आत्मनि अज्ञानं गमयति इति सिद्धम्॥**

---

ता. न च केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि तत् अनुपपन्नं रसादेः चाक्षुषद्रव्यविशिष्टस्यापि चाक्षुषत्वादर्शनात् इति वाच्यम्। परैः परमाणोः केवलस्य मानसप्रत्यक्षत्वाभावेऽपि परमाणुमहं जानामि इति ज्ञानविशेषणतया अनुव्यवसायप्रत्यक्षविषयत्वाङ्गीकारात्। लोके च राहोः केवलस्य अप्रत्यक्षत्वेऽपि चन्द्राद्युपरक्तस्य प्रत्यक्षत्वदर्शनात्। परमतेऽपि घटमहं न जानामि इत्यत्र अज्ञानविशेषणीभूतस्य घटस्य मनसा प्रमाणान्तरेण वा सिद्धौ पूर्वोदितविकल्प-दोषतत्परिहारयोः साम्याच्च इति भावः। ननु तर्हि प्रमाणानां वैयर्थ्यं प्राप्तमिति; अत आह—**तत्र** इति। ज्ञाततासिद्ध्यर्थं प्रमाणानामुपयोगात् न वैयर्थ्यं इत्यर्थः। अज्ञाततया साक्षिवेद्यं तु न प्रमाणं अपेक्षते इत्याह—**अन्यस्तु** इति॥

---

भा. सति न तदुभयमित्यन्वयव्यतिरेकाभ्यां अपरोक्षज्ञानमेवाविद्यानिवृत्तौ कारणमिति परोक्षज्ञानं नाविद्यानिवर्तकम्। अभिवदनादिव्यवहारे च नाविद्यानिवृत्तिः कारणं भ्रमादपि तद्दृष्टेः। न जानामीत्यनुभवस्तु वह्न्याद्याकारसत्तानिश्चयाभि-भवान्न भवतीति न तावता तन्निवृत्तिः कल्पयितुं शक्यत इति॥

**ज्ञाततयेति**—ज्ञातत्वाकारेणेत्यर्थः। सिद्धान्ते हि चक्षुरादिजन्यं घट इत्यादिज्ञानमपि ज्ञातत्वविषयमेव, घटनिष्ठवृत्त्यादिविषयत्वस्य तदभिव्यक्त-साक्षिणा विषयीकरणात्, अन्यथा ततो ज्ञात इति व्यवहारायोगा-दिति भावः। **प्रमाणव्यवधानमपेक्षत इति**। एतच्च बाह्यपदार्थाभिप्राये-णोक्तम्। सुखादौ प्रमाणव्यवधानाभावात् चैतन्यविषये तस्मिन् ज्ञातत्व-स्य सम्भवाच्च। अन्यथा तत्र जानामीति व्यवहाराभावप्रसङ्गात्। शुक्तिरूप्या-दावपि इदमाकारवृत्तिव्यवधानस्य सत्वान्न व्यभिचारः। तदप्यान्तरमिति सिद्धान्त इति वा न तदाकारप्रमाणापेक्षेति भावः। वस्तुशब्देनाज्ञातं वोच्यते॥

**अनुमानमपि—विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इति ॥**

---

ता. ज्ञानस्यैव पक्षीकरणे अनुवादज्ञाने हेतोरसिद्धिः स्यात् तदर्थं **प्रमाणज्ञानं** इत्युक्तम्। प्रमाणज्ञानमित्युक्तेऽपि धारावाहिकप्रमाणज्ञाने हेतोरसिद्धिरेव तदर्थं **विवादगोचरे**ति पदम् ॥

वस्तुपूर्वकमित्युक्ते स्वाश्रयेण आत्मादिना सिद्धसाधनता स्यात्, अत उक्तम्—**वस्त्वन्तरे**ति। स्वाश्रयव्यतिरिक्तसामग्र्यादिनापि सिद्धसाधनता स्यात्, अत उक्तम्—**स्वदेशगते**ति। धर्मादिना सिद्धसाधनता माभूत् इत्युक्तम्—**स्वनिवर्त्ये**ति। पूर्वज्ञानेन सिद्धसाधनतानिवृत्त्यर्थम्—**स्वविषयावरणे**त्युक्तम्। प्रागभावोऽपि एवंभूतः, इत्यत उक्तम्—**प्रागभावव्यतिरिक्ते**ति ॥

अनुलोमेऽपि वस्त्वन्तरपूर्वकमित्येतावत्युक्ते प्रागभावेनापि सिद्धसाधनता स्यात्, तद्व्यावृत्त्यर्थम्—**प्रागभावव्यतिरिक्ते**त्युक्तम्। तथापि विषयेण घटादिना सिद्धसाधनता मा भूदिति **स्वविषयवरणे**त्युक्तम्। तथापि घटकुड्यादिना स्वविषयावरणेन सिद्धसाधनता मा भूदिति **स्वनिवर्त्ये**ति पदम्। तथापि अमितत्वे[अज्ञातत्वे]न विषयगतेन भाट्टानां सिद्धसाधनताव्यावृत्त्यर्थं **स्वदेशगते**ति विशेषणम्। एवं सर्वतो विशेषणान्यारभ्य ऊहनीयम्। एतेन विवक्षितभावरूपाज्ञानसिद्धिः प्रयोजनम् ॥

**प्रकाशकत्वात्** इत्येव हेतूपादाने धारावाहिकविज्ञानेषु, प्रदीपज्वालायां च मध्यवर्तिन्यां व्यभिचारः स्यात् इत्यत उक्तम्—**अप्रकाशितार्थे**ति ॥

**प्रदीपप्रभावत्** इत्येवोपन्यस्ते मध्यवर्तिप्रभासु साध्यसाधनवैकल्यमाशङ्क्य उक्तम्—**प्रथमोत्पन्ने**ति। तथापि आलोकव्याप्ते देशे यथोक्तसाध्यसाधनवत्त्वं नास्ति इत्यत उक्तं—**अन्धकारे** इति ॥

---

भा. **विवादगोचरापन्नमिति।** ननु अत्र यथार्थज्ञानमात्रस्य पक्षत्वे सुखादिप्रत्यक्षे बाधः तस्याज्ञानानिवर्तकत्वात्। वृत्तेः पक्षत्वे च परोक्षवृत्तौ बाधः। अपरोक्षवृत्तेः पक्षत्वे च तत्रैव व्यभिचारः। परोक्षज्ञानान्यत्वेन

भा. हेतुर्विशेषणीयः इति चेत्, न—अप्रयोजकत्वात्। धारावाहिकद्वितीयादिप्रमायां बाधोऽसिद्धिश्च स्यात्। न च उत्तरोत्तरक्षणावच्छिन्नं तद्विषयाज्ञानं तत्रापि निवर्तत इति वाच्यम्। क्षणानामप्रत्यक्षत्वात्। तदन्यत्वेन पक्षविशेषणे चात्मज्ञानस्य पक्षत्वे अनात्मज्ञाने व्यभिचारः। तस्यापि पक्षत्वे अनात्मावारकाज्ञानाभावात् बाधः। न च तत्रापि तदवच्छिन्नं चैतन्यं तत्प्रमाणविषय इति न बाधः इति वाच्यम्। रूपादिहीनस्य चैतन्यस्य चाक्षुषत्वाद्ययोगात्॥

साध्ये च आद्यविशेषणं व्यर्थम्। स्वनिवर्त्यपदेनैव स्वप्रागभावस्य व्यावर्तितत्वात् ज्ञानस्यैव तन्निवृत्तित्वात् अभावव्यतिरिक्तेत्येतावतैव उपपत्तौ स्वप्राक्पदवैयर्थ्याच्च। जडावारकाज्ञानाभावात् द्वितीयविशेषणमप्यसङ्गतम्, स्वविषयेत्यंशवैयर्थ्यं च। वृत्तिश्चिदुपरागार्थेति मते अज्ञानस्य ज्ञाननिवर्त्यत्वाभावेन तृतीयमप्यसङ्गतम्। आवरणाभिभवार्था वृत्तिरिति मतान्तरेऽपि वृत्तिप्रतिबिम्बितचैतन्यघटयोराध्यासिकसम्बन्धाभावेन तस्य तदविषयकतया अज्ञाननिवर्तकत्वायोगात्। अज्ञानस्य चिन्मात्राश्रयत्वेन वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वा तदनाधारतया चतुर्थमप्ययुक्तम्॥

किञ्च स्वविषयावरणपूर्वकमित्येतावतैवालम्। तेनैव तदितरविशेषणव्यावर्त्यमानानामपि व्यावर्तितत्वात्। अज्ञानातिरिक्तेन चैतन्यावरणाभावाच्च। अस्ति चेत्तेनैव ब्रह्मस्वरूपावरणसम्भवादप्रयोजकता हेतोः। न च तमोव्यावृत्त्यर्थं तृतीयविशेषणमिति वाच्यम्। तस्य पक्षीभूतप्रमामात्रविषयावारकत्वाभावात्॥

हेतावपि प्रकाशकत्वं किं ज्ञानत्वं ज्ञानहेतुत्वं वा साक्षात् परम्परया वा व्यवहारहेतुत्वं वा तमोनिवर्तकत्वं वा आवरणनिवर्तकत्वं वा अज्ञानान्धकारान्यतरनिवर्तकत्वं वा प्रकाशशब्दवाच्यत्वं वा। नाद्यः, दृष्टान्ते अभावात्। न द्वितीयः, असिद्धेः, इन्द्रियादौ व्यभिचाराच्च। अत एव न तृतीयः। न चतुर्थः, अज्ञानान्धकारानुगततमस्त्वाभावात्। न पञ्चमः, साध्यावैशिष्ट्यात्। अत एव न षष्ठः। न सप्तमः, शब्दसाम्येनैव साध्यसाधने गोशब्दवाच्यत्वेन पृथिव्यादौ शृङ्गित्वसाधनापातात्। किञ्च अज्ञानानुमितेरप्रकाशितार्थाप्रकाशकत्वे वैयर्थ्यप्रसङ्गेनाप्रकाशितार्थप्रकाशकत्वं वाच्यमिति तत्र व्यभिचारः। पूर्वं प्रकाशाभावमात्रेण हेतुशरीरोपपत्तावप्रयोजकं चेति॥

मैवम्—**विवादगोचरापन्न**मित्यनेन जन्यसविकल्पकाजन्यचाक्षुषघट- भा.
प्रमाणज्ञानं अन्धकारनिवृत्त्यव्यवहितोत्तरकालीनचाक्षुषज्ञानं वा विवक्षितम्। परमते जन्यज्ञानमात्रस्य[ईश्वर]सविकल्पकजन्यत्वात् सविकल्पकस्य जन्यज्ञानजन्यत्वाच्च पक्षाप्रसिद्धिवारणाय जन्यसविकल्पकाजन्येत्युभयोपादानम्। अनेन धारावाहिकद्वितीयादिबुद्धिव्यावृत्तिः। अस्मन्मते तु धारावाहिकबुद्धिरेव नास्ति। एकस्यैव ज्ञानस्य तावत्समयस्थित्युपपत्तेः। [अतो] न तस्य पक्षतापत्त्या बाधः। पराभिमतेश्वरज्ञानादिव्यावृत्तये चाक्षुषप्रमाणज्ञानेति॥

साध्ये च स्वशब्दः समभिव्याहृतपरः। स्वप्रागभावपदेन स्वसमानाधिकरणप्रागभावः कथ्यते। स्वविषयावरणेति च स्वजननायोग्यम्, स्वनिवर्त्येति स्वजन्यध्वंसप्रतियोगि, स्वदेशगतेति स्वाश्रये वर्तमानम्। एवं च पक्षीभूतज्ञानस्य घटपटादिसंयोगजनकत्वसम्भवात्तत्प्रागभावस्तन्निवर्त्य इति संयोगादिप्रागभावात्मस्वजनकादृष्टेच्छाप्रागभावपूर्वकत्वकल्पनेनार्थान्तरत्वव्यावृत्तये एतानि विशेषणानि। अज्ञानं चैवम्भूतमिति न बाधः। स्वप्रागभावान्यत्वं अभावान्यत्वादन्यदेवेति न तद्वैयर्थ्यम्॥

अथवा प्रमाणज्ञानस्य प्रागभाव एव स्वप्रागभावः। स्वविषये संशयादिजनकतायोग्यमेव स्वविषयावरणम्। स्वसत्ताक्षणनियतध्वंसप्रतियोगि स्वनिवर्त्यम्। ततश्च प्रागभावोऽपि परमते विशेषादर्शनतया संशयादिजनक इति स्वप्रागभावस्वजनकादृष्टान्धकारादिव्यावृत्तये स्वप्रागभावेत्यादिविशेषणम्। परमते मनस्संयोगपूर्वकत्वेनार्थान्तरव्यावृत्तये स्वनिवर्त्येति। अथवा पराभिमतप्रागभावान्यत्वज्ञानसमानविषयत्वज्ञाननिवर्त्यत्वज्ञानसमानाश्रयत्वविशिष्टाज्ञानसिद्ध्यर्थमेतानि विशेषणानीति न कस्यापि वैयर्थ्यम्। एकेनापि तेन विना उद्देश्यसाध्यासिद्धेः॥

अज्ञानाश्रयघटावच्छिन्नचैतन्यमेवान्तःकरणावच्छिन्नमिति तन्निष्ठज्ञानस्याप्यज्ञानसमानाश्रयत्वमबाधितमेव। घटाद्यज्ञानमप्यहङ्कारचैतन्यगतमेवेति केचित्। घटादिचाक्षुषज्ञानस्यापि तदवच्छिन्नचैतन्यविषयत्वादज्ञानस्य ज्ञानसमानविषयत्वं ज्ञाननिवर्त्यत्वं चाबाधितम्, घटस्सन्निति चाक्षुषज्ञानविषयसत्तायास्तदधिष्ठानात्मकत्वात्। सत्तायाश्च नीरूपाया एव परैरपि प्रत्यक्षविषय-

भा. त्वाभ्युपगमात्। अन्यथा अहङ्कारोऽपि प्रत्यक्षो न स्यात्। न च चाक्षुषप्रत्यक्षविषयस्यैव रूपवत्वनियम इति वाच्यम्। अनुभवबलादरूपस्याप्यहङ्कारस्य प्रत्यक्षत्वाभ्युपगमवदरूपस्याप्यवच्छिन्नात्मनश्चाक्षुषप्रत्यक्षविषयत्वाङ्गीकारेऽपि बाधकाभावात्॥

वस्तुतोऽस्मदात्मनः पराभिमतद्रव्यविलक्षणत्वात् सत्तातुल्यतैवेति घटस्सन्नित्यादिप्रत्यक्षस्य सर्वानुभवसिद्धत्वाच्चाक्षुषत्वमविरुद्धम्। न चैवमाकाशादीनामपि चाक्षुषत्वप्रसङ्गः। तस्य द्रव्यत्वादहङ्कारस्येव मानसत्वस्यापि दुष्परिहरत्वात्। तथा अननुभवात् अतथात्वे च तत्प्रकृतेऽप्यस्तु। नचैवमौपनिषदत्वभङ्गः, अवच्छिन्नस्य सर्वप्रत्ययवेद्यत्वाङ्गीकारात्। अनवच्छिन्नस्यैवौपनिषदत्वात्। नचान्तःकरणवृत्त्यादौ विषयस्याध्यासिकसम्बन्धाभावात् घटादेर्विषयत्वानुपपत्तिरिति वाच्यम्। घटाद्यधिष्ठानचैतन्यस्य अन्तःकरणवृत्त्यवच्छिन्नत्वेन अन्तःकरणावच्छिन्नसाक्ष्यभेदात् तदाध्यासिकसम्बन्धस्यैव साक्षिसम्बन्धत्वात्॥

ननु यत्राविशेषितं साध्यं प्रति हेतोरप्रयोजकत्वं तत्रैव विशिष्टं साध्यमुद्देश्यम्। अन्यथा नीलधूमज्ञानजन्यवह्निज्ञानमुद्देश्यमिति हेतावपि व्यर्थविशेषणत्वं न स्यादिति चेत्, न—एवं सत्यर्थान्तरनिवृत्तये साध्यविशेषणानुपादानप्रसङ्गात्। न हि नैयायिकेश्वरानुमाने अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगीति विशेषणेन विना भावकार्यत्वहेतोरप्रयोजकताऽस्ति। उपादानापरोक्षज्ञानादिमात्रादेव तदुपपत्तेः। नचैवमदृष्टजनकादेव ज्ञानादेर्घटादिकार्यप्रसङ्ग इति वाच्यम्। द्व्यणुकादिकार्यात् घटादिकार्यविशेषे कारणविशेषस्यावश्यकत्वात्। अन्यथा परमतेऽपि क्षितिसाधारणकर्तुरेव घटाद्युत्पत्तिप्रसङ्गः। तस्मात्तत्र स्वाभिमतसाध्यसिद्धये एव साध्यविशेषणमिति प्रकृतेऽपि समानम्॥

एवं विमतं न ज्ञाननिवर्त्यं अनादिभावत्वात् ब्रह्म स्वसमानसत्ताकजीवभेदवत् अभ्रान्तत्वादित्यनुमाने क्रियानिवर्त्यत्वाभावेन कल्पितभेदवत्तया चार्थान्तरत्वनिवृत्त्या स्वाभिमतसाध्यसिद्धये एव साध्यविशेषणमपि परस्येति अन्यत्रापि उद्देश्यसाध्यसिद्ध्यर्थं साध्यविशेषणं युक्तम्। हेतौ तु व्याप्तिग्रहानुपयुक्तं विशेषणं व्यर्थमेवेति नातिप्रसङ्गः॥

**ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् । शक्तिरिति आत्मपरतन्त्रतया आत्मनः सर्वकार्योपादानत्वस्य निर्वोढृत्वमाह । तत्स्वरूपम्—आत्मतत्त्वम् , तत्सत्तामात्रानुबन्धिनी इत्यर्थः । किं च, अर्थापत्तिरपि भावरूपाज्ञानसद्भावे प्रमाणं इत्याह**—अन्यथा 27-4 मिथ्यार्थावभासानुपपत्तेः इति । **विशुद्धब्रह्मात्मनि शुक्तिकायां च अहङ्कार-**

---

ता. प्रमाणज्ञानपक्षीकरणे कथमज्ञानसिद्धिः इत्याशङ्क्य, अधिकरणसिद्धान्तन्यायेन इत्याह—**ततश्च** इति । 'यत्सिद्धौ अन्यप्रकरणसिद्धिः सः अधिकरणसिद्धान्तः' इति ॥

नन्वविद्यायास्सर्वोपादानभूतायाः शक्तिमत्त्वात् शक्तित्वमनुपपन्नं इत्याशङ्क्य आह—**शक्तिरिति** इति । नित्यपरतन्त्रतया शक्तिरित्युपचर्यते इत्यर्थः । तत्स्वरूपं—तेषां बाह्याध्यात्मिकवस्तूनां स्वरूपं आत्मतत्त्वं तत्र कल्पितत्वात् तेषाम् ॥

---

भा. किञ्च अप्रकाशितार्थप्रकाशकत्वमपि तेन विना न सङ्गच्छते । तद्धि एतद्विषयावरणसमयावृत्तित्वे सति तन्निवर्तकत्वम् । न च वर्णिताज्ञानातिरिक्तं प्रमाणज्ञाननिवर्त्यं विषयावरणमस्ति, स्वप्रागभावस्य स्वानिवर्त्यत्वात्, वस्तुतस्तदभावात्, ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात् । 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन' इति स्मृतेश्च, आवरणनिवर्तकत्वस्य च प्रसिद्धत्वात् । न च भ्रान्तिरूपमज्ञानं तत्र ज्ञाननिवृत्ततया अनुभूयत इति वाच्यम् । उत्पन्नस्य तेन विनापि नाशेन व्यभिचारेण ज्ञानस्य तदनिवर्तकत्वात् । ज्ञानत्वाधिकरणतया तस्य नियमेन तदनधिकरणतया प्रतीयमानाज्ञानत्वासम्भवाच्च । भावरूपाज्ञानादन्यस्य ज्ञानत्वपुरस्कारेण तन्निवर्त्यस्याभावाच्च । अत एवाज्ञानशब्दोऽवयवशक्त्या भावरूपाज्ञानमेवाभिधत्ते । ज्ञानत्वपुरस्कारेण ज्ञानविरोधित्वस्य तदन्यस्मिन्नभावात् । नचायं हेतुः साध्याविशिष्टः, साध्यस्यानेवंरूपत्वात् । न च वर्णितसाध्यसिद्धेः पूर्वं तज्ज्ञानं न सम्भवतीति वाच्यम् । रूपादिचाक्षुषज्ञानाभावे तस्मिन् संशयादिजनकतदज्ञानरूपावरणस्य तत्सत्वे तदभावस्य चानुभवसिद्धत्वेन भावरूपाज्ञानात्मकावरणनिवर्तकत्वज्ञानाभावेऽपि सामान्यतस्सिद्धत्वादिति भावः ॥

**रजताध्यासस्य अर्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किंचित् उपादानमन्वेषणीयम्। सत्योपादानत्वे कार्यस्य कारणस्वभावतया अध्यासस्यापि सत्यत्वप्रसङ्गात्। तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गात् अनाद्येव तत् मिथ्योपादानं इति तथाविधोपादानान्तरकल्पनाप्रसङ्गात् अनाद्येव तत् मिथ्योपादानं आत्मसम्बन्धि कल्पनीयम्। यच्च अनादि स्वयं मिथ्या मिथ्योपादानं**

---

ता. ननु कार्यस्य कारणमन्तरेणानुपपन्नत्वं अविद्यां विनापीत्याशङ्क्य कार्यविशेषात्तदनुगुणः कारणविशेषोऽपि कल्प्यते इत्याह—**सत्ये**ति। तथापि अनादित्वं तस्य कथं लभ्यते इत्याशङ्क्य, आह—**तस्यापि** इति। एतावता भवदभिमताज्ञानसिद्धिः कथमिति; अत आह—**यच्च** इति। अनादि अज्ञानं इत्युक्ते आत्मनोऽपि अज्ञानता प्राप्ता तद्व्यावृत्त्यर्थं आह—**मिथ्या** इति। आत्मनोऽपि संसृष्टरूपेण मिथ्यात्वमस्तीति; अत आह—**स्वयं** इति। तथापि अध्यासप्रवाहे व्यभिचारमाशङ्क्य; आह—**मिथ्योपादानं** इति। तथापि अविद्यात्मनोः ऐक्याध्यासे

---

भा. सर्गाद्यकालीनं कार्यं जडोपादानं कार्यत्वात् सम्मतवत्, तच्च कारणमेकं लाघवादित्यणुव्यतिरिक्तानादिजडोपादानसिद्धौ, अनादित्वे सति जडोपादानत्वं भावत्वं वा ज्ञाननिवर्त्यवृत्ति, जडवृत्तित्वात्, घटत्वादिवत्, न चानादिभावत्वस्य जीवत्वादिवृत्तित्वेनार्थान्तरता, जीवत्वादेराविद्यकत्वाभावे तस्य ज्ञानानिवर्त्यत्वादिति भावरूपाज्ञानासिद्धिः। एवं ध्वंसातिरिक्तप्रत्यक्षधर्माजनकघटादिजन्यज्ञानं बाह्यवृत्तिजातिमदतिरिक्तप्रत्यक्षनिवर्तकम्। स्वसामग्रीकाले स्वसमानाधिकरणज्ञानाविषयविषयकजन्यज्ञानत्वात् ध्वंसजनकप्रतियोगिप्रत्यक्षवत्। तच्चाबाधितं भावरूपाज्ञानमेव। नचाप्रयोजकत्वम्। भावरूपाज्ञानं विना ज्ञाननिवर्त्याज्ञानस्यासम्भवात् भ्रमाभावप्रसङ्गाच्च। ब्रह्मसाक्षात्कारः स्वविषयाज्ञाननिवर्तकः प्राथमिकसाक्षात्कारत्वात् घटादिसाक्षात्कारवत्। अन्यथा मोक्षशास्त्रानारम्भप्रसङ्गात्। इदानीं ब्रह्मणोऽनवभासानुपपत्तेश्चेति ब्रह्माज्ञानसिद्धिश्चेति॥

ननु; एवमप्यात्माज्ञानं कुतः सिद्ध्येत् तत्राह—**यच्चानादी**ति। स्वरूपे आत्मनोऽप्यनात्मसंसृष्टत्वेन मिथ्यात्वमस्तीत्यत उक्तं **स्वयं मिथ्ये**ति। स्वरूपेणेत्यर्थः। अविद्यासम्बन्धादावतिव्याप्तिवारणाय **मिथ्योपादानमि**ति। अत्र

**च तत् अज्ञानं इति मिथ्याध्यास एव तथाविधाज्ञानोपादानं कारणं अन्तरेण अनुपपद्यमानः तत् कल्पयति इत्युक्तम् ॥**

---

व्यभिचारमाशङ्क्य; आह—**आत्मसंबन्धि** इति। तथापि तस्य कल्पकं किमिति; अत आह—**मिथ्याध्यास** इति ॥ ता.

---

**मिथ्येति** स्वरूपकीर्तनम्। आत्मनि मृदादौ चातिव्याप्तिवारणायान्यद्विशेषणद्वयम्। नचैतस्य कचिद(ति)व्याप्तिरस्तीति ॥ भा.

ननु अनुत्पादितभ्रमाज्ञाने अव्याप्तिः। तस्योपादानत्वाभावात्। नचोपादानपदेन ज्ञाननिवर्त्यत्वमुच्यते अविवक्षितं वा तदिति वाच्यम्। अविद्यासंबन्धे अतिव्याप्तेर्मिथ्यात्वविशेषणवैयर्थ्याच्च। एवं जीवन्मुक्तिकालीनाज्ञाने अव्याप्तिः। तस्य ज्ञानानिवर्त्यत्वात् अन्यथा प्रागेव तन्निवृत्तिप्रसङ्गात्। मिथ्यावस्तुनो दोषजन्यत्वनियमेनानादित्वाभावेनासंभवश्च। अनादेर्ज्ञाननिवर्त्यत्वायोगेन चासम्भवः। अत एवानादिभावत्वे सति ज्ञाननिवर्त्यमज्ञानमित्यपि अज्ञानलक्षणं प्रत्युक्तमिति चेत् ॥

उच्यते—न तावदनुत्पादितभ्रमाज्ञाने अव्याप्तिः। अज्ञानस्यैकत्वेन तत्सद्भावे प्रमाणाभावात्। तत्सत्त्वेऽप्युपादानपदेन उपादानत्वयोग्यं विवक्षितमिति नाव्याप्तिः। अनादित्वे सति ज्ञाननिवर्त्यत्वं वा लक्षणम्। तत्र स्मृत्यादिनिवर्त्यसंस्कारे ज्ञानजन्यध्वंसप्रतियोगिनि आत्मनि चातिव्याप्तिवारणाय विशेषणद्वयम्। न चाविद्यासम्बन्धादावतिव्याप्तिः। स्वजन्यानपेक्षज्ञाननिवर्त्यत्वस्य विवक्षितत्वात्। उपादानपदं तु स्वरूपकीर्तनम्। ज्ञानत्वेन ज्ञाननिवर्त्यं वा तत्। न चैवमतिप्रसङ्गः। अपरोक्षवृत्तिं विना तत्प्रतिबन्धकावरणानिवृत्तेः ॥

न च जीवन्मुक्तिकालीनाज्ञाने अव्याप्तिः। तस्यापि ज्ञाननिवर्त्यत्वादेः सत्वात्। न चैवं प्रागेव ज्ञानान्निवृत्तिप्रसङ्गः। तदानीं प्रारब्धकर्मणः प्रतिबन्धकत्वात्। ज्ञानकार्ये प्रतिबन्धस्तूपपादित एव। न चाविद्याकार्यं कर्म कथं अविद्यानिवृत्तिं प्रतिबध्नाति तथात्वे जीवन्मुक्तेरेवाभावप्रसङ्गादिति वाच्यम्। प्रतिबन्धकत्वं हि विरोधित्वे सति प्राबल्यप्रयुक्तम्। न च तदकार्यत्वमप्यपेक्षते।

भा. कार्याणामपि बहुलं प्रतिबन्धकत्वात्। अकार्याणामपि सर्वेषां तदभावात्।
प्रारब्धकर्मणस्त्वविद्यालेशनिवृत्तेः प्राबल्यं विरोधित्वं च 'तस्य तावदेव
चिरा मि'त्याद्यवधिप्रतिपादकशास्त्राद्विदुषामपि शुकादीनां शरीरश्रवणात् 'भूय-
श्चान्ते विश्वमायानिवृत्ति'रिति भूयः अन्ते इत्यादिश्रवणाच्च कल्प्यते॥

किञ्च शरीरवियोगानन्तरं ज्ञानासम्भवेन विद्यमान एव शरीरे ज्ञानो-
त्पत्तिर्वाच्येति प्रागपि तत्सम्भवेन तथैव कल्पनीयम्। अत एव संसारोपादाना-
विद्यानिवृत्तेस्तद्दुर्बलमिति कथ्यते, मुक्त्यभावप्रसङ्गात्। न चैवमपि मरणकाले
विवशकरणस्य ज्ञानासम्भवात् प्रागुत्पन्नस्य च नष्टत्वान्न तस्य ज्ञानान्निवृत्तिरिति
वाच्यम्। नह्यर्वाचीनानामिव ब्रह्मविदुषो मित्रमृत्युप्रभृतीनामात्मभूतस्य विवश-
करणता कल्पयितुं शक्यते। 'ते नरास्सुखमृत्यवः' इति स्मरणाच्च नायं
नियमः॥

अथवा प्रागेवोत्पन्नसाक्षात्काराभिव्यक्तचैतन्यं पुनरनावृतत्वात् प्रति-
बन्धकक्षये अविद्यां निवर्तयति। वृत्तेरपि चैतन्याभिव्यञ्जकत्वेनान्यथासिद्धत्वादभि-
व्यक्तचैतन्यमेवाविद्यानिवर्तकम्। अन्यथा न जानामीति तस्य ज्ञान-
सामान्यनिवर्त्यत्वानुभवायोगात्। न च चैतन्यमात्रस्याविद्यानिवर्तकत्वे प्रमाणा-
भावः। 'तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्ति' रिति श्रुतेस्तत्र प्रमाण-
त्वात्। अतः सर्वथापि न तस्य ज्ञाननिवर्त्यत्वानुपपत्तिः॥

नापि कल्पितस्य दोषजन्यत्वेन अनादित्वाभावेनासम्भवः। तत्र किं
भ्रान्तिज्ञानस्य दोषजन्यत्वं, उत तद्विषयस्य? नाद्यः, जन्यप्रत्यक्षस्यैवेन्द्रियजन्य-
त्ववत् जन्यभ्रान्तेरेव तन्नियमात्। अत एव भ्रमविषयमात्रेऽपि न दोषो हेतुः।
कार्यद्रव्यस्य कार्योपादानकत्वे अनवस्थाप्रसङ्गेनानादिपरमाणुवन्मिथ्याकार्योपादा-
नमपि तत एवानादितया सिद्धमिति तस्य दोषाजन्यत्वात्। अत एव अस्या-
नादित्वे प्रमाणाभावादिति प्रत्युक्तम्। सर्गाद्यकार्यस्य जडोपादानत्वेन
सिद्धस्य जडस्य लाघवेन एकतया सिद्धस्य कार्यत्वानुपपत्त्या अनादित्वेन
सिद्धत्वात्। घटाद्यज्ञानस्याप्यज्ञानत्वेनानादित्वोपपत्तेः। नचैवं तस्य मिथ्यात्व-
मप्यनुपपन्नमिति वाच्यम्। नहि दोषजन्यत्वमेव मिथ्यात्वम्, तद्ग्रहणमन्तरेण
दोषजन्यत्वस्यैव दुरवधारणत्वात्, परमते सत्यस्यापि ज्ञानस्य दोषजन्यत्वाच्च।

**ननु येन यस्य अतिशयः उत्पद्यते स तस्य विषयः । न च**

---

ता. 'बाह्याध्यात्मिकेषु' इत्यत्र अविद्यायाः विषयत्वमपि उक्तम्, तं दूषयितुं पूर्ववादी विषयलक्षणं तावत् आह—**ननु** इति । एतत् लक्षणं विषयेषु नास्ति

---

भा. किन्तु प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् । तच्च कार्यस्येवानादिपदार्थस्यापि यथानुभवमविरुद्धमिति नानादित्वं सत्यत्वेन न वा मिथ्यात्वं जन्यत्वेन नियतम् ॥

ननु अनादेः कथं नाश इति चेत्, अनादित्वेऽपि त्वदभिमतप्रागभाववत्तदुपपत्तेः । न च अनादिभावत्वमविनाशित्वव्याप्तमिति वाच्यम् । अनाद्यभावत्ववत्तदभावात् । विनाशानुभवस्योभयत्रापि तुल्यत्वात् । न च आत्मनोऽप्येवं सति विनाशः स्यादिति वाच्यम् । अनादिविनाशाभ्युपगममात्रेण तव मतेऽपि तदापादनस्य सुलभत्वात् । अविद्यायामिवान्वयव्यतिरेकसिद्धस्य शास्त्रसिद्धस्य वा विनाशहेतोरभावात् ॥

एवं अनादिभावत्वे सति ज्ञाननिवर्त्यमज्ञानमित्यपि लक्षणमदुष्टम् । न चाविद्यासम्बन्धादावतिव्याप्तिः, स्वजन्यानपेक्षज्ञाननिवर्त्यत्वस्य पूर्ववदेव विवक्षितत्वात् । नन्वेवं अनादिपदं व्यर्थम्, शुक्तिरजतादेरपि वर्णितज्ञाननिवर्त्यत्वाभावात्। न चोत्तरज्ञाननिवर्त्यपूर्वज्ञानादावतिव्याप्तिवारकं तदिति वाच्यम् । इच्छादिनापि तेषां विनाशदर्शनेन ज्ञानस्य तदहेतुत्वात्, सुषुप्तिपूर्वक्षणज्ञानादिविनाशे कारणविनाशस्यैव हेतुत्वेन क्लृप्ततया अन्यत्रापि तस्यैव हेतुत्वादिति चेत्, न—तस्यापि पूर्ववत् संस्कारादावतिव्याप्तिवारणार्थत्वात । भावपदं तु प्रागभावमङ्गीकृत्येच्छादिप्रागभावे अतिव्याप्तिवारणायेति द्रष्टव्यम् ॥

**बाह्याध्यात्मिकेषु** इत्यत्राज्ञानस्य बाह्यविषयत्वमुक्तमाक्षिपति—**नन्विति** । ननु नेदं विषयत्वलक्षणम्, परोक्षज्ञानेन तद्विषये अतिशयाजननात् अपरोक्षज्ञानेनापि भाट्टमत इव स्वविषये ज्ञातताजननाङ्गीकारात शुक्तिरजतादिज्ञाने तदसम्भवाच्च । व्यवहारस्तु न विषयनिष्ठः । नचार्थविषयव्यवहारजनकत्वमेवार्थविषयत्वमिति वाच्यम् । उपेक्षाज्ञानादेस्तदभावप्रसङ्गात् । तद्योग्यत्वं च ज्ञाने अर्थविषयत्वेनैव वाच्यम् । नचाज्ञानविषयत्वस्येदं लक्षणम्,

**अज्ञानेन अनात्मनि आवरणातिशयजन्म। प्रमाणाभावात् अर्थानुपपत्तेश्च। न तावत् अगवते नीलार्थे तत्र आवरणकृत्यमवगन्तुं शक्यते। अनवगते तु न तराम्। ननु अवगते सति पूर्वं आवृतं इत्यवगम्यताम्। न—धारावाहिकविज्ञानगम्येऽर्थे पूर्वमवगतस्यापि पश्चादवगमदर्शनात्।**

---

ता॰ इत्याह—**न च** इति। **प्रमाणाभावात् अर्थानुपपत्तेश्च** इति संग्रहवाक्यम्। तत्र तावत् प्रमाणाभावं दर्शयति—**न तावत्** इति। धर्मिणो नीलस्यैव अप्रतीतेः तस्य आवृतत्वं अतिशयेन अवगन्तुमशक्यं इत्याह—**न तरां** इति। प्रमाणान्तरमाशङ्कते—**ननु** इति। अभिज्ञाप्रत्यभिज्ञयोर्मध्येऽनवगतेरभावे अवगतिरेव स्यात्, तथा च स्मर्येत, न च स्मर्यते, तस्मादनवगतिरस्ति इति स्मरणा-

---

भा॰ ज्ञानविषयत्वस्येव तस्याप्यन्यथोपपत्तेरिति चेत्, सत्यम्। न ह्यनेन विषयत्वलक्षणमुच्यते, किन्तु अनात्मा अज्ञानविषयो न भवतीति। तत्र प्रमाणाभावात्। तथा हि—किं अज्ञानमनात्मविषयकं सविषयत्वे सति तन्निष्ठातिशयजनकत्वात् भाट्टाभिमतप्रत्यक्षवदिति अनुमानं तत्र प्रमाणम्? अनुभवो वा?। नाद्य इत्याह—**येनेति**। तर्हि **येन** अज्ञानेन **यत्र** यस्मिन् आवरणरूपा**तिशयो** भवति तदन्यस्य तज्जन्यस्यातिशयस्याभावात् **स तस्य विषयः** इति ज्ञातुं शक्यत इति अध्याहारेण योजना। तच्च न सम्भवति प्रमाणाभावादित्याह—**न चेति**। अथ वा **यत्रेति** विषयसप्तमी। **येन** यद्विषयसम्बन्ध्य**तिशयो** भवति **स तस्य** विषय इति ज्ञातुं शक्यत इति योजना। स चातिशयो न ज्ञानस्येव व्यवहारः। अभिवदनोपादानादिव्यवहारस्याज्ञानासाध्यत्वात्। आवरणमेवातिशय इति चेत्, तत्राह—**न चाज्ञानेनेति**॥

अथ वा मूलाज्ञानमात्मन्यतिशयजनकमेवात्मविषयं दृष्टम्, तद्वदेव घटाज्ञानमपि वाच्यम्, तच्च न सम्भवतीत्याह—**ननु येनेति**। अज्ञानेनेत्यध्याहारः। किं प्रमाणेनानात्मन्यज्ञानावरणमधिगम्यते? किं वा साक्षिणा?। आद्यं प्रत्यक्षादिविकल्पेन दूषयति—**न तावदित्यादिना**। किमिदानीमवगतत्वेन यदाकदाचित् पूर्वमावृतमित्यवगम्यते? उताव्यवहितपूर्वक्षणे? नाद्यः दुःखादौ व्यभिचारादित्यभिप्रेत्य द्वितीये व्यभिचारस्थलान्तरमाह—**न धारेति**॥

**ननु इदानीमेव अवगतत्वं पूर्वमनवगतिं साधयति। न—पूर्वानवगतिमविज्ञाय इदानीमेव अवगतं इत्यवधारणायोगात्। ननु पूर्वापरप्रत्यभिज्ञायां मध्ये अनवगतिरवगम्यते इति। न प्रत्यभिज्ञानुपपत्तिः मध्ये अनवगतिं साधयति। धारावाहिकेऽप्यात्मनि सदावगते तद्दर्शनात्। मध्ये ज्ञानस्मृत्यभावात् अनवगतिरवगम्यते इति चेत्; न—अवगतेऽपि स्मृतिनियमाभावात्। तथापि विषयानवगतिः प्रतीयते इति चेत्; सत्यम्॥**

ता. भावानुपपत्त्या गम्यते इति शङ्कते—**मध्ये** इति। ननु तर्केण अनुभवापलापो न युक्तः इति शङ्कते—**तथापि** इति। अयमनुभवः अस्मत्पक्षस्यैव अनुकूलः इति परिहरति—**सत्यं** इति। अज्ञानमज्ञाताश्च विषयाः साक्षिचैतन्ये अध्यस्ताः, तेन परस्परमभिसम्बन्धः तेषां अवभासते, लौहित्यमुखयोः स्फटिके प्रतिबिम्बितयोः 'लोहितं मुखं' इति परस्परसंबन्धावभासवत् इत्यर्थः। ननु तर्हि

भा. यद्यपि धारावाहिकबुद्धिर्न सिद्धान्तेऽस्ति तत्र प्रमाणाभावात्। एकस्यापि विज्ञानस्य घटादिवद्यावद्विनाशकसमवधानमवस्थानोपपत्तेश्च। न च ज्ञानसामग्र्यास्सत्वात् द्वितीयादिक्षणेऽपि ज्ञानं संभवतीति वाच्यम्। प्रत्यक्षे विषयाज्ञानस्यापि हेतुत्वात्। (द्रव्याश्रये)[एकस्मिन् द्रव्ये]तदा तज्जातीयज्ञानानुत्पत्तिनियमाच्च। परमते मनस इव सामग्रीस्वाभाव्याच्च (द्वा)न ज्ञानान्तरमुत्पद्यते। अन्यथा परमते तत्रैव युगपदनेकज्ञानोत्पत्तिप्रसङ्गात्। न चोत्तरोत्तरज्ञाने पूर्वपूर्वज्ञानस्य हेतुत्वान्न परमते युगपदनेकज्ञानमिति वाच्यम्। विशेषणज्ञानस्य विशिष्टधीहेतुत्वेन प्राथमिकज्ञानस्याप्यनन्तज्ञानजननयोग्यत्वात्। (अ)युगपत् ज्ञानसिद्धेः पूर्वं ज्ञाने पूर्वोत्तरभावासिद्धेश्च। तथापि परमतमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्॥

किं पूर्वमनवगतत्वे सतीदानीमवगतत्वमिदानीमेवागतत्वम्? उत एतत्कालमात्रवृत्त्यवगतिविषयत्वम्? आद्ये स्वरूपासिद्धिमभिप्रेत्याह—**पूर्वेति**। न द्वितीयः, पूर्वकालीनज्ञानाभावमात्रेण तदुपपत्तेरिति भावः। ननु घटं न जानामीत्यादिरूपेण साक्षिणा अज्ञातो घटादिरनुभूयत इति पक्षान्तरमुद्भाव्य, अज्ञातसाक्ष्यवच्छेदकत्वात्तथा अनुभवो न तु स्वस्याज्ञानविषयतयेत्याह—**सत्य-**

विषयैः सह साक्षिचैतन्ये अज्ञानाध्यासात् प्रतिभासः । न च
अध्यस्तस्य आवरणमस्ति । द्विचन्द्रादिवत् प्रमाणगम्यत्वाभावात् ।
तस्मात् नास्ति अनात्मनि आवरणे प्रमाणम् । न च स्वयमेव प्रकाश-
हीनस्य जडस्य आवरणार्थोऽपि सम्भवति । तस्मात् अतिशयाभावात्
28 - 1 न अज्ञानविषयः अनात्मा इति ; तत्राह—सा च न जडेषु वस्तुषु तत्स्व-
रूपावभासं प्रतिबध्नाति इति । किं तु अन्यदेव अनात्मनि अतिशय-
कार्यं कृत्वा तद्विषयमज्ञानं इति वक्ष्यते इत्यभिप्रायः । तत्र हेतुः—प्रमाण-

---

ता. साक्षिणैव घटादावपि अज्ञानं प्रतीयतां इत्याशङ्क्य आह—**न चाध्यस्तस्य** इति । अर्थाभावं दर्शयति—**न च स्वयं** इति । शङ्कोत्तरत्वेन टीकामवतारयति—**तत्राह** इति ॥

---

भा. **मित्यादिना** । न चाबाधितैतदनुभवबलात् घटादेरेवाज्ञातत्वमस्त्विति वाच्यमित्याह—**न चाध्यस्तस्येति** । ततश्च तद्विषयप्रमाणादृते तदज्ञाननिवृत्त्यसम्भवात् न कदाचिदपि विषयः प्रकाशेत, ततो न विषये अज्ञाततेत्यर्थः । एतेन प्रथमविकल्पे द्वितीयपक्षोऽपि निरस्त इति द्रष्टव्यम् ॥

ननु घटादेः व्यावहारिकत्वाद्व्यावहारिकप्रमाणगम्यत्वमस्तीति चेत्, भवतु तावदेवम् । तथापि प्रमाणगम्यमबाधितं चैतन्यमेव । न चाज्ञाननिवृत्तौ तद्विषयनिश्चयमात्रमपेक्ष्यते न तु प्रमाणज्ञानं निवर्त्याभावादेव न भ्रमात्तन्निवृत्तिरिति वाच्यम् । प्रमाणज्ञानानन्तरमेव तद्दर्शनेन तस्यैव तन्निवर्तकत्वात् । अथ वा, घटादेरप्यावृतत्वे तस्यापि प्रमाणयोग्यता स्यात्, न चाध्यस्तस्य साऽस्तीत्यर्थः । दृष्टिसृष्ट्यभिप्रायेणायं ग्रन्थः ॥

किञ्च, घटं न जानामीत्यनुभूयमानमज्ञानं घटावच्छिन्नं चैतन्यमप्यावृणोति ? उत घटमात्रम् ? । आद्ये अज्ञाततानुभवस्यान्यथासिद्धेर्न ततो घटस्यावृतत्वसिद्धिः । न द्वितीयः, घटादिसाधकसाक्षिणोऽनावृतत्वे तत्प्रकाशदशायां तदध्यस्तघटादेरावरणसहस्रे सत्यप्यनवभासायोगात् । स्वभावजाड्येनावृतस्वभावस्यापि तस्यानावृतसाक्षिसम्बन्धे प्रकाशदर्शनादित्यभिप्रेत्योपसंहरति—

वैकल्यादेव इति। अथवा चैतन्यप्रकाशेन जडानां नित्यवदन्वयात् 28-2
नित्यवत् प्रकाशे प्राप्ते सम्भवत्येव अनात्मसु आवरणकृत्यं इत्याशङ्क्य
आह–प्रमाणवैकल्यादेव इति। अनात्मप्रमाणस्य–चैतन्यस्य–वैकल्यात्— 28-2
आवरणादेव विषयानवगतिसिद्धेः न विषये पृथगावरणं कल्पनीयं
इत्यर्थः। इतश्च न अनात्मनि आवरणं इत्याह—रजतप्रतिभासात् इति॥ 28-2

यदि आत्माश्रयं अज्ञानं अनात्मावरणं स्यात् तदा आवरणविनाशमन्तरेण विषयावभासायोगात् विषयज्ञानेन आत्माज्ञानं निवर्तेत। अतः सत्यामेव आत्मनि अविद्यायां त्रिष्वपि कालेषु विषयस्वरूपप्रतिभासदर्शनात् न अनात्मावरणं अज्ञानं इति भावः॥

ननु शुक्तिकाविषयं अज्ञानं अन्यदेव, तज्ज्ञानात् तत् निवर्तते, अन्यच्च आत्मविषयं अज्ञानं आत्मनि दृश्यमानं इति। तन्न। आत्माश्रयं आत्मविषयं च अज्ञानं अन्तरेण अनात्मसु प्रतिविषयं भावरूपाज्ञान-

---

ता. **प्रमाणवैकल्यात्** इति। जडविषयप्रमाणानुदयमात्रेणैव जडेषु अज्ञातत्वव्यवहारोपपत्तेः न तत्र अज्ञातत्वं कल्पनीयं इत्यर्थः। प्रमाणस्य—बोधकस्य इति यावत्। सक्षिचैतन्यस्य प्रमाणत्वानङ्गीकारात्। वैकल्यशब्दार्थमाह—**आवरणादेव** इति। एकमेव अज्ञानं आत्माश्रयं अनात्मावरणं च इति अङ्गीक्रियते? किं वा प्रतिविषयं अज्ञानभेदः अभ्युपगम्यते? इति विकल्प्य आद्यं दूषयति—**तदा** इति। **अज्ञानं निवर्तेत** इति। एकत्वादज्ञानस्य तन्निवृत्तौ संसारस्यापि निवृत्तिः स्यात् इत्यर्थः। फलितमाह—**अतः सत्यामेव** इति। रजतप्रतिभासकाले प्राक् ऊर्ध्वं च इति त्रिषु कालेषु सत्यामेवाविद्यायां विषयप्रतिभासदर्शनात् आवरणे च सति तदयोगात् न अनात्मावरणं अज्ञानं इत्यर्थः। द्वितीयं कल्पं उत्थापयति—**ननु** इति। कल्पनागौरवात् मैवं इति परिहरति—**तन्न** इति। कल्पकसद्भावात् न गौरवं दोषाय इत्याशङ्क्य, अन्यथोपपत्तिमाह—

---

भा. **तस्मादिति**। (तस्मात्) घटादिर्नाज्ञानविषयः तज्जन्यातिशयानाश्रयत्वात् दुःखादिवत् इत्युक्ते, सिद्धान्ती सिद्धसाधनमित्याह—**तत्राहेति**॥

**भावरूपाज्ञानसद्भावे प्रमाणाभावादिति**। घटं न जानामीत्याद्यनु-

सद्भावे प्रमाणाभावात् । विषयाग्रहणस्य प्रमाणवैकल्यादपि उपपत्तेः । कं च तर्हि अतिशयं अज्ञानजन्यं आश्रित्य 'बाह्याध्यात्मिकेषु वस्तुषु'
28 - 3 इति अनात्मविषयमज्ञानं दर्शितं इति ; तदाह—अतः तत्र रूपान्तराव-भासहेतुरेव केवलम् इति ॥

ननु अत्रापि अनुपपत्तिः समाना । कथम् ? शुक्तिकाज्ञानं हि रूपान्तरावभासं निवर्तयत् तदुपादानं अज्ञानमपि निवर्तयति इति ते मतम् । तत्र कथं शुक्तिकाज्ञानात् सहाज्ञानेन अध्यासे निवर्त्यमाने पुनः आत्मनि अज्ञानं दृश्येत । अतः प्रतिविषयमज्ञानभेदः अध्यासस्य अज्ञानानुपादानत्वं वा उपादाननिवृत्तिमन्तरेण अध्यासनिवृत्तिर्वा समाश्रयणीया इति । उच्यते—अस्मिन् पक्षे शुक्तिकादिज्ञा[नैः]नेन

---

ता. **विषये**ति । ननु आत्मवदनात्मनि आवरणकृत्यानङ्गीकारे कथं अनुपपत्ति-साम्यम् ? इति पृच्छति **कथं** इति । तथापि त्वन्मतानुसारिणोऽनुपपत्त्यन्तरमस्तीति द[तद्]र्शयितुं तन्मतं तावत् दर्शयति—**शुक्तिके**ति । अस्तु, का अनुपपत्ति-रिति ; अत्राह—**तत्र** इति । (विधा) तथापि तव अपसिद्धान्तः स्यात् इत्याह—**अतः प्रतिविषयं** इति । तत्र कल्पनागौरवदोषात् नायं सिद्धान्तः इति भावः । पक्षान्तरमाह—**अध्यासस्य** इति । अस्मिन् पक्षे अहंकाराद्यध्यासस्य सत्यतया ज्ञानादनिवृत्तेः तन्निवृत्तये शास्त्रारम्भो व्यर्थः इत्यर्थः । पक्षान्तरं दर्शयति—**उपादान-निवृत्तिं** इति । उपादाने तिष्ठत्येव अध्यासस्य निवृत्तौ पुनरपि तदुदयात्

---

भा. भवस्यैकाज्ञानविषयत्वेऽप्युपपत्तेरिति भावः । यद्यपि रजतादिविवर्तस्यापि चैतन्यमेवाधारः, तथाप्यधिष्ठानावच्छेदकेदमंशरजततादात्म्यमस्ति । इदं रजत-मित्यनुभवात् । चैतन्यस्यापि तदाश्रयत्वे अनुभवातिरिक्तप्रमाणाभावेन विनि-गमकाभावाच्च । न चाज्ञानाश्रयतया चैतन्यस्य तत्कार्याश्रयत्वमिति वाच्यम् । पटादेरुपादानसादेश्याभावेन रजते तस्य वक्तुमयुक्तत्वात् । अज्ञानविषयत्वे तु विनिगमकमुक्तमेव । रजतस्य संवित्तादाम्यं विना अपरोक्षत्वानुपपत्तिश्चेत इदमि रजतार्थिनः प्रवृत्तिरप्यनुपपन्ना । सा चेदन्यथासिद्धा, तदा इदमपि तथेत्यज्ञानं **अतस्तत्र रूपान्तरावभासहेतुरे**वेत्युक्तमिति द्रष्टव्यम् ॥ **शुक्तिकादिज्ञानैरि**ति । शुक्तिकादिज्ञानप्रतिबन्धकदोषाभावादि-

**रजताद्यध्यासानां स्वकारणे प्रविलयमात्रं क्रियते मुसलप्रहारेणेव घटस्य। अथवा—मूलाज्ञानस्यैव अवस्थाभेदाः रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्तन्ते इति कल्प्यताम्। कथं पुनः लोके सहाज्ञानेन अध्यासस्य तत्त्वज्ञानात् निवृत्तेः अप्रतिपत्तौ ब्रह्मज्ञानात्**

---

ता. अनिर्मोक्षः स्यात् इति भावः। अन्त्यपक्षं परिगृह्य परिहरति सिद्धान्ती—**उच्यते** इत्यादिना। अनिर्मोक्षप्रसंगभिया पक्षान्तरं परिगृह्णाति—**अथवा** इति। यावन्ति ज्ञानानि तावन्ति अज्ञानानि इति इष्टसिद्धिकारैरपि स्वीकृतत्वात् न अपसिद्धान्तोऽपि इति भावः। इदानिं प्रथमस्वीकृतं पक्षं अवलम्ब्य शङ्कते—**कथं** इति। ब्रह्मज्ञानात् अहंकाराध्यासस्य सहाज्ञानेन निवृतिः कथं कल्प्यते लोके व्याप्त्यभावात् इति भावः॥

---

भा. भिरित्यर्थः। प्रातीतिकस्यार्थस्यात्यन्तमदृढस्वभावतया प्रभादेरिव निमित्तनाशादितोऽपि नाशसंभवात् शुक्तिकादेर्ज्ञानं विनापि कदाचिद्विनश्यतस्तस्य तदनाश्यत्वादिति भावः। ननु एवं शुक्तिकादिज्ञानादज्ञाननिवृत्त्यनुभवो निर्निमित्तं बाधितः स्यादिति; तत्राह—**अथ वेति। मूलाज्ञानस्यैवेति**। मूलाज्ञानस्यैव धर्मविशेषाः तत्कार्यावच्छिन्नचैतन्यनिष्ठा वा। तथाविधानामपि मूलाज्ञानपरतन्त्रतया तदवस्थात्वोपपत्तेः। तच्चानादि अज्ञानत्वात् सम्मतवत्। अन्यथा तस्याज्ञानत्वायोगात्। अनादित्वघटितत्वात्तल्लक्षणस्य। न च ज्ञाननिवर्त्यत्वादेवाज्ञानत्वमस्त्विति वाच्यम्। मूलाज्ञानकार्यस्यैतस्य घटादिवत्तदनिवर्तकज्ञाननिवर्त्यत्वात्। अवस्थाकार्यत्वे चैकज्ञाननिवर्त्यानन्ताज्ञानकल्पने गौरवम्। कस्य चित्तन्मूलाज्ञानस्यानादित्वे च मदिष्टसिद्धिः॥

किञ्च, मूलाज्ञानमात्रकार्यत्वे तस्य कदाचिदुत्पत्तौ बीजाभावेनानादित्वमेव। उत्पत्स्यमानघटेऽप्यज्ञानानुभवान्न तत्र घटादिः कारणम्। सूक्ष्मावस्थघटश्च न किञ्चिदारभते। तत्त्वे वा मूलाज्ञानवत् स्थूलसूक्ष्मान्यतरावस्थघटस्याप्यनादित्वेन न तत्कार्यस्यापि कादाचित्कत्वम्। न च अज्ञानमपि (तत्र) स्थूलसूक्ष्मान्यतररूपेणैव अनादीति वाच्यम्। न जानामीत्यनुभवविषयस्य सदैकरूपत्वात्। घटसूक्ष्मावस्थया घटकार्यस्येवाज्ञानसूक्ष्मावस्थया तत्कार्य-

भा. स्यापि संशयादेरयोगात् । प्राथमिकघटज्ञानात् पूर्वमपि तस्य स्थूलसूक्ष्मा-
वस्थापरम्पराभ्युपगमे अप्रामाणिकानन्तावस्थाविशिष्टाज्ञानकल्पनागौरवाच्च ।
ज्ञानसाध्यनिवृत्तेः सूक्ष्मत्वायोगेन तदितरनिवर्त्यस्याज्ञानत्वानुपपत्तेश्च । अत एव
आवारकत्वेन तस्याज्ञानत्वमिति प्रत्युक्तम् । तस्य कार्यत्वे प्रमाणाभावादपि न
तदुत्पत्तिः कल्पनीया ॥

ननु तदज्ञानं किमेकं अनेकं वा ? सर्वथापि तद्विषयसाक्षात्कारादेकस्मा-
देव तन्निवृत्तेः कालान्तरे तत्राज्ञानानुभवो भ्रमो वा न स्यादिति चेत् , न—
अज्ञानं हि ज्ञानसमानविषयमेव तेन निवर्तते । न त्वविषयम् । भिन्न-
विषयज्ञानादज्ञानानिवृत्तेः समानविषयत्वेनैव तयोर्निवर्त्यनिवर्तकताया वक्तव्य-
त्वात् । ततश्चैकाज्ञानेनापि सकृद्घटावरणोपपत्तेः न युगपत्सर्वेषामज्ञानानामा-
वारकत्वे प्रमाणमस्ति । यदावृणोति तत् घटादिज्ञानेन निवर्तते इति नोक्तदोषः ।
विनिगमकाभावात् सर्वमेवाज्ञानमावृणोति न चेन्नैकमपीति चेत्, किं तद्विनि-
गमनेन । यदावृणोति तस्य ज्ञानान्निवृत्तिरित्यभ्युपगमे दोषाभावात् । यथा यस्य
घटज्ञानप्रागभावस्य प्रतियोगिजनकत्वं तस्य नाश इति परे कल्पयन्ति ।
आवरणाभावे तस्य ज्ञानान्निवृत्त्यसंभवेन सर्वनिवृत्तौ समयान्तरे भ्रमासम्भवेन
घटाज्ञानात्तदज्ञाननिवृत्त्यनुभवेन च एकस्मात् ज्ञानादेकाज्ञानस्यैव निवृत्तेरुचि-
तत्वात् ॥

ननु सर्वमेवावारकमस्तु, ज्ञानं तु एकमेवाज्ञानं स्वभावान्निवर्तयतु ।
त्वयाप्यज्ञाने स्वभावस्य कल्प्यत्वात् । न चैवं सति अवरणस्य सत्त्वात् (त)स-
दापि नजानामीत्यनुभवप्रसङ्ग इति वाच्यम् । परोक्षविषयाज्ञानस्येव तद्विषयज्ञान-
काले तस्याप्रतीतेरिति चेत् , तिष्ठतु तावदयमन्तःकलहः । सिद्धं तावदवस्थानाम-
नादित्वम् । नास्तीत्यादिव्यवहारस्य मूलाज्ञानादिवैकस्मादप्युपपत्तेर्न तत्र
सम्भूय कारणत्वं कल्पनीयमिति न युगपत् सर्वेषामावारकत्वम् ॥

ननु अविषयस्याज्ञानस्यानिवृत्तौ मुक्तावप्यज्ञानं स्यात् , न च तत्त्व-
ज्ञानात् प्रागेव सर्वावस्था नश्यन्तीति प्रमाणमस्तीति चेत्, न—तथाप्यनावारका-
ज्ञाने प्रमाणाभावात् । किञ्च, ब्रह्मसाक्षात्कारो हि निखिलप्रपञ्चमूलाविद्या-
निवृत्तिसहायेन तदधीनसत्ताककार्याकार्यप्रपञ्चमात्रं निवर्तयदविषयाविद्यावस्था

**सहाज्ञानेन अध्यासस्य निवृत्तिः दृष्टद्वारेण कल्प्यते इति। नैष दोषः— तत्त्वावभासविरोधिनः अग्रहणमिथ्याज्ञानादेः तत्त्वज्ञानेन निवृत्तिदर्शनात् इहापि तत्त्वावभासविरोधितयैव भावरूपाज्ञानादेः कल्प्यमानत्वात् तस्य ब्रह्मज्ञानात् निवृत्तेः उपपत्तेः। न च आवरणपक्षोक्तदोषप्रसङ्गः; विषयव्यावृत्तरूपान्तरस्य भ्रान्तिज्ञानेन अवगमात् ॥**

---

ता. ननु अवगते शुक्तिशकले तत्र विपर्यासः अवगम्यते ? उत अनवगते ? नाद्यः, विपर्यासस्यैव निवृत्तिप्रसंगात्। न द्वितीयः, विशेषणानवगतौ विशिष्टस्यापि अनवगतिप्रसंगात् इति; अत्राह—**न च** इति। इदमाकारस्यापि साक्षिचैतन्ये प्रतिभासोपपत्तेः न विपर्यासासंभवः इति भावः। **विषयव्यावृत्तेति।** इदमंशावच्छिन्नस्य रजताख्यरूपान्तरस्य। **भ्रान्तिज्ञानेन** इति। भ्रान्तिज्ञानस्य अन्तःकरणपरिणामाविद्यापरिणामाभ्यां संघटितरूपतया इदमाकारपरिणतान्तःकरणवृत्तिप्रतिबिम्बितचैतन्येन अवभाससंभवात् न विपर्यासनिवृत्तिप्रसङ्गः

---

भा. अपि निवर्तयेत्। न हि तेन दृष्टान्तेन घटादिज्ञानस्य तथात्वं कल्पयितुं शक्यम्। अनावारकाज्ञानानां तन्निवर्त्याज्ञानाधीनसत्ताकत्वाभावात्। अन्यथा मूलाज्ञानकार्यमपि जीवत्वादिकं ब्रह्मसाक्षात्कारो निवर्तयतीति घटादिज्ञानमपि तत् किमिति न निवर्तयेत्। तस्मादग्निमभ्रमादिदर्शनेन घटज्ञानस्यावारकाज्ञानमात्रनिवर्तकत्वस्वभाव एव कल्प्य इति नावस्थानां कार्यत्वं कल्प्यम्। न चैवमेकाज्ञानवादहानिः। स्वतन्त्राज्ञानस्यैव एकत्वात् कार्याज्ञानाभ्युपगमेऽपि तद्दोषस्य सत्वात्। अवस्थानामज्ञानत्वाभावे तासां रजतादिकारणत्वाद्ययोगेन न किञ्चित्तत्र प्रमाणमिति सर्वमवदातम् ॥

एकज्ञानपक्षे शङ्कितं दोषं परिहरति–**नैष दोष इति। अग्रहणेत्यादि** परीत्योक्तम्। ब्रह्म न जानामीत्यज्ञानं ब्रह्मज्ञानविरोधित्वेनैवानुभवसिद्धम्। तथा च यत् यद्विरुद्धं तत्तन्निवर्त्यमिति लोके अन्धकारे दृष्टमित्यज्ञानमपि दर्शनबलात्तन्निवर्त्यमिति निश्चीयत इति भावः ॥

ननु किमात्मन्यज्ञानस्यावरणम् ? प्रकाशस्यानुदयः, नाशो वा, कार्यप्रतिबन्धो वा, विषयासम्बन्धो वा, अस्तीत्येवमादिव्यवहाराभावो वा, एतद्व्यवहारायो-

**नन्वेवं आत्मन्यपि अज्ञाननिमित्तं आवरणकृत्यं नास्ति। कथम्?। न तावत् आवरणं प्रकाशविलोपः; स्वरूपस्य अनपायात्। नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः; ज्ञानस्य विषयावभासात्मना उदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात्। तस्मात् नैव आत्मन्यपि भावरूपमज्ञानं**

---

ता. इति भावः। **स्वरूपस्य अनपायात्**—प्रकाशस्य नित्यात्मचैतन्यरूपतया अनपायात् इत्यर्थः। **स्वकार्ये प्रतिबन्धप्रतीक्षयोः अभावात्** इति। स्वकार्ये—विषयप्राकट्यजनने न प्रतिबन्धः। 'जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपायाः' इत्यङ्गीकारात्। न च प्रतीक्षा—स्वातिरिक्तसहकारिसमवधानापेक्षा। (सापि नास्ति)

---

भा. ग्यत्वं वा, नास्तीत्येवमादिव्यवहारो वा, तद्योग्यता वा?। नाद्यद्वितीयावित्याह—**न तावदिति**। **विलोपः**—अभावः। स च अनुदयो नाशो वेत्यर्थः। **स्वरूपस्यानपायादिति**। स्वरूपत्वादेव प्रागभावविनाशयोरसम्भवादित्यर्थः। न चागन्तुकप्रकाशस्याभावोऽविरुद्ध इति वाच्यम्। स्वरूपातिरिक्तप्रकाशस्याभावात्। तस्य प्रकाशाविषयत्वेन तद्विनाशेऽपि स्वरूपप्रकाशेन अवभाससम्भवादिति भावः॥

तृतीयं दूषयति—**नापीति**। प्रकाशस्य हि कार्यं प्राकट्यं अविद्यानिवृत्तिर्वा। नाद्यः, ब्रह्मणि प्रकाशाधीनप्राकट्यानङ्गीकारात्। न द्वितीयः, अविद्यायाः स्वनिवृत्तिप्रतिबन्धकत्वे अनिर्मोक्षप्रसङ्गादिति भावः। चतुर्थं दूषयति—**ज्ञानस्येति**। **उदितस्य**—उत्पन्नस्य सत इत्यर्थः। **विषयावभासात्मना** विद्यमानस्य ज्ञानस्य विषयेणासम्बन्धाभावादित्यर्थः। पञ्चमं दूषयति—**स्वकार्ये इति**। विषयप्रकाशे सत्यभिवदनव्यवहारे तस्याविद्याप्रतिबन्धतन्निवृत्तिप्रतीक्षयोरयोगादित्यर्थः। अत एव न षष्ठः। विषयप्रकाशे सत्यज्ञानाधीनतदयोग्यत्वस्यासम्भवात्, आत्मनि तदयोग्यत्वे वा अस्वप्रकाशत्वप्रसङ्गात्, अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वस्यैव स्वप्रकाशशब्दार्थत्वादिति भावः। नापि सप्तमः। सुषुप्त्यादौ तदभावात्। न चाष्टमः (नापि चरमः)। तस्याप्यावरणाकार्यत्वादित्यभिप्रेत्योपसंहरति—**तस्मादिति**॥

अस्ति तावत् सर्वेषां नाहंब्रह्मेति व्यवहारः अहंब्रह्मेति व्यवहाराभावश्चेति विपरीतव्यवहारदर्शनेन तद्योग्यता स्वरूपव्यवहारादर्शनेन तदयोग्यता चेति धर्मविशेषः। तदेव च आवरणमनवभास इत्यादिशब्दैरभिधीयते। न च पुरुषान्तरसंवेदनवत् ब्रह्मणो जीवभेदादेव भेदव्यवहारोऽभेदव्यवहाराभावश्चेति वाच्यम्। तस्य जीवस्वरूपतया श्रुतिन्यायसिद्धत्वात्। न चैवं विद्यमानेऽपि तस्मिन् घटादाविव प्रमाणाभावादेव स इति वाच्यम्। तत्स्वप्रकाशताया अपि सिद्धत्वात्। तस्मात् भ्रमविषयशुक्तिकादिविशेषस्येव ब्रह्मणोऽपि स्वप्रकाशतया यथावत्स्वरूपव्यवहारसामग्र्यां सत्यामपि विपरीतव्यवाहारादिकार्यदर्शनोन्नेयतद्योग्यताविशेषः कुतश्चित् स्वरूपप्रकाशप्रतिबन्धाद्भवतीति तदेवावरणं तत्प्रकाशप्रतिबन्धकं चाज्ञानादन्यन्न सम्भवतीति तदज्ञानमेव। योग्यतारूपधर्मविशेषश्चानादिरिति न तत्पूर्वमावरणापेक्षा ॥

भा.

न च स्वप्रकाश आत्मनि तद्विपरीतव्यवहारयोग्यत्वादि विरुद्धमिति वाच्यम्। प्रमाणतः स्वप्रकाशतया प्रतिपन्नेऽपि प्रतीचि तद्विपरीतव्यहारादिदर्शनेन कल्पिताया अपि योग्यतायाः अनीले नभसि नीलिम्न इव मिथ्यात्वेनाविरुद्धत्वात्। न चैवमपि गुञ्जापुञ्जारोपाधिष्ठानदहनादिवत् स्वप्रकाशे ब्रह्मण्यनवभासारोपेऽपि ततः तदुचितं कार्यं स्यादिति वाच्यम्। किं तदुचितं कार्यम्? अविद्यानिवृत्तिर्वा नास्तीति व्यवहारोच्छेदो वा अनवच्छिन्नानन्दब्रह्माहमस्मीति व्यवहारो वा पुत्रादिक्षुद्रसुखाभिलाषाभावो वा। न सर्वथापि।

अविरोधाच्चिता कार्यं नाविद्याप्रतिबन्धतः।
न तृतीयश्चतुर्थोऽपि नाप्राप्तत्वभ्रमो यतः ॥

ननु एवमपि घटाद्यज्ञानं नावारकम्, प्रमाणवैकल्यादेव घटादेरग्रहणात्, तदवच्छिन्नं चैतन्यमपि तदाकारवृत्त्यनुदयदशायां पुरुषान्तरसंवेदनवद्भिन्नमिति न तत्रावारकमज्ञानं कल्प्यमिति चेत्, न—इदमाकारवृत्तिदशायां शुक्त्यादिचैतन्याभेदेऽपि तदनवभासदर्शनात्। न च तत्रेदमंशावच्छिन्नचैतन्याभेद एव न तु शुक्तित्वावच्छिन्नचैतन्याभेदोऽपीति वाच्यम्। न हि शुक्तित्वमिदन्त्वं वा स्वाश्रयैकदेशे वर्तते। किन्तु व्याप्यैव। तथैवानुभवात्। तथा च शुक्त्यवच्छिन्नचैतन्यमिदमाकारवृत्त्या अवच्छिन्नमिति तदपि प्रमातृचैतन्याभिन्नमेव।

29 - 1 **अनुपयोगात् इति; तत्राह**—प्रत्यगात्मनि तु चितिस्वभावत्वात् स्वयंप्रकाशमाने
29 - 3 —**इत्यादिना** तस्य अनवभासः—**इत्यन्तेन ग्रन्थेन** ॥

**अयमर्थः—'अस्ति प्रकाशते' इत्याद्यभिज्ञादिव्यवहारपुष्कलकारणे सति 'नास्ति न प्रकाशते च' इति योऽयं आत्मतत्त्वालम्बनो व्यवहारः, सः भावरूपेण केनचित् आत्मनि आवरणमन्तरेण नोपपद्यते, सति पुष्कलकारणे असति च आवरणे सन्निहिते घटे 'प्रकाशते' इत्यादिव्यवहारदर्शनात्। अतः 'नास्ति ब्रह्म न प्रकाशते च' इति व्यवहारः अन्यथानुपपत्त्या भावरूपमज्ञानं गमयति इति अर्थापत्तिः अनुमानं वा समुदायार्थः ॥**

**तत्सिद्ध्यर्थमात्मनि 'प्रकाशते' इत्यादिव्यवहारं प्रति पुष्कल-**
29 - 1 **कारणतां दर्शयति**—चितिस्वभावत्वात् **इति। किं तर्हि आवरणमिति?**
29 - 2 **तत्राह**—ब्रह्मस्वरूपानवभासस्य **इति। 'नास्ति न प्रकाशते' इति व्यावहारा-**

---

ता. जन्मातिरिक्तव्यापारानङ्गीकारात् इत्यर्थः। ननु 'आत्मा नास्ति न प्रकाशते' इति व्यवहार एव नास्ति, तस्य सर्वलोकप्रसिद्धत्वात् इति; अत आह—**आत्मतत्त्वालम्बनः** इति। स्वरूपेण प्रसिद्धत्वेऽपि अशनायाद्यतीतरूपेण अप्रसिद्धत्वात् अस्त्येव तथाभूतो व्यवहारः इत्यर्थः। **अनुमानं वा** इति। अत्रायं प्रयोगः—उक्तो व्यवहारः आत्मनि भावरूपावरणनिमित्तः 'अस्ति प्रकाशते' इति व्यवहारपुष्कलकारणे सति तद्विपरीतव्यवहारत्वात्, यन्नैवं तन्नैवम्, यथा–'प्रकाशते घटः' इति व्यवहारः इति। हेतोः विशेषणासिद्धि-माशङ्क्य परिहरति इत्याह—**तत्सिद्ध्यर्थं** इति। अनवभासमेव व्याचष्टे-**नास्ति**

---

भा. परं तु तदाकारापरोक्षवृत्त्यभावान्नाभिव्यक्तमिति न ततस्तदविद्या निवर्तते ॥

तस्मादहं ब्रह्मेति व्यवहारसामग्रीसम्पन्नः प्रत्यगात्मा अहं ब्रह्मेति व्यवहारप्रतिकूलधर्मवान्, तत्सामग्र्यां सत्यां तदभाववत्त्वात्, तद्विपरीतव्यवहारवत्त्वाद्वा, यदेवं तदेवम्, यथा भ्रमगृहीतशुक्तिका। न च अनावारकाविद्याश्रयत्वेन अर्थान्तरता, तस्याः वर्णितव्यवहारप्रतिकूलत्वाभावादित्यनुमानादेवाविद्याकृतमावरणं सिद्ध्यतीत्यभिप्रेत्य प्रथमं **टीका**तात्पर्यमाह—**अयमर्थ इत्यादिना** ॥

लम्बनयोग्यत्वस्य व्यवहारकार्यदर्शनादेव कल्प्यमानस्य इत्यर्थः। न च अधिष्ठानप्रतिबन्धमन्तरेण तत्र विपर्ययकार्यमुपपद्यते। अविद्यासम्बन्धादेव आवरणस्य अनिरूपिताकारता च युक्ता इति भावः। ननु प्रमाणवैकल्यादेव अत्राप्यग्रहणमिति; नेत्याह—अनन्यनिमित्तत्वात् इति। 29-2
अतः अनवभासात् पुष्कलकारणे सति, परिशेषात् इदमायातं इत्याह —तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव तस्यानवभासः इति। मूर्त- 29-2
द्रव्यान्तरस्य असम्भवात् इति भावः। अतः कार्यदर्शनोन्नेयं आवरणकृत्यं विपर्ययं च आत्मनि कुर्वाणं अज्ञानं भावरूपमेव उभयकारणत्वान्यथानुपपत्त्या कल्प्यते इत्याह—अतः सा प्रत्यक्चिति इति॥ 29-3

**ननु अग्रहणमिथ्याज्ञानतत्संस्कारेभ्यः अन्यत् अज्ञानं नाम न**

---

इति। तत्सद्भावे प्रमाणमाह—व्यवहारकार्येति। कार्यदर्शनस्य कथं कल्पकत्वं इति; अत आह—न च इति। यदुक्तम् 'न तावदावरणं प्रकाशविपरिलोपः' इत्यादि; तत्राह—अविद्येति। यत् प्रतिभासते दुर्निरूपश्च सैव अविद्या इति भावः। अनात्मनीव आत्मन्यपि प्रमाणवैकल्यादेव अनवभासः किं न स्यात् इति शङ्कोत्तरत्वेन उत्तरं अवतारयति—ननु इति। यस्य हि प्रकाशः प्रमाणनिमित्तः तस्य अप्रकाशः तद्वैकल्यनिमित्तः स्यात्, आत्मनस्तु न प्रमाणायत्तः प्रकाशः तेन न तद्वैकल्यनिमित्तः अप्रकाशः इत्यर्थः। अर्थापत्तेः अन्यथोपपत्तिं परिहरति—मूर्तद्रव्येति। एतावता भावरूपाज्ञानसिद्धिः कथमिति; अत आह—अतः कार्येति॥ ता.

अत्र भास्करीयस्य चोद्यं उद्भावयति—ननु इति। अज्ञानं इत्यत्र नञो यद्यभावोऽर्थः, तदा अग्रहणमेव अज्ञानं स्यात्। अथ विरोधी तदा भ्रान्तिः स्यात्। यदा अन्यः तदा भ्रान्तिज्ञानसंस्कार एव स्यात्। ततः तेभ्यो-

---

ननु भावरूपाज्ञानमपि विशेषदर्शनदशायामात्मप्रकाशं न प्रतिबध्नातीति विशेषदर्शनाभावो वाच्यः। तथा च स एवावारकोऽस्तु। एवमहं मनुष्य इत्यादिविपर्ययस्तज्जन्यसंस्कारोऽदृष्टं वा तदावरणमस्तु किमज्ञानेनेति शङ्कते—नन्विति। अनन्यनिमित्तत्वादित्युक्तपरिशेषासिद्धिं वा शङ्कते—नन्विति। भा.

पश्यामः । ते एव च जीवस्य स्वयंप्रकाशमानमपि ब्रह्मस्वरूपावभासं
30 - 1 प्रतिबध्नन्ति इति ; नेत्याह —सुषुप्तादौ च इति । तत्रापि अविद्याशक्तिः संस्कारशेषं तिष्ठति, न संस्कारादय एव अज्ञानं इत्यर्थः । कथम् ? । न तावत् सुषुप्तादौ स्वयम्प्रकाशब्रह्मस्वरूपानवभासः पुरुषान्तरसंवेदनवत् द्रष्टृभिन्नत्वात् इति शक्यं वक्तुम् । एकत्वश्रुतेः । नापि मिथ्याज्ञान-प्रतिबन्धात् । तत्र तस्य अभावात् । नापि तत्संस्कारप्रतिबन्धात् । भ्रान्ति-संस्काराणां तत्त्वावभासप्रतिबन्धकत्वाभावात्, सत्स्वपि रजतभ्रमसंस्कारेषु शुक्तिकावबोधदर्शनात् । नापि अग्रहणप्रतिबन्धात् । स्वरूपग्रहणस्य नित्यत्वात्, स्वयंप्रकाशमाने संवेदने तद्विषयकादाचित्काग्रहणस्य अप्रति-

---

ता. ऽन्यत्वमज्ञानस्य न सिध्यति । अन्यत्वे वा अज्ञानस्य तत्त्वमेव न स्यात् इति शङ्कार्थः । ननु कथं न पश्यसि ; ब्रह्मरूपेण अनवभासान्यथानुपपत्त्यैव तस्य प्रतीयमानत्वात् इति ; अत आह—**ते एव** इति । उक्तार्थपरतया ग्रन्थं योजयति—**तत्रापि** इति ॥

ननु प्रतिज्ञामात्रमेतत् न युक्तिरुक्ता इति पृच्छति—**कथं** इति । स्वयं-प्रकाशस्यापि ब्रह्मणः पुरुषान्तरसंवेदनवत् विनैव प्रतिबन्धं अनवभासः किं न स्यात् इति शङ्कां पृथङ्निराचष्टे—**न तावत्** इति । तथापि मिथ्याज्ञानेनैव अलं किमज्ञानेन इति ; अत्राह—**नापि** इति । मिथ्याज्ञानमेव प्रतिबन्धो मिथ्याज्ञानेन वा प्रतिबन्धः । तत्रैव हेतुमाह—**तत्र तस्याभावात्** इति । किमग्रहणशब्देन स्वरूपग्रहणस्यैवाभावो विवक्षितः ? उत स्वरूपविषयागन्तुक-ग्रहणस्य ? नाद्य इत्याह—**स्वरूपेति** । नापि द्वितीयः इत्याह—**स्वयंप्रका-**

---

भा. सुषुप्तौ भ्रमासम्भवाद्विद्यमानानामपीतरेषां स्वरूपचैतन्यावरणायोग्यत्वात्तदा अज्ञानमेवावारकमित्यन्यत्रापि तथेत्यभिप्रेत्याह—**नेत्याहेति** ॥

**भ्रान्तिसंस्काराणामिति** । ननु संस्कारस्य बहिरिवाप्रतिबन्धकत्वे कथमापातब्रह्मसाक्षात्कारान्नाविद्यानिवृत्तिः, असम्भावनादिपदेनापि विपरीत-संस्कारस्यैवाभिधेयत्वादिति चेत्, न—सत्तावधारणवृत्तिसाक्षात्कारविरोधितया अविद्यानिवृत्तिविरोधित्वेऽपि तस्य स्वरूपप्रकाशाप्रतिबन्धकत्वात् । न हि तेन स्वरूपप्रकाशस्यानुत्पादो विपरिलोपो वा भवति । न वा प्रागुक्तयोग्यता ।

बन्धकत्वात्। **नापि कर्मणां स्वरूपावभासविरोधिता। सर्वदा अणुमात्रस्यापि चैतन्यस्य अनवभासप्रसङ्गात्। अज्ञानेऽपि तुल्यं इति चेत्, न-तस्य स्वविषयचैतन्यावभासं प्रति अप्रतिबन्धकत्वात्। न च अज्ञानस्येव कर्मणां नित्यवत् साक्षिचैतन्येन अवभास्यता, येन तदवभासकतया साक्षिचैतन्यमप्रतिबद्धं प्रकाशेत। न च कर्माणि स्वाश्रयावभासविरोधीनि इति प्रमाणमस्ति, संस्कारत्वाच्च कर्मणां भ्रान्तिसंस्कारवत् अप्रतिबन्धकता। तस्मात् सुषुप्त्यादौ स्वरूपानवभासव्यवहारः**

ता. शेति। सन्तु तर्हि कर्माण्येव प्रतिबन्धकानि इति; अत आह—**नापि** इति। कर्मणां केवलसाक्षिवेद्यत्वाभावात् तत्साधकतया साक्षिणः स्फुरणं न सिध्येत् इति मत्वा उक्तम्—**अणुमात्रस्यापि** इति। अज्ञानेऽपि साम्यमाशङ्क्य वैषम्यं दर्शयति—**अज्ञानेऽपि** इत्यादिना। कर्मणाममि साक्षिवेद्यत्वं किं न स्यात् इति; अत आह—**न च** इति। यदि कर्मणां साक्षिवेद्यत्वं तदा सुखादिवत् नित्यं अपरोक्षतया प्रतिभासः स्यात् न चैतदस्ति इति भावः। प्रमाणाभावादपि कर्मणां न प्रतिबन्धकत्वं इत्याह—**न च कर्माणि** इति। न केवलं प्रमाणाभावः विपरीतेऽपि प्रमाणमस्ति इत्याह—**संस्कारत्वाच्च** इति। परिशेषात् इदमायातं इत्युपसंहरति—**तस्मात्** इति॥

भा. परमार्थयोग्यतायाः स्वप्रकाशे असंभवात्। अनिर्वचनीयरूपा तु सा अविद्याधीनैव। अतो नजानामीत्यनुभवाविषयः संस्कारो बहिरिव न स्वरूपप्रकाशस्यापि प्रतिबन्धक इति भावः। **नापि कर्मणामिति**। तेषामपि संस्कारतुल्यत्वादित्यर्थः॥

दूषणान्तरमाह—**अणिवति**। निरंशचैतन्यस्य परमते कथमपि भेदासंभवेन कर्मभिरावृतत्वे तस्यानावृतांशाभावादहङ्कारादिसाक्षिचैतन्यमपि न प्रतीयादित्यर्थः। सिद्धान्ते अनिर्वचनीयभेदसद्भावेनावृतत्वानावृतत्वोपपत्तेर्न कर्मसाम्यमिति विशेषमभिप्रेत्याह—**नेति**। किञ्च यत् यत्प्रकाश्यं न तत् तदावारकम्। अन्यथा स्वस्यैवावभासायोगात्। अतोऽविद्या स्वावभासानुपयुक्तानवच्छिन्नान[न्द]प्रकाशप्रतिबन्धकत्वेऽपि न स्वावभाससाक्षिप्रतिबन्धिकेत्याह—**तस्य स्वविषयेति**॥

**न चेति**। कर्माणि न परमते साक्षिभास्यानि। तस्यैवाभावात्।

अग्रहणमिथ्याज्ञानतत्संस्कारकर्मभ्यः अन्यदेव किंचित् प्रतिबन्धकं अज्ञानं कल्पयतीत्यर्थः। ननु द्रव्यान्तरमेव प्रतिबन्धकं कल्प्यतां किमज्ञानकल्पनया? इति; नैतत्—ब्रह्मज्ञानात् प्रतिबन्धनिवृत्तिमन्तरेण स्वविषयावभासायोगात्, ज्ञाननिवर्त्यस्य च अज्ञानत्वात् ॥

अत्र कश्चित् भेदाभेदाभ्यां सर्वसंकरवादी वेदान्तार्थगहनसम्प्रदायहीनः दुर्जनरमणीयां वाचं जल्पति—न किल अग्रहणमिथ्याज्ञानतत्संस्कारेभ्यः अन्यत् सकलसंसारबीजभूतं अवस्थात्रयेऽपि अनपायि आसंसारविमोक्षात् दण्डायमानमज्ञानं नाम अस्ति, किं तु भ्रान्तिज्ञानं अग्रहणं वा अज्ञानं इति ॥

ता. 'ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत'

इति स्मरणात् तमोगुण एव प्रतिबन्धोऽस्तु, इति शङ्कते—**ननु** इति। अस्तु तन्निवृत्तिरिति; अत आह—**ज्ञाननिवर्त्यस्य च** इति ॥

भेदाभेदाभ्यां संकरवादित्वं भाट्टस्याप्यस्ति, इत्यत उक्तम्—सर्वेति। जल्पने कारणमाह—**वेदान्ते**ति। ननु वेदान्तसंप्रदायोऽपि तस्यास्ति वेदान्तव्याख्यातृत्वात् इति; अत आह—**गहने**ति। तर्हि तस्य जल्पनं व्यर्थं इति; अत आह— **दुर्जने**ति। जल्पनप्रकारमेव आह—**न किल** इति। 'संसारबीजभूतं' इत्येतावदुक्ते रागद्वेषयोः प्राप्तौ आह—**सकले**ति। अहंकारोऽपि तादृश एव इति; अत आह—**अवस्थात्रये** इति। ननु आत्मापि उक्तविशेषोऽस्ति इति; अत आह—**आ संसारे**ति। संसारविमोक्षेऽप्यात्मा वर्तते न तु अर्वागेव इत्यर्थः। धर्माधर्मौ तादृशौ स्तः इति; अत आह—**दण्डायमानं** इति। सुषुप्तौ ब्रह्मस्वरूपानवभासः अग्रहणादेव सिध्यति जाग्रत्स्वप्नयोस्तु मिथ्याज्ञानात् इत्यभिप्रेत्य भ्रान्तिज्ञानं अग्रहणं वा इत्युक्तम्, न तु संस्कारस्य अज्ञानत्वमुपेक्ष्य इति मन्तव्यम् ॥

भ्रान्तिज्ञानस्य अज्ञानत्वे निरस्ते तत्संस्कारस्याप्यर्थात् अज्ञानत्वं निरस्तं भवति, अग्रहणस्य पुनः तत्त्वग्रहणप्रागभावस्य संसारकारणत्वाभावात्

भा. सिद्धान्तेऽपि न तेषां केवलसाक्षिभास्यत्वमित्यर्थः। **प्रमाणमस्तीति**। अज्ञाने तु तादृशे नजानामीत्यनुभवादि प्रमाणमित्यर्थः। **द्रव्यान्तरं** तमोगुणः ॥

अयं प्रष्टव्यः—केयं भ्रान्तिः? इति। अहंकारादिशरीरपर्यन्ते अनात्मनि आत्मबुद्धिः इति चेत्; अहो विस्मरणशीलता सर्वत्र सङ्कीर्णचेतसः। 'खण्डो गौः' इत्यादिभेदाभेदप्रत्ययं प्रमाणमुपपादयन् 'अहं मनुष्यः' इति प्रत्ययं भेदाभेदविषयं किमिति उपेक्षसे। 'नाहं मनुष्यः ब्रह्मास्मि' इति प्रत्ययसामर्थ्यात् इति चेत्, तन्न—'नायं खण्डो गौः, किं तु मुण्डो गौः' इति प्रत्ययेऽपि खण्डमुण्डाभ्यां गोत्वस्य अभेदवत् शरीरब्रह्मभ्यां जीवस्य अभेदप्रत्ययस्यापि प्रामाण्योपपत्तेः। इदंरजत[मिति]वत् भ्रान्तिः इति चेत्, न—'खण्डो गौः' इत्यत्रापि तथात्वप्रसङ्गात्। 'नायं खण्डो गौः, किं तु मुण्डः' इति

---

अज्ञानत्वं निरस्तं भवति इति परिशेषात् अस्मदभिमतमेव अज्ञानं लभ्यते इति मत्वा भ्रान्तिमेव दूषयितुं आह सिद्धान्ती—**केयं** इति। पूर्ववादी स्वपक्षे भ्रान्तिं उपपादयति—**अहंकारादी**ति। 'अहं मनुष्यः' इति प्रत्ययस्य भ्रान्तित्वं न सिध्यति भेदाभेदवादिनः इति दूषयति—**खण्डो गौः** इति॥ ता.

ननु प्रतिपन्नोपाधौ निषेधप्रतियोगित्वात् मिथ्यात्वं इति शङ्कते—**नाहं** इति। एवंभूतप्रत्ययः 'खण्डो गौः' इत्यादिप्रत्ययेऽपि तुल्यः इति परिहरति—**नायं** इति। प्रतिपन्नोपाधौ गोत्वे खण्डस्य निषेधो नास्ति, इह तु आत्मोपाधौ एव प्रतिपन्ने 'नाहं मनुष्यः' इति मनुष्यत्वस्य निषेधात् प्रतिपन्नोपाधौ निषिध्यमानरजतविषयप्रतीतिवत् भ्रान्तिरेव इति शङ्कते—**इदं** इति। तर्ह्यत्रापि प्रतिपन्नोपाधौ निषेधोऽस्ति इत्यभिप्रेत्य परिहरति—**न—खण्डः** इति। ननु गोत्वोपाधौ खण्डस्य निषेधो नास्ति किन्तु मुण्डे एव इत्याशंक्य आह—**नायं** इति। मुण्डे खण्डत्वस्य प्राप्त्यभावेन निषेधायोगात्। विद्यमानस्यैव खण्डाभावस्य मुण्डे विधानमेव एतत् न निषेधः इति चेत्, मैवम्—'नायं खण्डो गौः अपि तु मुण्डः' इति गोत्वविशिष्टे एव मुण्डे खण्डाभावविधानात् गोत्वविशिष्टे एव व्यक्तिविशेषे 'खण्डो गौः' इति खण्डत्वविधानात् एकस्मिन्नेव विशेषणीभूतगोत्वोपाधौ भावाभावप्रतीतिरस्ति इति भ्रान्तित्वप्रसक्तिः अत्रापि तुल्यैव इत्यर्थः॥

व्यक्त्यन्तरे खण्डस्य गोत्वोपाधौ निषेधप्रत्ययसामर्थ्यात्। तत्र व्यवहारानुच्छेदात् प्रामाण्यं इति चेत्; तत् 'अहं मनुष्यः' इत्यत्रापि तुल्यम्। मोक्षावस्थायामपि सर्वात्मत्वात् तत्र सर्वशरीरेन्द्रियाद्यभिमान-व्यवहारानुच्छेदात्। जातिव्यक्ति गुणगुणि कार्यकारण विशिष्टस्वरूप अंशांशि सबन्धाः यत्र विद्यन्ते तत्र भेदाभेदौ, न शरीरात्मनोः, तेषामभावात् इति चेत्, तर्हि शरीरशरीरिसम्बन्धोऽपि गुणगुण्यादिवत् भेदाभेदनिमित्तं किं न स्यात्? अन्यथा सर्वसङ्करवादितया क्षपणक-शिष्यता चिरकालसमुपार्जिता बाध्येत। अस्ति च चेतनस्वरूपशरीरयोः कार्यकारणभावः, चेतनस्वरूपांशस्य ब्रह्मत्वात्। अतः न ते भ्रान्ति-रस्ति॥

**किं च, भ्रान्तिज्ञानं अन्तःकरणपरिणामश्चेत्, तदा आत्माश्रया**

---

ता. ननु मोक्षावस्थायां व्यवहारोच्छेदः अस्त्येव इत्याशङ्क्य, मैवं इत्याह—**मोक्षावस्थायां** इति। सर्वोपादानकारणभूतेन ब्रह्मणा सर्वज्ञेन अभिन्नस्य जीवस्य सर्वत्वाभिमाने मोक्षावस्थायामपि भेद एव इत्यर्थः। भेदाभेदप्रयोजकाभावात् आत्मनः शरीरेण अभेद एव नास्ति, तेन 'अहं मनुष्यः' इति अभेद-प्रतीतिः भ्रान्तिरेव इति शङ्कते—**जातीति**। किं एकैकः सम्बन्धः भेदाभेदप्रयोजकः? किं वा सर्वे संबन्धाः संभूय प्रयोजकाः? आद्ये प्रयोजक-गौरवस्य त्वयैव अङ्गीकृतत्वात् संबन्धान्तरमपि प्रयोजकं किं न स्यात् इति परिहरति—**तर्हि** इति। सर्वेषां सम्भूय प्रयोजकत्वं व्यभिचारदर्शनात् न संभवति इति बहिरेव निरसनीयम्। सर्वत्र भेदाभेदाङ्गीकारात् शरीरात्मनोः तदनङ्गीकारे अपसिद्धान्तश्च स्यात् इत्याह—**सर्वसङ्करेति**। अङ्गीकृत्य संबन्धान्तरस्यापि प्रयोजकत्वं उक्तम्, भवदभिमतः कार्यकारणसम्बन्धोऽपि अस्ति इत्याह—**अस्ति च** इति॥

ननु ब्रह्मैव शरीरादिकारणम्, न जीवः इति; अत आह—**चेत-नेति**। उचितविषयानिरूपणात् पूर्वं भ्रान्तिः निरस्ता, इदानीं कारणानिरूप-णादपि भ्रान्तिः न संभवति इत्याह—**किञ्च** इति। अस्तु तर्हि आत्मैव

अविद्या न स्यात्। अन्तःकरणपरिणाम एव आत्मनि अध्यस्त इति चेत्, तथापि अन्यथाख्यातिवादिनः संसर्गस्य शून्यत्वात् आत्माविद्यासम्बन्धो न स्यात्। न च आत्मपरिणामो भ्रान्तिः, अपरिणामित्वात्। न च ज्ञानगुणस्य द्रव्यस्य पुनः ज्ञानगुणान्तराकारेण परिणामः सम्भवति, अवान्तरजातीयस्य एकस्मिन् द्रव्ये गुणद्वयस्य युगपत् समवायायोगात्। न हि पटे शौक्ल्यद्वयं युगपत् समवैति। तस्मात् अनादिसिद्धमिथ्याज्ञानानभ्युपगमे न का चित् सर्वसङ्करवादिनः अविद्या सम्भवति। अनादिमिथ्याज्ञानसम्बन्धोऽपि आत्मनि अज्ञानवत् काल्पनिकत्वात् आकाशकार्ष्ण्यवत् आत्मनः कूटस्थतां न विहन्ति इत्यलमतिविस्तरेण। अत्र च प्रत्यक्षानुमानार्थापत्तयः अनादिभावरूपाज्ञाने प्रमाणत्वेन उपन्यस्ताः। तत्र एवंभूतेन कारणरूपेण कार्यरूपेण च नैमित्तिकत्वनैसर्गिकत्वे न विरुद्धे इत्युसंहरति—अतो नैसर्गिकोऽप्यहङ्कार इति। 30 - 2

---

ता. कारणं इति ; अत आह—**न च** इति ॥

ननु आत्मनः अपरिणामित्वं अस्माकमसिद्धं इति ; अत आह—**न च ज्ञानगुणस्य** इति। नित्यज्ञानगुणः त्वया आत्मा स्वीक्रियते, तथा च तस्मिन् तिष्ठत्येव ज्ञाने भ्रान्त्याकारः परिणामो वक्तव्यः, तच्च अयुक्तं अवान्तरजातीयविशेषगुणद्वयस्य अविनश्यदवस्थस्य एकस्मिन् द्रव्ये युगपत् समवायादर्शनात् इत्यर्थः। ननु आत्मनः अज्ञानसम्बन्धे कूटस्थत्वासङ्गत्वव्याघातः इति ; अत आह—**अनादी**ति। ननु तथापि प्रमाणं न पश्यामः इति ; अत आह—**अत्र च** इति ॥

इदानीं भावरूपानाद्यज्ञानसाधनस्य प्रकृतोपयोगितामाह—**तत्रैवं** इति।

---

भा. **न च ज्ञानगुणस्येति**। सुप्तोत्थितस्य सुखादिप्रतिसन्धानानुपपत्त्या सुषुप्तावपि ज्ञानं स्वीकर्तव्यम्। तच्चेन्द्रियादिकं विनापि विद्यमानं न कार्यमिति अनादिज्ञानविशिष्टात्मनि कथं ज्ञानान्तरमुत्पद्येत। यावद्द्रव्यभाविस्वसमानजातीयगुणान्तरावरुद्धे एकमात्रवृत्तिगुणान्तरस्यानुदयात्। अतो न शब्दद्वित्वादौ परमते व्यभिचार इति भावः ॥

30-6 31-3 अन्योऽन्यधर्मांश्च इत्यादिः अध्यासस्वरूपं दर्शयति इत्यन्तो ग्रन्थः स्पष्टार्थः॥

निष्कलङ्कचैतन्यैकताने निरंशानन्दैकरसे अज्ञानादिसाक्षिणि अनादिसिद्धेऽपि अज्ञानाध्यासे कादाचित्कमध्यासमाश्रित्य आह—
31-3 अहमिति तावत् प्रथमोऽध्यासः इति। ननु 'इदं रजतं' इतिवत् अध्यासे 'द्वैरूप्यं अहं' इत्यत्रापि वक्तव्यम्। 'अहं' इति च एकरूपेणावभासते,
31-4 अतो नाध्यासः इति चोदयति—नन्वहमिति निरंशचैतन्यमात्रं इति।
31-5 यथा द्वैरूप्येणाध्याससम्भवः तथा वक्ष्यते इत्याह—यथाध्यस्तांशान्तर्भावः

---

ता. उत्तरग्रन्थसन्दर्भस्य व्याख्येयत्वप्रसक्तौ आह—**अन्योन्येति**॥

ननु अहंकाराध्यासात् पूर्वमेव अनाद्यज्ञानाध्यासे सति कथं अहंकाराध्यासस्य प्राथम्यं इति; अत आह—**निष्कलङ्केति**। तत्र अज्ञानाध्यासस्य पूर्वसिद्धये 'निष्कलङ्के'त्यादिविशेषणत्रयेण तिस्रो युक्तयः कथ्यन्ते। दुरिताख्यकलङ्कसम्बन्धात् चैतन्यविपरिलोपात् वा ब्रह्मरूपेण आत्मनोऽनवभासः इति वक्तुमयुक्तत्वात् अनवभाससिद्ध्यर्थं अज्ञानं कल्पनीयं इति प्रथमविशेषणार्थः। निरतिशायानन्दब्रह्मस्वरूपस्य आत्मनः तथात्वेन अनवभासः निरंशे ब्रह्मणि अंशांशिभावभेदात् इति वक्तुं अयुक्तत्वात् एतदुपपत्त्यर्थमपि अज्ञानमङ्गीकरणीयं इति द्वितीयं विशेषणम्। अज्ञानभ्रान्तिसंशयानां प्रमाणतः सिद्ध्ययोग्यानां प्रतिभासः साक्षिणि अध्यासमन्तरेण अनुपपन्नः तं कल्पयति इति दर्शयति तृतीयविशेषणेन॥

ननु सिद्धे अध्यासरूपत्वे प्राथम्यं विचारणीयम्, अध्यासरूपतैव असिद्धा प्रसिद्धाध्यासवैधर्म्यात्, इति चोद्यग्रन्थस्य तात्पर्यमाह—**ननु** इति। वक्ष्यते इति। अहंकारटीकायां द्वैरूप्यं दर्शयिष्यामः इत्यर्थः॥

---

भा. ननु **इतरेतराविवेकेनेति** भाष्यं व्यर्थम्, **मिथ्याज्ञाननिमित्त** इत्यनेनाध्यासकारणस्य दर्शितत्वात्। निमित्तस्यापि संस्कारस्य अध्यस्येत्यादिना दर्शितत्वात्। न च विवेकाग्रहाभावस्तत्कारणं तेनोच्यत इति वाच्यम्। यौक्तिकविवेकग्रहस्याध्यासाविरोधित्वेन तदभावस्य तदहेतुत्वात्। अपरोक्षविवेकाग्रहाभावस्य तु पूर्वमनाक्षिप्ततया अजिज्ञासितस्यात्र प्रदर्शनायोगादित्याशङ्क्य,

इति । ननु अन्तःकरणेन्द्रियाणामात्मनः पृथक्सत्त्वोपलब्ध्यभावात् अध्यस्ततयैव सिद्धेः आत्मतत्त्वावबोधेन च स्वरूपतो विलयश्रवणात् स्वरूपेण संसृष्टरूपेण च आत्मन्यध्यस्ततया सिद्धिरस्तु, शरीरं पुनरिन्द्रियैरिदंबुद्धिगृहीतत्वात् केवलसाक्षिवेद्यत्वाभावात् उत्क्रान्तेऽप्यात्मनि पृथगुपलब्धेः भूतेषु लयश्रवणाच्च न अध्यस्ततया सिद्धं इति चोदयति —नन्विदमित्यहंकर्तुः इति । शरीरव्यतिरिक्तं ममबुद्धिगृहीतं सुतरामन- 31 - 6
ध्यस्तमित्याह—ममेदमिति च इति । शरीरादिपदार्थस्वरूपस्य मिथ्या- 31 - 7
कल्पितकर्तृभोक्तृप्रमातृदोषसंयुक्तात्मार्थतयैव कार्यतया भोग्यतया प्रमेयतया द्रष्ट्यतया च तादर्थ्येनैव सृष्टत्वात् स्वरूपेणापि मिथ्यात्वं

---

ता. इदंशब्दवाच्यस्य शरीरस्यैव अध्यस्तत्वं किमिति आक्षिप्यते अन्तःकरणेन्द्रियाद्यध्यासस्यापि विप्रतिपत्तिविषयत्वात् इत्याशङ्क्य, तत्र स्फुटयुक्तिसद्भावात् अध्यस्तत्वं सिध्यति न तु शरीरस्य इति मत्वा अन्तःकरणे पृथक्सत्त्वोपलब्ध्यभावमेव आह—**अध्यस्ततया** इति । 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इति आत्मयाथात्म्यावबोधनिवर्त्यत्वश्रवणादपि आत्मनि अध्यस्तत्वं सिध्यति इत्याह—**आत्मतत्त्वे**ति । देहस्य पुनरध्यस्तत्वे न कापि युक्तिः दृश्यते इत्याह—**शरीरं पुनः** इति । यदि आत्मनि अध्यस्तं स्यात् शरीरं ततः पृथक् नोपलभ्येत उपलभ्यते च इदं इत्याह—**उत्क्रान्तेऽपि** इति । आत्मनि अध्यस्तत्वे तत्रैव लयः श्रूयेत, न चैवं श्रूयते, 'पृथिवीं शरीरं' इत्यादिना भूतेषु लयश्रवणात् इत्याह—**भूतेषु** इति । अत्र च कर्तृभोक्त्रादिभिः कार्यभोग्यादीनां यथासंख्यं अन्वयो द्रष्टव्यः ॥

---

भा. सर्वस्मिन्नध्यासे ह्यधिष्ठानाध्यस्यमानयोः सामान्यविशेषभावेन भेदोऽस्ति, अहमित्यत्र तु तदभावान्नाध्यस्तत्वमिति शङ्कां निराकर्तुं भेदाभावेऽप्यहङ्कारोऽनात्मतयाऽध्यस्त एवेति [बोधनार्थं तदिति] भाष्याभिप्रायमाह **टीकाकारः**—**एकते**ति । वस्तुत एकता नास्तीत्यर्थः । **ननु अहमिति निरंशचैतन्यमात्र**मित्यत्र तु प्रतीतेर्द्व्याकारत्वमाक्षिप्य समर्थ्यते इति न पुनरुक्तिः ॥

32-1 स्वप्नदृष्टान्तेन अनुमातुं शक्यते इत्याह—उच्यते यदैवाहंकर्ता इत्यादिना।
32-4 दार्ष्टान्तिकं दर्शयति—एवमहंकर्तृत्वप्रमुखः इति ॥

द्रष्टरि दृश्यावभासस्याविद्याध्यासत्त्वे शास्त्रीयविषयप्रयोजनसिद्धिः
32-5 फलिष्यति इत्याह—अतः तादृग्ब्रह्मात्मानुभवपर्यन्तात् इति। तादृग्ब्रह्मा-
त्मानुभवो बन्धनिवृत्तिश्च उपपद्यते इत्यर्थः। विषयप्रयोजनसिद्धौ
32-7 किमायातम्? इति। शास्त्रारम्भकर्तव्यता सिद्धा इत्याह—तदर्थविषय-
वेदान्तमीमांसारम्भः इति। ते एव—ब्रह्मात्मानुभवबन्धनिवृत्ती अर्थः—
प्रयोजनं विषयश्च यस्य वेदान्तमीमांसारम्भस्य इति विग्रहः।
32-8 'सर्वलोकप्रत्यक्षः' इत्यन्तस्य उत्तरभाष्यस्य तात्पर्यमाह—आह कोऽयं
32-9 इति। इदानीं विभज्य अवान्तरतात्पर्यं कथयति—तत्रापि इति ॥

33-2 लक्षणसम्भावनापरभाष्यमाक्षिपति— यद्येवं इति। किमिति
33-3 लक्षणसम्भावने नापेक्ष्येते इति; तत्राह—न ह्यनिर्ज्ञातरूपं इति। प्रमाण-
मेव हि प्रमेयं अन्यस्य अन्यात्मना अवभासमध्यासं व्यवस्थापयत्
स्वदेशकालोपाधौ सम्भावितरूपं सर्वतोऽव्यावृत्तासाधारणरूपं च व्यवस्थाप-
यति, किं पृथक् लक्षणसम्भावनोपन्यासेन इत्यर्थः। ननु अनुमानादि-
प्रमाणनिर्ज्ञातेषु वस्तुमात्रेषु विशेषलक्षणसम्भावने पृथगपेक्ष्येते इति;
33-4 अत आह—दुःसंपादं इति। विशेषतः इति। असाधारणाकारव्यावृत्ततया
इत्यर्थः। तत्र द्रष्टुरन्यस्य दृश्येन अन्यात्मना अवभासो विद्यते इत्येतावति

---

ता. अध्याससाधनस्य प्रकृतोपयोगितां आह—**द्रष्टरि** इति। अर्थविषय-
शब्दयोः पौनरुक्त्याशङ्कां व्युदस्यति—**अर्थः प्रयोजनं** इति ॥

'अस्यानर्थहेतोः' इत्यादिभाष्यस्यापि अध्यासपरत्वं प्राप्तं व्यावर्तयति
—**सर्वलोकप्रत्यक्षः इत्यन्तस्य** इति ॥

एवं संभावनायाः वैयर्थ्यमुक्त्वा लक्षणस्य वैयर्थ्यमाह—**सर्वतः**
इति। **असाधारणाकारव्यावृत्ततया**। असाधारणाकारेण व्यावृत्ततया
इति यावत्। प्रमाणस्य अध्याससत्तामात्रपरत्वात् तद्विशेषनिर्णयाय
तत्सम्भावनासिद्धये च लक्षणसम्भावने वक्तव्ये इति परिहारग्रन्थस्य तात्पर्यमाह

प्रमाणं वक्ष्यते, न तस्य अविद्याभ्रान्त्यध्यासमिथ्यात्वे, अतः तत्प्रमाणेन न सिध्यति इति परिहरति—उच्यते—न देहेन्द्रियादिषु इत्यादिना ॥ 33 - 4

ननु अन्यस्य अन्यात्मनावभासप्रमाणेनैव तन्मिथ्यात्वमपि सिध्यति प्रमेयैक्यात् इति चोदयति—तत् कस्य हेतोः इति। अननु- 34 - 1
भवादेव इति परिहरति—लोके इति। ननु प्रमाणे सति किमिति 34 - 1
अनुभवाभावः? प्रमाणभेदात् इत्याह—बाधे हि सति इति। बाधानुप- 34 - 2
पत्तिर्मिथ्यात्वे प्रमाणं प्रत्यक्षानुमानव्यवहारानुपपत्त्यागमाः आत्मन्यनात्मावभासे प्रमाणं इति भावः। ननु इहापि बाधनिमित्तमितरेतरविवेकमन्तरेण 'अन्यस्यान्यात्मनाऽवभासोऽयं' इत्यवगन्तुं न शक्यते, अन्यथा स्वस्यैव स्वेनात्मना अवभासः किं न स्यात् इति; नेत्याह—नेह स 34 - 2
विद्यते इति। यौक्तिकज्ञानादिना परोक्षविवेकमाश्रित्य परस्परात्मनाऽवभासनिश्चयः, अपरोक्षबाधस्य भ्रान्तिप्रतिभासोच्छेदिनोऽभावात् न स्पष्टो मिथ्यात्वाध्यवसायः इति भावः। अतः अविद्यात्वस्पष्टीकरणाय लक्षणमेव वक्तव्यं इत्याह—तस्मादध्यासस्य इति। तर्हि लक्षणप्रमाणाभ्यामेव 34 - 2
वस्तुनिर्णयसिद्धेः प्रमाणेनैव असम्भावनानिराकरणात् सम्भावना

---

—तत्र द्रष्टुः इति। 'मिथ्यात्वे' इत्युक्ते मिथ्याशब्दस्य अपह्नववचनत्वा- ता.
शङ्का स्यात्, तद्व्यावृत्त्यर्थमाह—अध्यासेति। 'अध्यासमिथ्यात्वे' इत्येतावति उक्ते नामादिषु ब्रह्मदृष्ट्यध्यासस्य प्रसक्तौ उच्यते—भ्रान्तीति। श्रुतिपरिभापितत्वात् न तत् ज्ञानं भ्रमः, किं तु ध्यानं इति भावः। भाट्टप्राभाकरमतमाशङ्क्य आह—अविद्येति। अविद्या इत्येतावति च उक्ते विद्याभावशङ्का स्यात्, तत् व्यावर्तयति—भ्रान्तीति। तथापि अख्यातिः स्यात्, इत्यत आह—अध्यासेति। तथापि अन्यथाख्यातिः स्यात्, इत्यत आह—मिथ्येति। अत्र च सम्यग्ज्ञानैकनिवर्त्यत्वात् अविद्यात्वम्, प्रतिभासमात्रशरीरत्वात् भ्रान्तित्वम्, सत्यानृतमिथुनीकरणरूपत्वात् अध्यासत्वम्, सदसदादिप्रकारवैलक्षण्यात् मिथ्यात्वम्, इति विशेषो द्रष्टव्यः। चोद्यस्य परिहारमाह—प्रमाणभेदात् इति। प्रमाणभेदमेव दर्शयति—बाधानुपपत्तिः इति ॥

34 - 4 पृथक् न वक्तव्या इति चोदयति—ननु एवमपि इति। सत्यपि
प्रमाणसामर्थ्ये प्रत्यक्षावभासमपि असम्भाव्यमानतया निराकृतमनुभूयते
35 - 2...5 इति अनुभवमेवावलम्ब्य परिहरति—सत्यमेवं इति। औत्पातिकः इति।
अदृष्टव्यतिरिक्तकारणशून्यः इत्यर्थः ॥

ननु प्रमाणेनैव क्वचिदसम्भावना तिरस्क्रियते, यथा आकाश-
गमने पक्षिणाम्। क्वचिदसम्भावनया प्रतिभासः अपरोक्षोऽपि निरस्यते,
यथा सवितृसुष्यादौ। तत्र अत्मनि अनात्मावभासः कं पक्षमव-
36 - 1 लम्बताम्? इति; असम्भावनापक्षमेव इति विशेषं दर्शयति—एवमविष-
येऽसङ्गे इति। अधिष्ठानस्याध्यस्यमानेन सह एकज्ञानविषयत्वं
36 - 2 वक्तव्यम्, तदभावात् न अध्याससम्भवः इत्याह—अविषये इति।
द्रष्टुर्व्यतिरिक्तस्य कृत्स्नस्य कार्यकारणसंघातस्य अध्यासात्मकत्वेन द्रष्टर्येव
काचादिवत् दोषानुषङ्गो वक्तव्यः, तदभावात् न अध्याससम्भवः
36 - 2 इत्याह—असङ्गे इति। अधिष्ठानस्य अध्यस्यमानेन गुणावयवसादृश्यं
36 - 2 वक्तव्यम्, तदभावात् न अध्याससम्भवः इत्याह—केनचिदपि गुणादिना
इति। अधिष्ठानयाथात्म्यावभासः अध्यासविरोधी, तद्भावाच्च न
36 - 3 अध्याससम्भवः इत्याह—निष्कलङ्कचैतन्यतया इति ॥

ननु आत्मन्यविषयादिरूपे अनवगते नासम्भावनाबुद्धिः,
अवगते तु नाध्यास एव तिष्ठति, कुतोऽसम्भावनाबुद्धिः? इति।
नैतत् सारम्—आत्मन्यविषयादिरूपे परोक्षावभासोऽसम्भावनाबुद्धिहेतुः
37 - 1 अपरोक्षावभासोऽध्यासस्य निवर्तकः इत्युक्तत्वात्। उपसंहरति—तत्
37 - 2 माशङ्कि इति। तदुच्यते—तत् त्रितयं लक्षणं सम्भावना प्रमाणं क्रमेणो-
37 - 2 च्यते इत्यर्थः। अनन्तरभाष्यस्य तात्पर्यमाह—आह कोऽयं इति।
37 - 4-3 *तन्त्रेण इति। युगपदर्थद्वयविवक्षया इत्यर्थः। उभयस्य चेह सम्भवात्

---

भा. ननु तन्त्रेण इति टीका कथम्? प्रश्नाक्षेपयोर्विरुद्धरूपत्वेन वाजपेययजेरिव तदयोगात्; तत्राह—युगपदर्थद्वयेति। तथाच पौरुषेयवाक्ये विवक्षा-

---

* अत्र मूले तन्त्रेणेत्यादिकं उभयस्य चेति वाक्यात् परं दृश्यते॥

**इति । लक्षणप्रश्नस्य सम्भावनाक्षेपस्य च सम्भवात् इत्यर्थः । उभयमत्रैव विवक्षितं चेत् सम्भावनैव प्रथमं किं न प्रदर्श्यते? इति; अत्राह —तत्रापि इति । स्वरूपमाख्याय इति प्राथम्ये हेतुः ॥** 37-4...5

**ननु आह इति परोक्तिकथनं किमर्थम्? इति । अर्थनिर्णयप्रधानत्वात् वादकथा शास्त्रम्, तत्र 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' इति वादिप्रति-**

---

परोक्तिकथनस्य तात्पर्यं दर्शयितुं शास्त्रस्य स्वरूपमाह—**अर्थनिर्णये**ति । ता. कस्तर्हि वादः इत्याकाङ्क्षायां अक्षपादसूत्रं पठति — **प्रमाणे**ति । 'पक्षप्रतिपक्षपरिग्रहो वादः' इत्युक्ते जल्पवितण्डयोरपि वादत्वं स्यात्, तद्व्यावृत्त्यर्थमाह—**प्रमाणतर्कसाधनोपालम्भः** इति । प्रमाणतर्काभ्यामेव स्वपक्षस्य साधनं परपक्षस्योपालम्भो यत्र स वादः इति यावत् । जल्पवितण्डे नैवम् । तयोः छलजातिनिग्रहैरपि साधनोपालम्भाङ्गीकारात् । तथा च सूत्रम्—

'यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भः जल्पः'

'स एव स्वपक्षस्थापनाहीनो वितण्डा'

इति । 'सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः' इति विशेषणद्वयं अष्टावेव वादे निग्रहाः इति द्योतनार्थम् । तथा हि—'पञ्चावयवोपपन्नः' इत्युक्त्या न्यूनं अधिकं च इति निग्रहद्वयं लभ्यते । 'सिद्धान्ताविरुद्धः' इत्युक्त्या अपसिद्धान्तनिग्रहः संगृह्यते । 'पञ्चावयवोपपन्नः' इत्युक्ते पञ्च हेत्वाभासाः संगृहीताः । यद्यपि प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्येव अवयवाः तथापि प्रतिज्ञार्थस्य असत्वे सति आश्रयासिद्धिः, हेत्वसिद्धौ स्वरूपासिद्धिः,

---

वशात्तदुपपद्यत इत्यर्थः । **सम्भावनाक्षेपस्य च सम्भवादिति** । उपर्यपि भा. ह्यात्मनोऽधिष्ठानत्वानुपपत्त्यैव सम्भावना आक्षिप्यते । तस्य तदनुपपत्तिप्रतिसन्धानं च **अत्यन्तविविक्तयोरित्यादिभाष्यवाक्यादेव** इन्द्रियाग्राह्यत्वज्ञानाधीनम् । ननु लक्षणभाष्याधीनम् । तत्रात्मस्वरूपविशेषस्याप्रतिपादनात् (अपरिज्ञानात्) । ततश्चाध्यासस्वरूपापरिज्ञानात् तत्प्रश्नस्य, आक्षेपबीजपरिज्ञानादाक्षेपस्य च सम्भवादित्यर्थः ॥

**वादिभ्यां गुरुशिष्याभ्यां वा पक्षप्रतिपक्षपरिग्रहेण क्रियमाणा अर्थनिर्णयावसाना वादकथा अत्र प्रवृत्ता इति दर्शयितुं परोक्तिकथनं** इत्याह—
38-1-2-3 तत्रैवम्भूते विषये **इत्यादिना**। तेनाक्षिप्तम् **आक्षेपरूपं अपि** अभिप्रायं अनेन
39-1 **पृष्टं एव** इति मत्वा प्रत्युक्तं पुनरसौ **आक्षेपरूपेण** विवृणोति इति आक्षेपमवतार्य **इति व्याख्येयम्। ननु शास्त्रेषु** जल्पवितण्डाभिप्रायेणापि

---

ता. उदाहरणासिद्धौ व्यभिचारितया विरुद्धानैकान्तिकयोः प्राप्तिः, उपनयाभावे हेतोः पक्षधर्मत्वासिद्धेः व्यधिकरणासिद्धिः, निगमनाभावे च कालात्ययापदिष्टप्रकरणसमयोः अन्यतरप्रसक्तिः। 'तस्मादग्निमानेव' इत्युक्त्या कालात्ययापदेशस्य निरासः, न पुनः तस्मादन्यस्माद्वा अनग्निमानपीति एवकारेण कथनात् प्रकरणसमसत्प्रतिपक्षयोः निरासः लभ्यते इति ॥

केचित् तु 'पक्षप्रतिपक्षपरिग्रहो वादः' इत्युक्ते वितण्डाप्राप्तौ 'प्रमाणतर्कसाधनोपालम्भः' इति विशेषणम्, जल्पव्यावृत्त्यर्थं च 'सिद्धान्ताविरुद्धः' इति, स्मार्तव्यवहारनिवृत्त्यर्थं च 'पञ्चावयवोपपन्नः' इति विशेषणं इति व्याचक्षते। तत् अस्माभिः तत्सूत्रव्याख्यानपरभाष्यवार्तिकटीकादिविरोधात् न लिखितम्। किञ्च, 'प्रमाणतर्क' इति विशेषणेन कथं वितण्डाव्यावृत्तिः। तत्रापि परपक्षदूषणे छलजातिनिग्रहाणां उत्तरापरिस्फूर्तावनुप्रवेशेऽपि प्रमाणतर्कयोरपि अनुप्रवेशात्। 'सिद्धान्ताविरुद्ध' इति च विशेषणेन कथं जल्पो व्यावर्तनीयः। न हि सदुत्तरस्फूर्तावप्यपसिद्धान्तेन वक्तव्यमिति नियमोऽस्ति। तथा च जयन्तः—

'फलं जात्यादिबोधस्य स्वोक्तौ तत्परिवर्जनम्।
आपत्प्राप्तौ तदाधानं तदुद्भावमराविति ॥' इति ॥

'पञ्चावयवोपपन्नः' इति च न स्मार्तव्यवहारव्यावर्तनं युक्तम्। तत्रापि प्रतिज्ञाहेत्वादेरनुप्रवेशात्। **अर्थनिर्णयेति** विशेषणं वादकथात्वद्योतनार्थम्। 'असौ स्वाभिप्रायं विवृणोति' इति उरत्र अभिप्रायस्य प्रतिपादनात्, 'आक्षिप्तं' 'पृष्टं' इत्युभयत्रापि विषयपरत्वेनान्वयासंभवात् अभिप्रायपरतया पदद्वयं योजयति—**तेन आक्षिप्तं** इति ॥

परोक्तिरस्ति इति; नेत्याह—सर्वत्रैवंविधे इति ॥ 39 - 1

ननु लक्षणवाक्ये लक्ष्याभिधायिनः पदस्याभावात् साकाङ्क्षं वचनमनर्थकं इत्याशङ्क्य, वाक्यं पूरयति—प्रश्नवाक्यस्थितं इति। ननु 39 - 3
परस्य परात्मना अवभासोऽध्यासः इति वक्ष्यति, तत्र कथमेकेनैव परशब्देन लक्षणं पूर्यते? इति; अत्राह—तत्र परत्रेत्युक्ते इति। उत्तरो 39 - 4
ग्रन्थः स्पष्टार्थः। ननु घञादीनां भावे विधानात् कथं कर्मपरतया स्मृतिशब्दो व्युत्पाद्यते? इति; तत्राह—असंज्ञायामपि इति। कर्तृव्य- 39 - 6
तिरिक्तकारकेषु संज्ञायामिव असंज्ञायामपि प्रयोगो भवति 'अकर्तरि च कारके संज्ञायाम्' इति सूत्रात् इत्यर्थः ॥

---

भा॰ **स्मृतिरूपः परत्र पूर्वदृष्टावभास इति**। स्मर्यत इति **स्मृतिः**। स्मृतेः रूपमिव **रूपमस्य**। स्मर्यमाणसादृश्यं च प्रमाणाजन्यज्ञानविषयत्वम्। पूर्वदृष्टः-पूर्वदृष्टसजातीयः। मायिकरजतस्य पूर्वमदृष्टत्वात्। प्रामाणाविषय इति यावत्। अवभास्यत इत्य**वभासो**ऽनुभूयमानोऽर्थः। ननु ज्ञानं शुक्तिरूप्यस्याज्ञानत्वात् ॥

अत्र चाध्यासपदशक्यं तत्स्वरूपं **परत्रावभास** इति। **परत्र** स्वाधिकरणत्वायोग्ये स्वात्यन्ताभावे तद्वति वा ज्ञायमानत्वमिति यावत्। ब्रह्मणोऽपि वृत्तिज्ञानमस्तीति **परत्रेति**। तथाच तस्य स्वात्यन्ताभावादौ ज्ञायमानत्वाभावात्तन्निवृत्तिः। स्वात्यन्ताभावाद्याधारत्वं तु न कस्यापि। अत्यन्ताभावे प्रतियोगिवृत्तित्वस्यासम्भवादित्यसम्भववारणाय तत्र ज्ञायमानत्वमिति। इतरत्तु शुक्तिरजतादिदृष्टान्तेन प्रपञ्चस्य परं प्रत्यध्यस्तत्वसाध्यप्रदर्शनाभिप्रायेण तेन सहोपात्तम्। तत्र परत्र ज्ञायमानत्वमात्रस्य साध्यत्वे घटादेः सत्यत्वेऽप्यन्यथाख्यातिविषयतया अर्थान्तरता स्यात्तदर्थं **पूर्वदृष्टेति**। असद्वादिनोऽसत्वेनार्थान्तरतां परिहर्तुं **परत्रेति**। तथाच तस्याधिकरणाभावादयोग्यत्वाच्च न तत्त्वेनार्थान्तरता। **स्मृतिरूप इति** स्वरूपकीर्तनं बाधपरिहाराय ॥

अथवा **परत्रावभास** इत्यध्यासमात्रस्य स्वरूपलक्षणम्। **स्मृतिरूपः पूर्वदृष्ट** इति प्रातिभासिकाध्यासस्य लक्षणमभिधत्ते। अत्र **पूर्वदृष्टपदं** पूर्वदृष्ट-

**ननु स्मर्यते चेत् रूपशब्दः किमर्थः? अस्मर्यमाणे वस्तुनि**
40 - 1 **उपमासमासार्थः** इत्याह—स्मर्यमाणरूपमिव **इति । ननु किमुपमासमा-**
40 - 2 **सेन? स्मर्यते एव 'इदं रजतम्' इति; नेत्याह**—न पुनः स्मर्यत एव इति। **ननु चक्षुरादिप्रमाणाभावात् परिशेषात् स्मृतिरिति; नेत्याह**—स्पष्टं

---

भा. सजातीयपरमेव। न तु प्रमाणादिविषयत्वपरम्। तच्च प्रमाणजन्यस्मृतिविषयेऽतिव्याप्तिवारणाय। स्मृतिविषयस्य पूर्वदृष्टत्वनियमेनातत्सजातीयत्वात्। अभिनवोत्पन्नघटादेर्ज्ञायमानस्य प्रातिभासिकाध्यासत्वाभावात्तत्रातिव्याप्तिवारणाय **स्मृतिरूप इति**। अत एव घटादेः सर्वस्याध्यस्तत्वमिति मते कस्य व्यावृत्तये **स्मृतिरूप** इत्यादिविशेषणमित्यादिचोद्यमनवकाशम् ॥

**आचार्यास्तु**—यद्यपि **परत्रेति पदं** तदधिकरणत्वायोग्यपरम्। अन्यथा आधेयमात्रेऽन्यवृत्तित्वसिद्धेरिह तदुक्तिवैयर्थ्यात्। तथापि **स्मृतिरूपपदमपि** वर्णितार्थं तद्द्योतकमिति तत्सहितमेव **परत्रेति** पदमुक्तलक्षणपरमित्याहुः। **तस्य विशेषणं स्मृतिरूपत्वमिति**। ननु पूर्वमदृष्टरजतस्य पुंसो रजतभ्रमानुदयात्तत्संस्कारो भ्रमहेतुरिति रजतज्ञानं संस्कारजन्यतया स्मृतिरेव। अतो रजतस्य स्मर्यमाणत्वान्न स्मृतिरूपत्वम्, न वा पूर्वदृष्टत्वविरोधितत्सजातीयत्वमस्ति, न वा स्वात्यन्ताभावादौ प्रतीयमानत्वमित्यसम्भवीदं लक्षणमिति शङ्कते—**ननु स्मर्यते चेदिति**। चेच्छब्दोऽवधारणार्थः। वेदाः प्रमाणं चेदितिवत् ॥

संस्कारो हि रजताद्यर्थ एव हेतुः न तु ज्ञान इति न रजतज्ञानं स्मृतिरिति अभिप्रेत्याह—**अस्मर्यमाणे इति**। ननु ज्ञानसंस्कारो नार्थहेतुः क्वचिदप्यदर्शनादित्यभिप्रेत्याशङ्कते—**नन्विति**। अन्वयव्यतिरेकाभ्यां ज्ञानजन्यसंस्कारस्य क्वचिदर्थेऽपि कारणत्वमित्यभिप्रेत्याह—**नेत्याहेति**। ननु रजतज्ञानस्य कारणान्तराभावेनान्वयव्यतिरेकाभ्यां ज्ञानजन्यसंस्कारस्यैव तद्धेतुत्वं कल्प्यत इति शङ्कते—**ननु चक्षुरादीति**। तत्र रजताभावे तस्यापरोक्षत्वानुपपत्तेस्तत्र तत् स्वीकर्तव्यम्। ततस्तत्संस्कारोऽपि तत्रैव हेतुरिति नापूर्वरजतज्ञानं स्मृतिरिति परिहरति—**नेत्याहेति**। नच रजतस्यापरोक्षत्वे प्रमाणाभावः,

पुरोऽवस्थितत्वावभासनात् इति। यथा अन्यत्र 'इदं रजतम्' 'अयं घटः' 40 - 2
इत्यादावितरेतरसंसृष्टौ सामान्यविशेषावपरोक्षाववभासेते तथेहापि प्रतिभासः। न हि परमार्थेदंरजतसंवेदनाकारावभासन्यूनतामन्तरेण संसर्गसंविदभावः शक्यते वक्तुम् ॥

अर्थाभावे कथमपरोक्षा संविदिति चेत्, न—यथासंविदवभासाधीनत्वादर्थसत्तानिश्चयस्य। न हि अर्थसत्तानिश्चयाधीनः संवित्सत्तानिश्चयः। अर्थसत्तानिश्चयस्यापि निश्चयान्तराधीनत्वप्रसङ्गात्। ननु 'नेदं रजतम्' इत्युत्तरसंवेदनादर्थाभावोऽपि निश्चितः। न— तत्रापि पूर्वसंवेदनेन सद्भावविषयेण विरोधात्। इदंरजताभावसंवेदनानामविवेककल्पनया उत्तरज्ञानेऽपि संसर्गसंविदभावः किं न स्यात्?। व्यवहारसंवादज्ञानादुत्तरज्ञाने संसर्गसंवित्सद्भावश्चेत्, न—अर्थक्रियासंवादज्ञाना-

---

ता. ननु पुरोदेशसंसृष्टतया प्रतिभासनं असिद्धम्, इदमंशस्यैव गृह्यमाणत्वात् रजतांशस्यैव स्मर्यमाणत्वात् इति; अत आह—**यथा** इति। ननु सामान्यविशेषयोः नैरन्तर्येण प्रतिभासनात् तथा व्यवहारः न तु संसर्गसंवित्सद्भावात् इति; अत आह—**न हि** इति ॥

ननु संसर्गस्य अभावात् संविदः अभावः शक्यते एव वक्तुं इति शङ्कते—**अर्थेति**। संवित्सद्भावादेव अर्थाभावोऽपि न अभ्युपेयः इति परिहरति—**न यथेति**। विपरीतं किं न स्यात्? इति; अत आह—**न हि** इति। पूर्वपूर्वार्थनिश्चयाधीनत्वात् उत्तरोत्तरार्थनिश्चयस्य अनवस्था स्यात् इत्यर्थः। ननु बाधादेव अर्थाभावो निर्णीयते इति शङ्कते—**ननु** इति। 'इदं रजतं' इति ज्ञानेन प्रथमोत्पन्नेन असंजातविरोधिना निरपेक्षेण उत्तरज्ञानमेव किमिति न बाध्यते इति परिहरति—**न तत्रापि** इति। तर्हि उत्तरज्ञानस्य का गतिः? इत्याशङ्क्य, 'इदं रजतं' इति ज्ञानस्य या गतिः तव मते सैव भविष्यति इत्याह—**इदंरजतेति**। यथा त्वया इदमाकाररजताकारयोरविवेकः कल्पितः तथा नञर्थेनापि अविवेकः किमिति न कल्पितः इत्यर्थः। **न अर्थक्रियेति**।

---

भा. इदंरजतमितिविशिष्टज्ञानस्यैव समीचीनरजतज्ञानवत् प्रमाणत्वादित्यभिप्रेत्याह—**यथेति** ॥

**दर्थसंवित्सद्भावनिश्चयः इति वदतः संवित्प्रत्यक्षत्ववादहानात्। अर्थ-क्रियासंविदोऽपि संविदन्तराधीनसद्भावनिश्चयप्रसङ्गात् ॥**

**ननु सम्प्रतिपन्नः अर्थाभावः। न—यथाप्रतिभासमेव मिथ्यारजतस्य उत्तरज्ञानेन निरसनयोग्यस्य उपगमात् लौकिकपरमार्थदृष्टरजत-**

---

ता. स्वकीयमपि ज्ञानं स्वस्य अनुमेयं चेत् स्वयंप्रकाशत्वहानेः अपसिद्धान्तप्रसंगः इत्यर्थः। अनवस्था च स्यात् इत्याह—**अर्थक्रियासंविदः** इति। ज्ञानानुरूपः अर्थोऽपि अस्मन्मते अस्ति इति परिहरति—**न यथे**ति। अर्थः अभ्युपेयते चेत् कथं तस्य मिथ्यात्वं इत्यत आह—**उत्तरज्ञानेन** इति। ननु 'नेदं रजतम्' इति कालत्रयेऽपि रजतनिषेधकज्ञानविरुद्धं रजतास्तित्वं इति; अत आह—**लौकिके**ति। परमार्थरजतस्य प्राप्त्यभावात् कथं तस्य निषेधः इति; अत आह—**दृष्टरजते**ति। (तमिति) मिथ्याभूतेऽपि रजते परमार्थरजतत्वाद्यारोपेण प्रवृत्तिदर्शनात् सामान्योपाधौ तस्यापि प्राप्तिरस्ति भूतले निषिध्यमानघटस्येव

---

भा. **संवित्प्रत्यक्षत्ववादहानादिति।** न च तेन संसर्गविषयत्वमेवानुमीयते नतु ज्ञानस्वरूपमिति वाच्यम्। इदमंशरजतांशविषयस्यैवाज्ञाने तस्याप्यनुमेयत्वायोगादिति भावः। **ननु सम्प्रतिपन्न इति।** तवापीति शेषः। ननु शुक्तौ मिथ्यारजताङ्गीकारे कथमिह कालत्रयेऽपि रजतं नास्तीति निषेध इति चेत्तत्राह—**लौकिकेति।** लौकिकत्वेन परमार्थत्वेन दृष्टं यत् शुक्तिरजतं तत्प्रतियोगिकाभावः शुक्त्यवच्छिन्नचैतन्यरूपः तद्विषयत्वादित्यर्थः। नत्वत्र लौकिकदृष्टापणस्थरजतप्रतियोगिको योऽभावस्तद्विषयत्वादिति। अत्र प्रतीयमानस्यैव रजतस्य ब्रह्मणि प्रपञ्चस्य 'नेह नाने'ति शास्त्रादिव नेदं रजतमिति त्रैकालिकनिषेधावगमात् अनुभूतं रजतं कालत्रयेऽपि नास्तीति त्रैकालिकनिषेधप्रतीतेर्गत्यन्तराभावाच्च। **प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्यग्रिमग्रन्थविरोधप्रसङ्गाच्च ॥**

अत एव देशान्तरस्थस्य निषेधः प्रातीतिकस्य बाधः स च ज्ञानान्निवृत्तिरिति व्यवस्थेति निरस्तम्। तयोर्भेदे प्रमाणाभावात्। अभेदे च **प्रतिपन्नोपाधौ त्रैकालिकनिषेधे**त्याद्याचार्यवचनस्यैव प्रमाणत्वात्।

ततश्च त्रैकालिकनिषेधप्रामाण्याय रजतकालेऽपि तद्देशे अत्यन्ताभावः स्वीकर्तव्यः। भा॰
स च नाधिष्ठानादतिरिच्यते, कल्पितप्रतियोगिकाभावस्य प्रतियोगिविरहैकस्वभावस्य स्वप्रतियोगिसमानसत्ताकत्वस्वभावतया वास्तवत्त्वासम्भवात्। ब्रह्मातिरिक्तवस्तुसद्भावाङ्गीकारे 'एकमेवे'त्यादिश्रुतिविरोधाच्च। न च भावाद्वैतमेव तदर्थः, श्रुतौ तदप्रतीतेः। अभाववद्भावस्यापि सत्वे तत्प्रामाण्योपपत्तेश्च। नापि प्रातीतिकरजताभावो व्यावहारिको भवति, विरहैकस्वभावस्य अभावस्य प्रतियोगिसमानसत्ताकत्त्वनियमात्। व्यावहारिकप्रपञ्चाभावस्यापि व्यावहारिकत्वे समानसत्ताकयोर्भावाभावयोरेकत्र विरोधेन प्रपञ्चाधिकरणे तदनुपपत्तेः। ततश्च 'नेह नाने'त्यादिश्रुत्यर्थः प्रपञ्चमिथ्यात्वं न सिध्येत्॥

अत एव न शुक्तिरजताभावः प्रातीतिकः। तस्य तदा प्रतीत्यभावाच्च। न च पञ्चमप्रकार एव कश्चनाभावोऽस्तु इति वाच्यम्। तत्सत्वे प्रमाणाभावात् दृश्यस्य मिथ्यात्वनियमाच्च। अन्यथा तत्रैव दृश्यत्वहेतोर्व्यभिचारात्। तदन्यत्वेन हेतुर्विशेषणीय इति चेत्, न—अप्रयोजकत्वात्, अनिर्वचनीयप्रतियोगिकाभावस्य तद्विलक्षणत्वानुपपत्तेश्च। तस्मात् परिशेषादधिष्ठानचैतन्यमेव रजतादिविरहतया अनुभूयत इति तदेव तदभावः। स च विरहैकस्वभावो न भवतीति न तस्य प्रतियोगिसमानसत्ताकत्वम्। न च विरहैकस्वभावत्वाभावे तस्याभावत्वमेव कुत इति वाच्यम्। भावरूपस्यापि प्रमाणबलेनान्यविरहात्मत्वे बाधकाभावात्॥

परैरपि घटादेस्तदभावविरहात्मत्वस्याङ्गीकारात्। घटादेरभावैकस्वभावत्वे च सोऽपि प्रतियोगिनिरूपणाधीननिरूपण इति विश्वस्याप्यनवभासप्रसङ्गः। न च भावोऽभावविरहस्वभावो न भवतीति वाच्यम्। प्रमाणबलेन भावस्यापि [अभाव] विरहात्मत्वाङ्गी (कारे तत एव भावविरहा) [कारात्, अत एव भावस्य अभावविरहा] त्मत्वस्यापि उपपन्नत्वात् प्रागभावविरहस्सर्वत्र भाव एव दृष्ट इति। अन्यथा अभावरूपं कार्यं प्रागभावो वा सर्वत्राभाव एव दृष्टः इति ध्वंसप्रागभावोऽपि भावो न स्यात्॥

न चैवं शुक्तौ रजतं नास्ति शुक्तिः रजतं न भवतीत्याधारधेयभावादिप्रतीत्यनुपपत्तिरिति वाच्यम्। उक्तविधया चैतन्यस्यैवाभावत्वे सिद्धे घटाभावे घटो नास्ति घटाभावो घटो न भवतीति प्रतीतिवदभावाधेयत्वांशे तद्बुद्धेर-

**प्रतियोगिकाभावविषयत्वात् रजते त्रैकाल्याभावज्ञानस्य इति संविद्**

ता. इत्यर्थः। एवं व्यवस्थायां किं प्रमाणमिति ; अत आह—**इति संविद्द्वयेति।** संविद्द्वयानुपपत्तिः प्रमाणं इत्यर्थः ॥

भा. प्रमाणत्वात्। न च भावस्याभावत्वं पारिभाषिकमेवेति वाच्यम्। स्वस्मिन् प्रतियोगिसत्त्वविरोधित्वेन विरहैकस्वभावाभाववत्तस्यापि तस्य मुख्यत्वात्। तस्मात्तद्भिन्नसत्ताकप्रतियोगिकाभाव एव ततो भिद्यत इति शुक्तिचैतन्याभिन्नसत्ताकरजतप्रतियोगिकाभावो न ततो भिद्यते। घटे तु शुक्तिरजताभावो विरहात्मा ततो भिद्यते। रजतस्य तद्भिन्नसत्ताकत्वात्। तदपि शुक्तौ 'इदं रजतम्' इति तत्तादात्म्यवत्, घटे तत्तादात्म्यस्याननुभवात्। तत्तादात्म्यं च भिन्नत्वे सत्यभिन्नसत्ताकत्वमेव, स्वातन्त्र्ये सत्तानवच्छेदक(भेदव)त्वमिति यावत्। न तु भेदसमानाधिकरणोऽभेदः, समानसत्ताकयोस्तयोर्विरोधादित्यन्यत्रोक्तम्। न चैकप्रतियोगिकाभावद्वयमनुपपन्नम्। परमतेऽप्यभावचातुर्विध्याभावप्रसङ्गात्। प्रमाणवत्त्वं त्वस्मन्मतेऽपि समानम्। एवं घटादेरप्यभावौ द्रष्टव्यौ। न च भावाभावयोर्विरोधात् कथमभावस्य भावप्रतियोग्यधिकरणत्वमिति वाच्यम्; समानसत्ताकयोरेव तयोर्विरोधात् ॥

यद्यप्यस्मन्मते आत्मस्वरूपमेव सर्वस्य सत्त्वमिति न सत्त्वस्वरूपे भेदोऽस्ति तथापि तत्तदवच्छिन्नात्मचैतन्यं तस्य तस्य सत्त्वमित्यवच्छेदकस्वरूपवैषम्येण तत्सत्त्वमपि विलक्षणमिति न सत्त्ववैचित्र्यानुपपत्तिः। तस्मात् रजतात्यन्ताभावोऽधिष्ठानमेव। तच्च कालत्रयेऽप्यस्तीति प्रत्यक्षसिद्धस्य तत्र विद्यमानस्य मायिकरजतस्य न त्रैकालिकनिषेधानुपपत्तिरित्यभिप्रेत्याह—**इति संविदिति** ॥

अत एव लौकिकपरमार्थत्वाकारेण प्रतिपन्नरजतस्यैव त्रैकालिकनिषेधः। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य तदधिकरणेऽपि संभवात्। न चैवं मिथ्यात्वासिद्धिः। पारमार्थिकत्वस्य व्यधिकरणत्वे प्रतियोगिनो मिथ्यात्वात्। अथ वा, नायं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः। अधिष्ठानसत्त्ववैशिष्ट्यस्य तत्रापि सत्त्वात्। अन्यथा घटावच्छिन्नप्रतियोगिताकघटरूपाभावोऽपि तथा स्यादिति प्रकृतग्रन्थाभिप्राय इति निरस्तम्। तेन विनापि त्रैकालिकनिषेधोपपत्तेः। तस्याप्यधिकरणातिरिक्तत्वे वर्णितदोषानपायादिति ॥

**द्वयानुरोधेन व्यवस्थासिद्धेः अन्यतरसंविदपह्नवायोगात् । तथा च**

ता. ननु संविद्द्वयमेव न संप्रतिपन्नं इति ; अत आह—**तथा च** इति। 'नास्त्यत्र रजतं' इति कालत्रयेऽपि रजतस्य असत्वमेव गम्यते। 'मिथ्यैव रजतमभात्' इति भ्रान्तिसमये रजतस्य विद्यमानता अवसीयते। तेन उभयसंविदनुरोधात् कालत्रयनिषेधस्य परमार्थरजतविषयत्वं शुक्त्यज्ञानविवर्तपुरोवर्तिरजत-

भा. **व्यवस्थेति**। रजतप्रत्यक्षं तत्र विद्यमानमायिकरजतं विषयीकरोति। निषेधप्रत्ययस्तु तस्यैवाधिकरणरूपमत्यन्ताभावमिति व्यवस्थोपपत्तेरित्यर्थः। अभावद्वैविध्यं वा **व्यवस्था**शब्दार्थः। तथा च नासम्भवोऽप्यस्य लक्षणस्येति भावः। नाप्यव्याप्तिः, अध्यासमात्रस्यैवंरूपत्वात्। ब्रह्मण्यतिव्याप्तिस्तु परिहृतैव। नाप्यसत्यतिव्याप्तिः, तस्यानाधेयत्वेनात्यन्ताभावशून्यत्वेन च तस्मिन् लक्षणाभावात्। किञ्च, असन्नाम नास्ति किंचिदिति कुत्रातिव्याप्तिरस्य ?

यत्तु***अर्वाचीनानां** वचनम्, किं लक्षणाभावादसतोऽभावः? उत प्रमाणाभावात् ? नाद्यः, सर्वदेशीयसर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वस्य तल्लक्षणत्वात्। न च द्वितीयः, नरशृङ्गमित्याद्यनुभवस्य असन्नास्तीति निषेधानुपपत्तेश्च तत्र प्रमाणत्वादिति। तदसत्। असतोऽप्यत्यन्ताभावप्रतियोगित्वादिधर्माश्रयत्वे असत्त्वानुपपत्तेः। धर्मधर्मिभावाभ्युपगमे वा अनिर्वचनीयस्य नामैव स्यात्। अपि च, असन्नाम किञ्चिदस्ति चेत् सदेव तत् स्यात्। सत्ताधर्मिणोऽसत्त्वानुपपत्तेः। नास्ति चेत् कस्याभावप्रतियोगित्वं धर्मः। असतो निस्स्वरूपस्य उक्ताभावेन कस्यचित् सम्बन्धस्यासंभावाच्च। सद्भिरहैकस्वभावस्यासत्त्वाभावाच्च। अस्माकं तु तन्निषेधवचनं अहृदयवाचामिति न्यायेनैव ॥

नापि तदभावस्य सर्वदेशीयत्वे किञ्चिन्मानमस्ति। प्रत्यक्षेण तद्ग्रहासम्भवात्। नाप्यसत्त्वेन तदनुमानम्, साध्याविशेषात्। न च सत्तानधिकरणत्वेन, सत्ताया जातित्वे जात्यादौ व्यभिचारात्। असत्त्वाभावत्वे च (पराभ्युपेते) अन्योन्याश्रयात्। (पराभिमत)गगनादावतिव्याप्तेश्च। नापि नरशृङ्गमित्याद्यनुभवोऽस्ति। सम्बन्धाभावेनेन्द्रियेण तदनुभवासम्भवात्। इन्द्रियसम्बद्धविशेषणता प्रत्यासत्तिरस्तीति चेत्, न—तस्या अपि इन्द्रियप्रत्यासत्तित्वे पूर्वमदृष्टविशेषणा-

* व्यासतीर्थादयः इति भाति ॥

**उभयसंविद्विषयानुभवः 'नास्त्यत्र रजतं' 'मिथ्यैव रजतमभात्' इति। ननु अपरोक्षशुक्तिकाज्ञानाविवेकात् रजतमपरोक्षतया प्रतिभासते इति;**
40 - 2 **नेत्याह—**स्पष्टं **इति। केयं स्पष्टता नाम?। विवेकज्ञानसमयेऽपि 'एतावन्तं कालमिदं रजतमिति अभात्' इति संसृष्टावभासत्वेन प्रत्यभिज्ञायोग्यता। अन्यथा 'तत् रजतमेतावन्तं कालमितोऽविविक्तं' इति प्रतीयात्। अथ वा 'तज्ज्ञानात् तत्र प्रवृत्तिः' इति पदार्थांशज्ञानतत्प्रवृत्त्योः नियमात् इहापि संसर्गप्रवृत्तिनिमित्तता संसर्गज्ञानस्य**
40 - 3 **स्पष्टता इति। पूर्वदृष्टावभासः इति स्पष्टार्थः॥**

ता विषयत्वं च भ्रान्तिकालीनरजतविद्यमानतानुभवस्य कल्पनीयं इत्यर्थः। विपक्षे दोषमाह—**अन्यथा** इति॥

भा नामपि चित्रगुरित्याद्यनुभवप्रसङ्गात्। सम्बन्धाभावे विशेषणताया अप्यसम्भवात्। तद्व्याप्यलिङ्गासम्भवेन अनुमानेनापि तदसम्भवात्। नापि शब्दात्। तन्मूलाभावे लौकिकशब्दस्य तस्मिन्नप्रवृत्तेः। यथार्थशक्तिग्रहासम्भवेन शब्दात् तत्प्रमाया असम्भवाच्च। नापि योग्यानुपलब्ध्या, असतस्तदसत्त्वादिति नास्त्येवासदिति॥

**अन्यथे**ति। ननु वस्तुतोऽविवेकेऽपि तस्याननुभवान्न तथा अनुसन्धानप्रसङ्ग इति चेत्, न—पराभिमताविवेकस्य निरपेक्षस्वरूपादन्यत्वायोगेन अनवगतार्थाभावात् इति [इतः] अविविक्तत्वज्ञानत्वाकारेणैव प्रतिसन्धीयेत, न तु विशिष्टज्ञानत्वाकारेणेत्यर्थः। अननुभूतस्यापि संसर्गस्यानुसन्धाने अविवेकस्यापि तत् किं न स्यादिति वा अर्थः। ननु एतन्न विशिष्टज्ञानानुसन्धानं किं तु अविवेकात्तथा व्यवहार इत्यरुचेराह—**अथ वे**ति। सर्वत्र हि प्रवृत्तिर्ज्ञानसाध्या न भेदाग्रहसाध्या। भेदाग्रहमात्रस्य प्रवर्तकत्वे अतिप्रसङ्गात्। उपस्थितयोः भेदाग्रहस्य प्रवर्तकत्वे आवश्यकत्वात् लाघवाच्चोपस्थितिरेव प्रवर्तिकेति भ्रान्तिप्रवृत्तिरपि ज्ञानसाध्या। ज्ञानं च स्वविषये प्रवर्तकमिति इदमंशज्ञाने दृष्टम्। ततो रजतज्ञानमपि तथा। तच्च रजतज्ञानस्य पुरोवर्तिविषयत्वं विना अनुपपन्नमिति विशिष्टज्ञानसिद्धिः। ततश्च नाविविक्तविषयज्ञानद्वयमिति भावः॥

एवं ज्ञानाज्ञानसाधारणभ्रान्तिविषयाध्यासलक्षणपरत्वेन लक्षणवाक्यं

यदा ज्ञानविशिष्टोऽर्थ एवाध्यासः, तदा 'स्मर्यमाणसदृशः अन्यात्मनावभासमानोऽन्योऽर्थोऽध्यासः' इत्येवंलक्षणपरतया वाक्यं योजितम्। यदा पुनः अर्थविशिष्टं ज्ञानमेवाध्यासः, तदा 'स्मृतिसमानः अन्यस्यान्यात्मनावभासोऽध्यासः' इत्येवंलक्षणपरतयापि तदेव वाक्यं योजयितुं शक्यते इत्याह--यतोऽर्थात् इति। अर्थात्–वाक्य- 41 - 1

भा. योजयित्वा भ्रान्तिज्ञानलक्षणपरत्वमपि लक्षणवाक्यस्याह—**यदेति**। **अध्यास** इति। साक्षिचैतन्यस्यापि रजतादिसंवलितत्वाकारेण मिथ्यात्वात् **अध्यास** इत्युक्तमिति द्रष्टव्यम्। अत एवोक्तं **अर्थविशिष्टं ज्ञानमेवाध्यास** इति। **स्मृतिसमान इति**। प्रमाणादन्यत्वं चात्र स्मृतिसारूप्यम्, तच्चाजन्यस्यापि साक्षिणोऽस्तीति भावः। प्रमाणाजन्यः पूर्वदृष्टसजातीयस्यावभास इति भ्रान्तिलक्षणम्। अत्र च पूर्वदृष्टसजातीयस्यावभास इति स्मर्यमाणान्यविषयं ज्ञानं विवक्षितम्। एतच्चात्मस्मृतावतिव्याप्तिवारणाय। आत्मविषयानुभवेऽतिव्याप्तिवारणाय प्रमाणाजन्येति। अनुभूयमानस्यात्मनः स्मर्यमाणान्यत्वेन तदनुभवस्य स्मर्यमाणान्यविषयत्वमस्तीति तेन विना अतिव्याप्त्यपरिहारात्॥

ननु एवं घटादिप्रत्यक्षे अव्याप्तिः। तस्य प्रमाणाजन्यत्वाभावात् सिद्धान्ते भ्रान्तित्वाच्चेति चेत्, न–भ्रान्तित्वाभिमतगोचरजनकाज्ञानसमानविषयं प्रमाणपदेनेह विवक्षितम्। घटादिप्रत्यक्षं च न तादृशप्रमाणजन्यम्। ब्रह्मप्रमा तु भ्रान्तित्वाभिमतघटादिज्ञानविषयजनकाज्ञानसमानविषयप्रमाणजन्येति न सा प्रमाणाजन्या। अबाधितार्थविषयं वा प्रमाणमिह विवक्षितमिति न घटादिज्ञानं प्रमाणजन्यम्। ननु एवमपि शुक्तिरजतादिस्मृतावव्याप्तिः। तस्याः स्मर्यमाणविषयज्ञानत्वादिति चेत्, सत्यम्-- स्मृतिभ्रान्तित्वस्यानुभवभ्रान्तित्वायत्तत्वेन भ्रमात्वेनेव भ्रान्तित्वेनापि तस्या असङ्ग्राह्यत्वात्॥

अथ वा **पूर्वदृष्टे**त्यत्र दर्शनपदं प्रमापरम्। सा चाज्ञातज्ञानमिह विवक्षितम्। तथा च **पूर्वदृष्टावभासः** इति अज्ञानविषयीभवद्विषयकं ज्ञानमुच्यत इति न काप्यव्याप्तिः*। ब्रह्मसाक्षात्कारश्चाज्ञानविषयीभवद्विषयकं ज्ञानमिति तत्रातिव्याप्तिनिवृत्तये प्रथमविशेषणम्। केचित्तु **स्मृतिरूप** इत्या-

* भ्रमस्य अज्ञानविषयीभवदधिष्ठानविषयकत्वेन लक्षणसमन्वयः कर्तव्य इति भाति॥

41 - 2 **सामर्थ्यात् इत्यर्थः ।** कथं इत्यादिः स्पष्टार्थः । ननु न स्मृतिश्चेत् भ्रान्तिः प्रत्यक्षज्ञानवत् न पूर्वानुभवजन्यत्वं इत्याशङ्क्य, संप्रयोगमात्रजन्यज्ञानादन्येषां सर्वेषामविशिष्टं पूर्वप्रमाणजन्यत्वं अन्वयव्यतिरेक-
42 - 1 सामर्थ्यात् इत्याह—न ह्यसंप्रयुक्तावभासिनः इति ॥

**ननु संस्कारजन्यत्वमुपगतं चेत् अन्यसम्प्रयुक्ते चक्षुषि यदनन्तर-**

---

भा. दिना भ्रान्तेः स्वरूपमेवोच्यते । न तल्लक्षणम् । लक्षणं तु **परत्र परावभास** इत्यनेनैव उक्तमित्याहुः ॥

**पूर्वप्रमाणद्वारसमुत्थत्वादिति टीकायाः** [पञ्च 42-1] अयमर्थः—पूर्वप्रमाणद्वारं संस्कारः तदुत्पन्नं यद्रजतं ततस्तद्विशिष्टतया नित्यमपि चैतन्यमुत्पन्नमिवेति पूर्वप्रमाणद्वारसमुत्थमिति । प्रमाणाजन्यमिति यावत् । तत्रैव यथाश्रुतमर्थमादाय शङ्कते—**ननु न स्मृतिश्चेदिति** । विमतं ज्ञानं स्मृतिः, संस्कारजन्यत्वात्, सम्मतवत्, अन्यथा संस्कारजन्यत्वं न स्यादिति, अर्थज्ञानजन्यसंस्कारात् स्मृतिरेव न स्यादिति वा शङ्काभिप्रायः । संस्कारजन्यज्ञानस्यापि न स्मृतित्वनियमः । किमु वक्तव्यं संस्कारजन्यार्थविषयसाक्षिचैतन्यस्य । ज्ञानजन्यसंस्कारोऽप्यन्वयव्यतिरेकाभ्यां क्वचिदर्थ एव हेतुरित्यभिप्रेत्याह—**सम्प्रयोगेति** ॥

उक्तमेवार्थं ख्यात्यन्तरनिरासेन द्रढयितुं प्रथममख्यातिमतमुत्थापयति—**नन्विति** । इदं रजतमिति ज्ञानं न विशिष्टज्ञानम्, तत्सामग्र्यभावात् । न च आवश्यकसंस्कारदोषसहकृतेन्द्रियसम्प्रयोग एव तद्धेतुरिति वाच्यम् । आवश्यकसंस्कारस्यैव रजतादिज्ञानहेतुतया प्रमाणस्मृतिसमुदायातिरिक्तभ्रान्तिज्ञानाभावेन दोषादियुक्तालौकिकज्ञानसामग्रीतज्जन्यज्ञानयोरकल्प्यत्वादित्याह — **संस्कारजन्यत्वमिति** । न चास्य स्मृतित्वे प्रमाणाभाव इत्याह—**अन्यसंप्रयुक्ते इति** । **अनन्तरमित्यनेन** असंप्रयुक्तविषयज्ञानाव्यवधानं ज्ञानं विवक्षितम्, न त्वव्यवधानमात्रम् । रजतस्मरणस्येदमंशज्ञानजन्यत्वात् ॥

तथा च विमतं रजतज्ञानं स्मृतिः असंप्रयुक्तविषयज्ञानानुत्पन्नत्वे सति असम्प्रयुक्तविषयज्ञानत्वात् सम्मतवत् । अथ वा स्मृत्यव्यवधानमात्रमनन्तरं इत्यनेन विवक्षितम् । तथा च स्मृत्यजन्यत्वमेव हेतुविशेषणम् । प्रथमविशेषणेन

मन्यविषयं ज्ञानमुत्पद्यते सा स्मृतिरेव, तद्व्यवधानेन तु यज्ज्ञानमुत्पद्यते
तदनुमानादि प्रमाणं इति प्रमाणस्मृतिद्वैराश्यमेव विज्ञानस्य, न तृतीयं
मिथ्याज्ञानं नाम अस्ति इति अख्यातिवादी प्रत्यवतिष्ठते इत्याह–अपर 42-4
आह इत्यादिना। ननु स्मृतिश्चेत्, गवादिस्मृतिवत् स्वार्थं गृह्यमाणा-
द्विविच्य 'स्मरामि' इति दर्शयेत् इति; अत आह–प्रमोषस्तु इति। ननु 42-5
शुक्तिकासम्प्रयोगे रजतं किमिति स्मर्यते?। सादृश्यादिति चेत्, अति-
सादृश्यात् शुक्तिकान्तरमेव स्मर्यतामिति; नेत्याह—इन्द्रियादीनां इति। 42-5
ननु मा भूत् स्मृतेः प्रमोषात् स्वार्थविवेचकता, ग्रहणं तु स्वार्थं स्वयमा-
णात् विवेचयेदिति; नेत्याह—संप्रयुक्तस्य च इति। ननु स्मृतिग्रहणयोः 43-2

---

'संप्रयुक्ते चक्षुषि यत् ज्ञानं अनन्तरं उपजायते सा स्मृतिः' ता.
इत्युक्तौ अधिष्ठानज्ञाने अतिव्याप्तिः स्यात्, अतः उक्तं—**अन्यविषयं** इति।
संस्कारजन्यत्वमुपगतं चेत् इति विशेषणं कल्पनालाघवन्यायेन स्मृतित्वा-
भ्युपगमोपोद्बलनार्थम्। **अनन्तरं** इति विशेषणस्य व्यावर्त्यमर्थं आह—**तद्व्यव-
धानेन** इति। इदमः सकाशात् रजतं रजताकारेण विविच्य दर्शयत्येव इत्या-
शंक्य, आह–**स्मरामि** इति। किं ग्रहणस्मरणे द्वे अपि प्रवर्तके? किं वा एकैकम्?
आद्ये किं संभूय प्रवर्तके? किं क्रमेण? इति विकल्प्य, क्रमेण दूषयति–**ननु** इति।

---

व्यवहितवह्न्यादिविषयव्याप्तिज्ञानजन्यानुमित्यादौ व्यभिचारो निरस्त इत्याह— भा.
**तद्व्यवधानेनेति**। घटादिविज्ञाने व्यभिचारवारणाय द्वितीयं विशेषणम्।
**स्मरामीति दर्शयेदिति**। स्मरणस्य परपक्षे तादृशाकारत्वनियमादिति भावः।
दोषसंवलनदशायां ज्ञानेऽप्रामाण्यमिव स्मृतित्वमपि न गृह्यते इत्याह—**अत
आहेति**। ननु ज्ञानभेदे अयथार्थप्रवृत्तिरनुपपन्ना, युगपज्ज्ञानद्वयासम्भवात्।
क्रमोत्पत्तौ पूर्वज्ञानस्य संस्कारोद्बोधकस्य रजतस्मृतिकाले विनष्टत्वेन मेलना-
योगात्। इदंज्ञानमात्राद्रजतज्ञानमात्राद्वा प्रवृत्तौ रजतज्ञानं विनापि तदर्थिनः
पुरोवर्तिनि, देशान्तरे वा प्रवृत्तिप्रसङ्गात्। ज्ञानस्य स्वविषय एव प्रवर्तकत्वात्॥
ननु इदंज्ञानमेव प्रवर्तकम्, रजतज्ञानं तु तत्सहायमात्रमिति चेत्, न—
प्रवृत्त्यहेतुत्वे तस्य प्रवर्तकासहायत्वात्। तद्धेतुत्वे वा कथं नोक्तदोषः। अतो-

**यौगपद्याभावात् क्रमवर्तित्वे पूर्वज्ञानं व्यवधानात् न प्रवृत्तिहेतुः, न च**
43-3 **सामान्यमात्रज्ञानात् विशेषमात्रज्ञानाद्वा प्रवृत्तिः इति ; अत आह**—तेन
दर्शनस्मरणयोः निरन्तरोत्पन्नयोः इति। **निरन्तरोत्पत्तिरेव प्रवृत्तिहेतु-**
**रित्यर्थः। ननु इदं रजतमित्यभात् इति संसर्गप्रत्ययः प्रत्यभिज्ञायते**
43-4 **इति ; नेत्याह**—अनुत्पन्ने एवैकत्वावभासे इति ॥

**'जन्मान्तरानुभूतं न स्मर्यते' इतिभाष्यवचनादस्मर्यमाणत्वाच्च**
43-5 **बालस्य तिक्तस्मृतिः कथं ? इति चोदयति**—नन्वनास्वादिततिक्तरसस्य इति।

---

ता. **व्यवधानात्** इति। रजतस्मरणेन इदमाकारग्रहणस्य प्रवृत्तिं प्रति व्यवहितत्वात्
इत्यर्थः। इदानीं एकैकपक्षं दूषयति—**न च** इति। विशिष्टविषयत्वात्
व्यवहारस्य न एकैकजन्यत्वं इत्यर्थः। जन्मान्तरानुभूत एव स्मर्यतां इति ; अत
आह—**जन्मान्तरेति**। तर्हि इह जन्मनि अनुभूयैव स्मर्यतां इति ; अत
आह—**बालस्य** इति। जातमात्रस्य इति यावत्। भाष्यवचनस्य प्रायोवृत्त्यभि-
प्रायत्वात् स्तन्यपानादौ च बालस्य जन्मान्तरस्मरणवशादेव प्रवृत्तेः अवश्याभ्युपे-

---

भा. ऽन्यथाख्यातिरवश्यं वाच्येत्याशङ्कां परिहरति—**निरन्तरेति**। अयं भावः—न
तावदन्यथाख्यातिः सम्भवति, रजतेन्द्रियसम्बन्धाभावेन तस्य प्रत्यक्षत्वायोगात्।
न चाख्यातौ प्रवृत्त्यनुपपत्तिः, ज्ञानयोर्निरन्तरोत्पत्तावुपस्थितेष्टभेदाग्रहस्य प्रवर्त-
कत्वात्। एवं तादृशानिष्टभेदाग्रहस्य निवर्तकत्वाच्च। न चैवं रङ्गरजतयो-
र्विपरीतसमूहालम्बनाद्युगपत् रजते प्रवृत्तिनिवृत्ती स्याताम्, रजते रङ्गभेदाग्रहवत्
रजतभेदाग्रहस्यापि सत्त्वात् अन्यथा भ्रान्त्यापत्तेरिति वाच्यम्। प्रवृत्तिनिवृत्तिमात्रे
हि भेदाग्रहमात्रं हेतुः। सत्यप्रवृत्तिनिवृत्त्योः इष्टानिष्टभेदाग्रहासमवहितभेदाग्रहौ
(हो)हेतुः, अयथार्थयोस्तु तयोर्विद्यमानभेदाग्रह इति नातिप्रसङ्गः। संशयेऽप्य-
निष्टभेदस्य रजतादिस्वरूपस्य ग्रहोऽस्त्येव। स चानवधारणात्मेति न निश्चित-
प्रवृत्तिः। तदा(तथा)तन्मात्रधर्मोपस्थिततया रङ्गरजतयोः संशयविलक्षणत्वोपपत्तेश्च।
अन्यथा तवापि ज्ञानैकत्वात्तत्रारजतेऽपि रजतार्थी प्रवर्तेतेति भावः ॥

गृह्यमाणस्मर्यमाणयोरेव अविवेको भ्रम इति मतेन शङ्कते—
**जन्मान्तरेति** ॥

**जन्मान्तरानुभूततिक्तस्मृतिः कल्प्यते इत्याह**—उच्यते इति। **जन्मान्त-** 44.2
**रानुभवस्योपकारितामाह** — अन्यथा अननुभूतत्वेति। **किमिति तर्हि** 44.2
**जन्मान्तरानुभूतं किञ्चिदेव स्मर्यते न सर्वं ? इति; दोषबलादित्याह**
—तस्मात् पित्तमेव इति। **किमिति तर्हि दोष एव जन्मान्तरानुभूतं सर्वं न** 44.4
**स्मारयति ? इति; अत आह**—कार्यगम्यत्वात् इति। **ननु अतत्त्वे तत्त्वज्ञान-** 44.5
**मिति शास्त्रका[रै]रेणैव दर्शितः संसर्गभ्रमः इति; नेत्याह**—एतेनान्य- 44.5
सम्प्रयोगे इति। **वक्तव्ये च पूर्ववादिनाऽप्यविवेके संसर्गज्ञानकल्पना-**
**गौरवादख्यातिरेव युक्तेति भावः॥**

उच्यते—**केयमख्यातिः ? इति। न तावत् ख्यात्यभावमात्रम्, अनभ्युपगमादतिप्रसङ्गाच्च॥**

---

यत्वात् स्मृतिरेव इयं इति परिहारग्रन्थस्य तात्पर्यमाह—**जन्मान्तरेति**। ता.
कल्पनालाघवादपि अख्यातिरेव युक्ता इत्याह—**वक्तव्ये च** इति॥

शब्दताडि[बोधि]तार्थं अङ्गीकृत्य आह—**न तावत्** इति। सुषुप्ते भ्रम-
प्रसङ्गात् जाग्रतश्च असंभवात् नायं पक्षः संभवति इत्यर्थः। तदर्थिनः तत्र प्रवृत्तिहेतुः
ज्ञानं सम्यक् ख्यातिः (विरुद्धं) तद्विरुद्धा ख्यातिरख्यातिः इत्यभिप्रेत्य आशङ्कते

---

**शास्त्रकारैः** साङ्ख्यैरित्यर्थः। **वक्तव्ये चेति**। भ्रमकारणत्वेनेति शेषः। भा.
रजतेच्छाजन्या शुक्तौ प्रवृत्तिः स्वविषयविषयेष्टज्ञानसाध्या प्रवृत्तित्वात् रजत-
विषयप्रवृत्तिवत्। अन्यथा प्रवृत्तिरेव न स्यात्, लाघवात् प्रवृत्तित्वावच्छेदेन
सत्यस्थले ज्ञानस्यैव हेतुत्वस्य गृहीतत्वात्। तच्च स्वविषय एव प्रवर्तकमिति
भ्रान्तिसिद्धिः। न चैवं भ्रान्तिकल्पनागौरवम्, तस्य फलमुखतया अदोषत्वात्।
न च सामग्र्यभावात् बाधः, असन्निकृष्टस्यापि दोषादिन्द्रियेण ग्रहणात्,
तत्संस्कारो वा सन्निकर्षः इत्यभिप्रेत्य दूषयति—**उच्यत इति**॥

परमते भ्रान्तित्वव्यवहारविषयोऽपि दुर्निरूप इत्याह—**केयमिति**।
**अनभ्युपगमादिति**। अभावस्येति शेषः। यत्किञ्चित्ख्यात्यभावो वा
निखिलख्यात्यभावो वा अख्यातिः ? नोभयमपि, घटादिज्ञानकाले सुषुप्त्यादौ
च भ्रान्त इति व्यवहारप्रसङ्गादित्याह—**अतिप्रसङ्गादिति**। ख्यात्यन्यत्

अन्यार्थिनोऽन्यत्र प्रवृत्तिहेतुः ज्ञानमिति चेत्—यत्र तर्हि न प्रवृत्तिः झटिति बाधश्च तत्र कथं भ्रान्तिः। अथ अविविक्तानेकपदार्थज्ञानम्, तर्हि 'इदं' इति 'रजतं' इति चापुनरुक्तशब्दद्वयस्मृतिहेतुतया विविक्तावभासनात् न तस्य सामान्यविशेषयोः अविवेकभ्रमः सम्भवति। न च भेदावमर्शेन एकत्वज्ञानमनभ्युपगच्छतः सामान्यविशेषयोरविवेकः सम्भवति, विविक्ताकारद्वयावभासनात्। इतरेतराभावभेदद्वित्वादिसङ्ख्याविशिष्टज्ञानं विवेकः इति चेत्, 'गामानय दण्डेन' इति गोदण्डयोः तत्कारकत्वयोश्चाविवेको भ्रमः स्यात्। तत्राप्यानुषङ्गिकभेदादिज्ञानमस्तीति चेत्—इदमिति रजतमिति च इहाप्यपुनरुक्तशब्दानुषक्ताकारद्वयावभासे द्वित्वाद्यवभासो विद्यत एव। अन्यथा सामान्याकारात् विशेषाकारस्य विवेकानवभासादिदमित्येव स्यात् रजतमित्येव वा स्यात् न 'इदं रजत'मिति। किञ्च, प्रतीयमान[ाकार]योः न

---

ता. —**अन्यार्थिनः** इति। तत्र, अविविक्तत्वं नाम किं भेदेन अस्फुरणं विवक्षितं? उत अभेदेन स्फुरणं? इति विकल्प्य आद्यं दूषयति—**तर्हि** इति। द्वितीयपक्षं दूषयति—**न च** इति। भिन्नयोः अभेदज्ञानानङ्गीकारात् अभेदविरुद्धभेदस्यैव स्फुरणाङ्गीकाराच्च इत्यर्थः। इदानीं प्रतियोगिनिरूपणेन अविवेकं दर्शयितुं आशङ्कते—**इतरेति**। तद्रहितं ज्ञानं अविवेकः इति शेषः। अतिप्रसंगेन दूषयति—**गां** इति। **तत्कारकत्वयोः** इति। कर्मत्वकरणत्वयोः इति यावत्। तत्प्रतिपादकविशेषविभक्तिद्वयप्रयोगादेव तदपि स्फुरति इति शङ्कते—**तत्रापीति**। तुल्यं अत्रापि इति परिहरति—**इदं** इति। एतदेव विपक्षबाधकतर्केण उपपादयति—**अन्यथा** इति। प्रकारान्तरेण विकल्प्य दूषयति—**किञ्च प्रतीयमानयोः**

---

भा. अख्यातिः (ख्यात्यन्या अन्यथाख्या अख्यातिः) इति शङ्कते—**अन्येति**। ननु अपुनरुक्तशब्दद्वयस्मृतौ तदुभयवाच्यज्ञानमेव हेतुः न तयोर्भेदज्ञानमित्याशङ्क्याह—**विविक्तेति**। न हि वाच्यज्ञानमात्रं कारणम्, अतिप्रसङ्गात्। किं तु असाधारणरूपेण तज्ज्ञानम्। तथा च तदेव भेदज्ञानं स्वरूपविशेषस्यैव भेदत्वादित्यर्थः॥

अविवेकः, अपुनरुक्तप्रतिभासात्। अप्रतीयमानाकाराविवेको न भ्रमः, अतिप्रसङ्गात्। तस्मात् न अविवेको भ्रमः॥

किञ्च, 'खण्डो गौः' इत्यादिप्रत्ययाश्च अविविक्तानेकपदार्थविषया विभ्रमाः प्रसज्येरन्। न च ग्रहणस्मरणाविवेक एव भ्रमः, अहं मनुष्यः इति गृह्यमाणाविवेकस्य भ्रमत्वात्। सामान्यविशेषादौ संसर्गज्ञानमेवास्तीति चेत्; तथापि अविविक्तानेकपदार्थज्ञानात् भ्रमत्वमपि स्यात्। न च तत्र संसर्गप्रत्ययोऽपि, ऐक्यस्य तदालम्बनस्याभावात्। गुणगुण्यादिसम्बन्ध एवालम्बनमिति चेत्, न—प्रत्यभिज्ञाया ऐक्यालम्बनत्वात्। इहापि सादृश्यसम्बन्ध एव 'इदं रजतं' इति संसर्गप्रत्ययालम्बनं स्यात्। अस्ति च सामान्यविशेषादीनामिदंरजतयोरिव

---

इति। उक्तलक्षणस्य अतिव्याप्त्यन्तरं आह—**किञ्च खण्ड** इति। ननु ग्रहणस्मरणयोः अविवेको भ्रमः। इह तु उभयमपि ग्रहणमेव इत्यत आह—**न च ग्रहणेति**। 'खण्डो गौः' इत्यादिप्रत्ययानां भ्रमत्वं न प्रसज्यते, संसर्गज्ञानस्यैव भावात् इति विशेषं आशङ्कते—**सामान्येति**॥ ता॰

तथापि त्वदुक्तप्रयोजकसद्भावात् भ्रान्तित्वमपि स्यात् इति परिहरति—**तथापि** इति। 'संसर्गज्ञानासहकृताविवेको भ्रमः' इत्याशङ्क्य, त्वन्मते तत्रापि संसर्गज्ञानं न संभवति भिन्नयोः ऐक्यासंभवात् इति परिहरति—**न च तत्र** इति। गुणगुण्यादिसंबन्धाभावेऽपि 'सोऽयं देवदत्तः' इति सामानाधिकरण्यलक्षणसंसर्गप्रत्ययस्य दर्शनात् न तेषां प्रयोजकत्वं इति परिहरति—**न प्रत्यभिज्ञाया** इति। अथ अन्योन्यव्यभिचारेऽपि तेषां तत्र तत्र प्रयोजकत्वमिष्यते, तर्हि सादृश्यमपि संसर्गप्रत्यये प्रयोजकमस्तु इत्याह—**इहापि** इति। ननु नेदं रजतमिति विवेकप्रत्ययेन बाधात् न तत्र संसर्गः संभवति इत्याशङ्क्य, त्वन्मते गुणगुण्यादावपि सोऽस्ति इतरेतराभावज्ञानाख्यविवेकस्य तत्रापि अभ्युपगमात् इति परिहरति—**अस्ति च** इति। किं इदमाकाररजताकारयोः केवलयोरेव

---

संसर्गाविषयकाविविक्तानेकपदार्थज्ञानात् भ्रमव्यवहारः तथा च नातिप्रसङ्गः इति पुरोक्ताभिप्रायमजानान इव दूषयति—**तथापि इति**। भा॰

विवेकप्रत्ययः। घटस्य शैक्ल्यं इति विवेकाभ्युपगमात्। किञ्च ग्रहणमेव स्मर्यमाणात् स्वार्थं किं न विविञ्च्यात्?। विशेषदर्शनाभावादिति चेत्; यदि गृहीतमात्रस्य रजतात् भेदोऽस्ति, तत् भेदापेक्षितो विशेषो धर्म्याकारः प्रतियोग्याकारो वा नान्यः इति गृहीत एव भेदाकारो विविक्तः प्रतीयेत। अथ धर्मिप्रतियोग्याकारे गृहीतेऽपि इतरेतरापेक्षया तृतीयमेव ज्ञानं भेदं ग्राहयतीति; तर्हि सर्वपदार्थज्ञानानां भेदग्रहणात् प्रागविवक्तत्वात् भ्रमत्वप्रसङ्गः। अथ न गृहीतमात्रस्य रजतात् भेदः; तर्हि ऐक्यमेवेति संसर्गज्ञानस्य सालम्बनतासिद्धिः॥

किञ्च, स्मृतिर्वा गवादिस्मृतिवत् गृह्यमाणात् स्वार्थं किमिति न
45 - 1 विविञ्च्यात्?। स्मरणाभिमानप्रमोषादिति चेत्; तत्राह—कोऽयं स्मरणा-

---

ता. भेदोऽभ्युपेयते? किं वा तत्तज्जातिव्यक्तिविशिष्टयोः? इति विकल्प्य आद्यं दूषयति—**यदि** इति॥

ननु गृहीतोऽपि भेदो धर्मिप्रतियोगिप्रतीतिं विना न व्यवहारफलमवतरति, प्रादेशमात्रं वस्तु यथा न्यूनाधिकपरिमाणद्रव्यग्रहणं विना ह्रस्वदीर्घादिव्यवहारविषयो न भवति तद्वत् इत्याशङ्क्य, आह—**तत्** इति। द्वितीयं कल्पमवतारयति—**अथेति**। एवंभूतभेदाग्रहणात् भ्रमश्चेत्, पूर्वत्रापि स्यात् इति परिहरति—**तर्हि** इति। गृहीतमात्रस्य भेदो नास्ति चेत् भेदाभेदापक्षस्य अनिर्वचनीयपक्षस्य च अनभ्युपगमात् ऐक्यमेव परिशेषात् प्राप्तं इत्याह—**तर्हि ऐक्यमेव** इति॥

एवं ग्रहणस्य विवेचकत्वं निराकृत्य स्मरणस्यापि विवेचकत्वं निराचष्टे—**किञ्च** इति। स्मृतेरन्यः स्मृतिधर्मः स्मरणाभिमानः अस्तु इति; नेत्याह

---

भा. किमसाधारणधर्मज्ञानं विशेषदर्शनम्? उत भेदज्ञानम्? नाद्यः, असाधारणतया तत्परिज्ञानस्य भेदज्ञानाधीनतया तत्पूर्वमसम्भवात्। स्वरूपेण तत्परिज्ञानस्याविवेचकत्वात्। अथ यावत्स्ववृत्तिधर्मवानिति, शुक्तित्वादिज्ञानेऽपि तस्य रजतादिविवेकाप्रतीतेः इत्यभिप्रेत्य द्वितीयं दूषयति—**यदीति**। तत्रैव

भिमानः इति। न तावत् स्मृतिरेव, तस्याः प्रमोषे ज्ञानस्यैवाभाव-प्रसङ्गात्, स्मृतेरन्यश्चेत्; कथमन्यस्य प्रमोषे परिपूर्णमुत्पन्नं ज्ञानं स्वकार्यमर्थविवेकं न कुर्यात्, न चान्यः स्मरणाभिमानो दृश्यते इति भावः। ननु पूर्वानुभवतद्देशकालानामन्यतमेन 'सः' इत्याकारेण वा स्मर्यमाणस्य सम्भेदः स्मरणाभिमानः इति; नेत्याह—न तावत् 45-1
ज्ञानानुविद्धतया ग्रहणं इति। 'सोऽयं' इति प्रत्यभिज्ञाभ्रमे हि सर्वेषामेवैषां 'सः' इत्याकारस्य पूर्वानुभवदेशकालानां च स्मरामीतिपर्यन्तानां सम्भेदावगमेऽपि गृह्यमाणेनाविवेकदर्शनादिति भावः। न च पूर्वानुभव-सम्भेदः स्मर्यमाणे सम्भवति इत्याह—न ह्यतिवृत्तस्य इति। अर्थस्मृति- 45-2
संस्कारस्य जनकं यत् पूर्वविज्ञानं तत् स्वयं ग्राह्यविशेषणतया स्वेनैव न विषयीक्रियते, अर्थमात्रविषयत्वात् पूर्वज्ञानस्य। न हि पूर्वज्ञानेना-विषयीकृते विषये तत्संस्कारजन्या स्मृतिः समुत्पद्यते। तस्मादर्थ-मात्रविषयज्ञानजन्या स्मृतिरर्थमात्रमेव विषयीकरोति, न पूर्वज्ञानेना-विषयीकृतं ज्ञानमपि। अन्यथा नीलज्ञानात् पीतेऽपि स्मृतिः स्यात्॥

—न च अन्यः इति। ज्ञानानुविद्धतया ग्रहणं इति एतद्देशकालादिसंभेदा-नामपि उपलक्षणार्थं इत्यभिप्रेत्य व्यभिचारं दर्शयति—सोऽयं इति। पक्ष एवायं न संभवति इत्याह—न च इति। अर्थेति। अर्थस्मृतिजनकसंस्कारस्य इत्यर्थः। स्वेनैव न विषयीक्रियते इति। कर्मकर्तृभावविरोधात् इत्यर्थः। अस्तु, तथापि ज्ञानानुविद्धतया स्मरणं किं न स्यात् इति; अत आह—न हि इति। ता.

स्मरणाभिमान इत्याशङ्क्य निराकरोति—नन्वित्यादिना। स्मर्यमाणे पूर्वानुभव-सम्भेदः स्मरणाभिमान इत्यत्र दूषणान्तरमाह—न च पूर्वेति। अन्यथेति। ननु स्वयम्प्रकाशत्वात् ज्ञानस्य तद्गोचरोऽपि संस्कारः तत उत्पन्न इति तत्स्मृ-तिरिति चेत्, यदि स्वयंप्रकाशत्वं स्वविषयत्वं तदा अनुपपन्नमेव। स्वजन-केन्द्रियप्रत्यासत्त्याश्रयस्यैव स्वविषयत्वात्। अन्यथा नीलज्ञानस्य पीतो विषयः स्यात्। यदि स्वयं न स्वविषयस्तर्हि स्वस्य स्वयं प्रकाश(विषय) एव न भवतीति कथं ततस्तत्संस्कारः, भट्टाभिमतप्राकट्यमपि प्रत्यक्षविषय एवेति भावः॥ भा.

नन्वु स्मर्यमाणे पूर्वानुभवसम्भेदः स्वानुभवसिद्धः । सत्यम्—यत् पूर्वानुभवसमये अर्थावभासलिङ्गजन्यमर्थज्ञानसद्भावविषयमनुमानज्ञानमुत्पन्नं तदनुमानज्ञानसंस्कारजनिता स्मृतिः अनुभवसम्भिन्नमर्थं गमयति। मूलज्ञानेनापि अर्थज्ञानविषयेण विशिष्टार्थविषयीकरणात्। यस्मादर्थस्मृतिसमनन्तरमनुभवविशिष्टार्थस्मृत्यन्तरजननादर्थस्मृतिरेवानु-
45 - 3 भवसम्भिन्नेति विभ्रमः,—तस्मात् शुद्धमेवार्थं इत्युपसंहरति। शुद्धमिति—पूर्वज्ञानेन यावन्मात्रं वस्तुमात्रं वा ज्ञानसम्भिन्नं वा वस्तु विषयीकृतं तावन्मात्रमेवावभासयति न स्वमूलज्ञानसम्भिन्नं इत्यर्थः ॥

ननु अर्थस्मृतिर्वा, ज्ञानसम्भिन्नविषयं स्मृत्यन्तरं वा, इत्यत्र
45 - 4 को विवेकः? इति; तत्रोदाहरणमाह—तथाच पदात् पदार्थस्मृतौ इति। वाक्यार्थप्रत्ययविवक्षया यावदन्त्यपदोच्चारणपरिसमाप्तिः तावत् क्रमेणोच्चार्यमाणेषु पदेषु एकैकस्मात् पदादेकैकार्थविषयाणि ज्ञानान्युत्पद्यन्ते। ताश्च सम्बन्धिशब्ददर्शनात् सम्बन्ध्यन्तरार्थविषयाः स्मृतयः इत्यभिहितान्वयवादिनामन्विताभिधानवादिनां च संमतम् ॥

---

ता. 'सा मे माता' 'स मे पिता' इत्यादिस्मरणज्ञानेषु अनुभवसंभेदः स्वानुभवसिद्धः इति शङ्कते—**ननु** इति। 'स घटः' इत्यादौ यदनुभवसंस्कारजन्यं स्मरणं तस्यानुभवस्य अर्थविशेषितज्ञानविषयत्वात् तथात्वमुपपन्नं न सर्वत्र इति परिहरति—**सत्यं** इति। सर्वापि स्मृतिरनुभवसंभिन्नार्थविषया इति केषांचित् विभ्रमे को हेतुः? इत्याशंक्य, आह—**यस्मात्** इति। शुद्धशब्दार्थं विवेचयन् कासांचित् अनुभवसंभिन्नार्थविषयत्वं कासांचित् अर्थमात्रविषयत्वं इति व्यवस्थायां हेतुं आह—**पूर्वेति**। 'यावतः कल्पकमस्ति तावदेव कल्पनीयं' इति न्यायात् न तु वाक्यार्थप्रत्यायनाय प्रयुक्तत्वात् पदेभ्यः पदार्थज्ञानान्येव कल्पनीयानि, कथं पूर्वानुभवसंभेदः इति दर्शितम्—**वाक्यार्थेति**। तथापि पदार्थज्ञानानां स्मृतित्वमिति; तत्राह—**ताश्च** इति ॥

---

भा. **को विवेक इति**। अन्योऽपि को विवेचक इत्यर्थः। स्मृतिमात्रस्य ज्ञानसम्भिन्नार्थविषयत्वं न नियतमित्याह—**तत्रोदाहरणमिति** ॥

**नन्तु कोऽसौ शब्दस्यार्थेन सम्बन्धः?। यतः शब्दस्य दर्शनादर्थे स्मृतिरुत्पद्येत। अर्थबुद्धिजननसामर्थ्यलक्षण इति चेत्—किं स्मृतिजननसामर्थ्यलक्षणः? अन्यो वा?। नचान्यः, पदानां पदार्थांशेषु स्मृतिव्यतिरिक्तकार्यान्तराभावात्। न च स्मृतिजननसामर्थ्यसम्बन्धादेव**

'सम्बन्धिशब्ददर्शनात् सम्बन्ध्यन्तरस्मृतिः उत्पद्यते' इति यदुक्तं तदयुक्तं शब्दार्थयोः सम्बन्धाभावात् इति बौद्धः प्रत्यवतिष्ठते—**कोऽसौ** इति। यत् यत्र बुद्धिजनकं तत् तेन सम्बद्धं दृष्टं, यथा धूमादिकं अग्न्यादिना, शब्दस्य च अर्थेन न देशादिनियमः नापि संयोगादिः संबन्धः। तस्मात् वक्तृविवक्षानुमापकाः शब्दाः। तथा चोक्तं धर्मकीर्तिना— ता.

'नान्तरीयकताभावात् शब्दानां वस्तुभिः सह।
नार्थसिद्धिस्ततस्तेऽपि वक्त्रभिप्रायसूचकाः॥' इति।

तस्मात् शब्दो नाम न पृथक् प्रमाणम्। तथा च तेनैवोक्तम्—

'प्रत्यक्षमनुमानञ्च प्रमाणे सदृशात्मना।
अप्रत्यक्षस्य सम्बन्धादन्यतः प्रतिपत्तितः॥' इति।

तस्मात् न शब्ददर्शनात् अर्थे स्मृतिरुत्पद्यते इत्यर्थः। सम्बन्धान्तराभावे शक्तिरेव सम्बन्ध इति सिद्धान्तिनो मतमाशङ्कते—**अर्थेति**। शब्दस्यार्थबुद्धया सम्बन्धः न साक्षादर्थेन, तत्र किं शब्दार्थसम्बन्धेन इति भावः। एतत् दूषयितुं विकल्पयति—**किं** इति। **अन्यो वा** इति। अनुभवजननसामर्थ्यलक्षणः इत्यर्थः। इदानीं द्वितीयं प्रथमतो दूषयति—**न च** इति। संसृष्टपदार्थेषु अनुभवजनकत्वेऽपि केवलेषु तज्जनकत्वं नास्ति। तेषां सम्बन्धग्रहणकाले मानान्तरेणाधिगमात् इत्यर्थः। इदानीं प्रथमकल्पं दूषयति—**न च स्मृ-तीति**। अगृहीतसम्बन्धस्य शब्दस्य बोधकत्वे अतिप्रसङ्गात् सामर्थ्यलक्षणसम्बन्धस्य कार्यैकसमधिगम्यत्वात् स्मृतिलक्षणकार्येण तत्सामर्थ्यस्य च पूर्वाधि-

प्रसङ्गादर्थासंस्पर्शनमतमाशङ्कते—**नन्विति**। संयोगादेरसम्भवादित्यर्थः। शब्दस्यार्थे शक्तिरेव सम्बन्ध इत्याशङ्क्य, स एव निराकरोति—**अर्थेत्यादिना**। अज्ञातसम्बन्धाच्छब्दात् स्मृत्युत्पत्तावव्युत्पन्नस्यापि ततोऽर्थ- भा.

स्मृतिजन्म, अन्यत्र सादृश्यादिसम्बन्धान्तरे सति अन्यतरदर्शने अन्यतरस्मिन् स्मृतिदर्शनात् । तस्मात् न शब्दादर्थे स्मृतिरिति ॥

उच्यते—सम्बन्धज्ञानसंस्कारः शब्ददर्शनं च अत्र स्मृति-

ता. गतस्य स्मर्यमाणत्वाङ्गीकारे च अर्थस्मरणस्यापि सिद्धत्वात् शब्दवैयर्थ्यप्रसङ्गात् स्मृतिजननसामर्थ्यस्य च व्युत्पत्तिदशायां अगृहीतत्वेन स्मर्यमाणत्वायोगाच्च नायं पक्षो युक्तः इत्यर्थः । दूषणान्तरमाह—**अन्यत्र** इति । सत्येव सम्बन्धान्तरे सादृश्यादिलक्षणे अन्यतरदर्शनेन अन्यतरस्मृतिदर्शनात् इह च शब्दार्थयोः सादृश्यादिसम्बन्धाभावात् शब्ददर्शनात् न अर्थस्मृतिसम्भवः इत्यर्थः । **आदि**-शब्देन विरोधवैधर्म्यकार्यकारणभावादयः स्मरणहेतवः सम्बन्धाः गृह्यन्ते ॥

परिहरति—**उच्यते** इत्यादिना । अत्र असम्बन्धस्य तावत् बोधकतां निवारयति—**सम्बन्धेति** । विद्यमानस्यापि अनवगतत्वं निवारयति—**ज्ञानेति** । आत्माश्रयादिदोषपरिहारार्थमाह — **संस्कार** इति । लिङ्गतया बोधकत्वं निवारयति—**शब्ददर्शनञ्च** इति ॥

अयं भावः—किं केवलविवक्षायाः शब्दः अनुमापकः ? उत अर्थविशेषिततायाः ?। नाद्यः, विशिष्टव्यवहारानुपपत्तेः । न द्वितीयः, अर्थविशेषितविवक्षायाः सम्बन्धाङ्गीकारे विशेषणीभूतार्थेनापि सम्बन्धप्रसङ्गात् अर्थप्रतिपत्तिहेतोश्च अन्यस्य अदर्शनात् शब्दादेव विशेषणीभूतार्थप्रतिपत्तौ च शब्दस्यैवार्थे प्रामाण्याभ्युपगमप्रसङ्गात् इति । यत् पुनरुक्तं सामान्यविषयत्वात् त्रैकाल्यविषयत्वात् सम्बन्धज्ञानसापेक्षत्वात् प्रत्यक्षादन्यप्रमाणत्वात् अनुमानं शब्दः इति—तदयुक्तम्—शब्दः न अनुमानं पक्षधर्मत्वाद्यनपेक्षत्वात् चक्षुर्वत्, इति प्रतिप्रयोगसंभवात् सन्दिग्धप्रयोजकत्वात् । धूमादीनामपि न कार्यकारणभाव-

भा. स्मरणप्रसङ्गः । शक्तिज्ञानं च स्मृतिरूपकार्यज्ञानाधीनज्ञानमिति परस्पराश्रयः । दूषणान्तरमाह—**अन्यत्रेति** ॥

शब्दस्य शक्तिरेवार्थेन सम्बन्धः, तस्यां च सङ्गतिग्रहणकाले ज्ञातायां समयान्तरे शब्ददर्शनात्तस्यार्थे शक्तिरूपसम्बन्धसंस्कारोद्बोधे सति ततोऽर्थे स्मृतिर्भवतीति नोक्तान्योन्याश्रय इति परिहरति—**उच्यत इत्यादिना** ॥

हेतुः। नार्थेन सम्बन्धविशिष्टशब्दज्ञानम्। येन विशिष्टे स्मृतिसामर्थ्यव्यवस्थापनात् विशेषणीभूतं सम्बन्धान्तरमिष्येत, सम्बन्धविशिष्टान्यतरदर्शनाच्च अन्यतरस्मृतौ सम्बन्धविशेषणत्वेनान्यतरस्यापि स्मृतिविषयस्य प्रागेव बुद्धता स्यात्। सादृश्यादिमूलसम्बन्धानां बुद्धि-

---

सम्बन्धेन बोधकत्वात् अनुमानत्वम्, किन्तु उक्तविधत्वात् इति द्रष्टव्यम्। ता.
इदानीं संस्कारपदेन व्यावर्तितपक्षं दर्शयति—**न अर्थेन** इति। तथात्वे को दोषः इत्याशङ्क्य, वेष्टनग्रन्थेन दोषमाह—**येन** इति। येन अर्थविशेषितस्मृतिसामर्थ्यसम्बन्धात् अर्थस्य ज्ञेयताभ्युपगमात् कल्पनागौरवं आत्माश्रयतादिश्च स्यात् इत्यर्थः। एवञ्च सति शब्दस्य वैयर्थ्यमपि न अस्मत्पक्षे प्रसज्यते इत्याह—**संबन्धविशिष्टेति**। **अन्यतरेति**। शब्दस्य इति यावत्। अत्रापि 'येन' इति आदौ अनुषञ्जनीयम्। **अन्यतरस्मृतौ**—अन्यतरस्य—अर्थस्य स्मृतौ अङ्गीक्रियमाणायाम्। **अन्यतरस्यापि**—अर्थस्य शब्दजन्यस्मरणात् **प्रागेव बुद्धता**—अनुभूतता स्यात्॥

सादृश्यादौ सम्बन्धान्तरे सत्येव बुद्धिजननसामर्थ्यस्य गवयादौ दृष्टत्वादिहापि सम्बन्धान्तरं अभ्युपगन्तव्यं इत्युच्यते? यद्वा, शब्दे सामर्थ्यसम्बन्धादेव बुद्धिजनकत्वाभ्युपगमे तद्वदेव अन्यत्रापि सामर्थ्यमेव अभ्युपेयं न सादृश्यादिसम्बन्धान्तरं इति? किं वा इह सादृश्यमूलसम्बन्धाभावात् बुद्धिसामर्थ्यात् बुद्धिः नोत्पद्यते इति? इति विकल्प्य आद्यं पक्षं दूषयति—**सादृश्यादीति**।

सम्बन्धज्ञानं शब्दार्थस्मृतिहेतुरिति मतं दूषयति—**नार्थेनेति**। किं भा.
शब्दविशेषणतया सम्बन्धस्य ज्ञानमर्थस्मृतिहेतुः? स्वातन्त्र्येण वा? नाद्यः, शक्तेरप्रत्यक्षायाः शब्दविशेषणतया श्रोत्रेणानुभवायोगात्। अर्थस्मरणात् पूर्वं शब्दविशेषणतया तदनुमितेरप्यसम्भवात्। घटशब्दत्वादिना अर्थविशेषे शक्तिरनुमीयत इति चेत्, न—व्याप्तिलिङ्गादिप्रतिसन्धानं विनापि शब्दस्मरणानन्तरमेव अर्थस्मृतिदर्शनात्। न च सम्बन्धविशिष्टतया तदा शब्दः स्मर्यत इति वाच्यम्। शब्दप्रत्यक्षस्यास्मारकत्व(स्यानुपयोग)प्रसङ्गात्। अनुभूयमानपदव्यक्तेः प्रागर्थसम्बन्धित्वेनाज्ञातायास्तत्त्वेन स्मरणानुपपत्तेश्च॥

दूषणान्तरमप्याह—**येनेति**। **अन्यतरस्य**-अर्थस्य। **प्रागेव**-शब्दज्ञानाधी-

सामर्थ्यलक्षणत्वाभावात् सामर्थ्यसम्बन्धादर्थान्तरत्वं न विरुध्यते। बुद्धिसामर्थ्यसम्बन्धात् बुद्धिः नोत्पद्यते इति च स्ववचनविरोधः। तस्मात् पदेभ्यः पदार्थमात्रेषु बुद्धिसामर्थ्यसम्बन्धात् स्मृतयः इति सिद्धम्। कुतः पुनः तत्र ज्ञानसम्भेदाभावः? इति; तत्राह—
45 - 5 ज्ञानस्यापि इति। शब्दसामर्थ्यविषयतया सम्बन्धित्वेन स्मृतिविषयत्वे
45 - 5 ज्ञानस्यापि शब्दार्थत्वप्रसङ्गादिति। तथेष्टभूभागविषया इत्यादिः स्पष्टार्थः। ननु स्मृतिज्ञानस्य त्रिकोणत्वादिवत् स्वगतः कश्चिद्विशेषो दृश्यते स
46 - 2 स्मरणाभिमानः इति; नेत्याह—नापि स्वगतो ज्ञानस्य इति। ननु नित्यानुमेयेऽपि लिङ्गविशेषात् हेतुविशेषानुमानं युक्तमिति; कोऽसौ लिङ्ग-
46 - 6 विशेषः?। न तावत् ग्राह्यविशेषः इत्याह—नापि ग्राह्यविशेषनिमित्तः इति।
47 - 1 अस्तु तर्हि फलविशेषो लिङ्गविशेषः इति; नेत्याह—नापि फलविशेषनिमित्तः इति। ननु 'स्मरामि' इत्यनुभवः स्मणाभिमानः इति; अत आह
47 - 2 —यः पुनः कचित् कदाचित् इति। यदि स्मृतिस्तार्यस्मर्तृविषयशब्दत्रया-

---

ता. तत्र गवयादौ सामर्थ्यसम्बन्धादन्यस्य सादृश्यादिसम्बन्धस्य दृष्टत्वात् न कल्पनीयः। इह तु कल्पनायां गौरवात् संबन्धान्तराणां च असम्भवस्य दर्शितत्वेन बाधादपि न तत्कल्पना युक्ता इति आद्यपक्षस्य निरासः॥

द्वितीये तु सामर्थ्यसम्बन्धादन्यत्वेन तेषां अनुभूयमानानां अपलापायोगात् सत्यपि सामर्थ्यसम्बन्धे ते अभ्युपेयाः इति। इदानीं तृतीयं दूषयति—**बुद्धिसामर्थ्येति**। अतः 'शब्दः अनुमानमपि न अविनाभावादिसम्बन्धनिरपेक्षत्वात् चक्षुर्वत्' इत्युपसंहरति—**तस्मात्** इति। अनुभवविशेषमभिनयेन दर्शयति

---

भा. नार्थस्मरणात् पूर्वमेव। तथा च शब्दज्ञानं सम्बन्धज्ञानं च व्यर्थम्। एतेन द्वितीयोऽपि पक्षो निरस्त इति भावः। ननु शब्दजन्यज्ञानविषयः शब्दार्थ इति न नियमः, शब्देन पुत्रादेरनुमानात् जातिवाचकाच्छब्दात् व्यक्तेरपि ज्ञानादित्यत आह—**शब्देति**। यद्विषयं हि ज्ञानं शब्दशक्ति(ज्ञान)जन्यं तत् शब्दार्थः। व्यक्त्यादिज्ञाने त्वपर्यवसानादि कारणम्, ज्ञानज्ञाने तु शक्तितो न कारणान्तरं सम्भवतीति ज्ञानमपि गवादिपदार्थः स्यात् इत्यर्थः॥

तुपक्तोऽनुभवविशेषः 'तत् स्मरामि' इति, यदि वा त्रितयविषयमनुमानज्ञानान्तरमेतत्, उभयथापि ग्रहणादित्रितयात् स्मरणादित्रितयस्य प्रागेव भेदावगममन्तरेण ग्रहणादित्रितयशब्दव्यतिरिक्तस्मरणादिशब्दानुस्मरणं ग्रहणानुमानव्यतिरेकेण स्मरणानुमानं च न सम्भवति, विशिष्टाभिधेयावगमनिमित्तत्वात् विशिष्टशब्दानुस्मरणस्य विशिष्टावगमानुमानस्य च, इति प्रागेव स्मरामीत्यनुभवात् ग्रहणस्मरणयोः भेदो वक्तव्यः इति भावः। ननु स्मृत्यनुभवयोरर्थमात्रविषयत्वे को भेदः? इति ; अत आह—तस्मात् इति। कारणविशेषादेवेत्यर्थः॥ 47 - 5

कथं वा तव स्मृतेः ज्ञानानुमानस्य च अर्थविशिष्टज्ञानविषयत्वे समाने विभागावगमः?, कारणभेदादिति चेत्, इहापि तत् समानम्। सः इत्याकारेण स्मृतिः ज्ञानानुमानात् भिद्यते इति चेत्, कोयं सः इत्याकारः?। परोक्षदेशकालविशिष्टता इति चेत्, अनुमानादिष्वपि प्रसङ्गः। पूर्वानुभवसंभिन्नतेति चेत्, ज्ञानानुमाने पौरुषेयवाक्यजन्यज्ञाने च प्रसङ्गः। तस्मात् संस्कारजन्यत्वं सः इत्याकारः इति। अस्तु तर्हीहापि तथाविधैव स्मृतिरिति ; नेत्याह—नचेह इति। न च स्वप्ने अहं 48 - 1
नीलमिति गृह्यमाणाविवेकः। स्मर्यमाणानामन्योन्याविवेके परोक्षमेव —तत्स्मरामि इति। असंभवे हेतुमाह—विशिष्टेति॥

ता.

एवं सामग्रीभेदात् अनुभवस्मरणयोः भेदो दर्शितः। तमेव इदानीं प्रश्नपूर्वकं प्रतिबन्दिन्यायेन साधयति—कथं वा इति॥

इतोऽपि अविवेकः न भ्रमः इत्याह—न च स्वप्ने इति। अयमर्थः—किं गृह्यमाणयोः अविवेकः विभ्रमः? किं वा गृह्यमाणस्मर्यमाणयोः? उत स्मर्यमाणयोः?। नाद्यः। स्वप्नदशायामात्मव्यतिरिक्तस्य कस्यापि अग्रहणात्। नापि द्वितीयः। गृह्यमाणेन आत्मना स्मर्यमाणस्य नीलादेः अविवेके सति 'अहं नीलम्' इति प्रतिभासप्रसंगात्। नापि तृतीयः इत्याह—स्मर्यमाणानां इति॥

भा.

भेदो वक्तव्य इति। न च स्मृतित्वं स्मरणाभिमानः दोषात्तस्याभानं प्रमोष इति वाच्यम्। तस्यापि प्रत्यभिज्ञाभ्रमे सत्त्वादिति भावः। पौरुषेयवाक्येति। लिङ्गविषयेत्यर्थः। तस्मात् प्रागुक्तानुमानात् भ्रान्तिज्ञानं सिध्यतीति

**सर्वमवभासेत । अतो न प्रमाणस्मृतिद्वैराश्यमेव ज्ञानस्य किन्तु तृतीयं**
48 - 3 **भ्रान्तिज्ञानमपीत्युपसंहरति**—अतो नान्यसंप्रयोगे **इति ॥**

**न चेत् स्मृतिः किं तर्हि इदं रजतमिति ?। ननु अन्यथाख्या-**

ता. इदानीं अन्यथाख्यातिं प्रस्तावयति—**किं तर्हि इदं** इति । इदानीं

भा. परस्य तत्र स्मृतित्वानुमानमप्रयोजकं वर्णितप्रतिकूलतर्कबाधितं चेत्यभिप्रेत्योप-संहरति—**अतो न प्रमाणेति** ॥

**नन्वन्यथाख्यातिरिति** । चक्षुषा देशान्तरादिगतरजतात्मना शुक्ति-र्भातीत्यर्थः । ननु इदमनुपपन्नम्, चक्षुषस्तेन सम्प्रयोगाभावात् । न हि विशेषण-संप्रयोगं विना विशिष्टप्रत्यक्षं सम्भवति । दण्डज्ञाने पुरुषेन्द्रियसम्प्रयोगे तदुभया-संसर्गाग्रहे च सत्यपि दण्डेन्द्रियसंयोगं विना दण्डीति प्रत्यक्षासम्भवात्, पर्वतादौ विशेषणेन्द्रियसन्निकर्षातिरिक्तवह्निविशिष्टप्रत्यक्षसामग्र्यासत्त्वेनानु-मित्यनुत्पादप्रसङ्गाच्च। समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात्। संशयोत्तर-प्रत्यक्षस्थले तथा दृष्टत्वात्। पक्षतायास्साधकमानाभावघटितत्वमते संशयोत्तर-[प्रत्यक्ष]स्थल इव पक्षताभावप्रसङ्गात् ॥

ननु संशयानुत्तरप्रत्यक्षस्थले अनुमितिसामग्र्येव बलवतीति चेत्, न—पर्वते वह्नि-परामर्शसमयोत्पन्नसंयोगादनुभवसिद्धसाक्षात्काराभावप्रसङ्गात्, संशयानन्तरमनुमित्यभावप्रसङ्गाच्च । न च प्रमायामेव विशेषणसन्निकर्षः कारण-मिति वाच्यम् । लाघवेनेन्द्रियजन्यज्ञानमात्र एव तज्जन्यत्वावधारणात् । अन्यथा सत्यप्रवृत्तावेव विशिष्टज्ञानं हेतुरिति कान्यथाख्यातिः । भ्रमरूप-विशेषदर्शनात् पुरुषत्वादिभ्रम इव पर्वते भ्रमरूपपरामर्शानन्तरं चाक्षुषवह्निभ्रम-प्रसङ्गाच्च ॥

किञ्च, प्रत्यक्षस्य विषयसन्निकर्षजन्यत्वात्तद्विषयविशेषणसन्निकर्षः कार-णम्, न तु विशेष्यसन्निकर्षः । लाघवेन विषयसन्निकर्षत्वेनैव हेतुत्वात् । तत्रापि यावद्विशेष्यसन्निकर्ष इव यावद्विषयसन्निकर्षः कारणमिति विशेषणसन्निकर्षो-ऽपि कारणम् । ननु अननुभूतरजतस्य पुंसो भ्रमानुदयात् संस्कारः स्मृतिर्वा

**तिरेषा। तथाहि—शुक्तिकासंप्रयोगे दोषोपहतमिन्द्रियं देशान्तरादिगतं रजतमभिगृह्णाति। तच्च स्वदेशाद्यवस्थितं दोषोपहतेन्द्रियेण गृह्यमाणं शुक्तिकात्मना गृह्यते। ननु अननुभूतमपि यत् किञ्चिदपि दोषोपहतमिन्द्रियं किमिति न गृह्णाति?। सादृश्यादिदोषसामर्थ्यात् इति वदामः। तस्मात् ग्रहणात्मकमन्यथाज्ञानमिति॥**

---

अन्यथाख्यातिं उपपादयति—**तथा हि** इति। देशान्तरस्थं रजतं प्रतिभाति चेत् 'तत्र रजतं' इति प्रतिभायात् इति; अत आह—**तच्च** इति॥ ता.

---

सन्निकर्षोऽस्त्विति चेत्, तस्य निरसिष्यमाणत्वात्। रजतस्य शुक्तिकासंस्पृष्टत्वेन पूर्वमननुभूतत्वेन तत्र तत्प्रत्यासत्तित्वानुपपत्तेः। अन्यथा पाकरक्ते घटे श्यामोऽयमिति धीरिव यस्मिन् पूर्वं दण्डो न दृष्टः अथ च [न] स तत्रास्ति, तत्रापि दण्डज्ञानानन्तरं दण्ड्ययमिति प्रमाप्रसङ्गः, तत्संशयोऽपि न स्यात्। तस्मात् सामग्र्यभावात् नान्यथाख्यातिरित्याशङ्क्याह—**तथा हीति**। दोष एव रजतस्य इन्द्रियसन्निकर्ष इत्यर्थः। रजतस्यासत्त्वे प्रतीत्ययोगात्तत्र सत्त्वे बाधायोगात् परिशेषादप्यन्यथाख्यातिरित्यभिप्रेत्योपसंहरति—**तस्मादिति**॥ भा.

उच्यते-संप्रयोगान्तरं तावत् दूषितम्। दोषोऽपि न सम्प्रयोगरूपः, तस्य तेन रूपेण भ्रान्ति(ज्ञान)जनकत्वे भ्रान्तेः अप्रामाण्यस्य परतस्त्वायोगात्। प्रत्यक्षसामान्यसामग्र्यतिरिक्तकारणाभावात्। दोषान्वयव्यतिरेकयोस्तत्प्रत्यासत्तित्वविषयत्वेन तस्य दोषत्वेनापि कारणत्वे प्रमाणाभावात्। किञ्च, दोषोऽपि न रजतांशज्ञाने हेतुः। तस्य यथार्थत्वात्। यथार्थज्ञाने च दोषस्याहेतुत्वात्। इदमंशमात्रज्ञानवद्रजतांशमात्रज्ञानस्यापि तेन विना सम्भवाच्च। व्यधिकरणप्रकारज्ञानं तेन विना न भवतीति चेत्, इदमंशज्ञानेऽपि तत्प्रसंगात्। तथापि रजतांशज्ञानस्य विषयबाधाभावेन प्रमात्वात्तेन विनापि दर्शनाच्च। तस्य शुक्तिवैशिष्ट्यांशज्ञानमयथार्थत्वात्तेन विना अभावाच्च ततो जन्यते। ततः तत्र [रजते] कथं दोषः प्रत्यासत्तिः। तज्ज्ञानाजनकस्य तत्प्रत्यासत्तित्वायोगात्॥

किञ्च, विशिष्टस्यारोपितस्य दोषेण न स्वरूपसम्बन्धोऽप्यस्तीति कथं तत्र दोषः प्रत्यासत्तिः। एवं वैशिष्ट्येऽपि तव न दोषः प्रत्यासत्तिर्भवितुमर्हति।

उच्यते—केयमन्यथाख्यातिः? अन्याकारं ज्ञानमन्यालम्बनं
वा, वस्तुनो वस्त्वन्तरात्मनावभासो वा, अन्यथा परिणते वस्तुनि
48.5 ज्ञानं वा ?। न तावत् प्रथमः कल्पः इत्याह— ननु एवं सति वैपरीत्यं
48.6 इति। कुतो वैपरीत्यमिति; अत आह—नैतत् सविदनुसारिणां इति।
सर्वत्र यदाकारं संवेदनं तदेवालम्बनमिति नियमे रजताकारसंवेदन-
विरुद्धं शुक्तिकालम्बनत्वमित्यर्थः। ननु न संविदाकारता आलम्बनता
48.6 सर्वत्र, किन्तु संवित्प्रयुक्तव्यवहारविषयता इति चोदयति—ननु शुक्तेः
स्वरूपेणापि इति ॥

---

ता. ज्ञाने अन्यथात्वम्? किं वा ज्ञानफले? उत वस्तुनि? इति विकल्पयति—**केयं इति** ॥

---

भा. असता तेन दोषस्य सम्बन्धाभावेन तदीयत्वानुपपत्तेः। न हि निस्स्वरूपेणासता स्वरूपसम्बन्धोऽपि वक्तुं शक्यते। अतो रजतवैशिष्ट्येन्द्रियसन्निकर्षाभावान्नान्यथाख्यातिर्युक्तेति परिहरति—**उच्यत इति** ॥

**रजताकारसंवेदनविरुद्धं शुक्तिकालम्बनत्वमिति**। ननु इदं रजतमित्येकमपि ज्ञानमिदंरजताकारम्। तत्रेदमाकारज्ञानांशस्य शुक्तिर्विषयः, रजताकारज्ञानांशस्य तु रजतमेव विषयो न शुक्तिरिति कुतोऽनुभवविरोध इति चेत्, तर्हि रजतांशज्ञानात् पुरोवर्तिनि प्रवृत्तिर्न स्यात्। ज्ञानस्य स्वविषय एव प्रवर्तकत्वात्। न च तदंशस्यैव तदविषयत्वेऽपि ज्ञानमेकमिति ततस्त्रापि प्रवृत्तिरिति वाच्यम्। ज्ञानं हीष्टविषयं प्रवर्तयति। तच्च [तत्त्वं च] यदंशे तस्यैवांशस्य इष्टज्ञानत्वेन प्रवर्तकत्वं वाच्यम्, तदत्र रजतांशज्ञानं नेदमंशज्ञानमितिं पुरोवर्तिनस्तदविषयत्वे कथं तत्र प्रवृत्तिः स्यात्। अन्यथा रजतारजतप्रमाणसमूहालम्बनात् रजतार्थी अरजतेऽपि प्रवर्तेत। तस्यापि रजतज्ञानविषयत्वात्। न च तत्रेष्टभेदग्रहान्न प्रवृत्तिरिति वाच्यम्। विशिष्टज्ञाने विद्यमानेऽपि भेदाग्रहव्यतिरेकादप्रवृत्तिरित्यभ्युपगमे तस्यैव प्रवर्तकत्वेन विशिष्टज्ञानस्याहेतुत्वप्रसङ्गात्। न च यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयीकरोति इष्टतावच्छेदकप्रकारकज्ञानं तत्र प्रवृत्तिरिति नातिप्रसङ्ग इति

**इदं तावदयुक्तम्—न हि व्याघ्रसर्पादिज्ञानात् दण्डादिषु आदीयमानेषु व्याघ्रादिज्ञानस्य दण्डादि आलम्बनम्। न च द्रव्य-**

---

ता. 'तज्ज्ञानालम्बनत्वं नाम तत्प्रयुक्तव्यवहारविषयत्वम्' इति लक्षणं अतिव्याप्त्या दूषयति—**इदं तावत्** इति। लौकिकोदाहरणं उक्त्वा तीर्थकराणां सम्मतं उदाहरणं आह—**न च** इति॥

---

भा. वाच्यम्। लाघवेन तादृशज्ञानविषयत्वस्यैव प्रवृत्तिविषयत्वप्रयोजकत्वात्, रजतभ्रमस्य रजत एव रजतत्ववैशिष्ट्यविषयतया शुक्तौ तद्वैशिष्ट्याविषयत्वाच्च। ननु रजतत्वप्रकारकशुक्तिविशेष्यकभ्रमो रजतत्वारोप इति तत्रैव तद्वैशिष्ट्यं भ्रमविषय इति चेत्, न—रजतं विना जातेः प्रत्यक्षत्वायोगेन आवश्यके रजतारोपे तत्र रजतत्वारोपे प्रमाणाभावेन रजत एव तद्वैशिष्ट्यस्य भ्रमविषयत्वात्॥

किञ्च, रजतव्यक्तिविशेषव्यतिरेकेण रजतत्वं जातिरुपाधिर्वा नेति भ्रमदशायामपि रजतभ्रमदर्शनान्न रजतत्वं तस्य विषयः। तदभावनिश्चयस्य तदारोपविरोधित्वात्। किञ्च, रजतमिति स्मरणान्न रजतत्वारोपसम्भवः। तस्यान्यविशेषणत्वात्। रजतारोपसामग्र्यां सत्यां तदभावश्च न युज्यते। न च रजतानुभवमात्रात् भ्रमस्थले रजतत्वमिति स्मृतिर्भवति। निर्विकल्पकस्मृत्ययोगेन तत्स्मृतेः रजतप्रकारकतया भ्रमेऽपि रजतं प्रकारः स्यादिति न रजतत्वारोपः। तर्हि यत्र इष्टवैशिष्ट्यं प्रतीयते तत्र प्रवृत्तिरस्ती(स्त्वि)ति चेत्, न—रजतप्रमया तदभावप्रसङ्गात्॥

न च यत्र रजताभेदप्रतीतिस्तत्र प्रवृत्तिरिति वाच्यम्। अभेदो हि भेदाभावः? स्वरूपं वा?। नाद्यः, रजतमिति प्रत्यक्षस्य तदविषयत्वात्। द्वितीये, रजतज्ञानं स्वविषये प्रवर्तकमित्येवायातम्। तथा च कथं नोक्तदोषः। तस्माद्यदि न शुक्तिः रजतज्ञानांशविषयस्तदा न तत्र प्रवृत्तिः। अथ विषयस्तदा अन्याकारज्ञानमन्यालम्बनमिति अन्यथाख्यातिवादिनः उभयतःपाशा रज्जुः इति भावः। न हि ज्ञानजन्यव्यवहारविषयत्वमेव ज्ञानविषयत्वम्, ज्ञानं स्वविषय एव व्यवहारं जनयतीति तत्प्रयोजकतया तस्य ततोऽन्यत्वादित्यभिप्रेत्याह—**इदं तावदयुक्तमिति**। दूषणान्तरमप्याह—**न हि व्याघ्रेति**॥

गुणादिज्ञानप्रयुक्त्या द्रव्यगुणादिषु आदीयमानेषु द्रव्यादीनामन्योन्यज्ञानालम्बनत्वं प्रसिद्धम्। तस्मात् तदाकार एवालम्बनमिति नान्याकारं ज्ञानमन्यालम्बनमन्यथाख्यातिरिति बहिरेवोपसंहर्तव्यम्। अस्तु तर्हि
49 - 1 वस्तुनो वस्त्वन्तरात्मनाऽवभासः इति; तत्राह—अथ तथारूपावभासनं इति। न तावदत्यन्तभेदवादिनां संसर्गः परमार्थः। ततश्च अनिर्वचनीयानभ्युपगमात् शून्य एव संसर्गः प्रकाशेत। एवं 'खण्डो गौः'

---

ता. द्वितीयं पक्षं उत्थापयति—**अस्तु तर्हि** इति। 'आहो न' इति टीकाकारेण उपन्यस्तं अपारमार्थिकत्वपक्षं प्रथमतो दूषयति—**न तावत्** इति। **संसर्गः**—इदमाकाररजताकारयोः भ्रान्तिगोचरयोः अभेदः इति यावत्। हेतुगर्भमिदं विशेषणं **अत्यन्तभेदवादिनां** इति। तथापि कुतः शून्यता? अनिर्वचनीत्वस्यापि सम्भवात् इति; अत आह—**ततश्च** इति। न केवलं भ्रान्तिस्थले संसर्गशून्यता सामान्यविशेषयोः। सर्वत्रापि संसर्गः शून्य एव स्यात् अभेदानुपगमात् इत्याह—**एवं** इति। आदिशब्देन गुणगुण्यादिसामानाधिकरण्यं गृह्यते॥

---

भा. **उताहो नेति टीकयो**क्तं द्वितीयं पक्षं सयुक्तिकमनुवदति—**न तावदिति**। सामान्यविशेषयोरत्यन्तभेदवत्त्वादिदंरजतयोर्न पारमार्थिकः संसर्गः सम्भवतीत्यर्थः। दूषयति—**ततश्चेति**। न हि शून्यमपरोक्षज्ञानविषयो भवति। तस्य संविदभिन्नत्वाभावात्, तत्प्रत्यक्षजनकेन्द्रियासन्निकृष्टत्वाच्च। न च विशेषणविशेष्यसम्बन्धोऽसन्निकृष्ट एव ज्ञायत इति वाच्यम्। प्रत्यक्षजनकेन्द्रियसन्निकर्षाश्रयस्यैव प्रत्यक्षनियमात्। तथा(पि)[च] इदं रजतमिति प्रत्यक्षस्य न परमते समूहलाम्बनाद्विशेषः॥

एतेन सदुपरक्तमसदपि भासत इति प्रत्युक्तम्। असतस्सदुपरागासम्भवात्। एतेन रजततादात्म्यं रजते सदिति भ्रमस्य नासत्संसर्गविषयत्वमिति कस्यचिन्मतं प्रत्युक्तम्। विशेषणविशेष्यनिरूपितं हि वैशिष्ट्यं विशिष्टज्ञानं विषयीकरोति, न त्वन्यत्। अत्र च विशेषणं रजतं विशेष्यं शुक्तिः, न च तयोस्तादात्म्यरूपं वैशिष्ट्यं तार्किकमतेऽपि सद्भवति। तथात्वे वा भ्रान्तित्वानुपपत्तेरिति भावः। **खण्डो गौः** इति। तयोरप्यत्यन्तभिन्नयोस्ता-

इत्यादिसंसर्गप्रत्ययाः सर्वे एव विभ्रमाः प्रसज्येरन्निति बहिरेव एकः पक्षः प्रतिवक्तव्यः ॥

अथ भेदाभेदवादी संसर्गसत्यतां ब्रूयात्, तत्राह—यदि पारमार्थिकं 49-2
इति। 'खण्डो गौ'रित्यादिवत् सर्वस्य भेदाभेदात् न क्वचिदपि भ्रान्तिबाधौ सर्वत्र वा तौ स्यातां इत्यर्थः। अस्तु तर्हि अन्यथापरिणते वस्तुनि ख्यातिः अन्यथाख्यातिः इति; तत्राह—अथ शुक्तेरेव इति। 49-4
शुक्तेः परिणामनिराकरणग्रन्थः स्पष्टार्थः ॥

अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेः इत्यादिना अन्यथाख्यातावेव 50-3
परिणामप्रकारभेदो निराक्रियते, ख्यात्यन्तरनिराकरणं वा? कथम्?। अत्राह आत्मख्यातिवादी — बुद्धेरेव रजताकारः न बहिरिति।

---

ता. न च वाच्यं अत्यन्तभिन्नयोरपि समवायः सामानाधिकरण्यप्रत्ययहेतुः भविष्यति। 'दण्डी' 'दण्डवान्' इतिवत् 'खण्डो गोत्वी गोत्ववान्' इति वा संबन्धस्य प्रतीतेः। समवायस्य च आधेयाधारभूतयोः इहप्रत्ययहेतुत्वेन अभेदप्रत्ययविरोधिभेदप्रत्ययस्यैव हेतुत्वाभ्युपगमात्। उक्तञ्च ब्रह्मसिद्धिकारैरेव—

न तावद् द्वयमैकात्म्यप्रख्यानानवकल्पनात्।
समवायकृतं तच्चेत् न भेदस्यापरिच्युतेः ॥ इति।

तथा च अविद्यमानस्य अभेदस्य प्रतिपादनात् 'खण्डो गौः' इत्यादिप्रत्ययाः विभ्रमाः स्युः इत्यर्थः ॥

**परिणामप्रकारभेदः** इति। अज्ञप्रतीतिरेव दुष्टकारणजन्या रजताकारेण परिणता सती तथा अवभासते, सेयं अन्यथाभूता ख्यातिः अन्यथाख्यातिः इति येषां मतं तन्मतं निरस्यते इत्यर्थः ॥

**ख्यात्यन्तरनिराकरणं**—आत्मख्यातिनिराकरणं इति यावत्। तर्हि आत्मख्यातिरेव का? कथं वा तस्या निराकरणम्? इति पृच्छति—**कथं** इति। घटादौ व्यभिचारवारणाय **संप्रयोगव्यतिरेकेण** इति विशेषणम्। अनुमेयादिव्यवच्छेदार्थं **अपरोक्षत्वात्** इति विशेषणम् ॥

---

भा. न्तास्यासम्भवात् समवायस्य चाप्रामाणिकत्वादिति भावः ॥

कुतः ? । **संप्रयोगव्यतिरेकेणापरोक्षत्वात् बुद्धिवत्। कथं विज्ञानस्य रजताकारः प्राप्तः ? । संस्कारसामर्थ्यादिति वदामः । तथाहि—यस्यां ज्ञानसन्ततौ यदा कदाचित् पूर्वं रजतज्ञानमुत्पन्नं तदेव संस्कार उच्यते। नच विज्ञानजन्यः अन्येषामिव स्थायी क्षणिको वा अन्यः कश्चित् अस्य संस्कारो विद्यते, विज्ञानमात्रवादात्। स च अनेकज्ञानव्यवहितोऽपि कदाचित् सजातीयं रजतज्ञानान्तरमुत्पादयति शालिबीजमिव अनेकाङ्कुरादिकार्यव्यवधानेन पुनः सजातीयबीजान्तरनिमित्तं इति। अथवा तज्जन्यज्ञानसन्तान एव संस्कारः स च तथाविधज्ञानान्तरात् इति अनादिवासनाप्रापितं रजतं बुद्ध्याकारो बहिर्वदवभासते इति ॥**

---

ता. ननु 'चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ताः उत्पद्यन्ते' इति सौगतानां मतम्। तत्र न तावत् सहकारि-अधिपति-प्रत्ययाभ्यां विज्ञाने रजताकारोदयः। सहकारिप्रत्ययस्य आलोकादेः स्पष्टतामात्रहेतुत्वात्। अधिपतिप्रत्ययस्य चक्षुरादेः विषयप्रतिनियममात्रहेतुत्वात्। नापि समनन्तरप्रत्ययात्। विजातीयघटज्ञानानन्तरं विजातीयरजतभ्रमोदयदर्शनात्। नापि आलम्बनप्रत्ययात्। बाह्यार्थानङ्गीकरणात्, तज्जन्यत्वे च यथार्थत्वापत्तेः इत्याक्षिपति—**कथं विज्ञानस्य** इति॥

आह बौद्धः—**संस्कारेति**। ननु संस्कारस्यापि स्थायिनः पूर्वक्षणवृत्तिनः अभावात् कथं ततः तदाकारतापत्तिः ? इति; अत आह—**तथा हि** इति। ननु विज्ञानजन्यः संस्कारः वासना, न विज्ञानमेव, तत् कथं इत्थमुच्यते ? इति; अत आह—**न च** इति। ननु तस्य विजातीयानेकज्ञानव्यवहितत्वात् कारणत्वं अनुपपन्नं इति; अत आह—**स च** इति। ननु न तस्यापि पूर्वबीजात् उत्तरबीजस्य उत्पत्तिः भवति, किन्तु, शालिसन्तानात् इति; अत आह—**अथ वा** इति। ननु सोऽपि कथं जायताम् ? इति; अत आह—**स च तथाविधेति** ॥

---

भा. **कुत इति**। रजतस्य बहिरेवानुभूयमानत्वादित्यर्थः। यत् सम्प्रयोगमन्तरेणापरोक्षं तत् संवेदनाभिन्नम्, यथा संवेदनम्, रजतं च तथा, अस्य सम्प्रयुक्तत्वे पुरोदेशे बाधायोगादित्यभिप्रेत्याह — **सम्प्रयोगेति** ॥

**स वक्तव्यः—किं तद्रजतं जायते न वा? इति। न चेत्, जायमानस्वरूपं न स्यात् आकाशवत्। जायते चेत्, नार्थात्। अर्थान्तराभावात्। अथ ज्ञानादेव दुष्टकारणजन्यात् रजतोत्पादः इति; तदाह** —अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेरेव रजतोत्पाद इति इति। **जनकप्रतीतेः** 50-3 **रजतात् पूर्वकालत्वात् अतद्विषयत्वात् प्रतीत्यन्तरस्यादुष्टकारणस्य तद्विष-**

---

ता. तस्य रजतस्य अलौकिकत्वात् जन्मैव नास्ति? उत रजतत्वात् लौकिकस्येव जन्म अस्त्येव? इति विकल्पयति—**किं तत्** इति। बुद्ध्याकारातिरिक्तबाह्यार्थानभ्युपगमात् इत्यर्थः। रजतं किं वा स्वजनकप्रतीतेः विषयः? उत प्रतीत्यन्तरस्य? इति विकल्प्य द्वितीयं दूषयति—**प्रतीत्यन्तरस्य** इति।

---

भा. ननु **दुष्टकारणजन्याया इति टीका** विज्ञानवादे न युक्ता, तेन बहिरर्थानभ्युपमात्। नापि ज्ञानाकारस्योत्पत्तिस्तेन कथ्यते। **पुरुषान्तरेत्युत्तर**ग्रन्थविरोधादित्याशङ्क्याह— **स वक्तव्य इति**। बाह्यं रजतमान्तरं न तु बाह्यमिति वदन् किं किं न वदेदित्यभिप्रेत्याह—**न चेदिति**॥

घटादिज्ञानस्य हि चक्षुर्घटादिसम्प्रयोगाद्यन्वयव्यतिरेकार्थवत्त्वाय विषयाकारत्वमालम्बनप्रत्ययात् भवतीति वाच्यम्। तद्वत् रजतभ्रमस्यापि रजताकारत्वं किं अर्थात् भवति? उत ज्ञानात्?। नाद्यः, अर्थाभावात्। अन्त्येऽपि न तावत् पूर्वरजतज्ञानात्। तस्य चिरध्वस्तत्वात्। तादृग्विधस्यापि कारणत्वे चिरातीतदहनादपि सम्प्रति धूमप्रसङ्गात्। नाप्यव्यवहितपूर्वक्षणवृत्तिघटादिज्ञानात्। अन्याकारात् ज्ञानादर्थान्तरोत्पत्तावतिप्रसङ्गात्। तस्मात् तदेव रजतज्ञानं स्वाकारं रजतमुत्पादयतीति वाच्यम्। तत्र किं आकारविशिष्टं ज्ञानमुत्पादयति? उताकारमात्रम्?। नाद्यः, स्वस्य स्वजन्यत्वानुपपत्तेः। न द्वितीयः, रजतमात्रोत्पत्तौ पूर्वं तस्य निराकारत्वापत्तेः असतो भानानुपपत्तेश्च बहिरेवार्थ उत्पद्यते इति वाच्यम्। तत्र प्रतीत्यनुपपत्तिदूषणमाह—**जनकेति**। वस्तुतस्तु रजतस्य ज्ञानाकारत्वे न प्रत्यक्षं प्रमाणम्, तस्य बहिर्मुखत्वात्। नाप्युक्तानुमानम्, तस्य रजतबहिष्ट्वे व्यभिचारात् अप्रयोजकत्वाच्चेत्यभिप्रायः॥

यत्वे सर्वप्रतीतिविषयत्वप्रसङ्गात् दुष्टकारणप्रतीतेश्च रजतजन्यतया तदालम्बनत्वे रजतस्यार्थक्रियावत्तया सत्त्वप्रसङ्गात् अतज्जन्यत्वे तद्विषयत्वाभावादप्रतीतमेव रजतं स्यादिति भावः। अन्यथाख्यातिं
50 - 10 निराकृत्य अख्यातिवादी स्वपक्षमुपसंहरति—तदेवं पारिशेष्यात् इति।
51 - 1 अख्यातिदूषणमप्युक्तमनुस्मारयति—ननु स्मृतेः इति॥

ननु न स्मृतिः नापि ग्रहणं चेत् अलौकिकमिदं ज्ञानं कथं? इति
51 - 3 चोदयति–का तर्हि गतिः? इति। किं सामग्रीं पृच्छसि किं वा ज्ञानं अथ
51 - 4 विषयं? इति। यदि सामग्रीं, तत्राह—नेन्द्रियजज्ञानात् इत्यादिना। नन्विन्द्रियसंस्कारौ चेत् सामग्री सम्यग्ज्ञानमेवेदं स्यात् स्मृतिग्रहणवदिति
51 - 6 चोदयति—कथमेतत् इति। दोषसहकृतत्वात् तृतीयमिदं सामग्र्यमित्याह
51 - 6 —उच्यते कारणदोषः इति। ननु दोषः प्राप्तकार्यस्य प्रतिबन्धकः नाधिक्ये
51 - 7 हेतुरिति; तत्राह—कार्यगम्यत्वात् इति। न च अनादेः कार्यानुदयस्य हेतुर्दोषः। कृत्याभावात्। किन्तु व्याध्यादिवत् विपर्ययकार्यहेतुर्दोषः इति। ननु दोषः संस्कारोद्बोधकश्चेत् न सामग्र्यामन्तर्भवति इति न

---

ता. आद्यं दूषयति—दुष्टकारणेति। अतज्जन्यत्वे इति। 'ज्ञानाकारार्पको हेतुः विषयः' इति स्वीकारात् इत्यर्थः॥

ननु दोषात् अधिष्ठानग्रहणलक्षणकार्यानुदय एव अद्य भवति इति; अत आह—न च इति। संप्रयोगसंस्कारयोः विभ्रमकारणत्वाङ्गीकारात् दोषस्य च संस्कारोद्बोधकतया अन्यथासिद्धत्वात् न कारणत्वम्, इति शङ्कते—नन्विति।

---

भा. ननु दोषस्य कार्यानुदयहेतुता नोच्यते। किन्तु तस्य विशेषदर्शनरूपकार्ये प्रतिबन्धकत्वमेव दाह इव मण्यादेरिति शङ्कते—किन्त्विति। भसकादिदोषस्य विपरीतकार्यजनकत्वदर्शनादन्यत्रापि तदस्त्वित्यभिप्रेत्याह—व्याध्यादिवदिति। आदिपदेन वेत्रबीजस्य दावदाहः कदल्यङ्कुरजनको गृह्यते। किञ्च, अन्यत्रादर्शनेऽपि दोषस्य अन्वयव्यतिरेकाभ्यामपि विपरीतकार्यजनकत्वमेषितव्यम्, अन्यथा तदुत्कर्षात्तदुत्कर्षानुपपत्तेरिति भावः।

तृतीयमिदं सामग्र्यमिति; तत्राह—अतः संस्कारदुष्टकारणसंवलिता 52-1
इति। अथ ज्ञानस्यैक्यं चोद्यते, तत्राह—सा चैकमेव ज्ञानं इति॥ 52-2

नन्तु इदमा संप्रयोगादन्तःकरणपरिणामज्ञानमेकमुत्पद्यते, न तत् रजतं तत्संसर्गं वा विषयीकर्तुमीष्टे, मिथ्यावस्तुनि देशान्तरादिगते वा संप्रयोगानुपपत्तेः, चक्षुरुन्मीलनान्वयव्यतिरेकयोरधिष्ठानज्ञानोपक्ष-

---

ता. एतदुत्तरत्वेन उत्तरग्रन्थमवतारयति—तत्राह इति। दोषस्य संस्कारोद्बोधः अवान्तरव्यापारः इति न कारणत्वं व्याहन्यते इत्यर्थः॥

इदानीं 'एकफलं' इति विशेषणव्यावर्त्यांशं दर्शयति—नन्तु इदमा इति। तत्र हेतुमाह—मिथ्येति। वेदान्तमते रजततत्संसर्गयोरुभयोरपि मिथ्यात्वात् अन्यथाख्यातिमते च संसर्गस्य अवस्तुत्वात् रजतस्य देशान्तरादिगतत्वात् संप्रयोगानुपपत्तिः इत्यर्थः। रजतज्ञानस्य चक्षुःसंप्रयोगान्वयव्यतिरेकानुविधायित्वं दृश्यते इति; तत्राह—चक्षुरिति। ननु संस्कारः तर्हि

---

भा. इन्द्रियस्य रजततदधिष्ठानविषयैकज्ञानजनकत्वमुक्तम्। तदाक्षिपति—नन्वित्यादिना। शुक्तौ प्रवर्तकं रजतप्रत्यक्षं तदभिन्नविषयकम्, तदुपादानजनकत्वात्, सम्मतवत्, अन्यथा रजतज्ञानात्तदुपादानानुपपत्तेः। न चैतदन्यथाख्यातावस्ति, तन्मते रजतांशप्रत्यक्षस्य तदसम्भवात्, तच्च वक्ष्यमाणविधया मिथ्येत्यभिप्रेत्याह—मिथ्यावस्तुनीति। देशान्तरादिगते इत्यनास्थया दृष्टान्तत्वेन वोक्तम्। अन्यसम्प्रयोगजन्यज्ञानस्यान्यविषयत्वे अतिप्रसङ्गादिति भावः॥

अधिष्ठानज्ञानोपक्षयादिति। ननु आकाशे नीलिमभ्रमश्चाक्षुष एव भवति। अन्धादेरदर्शनात्। न च तत्र चक्षुषोऽधिष्ठानग्रह एवोपयोगः, आकाशस्यातीन्द्रियत्वात्। न च तद्देशीये कस्मिंश्चिदैन्द्रियके अयमारोप इति वाच्यम्। नभस्त्ववैशिष्ट्यस्याधिष्ठाने अनुभवात्। नभस्त्वमपि तत्रारोप्यत इति चेत्, न—आकाशत्वस्याप्यतीन्द्रियत्वेन तस्य 'चक्षुषा नभसि नीलं पश्यामी'ति चाक्षुषत्वानुभवविषयत्वायोगात्, आकाशत्ववैशिष्ट्यांशे बाधकाभावेन भ्रमत्वानुपपत्तेश्च। तेन विनापि भ्रमत्वकल्पने अतिप्रसङ्गात्। अत आरोप एव चक्षुर्जन्यो वाच्यः। एवं तिक्तो गुड इति रसभ्रमोऽपि

भा. गुणे रसनेन्द्रियजन्य एव। गुडस्य रसनेन्द्रियाग्राह्यत्वात्। एवं रजतभ्रमोऽपीन्द्रियजन्योऽस्तु, अत एव चक्षुषा रजतं पश्यामि इत्यनुभवः इति चेत्-

न तावच्चक्षुषा आरोप्यमात्रविषयं ज्ञानं भवति। पुरोवर्तिवैशिष्ट्यस्य भ्रमाविषयत्वे ततस्तत्राप्रवृत्तिप्रसङ्गात्, नीलं नभ इत्यव्यवहारप्रसङ्गाच्च। न चारोप्याधिष्ठानविशिष्टज्ञानमेव चक्षुरादिना जायत इति वाच्यम्। आकाशगुडयोश्चक्षूरसनायोग्यत्वात्। न च स्मरणादिनोपनीते आकाशादौ चक्षुरादिना विशिष्टज्ञानं जन्यते इति वाच्यम्, निमीलिताक्षस्याप्युपनीताकाशे चक्षुषा रूपस्य, हस्तोपनीतेऽपि गुडे रसनेन रसस्य भ्रमप्रसङ्गात्। अयोग्याधिष्ठानेन्द्रियसन्निकर्षस्य प्रत्यक्षाहेतुत्वात्। आरोप्यस्य च ज्ञानप्रत्यासत्तिं विना प्रत्यासत्त्यन्तराभावात्। तस्य च निमीलिताक्षादावपि सुलभत्वात्॥

ननु श्यामरूपतिक्तत्वयोरनुभूयमानारोप एवायम्। ततश्चारोप्यानुभवायेन्द्रियव्यापारापेक्षेति चेत्; अस्तु काममेवम्। तथापीन्द्रियस्यान्यत्रोपक्षय एव। वस्तुतस्तु श्यामता पूर्वं नानुभवितुं शक्या, तत्प्रदेशवर्तिसावित्रप्रभादौ तदभावात्। या तु विचित्ररत्नस्य मेरोर्नीलांशुमिश्रा काचित् प्रभा गगनदेशे विद्यते सैवानुभूयत इत्युत्प्रेक्षा, सा तु प्रमाणाभावान्न शोभते। विचित्ररत्नस्य मेरोर्नियमेन नीलप्रभाया एवानुभवे प्रमाणाभावात्, रात्रावपि तदनुभवप्रसङ्गाच्च। किञ्च, नियमेन दूरस्थत्वमपेक्ष्य जायमानं ज्ञानं स्मर्यमाणारोप एव। अत एव पृथिवीपरमाणुश्यामतामनुभूयारोपयतीति निरस्तम्। तस्यायोग्यत्वाच्च॥

त्रुटिश्यामताया अपि जालसूर्यमरीचेरभावान्नोपलम्भसम्भवः। पार्थिवस्थूलावयवस्य तु गगने सातत्येन पतनं विना अवस्थाने हेतुं न पश्यामः। न च भ्रमोपपादनार्थमेवादृष्टं किञ्चित् कल्प्यम्, एवमपि गगने आतपत्राकारत्वादेरनुभूयमानारोपत्वासम्भवाच्च। किञ्च, प्रत्यक्षाविषये विशेष्ये अनुभूयमानस्यापि न चक्षुषा आरोपः सम्भवति। गृह्यमाणेऽपि कुसुमे व्यवहितस्फटिके अरुणः स्फटिक इत्यननुभवात्। तस्मात् प्रत्यक्ष एवाकाशे रूपारोपो वाच्यः। तत्र यद्यपि श्रुतिस्मृतीतिहासपुराणानुभवप्रामाण्ये बहुमानवतामाकाशं नीरूपमेव। तथाप्यनुभवबलात् तत् प्रत्यक्षम्। तत्र चक्षुष एव यद्यपि कारणत्वमङ्गीकर्तुं शक्यते, यथा परेषां मनस आकाशसम्बन्धे सत्यपि अहङ्कारतद्धर्म-

यादन्यथासिद्धेः। नापि संस्कारात् रजतांशावगमः, स्मृत्यनभ्युपगमात्, नापि दोषः स्वयमेव कस्य चिज्ज्ञानस्य हेतुर्दृष्टः, ज्ञानकारणानामेव कार्यविशेषनिमित्तत्वात्। अतो न रजततत्सम्भिन्नशुक्तिविषयमेकं ज्ञानं समस्ति। किं तु अविद्यैव बाह्यदोषनिमित्तकारणापेक्षया रजता-

ता. रजतज्ञानकारणं अस्तु इति ; अत आह—**नापि** इति। अस्तु तर्हि दोष एव कारणं इति ; अत आह—**नापि दोषः** इति। फलितमाह—**अतः** इति। कथं तर्हि 'इदं रजतं' इति ज्ञानम्? इति ; तत्राह—**किं तु** इति। बाह्यदोषः—सादृश्यादिः तदेव निमित्तम्—कारणम्, तदुद्बोधितरजतसंस्कारसहिता शुक्त्यवच्छिन्नास्मचैतन्यस्था अविद्या रजताकारेण परिणमते। सैव अविद्या दोषतदु-

भा. मात्रग्राहकत्वमनुभवबलात् कल्प्यते, एवमनुभवबलान्नीरूपमपि गगनमात्रं चक्षुर्गृह्णातीत्यङ्गीकारे बाधकाभावात्। तथाप्यस्मदाचार्यास्तस्य वैशेषिकप्रक्रियानुसारेण चाक्षुषत्वमनिच्छन्तस्साक्षिविषयत्वमाहुः॥

तत्रापि न केवलसाक्षिवेद्यत्वम्, बाह्यस्य तस्यान्तःकरणावच्छिन्नसाक्षिसम्बन्धाभावात् चक्षुरन्वयाद्यनुविधानाच्च तत्प्रत्यक्षस्य। किन्तु प्रभाद्याकारान्तःकरणपरिणामाभिव्यक्तसाक्षिणा सर्वगतस्य तस्य सम्बन्धादनुभवः। विचित्रशक्तिमदविद्याजन्यपदार्था(र्थौ) विचित्रस्वभावा एव दृश्यन्ते। यतो रजतादिः स्वाकारान्तःकरणवृत्तिं विनापि इदमाकारवृत्त्यभिव्यक्तसाक्षिणा अभिव्यज्यते न तु शुक्तिगतमपि शुक्तित्वादि(रसगुरुत्वादि) एवमाकाशोऽपि, न वाय्वादीत्युपपद्यते। अथवा प्रभामण्डलाद्यवच्छिन्नं नभः घटाद्यवच्छिन्नं नभ इव अवच्छेदज्ञान एव प्रत्यक्षमिति तदवच्छेदग्रहणे चक्षुष उपयोगः। अतः आकाशे रूपभ्रमे चक्षुषस्संप्रयोगोऽधिष्ठानज्ञान एवोपक्षीणः। एवं रसनेन्द्रियसम्प्रयोगोऽपि। तथा अधिष्ठानसामान्यज्ञान एवास्य कारणत्वम्। चक्षुषा रजतं पश्यामीत्यनुभवस्तु परम्परयाप्युपपद्यत इति भावः। **स्मृत्यनभ्युपगमादिति**। शुक्तिसंसृष्टरजतस्य पूर्वमननुभूतत्वादिति भावः। **बाह्यदोषे**त्युपलक्षणम्। अधिष्ठानसामान्यज्ञानं दोषः संस्कारश्चेति कारणत्रयापेक्षयेत्यर्थः॥

**कारेण साक्षिचैतन्यस्य रजतावच्छेदज्ञानाभासाकारेण च परिणममाना स्वकार्येण सह साक्षिचैतन्यस्य विषयभावं प्रतिपद्यते इति ते मतम्,**

---

ता. द्बुद्धरजतज्ञानसंस्कारसहिता इदमाकारबुद्ध्यवच्छिन्नचैतन्यस्था रजतज्ञानाभासाकारेण परिणमते। तत्र च अविद्याकार्यत्वादेव रजताकारज्ञानस्य साधकत्वासम्भवात् साक्षिचैतन्यमेव रजताकारेण परिणतामविद्यां विषयीकरोति इति तव सिद्धान्तः इत्यर्थः ॥

---

भा. **रजतेति । रजतावच्छेदः** रजतसम्बन्धः तन्निमित्त**ज्ञानाभासाकारेणे**त्यर्थः । ननु किमत्राविद्यावृत्त्या ? तया विनापि साक्षिणा स्वस्मिन्नध्यासादेवावभासोपपत्तेः । न च तत्तदाकारवृत्त्यैव सर्वस्य प्रतिभास इति नियम इति वाच्यम्। सुखदुःखादौ व्यभिचारात् । न च तत्रापि वृत्तिरस्त्विति वाच्यम्। तया विनापि तस्य साक्षिसम्बन्धसिद्धौ तदुपयोगाभावात् । न हि वृत्तिरेवार्थप्रकाशः। किन्तु सा विषयस्य चैतन्योपरागार्था आवरणाभिभवार्था वा। रजतादिकं च तया विनैव चैतन्योपरक्तमनावृतं चेति न तत्र तस्याः कृत्यमस्ति। अन्यथा वृत्तेरपि वृत्त्यन्तरापेक्षायामनन्ताप्रामाणिकवृत्तिकल्पनाप्रसङ्गात् ॥

न चेदमंशोपहितत्वाकारेण तस्य रजताधिष्ठानत्वम्, न त्वन्तःकरणावच्छिन्नत्वाकारेण, अन्यथा अहं रजतमिति प्रतिभासप्रसङ्गः, अन्तःकरणोपहितत्वाकारेण च तस्य साक्षित्वमिति न वृत्त्या विना तस्य साक्षिसम्बन्धोऽपि अस्तीति वाच्यम् । वृत्तिमदन्तःकरणोपहितं हि विषयचैतन्यं रजताधिष्ठानम्। अन्यथा रजतस्यापरोक्षत्वानुपपत्तेः । एवं च इदमंशस्येव रजतस्यापि इदमाकारवृत्त्यभिव्यक्तसाक्षिणैव प्रतिभास उपपद्यते । इदमिति प्रतिभासस्तु रजते इदन्त्वतादात्म्यारोपादुपपद्यते ॥

किञ्च, अविद्यावृत्त्या वा कथं तस्य साक्षिसम्बन्धः । न ह्यविद्यातद्वृत्त्यवच्छिन्नं चैतन्यं साक्षीति वक्ष्यते । उपाधिभेदे रजतस्य वृत्तिमदन्तःकरणोपहितसाक्ष्यभेदानुपपत्तेः । न चापरोक्षविषयस्यान्यः साक्षिसम्बन्धोऽस्ति। न हि रजतप्रतीतिसंस्कारश्च प्रातीतिकरजतं प्रति अर्थसंस्कारस्सन्नेव हेतुः । न हि घटादेरिव मूलाज्ञाने तदनावारकावस्थाज्ञाने तदन्यः कार्यनाशजन्यो रजतादेः

संस्कारोऽस्ति। अत एव रजतस्य प्रातिभासिकत्वम्। न च ज्ञानसंस्कारस्यार्थ-कारणत्वमदृष्टमिति वाच्यम्। अभिज्ञाप्रत्यक्षकारणत्वस्याप्यन्यत्रादर्शनात् अन्वयव्यतिरेकाभ्यामत्रैव कल्पना अर्थ एवास्तु ॥ भा.

**केचित्तु** शुक्त्यादौ तदवच्छिन्नचैतन्येनैव रजतसंस्कार इत्याहुः। तत्रापि ज्ञानसंस्कारोऽर्थ एव कारणमिति न ततोऽप्यविद्यावृत्तिसिद्धिः। न चैवमर्थोऽपि न स्यात् अनुभवबलात्तत्स्वीकारे ज्ञानमपि स्वीक्रियतामिति वाच्यम्। पुरोदेशे रजताभावे तस्यापरोक्षत्वायोगेन तदध्यासस्यावश्यकत्वात्। ज्ञानानुभवस्त्वन्यथाप्युपपद्यत एव। न च दोषादेरर्थवत्त्वाय जन्यं ज्ञानं स्वीकर्तव्यमिति वाच्यम्। तस्यावश्यकरजतोत्पादेनैवार्थवत्त्वसिद्धेः। ज्ञान-नाशप्रयोज्या रजतविषया स्मृतिस्तु वक्ष्यमाणविधयाप्युपपद्यत इति न तदर्थमप्य-विद्यावृत्तिः ॥

न चैवं भ्रान्तिज्ञानाभावे भ्रान्तित्वव्यवहारस्तस्य दोषजन्यत्वप्रसिद्धिश्च निर्विषयेति वाच्यम्। साक्षिण एव मिथ्यार्थविषयत्वेन भ्रान्तित्वप्रसिद्धि-विषयत्वात् दोषजन्यार्थसंवलितत्वाकारेण दोषजन्यत्वप्रसिद्ध्युपपत्तेश्च। अत एव **आचार्या** एवाहङ्काराध्यासे वक्ष्यन्ति—**आत्मचैतन्यमेवात्मानात्म-सम्भेदावभासि स्वरूपेणाजन्यत्वेऽपि विशिष्टविषयोपरक्ताकारेण जन्यते** इति वृत्त्यसत्त्वमिति चेत्, सत्यम्, तथैव तत्। **आचार्याणां** ज्ञानाभासोक्तिस्तु रजतादिज्ञानस्य चाक्षुषत्वनिराकरणाभिप्रायेणैव ॥

अथ वा, सम्प्रयोगस्याहङ्काराध्यासे रजताध्यासे वा कारणत्वाभावेऽपि यथा अनास्थया रजतादिज्ञानस्य सम्प्रयोगजन्यत्वव्यवहारः अहङ्काराध्यास-व्युत्पादनदशायां अधिष्ठानसामान्यज्ञानमेवाध्यासकारणमिति अध्यासकारण-स्वरूपनिष्कर्षः, एवं प्रागनास्थया जन्यत्वमाश्रित्याविद्यावृत्तिः भ्रम इति व्यवहारः, अहङ्काराध्यासस्थले भ्रमनिष्कर्ष इति द्रष्टव्यम् ॥

वस्तुतस्तत्रापि विषयसम्प्रयुक्तत्वाकारेण जन्यत्वमित्येव **आचार्या-**भिप्रायः। न तु स्वरूपेण जन्यं मिथ्याज्ञानमिति। अन्यथा, (पञ्च-52)**तेन मिथ्या-लम्बनं ज्ञानं मिथ्याज्ञानम्, न स्वतो ज्ञानस्य मिथ्यात्वमस्ति बाधा-**भावात् इति व्याख्येयटीकाविरोधापरिहारात्। एवमग्रेऽपि **टीकायाम्**—

52-2 **तत्र कथमेकज्ञानत्वं इति ?** तत्राह—**एकफलं इति । विषयावच्छिन्नं हि फलमवभासते न ज्ञानावच्छिन्नम् । विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मतया एकतामापन्नः, तेन एकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमपि एकमित्युपचर्यते इति भावः । अथ विषयः**
52-2 **कथमिति ; तदाह**—तस्य च इति । **कुतो रजतस्य मिथ्यात्वं ? इति ;**
52-4 अत आह—तेन मिथ्यालम्बनं **इति । भावाभावज्ञानयोः मिथ्यात्वप्रसिद्धयभावात् इदं ज्ञानसमवायि मिथ्यात्वं अनिर्वचनीयार्थतामेव गमयतीत्यर्थः ॥**

---

ता. ततः किं फलम् ? इति ; अत आह—**तत्र** इति । ननु फलस्यापि एकत्वं अनुपपन्नम्, ज्ञानद्वयावच्छिन्नतया तस्यापि भिन्नत्वात्, इति ; अत आह—**विषय** इति । ननु विषयोऽपि सत्यानृतरूपेण भिन्नः इति ; नेत्याह—**एकतां आपन्नः** इति ॥

---

भा. (पञ्च-54) **इह तु कारणदोषादतथाभूतार्थावभास** इति अर्थमात्रस्य मिथ्यात्वं प्रतिपाद्य **अतो मायामयं रजतमिति** रजतस्यैव मिथ्यात्वमुपसंह्रियते । तथा च **साक्षिचैतन्यस्येति वाक्यस्य** अयमर्थः—**रजतावच्छेदो** रजतसम्बन्धः, तदेव ज्ञायत इति **ज्ञानम्**, अविद्यावृत्तिपक्षेऽपि तथैव तस्या ज्ञानशब्दार्थत्वात्, स **एव आभासो** मिथ्या, तादात्म्यरूपेणेति यावत्, तादात्म्यं च भेदसत्ताविरोध्यनिर्वचनीयः कश्चिद्धर्म इति पक्षमाश्रित्यैतदुक्तमिति द्रष्टव्यम् । अतो रजतस्वरूपं तत्सम्बन्धश्चाध्यस्त इति द्रष्टव्यम् ॥

**तत्र कथमेकज्ञानत्वमिति ।** अत्रापीन्द्रियजन्यवृत्तिरूपैकज्ञानत्वं कथमित्यर्थः । विषयभेदे फलाभेदो वा कथमित्याशङ्कय, साक्ष्यभेदात् तद्भेदेऽपि घटपटवत् भेदो नास्य [विषयस्य] इत्येकफलत्वमुच्यत इत्याह—**विषयावच्छिन्नमिति । सत्यमिथ्याज्ञानद्वयमिति ।** सत्यमिथ्याविषयकज्ञानद्वयमपीत्यर्थः । (एवं)[रजतज्ञाने]अधिष्ठानसामान्यज्ञानसंस्कारदोषैः रजताद्यर्थ एवोत्पद्यते न तद्गोचरं ज्ञानं स्वरूपेणेति स्थितम् । **भावाभावज्ञानयोरिति ।** सदसज्ज्ञानयोरित्यर्थः । रजतज्ञानस्य सद्विषयत्वे न मिथ्याज्ञानत्वं सम्भवति ।

**संप्रयुक्तेऽर्थे संप्रयोगो निरपेक्षो ज्ञानकारणम्, संस्कारश्च पूर्वानुभूतस्मृतौ निरपेक्षः; ततश्च निरपेक्षकारणद्वयजन्यत्वात् ज्ञानद्वयमेव निरन्तरोत्पन्नं इति अख्यातिवादी चोदयति**—भिन्नजातीयज्ञानेति। 52-5

ता. यद्यपि सामग्रीभेदात् [ज्ञानभेदः] अनुमीयते, तथापि विशिष्टप्रवृत्तिलक्षणकार्यान्यथानुपपत्त्या ज्ञानैक्यमेव कल्पनीयं इति उदाहरणेन साधयितुं तत्संमतं

भा. न च सद्विषयत्वेऽपि तदभाववति तत्प्रकारकज्ञानत्वात् भ्रान्तित्वं सम्भवतीति वाच्यम्। सन्मात्रविषयत्वे तस्यैवानुपपत्तेः। वैशिष्ट्यस्यासत्त्वे च भानानुपपत्तेरित्युक्तम्। परमते घटे घटत्वमिति ज्ञानस्य घटप्रकारकस्य भ्रान्तित्वप्रसङ्गाच्च। न च तत्सम्बन्धाभाववति तत्प्रकारकज्ञानत्वं भ्रमत्वं घटसम्बन्धश्च समवायो घटत्वेऽस्तीति वाच्यम्, शुक्तिरजतज्ञानस्य त्वन्मते अभ्रमत्वप्रसङ्गात्। समवायस्यैकत्वात्। रजतत्वविशिष्टसमवायस्तत्र नास्तीति चेत्, घटविशिष्टसमवायोऽपि घटत्वे नेति स दोषस्तदवस्थः। एवं भूतलप्रकारकाभावज्ञानेऽपि भ्रान्तित्वापत्तिः। तत्सम्बन्धस्वरूपभूतलादेरभावे असत्वात्। असद्विषयत्त्वे तु रजतज्ञानस्य निर्विषयत्वापत्तेर्न भ्रमत्वम्। न ह्यसज्ज्ञानमपि सविषयं भवति, विषयस्यासत्त्वात्। न च असतापि किञ्चिन्निरूप्यते। न च निर्विषयत्वमेव भ्रमत्वम्, परमते अतीतादिज्ञानेऽपि तत्प्रसङ्गात्। अतो ज्ञानमिथ्यात्वान्यथानुपपत्त्या ज्ञेयं मिथ्याभूतं स्वीकर्तव्यमिति भावः॥

अन्यथाख्याताविव अत्रापि सामग्र्यभावान्न भ्रान्तिज्ञानं सम्भवतीति कुतोऽर्थस्य मिथ्यात्वमित्याक्षिपति—**सम्प्रयुक्ते इति**। सम्प्रयोगोऽत्र ज्ञानम्। संप्रयोगादेर्भ्रान्त्यजनकत्वाङ्गीकारे तदाक्षेपायोगात्। ज्ञानस्यापि धारादौ संस्कारानपेक्षत्वादित्यर्थः। **ज्ञानद्वयमेवेति**। निरपेक्षज्ञानकारणयोः समाहारासम्भवेन ज्ञानैक्यायोगादित्यर्थः। ततश्च संसर्गज्ञानासम्भवेन भेदाग्रह एव प्रवृत्तिकारणमेषितव्यमित्याह—**निरन्तरोत्पन्नमिति**। लाघवेनान्यत्र ज्ञानस्य प्रवृत्तिहेतुत्वे सिद्धे अत्रापि रजतार्थिनः पुरोवर्तिनि प्रवृत्त्यन्यथानुपपत्त्या पुरोवर्तिविशिष्टरजतज्ञानं स्वीकर्तव्यम्, तच्च पुरोवर्तिनि मिथ्यारजतं विना अनुपपन्न-

ज्ञानभेदे हि निरन्तरोत्पत्तावपि न प्रवृत्तिकार्योदयः सम्भवति। तत्र यथा वर्णज्ञानेषु क्रमवर्तिषु ज्ञानकार्योदयान्यथानुपपत्त्या पूर्वपूर्ववर्ण संस्कारसहितमन्त्यवर्णज्ञानमेव हेतुत्वेन कल्प्यते कारणयौगपद्याय, तथा प्रवृत्तिकार्यानुपपत्तिरेव ज्ञानैक्यं कल्पयति किं कारणभेदेन इति
53-1 परिहरति—नैष दोषः इति। ननु कारणभेदात् कार्यभेदोऽप्यनुमीयते
53-2 इति; नेत्युदाहरणमाह—दृश्यते हि इति। ननु तत्रापि कारणभेदात्
53-3 ज्ञानभेदः इति; नेत्याह—उभयत्रापि इति! ननु लिङ्गदर्शनं व्याप्तिस्मृतिश्च

---

ता. अर्थं आह—**ज्ञानभेदे हि** इति। ननु निरन्तरोत्पादः एव विशिष्टप्रवृत्तिकारणं इति; अत आह—**तत्र यथा** इति। पदार्थज्ञानकार्यान्यथानुपपत्त्या इति यावत्। निरपेक्षकारणद्वयजन्यत्वाभावात् नेदमुदाहरणं इति शङ्कते—**ननु** इति।

---

भा. मिति भ्रान्तिसिद्धिरित्यभिप्रेत्याह—**ज्ञानभेदे हीति** ॥

ननु नेदं कारणभेदमात्रम्, किन्तु सामग्रीभेद इति शङ्कते—**नन्विति**। न **व्याप्तिस्मृतिश्चेति**। चकारात् वह्निव्याप्यधूमवानयमिति ज्ञानं गृह्यते। न तावत् वह्निव्याप्यधूमवानयमिति ज्ञानमनुमितिकारणम्, तदा अनुमितिवैयर्थ्यापत्तेः पक्षताभावाच्च। तथा हि—पर्वतीयधूमस्य वह्निव्याप्यत्वं नाम वह्निसामानाधिकरण्यविशेषः। स च पर्वते वह्निवैशिष्ट्यमविषयीकृत्य पर्वतवृत्तितया ज्ञायमाने ज्ञातुं न शक्यते। अतो वह्नेः पर्वतत्वसामानाधिकरण्यस्य सिद्धत्वात् किमनुमानेन ?। साध्यस्य पक्षतावच्छेदकधर्मसामानाधिकरण्यसिद्धेरेवानुमानफलत्वात्। न च परामर्शः पर्वते वह्निव्याप्यवत्त्वप्रकारक एव न तु वह्निमत्त्वप्रकारक इति नानुमितिवैयर्थ्यमिति वाच्यम्। पूर्वोपस्थितवह्निपर्वतवैशिष्ट्यविषयत्वे परामर्शस्य तत्प्रकारकत्वात्। पूर्वोपस्थितं हि विशिष्टज्ञाने विषयः प्रकारो भवति। अत एव साधकमानादेः सत्त्वात् न पक्षता। धूमत्वादिप्रकारकज्ञानस्य हेतुत्वे सम्भवति ज्ञानान्तरकल्पनागौरवात् प्रमाणाभावाच्च ॥

ननु न प्रमाणाभावः। वह्निव्याप्यवानयमिति शाब्दज्ञानानन्तरमनुमितिदृश्यते। न च तत्र व्याप्यतावच्छेदकधूमत्वादिप्रकारकज्ञानमस्ति। अतः

पक्षधर्मगोचरव्याप्यत्वप्रकारकं ज्ञानमनुमितिहेतुरित्यन्यत्रापि तत्तथेति चेत्, किं तत्र शाब्दव्याप्यत्वप्रकारकज्ञानमात्रादनुमितिदर्शनेन व्याप्यतावच्छेदक(धूमत्वादि)प्रकारकं ज्ञानं व्यभिचारान्न हेतुरित्युच्यते ? उत तत्र तदभावात् ? (इतरत्र तदसंभवाद्वा)। नाद्यः, धूमो वह्निव्याप्य इति स्मरणे तत्संस्कारोद्बोधे वा सति धूमवानयमिति ज्ञानमात्रादनुमितिदर्शनेन तस्यापि व्यभिचारात्। किं तर्ह्यनुमितिकारणमिति चेत्, लाघवेन धूमत्वादिप्रकारकज्ञानमेव कारणम् ॥

भा. न चैवं वह्न्यनुमितावननुगतकारणप्रसङ्ग इति वाच्यम्। पक्षधर्मगोचरव्याप्यत्वप्रकारकज्ञानस्य कारणत्वेऽपि तद्दोषतादवस्थ्यात्। न हि धूमालोकादौ एका व्याप्तिरस्ति। न वा व्याप्तित्वमेकं सामान्यरूपं वक्तुं शक्यम्। नापि द्वितीयः, यत्र वह्निव्याप्यं तत्र वह्निरिति धूमत्वादि विनैव धूमादिप्रत्येकवृत्तिव्याप्त्यवच्छिन्नाबाधितव्याप्त्यनुभवसत्त्वेन व्याप्तेरेव व्याप्यतावच्छेदकत्वात्। परं तु त्वन्मते अभेदेऽप्यवच्छेद्यावच्छेदकभावोऽस्तीति व्याप्त्यवच्छिन्नतया प्रतीयमानापि व्याप्तिः सैव। अस्मन्मते त्वन्यैव। सम्भवति हि धूमादावेकवह्निनिरूपितव्याप्तिद्वयम्, घटादौ पृथिवीत्वद्रव्यत्वादिनिरूपितप्रमेयत्वव्याप्तीनां नानात्वात्। सर्वथाप्यनुभवबलात् व्यभिचारिव्यावृत्तत्वव्यर्थविशेषणत्वरहितत्वाभ्यां व्याप्तिरपि व्याप्यतावच्छेदिका ॥

न चैवं पर्वतवृत्तिधूमो वह्निव्याप्यो न वेति संशयदशायामप्यनुमितिः स्यादिति वाच्यम्। धूमो वह्निव्याप्य इति निश्चये सति तत्संशयाद्यसम्भवात्। अस्मन्मते यद्यपि समानविषयनिश्चय एव संशयादिविरोधी, तथापि पर्वतवृत्तिधूमो वह्निव्याप्यो न वेति संशयो धूमत्वस्य व्याप्यतावच्छेदकत्वसंशयादेव भवति, तस्य तन्निश्चये कदाप्यदर्शनादिति धूमत्वे तन्निश्चये कारणाभावेन प्रतिबद्धतया वा तन्नोत्पद्यत एव। अत एव पर्वते धूम आलोको वेति संशयेऽप्यनुमितिः सम्भवति। तत्र ह्युभयथापि वह्निव्याप्यमिति ज्ञानस्य त्वयापि वक्तव्यत्वेन तदवच्छिन्नव्याप्तिस्मरणादिदशायामेव अनुमितेरुत्पत्तेः ॥

किञ्च यत्प्रकारकं व्याप्तिस्मरणादि तत्प्रकारकं पक्षे व्याप्यज्ञानं कारणमनुमितौ। तद्व्याप्यतावच्छेदकमनवच्छेदकं वा अस्तु। अत एव द्रव्यत्वेन वह्निव्याप्तिभ्रमादप्यनुमितिः। अस्ति च धूमालोकान्यान्यो वह्निव्याप्यः, अयं च

भा. धूमालोकान्यान्यवानिति ज्ञानादप्यनुमितिः इति किं तत्र विशिष्टज्ञानकल्पनया। अपि च त्वदभिमतपरामर्शासंभवादपि मदुक्तैव अनुमितिसामग्री। न हि व्यवहितधूमादौ प्रत्यक्षपरामर्शः सम्भवति, विशेष्यसन्निकर्षाभावात्। न च धूमत्वादिना तत्र व्याप्तिवैशिष्ट्यमनुमीयत इति वाच्यम्। धूमत्वादेरपि व्यवहितवृत्तेस्सन्निकर्षाभावेन तद्गोचरप्रत्यक्षपरामर्शासम्भवात्। तत्परामर्शस्याप्यनुमितित्वे अनवस्था ॥

न च शब्दाद्युपस्थापित एव व्यवहिते धूमादौ अनुमितिरिति तत्र ज्ञानलक्षणा प्रत्यासत्तिर्मनसोऽस्तीति वाच्यम्। किं ज्ञानस्य प्रत्यासत्तित्वं तत्कार्ये साक्षात्करोमीत्यनुभवबलात् कल्प्यते? उत व्यवहितविषयज्ञानस्य मनश्चक्षुरादिजन्यत्वानुपपत्त्या?। नाद्यः, पर्वते इदानीं धूमं साक्षात्करोमि पश्यामीति वा व्यवहितधूमादेरननुभवात्। जानामीत्यनुभवोऽस्तीति चेत्, किं ततः? न हि ज्ञानत्वमेव साक्षात्कारत्वादि। नैयायिकादिशास्त्रपरिचयशालिनां तज्ज्ञानमस्तीति चेत्, तत् किं वेदान्तादिशास्त्रपरिचयवतस्तज्जन्यं ज्ञानमेव नास्ति?। अस्तीति चेत्, ज्ञानत्वमिव साक्षात्कारत्वादिकमपि किमिति नानुभूयेत?॥

न द्वितीयः, तत्रापि न तावन्मनसस्सन्निकृष्टार्थबोधकत्वनियमः। अनुमेयादौ तदभावात्। प्रत्यक्षत्वं च व्यवहितधूमादिज्ञाने अव्याप्यसिद्धम्। लिङ्गादिज्ञानद्वारा वह्न्यादिज्ञानस्येव व्यवसायज्ञानद्वारा जानामीत्यनुभवस्यापि प्रत्यासत्तिं विनापि मनोजन्यत्वोपपत्तेश्च। नापि चक्षुषः, तस्यापि संस्कारादिसहकारिबलादसन्निकृष्टज्ञानजनकत्वोपपत्तेः। न च चक्षुर्जन्यज्ञानस्यापरोक्षत्वात्तस्य चेन्द्रियसन्निकर्षजन्यत्वात् प्रत्यभिज्ञादौ ज्ञानस्येन्द्रियसन्निकर्षत्वे कल्प्यत इति वाच्यम्। मनोजन्यज्ञानस्येव चक्षुर्जन्यस्यापि कस्यचित् परोक्षत्वे बाधकाभावात्। तत्तावैशिष्ट्यांशज्ञाने साक्षात्करोमीत्यनुभवाभावेन तस्यैव युक्तत्वात्, प्रमात्वाप्रमात्वयोरिव परोक्षत्वापरोक्षत्वयोरप्येकज्ञानधर्मत्वोपपत्तेश्च। अत एव परोक्षत्वमपरोक्षत्वं वा न जातिः। अव्याप्यवृत्तित्वात् ॥

वस्तुतस्तु असन्मते जानामीति प्रथमज्ञानसिद्धस्यैव व्यवहारः। प्रत्यभिज्ञादौ तत्तादिज्ञानं च स्मृतिरेव। उत्प्रेक्षादि(ज्ञानं)मूला त्वविद्यावृत्तिः मनोवृत्तिर्वा ज्ञानाभासः, न ज्ञानम्। क्लृप्तज्ञानकारणाभावात्। एवं व्यवहित-

धूमाग्न्योः संस्कारोपनीतयोर्व्याप्तिग्रहोऽपि ज्ञानाभास एव। तदवच्छिन्नसाक्षिणा अर्थस्य प्रकाशोपपत्तेः। किञ्च, ज्ञानं चेत् प्रत्यासत्तिः पर्वते वह्निविशिष्टप्रत्यक्षसामग्रीसत्त्वात् तस्याश्च बलवत्त्वात् नानुमितिरुत्पद्येत। न चालौकिकसामग्रीतोऽनुमितिसामग्री बलवतीति वाच्यम्। समानविषये प्रत्यक्षसामग्रीत्वेनैव लाघवेन बलवत्तया अनुमित्यनुत्पत्तेः॥ भा.

किञ्च, एवं भ्रमरूपविशेषदर्शनात् संशयानन्तरं प्रत्यक्षं न स्यात्। तथा च तत्र साक्षात्करोमीत्यनुभवो न स्यात्। अतो न ज्ञानं क्वापि प्रत्यासत्तिः। किं च, तस्य प्रत्यासत्तित्वेऽपि यत्र यद्वैशिष्ट्यं पूर्वमनुभूतं तत्रैव तत् प्रत्यासत्तिः। अन्यथा पीता पृथिवीति सामान्यतोऽवगतेऽपि विशिष्य पूर्वमननुभूते घटे नीलतया अवगते घटान्तरे नीलोऽयमासीत् नीलोऽयमिति वा यथा प्रमा, तथा पीतेयं पृथिव्यासीत् पीतेयमिति वा प्रमाप्रसङ्गः। न च पर्वतीये धूमे विशिष्य व्याप्तिवैशिष्ट्यं पूर्वमनुभूतमस्ति। किञ्च, सामान्यतोऽपि तत्र प्राक् व्याप्तिज्ञानं नास्त्येव, तदुपायस्याभावात्॥

सामान्यं च न प्रत्यासत्तिः। अविद्यमानधूमाग्न्योः सामान्यासम्बन्धात् तेनापि तदुपस्थित्यसम्भवात्। प्रत्यासत्त्या हि तदाश्रय एव ज्ञायते। न हि कदाचित् सम्बन्धमात्रेण तत्प्रत्यासत्तिविधया तत् ज्ञानजनकं भवति। संयोगादेः स्वरूपसम्बन्धस्य वा स्वसम्बन्धिन्येव ज्ञानजनकत्वदर्शनात्, प्रत्यासत्तौ तदीयत्वस्यापि कारणत्वेन तस्य पूर्वक्षणे वक्तव्यत्वाच्च। किञ्च, सामान्यस्य प्रत्यासत्तित्वे रजतमिति प्रत्यक्षात् तत्त्वेनाननुभूयमाने(अगृहीते)सामान्यतो गृह्यमाणे रजतान्तरेऽपि प्रवृत्तिप्रसङ्गः। तस्यापि सामान्यप्रत्यासत्तिजन्यरजतप्रत्यक्षविषयत्वात्॥

न च इन्द्रियसन्निकर्षान्तरे सति न सामान्यप्रत्यासत्तिरिति वाच्यम्। विनिगमकाभावेन वैपरीत्यस्यापि वक्तुं शक्यत्वात्। सन्निकृष्टासन्निकृष्टधूमगोचरव्याप्तिज्ञानाभावप्रसङ्गाच्च। तदाश्रयेन्द्रियसन्निकर्षदशायामेव तस्य प्रत्यासत्तित्वाच्च। न चालौकिकप्रत्यासत्तिजन्यं ज्ञानं न प्रवर्तकमिति वाच्यम्, रजतभ्रमाच्छुक्तौ अनागतपाकादौ चाप्रवृत्तिप्रसङ्गात्। भेदग्रहस्तु तत्र [अन्यत्र] रजते नास्त्येव। भेदग्रहस्य प्रवृत्तिप्रतिबन्धकत्वे वा तदभाव एवावश्यकत्वात् प्रवृत्तौ कारणमिति किं भ्रान्त्येत्युक्तम्॥

भा. न चैवं क्वचित् धूमाग्न्योर्द्वित्रिस्थले साहचर्यदर्शनानन्तरं धूमो वह्नि-व्यभिचारी न वेति संशयो न स्यात् प्रसिद्धधूमे वह्निसम्बन्धस्य निश्चितत्वेन अप्रसिद्धे तस्मिन् धर्मिज्ञानधर्मीन्द्रियसन्निकर्षयोरभावेन तदयोगात् अस्ति च सः अतः सामान्यप्रत्यासत्त्यैवाप्रसिद्धधूमानां सन्निकर्षो ज्ञानं चेति तत्सिद्धिरिति वाच्यम्। तत्तद्धूमत्वाकारेण वह्न्यव्यभिचारनिश्चयेऽपि धूमो वह्निव्याप्य इति निश्चयाभावेन तेषामेव तत्प्रकारकसंशयविषयत्वोपपत्तेः। तव मते समानप्रकारकनिश्चयस्यैव संशयविरोधित्वात्॥

निश्चितानामेवानिश्चिताकारेण संशयविषयत्वानङ्गीकारे वायौ तव रूपकोटिकाभावसंशयो न स्यात्, तत्र सर्वरूपाणामभावस्य निश्चितत्वेन तत्कोटिकसंशयाभावात्। धूमत्वं हि वह्निव्यभिचारिवृत्ति न वेति संशया-न्निश्चितेष्वेव तत्संशयोपपत्तेश्च। कथमन्यथा यदिन्धनप्रभवा धूमाः यत्र विशिष्य दृष्टाः तत्र विशेषादर्शनदशायां तदिन्धनप्रभवो धूमो वह्निव्याप्यो न वेति संशयः स्यात्। तत्र धूमान्तराभावेन त्वदुक्तसामान्यप्रत्यासत्त्यभावात्॥

यत्तु ज्ञानचिकीर्षयोस्तया विना न युगपदुपस्थितिरिति कथं कार्य-कारणभावग्रह इति। तन्न—साक्षिणा तदुपपत्तेः। त्वन्मतेऽपि विनश्यद-विनश्यतोस्समूहालम्बनसम्भवात्। न च चिकीर्षानन्तरं तण्डुलादिज्ञानं विना प्रयत्नासम्भवान्न तयोर्मनसा युगपदुपस्थितिस्संभवतीति तदर्थं सेति वाच्यम्। तण्डुलादिज्ञानानन्तरभाविपाकचिकीर्षाप्रयत्नयोस्तत्सम्भवात्। न चेष्टसाधन-ताज्ञानानन्तरं चिकीर्षैवेति नियम इति वाच्यम्। सामग्र्यन्तरप्रतिबन्धे (संबन्धे)अन्यथापि सम्भवात्। अन्यथा चिकीर्षानन्तरमपि(चिकीर्षैव)कृतिरेव स्यादिति तवापि ज्ञानानुभवाभावात् क्व तदुपस्थितिः॥

नन्वेवं कथमनागतपाकादौ प्रवृत्तिः पूर्वं तस्य ज्ञानासम्भवेन चिकीर्षा-कृत्योरसम्भवात् इति चेत्, न—पाकत्वमनागतवृत्ति अनादिधर्मत्वात् घटत्ववत्। भविष्यत्कालो वा पाकाश्रयः कालत्वात् सम्प्रतिपन्नवत्। भविष्यत्कालादिज्ञानं च तवेवास्माकमप्यन्यत एव। तस्मात् नास्ति सामान्यप्रत्यासत्तिरिति न तृतीय-लिङ्गपरामर्श इति न तस्यानुमितिहेतुत्वम्। अत एव यत्र प्रथमत एव धूमव्या-प्त्योर्वैशिष्ट्यं प्रतीयते तत्र परामर्श एव अनुमितिहेतुरिति निरस्तम्॥

**लिङ्गिज्ञानकारणं न संस्कारः इति ; नेत्याह**—संस्कारानुद्बोधे **इति**। 53-4
**ज्ञानद्वययौगपद्याभावादित्यर्थः**। तस्मात् इत्युपसंहरति। **ननु प्रत्य-** 53-4
**भिज्ञायां संप्रयोगः पूर्वानुभूतस्मृतिश्च कारणं ज्ञानद्वययौगपद्यप्रसङ्गा-**
**भावात्, न संस्कारः इति, तत्राह**—अयमेव न्यायः **इति। ज्ञाना-** 53-6
**ज्ज्ञानान्तरोत्पत्तौ व्याप्त्याद्यभावात् संस्कार एव कारणमित्यर्थः। ननु**
**प्रमाणान्तरेष्वयं निरपेक्षकारणसमाहारः नाभिज्ञाप्रत्यक्षे, अभिज्ञा-**
**प्रत्यक्षं च रजतज्ञानं इति, तत्राह**—तथा भिन्नजातीयज्ञानहेतुभ्यः **इति**। 53-7
**ननु यत्र संस्कारः प्रमाणकारणेन संबध्यते तत्र स्मृतिगर्भप्रमाणज्ञानमेव**
**दृष्टम्, न तथा इदं रजतज्ञानं इति ; तत्राह**—तत्र लैङ्गिकज्ञानेत्यादिना॥ 54-1

---

**[ज्ञानादिति]** यत्र पदार्थान्तरज्ञानात् पदार्थान्तरज्ञानं जायते तत्र अविना- ता.
भावादिसम्बन्धो विद्यते एव, यत्र पुनः व्याप्त्यादिकं नास्ति तत्र ज्ञानात्
ज्ञानान्तरं नोत्पद्यते इत्यर्थः। पुनः वैषम्यं शङ्कते—**ननु** इति॥

---

नापि व्याप्तिस्मृतिर्हेतुः, लिङ्गज्ञानस्य संस्कारोद्बोधकस्य तदनन्तरं भा.
स्मृतिसमये विनष्टत्वेन तयोस्साहित्यासम्भवादित्याह—**ज्ञानद्वयेति**। अथवा
मनस्संयोगभेदस्य धारावाहिकज्ञानभेदे प्रयोजकत्वादन्यत्रापि तद्भेदे तद्भेदो
हेतुर्वाच्यः। तथा च लिङ्गज्ञानजनकसंयोगातिरिक्तसंयोगेन स्मृत्युत्पत्तेः प्रागेव
तस्य विनष्टत्वेन ज्ञानद्वयमेलनासम्भवादित्यभिप्रेत्याह—**ज्ञानद्वयेति**। अस्मन्मते
तु न संयोगभेदस्तत्प्रयोजक इति न लिङ्गज्ञानादनुमित्यनुपपत्तिः, तथा च
गौरवादेव न मध्ये व्याप्तिज्ञानकल्पनमिति भावः। **संस्कारानुद्बोधे तदभावा-**
**दिति** सम्पूर्ण**टीकावाक्यस्यैवमर्थाभिधानम्**, न तु **तदभावादि**त्येतावन्मात्र-
स्य, उत्तरवाक्यस्यासामञ्जस्यप्रसङ्गात्। अत**स्संस्कारानुद्बोध** इत्यस्य नासाङ्ग-
त्यम् इति। **अयमेव न्याय इति** संस्कारानुद्बोधे तदभावादित्ययं न्यायः
परामृश्यते॥

ननु विशेषणज्ञानस्याव्यवहितस्य विशिष्टज्ञाने कारणत्वात् प्रत्यभिज्ञायां
तत्तास्मृतिः कारणं न तु ज्ञानसंस्कारः, तत्राह—**ज्ञानादिति**। यद्यत्

किञ्च—ज्ञानद्वयपक्षे अख्यातौ अपरोक्षावभासिनः स्मर्यमाणत्वे, सर्वत्र प्रतिपन्नोपाधौ विषयसत्त्वाभावे अन्यथाख्यातौ प्रतिपन्नस्य संसर्गस्य शून्यत्वे पुरोदेशप्रतिपन्नस्य रजतस्य देशान्तरसत्त्वे च, आत्मख्यातौ बहिरवभासस्यान्तरत्वे च, अनुभवविरोधः स्यात्, न तथा अस्म-
54-3 त्पक्षे इत्याह—एवं च सति नानुभवविरोधः इति ॥

ननु तवापि 'अस्ति' इति प्रतिपन्नस्यानिर्वचनीयत्वे अनुभवविरोधः समानः। तन्न—इदन्तासंसर्गवत् रजतस्य शुक्तिकासत्तासंसर्गोऽयमवभासते न रजतस्यापरसत्त्वम् ॥

---

ता. 'एवञ्च सति नानुभवविरोधः' इति टीकाकारेण परपक्षेषु अनुभवविरोधः सूचितः, तं प्रपञ्चयति—**स्मर्यमाणत्वे** इति। **अनुभवविरोधः स्यात्** इति उत्तरेण सम्बन्धः। अन्यथाख्यात्योः अनुभवविरोधमाह—**सर्वत्र** इति। यत्र यत्राधिष्ठाने प्रतिपन्नं तत्र तत्र सर्वत्र इत्यर्थः। आत्मख्यातिपक्षे अनुभवविरोधान्तरमाह—**आत्मख्यातौ (च)** इति ॥

भ्रान्तिकाले सत्त्वेन बाधे च असत्त्वेन अनुभूतस्य तद्वैलक्षण्याङ्गीकारात् तवापि तुल्य एव अनुभवविरोधः इति शङ्कते—**ननु** इति ॥

ननु रजते शुक्तिकासत्तासंसर्गस्यापि सत्त्वेन प्रतिभासात् तदनिर्वचनीयत्वे

---

भा. विशिष्टज्ञानं तत्तदव्यवहिततद्विशेषणज्ञानजन्यमिति व्याप्तेरन्यस्य वा मानस्याभावात् स्मृतावनुमित्यादौ च व्यभिचारात्। न च संस्कारजन्यत्वे स्मृतित्वापत्तिः। प्रत्यभिज्ञाने तस्येष्टत्वात्। इन्द्रियस्य तत्तांशे प्रत्यासत्त्यभावेन तदंशे प्रमाणासहकृतसंस्कारजन्यतया स्मृतित्वस्यैव वक्तव्यत्वात्। अनुमितेस्तु संस्कारमात्रजन्यत्वस्य स्वसमानविषयसंस्कारजन्यत्वस्य वा अभावान्न स्मृतित्वं इति भावः ॥

सद्रजतमिति बुद्धिर्हि अपुनरुक्तशब्दद्वयार्थावगाहित्वात् सत्तादात्म्यमेव विषयीकरोति नात्यन्ताभेदम्, सत्तादात्म्यं च सदन्यस्यैवेति नाधिष्ठानसत्तादात्म्यबुद्धिः अस्मन्मते प्रतिकूला प्रत्युताऽनुकूलैवेत्याह—**इदन्तासंसर्गवदिति**। सर्वप्रपञ्चसत्त्वस्यात्मसत्तामात्रत्वेऽपि प्रपञ्चस्यार्थक्रियादर्शनादस्ति तस्याविद्यातिरिक्तदोषजन्याच्छुक्तिरजतात् वैलक्षण्यमिति तदवच्छिन्नसत्त्वस्यौपाधिकवैलक्षण्य-

**अथवा, त्रिविधं सत्त्वं-परमार्थसत्त्वं ब्रह्मणः अर्थक्रियासामर्थ्यसत्त्वं मायोपाधिकमाकाशादेः, अविद्योपाधिकसत्त्वं रजतादेः इति परमार्थसत्त्वापेक्षया अनिर्वचनीयमिति नानुभवविरोधः, यथानुभवमर्थसत्त्वाभ्युपगमात् ॥**

ता. अनुभवविरोधः समानः इत्याशङ्क्य, अपरितोषात् पक्षान्तरमाह—**अथ वा** इति। प्रातिभासिकं सत्वमिष्टञ्चेत् कथं सद्विलक्षणत्वमुच्यते? इति; अत आह—**परमार्थेति** ॥

भा. मभिप्रेत्याह—**अथवेति**।

ननु किमिदं मिथ्यात्वम्?। न तावदत्यन्ताभावप्रतियोगित्वं, स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा, स्वाश्रये स्वसमानकालीनात्यन्ताभावप्रतियोगित्वं वा, स्वसमानाधिकरणस्वसमानकालीना(न)व्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वं वा। घटादेरिव संयोगादेरिव च सत्यत्वेऽप्युपपत्तेः। न च स्वसंसृज्यमानाधिकरणे व्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वम्, विरोधेनासम्भवात्। आरोप्याधिकरणे तस्य तदतिरिक्तात्यन्ताभावस्य निरस्तत्वाच्च। नापि ज्ञाननिवर्त्यत्वम्, तस्यैव तत्प्रयोज्यत्वात्। जडत्वादिकं तु न परस्य प्रतिकूलम् ॥

नाप्यनिर्वचनीयत्वं मिथ्यात्वम्। तद्धि न तावन्निर्वचनानर्हत्वम्। तत्र मूकतापत्तेः अनिर्वचनीयमित्यभिधानाच्च। नापि सदसद्विलक्षणत्वम्, एकैकविलक्षणत्वस्यातिव्याप्तेः। प्रत्येकोभयविलक्षणत्वस्य तल्लक्षणत्वे प्रपञ्चस्य तत्साधने उभयात्मकत्वेनार्थान्तरत्वात्। सदसत्समुदायविलक्षणत्वं च सिद्धान्ते असम्भवि, प्रतियोगिनोऽभावात्। न च सत्वानधिकरणत्वे सत्यसत्वानधिकरणत्वम्, निर्धर्मके ब्रह्मण्यतिव्याप्तेः सत्ताधिकरणप्रपञ्चे अव्याप्तेश्च। परस्परविरुद्धयोः सत्वासत्वयोरेकत्राभावासम्भवाच्च ॥

नापि तत्र प्रमाणम्। न तावत्तत्र प्रत्यक्षम्। सद्रजतमित्येवानुभवात्। नापि बाधकप्रत्यक्षम्। शुक्तिकाज्ञानस्य तन्मिथ्यात्वानावेदकत्वात्। इह रजतं नास्तीति प्रत्यक्षमपि इह भूतले घटो नास्तीति प्रत्यक्षवदुपपन्नमेव। नापि दृश्यत्वादिलिङ्गम्। व्याप्तिसंवेदनस्थलाभावात्। न च व्यतिरेक्यनुमानं भविष्यति इति वाच्यम्। साध्याप्रसिद्धेर्व्यतिरेकव्याप्त्यग्रहात्। नापि ख्यातिबाधान्यथानुपपत्तिस्तत्र प्रमाणम्। प्रत्येकानुपपत्तेरप्रमाणत्वात्। नहि

यस्मात् भ्रान्तित्वव्यवहारः सदसज्ज्ञानयोरनुपपन्नः यतश्च पक्षान्तरेष्वनुभवविरोधः यतश्च ज्ञानद्वयपारोक्ष्यस्मृतित्वस्मरणाभिमानप्रमोषतद्धेत्वविवेकतन्निमित्तप्रवृत्तयः जन्मान्तरानुभूतस्मृतिश्च इति अप्रतिपन्नमपूर्वं बहु कल्पनीयमख्यातौ, अन्यथाख्यातौ च अन्यत्र प्रतिपन्नस्यान्यत्र सत्त्वं इन्द्रियस्य च जन्मान्तरानुभूतदेशकालव्यवहितार्थग्राहित्वं दोषस्य च तथाविधादृष्टसामर्थ्यं संसर्गस्य च शून्यस्य प्रत्यक्षता इति प्रमाणविरुद्धं बहु कल्पनीयं अतः सर्वदोषपरिहाराय यथाप्रतिपन्नस्य मिथ्यात्वं नाम एकः स्वभावः 'नास्ति रजतं मिथ्यैव

---

ता. 'अतो मायामयं रजतं' इत्यत्र अतःशब्दापेक्षितयच्छब्देन परामृश्यमानान् हेतून् दर्शयति—**यस्मात्** इति। **पारोक्ष्येति**। अपरोक्षतयावभासमानस्य रजतस्य पारोक्ष्यं अप्रतिपन्नमेव इति यावत्। कल्पनीयमपि 'नास्ति मिथ्यात्वं अनुभवसिद्धमेव न तु अप्रतिपन्नं इत्याह—**नास्ति** इति।

---

भा. ख्यातिमात्रस्य विषयमिथ्यात्वं विनाऽनुपपत्तिरस्ति। न वा बाधमात्रस्य बाध्यमिथ्यात्वं विना अनुपपत्तिः। अभावप्रमालक्षणबाधस्याऽन्यथाऽपि सम्भवात्। अपरोक्षप्रतीतिविषयस्य तत्रात्यन्ताभावो मिथ्यात्वं विनाऽनुपपन्न इति चेत्, न—विरोधेन भावाभावयोरेकत्रासम्भवादित्युक्तत्वात्। देशान्तरसत्वेनात्यन्तासत्वेन वा तस्य तत्सम्भवाच्च॥

नचाऽसतोऽपरोक्षज्ञानविषयत्वमनुपपन्नमिति वाच्यम्। यदसत् तन्नापरोक्षमिति व्याप्तिज्ञानस्यैवापरोक्षत्वात्। नचासज्ज्ञानं निर्विषयमिति वाच्यम्। ज्ञाने तदयोगात्। अत एवासदेवेदं रजतमभादिति प्रतीतिरपि सङ्गच्छते। अत एव रजतज्ञानमसद्विषयं सत्त्वानधिकरणविषयज्ञानत्वात् नरशृङ्गज्ञानवत्। अत एव मिथ्याज्ञानत्वप्रसिद्धिरपि न तत्र प्रमाणम्, असद्वैशिष्ट्यज्ञानस्य असत्त्व(असत्वप्र)कारकज्ञानस्य वा तत्त्वेनान्यथासिद्धत्वादित्याशङ्क्य, भ्रान्तितद्विषययोः परपक्षे उक्तमसम्भवं स्मारयित्वा स्वपक्षे असम्भवं परिहरति—**अत** इति॥

शुक्त्यभिन्नं रजतं तावत् स्वीकर्तव्यम्, देशान्तरादौ सतस्तस्यापरोक्षत्वानुपपत्तेः शुक्तेः रजतेच्छाजन्योपादानगोचरत्वानुपपत्तेश्चेत्याह—**यथाप्रतिपन्नस्येति**। तच्च तत्र विद्यमानं न सन्न वा असदिति स्वस्थाने वक्ष्यत

रजतं' इति त्रैकाल्याभावानुभवः। 'मिथ्या रजतं' इति रजतस्वरूपमिथ्यात्वानुभव.। 'मिथ्यैव रजतमभात्' इति ज्ञानाध्यासस्य मिथ्यात्वानुभवः। ता.

---

इत्यभिप्रेत्य रजतस्य मिथ्यात्वमाह— **मिथ्यात्वमिति**। तत्र च प्रमाणमनन्यथासिद्धं त्रैकालिकनिषेधमाह— **नास्तीति**। भूतले घटो नास्तीति बुद्धिसाम्यं निराकर्तुं तस्य विषयविवेचकमनुभवमाह— **मिथ्येति**। रजताद्यधिकरणे त्रैकालिकनिषेधप्रतियोगित्वविषयत्वात् ततो वैलक्षण्यमित्यर्थः। मिथ्यात्वप्रतिसन्धानबलादपि नास्तीति प्रत्यक्षं मिथ्यात्वविषयमित्याह— **मिथ्यैवेति**। एतदुक्तं भवति। अस्ति तावच्छुक्तौ रजतम्। तच्च रजताद्यधिकरणे त्रैकालिकनिषेधप्रतियोगि। प्रतीतं रजतमिह नास्तीति तस्यात्र त्रैकालिकनिषेधात्। स चात्यन्ताभावोऽधिष्ठानचैतन्यमेवेत्युक्तम्। नचैवं रजतस्य स्वात्यन्ताभावाधिकरणत्वं विरुद्धमिति वाच्यम्। विषमसत्ताकयोर्भावाभावयोराधाराधेयत्वाविरोधात्। विषमसत्त्वं च रजततदभावयोरनन्यथासिद्धविधिप्रत्यक्षनिषेधानुभवाभ्यां अङ्गीकर्तव्यम्। तत्रापि रजतस्येव तदभावस्यापि बाधाभावात् सत्त्वमिति॥ भा.

स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वं इति तल्लक्षणम्। स्वस्य मिथ्यात्वधर्मिणः शुक्तिरजतस्य यदनधिकरणं घटादि तदधिकरणं न भवति यस्यात्यन्ताभावस्य तत्प्रतियोगित्वं मिथ्यात्वमित्यर्थः। शुक्तिरूप्यादेर्हि घटादिनिष्ठाभावादन्य एव नेह रजतमिति प्रतीयमानोऽभावः। स च तदधिकरणं ब्रह्मेत्युक्तमिति नासम्भवः। नापि सत्यस्य वस्तुनः एवंविधाभावप्रतियोगित्वमस्ति इति नातिव्याप्तिः। यदि परमार्थ(त्वमपि)स्वरूपं अपि भावरूपं किञ्चित् स्वात्यन्ताभावे तादात्म्येन वर्तत इत्युच्यते तर्हि नाममात्र एव विवादः। समानसत्ताकयोस्तयोस्तदयोगात्। न वा निरधिकर(णो)[णा]भावत्वानधिकरणो भावः कश्चिदस्ति। येन परमार्थस्यापि तत्प्रतियोगित्वं स्यात्। अत एव नासत्यतिव्याप्तिः। सदन्यप्रपञ्चातिरिक्तासत्पदार्थाभावस्योक्तत्वात्॥

एतदेवानिर्वचनी(यत्वम्)यपदेनोच्यते। तदुक्तम्— **मिथ्याशब्दो द्वयर्थोऽपह्नववचनोऽनिर्वचनीयतावचनश्चेति**। यदि चानिर्वचनीयत्वं मिथ्यात्वादन्यदित्युच्यते तदा सदन्यत्वमनिर्वचनीयत्वमस्तु। सच्च बाधायोग्यम्।

भा. बाधयोग्यत्वं चोक्तमिथ्यात्वम्। तदयोग्यं च तदन्यत् ब्रह्मचैतन्यमेव। सद्यक्तिभेदे प्रमाणाभावात्। सर्वोपादानचैतन्यतादात्म्यादेव प्रपञ्चे यावत्स्वरूपं सद्बुद्ध्युपपत्तेः। ततश्चैतन्यातिरिक्तप्रपञ्चे नाव्याप्तिः। नचैवं चैतन्यान्यत्वमेव लक्षणमिति न परस्यानिष्टं, सत्यस्यापि प्रपञ्चस्य तेन ज्ञानान्यत्वाङ्गीकारादिति वाच्यम्। सदन्यत्वस्य तेनानङ्गीकृतत्वात्। सच्च चैतन्यमेवेति चैतन्यादन्यत् सदन्यदेवेत्यनिर्वचनीयमित्युच्यते॥

न च निर्धर्मके ब्रह्मणि सत्त्वविशिष्टान्यत्वस्य सत्त्वादतिव्याप्तिरिति वाच्यम्। निर्धर्मकेऽन्यत्वधर्मस्याप्यभावात् सदन्यत्वाभावाच्च। तथाहि—न हि सत्त्वविशिष्टं सत्, सत्त्वस्यैवासत्त्वापत्त्या सर्वस्याप्यसत्त्वापत्तेः। न च सत्त्वेऽपि सत्त्वमस्तीति वाच्यम्। स्वसम्बन्धाभावेन स्ववृत्तित्वायोगात्। अभेदश्च न सम्बन्धः नापि सत्त्वान्तरस्य तत्र वृत्तिः। सत्ताजातिद्वये प्रमाणाभावात्। असत्त्वाभावस्सत्त्वमिति मते च न सत्त्वभेदे प्रमाणं पश्यामः। सत्त्वस्य च स्वरूपेणैव सद्बुद्धिविषयत्वे चैतन्यमेव(अदृश्यं) तादृशं तथा भवितुमर्हतीति न ब्रह्म सदन्यत्॥

यत्तु—**आचार्याणां** तत्र तत्र सदन्यत्वे सति असदन्यत्वे सति सदसदन्यत्वमिति लक्षणमिति, तत् नानिर्वचनीयपदार्थस्वरूपलक्षणम्। किन्तु प्रपञ्चस्य सत्त्वविरोधि साध्यं तत्तद्वादिनं प्रति तदभ्युपगतपदार्थानुसारेण दर्शितमिति द्रष्टव्यम्। तथा च तत्रासद्वादिनं प्रत्यसदन्यत्वमुक्तमिति असतोऽन्योन्याभावप्रतियोगित्ववत् सदन्यत्वमप्यविरुद्धमस्त्विति न तस्मिन्नतिव्याप्तिः शङ्कनीया। असतो धर्मित्वप्रतियोगित्वादेरभावात् अन्यथा असत्त्वव्याघातादिति॥

नापि प्रमाणाभावः, स्वसमानाधिकरणात्यन्ताभावप्रतियोगि शुक्तिरजतं स्वानधिकरणमात्रावृत्त्यत्यन्ताभावप्रतियोगि दृश्यत्वात् संयोगवत्। स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वेनार्थान्तरत्ववारणाय पक्षविशेषणम्। अन्यथाख्यात्यादिनिरासेन शुक्तिरजतस्य साधितत्वान्नाश्रयासिद्धिः। घटादिवृत्त्यत्यन्ताभावमादाय सिद्धसाधनवारणार्थं स्वानधिकरणमात्रावृत्तीत्यत्यन्ताभावविशेषणम्। एतत् साध्यं ह्यत्यन्ताभावस्य रजताधिकरणवृत्तित्वेन अवृत्तित्वेन वा सिध्यति। तत्र च पक्षविशेषणमहिम्ना प्रथमस्य पक्षे बाधादवृत्त्यत्यन्ताभावप्रतियोगित्वमेव

रजतमभात्' इत्यनुभवसिद्धः समाश्रयणीयः अविद्योपादानकल्पनायाश्च अन्वयव्यतिरेकसिद्धत्वादित्याह—अतो मायामयं इति। सत्यस्य 54-5
वस्तुनो मिथ्यावस्तुसंभेदोऽवभासमानः माया मिथ्या अनिर्वचनीयख्यातिः अध्यास एवायं इत्यर्थः ॥

अत्र केचिदाहुः—अतोऽविद्यामयमिति वक्तव्यं न मायामयमिति। विभ्रमाणां तत्त्वज्ञाननिराकार्यतया अविद्यात्मकत्वात् मायाऽविद्ययोर्भेदात्। तथा हि—माया स्वाश्रयमव्यामोहयन्ती कर्तुरिच्छामनुवर्तते। न तथा अविद्या। प्रसिद्धश्च मायाऽविद्ययोर्भेदो लौकिकानाम्। न हि मायाविनिर्मितहस्त्यश्वरथादावविद्याशब्दं प्रयुञ्जते इति ॥

उच्यते—लक्षणभेदात् लोकव्यवहारसामर्थ्याद्वा तयोर्भेदः कथ्यते ?। न तावत् लक्षणभेदात्। अनिर्वचनीयतया तत्त्वावभासप्रति-

---

ता. ननु अविद्योपादानत्वं अप्रतिपन्नमेव त्वया कल्प्यते इति; अत आह अविद्येति। 'मायामयं' इत्यस्य अर्थमाह—सत्यस्य इति। 'माया' इत्युक्ते मणिमन्त्रौषधादिषु प्रसक्तिं वारयति—मिथ्या इति। तथापि अपह्नवशङ्कां व्यावर्तयति—अनिर्वचनीयेति। ननु अध्यासमुपक्रम्य अनिर्वचनीयख्यातिमुपसंहरतः पूर्वापरविरोधः इति; अत आह—अध्यास एव इति ॥

तथा वक्तव्यत्वे युक्तिमाह—विभ्रमाणां इति। ननु अविद्यैव माया इति; अत आह—मायाविद्ययोः इति। इदानीं मायाविद्ययोः लक्षणतः प्रसिद्धितश्च भेदं साधयति—तथा हि इति ॥

लक्षणभेदस्य असिद्धत्वमाह—न तावदिति। सदसद्वैलक्षण्यस्य तत्त्वाव-

---

भा. सिध्यतीत्युक्तमिथ्यात्वसिद्धिः। न च घटादौ व्यभिचारः, तस्य पक्षसमत्वात्। न चाप्रयोजकत्वम्, अपरोक्षतया तत्र वर्तमानस्य रजतस्य सत्त्वे त्रैकालिकाभावप्रमानुपपत्तेः। एवं च सति मिथ्याज्ञानत्वानुपपत्तिरपि तत्र प्रमाणमिति द्रष्टव्यम् ॥

अनिर्वचनीयतयेति। अनिर्वचनीयत्वस्य तत्त्वावभासप्रतिबन्धकत्वे

**न्धविपर्ययावभासलक्षणस्याविशेषात् । ननु मन्त्रौषधादिसत्यवस्त्वेव माया, नानिर्वचनीया। न—परिदृश्यमानमिथ्यावस्तुन्येव मायाशब्दप्रयोगात्, पार्श्वस्थस्य मन्त्रौषधाद्यपरिज्ञानात्, तत्र मायाशब्दप्रयोगा-**

---

ता. भासप्रतिबन्धकत्वस्य विपर्ययावभासहेतुत्वस्य (च) लक्षणांशस्य अभेदादित्यर्थः। ननु मणिमन्त्रौषधाद्येव माया, तद्वति पुरुषे मायाविशब्दप्रयोगदर्शनात्, इति शङ्कते—**ननु** इति । मैवं—मन्त्रौषधादेरदृश्यत्वात् दृश्यमानेन्द्रजालादिकमेव मायशब्दवाच्यं इति परिहरति—**न परिदृश्यमाने**ति। मायावी मणिमन्त्रादिकं पश्यत्येव इति; अत आह—**पार्श्वस्थस्य** इति। पार्श्वस्थस्य कदाचित मणिमन्त्रौषधादिदर्शनेऽपि सति तत्र कार्यरहिते तत्र मायाशब्दप्रयोगो न दृश्यते इति चकारेण सूचयति। ननु तथापि मण्यादेरेव परिदृश्यमानमाया-

---

भा. सति विपर्ययोपादानत्वलक्षणस्य च तयोरविशेषात् । काचादौ मृदादौ चातिव्याप्तिवारणाय विशेषणद्वयम् । **केचित्तु*****अनिर्वचनीयतये**त्यादि-विशेषणत्रयेण लक्षणत्रयमेवोच्यते। न च शुक्तिरजतादावतिव्याप्तिः, पृथिवी-लक्षणस्य गन्धवत्त्वादेः तत्कार्यतया तदात्मघटादाविव अस्यापि तत्कार्ये तदात्मनि अतिव्याप्तेरभावादित्याहुः ॥

**नन्विति**। मन्त्रौषधादिविशिष्ट एव पुरुषे मायाविशब्दप्रयोगात् केवले तस्मिन्नप्रयोगान्मन्त्रौषधादिकमेव माया, नाज्ञानम्, तत्र तच्छब्दाप्रयोगात इत्यर्थः। मिथ्योपादानस्य मायाशब्दार्थत्वं दर्शयितुं मिथ्याकार्ये मायाशब्द-प्रयोगमाह—**न परिदृश्यमानेति**। माया मया दृश्यते, माया मया(दृ) सृष्टेति लोके, पुराणे च 'माया ह्येषा मया सृष्टे'ति मिथ्याकार्य एव मायाशब्दप्रयोग-दर्शनादित्यर्थः। ननु मिथ्यावस्तुन्येवेति कथम्? मन्त्रादावपि तत्प्रयोगस्य दर्शितत्वात्; तत्राह—**पार्श्वस्थस्येति**। मन्त्रादेरपि प्रत्यक्षयोग्यत्वात् कदाचित् तत्परिज्ञानमस्तीत्याशङ्क्याह—**तत्रेति**। यदा केवलो मणिरौषधं मन्त्रो वा मायाविनि दृश्यते, तदा न तत्र मायाविशब्दं प्रयुञ्जते, यदा तु मन्त्रादिभ्यो मिथ्याकार्यं पश्यन्ति तदा तत्र तच्छब्दं प्रयुञ्जते, इति नियमेन मिथ्यार्थज्ञाने सति प्रयोगात्तद्विषय एव तत्रापि मायाशब्दप्रयोग इति भावः ॥

---

* तत्त्वदीपनकाराः

**भावाच, मन्त्रादेश्च काचादिवत् निमित्तकारणत्वात् अध्यासोपादानाविद्याक्लृप्तिवत् कादाचित्कमायोपादानानिर्वचनीयानादिवस्तुकल्पनात्, तत्र च 'मायां तु प्रकृतिं' इति श्रुतौ प्रकृतौ मायाशब्दप्रयोगात्, प्रकृतिभूतयोर्मायाविद्ययोः तद्विकारयोश्च अध्यासमाययोः लक्षणाभेदादेकत्वमवगम्यते ॥**

---

कारणत्वस्य अन्वयव्यतिरेकसिद्धत्वात् अनादिमायाकारणकल्पना न सिद्धयति इति ; अत आह—**मन्त्रादेश्च** इति। तथापि अनादिवस्तुनः तस्य मायाशब्दवाच्यत्वं कथम्? इति ; अत आह—**तत्र च** इति। जगत्प्रकृतौ श्रुत्या मायाशब्दस्य प्रयुक्तत्वात् तस्या एव रजतादिविभ्रमोपादानत्वकल्पनायां लाघवात् रजताद्युपादानभूता अविद्यापि मायैव इत्यर्थः ॥ ता.

---

एवं मायाशब्दप्रयोगस्य लोके मिथ्यावस्त्वेकविषयत्वं दर्शयित्वा तत्रापि तदुपादानाज्ञानविषय एव तत्प्रयोग इति दर्शयितुं मन्त्राद्यतिरिक्तं मिथ्योपादानं साधयति—**मन्त्रादेरिति। अनादिवस्तुकल्पनादिति।** द्रष्टृज्ञानं मिथ्यागजाद्युपादानम्, तदन्यस्य मिथ्यावस्तूपादानस्या(त्वा)सम्भवात्। तदेव च मायाशब्दार्थः। करिनरतुरगादेः स्वरूपेण मायाशब्दार्थत्वे तच्छब्दस्यानेकार्थत्वप्रसङ्गात्। तच्च सम्भवत्येकार्थत्वे न न्याय्यम्। गजादौ मृद्घट इतिवत् मायातादात्म्यात्तच्छब्दप्रयोग उपपद्यत इति वेदेऽप्युपादानविषय एव मायाशब्द इत्याह—**तत्र च मायां त्विति।** तथा च यदि मिथ्योपादानादन्यत्रापि क्वचिन्मायाशब्दप्रयोगो दृश्येत तर्हि दुर्घटकार्यहेतुत्वादिगुणयोगात्तत्र मायाशब्दो गौण एवेति अज्ञानमेव मायेति भावः ॥ भा.

नन्वेवं गजादेः सर्वपुरुषसाधारण्यं न स्यात्; अविद्याकार्यस्य तदयोगात् इति चेत् न-शुक्तिरजतादिरिव गजादिरपि नानैव, साधारण्यबुद्धिर्भ्रम एवेति **केचित्। अन्ये तु** अज्ञाने साधारणासाधारणभ्रमजननशक्तिद्वयमस्ति, घटादिकार्ये साधारण्यस्य शुक्तिरूप्यादौ तद्वैपरीत्यस्य च दर्शनात्। ऐन्द्रजालिकगजादिकं च सर्वैः दृश्यत एवेति साधारणशक्तिमदज्ञानकार्यमेवेत्याहुः। **अपरे तु** व्यष्ट्यज्ञानकार्यं न साधारणम्। ऐन्द्रजालिकगजादिकं च यावद्द्रष्टृज्ञानसमुदायकार्यमिति वदन्ति। सर्वथाप्युपपन्नमिति ॥

ननु स्वाश्रयव्यामोहाव्यामोहहेतुत्वाभ्यां लक्षणभेदो दर्शितः॥

यद्याश्रयो द्रष्टा व्यामुह्यत्येव पार्श्वस्थो मायां पश्यन्। अथ कर्ता, न तस्य मायावित्वात् व्यामोहाभावः। किन्तु बाधनिश्चयप्रतीकारज्ञानाभ्याम्। अन्यथा पार्श्वस्थवत् कर्तापि व्यामुह्येदेव। अथेच्छया कर्तुं शक्यते माया न तथा अविद्येति, न तदपि—मन्त्रौषधादौ निमित्तकारणे कर्तुः स्वातन्त्र्यात्, न मायायाम्। अविद्यायामपि अङ्गुल्यवष्टम्भादिना द्विचन्द्रकेशोण्ड्रकादिभ्रमाः मन्त्रौषधादिनिषेवणात् स्वप्नभ्रमाः तत्त्वज्ञानेऽप्यनुवृत्तप्रतिभासाश्च कर्तुरिच्छया निष्पाद्यन्ते॥

न च शास्त्रव्यवहारात् मायाविद्याभेदः। 'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतौ सम्यग्ज्ञा-

---

ता. ननु लक्षणांशाभेदेऽपि लक्षणांशान्तरस्य अभावात् द्रव्यपृथिव्यादिवत् भेदो वक्तव्यः इत्याशङ्कते—**ननु** इति। एतत् विकल्प्य दूषयति—यदि इति। **न तस्य मायावित्वात्** इति। अयमर्थः—मायापि अविद्यावत् कर्तुरपि व्यामोहिकैव। क्वचित् व्यामोहाभावस्तु प्रतिबन्धात्। यथा अविद्याया एव जलेषु अधोमुखेषु तरुषु प्रतिभासमानेषु ऊर्ध्वमूलादिप्रतीतेश्च व्यामोहकत्वाभावः तद्वत् इति। एतदेव व्यतिरेकमुखेन उपपादयति—**अन्यथा** इति। इति यथा दाशरथिः रामः स्वमाययैव स्वयं व्यामुग्धः चतुर्मुखेन संबोधितः इति स्मर्यते तद्वत् इत्यर्थः। वैषम्यान्तरमाशङ्क्य परिहरति—**अथ** इत्यादिना। ननु निमित्तकारणेषु अप्यविद्यायां स्वातन्त्र्यं दृश्यते इत्याह—**अविद्यायामपि** इति। ननु सोपाधिकभ्रमेषु स्वातन्त्र्येऽपि न निरुपाधिकेषु दृश्यते इति; अत आह—**मन्त्रौषधादी**ति। तत्त्वज्ञानोत्तरकाले विपर्ययकार्यकारिणी माया दृश्यते नैवमविद्या इति; तत्राह—**तत्त्वज्ञानेऽपि** इति। अत्र उदाहरणं प्रतिबिंबादिविभ्रमाः। अथ शास्त्रव्यवहारात् मायाविद्ययोः भेदः, तत् किं शास्त्रव्यवहारशब्देन श्रौतो व्यवहारः? स्मार्तः? अथ वा अभियुक्तव्यवहारः? इति विकल्प्य क्रमेण दूषयति—**न च** इत्यादिना। **तस्य**—परमेश्वरस्य अभिध्यानात् आभिमुख्येन

---

भा. **न तस्य मायावित्वाद्व्यामोहाभाव इति**। स्वसृष्टमाययैव शम्बरादे-

ननिवर्त्याविद्यायां मायाशब्दप्रयोगात्। 'तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते। योगी मायाममेयाय तस्मै विद्यात्मने नमः॥' इत्यादिस्मृतौ मायाविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानात्। 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रे सूत्रकारेण स्वप्ने मायाशब्दप्रयोगात्। भाष्यकारेण च 'अविद्या माया' 'अविद्यात्मिका मायाशक्तिः' इति तत्र तत्र निर्देशात्। टीकाकारेण च 'अविद्या मायाऽक्षरम्' इत्युक्तत्वात्। ब्रह्मसिद्धिकारेण च 'एवमेवेयमविद्या माया मिथ्याप्रत्ययः' इत्युक्तत्वात्। तस्मात् लक्षणैक्यात् वृद्धव्यवहारे च एकत्वावगमादेकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन माया आच्छादनप्राधान्येन अविद्येति व्यवहारभेदः इच्छाधीनत्वतद्वैपरीत्येन वा व्यवहारभेदः इति युक्तं मायामयमिति॥

अस्तु तर्हि प्रतिपन्नोपाधावेव यथाप्रतिपत्ति परमार्थसत्त्वं

---

प्रत्यगात्मतया ध्यानात्, **योजनात्**—विश्वतैजसप्राज्ञानां तुरीयपरमात्मनि एकीकरणात्, **तत्त्वभावात्**—'अहं ब्रह्मास्मि' इति तत्त्वस्य आत्मतया भावात् —अवस्थानात्, **भूयः**—असकृत्। अभिध्यानात् योजनात् तत्त्वभावाच्च मायानिवृत्तिः द्वैतस्य परमार्थसत्यत्वकल्पनायाः निवृत्तिः। **अन्ते**—प्रारब्धकर्मणः उपभोगेन क्षये, **विश्वमायायाः**—सुखदुःखमोहात्मकप्रपञ्चरूपायाः प्रतिभासतोऽपि निवृत्तिः बाधो भवतीत्यर्थः। कथं तर्हि इन्द्रजाले शुक्तिरजते च 'माया' इति 'अविद्या' इति च व्यवहारभेदः? इत्याशङ्क्य, एकत्वेऽपि धर्मिणः शक्तिभेदमाश्रित्य इत्याह—**एकस्मिन्नपि** इति॥ ता.

---

व्यामोहश्रवणादित्यर्थः। **तत्त्वज्ञानेनेति**। न च तरणं निवृत्तेरन्यदिति वाच्यम्। 'तरति ब्रह्महत्याम्' इत्यादौ निवृत्तावेव तच्छब्दप्रयोगात्, नद्यादेरिव लङ्घनस्यात्रासम्भवात्, मुक्तौ मायासद्भावे प्रमाणाभावाच्चेति भावः। **भाष्यकारादिमा**सं मन्वानं स्वयूथ्यं प्रत्याह—**भाष्यकारेणेति**॥ भा.

इदानीं रजतस्य सत्त्वनिषेधार्थं दिगम्बरमतमुद्भावयति—**अस्त्विति**।

54 - 6 **कल्पनागौरवादिदोषपरिहारादिति ;** **नेत्याह**—अथ पुनः **इति । ननु**
54 - 6 **कारणदोषवतामेव तत् दृश्यमिति ; नेत्याह**—यतो न हि **इति**। तदभावे
न तत्र इति । **सर्वत्र परमार्थरजते इत्यर्थः। आत्माश्रयाविद्यात्मकत्वेऽपि**
54 - 8 **सर्वैरेव गृह्येतेति ; नेत्याह**—मायामात्रत्वे **इति । प्रसिद्धमायावदिति**
**भावः । इदमाकारावच्छिन्नसाक्षिचैतन्यसमाश्रितस्य रजतस्य शुक्तिका-**
**संभेदोऽप्यविद्यात्मक इति सुखादिवदनन्यवेद्यत्वमिति भावः। ज्ञानस्यैव**
**भ्रान्तित्वप्रसिद्ध्यनुपपत्तिः कल्पनालाघवानुभवाभ्यामनुगृहीता मिथ्या-**
**र्थज्ञानतां गमयतीत्युक्तम्, इदानीं बाधकप्रत्यक्षं स्वयमेव रजतस्य**
55 - 1 **मिथ्यात्वं प्रतिपादयतीत्याह**—किञ्च नेदं रजतं **इति ॥**

**ननु प्रतिपन्नोपाधौ रजतादेरभावं बाधो बोधयति न तस्य**
55 - 2 **मिथ्यात्वमिति चोदयति**—कथं **इति । प्रतिपन्नोपाधावभावप्रतियोगि-**

---

ता. इदमाकारवर्तिशौक्ल्याादिवत् तदवच्छिन्नचैतन्यस्थाविद्यात्मकं रजतं
किमिति न सर्वैर्गृह्यते? इति ; तत्राह—**इदमाकारे**ति ॥

---

भा. **कल्पनागौरवादिदोषेति** । देशान्तरे बुद्धौ वा तत्कल्पने हि पूर्वोक्तविधया
गौरवम् । असतो भानमित्येवमादिदोषः स्यात् । सदिदं रजतमिति प्रतीत्यनु-
सारेण पुरोदेशे तत्सत्त्वकल्पने तु न कोऽपि दोषः । न चैवं तत्र तदभावप्रती-
त्यनुपपत्तिः, भूतले घटो नास्ति इतिवत्समयभेदेन तदुपपत्तेरिति भावः। **सुखा-**
**दिवदिति** । नचैवं मयि सुखं दुःखमितिवत्प्रतीतिः स्यादिति वाच्यम् ।
इदन्त्वसंसर्गस्य समारोपितत्वेन इदं रजतमिति प्रतीत्युपपत्तेरिति भावः ॥

**बाधकप्रत्यक्षमिति** । भूतले घटो नास्तीति बुद्धिः प्रतियोगिनि
प्रतियोगित्ववैशिष्ट्यांशे (प्रतियोगित्वांशे) च प्रत्यक्षमिति मतमनुसृत्येदमुक्तम् ।
सिद्धान्ते रजतं नास्तीति प्रतीतिकाले रजततत्प्रतियोगित्वयोरभावेन सत्त्वेऽप्य-
भावस्य प्रत्यक्षत्वायोगात् । अथ वा, अधिष्ठानचैतन्यमेव रजताद्यभाव इति तदंश-
प्रत्यक्षत्वाभिप्राय एवायं ग्रन्थः । **प्रतिपन्नोपाधाविति** । एकावच्छेदेनेत्यर्थः ।
ननु एवमपि घटवत्येव भूतले सम्बन्धान्तरेण तदभावसत्त्वादतिव्याप्तिरिति चेत्,
न—तत्र प्रमाणाभावात् । न हि तदा तत्र घटो नेति प्रमा अस्ति । किञ्च आरोपपूर्वा

**त्वमेव मिथ्यात्वं नाम, तच्च बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितया अवभासते इति प्रत्यक्षं इत्याह**—तेन हि तस्य **इति।** 55 - 2
**बाधकज्ञानसिद्धस्य प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्य पुनः स्वशब्देन परामर्शाच्च बाधविषयो मिथ्यात्वमित्याह**—नेदं 55 - 5
**रजतं मिथ्यैव इति। ननु देशकालान्तरबुद्धिषु सत्त्वादपि रजतस्यैवं बाधः संपत्स्यते इति; नेत्याह**—नच तत् केनचित् रूपेण **इति। 'नेदं रजतं** 55 - 4
**किन्तु तद्रजतं बुद्धिर्वा' इति स्यात् परामर्शः न 'मिथ्यैव' इति। स्मृतिग्रहणाविवेकत्वाद्गोगवयादाविव इत्यभिप्रायः॥**

---

नन्वविवेकस्य अस्मन्मतेऽपि मिथ्यात्वात् 'मिथ्या' इति परामर्शो युक्तः इति; अत आह—**स्मृतिग्रहणेति।** तर्हि रजतत्ववत् शुक्तेरपि अविवेकात् 'मिथ्या' इति परामर्शः स्यात इत्यर्थः। अविवेकोऽप्यनुपपन्नः इत्याह—**[गो]गवयादाविव** इति। गवयवत् गृह्यमाणत्वे विवेकः प्रतिभायात इत्यर्थः॥ ता.

---

ह्यभावधीः। न च तदधिकरणे तदारोपोऽस्ति। यावत्सम्बन्धाभावे(न्धबाधे) हि सामान्यविशिष्टबुद्धेर्भ्रमत्वम्, न च [विशिष्टबुद्धेः] सम्बन्धविषयत्वे प्रमाणमिति नातिव्याप्तिः। विशेषणविषयत्वं तु विशिष्टज्ञानस्य प्रमाणसिद्धमिति नाव्याप्तिः॥ भा.

अधिष्ठानस्यैवाभावत्वमभिप्रेत्य वा **टीकाकृता** नेदं रजतमित्युक्तं अन्योन्याभावं **विवरणकारो**ऽत्यन्ताभावतया आह—**प्रतिपन्नोपाधावभावेति।** न हि अधिष्ठानातिरिक्तात्यन्ताभावोऽन्योन्याभावो [वा] भवति। अतः शुक्तौ व्यवह्रियमाणो रजतात्यन्ताभावादिः चैतन्यमेवेति तथा व्याख्यातमिति द्रष्टव्यम्। **प्रतिपन्नेति।** स्ववैयधिकरण्यानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्यर्थः। रजताद्यभावस्याधिष्ठानत्वात्तदंशे अभावज्ञानं प्रत्यक्षमिति त(त्रो)थोक्तमिति द्रष्टव्यम्। **तद्रजतं बुद्धिर्वेति स्यात् परामर्श इति।** अन्यथा तस्य देशान्तरादिवृत्तित्वं न सिध्येत्, प्रमाणान्तराभावात्, अन्यथानुपपत्त्यादेर्निरसिष्यमाणत्वादिति भावः॥

ननु कोयं बाधो नाम ?। अन्यार्थिनोऽन्यत्र प्रवृत्तिनिरोधः, तर्हि यत्र रजतादौ परिव्राजकादेः प्रवृत्तेरेवानुदयः तत्र बाधप्रसिद्धिः न स्यात्। प्रसिद्धश्च तत्रापि बाधः। न प्रवृत्तिविच्छेदो बाधः किन्तु प्रवृत्तियोग्यताविच्छेदश्चेत्—न—पुनरपि तत्रैव रजताविवेकादन्यदा प्रवृत्तिदर्शनात् योग्यताऽविच्छेदात्। उदकज्ञानाच्च प्रवर्तमानस्य सर्पचोरादिदर्शनेन प्रवृत्तिनिरोधे सर्पादिज्ञानादुदकज्ञानस्य बाधप्रसिद्धिः स्यात्। अविविक्ततया प्रतिपन्नस्य विवेको बाधः इति चेत्—न सर्वपदार्थेषु प्रथममविभक्ततया प्रतिपन्नेषु पश्चादितरेतरापेक्षया भेदज्ञानं सर्वत्र बाधः स्यात्। न च पदार्थज्ञानमेव भेदज्ञानम्, गृहीतमात्रस्य सति भेदे अविवेकाभावप्रसङ्गादित्युक्तम्। अन्यात्मना प्रतिपन्नस्य इतरेतराभावप्रतिपत्तिर्बाधः इति चेत्, शुक्लो घट इति प्रतिपद्य 'घटस्य

---

ता. इदानीं, स्वमते एव बाधो युक्तः इति दर्शयितुं तमाक्षिपति—**ननु** इति। अख्यातिवादी स्वाभिमतं बाधं निरूपयति—**अन्यार्थिनः** इति। अव्याप्त्या लक्षणं दूषयति—**तर्हि** इति। **न—पुनः** इति। पुनरपि प्रवृत्तिदर्शनात् योग्यताविच्छेदो न सम्भवति इत्यर्थः। इदानीं प्रथमलक्षणस्यैव अतिव्याप्तिमाह—**उदकज्ञानात्** इति। लक्षणान्तरं शङ्कते—**अविविक्ततया** इति। किं भेदिनः सकाशात् भेदः अन्यः तज्ज्ञानञ्च भेदिज्ञानादन्यदेव इति मतम्? उत स्वरूपमेव भेदः तज्ज्ञानमेव च तज्ज्ञानम्? इति विकल्प्य आद्यं दूषयति—**सर्वेति**। द्वितीयं दूषयति—**न च** इति। दिगम्बरमते सर्वस्यापि वस्तुनो भिन्नाभिन्नत्वात्

---

भा. प्रसङ्गात् बाधं निरूपयितुमाक्षिपति—**नन्विति**। किं अन्यात्मतया प्रतिपत्तिमात्रम् विवक्षितं? उत तथा भ्रान्तिः? आद्य आह—**शुक्ल** इति। नापि द्वितीयः। ज्ञाने बाधितार्थविषयत्वस्यैव भ्रम(त्वेना)त्वरूपत्वेनान्योन्याश्रयात्। न च तदभववति तत्प्रकारकज्ञानत्वं भ्रमत्वमित्युक्तमिति भावः। नापि विशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वनिश्चयो बाधः। घटवद्भूतलमिति प्रतीत्यनन्तरं भूतले घटो नास्तीति ज्ञानस्यापि बाधत्वप्रसङ्गात्। न च भूतले प्रदेशघटादेरत्यन्ताभावो भूतलादौ त्रैकालिको न भवतीति वाच्यम्।

शौक्ल्यं' 'न द्रव्यं गुणः' इति ज्ञानं सर्वत्र बाधः स्यात्। न तथा प्रसिद्धिरस्ति। समानौ च सर्वत्र भेदाभेदौ इति ऐक्यं प्रतिपद्य भेदप्रतिपत्तिः सर्वत्र बाधः स्यात्। न च ज्ञानस्य प्रध्वंसो बाधः। स्वयं क्षणिकत्वात्। अर्थस्य च संविद्विषयस्यान्यस्य वा ज्ञानेन प्रध्वंसायोगात्। बाधस्य च लोकप्रसिद्धत्वात्। तस्मात् न बाधं पश्यामः॥

सर्वत्र भेदप्रतीतिः बाधः स्यात् इत्याह—**समानौ च** इति॥ ता.

विशेषे घटादिर्विशेषाभावस्य तत्सम्भवात्। शुक्तिकादावपि भ्रमविषयस्य रजतस्य परमते कदाचित् संयोगसद्भावाच्च॥ भा.

नापि यत्र यत्तादात्म्यं प्रतीतं तत्रैव तदत्यन्ताभावनिश्चयो बाधः। तादात्म्यारोपस्य परमते अन्योन्याभावज्ञानसामग्रीत्वेन ततोऽत्यन्ताभावज्ञानस्यासम्भवात्। अन्यथा क्वाप्यन्योन्याभावो न गृह्येत। रजतत्वादेश्च स्वातन्त्र्येण क्वचिदारोपाभ्युपगमे सर्वत्र तस्यैव आरोप इति न रजतारोपः क्वचित् सिध्येदिति ते न तदत्यन्ताभावधीः स्यात्। रजतत्वमिति व्यक्तितादात्म्यं रजतादौ प्रतिपद्य रजतं रजतत्वे नास्तीति निषेधस्य बाधत्वप्रसङ्गात्। न च यत्र यद्वैशिष्ट्यज्ञानं दोषेण जन्यते तत्र तदत्यन्ताभावज्ञानं बाध इति वाच्यम्। भ्रान्तिज्ञानत्वेन हि दोषजन्यत्वनिश्चयः, भ्रान्तित्वं च बाधितार्थज्ञानत्वं नातिरिक्तमिति बाधज्ञानाधीनज्ञानम्, बाधश्च दोषजन्यत्वज्ञानाधीनावगमः इति चक्रकापत्तिरिति भावः॥

**संविद्विषयस्यान्यस्य वेति**। बाधकज्ञानविषयस्य तदन्यस्य वेत्यर्थः। बाध्यरजतस्यादुष्टकारणजन्यबाधकज्ञानविषयत्वायोगान्न बाधस्य स्वविषयनिवर्तकत्वम्, तदविषयस्य तन्निवर्तकत्वे तत्रैवोत्पन्नभ्रमान्तरमपि निवर्तकं स्यादिति तदपि बाधकं स्यादिति भावः। नाप्यज्ञाननिवृत्तिर्बाधः सर्वज्ञानां बाधकत्वप्रसङ्गादित्युपसंहरति—**तस्मादिति**। किं मिथ्यात्वव्यवहारनिमित्तं बाध आक्षिप्यते? तत्त्वसाक्षात्कारसाध्यो वा? नाद्यः, (उक्त) मिथ्यात्वनिश्चयस्यैव तद्व्यवहारनिमित्तबाधत्वात्। तदुक्तं—'नाप्रतीतिस्तयोर्बाधः

**उच्यते—अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः। तथाविधानवबोधनिवृत्तौ बाधप्रसिद्धेरिति। स्मृतिरूपशब्देन कारणत्रितयजन्यत्वमुक्तम्, तत्र कारणत्रितयजन्यो‌ऽ-**

---

ता. सिद्धान्ती स्वमते बाधं दर्शयति—**उच्यते** इत्यादिना। 'अज्ञानस्य ज्ञानेन निवृत्तिः बाधः' इत्युक्ते घटज्ञानेन तदज्ञाननिवृत्तिः बाधः स्यात्, अत उक्तम्—**स्वकार्येण** इति। विभ्रमानन्तरं विषयान्तरसञ्चारे कदाचित् पुनः अधिष्ठानज्ञानेन अज्ञाननिवृत्तिः बाधो भवति, न च तत्र कार्यं वर्तते, तस्यापि बाधत्वसंग्रहार्थं आह—**प्रविलीनेन** इति। 'कार्याकारेण परिणताज्ञाननिवृत्तिः बाधः' इति अनुगतं लक्षणं उभयत्राप्यस्ति इति नाव्याप्तिः इति भावः॥

---

भा. किन्तु मिथ्यात्वनिश्चयः' इति। तदेतदभिप्रेत्याह—**उच्यत इति**॥

न च मिथ्यात्वनिश्चयस्य बाधत्वमाचार्यसम्मतं न भवतीति वाच्यम्। **नेदं रजतमिति बाधोऽपि** इति टीकाग्रन्थे **प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वं नाम तच्च बाधकज्ञाने** इत्यादिविवरणग्रन्थे च तत्रापि बाधशब्दप्रयोगादिति। एतेन एतस्य प्रस्तुतबाधशब्दार्थत्वाभावादसङ्गतमिदमिति प्रत्युक्तम्। द्वितीय आह—**अज्ञानस्येति**। कार्याकारेण परिणताज्ञाननिवृत्तिर्बाधः। अत एव न ज्ञानमात्रस्य बाधकत्वमिति भावः॥

**स्मृतिरूपशब्देन कारणत्रितयजन्यत्वमुक्तमिति**। तेन हि रजतादेरध्यासस्य प्रमाणाजन्यज्ञानविषयत्वपरेण मिथ्यात्वं दर्शितमिति दोषः संस्कारः सम्प्रयोगश्चेति कारणत्रितयमन्वयव्यतिरेकसिद्धमध्यासे दर्शितमित्यर्थः। यद्यविद्यावृत्तिराचार्यस्य सम्मता स्यात् तदा अयं ग्रन्थः कथं सङ्गच्छताम्? पूर्वानुभवसंस्कारस्य ज्ञान एव हेतुत्वेन रजतादिहेतुत्वे प्रमाणाभावात्। न च अर्थसंस्कारस्यैव तद्धेतुत्वमिति वाच्यम्। कार्यमात्रस्य तत्सत्त्वेन स्मर्यमाणसारूप्याभिधानवैयर्थ्यप्रसङ्गात् तदतिरिक्तार्थसंस्काराभावाच्चेति॥

ततः किम्? तत्राह—**तत्रेति**। कारणत्रितयजन्यत्वं रजतादेरस्तीति तद्विषयतया परं लक्षणमुदीरितम्, न तु तस्य लक्षणशरीराभिप्रायेण। अविद्याध्यासे अव्याप्त्या तस्य लक्षणत्वायोगात्। लक्षणं तु स्मृतिरूपः

न्यस्यान्यात्मनावभासो लक्षणम्, तदिदं लक्ष्यं न व्याप्नोतीति चोदयति —ननु न व्यापकं इति। कथं लक्षणांशस्याभावः इति; तत्राह—न हि 55-5-6
स्वप्नशोकादौ इति। संप्रयोगस्य कारणांशस्याधिष्ठानांशस्य चाभावादि-
त्यर्थः। कस्तर्हि स्वप्नः? इति; तदाह—अत एव इति। तत्र वासना- 55-7
जन्यस्मृतिमात्रत्वे भ्रान्तिप्रसिद्धिः गवयादिस्मृतिवत् न स्यात् इति
परिहरति—न तावत् स्मृतित्वं इति। ननु कारणत्रितयाभावात् न 55-9
ज्ञानान्तरमपीत्याह— ननु स्मृतिरूपत्वमपि न इति ॥ 55-9

कारणत्रितयजन्यस्वमन्यस्यान्यात्मनावभासं च सम्पादयामी-
त्याह—अत्रोच्यते इति। सम्प्रयोगाभावादपरोक्षावभासित्वात् ग्रहण- 56-1
स्मृतिमात्रत्वे प्रत्युक्ते तृतीयमिदं विज्ञानं स्वयमेवोक्ताध्यासलक्षणं
गमयितुं समर्थमिति वदितुं प्रकारान्तरं पर्युदस्यति—उक्तमेतत् इति। 56-1

संप्रयोगाभावात् इति ग्रहणत्वाभावे हेतुः। अपरोक्षावभासित्वात् इति स्मृतित्वाभावे। प्रकारान्तरेण संप्रयोगमुपपादयितुं मनसः प्रमाकरणत्वं   ता.

पूर्वदृष्टेति प्रातीतिकाध्यासस्य परत्रावभास इत्यध्यासपदार्थस्वरूपस्य इत्युक्तम्। ततोऽपि किम्? तत्राह—तदिदमिति। तत् कारणत्रितयं इदं लक्षणं च लक्ष्यं कार्यमध्यासं च न व्याप्नोति। स्वप्नाध्यासे क्लृप्तमध्यासकारणं लक्षणं च नास्तीत्यर्थः ॥   भा.

*केचित्तु कारणत्रितयजन्य इति तटस्थलक्षणमनूदितम्, अन्यत् स्वरूपलक्षणमित्येतद्ग्रन्थाभिप्रायमाहुः। तत्र[न] तटस्थलक्षणं नाप्यध्यास-[स्वरूप]लक्षणमित्यर्थः। सम्प्रयोगस्येति। तदा चक्षुरादेरुपरतत्वात् केवलस्य मनसो बहिः सम्प्रयोगाभावात्। अत एव दोषोऽपि न कारणम्। एवम-सम्प्रयुक्तस्यानात्मनोऽधिष्ठानत्वायोगादात्मनोऽधिष्ठानत्वे स्वप्ने सर्वस्याहमिति प्रतीतिप्रसङ्गादित्यर्थः ॥

सम्प्रयोगो नाध्यासकारणम्, किन्त्वधिष्ठानसामान्यज्ञानमेवेति स्थास्यति। तच्च शुक्तिकादौ चक्षुरादिसम्प्रयोगात्, स्वप्नाधिष्ठाने तु

* तत्त्वदीपनकाराः ॥

**स्वप्नप्रपञ्चविपरीतप्रमात्रादिविज्ञानसाधनस्यान्तःकरणस्य निद्रादिदोषपूर्वानुभवसंस्कारसहितस्य संप्रतिपन्नकारणत्रितयत्वात् युक्तं स्मृतिरूपं**
56 - 2 **भ्रान्तिज्ञानमित्याह**—तदिह निद्रादिदोषोपप्लुतं इति ॥

56 - 4 **कथं परत्र परावभासः इति ; तदाह**—तस्य च इति। **निद्रादिदोषसंस्कारोपप्लुतेनान्तःकरणेन मिथ्याध्यासनिमित्तकारणेनावच्छिन्नचैतन्यस्था अविद्याशक्तिः पुष्कलनिमित्तकारणसंसर्गादध्यासं प्रति पुष्कलकारणतामापद्यमाना मिथ्यार्थालम्बनाकारेण विवर्तते इति चैतन्यमेव स्वाविद्यया विवर्तते, अतः सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभासलक्षणः परत्र परावभासो विद्यते इति भावः। तथा जागरणेऽपि बाह्याधिष्ठानांशसंसृष्टान्तःकरणावच्छिन्नतया बाह्याधिष्ठानसंसृष्टचैतन्यस्थाविद्याशक्तिः बाह्याधिष्ठानसंसृष्टरजताद्याकारेण विवर्तते इति शुक्ति-**

---

ता. उपपादयति—**स्वप्नेति**। प्रमाकरणेन अधिष्ठानस्य संप्रयोगं दर्शयति—**निमित्तकारणेनावच्छिन्नेति**। तथापि सत्यानृतमिथुनीकरणरूपत्वं कथम् ? इति ; अत आह—**इति चैतन्यं** इति ॥

ननु जागरणे शुक्त्यादिकमधिष्ठानम्, स्वप्ने तु चैतन्यम्, इति वैरूप्यं प्राप्तं इत्याशङ्क्य, जागरणेऽपि चैतन्यस्य अधिष्ठानत्वं उपपादयति—**तथा** इति ॥

---

भा. स्वत एवेति यद्यपि, तथाप्यङ्गीकृत्याह—**स्वप्नेति**। साक्षिणो विषयविशिष्टत्वाकारेण जन्यत्वात् **स्मृतिरूपं भ्रान्तिज्ञान**मित्युक्तम्। स्वप्नस्यान्तःकरणपरिणामत्वं वारयति—**निमित्तेति**। बाह्ये क्लृप्ताज्ञानोपादानादेव स्वप्नाध्यासोपपत्तेर्नान्तःकरणस्योपादानत्वम्। ननु किं मूलाज्ञानं तदुपादानम् ? अवस्थाज्ञानं वा ?। नाद्यः, जाग्रद्घटादिवद्व्यावहारिकत्वप्रसङ्गात्। न द्वितीयः, ब्रह्मगोचरावस्थायां प्रमाणाभावात् अन्तःकरणोपहितसाक्षिणश्चाज्ञानाविषयत्वादिति चेत्, मैवम्—मूलाज्ञानकार्यस्यैव दोषविशेषजन्यतया प्रातिभासिकत्वसम्भवात् इति भावः। **अवच्छिन्नेति**। (मूला) केवलाज्ञानाश्रयचैतन्यमेव अन्तःकरणावच्छिन्नमिति अविद्या अन्तःकरणावच्छिन्नचैतन्यस्था भवतीत्यर्थः ॥

काद्यवच्छिन्नं चैतन्यं रजताद्यालम्बनमिति बाह्यालम्बनं रजतादि कथ्यते। सर्वत्र तु चैतन्यमेव साक्षाद्वा अन्यावच्छिन्नतया वा विभ्रमालम्बनमिति युक्तः परत्र परावभासः इत्यर्थः ॥

आकाशवत् सर्वविषयोपरक्ततया सर्वत्रावभासमानमात्मानमनादृत्य अहमित्येवावच्छिन्नमात्मानमुपादाय चोदयति-नन्वेवं सत्यन्तरेव इति। 56-5
आत्मैवाधिष्ठानं चेत् 'इदं रजतं' इतिवत् 'अह नीलं' इत्येव स्वप्नप्रपञ्चो भायादित्यर्थः। निष्कृष्टाहङ्कारं चैतन्यमात्रमात्मानमादाय चेत्यस्य च चित्सामानाधिकरण्यावभासं सर्वत्राङ्गीकृत्य परिहरति—को वा ब्रूते इति। 57-1
पुनरपि अहङ्कारावच्छिन्नमात्मानमादाय चोदयति—ननु विच्छिन्नदेशः 57-1
इति। इदमिति पृथक्कृत्येत्यर्थः। पृथक्त्वावभासोऽप्यन्तरेवेत्याह—ननु देशोऽपि इति। अनवच्छिन्नचैतन्यसंसृष्टतयैव भेदावभासोऽपीति 57-3
भावः। अहङ्कारावच्छिन्नमादाय अहं भेदः इत्यपि प्रतीयादित्याह—अयमपि इति। निगूढाभिसन्धिरेव पूर्वमुत्तरमुक्त्वा इदानीं सर्वतो 57-4
विप्रसृतं चैतन्यं सर्वात्मना प्रकाशमानमात्मानं स्पष्टीकुर्वन्नाह—नैष दोषः 57-4

---

इदानीं सर्वतो विप्रसृतमिति। नन्वेवं सति कथं स्वप्नस्य भा. अन्तःकरणावच्छिन्नचैतन्यभास्यत्वम्, तस्य तत्सम्बन्धाभावात्। न च गजाद्यधिष्ठानचैतन्यस्यान्तःकरणावच्छिन्नचैतन्येन वास्तवाभेदसत्त्वात् प्रतीतिरिति वाच्यम्। पुरुषान्तरान्तःकरणतद्धर्मसुखादेरप्यपरोक्षत्वप्रसङ्गात्। एवं जाग्रत्यपि प्रमाणं विना घटादिप्रतीतिप्रसङ्गः। न च घटादिकमविद्यावृतमिति न प्रकाशत इति वाच्यम्। स्वप्नेऽपि घटादेस्तदावरणप्रसङ्गात्। न ह्यन्तःकरणावच्छिन्नचैतन्यसम्बन्धि किञ्चिदावृतं किञ्चिन्नेति वक्तुं युक्तम्। न च स्वप्नस्याविद्यावच्छिन्नजीवसाक्षिण्यध्यासादनावरणं जाग्रद्घटादेस्तु नैवमिति वाच्यम्। देवदत्तापरोक्षस्य घटस्य जीवसाक्ष्यभेदात्तदैव यज्ञदत्तस्यापि प्रमाणं विना अपरोक्षत्वापत्तेः। अत एव घटादेश्चिदुपरागस्य वृत्त्यधीनत्वात् कथं तया विना अपरोक्षत्वमिति निरस्तम्। न चाविद्यावृत्त्यवच्छिन्नचैतन्यं साक्षि तदेव स्वप्नाधिष्ठानमिति वाच्यम्। जाग्रति घटादिप्रमादशायां तत्सत्त्वे प्रमाणाभावेन

भा. घटादेः साक्षिभास्यत्वाभावप्रसङ्गात् प्रतिविषयं साक्षिभेदप्रसङ्गाच्च । किञ्च, किं शुक्तिरजतादिकमन्तःकरणविशिष्टो जानाति ? तदुपलक्षितः ? तदुपहितो वा ?। नाद्यः, घटादाविव अन्तःकरणस्य तत्र व्यापाराभावात् । न द्वितीयः, एकस्यैव सर्वस्यापि पुंसस्तत्र संशयाद्यभावप्रसङ्गात् । तृतीये च स एव साक्षी वाच्यः । एवं सुखादिग्रहेऽप्यन्तःकरणस्याव्यापारात्तदुपलक्षितस्य तद्ग्राहकत्वे अतिप्रसङ्गात् स एव साक्षीति स्वप्नदृश्यस्य तत्सम्बन्धं विना कथं भानमिति चेत्—

अत्रेदं नः प्रतिभाति—**तस्य च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिः** इति, **अन्तःकरणेनावच्छिन्नचैतन्यस्थाविद्याशक्तिरिति च टीकाविवरणग्रन्थाभ्या**मन्तःकरणोपहितचैतन्यमेव स्वप्नाधिष्ठानमुपेयम् । **आकाशवदित्यादिग्रन्थ**स्त्वन्तःकरणांशान्यस्य साक्षिचैतन्यांशस्य स्वरूपप्रदर्शनपरम् , विशिष्टस्याधिकरणत्वं[वा]वारयितुम् । न त्वनवच्छिन्नचैतन्यस्यैव अधिष्ठानत्वपरम् । तदोक्तदोषानपायात् । **अहमित्येवावच्छिन्नमात्मानमि-त्यादिग्रन्थ**स्त्वहङ्कारविशिष्टस्यात्मत्वमादाय । अन्यथा अहं नीलमिति प्रतीत्यापादनायोगात् । शुक्तिरजतादेरप्यहङ्कारोपहितसाक्षिचैतन्याध्यासस्य **सुखादिवदित्याचार्यै**रेवोक्तत्वात् ॥

**निष्कृष्टाहङ्कारमिति ग्रन्थो**ऽप्यहङ्कारस्याधिष्ठानत्वनिराकरणपरः । तथा चान्तःकरणोपहितस्याधिष्ठानत्वे तूपाधेस्तटस्थत्वात् । एवमुत्तरत्रापि । न चान्तःकरणोपहितस्य पहितसाक्षिसम्बन्धात् स्वप्नाध्यासप्रतीतिरुपपद्यते । न चान्तःकरणोपहितस्य प्रमातृत्वान्न साक्षित्वमिति वाच्यम् । तद्विशिष्टस्य प्रमातृत्वेऽपि तदुपहितस्य तदभावात् । न चात्र प्रमाणाभावः । अहमिदं रजतं पश्यामीत्यहङ्कारसम्बन्धिन एव रजतानुभवव्यवहारात् । अन्यथोक्तातिप्रसङ्गाच्च । न चैवं सुषुप्तौ साक्ष्यभावादविद्यानुभवो न स्यादिति वाच्यम् , तदापि सूक्ष्माहङ्कारावच्छिन्नसाक्षिणः सत्त्वात् । अन्यथा अन्यान्तःकरणविशिष्टस्य कर्तृत्वादिकमन्यान्तःकरणविशिष्टस्य भोक्तृत्वादिकमिति महदसमञ्जसं स्यात् । 'तदापीतेस्संसारव्यपदेशात्' इति सूत्रमपि निर्विषयं स्यात् । वक्ष्यति **चाचार्यः—संसारावस्थायामन्तःकरणविशिष्टस्वरूपानपायादिति** । विच्छिन्नदेशप्रतीत्युपपादनं तु **टीकाविवरणयो**रेव स्फुटमिति ॥

जागरणेऽपि इति । **प्रातिभासिकभेदमन्तरेण प्रमाणतो न भिद्यते इत्यर्थः। ननु अहमवच्छिन्नचैतन्यादन्यान्येव विषयगतचैतन्यानि किं न स्युरिति; अत आह**—अन्यथा जडस्य इति । **स्वयं चैतन्यहीना विषया आत्माव- गतिप्रकाशेनापि न संसृज्यन्ते चेत् 'मयावगताः' इति सम्बन्धावभासो न स्यादित्यर्थः ॥** 58-1

**सर्वत्र चैतन्यावगुण्ठनेऽपि अहं इदं इति च आत्मानात्मानौ विभक्ताविति प्रतिभासः कथम्? इति तत्राह**—यः पुनः इति । **ननु चैतन्यमेव सर्वत्र अन्तर्बहिर्भेदादिरूपेणावभासते, चेत्, कथं तस्याखण्डा-** 58-3

---

भा. विषयाणां स्वतश्चैतन्यं निराकरोति— **स्वयमिति** । किं विषयाणा- मन्योन्यव्यवहारार्थं तत्र चैतन्यं कल्प्यते तच्च जडस्वरूपम्? उत चेतनानां तद्व्यवहारार्थं स्वप्रकाशं च? । नाद्यः, स्वरूपादिनेव तेनापि व्यवहारायोगात्। तेषामन्योन्यव्यवहारे प्रमाणाभावाच्च । न द्वितीयः, स्वप्रकाशचैतन्यस्य विषय- स्थत्वे प्रमाणाभावात् । विषयस्थचैतन्यस्य चैतन्यान्तराविषयत्वात् । अन्यथा स्वप्रकाशत्वक्षतेः, अन्यचैतन्यस्यान्यव्यवहारानङ्गत्वाच्चेत्यर्थः ॥

ननु एवमप्यात्माधिष्ठानत्वं कुतः? विषयप्रकाशस्य वैशेषिकादिमत इवोपपत्तेः, तत्राह—**आत्मावगतीति** । विषयाणामात्मचैतन्यतादात्म्याभावे मयावगत इति सम्बन्धावभासो न स्यात् । आत्ममात्रसमवेतप्रकाशस्य घटादितादात्म्याभावेन घटादेरपरोक्षत्वा(सम्भवात्) भावप्रसंगाच्च । घटाव- च्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे सत्येव घटादेरपरोक्षत्वसम्भवात्। ततश्च घटादेर्योऽपरोक्षचैतन्यसंसर्गानुभवः स न स्यादिति घटादिकं चैतन्ये कल्पित- मित्यर्थः । अहङ्कारादेः घटादेश्च चैतन्ये आरोपेऽप्यहङ्कारस्य स्वरूपविशेषादेव अहमिति प्रतिभासः न घटादेः, अहमिति प्रतीतितदभावाभ्यामेव आत्मा- नात्मविभागोऽप्युपपद्यत इत्याह—**तत्राहेति** ॥

ननु घटादेः स्फुरणमधिष्ठानं भवतु नात्मेति शङ्कते—**नन्विति** । **अवभासत इति** । तदेवाधिष्ठानं नात्मेति शेषः । स्फुरणमेवात्मेति शङ्कते— **चेदिति** । तर्हि स्फुरणभेदादात्मनोऽपि भेदापत्तिरित्याह—**कथमिति** ।

द्वितीयता इति?। चैत्यभेदोपरागनिमित्तभेदमन्तरेण स्वरूपभेदानवगमात्
58 - 5 इत्याह—तस्य च निरंशस्य इति। निरंशद्रव्यस्याणुत्वमनन्तत्वं वा स्यात्। मध्यमपरिमाणं चेदं चैतन्यं सर्वत्रावभासते। न च निरंशं मध्यमपरिमाणं इति परोपाधिपरिमाणं चैतन्यमित्यर्थः। जागरणेऽप्येवम्, किमु वक्तव्यं स्वप्नस्य चैतन्याधिष्ठानत्वमित्यर्थः॥

58 - 7 केवलस्य मनसो बहिःप्रत्यक्षसाधनत्वाभावात्—अथ वा इति अङ्गीकरणवादः। अव्याप्तिः परिहृता, इदानीं मिथ्याध्यासभ्रान्त्यविद्याप्रसिद्ध्यभावेऽपि अन्यस्यान्यावभासो विद्यते इति लक्षणस्यातिव्याप्ति-

---

ता. सत्यपि बाह्ये अधिष्ठाने चैतन्यमेव अधिष्ठानं यत्र स्वीक्रियते तत्र असति बाह्ये चैतन्यमेव अधिष्ठानं इति अतिशयेन लभ्यते इत्याह—**किमु वक्तव्यं** इति॥

ननु मनोमात्रगोचरत्वं दिगाकाशयोः न संभवति बहिरर्थे तस्य चक्षुरादिसापेक्षत्वात् इत्याशंक्य, सत्यं सिद्धान्तत्वेन नोच्यते इत्याह—**केवलस्य** इति॥

---

भा. स्फुरणस्यैक्येऽपि घटस्फुरणं पटस्फुरणमित्यादिभेदानुभव उपाधिबलादुपपद्यत इत्याह—**चैत्येत्यादिना**। ननु स्वतोऽभेदे सिद्धे भेदप्रतीतिरौपाधिकी, स एव कुतस्तत्राह—**निरंशेति**॥

चैतन्यं हि शरीरानवच्छिन्नप्रदेशे नानुभूयत इति सर्वजनसिद्धम्, तच्च सर्वगतात्मधर्मत्वे नोपपद्यते। निरंशे एकस्मिन्नेकस्य युगपद्भावाभावयोरयोगात्। नाप्यण्वात्मधर्मत्वम्, स्वोपादानादृते धर्माणामसत्त्वेन शरीरव्यापित्वानुपपत्तेः। न च मध्यमपरिमाणात्मधर्मत्वम्, आत्मनोऽनित्यत्वापत्तेः। तस्मादनाश्रितं चैतन्यं मध्यमपरिमाणमिति द्रव्यमेव तत्। तस्यापि सावयवत्वे अवयवानां जडानां चिदवयव्युपादानत्वायोगात् तेषामपि चैतन्ये युगपदनेकज्ञानप्रसङ्गात्। तत्र प्रमाणाभावाच्च। (अतो)निरंशं चैतन्यं मध्यमपरिमाणमनुभूयत इति वाच्यम्, न च तदुपपद्यते इति सर्वगतमेव चैतन्यमुपाधितस्तथा अनुभूयत इति स्वाभाविक एव चैतन्याभेदः। भेदस्तूपाधेः परामर्शे सत्येव प्रतीयमान औपाधिक एवो-चितः इति भावः॥

माह—कथं तर्हि नामादिषु इति। अन्यस्यान्यात्मताज्ञानं अध्यासलक्ष- 59 - 1
णम्, अ[इ]यं तु अन्यस्यान्यत्र मानसी क्रिया इति अतिव्याप्तिं परिहरति
—सत्यमत एव चोदनावशात् इति । ननु ज्ञानमेव तत्र विधीयते इति ; 59 - 2
नेत्याह—न हि ज्ञानम् इति। विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव सर्वत्र 59 - 4
ज्ञानस्य पुष्कलकारणम्, अनिच्छतोऽप्यनिष्टज्ञानदर्शनात् । अतो
विधानात् मानसी क्रियेति भावः ॥

'ननु स्मृतिज्ञानं' इत्यारभ्य 'तं केचित्' इत्यतः प्राक्तनो ग्रन्थः 59 - 6 61 - 1
स्पष्टार्थः। नन्वध्यासे वादिविप्रतिपत्तिदर्शनात् न एकरूपेण लक्षणं
व्यवस्थापयितुं शक्यते इत्याशङ्क्य ; अधिष्ठानाध्यस्यमानयोः स्वरूप-
तत्त्वदेशकालविशेषेष्वेव वादिनां विप्रतिपत्तिः, अन्यस्यान्यात्मताव-
भासमात्रे लक्षणे न विप्रतिपत्तिः, तच्च लक्षणं लौकिकसामान्यविशेषा-

---

ता. ननु ध्यानस्यापि न इच्छाजप्रयत्नजन्यत्वं इत्याशङ्क्य, विधिवैयर्थ्यप्रसङ्गात् विधीयमानत्वादेव विधिजन्येच्छाजप्रयत्नजन्यत्वमेष्टव्यमेव इत्याह—**विधिजन्येति**॥

ननु सत्यानृतमिथुनीकरणरूपं अध्यासं वादिनो नाङ्गीकुर्वन्ति इति; अत आह—**तच्च** इति ॥

---

भा. कृतिसाध्यं हि विधेयम्। न तावत् ज्ञानं विषयकृतिसाध्यम्। तत्कृतेरेव तज्ज्ञानसाध्यत्वात्। अत एव नात्मकृतिसाध्यम्। न वा करणगोचरकृतिसाध्यम्। कृतिं विनापि किञ्चिज्ज्ञानाङ्गीकारे च न कृतिर्ज्ञानकरणम्। व्यभिचारात्। एवमिच्छापि न ज्ञानहेतुः। व्यभिचारात्। कचिच्च सामग्र्यन्तरप्रतिबन्धिका सेति जिज्ञासितार्थो गृह्यते नाजिज्ञासितार्थ इत्यभिप्रेत्याह—**विधिजन्येति**। नन्वेवं क्रियापि न विधेया स्यात् तृणादिक्रियाया इच्छाप्रयत्नानपेक्षत्वादिति चेत्, न—यागादिक्रियाया इच्छादिकं विना असिद्धेः। न चात्रेच्छाया इतरसामग्रीप्रतिबन्धकत्वम्। तन्मात्रेण यत्नं विना क्रियाया अनिष्पत्तेः तस्य चिकीर्षासाध्यत्वात्। न वा प्रयत्नः क्रियाजन्यः, येन तस्याः ज्ञानतौल्यं स्यात्। न च क्रियासामग्र्यामिव कचित् ज्ञानसामग्र्यामिच्छादेर्व्यापारोऽस्तीति वाच्यम्, तत्रापि क्रियाया एवेच्छादिसाध्यत्वात्। अतो यथाशास्त्रं यागादिक्रियाया एव विधेयत्वमिति भावः ॥

दिसंसर्गप्रत्ययानां भ्रमत्वप्राप्तिपरिहाराय सत्यस्य मिथ्यावस्तुसम्भेदाव-
61 - 1 भासः इति बलादापतति इत्यङ्गीकृत्य मतान्तराण्युपन्यस्यति—तं केचि-
दित्यादिना। प्रथमस्तु आत्मख्यात्यन्यथाख्यातिविशेषयोः, द्वितीयस्तु
अख्यातेः, तृतीयस्तु शुक्तेः स्वाभावरजतात्मना ख्यातिरिति शून्य-
61 - 10 ख्यात्यन्यथाख्यातिविशेषयोरुपन्यासः। कल्पनां इत्यस्य व्याख्या अविद्य-
62 - 1-2 मानस्यैवावभासमानतां इति। यल्लक्षणमवादिष्म इति पूर्वलक्षणशब्देन
यच्छब्दस्य सम्बन्धः। अख्यातिवादिनापि मानसं संसर्गज्ञानं
संसर्गाभिमानो वा वक्तव्यः इत्यभिप्रायः। ननु स्मृतिरूपतया कारण-
62 - 6 त्रितयजन्यत्वमुपेक्षितमिति; नेत्याह—पूर्वदृष्टत्वेति॥

ननु अविद्यादिदोषपूर्वभ्रमसंस्काराभ्यामेव पदार्थमात्रज्ञानानि
जायमानानि विभ्रमाः, न सत्यं वस्तु तत्संप्रयोगादि प्रमाणकारणं
चापेक्षते विभ्रमः, इति परत्रेतिपदमविवक्षितमिति शून्यवादी मन्यते,
62 - 7 तत्राह—स्मृतिरूपः पूर्वदृष्टावभासः इति। न पदार्थमात्रज्ञानं विभ्रमः,
शून्यज्ञानस्यापि तथात्वप्रसङ्गात्, किन्त्वन्यत्रान्यज्ञानम्, ततश्च अविभ्रमे-
63 - 1 ऽपि पदार्थज्ञाने लक्षणव्याप्तेः निरुपपत्तिकत्वमिति। कथं निरुपपत्ति-
कोऽयं इत्यादिग्रन्थः स्पष्टार्थः। ननु संविद्रजतयोरितरेतराधिष्ठानत्वेन
साधिष्ठाने भ्रमे सम्भवति न तृतीयस्य सत्यवस्तुनोऽधिष्ठानत्वकल्पना
63 - 5 युक्तेति चोदयति—ननु रजते संविदिति। ननु अध्यस्यमानव्यतिरेकेण
अधिष्ठानस्य सिद्धिर्वक्तव्या, तत्र इतरेतराधिष्ठानत्वे सतीतरेतरापेक्षसिद्धि-
63 - 6 त्वादसमञ्जसं स्यादिति; तत्राह—बीजाङ्कुरादिवदिति। न बीजाङ्कु-
रादिष्वितरेतराश्रयता, किन्तु कारणपरम्परया अनवस्थेति परिहरति—
63 - 6-7 नैतत् सारमिति। नन्विहापि कारणपरम्परेति; नेत्याह—इह पुनर्यस्यामिति।

---

ता. ननु अख्यातिमते संसर्गज्ञानं नास्ति ज्ञानद्वयाविवेकाङ्गीकारात् इति; तत्राह—अख्यातिवादिऽनापि इति॥

---

भा. नन्वविद्येति। अविद्या चात्र ज्ञानस्यासत्प्रकाशनशक्तिः। सैवात्र दोष इत्यर्थः॥

नन्विहापि तर्हि रजते संवित् रजतं पूर्वस्यां संविदि सा च स्वविषये स च पूर्वसंविदि इति परम्परामेव कल्पयामीति चेत्, यदि तावत् पूर्वपूर्वमुत्तरोत्तरस्यान्वितत्वेनाधिष्ठानं स्यात् ततः पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन्नध्यासे युगपदवस्थानात् क्षणिकत्वहानिः। ननु बीजाङ्कुरादावन्योन्योपादानत्वेऽपि न युगपदवस्थानं दृश्यते इति; तत्राह—बीजाङ्कुरादिष्वपीति। अभिमतवस्तुसिद्धिः—अन्वयिकारणत्वसिद्धिरित्यर्थः। 64-1-2
अनन्वितेषु बीजादिष्वन्वयिकारणाकाङ्क्षाया अनिवृत्तत्वादित्यर्थः। अतः अन्वयिद्रव्यमेव तत्राप्युपादानम्, बीजादेरन्योऽन्यनिमित्ततेति भावः। इहापि तर्हि पूर्वस्योत्तरं प्रत्यनन्वितत्वेनैवाध्यासनिमित्तता बीजादिवदिति; नेत्याह—कुत इदमेवमिति पर्यनुयोगे दृष्टत्वादेवमिति। अयं 64-3
भावः—बीजाङ्कुरयोः कार्यकारणभावस्य दृष्टत्वाददृष्टेऽपि तयोरेव कार्यकारणपरम्परा दृष्टपरम्परात्वात् न अनवस्थादोषमावहति। संविद्रजतयोरधिष्ठानाधिष्ठेयतया निमित्तनैमित्तिकभावस्य प्रथममेव कल्प्यत्वात् तयोरेव पूर्वपूर्वनिमित्तनैमित्तिकभावकल्पना तु अन्धपरम्परैव स्यादिति। दृष्टपरम्परामेव दर्शयति—दृष्टत्वादेवमिति तत्रैव[तत्र च]दूरं वेति। 64-3
नानवस्थादोषमतिवर्तेत इति। अन्धपरम्परामेवेत्यर्थः॥ 64-5

न्याकारावभासत्वात् सर्वभ्रमाणां परत्र परावभास एव भ्रमः इत्युक्तम्, भ्रान्तिज्ञानप्रतिपन्नविषयेऽर्थे भ्रान्त्यंशान्तराभावविशिष्टांशान्तरज्ञानस्य बाधकत्वाच्च साधिष्ठानो भ्रमः इत्याह—अपि च न क्वचिदिति। 64-5
ननु अनुमानाप्तवचनाभ्यां सर्पाभावमात्रमपि कदाचिद्गम्यते न तदभावविशिष्टमंशान्तरमिति; तत्राह—यत्राप्यनुमानादिति। तत्राप्यभावविशिष्टं 64-6
वस्तुमात्रं गृह्यते विशेषाकाङ्क्षादर्शनादिति भावः। ननु प्रधानं नास्तीत्यादौ न तदभावविशिष्टं वस्त्वन्तरं गृह्यते, तेषामन्यत्रानध्यस्तत्वादिति; तत्राह—प्रधानादिष्वपीति। अथवा सर्वभ्रमावभासेषु च साक्षिचैतन्य- 65-1
स्यालम्बनस्य विद्यमानत्वात् शङ्क्यमाननिरधिष्ठाननिरवधिकभ्रमबाधेऽपि साक्ष्येवाधिष्ठानमवधिश्च विद्यते इत्याह—अथ वा सर्वलोक- 65-2
साक्षिकमिति॥

**ननु अर्थबाधया ज्ञानस्यापि बाधात् भ्रमबाधे तदवभासिसाक्षि-**
65-3 **चैतन्यमपि बाध्येतेति ; तत्राह**—तद्बाधे तदनुषङ्ग एवेति। **अधिष्ठानत्वे-**
65-4 **नापि परिशेषादिति भावः ।** अतः **इत्युपसंहारः । तदेव प्रपञ्चयति**—
65-4 तेन तन्मात्रस्येति । **साधिष्ठानभ्रमसाधनप्रसङ्गेनाध्यस्तस्यापि शून्यतां**
66-1 **निराचष्टे**—नाप्यध्यस्तमप्यसदिति । **प्रत्यक्षतः 'रजतं' इति विशेषप्रति-**
**भासायोगप्रसङ्गादिति भावः । प्रतिभासमात्रनिराकरणे 'शून्यं न**
**भासते' इति वाक्यस्याबोधकत्वप्रसङ्गात् ॥**

---

भा. **प्रत्यक्षतो रजतमिति** । प्रत्यक्षतः प्रतिभासायोगप्रसङ्गः रजतमिति विशेषप्रतिभासायोगप्रसङ्गश्चेत्यर्थः । किमयमसद्वादी आधुनिकः कश्चित् ? उत सर्वशून्यवादी ? आद्ये किमयमसत्पदार्थः भावो वा ? अभावो वा ? । तन्मते तदतिरिक्तपदार्थाभावात् । नान्त्यः, प्रतियोगिनो दुर्निरूपत्वात् । न हि निष्प्रतियोगिकः कश्चिदभावोऽस्ति । सप्रतियोगिकाभावानां घटाद्य-भाववत् सत्त्वधर्मितया असत्त्वायोगाच्च । अत एव न तस्य भावत्वम्, तस्यापि सत्त्वव्याप्तत्वात् क्लृप्तानन्तर्भावेऽपि भावान्तरमेव तदिति तत्रासच्छब्दः पारिभाषिक एव । वस्तुतो भावत्वाधिकरणत्वे पुरोदेशे चासत्त्वे देशान्तरस्थमेव तद्रजतं युक्तमिति प्रतीयमानस्य भावान्तरत्वानुपपत्तेः । तस्यापि सन्निकृष्टदेशे असत्त्वेन असदेव रजतमभादिति प्रतितिर्न विरुध्यते । तत्तु निरस्तमेव ॥

ननु असन्नाम न किञ्चिदस्ति, सत्त्वे असत्त्वव्याघातात् । ततश्च कस्य भावेऽभावे वान्तर्भावो वाच्य इति चेत्, तर्हि तदेव शून्यवाद्यभिमतमसदिति न तस्य भ्रमविषयत्वम् । त्वयैवासज्ज्ञानस्य निर्विषयत्ववर्णनात् । न चेदं रजतज्ञानं निर्विषयम्, अपरोक्षज्ञानस्य तदयोगात् । बाधकं विना ज्ञानस्य निर्विषयत्व-कल्पनेऽतिप्रसङ्गात् । परोक्षज्ञाने तु परमते अतीतादिविषये निर्विषयत्वं क्लृप्तमेव। तस्मान्नासज्ज्ञानमिन्द्रियजन्यम्, तत्सन्निकर्षाजन्यत्वात्, संमतवत्। न चासिद्धिः, निस्स्वरूपेणासता संयोगतादात्म्यस्वरूपसम्बन्धानामसम्भवात् ॥

यत्तु - यदसत् तन्नापरोक्षमिति व्याप्तिज्ञानस्यैवापरोक्षत्वादसदप्यपरोक्ष-ज्ञानविषय इति, तदसत् । देशकालासम्बन्धिनो निस्स्वरूपस्य व्याप्त्यभावेन

**ननु अध्यस्तं सर्वं शून्यमेवेति तेऽपि मतमिति चोदयति—**ननु 66-3
इति। **शून्यात् व्यावृत्तिरपि भ्रमस्य कथितैवेत्याह—**क एवमाहेति। 66-3
**सद्व्यावृत्तिमात्रं भ्रमस्यासत्त्वं नाम, न शून्यत्वम्, निषेधप्रतियोगित्वा-
दिति भावः। ननु भ्रमस्य स्वकाले अनिर्वचनीयत्वेऽपि बाधादूर्ध्वं
शून्यत्वमविशिष्टमिति शङ्कते—**अथ पुनरिति। **सर्ववादिनां सर्वं वस्तु** 66-4
**स्वकाले वर्तमानमपि विनाशादूर्ध्वं शून्यमेवेति सम्मतम्, अतो न
दोषः इत्याह—**काममिति ॥ 66-6

---

तज्ज्ञानस्यैवाभावात्। असद्वादिनं प्रति कचित् (तद्व्याप्ति) (तत्स्थिति)तद्रीति- भा.
मनुसृत्य तत्प्रतिकूलतया (निर्विषय)ज्ञानाभासात् निर्विषयमेव परं व्यवह्रियते। तस्मादिन्द्रियासन्निकृष्टतया संविदभिन्नत्वाभावाच्च नासदपरोक्षं रजत(त्व)ादि। जातिरूपपरिमाणविशेषादिप्रतीतेरपि नेदमसत्। न ह्यसत एते धर्माः सन्ति। रजतत्वादेरभाने वा कथं प्रवृत्तिः रूपादेः प्रतिसन्धानं च ॥

न च नरशृंगमिति स्वरूपविशेषप्रतीतिरसतोऽप्यस्तीति वाच्यम्। स्वरूपविशेषसत्त्वे धर्मधर्मिभावसत्त्वे चासत्त्वव्याघातप्रसंगात। नरशृङ्गत्वादि-धर्माश्रयस्याखण्डस्यासतोऽप्रतीतेश्च। यदि तच्छब्दात् ज्ञानमस्तीत्युच्यते, तर्हि निर्विषयमेव विद्यमानमे(व वा)तावता किञ्चित् तच्छब्दवाच्यत्वेन ज्ञायत इति नासतो विशेषभानम्। यत्तु निर्विषयमेव ज्ञानं नास्तीति, तन्मन्दम्। पर-मतेऽप्यतीतादिविषयज्ञानस्य निर्विषयत्वात्। न हि तदानीमसता अर्थेन ज्ञानस्य कश्चित् सम्बन्धोऽस्ति। विषयसम्बन्धाभावे च किं नाम ततोऽन्यन्निर्विषयत्वम् ॥

ननु एवं परोक्षभ्रमविषयस्य कथमनिर्वचनीयत्वं सिध्यति?। अपरोक्ष-विषयस्यैवासत्त्वानुपपत्तेरिति चेत्, न कथञ्चित्। न हि विनष्टासत्पक्षकभ्रमानुमाने तद्गोचरशब्दाभासे वा तर्कोत्प्रेक्षादिज्ञाने वा प्रतीयमानः संसर्गः केनचिद-ङ्गीक्रियते न वाङ्गीकर्तुं शक्यते। एवमन्योऽपि परोक्षभ्रमविषयः संसर्गो नास्त्येव। न चैवमन्यथाख्यातिप्रसङ्गः। तज्ज्ञानस्यानिर्वचनीयत्वेन ततो वैषम्यात्। केचित्तु भ्रान्तित्वेनैव तस्याप्यनिर्वचनीयविषयत्वमाहुः ॥

**न शून्यत्वम्, निषेधप्रतियोगित्वादिति।** शून्यस्यात्यन्ताभावप्रति-योगित्वादिधर्माश्रयत्वायोगादित्यर्थः। एतेन ख्यातिबाधान्यथानुपपत्तिरपि

भा. मिथ्यात्वे प्रमाणमित्युक्तम् । तत्र सतो बाधायोगात् असतोऽपरोक्षत्वायोगात् उभयात्मकत्वे चोभयदोषानपायाद्विरोधाच्च । न च सद्विलक्षणत्वे नरशृङ्गवत् (बाधः) अपरोक्षता (च) न सम्भवति असद्विलक्षणत्वे चात्मवत् बाधो न भवतीति वाच्यम् । लाघवेन ख्यात्यभावे असत्त्वस्य बाधाभावे सत्त्वस्यैव प्रयोजकत्वात् ॥

ननु एवं लाघवात् ख्यातिबाधयोः सत्त्वासत्त्वे प्रयोजके, न त्वसत्सद्विलक्षणत्वे, गौरवात् । न च तदभावप्रयोजकयोस्तवापि गौरवमिति वाच्यम् । प्रथमप्रतीतख्यातिबाधयोर्लाघवेन सत्त्वासत्त्वयोः प्रयोजकत्वे क्लृप्ते तदभावयोर्गुरुशरीरयोरपि तयोरेव प्रयोजकत्वात्, गौरवस्य प्रामाणिकतया अदोषत्वात् । न चैकस्य सदसदात्मकत्वं विरुद्धमिति वाच्यम् । एकस्यैवोभयविलक्षणत्ववदुभयात्मकत्वस्यापि सम्भवात् । न च तदुभयविलक्षणत्वं मिथ्येति न विरोध इति वाच्यम् । सदसतोरन्यतरत्वस्योभयात्मकत्वस्य वा आपातात् । किञ्च, सत्त्वासत्त्वसमुच्चय एव मिथ्याभूतोऽङ्गीक्रियताम्, किं निषेधसमुच्चयेनेति ॥

मैवम् । न तावत् सत्त्वमपरोक्षख्यातौ प्रयोजकम् । यत् सत् तदपरोक्षमिति नियमाभावात् । यत् सत् रूपादिमत् तदपरोक्षमिति नियमोऽस्तीति चेत्, सत्यम् । रूपादिमत्त्वप्रयुक्त एष नियमो न सत्त्वप्रयुक्तः, केवलव्यतिरेकाभावात् । ननु मा भूत स नियमः, यत् प्रत्यक्षं तत् सदिति व्यापकत्वमात्रं तस्यास्तीति चेत्, न तावत् पररीत्या अयं नियमः, शुक्तिरजतवैशिष्ट्यादौ व्यभिचारात्, अस्मन्मतेऽपि शुक्तिरजते प्रत्यक्षे व्यभिचारात् तदभावात्, तेन विनाप्यपरोक्षत्वोपपत्तेश्च । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगिनस्तस्य तत्र तादृशनिषेधाप्रतियोगित्वरूपसत्त्वायोगात् । ततोऽन्यस्य सत्त्वस्य मिथ्यात्वाविरोधिनोऽस्माभिरनिवार्यत्वात् ॥

नाप्यसत्त्वं बाधप्रयोजकम्, तुच्छस्यात्यन्ताभावप्रतियोगित्वादेरसंभवात् । अतो यदसत् तन्नापरोक्षमिति नियमादसत्त्वमप्रत्यक्षत्वे प्रयोजकम्, यत् सत् तन्न बाध्यमिति नियमात् सत्त्वमबाध्यत्वे, इति ख्यातिबाधाभ्यां सदसदन्यत्वं सिध्यति । न तु सदसदात्मकत्वम्, तत्प्रापकाभावात् तत्रापि बाधादेरसम्भवाच्च । न च विरुद्धोभयनिषेधद्वयसमु(दा)[च्च]यः कथमेकत्र स्यादिति वाच्यम् ।

**ननु भवतु नाम सर्वस्य वस्तुनो विनाशादूर्ध्वं शून्यता, न विभ्रमगृहीतं वस्तु बाधादूर्ध्वं शून्यं भवति, किन्तु देशान्तरादिगतं इति चेत्, तत्र किं बाधकज्ञानमेव रजतादेर्देशान्तरे सत्त्वं गमयति? किं वा इह बाधानुपपत्तिः? इति; न तावत् बाधकज्ञानमित्याह**—तथा च 66 - 6
बाधकज्ञानमिति । **'नेदं रजतं किन्तु देशकालान्तरे बुद्धौ वा' इत्यनवगमादिति भावः । यावदभिधानसामर्थ्यं हि वाक्यमर्थं प्रतिपादयति, देशान्तरवर्तित्वं तु अनभिहितं न वाक्यार्थः इत्यर्थः ॥**

**एवं सति प्रतिपन्नस्य वस्तुनः अत्राभावः अन्यत्र सत्त्वमन्तरेणानुपपन्नः इत्यर्थापत्त्या वाक्यं गमयिष्यतीति; नेत्याह**—नार्थापत्त्येति । 67 - 5

---

घटाभावस्य घटतदभावानधिकरणत्ववत् घटप्रागभावाश्रयस्य घटतद्ध्वंसतदभावाधिकरणान्यत्ववच्च प्रमाणबलात् सदसदन्यत्वस्याप्यङ्गीकारोपपत्तेः ॥ भा.

'परस्परविरोधे हि न प्रकारान्तरस्थिति'रिति न्यायस्तदुभयाधिकरणत्वयोग्यविषय एव। निषेधद्वयसमुच्चयस्य मिथ्यात्वेऽपि तस्य धर्मिसमानसत्ताकत्वात् धर्मिणो नोभयात्मकत्वमेकैकात्मत्वं वा भवति। यत्तु विधिद्वयसमुच्चय एव वास्तवोऽस्त्विति, तन्न—रजते तदुभयरूपत्वाङ्गीकारे बाधाद्यसम्भवस्योक्तत्वात्। किञ्च, तस्याताात्त्विकत्वमसत्त्वम्? अनिर्वचनीयत्वं वा? आद्ये सत्त्वासत्त्वयोरैकाधिकरण्याभावान्नोभयात्मकं रजतम्। द्वितीये मदिष्टसिद्धिः। यच्चात्र कश्चिदचोचत्—अद्वैतवाक्यव्यतिरिक्तप्रमाणानामतत्त्वावेदकत्वाद्रजताभावस्यातत्त्वावेदकप्रत्यक्षादिसिद्धस्याताात्त्विकत्वाद्रजतं पारमार्थिकमिति। तन्न—अतात्त्विकस्यापि तस्य धर्मिसमानसत्ताकत्वात् ॥

वस्तुतस्तु न हि श्रुतेः प्रत्यक्षादेश्च तत्त्वावेदकत्वमतत्त्वावेदकत्वं वा स्वरूपप्रयुक्तम्। श्रुतेरपि कर्मकाण्डस्योपासनाकाण्डस्य चातत्त्वावेदकत्वात्। किन्तु यद्विषयो न केनापि प्रमाणेन बाध्यते तत्तत्त्वावेदकम्। वेदान्तानामपि तदर्थाद्वैतब्रह्मबाधाभावादेव तत्त्वावेदकत्वम्। शुक्तिरजताद्यभावश्च चैतन्यमबाधितमिति तद्बोधकप्रत्यक्षाद्यपि तदंशे तत्त्वावेदकमेवेति रजतादिकं मिथ्यैवेत्यलमतिविस्तरेण ॥

अन्यथाख्यातौ निषिद्धस्य संसर्गस्य आत्मख्यातौ बहिष्ट्वस्य वा अन्यत्र सत्त्वमन्तरेण निषेधदर्शनात् । अख्यातावपि ऋत्विग्विच्छेदे सर्वस्वदान-कर्तव्यताबुद्धौ ऋत्विग्विच्छेदान्तरनिमित्तादक्षिणयागसमाप्तिविज्ञानबा-धितायां न सर्वस्वदानकर्तव्यता तत्र प्रतिपन्ना अन्यत्र सतीति कल्प्यते । प्रवृत्तिरेव तत्र निरुध्यते इति चेत्, न–प्रवृत्तिनिरोधो न बाधः इत्युक्त-त्वात् । यागादिषु च प्रवर्तमानस्य राजचोरादिप्रतिबन्धनिश्चयात् प्रवृत्तिनिरोधेऽपि यागादिबुद्धौ बाधप्रसिद्ध्यभावात्, सत्यां चाबाधित-कर्तव्यताबुद्धौ यदा कदाचित् प्रवृत्तिसिद्धेः ॥

किञ्च, लोकेऽपि प्रतिपन्नोपाधावेव यस्य निषेधः तस्य निषेधोपा-
67 - 5 धिसजातीयोपाध्यन्तरे सत्त्वं न कल्प्यते इत्याह–इह भग्नघटाभाववदिति ।
यथा प्रतिपन्नदेशे निषिद्धस्य घटस्य न देशान्तरे सत्त्वम्, एवं प्रतिपन्न-
देशकालवस्तुसर्वोपाधौ निषिद्धस्य न प्रतियोगिसत्त्वेनाप्रतिपन्नसर्वोपाधौ
सत्त्वसिद्धिरित्यर्थः । ननु कथं सर्वत्र शून्यस्य प्रतिपत्तिः? इति; तत्राह
67 - 6 —त[ताव]न्मात्रेणापि तत्सिद्धेरिति । अत्रैव अनिर्वचनीयमिथ्यावस्तु-
सद्भावमात्रेणापि तस्याः प्रतीतेः सिद्धेरित्यर्थः ॥

ननु तर्हि 'पूर्वं रजतमभूदिदानीं न' इति घटवत् कालभेदेन निषेधः स्यात्–न–लौकिकपरमार्थरजतस्यात्र कालत्रयेऽपि शून्यत्वात्

---

भा. ऋत्विग्विच्छेदे सर्वस्वदानेति । 'यदि प्रतिहर्ता विच्छिन्द्यात् सर्ववेदसं दद्यात्, यद्युद्गाता अदक्षिणो यज्ञः (संस्थाप्यः) समाप्यते' इति ऋत्वि-ग्विच्छेदनिमित्तप्रायश्चित्तयोर्निमित्तयौगपद्ये विकल्पः, क्रमभावित्वे तु तन्निमित्त-प्रायश्चित्तयोरपि क्रमेण प्रतीतयोर्विकल्पायोगादुत्तरेण पूर्वस्य बाधः इति सिद्धान्तः । तत्र यथा प्रतिहर्तृविच्छेदनिमित्तसर्वस्वदानकर्तव्यता तत्र बाधिता नान्यत्र सतीति गुरुणा कल्प्यते, तथेदमप्यस्त्वित्यर्थः ॥

न–लौकिकेति । लौकिकपरमार्थत्वेन दृष्टस्यास्यैव कालत्रयेऽप्यत्रैवा-भावसत्त्वात्तद्विषयतया निरुपाधिकनिषेध उपपद्यते । घटादेस्तु प्रतीतिकाले तदाश्रये भूतले अभावानुभवाभावान्न निरुपाधिकनिषेधप्रतीतिरित्यर्थः ।

तदपेक्षया निरुपाधिकनिषेधसिद्धेः। निरुपाधिकनिषेधसामर्थ्याच्च प्रति-
पन्नं मिथ्या रजतमिति बाधानन्तरं परामृश्यते 'मिथ्यैव रजतमभात्'
इति। अन्यथा कालभेदे सत्यरजतमेव स्यात्। 'नायं सर्पः' इत्यभाव-
मात्रविषया हि प्रत्यक्षप्रतिपत्तिः न देशान्तरे सर्पसत्त्वं गमयति, किमु
वक्तव्यं 'रज्जुरियं' इत्यधिष्ठाने पर्यवसिता प्रतीतिः न कल्पयतीति
दर्शयति—यत्रापि सर्पबाधपूर्वकः इति। तदेवं इत्याद्युपसंहारः। यद्येवं 68 - 1-2
परत्र इत्यादिः स्पष्टार्थः ॥ 68 - 4

सत्यं विस्पष्टार्थं इत्यस्य अयमर्थः—स्मृतिरूपशब्देन किं संस्कार- 6 - 10
जन्यत्वं पूर्वानुभवसम्भेदो वा स्मृत्या सादृश्यं भ्रान्तेरभिधीयते
इति विशये संस्कारजन्यत्वमेवेति स्पष्टीकरणार्थं पूर्वदृष्टस्यावभासः न
दर्शनस्येत्युक्तमिति। पूर्वदृष्टसजातीयस्येत्यर्थः। अनिर्वचनीयरजताभ्यु-
पगमात्। भ्रान्तिश्चेत् सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासः
अन्यथा अतिप्रसङ्गात् इत्याद्या या युक्तिरभिहिता, लोकानुभवसिद्धत्वाद-
ध्यासस्य तयापि युक्त्या न प्रयोजनमित्याह—तथा च लोके अनुभवः 69 - 1
इत्यादिना ॥

ननु 'शुक्तिका रजतवत्' इति च वचनं न भ्रान्त्यपेक्षया
उपपद्यते, 'इदं रजतं' इत्येवावभासनात्, नच बाधापेक्षया, तत्र वक्त-
रणाभावात् इति चोदयति—ननु न शुक्तिकेति। बाधकज्ञानापेक्षया 69 - 4
'शुक्तिका रजतमवभासते' इति लक्षणप्रदर्शनं बाधकज्ञानविषयतया

---

बाधकज्ञानविषयतया इति। 'नेदं रजतं' इति बाधकज्ञानविषय- ता.
तया इत्यर्थः। 'इयं शुक्तिः' इति बाधपक्षे-तदनुपपत्त्या सिद्धस्य इत्यर्थः ॥

---

यथाश्रुतार्थोपादाने घटादिवत् पूर्वं रजतमभूत् इत्यापादनस्यापरिहारादिति भा.
द्रष्टव्यम्। स्मृतिरूप इत्यादिलक्षणे कस्मिंश्चित् पक्षे पूर्वदृष्टपदवैयर्थ्यमभिप्रेत्य
टीकायामुक्तं—विस्पष्टार्थमिति। तत्र विस्पष्टीकरणप्रयोजकमाह—स्मृतिरूप-
शब्देनेति। वस्तुतस्तु पूर्वदृष्टपदं न व्यर्थम्, तच्च प्रागेव वर्णितम्। अविद्या-
वृत्तिश्च न भ्रान्तिज्ञानम्। एतच्च स्वयमनुपदमेव वक्ष्यति, न वा संस्कारजन्यत्वं
स्मृतिरूपशब्दार्थ इति ॥

वा तत्सामर्थ्येन वा सिद्धस्याध्यासमिथ्यात्वस्य लक्ष्यस्य वच्छब्देन
अभिधानं इति लक्ष्यलक्षणसङ्गतिरनेन वाक्येन तत्र प्रदर्श्यते इत्याह—
69-6 उच्यते शुक्तिकाग्रहणमिति। ननु मिथ्या रजतमिति विशेषणादन्यत्र
69-9 सत्यरजतं वक्तव्यमिति; नेत्याह—मिथ्यात्वमपि रजतस्येति। स्वरूपपरं
विशेषणम्, नान्यव्यावृत्तिपरमित्यर्थः। ननु रजतस्य मिथ्यात्वे
तद्धर्मत्वादिदन्ताया अपि मिथ्यात्वात् सर्वमिथ्यात्वेन निरधिष्ठानता-
70-2 प्रसङ्गः इति; नेत्याह—तत्रासंप्रयुक्तत्वादिति। कथं तस्यासम्प्रयुक्तस्य
70-3 रजतस्यापरोक्षतेति; अत आह—अपरोक्षावभासस्त्विति॥
70-5 उदाहरणद्वयस्य तात्पर्यमाह—तत्र शुक्तिकोदाहरणेनेत्यादिना।
70-6 अस्मदर्थे—अहमिति प्रतिभासे इत्यर्थः। प्रतिभासतो युष्पदर्थत्वाभावेपि
71-1 चिदवभास्यत्वं नाम युष्मदर्थलक्षणमस्तीत्याह—तदवभास्यत्वेनेति। अद्वि-
तीयचैतन्यप्रकाशात्मनि द्रष्टरि अहङ्कारादिसङ्घातस्याध्यस्तत्वात् अध्यस्य-
मानव्यतिरिक्तमधिष्ठानमध्यासाधिष्ठानयाथात्म्यविषयप्रमाणं (णज्ञानं)
द्रष्टा चेति त्रितयमात्मेति वक्तव्यम्। ततश्च अधिष्ठानगतो दोषः द्रष्टृदोषः

---

ता. आत्मनि अध्यासकारणानां असंभवं वक्तुं भ्रान्तिकारणं आरचयति—आत्मन्येव अद्वितीयेति। ततः किम्? इति; अत आह—**ततश्च** इति।

---

भा. ननु बाधकज्ञाने मिथ्यात्वं विषयो नाध्यस्तत्वमिति; तत्राह—**तत्सामर्थ्येनेति। अध्यासमिथ्यात्वस्येति।** मिथ्याध्यासत्वस्येत्यर्थः मिथ्यात्वस्यालक्ष्यत्वात्। **वच्छब्देन** प्रमाणायोग्यत्वस्वात्यन्ताभाववद्वृत्तित्वांश-प्रदर्शनेन **शुक्तिकारजतेत्यनेन** परत्र परावभासांशप्रदर्शनेन च सम्पूर्णलक्षणस्य भ्रान्तिज्ञानत्वस्यापि प्रदर्शनाल्लक्ष्यलक्षणयोः सङ्गतिर्ज्ञापितेत्यर्थः॥

इदानीमहङ्काराध्यासे लक्षणाव्याप्तिमुक्ताध्यासकारणाभावं च शङ्कते—**अद्वितीयेति**। सामान्यविशेषरूपांशद्वयवदेव अधिष्ठानं तथा विशिष्यागृह्यमाणं सामान्यतो गृह्यमाणं च। नचाद्वितीयचैतन्यप्रकाशात्मके आत्मनि तदुभयं सम्भवति। नचान्यदहङ्काराध्यासे अधिष्ठानं सम्भवति। अतः **परत्रे**त्यंशाभावान्नाहङ्काराध्यासे वर्णितमध्यासलक्षणमस्ति। नापि तत्कारणम्। तत्र न

प्रमाकरणदोषो वा सर्वं दोषजातमात्मन्येवेति वक्तव्यम् । तदभावात्
चैतन्यस्याध्यासविषयज्ञानस्याजन्यत्वात् कारणत्रितयजन्यविज्ञानस्या-
त्मन्यनात्माध्यासेऽसम्भवात् अगृहीतविशेषस्य सामान्यग्रहणस्याधिष्ठा-
नत्वनिमित्तस्यात्मन्यसम्भवाच्च परत्रेत्ययोगात् न अध्यासलक्षणं बहि-
रुक्तमप्यात्मनि सम्भवतीति चोदयति—ननु बहिरर्थे इत्यादिना उच्यते 71-4 73-1
इत्यतः प्राक्तनेन ग्रन्थेन । ननु इहापि बहिरर्थवदगृहीतविशेषत्वमर्थ-
त्वसामान्यादनुमीयतामिति ; नेत्याह—न त्विह कारणान्तरायत्तेति। ननु 71-6
स्वभावावभासेऽपि संवेदनवदगृहीतविशेषांशोऽपि स्यादिति ; नेत्याह
—निरंशस्येति । मध्यमपरिमाणनिराकरणादणुरनन्तो वा आत्मा 71-7
निरंशः इति ॥

---

अस्तु, को दोषः ? इति; अत आह—**तदभावात्** इति। कारणत्रितयजन्यत्व- ता.
मपि न सिध्यति आत्मचैतन्यस्य अनादित्वात् इत्याह—**चैतन्यस्य** इति। परत्र
परावभासाख्यस्वरूपलक्षणमपि न संभवति इत्याह—**अगृहीतेति** । **संवेदनवत्**
इति । स्वयंप्रकाशत्वस्वातन्त्र्यनित्यत्वादयो विशेषाः संवेदनगताः द्रष्टव्याः ॥

---

तावत् सम्प्रयोगः सम्भवति । तदध्यासात् पूर्वं मनसोऽन्यस्य वेन्द्रियस्याभावात् । भा.
नापि दोषः । अहङ्काराध्यासात् पूर्वं प्रमात्रादिविभागाभावेन प्रमातृप्रमाण-
प्रमेयदोषाणामात्मन्येव वक्तव्यत्वात् । न च तदुपपद्यते, तस्य चिदेकर-
सत्वादित्यर्थः ॥

ननु आत्मा अगृहीतविशेषः पदार्थत्वात् सम्प्रतिपन्नवत् । ततश्चा-
ज्ञानात् सामान्यविशेषांशद्वयमपि सङ्गच्छत इति न लक्षणाव्याप्तिः ।
नापि कारणाभावः, चैतन्यस्यैवाधिष्ठानसामान्यांशज्ञानस्य अविद्यारूपदोषस्य
च सत्वादित्याशङ्क्याह—**नन्वित्यादिना** ॥

ननु किमिदं स्वप्रकाशत्वं, न तावत् सजातीयमनपेक्ष्य प्रकाशमानत्वम् ।
अन्तःकरणादावतिव्याप्तेः । नापि सजातीयप्रकाशानपेक्षप्रकाशत्वम् । प्रदी-
पादावतिव्याप्तेः । अत एव सजातीयप्रकाशानपेक्षत्वे सति अपरोक्षव्यवहार-
विषयत्व [मित्यपि निरस्तम् ।] नाप्यवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वम् ।

**ननु निरंशोऽप्याकाशादिवन्न कार्त्स्न्येनावभासते इति ; तत्राह—**

71-8 स्वयंज्योतिष इति । **यावत्सत्त्वमवभासभावादित्यर्थः । कुतः ? ॥**

---

**भा.** सुषुप्तिप्रलयादावपरोक्षव्यवहाराभावेनास्वप्रकाशत्वापत्तेः । न च व्यवहारयोग्यत्वं तदाप्यस्तीति वाच्यम् । तस्यापि मुक्तावभावात् ॥

नचापरोक्षव्यवहारयोग्यतात्यन्ताभावानधिकरणत्वं [स्वप्रकाशत्वं] तच्च तदाप्यस्तीति वाच्यम् । तस्यापि धर्मस्य मुक्तावसम्भवात् । कल्पितयोग्यतात्यन्ताभावस्य तदधिष्ठानात्मनि वक्तव्यत्वेन आत्मनस्तदनधिकरणत्वानुपपत्तेश्च । अवेद्यत्वमपि यदि वृत्तिविषयत्वराहित्यं तदा आत्मनोऽपि वेदान्तजन्यवृत्तिविषयत्वेन असम्भवः । नापि फलव्याप्यत्वाभावः, अन्तःकरणादेरपि तदव्याप्यत्वात् अपरोक्षव्यवहारविषयतया तद्योग्यत्वाच्च । न च चैतन्याविषयत्वमवेद्यत्वम्, चैतन्याविषयत्वव्यवहारविषयत्वयोर्विरोधेनानन्वयात् । अत एवावेद्यत्वे सत्यपरोक्षत्वं तदिति निरस्तम् । अवेद्यस्यापरोक्षत्वायोगात् ॥

नापि तत्र प्रमाणम् । नचात्मा स्वप्रकाशः आत्मत्वात् यन्नैवं तन्नैवं यथा घट इत्यनुमानं प्रमाणम् । साध्याप्रसिद्धेः । न च वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् रूपादिवदिति सामान्यतोऽवेद्यत्वसिद्धिरिति वाच्यम् । एवमपि विशिष्टसाध्यस्याप्रसिद्धेः, प्रमेयत्वादौ व्यभिचाराच्च । आत्मा वेद्यः वस्तुत्वात् घटवदिति प्रयोगाच्च । नचाप्रयोजकत्वम्, अन्यथा तद्व्यवहारायोगादित्याक्षिपति—**कुत इति** ॥

न तावल्लक्षणाभावः । अवेद्यत्वं स्वप्रकाशत्वम्, तच्च चैतन्याविषयत्वम् । न चैतत् क्वचिदतिव्याप्तम् । चैतन्यातिरिक्तस्य सर्वस्य चैतन्यविषयत्वात् । वृत्त्यतिरिक्तचैतन्यं च अहङ्कारटीकायां वक्ष्यत इति नासम्भवः । अर्थप्रकाशस्य परैरप्यङ्गीकृतत्वात् । न चासत्यतिव्याप्तिः । असन्नाम किञ्चिदस्ति चेच्चैतन्यविषय एव तत् । अन्यथा तदसिद्धेः तद्गोचरव्यवहारासंभवात् । नास्ति चेत् क्वातिव्याप्तिः । न चात्मनोऽपि चैतन्यविषयत्वादसम्भवः अन्यथा तद्गोचरव्यवहारासम्भवादिति वाच्यम् । न हि व्यवहारमात्रे व्यवहर्तव्यविषयज्ञानत्त्वेन ज्ञानं कारणम् । गौरवेण तस्य तेन रूपेण व्यवहारसामान्याहेतुत्वात् । किन्तु प्रकाशत्वेनैव ॥

न चैवं घटज्ञानात् पटव्यवहारप्रसङ्गः। सामान्यसामग्रीमात्रात् विशेषकार्यस्यायोगात्। अनात्मव्यवहाररूपविशेषे च तद्विषयज्ञानं कारणम्। नचैवं कारणान्तरकल्पनागौरवपरिहाराय व्यवहारसामान्य एव व्यवहर्तव्यज्ञानं कारणमिति वाच्यम्। सामान्यकारणताग्रहणदशायां तस्यानुपस्थिततया गौरवाप्रतिसन्धानेन लाघवेन प्रकाशत्वेनैव तस्य व्यवहारसामान्यकारणत्वस्य क्लृप्तत्वात्। आत्मव्यवहारविशेषे च सामान्यकारणमेव प्रयोजकम्। व्यवहर्तव्यतत्प्रकाशयोरभेदादतिप्रसङ्गाभावाच्च ॥ भा.

न च सामान्यकारणमात्राद्विशेषकार्यं न भवतीति वाच्यम्। मीमांसकानां मते असति दोषे ज्ञानसामान्यसामग्रीत एव प्रमारूपकार्यविशेषस्य दर्शनात्। नैयायिकानामपि अनित्यज्ञानसामग्रीत एवासति संस्कारे अनित्यानुभवदर्शनात्। एकस्यापि कारणस्य कार्यदर्शनबलात् कार्यद्वयप्रयोजकशक्तिकल्पने बाधकाभावाच्च। अथवा आत्मव्यवहारे आत्माभिन्नप्रकाशत्वेनैवायं कारणं भवतु। अस्ति चात्मनि यावद्व्यवहारं व्यवहारानुसारेण भेदाभावरूपोऽभेदः कश्चिद्धर्मः ॥

न च घटादिव्यवहारेऽपि वृत्तिरेव कारणं भवतु तया विना व्यवहारादर्शनेन तस्या आवश्यकत्वात् ततश्च घटादेरपि चैतन्याविषयत्वात्तत्रातिव्याप्तिरिति वाच्यम्। वृत्तिं विनापि ज्ञानेच्छादिव्यवहारदर्शनेन तस्या व्यभिचारेण व्यवहाराहेतुत्वात्। न चैवमपि तत्र प्रकाशमात्रं कारणमस्तु न तद्विषयत्वेनेति वाच्यम्। इच्छादिदशायामपि द्वेषादिव्यवहारप्रसङ्गात्। न हि शब्दव्यवहारेऽपि विषयः कारणम्। अतस्तत्र व्यवहर्तव्यविषयप्रकाशत्वेनैव ज्ञानं कारणमिति (अनात्मव्यवहारमात्रे) तथा तेन रूपेणानात्मव्यवहारसामान्ये कारणतायां बाधकाभावेनेच्छादिविषयव्यवहारविशेष एव तथा कारणत्वकल्पनाया अयोगात्। अन्यथा कुत्रापि सामान्यकारणताग्रहो न स्यात्। घटादिव्यवहारे तु वृत्तेः कारणत्वेऽपि तद्विषयतया सैव कारणमिति विनिगमकाभावाच्चैतन्यमपि तथा। एतेन तत्संशयादिनिवृत्तिरपि व्याख्याता ॥

भा. किञ्च, आत्मनश्चैतन्याभेदेन न तद्विषयता सम्भवति। ज्ञानविषयत्वं हि ज्ञानाकारत्वम्। तच्च तन्निरूपकत्वं तत्सम्बन्धविशेषवत्त्वमिति यावत्। न चात्राभिन्ने कश्चित् तत्सम्बन्धोऽन्योऽस्ति। एकमात्रवृत्तिसंयोगतादात्म्ययोरसम्भवात्। स्वरूपसम्बन्धोऽपि स्वरूपद्वयात्मा एकस्मिन् न सम्भवति। एकस्मिन् विशिष्टप्रत्ययाभावेन तत्प्रयोजकसम्बन्धवत्त्वस्यैकस्मिन्नसम्भवात्। अत एव नाभेदोऽपि सम्बन्धः। अपि चैकमात्रस्वरूपं भेदाभावो वा अभेदो यदि सम्बन्धः स्यात्तर्हि रूपी घट इतिवत् घटे घट इति धीप्रसङ्गः। तदभेदस्य तत्रापि सत्त्वात्। न च घटाभेदादिः सम्बन्धो न भवतीति वाच्यम्। क्वचिदभेदस्य सम्बन्धत्वे अस्य संयोगादेरिवान्यत्रापि तथात्वात्॥

किञ्च, सर्वं ज्ञानं स्वविशेष्ये तदभेदं विषयीकरोतीति तस्यापि तत्र विशेषणतापत्त्या तज्ज्ञानाभावे नोत्पद्येत। यद्येवं प्रमेयत्वादेः कथं स्ववृत्तित्वम्?। न कथञ्चित् प्रमेयत्त्वं प्रमेयमिति धीस्तु घटाभावो घटशून्य इति धीरिव प्रमेयत्वस्वरूपमात्रविषया न तु तद्वैशिष्ट्यविषया। प्रमेयत्वे प्रमेयत्वमिति धीस्तु न कस्यापि। घटाभावे घटो नेति धीस्तु घटत्वाभावविषया॥

अस्तु वा प्रमेयत्वे प्रमेयत्वान्तरम्। आधाराधेयभावानुभवात् तदेकत्वायोगात् प्रमाविषयस्वरूपप्रमेयत्वस्य एकत्वासम्भवाच्च। न हि प्रमातद्विषयातिरिक्तं प्रमाविषयत्वमेकं सम्भवति। तदुभयस्वरूपं च पृथक् पृथगेवेति किं तदेकं प्रमेयत्वम्। न च प्रमात्वमेव प्रमेयत्वम्, प्रमा प्रमेयेति सहप्रयोगायोगात्॥

न च परंपरासम्बन्धविशिष्टप्रमात्वं तदिति तत्पदयोरपर्यायत्वम्, परम्परासम्बन्धस्य व्यावृत्तप्रमा(त्व)घटितत्वेन तदेकत्वायोगात्। प्रमात्वस्य घटादावत्यन्ताभावसत्त्वाच्च। न च परम्परासम्बन्धेन प्रमात्वं तत्रास्तीति वाच्यम्। तदाश्रयप्रमाया घटाद्यवृत्तित्वेन प्रमात्वे तदयोगात्। प्रमात्वं घटादिर्वा प्रमेति ज्ञानाभावेन तस्य तद्वृत्तित्वकल्पनायोगाच्च। प्रमात्वस्यापि विषयघटितस्यैकत्वासम्भवात्। अत एव वाच्यत्वादिकमपि नैकम्। अथैवं केवलान्वयिधर्मो न स्यात्। ओमिति ब्रूमः॥

ननु अत्यन्ताभावप्रतियोगित्वं कुतश्चिद्व्यावृत्तम्? न वा?। आद्ये, यतो व्यावृत्तं तस्यैवात्यन्ताभावाप्रतियोगित्वात् केवलान्वयित्वम्। न चेत् अत्यन्ता-

भा.

भावप्रतियोगित्वं सर्वत्रास्तीति तदेव केवलान्वयि इति चेत्, न—स्वस्मादेव व्यावृत्तत्वात्। न तावत् प्रतियोगिस्वरूपातिरिक्तं प्रतियोगित्वं नाम किञ्चिदस्ति॥

ननु एवमपि चैतन्यस्य कल्पितभेदेन चैतन्यविषयत्वं सम्भवति, सत्यभेदस्तु घटादावपि नास्तीति चेत्, न—सत्यम्, अभेदे भेदप्रयोज्यसम्बन्धायोगात्। धर्मिसमानसत्ताकभेदाभावे तत्समानसत्ताकविषयत्वाभावेन रजतकाल एव शुक्तिकाया अरजतत्ववत् वेद्यान्यत्वस्यापि सत्त्वेन स्वप्रकाशत्वानपायात्। मुक्ताविवेदानीमात्मप्रकाशसम्भवेन व्यवहारस्याप्यन्यथासिद्धत्वेन तस्य प्रकाशविषयत्वकल्पकत्वाभावाच्च। पुरुषान्तरचैतन्यं पुरुषान्तरस्य विषयतया अनुभूयत इति चेत्, न—चैतन्यपुरुषान्तरसंबन्धस्य तद्विषयत्वेऽपि चैतन्यस्वरूपस्याविषयत्वात्। पुरुषान्तरवृत्तेश्चैतन्यं तत्सम्बन्धश्च विषय इति न तत्सम्बन्धव्यवहारानुपपत्तिः। तस्मात् चैतन्याविषय एवात्मा॥

एतेन स्वविषयप्रकाशत्वं स्वप्रकाशत्वमिति तदभावे कथमात्मा स्वप्रकाशः? तथा च श्रुतिः—'तदात्मानमेवावेत्' इति तस्य स्वविषयत्वं दर्शयतीति निरस्तम्। उक्तविधया स्वविषयत्वासम्भवात्। श्रुतिरपि तस्य वृत्तिविषयत्वं दर्शयति, तदितरस्य वेद्यत्वाभावपरा वा। एवकारश्रुतेः। अत एव 'स्वप्रकाशोऽप्यविषयोऽज्ञातत्वात्' 'जानन्नेव स्वं न विजानाति' 'विज्ञातारमरे केन विजानीयात्' इत्यादिश्रुतिरविषयत्वं दर्शयति॥

प्रमाणं च—आत्मा स्वप्रकाशः आत्मत्वात् यन्नैवं तन्नैवं यथा घटः। स्वधर्मविषयो न भवतीति वा साध्यम्। इच्छादिश्चान्तःकरणधर्म एव। अत्र चात्मेति अन्तःकरणातिरिक्ताहमनुभवगोचर उच्यते। ततो न बाधः। न वा परस्याश्रयासिद्धिः। आत्मत्वं च चिद्रूपेऽप्यात्मनि यावद्व्यवहारं घटे घटत्ववत् कल्पितमस्तीति नैकव्यक्तावात्मनि तत्त्वं जातिरुपधिर्वास्तीति वादिमतेन हेतोरसिद्धिरिति न शङ्कावकाशः। न च साध्याप्रसिद्धिः, व्याप्तिग्रहणाय हि साध्यप्रसिद्धिर्मृग्यते, अत्र चावेद्यत्वप्रसिद्धिं विनैव घटादौ भावरूपवेद्यत्वानात्मत्वयोः साध्यसाधनाभावयोः प्रसिद्धत्वेन तत्र व्याप्तिग्रहसंभवात्॥

**चित्सुखाचार्यलक्षणमपि साधु।** तद्धि अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वम्। तत्र चावेद्यत्वं फलाव्याप्यत्वम्। तच्च घटादा-

भा· वतिव्याप्तिवारणाय। अपरोक्षव्यवहारयोग्यत्वेन धर्माधर्मादौ शुक्तिरजतादौ च साक्षिमात्रभास्येऽतिव्याप्तिः परिहृता। अपरोक्ष इति शब्दव्यवहारोऽत्र अपरोक्षव्यवहारः। नच शुक्तिरजतादिरप्यपरोक्षव्यवहारयोग्य एव अन्यथा तस्य तद्विषयत्वानुपपत्तेरिति वाच्यम्। अयोग्येऽपि भ्रान्त्या तद्विषयत्वोपपत्तेः। अपरोक्षप्रमाविषय एव हि तद्योग्यः। नच शुक्तिरजतान्तःकरणादिकमपरोक्षप्रमाविषयो भवति। साक्षिमात्रभास्यत्वेन तेषामज्ञानविषयत्वाभावात्॥

मुक्तात्मनि तद्योग्यता नास्तीति तदत्यन्ताभावानधिकरणत्वमुक्तम्। तच्च तदत्यन्ताभावाधिकरणान्यत्वम्। तच्च स्वरूपमेवेति न तदा तदभावः। यद्यपि सत्वावच्छिन्नयोग्यतात्यन्ताभाव आत्मनि वर्तते, अन्यथा तन्मिथ्यात्वासम्भवात्। तथापि योग्यतात्वावच्छिन्नप्रतियोगिताकात्यन्ताभावो धर्मादिषु वर्तमानस्तत्र नेति नासम्भवो लक्षणस्य। अत्र च तदधिकरणस्वभावत्वाधिकरणान्यत्वं विवक्षितमिति न तदभावेऽ(ति)व्याप्तिः॥

नचोक्तसाध्याप्रसिद्धिः। वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् शौक्ल्यवत्। प्रमेयत्वादौ व्यभिचारः परिहृतः। एवं सामान्यतोऽवेद्यत्वसिद्धौ अपरोक्षव्यवहार(विषयत्व)योग्यताप्यात्मनि प्रत्यक्षसिद्धेत्यपरोक्षव्यवहारयोग्य आत्मा अवेद्यः आत्मत्वात् व्यतिरेकेण घटवत्। अत्र च वेद्यत्वमात्रं निषिध्यत इति नादृष्टादेः सपक्षत्वम्। तदनन्तरमर्थात् फलव्याप्यत्वाभावः सिध्यति। तेन विवक्षितसाध्यसिद्धिः। नचाप्रयोजकत्वम्। आत्मनः स्वप्रकाशत्वाभावे तद्व्यवहाराभावप्रसङ्गात्। नच तद्विषयज्ञानादेव तद्व्यवहारः। निरवयवसंयोगासम्भवेन तद्विषयजन्यज्ञानासम्भवात्। अजन्यज्ञानस्य च तद्भेदे प्रमाणाभावात्॥

तद्विषयज्ञानस्यापि स्वप्रकाशत्वे आत्मैक एव स्वप्रकाशोऽस्तु। वेद्यत्वे वा अप्रकाशमानस्य स्वार्थसाधकत्वमनुपपन्नमेव। तत्र तत् दृष्टं न वा न दृष्टमेवेति वा अज्ञानसंशयविपर्ययदशायामर्थसत्तानिश्चयाभावेन ज्ञानसत्तानिश्चयस्यार्थसत्तानिश्चयहेतुत्वात्। यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्य तद्धेतुत्वात्। किञ्च यो यदप्रकाशनिवर्तकः स स्वनिवर्त्याप्रकाशानावृत एव तन्निवर्तकः, यथा तमोनिवर्तक आलोकः। ज्ञानं चाज्ञाननिवर्तकमिति तदनावृतमेव तन्निवर्तयति। वेद्यत्वे अनवस्थानात् स्वप्रकाशम्॥

'अत्रायं पुरुषः स्वयंज्योतिः' 'आत्मैवास्य ज्योतिः' इत्यादिश्रुतेः। ननु ज्योतिरिति प्रकाशगुणमात्रं नाभिधीयते, आत्मनो गुणत्वप्रसङ्गात्। अतः प्रकाशगुणवत् द्रव्यं ज्योतिरिति जन्यज्ञानेनापि प्रकाशेन आत्मा प्रकाशगुण इति ज्योतिरात्मेति न विरुध्यते। नैतत्सारम्—सर्वभावानामन्यनिमित्तप्रकाशसंसर्गित्वादात्मन्यपि तत्प्रसङ्गनिराकरणाय स्वयंज्योतिरिति विशेषणोपपत्तेः। 'आत्मैवास्य ज्योति'रिति चैवकारात्। ननु कारकान्तरानपेक्षतया स्वयमेव स्वात्मनि ज्ञानं जनयतीति स्वयमिति विशेषणं किं न स्यात्?। न—ज्योतिष्ट्वस्यैव विशेष्यत्वात् तत्र कारकत्वस्य विशेष्यतया अप्रतिभासात्॥

---

तार्किकमतं आशङ्कते—**ननु** इति। 'स्वयं कारकं' इत्यनुक्तेः ज्योतिष एव विशेषणत्वात् स्वयंशब्दस्य, मैवम्, इति परिहरति—**न—ज्योतिष्ट्वस्य** इति॥ ता.

---

अपि च आत्मनो ज्ञानस्य वा अस्वप्रकाशत्वे प्रत्यक्षविषयीभवद्घटादौ मयेदानीं घटादिरनुभूयते न वेति संशयादिप्रसङ्गः। अतो ज्ञायमानमेव ज्ञानमर्थसत्तानिश्चय इति स्वप्रकाशम्। न चैवं स्वप्रकाशत्वानुमानविषयत्वे वेद्यत्वप्रसङ्गः। वृत्तिविषयत्वस्य स्वप्रकाशत्वाविरुद्धत्वात्। संविद्विषयान्यत्वस्यैव तल्लक्षणत्वात्। संविद्विषयान्यत्वं चात्मस्वरूपमेवेति नाद्वैतक्षतिः। नचैवं परमतादविशेषः तन्मतेऽप्यात्मस्वरूपसत्वादिति वाच्यम्। तदभिमतात्मनो वेद्यान्यस्वरूपत्वाभावात्। अत एव वस्तुत्वाद्यनुमानमपि प्रत्युक्तम्, उक्तप्रतिकूलतर्कैस्तस्मिन् वेद्यत्वस्य बाधितत्वात् इत्यभिप्रेत्य आत्मनः स्वप्रकाशत्वे वर्णिततर्कानुग्राह्यं प्रमाणमाह—**अत्रायमिति**॥ भा.

ज्योतिश्शब्दस्यात्र प्रकाशमात्रमर्थः, नतु प्रकाशवद्द्रव्यं, गौरवात्। नचैवमात्मनो गुणत्वापत्तिः। प्रकाशस्य पराभ्युदितगुणादिविलक्षणत्वस्य वक्ष्यमाणत्वात्। अतो घटादिवत् स्वव्यतिरिक्तप्रकाशविषयत्वनिरा(से नायं)साय ज्योतिरात्मेति सामानाधिकरण्यमित्यभिप्रेत्याह—**नैतदिति**। घटादिज्ञान इवात्मज्ञाने विषयातिरिक्तकर्तृकारकप्रसक्तौ तत्परिहाराय स्वयमित्यादिविशेषणमित्याशङ्क्य, ज्योतिःपदेन प्रकाशमात्रस्य विशेष्यतया प्रतीतेः कर्तृकारकस्य चाप्रतीतेर्न ततः कारकान्तरव्यावृत्तिः सिध्यति इत्याह—**न ज्योतिष्ट्वस्येति**। ज्योतिष इत्यर्थः॥

**किञ्च, ज्ञानजन्मप्रयुक्तत्वात् कारकापेक्षायाः तदभावे अपेक्षैव नास्तीति। ननु ज्ञानत्वप्रयुक्तं जन्मापि विद्यते। न—प्रकाशगुणत्वप्रयुक्तमेव**

---

ता. ननु आत्मस्फुरणं जन्मवत् ज्ञानत्वात् घटज्ञानवत् इति शङ्कते—**ननु** इति। आत्मप्रकाशगुणः स्वाश्रयोपाधौ न जायते प्रकाशगुणत्वात् संप्रतिपन्न-प्रकाशगुणवत् इति प्रत्यनुमानमाह—**न—प्रकाशगुणत्वप्रयुक्तं** इति।

---

भा. अत्र **कश्चित्** आदित्यादिज्ञानसाधन [निरासकैवकारात्] सारादात्मैवास्य ज्योतिरिति वाक्यमात्मानं ज्ञानसाधनमेव दर्शयति। स च परमात्मैव। 'असुप्तः सुप्ता' निति तल्लिङ्गात् अस्येति भेदनिर्देशाच्चेत्याह। तदसत्। 'किं-ज्योतिरयं पुरुषः' इति हि अयं कार्यकरणसङ्घातात्मा पुरुषः स्वस्यासनादि-व्यवहारे किंज्योतिरिति पृष्टं न तु ज्ञानसाधनम्। 'आदित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते' इत्यादिव्यवहारस्योत्तरे दर्शनात्। आदित्येन जानातीत्य-दर्शनाच्च। अतः परम्परया व्यवहारनिमित्तादित्यचन्द्राग्निवागनन्तरं साक्षाद्य-वहारनिमित्तज्योतिःप्रश्नोत्तरं 'आत्मैवास्य ज्योतिर्भवती'ति अस्य कार्यकरण-सङ्घातस्य व्यवहर्तुरहमनुभवगोचरस्य चात्मा अनुपचरितस्वरूप(भाव)मधिष्ठान-साक्षिचैतन्यं ज्योतिरिति दर्शयति न ज्योतिस्साधनमिति, साधनपदाभावात्। ज्योतिश्शब्दस्य प्रकाशमात्रार्थत्वात् प्रक्रमविरोधाच्च॥

आत्मपदमपि जीवेश्वरस्वरूपभूतं चैतन्यमभिधत्ते, न तु जीवव्यतिरिक्त-मेव परमात्मानम्। अहमनुभवे अप्रकाशमानस्य घटादिवदात्मपदार्थत्वायो-गात्। व्युत्पत्तिनिमित्तप्रयोगस्यावयवशक्तेश्चात्मपदस्य जीवेऽपि सम्भवात्। 'स्वेन ज्योतिषा प्रस्वपिती'ति प्रस्वापस्य जीवलिङ्गस्य दर्शनाच्च। 'असुप्तः सुप्तानि'ति लिङ्गस्य प्रकाशात्मनि जीवेऽपि सम्भवाच्च। ज्ञानसाधनानामनेकेषां सत्वेन स्वयमित्यादिविशेषणासङ्गतेश्चेति॥

किञ्च, ज्योतिश्शब्दार्थस्य ज्ञानस्य नित्यत्वान्न तस्य साधने कारकमात्रे वा अपेक्षा, अतो ज्योतिस्सामानाधिकरण्यादात्मनः स्वप्रकाशत्वमेव सिध्यती-त्याह—**किञ्चेति**। ज्ञानं स्वाधिकरणे सति न जन्यते प्रकाशगुणत्वात् प्रदीपप्रकाशगुणवत्। संयोगादौ प्रभादौ च व्यभिचारपरिहाराय विशेषणद्वयम्। गुणपदमविवक्षितं वा अस्तु। ततश्चात्मनि जन्यज्ञान (ज्ञानस्य जन्यत्व) निषेधे

द्रव्यजन्मव्यतिरेके स्वद्रव्योपाधौ जन्माभावस्य प्रदीपादौ दृष्टत्वात् अत्रापि ज्योतिःशब्दादात्मनि प्रकाशगुणस्य जन्माभावनिश्चयात्। न चान्तःकरणेऽपि प्रकाशगुणोदयो ज्ञानपरिणामः। स्वभावत एव प्रकाशगुणवद्द्रव्यस्यान्तःकरणस्यैव विशेषपरिणामस्य ज्ञानत्वाभ्युपगमात्। न च ज्ञानमपि क्वचिज्जन्मवत् दृष्टम्। दृष्टमन्तःकरणे इति चेत्, न–ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात्। तस्य चात्माश्रयत्वात्। अन्तःकरणपरिणामे ज्ञानत्वोपचारात्। न च ज्ञानमात्माश्रयं द्रव्यमिति युक्तम्। तस्यैव प्रकाशगुणत्वेनात्मनो ज्योतिष्ट्वहानात्। जडप्रकाशगुणो न जन्यः,

---

क्रियाविशेषणम्। प्रकाशगुणत्वप्रयुक्तं यथा भवति तथैव जन्माभावस्य दृष्टत्वात् इत्यर्थः॥ ता.

ननु प्रकाशगुणत्वमसिद्धं इति; अत आह—**अत्रापि ज्योतिश्शब्दात्** इति। इदानीं अनुमानं उपसंहरति—**आत्मनि** इति। अन्तःकरणवृत्तिलक्षणः प्रकाशः सत्येव द्रव्ये स्वयमेव जायमानो दृश्यते इत्याशङ्क्य, आह—**न च** इति। तत्र हेतुमाह—**स्वभावतः** इति। तत्र अन्तःकरणमेव तत्तत्प्रकाशगुणाकारेण परिणमते न तु वृत्तिरेव इत्यर्थः। ज्ञानत्वात् जन्मवत्त्वसाधने किं ज्ञानशब्देन चैतन्यमभिधीयते? उत बुद्धिवृत्तिः? इति विकल्प्य, आद्ये साध्यविकलं निदर्शनं इत्याह—**न च ज्ञानं** इति। द्वितीयमुत्थापयति—**दृष्टं** इति। तत्र साधनविकलो दृष्टान्तः इत्याह—**न ज्ञातुः** इति। स एव अन्तःकरणाश्रयोऽस्तु इति; अत्राह—**तस्य च** इति। कुतस्तर्हि तत्र ज्ञानव्यवहारः इति; तत्राह—**अन्तःकरणेति**॥

ननु ज्ञानस्य प्रकाशत्वं असिद्धं तस्य द्रव्यत्वात् इत्याशङ्क्य, आह—**न च** इति। ज्ञानस्य द्रव्यत्वे तस्यैव प्रकाशगुणत्वात् आत्मनः प्रकाशगुणत्वं न सिध्येत इत्यर्थः। **प्रकाशगुणत्वेन**–प्रकाशगुणवत्त्वेन इति यावत्। प्रकाशगुणत्वात् इत्यनुमाने जडप्रकाशगुणत्वं उपाधिः इति शङ्कते—**जडेति**। मैवम्

---

ज्ञानं नित्यमेव सेत्स्यति इत्यभिप्रेत्याह—**न-प्रकाशेति**। **ज्योतिश्शब्दादिति**। भा. प्रतीयमानस्येति शेषः। परिमाणादौ यथाश्रुतसाध्याव्याप्तेः साधनावच्छिन्नसाध्यव्यापकमुपाधिमाह—**जडप्रकाशगुण इति**॥

**चित्प्रकाशगुणो जन्य इति चेत्, न—प्रकाशत्वप्रयुक्तत्वात् स्वद्रव्योपाधौ जन्माभावस्य। दर्पणादौ विद्यमानप्रकाशस्यैव तिरोधाननिराकरणं क्रियते। प्रदीपादिषु तु द्रव्यमेव जायते न प्रकाशगुणः। प्रज्ञानघनशब्दाच्च चैतन्यज्योतिरात्मा न जडज्योतिरिति गम्यते। 'विज्ञानमानन्दं' 'प्रज्ञानं ब्रह्म' इत्यादिवचनाच्च। ज्ञानमिति ज्ञातृत्वमुच्यते न**

---

ता. —व्यभिचारावारकत्वेन व्यर्थविशेषणतया पक्षेतरत्वात् इति परिहरति—**न—प्रकाशत्वेति** ॥

ननु सत्येव दर्पणे निघर्षणेन प्रकाशगुणस्य जन्मदर्शनात् अनैकान्तिको हेतुः इत्याशङ्क्य, आह—**दर्पणादौ** इति। प्रदीपवत् इति दृष्टान्ते साध्यवैकल्यमाशङ्क्य, आह—**प्रदीपादिषु** इति। ननु आत्मनः प्रकाशगुणत्वात् जडप्रकाशत्वं प्रदीपादिवत् प्राप्तं इत्याशङ्क्य, हेतोः कालात्ययापदिष्टत्वमाह—**प्रज्ञानेति** ॥

ननु ज्ञानशब्देन ज्ञानाधिकरणमुच्यते, 'करणाधिकरणयोश्च' इति अधिकरणेऽपि ल्युट्प्रत्ययस्य विधानात् इति शङ्कते—**ज्ञानं** इति। मैवम्—

---

भा. **द्रव्यमेव जायत इति**। द्रव्येण सहैव तत्र प्रकाशो जायते। न तु द्रव्येऽधिकरणे सति जायत इत्यर्थः। ननु इदमनुमानमसङ्गतम्, सिद्धान्ते चैतन्यप्रकाशस्याश्रयाभावात्। न च चैतन्ये प्रभाप्रकाशे वा अनुगतं प्रकाशत्वमस्ति। तद्धि न तावत् ज्ञाने प्रदीपरूपे च गुणत्वव्याप्यजातिरेका भवति। नापि तमोविरोधित्वरूप एक उपाधिरनुगतोऽस्ति। ज्ञाने शार्वरतमोविरोधित्वस्य प्रदीपगुणे अज्ञानविरोधित्वस्य चाभावात्। न वा ज्ञानान्धकारयोरेकं तमस्त्वमस्ति। ननु चावरणनिवर्तकत्वं प्रकाशत्वं तदुभयानुगतमस्ति। अज्ञानस्य स्वरूपप्रयुक्तास्तीतिव्यवहारविपरीतव्यवहारप्रयोजकत्वात्, अन्धकारस्यापि चक्षुस्सन्निकर्षादिसामग्रीप्रयुक्तास्तीतिव्यवहारविपरीतव्यवहारे दोषतया प्रयोजकत्वात् स्वसंसृष्टविषयविपरीतव्यवहारजनकत्वं [त्वलक्षणमावरणत्वं] तयोरनुगतमिति चेत्, न—प्रभादिद्रव्ये (तमो) [अप्रमा] निवर्तकादृष्टे च व्यभिचारादिति ॥

**भावार्थः इति चेत्, न—भावार्थे प्रसिद्धिविरोधात् शब्दस्य। किञ्च, प्रतिक्षणं प्रकाशगुणकल्पनात् वरमेकस्यैव गुणस्य स्थायित्वकल्पनम्। आत्मनि प्रकाशगुणव्यतिरेकाभावाच्च नागन्तुकत्वे प्रमाणमिति॥**

---

'ज्ञप्तिः ज्ञानं' इति भावेऽपि प्रत्ययविधानात् इति परिहरति—**न—भावार्थे इति**। ता.
तथापि विनिगमनायां को हेतुः इति चेत्—उच्यते—धात्वर्थप्रतिपत्तिसापेक्षप्रतिपत्तिकत्वात् तदीयकरणाधिकरणयोः, प्रथमप्रतिपत्तिको धात्वर्थ एव असति बाधके समाश्रयणीयः, अन्यथा अनन्ताद्वितीयादिशब्दविरोधात् इति भावः। कल्पनालाघवन्यायादपि आत्मनि प्रकाशगुणो न जायते इत्याह—**किञ्च** इति। आत्मनि प्रकाशगुणप्रागभावासिद्धेश्च न तस्य जन्मसिद्धिः इत्याह—**आत्मनि** इति।

---

मैवम्—वृत्तिव्यतिरिक्तज्ञानं तावत् वक्ष्यमाणविधया(न्यायात्) सिद्धम्। भा.
तत् स्वाश्रयत्वेनाभिमते न जन्यते अनेकासमवेतप्रत्यक्षत्वे सति अपार्थिवावरणनिवर्तकत्वात् प्रभाप्रकाशवत्। आदर्शादिमालिन्यशोधक(शब्द)-चेष्टादौ व्यभिचारवारणाय **अपार्थिवेति**। अथ वा, परमते संस्कारत्ववत् बाह्याबाह्यवृत्तिप्रकाशत्वजातिरस्तु, तस्य बाधकाभावात्। अस्मन्मतेऽप्यनिर्वचनीयः कश्चिदुभयनिष्ठोऽखण्डो धर्मः प्रकाशत्वमिति नोक्तदोषः। अत्र चान्वय्यनुमानलोभेन साध्ये विशिष्टनिषेधः अभिप्रेत इति द्रष्टव्यम्। वस्तुतस्तु नार्थप्रकाशो जन्यते, प्रकाशत्वात्, पराभिमतेश्वरज्ञानवत्, व्यतिरेकेण घटादिवद्वा। न चाप्रयोजकत्वम्, वृत्त्यतिरिक्तज्ञाने कारणासम्भवेन तदुत्पत्तेरसम्भवात्। तदिदमभिप्रेत्योक्तं 'नच ज्ञानमपि क्वचिज्जन्मवत् दृष्ट'मिति। ततश्च ज्ञानस्य साधने कर्तरि वा नापेक्षेति न पराभिमतः श्रुत्यर्थ इति आत्मैव ज्योतिरिति सिद्धम्॥

प्रथमप्रतीतेरावश्यकभावार्थत्वस्वीकारे बाधकाभावात् ज्ञानमेव ब्रह्मेत्यभिप्रेत्याह—**भावार्थे इति**। किञ्च, एवमनङ्गीकारे अनेकज्ञानानि कल्पनीयानीति गौरवम्। न च सिद्धान्तेऽप्यनेकवृत्तिज्ञानानि कल्पनीयानीति वाच्यम्। तथापि ज्ञानाश्रयस्यात्मत्वे अनेकात्मानोऽनेकज्ञानानि च कल्पनीयानीति कल्पनागौरवमिति वरमेकं स्थायिज्ञानमात्मेति कल्पनम्। नचेदं बाधितम्, ज्ञानोत्पत्तिविनाशासम्भवेन तदनुभवानामप्यन्यथासिद्धेर्वक्ष्यमाणत्वात्। उक्तानुमानेन अनादिज्ञानसिद्धौ ज्ञानात्मनोर्भेदे प्रमाणाभावादित्यभिप्रेत्याह—**किञ्चेति**।

**ननु आत्मन्यगृह्यमाणविशेषत्वमनुभवसिद्धं इति चोदयति—**
71-8 ननु ब्रह्मस्वरूपमिति। **तर्हि शुक्तिकायामिव ब्रह्मण्येवानवभासविपर्ययौ**
72-1 **स्याताम्, न जीवे, इत्याह**—न तदनवभासनादिति। **ननु कार्यकारण-**
**भावहीनयोः द्रव्ययोः सामानाधिकरण्यमेकद्रव्यनिष्ठम्, सोयं देवदत्त**
**इतिवत्, अतो द्रव्यैकत्वात् जीवगतावेवानवभासविपर्ययाविति चोदयति**
72-2 —ननु न ब्रह्मणोऽन्यः इति। **तर्हि ज्ञानप्रकाशविरोधादाश्रयविषयभेदाभावाच्च**
72-4 **नाज्ञातता ब्रह्मण इत्याह**—एवं तर्हीति। **तत्र अद्वितीयाधिष्ठानब्रह्मात्मनि**

---

ता. 'तत्त्वमसि' इत्यादिसामानाधिकरण्यं एकत्वपरम्, अकार्यकारणत्ववद्द्रव्यसामानाधिकरण्यरूपत्वात्, 'सोऽयं देवदत्तः' इतिवत्, इत्यनुमानेन जीवब्रह्मणोरेकत्वमाशङ्कते—**ननु** इति। **द्रव्ययोः** इति गुणगुण्यादिसामानाधिकरण्यं व्यावर्तयति। **कार्यकारणभावहीनयोः** इति 'मृद्घटः' इति लक्षणसामानाधिकरण्यं व्यावर्तयति। प्राप्तप्रकाशप्रतिबन्धकमेवावरणं इति

---

भा. **नाज्ञातता ब्रह्मण इति।** एवं च सति अविद्याया असम्भवात् न तयाप्यात्मनोऽधिष्ठानत्वमुपपादितं भवति, नापि सा दोषतया कारणमिति भावः॥

उच्यते—अधिष्ठानसामान्यज्ञानमेवाध्यासे कारणम्, न सम्प्रयोगः। गाढान्धकारे सत्यपि तस्मिन् सति एतद्व्यतिरेकेण कार्यव्यतिरेकाभावात्। न चान्धकारप्रतिसम्प्रयोगे सति च संस्कारादौ रजतादिभ्रमानुदयात्। न चान्धकारप्रतिबन्धकादेव तदनुदय इति वाच्यम्। दोषस्य भ्रमकारणत्वेन तदप्रतिबन्धकत्वात्। अन्यथा मन्दान्धकारेऽपि भ्रमो न स्यात्। स्वसम्बन्धिज्ञानप्रतिबन्धकतया अन्धकारस्य रजतज्ञानाप्रतिबन्धकत्वाच्च। अधिष्ठानसामान्यज्ञाने सति अन्धकारस्य तत्प्रतिबन्धकत्वादर्शनाच्च। अतोऽधिष्ठानसामन्यज्ञानमध्यासकारणम्। तच्च लोके सम्प्रयोगाद्भवति। आत्मनस्तु स्वप्रकाशत्वात् तेन विनापि तत् सुलभम्। प्रमाणादिदोषोऽप्यविद्या अत्र विद्यते। आत्मन एव स्वस्मिन् प्रमाणत्वात् प्रमातृत्वाच्च। अतो न कारणाभावः। नाप्यात्मनोऽधिष्ठानत्वासम्भवः, अनाद्यविद्यैवागृहीतविशेषांशादेः सम्भवादित्यभिप्रेत्य परिहरति—**तत्राद्वितीयेति**॥

प्रमाणस्य चैतन्यस्याविद्याकारणदोषसंसर्गं प्रथमं दर्शयति—उच्यते- 73-1
विद्यते एवेति। प्रत्यक्षानुमानार्थापत्तिप्रदर्शिताज्ञानस्य श्रुतितदर्थापत्ति-
भ्यां प्रदर्शनं क्रियते— श्रुतिस्तावदिति। सुषुप्ते मिथ्याज्ञानाभावात् 73-3
तत्संस्कारस्य चाप्रतिबन्धकत्वात् कादाचित्कग्रहणाभावस्य च स्वत-
स्सिद्धग्रहणविरोधित्वाभावात् स्वरूपचैतन्येनैव ब्रह्मस्वरूपावभासे प्राप्ते
तदवभासप्रतिबन्धनिमित्तमनृतं दर्शयति–'अनृतेन हि प्रत्यूढाः' 'त इमे
सत्याः कामा अनृतापिधानाः' इति। ततश्च मिथ्याज्ञानतत्संस्कारा-
ग्रहणकर्मभ्यो व्यतिरिक्तमनवभासनिमित्तमनृतं मिथ्यावस्तु सिद्धम्।
'अनीशया शोचति मुह्यमानः' इति स्वभावसिद्धेश्वरस्यानीश्वरत्वं
तद्भावाप्रतिपत्तिरेव। वस्तुनोऽनपायात्। ततश्चेश्वरभावाप्रतिपत्तेः शोकस्य
च निमित्तं मोहं दर्शयति। आदिशब्दात् 'न तं विदाथ य इमा
जजानान्यत् युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्याचासुतृप

---

ता. मङ्गीकृत्य प्रकाशस्य प्राप्तिं दर्शयति—सुषुप्ते इति। अस्तु तर्हि सुषुप्ते भ्रान्ति-ज्ञानसंस्कारात् आत्मनः अनवभासः इति, तत्राह—तत्संस्कारस्य च इति। अस्तु तर्हि प्रमाणवैकल्यादेव तदनवभासः इति, तत्राह—कादाचित्केति। ब्रह्मस्वरूपावभासे इति। नित्यशुद्धबुद्धमुक्तत्वाद्यवभासे। अनृतेन— मिथ्याभूतेन अज्ञानेन। प्रत्यूढाः—छन्नाः। श्रुत्यन्तरेऽपि भावरूपमज्ञानं दर्शितं इत्याह—अनीशया इति। ननु 'अनीशया' इति ऐश्वर्याभाव एव कस्मात् नोच्यते इति; अत आह—स्वभावेति। तम्—प्रकृतं विश्वकर्माणमीश्वरं यूयं—शुष्कतार्किकाः न विदाथ न जानथ। न च उपायाभावात् अपरिज्ञानम्, कार्यलिङ्गेन तस्य ज्ञातुं शक्यत्वात्, इत्याह—य इमा इति। यः ईश्वरः इमा—इमानि भूतानि—जजान जनितवान्। यत एवं अतः तत्त्वविदां युष्माकञ्च तत्त्वमजानताम्—अन्यत् अन्तरं बभूव—महान् विशेषो जात इत्यर्थः। कथं वयमतत्त्वविदः ? इति; अत आह—नीहारेण प्रावृताः इति। नीहारसदृशेन

---

भा. न चानृतशब्देन कर्मोच्यते, तस्य प्राप्तस्वरूपप्रकाशप्रतिबन्धकत्वासम्भवादित्याह—कर्मभ्य इति। न हि कर्मणः स्वरूपप्रकाशविपरिलोपो

उक्थशासश्चरन्ति' इति। नीहारं तमोऽज्ञानमित्यनर्थान्तरम्। तेन प्रावृतत्वमेव जीवानां ब्रह्मापरिज्ञाने जल्प्यत्वाद्यध्यासे च निमित्तं दर्शयति। तथा 'अविद्यायामन्तरे वर्तमाना नान्यच्छ्रेयो वेदयन्ते' इति श्रेयोरूपब्रह्मापरिज्ञाने क्रियाकारकाद्यध्यासे च निमित्तभूतामविद्यां दर्शयन्तीत्याद्याः। 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ती'त्याद्याः स्मृतयोऽपि द्रष्टव्याः॥

अर्थापत्तिरपि–ब्रह्मज्ञानात् बन्धनिवृत्तिः श्रूयमाणा ब्रह्मणि प्रागनवबोधोऽध्याससम्बन्धहेतुरस्तीति कल्पयतीति फलश्रुत्यनुपपत्तिः।

---

ता. तमोरूपेण परमार्थवस्त्वाच्छादकेन अज्ञानेन **प्रावृताः**—आच्छादिताः। किञ्च **जल्प्या च** आवृताः—**जल्प्या**—जल्पः शिल्पः परबुद्धिपरिभवार्थया, न परमार्थस्वरूपावधारणार्थया, शुष्कतर्कविद्यया आच्छादिताः—असुतृपश्च असूनां प्राणादीनां चक्षुरादीनां विधिना तर्पयितारश्च यूयम्। तत्त्वविदः पुनः **उक्थशासश्चरन्ति**—उत्तिष्ठन्ति उद्गच्छन्ति विकाराः अस्मात् इति उक्थं—परं कारणम्, तस्य शासितारा:–कथयितारः स्वरूपतो व्याख्यातारः सन्तः, चरंति–सर्वत्र अप्रतिहन्यमाना वर्तन्ते। अतो युष्माकं तेषाञ्च तत्त्वविदां महदन्तरमेव इत्यर्थः। **केचित्** पुनः 'अन्यत् युष्माकं' इत्यादिकं अतत्त्ववित्परतयैव योजयन्ति—युष्माकं अतत्त्वविदां तस्य च ईश्वरस्य वस्तुतः आत्मभूतस्यापि अन्यत् अन्तरं आच्छादकं आसीत्। किं तत्? इति; आह—**नीहारेण** इति। अस्य व्याख्यानं पूर्ववदेव। अत एव तदपरिज्ञानात् जल्प्याः-जल्पनस्य नीचभाषणस्य विषयभूताः। असुतृपः इति पूर्ववत्। उक्थं–उक्थशस्त्रोपलक्षितं यत् कर्म तस्मिन् शासः—शासनं विधिवाक्यैः येषां ते एवं कर्मणि प्रेर्यमाणाः चरन्ति—संसारचक्रे परिभ्रमन्ति इति। ननु नीहारेणैव प्रावृतत्वमुक्तं न अज्ञानेन इति; अत आह—**नीहारं** इति॥

---

भा. भवति, न वा विपरीतव्यवहारयोग्यतादिः, विरुद्धयोः समानसत्ताकयोरेकत्वायोगादिति भावः। ननु अविद्यायाः प्रमाणगम्यत्वे आत्मवदनिवृत्तिः स्यादित्याशङ्क्य, यद्यपि घटादेः कर्मण इव वा प्रमाणगम्यस्यापि मिथ्यात्वान-

अथवा, द्रष्टव्य इत्यादिदर्शनविधानानुपपत्तिर्वा प्रागनवगममन्तरेणेति। जीवस्य ब्रह्मस्वरूपानवभासनिमित्तं जीवाश्रयाध्याससम्बन्धहेतुरज्ञानदोषो विद्यते इत्युक्तम्। अत्र च साक्षिवेद्यस्याज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यते इति न तस्य प्रमाणवेद्यत्वप्रसङ्गः इति। तत्र चोदयति —ननु न जीवो ब्रह्मणोऽन्य इति। किमत्र जीवब्रह्मणोरेकत्वात् पर्यनु- 73 - 8

---

ननु तर्हि प्रमाणवेद्यत्वात् अज्ञानस्य सत्यत्वं प्रसक्तं इति; अत आह— ता.
अत्र च इति। सर्वेषां स्वाज्ञानं साक्षिसिद्धमेव, परप्रतिबोधनाय केवलं प्रमाणोपन्यासः। न च एवमपि प्रमाणगम्यत्वेन सत्यत्वप्रसक्तिः आशङ्कनीया, आरोपितरजतादेः तत्संसर्गस्य च मिथ्यात्वप्रमाणविषयत्वेऽपि सत्यत्वस्य परैः

---

पायात् ज्ञाननिवर्त्यत्वमुपपद्यते, न वा अज्ञानत्वं विरुध्यते, स्वसमानविषयज्ञानाघातमात्रासहिष्णुस्वभावं हि तत्, न प्रमाणायोग्यस्वभावम्; तथापि वस्तुवृत्ति[त्त]माश्रित्याह—**अत्र चेति**॥ भा.

अज्ञानं हि निरपेक्षसाक्षिप्रत्यक्षेण 'न जानामि' इति प्रथममनुभूयते। तत एव तस्य प्रमाणाभावप्रयुक्तासत्त्वशङ्कानिवृत्तिः सिद्धेति साक्षिसिद्धमज्ञानं भवति। तस्याभावव्यावृत्तिस्तु साक्षिप्रत्यक्षमात्रान्न सिध्यति। तत्र वादिनां विप्रतिपत्तिदर्शनात्। अतस्तदनुमानप्रमाणाधीनमिति प्रमाणैरज्ञानस्याभावव्यावृत्तिः प्रतिपाद्यत इत्यर्थः॥

एतेन अज्ञानस्याभावव्यावृत्तिबोधकमानमज्ञानं विषयीकरोति चेत्तदपि प्रमाणगम्यमेव। स्वातन्त्र्येण तत्सत्तावेदकस्यैव तत्प्रमाणत्वात्। न चेत् कथमज्ञानस्याभावव्यावृत्तिः सिध्यति। न चानुमानादेरज्ञानांशे न तात्पर्यमिति वाच्यम्। तात्पर्यं हि शब्दस्य धर्मः न त्वनुमानादेरिति निरस्तम्। तेन विनापि सिध्यत्यज्ञाने अनुमानस्य प्रमाणत्वानुपपत्तेः। अत एव घटादौ न श्रुतिः प्रमाणम्, आत्मनि वा परमते न चक्षुरादि, इति वृद्धानां व्यवहारः। तस्मादज्ञातावेदकमेवार्थसत्ताप्रयोजकं प्रमाणम्। अज्ञातत्वं च भावरूपाज्ञानविषयत्वम् अन्यद्वा इत्यज्ञानांशे अनुमानादि न प्रमाणमिति भावः॥

किं यत् यद्विषयं तत् तदाश्रितं न भवति गतिवदिति नियमात् अज्ञानस्याश्रयविषयभेदेन भवितव्यमित्युच्यते? उत यत् यदावारकं तत् तदा-

**युज्यते ? । किमेकत्वादाश्रयविषयभेदानुपपत्तिः ? किं वा चित्स्वभावस्याविद्याश्रयत्वविरोधः ? ब्रह्मणो वा सर्वज्ञत्वादिहानिः ? इति। न तावदज्ञानमाश्रयविषयभेदापेक्षम् । किन्तु एकस्मिन्नेव वस्तुन्याश्रयत्वमावरणञ्चेति कृत्यद्वयं सम्पादयति । स्वाश्रयापवरकप्रदेशे कृत्यद्वयसम्पादितमोवत् अक्रियात्मकत्वादावरणत्वाच्च । न हि तमो वस्तुद्वयापेक्षमवभासते । अज्ञानमिति च द्वयापेक्षज्ञानपर्युदासेनाभिधानात्**

---

ता. अनङ्गीकारात् इति भावः। कुतः इति हेत्वपेक्षायां एकस्मिन्नेव कार्यद्वयसंपादकत्वानुभवात् इत्याह—**किं तु** इति । अनुमाने साध्यवैकल्यमाशङ्क्य परिहरति—**न हि** इति । अनुभवविरुद्धतया कालात्ययापदेशो मा भूत् इति अनुभवस्य अन्यथासिद्धिमाह—**अज्ञानं इति च** इति। प्रतियोगिसापेक्षतया तत्र

---

भा. श्रितं न भवति काचादिवदिति नियमात् ?। तत्र न तावदाद्यो नियमोऽस्ति, अहमिति वृत्त्यात्मेच्छयोर्व्यभिचारादित्युक्त्वा[दिति मत्वा] द्वितीयं शङ्कते-**किन्त्विति** । नायमप्यस्ति नियम इत्याह—**एकस्मिन्निति** । ततश्च क्रियासाम्यमस्य चायुक्तमित्याह—**अक्रियात्मत्वादिति** । अज्ञानं स्वविषयाश्रयं करणानाश्रयप्रत्यक्षत्वे सति आवारकत्वात् अन्धकारनीहारादिवत् इति चैतन्यमात्रविषयाश्रयमेवाज्ञानम्, न च कुड्यादौ व्यभिचारः, तस्य ज्ञानसामग्रीविघटकत्वेन अप्रतिबन्धकत्वादित्याह—**आवरणत्वादिति**। न च 'अहमज्ञः' इति धर्मिग्राहकमानबाधः (हेतोरसिद्धिः) इति वाच्यम् । तत्कार्यस्याहङ्कारस्य तद्विशिष्टस्य वा तदाश्रयत्वायोगात्। अज्ञानाश्रयचैतन्यस्यैवाहङ्कारावच्छिन्नतया तथा अनुभवोपपत्तेश्च ॥

घटाद्यज्ञानं च घटादिचैतन्यनिष्ठमेव । अन्यथा तत्र विक्षेपायोगात् । न चैवं तस्य साक्ष्यसम्बन्धात् 'अहमिदं न जानामि' इति प्रतीतिः कथमिति वाच्यम् । अज्ञानविषयस्येव स्वात्मानं प्रत्यावारकाज्ञानस्यापि चैतन्यसम्बन्धित्वमात्रेणैव[तथा]प्रतीतिविषयत्वात् स्वनिवर्तकज्ञानाश्रयेण स्वरूपसम्बन्धविशेषस्य सत्त्वात् मय्यज्ञानमिति प्रतीत्युपपत्तेश्च । कार्यानुपपत्त्या वा तत्प्रतीतिः । 'न जानामि' इति प्रत्यक्षं तु मूलाज्ञानविषयम् । न च जीवस्य ब्रह्मण्यज्ञानमिति आश्रयविषयभेदधीविरोधः, तस्यान्यथासिद्धत्वादित्याह—**अज्ञानमिति** ।

द्वयसापेक्षवदवभासते। **यथा स्थितिरगमनशब्देनाभिधीयमाना कस्य किंविषयमगमनमिति कर्मसापेक्षवद्भाति तद्वत्। तमोवच्च स्वाश्रयावरणमज्ञानं स्वाश्रयैकत्वेन न विरुध्यते। नापि स्वाश्रयचित्प्रकाशेन विरुध्यते अज्ञानम्। स्वावभासकेन संवेदनेन चित्प्रकाशेनाज्ञानस्याविरुद्धत्वात्। साक्षिचैतन्यस्य चाज्ञानावभासकत्वात्। अतो न चिदाश्रयत्वविरोधः॥**

---

सापेक्षत्वप्रतीतिः इत्यर्थः। तस्मात् आश्रयविषयभेदो नाङ्गीकरणीय इत्युपसंहरति—**तमोवच्च** इति। द्वितीयविकल्पं दूषयति—**नापि** इति। तत्र हेतुमाह—**स्वावभासकेन** इति। स्वावभासकज्ञानेन अज्ञानस्य परैरपि विरोधानङ्गीकारात् इत्यर्थः। तत्र विषयविषयिभावादविरुद्धत्वम्, इह तु तन्नास्ति, इत्याशङ्क्य, इहापि विषयविषयिभावो विद्यते इत्याह—**साक्षी**ति॥ ता.

---

अहमाकारवृत्तेरज्ञानविरोधित्वाभावात् तादृशज्ञानाभिप्रायेण **द्वयसापेक्षज्ञाने**त्युक्तम्॥ भा.

ननु स्वविषयप्रकाशात्मनि चैतन्ये ब्रह्मणि कथमज्ञानम्? प्रकाशाप्रकाशयोर्विरोधात्। न हि सवितरि शार्वरं तमस्तिष्ठति। ननु सौरप्रकाशेऽपि दिवाभीतारोपितान्धकारदर्शनात् सत्यमिथ्यावस्तुनोर्न विरोध इति चेत्, न—सौरप्रकाशविरुद्धतत्समानसत्ताकान्धकारान्तरवच्चैतन्यसमसत्ताकाज्ञानान्तराभावेन आरोपिताज्ञानस्यैव चैतन्यविरुद्धत्वात्। अन्यथा ज्ञानाज्ञानयोर्विरोधप्रसिद्धिः न स्यात्, न स्याच्च तस्याज्ञानत्वम्। न च वृत्तिज्ञानमेवाज्ञानविरोधीति वाच्यम्। सिद्धान्ते वृत्तेर्जडत्वेन तस्याः अप्रकाशरूपाज्ञानाविरोधित्वात्। किञ्च, वृत्तिज्ञानमपि ज्ञानत्वाकारेणाज्ञानविरोधि चेत्, चैतन्यमपि तद्विरोधि स्यात्। रूपान्तरेण तस्याज्ञानविरोधित्वे अज्ञानमिति ज्ञानत्वाकारेण तस्य तद्विरोधित्वानुभवो न स्यात्, रूपान्तरेण निवर्त्यस्याज्ञानस्य रागनिवर्त्यद्वेषस्येव मिथ्यात्वमन्तरेणानुपपत्त्यभावाच्च, इत्याशङ्क्याह—**नापि स्वाश्रयेति**॥

यद्यपि अज्ञानस्य चैतन्यविरोधित्वमनुभूयते, तथापि तत्तदाकारापरोक्षवृत्त्यभिव्यक्तमेव चैतन्यं चैतन्यात्मना अज्ञानस्य निवर्तकम्। अपरोक्षवृत्तेरेव

**किञ्च, जन्यज्ञानेनात्मन्यवस्थात्रये[ऽपि] अवभासमाने एव स्वपर-
विषयाज्ञानाश्रयत्वं सर्वैरेवोपगन्तव्यमिति नावभासमाने अज्ञानाश्रयत्व-**

---

ता. किं अज्ञानं प्रतिभासमानेन विरुध्यते इत्युच्यते ? किं वा प्रकाश-
मात्रेण ? उत स्वप्रकाशेन ? इति विकल्प्य दूषयति—**किञ्च** इति। अशेष-
विशेषैः आत्मनो यथावदवगमे तदैव मुक्तिप्रसङ्गात् अवभासमानेऽप्यात्मनि
अज्ञानमभ्युपगन्तव्यं इत्यर्थः। यद्यपि सुषुप्तौ जन्यज्ञानाभावः, तथापि उत्थितस्य
'न किञ्चिदवेदिषं' 'सुखमहमस्वाप्सं' इति प्रत्यभिज्ञाभिप्रायेण 'जन्यज्ञानेन
अवभासमाने' इत्युक्तम्। जन्यविशेषणं च अज्ञानविरोधिरूपसद्भावेऽपि

---

भा. तन्निवृत्तिप्रतिबन्धकावरणविरोधित्वात्। अज्ञानं हि अपरोक्षवृत्त्यनुदयमेव
चैतन्यमावृणोति। नियमेन तथैवानुभवात्। सत्यपि अज्ञाने प्रतिबिम्बभ्रमहेतौ
तदावरणादर्शनात्। अतः ज्ञानाभावकालीनावरणस्य ज्ञानेनैव निवृत्तौ अप्रति-
बद्धचैतन्यमज्ञानं निवर्तयति। न चैवंकल्पने प्रमाणाभावः। अविद्यानिवृत्ताव-
परोक्षवृत्त्यन्वयव्यतिरेकयोः 'न जानामी'ति तस्य चैतन्यसामान्यविरोधानुभवस्य
च मानत्वात्। तस्मात् स्वप्रकाशस्यापि चैतन्यस्यापरोक्षवृत्तिविरहदशायामज्ञान-
साधकत्वात्तदविरुद्धत्वाच्च तदाश्रयत्वमविरुद्धमिति भावः॥

किञ्चात्र सवितृदृष्टान्तेन ज्ञानस्य प्रकाशत्वादेवाज्ञानाश्रयत्वं निराकर्तुं न
शक्यते। भिन्नविषयज्ञानाज्ञानयोरेकाश्रयत्वस्य सम्भवात्। तद्वदाश्रयाश्रयि-
भावस्याप्यविरोधात्। तथाच यो यद्विषयप्रकाशवान् स तदज्ञानाश्रयो न भवति
इत्युच्यते कल्पितभेदेन प्रकाशरूपात्मनोऽपि प्रकाशवत्त्वसम्भवात्? किं वा
तद्विषयप्रकाशः? उत स्वविषयप्रकाशतया स्वप्रकाश एव?। नाद्य इत्याह—
**किञ्च जन्येति**। सविकल्पकज्ञानमप्यज्ञानाविरोधि, किमु वक्तव्यं निर्विकल्पक-
स्वरूपज्ञानं तदविरोधीत्यत्र इत्यभिप्रेत्य **जन्यज्ञानेत्युक्तम्**। सुषुप्तावपि पराम-
र्शानुरोधेनात्मज्ञानं स्वीकर्तव्यमिति **अवस्थात्रयेऽपीत्युक्तम्**। अवभासमाने
इत्युपलक्षणम्। घटादिविषयस्य प्रमेयमित्यादिज्ञानस्याश्रये चेत्यर्थः॥

धाराकालीनात्मनो हि अग्रिमानुसन्धानदर्शनात्तत्कालेऽप्यात्मा प्रकाशत
इति आत्मा सर्वदा प्रकाशत एव। तथापि अस्त्येव तस्मिन्नज्ञानम्। अन्यथा

**विरोधः। न च प्रकाशमात्रमज्ञानविरोधि। स्वज्ञाने अभावात्। न च स्वयंप्रकाशमाने अज्ञानसंसर्गविरोधः क्वचित् दृष्टः। विषयाणां परप्रकाश्यानामेव तत्संसर्गविरोधात्। संवेदनस्यात्मस्वरूपत्वादेव तदाश्रया-**

---

ता. अज्ञानस्य सद्भावप्रदर्शनार्थम्। द्वितीयं दूषयति—**न च** इति। **स्वज्ञाने** इति। अज्ञानबोधकज्ञाने इत्यर्थः। तृतीयं दूषयति—**न च स्वयं** इति। दृष्टान्ताभावात् इत्यर्थः। न तावत् विषयाणां दृष्टान्तत्वं इत्याह—**विषयाणां** इति। नापि संवेदनं दृष्टान्तः, तस्य आत्मतया पक्षत्वात् इत्याह—**संवेदनस्य** इति।

---

भा. शरीराद्यभेदभ्रमानुपपत्तेः। आत्मन्यज्ञानाभावे तस्मिन् शरीरभेदाज्ञानासम्भवाच्च। घटादौ प्रमेयमित्यादिज्ञानेन[घटादौ]घटत्वादिवैशिष्ट्यप्रतीतावप्यात्मनि तदज्ञानं दृश्यते। अन्यथा तत्संशयाद्ययोगात्। न च अन्वयव्यतिरेकाभ्यां तत्प्रकारकज्ञानमेवाज्ञानविरोधीति वाच्यम्। अनभ्यासदशायां जलादिज्ञाने सत्यपि तत्संशयानुरोधेन तत्र अज्ञानस्य स्वीकर्तव्यत्वात्। सत्तानिश्चयरूपं ज्ञानमज्ञानविरोधीति चेत्, तर्हि ज्ञानमात्रस्य सत्तानिश्चयरूपत्वाभावेन स्वरूपज्ञानमपि पूर्वं सत्तानिश्चयरूपं न भवतीति न तस्याज्ञानाश्रयत्वं विरुद्धमिति भावः। जन्यज्ञानेन भासमानेऽपि यथा अन्यविषयाज्ञानाश्रयत्वं तथा स्वविषयाज्ञानाश्रयत्वमिति वा अर्थः। अत एव न द्वितीय इत्याह—**न चेत्यादिना**। तृतीये दोषान्तरमाह—**नच स्वयमित्यादिना**॥

ननु एवं चिन्मात्राश्रयादज्ञानात् जीवे संसारो न स्यात्, विशिष्टचैतन्यात्मनो जीवस्य ततोऽन्यत्वात्। अज्ञानस्य च स्वाश्रय एव स्वकार्यजनकत्वात्। नचोपाधेः प्रतिबिम्बपक्षपातित्वात् जीव एव संसार इति वाच्यम्। उपाधिः प्रतिबिम्बपक्षपातीति[सामान्य]व्याप्तेः अज्ञानं स्वाश्रय एव कार्यं जनयतीति विशेषव्याप्तेर्बलवत्त्वात्। उपाधेः प्रतिबिम्बपक्षपातित्वमपि किं तत्र स्वधर्मप्रतिभासकत्वम्? स्वकार्यप्रतिभासकत्वं वा? स्वकार्यधर्मप्रतिभासकत्वं वा? प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा? नाद्यः, मालिन्यादेर्दर्पणनिष्ठत्ववदविद्यास्वरूपस्याविद्यावच्छिन्नत्वस्य कर्तृत्वादेर्बन्धस्य चाज्ञानाधर्मत्वात्। अविद्यास्तमयो मोक्ष इति मते अविद्याया बन्धत्वमेव, न तु बद्धत्वम्। न द्वितीयः,

**ज्ञानोपगमात् न तदुदाहरणम्। अथ ब्रह्मणः सर्वज्ञत्वविरोधादैक्ये सति नाज्ञानमुपपद्यते इति; न—जीवाश्रयत्वोपगमात्। ननु ऐक्यमुक्तम्।**

ता. अन्तिमं कल्पमुपादत्ते — **अथ** इति। जीवस्य अज्ञानाश्रयत्वे तदैक्यात् ब्रह्मणोऽपि अज्ञानाश्रयतया सर्वज्ञत्वहानिः इत्यर्थः। गूढाभिसन्धिः उत्तरमाह —**न-जीवेति**। तयोरभेदमुक्तं स्मारयति पूर्ववादी—**ननु** इति।

भा. विच्छेदादेरुपाधिकार्यस्य बिम्बे प्रतिबिम्बे च दर्शनात्। न तृतीयचतुर्थौ, दर्पणादावदृष्टेः॥

अस्तु तर्हि चैतन्यमात्रे संसारः, नित्यमुक्तत्वश्रुतिस्तु बिंबस्थानीय-ब्रह्मविषयेति चेत्, न—अविद्याप्रतिबिम्बचैतन्ये जीवेऽपि कल्पितसंसाराभाव-प्रसङ्गेन जीवेश्वरयोर्बद्धनित्यमुक्तत्वव्यवस्थाश्रुतिविरोधापातात्। ननु अविद्या-श्रय एव चैतन्यं बिम्बप्रतिबिम्बभावेन इदानीं द्विधा विभक्तमित्यविद्याश्रय एव बन्ध(द्ध)इति चेत् तर्हि ब्रह्मणोऽप्यविद्याश्रयत्वेन संसारप्रसङ्गः। नहि मुख-मात्रसम्बन्धि दर्पणादि बिम्बसम्बन्धि न भवति। ब्रह्मणोऽज्ञानानाश्रयत्वे जगदुपादानत्वानुपपत्तेश्च। तस्मात् ब्रह्मापि संसारि स्यादिति तस्य सर्वज्ञत्व-नित्यमुक्तत्वादिश्रुतिः पीड्येतेति शङ्कते—**अथेति**॥

गूढाभिसन्धिः परिहरति—**न-जीवेति**। अज्ञानसम्बन्धिचैतन्यस्यैव दर्पणादिसम्बन्धिमुखवद्विभक्तत्वात् जीवाधिकरणमपि तत्कार्यं तत्समानाश्रय-मेवेति न विशेषव्याप्तिविरोधः। नचैवं सर्वज्ञेश्वरेऽपि तत्प्रसङ्गः, सर्वज्ञत्वादेव। अविद्या हि यं प्रति वाक्यार्थब्रह्मस्वरूपमावृणोति तत्रैव स्वाश्रये कार्यं भ्रमं जन-यति। सर्वेश्वरं प्रति तु अनावारकमिति न तत्र तत्कार्यभ्रमोत्पादः॥

अथवा, दर्पणविशेषे मुखादिप्रतिबिम्बे स्वोचितस्थौल्यातिरिक्तं स्थौल्य-मनुभूयते। न तत् दर्पणधर्मः। तस्य तदपेक्षया सूक्ष्मत्वात्। तत्समानपरिमाण-दर्पणान्तरप्रतिबिम्बे तददर्शनाच्च। तथाचोपाधावविद्यमान उपाधिदोषप्रयुक्तः परिमाणविशेषो नियमेन प्रतिबिम्बमुख एव दृश्यते इत्येतदेव उपाधेः प्रति-बिंबपक्षपातित्वं यत् भ्रम (धर्म)विशेषस्य प्रतिबिम्बनैयत्यम्। एवमज्ञानप्रयुक्ताव-रणस्वरूपाज्ञत्वादिकं जीव एव भवति। ततश्चाज्ञत्वप्रयुक्तकर्तृत्वादिकमपि जीव एव युज्यते॥

**सत्यम्, सत्यप्यैक्ये प्रतिबिम्बात्मन्यध्यस्तश्यामत्वादेः बिम्बे अदर्शनात्। अवदाततायाश्चाविरोधदर्शनात्। एव सर्वज्ञत्वाविद्याश्रयत्वयोः सत्यप्यैक्ये अविरोधात्। तस्मात् न ऐक्यमविद्याश्रयत्वेन विरुध्यते, किंत्वविद्यामेवोपपादयतीत्याह**—बाढमत एवार्थादिति। **ऐक्ये स्वयंप्रकाशत्वे** 73-8
**सर्वज्ञत्वे च सत्येवानवभासदर्शनादाच्छादिका अविद्या कल्प्यते। अन्यथा भेदजाड्यकिंचिज्ज्ञत्वे ग्रहणाभावमात्रमेव स्यात्। ततश्च तमोऽनृतनीहाराज्ञानावृतत्वादिशब्दा अनवभासाध्यासनिमित्तभावरूपाज्ञानप्रतिपादका बाध्येरन्निति ॥**

---

सिद्धान्ती स्वाभिप्रायं उद्घाटयति—**सत्यं** इति। एकत्वेऽपि उपाधिभेदात् श्यामत्वावदातत्वयोः व्यवस्थितत्ववत् सर्वज्ञत्वाज्ञत्वे न विरुध्येते इत्यर्थः। 'अत एव' इत्यत्र अतश्शब्देनापेक्षितयच्छब्दस्य अर्थं दर्शयति—**ऐक्ये** इति। कया अनुपपत्त्या इति; अत आह—**अन्यथा** इति। ऐक्यविरोधिनो भेदस्य ता.

---

अथवा दर्पणाद्युपाधेः स्वाभिमुख्यमालिन्यादेः प्रतिबिम्ब एवाधायकत्वनियमादुपाधेः प्रतिबिम्ब एव स्वधर्मासञ्जकत्वं प्रतिबिम्बपक्षपातित्वगिरोच्यते। तत्र च जीवस्य स्वरूपावारकाज्ञानोपाधिप्रयुक्तधर्मो भेद एव। कर्तृत्वादिकं तु बुद्ध्याद्युपाधिप्रयुक्तम्। नचोपाधिधर्मस्य भेदस्य बिम्बेऽपि मुखे प्रतीतेर्नायं नियम इति वाच्यम्। दर्पणे हि प्राक् ग्रीवास्थमुखमात्रप्रतियोगिको भेदो वर्तते। न तु तं भेदं बिम्बे आसञ्जयति। बिम्बमुखं ग्रीवास्थमुखं न भवतीत्यप्रतीतेः। यस्तु स्वस्मिन् प्रतिबिम्बमुखप्रतियोगिको भेदोऽनुभूयते स दर्पणधर्मः सन् तेन बिम्बे नासज्यते। दर्पणबिम्बयोर्युगपदेव तद्भेदानुभवात्। प्रतिबिम्बे तु स्वनिष्ठमेव ग्रीवास्थमुखभेदमासञ्जयति। एवमज्ञानमपि नित्यमुक्तवाक्यार्थब्रह्मभेदं स्वनिष्ठं सर्वज्ञे नासञ्जयति किन्तु जीव एवेति नैतन्नियमबाधः। न च बुद्धेर्जपाकुसुमस्थानीयत्वान्न प्रतिबिम्बोपाधित्वमिति नोक्तनियमेन तद्धर्माणां जीवनैयत्यमिति वाच्यम्। 'स एष इह प्रविष्ट आनखाग्रेभ्यः' 'रूपं रूप'मित्यादिश्रुत्या तस्याः प्रतिबिम्बोपाधित्वा (ङ्गीकारा) वगमात्। अतो जीव एव कर्तृत्वादिभ्रम उपपद्यत इत्याह—**सत्यमित्यादिना ॥** भा.

**नन्वेकद्रव्यत्वे सति जीवब्रह्मविभागः किंनिबन्धनः, यतः सर्वज्ञत्वाविद्याश्रयत्वे व्यवस्थाप्येते इति ? । अन्तःकरणावच्छेदात् कश्चिद्भेदं वक्ति । अन्यस्त्वतिरेकात् । अपरस्तु स्वभावादेवांशांशिभावात् । तत्**
74-3 **सर्वं व्यावर्तयति**—अतोऽनादिसिद्धाविद्यावच्छिन्नेति । **आत्मावरणमात्माज्ञानमेव जीवब्रह्मविभागाद्यध्यासोपादानं यतः अतो जीवावच्छेदनिमित्तमज्ञानमिति । अवच्छेदस्यापि प्रातिभासिकाध्यासस्य तदुपादानत्वात् । सत्यतो निरवयवस्य द्वैधीभावायोगात् कर्तृत्वभोक्तृत्वदोषसंयोगानां बीजाङ्कुरवदनादिप्रवाहस्य दर्शितत्वात् तदुपादानमप्यज्ञानमनादीत्याह**
74-3 —अनादिसिद्धेति। **अनादिजीवविभागाध्यासप्रवाहस्यानाद्यविद्यैव कारणं**
74-4 **नान्तःकरणादीत्याह**—अविद्यावच्छिन्नेति ॥

---

ता. स्वयंप्रकाशत्वविरोधिनो जाड्यस्य सर्वज्ञत्वविरोधिनः किञ्चिज्ज्ञत्वस्य च सद्भावे परसंवेदनस्येव ग्रहणानुदयमात्रेण अनवभासोपपत्तेः भावरूपं अध्यासोपादानं अनादि नाभ्युपेयं स्यात्, ततश्च तत्प्रतिपादकश्रुतिकोपः स्यात् इत्यर्थः ॥

इदानीं स्वपक्षसमर्थनाय पूर्वपक्षं दर्शयितुं आक्षिपति—**ननु** इति । अप्रस्तुतजिज्ञासया किं कार्यम् ? इति शङ्कां व्यावर्तयति—**यतः** इति । इदानीं मतान्तराणि दर्शयति—**अन्तःकरणे**ति । अध्यासस्यैव उपादानं अज्ञानं न तु अवच्छेदस्य इत्याशङ्क्य ; सोऽपि अध्यास एव इत्याह—**अवच्छेदस्य** इति । अवच्छेदः पारमार्थिक एव किं न स्यात ? इति; अत आह—**सत्यतः** इति । निरवयवस्य परमार्थतो दारुवत् द्वैधीभावायोगात् अविद्यैव तत्कारणं अङ्गीकरणीयं इत्यर्थः । तथापि तस्यास्सादित्वं किं न स्यात् ? इति ; अत आह—**कर्तृत्वे**ति । न केवलं कर्तृत्वाध्यासप्रवाहस्यैव अज्ञानं उपादानतया अनादि, किन्तु जीवविभागाध्यासप्रवाहस्यापि इत्याह—**अनादी**ति ।

---

भा. **जीवब्रह्मविभागाद्यध्यासोपादानमिति** । तत्सत्ताप्रयोजकं तदुपादानम् । न तूपादानकारणमेव । अनादित्वाद्विभागस्य । अनादिविभागस्यापि ज्ञाननिवर्त्यस्याज्ञानप्रयोज्यत्व सम्भवत्येवेत्यर्थः । अज्ञानान्यस्य तद्योग्यतामेव दर्शयति—**अवच्छेदस्येति । प्रातिभासिकाध्यासस्येति** । दृश्यस्येत्यर्थः ।

**नचान्तःकरणमवच्छेदकम् । अर्थतो विदारणाभावात् अवच्छेदस्य विभ्रममात्रत्वात् । अज्ञानस्यैव तदुपादानत्वात् । अन्तःकरणस्य च सम्यग्ज्ञाननिरस्यतया अविद्याध्यासत्वात् स्वकारणावच्छिन्नस्यैवावच्छेदकत्वसंभवात् । सत्यत्वेऽपि सादेरनाद्यवच्छेदोपाधित्वाभावात् । सुषुप्तादौ चान्तःकरणाभावादनवच्छेदप्रसङ्गात् । तदापि सूक्ष्मावस्थमन्तःकरणमवच्छेदकमिति चेत्—न तावन्निरवयवत्वापत्तिः सूक्ष्मता । सावयवस्यावयवाभावे स्वरूपनाशात् । अथावयवापचयमात्रं सूक्ष्मता । न—अवस्थितावयविनः अकार्यत्वप्रसङ्गात् । कारणात्मना स्थितिरिति चेत्, किं कारणमेव स्थितमित्यर्थः ? कार्यमपीति वा ? । पूर्वस्मिन्नन्तः-**

---

यत् पुनः आशङ्कितं 'अन्तःकरणमवच्छेदकमस्तु' इति ; तत्राह—**न च** इति । विदारणाभावे कथं तर्हि अवच्छेदप्रतिभासः ? इति; अत आह—**अवच्छेदस्य** इति। विभ्रमस्यापि अन्तःकरणमुपादानमस्तु इति ; अत आह—**अज्ञानस्यैव** इति। आकाशविभागस्य विभ्रमतया अनाद्यविद्याकार्यत्वेऽपि यथा सत्यघटाद्युपाधिनिबन्धनत्वम्, एवं जीवविभागस्य अन्तःकरणाधीनत्वं किं न स्यात् इति; अत आह—**अन्तःकरणस्य च** इति । 'भिद्यते हृदयग्रन्थिः' 'इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति' इत्यादिश्रुतिषु सम्यग्ज्ञाननिवर्त्यत्वश्रवणात् अविद्यात्मकत्वप्रतीतेः अ[अविद्या]वच्छिन्नस्यैव अन्तःकरणावच्छेदसंभव इत्यर्थः। सत्यब्रह्मकार्यतया अन्तःकरणस्य सत्यत्वमेव किं न स्यात् ? इति; अत आह—**सत्यत्वेऽपि** इति । युक्त्यन्तरमाह—**सुषुप्तादौ** इति। किं निरवयवत्वं सूक्ष्मत्वम् ? अवयवापचयमात्रं वा ? किं वा कारणात्मना अवस्थानं ? इति विकल्प्य क्रमेण दूषयति—**न तावत्** इति। का तर्हि ता.

---

तथा च दृश्यत्वेनाभेदाविरोधित्वेन च भेदस्य मिथ्यात्वादावारकत्वेनावश्याभ्युपेयाज्ञानमेव तत्सम्पादनयोग्यमिति तदेव अवच्छेद(विभाज)कमिति भावः ॥ भा.

सत्यत्वे अन्तःकरणस्य सूक्ष्मता न सम्भवतीत्याह—**न तावदिति**। **अकार्यत्वप्रसङ्गात्**। विनष्टावयवाकार्यत्वप्रसङ्गात् । तथा च तदपचयो नास्य

करणाभावात् । उत्तरस्मिन् स्थित्यवस्थातो न विशेषः । तस्मात् कार्यसंस्कारविशिष्टशक्तिमत्कारणावस्थानमेव सूक्ष्मतापत्तिः । अतो नान्तःकरणमवच्छेदकमस्ति । तस्मात् क्लृप्ताविद्यासामर्थ्यादेव जीवब्रह्मविभागसिद्धौ नातिरेककल्पनावकाशः । जीवस्य ब्रह्मण्यविद्या इत्यविद्या पूर्वमेव विभागमपेक्षते इति चेत्, न—कस्य कस्मादतिरेक इत्यतिरेकस्यापि विभागपुरस्सरत्वप्रतीतेः । यथा भेदाधीनोपि धर्मिप्रतियोगिभावो भेदेनोपरज्यते कस्य कस्माद्भेदः इति, एवं अतिरेकाधीनोऽपि जीवब्रह्मभावस्तस्मिन्नुपरज्यते जीवात् ब्रह्मणोऽतिरेकः [इति] इति चेदविद्यायामपि तुल्यमेतत् । निरंशत्वात् न अंशांशिभावेन भेदः संभवति ।

---

ता. सूक्ष्मता ? इति; तत्राह—**तस्मात्** इति । अतिरेकात् भेद इति पक्षं निराचष्टे—**क्लृप्तेति** । लोके प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनः कारणत्वेन प्रसिद्धाविद्ययैव जीवब्रह्मविभागोपपत्तौ न कारणान्तरं अप्रसिद्धं कल्पनीयं इत्यर्थः । **अमृतानन्दीयमतं** आशङ्कते—**जीवस्य** इति । **पूर्वं**—स्वसंबन्धात् प्रागेव इत्यर्थः । स्वमते परिहारं आशङ्कते पूर्ववादी—**यथा** इति । अंशांशिभावेन भेद इति मतं निराकरोति—**निरंशत्वात्** इति ॥

---

भा. सूक्ष्मतेति भावः । **अतो नान्तःकरणमवच्छेदकमिति** । यद्यपि सिद्धान्ते अन्तःकरणस्य मुक्तिपर्यन्तं नात्यन्तिकनाश इति सूक्ष्मरूपता दुर्निरूपाप्यवश्यं वाच्या । अन्यथा असत उत्पत्त्यनुपपत्तेः । 'तदापीतेस्संसारव्यपदेशात्' इत्यधिकरणविरोधप्रसङ्गाच्च । तथापि मिथ्याभूतस्य तस्य उपादानमज्ञानमेवावच्छेदकमिति न तस्यापि भेदकत्वं कल्पनीयमिति पूर्वोक्तैव युक्तिरिति भावः । अभिन्नेऽपि सत्यभेदप्रयोजकः कश्चित् पदार्थोऽतिरेकशब्दार्थः ॥

**निरंशत्वादिति** । न तावदारम्भकावयवत्वमंशत्वं, ब्रह्मणोऽकार्यतया जीवानां तदारम्भकावयवत्वाभावात् । नाप्येकदेशत्वं, घटाद्याकाशसदृशस्य तस्योपाध्यधीनतया स्वाभाविकत्वाभावात् । नचान्यः कश्चिदंशोऽस्तीति भावः । ननु अज्ञानमप्यस्वच्छं न जीवप्रतिबिम्बोपाधिरिति चेत्, न तावत् तस्य कुड्यादिवदस्वच्छत्वं, तत्र प्रमाणाभावात् । नापि जडात्मत्वं तत्, लोहादे-

**तस्मादविद्यैव भेदाध्यासनिमित्तमिति ॥**

**ननु अविद्या किंसंबन्धिनी भेदनिमित्तम्?। ननु दर्पणादिद्रव्यं वा किंसंबन्धि बिम्बभेदनिमित्तम्?। मुखमात्रसंबन्धीति चेत्—इहापि चित्स्वरूपमात्रसंबन्ध्यज्ञानं तत्र जीवब्रह्मव्यवहारभेदं प्रवर्तयति। कथं पुनः स्वरूपमात्रसंबन्धिनोऽज्ञानस्य ब्रह्मस्वरूपं परिहृत्य जीवविभागैकपक्षपातिता?। [ननु]दर्पणघटादेर्मुखाकाशभेदे हेतुतया मुखादिसंसर्गिणोपि बिम्बाकाशौ परिहृत्य प्रतिबिम्बघटाकाशादिपक्षपातित्ववदिति वदामः ॥**

---

ता. ननु अविद्यासंबन्धव्यतिरेकेण जीवब्रह्मविभागस्य असम्भवात् जीवब्रह्मव्यतिरिक्तस्य च सर्वस्य अविद्यात्मकत्वेन अविद्यासम्बन्धित्वायोगात् अविद्या स्वतन्त्रैव प्राप्ता इति चोदयति—**ननु** इति। प्रतिबन्दिन्यायेन परिहरति—**ननु दर्पणादीति**। सम्यगुत्तरं पूर्ववादिमुखेन आह—**मुखमात्रेति**। सिद्धान्ती आह—**इहापि** इति। साधारणरूपसम्बन्धित्वे कथमेकपक्षपात इति चोदयति—**कथं** इति। लोकेऽपि उपाधीनां एवंस्वभावदर्शनात् नैष दोष इति परिहरति—**ननु दर्पणेति** ॥

---

भा. [जलादे]स्तदभावप्रसङ्गात्। तस्मात् सत्त्वगुणं त्वज्ञानमेव स्वच्छं जीवप्रतिबिम्बोपाधिरित्याह—**तस्मादविद्येति** ॥

पूर्वमाश्रयविषययोर्भेदस्तदेकत्वप्रत्युक्तं दूषणं च परिहृतम्। सम्प्रति चैतन्याश्रयत्वानुपपत्तिं शङ्कते—**नन्विति**। जीवब्रह्मविभागस्याविद्याधीनत्वात् तस्यास्तद्विभक्तचैतन्याश्रयत्वं तावदनुपपन्नम्। किञ्च, जीवचैतन्यस्य ब्रह्मस्वरूपविषयाज्ञानाश्रयत्वे तदाश्रयविषयैकत्वानुपपत्तिः। ब्रह्मण एव तदाश्रयत्वे जीवस्याज्ञत्वाभावो ब्रह्मणोऽज्ञत्वादिकं च स्यात्। न चेदानीं जीवेश्वरविभागानाक्रान्तं किञ्चिच्चैतन्यमस्ति इति नाज्ञानस्यात्मसम्बन्धित्वमिति भावः ॥

सत्यं जीवेश्वरविभागानाक्रान्तं चैतन्यमिदानीं नास्त्येव, तथाप्यज्ञानं भेदमनपेक्ष्यैव चैतन्येन सम्बध्यते। न हि दैवगत्या तत्र स्थितिमात्रेण भेदस्तदाश्रयत्वादौ प्रयोजकः, अतिप्रसङ्गात्। अतश्चैतन्यमात्राश्रयत्वमज्ञानस्येति सदृष्टान्तमाह—**ननु दर्पणेति** ॥

ननु किमाश्रयेयमविद्या ?। न तावदन्तःकरणविशिष्टस्वरूपाश्रया। प्रमाणाभावात्। ननु अहमज्ञ इति प्रतिभास एव विशिष्टाश्रयत्वे प्रमाणम्। न — अहमनुभवामीत्यनुभवस्यापि चैतन्यप्रकाशस्य विशिष्टाश्रयत्वप्रसङ्गात्। ननु यथा अयो दहतीति दग्धृत्वायसोरेकाग्निसंबन्धात् परस्परसंबन्धावभासः तथा अनुभवान्तःकरणयोरेकात्मसंबन्धात् तथावभासः नान्तःकरणस्यानुभवाश्रयत्वादिति चेत्—एवमज्ञानान्तःकरणयोरेकात्मसंबन्धादहमज्ञ इत्यवभासः नान्तःकरणस्याज्ञानसंबन्धादिति तुल्यम्। प्रतीतेरन्यथासिद्धौ परस्परसंबन्धकल्पनायोगात् आत्मनि अविद्यासंबन्धस्य सुषुप्तेऽपि संप्रतिपन्नत्वाच्च। अथ स्वरूपमात्राश्रयत्वानुपपत्तेः विशिष्टाश्रयत्वं कल्प्यते इति चेत्। न— विशिष्टेऽपि स्वरूपसंबन्धस्य विद्यमानत्वात्। जडस्य चाज्ञानाश्रयत्वे

---

ता. ननु दर्पणादिद्रव्यं हस्तादौ स्थित्वा मुखमात्रसम्बन्धित्वेन बिम्बप्रतिबिम्बविभागं कुर्वद्दृष्टम्, तद्वत् इहापि अविद्या कस्मिन् आश्रये स्थित्वा चिन्मात्रसम्बन्धितया [जीव] ब्रह्मविभागहेतुः ? इति पृच्छति—ननु किमाश्रया इति। शङ्कितपक्षं निराचष्टे—न तावत् इति। प्रतिबन्दीन्यायेन परिहरति—न—अहं इति। ननु अनुभवोऽपि अन्तःकरणाश्रय इति ; अत आह—चैतन्येति। अनुभवस्य स्वयंप्रकाशतया जडान्तःकरणाश्रयत्वं अनुपपन्नं इत्यर्थः। पूर्ववादी स्वमते परिहारमाह—ननु यथा इति। इदमेव अस्मन्मतेऽपि समाधानं इति सिद्धान्ती आह—एवं अज्ञानेति। अन्तःकरणविशिष्टाश्रयत्वादेव 'अहमज्ञः' इति प्रतीतिः किं नाभ्युपेया ? इति ; अत आह—प्रतीतेः इति। अन्तःकरणाभावेऽपि अविद्यायाः विद्यमानत्वात् नान्तःकरणविशिष्टाश्रयत्वं इत्याह—आत्मनि इति। अज्ञानस्यान्तःकरणविशिष्टाश्रयत्वे अर्थापत्तिः प्रमाणमिति शङ्कते—अथ इति। असङ्गत्वात् स्वयंप्रकाशत्वात् आत्मनोऽज्ञानसम्बन्धित्वमनुपपन्नमित्यर्थः। तर्हि विशिष्टाश्रयत्वेऽपि तुल्यैवानुपपत्तिरित्याह—न—विशिष्टे

---

भा. चिन्मात्राश्रयत्वे परिशेषानुमानमभिप्रेत्य आश्रयान्तरं दूषयति—ननु किमित्यादिना। विशिष्टस्य स्वरूपानतिरेकपक्षे दूषणमभिधाय अतिरेकपक्षे आह—जडस्येति ॥

भ्रान्तिसम्यग्ज्ञानयोरपि तदाश्रयत्वप्रसङ्गात् । ननु स्वरूपेऽपि ब्रह्मण्यनुपपत्तिस्तुल्या । सत्यम्, अनुपपन्नद्वयाश्रयत्वकल्पनात् वरं संप्रतिपन्नस्वरूपाश्रयत्वोपादानम् । मोक्षावस्थासंबन्धिन एव बन्धाश्रयत्वात् ॥

अत्र कश्चित् अन्तःकरणस्यैवाज्ञानमिति जल्पति । स वक्तव्यः— किं आत्मा सर्वज्ञः किंचिज्ज्ञो वेति ?। किंचिज्ज्ञत्वे कदाचित् किंचिन्न जानातीति विषयानवबोधः त्वयैवात्मनो दर्शितः। अथ अग्रहणमिथ्याज्ञानयोरात्माश्रयत्वेऽपि भावरूपाज्ञानमन्तःकरणाश्रयमिति । किं तत् ?। ज्ञानादन्यच्चेत् अज्ञानं, काचकामलादीनामप्यज्ञानत्वान्न विवादः । अथ ज्ञानविरोधीति—न — भिन्नाश्रययोः ज्ञानाज्ञानयोरेकविषययोरपि

ता. इति । युक्त्यन्तरमाह—**जडस्य च** इति । सम्यग्ज्ञानाश्रयतया मोक्षाश्रयत्वमपि स्यादिति भावः । सिद्धान्तिमतेऽपि उक्तानुपपत्तिं स्मारयति—**ननु** इति । विशिष्टाश्रयत्वमभ्युपगच्छतापि स्वरूपाश्रयत्वस्याभ्युपेयत्वात् कल्पनालाघवाच्च स्वरूपाश्रयत्वमेवाभ्युपेयमिति परिहरति—**सत्यं** इति । 'यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः' इति नियममाश्रित्य पूर्वमवोचत् । इदानीं 'अज्ञानिनो भ्रमो भ्रान्तो बध्यते स च मुच्यते' इति नियममाश्रित्याह—**मोक्षावस्थेति** । भावरूपत्वेऽपि अज्ञानस्य किं ज्ञानादन्यत्वेन अज्ञानत्वम् ? उत तद्विरोधित्वेन ? इति विकल्प्य क्रमेण दूषयति—**किं तत्** इति । **न—भिन्नेति** । देवदत्तनिष्ठ-

भा. **भिन्नाश्रययोरिति** । नन्वेवं घटाज्ञानस्य घटावच्छिन्नचैतन्यनिष्ठस्य कथं देवदत्ताश्रयज्ञानान्निवृत्तिः, चैतन्यमात्राभेदस्यातिप्रसक्तत्वात् । ननु अपरोक्षज्ञानस्यैवाविद्यानिवर्तकत्वात् तत् समानाश्रयमेव । विषयचैतन्यस्याज्ञानाश्रयस्य वृत्तिमदन्तःकरणावच्छेदेन प्रमातृचैतन्याभिन्नत्वात् । तत्र क्षणमात्रं ज्ञानमज्ञानसमानाधिकरणं भवतीति चेत् । एवं सति देवदत्तज्ञानेन यज्ञदत्तस्य तत्काले भ्रमजनकशुक्त्याद्यज्ञाननिवृत्तिप्रसङ्गः । न च यदज्ञानं यं प्रति स्वविषयमावृणोति तज्ज्ञानेनैव तन्निवर्तत इति नातिप्रसङ्ग इति वाच्यम् । समानाश्रयत्वस्य वैफल्यप्रसङ्गात् इति चेत् —न—अज्ञानस्यात्माश्रयत्वाभावे जीवं प्रति आत्मस्वरूपावारकत्वासम्भवेन तदीयज्ञानेन निवर्त्यत्वासम्भवात् । किञ्च, घटाद्य-

**विरोधित्वादर्शनात्। करणाश्रयमज्ञानं कर्त्राश्रयज्ञानेन विरुध्यते इति चेत्—न—प्रमाणाभावात्। पुरुषान्तरसुषुप्तौ च तदीयेनान्तःकरणेन लीयमानेन करणभूतेन तन्निमित्तकर्मानुमानेऽपि तदीयान्तःकरणाज्ञान-**

---

ता. सम्यग्ज्ञानेन यज्ञदत्तभ्रमनिवृत्त्यदर्शनादित्यर्थः। भवतु तत्र कर्तृभेदादनिवृत्तिः इह पुनः नैवं इति शङ्कते—**करणेति**। एकाश्रयत्वात् तत्र ज्ञानाज्ञानयोः विरोधः किं वा तदीयकरणाश्रयत्वात् इत्यस्य अद्याप्यनिर्णीतत्वात् मैवं इति परिहरति—**प्रमाणेति**। विपर्ययेऽपि प्रमाणाभावस्तुल्यः इत्याशङ्क्य, आह—**पुरुषान्तरेति**। सुषुप्तौ अन्तःकरणस्य विलीनत्वेन तत्र निष्ठं अज्ञानं इति वक्तुमयुक्तत्वात् आत्मनिष्ठमेव तदङ्गीकरणीयमिति भावः। यद्यपि अस्मन्मते अन्तःकरणलयस्य न कर्मनिमित्तत्वं सुषुप्तावस्थायाः कर्मनिमित्तत्वानङ्गीकारात्, तथापि परमतानुसारेण व्यभिचारः प्रदर्शित इति द्रष्टव्यम्॥

---

भा. ज्ञानं स्वसमानाश्रयज्ञाननिवर्त्यं अज्ञानत्वात् मूलाज्ञानवत्, अन्यथा आश्रयभेदकल्पनागौरवादिति भावः॥

**केचित्तु** ब्रह्मविषयमज्ञानं समानाश्रयविषयमेव। चैतन्यातिरिक्तस्य तदाश्रयत्वायोगात्। घटाद्यज्ञानं तु 'अहमिदं न जानामि' इत्यनुभवानुसारेण बाधकाभावाद्भिन्नाश्रयविषयमेव। इदमाकारवृत्तिदशायां तदाश्रयचैतन्याभेदाद्विषयचैतन्ये तद्विवर्तस्याप्युपपत्तेरित्ययमाचार्याभिप्राय इति यथाश्रुत एवायं ग्रन्थः साधुरित्याहुः॥

उक्ताभिप्रायमज्ञात्वा अतिप्रसङ्गपरिहारमाशङ्कते—**करणेति**। स्वाश्रयावरणस्वभावत्वादज्ञानस्य करणस्थमप्यज्ञानं नात्मानमावृणुयादिति नात्मज्ञानात्तस्य निवृत्तिरित्याह—**प्रमाणाभावादिति**। अथ वा अविद्यानिवर्तकज्ञानस्य 'अहमिदानीं (न) जानामि' इत्यज्ञानसमानाश्रयत्वस्यैवानुभवान्नैवमित्याह—**प्रमाणेति**। अज्ञानस्य स्वाश्रयातिरिक्तावारकत्वेऽप्यतिप्रसङ्गमाह—**पुरुषान्तरेति**। सुषुप्तस्यान्तःकरणलयः कर्मनिमित्तः लयत्वात् सम्मतवदिति तन्निमित्तकर्मानुमानेऽपि सुषुप्तान्तःकरणनिष्ठकर्मगोचराज्ञाननिवृत्त्यदर्शनात्। अन्यथा उत्थितस्य निखिलाज्ञानगोचरपरामर्शो न स्यात्। [ननु परोक्षज्ञानस्य

निवृत्त्यदर्शनात्। भ्रान्तिनिमित्तदोषत्वात् काचादिवत् करणाश्रयमज्ञानमिति चेत्—न—चक्षुरादावपि प्रसङ्गात्। सादित्वात् तेषामनाद्यज्ञानाश्रयत्वानुपपत्तिरिति चेत्—अन्तःकरणेऽपि तुल्यम्। सत्कार्यवादाश्रयणात् न साद्यन्तःकरणमिति चेत्—चक्षुरादावपि तुल्यम्। अतो न तदनाद्यज्ञानाश्रयमिति। अनृतनीहारादिशब्दैश्च प्राप्तज्ञानानामग्रहणवतां चेतनानामेवावृतत्वाभिधानात् न अन्तःकरणाश्रयमज्ञानम्। किंतु चैतन्याश्रयमित्यलमतिविस्तरेण। तदेतदाह—अविद्यावच्छिन्नानन्तजीवेति ॥ 74 - 4

न्यायः प्रदर्शितः। श्रुतिस्तु 'अन्यत् युष्माकमन्तरं बभूव

ता. इदानीं अज्ञानस्यान्तःकरणाश्रयत्वे पूर्ववादी प्रमाणमाशङ्कते—भ्रान्तिनिमित्तेति। वातपित्तदोषेषु व्यभिचारनिवारणाय भ्रान्तिनिमित्तेति विशेषणम्। तावन्मात्राभिधाने च ईश्वरादौ व्यभिचारः स्यादिति; अत उक्तं—दोषत्वात् इति। अन्तःकरणाश्रयत्वानुमाने दृष्टान्ताभावः, करणाश्रयत्वा[नुमाने]भिधाने च आभाससमानयोगक्षेमता 'अज्ञानं नयनाद्याश्रयं भ्रान्तिनिमित्तत्वात् काचादिवत्' इत्यपि प्रयोगसंभवात् इत्याह—न—चक्षुरादौ इति। अन्तःकरणस्याचेतनत्वात् चेतनानामेव प्रा[वृति]प्तियोग्यानामनृतनीहारेण प्रावृतत्वाभिधानात् नान्तःकरणस्याज्ञानसंभव इत्याह—अनृतेति। अनुभवबलमवलम्ब्य सिद्धान्ती आह—

भा अज्ञाननिवर्तकत्वस्यानिष्टत्वात् कथमियमापत्तिरिति चेत्, न]—यज्ञदत्तापरोक्षघटज्ञानेन देवदत्तकरणगताज्ञाननिवृत्तिप्रसञ्जनस्येह विवक्षितत्वादिति भावः ॥

अथ यस्य यत् करणं तद्गतज्ञानेन तद्गतमेवाज्ञानं निवर्तत इत्यभिप्रेत्य अज्ञानस्य करणाश्रयत्वं (स्मार)साधयति—भ्रान्तीति। विमतं करणाश्रयं विषयप्रमातृदोषान्यदोषत्वात् काचादिवत्, तच्च करणं परिशेषादन्तःकरणमेवेति भावः। परिशेषासिद्धयोत्तरमाह—चक्षुरादाविति। वस्तुतोऽज्ञानस्य स्वाश्रयातिरिक्तगोचरत्वमेवानुपपन्नमित्याह—अनृतेति। तस्मादज्ञानं साश्रयं अध्यस्तत्वात् सम्मतवत् ततश्च स्वस्य स्वकार्यान्तःकरणाद्याश्रयत्वानुपपत्तेः परिशेषाच्चैतन्यमेव तदाश्रय इत्युपसंहरति—किन्तु चैतन्याश्रयमिति ॥

नीहारेण प्रावृताः' इति व्यवधायकमज्ञानं दर्शयति। 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥'
74-5 इति स्मृतिः। ननु ब्रह्मव्यतिरिक्तमनादिवस्तु नास्तीति; तत्राह—तथाच
75-3 स्मृतिरिति। अतः इत्युपसंहारः स्पष्टार्थः॥

स्वयंप्रकाशस्याविद्याश्रयत्वमुपपन्नमित्युक्तम्, इदानीं प्रकाश-
75-6 मानस्याविद्याविषयभावो नोपपद्यते इत्याक्षिपति—ननु प्रमाणान्तरविरोधे इति। ननु त्वदुक्तमर्थं न जानामीति प्रतिभासमानमेवाज्ञानस्य व्यावर्तक-मवभासते। ननु तत्र विशेषाकारस्यानवगतस्य व्यावर्तकता। न—अनव-

---

ता. **ननु त्वदुक्तमर्थं** इति। शङ्कते पूर्ववादी—**ननु तत्र** इति। सिद्धान्ती आह—**न अनवभासमानस्य** इति। स्वरूपेणाप्यनवभासमानस्य विशेषणतया प्रतीति-

---

भा. **विभेदजनके इति।** न च विगतो भेदो यस्मात् स विभेदः [अभेदः], अभेदभ्रमजनक इति यावत्। अभेदमिति छेदः। अभेदभ्रमजनके अज्ञाने नष्टे असन्तमभेदं कः करिष्यतीति स्मृत्यर्थ इति वाच्यम्। भ्रमशब्दाध्याहार-प्रसङ्गात्। अन्यथा जनकशब्दार्थानन्वयात्। न हि भेद इवाभेदोऽपि कश्चन तव मम वा अनिर्वचनीयोऽस्ति। 'तद्भावभावमापन्नस्तदाऽसौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥' इति पूर्वश्लोके भेदस्यैवाज्ञानकार्यत्व-प्रतिपादनाच्च। अत एवान्यदपि परोत्प्रेक्षणीयमर्थान्तरमस्यासाध्विति भावः॥

किमत्र ब्रह्मस्वरूपस्य स्वप्रकाशत्वेन स्वसत्तायां संशयगोचरत्वानर्हतया अज्ञानगोचरत्वं विरुद्धमित्युच्यते? किं वा ब्रह्मणः प्रकाशमानाज्ञानविषयसाक्षि-मात्रत्वात्?। नाद्यः, अपरोक्षवृत्तिविरहदशायां चैतन्यमात्रस्य प्रतिबद्धतया अज्ञानाविरोधित्वस्योक्तत्वात्। अनुभवसिद्धत्वाच्च ज्ञायमाने अज्ञानस्य नात्र युक्त्यपेक्षेत्याह—**ननु त्वदुक्तमिति।** अज्ञानं हि ज्ञानवद्विषयनिरूप्यस्वभाव-मिति तद्विषयोऽप्यज्ञानानुभवविषय इत्यर्थः॥

ननु ज्ञान इवाज्ञानेऽपि विषयविशेषांशो न निरूपकः, किन्तु अर्थादिसामान्यमेव, तच्च प्रतीयत इति सामान्यावच्छिन्नं विशेषविषयमज्ञान-मनुभूयत इति शङ्कते—**ननु तत्रेति।** व्यावर्तकता—विषयतेत्यर्थः।

**भासमानस्य व्यावर्तकतया प्रतिभासानुपपत्तेः । ननु अवभासमानस्यापि तद्व्यावर्तकत्वमनुपपन्नमेव । न—अज्ञानसंबन्धस्य प्रतिभासमात्रशरीरत्वात् अनुपपत्तेरलङ्कारत्वात् । प्रतिभासस्तु विद्यत एव । तत्र कथं**

---

ता. रनुपपन्ना इत्यर्थः । त्वन्मतेऽप्यनुपपत्तिस्समाना इति पूर्ववादी आह—**ननु अवभासमानस्यापि** इति । अवभासमानत्वमङ्गीकृत्यानुपपन्नत्वमुच्यते ? किं वा अवभास एव नास्ति ? इति विकल्प्य, आद्योऽङ्गीक्रियते इत्याह—**न—अज्ञानसम्बन्धस्य** इति । द्वितीयः कल्पोऽनुभवविरुद्ध इत्याह—**प्रतिभासस्तु**

---

भा. सविषयपदार्थे हि व्यावर्तकस्यैव विषयत्वं वाच्यम् । अन्यथा घटादिज्ञाने सर्वं विषयः स्यात् । ततश्च विशेषांशस्यैवाज्ञानविषयत्वे तस्यैवाज्ञानविशेषणत्वं वाच्यमिति सोऽपि विशिष्टज्ञानानुभवविषयो वाच्यः । ततश्च ज्ञायमानस्यैव अज्ञानविषयत्वमित्यभिप्रेत्याह—**न—अनवभासमानस्येति** । ज्ञानाविषयस्येत्यर्थः ॥

ननु ज्ञान इवाज्ञानेऽपि विषयस्य व्यावर्तकत्वमनुपपन्नम् । विशेषणस्य ज्ञायमानत्वनियमेन ज्ञातत्वाज्ञातत्वयोर्विरोधात् परबुद्धिस्थविशेषांशस्य ज्ञानोपायाभावाच्च, किन्तु सामान्यमेव, न चैवमन्यनिरूप्याज्ञानस्यान्यविषयत्वेऽतिप्रसङ्गः, सामान्यविशेषभावस्य नियामकत्वादिति शङ्कते—**नन्ववभासमानस्यापीति** । किं सामान्यावच्छिन्नतया अनुभूयमानमज्ञानं व्यक्तिविषयम् ? तद्व्याप्यधर्मविषयं वा ? । नाद्यः, व्यक्तेरपि ज्ञायमानत्वात् । न द्वितीयः, व्यापकावच्छिन्नतया अनुभूयमानाज्ञानस्य व्याप्यविषयत्वे 'वह्निं द्रव्यं वा न जानामि' इत्यनुभवस्यापि धूमशब्दादिविषयत्वप्रसङ्गात् । तस्मादज्ञाततया साक्षिविषयो विशेष एव अज्ञानस्य व्यावर्तको विषयः ॥

न चैवं विरोधस्य कः परिहार इति वाच्यम्, अनुभवानुसारेण आवरणप्रतिबद्धचैतन्यस्याज्ञानाविरोधित्वात् । साक्षिणोऽप्यज्ञानविषयांशे परोक्षत्वाच्च । परमतेऽपि प्रमेयत्वादिना ज्ञायमानेऽपि घटत्वादौ जलत्वादिना ज्ञायमानेऽप्यनभ्यासदशापन्नजलादौ संशयादिदर्शनाच्च । विरोधेऽप्यनिर्वचनीयवादिनामस्माकमनुभवसिद्धतया आवश्यकार्थस्यानुपपत्तिरनिर्वचनीयत्वसाधिकेति अलङ्कार एव । न च तदनुभवोपायाभावः, अज्ञाततया साक्षिवेद्यस्योपायान्तरानपेक्षत्वादित्यभिप्रेत्याह—**अज्ञानेति** ॥

75 - 7 **प्रतीयमानस्याविद्याविषयत्वानुपपत्तिः इत्याक्षिपति**—किं तत् प्रमाणमिति।
75 - 8 निरंशस्येति **परिहारः । संविद्भेदः अपरोक्षप्रकाशमानता नाम। शरीराद्भेदश्च स्वयंज्योतिषा आत्मप्रकाशेनाभिन्नः ततन्त्रो** वा अपरोक्ष
75 - 8 **एव, तथापि न प्रकाशते इति सिद्धान्ती परिहरति**—ननु भोक्तुरिति।
75.- 10 ननु न भोक्ता **इत्यादिः स्पष्टार्थः** ॥

---

ता. इति। आत्मनः शरीरव्यतिरेकोऽपरोक्षोऽपि न प्रकाशते इति दृष्टान्तं दर्शयितु-मापरोक्ष्यलक्षणमाह—**संविद्भेदः** इति। भवतः तावता किमायातमिति; अत आह—**शरीरात्** इति। 'अभिन्नः' इति स्वरूपभेदवादिमतं 'तत्तन्त्रः' इति धर्मभेदवादिमतं आश्रित्योक्तम्। धर्मभेदवादेऽपि धर्मिप्रतियोगिनोरपरोक्षत्वात्

---

भा. पूर्ववादी द्वितीयं पक्षमादाय दूषयतीत्याह—**निरंशस्येति परिहार इति।** प्रकाशमानचैतन्यमात्रमेव ब्रह्मस्वरूपम्। तथापि सत्यज्ञानादिपदानामपर्याय-त्वाय कल्पितभेदेन तत्पदवाच्यं भिन्नमभिधीयतेऽस्माभिः। न चाविद्यासिद्धेः पूर्वं भेदकल्पना अयुक्तेति वाच्यम्। अविद्याया अनादित्वेन प्रागवस्थाया अभावात्, ततश्च वाच्यभेदे तत्पदघटितव्यवहारभेदात् तदुभयव्यव-हारदर्शनात् तद्योग्यतारूपमावरणमिति प्रकाशमानचैतन्यमात्रस्वभावस्य ब्रह्मणः अप्रकाशमानत्वमविरुद्धमित्यभिप्रेतार्थे भेददृष्टान्तं दर्शयिष्यन् तस्यापरोक्षत्व-विवक्षया प्रथममपरोक्षत्वस्वरूपमाह—**संविदिति** ॥

आत्मनः संवित्स्वरूपत्वात् स्वाभाविकमेवापरोक्षत्वम्, 'यत् साक्षाद-परोक्षात्' इति श्रुतेः। तत्र घटादेरिव ज्ञानक्रियाव्यवधानेनापरोक्षत्वं साक्षादिति निवर्त्यत इति संवित्स्वभावत्वमेवात्मनोऽपरोक्षत्वम्। अनात्मनस्तु अन्तःकरणा-वच्छिन्नसंविद्रूपापरोक्षतादात्म्यादपरोक्षत्वव्यवहारः। (आ)अनात्मनस्तद्रूपाति-रिक्ततदपरोक्षत्वे तत्सत्तायामिव प्रमाणाभावात्। अत एव न व्यवहितवह्न्यादेः अपरोक्षत्वमिति भावः। **तत्तन्त्रो वेति**। तद्धर्मो वेत्यर्थः। धर्मभेदस्यापि धर्म्या-दिज्ञानसद्भावेन प्रत्यक्षत्वस्य वक्तव्यत्वादित्यर्थः। एतच्च प्रकाशमानस्याप्रकाश-मानत्वमात्रे दृष्टान्तः। न तु कल्पिताप्रकाशत्वरहितचैतन्य(स्य)।भिन्नस्याप्रकाश-मानत्वे ॥

**पदार्थज्ञानमेव भेदज्ञानं अतः अहमित्यात्मपदार्थज्ञानमेव भेदेऽपि प्रत्यक्षमिति मीमांसकंमन्यश्चोदयति**—कथं पुनर्भोक्तेति । **संसर्गाध्यासो** 75-12
**हि भेदानवगमनिमित्तमिति सर्वत्र व्याप्तमिति परिहरति**—मनुष्योह- 76-1
मितीति । **पदार्थप्रत्यक्षेणैव भेदेऽपि प्रत्यक्षे सामानाधिकरण्यं गौणाव-**
**भासः इति चोदयित्वा परिहरति**—ननु गौणः इत्यादिना । **आह गौण-** 76-2
वादी—नन्वहमिति यदीति । **ननु प्रत्यक्षावभासं बाधित्वा आगमानु-** 76-4
**मानाभ्यामेव व्यतिरेको गृह्यतामिति; नेत्याह**—आगमानुमानयोरपीति । 76-6
**ननु मिथ्यात्वात् प्रत्यक्षावभासस्य द्विचन्द्रावभासस्येव ताभ्यामेव बाधः इति चोदयति**—मिथ्यात्वात्तस्येति । **यत्राविचारपुरस्सरमेव प्रत्यक्षाव-** 76-7
**भासमप्यनुमानादिना झटिति बाधितमुच्छिन्नव्यवहारं भवति तत्र तथा भवतु । यत्र पुनः विचारपदवीमुपारूढयोः ज्ञानयोः बलाबलचिन्तया बाधनिश्चयः तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिरिति मत्वा आह**–कुतस्तर्हीत्यादिना उच्यते इत्यतः प्राक्तनेन ग्रन्थेन। **स्पष्टार्थो ग्रन्थः** ॥ 76-7 77-3

**किमर्थतो व्यतिरिक्तात्मविषयोऽहङ्कारः उच्यते ? किं वा प्रति-**
**भासतः ?। अर्थतश्चेत् तत्राह**—यद्यपि देहादिव्यतिरिक्तेति । **व्यतिरेक-** 77-3

---

भेदोऽप्यपरोक्ष एवेति भावः । भेदस्यापरोक्षत्वाभावोऽसिद्धः इति शङ्कते— ता.
**पदार्थेति** । अध्यासाख्यकार्यदर्शनात् भेदानवगमानुमानात् मैवं इति परिहरति—**संसर्गेति** । निमित्तं—लिङ्गं अनादेरनवगमस्य, कारणानवगमस्य कारणानपेक्षत्वादिति द्रष्टव्यम्। **प्रत्यक्षावभासमिति** । प्रत्यक्षवदवभासो यस्य आरोपितस्य वस्तुनः तत् द्विचन्द्रादिवस्तु प्रत्यक्षावभासमर्थमात्रम् । कोष्ठगत्या विद्यमानं व्यतिरेकमात्रमिति यावत् ॥

---

यत्र प्राक्प्रवृत्तसजातीयप्रमाणानामप्रमाणत्वप्रतिसन्धानमस्ति, तत्र भा.
केवलागमानुमानाभ्यामपि प्रत्यक्षस्य बाधः। यत्र तु नैवं [तत्र] तर्कशून्यागमानुमानाभ्यां न प्रत्यक्षस्य बाधः। न च नायं सर्प इत्याप्तवाक्यादपि प्रत्यक्षभ्रमस्य बाधोऽस्तीति वाच्यम्। तत्रापि आप्तोक्तत्वप्रतिसन्धानरूपतर्कसहकृतस्यैव बाधकत्वादित्यभिप्रेत्याह—**यत्रेति** ॥

प्रतिभास एव अध्यासविरोधितया सामानाधिकरण्यस्य गौणत्वमावहति
नत्वर्थमात्रमिति भावः। ननु सामान्येन गृहीतस्य विशेषाग्रहणादन्य-
संसर्गावभासो भवति। आत्मा तु विशेषरूपेण गृहीतः। कथं तत्रा-
77-4 ध्यासः? तत्राह—दृश्यते ही[चे]ति। अथ प्रतिभासत एवाहंप्रत्ययो
78-1 विविक्तात्मविषय इति शङ्कते—अथ पुनरेकान्ततः इति। परिहरति—
78-2 ततस्तत्सद्भावे इति। यौक्तिकज्ञानसहकृतेनाहंप्रत्ययेनात्मनि विविक्ते प्रति-
पन्ने पुनः सामानाधिकरण्यं गौणमेव, तत्सामान्यात् पूर्वमपि गौण-
78-3 मेवेत्यभिप्रेत्याह—जिज्ञासोत्तरकालं तर्हीति। विचारेणापि नाहंप्रत्ययस्य
व्यतिरिक्तात्मविषयत्वमापादितम्, किं तु सर्वदा स्वरूपमात्रविषयोऽहं-
प्रत्ययः, यौक्तिकज्ञानलब्धस्तु व्यतिरेकः, अतस्तस्याननुसंधाने पूर्ववद-
78-7
79-1 ध्यास एवेति परिहरति—न युक्तः इति। तत्रापि नाध्यासः [कथं] इति
79-1 चोद्यम्। अनुभवविरोधः [अनुभव एव] इति परिहारः, अकारस्य व्यतिरेकेऽपि
79-2 ह्रस्वादेरव्यतिरेकादध्यास इति चोदयति—नन्वनुभव इति। अन्यतर-
79-3 व्यतिरेके द्वयोरेकत्वाद्भेदस्येतरेतरव्यतिरेकः सिद्धयतीत्याह—तन्नेति।
79-5 ननु महदेतत् इत्यादिचोद्यपरिहारौ स्पष्टौ॥

किं च विवेकानन्तरमध्यासोऽहंप्रत्ययमात्रेण विरुध्यते इत्युच्यते?
79-7 किंवा यौक्तिकज्ञानेन।? न तावदहंप्रत्ययमात्रेणेत्याह—तथाह्यहंप्रत्ययस्ये-
त्यादिना। ननु पूर्वमात्मविषयोऽपि युक्तिज्ञानसन्निधानात् व्यतिरिक्त-
80-2 विषयोऽहंप्रत्यय इति; नेत्याह—अतो युक्त्या विषयविवेचनेऽपीति।
नहि प्रत्यक्षज्ञानं ज्ञानान्तरसन्निधानात् स्वविषयादधिकविषयं भवतीति

---

भा. न हि प्रत्यक्षज्ञानमिति। ननु प्रागपि प्रत्यक्षे भेदो विषय एव।
परन्तु तदंशे ज्ञानं सत्तावधारणरूपं न भवतीति वाच्यम्। अन्यथा शरीरात्
भेदश्च स्वयंज्योतिषा आत्मप्रकाशेन अभिन्नस्तत्तन्त्रो वा अपरोक्ष एवेति
ग्रन्थविरोधात्। तथा च विचारानन्तरं शब्दात् जायमानमिव ज्ञानं भेद-
प्रत्यक्षमपि सत्तावधारणं भवतीति तदाकार एव व्यवहारो युक्त इति चेत्,
सत्यमुक्तं परमतेऽपि प्रकाशमानस्याप्रकाशमानत्वं वक्तव्यमिति। वस्तुतस्तु

भावः। विचारजन्यज्ञानस्याननुसंधानात् अनुसंधानेऽपि परोक्षत्वात् न अपरोक्षाध्यासः प्रागवस्थातो भिद्यते इत्युपसंहरति—अतो न्यायतः 80-5 इति ॥

ननु प्रत्यक्षे देहात्मैक्याध्यासे किं ऐक्यप्रत्ययमपबाध्य व्यतिरेके प्रमाणमुक्तमिति ?। उच्यते—युक्तिसहितागमानुमानाहंप्रत्ययैः द्विचन्द्र-बाधया एकत्ववत् व्यतिरेकः सिध्यतीत्युक्तं भवति। तदेवं स्वयंज्योतिषः 80-7 इति दृष्टान्तानुवादेन दार्ष्टान्तिककथनपरो ग्रन्थः स्पष्टार्थः। स्वयंप्रकाश-त्वेऽपि अविद्यया अगृह्यमाणविशेषत्वात् आत्मनोऽधिष्ठानयोग्यत्वकथनेन परत्र परावभासः इति लक्षणांशो दर्शितः। कारणत्रितयेऽपि अद्वितीया-त्मावभासिचैतन्यप्रमाणतद्गताविद्याकारणदोषौ लब्धौ, संस्कारमिदानीं लम्भयति अनादित्वाच्चेति। ननु अध्यस्यमानाधिष्ठानविषयं कारण- 81-3 त्रितयजन्यमेकमेव ज्ञानं वक्तव्यं तदभावान्नाध्यासः इत्याशङ्क्याह—पृथग्भोक्तृविषयानुभवफलाभावादिति। आत्मचैतन्यमेवात्मानात्मसंभेदा- 81-4 वभासि स्वरूपेणाजन्यत्वेपि विशिष्टविषयोपरक्ताकारेण जन्यते। भ्रान्ति-

---

ता. किं वा यौक्तिकज्ञानेनेति द्वितीयविकल्पस्योपसंहारव्याजेन परिहार-माह—विचारजन्येति। केवलागमादिभिः यद्यपि व्यतिरेको न सिद्ध्यति, तथापि युक्तिसहितैस्सिद्ध्यति इत्युत्तरमाह—उच्यते इति। तथापि कथं तस्य जन्मेति ? आह—स्वरूपेणेति ॥

ननु कथमात्मानात्मनोः विषयविषयिणोरेकत्रानुभवः ? इत्यत आह—भ्रान्तित्वाच्चेति। एकविज्ञानोपारोहे सत्यपि विषयत्वाभावापराधेन

---

भा. ब्रह्मसाक्षात्कारात् पूर्वं न कस्यापि भ्रमविरोधिभेदप्रत्यक्षमस्ति, विदुषामपि व्यवहा(रोऽसा)[रे पश्चादिसा]धारण्यदर्शनादिति भावः। अद्वितीयात्माव-भासिचैतन्यप्रमाणेति। तथा च सम्प्रयोगस्य प्राक्कारणत्वकथनमनास्थयेति द्रष्टव्यम्। विशिष्टविषयोपरक्ताकारेण जन्यत इति। तथा च शुक्तिरजता-दिगोचराविद्यावृत्तिकीर्तनमप्यनास्थयैव। वस्तुतस्तु तस्य ग्रन्थस्य तत्रैवोक्तार्थो द्रष्टव्यः ॥

त्वाच्च विषयविषयिणोरेकस्मिन् प्रत्यये संभेदावभासः संभवति इति
कारणत्रितयजन्यमात्मन्यनात्मावभासिज्ञानमध्यासः सिद्धः इति ॥

82 - 2 कथं पुनरित्यादिभाष्यस्य तात्पर्यमाह—कोयमध्यासो नामेति किं-
वृत्तस्येति। पृष्टमेवानेन आक्षिप्तमपि मया इत्युभयत्रैवकारापिशब्दौ प्रयो-
क्तव्यौ। अध्यस्यमानेन समानेन्द्रियविज्ञानविषयत्वमेवाधिष्ठानस्य दृष्टम्,
इह तदभावात् न अध्याससंभवः इत्याक्षेपग्रन्थार्थः। तत्र एकस्मिन्
विज्ञाने द्वयोः संभिन्नतया अवभास एवापेक्ष्यते, विषयतया अवभासः
84 - 3 इति विशेषणायोगात्, इति मन्वानः परिहरति—न तावदयमेकान्तेनाविषयः
इति। अस्मत्प्रत्ययशब्देनात्मविषयं ज्ञानमुक्तमिति मन्वानश्चोदयति—
84 - 5 ननु विषयिणः इति। एकस्यां प्रत्यक्षदर्शनक्रियायामेकस्यैव कर्तृस्थाने
तदैव तद्विपरीतकर्मकारकस्थाने चावस्थानमनुपपन्नमिति भावः। अस्तु
85 - 2 तर्ह्यंशाभ्यां तद्भाव इति; नेत्याह—तत् कथमेकस्येति। तत्र सर्वतो
विप्रसृतस्य सवितृप्रकाशस्याकाशे विशेषाभिव्यक्तिनिमित्तदर्पणादिवत्
आत्मचैतन्यस्य सविकल्पकतया स्फुटीकरणव्यवहारनिमित्तं भास्वरद्रव्य-
85 - 3 मात्मन्यध्यस्तमन्तःकरणमस्मत्प्रत्यय इत्याह—अस्मत्प्रत्यया[यत्वा]भिमितो-
ऽहङ्कारः इति। ननु इदं रजतमितिवदध्यस्तत्वे अहमिति द्वैरूप्यावभासो
86 - 1 वक्तव्यः इत्यत आह—स चेदमनिदमिति। अयो दहतीति दग्धृत्वविशिष्टस्या-
ग्नेरयसश्च द्वैरूप्यावभासवत् अहमुपलभे इत्युपलब्धृत्वविशिष्टस्यात्मनो

---

ता. अध्यासाभावादर्शनात् कल्पनागौरवाच्च विषयत्वं न कल्पनीयमित्यर्थः। उक्तं—गमनक्रियाकर्तुरपि ज्ञानक्रियाकर्मता तदैवैकस्य दृष्टा, अत **दर्शनक्रियायामिति**। तथापि द्रष्टृत्वात् दृश्यदेहव्यतिरिक्तोऽहं घटादिव इत्यनुमाने तत्कर्तुरेव तद्विषयत्वं दृष्टमिति; अत आह—**प्रत्यक्षेति**। तथापि कालभेदे दृष्टमित्यत आह—**तदैवेति**। आत्मप्रकाश्यस्याहंकारस्य कथं तत्प्रकाशकत्वमिति शङ्कायां आदित्यप्रकाश्यस्य आदर्शस्यादित्यप्रकाशकत्वं प्रसिद्धं इति दृष्टान्तेन दर्शयति—**तत्र सर्वतः** इति। साङ्ख्याभिमताहंकारं व्यावर्तयति—**आत्मन्यध्यस्तमिति**। दृष्टान्तदार्ष्टान्तिकयोः विवक्षितमनुगतं

ऽन्तःकरणस्य चास्त्येव द्वैरूप्यावभासः, असाधारणक्रियोपरक्तमात्मादिद्रव्यमेव वस्त्वन्तरविशिष्टमवभासते इति भावः। दुःखिप्रेमास्पदरूपेण परिणामितदागमापायद्रष्टृरूपेण अहङ्कारविषयादिष्वनुस्यूत-

रूपमाह—**असाधारणेति**। द्वैरूप्यान्तरमाह—**दुःखीति**। यदैव दुःखी तदैव तत्परिहाराय साधनानुष्ठानदर्शनात् तदैव प्रेमास्पदत्वमस्तीत्यर्थः। प्रकारान्तरेण द्वैरूप्यमाह—**अहंकारेति**॥ ता.

**दुःखिप्रेमेति**। अस्ति अहङ्कारे प्रसिद्धं दुःखित्वं भूयासमिति प्रेमास्पदत्वं च, तदुभयं चैकस्य विरुद्धमिति तदाश्रयौ आत्माहङ्कारौ कल्पिताभेदेन प्रतीयेते अहमिति। ततश्चाहङ्कारो द्वि[रूपः](पादः)। तथा हि प्रेमास्पदत्वं न तावदहङ्कारत्वेन स्वीयाहङ्कारत्वेन वा, वैर्यहङ्कारेऽपि तत्प्रसङ्गात् अहङ्कारस्यात्मत्वे तस्य स्वीयत्वायोगाच्च। इच्छायास्साक्षात् पारम्पर्येण वा सुखविषयत्वनियमात्। सुखसमवायित्वेन[तदिच्छाभ्युपगमे]सुखस्यानिष्टत्वे तद्विशिष्टवस्तुनि इच्छाऽयोगात् तदिच्छा वाच्या। तस्येच्छाविषयत्वं परमते न सुखत्वेन, अतिप्रसङ्गात्। नापि स्वसुखत्वेन, उपेक्षणीयपुरुषस्येव स्वस्याप्युपेक्षणीयत्वे स्वसम्बन्धिसुखेच्छाऽसम्भवेन तदिच्छायां वक्तव्यायां(दुः)सुखसम्बन्धित्वेन तदिच्छाभ्युपगमे अन्योन्याश्रयात्। दुःखसम्बन्धित्वेन द्वेष्यस्याहङ्कारस्य परमप्रेमास्पदत्वानुपपत्तेश्च। अत एव दुःखाभाववत्तया अहङ्कारे इष्टे प्रेमेति निरस्तम्॥ भा.

तस्मात् सुखरूपत्वादेव तस्य परमप्रेमास्पदत्वम्। न च सुखस्य दुःखवत्त्वमुपपद्यते। न च सुखरूपेऽप्यात्मनि आरोपितं दुःखवत्त्वं अविरुद्धमिति वाच्यम्। अन्तःकरणाश्रयकादाचित्कानिष्टज्ञानजन्यदुःखस्यान्तःकरणपरिणामस्य तदवच्छिन्नात्मधर्मत्वेन केवले तदयोगात् इति द्विरूपोऽहङ्कार इति भावः। एतेन प्रेमास्पदस्याखिलावस्थास्वनुस्यूततया स्वतो दुःखिनोऽहङ्कारस्य व्या(ष)[वृत्त]तया व्यतिरेकश्चाहङ्कारात्मनोर्भेदकं प्रमाणमुक्तम्॥

इदानीं सकलावस्थानुयायिसाक्षितद्विपरीतसाक्ष्यभावेन अन्वयव्यतिरेकाख्यं तद्भेदकं प्रमाणमाह—**परिणामीति**। अस्ति कश्चित् चक्षुरादिव्यापारदशायामेव घटादिज्ञानदर्शनात् कादाचित्कज्ञानपरिणामी। स चाहङ्कारः

भा. अहमिदं जानामीत्यनुभवात् । न च स आत्मा, स्वस्यैव स्वपरिणामद्रष्टृत्वे कर्तृकर्मविरोधात् । किञ्च, अस्ति तावत् घटादिज्ञानधारानन्तरं एतावन्तं कालं घटमनुभवन्नेवाहमासमिति अहङ्कारतत्परिणामानुसन्धानम् । तच्च(व्याप्या)[नित्या]नुभवजन्यम् । न च घटज्ञानधाराया अहङ्कारो ज्ञानं वा विषयो भवति । घटज्ञानवेद्यज्ञानवादे तदयोगात् । न वा स्वविषये ज्ञानं संस्कारमुत्पादयति । घटज्ञानधाराकाले च अहमर्थज्ञानयोरपि काचिन्नान्या ज्ञानधाराऽस्ति । अतस्तत्र अहङ्कारतद्धर्मसाक्षी तद्धर्मातिरिक्तः कश्चिदनुभवोऽस्ति इति ॥

[ननु] स एवात्मानमनुभवन्नेवाहमासमिति नानुसन्धानं किन्तु अनुभव एवेति नाहङ्कारधर्मातिरिक्तज्ञानं सिद्ध्यतीति चेत् , न तावदयं प्रत्यक्षानुभवः । धाराचरमज्ञानानन्तरमसतां पूर्वज्ञानानां तावत्कालीनात्मनश्चानुभवितुमशक्यत्वात् । न च घटानुभवत्वसामान्यप्रत्यासत्त्या प्राक्तनानामप्यनुभवः सम्भवतीति वाच्यम् । सामान्यस्यासन्निकृष्टस्याप्रत्यासत्तित्वात् । व्यवहितेऽपि घटानुभवे एतावत्कालं घटमनुभवन्नेवाहमासमित्यनुसन्धानदर्शनात् । न च तदाऽपि घटस्मरणानुव्यवसाये घटानुभवत्वमस्तीति वाच्यम् । अनुव्यवसायस्य निरसिष्यमाणत्वात् । पश्यन्नेवाहमासमित्यनुभवविशेषप्रतिसन्धानानुपपत्तेश्च, सामान्यप्रत्यासत्तेर्निरस्तत्वाच्च ॥

नाप्यनुमितिरेवायमनुभवः, विशिष्टज्ञानैः समयान्तरे व्यवहि[त]तासम्भवेन तत(स्सदस)[स्त]दनुमानायोगात् । नापि घटादिस्मृत्या तदनुभवानुमानम् । मध्ये स्मरामीत्यनुभवाभावेऽपि तदनुसन्धानदर्शनात् , व्याप्यविशेषपरिज्ञानं विना अनुमानासम्भवात् , स्मरणस्य पूर्वानुभवजन्यत्वात् , ज्ञानसंशयाभावनिश्चयदशायामपि वर्णितानुसन्धानदर्शनेन तत्स्मरणेन तदनुमानायोगाच्च, तदा तदनुसन्धानं (वे)नेत्यभिधाने च लिङ्गानुसन्धानं विना अहङ्कारोऽपि नानुभूयत इति वक्तुं शक्यतया तत्प्रत्यक्षत्वमपि न सिद्ध्येत् । न चोपायान्तरं तदनुभवेऽस्ति । न चाहङ्कारधर्मस्य स्वप्रकाशत्वमस्तीति वाच्यम् । जन्यज्ञानस्य स्वप्रकाशत्वस्य निरसिष्यमाणत्वात् । तन्मतेऽप्येतावन्तं कालं नातः परमद्राक्षमिति घटेतरज्ञायमानत्वायोगाच्च । ततश्चाहङ्कारतद्वृत्तितदभावसाक्ष्यनुभव एकोऽहङ्कारधर्मातिरिक्त एष्टव्यः । स च वक्ष्यमाणविधया आत्मेति स एवाहङ्कारपरिणामद्रष्टा ॥

नन्वेवमहमनुभवरूपात्मैव अहमिति व्यवहारविषयोऽस्तु, किं जड- भा.
परिणामितद्धर्मकल्पनेन, जानामीत्यस्य चैतन्यविषये व्यवहार[मात्रपर]त्वेनाप्युपपत्तिरिति चेत्; न—घटाद्यविद्यानिवृत्तेश्चक्षुरादिव्यापारानुविधानदर्शनेन तज्जन्यवृत्तेरवश्यवाच्यत्वात्। चक्षुषः स्वयं तत्राहेतुत्वात्॥

ननु चक्षुस्सम्प्रयोगादिसहकृतमेव चैतन्यमविद्यानिवर्तकं भवतु। न च सम्प्रयोगस्य जडत्वान्नाविद्यानिवर्तकत्वमिति वाच्यम्। वृत्तेरपि तुल्यत्वात्। चैतन्यसहकारिमात्त्वे अन्यत्रापि तुल्यम्। न चानुगताविद्यानिवृत्तौ चक्षुस्संप्रयोगादेरननुगतस्या(प्य)नुकूलत्वम(प्य)युक्तमिति वाच्यम्। इन्द्रियसम्प्रयोगत्वेनैवानुगतत्वात्। इन्द्रियत्वं चाविद्यानिवृत्त्यैव निरुच्यताम्। व्यासङ्गदशायां सत्यपीन्द्रियसम्प्रयोगे(मध्ये)[अविद्या]निवृत्तिर्नास्तीति चेत्, समनस्केन्द्रियसंयोगस्यैवानुकूलत्वादिति॥

मैवम्—आत्माविद्यानिवृत्तौ समनस्केन्द्रियसंयोगाभावात्, मनसोऽनिन्द्रियत्वाच्च। अतोऽपरोक्षवृत्तिरेव अविद्यानिवृत्तिप्रतिबन्धकावरणनिवृत्तये अपेक्षिता। ततो लोकेऽपि तत्सिद्धिः। परोक्षस्थले[संशयादिनिवृत्ति]दर्शनेनापि तत्प्रयोजकतया वृत्तिः सिद्ध्यति। तदभावे पर्वते वन्ह्यादिसंशयानिवृत्तिप्रसङ्गाच्च। न च तत्रापि व्याप्तिसंस्कारोद्बोधे तत्सहकृतचैतन्यादेव संशयादिनिवृत्तिरस्त्विति वाच्यम्। तदुद्बोधप्रयोजकत्वेनापि वृत्तेरावश्यकत्वात्॥

एवं श्रोत्रे अनेकशब्दसमवधानदशायामेकबुभुत्साप्रयोज्यापि वृत्तिरङ्गीकार्या। चैतन्यमात्रस्येन्द्रियसम्बन्धविशिष्टस्य वा प्रागपि सतो बुभुत्साप्रयोज्यत्वासम्भवात्। अविद्यानिवृत्तिरेव तत्र बुभुत्सया साक्षात् साध्यत इति चेत्, शब्दान्तरे केवलेन्द्रियसन्निकर्षः क्वचित् बुभुत्सा हेतुरिति अननुगमात्। अन्येच्छया अन्यस्यासम्भवाच्च। न चाविद्यानिवृत्तिरेव बुभुत्साप्रकृत्यर्थोऽस्त्विति वाच्यम्। धर्मादावपि जिज्ञासासत्वात्। 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिशास्त्राद्वेद[जन्य]ज्ञानप्रसिद्धेश्च। एवं सति जानामीत्यनुभवोऽपि न व्यवहारमात्र[पर]तया कल्प्यत इति (प्रे)[परो]क्षादिप्रसिद्धा वृत्तिः। तत्सामग्रीमादायैव अनुभवादिसिद्धवृत्त्यपलापे परेषामपि ज्ञानं न सिध्येत्। सा च न केवलात्मजन्या। निरवयवस्यानुभवरूपात्मनः संयोगाद्यसम्भवे तत्परिणामानुपपत्तेरिति अनात्मा परिणामी जडाहङ्कारस्तद्दृष्टचिद्रूपात्मन्यध्यस्तः। अन्यथा चिदचितोरेकत्वानु-

भा. भवायोगात् इति परिणामी जडस्वभावः तद्द्रष्टृ चैतन्यं तत्समुदाय एवायमहङ्कार इति ॥

आगमापायितदवधिरूपेणान्वयव्यतिरेकौ तत्प्रमाणमाह—*अहङ्कारविषयादिष्विति । चैतन्यमहङ्कारे घटादौ चाधिष्ठानतयानुस्यूतं 'घटः स्फुरति' इति घटादावपि स्फुरणानुभवात् । न च घटः स्फुरतीत्यात्मसमवेतज्ञानविषयत्वस्यैवानुभव इति वाच्यम्; वेद्यज्ञानेन स्वविषयत्वस्य घटादिनिष्ठस्यानुभवितुमशक्यत्वात् । अनुव्यवसायेनानुभूयत इति चेत्, न—तदा व्यवसायविषयत्वस्य वर्तमानत्वासम्भवात् । घटादिनिष्ठव्यवसायविषयत्वस्य तदविषयस्यानुव्यवसायेन विषयीकर्तुमयोगच्च । न हि बाह्ये व्यवसायविषयत्वे मनसः सामर्थ्यमस्ति । न च घटे तज्ज्ञानातिरिक्तं विषयत्वमेव नास्तीति वाच्यम्; घटो ज्ञानस्य विषय इति तद्भेदेन तस्यानुभवात् ॥

देवदत्तज्ञानं घटं च जानतो देवदत्तो घटं जानाति न वेति संशयदर्शनेन तस्य ज्ञानघटस्वरूपान्यत्वात् । न च घटतज्ज्ञानयोः सम्बन्धापरिज्ञानात्तथा संशय इति वाच्यम् । ज्ञानज्ञेययोः परमते विषयविषयिभावातिरिक्तसम्बन्धाभावात् । तस्य च स्वरूपद्वयमात्रत्वे प्राचीनदोषानपायात् । न च ज्ञान[विशेष]स्वरूपं घटेन सम्बन्धस्तस्य च पुरुषान्तरे अज्ञानात् तत्संशय इति वाच्यम् । ज्ञानसामान्यस्वरूपातिरिक्तस्य देवदत्तो घटविषयज्ञानवानिति शब्दादपि प्रतीत्यसम्भवेन संशयानिवृत्तिप्रसङ्गात् । घटविषयत्वमेव विशेषः तच्च शब्देन प्रतिपन्नमिति चेत्, न—घटे तज्ज्ञानस्वरूपमात्रस्यैव तद्विशेषत्वे तयोः स्वरूपेण ज्ञानदशायामपि संशयो न स्यादित्युक्तम् । अतिरिक्तस्तु व्यवसा(य)यागोचर एव ॥

नापि स्वप्रकाशज्ञानविषयत्वं घटः स्फुरतीति व्यवह्रियत इति वाच्यम् । जन्यज्ञानस्यास्वप्रकाशत्वात् । नापि ज्ञानजन्या ज्ञातता, स्फुरणस्य जन्यत्वे प्रमाणाभावात् । एतावत्कालं न स्फुरतीदानीं स्फुरतीति स्फुरणकादाचित्कानुभवस्याज्ञाताभिव्यक्तस्फुरणविषयत्वेनोपपत्तेः तदभावकल्पनायोगात् । ज्ञाततायाः अनन्तरं निरसिष्यमाणत्वाच्च । तस्माच्चैतन्यमभिव्यक्तं स्फुरणम् । घटादेरपरोक्षत्वार्थमप्यात्मचैतन्यतादात्म्यानुभवेऽपि ममैवेति (?) चैतन्यमहङ्कारविषया-

* एतत्प्रतीको ग्रन्थः 231-पुटे द्रष्टव्यः ॥

चैतन्यरूपेण अहमिति च व्यावृत्तरूपेण च सर्वलोकसाक्षिकं द्वैरूप्यमित्याह—सर्वलोकसाक्षिक: इति ॥ 86-1

नन्‍ु विषयसंविदः आश्रयः आत्मा, तत्र अहं जानामीति संविदाश्रयत्वेनावभासमानोऽहङ्कारः कथमिदमंशः स्यादिति चोदयति—नन्‍ु 87-1
किमत्र वदितव्यं इति। नन्‍ु अयो दहतीत्यादावयःपिण्डादिवदकर्तृत्वेपि दर्शनक्रियाश्रयकोटिनिक्षिप्ततया अहङ्कारस्यावभासः सम्भवतीति पूर्व-

---

ता. ज्ञानाधार आत्मेति सर्ववादिसम्मतस्य लक्षणस्याहंकारे सद्भावात् स एवात्मेति चोद्यग्रन्थस्य तात्पर्यमाह—**नन्विति । प्रमातृप्रमेयेत्यारभ्य—**

---

भा. दिष्वनुस्यूतम्। अहङ्कारस्तु अहमनुभवगोचरोऽहमिहैवास्मीत्यनुभवात् परिच्छिन्नः ॥

न च देह एव इहैवेति परिच्छिन्नत्वेनानुभूयत इति वाच्यम्। परमतेऽहम्प्रत्ययस्य विविक्ताहङ्कारविषयत्वात् । (न)जानामीत्यनुभवात् । न च देहस्य ज्ञानवत्त्वमस्ति। न च देहपरिमाणमेवात्मन्यारोप्यानुभूयते। अहङ्कारस्यानुभूयमानातिरिक्तपरिमाणविशेषे प्रमाणाभावेन अबाधितस्य नियमेन प्रतीयमानस्य तत्परिमाणत्वात्। न च अस्पर्शद्रव्यत्वेन तस्य विभुत्वमनुमीयत इति वाच्यम्। मनस्तमसोर्व्यभिचारात्। अत एवास्पर्शत्वे सति प्रत्यक्षधर्मान्वयत्वं न हेतुः। अप्रयोजकत्वाच्च। सर्वस्यापि हेतोरहमिहैवेति धर्मिग्राहकमानबाधाच्च। न च सर्वत्र कार्योपलम्भादाश्रयस्यात्मनो विभुत्वमिति वाच्यम्। अदृष्टस्य स्वरूपसम्बन्धविशेषात्तदुपपत्तेः । अन्यथा वैशेषिकादिमते आकाशे शब्दस्य पुत्राद्यात्मनि दुःखादिनिवृत्तेश्च पित्रा(दि)साध्यत्वानुपपत्तेः । तदाश्रययोः सम्बन्धाभावात्। श्रुतिरपि नाहङ्कारविभुत्वपरा दृश्यते। तस्मादनुवृत्तव्यावृत्तयोर्वास्तवाभेदायोगात् अनात्मैवाहङ्कारः आत्मन्यारोपादहमिति प्रतीयत इति चिदचिद्रूपेण द्विरूपोऽहङ्कार इति ॥

(ननु)अहङ्कारस्येदमनिदंरूपेण द्विरूपत्वप्रदर्शनव्याजेन सिद्धमनात्मत्वम्, तदतिरिक्तचिद्रूपात्मानं चाक्षेपसमाधानाभ्यां द्रढयितुमहङ्कारस्यात्मत्वमभिप्रेत्य तल्लक्षणमाह—**ननु विषयेति।** विषयपदं स्वरूपकथनपरम् ॥

87-2 **वादिनं सिद्धान्ती चोदयति**—कथमिति। अयःपिण्डव्यतिरेकेण वह्नेः दहनक्रियाश्रयत्वदर्शनवत् अहङ्कारव्यतिरेकेणात्मनो ज्ञानक्रियाऽदर्शनादहम एवात्मत्वमित्युत्तरेण ग्रन्थेन प्रतिपादयति ॥

**तत्र साङ्ख्यास्तु—अचिदात्मन्यन्तःकरणे चिदाकारप्रतिबिम्बावभासः तथाविधबिम्बान्तरपुरस्सरः प्रतिबिम्बत्वात् मुखप्रतिबिम्बवदिति बिम्बभूतमात्मानमनुमिमते। नैयायिकवैशेषिकाश्च— इच्छादयो गुणाः पृथिव्यादिमहाभूतद्रव्यव्यतिरिक्तस्यैव विशेषगुणाः तेष्वदृष्टत्वे सति एकेन्द्रियग्राह्यतया विशेषगुणत्वात् भूतचतुष्टयेऽदृष्टगन्धवत्, दिक्कालमनसां विशेषगुणहीनत्वात् परिशेषादिच्छादिगुणवद्द्रव्यमन्यदेवात्मेत्यनुमिमते। तथा संवेदनेषु विषयाकारप्रतिबिम्बावभासः तथाविधबिम्बसन्निधानपुरस्सरः अतस्मिन् तदवभासत्वात् दर्पणस्फटिकादिगतमुखरक्तत्वादिवदिति नित्यानुमेया विषयाः इति सौत्रान्तिकाः कल्पयन्ति।**

---

ता. **उच्यते** इत्यतः प्राक्तनग्रन्थस्य कथमिति सिद्धान्तिचोद्योत्तरस्य तात्पर्यमाह—**अयःपिण्डेति** ॥

एवं समुदायतात्पर्यमभिधाय इदानीमनन्तरग्रन्थव्यावर्त्यपूर्वपक्षं दर्शयति—**तत्रेति। एकेन्द्रियग्राह्यतयेति** विशेषगुणत्वे हेतुः। गुणत्वे सत्येकेन्द्रियग्राह्यत्वस्य विशेषगुणत्वाव्यभिचारात्। यद्यपीदं केवलव्यतिरेक्यनुमानं, तथापि यो येष्वदृष्टत्वे सति विशेषगुणः स तद्व्यतिरिक्तद्रव्याश्रयः इति सामान्यव्याप्तिमाश्रित्यान्वयदृष्टान्तमाह—**भूतचतुष्टये** इति। अस्तु तर्हि दिगादिनिष्ठत्वमिति; तत्राह—**दिक्कालेति** ॥

एवं प्रमातुः पारोक्ष्यमभिधाय इदानीं प्रमेयस्य पारोक्ष्यं सौत्रान्तिकमतोपन्यासेन दर्शयति—**तथा संवेदनेष्विति**। एवं प्रमितेरपि पारोक्ष्यं

---

भा. **अतस्मिन् तदवभासत्वादिति**। प्रतिबिम्बितत्वादिति यावत्। अन्यथा शुक्तौ रजताद्यारोपे व्यभिचारात्। प्रथमं बुद्धिस्थमेव रजतं शुक्तावारोप्यत इति न व्यभिचार इति चेत्*। **नित्यानुमेया विषया इति**। एतच्च भाट्टाभिमतज्ञानानु-

---

* अत्र समाधानग्रन्थः त्रुटितः इव भाति। कोशे न दृश्यते ॥

**तान् प्रत्याह—प्रमातृप्रमेयप्रमितयस्तावदपरोक्षाः इति ॥** 87 - 2

**यदि साङ्ख्यादयः प्रत्यक्षसिद्धस्यैवात्मनोऽनुमानानि स्पुटी(स्पष्टी)करणार्थानीति मन्येरन् तदा न कश्चिद्विरोधः। यदि नित्यानुमेयमात्मानमिच्छेयुः तदा विषयवदहमित्यपरोक्षावभासविरोधः। सौत्रान्तिकस्यापि यदि विषयानुमानज्ञाने साक्षाद्विषया एवावभासेरन् प्रत्यक्षेऽप्यवभासन्तां कस्तत्रापराधः इत्यनुमानज्ञाने विषयस्यैवावभासनादनैकान्तिको हेतुः। न चेदनुमानज्ञानेऽपि बिम्बभूतविषयावभासः, प्रतिज्ञातार्थस्य बिम्बपुरस्सरत्वस्याप्रतिभासनात् अनुमानानुदय एव स्यात्। अपरोक्षव्यवहारयोग्यविषयावभासविरुद्धं चानुमानमिति ॥**

**अत्र विज्ञानवादिनस्तु विज्ञानाभेदनिमित्त एव विषयस्यापरो-**

---

फललिङ्गानुमेयत्वादुक्तप्रायमिति मन्वानः सिद्धान्तमवतारयति—**तान् प्रत्याहेति।** **स्फुटीकरणार्थानीति।** विप्रतिपन्नप्रतिबोधनार्थानीति यावत्। **तदा विषयवदिति।** विषयवदात्मनोऽपरोक्षत्वात् तदनुभवविरोध इत्यर्थः। अनुमानज्ञाने साक्षाद्विषयाणां प्रतीतिरस्ति उत नास्तीति विकल्प्य, आद्यं दूषयति—**यदीति।** तथाप्यनुमानस्य किं दूषणमित्यत आह—**इत्यनुमानेति।** साक्षाद्बिंबस्यैवावभासनात् बिंबसन्निधानपुरस्सरप्रतिबिंबावभासाभावेऽपि अतस्मिन् तदवभासत्वलक्षणहेतुर्वर्तते, तेन हेतोः विपक्षवृत्तितया अनैकान्तिकत्वमित्यर्थः। द्वितीयं दूषयति—**न चेदिति।** इदानीमनुमानस्य कालात्ययापदिष्टत्वमाह—**अपरोक्षेति।** हानोपादानाद्यर्थक्रियायोग्यस्य बिंबस्यैवापरोक्षा- ता.

---

मेयत्वस्याप्युपलक्षणम्। **प्रत्यक्षेऽप्यवभासन्तां कस्तत्रापराध इति।** तथा च बिम्बपुरस्सरत्वानुमानं विफलत्वात् व्यर्थम् ॥ भा.

ननु प्रत्यक्षज्ञानं ज्ञानव्यवधानेन स्वविषयसाधकं अर्थप्रकाशत्वाच्चक्षुर्वत्; तत्राह—**अनुमानेति। अपरोक्षव्यवहारयोग्यविषयावभासविरुद्धं चानुमानमिति।** अत एव ज्ञानमपि न नित्यानुमेयमिति भावः। यदपरोक्षं तद्विज्ञानाभिन्नं यथा विज्ञानम्, अपरोक्षं चेदमिति विज्ञानवाद्यभिप्रायमाह—**अत्र विज्ञानेति।**

87-2 क्षावभासः इत्याहुः। तान् निराकरोति—प्रमेयं कर्मत्वेनापरोक्षमिति। इदं पश्यामीत्यनुभवात्। न च विज्ञानाभेदादेवापरोक्ष्यमवभासते। बहिष्ठस्यापि रजतादेरापरोक्ष्यात्। तदपि विज्ञानमिति चेत्—न—रजतवद्बाधाभावप्रसङ्गात्। तस्मादव्यवधानेन संविदुपाधिता अपरोक्षता विषयस्येति ॥

तत्र आत्मा आत्ममनस्संयोगजन्यप्रत्यक्षेणापरोक्ष इति वार्तिककारन्यायवैशेषिकानुसारिणः कल्पयन्ति। प्रमितिस्तु आत्मनि संयुक्तसमवायनिमित्तज्ञानान्तरादपरोक्षेति न्यायवैशेषिकौ। प्रमेयगता प्रमितिः संयुक्ततादात्म्यात् ज्ञानान्तरेणापरोक्षेति वार्तिककारीयाः।

88-1 तान् प्रत्याह—प्रमातृप्रमिती पुनरपरोक्षे एव केवलमिति ॥

न तावदात्मविषयं प्रत्यक्षं ज्ञानान्तरं मनोजन्यमिति प्रमाणमस्ति। सति मनसि आत्मदर्शनादसति सुषुप्ते चादर्शनादन्वयव्यतिरेकौ प्रमाणमिति चेत्—न—विषयानुभवेनैवान्यथासिद्धत्वात्,

---

ता. वभासनादनुभवविरोध इत्यर्थः। इदं पश्यामीति। इदमिति पश्यतिक्रियाकर्मत्वेन इदमो विषयत्वस्याभेदेनावभासनादित्यर्थः। यदवभासते तत्सर्वं विज्ञानाभिन्नमिति व्याप्तिभङ्गो भवद्भिरप्युपेयत इत्याह—न चेति। रजतस्य यथा ज्ञानाकारतया बाध्यत्वं नास्ति तद्वत् बहिष्ठस्यापि बाधो न स्यादित्याह—न—रजतवदिति। कथं तर्हि विषयस्यापरोक्षत्वमित्याह—तस्मादिति। अव्यवधानेन फलव्यावर्तकत्वं विषयस्यापरोक्षत्वमित्यर्थः। एतेन चक्षुषा ज्ञातो घट इति व्यवधानेन फलव्यावर्तकाश्चक्षुरादयो निवर्तिताः। अनुमानादिषु प्राकट्यमेव नास्तीति न तद्व्यावर्तकत्वेन विषयाणामपरोक्षता, किन्तु तदाकारवृत्त्युदयमात्रेण तत्र व्यवहार इति द्रष्टव्यम्। उत्तरग्रन्थव्यावर्त्यपक्षं दर्शयति—तत्रेति। आह प्राभाकरः। विषयानुभवेनेति। ननु विषय एव विषयानुभवात् प्रतीयते नात्मेति; तत्राह—विषयानुभवेति ॥

---

भा. संविदुपाधिता—संविदाकारता संविद्विषयतेति यावत। परोक्षव्यावृत्त्यर्थमाह—अव्यवधानेनेति। अपरोक्षज्ञानविषयत्वमेव विषयस्यापरोक्षत्वमित्यर्थः। विषयानुभव इवात्मज्ञानेऽपि मनः करणम्, अन्यथा तदसिद्धेरित्याशङ्क्याह—

**विषयानुभवसम्बन्धादेव विषयवदात्मसिद्धावात्मनि ज्ञानान्तरं परिकल्प्य मनसोऽन्वयव्यतिरेककल्पनायोगात् । तस्मात् विषयत्वमन्तरेण आत्मा अपरोक्ष एव ॥**

**न च संयुक्तसमवायादात्मनि [संयुक्ततादात्म्यात्] विषये [वा] च अनुभवस्य ज्ञानान्तरविषयतया अपरोक्षता । प्रत्यक्षस्य वर्तमान-विषयापेक्षत्वेन युगपत् फलद्वयावस्थानप्रसङ्गात् ॥**

---

विषयानुभवाश्रयतयैवात्मा सिद्धयति दीपाश्रयदेवदत्तवदित्यर्थः । **विष-यत्वमन्तरेण**—कर्मत्वमन्तरेणेति यावत् ॥ ता.

**नच संयुक्तसमवायादात्मनीति** नैयायिकादिमतमाश्रित्य । **विषये च** इत्यत्र विषयतादात्म्यात् प्राकट्यस्य प्रतीतिरिति जरद्भाट्टमतमाश्रित्योक्तम् । **फल-द्वयावस्थानप्रसंगादिति** । नच वाच्यं विनश्यदविनश्यतोः फलयोः यौगपद्यमिष्ट-मेवेति । संयुक्तसमवायात् प्रत्यक्षाणां (विशेषाणां) विशेषगुणानां समानजातीयानां

---

**विषयानुभवसम्बन्धादेवेति** । विषयज्ञानादेव तदाश्रयात्मनि व्यवहारसम्भ-वात् नात्मविषयज्ञानं कल्प्यम्, गौरवात् प्रयोजनाभावाच्चेति भावः ॥ भा.

**फलद्वयावस्थानप्रसङ्गादिति** । घटादिज्ञानानन्तरं तत्र ज्ञानत्वनिर्वि-कल्पकज्ञानम् । तेन व्यवसायस्य विनाशान्न ज्ञानत्वविशिष्टविषयोऽनुव्यसायो युज्यते । न च ज्ञानत्वनिर्विकल्पकं विना अनुव्यवसायो भवतीति वाच्यम् । परमते विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियमात् । न चानुव्यवसायो ज्ञान-त्वांशे निर्विकल्पक एवेति वाच्यम् । जानामीत्यनुभवस्य सर्वस्य ज्ञानत्वविशि-ष्टज्ञानत्वात् । इतोऽन्यादृशस्य ज्ञानत्वविशिष्टानुभवस्यादर्शनात्, असम्भवाच्च, संशयानिवृत्तिप्रसङ्गाच्च, निर्विकल्पकत्वसविकल्पकत्वयोरेकज्ञाने असम्भवाच्च । न च निरवयवज्ञाने औपाधिको भेदः सम्भवति परमते । न च विषयस्य निमित्तत्वात् पूर्वक्षणे विद्यमानत्वमात्रमपेक्षितं न त्वनुव्यवसायकालेऽपीति वाच्यम् । निमित्तत्वेऽपि प्रतिबन्धकाभाव[तुरी]तन्तुसंयोगादेरिव विषयस्यापि स्थितिक्षण एव ज्ञानजनकत्वात् । घटोऽस्ति जानामीति विषयस्य वर्तमानत्वप्रतीतेः । न च स्थूलकालमादाय वर्तमानत्वानुभव इति वाच्यम् ।

भा. शब्दप्रयोगे हि तत्तात्पर्यं कल्प्यते, न तु प्रत्यक्षानुभवे। अनुभवस्तु यथा यमर्थं विषयीकरोति स तथा अङ्गीकार्यः। प्रत्यक्षविषयस्य तत्काले वर्तमानत्वाभावे निष्कम्पप्रवृत्त्यनुपपत्तेश्च। ज्ञानकाले विषयस्याभावे अपरोक्षत्वायोगाच्च। संविद्भेदाभावात्। अस्तु तर्हि ज्ञानस्य अनेकक्षणवृत्तित्वमिति चेत्, तथा सति तव धारावाहनबुद्धिलोपप्रसङ्गात्। स्थितिक्षणोत्पन्ननिर्विकल्पकादिना तस्यावश्यं विनाशाच्च ॥

किञ्च, यद्येकस्मात् संयोगादनेकज्ञानानि जायेरन् अनुव्यवसायमालैव स्यात्। संयुक्तसमवायरूपतत्सामग्र्याः सत्त्वात्। न चोद्भूतं ज्ञानं गृह्यते न त्वनुद्भूतमिति वाच्यम्। ज्ञाना[नुद्भूतत्वे]प्रमाणाभावात्। न च जिज्ञासितमेव गृह्यते नाजिज्ञासितमिति वाच्यम्। जिज्ञासितताया अपि ज्ञानसाध्यत्वेनान्योन्याश्रयात्। जिज्ञासां विनैव क्वचित् ज्ञानानुभवदर्शनेन व्यभिचारेण तस्यास्तत्राहेतुत्वात्। न च बाह्यसामग्र्यन्तरेण प्रतिबन्धात् क्वचित् ज्ञानधाराविच्छेद इति वाच्यम्। चक्षुस्संयोगादिसामग्र्यां सत्यामेवेदमहं जानामीत्यनुभवात् ॥

न च जिज्ञासाघटितबाह्यसामग्री बलवतीति वाच्यम्। स्वानिष्टपदार्थज्ञानस्याप्यनुभवात्। न चादृष्टविशेषादेव ज्ञानानुव्यवसाय इति वाच्यम्। नियमेन ज्ञानसामग्र्या अदृष्टघटितत्वे ज्ञा(नोप)[नानुप]लब्धेरन्यथासिद्धिशङ्कया तदभावाननुभवप्रसङ्गात्। न चैकस्मात् संयोगादेकमेव ज्ञानमिति वाच्यम्। बहुकालव्यवहितस्य घटज्ञानस्य संयोगान्तरेणानुभवायोगात्। वस्तुतस्त्वेतदेव युक्तम्। संयोगभेदाभावे ज्ञानभेदानुपपत्तेः। न च सामग्रीभेदादेव कार्यभेदः सा च व्यवसायघटिता अनुव्यवसायस्य भिन्नेति वाच्यम्। सामग्र्या एकस्या अभावेन तद्भेदस्य कार्यभेदप्रयोजकत्वायोगात्। न हि परमतेऽपि समूहेभ्यः समूहः भिद्यते ॥

न च कारणभेदमात्रं कार्यभेदप्रयोजकम्, कार्यस्य प्रत्येकमनेककारणजन्यत्वात्। न च सम्भवत्यनुगतप्रयोजके (सति तत्तद्योगमर्हति) [अननुगतं तत्तत् प्रयोजकतामर्हति।] घटादिसमूहालम्बनस्य सामग्र्यादिभेदे सत्यपि संयोगभेदादर्शनेन तस्यैव तत्प्रयोजकत्वात्। संयोगभेदं विना धारावाहनभेदकाभावाच्च। प्रागभावादेर्निरस्तत्वात्तद्भेदस्य कार्यभेदायत्तत्वाच्च। तस्मान्नानुव्यवसायो युज्यते। ज्ञानस्य वेद्यत्वे स्वसत्तायां प्रकाशानियमेन घटानुभवदशायां

**संयुक्तसम्बन्धादनुभवावभासे तद्गतपरिमाणरसादीनां तेनैव ज्ञानेनापरोक्षताप्रसङ्गात्। अनुभवस्य च स्वसत्तायां प्रकाशव्यतिरेकादर्शनाच्च ज्ञानान्तरागम्यतासिद्धिः। न च आत्मव्यापारात् विषयानुभवजन्म भवति। सर्वगतस्य कुठारादिवत् परिस्पन्दाभावात्। परिणामफलस्य च घटादिवत् क्रियैकाश्रयत्वात्। संविदाश्रयत्वे च विषयस्यैव चेतनत्व-**

---

ता॰ नीलपीतादीनां विनश्यदविनश्यदवस्थानामपि सहावस्थानस्यान्यत्रादृष्टत्वेनात्रापि कल्पयितुमयुक्तत्वात्। नच ज्ञानादीनामन्तःकरणगुणत्वेऽपि समानोऽयं प्रसङ्गः, तेषां द्रव्यपरिणामतया द्रव्यताङ्गीकारादिति द्रष्टव्यम्। विषयगतप्राकट्यपक्षे दूषणान्तरमाह—**संयुक्तसम्बन्धादिति**। नच अयोग्यत्वात् रसादीनामनवभासः। प्राप्ताप्राप्तविवेकेन योग्यताया एव प्रतिभासप्रयोजकत्वप्रसंगात्।

नच योग्यानामप्यसंबद्धानां अप्रतिभासात् संयुक्तसमवायादिसम्बन्धोऽप्यङ्गीकार्य इति वाच्यम्। तादात्म्यादिसम्बन्धान्तरे संभवति संयुक्तसमवायादेरेव कल्पनायां प्रमाणाभावादिति भावः॥

युक्त्यंतरमाह—**अनुभवस्य चेति**। यदि अनुभवः स्वसत्तायां प्रकाशव्यतिरेकवान् स्यात् तदा कदाचित्सन्दिह्येत, नच सन्दिह्यते, ततः स्वसत्तायां प्रकाशव्यतिरेकशून्य एवेत्यर्थः। प्राकट्यस्य विषयनिष्ठतया जन्माप्ययुक्तमित्याह—**न चेति**। प्राकट्यहेतुः व्यापारः किं परिस्पन्दरूपः? किं वा परिणामः? इति विकल्प्य, आद्ये दोषमाह—**सर्वगतस्येति**। द्वितीयं दूषयति—**परिणामफलस्य चेति**। यत्र परिणामाख्यक्रिया तत्फलमपि तत्रैव दृष्टम्, इह च आत्मनि ज्ञानाख्यपरिणामः तत्फलं विषये इति वैयधिकरण्यमिष्यते, तदयुक्तमित्यर्थः। दोषान्तरमाह—**संविदाश्रयत्वे चेति**॥

---

भा॰ घटो मया गृह्यते न वेति संशयप्रसङ्गः। अज्ञाते जिज्ञासायाः संशयस्य च (दृष्टस्य) दृष्टत्वात्। तस्मान्नानुव्यवसायो युज्यत इति भावः॥

विषयनिष्ठानुभवस्य चक्षुषा अनुभवे दूषणमाह—**संयुक्तसम्बन्धादिति**। अयोग्यत्वं तु अनुभवेऽपि तुल्यमिति भावः। **अनुभवस्य**। ज्ञानस्य चेति

**प्रसङ्गात्। न च तज्जननव्यापारवत्त्वादात्मनश्चेतनता। मनआदीनामपि प्रसङ्गात्। विषयाश्रयत्वे चानुभवस्य मयेदं विदितमिति सम्बन्धावभासः स्वात्मनि ज्ञानक्रियानुमानं च न स्यात्। अनुभवस्यात्मसम्बन्धाभावात्। तस्मात् द्वयोर्न कर्मतया अपरोक्षता ॥**

---

ता. ननु फलजननव्यापाराच्चेतनत्वं न तु फलाधारत्वादिति; अत आह—**न च तज्जननेति**। मनआदीनामपि फलकारणतया तज्जननव्यापाराच्चेतनत्वं प्रसज्येत। न च ज्ञानाधारत्वं चेतनत्वं न तद्धेतुव्यापारवत्वमात्रमिति वाच्यम्; ज्ञानजन्येच्छादिवत् तत्फलस्यापि तत्रैव प्रसङ्गादिति भावः। मया गतो ग्राम इतिवत् मया विदितो घट इति गमनक्रियावत् कर्तृगतत्वेन वेदनं प्रतीयते। तदिदं विषयाश्रयत्वे न स्यात्। यत्र च परिणामः तत्रैव तत्फलमिति नियमात ज्ञानस्यापि परिणामरूपत्वात् विषयनिष्ठतयैव तदनुमानं नात्मनिष्ठतया स्यादित्याह— **विषयाश्रयत्वे चेति**। ततश्च प्रमातृप्रमित्योः न कर्मत्वेनापरोक्षत्वमित्युपसंहरति—**तस्मादिति** ॥

---

भा. शेषः। **मनआदीनामिति**। (त्वाज्जनकव्यापारवत्त्व)[न च संविजनकज्ञानव्यापारवत्त्व]मात्मत्वप्रयोजकमिति वाच्यम्। लाघवेन संविदाश्रयत्वस्यैव तत्प्रयोजकतया विषयस्यैवात्मत्वापातात। न च ज्ञानवत्त्वमात्मत्वप्रयोजकमिति वाच्यम्। अनुभवस्यैव ज्ञानत्वादिति भावः। अनुभवस्य ज्ञानजन्य(तया)[त्वे] न ज्ञानमात्मनिष्ठम्(किमिति। नापि····र्य)*सर्वस्या अपि क्रियायाः स्वसमानाधिकरणफलजनकत्वनियमात् ज्ञानस्य क्रियात्वे ततो व्यधिकरणफलानुपपत्तेः। न च विषयप्राकट्यमात्मसमवेतक्रियाफलमिति न ततस्तदनुमेयमित्याह—**अनुभवस्यात्मसम्बन्धाभावादिति** ॥

किञ्च, न तावत् ज्ञातो घट इत्यनुभवः विषयप्राकट्ये प्रमाणम्। विषयनिष्ठप्राकट्यानुभवासम्भवस्योक्तत्वात्। न च प्राकट्यं स्वप्रकाशमिति वाच्यम्। अन्यथा देवदत्तानुभूतेऽन्यतथापि तेन देवदत्तस्य स्फुरतीति व्यवहारानुपपत्तेः।

---

* अत्र आदर्शे इत्थं दृश्यते—यथास्थितं मुद्रितम्।

**ननु उभयोः स्वयम्प्रकाशत्वकल्पना न युक्ता, अन्यतरस्य स्वयम्प्रकाशत्वे आत्मैव स्वयंप्रकाश इति चेत्; न इत्याह**—प्रमितिरनु- 88 - 2
भवः इति। **अथवा—हानोपादानोपेक्षाः प्रमाणफलमिति केचित्, तत्राह**—प्रमितिरनुभवः **इति। न हि हानादीनां इतरेतरव्यभिचारिणां** 88 - 2
**मानफलता युक्ता अव्यभिचारिण्यनुभवे सतीत्यर्थः॥**

**ननु संवेदनमेवार्थसारूप्येण प्रमाणम्, प्रमीयते अनेनेति व्युत्पत्तेः, अर्थोपलब्ध्यात्मना तदेव प्रमाणफलमिति सुगतमतानुसारिणः।**

---

ता. कर्मत्वव्यतिरेकेण उभयोरपरोक्षत्वे हि द्वयोः स्वयंप्रकाशत्वमिति मत्वा शङ्कते—**नन्विति**। तथापि प्रमितिरेव स्वयंप्रकाशा किं न स्यादिति; अत आह—**अन्यतरस्येति**। प्रमितीनां बह्वीनां स्वयंप्रकाशत्वकल्पने गौरवादेकस्यैवात्मनः स्वयंप्रकाशत्वकल्पनं युक्तमित्यर्थः। यद्यपि (प्रमाणफलमस्यैतावन्मात्रव्यावृत्त्येयमाशङ्कते) [प्रमाणफलस्य हानादिव्यावृत्त्या संविन्मात्रत्वसिद्धये इयमाशङ्का] तथापि ग्रन्थस्यैकत्वविवक्षया अथवेत्युक्तमिति द्रष्टव्यम्। प्रमातृव्यापारात् संवेदनमिति भाट्टमतमवलम्ब्योक्तम्, गुरुमते त्वन्यथा

---

भा. सापि स्फुरतीति व्यवहारप्रसङ्गः। न च तज्ज्ञानजन्यप्राकट्यं तस्यैव स्फुरति नान्यस्येति वाच्यम्। तस्मिन् ज्ञानजन्यत्वासम्भवस्याप्युक्तत्वात्। कुलालजन्यघटस्याप्य(स्या)प्रत्यक्षत्वप्रसङ्गाच्च॥

ननु विषयत्वान्यथानुपपत्त्या विषयस्य ज्ञातताश्रयत्वं वाच्यम्, ततश्च तस्या ज्ञानादुत्पत्तेः पुरुषविशेषप्रत्यक्षत्वं च वक्तव्यमिति चेत्, न—परोक्षस्येव विषयस्यापरोक्षस्यापि तया विना विषयत्वोपपत्तेः। न चातीतादावपि विषये प्राकट्यं सम्भवति। न चापरोक्षत्वं तेन विना न भवतीति वाच्यम्। प्रत्यक्षविषयत्वमात्रेण तत्सम्भवात् विषयविशेषज्ञातताविद्विषयत्वस्यापि सम्भवाच्चेति भावः। प्रमाणफलस्यास्वप्रकाशत्वे विश्वान्ध्यप्रसङ्गः, न च प्रकाशात्मबलाद्विश्वावभास इति वाच्यम्; प्रमाणवैफल्यापातात्, अतो ज्ञानमेव स्वप्रकाशो नात्मेत्याह—**नेत्याहेति**॥

आत्मा संविद्विषयः संविदन्यत्वात् घटवत् इत्याशङ्क्य परिहरति—

88-3 तद्व्यावर्तयति—प्रमाणं तु इति। प्रमाणं तु प्रमातृव्यापारः चतुष्टयसन्निष्कर्ष एवेति प्राभाकराः। ननु अहमिदं जानामीत्यात्मानात्मविष-
88-4 यावनुभवौ भेदेन प्रत्यक्षसिद्धाविति ; नेत्याह—तत्राहमिदं जानामीति॥

ननु यदवभासते तत् ज्ञानकर्मतयैवावभासते इति विषयेषु नियमात् आत्माप्यवभासते चेत् कर्मतयैव नाश्रयमात्रतया इति चोदयति
89-2 —ननु नायं विषयानुभवनिमित्तः इति। ननु प्रत्यक्षज्ञानस्य विषयजन्यत्वात् कारकतापि विषयस्य वक्तव्या, तत्र कथमेकस्यां क्रियायामेकस्यैव कर्तृत्वेन कर्मत्वेन च विरुद्धरूपद्वयान्वयः? कर्तुश्च गुणभावात् कर्मणश्च प्राधान्यात् एकस्य रूपद्वये वैरूप्यप्रसङ्गश्चेति ; तत्राह—
89-3 तस्मिंश्च द्रव्यरूपत्वेनेति। तत्र सामान्यांशस्यात्मानात्मसाधारण्यादात्मत्वायोगात् विशेषांशस्य निरंशत्वात् न कर्तृकर्मव्यवस्थेति परिहरति—
89-7 न चै[नै]तद्युक्तमिति। निरवयवस्य युगपत् कार्यद्वयपरिणामायोगाच्च इत्याह
89-7 —अपरिणामित्वादिति॥

किञ्च—ग्राहकरूपस्यापि विषयतया सिद्धिरस्ति वा? न वा?। न चेत्, स्वयंप्रकाशत्वसंविदाश्रयत्वसिद्ध्योरनभ्युपगमात् असिद्धिप्रसङ्गः।
90-1 कर्मतया सिद्धिश्चेत् तत्राह—प्रमेयस्य चेति। तस्मात् संविद्बलादेव त्रितयसिद्धौ संविदाश्रयपक्षपातितया अहमः सिद्धेः न इदमंशोऽहङ्कारः
90-2 इत्युपसंहरति—तस्मान्नीलादिज्ञानफलमिति॥

---

ता. इत्याह—**प्रमातृव्यापार** इति। **भेदेन प्रत्यक्षसिद्धाविति**। तेन भवदभिमता ग्राहकतया सिद्धिः न सिध्यतीति भावः। दूषणान्तरमाह—**कर्तुश्चेति**। **सामान्यांशस्य**। द्रव्यांशस्येति यावत्। द्रव्यरूपेणात्मनः आत्मानात्मसाधारण्यात्। **विशेषांशस्य**। बोधांशस्येति यावत्। **स्वयंप्रकाशत्वसंविदाश्रयत्वसिद्ध्यो-**

---

भा. **ननु यदवभासत इत्यादिना॥**

अन्तःकरणधर्मातिरिक्तोऽहमनुभवविषयो न स्वद्रष्टा दृश्यत्वादस्वप्रकाशत्वात् घटवत्। प्राभाकरमतेऽपि वक्ष्यमाणविधया दृश्यत्वादहङ्कारेऽपि

**अहङ्कारस्यात्मव्यतिरिक्तत्वं साधयितुमात्मनः स्वयंप्रकाशत्वसाधनाय विकल्पयति**–तत्रेदं भवानिति। उत सोऽपि–**अनुभवोऽपीत्यर्थः**। 90-5-6
**तत्र आत्मा चित्स्वभावः अनुभवो जडप्रकाशः इति पक्षो नोपपद्यते** इत्याह—तत्र न तावत् इति। **ननु अप्रकाशमानमेव प्रमाणफलं** 90-7
**चक्षुरादिवद्विषयमवभासयेदिति कुतो विश्वस्यानवभासः?। न—विषयप्रकाशजननेन चक्षुषः प्रकाशकत्वात् संविद्वैलक्षण्यात्। संवेदनं तु**

---

ता. रिति। वेदान्तसिद्धान्तस्य गुरुमतस्य चानभ्युपगमादित्यर्थः। दृष्टान्तस्य

---

भा. पक्षे न हेत्वसिद्धिः। न च प्रथमस्य चैतन्ये व्यभिचारः। तस्मिन् चैतन्यविषयत्वस्य दृश्यत्वस्याभावात्। न चाप्रयोजकत्वम्, लाघवेन दृश्यत्वमात्रस्यैव स्वद्रष्टृत्वाभावेन व्याप्तत्वात्। न चैवं वस्तुत्वमात्रस्यानात्मत्वेन व्याप्तिग्रहप्रसङ्ग इति वाच्यम्। तदा द्रष्टृभावेन तद्व्याप्तेरेवासिद्धेः। न चासन्नेव कश्चिद्व्याप्तेर्ग्रहीतेति वाच्यम्। असतो दर्शनाश्रयत्वादेरसम्भवात्। दर्शनरूपत्वे वा तस्य नाममात्रे विवादः। न चाहङ्कारोऽहङ्कारग्राह्यः दृश्यत्वात् घटवदित्यहङ्कारान्तरबाधे स्वद्रष्टृत्वमिति वाच्यम्। कर्तृकर्मविरोधप्रसङ्गप्रतिकूलतर्कपराहतत्वात्। घटज्ञानधाराकालीनाहङ्कारस्याननुभवप्रसङ्गेन [अहङ्कारा]नुसन्धानायोगाच्च॥

किञ्च अहङ्कारस्यानात्मत्वे आत्मभेदे प्रमाणाभावादैक्यमिति लाघवम्। विपर्यये तु गौरवम्। प्रतिशरीरं तद्भेदस्यावश्यकत्वात्, ईश्वरस्यापि तदन्यत्वात्। न चैवमलौकिकात्मकल्पनागौरवम्। अनात्मा ह्यहङ्कारोऽन्तःकरणमेवास्माभिरिष्यते, न तु तदन्यः। अन्तःकरणातिरिक्तात्मा च परैरभ्युपेत इति नास्मन्मते अलौकिकात्मकल्पनागौरवम्। प्रत्युत भेदिनामेव केषाञ्चिदलौकिकः कश्चिदीश्वरो नित्यज्ञानं चेत्यलौकिककल्पनम्। तस्मात् पक्षधर्मतामहिम्ना अहङ्कारातिरिक्त एवात्मा। स च धारानुसन्धानानुपपत्तिप्रमितमहङ्कारातिरिक्तचैतन्यमिति न बाधोऽपीत्यभिप्रेत्या(ह)स्वप्रकाशस्याहङ्कारस्य स्वप्रकाशात्मा स्वरूपं विरोधान्न सम्भवति इति वक्तुमात्मनः स्वप्रकाशत्वमिदानीं टीकाकृत् साधयतीत्याह—**अहङ्कारस्यात्मव्यतिरिक्तत्वमिति**॥

**स्वयंप्रकाश एव, न प्रकाशान्तरहेतुः। अतः चक्षुरादिवैलक्षण्यात् प्रदीपवदवभासमान एवानुभवोऽर्थं प्रकाशयति। न च प्रदीपालोकस्यार्थानुभवजननेनैव चक्षुरादिवदर्थस्य प्रकाशकता। किन्तु पृथगेव। तथा हि—ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधितया प्रसिद्धम्। तत् अव्यवधानेन आलोकेन क्रियते। न तदुभयं करोति चक्षुः। अज्ञानत्वादनालोकत्वाच्च। तस्मादनुभवः सजा-**

---

ता. साध्यवैकल्यमाशङ्क्याह—**न चेति**। पृथगेवेत्युक्तं समर्थयितुं प्रकाशस्य द्वैविध्यमाह—**तथा हीति। ज्ञानप्रकाश्यत्वादिति**। ज्ञानप्रकाश्यत्वं ज्ञानविषयत्वम्, तदिदमज्ञानविरोधि लोके प्रसिद्धम्, तस्मादन्यदेवालोकप्रकाश्यत्वं तमोविरोधीत्यर्थः॥

इदानीमुपसंहारव्याजेनानुमानमाह—**तस्मादिति**। **प्रकाशमान एव**

---

भा. **चक्षुरादिवैलक्षण्यादिति**। अव्यवधानेन प्रकाशकत्वं प्रदीपवदस्य ततो वैलक्षण्यमित्यर्थः। **प्रदीपवदवभासमान एवेति**। गेहे घटो दृष्टो न वेति दर्शनसंशये न दृष्ट इति तद्व्यतिरेकनिश्चये वा अर्थसत्तानिश्चयाभावेनार्थसत्तानिश्चयस्य ज्ञानसत्तानिश्चयप्रयोज्यत्वात्। यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति न्या(त्यन्व)यात् प्रकाशस्य स्वनिवर्त्यप्रकाशजातीयानावृतस्यैव प्रकाशकत्वनियमाच्च। ततश्च प्रकाशमानमेव ज्ञानमर्थं प्रकाशयति। किञ्च घटादिज्ञानस्य स्वसत्तायां प्रकाशनियमाभावेन पूर्वोक्तविधया तत्संशयापत्तिः। ग्राह्यनिश्चयाभावव्यतिरिक्ततत्संशयसामग्र्यास्सत्त्वात्। न च तदा कस्यापि संशयोऽस्तीति ततोऽपि ज्ञानं स्वसत्तायां प्रकाशमानमेव। न च प्रकाशमानत्वं तस्य ज्ञानान्तरविषयतया, अनवस्थाप्रसङ्गात्। अनुव्यवसायस्य निरस्यत्वाच्च। अतः प्रदीपवत् सजातीयप्रकाशनिरपेक्षं प्रकाशमानमेव ज्ञानं **अर्थं प्रकाशयति**। अर्थे अविद्यासंशयादिनिवृत्तिरूपप्रकाशं जनयतीत्यर्थः॥

प्रदीपेऽप्यव्यवधानमसिद्धमित्याशङ्क्याह—**न चेति**। आलोकस्वाभावज्ञाने व्यभिचारेण ज्ञानाहेतुत्वात्तमोनिवृत्तावेव हेतुत्वमिति नाव्यवधानासिद्धिरित्याह—**किन्तु पृथगेवेति**। इत्थं तर्किते प्रमाणमाह—**तस्मादिति**।

तीयप्रकाशान्तरनिरपेक्षः प्रकाशमान एव विषये प्रकाशादिव्यवहारनिमित्तं भवितुमर्हति। अव्यवधानेन विषये प्रकाशादिव्यवहारनिमित्तत्वात् प्रदीपालोकवत्। न च चक्षुषा सजातीयप्रकाशेन प्रदीपस्यालोकेनेव घटस्य प्रकाश्यता। स्वयमेव प्रकाशगुणत्वात्। तद्विषयज्ञानप्रकाशं जनयति चक्षुरिति चेत्, तथापि विजातीयज्ञानेनैव प्रदीपस्य प्रकाश्यतेति न सजातीयालोकापेक्षा। तस्मात् व्यवहितप्रदीपस्येव अनुभवस्याप्यप्रकाशमानत्वे प्रदीपप्रकाश्यस्येव विश्वस्यानवभासप्रसङ्ग इति॥

इत्युक्ते सजातीयप्रकाशेन प्रकाशमानताप्रसक्तिं वारयति—**सजातीयेति**। **सजातीयप्रकाशान्तरनिरपेक्ष** इत्युक्ते चक्षुरादिवदप्रकाशमानत्वप्रसक्तिं वारयति—**प्रकाशमान एवेति**। **प्रकाशादिव्यवहारनिमित्तत्वात्** इत्येतावत्युक्ते चक्षुरादिव्यभिचारो मा भूदिति **अव्यवधानेनेति**। प्रदीपस्य चाक्षुषत्वाच्चक्षुषश्च तैजसत्वात् सजातीयप्रकाशप्रकाश्यत्वमसिद्धमिति; अत आह—**न चेति**॥ ता.

**अनुभवः प्रकाशमान एव** विषयं प्रकाशयति अव्यवधानेनावरण[निवर्तक]त्वादालोकवदित्यर्थः। तच्च प्रकाशमानत्वं स्वप्रकाशत्वं विना न सिद्ध्यति प्रकारान्तरस्य निरस्तत्वादित्यभिप्रेत्याह — **सजातीयप्रकाशान्तरनिरपेक्ष** इति॥ भा.

**तस्माद्व्यवहितप्रदीपस्येति**। ननु प्रदीपस्य व्यवहितत्वं पुरुषापेक्षया? प्रकाश्यापेक्षया वा? नाद्यः, तथाविधस्यापि स्वसंसृष्टघटादि[प्रकाशकत्वात्।] प्रदीपसाध्यः प्रकाश इत्युक्तम्। द्वितीये तस्य प्रकाश्यसम्बन्धाभावादेवाप्रकाशकत्वम्, न त्वप्रकाशमानत्वेन, प्रदीपस्य तमसा आवृतत्वाभावेनाप्रकाशमानत्वाभावाच्च। न चाज्ञातत्वमप्रकाशमानत्वम्। अज्ञातस्यापि दीपस्य तमोनिवर्तकत्वात्। न चाज्ञातात् प्रदीपा[त् विषये]अ(न्व)विद्यानिवृत्तिरूपप्रकाशो न भवतीति तदर्थं इति वाच्यम्। प्रदीपस्याविद्यानिवृत्तौ साक्षाद्वा ज्ञानं प्रत्यहेतुत्वेन परम्परयापि वा अहेतुत्वादिति चेत्, न—व्यवहितप्रदीपस्येत्यस्य आवृतप्रकाशस्येत्यर्थो विवक्षितः। ततश्च यथा उलूकारोपितान्धकारावृतसा-

ननु प्रमातृचैतन्यमेव जडानुभवबलादात्मानं विषयं चावभास-
90-9 यतीति चोदयति—मैवम्—प्रमाता चेतनः इति। तत्र यदि चैतन्यस्य
विषयोपरागहेतुरनुभवः पराभ्युपगतबुद्धिपरिणामवदिष्यते, तत् युज्यते।
90-11 चिदात्मप्रकाशस्य तु जडानुभवाधीनता अनुपपन्नेत्याह—तत्र—स्वयं-
(प्रकाश)चैतन्यस्वभावोऽपि सन्निति। चेतयतिक्रियापि पूर्वानुभवफलवज्जड-
रूपानुभवफलं चेत्, तस्यापि प्रदीपस्थानीयत्वात् चेतयतिक्रियानव-
91-1 स्थेति दूषयति—किञ्च प्रमाणफलेनेति। उभयचैतन्यस्वभावपक्षे पुरुषद्व-
यवत् नान्योन्याधीनसिद्धिता नापि संविदात्मसम्बन्धावगमः इत्याह
91-4 —द्वितीये(ऽपि) कल्पे इति॥

ननु चिद्गुणमपि पुरुषान्तरसंवेदनं न पुरुषान्तरस्य स्वयंप्रका-

---

ता. यथा साङ्ख्या वेदान्तिनश्च आत्मनोऽसङ्गितया स्वतो विषयोपरागाभावात् तन्निमित्ततया बुद्धिपरिणाममिच्छन्ति तथैवाभ्युपेयते? किं वा आत्मनः प्रकाशनिमित्तमनुभवः? इति विकल्प्य, आद्यमङ्गीकरोति—**तत्र यदीति**। द्वितीयं दूषयति—**चिदात्मेति**। चेतयतिक्रियाया अपि क्रियात्वात् फलमवश्यमभ्युपगन्तव्यम्। तत् स्वयंप्रकाशम्? जडरूपं वा?। आद्ये संविदः स्वयंप्रकाशत्वसिद्धिः, द्वितीये तस्यापि जडत्वात् फलान्तरमभ्युपेयं इत्यनवस्थेत्याह—**चेतयतिक्रियापीति**। **चिद्गुणम्**। चित्स्वरूपमिति यावत्॥

---

भा. चित्रप्रकाशस्य न प्रकाशकत्वं तथा अज्ञानावृतज्ञानस्यापीत्यर्थः। यद्वा, **व्यहितप्रदीपस्येति** बहुव्रीहिः। **व्यवहितप्रदीपस्य** घटादेरिव **अनुभवस्याप्रकाशमानत्वे विश्वस्यानवभासप्रसङ्ग** इति सम्बन्धः॥

**परः** साङ्ख्यो वेदान्ती वा। **जडानुभवाधीनता अनुपपन्नेति**—चैतन्यस्य ग्राह्यात्मस्वरूपतया तदधीनचैतन्योपरागाभावादित्यर्थः। द्वितीयपक्षे स्वाश्रयसंविद्बलादात्मनः सिद्धिरिति प्राभाकरपक्षोऽनुपपन्न इत्याह—**पुरुषद्वयवदिति**। सम्बन्धमात्रस्य प्रमाणागम्यत्वात् स्व(ाश्रय)प्रकाशसंविदात्मनोश्च स्वस्य मानान्तरस्य वा अविषयत्वादत्यन्तसंविद्भिन्नसंविदात्मसम्बन्धसिद्धिरपि न स्यादित्याह—**नापि इति**। **चिद्गुणमिति**। चित् प्रकाशो गुणः स्वरूपं

**शम्, तथा आत्मा चैतन्यगुणोऽपि न स्वयं प्रकाशते इति शङ्कते**—अथ 91.5
चैतन्यस्वभावत्वेऽपीति। **परिहरति—विशेषे** हेतुर्वाच्यः इति। **अनुभवोऽपि** 91.6
**तर्हि न स्वयंप्रकाशः स्यात् पुरुषान्तरसंवेदनवत्, अव्यवधानात् न इति**
**चेदात्मन्यपि तत् समानमिति भावः। किञ्चेति स्पष्टार्थः। अस्तु तर्हि** 91.7
**जडात्मनः स्वयंप्रकाशानुभवाश्रयतया सिद्धिरिति; नेत्याह**—तृतीये- 91.8
ऽपीति। **अयमर्थः—संवेदनं नाम गुणो द्रव्यं कर्म वा भवति। कर्मत्वे प्रकाशत्वफलत्वयोरनुपपत्तिः। द्रव्यत्वेऽप्यणुमध्यमानन्तपरिमाणानां अणुपरिमाणत्वे विषयेऽपि तावन्मात्रावभासः स्यात्। न हि खद्योतप्रकाशमात्रसंसृष्टस्य घटस्य सर्वात्मना अवभासः। महापरिमाणत्वे तदाश्रयतया आत्मनोऽपि सर्वत्रावभासप्रसङ्गः। मध्यमपरिमाणत्वे सावय-**

---

ता. **न स्वयंप्रकाशः स्यात्**। स्वयं न प्रकाशेतेत्यर्थः। पुरुषान्तरसंवेदनाद्वैलक्षण्यमाशङ्क्य परिहरति—**अव्यवधानादिति। गुण इति** तार्किकप्राभाकरौ। **द्रव्यमिति** साङ्ख्याः आत्मनः स्वरूपत्वात्। **कर्मेति** भाट्टाः परिणामक्रियात्वात्। अन्त्यं कल्पं दूषयति—**कर्मत्व** इति। **अणुमध्यमानन्तपरिमाणानाम्।** मध्ये इति शेषः। संवेदनस्य स्वयंप्रकाशत्वात् तस्य आत्मगुणत्वे च आत्मन एव

---

भा. यस्य संवेदनस्य तदित्यर्थः। यथा प्रदीपस्य प्रकाशगुणवत्तया स्वप्रकाशत्वेन लोके प्रसिद्धिः तथा प्रथमं स्वप्रकाशत्वमात्मनो वक्तुं चैतन्यस्य गुणत्वमाह—**अयमर्थ इत्यादिना। न हि खद्योतेति**। ननु खद्योतस्येव ज्ञानस्य न विषयेण संयोगः सम्बन्धः किन्तु विषयविषयिभाव एव, स च सर्वघटस्वरूपेणापि इति खद्योताद्विशेष इति चेत्, तर्हि अल्पप्रदेशावच्छिन्नघटे तत्परिमाणसन्निकर्ष[ज]-ज्ञानस्यापि सकलघटे तत्परिमाणविषयत्वप्रसङ्गः। न हि विपुलावयवावच्छिन्नघटे संयोग[ज]ज्ञानादिव ततस्तत्परिमाणसंशयनिवृत्तिर्दृश्यते। एवमल्पप्रकाशाश्रयस्यात्मनोऽपि तावन्मात्रमेव प्रकाशेत। तत्र विषयविषयिभावसम्बन्धस्याभावेन कथमपि खद्योतवैष(म्येषूप)[म्यानुप]पत्तेः। अतो घटादावपि ज्ञानस्य विषयविषयिभावातिरिक्त एव सम्बन्धो वाच्यः इति [न] तत्रापि तद्वैषम्यमिति भावः। **सर्वत्रावभासप्रसङ्ग इति**। आत्मनः परममहत्परिमाणप्रकाशाश्रयत्वेन तस्य

वत्वेन अवयवपरतन्त्रता स्यात्। गुणत्वे सति आत्मैव प्रकाशगुणः इति प्रदीपवदात्मा स्वयंप्रकाशः स्यात्। स च गुणः स्वाश्रयोपाधौ न जायते प्रकाशगुणत्वात् आत्मन्यव्यभिचारात् आदित्यादिप्रकाश-
91-9 गुणवत्, इति आत्मैव स्वयंप्रकाश इति। तदेतदाह—अनिच्छतोऽप्यात्मैव चितिप्रकाशः इति ॥

---

ता. तद्गुणवत्तया स्वयंप्रकाशता स्यात् न त्वाश्रयतया तत्सिद्धिः प्रदीपवदित्याह —**गुणत्वे सतीति**। प्रदीपे भास्वरं रूपं प्रकाशगुणशब्देनाभिधीयते। द्रव्यत्वेन प्रभायाः प्रदीपगुणत्वासम्भवात्। प्रदीपज्ञानयोश्च प्रकाशशब्दश्चिरंतन-रीत्या यथाकथंचिन्नेतव्यः। न च अवभासकत्वं निमित्तीकृत्य उभयसाधारण इति वाच्यम्। अवभासशब्देन ज्ञानविवक्षायां अनुभवे अनुभवान्तरजनकत्वा-भावात् तस्यासंभवात्। प्रभाजनकत्वस्य चानाशङ्कनीयत्वात्। (प्रकाशगुणं अप्रकाशो गुणस्येति) [**प्रकाशगुण इति** प्रकाशो गुणोऽस्येति यद्यर्थः] तर्हि नन्य-प्रकाशगुणवत्तया स्वयंप्रकाशः स्यादित्यत आह—**स चेति**। **अव्यभिचारा(च्चे)-दिति**। सुषुप्तादावप्यात्मस्वरूपभूतप्रकाशानपायादिति भावः ॥

---

भा. शरीरावच्छिन्नप्रदेश इव तदनवच्छिन्नप्रदेशोऽपि प्रकाशेत, तदा चात्मपरि-माणे न कस्यापि विप्रतिपत्तिः स्यादिति भावः ॥

ननु एवं जन्यप्रकाशाश्रयत्वं आत्मनः स्वप्रकाशत्वमित्युक्तं स्यात्, न हि तत् परस्यानिष्टमित्यत आह—**स च गुण इति**। विपक्षे दण्डमाह—**आत्म-न्यव्यभिचारादिति**। ज्ञाना[श्रय]स्यात्मनोऽनुसन्धानदर्शनेन आत्मनः सर्वदा भानमस्तीत्यर्थः। नन्वात्मनोऽपि नैरन्तर्येणोत्पन्नविषयप्रकाशाश्रयतया प्रकाशो-पपत्तेः न तावता तस्य प्रकाशस्य नित्यत्वम्। न च गौरवात् प्रकाशनानात्वं बाधितमिति वाच्यम्; घटादिप्रकाशनानात्वस्य सिद्धान्तेऽपि सत्त्वात्। अतिरिक्तप्रकाशस्य (सारूप्य)[स्वात्मन्य]भावादिति चेत्, विषयज्ञानाभाव-दशायां सुषुप्त्यादावात्मप्रकाशस्य सत्त्वात् ॥

किञ्च, न घटप्रकाशादात्मसिद्धिः। ज्ञानस्य स्वातिरिक्ते स्वविषय एव संशयादिनिवर्तकत्वात्। ज्ञानातिरिक्तस्य ज्ञानजन्यव्यहारविषयत्वादौ तदाश्रयविषया(न्यान्यत्वं) न्यतरत्वं प्रयोजकमित्यविषयस्यात्मनो ज्ञानं व्यवहारादिजनकमिति चेत्, लाघवेन ज्ञानातिरिक्तस्य ज्ञानविषयत्वेनैव ज्ञानजन्यव्यवहारविषयत्वादेरभ्युपगन्तव्यत्वात्। अहङ्कारस्य ज्ञानविषयत्वे बाधकाभावाच्च। न चैवमात्मत्वानुपपत्तिः, इष्टत्वात्। ज्ञानविषयत्वेनानात्मत्व(त्वे)साधने परोक्षज्ञानेऽपि तस्याविषयत्वप्रसङ्गात्। तदङ्गीकारे चात्मा शरीरव्यतिरिक्तो ज्ञानाश्रय इत्यादिज्ञानस्य तदविषयत्वेन शरीरान्यत्वादेस्तद्धर्मत्वासिद्धेर्मूर्खपण्डितयोरविशेषः स्यात्॥ भा॰

न च कर्तृकर्मविरोधादपरोक्षज्ञानविषयत्वं नेति वाच्यम्। ज्ञानविषयत्वे तस्यापरोक्षज्ञानसामग्र्यां सत्यां तस्य दुष्परिहरत्वात्। न च मनसोऽनिन्द्रियत्वात्तदपरोक्षज्ञानसामग्र्येव नेति वाच्यम्; दुःखादेरप्यज्ञानप्रसङ्गात्। न च तेऽपि स्वप्रकाशाः, अज्ञानविरोधिप्रकाशस्य ज्ञानत्वात्। नापि तेषां ज्ञानविशेषत्वमिति वाच्यम्। दुःखादेरपि सविषयत्वप्रसङ्गात्। दुःखं ज्ञानमित्यप्रमितेश्च। घटादावपि तव(भ्र)प्रमाजन्यं फलं व्यवहार एव, न ततोऽन्यत्। ज्ञातता[न]ङ्गीकारात्। स च त्वया आत्मन्यङ्गीकृत एवेति किमिति नात्मनः कर्मत्वम्?। विषयतया जनक(मे)[स्यै]व कर्मत्वात्। ज्ञाने सविषयत्वातिरिक्तसकर्मकत्वस्य नैयायिकादिभिरनङ्गीकृतत्वाच्च। अतो द्रष्टुरन्यत्वं कर्मण(इतरा) इति अहङ्कारस्याद्रष्टृत्वं वक्तव्यं ते, न तु प्रमाणसिद्धप्रत्यक्षविषयत्वाभावः॥

एतेन संविदतिरिक्तत्वे सति संविद्विषयतया संविज्जन्यापरोक्षव्यवहारविषयतया संवित्कर्मत्वम्, आत्मा च [न] संविद्विषयतया संविज्जन्यव्यवहारविषय इति न संवित्कर्मेति निरस्तम्। लाघवेन संविद्यतिरिक्तत्वे सति संविज्जन्यापरोक्षव्यवहारविषयत्वस्यैव तत्त्वात्। अहङ्कारे संविद्विषयत्वे बाधकाभावाच्च। तस्मादहङ्कारोऽपरोक्षसंविद्विषय एवेति नान्यविषयज्ञानादन्यस्मिन् व्यवहारादिरिति तदतिरिक्तस्तत्प्रकाशः सर्वदा सिध्यन् अजन्य एव वाच्य इति भावः॥

**ननु मध्यमपरिमाणमेव स्वावयवाश्रयं फलमस्तु, आत्मपर-**
91 - 9 **तन्त्रता तु घटस्येव भूतलतन्त्रता इति ; नेत्याह**—न तदतिरिक्ततथाविध-फलसद्भावे इति । **प्रदीपेन प्रकाशितमितिवत् मया अवगतमित्यनुभवा-दात्मैव चित्प्रकाशः, अन्यथा काष्ठेन प्रकाशितमितिवदुपचारप्रसङ्गा-**

---

ता. ननु उक्तरीत्या सावयवस्य अवयवपरतन्त्रतैव स्यात्, न त्वात्मपरतन्त्रतेति; तत्राह—**आत्मपरतन्त्रतेति । काष्ठेन प्रकाशितमिति ।** काष्ठस्थज्वालया प्रकाशिते काष्ठेन प्रकाशितमिति यथोपचारः तथा स्वनिष्ठानुभवेन प्रकाशिते स्वेन प्रकाशितमित्युपचारः स्यादित्यर्थः । संवेदनस्य स्वयंप्रकाशत्वात् तस्य च आत्मस्व-

---

भा. ननु एवमपि चिद्गुणवत्त्वमात्म[नः न] तद्रूपत्वमिति शङ्कां हृदि कृत्वा शङ्कान्तरमाह—**ननु मध्यमेति । प्रदीपेनेति ।** प्रदीपप्रकाशेनेत्यर्थः । उप-**चारप्रसङ्गादिति** । प्रकाशहेतुकविषयप्रकाशस्याप्रकाशात्मन्युपचारप्रसङ्गा-दित्यर्थः । विषयज्ञानातिरिक्तमहङ्कारज्ञानमभ्युपगन्तव्यम्, अन्यथा तद्व्यवहा-रानुपपत्तेरित्युक्तम् । तथा च तदेवाजन्यं स्वप्रकाशमस्तु, आवश्यकत्वात् । न च जन्यमपि घटादिज्ञानम् । प्रमाणाभावात् । तस्य जानामीति घटादिवत् ज्ञानाकारत्वानुभवाच्च । स्वप्रकाशनित्यज्ञानादेव तत्तज्जडवृत्त्या तत्तद्विषयसम्ब-न्धव्यवहारोपपत्तेश्च । अन्यथा सुखादिव्यवहारासम्भवात् । तद्विषयजन्यज्ञाना-सम्भवात् । तच्च ज्ञानमात्मनो न भिन्नम् । तद्भेदे प्रमाणाभावात् । आत्मनोऽपि दृश्यत्वापत्त्या अनात्मत्वापत्तेश्च । मम ज्ञानमित्यादितद्धर्मानुभवस्य वृत्ति-विषयतया तदभेदे बाधकाभावाच्च । अतो मया अवगत इत्यनुभवोऽनुभवात्मा-भेदविषय एवेति भावः ॥

एवं गुरुमते निरस्तेऽपि; ननु अस्तु अहङ्कारधर्मातिरिक्ता संवित्, तथापि घटसंवित् पटसंविदिति भेदानुभवान्नानैव वाच्येति कथमद्वितीयात्मा-भेदस्तस्या अनुभवबलादङ्गीक्रियते ? ततश्च सिद्धान्त्यभिमतसंविदात्माभेदे न किञ्चित् प्रमाणमिति सोऽपि दृश्य एव वाच्यः । तथा च दृश्यत्वस्य नानात्म-त्वेन नियमः, न वा आत्मनोऽनिदमंशत्वमित्यभिप्रेत्याक्षिपतीत्याह—

दिति भावः। **प्रमाणान्तरापेक्षया पृच्छति—कथमिति। संवेदनस्य** 91 . 10
**भेदावभासशून्यत्वादनुभवाधीनसिद्धिकस्य च विषयवदनात्मत्वादेक:**

---

रूपत्वादात्मनः स्वयंप्रकाशत्वमिति वक्तुं पृच्छतीत्याह—**प्रमाणान्तरेति**। ता.
तादृक्संवेदनाश्रयतया सिद्धिः किं न स्यादिति; अत आह—**अनुभवाधीनेति**।

---

**प्रमाणान्तरेति**। वृत्त्यतिरिक्ता संवित् संवित्प्रतियोगिकस्वसमानसत्ताकभेद- भा.
वती न भवति, संवित्प्रतियोगिकानौपाधिकभेदवती न भवतीति वा, संविद्भिन्ना न भवतीति वा, संवित्त्वात् व्यतिरेकेण घटवत्। न च साध्याप्रसिद्धिः, तत्प्रसिद्धिं विनापि संविद्भेदसंवित्त्वाभावयोर्घटादौ व्याप्तिग्रहसम्भवात्। न च तृतीये साध्ये बाधः, शुक्तौ रजतकाल इव भेदकालेऽपि तदधिकरणे तदभावस्य अविरुद्धत्वात्। न चाप्रयोजकत्वम्, वृत्त्यतिरिक्तानन्तसंवित्कल्पने गौरवात्। न च घटसंविन्न भवति पटसंविदित्यनुभवबाधः, नियमेनोपाधिंपरामर्शे सत्येव प्रतीयमानभेदस्य असति अभेदबाधके औपाधिकत्वस्यैव वक्तुमुचितत्वात्॥

एतेन—ननु एवं सति घटेच्छा न भवति पटेच्छेति प्रतीयमानभेदोऽप्यौपाधिक एव स्यादिति प्रत्युक्तम्। अन्तःकरणधर्मातिरिक्तेच्छायां प्रमाणाभावेन कारणभेदानुविधायिन्याः विच्छिद्य विच्छिद्यानुभूयमानाया इच्छायाः अभेदानुपपत्तेश्च। चक्षुरादिकं च वृत्तावेव कारणमिति वक्ष्यतीति न संविद्भेदे किञ्चित् साधकमस्ति। तस्माद्यथा **नैयायिकादिपरमते** पाकरक्ते नीलोऽयं न भवतीति बुद्धिर्नैल्यव्यतिरेकमेव विषयीकरोति न नीलभेदम्, **गुरुमते** घटनैल्यं न भवति पटनैल्यमिति बुद्धिर्घटादिव्यतिरेकमेव विषयीकरोति न तु नैल्यभेदम्, **भट्टमते** वर्णभेदबुद्धिः व्यञ्जकध्वनिभेदमेव, तथा घटसंविन्न भवति पटसंविदिति बुद्धिर्घटादिभेदं विषयीकरोति। अतो न संविद्भेदानुभवविरोध इत्यभिप्रेत्याह—**संवेदनस्येति**॥

दृश्यत्वस्य अनात्मत्वनियमो नास्तीत्यादिदूषणं परिहरति—**अनुभवाधीनेति**। कथं तस्यानात्मत्वनियमः? तत्राह—**एक इति**। अनुभवस्य एकत्वादेव स्थायित्वम्, अतोऽनुभव आत्मेति नोक्तदूषणद्वयमित्यर्थः। किञ्च, प्रत्य-

92-1 **स्थाय्यात्मैवानुभवः इत्याह**—प्रमाणजन्यश्चेदनुभवः इति। **सामान्यविशेष-**
92-2 **भेदकल्पनागौरवादात्मा एक एवानुभवः इत्याह**—सर्वानुभवानुगतं चेति।
92-3 **स्वगतभेदप्रतिभासशून्यतामेव प्रपञ्चयति**—न च नीलानुभवः इति।
**ननु नीलसंवित्स्थितिकाले पीतसंविदोऽभावात् स्थितिविनाशौ दृष्टौ**
92-5 **धर्मिभेदं कल्पयतः इति चोद्यमुद्भाव्य परिहरति**—ननु विनष्टाविनष्टे-
त्यादिना। **ननु साधनसन्निधानादुत्तरसंवेदनस्य जातत्वात् संविद्द्वय-**
**यौगपद्यायोगात् विनष्टा पूर्वसंविदिति चेत्–न–इतरेतराश्रयादित्याह**—
92-6 सा च जन्यत्वे इति। **सिद्धस्यैव संवेदनस्य विषयोपरागनिमित्तं**

---

ता. युक्त्यन्तरमाह—**सामान्येति**। अनुभवत्वसामान्यं तद्विशेषाणां भेदश्च कल्पनीय इति गौरवात् आत्मैवानुभव इति कल्पनं लघीय इत्यर्थः। बुद्धिबोध्यत्वादित्युक्ते

---

भा. क्षानुमितानुभवेऽपि अनुभवैकाकारबुद्धिरपि तदभेदे प्रमाणम्। न च तदभेदबुद्धि-र्जातिविषयेति न ततोऽप्यस्याभेदसिद्धिरिति वाच्यम्। व्यक्तिभेदे ह्यन्यतः प्रमिते अनुगतबुद्धिर्जातिविषया, यथा घटाद्यनुगतबुद्धिः। तत्संशये ह्यनुगम-बुद्धेर्व्यक्त्यभेदविषयत्वमेव लाघवात् कल्प्यम्। [यथा] घटाकाशादिष्वनु-गताकाशबुद्धेः। अन्यथा अनेकव्यक्तेस्तदतिरिक्तजातेश्च कल्प्यतया गौरवादि-त्यनुभवानुगतबुद्धेरनुभवैकत्वं सिध्यति। ततश्च स एवात्मेत्यभिप्रेत्याह—**सामान्यविशेषेति** ॥

ननु एकस्मिन्नपि विषये अनुभवोत्पत्तिविनाशानुभवयोर्बाधकाभावात्तद्भेद आवश्यक इति जातिविषयैवानुगतबुद्धिरिति शङ्कते—**ननु नीलेति**। ननु साधनोपादानं वृत्त्यर्थत्वेनान्यथासिद्धमिति परिहरति—**न—इतरेतरेति**। विनिगमनाभावात् संवित्स्वरूपेऽपि चक्षुरादीनां हेतुत्वमाशङ्क्याह—**सिद्ध-स्यैवेति**। [**विषयोपरागनिमित्तमिति**। विषयोपरागः] विषयोपरागप्रयो-जकान्तःकरणवृत्तिः तत्प्रयुक्तो विषयाधिष्ठानचैतन्यजीवचैतन्याभेदश्च ॥

एतेन चैतन्यस्यापि किं विषयोपरागस्संयोगः? तादात्म्यं वा। नाद्यः, निरवयवचैतन्ये तदयोगात्। नि(श्चिते)[श्चले]ऽपि घटे भवतः संयोगस्य चैतन्य-क्रियापूर्वकत्वप्रसङ्गेन परिच्छिन्नत्वाद्यापत्तेश्च। नान्त्यः, (अ)युतसिद्धयोस्ता-

**साधनमिति कल्पनं लघीयः विषयोपरक्तसंविज्जन्मसाधनत्वकल्पनादिति भावः ॥**

**सत्यपि संविदां स्वगतभेदे अतिसादृश्यात् ज्वालायामिव परोपाधिमन्तरेण भेदो न विभाव्यते इति सुगताः कल्पयन्ति, तान्निराकरोति**—एतेनातिसादृश्यादिति । **किञ्च—ज्ञानान्तरगम्यत्वे भेदस्य** 92 - 8
**अतिसादृश्याद्भिन्नेष्वभेदभ्रमजन्म स्यात्, स्वयंप्रकाशस्य तु भेदः प्रकाशाभिन्नः इति प्रकाशमानतैव युक्तेत्याह**—न हि चित्प्रकाशस्येति। 93 - 1
न च यथा जीवस्येति **स्पष्टार्थः । एकत्वेन पुष्कलप्रकाशस्याप्यविद्या-** 93 - 3
**प्रतिबन्धे प्रमाणमुक्तम्, इह तु अप्रतिबद्धपुष्कलकारणत्वात् भेदप्रकाशेन भवितव्यमित्याह**—अभिहितं तत्रेति । **ननु संविदः सादृश्यप्रतिबद्ध-** 93 - 5
**भेदावभासाः स्थायिप्रकाशबुद्धिवेद्यत्वात् ज्वालावत् इत्यनुमातुं**

---

ता. घटे व्यभिचारवारणाय **प्रकाशेति** विशेषणम् । तथाप्येकक्षणवर्तिनि प्रकाशे व्यभिचारः स्यादित्यत उक्तं—**स्थायीति** ॥

---

भा. दात्म्यायोगात् इति संवित्स्वरूपे चक्षुरादिर्हेतुरिति प्रत्युक्तम् । घटाद्यधिष्ठानचैतन्यस्य वृत्त्या अवच्छेदे हि तत्साक्षिचैतन्यादौपाधिकभेदाभावात्तदभिन्नमिति वृत्तिद्वारा तदपि चक्षुश्चैतन्योपरागहेतुरिति [भावः]। (**तद्विषयोपरक्तेति** ।) [**विषयोपरक्तेति**] विषयोपरागप्रयोजकान्तःकरणवृत्तेः त[दुपर](दतिरि)क्तचैतन्यस्य वेत्यर्थः । अथ वा स्वरूपसम्बन्धातिरिक्त एव ज्ञानस्य ज्ञेयेन सम्बन्धो वाच्य इति सम्बन्धांशेऽपि चक्षुरादेर्हेतुत्वं व(क्तव्य)[क्तु]मेवमुक्तमिति द्रष्टव्यम् ॥

तस्मात् यद्यप्यात्मातिरिक्तं ज्ञानं नास्ति, तथापि तस्य सत्यादिवाक्यार्थस्य तदेकदेशज्ञानपदवाच्यत्वायोगात् वृद्धव्यवहारानुसारेण ज्ञानस्वरूपान्तःकरणवृत्त्युपहितं तद्विशिष्टं वा चैतन्यं ज्ञानपदवाच्यमिति वृत्तेरपि ज्ञानतया वृ[त्तेरुत्पत्ति]विनाशावेव ज्ञानमुत्पन्नं विनष्टमिति वा अनुभूयेते, न तु चैतन्यस्य। तस्याहङ्काराधर्मस्य स्वतन्त्रस्य बाह्याभ्यन्तरनिखिलविषयस्य रूपादिमात्रविषयचक्षुरादिजन्यत्वासम्भवात्, चक्षुराद्यन्वयव्यतिरेकयोरन्यत्रोपक्षीण-

93 - 6 **शक्यते, तत्राह—न हि सामान्यतोदृष्टमिति। पूर्वापरैकरूपानुभवः, भेदस्य च प्रकाशेन भवितव्यम्, इत्यनुभवयुक्ती। कथं पुनरात्मचैतन्यस्य**

---

भा. त्वाच्च, चक्षुरादिकं विना [स्वप्ने]बाह्यादिविशेष्यकानुभवस्य तदजन्यत्वाच्च ॥

न च स्वप्ने मनसा स्मर्यमाणे स्मर्यमाणस्यारोप इति वाच्यम्। ज्ञानलक्षण-
प्रत्यासत्तेर्निरस्तत्वात् अन्धस्य बहिः शुक्लाद्यारोपवत् स्वप्नस्य परोक्षत्वापत्तेश्च।
एवं सुषुप्तिसाक्षिणोऽपि ज्ञानस्य चक्षुरादिजन्यत्वानुपपत्तिः। नापि तन्नाशहेतोः
प्रमाणं (नास्ति) अस्ति। अहङ्कारधर्माणां व्यधिकरणानां तदनाशकत्वात्।
कारणनाशान्नाश इति चेत्, न—अनादित्वात्। तस्मादनुभवोऽनादिर्नित्य एक
इति स एवात्मा, मया विदित इत्यनुभवात् अहङ्कारानात्मत्वसाधकहेतोः
पक्षधर्मताबलात् 'अत्रायं पुरुषः स्वयञ्ज्योतिः' 'आत्मैवास्य ज्योतिः'
इत्यादिशास्त्राच्च सिध्यतीति भावः ॥

ननु निर्विषयज्ञानासम्भवात् सविषयमात्मज्ञानं वाच्यम्, तच्च न
सम्भवति, मुक्तौ स्वातिरिक्तविषयाभावात्, स्वस्य विषयत्वायोगात्, एवं
प्रमाप्रमाबहिर्भूतज्ञानमपि न सम्भवति, न चात्मज्ञानं प्रमा, तद्वेद्याविद्यादेः
सत्यत्वापातात्, नाप्यप्रमा, दोषाजन्यत्वात् इत्यभिप्रेत्याशङ्कते—कथं पुनरिति ॥

वस्तुतो निर्विषयमेव चैतन्यं तत्तद्विषयावच्छेददशायां तस्य तस्यावभास
इति न मुक्तौ तस्य ज्ञानस्वरूपत्वानुपपत्तिः। न चार्थप्रकाशत्वं कथं विषया-
भावे स्यादिति वाच्यम्। अर्थसम्बन्धदशायामर्थप्रकाशस्यैव तस्य मुक्तावपि
सत्त्वात्। प्रदीपप्रकाशादिव्यावृत्तरूपविशेषस्यैव ज्ञानलक्षणत्वेन अर्थपद-
वैयर्थ्याच्च। तद्व्यावृत्तरूपविशेषानङ्गीकारे पराभिमतज्ञानत्वस्यापि तद्धर्मत्व-
व्यवस्था न स्यात। तज्ज्ञानस्वरूपातिरिक्ततद्व्यवस्थापकाभावात्। एतेन ज्ञान-
त्वाभावे किं नाम ज्ञानम्? तत्सत्त्वे वा अद्वितीयत्वक्षतिः इति प्रत्युक्तम्।
जातिविशेषव्यवस्थापकव्यक्तिविशेषस्यैव तल्लक्षणत्वात्। व्यक्तेरपि व्यावर्तकतया
लक्षणत्वोपपत्तेः ॥

नापि प्रमात्वाप्रमात्वप्रयुक्तदोषोऽपि। [किं] तद्वति तत्प्रकारकज्ञानत्वं
प्रमात्वम् तदभाववति तत्प्रकारकज्ञानत्वमप्रमात्वम्? उत अबाधितार्थकत्वं

**नित्यस्य विषयानुभवत्वमिति ; तदाह**—तस्माच्चित्स्वभाव एवेति ॥ 93-7

**ननु स्वयंप्रकाशमानात्मचैतन्यस्य विषयानुभवत्वेऽपि विषयानुभवमेव निमित्तीकृत्य अहमिति द्रष्टृपरामर्शादात्मैवाहङ्कारः संवृत्तः इति चोदयति**—बाढं, अत एवेति। **द्रष्टृरूपेण परामर्शस्य विषयानुभवो** 93-11 **निमित्तम्, अन्यथा द्रष्ट्रादिविभागशून्यः चिन्मात्रावभासः स्यादिति भावः। मैवम्—सुषुप्तावात्मन्यवभासमानेऽप्यहङ्कारस्यानवभासमान-**

---

प्रमात्वम् तद्विपरीतत्वमप्रमात्वम्? इति। आद्ये स्वरूपज्ञानं प्रमैव, अविद्यादेस्तद्विषयस्य शुक्तिरूप्यवद्विद्यमानत्वात्। द्वितीये अप्रमैव। तद्विषयस्य विश्वस्य बाधितत्वात्। न चैवं दोषजन्यत्वापत्तिः। त्वदभिमतेश्वरज्ञानस्य यथार्थत्वेऽपि गुणाजन्यत्ववत् दोषासहकृतसामग्र्यजन्यत्ववच्च कल्पिताविद्याविषयस्यापि चैतन्यस्यानादित्वेन दोषाजन्यत्वात्। त्वदभिमतेश्वरज्ञानमपि भ्रान्तिविषयविषयतया असद्विषयमपि न दोषजन्यम्। कुतोऽस्य विद्यमानार्थकस्य दोषजन्यत्वम्। अतो ज्ञानस्यात्मत्वे न किञ्चित् बाधकमस्तीत्यभिप्रेत्याह—**तदाह-तस्मादिति** ॥ भा.

एवं सर्ववाद्यभिमताहङ्कारस्यात्मत्वं निरस्तम्। इदानीं सिद्धान्ते स्वप्रकाशचैतन्यमहङ्कारोऽस्त्विति न तस्य दृश्यत्वादनात्मत्वमिति शङ्कते—**ननु (स्वविषय इति)। [स्वयंप्रकाशमानेति।]** यदि दृग्रूपात्मा अहङ्कारः स्यात् तर्हि सर्वगतदृग्रूपात्मना सर्वस्य युगपद्भानं स्यात्, न वा किञ्चिदपि प्रकाशेत, अविशेषात्। अतस्तत्तदाकारवृत्तिसहकृतं चैतन्यमवभासकं वाच्यम्। सा च निरवयवस्यात्मनः [न] परिणाम इति तत्परिणामी कश्चिद्वाच्यः। स चाहङ्कार एव। अहं जानामीत्यनुभवात्। दुःखादिपरिणामोऽपि तस्यैवेत्युक्तम्। अतो न स्वप्रकाशात्मैवाहङ्कार इति परिहारं **दुःखिप्रमास्पदेत्यादि**नोक्तं (231-पु.) सरेत्यभिप्रेत्य दूषणान्तरमाह—**नै[मै]वमिति** ॥

स्वसमानसत्ताकदुःखादिधर्मवाननात्मा, असत्यपि आवरणे कदाचिदप्रतीयमानत्वात्, घटादिवत्। अप्रतीयमानत्वं च नाज्ञानगोचरत्वम्; अहङ्कारे तदभावात्। नापि प्रकाशाविषयत्वम्; अहङ्कारसाक्षिणि जीवे व्यभिचारात्।

94-1 त्वात् इति व्यतिरेकप्रदर्शनेन परिहरति—सत्यमेवमिति। ननु विषयानु-
भवनिमित्तो द्रष्टृरूपावभासोऽहमुल्लेखः, तद्रहिते सुषुप्ते कथमस्य प्रसङ्गः
94-2 इति चोदयति—कथमिति । विषयानुभवनिमित्तो विषयावभासः
स्यात् जडत्वात्, न तन्निमित्तः चिदात्मपरामर्शः, इति परिहरति—
94-2 नीलानुषङ्गो यश्चैतन्यस्येति । ननु सुषुप्ते द्रष्टृरूपाभावे कथं अहमिति
94-3 तद्रूपपरामर्शः?। नेत्याह—तत्र यदि नामेति। द्रष्टृत्वं सप्रतियोगिरूपम्,
स चेदहमर्थः अनात्मैवाहङ्कारः स्यादिति भावः ॥

ननु पराग्व्यावृत्तं द्रष्टृरूपं भोक्तृत्वमेव, कथं तत् सुषुप्तावनु-
94-6 भूयते ? इति चोदयति—नन्वहमिति। न—अहङ्कारस्य त्वया निष्प्रति-
94-7 योगिकात्ममात्रत्वाभ्युपगमात् इति परिहरति—नैतत् सारमिति। ननु
94-8 स्वरूपमपि विषयानुभवादेव अहमिति व्यज्यताम्; नेत्याह—नैतच्छक्य-
मिति । ततश्च विषयोपरक्तसप्रतियोगिकस्वभावस्याहङ्कारस्यात्मत्वं
95-2 सुषुप्तावनुभवविरुद्धमिदमापत्स्यते इत्याह—ततश्च विषयोपरागेति।
आत्मनस्तु सर्वात्मकत्वात् न पराग्व्यावृत्तता, अहमुपरागादेव

---

ता. द्रष्टृत्वं सप्रतियोगिकं निष्प्रतियोगिकं वा ?। आद्ये अनात्मैव स्यात्, द्वितीये त्वात्मरूपेण प्रतिभासोऽप्यस्तीत्याह—द्रष्टृत्वमिति । सत्यं अहंरूपं निष्प्रतियोगिकमेव, प्रतिभानन्तु तस्य प्रतियोगिसापेक्षमेव इत्याशङ्कते—ननु स्वरूपमपीति । आत्मस्वरूपमपि प्रत्यक्तया पराग्व्यावृत्तमेवेत्याशङ्क्याह—आत्मनस्त्विति ॥

---

भा. अत एव न वृ(त्ति)[त्त्य]विषयत्वमपि। [अपि तु] प्रकाशप्रयुक्तसंशयाद्यगोचरत्वानधिकरणत्वम्। न चैतस्याहङ्कारे असिद्धिः; सुषुप्त्यादौ तदभावेन तद्विषयप्रकाशाभावेन तदा तस्य प्रकाशप्रयुक्तसंशयाद्यगोचरत्वाभावात्। न चाप्रयोजकत्वम्; सुषुप्तौ प्रकाशमानस्यात्मनः तदानीमप्रकाशमानाहङ्काराभेदायोगादिति भावः ॥

सुषुप्तावहङ्कारानुभवस्तत्कालीनाहमिति[धी]बलात् कल्प्यते ? उत्थितस्याहङ्कारस्मृत्या वा ?। नाद्यः, तदा कस्यापि तथा अनुभवानुपलम्भात्;

व्यावृत्त्यवभासः इत्यर्थः । भवत्येव इत्यादिः स्पष्टार्थः । यथा पूर्वस्मिन् 95 - 4
दिने अहमित्यभिमन्यमान एवासम्, एवमनुभूते स्मृतिनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादहङ्कारस्य सुषुप्तेऽपि स्मृतिः स्यादित्यर्थः। अहङ्कारादिप्रतिभासस्य नित्यचैतन्यरूपस्याविनाशात् तज्जन्यसंस्कार-प्रसूता स्मृतिरनुपपन्नेति चोदयति—अविनाशिनः संस्काराभावादिति। 95 - 5
परिहारः—ह्यस्तनोऽपीति ॥ 95 - 5

**ननु सिद्धान्ते कथमहङ्कारस्मृतिः? तदवभासिसाक्षिचैतन्यस्य नित्यत्वात्। उच्यते—अहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य विषयभावमापद्यते। तद्वृत्तिसंस्कारजन्यस्मरणावच्छिन्नमन्तःकरणं पुनः**

---

ता. **पूर्वस्मिन् दिन** इति। यथा अतिवृत्तजाग्रत्स्वप्नयोरहमित्यभिमन्यमान एवासमिति स्मृतिः तथा सुषुप्तेऽपि अहमित्यभिमन्यमान एवासमित्युत्थितस्य स्मृतिः स्यादित्यर्थः। ननु अनुभूते स्मृतिनियमो नास्ति इत्याशङ्क्य, तथाप्यात्मनः स्मर्यमाणत्वात् तदभेदाच्चाहंकारस्य स्मृतिः स्यादेवेत्याह—**अनुभूते** इति ॥

ननु अहंकारावभासय चैतन्यस्य नित्यतया नाशाभावात् तज्जन्यसंस्काराभावे त्वन्मतेऽपि कथमहंकारस्मृतिः स्यात्? इति चोदयति पूर्ववादी—**नन्विति**। चैतन्यस्य नित्यत्वेऽपि तदवच्छेदकाहंवृत्तेरनित्यतया विशिष्टरूपस्यानित्यत्वात् तत्संस्कारस्य सद्भावात् तज्जन्यस्मरणरूपाहंवृत्तौ संजातायां तदवच्छिन्नचैतन्यस्यापि स्मरणरूपतोपपद्यते इति परिहरति—**उच्यते** इति। विषयानुभवाभावात् तदा-

---

अन्यथा स्मरणमपि कदाचि[त् तथा स्यादित्याह]—**यथेति**। **उच्यते—अहंवृत्त्यवच्छिन्नमेवेति**। न चैवं कर्तृकर्मविरोधापत्तिः; अन्तःकरणस्य वा तदवच्छिन्नचैतन्यस्य वा वृत्तिजन्यफलाश्रत्वाभावेनाकर्मत्वात्। संस्कारस्य वृत्तिविनाशक्रियाफलत्वेन अतत्फलत्वा[त् कादाचित्कतया च अ] नियतत्वेन कर्मत्वप्रयोजकफलत्वाभावादिति भावः ॥ भा.

ननु घटादिज्ञानधाराकालीनात्मनः कथमेवं सति स्मरणं स्यात्? तत्काले ज्ञानान्तरायोगात्। तदाकारवृत्तिविशिष्टचैतन्यनाशस्यैव संस्कारहेतुत्वे घटादिस्मृतिर्वा कथं स्यात्? इति चेत्, मैवम्—क्वचित् सम्भवाभिप्रायेणेद-

स्मृत्यनुभवावच्छेदकमिति स्मरणोपपत्तिः। ननु सुषुप्तावनुभूतसुख-
स्याप्याश्रयपक्षपातितया अहमुल्लेखादस्त्येव सुषुप्तेऽहमनुभवः इत्याह—
95-7 नन्वस्त्येव सुषुप्ते अहमुल्लेखः (अहमनुभवः) इति। ननु सुखमनुभूतं चेत् तस्य
विषयजन्यत्वाद्विषयानुभवनिमित्त एव तत्राप्यहमुल्लेखः स्यात् इति;
96-1.2 नेत्याह—नात्मनोऽन्यस्येति। सत्यमस्ति इत्यादिः स्पष्टार्थः। ननु सुखाव-
मर्शस्य मुख्यसुखालम्बनत्वं परित्यज्य कथं विरोधिदुःखाभावविषयतयो-
पचारः कल्प्यते ? शाब्दे हि ज्ञाने लक्षणा स्यात्, प्रत्यक्षस्तु सुखावमर्शो
96-4 न लक्षणामर्हतीति चोदयति—कथमिति। मुख्यसुखाभावात् दुःखाभावस्य
96-4 लक्ष्यस्य संप्रतिपन्नत्वात् इति परिहरति—स्वप्ने तावदित्यादिना॥

---

ता. श्रयतया अहमुल्लेखाभावेऽपि सुखानुभवसद्भावात् तदाश्रयतया अहमुल्लेखः किं न स्यात् ? इति शङ्कते—**ननु सुषुप्ताविति**। **प्रत्यक्षस्त्विति**। यद्यपि केषांचित् मते अवमर्शोऽनुमानम्, अन्येषां स्मृतिः, तथाप्यशाब्दत्वाभिप्रायेण प्रत्यक्ष इत्युक्तम्। तत्कालानुभूतसुखविशिष्टात्मनः प्रत्यभिज्ञायमानत्वाद्वा प्रत्यक्ष इत्युक्तम्।

---

भा. मुक्तम्। वस्तुतस्तु यद्वृत्त्यवच्छिन्नचैतन्येन यस्य संशयादिरूपाप्रकाश-निवृत्तिर्भवति त(द्विकारज)[द्विनाशज]संस्कारः तद्गोचरो भवति, न तु तदाकारवृत्तिविनाशात्। संशया(देरपि)[दपि] स्मृतिप्रसङ्गात्। नापि तदाकारनिश्चयरूपवृत्तिविनाशात्। घटाद्याकारज्ञानात् तत्संस्काराभावप्रसङ्गात्। परमते तदाकारवृत्त्यभा(वप्रसङ्गात)[वात्।] तन्निश्चयनाशस्यैव तत्प्रयोजकत्वेन तदाकारभागस्य व्यर्थत्वाच्च। तन्निश्चयत्वं च तद्गोचरसंशयादिविरोधित्वमिति तदेव प्रयोजकम्। घटाद्याकारवृत्त्यवच्छिन्नचैतन्यं च घटतद्वृत्तितदाश्रयतत्साक्षिसंशयविरोधीति तन्नाशात् तत्सर्वगोचरसंस्कार इति न किञ्चिदनुपपन्नमिति॥

द्वितीयं शङ्कते—**ननु सुषुप्ताविति**। अहङ्कारस्य तत्सर्तृकोटित्वेन तथा स्मरणसम्भवान्न तस्य स्मृतिविषयत्वं कल्पयितुं शक्यम्, येन सुषुप्तौ तदनुभवः कल्प्येतेत्याह **टीकाकारः—सत्यमस्तीति** (96-पु)। ननु अहङ्कारे स्मृत्यविषयत्वस्यापि निश्चेतुमशक्यतया सन्दिग्धासिद्धो हेतुरिति चेत्, न—अहङ्कारस्य जाग्रतीव स्वप्नेऽप्यनुभवे तदनुभवस्याप्यवश्यानु(भव)[भाव्य]तया कदाचि(दि-

**ननु परामर्शसामर्थ्यादेव मुख्यमेव सुखं कल्प्यतामिति;** नेत्याह—यदि पुनः सुप्तः सुखमिति। विशेषतः इति। **विषयविशेषोपरक्त-** 96-5 97-1
**तयैवेत्यर्थः। दुःखाभाव एव परामर्शविषयः इत्यत्र लिङ्गमाह**—व्यपदे- 97-2
शोऽपीति। **ननु सुखानुभवस्यापि लिङ्गमस्ति प्रसन्नेन्द्रियत्वादीति;**
तत्राह—यत् पुनः सुप्तोत्थितस्येति। तदसदिति **स्पष्टार्थः। उत्तरौ च** 97-3-4
**चोद्यपरिहारग्रन्थौ स्पष्टार्थौ। तस्मात् न सुषुप्तौ भोक्तृतयाऽप्यहमुल्ले-**
**खोऽनुस्मर्यते इति। नन्वनुभूतेऽपि न स्मृतिनियमः। सत्यम्। आत्मन्य-**
**नुस्मर्यमाणे तावन्मात्रस्याहङ्कारस्य अहमित्येव स्मृतिनियमः स्यादि-**
**त्युक्तम्॥**

**ननु दुःखाभावो विद्यमानोऽपि नानुभवितुं शक्यते। प्रति-**
**योगिस्मरणाभावात्। सम्भवति च मुख्य एव स्वरूपानन्दानुभवः।**

---

ता. **अहमुल्लेखः**—अहमित्याकारः॥

न केवलं दुःखाभावानुभवासम्भवः सुखानुभवश्च संभवतीत्याह—**संभवति चेति।** साक्षिस्वरूपत्वात् सुखस्य साक्षिणश्च अनुभूयमानत्वात्

---

भा. दम्)दहमित्यभिमन्यमान एवास्वाप्समिति स्मृतिप्रसङ्गेन तदभावस्यापि निश्चितत्वात्। किञ्च 'स्वमपीतो भवति' इत्यादिवाक्यादहमर्थस्य स्वापे लयो निश्चीयते, जीवस्य स्वतो लयासम्भवेन तदुपाधिलयादेव तस्य वक्तव्यत्वात्, उपाधिश्च तत्र तादृशोऽहङ्कार एव युक्त इति तस्याननुभवो निश्चीयत इति भावः॥

सुखपरामर्शस्य सुखविषयत्वमपि **टीकाकृदाक्षिपति—न तदिति**(96-पु)। तत्र किमुत्थितस्य सुखपरामर्शो दुःखभावविषयस्मृतिः अनुभवो वा? नाद्यः इति **विवरणकारस्तदाक्षिपति—ननु दुःखाभाव इति।** सुषुप्ताविति शेषः। न द्वितीयः, तस्य सुखविषयत्वे सम्भवति दुःखाभावविषयत्वकल्पनायोगादित्याह—**सम्भवति चेति।** आत्मनि तावदनौपाधिकप्रेमा दृश्यते, स चात्मत्वसुखसमवायित्वप्रयुक्तो न भवतीत्युक्तम्॥

ननु सिद्धान्ते दुःखाभावस्यात्मत्वात् तस्य च स्वतःपुरुषार्थत्वात् तत्प्रयुक्तत्वं तस्यास्त्विति चेत्, न– तस्य स्वतोऽपुरुषार्थत्वात्। स्वतन्त्रका-

**ननु तदपि सुखमविद्यावृतं न प्रकाशमर्हति। न—अनावृतसाक्षिचैतन्यसुखांशस्य प्रकाशोपपत्तेः। जागरणे तर्हि किमिति नावभासते?। भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्। तीव्रवायुविक्षिप्तप्रदीपप्रभावत्**

ता. सुखस्यापि तदात्मकस्यानुभवः संभवतीत्याह—**न—अनावृतेति**। ननु अवस्थाद्वये सुखमनुभूयते चेत् सुषुप्तावस्थायामेव सुखपरामर्शः कथं इत्याशङ्क्य तत्र अधिकमभिव्यज्यमानत्वादिह च तदभावादिति सदृष्टान्तमाह—**तीव्रेति**॥

भा. मनायां सुखमात्रस्य प्रयोजकत्वे सम्भवति दुःखाभावस्यापि तत्प्रयोजकत्वकल्पने गौरवात्। (तस्मात्) तत्कामनायाः पश्चादिकामनावत् सुखशेषतयोपपत्तेः तस्य तत्त्वे प्रमाणाभावाच्च। न चैवं वैपरीत्यापत्तिः। सुखस्य स्वतोऽपुरुषार्थत्वे कामशास्त्राणामानर्थक्यप्रसङ्गात्। ततो जायमानस्य सुखस्यापुरुषार्थत्वात्। तत्सुखात् दुःखध्वंसानुत्पादाच्च। तत्सुखकालीनदुःखानुत्पादः फलमिति चेत्, न—तस्य निषेधशास्त्रप्रामाण्यादेव सिद्धत्वात्। किञ्च दुःखानुत्पादस्य फलत्वे दुःखबहुले प्रवृत्तिर्न स्यात्। दुःखप्रागभावानां पुरुषार्थभूतानां भूयसां विनाशात्। न हि पुरुषार्थहानिकरेऽपि कश्चित् प्रवर्तते। दुःखप्रागभावान्तरस्येव तस्यापि कामनासम्भवात् प्रवर्तकचिकीर्षादिविघटनेन तस्य साध्यत्वसम्भवाच्च॥

सुखकालीनदुःखाभावस्य बहुकालसम्बन्धितया तदर्थी तत्र प्रवर्तत इति चेत्, न—प्रवर्तकरागादिविघटने तस्याप्यनन्तकालवृत्तित्वात्। (सु)[दुः]खबहुले क्षुद्रसुखे बहुकालं दुःखाभावासम्भवाच्च। एवं दुःखस्योत्पन्नस्य ध्वंसेऽपि न कामना। तत्पूर्वमेव तज्ज्ञानात् ध्वंससिद्धेः। एवमनागतेऽपि दुःखे तस्यासत्त्वे तद्ध्वंसकामनायोगात् तत्राप्यावश्यकदुःखसाक्षात्कारजन्यध्वंसे न यत्नापेक्षेति न कामना सम्भवति। अतोऽनागतदुःख एव कामना वाच्येति कुशिलिनो नैयायिकमुमुक्षवः। दुःखेऽपि चेन्न कामना क तर्हि कामनेति हता कामनातपस्विनी। तस्मात् स्वरूपसुखानुभवविरोधितया दुःखस्य तदनुत्पाद एव सुखानुभवाय काम्यत इति क्लृप्तम्। अत एव भारपीडितस्य तदपगमे दुःखानुत्पादे सुखं मे संवृत्तमिति स्वरूपसुखानुभवः। तस्मात् सुखात्मत्वेनैवात्मनि परमप्रेमेति सुखपरामर्शस्य सुषुप्तौ विषयजन्यसुखविषयत्वाभावेऽप्य[ज]न्यसुखविषयत्वं सम्भवतीति भावः॥

मिथ्याज्ञानविक्षिप्ततया न स्पष्टमवभासते। सुषुप्तौ तु तदभावादधिकं व्यज्यते इति ॥

नतु उत्थितस्य दुःखाभावपरामर्शो विद्यते, स कथं प्रतियोगिज्ञानाभावादननुभूतः परामृश्यते ? । उच्यते—अनुभूतमेव सुखमुत्थितस्यानुस्मर्यमाणं तत्र विरोधिदुःखाभावमर्थापत्त्या गमयति–अनुभूतं चेत् सुखम्, नास्ति दुःखमिति। अतो दुःखाभावो नानुस्मर्यते, किं तु प्रमीयते इति। एवमुत्थितस्य ज्ञानाभावपरामर्शोऽपि। ज्ञानविरोधिनोऽज्ञानस्यानुभूततया स्मर्यमाणस्यानुपपत्त्यैव प्रमीयते नानुस्मर्यते ॥

ता॰ ननु त्वन्मतेऽपि दुःखाभावानुभवासंभवात् तत्परामर्शोऽनुपपन्न इति शङ्कते—**ननु उत्थिस्येति**। अर्थापत्तिस्वरूपमभिनयेन दर्शयति—**अनुभूतं चेदिति**। कथं तर्हि तदवगतिरिति ; तत्राह—**किं तु इति**। न किञ्चिदवेदिषं इति उत्थितस्य ज्ञानाभावपरामर्शवत् दुःखाभावपरामर्शः किं न स्यात् ? इत्याशङ्कय, उक्त न्यायं तत्राप्यतिदिशति—**एवमुत्थितस्येति** ॥

भा॰ **परमप्रेमेति***मित्यर्थः। न चैवं सुखीति सर्वदा अनुभवः स्यादिति वाच्यम्। सुखरूपस्यात्मनः सुखपद(वद्वाक्या)[लक्ष्या]र्थस्य सुखपदवाच्यत्वायोगेन असुखेनापि वृत्तिविशेषेण विशिष्टस्यैव चैतन्यात्मानन्दस्य तत्पदवाच्यतया वृत्तिविशेष[ज्ञानाभावेन सुखीत्यनुभवाभावात्। आत्मनि सदा परमप्रेमा तु उपपद्यत एव, वृत्तिविशष]ज्ञानाभावेऽपि आनन्दानुभवस्य सदा वक्तव्यत्वात्। अन्यथा सदा आत्मनि प्रेमायोगात्। अत एव मम सुखमुत्पन्नं नष्टमित्यनुभवोऽप्युपपद्यते सुखपदवाच्यवृत्ते(श्च): स्वरूपचैतन्यात्मकसुखतादात्म्येन सुखमित्यनुभवात्। वृत्तिविशेषादानन्दाभिव्यक्तिरिति सुखविशेषार्थं विषयोपादानं च युज्यते। दर्पणादिद्रव्यविशेषे प्रतिबिम्बतारतम्यवत् सुखतारतम्यमपि विषयविशेषभिन्नाभिव्यञ्जकवृत्तितारतम्यादुपपद्यत इति भावः ॥

**अनुभूतं चेत् सुखमिति**। परामर्शहेत्वनुभवे प्रतीयमानस्वरूपानन्दस्यापि तदा दुःखविरुद्धत्वादित्यर्थः। **एवमिति**। ननु एवं सुषुप्ताविच्छादि-

* अत्र ग्रन्थः त्रुटितः,

**ननु जागरणेऽप्यनुभूयमानमज्ञानं कथं ज्ञानविरोधि स्यात्?। न—अवस्थाविशेषविशिष्टस्याज्ञानस्य सुषुप्तेऽनुभवात्। तस्य च जागरणेऽपि घटादिज्ञानविरोधितादर्शनात् पटावगमसमये। ननु अस्मर्यमाणत्वादेव ज्ञानानां सुषुप्तौ ज्ञानाभावोऽनुमीयते। न—अतिवृत्तज्ञानाना-**

---

ता. ननु ज्ञानाज्ञानयोः जागरे सहावस्थानात् ज्ञानविरोधित्वमज्ञानस्यानुपपन्नमिति शङ्कते—**नन्विति**। घटज्ञानाकारेण परिणताज्ञानस्य पटादिज्ञानविरोधित्ववत् सुषुप्त्यवस्थाकारेण परिणताज्ञानस्य अशेषविशेषविज्ञानविरोधित्वं भवतीति परिहरति—**न—अवस्थेति** ॥

ननु विरोध्यनुभवानुपपत्तिमन्तरेण लिङ्गान्तरादेव ज्ञानाभावानुमानं संभवतीति शङ्कते—**नन्वस्मर्यमाणत्वादिति**। अननुस्मरणस्य ज्ञानाभावानुमापकत्वं न संभवति गच्छतस्तृणादिविषयज्ञानाननुस्मरणे अनैकान्तिकत्वादित्याह—**न—अतिवृत्तेति** ॥

---

भा. ज्ञानाभावः कथं सिध्येत् तद्विषयाज्ञानाभावादिति चेत्, न—अज्ञानकल्पितेष्टविषयाज्ञानाभावेऽपीच्छाविरहेणैव तज्ज्ञानाभावस्यानुभवितुं शक्यत्वात्। न चैवं प्रकाशमानात्मनि इच्छाभावासिद्धेः कथं तज्ज्ञानाभाव[वानुभव] इति वाच्यम्। अविवेकिनामात्मन्यपि तदा ज्ञानाभावनिश्चयसत्त्वेन तत एवेच्छा(दि)[द्य]भावज्ञानसम्भवात्। विवेकिनां तु तदा अन्तःकरणाभावनिश्चयादेव तन्निश्चय इति न किञ्चिदनुपपन्नमिति भावः ॥

**अवस्थाविशेषेति**। आवारकत्वमवस्थाविशेषशब्दार्थः। तस्य—आवारकाज्ञानस्य। पटावगमसमये हि घटावारकमज्ञानमस्ति न च तज्ज्ञानमित्यावारकाज्ञानस्य तज्ज्ञानासमानकालीनत्वनियमात्तदज्ञानेन तज्ज्ञानाभावः कल्प्यत इत्यर्थः। ननु किमस्मर्यमाणत्वमात्रं हेतुः? उत तत्तुल्ययोगक्षेमात्मादौ स्मर्यमाणेऽप्यस्मर्यमाणत्वम्?। आद्य आह—**अतिवृत्तेति**। चत्वरे गजाद्यभावदृष्टान्तेन द्वितीयमाशङ्क्य, परमते सुषुप्तावात्मादेरननुभवात् हेतोरसिद्धिः। दृष्टान्तेऽपि न ततस्तत्सिद्धिः, एकस्यानुभवेऽप्यन्यस्य कस्यचिद्विद्यमानस्यापि कुतश्चिन्निमित्तादननुभवसम्भवात्। एवमेकस्मिन् स्मर्यमाणे-

मपि सतामस्मर्यमाणत्वात् । प्रातर्गजाभावोऽपीदानीमनुस्मर्यमाणात् गजविरोधिपदार्थात् अर्थापत्त्या प्रमीयते, न गजविषयस्मृत्यनुदयमात्रात्, व्यभिचारित्वात् । तस्मात् विशिष्टाज्ञानसुखानुभवानुपपत्तिगम्यौ ज्ञानाभावदुःखाभावाविति मन्तव्यम् ॥

नन्वज्ञानसुखानुभवयोः साक्षिचैतन्यस्य चाविनाशिनः संस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरणं स्यात् ?। उच्यते—अज्ञानगतचैतन्याभासजन्मोपाधित्वादज्ञानसुखसाक्षिविकल्पानुभवस्य अज्ञानावस्थाभेदेन चैतन्याभासानां भिन्नत्वात् तद्विनाशसंस्कारजं स्मरणमज्ञा-

---

ता. नन्वु स्मृत्यभावेन प्रातर्गजाभावप्रमितिवत् सुषुप्तेऽपि ज्ञानाभावानुमानं किं न स्यात् ? इति ; अत आह—**प्रातरिति**। अनुभूते स्मृतिनियमाभावादित्यर्थः। अज्ञानसुखयोरात्मनश्च साक्षिचैतन्यादेवानुभव उक्तः। तत्र चैतन्यस्याविनाशिनः संस्काराभावे कथं त्रितयविषया स्मृतिः स्यात् ? इति चोदयति—**नन्वज्ञानेति**। अज्ञानाकारेण सुखाकारेण साक्ष्याकारेण च परिणतेऽज्ञाने प्रतिबिम्बितस्य चैतन्यस्य तत्प्रतिभासत्वात् तस्य च विशिष्टरूपेण विनाशितया संस्कारसंभवात् स्मृतिरुपपद्यते इति परिहरति—**उच्यते** इति ॥

नन्वज्ञानस्यैकत्वे कथं तत्प्रतिबिंबितचैतन्याभासानां भेदः ? इत्यत आह—**अज्ञानावस्थेति**। अज्ञानज्ञानाकारेण सुखज्ञानाकारेण साक्षिज्ञानाकारेण चाज्ञानस्य परिणामा भिद्यन्ते, अत एव तत्प्रतिबिंबितचैतन्याभासाश्च भिद्यन्ते इति यावत् ॥

---

भा. ऽप्यन्यस्यास्मर्यमाणत्वसम्भवात् । न हि युगपदनुभूतं युगपदेव स्मर्यत इति नियमः घटिकादिव्यवधानेनापि कस्यचित् स्मरणादित्यभिप्रेत्य हेत्वन्तरमाह—**प्रातरिति**। **गजविरोधिपदार्थः**—निबिडमनुष्यत्वादिः। एतच्च गजगततदन्यदेशीयत्वस्याप्युपलक्षणम्। एतदुभयलिङ्गाभावे तु गजाभावज्ञानं स्मरणमेव तस्यापि पूर्वमालोकाद्यनुभवसामग्रीसम्भवादिति भावः। **व्यभिचारित्वादिति**। अन्धकारावृतगेहप्रदेशवृत्तिमैत्रस्या[ननुभव]सम्भवेन, तदितरस्तम्भादेरनुभवेन (?) अनुभूते स्मृतिनियमाभा(वः। न च) [वेन च]तत्र हेतोस्सत्त्वेन व्यभिचारादित्यर्थः ॥

नसुखसाक्षिचैतन्याकारमज्ञानविशिष्टात्माश्रयमेव सम्भाव्यते नान्तःकरणाश्रयमिति ॥

**सर्वथापि सुषुप्ते अज्ञानसुखानुभवसम्भवात् असम्बद्धमिदं टीकाकारेणोक्तमिति ॥**

**सत्यम् । परमतमाश्रित्येदमुक्तं न स्वमतमिति न दोषः ॥**

97 - 9 **स्वयंप्रकाशत्वाहङ्कारभेदावुक्तावुपसंहरति**— तदेवं नायं नीलादिप्रत्ययादिति । **अहङ्कारभेदस्याप्युपलक्षणार्थम् । यस्मादात्मनोऽहङ्कारो**

97 - 10 **भिद्यते तस्मादागममूलं भाष्यवचनमुपपन्नमित्याह**— तस्मात् ब्रह्मविदामिति ॥

---

ता. ननु अज्ञानविशिष्ट आत्मा सुषुप्तौ अज्ञानानुभवाश्रयः, स्मरणस्य चान्तःकरणविशिष्टः, इत्यन्योऽनुभविता अन्यश्च स्मर्तेति स्मरणानुभवयोः वैयधिकरण्यमापन्नमित्याशङ्क्याह— **अज्ञानविशिष्टात्मेति** । अज्ञानस्यावस्थात्रयेऽपि सम्भवात्तद्विशिष्टात्मैव स्मरणानुभवयोराश्रयः, जागरणेऽन्तःकरणं विद्यमानमपि आश्रयकोटौ न प्रविशतीति भावः । उपसंहरति— **सर्वथापीति । परमतमिति ।** परस्याभिमतं दुःखाभावमाश्रित्य तन्मतेऽहंकारस्यानात्मत्वं प्रदर्शितमिति भावः ॥

ननु मानसप्रत्यक्षत्वं ग्राहकतया सिद्धिं च आत्मनो निराकुर्वता अर्थादात्मनः स्वयंप्रकाशत्वमेव साधितं नत्वात्मनोऽहंकाराद्भेदः इत्याशंक्याह— **अहंकारभेदस्येति** । भाष्यवचनं 'अहमिदं', 'अस्मत्प्रत्ययविषयत्वात्' इत्यादि द्रष्टव्यम् ॥

---

भा. ननु उत्थिते सुखादिपरामर्शस्यान्तःकरणवृत्तित्वे बाधकाभावान्न तस्याविद्यावृत्तित्वं कल्पनीयम् । अन्यथा सर्वस्याप्यविद्यावृत्तित्वप्रसङ्गात् । अस्ति च सुषुप्तावपि सूक्ष्मरूपान्तःकरणावच्छिन्नसाक्षी, अन्यथा अविद्यादेर[न]नुभवप्रसङ्गात् । अविद्यावच्छिन्नस्य साक्षित्वे बाधकस्योक्तत्वात् । अतो नानुभवस्मृत्योर्वैयधिकरण्यम् । ततश्च रजतादिसाक्षिणा अन्तःकरणे सुखादिवत् साक्ष्याश्रयसंस्कारेणान्तःकरणे स्मृत्युपपत्तेरित्याशङ्क्य तदङ्गीकरोति— **सर्वथेति** ॥

**कश्चासावागमः? 'स एवाधस्तात् स एवोपरिष्टा'दिति भूमाख्य-ब्रह्मणः सर्वात्मकत्वमभिधाय 'अथातोऽहङ्कारादेशः' इति तस्यापि सर्वात्मकत्वमुक्त्वा 'अथात आत्मादेशः' इत्यात्मानं अहङ्कारात् भेदेन निर्दिशति। ननु जीवब्रह्मणोः सार्वात्म्यव्यपदेशो यथा एकत्वसिद्ध्यर्थः एवमहङ्कारस्यात्मैकत्वसिद्ध्यर्थो व्यपदेशः स्यात्। तन्न—द्वयोः सार्वा-**

---

**ननु जीवब्रह्मणोरिति**। अयमर्थः—स एवाधस्तादिति ब्रह्मणस्सर्वात्मत्वव्यपदेशः, आत्मैवाधस्तादिति जीवस्य, अहमेवाधस्तादित्यहंकारस्येति विभागो     ता.

---

एवं युक्तिभिरात्मनोऽहङ्कारातिरिक्तत्वं प्रसाध्य श्रुतेस्तत् साधयितुं **आगमयितव्यमिति** (97 पु) **टीकाकृतो**क्तमागममाह—**स एवेति**। अहङ्कारशब्दो ह्यहमिति कृतिः करणं यस्मिन्नित्यवयवशक्त्या स्वार्थमभिधत्ते। अनात्मनि लोके तस्य वृद्धप्रयोगाभावात्, समुदायशक्तेः क्वचिदप्यक्लृप्तत्वात्, अवयवशक्त्या स्वार्थबोधकत्वे सम्भवति पङ्कजादिपदवत् समुदायशक्तेरकल्प्यत्वाच्च। सा चावयवशक्तिरहङ्कार एव। अन्यत्र तत्सम्प्रतिपत्त्यभावात्॥     भा.

'शोकहर्षभयक्रोधलोभमोहस्पृहादयः।
अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः॥'

इति स्मार्तप्रसिद्धेरपि तत्र सत्त्वाच्च। 'स एवेदं सर्वम्' इत्युपदिष्टसर्वात्मकत्वोपपादनाय च त्वम्पदवाच्य एवात्राहङ्कारपदार्थो वाच्यः। अत आत्मादेशस्तदन्यनिष्ठोऽहङ्कार[लक्ष्य]चैतन्यमात्र[स्वरूपपरो]जीवस्येत्याह—**अथात आत्मादेश इति**। अन्यथा भेदेनोपदेशवैयर्थ्यादिति भावः॥

भेदेन व्यपदेशस्य प्रमेयभेदसाधकत्वनियमो नास्तीति शङ्कते—**ननु जीवब्रह्मणोरिति**। जीवब्रह्मणोरभेदानङ्गीकारे बाधक(त्व)माह—**द्वयोरिति**। जीवब्रह्मणोरुभयोरपि पारमार्थिकत्वेन तद्भेदस्यापि पारमार्थिकत्वात् ब्रह्मणस्सर्वात्मकत्वं बाधितं स्यात्। वियदादीनां तु कल्पितत्वात् तद्भेदे न तस्य तद्धानिः। अधिष्ठानातिरेकेण तत्सत्त्वाभावात्। ननु ब्रह्मणः सर्वात्मकत्वं नात्र प्रतिपाद्यते, किन्तु 'स एवाधस्तात्' इत्युपक्रमानुसारेण सर्वगतत्वमेवेति चेत्, न—सामानाधिकर(णकार्य)ण्यस्याभेदार्थत्वादुपक्रमस्य सर्वसंयोगि-

**त्म्यायोगात् तत्र युक्तं भेदेन प्रतिपन्नयोः जीवब्रह्मणोरेकत्वसिद्ध्यर्थः तदुपदेशः, अहङ्कारस्य तु पूर्वमेवात्मैकत्वप्रतिपत्तेः पृथगुपदेशो भेदसिद्ध्यर्थः इति गम्यते । ब्रह्मणः परोक्षस्य प्रत्यक्षत्वसिद्धये अहमात्मत्वमुपदिश्य पुनः तद्व्युदासेन मुख्यात्मत्वमुपदिशतीत्यर्थः। 'महाभूतान्यहङ्कारः' इति च स्मृतिः ॥**

**तर्हि अयमहङ्कारः किमुपादानः ? किंनिमित्तः ? किंस्वरूपः ? किंप्रमाणकः ? किङ्कार्यः ? किमिति सुषुप्ते न भाति ? इति चोदिते**

---

ता. द्रष्टव्यः। अहंकारस्य तर्हि सर्वात्मत्वोपदेशः किमर्थः ? इत्यत आह—**ब्रह्मणः** इति॥

---

भा. [त्वपर]त्वेनानिर्णीतस्य वाक्यशेषगततादात्म्यश्रुतिबाधकत्वायोगात् । वाक्यशेषस्याज्ञातज्ञापकत्वे सम्भवत्यनुवादकत्वकल्पनायोगाच्च । प्रतिशाखमभ्यस्यमानसर्वात्मत्वस्य औपचारिकत्वकल्पनायोगाच्च । सर्वोपादानतया ब्रह्मणः सर्वात्मत्वे सम्भवति श्रुतिप्रतिपन्नस्य तस्य त्यागायोगाच्च । अतो जीवपराभेदाभिप्रायेणैव पृथगुपदेश इति भावः ॥

एवं च सति अज्ञातज्ञापकत्वेन प्रामाण्यमपि युज्यत इत्याह—**भेदेनेति** । अहमनुभवस्य अहङ्कारशबलितात्मविषयत्वात् अहमीश्वराद्भिन्न इति प्रतीयमानभेदोऽपि चैतन्यात्मनिष्ठ एवेत्यर्थः । **आत्मैकत्वप्रतिपत्तेरिति** । तथा च श्रुतेस्तत्र न तात्पर्यम् । अज्ञात एव श्रुतेस्तात्पर्यात् । एतच्चोपलक्षणम् । अहङ्कारस्य मिथ्यात्वेन तस्यात्मनो भेदेऽपि तत्सर्वात्मत्वबाधाभावाच्चेति द्रष्टव्यम् ॥

ननु एवमहङ्कारस्य ब्रह्माभेदोऽस्त्विति चेत्, आस्तामयं सुहृदुपदेशः । तदनात्मत्वं तावत् सिद्धमेव । कल्पितस्य ब्रह्मणो वास्तवाभेदायोगेन काल्पनिकाभेदस्य श्रुत्यप्रतिपाद्यत्वात् । तां विना तस्य तत्कार्यतया तदभिन्नत्वसिद्धेश्चेति भावः । नन्वेवं सत्यहङ्कारस्य सर्वात्मत्वमनुपपन्नमित्याशङ्क्य 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति हृदयावच्छिन्नेऽपि ब्रह्मणि वास्तवरूपाभिप्रायेण बाह्याकाशोपमोपदेशवत् अहम्पदार्थैकदेशवास्तवजीवाभिप्रायेण तदविरुद्धमित्यभिप्रेत्याह—**ब्रह्मण इति** ॥

सति तदुच्यते इत्यादिपरिहारः । येयं इत्याद्युपादानसङ्कीर्तनम् । अविद्या- 98 - 1-5
कर्मपूर्वप्रज्ञेति । भ्रान्तिकर्मपूर्वानुभवसंस्काराः इत्यर्थः । तस्याः इति 99 - 1
निमित्तकारणनिर्देशः । विज्ञानक्रियाशक्तिद्वयाश्रयः इति स्वरूपं दर्शयति । 99 - 2
कर्तृत्वभोक्तृत्वेति कार्यप्रदर्शनम् । कूटस्थचैतन्येति प्रमाणोपन्यासः । 99 - 3
यत्सम्भेदादिति आत्मनि सर्वातदारोपनिमित्तत्वं कार्यान्तरमाह । 99 - 4
किमिति तर्हि सुषुप्ते न स्यादित्यत आह—स च सुषुप्ते इति । अज्ञान- 99 - 5
कार्यलिङ्गशरीरप्रविलयो हि सुषुप्तिरित्यर्थः । ननु सति प्राणे क्रियात्मनि कथमहङ्कारस्य क्रियाशक्तेः प्रविलयः ? । उच्यते—नाहङ्कारमात्रत्वं प्राणस्य उच्यते । किन्तु प्राणस्य पृथक्सतः पञ्चधा व्यापारहेतोः अहङ्कारस्य क्रियाशक्तिरस्तीत्येतावदुच्यते, मनोऽधीनतादर्शनात् प्राणवृत्तेरिति । प्राणलक्षणक्रियाशक्त्यंशं वा विहाय विज्ञानशक्त्यंशस्य लयः कल्प्यताम् । सांशत्वादन्तःकरणस्य । स्वप्नादिवत् दृष्टिसृष्टि-

---

विज्ञानक्रियाशक्तियुक्ताहंकारस्य सुषुप्ते प्रविलयो दर्शितः, सोऽनुपपन्नः, क्रियाशक्तेः प्राणस्य तत्रापि संभवात् इति शङ्कते—नन्विति । 'विज्ञानक्रियाशक्तिद्वयाश्रयः' इति क्रियाशक्तेः प्राणस्याहंकारमात्रता नोच्यते येनाहंकारनिवृत्तौ क्रियाशक्तेः प्राणस्य प्रविलयः स्यात्, किंतु अहंकारस्य प्राणप्रेरकक्रियाशक्तिरस्तीत्येतावन्मात्रम्, तेनाहंकारप्रळये न प्राणप्रळयप्रसङ्गः इति परिहरति—उच्यते इति । तत्रापि का युक्तिः ? इत्यत आह—मनोऽधीनेति । ननु सुषुप्त- ता.

---

**येयमित्युपादानसङ्कीर्तनमिति** । अहङ्कारोऽविद्योपादानकः कार्यत्वात्, न च घटादौ व्यभिचारः । तस्य पक्षतुल्यत्वात् । न चासिद्धिः । सुषुप्तावननुभवेन निश्चितव्यतिरेकस्य कार्यत्वात् । न हि तदा तदभावमन्तरेण तदननुभवो भवति, साक्षिणस्तत्साधकचैतन्यस्य तदापि स्वरूपेण सत्त्वादिति भावः । **अज्ञानकार्येति** । न च सुषुप्तावहङ्कारस्य विनाशे अहं निर्दुःखः स्यामिति कथं सुषुप्त्यर्थप्रवृत्तिः स्यादिति वाच्यम् । चैतन्यस्याहमर्थान्तरस्य निर्दुःखतायै स्वर्गार्थं स्थूलशरीरविशिष्टस्य युद्धादाविव प्रवृत्त्युपपत्तेः । एवमहङ्कारस्या[ज्ञानकार्य]स्यानात्मत्वविनाशित्वयोर्मुमुक्षुप्रवृत्त्युपपत्तेरिति भावः ॥ भा.

माश्रित्य वा सुषुप्तपुरुषदृष्ट्यभिप्रायेण सर्वस्य तत्र लयो दर्शितः। सुषुप्तप्राणशरीरादिदर्शनस्य पुरुषान्तरस्य विभ्रमत्वादिति ॥

अत्र साङ्ख्या मन्यन्ते—यद्यचेतनं मायाशब्दादिवाच्यं अन्तःकरणाद्युपादानमिष्टं स्यात्, तर्हि तत् अहङ्कारनिर्भासे साक्षिणि तच्छक्तित्वेन वा तदाश्रयत्वेन वा तदधिष्ठानत्वेन वा अनन्तर्भूतमेव प्रधानं स्वतन्त्रमेव धर्मलक्षणावस्थाभेदैः त्रिधा परिणमते इति। तत्र धर्मपरिणामो नाम महदादिकृत्स्नकार्यरूपेणावस्थानम्। तस्यैव च धर्मस्यातीतानागतवर्तमानलक्षणरूपापत्तिः लक्षणपरिणामः। तथा हि—कार्यमनागतलक्षणापन्नं तत् परित्यज्य वर्तमानलक्षणमापद्यते। पुनः तत् परित्यज्य अतीतलक्षणापन्नं भवति। पुनः तदेव आगामिलक्षणापन्नं भवति। अवस्थापरिणामस्तु अतीतमतीततरमतीततममनागतमनागततरमनागततममिति तत्रैव नूतनचिरन्तनाद्यवस्थापत्तिः। अतो न चेतनो-

99 - 6 पादानेन कृत्यमिति; नेत्याह—न चैवं मन्तव्यमिति। कुत इति? तदाह

99 - 8 —तथा सत्यप्राकृताहङ्कृतिसंसर्गः इति। अहमिति कृतिः-करणं यस्मिन् स साक्षी अहंकृतिः। अयमाशयः—चेतनस्यानात्मसम्भेदावभासो नाख्यातिः नाप्यन्यथाख्यातिः नापि चात्मख्यातिरित्युक्तम्। इदानीं चेतनस्यैव स्वाविद्याविवर्तमानमिथ्यावस्तुसम्भेदावभासलक्षणानिर्वचनीयख्यात्यनभ्युपगमे चेतनाचेतनयोरत्यन्तविविक्तावभास एव स्यात् न सम्भेदावभासः इति ॥

---

ता. पुरुषप्राणशरीरादेः पार्श्वस्थैरुपलभ्यमानत्वात् सर्वप्रविलयो न युक्त इत्यत आह—सुषुप्तपुरुषदृष्टीति। कथं तर्हि तद्दर्शनम्? इत्यत आह—सुषुप्तप्राणेति। तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेष इत्यत्र (99-पु) मायाया आत्मपरतन्त्रता दर्शिता। तदिदानीमाक्षिपति—अत्र साङ्ख्या इति। अनन्तर्भूतमित्यत्र निषिध्यमानान्तर्भावप्रकारमाह—तच्छक्तित्वेनेति। मायोपादानमन्तःकरणमहं-

---

भा. न सम्भेदावभास इति। तथा च न कर्तृत्वादीनामपरोक्षत्वं स्यात्

**अत्र नैयायिका मन्यन्ते—आत्मेन्द्रियविषयेषु समवहितेषु कदाचित् विज्ञानोदयसामर्थ्यादात्माश्रयज्ञानादिवृत्तीनां क्रमजनने करणभूतं किञ्चित् मनः कल्पितम्। तत्र तदतिरेकेणान्तःकरणं नाम ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नादिविज्ञानक्रियावृत्त्याश्रयं अयःपिण्डवदग्नेः आदर्शवत् मुखस्य अप्पात्रवच्चन्द्रस्य आत्मावच्छेदकतया तस्मिन्नतदारोपोपाधिभूतं किञ्चित् न पश्यामः। बुद्धिरिति चेत्, न—'बुद्धिरुपलब्धिः ज्ञानमित्यनर्थान्तर'मित्यक्षपादसूत्रवचनात्। जानाति बुद्धिरात्मोपलभते इति चेत्, न—प्रतिधात्वर्थं धर्मिभेदप्रसङ्गात्। तस्मात् वर्णितमन्तःकरणं नास्तीति। तत्राह— स च परिणामविशेषः इति ॥** 100 - 1

ता. कारशब्दवाच्यं दर्शितम्। तदिदानीमाक्षिपति—अत्र **नैयायिका** इति। यद्यात्मेन्द्रियविषयव्यतिरिक्तं मनो नाम क्रमकारि करणं न स्यात तदा तेषु सन्निहितेषु युगपदेव तद्विषयाणि ज्ञानानि जायेरन्। न च जायन्ते। तत् क्रमकारि करणं मनोऽभ्युपेयम्। विवादपदानि क्रमवन्ति ज्ञानानि क्रमकारिकरणपूर्वकाणि क्रमवत्कार्यत्वात क्रमकारिकुठारसाध्यतद्द्वैधीभाववदिति मनोऽनुमिमते इत्यर्थः। तद्व्यतिरेकेणान्तःकरणं वेदान्तिभिः कथमभ्युपेयमित्यत आह—**ज्ञानसुखेति**। यथा अयःपिण्डेन स्वगतो दीर्घवर्तुलत्वाद्याकारो वह्नावारोप्यते तद्वत् कर्तृत्वाद्यध्यारोपोपाधिभूतमन्तःकरणमिच्छन्ति इत्याह—**अयःपिण्डवदिति**। एकस्मिन्नेव ब्रह्मणि जीवब्रह्मविभागहेतुः इत्याह —**आदर्शवदिति**। कूटस्थेऽप्यात्मनि उत्क्रान्तिगत्यागतीनां आरोपनिमित्तमित्याह—**अप्पात्रवदिति**। मनोऽव्यतिरिक्ता बुद्धिः प्रसिद्धैवेति शङ्कते—**बुद्धिरिति चेदिति**। बुद्धिशब्देनात्मगुणो ज्ञानमेवोच्यते नान्तःकरणमित्यर्थः। ज्ञानपरिणामिनी बुद्धिः आत्मा तु तत्साक्षी इति न पर्यायत्वमिति शङ्कते वेदान्ती—**जानातीति**। मैवं धातुभेदेऽपि धात्वर्थभेदाभावादिति परिहरति—**नेति**।

भा. बन्धमोक्षयोर्वैयधिकरण्यं च स्यादिति भावः। व्यासङ्गबलात् करणतया मनो न सिध्यतीति वक्ष्यति ॥

किंच अहम्बुद्धेर्न शरीरं विषयः, तद्भेदेऽपि तदनुवृत्तेः। नापि केवल

अयमाशयः—'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोपि दृष्टः' इति श्रुतौ परिमाणगुणवत्तया द्रव्यमित्यवगता बुद्धिः। तथा

'यदा पञ्चैव लीयन्ते ज्ञानानि मनसा सह।
बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते॥'

इति श्रुतौ चेष्टाश्रयत्वेन द्रव्यमित्यवगता बुद्धिः। तथा 'विज्ञानं यज्ञं तनुते' इत्यानन्दमयस्यात्मनः पृथगभिधानात् विज्ञानं बुद्धिरित्यनर्थान्तरत्वाद् बुद्धिः क्रियाश्रयत्वेन द्रव्यमित्यवगता। तथा 'विज्ञानेन वा ऋग्वेदं विजानाति' 'मनसा ह्येव पश्यति' इति

---

ता. गुणवत्त्वात् क्रियावत्त्वाच्च बुद्धिर्द्रव्यमिति प्रथमं तावत् साधयति—अयमाशय इति। इदानीं क्रियावत्त्वमाह—तथा यदेति। ज्ञानानि—ज्ञायन्ते विषया एभिरिति व्युत्पत्त्या इन्द्रियाणि। यदा इति अवस्थाविशेषे चेष्टानिषेधाभिधानात् सामान्येन चेष्टाश्रयत्वमधिगम्यते, विशेषप्रतिषेधस्य शेषाभ्यनुज्ञापूर्वकत्वादित्यर्थः। क्रियावत्त्वे श्रुत्यन्तरमाह—तथा विज्ञानमिति। विज्ञानशब्देनात्मैवोच्यते इत्याशङ्क्य, मैवम्—तस्य पृथगभिधानादित्याह—आनन्दमयस्येति। तथापि विज्ञानं बुद्धिरिति कथमध्यवसीयते? इत्यत आह—विज्ञानमिति। यदुक्तं अन्तःकरणं नाम ज्ञानसुखेच्छाद्याश्रयं न पश्याम इति, तत्र सुखाद्याश्रयत्वं साधयितुं विज्ञानशब्दवाच्याया बुद्धेः मनसश्च एकत्वमाह—तथा

---

भा. आत्मा अविद्या वा तद्विषयः, स्वापेऽपि तत्प्रसङ्गात्। अ(थ)[तः] सुषुप्तावसन् स्वप्नादौ संश्च कश्चित् विषय इति स एवानात्मा अहङ्कारः। एवं बुद्ध्यादयः क्वचिदाश्रिताः कार्यत्वात् सम्मतवत्। न च तदाश्रयः पृथिव्यादिः, नाप्यात्मा, निरंशचैतन्ये हेतुसम्बन्धाभावेन बुद्ध्यादिपरिणामायोगात्। बुद्ध्यादेर्वा प(दा)[रा]त्मवृत्तित्वप्रसङ्गाच्च। तदधिकरण एव तदत्यन्ताभावानुपपत्तेः। अनिर्वचनीयमनङ्गीकुर्वतः परस्य औपाधिकभेदाभावाच्च। तस्मादात्मन्यध्यस्तमन्तःकरणमेव तदाश्रय इत्याह—अयमाशय इति। अनुग्राह्यं प्रमाणमप्याह—बुद्धेरिति। द्रव्यमित्यवगतेति। तथा च बुद्धिर्न पराभिमतगुण इति सैवाहङ्काराख्यमन्तःकरणमित्यर्थः॥

च करणपक्षपातिनोः विज्ञानमनसोरेकत्वात् मनसश्च कामसङ्कल्पादिवृत्तिमत्त्वश्रवणात् एकमन्तःकरणं विज्ञानक्रियाशक्तिमत् मनआदिशब्दवाच्यं श्रुतिलिङ्गेभ्यः प्रसिद्धम्। तथा 'बुद्धेर्गुणेनात्मगुणेन चैव' 'सधीः स्वप्नो भूत्वा इमं लोकं अनुसञ्चरति' 'विज्ञानमयो मनोमयः' इत्यादिश्रुतावात्मावच्छेदकतया स्वगुणारोपगमनागमनादिनिमित्तत्वं चावगतम्। तथा 'कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि' इति श्रुतावुत्क्रान्त्याद्युपाधेः प्राणस्याप्यन्तःकरणांशत्वमवगतम्। युगपदुपाधिद्वयायोगात्। ततश्च वर्णितमन्तःकरणं श्रुतिलिङ्गसिद्धमिति। ननु अर्थवादलिङ्गानां न्यायापेक्षा विद्यते। सत्यम्, निरंशसर्वगतासङ्गस्याकाशस्येव निरु-

---

विज्ञानेनेति। तथापि कथमिच्छाद्याश्रयत्वम्? इत्यत आह—**मनसश्चेति**। ता.
यत् पुनरुक्तम्—आत्मावच्छेदकतया अतस्मिन् तदारोपोपाधिभूतं न पश्याम इति; तत्राह—**तथा बुद्धेरिति**। **सधीः**—धिया सह वर्तत इति। तथापि उत्क्रान्त्याद्युपाधित्वं कथम्? इति; अत आह—**तथा कस्मिन्निति**। ननु तत्र प्राणस्यैवोपाधित्वं दर्शितमिति; तत्राह—**प्राणस्या[प्य]न्तःकरणांशत्वमिति**। स्वतन्त्र एव किं न स्यात्? इति; अत आह—**युगपदिति**। सधीरित्यत्र आत्मनो गमनादावुपाधित्वं बुद्धेरधिगतम्। कस्मिन्न्वहमित्यत्र प्राणस्य, ततश्च स्वतन्त्रोपाधिभेदे जीवभेदप्रसङ्गात् बुद्धिप्राणयोरंशांशिभावो निश्चीयते। न च 'ते यदास्माच्छरीरादुत्क्रामन्ति' 'सर्वे प्राणा अनूत्क्रामन्ति' इति च इन्द्रियाणामपि गमनोपाधित्वावगमात् प्राणवदन्तःकरणांशत्वप्रसङ्गः। तेषां मनःपरतन्त्राणामेवोपाधित्वात्। न च प्राणस्यापि मनःपरतन्त्रस्यैवोपाधित्वं अस्तु मा भूदन्तःकरणांशत्वमिति शङ्कनीयम्। युगपज्ज्ञानानुत्पादलिङ्गेन कल्पनालाघवन्यायसहकृतेन ज्ञानक्रियाशक्तिमतोऽन्तःकरणस्यैव कल्प्यमानत्वादित्यर्थः। अन्यार्थदर्शनानां न्यायसहकृतानामेव गमकत्वमिति शङ्कते — **नन्विति**। निरंशत्वेऽपि परमाणुवत् गमनं किं न स्यात्? इति; अत आह—**सर्वगतेति**। असङ्गत्वात् कर्तृत्वादिधर्मैः तत्सहकार्यादिभिश्च सम्बन्धः स्वतोऽनुपपन्नः, तेन तदध्यारोपोपाधिः कश्चित् कल्पनीय इत्याह—**असङ्गस्येति**॥

पाधेः गमनपरिच्छेदाद्यनुपपत्तिरेव न्यायः इत्यलमतिप्रसङ्गेन ॥

नन्वात्मन एव विज्ञानक्रियापरिणामशक्ती किं न स्याताम्?
इति । निरवयवसर्वगतासङ्गस्य परिणामानुपपत्तेः परिणाम्यन्तः-
100 - 4 करणसन्निधानाच्च प्रतिभासस्यान्यथासिद्धेरिति सदृष्टान्तमाह—तेनान्तः-
करणोपरागनिमित्तमिति। मिथ्यात्वं स्फटिकलौहित्यस्य क्लृप्तप्रतीतिसत्त्वयोः
कारणाभावादिति भावः । तदुभयाभावमुत्तरग्रन्थेन साधयति । तत्रा-
ख्यातिवादी—न स्फटिकगतं मिथ्यालौहित्यमवभासते किन्तु जपा-
कुसुमगतमेव गृह्यमाणं स्फटिकादविविक्तमेवावभासते—इति चोदयति-
100 - 5-6 कथं पुनः स्फटिके इति । नैतदित्याह— यदि स्फटिकप्रतिस्फालिताः इति॥

नन्वु दोषबलादिन्द्रियस्य कुसुमसंयोगाभावात् न सन्निवेशग्रहण-

---

ता. ननु प्रतिभासते परिणाम इत्यत आह—**परिणामीति** । लोके **मिथ्या**-
लौहित्यस्योत्पत्तौ प्रतीतौ च यत् कारणं तदभावात् मृषात्वमित्याह—**मिथ्या**-
**त्वमिति। अविविक्तमेवावभासते** इति। **अविविक्तं**—विवेकशून्यं, स्वरूपतः

---

भा. ननु एवं बन्धमोक्षयोर्वैयधिकरण्यम्, अहङ्कारस्यैव कर्तृत्वादिधर्मित्वात्
तस्य चात्मनोऽन्यत्वात्। किञ्च, मुक्तावपि कर्तृत्वं प्रतीयते 'जक्षन्' इत्यादिश्रुतेः।
ततः कथं तन्नात्मनः स्वाभाविकमिति शङ्कते—**नन्वात्मन एवेति**। निरवयवे
असङ्गे तदयोगात् वास्तवात्मन एवान्तःकरणावच्छिन्नतया वैयधिकरण्यादि-
दोषाभावात्, श्रुत्यैव मुक्तौ तन्निषेधात् 'जक्षन्' इत्यादेरर्थवादत्वात् अहं-
कर्तेति प्रतीत्यनुसारेण सोपाधिकमेव तदित्याह—**निरवयवेति** ॥

**क्लृप्तप्रतीतिसत्त्वयोः कारणाभावादिति** । परमार्थलौहित्यस्यो-
त्पत्तौ यत् कारणं क्लृप्तं अवयव(रूढिः,) [रागः] प्रतीतौ च संयुक्ततादात्म्यादि
तदभावादित्यर्थः। आत्मनि प्रतीयमानं कर्तृत्वादिकं मिथ्या सोपाधिकत्वात्
स्फटिकलौहित्यवत्। न च दृष्टान्तस्य साध्यवैकल्यम्, तत्सत्ताप्रतीतिकारणा-
भावेन सत्त्वायोगादिति भावः। **कुसुमसंयोगाभावादिति** । अप्रतिबद्ध-
कुसुमसंयोगाभावादित्यर्थः। **न सन्निवेशग्रहणमिति**। रूपस्याश्रयविशेषग्रहण-

मिति; नेत्याह—न हि रूपमात्रनिष्ठः इति। संयुक्तसमवायात् संयोगाद्वा 100 - 8
गुणग्रहणे द्रव्यमपि संयुक्तमिति भावः। अन्यथाख्यातिवादी–रूपमात्रं
प्रतिबिम्बितं स्फटिकात्मना प्रतिभातीति वक्ति। तन्नेत्याह—नापि 101 - 1
स्वाश्रयमिति। तर्हि स्फटिकदेशे लौहित्यं सद्रव्यमेवाविविक्तं स्फटिका-
त्मना वा गृह्यते इति चोदयति—नन्वभिजातस्येवेति। तथाप्यन्यथा- 101 - 2
ख्यातौ संसर्गमिथ्यात्वमित्याह—तथापि स्वयमलोहितः इति॥ 101 - 4

अख्यातिवादिनो मतमाददाति—अथ प्रभैव लोहितेति। तर्हि 101 - 4
स्फटिकग्रहणे संयुक्तसमवायकारणपौष्कल्यादप्रतिबद्धसंयोगाद्वा रूप-
ग्रहणमपि स्यादित्याह—शौक्ल्यमपि तर्हीति। विरोधिगुणया प्रभया 101 - 5
विरोधिगुणस्यापसारणं प्रतिबन्धो वा कृतः इति शङ्कते—[अथ]प्रभयाऽप- 101 - 6

---

अवभासते इति यावत्। संयोगाद्वेति। गुणगुणिनोः तादात्म्यवादिमत- ता.
माश्रित्योक्तम्। अख्यात्यन्यथाख्यातिवादिनोः मतमुत्थापयति — तर्हीति।
सद्रव्यं–द्रव्येण सहितमिति यावत्॥

---

मित्यर्थः। द्रव्ये गृह्यमाण एव रूपस्य ग्रहणमिति टीकार्थः। ननु प्रतिबन्ध- भा.
बलात् द्रव्यस्याज्ञानेऽपि रूपस्य ज्ञानं किमिति न स्यात्; तत्राह—संयुक्तेति। अप्रतिबद्धसंयोगाश्रयेत्यर्थः। संयोगस्य प्रतिबद्धत्वे रूपज्ञानमपि न स्यात् तत्रापि तस्य प्रतिबद्धत्वात्। न च द्रव्यांशज्ञान एव तस्य प्रतिबन्ध इति वाच्यम्। जातिज्ञानस्य व्यक्तिविषयत्ववद्रूपज्ञानस्यापि द्रव्यविषयत्वनियमेन तदा तस्यानुदयापातात्। न च सामान्यतो द्रव्यज्ञानेऽपि रूपज्ञानं दृष्टमिति प्रकृतेऽपि तथास्त्विति वाच्यम्। विषयज्ञानसामग्र्यां सत्यां तज्ज्ञानाभावस्यायोगात्। न चोपाधिसन्निधानं दोषः, तस्मिन् सत्यपि कदाचिद्विशेषज्ञानदर्शनात् कुसुमं रक्तमिति ज्ञानदशायामपि रक्तः स्फटिक इति प्रतीतिदर्शनाच्चेति भावः। रूपिप्रतिबिम्बपुरस्सरमेव मुखादौ रूपप्रतिबिम्बदर्शनान्नैवमित्याह -तन्नेत्याहेति। तथापीति। वस्तु[तः प्रभै]व नास्तीत्यर्थः। रूपग्रहणमपीति। रूपे ग्रह्यमाण एव द्रव्यस्य ग्रहणनियमात् तयोस्तुल्यकालनियतप्रतीतिसामग्रीकत्वात् इत्यर्थः। प्रतिबन्धः—अभिभवः॥

101 - 7 सारितं तदिति। **अपसारणे दोषमाह**—स तर्हि नीरूपः इति। **प्रतिबन्धश्च**
**द्रव्यस्यापि समानः**। गुणद्वारा विरोधिसाम्यादित्यर्थः। रूपहीनमपि द्रव्यं
101 - 7 **रूपिप्रभासंयोगाच्चाक्षुषं स्यात्** इत्याशङ्क्याह—न च रूपि[द्रव्य]संयोगा-
दिति। **तर्हि शौक्ल्यमपसार्य लौहित्यस्योत्पन्नत्वात् रूपवत्तया चाक्षुषः**
101 - 8-9 **स्फटिकः इति ; नेत्याह**—न प्रभानिमित्तमिति। अभ्युपगम्य प्रभां इत्यादिः
**स्पष्टार्थः। ततश्चोपरक्ताहङ्कारनिमित्तमात्मनि कर्तृत्वाद्यारोपणमित्याह**
102 - 1 —तदेवमिति ॥

**ननु अहङ्कारधर्मस्यात्मन्यारोपमात्रं क्रियते ? किं वा मिथ्यैव धर्मान्तरमुत्पद्यते ? इति। पूर्वस्मिन् नायं दृष्टान्तः, अन्यथाख्यातिश्च स्यात्। उत्तरस्मिन् सत्यमिथ्याकर्तृद्वयावभासः स्यात्। उच्यते —अहङ्कारस्य स्वधर्मसहितस्यैवात्मन्यध्यस्ततया मिथ्यात्वात् न अन्यथाख्यातिप्रसङ्गः। अन्यसन्निधानादन्यस्मिन् मिथ्याधर्मावभासः इत्येतावति दृष्टान्तः। अथ वा—कर्तृद्वयेऽपि धर्मिणोरेकत्वापत्त्या धर्मभेदानवभासः इत्यविरोधः ॥**

**ननु 'भिद्यते हृदयग्रन्थिः' इत्यादौ हृदयग्रन्थिरात्मनि अनर्थ-**
102 - 2 **हेतुरिति गम्यते, तत् कथमहङ्कारस्योच्यते ? इति ; तत्राह**—ततः

---

ता. **नायं दृष्टान्त** इति। मिथ्यालोहितत्वस्य दृष्टान्ते सद्भावादित्यर्थः। **उत्तरस्मिन्निति**। अहंकारगतं सत्यकर्तृत्वमात्मनिष्ठञ्च मिथ्याकर्तृत्वमिति द्वयं प्रतिभासेत इत्यर्थः। अहंकारस्यान्यत्र सद्भावानभ्युपगमादात्मनि कर्तृत्वादिधर्मसहितस्यैव अध्यस्ततया सिद्धेः नान्यथाख्यातिः नापि धर्मद्वयावभासः स्यादिति परिहरति—**उच्यते** इति। तर्हि धर्मधर्मिणोरुभयोरप्यध्यस्तत्वात् दृष्टान्ते लौहित्यमात्रस्यैवाध्यस्तत्वात् विषमो दृष्टान्त इत्यत आह—**अन्यसन्निधाना-दिति**। अहंकारनिष्ठादात्मनिष्ठञ्च कर्तृत्वमन्यदित्यङ्गीकृत्यापि परिहरति—**अथ वेति**। **धर्मिणोः**—अहंकारात्मनोरिति यावत्। यथा स्फटिको जपाकुसुम-

---

भा. **[नीरूप इतीति]** आरोपितेन वा रूपेण विशिष्टस्य द्रव्यस्य ग्रहणान्न केवलद्रव्यज्ञानं भवतीत्यर्थः ॥

संमिन्नोभयरूपत्वादिति । ननु आत्मा स्वात्मन्युपरक्ताहङ्कारतद्धर्मादीन् नावभासयेत् उपरक्तत्वसाम्यात् स्फटिकादिवत् इति ; तत्राह—तत्र जड- 102-3
रूपत्वादिति । जाड्यचैतन्ये अवभासकत्वानवभासकत्वयोर्निमित्ते नोपरक्तत्वानुपरक्तत्वे इत्यर्थः । ननु चेतनस्याप्युपरक्तविषयज्ञानव्यापारशून्यत्वात् जाड्यादविशेषः इति ; तत्राह—चिद्रूपस्य पुनरिति । अव्यव- 102-4
धानेन चित्संसर्ग एव प्रतिभासहेतुः न ज्ञानव्यापारः इति भावः । ननु साक्षिस्वरूपवत् विज्ञानक्रियाव्यवधानमन्तरेण अहङ्कारस्य सिद्धौ कथमिदमंशता? इति ; तत्राह—तेन लक्षणतः इति । अर्थस्वभावतः इत्यर्थः । 102-5
अर्थतः चित्स्वरूपता अनिदमंशता चैतन्यकर्मता चेदमंशता न ज्ञानक्रियाव्यवधानतेत्यर्थः । व्यवहारतः पुनः कथंभूतस्य इदमंशता? इति ; तदाह—व्यवहारतः पुनरिति । यदुपरागात्—यस्याहङ्कार- 102-6-7
स्योपरागादित्यर्थः । तदात्मनः इति । तदात्मतां—अहङ्कारात्मतां 102-7
आपन्नस्येत्यर्थः । तद्व्यापारेण—अहङ्कारव्यापारेणेति । वृत्तिव्यवधान- 102-8
सिद्धिरेव शरीरेन्द्रियविषयाणां इदमिति प्रतिभासिता नाम, तदव्यवधानसिद्धिरेवानिदंप्रतिभासितेति भावः । ननु अज्ञानव्यवहितोऽहङ्कारः कथमव्यवधानादिदंतावभासाभावः स्यादिति ; अत्राह—अत एव अहं 103-1
इति । अनिदन्ताप्रतिभासादेव—अज्ञानमात्रव्यवधानादेवेत्यर्थः । ननु अर्थतो युष्मदर्थत्वे तथाप्रतिभासाभावो न युक्तः इति ; अत्राह—दृष्टश्च 103-2

---

ता. तद्धर्मादि स्वस्मिन्नुपरक्तं नावभासयति उपरक्तत्वात् एवमात्मा स्वात्मन्युपरक्तमहंकारादिकं नावभासयेदिति शङ्कते—**नन्वात्मेति** ॥

---

भा. ननु प्रतिबन्धो जातेरिव रूपस्याज्ञानमस्तु, द्रव्यं गृह्यताम्, रक्तः स्फटिक इति व्यवहारोऽप्यविवेकादेव भविष्यतीति कोऽयं कुलधर्मो रूपे गृह्यमाण एव द्रव्यस्य ग्रह इतीति चेत्, न—रूपस्येव जातेः चक्षुःप्रवृत्तिनिमित्तत्वाभावात् विशिष्टव्यवहारस्य विशिष्टज्ञानसाध्यत्वनियमेन नाविवेकाद्व्यवहारसिद्धिरिति भावः ॥

लक्षणतः इति। ननु तत्र विमर्शेऽपि मृन्मयव्यवहारो न जायते, इह तु
विमर्शे युष्मदर्थता व्यवह्रियते, अतो नायं दृष्टान्तः इत्यत आह—
104 - 1.2 व्युत्पन्नमतयस्त्विति। अत एव निपुणतरमभिवीक्ष्य इत्यादिः स्पष्टार्थः॥

यदि स्फटिकोदाहरणेनैवात्मन्यनात्माध्यासः सिद्धो न तर्हि
104 - 4 दर्पणजलाद्युदाहरणेन वेदान्तविहितेन कृत्यमिति; तत्राह—यत् पुनः दर्पण-
जलादिष्विति। ननु प्रत्यङ्मुखताभेदावभासाभ्यां वस्त्वन्तरे बिम्बात्
प्रतिबिम्बे प्रत्यक्षे कथमेकत्वप्रमाणमन्तरेण तदेव तत् इति चोदयति—एकस्व-
104 - 7 कथं पुनस्तदेव तदिति। व्यक्तिप्रत्यभिज्ञानादिति परिहरति—
लक्षणत्वावगमादिति। ननु अभिज्ञायां भेदप्रतिभासः कथं प्रत्यभिज्ञया व्यक्तिगतयोरै-
105 - 1 बाध्यते? इति; तत्राह—न तद्वस्त्वन्तरत्वे इति। ननु

---

ता. कथं प्रत्यभिज्ञया बाध्यते इति। नन्वभिज्ञा केवलसंप्रयोगापेक्षितया
झटिति जायते, प्रत्यभिज्ञा तु संस्कारं तदुद्बोधकञ्चापेक्ष्य विलम्बेन भवति,

---

भा. ननु बिम्बप्रतिबिम्बयोर्भेद एव। इमौ चैत्रतत्प्रतिबिम्बाविति भेदेनानु-
भवात् प्रत्यङ्मुखत्वादिविरुद्धधर्मैस्तदनुमानाच्च। तस्मात् दर्पणे मुखच्छायेत्यनु-
भवात् छाया द्रव्यान्तरं मुखान्तरं वा प्रतिबिम्बमिति शङ्कते—ननु प्रत्य-
ङ्मुखतेति। प्रथमपक्षद्वयं तावदनुपपन्नम्। प्रसिद्धच्छायाविलक्षणत्वात्,
दर्पणे मुखमित्यनुभवात्। ममैव मुखमिति तस्मिन् मुखत्वसंसर्गग्रीवास्थमुखा-
भेदानुभवात्। अभेदानुभवादेव न मुखान्तरमपीत्याह—व्यक्तीति। मुख-
व्यक्तित्वेत्यर्थः॥

ननु छायात्वप्राङ्मुखत्वप्रत्यङ्मुखत्वदर्पणस्थत्व[ग्रीवास्थत्व]भेदानुभवचतु-
ष्टयस्य प्रामाण्यबलात् स्वच्छायाशिरसि मदीयं शिर इति अनुभववत् मुखत्व-
संसर्गग्रीवास्थमुखाभेदानुभवद्वयस्यैव प्रामाण्यं कल्प्यताम्, प्रत्यभिज्ञातस्तदुपजी-
व्याभिज्ञा च बलवतीति शङ्कते—नन्वभिज्ञायामिति। ननु दर्पणे ग्रीवास्थ-
मुखमेवानुभूयत इति मुखत्वसंसर्गग्रीवास्थत्ववैशिष्ट्य(स्य)तत्स्थमुखाभेद-
दर्पणस्थत्वाभावानुभवानां चतुर्णां तवाप्यप्रामाण्यप्रसङ्गात् तद्भेदाद्यनुभवस्य
प्रत्यभिज्ञानुपजीव्यत्वाच्च ग्रीवास्थमेव मुखं तदित्याह—तत्राहेति॥

**क्यभेदावभासयोः केन किं बाध्यमिति विशये व्यक्तिभेदः तत्रोप-पत्तिशून्यत्वाद्बाध्यते इत्याह**—अपि च अर्थाद्वस्त्वन्तरत्वे इति। **दर्पणावयवा** 105 - 2
**एव व्यक्त्यन्तराकारेण परिणताः इति वाच्यम् ,** अन्यथा **व्यक्त्युत्प-त्त्युपायाभावादिति भावः। ननु मुखलाञ्छितप्रतिमुद्रेयं न परिणाम इति; नेत्याह**— विरुद्धपरिमाणत्वादिति। **अस्तु तर्हि परिणाम इति;** 105 - 4
**नेत्याह**—तथा सतीति। **ननु दृश्यते एव सर्वदा। नैवम्—दर्पणस्य** 105 - 5
**तिर्यङ्निरीक्षणे पूर्वोत्पन्नमुखदर्शनाभावात् ॥**

---

तेन दुर्बला प्रत्यभिज्ञा कथमभिज्ञाया बाधिकेत्यर्थः। **नैवं—दर्पणस्येति।** ता.
तिर्यङ्निरीक्षणे मुखमात्रदर्शनाभावात् अभिमुखनिरीक्षणे चान्यमुखस्यान्येना-

---

तर्हि विनिगमकाभावात्तस्य ग्रीवास्थमुखाभिन्नत्वमपि कुत इत्याशङ्क्य, भा.
सिद्धान्ते प्रत्ययचतुष्टयस्यैवाप्रामाण्यम्। त्वत्पक्षे तु वर्णितप्रत्ययचतुष्टयस्य केशत्वनासिकात्वादिनानाकारानुभवानामप्यप्रामाण्यं धर्मिकल्पनागौरवं च। किञ्च, छाया द्रव्यान्तरं मुखान्तरं वा प्रतिबिम्बमिति त्वदुक्तप्रत्ययानां न वास्तवं प्रामाण्यं सम्भवति। न हि कठिनद्रव्यान्तर्वस्त्वन्तरं युज्यते। न च दर्पणोपर्येव तद्विद्यत इति वाच्यम्। भेदादिप्रत्ययस्येव दर्पणान्तर्मुखमित्यनुभवस्यापि दर्पणे सति अबाधितत्वात्। एवमनेकदूरव्यवहिताभ्रादिप्रतिबिम्बोत्पत्तिज्ञप्तिकारणाभावाच्च न प्रतिबिम्बप्रत्ययस्य प्रामाण्यं सम्भवति ॥

तस्माद्भेदादिप्रत्ययानां विद्यमानार्थत्वमेव त्वन्मतेऽपि प्रामाण्यम्। तन्ममापि [तुल्यम्।] (?) (तत तादि)[ताल्वादि]रूपवत्तया प्रत्यातपं स्पष्टदन्तकेशादिमत्तया अनुभवात् छायारहितादित्यादेरपि प्रतिबिम्बानुभवात् प्रसिद्धच्छायाविलक्षणे तस्मिन् छायात्वानुपपत्तेः तत्र कस्यचिच्छायाव्यवहारः छायाया इव प्रतिबिम्बे बिम्बचेष्टानुविधायिचेष्टावत्त्वादुपचार एव। तथा च प्रतिबिम्बमुखं ग्रीवास्थमेव, न छाया द्रव्यान्तरं वेत्यभिप्रेत्याह—**व्यक्तिभेद इति ॥**

सन्निहितमुखादिप्रतिबिम्बेऽपि कारणं दुर्निरूपम्, किमु वक्तव्यं जानुमात्रजले अनेकदूराभ्रादिप्रतिबिम्बे इत्यभिप्रेत्याह—**दर्पणावयवा इति।** दर्पणस्यैव परिणामोऽस्त्वित्याशङ्क्याह—**अन्यथेति।** दर्पणान्तरवस्थिते तस्मिन्

**ननु निमित्तकारणापायेऽपि कार्यमपैति, यथा वैशेषिकाणाम-**
**पेक्षाबुद्धिविनाशे द्वित्वादिविनाशः हस्तसंयोगापाये च कटविवरणापायः**
105 - 6 **इति ; नेत्याह**—न खलु संवेष्टितः **इति । सर्वत्राग्निसंयुक्तद्रुतताम्रादा-**
**विव पुष्कलकारणेन विरुद्धकार्योदयादेव पूर्वकार्यविनाशः, वैशेषिकाणां**
**च प्रक्रियामात्रं तद्‌द्वित्वादेर्वस्तुसहभावित्वादिति भावः । ननु संस्कार-**

---

ता. दर्शनात् इति भावः। **वस्तुसहभावित्वादिति** । वस्तुसहभावित्वेऽपि द्वित्वादे-
रपेक्षाबुद्ध्यनुविधायित्वं न विरुध्यते । यथा भेदस्य वस्तुसहभावित्वेऽपि धर्मि-
प्रतियोगिसापेक्षतया प्रतीतिः तद्वत् । ननु तर्हि वस्तुसहभावित्वे द्वित्ववति
त्रित्वन्नोपपद्यते विरोधादिति चेत्, मैवम्—ह्रस्वदीर्घत्वादिवद्युगपदेकाश्रयत्वो-
पपत्तेरिति भावः ॥

---

भा. कारणान्तरस्यासम्भवादित्यर्थः । **तिर्यगित्युपलक्षणम्** । बिम्बापसरणानन्तरं
पुरुषान्तरप्रतिबिम्बस्यादर्शनादिति । **टीकायां संवेष्टितः** इत्यत्र प्रसारणनिमित्ता-
पायो लक्ष्यते। अन्यथा तस्य निमित्तापायान्नैमित्तिकापायोदाहरणत्वासम्भवात् ॥

**सर्वत्रेति**। ननु अग्निसंयोगस्य द्रवत्वासमवायिकारणत्वान्न तत्र निमित्त-
नाशाद्द्रवत्वनाशशङ्का ; एवं कटविवरणक्रियायामपि हस्तसंयोगस्यानिमित्ततैव ;
न चोपादानान्यत्वमेव **निमित्तपदेन** विवक्षितमिति वाच्यम्, तन्तुसंयोगादि-
नाशात् पटादिनाशस्यापि निषेधप्रसङ्गात् इति चेत्, न—द्रवद्रव्योत्पत्तावग्नि-
संयोगस्य निमित्तत्वात् । भवति हि परमते [द्रवद्रव्यं] द्रव्यान्तरम् । अत एव
**द्रुतताम्रादावित्युक्तम्**। हस्तसंयोगस्यापि विवरणावस्थकटादिद्रव्ये निमित्तत्वम्,
विवृत[कटश्च] सङ्कुचितात् कटात् द्रुतताम्रादिवदन्य एव, तदेवेदमिति प्रत्यभि-
ज्ञाया अवस्थान्तरापत्तेश्च तुल्यत्वादिति भावः ॥

**द्वित्वादेर्वस्तुसहभावित्वादिति** । तस्यैकत्वद्वयाश्रयद्रव्योत्पत्त्यनन्त-
रमेवोत्पत्तेर्यावद्द्रव्यभावित्वाच्च न तस्यापेक्षाबुद्ध्योत्पत्तिः तद्विनाशाद्विनाशो
वा। नच व्यवहितदेशोत्पन्नयोरपि क्वचित् द्वित्वमनुभूयते ततः कथं तस्य द्रव्या-
[न]न्तरमेवोत्पत्तिः व्यवहितयोस्तत्कारणत्वायोगादिति वाच्यम्। पृथिव्याकाश-
निष्ठवृक्षचन्द्रादेर्द्वित्ववदन्यत्रापि तत्सम्भवात् । न चैवं तत्र त्रित्वाद्यनुपपत्तिः

जन्यकार्यान्तरोदयात् पूर्वकार्यविनाशः न निमित्तकारणापायादिति कुतः? इति; तत्राह—तथा च यावदिति। निमित्तापायमात्राच्चेद्वि- 106-1
वरणापायः संस्काराभावे संवेष्टेतेति भावः। इहापि तर्हि पूर्वसंस्थानस्य चिरकालं अवस्थानसंस्कारबलाद्विरुद्धकार्योदये प्रतिबिम्बापायः इति चेत्, न—उत्पन्नदर्पणमात्रे चिरकालावस्थितमुखपरिणामसंस्कारेऽपि बिम्बा-
पायमात्रात् प्रतिबिम्बापगमदर्शनादित्याह—एवं चिरकालेति॥ 106-3

ननु चिरकालावस्थितविकासपरिणामसंस्कारप्रचयेऽपि सवितृ-किरणापाये विकासापायदर्शनवच्चिरकालावस्थितप्रतिबिम्बापायोऽपि
बिम्बापाये स्यादिति; नेत्याह—यः पुनः कमलमुकुलस्येति। ननु निमित्त- 106-4
कारणापाय एव तत्रापि निमित्तं न पार्थिवाद्यवयवजन्या मुकुलतेति;
तत्राह—तदुपरमे इति। आदर्शेऽपि तर्हि मुखविपरीतकार्यपरिणामहेतुः 106-7
कल्प्यतामिति; नेत्याह—नादर्शे पुनरिति। कारुकर्मापेक्षं चादर्शतल- 106-8

---

भा. अन्यापेक्षयैकत्र दीर्घत्वह्रस्वत्वादिवत् सम्भवात्। अन्यथा द्वित्वनिर्विकल्पकानन्तरमेव तस्य विनाशात् द्वाविति प्रत्यक्षं न स्यात्, द्वित्वविशिष्टबुद्धिधाराया अन्योन्यद्वित्वविषयत्वमपि कल्पनीयमिति गौरवाच्च स पक्षोऽप्रामाणिक इत्यर्थः॥

कारुकर्मापेक्षमिति। तथा च क्लृप्तकारणाभावान्न मुखविरुद्धादर्शतलजन्मेत्यर्थः। ननु निमित्तापायेऽपि नैमित्तिकानां भूयसामपायो दृश्यते। तथा हि—विषयान्तरसञ्चारे शुक्तिरजतगोचरस्य वृत्तिज्ञानस्यापि निमित्तनाशादेव नाशः। न च वृत्तिः द्रव्यं न भवति इति द्रव्यस्य ततो विनाशे नेदमुदाहरणमिति वाच्यम्। घटादिसंयोगाश्रयस्य तस्य द्रव्यत्वात्। वृत्तेश्च घटादिसंयोगो बाधकाभावात् सिध्यति। वृत्तिसंसृष्टो घटादिश्चैतन्यावच्छेदक इत्याद्यग्रिमग्रन्थबलादपि वृत्तेर्घटादिसम्बन्धः संयोग एव आचार्याभिमत इति गम्यते। तत्संसर्गस्य तादात्म्यस्य घटादिना अयोगात्। न च विषयविषयित्वमेव सम्बन्धः, वृत्तिविषयतामात्रेण घटस्य प्रमातृचैतन्याभेदेन स्वावच्छिन्नचैतन्याभिव्यञ्जकत्वे अनुमेयादेरपि तथात्वापत्तेः॥

एवं सुषुप्तावन्तःकरणस्यापि निमित्तनाशादेव नाशः। तन्तुसंयोगादेरपि

जन्मेति भावः। किं च, सत्यपि बिम्बसन्निधाने दर्पणद्रव्यं मुखाकारं कर्तुं दाहच्छेदादिबहुप्रयत्नदर्शनात्, स्पर्शगोचरत्वाभावाच्च, अवयवव्यवधाने चाक्षुषत्वमपि न स्यात् इत्यभ्युच्चयः। तत्रायं प्रयोगः—

---

ता. महत्त्वे सति उद्भूतस्पर्शवद्द्रव्यपरिणामितया प्रतिबिम्बस्यापि स्पर्शगोचरत्वं स्यात्, न चैतदस्तीत्याह—**स्पर्शेति**। दर्पणावयवैः बाह्यैः व्यवहितत्वात् स्पर्शगोचरत्वाभावे चाक्षुषत्वमपि न स्यादित्याह—**अवयवेति**॥

---

भा. सिद्धान्ते निमित्तत्वेन तन्नाशात् पटादेर्नाशदर्शनाच्च। परमतेऽपि ज्वालाप्रभादेः काष्ठदीपादिनाशान्नाशो दृश्यते। न च तत्रापि निमित्तनाशादवयवसंयोगनाशादेव परमते ज्वालादिनाश इति वाच्यम्। प्रतिबिम्बेऽपि [तन्मते] तथात्वस्य कल्पयितुं शक्यत्वात्। न च तेजोद्रव्यातिरिक्तस्य [न] तन्मते निमित्तनाशाधीनो नाशोऽस्तीति वाच्यम्। प्रलये अदृष्टनाशादेव सर्वनाशाङ्गीकारात्॥

किञ्च, द्रुतताम्रादिरपि न कठिनद्रव्योत्पत्त्या निवर्तते। द्रुतावस्थद्रव्यारम्भकविरलसंयोगे सति कठिनद्रव्यायोगात्। तन्नाशे तु कठिनद्रव्यारम्भकसंयोगसमवाय एव द्रुतद्रव्यनाशान्न ततस्तन्नाशः किन्तु तेजस्संयोगनाशेन विरलसंयोगनाशादेवेति न निमित्तनाशस्तन्नाशप्रयोजकः। मन्मते च सत्येव ताम्रावयवसंयोगे विरोधितेजोद्रव्यसंयोगापाये काठिन्यावस्थाजनिः, तन्मते न निमित्तनाशादन्यतो वा द्रव्यनाश इत्यरुचेराह—**किञ्चेति**। **बहुप्रयत्नदर्शनादिति**। तथा च क्लृप्तकारणाभावात् नेदानीं प्रतिबिम्बोत्पत्तिः सम्भवतीति भावः॥

ननु दाहच्छेदादेरुपाधिस्वाच्छ्य एव हेतुत्वम्, न प्रतिबिम्बेऽपि, तेन विनापि प्रतिबिम्बदर्शनेन तथैव कल्प्यत्वादित्यरुचेराह—**स्पर्शगोचरत्वेति**। दर्पणारम्भकावयवानां उद्भूतस्पर्शवत्त्वेन प्रतिबिम्बस्यापि तदापत्त्या त्वग्ग्राह्यत्वप्रसङ्गः। एवं कस्तूरिकाप्रतिबिम्बे गन्धोपलम्भप्रसङ्गः। न च दर्पणान्तरस्थत्वान्न तस्य स्पर्शवत्त्वादीति वाच्यम्। कठिनद्रव्यान्तराले द्रव्यान्तरानुपपत्तेः। दूषणान्तरमाह—**अवयवेति**। न च स्वच्छद्रव्यस्य नयनाव्यवधायकत्वाच्चक्षुषोपलम्भ इति वाच्यम्। तस्य स्वावयवानारब्धपदार्थान्तरोपलम्भाविरोधेऽप्यन्तरालि-

**न दर्पणादौ मुखव्यक्त्यन्तरमस्ति, तज्जन्मकारणशून्यत्वात्, शशमस्तके विषाणवदिति ॥**

**तर्हि शुक्तिकारजतवत् मिथ्यात्वोपपत्तेः न मुखैकत्वमिति चोदयति**—अत्राहेति । **ननु प्रत्यभिज्ञया एकत्वमवगतमिति ; नेत्याह**—शुक्ति- 107 - 1-2
कारजतस्येति। **मिथ्यारजतेऽपि प्रत्यभिज्ञा दृश्यते मदीयमिदं रजतमितीत्यर्थः । उत्तरमाह**—मैवं-तत्र हीति। **तत्र नेदं रजतमिति रजतस्वरूपमेव** 107 - 3
**बाध्यते, नात्र रजतं किं तु तदिदं रजतमिति देशमात्रबाधया सत्यरजतेनैकतया न प्रत्यभिज्ञायते । अतो रजतेऽभिज्ञाबाधात् प्रत्यभिज्ञा विभ्रम इत्यर्थः । इह तु नेदं मुखमिति न स्वरूपेण बाध्यते । किं तु नात्र मुखं मदीयमेवेति प्रत्यभिज्ञायते । न च सा बाध्यते ।**

---

**व्यक्त्यन्तरमिति** विशेषणं ग्रीवास्थमुखादस्य व्यावृत्त्यर्थम्। **ना-** ता.
**स्तीति** । तत्र न जायते इत्यर्थः । अन्यथा आत्माकाशादेः जन्मकारणशून्यस्यापि तत्र तत्रावस्थानदर्शनेन हेतोरनैकान्तिकत्वप्रसङ्गात्। एवकारेण व्यवच्छेद्यं पक्षमभिनयेन दर्शयति—**नात्रेति** ! बिम्बमेव प्रतिबिम्बमिति कस्मा-

---

कावयवारब्धान्तरालिकदर्पणप्रदेशे तदवयरूपाद्यनुपलम्भेन तस्यान्तरालिकपदा- भा.
र्थोपलब्धिविरोधित्वाच्च। दर्पणपृष्ठदेशस्थितस्य काचादिव्यवहितस्यैवादर्शनाच्च ॥

किञ्च दर्पणारम्भकाणां तस्मिन् विद्यमाने [न] द्रव्यान्तरारम्भकत्वं युज्यते । द्रव्यद्वयस्य युगपदेकत्रासमवायात्। नापि तत्संयुक्तावयवान्तरैरारभ्यते । गजवृक्षादिपरिणामदशायां दर्पणादेर्दुर्वहत्वप्रसङ्गात् । न वा पार्थिवमपि गुरुत्वरहितं भवति। अत एव विशेषादलौकिकं कारणं कल्पनीयमित्यर्वाचीनमतं निरस्तम् । अलौकिककारणकल्पनागौरवात् , ग्रीवास्थमुखाभिन्नतया अत्यन्ततत्सदृशतया वा अनुभूयमाने प्रतिबिम्बे विलक्षणकारणजन्यत्वानुपपत्तेश्चेति भावः । तस्मात् दर्पणे प्रतीयमानं मुखं ग्रीवास्थमेव, तदभेदप्रत्यभिज्ञानात्तद्भेदस्य च दुर्निरूपत्वात् परिशेषाच्चेति सिद्धम् ॥

सम्प्रत्यनुमानान्तरमाह—**न दर्पणादाविति** । दर्पणे प्रतीयमानं मुखं तस्मिन् व्याप्यवृत्त्यत्यन्ताभावप्रतियोगि कार्यत्वे सति तदजन्यत्वात् सम्मतवदित्यर्थः । स्वमुखस्येन्द्रियसंयोगाभावादत एव पूर्वानुभवासम्भवाच्च प्रत्यभिज्ञा

107-4 **व्यक्त्यन्तरत्वे च नात्र मुखमस्तीति न बाधः स्यादित्यर्थः**। यः पुनरिति।
**स्पष्टार्थः। ननु स्वमुखावयवानामचाक्षुषत्वात् कथं प्रत्यक्षप्रत्यभिज्ञा?**।
**न—कतिपयावयवदर्शनादपि लोकवदवयविनश्चाक्षुषत्वोपपत्तेः**। तत्त्व-
**मसिवाक्यं त्वंपदार्थबाधनिमित्तम्, संसारिणो विनाशमन्तरेण**
108-1 **मोक्षानुपपत्तेः, अतो नायं दृष्टान्तः इति चोदयति**—ननु तत्त्वमसि-
वाक्यादिति। **सोऽयं देवदत्तः इतिवत् तादात्म्यपरं न परार्थबाधपर-**
108-1-4 **मिति परिहरति**—मैवमिति। किं च शास्त्रीयोऽपीति **स्पष्टार्थः**। 'न
108-7 वारिस्थम्' **इत्यादित्यस्य वारिस्थतोपजीव्यते**॥

---

ता. दभ्युपेयते? व्यक्त्यन्तरमेव किं न स्यात्? इत्यत आह—**व्यक्त्यन्तरत्वे**
**चेति**। तदा देशमात्रबाधानुभवविरोधः स्यादित्यर्थः। उत्तरमाह—**कतिप-**
**येति**। ग्रीवास्थितमुखस्यापि नासाग्राद्यवयवानां कतिपयानामपि ग्रहणात्
स्तम्भादेरिव चाक्षुषत्वं न विरुध्यत इत्यर्थः॥

---

भा. न सम्भवतीत्याशङ्क्याह—**कतिपयेति**। नन्वेवं पूर्वमदृष्टपार्श्वस्थप्रतिबिम्बे कथं
प्रत्यभिज्ञानम्? इति चेत्, न कथञ्चित्। न हि सर्वत्र प्रत्यभिज्ञानं तदभेदे
प्रमाणं ब्रूमः, किन्तु स्वमुखप्रतिबिम्बे प्रत्यभिज्ञादिभिस्तत्सिद्धौ प्रतिबिम्बत्वा-
देवान्यत्र तदभेदसिद्धिरिति भावः॥

लौकिकप्रतिबिम्बस्य बाधाभावेऽपि जीवरूपप्रतिबिम्बस्य बाधोऽस्तीति न
तस्याभेद इति शङ्कते—**तत्त्वमसीति**। यश्चोरः स स्थाणुरिति सामानाधिकरण्यं
यथा आरोपितचोरस्वरूपबाधनिमित्तम्, स्थाणुचोरयोर्विरुद्धयोरभेदानुपपत्तेः तद-
भावस्य स्थाणुस्वरूपत्वाच्च; एवं संसारिणोऽसंसारिब्रह्माभेदायोगात् तत्त्वमसीति
वाक्यमपीत्यर्थः। बाधबोधकनञादेरश्रवणेऽपि चोरस्वरूपस्य कल्पितत्वेन
स्थाण्वभेदायोगात्तत्र तथात्वमस्तु। जीवस्य तु शास्त्रेण भेदमात्रस्य कल्पितत्वेन
निश्चयात् विरुद्धमिथ्यांशपरित्यागेन सोऽयमिति वाक्येनेव तत्त्वमस्यादिवाक्ये-
नापि नञादिशून्येनाभेद एव प्रतिपाद्यत इति न तस्य बाध इत्याह—
**सोऽयमिति**॥

**न वारिस्थमिति**। गगनस्थस्यैवादित्यस्योद्यत्त्वादिवद्वारिस्थत्वविशेष-

अख्यातिवादी, न बिम्बादन्यत्वेन प्रतिबिम्बं नाम दर्पणगतमवभासते, किं तु बिम्बमेव दर्पणादविविक्तं प्रकाशते, इति वदति। तदनुवदति—यस्तु मन्यते इति। स्पष्टप्रत्यङ्मुखावभासं दर्पणान्तरनुप्रविष्टमिव स्वमात्मानं पुरुषान्तरवन्निरीक्षमाणमिवेदं यादृग्दृश्यमानं मुखं तथा नावभासते इति वदन् कथमाप्तः स्यादित्याह—तमनुभव एवेति ॥ 108-8 108-11

ननु मूर्तद्रव्यस्य युगपत् कार्त्स्न्येन देशद्वयवर्तित्वं लोके न क्वचिदपि दृष्टमिति चोदयति—कथं पुनः परिच्छिन्नमिति। एकमेकदेशस्थमेव मुखं भ्रमाद्भिन्नं भिन्नदेशस्थं च अवभासते इत्याह—न वयमिति। किं पुनरिदमेकस्मिन्नेकदेशवस्तुनि भेदभिन्नदेशत्वलक्षणं वस्तु? इति; तदाह—विच्छेदस्त्विति। ननु माययापि प्रमाणविरुद्धं कथमवभासते? इत्यत आह—न हि मायायामिति ॥ 108-11 109-1 109-2 109-3

ननु विच्छेदावभासः कथमविद्याविजृम्भितः? यावता ऊर्ध्वा-

---

ता. ननु मूर्तद्रव्यस्येत्यत्र द्रव्यपदेन जातिं व्यावर्तयति। मूर्तपदेन सर्वगद्रव्यम्। कार्त्स्न्यशब्देन च अनेकत्र शाखाद्यवयवैः वर्तमानमवयविनम्। बिम्बस्यैव दर्पणादिदेशतया प्रतिभासोऽविद्यानिमित्त इत्युक्तम्, तत्र चोदयति—ननु विच्छेदेति। का अनुपपत्तिः? इति; अत आह—यावतेति। सामान्येन ग्रहणं विशेषेण चाग्रहणं दोषश्च इत्यध्यासकारणम्, तदिह नास्तीत्यर्थः ॥

---

भा. णाभिधानात् प्रतिबिम्बस्य बिम्बैक्यमित्यर्थः। न चैवं प्रतिबिम्बादित्यस्येव नभस्स्थस्यापि ईक्षणनिषेधः स्यादिति वाच्यम्। उच्चत्वादिविशेषणविशिष्टेऽपि तच्चोद्यस्य तुल्यत्वात्। तत्तद्विशेषणविशिष्टत्वेन निषेधः स्वरूपेण त्वनिषेध इत्येतत् प्रकृतेऽपि समानमिति भावः। कथमाप्तः स्यादिति। दर्पणे मुखमिति विशिष्टव्यवहारस्य विशिष्टज्ञानजन्यत्वात्तदभावं (दर्पणस्य) [वदन् अनाप्त] एवेत्यर्थः ॥

एकमेकदेशस्थमिति। ग्रीवास्थे एकस्मिन्नेव मुखे स्वाभिमुख्यं भेदो दर्पणस्थत्वं च स्फटिक इव लौहित्यमविद्यारोपितमिति नोक्तविरोधः। ननु ग्रीवास्थ एव मुखे आभिमुख्यादेरारोपे कथं स्वपृष्ठदेशस्थमुखादेः प्रतिबिम्ब-

**ग्रोऽपि स्पष्टमवभासमानो वृक्षः अधोऽग्रो जले प्रतीयते, न च तत्राज्ञानमस्तीति। उच्यते—न च विषयावरणमज्ञानमध्यासहेतुरित्युक्तम्, तत्र औपाधिकभ्रमेषु उपाधिरेव आत्माविद्यापरिणामे पुष्कलकारणम्,**

---

ता. ननु अज्ञानलक्षणो दोषोऽस्तीति; तत्राह—**न च तत्रेति**। विषयावरणहेतोरज्ञानस्याभावात् तत्र भ्रमो न संभवतीत्युच्यते? किं वा दोषाभावात्? उत अज्ञानस्यैवाभावात्?। तत्र नाद्य इत्याह—**न चेति**। उत्तरं विकल्पद्वयं चासिद्धं उपाधेस्तत्र दोषत्वात् आत्मनि वा अविद्याया विपर्यासहेतुभूतायाः सद्भावादित्याह—**तत्रेति**। ननु भ्रमविरोधिनोऽधिष्ठानज्ञानस्य सद्भावात् कथं

---

भा. भ्रमः? तन्मुखादिना सन्निकर्षाभावात्। एवं तत्र बिम्बानुमानमपि न स्यात् प्रतिबिम्बानुभवासम्भवादिति चेत्, न—दर्पणादिप्रतिहतनयनरश्मिभिस्तद्बिम्बसन्निकर्षे सति तज्ज्ञानात्तत्र प्रतिबिम्बभ्रमोपपत्तेः। तदुक्तं सुरेश्वराचार्यैः—

दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्।
व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्॥ इति॥

परमतेऽपि अनुभूयमानमुखस्यैव दर्पणे आरोपो वाच्यः। अन्यथा विनष्टव्यवहितमुखादेरपि प्रतिबिम्बप्रसङ्गात्। तदनुभवश्च परावृत्य नयनसम्बन्धं विना अनुपपन्न एव। नयनरश्मिप्रतिबन्धकमूर्तद्रव्यव्यवधानाभावे सत्येव बिम्बस्य प्रतिबिम्बदर्शनेन तथैव वक्तव्यत्वाच्च। शेषमत्र **अद्वैतदीपिकायां** द्रष्टव्यम्। यन्निष्ठतया भ्रमविषयः प्रतीयते तदापरोक्ष्यमेवापेक्ष्यते, तच्चात्रोपाधिगतं सुलभमिति **केचित्**। न चैवं प्रतिबिम्बं पश्यामि न देवदत्तमित्यनुभवो न स्यादिति वाच्यम्। स्वरूपेण तद्दर्शनेऽपि देशविशेषस्थत्वादिना तदर्शनस्य सत्वात्, तत्र च परावृत्तिरेव दोषः प्रतिबन्धकः, अन्यथा देवदत्तस्य प्रतिबिम्बमिति ज्ञानासम्भवादिति भावः॥

किं तत्रोर्ध्वाग्रत्वावच्छिन्नचैतन्यावरणमज्ञानं नास्तीत्युच्यते? उत विपरीतमपि?। तत्राद्योऽङ्गीक्रियत इत्याह—**न च विषयावरणमिति**। **उक्तमिति**। **(109-पु) विच्छेदस्तु मायाविजृम्भित इति टीकायामिति** शेषः। द्वितीयं दूषयति—**तत्रेति**। **आत्माविद्या**—मूलाविद्या, विषयावच्छिन्नचैतन्यस्या

न चाधिष्ठानयाथार्थ्यस्य ज्ञानं सोपाधिकभ्रमेष्वध्यासविरोधि, किं तु निरुपाधिकभ्रमेष्विति द्रष्टव्यम् ॥

ननु सोपाधिकभ्रमत्वे भेदकर्तृत्वाद्यध्यासस्य न तत्त्वज्ञानादध्यासनिवृत्तिः किं तु उपाधिमात्रनिवृत्त्येति चोदयति—ननु सत्येव 110 - 1
बिम्बैकतावगमे इति। चोदितदोषं परिहर्तुमाशङ्कान्तरं प्रथमं निवर्तयति। कथम्?। जीवः प्रतिबिम्बश्चेत् न बिम्बात्मतामवगन्तुमलम्, प्रतिबिम्बत्वात्, अक्षिपात्रगतदेवदत्तप्रतिबिम्बवत्, इत्येतन्निराचष्टे—देवदत्तस्या- 110 - 3

भ्रमः स्यात् इति ; तत्राह—**न चेति** ॥ ता.

सति तत्त्वज्ञाने तस्याविद्यानिवर्तकत्वाशङ्का, तदेव नोपपद्यते इति प्रश्नपूर्वकं शङ्कान्तरं दर्शयति—**कथम्?। जीव इति** ॥

अनावारिका अविद्यावस्था वा, तत्र भ्रमनिमित्तदोषोऽप्युपाधिरेवेत्याह— भा.
**पुष्कलेति** ॥

एतदुक्तं भवति—शुक्तिरजतादिभ्रमे भ्रान्तित्वेन साधारणरूपेण अविद्याजन्यत्वं निश्चितमिति प्रतिबिम्बभ्रमोऽप्यविद्याजन्य एव। न चात्राविद्याऽसम्भवः। तत्रापि मूलाज्ञानस्य सम्भवात्। न चैवं तस्य व्यावहारिकत्वापत्तिः। स्वप्नस्येवाविद्यातिरिक्तदोषजन्यत्वेनातथात्वात्। ऊर्ध्वाग्रत्वावच्छिन्नचैतन्यस्थाविद्यावस्था वा तद्धेतुः। सा चापरोक्षज्ञानविष(ये) [यमे]व विषयीकरीतीति न तदा ऊर्ध्वाग्रत्वमभेदादिकं वा आवृणोति। अतो न जानामीत्यनुभवाभावोऽपि न दोषाय। नचानावारकमज्ञानं न भ्रमहेतुरिति वाच्यम्, अज्ञानत्वेनैव भ्रमसामान्यहेतुत्वात्। आवरणं त्वनुभवबलात् भ्रमविशेष एव हेतुः। न चैवं तदा तत्सत्त्वे प्रमाणाभावः। भ्रमस्यैव मानत्वात्। समयान्तरे न जानामीत्यनुभवाच्च। न च सा तदा जायते अज्ञानस्यानादित्वादित्युक्तत्वादिति ॥

ननु विशेषदर्शने विद्यमाने कथं भ्रमः स्यात्? इत्याशङ्क्य, किं भ्रमनिवृत्तिरापाद्यते? तदनुत्पादो वा?। नाद्यः, अज्ञाननिवर्तकज्ञानस्यैव भ्रमात्यन्तनिवृत्तौ हेतुत्वात्, अत्र चाज्ञानस्य तज्ज्ञानानिवर्त्यत्वादित्याह—**न चाधिष्ठानेति**। न द्वितीयः, अपरोक्षज्ञानस्य शुक्तिकादिप्रत्यक्षवदप्रतिबन्धकत्वादित्यभिप्रायः। **उपाधिमात्रेति**। तथा च दर्पणादेरिव तदुपाधेरपि न ज्ञानमात्रान्निवृत्तिरिति

चेतनांशस्येति । अचेतनत्वप्रयुक्ता तत्रानवगतिः न प्रतिबिम्बत्वप्रयुक्ता, घटादिषु तथा दर्शनादिति भावः । ननु शरीरमेव चेतनमिति लोका-
110-4 यतः, तत्राह—सचेतनांशस्यैवेति । दर्पणजाड्येन प्रतिबन्धात् स्वभाव-
110-6 जाड्याद्वेत्यर्थः । देवदत्तप्रतिबिम्बस्याचेतनत्वे हेत्वन्तरमाह—तथा-चानुभवः इति । कदाचित् तस्यापि चेतनत्वे स्वातन्त्र्यात् तच्चेष्टया विनापीदं चेष्टतामिति भावः । ननु देवदत्तस्यैव बिम्बस्य भ्रमनिवर्तकतत्त्वज्ञानाश्रयत्वं दृष्टम्, एवं बिम्बत्वाद् ब्रह्मण एव भ्रमनिरासितत्त्व-
110-7 ज्ञानाश्रयत्वं स्यादिति ; नेत्याह—यस्य हि भ्रान्तिरिति । न बिम्बत्वकृतं तत्त्वज्ञानाश्रयत्वम्, किं तु भ्रान्तत्वकृतम्, तदप्यज्ञत्वकृतम्, तदपि जीवत्वनिमित्तमिति भावः ॥

ननु जीवलक्षणप्रतिबिम्बात्मतामात्मनो ब्रह्म जानीयाद्वा ? न वा ? । न चेत् सर्वज्ञताहानिः, जानाति चेत् ब्रह्म स्वात्मन्येव संसारं
110-9 पश्येदिति; नेत्याह—यस्तु जानीते देवदत्तः इति । देवदत्तो हि स्वात्मानमक्षिपात्रेऽल्पत्वादिगुणमवगच्छन्नपि तत्त्वज्ञानप्रतिहतत्वात् नानुशोचति, एवं ब्रह्मापि स्वात्मनि जीवे प्रतिबिम्बे संसारं पश्यदपि तत्त्वज्ञानित्वात् नानुशोचति । तत्त्वज्ञानसंसरणे चावदातश्यामत्वादिवत् न इतरेतरत्र व्यवतिष्ठेते इति भावः ॥

---

ता. भ्रान्तत्वमपि तर्हि बिम्बत्वात् किं न स्यात् ? इति; अत आह—तदपीति । तदप्यस्तीत्यत आह—तदपि जीवत्वेति ॥

ब्रह्मप्राप्तेः तत्त्वज्ञानसाध्याया अपुरुषार्थत्वाशङ्कां निवर्तयितुं शङ्कामुत्थापयति—ननु जीवेति । ब्रह्मनिष्ठतत्त्वज्ञानं तदभेदाज्जीवेऽपि सदा किं न स्यात् ? इति ; अत आह—तत्त्वज्ञानेति ॥

---

भा. न ज्ञानान्मुक्तिरिति भावः । तर्हि जीवचैतन्येऽपि तत् स्यादित्यरुचेराह—स्वभावेति ॥

ननु एकतावगमेऽपि न तत्र विच्छेदविभ्रमो निवर्तते। सत्यम्, न प्रतिबिम्ब[त्व]कृतं तत्, किं तु उपाधेरज्ञानाजन्यत्वाज्ज्ञानानिवर्त्यत्वकृतमित्याह—नापि ज्ञानमात्रादिति। ननु जीवस्यापि तदुपाधिजाड्येना- 111-1
स्कन्दनसम्भवात् न भ्रान्तिसम्यग्ज्ञानाश्रयत्वं अप्रतिबिम्बता च तदाश्रयत्वे स्यादिति; नेत्याह—जीवः पुनरिति। 'रूपं रूपं प्रतिरूपो 111-2
बभूव' 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' 'अत एव चोपमा सूर्यकादिवत्' इति च श्रुतिस्मृतिसूत्रैः जीवस्य प्रतिबिम्बभावस्य दर्शितत्वात्, अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवदमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्बसम्भवात्, जानुमात्रप्रमाणेऽपि जले दूरविशालाकाशदर्शनात्, जलान्तराकाश एवाभ्रादिप्रतिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात्। तत्प्रतिबिम्बत्वं चिद्रूपत्वं च शास्त्रप्रतिपन्नं प्रत्यक्षप्रतिपन्नं च न निराकर्तुं शक्यते इति भावः॥

ननु घटाकाशवदुपाध्यवच्छिन्नो जीवः किं न स्यात्?। न—

ता. एकत्वज्ञानं न विच्छेदभ्रमनिवर्तकं बिम्बप्रतिबिम्बयोरदर्शनादिति शङ्कामुत्थाप्य निराकरोति—**नन्वेकतेति**। इह तु ब्रह्मैकत्वापरिज्ञानजन्यत्वादन्तःकरणोपाधेः तत्त्वज्ञानादज्ञाननिवृत्तावुपाधिरपि विच्छेदभ्रमहेतुः निवर्तते इत्यर्थः। भ्रान्तिसम्यग्ज्ञानाश्रयत्वे च देवदत्तवदप्रतिबिम्बता च स्यादित्याह—**अप्रतिबिम्बता चेति**। ननु मूर्तद्रव्यस्यैव अभ्रनक्षत्रादेः प्रतिबिम्बो दृष्टः न त्वाकाशस्य इत्यत आह—**अमूर्तस्य चेति**। आकाशोऽप्यभ्राद्याधारः प्रतीयते इत्यर्थः। अवच्छेदपक्षमुत्थापयति—**नन्विति**॥

भा. एवं चोद्यान्तरं परिहृत्य प्रथमं दोषं परिहर्तुमनुवदति—**नन्वेकतेति**। **उपाधेरज्ञानाजन्यत्वादिति**। दर्पणाद्युपाधेर्मुखैकत्वज्ञाननिवर्त्याज्ञानाजन्यत्वात्, अतो नापसिद्धान्तः। ब्रह्मसाक्षात्कारस्तु साहङ्काराविद्याध्वंसमर इति ततो मुक्तिरुपपद्यत इति भावः॥

ननु अभिन्नस्य भेदः आकाशस्येव अवच्छेदादपि भवतीति किं प्रतिबिम्बपक्षपातेनेति शङ्कते—**ननु घटाकाशवदिति**। 'यथा ह्ययं ज्योतिरात्मा विवस्वान्' इत्यादिप्रतिबिम्बविवस्वद्दृष्टान्तश्रुत्यभिप्रायेण प्रतिबिम्बत्वमेव जीवस्य

**सामान्यविशेषाभ्यामुपाधिभिरण्डान्तर्वर्तिब्रह्मणः सर्वात्मना जीवभावे-नावच्छिन्नत्वादनवच्छिन्नस्य ब्रह्मणोऽण्डाद्बहिरेव सद्भावप्रसङ्गात् तत्र सर्वगतसर्वनियन्तृत्वादि ब्रह्मणो न स्यात्। अवच्छिन्नप्रदेशेष्वनवच्छि-न्नस्य द्विगुणीकृत्य वृत्त्ययोगात्। स्वरूपापेक्षया तत् सर्वं न बहिस्स्थित-ब्रह्मापेक्षयेति चेत्—न—'यो विज्ञाने तिष्ठन्' इत्यादौ जीवव्यतिरिक्तस्यैव ब्रह्मणो जीवसंनिधानेन विकारान्तरवस्थानश्रवणात्। प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्रैव द्विगुणी-**

---

ता. **सामान्यविशेषाभ्यामिति।** इत्थंभावे तृतीया। अनुवृत्तरूपेण व्यावृत्तरूपेण च। **उपाधिभिः**—समष्टिव्यष्टिरूपैः भूतेन्द्रियादिभिः। अस्तु का हानिः? इत्यत आह—**तत्रेति।** अण्डान्तरपि ब्रह्मणः सन्निधिः किं न स्यात्? इति; अत आह—**अवच्छिन्नेति।** चिद्रूपस्य सर्वत्रैकत्वात् तदपेक्षया सर्वगतत्वादि किं न स्यात्? इति चोदयति—**स्वरूपेति।** प्रकरणिनो ब्रह्मण एव नियामकत्वं वक्ति श्रुतिः न तु स्वरूपमात्रस्येति परिहरति—**न—यो विज्ञाने इति॥**

---

भा. सिध्यतीत्यभिप्रेत्य तत्रोपपत्तिमाह—**न—सामान्यविशेषाभ्यामिति। द्विगुणी-कृत्येति।** चैतन्यमात्रस्य प्रथममुपाधिनैकः सम्बन्ध इत्येका वृत्तिः, द्वितीया चानवच्छिन्नत्वाकारेण तत्र वृत्तिर्वक्तव्या। सा चानुपपन्ना। किमनवच्छिन्नत्व-मवच्छेदकोपाध्यभावविशिष्टत्वम्? अवच्छिन्नत्वाभाववत्त्वं वा?। उभयथाप्य-व्याप्यवृत्त्यभावविशिष्टस्य सर्वगतत्वानुपपत्तिः विरोधादसम्भवाच्चेति नान-वच्छिन्नस्य ब्रह्मणोऽवच्छिन्नदेशसम्बन्धित्वम्। घटानवच्छिन्नाकाशस्यापि महा-काशेनेव घटावच्छिन्नाकाशेनासम्बन्धित्वमेव, विरोधादननुभवादसम्भवाच्चेति भावः॥

**जलगतस्वाभाविकेति।** ननु जलादेर्महाकाशसम्बन्धित्वं प्रतिबिम्बा-काशसम्बन्धित्वं चास्ति यथा (एवमनवच्छिन्नस्यापि सम्बन्धद्वय) [एवमवच्छे-दकस्यापि अवच्छिन्नानवच्छिन्नसंबन्धद्वय]मविरुद्धम्। अनवच्छिन्नसम्बन्ध इव बिम्बत्वविशिष्टसम्बन्धोऽपि तस्य नास्त्येव। न च बिम्बत्वविशिष्टस्यान्तः-करणे प्रतिबिम्बितत्वात् सम्बन्ध इति वाच्यम्। तत्र प्रमाणाभावात्, बिम्ब-

कृत्य वृत्त्युपपत्तेः जीवावच्छेदेषु ब्रह्मणोऽपि नियन्तृत्वादिरूपेणावस्थानमुपपद्यते इति प्रतिबिम्बपक्ष एव श्रेयानिति। मिथ्यातत्त्वज्ञानाश्रयत्वं च तत्र प्रत्यक्षमित्याह— स चाहंकर्तृत्वमिति। उपाधिस्वरूपमपि भ्रान्त्यै- 111-4
वावभासते इत्यर्थः। अतः तत्त्वज्ञानेनोपाधिनिवृत्तेः विच्छेदापायः इत्याह—अतो युक्तः इति ॥ 111-5

ननु अज्ञानं जीवावच्छेदोपाधिरिति पुरस्तादुक्तम्, तत् कथमहंकारोपाधिता जीवस्याभिधीयते ? इति। नैष दोषः—चैतन्यस्यावच्छेदकविकल्पतारतम्येन व्यवहारविकल्पतारतम्यात्। तथा हि—निर्विकल्पकचैतन्यमात्रैकरसं अविद्यासम्बन्धादीषद्विकल्पव्यवहारालम्बनं भवति सुषुप्ते। ततः तदुपादानान्तःकरणावच्छेदात् तदेव स्थूलतरव्यवहारा-

---

पूर्वापरविरोधं चोदयति—नन्विति ॥ ता.

---

त्वविशिष्टस्य तथापि तेन साक्षात् संबन्धाभावाच्च। सन्निधानमात्रस्य पक्षान्तरेऽपि सत्त्वात्। मेघाद्यवच्छिन्नाकाशस्यैव जले प्रतिफलनम्, न तु महाकाशस्य। तस्य तत्राननुभवात्। अतो बिम्बप्रतिबिम्बयोरेकत्रावस्थाने नायं दृष्टान्त इति चेत्। सत्यम्। लोके हि बिम्बत्वं मुखमात्रस्याप्यनुभूयते, न तु घटावच्छिन्नत्वमिवाकाशस्यैकदेशे। ततश्च सर्वगतचैतन्यबिम्बत्वमपि चैतन्यमात्रवृत्तीति बिम्बत्वविशिष्टं ब्रह्म सर्वगतमेवेति दर्शनबलात् कल्प्यत इत्यत्र तात्पर्यमिति ॥ भा.

अत्र **केचित्**—प्रतिबिम्बचैतन्यमन्तर्यामी न जीव इति वदन्ति। तन्न युक्तम्—बिम्बचैतन्यस्यैकस्यैव सर्वगतस्य सर्वकारण(स्य)[त्ववत्] सर्वनियन्तृत्वस्यापि सम्भवेन तस्य प्रतिशरीरं प्रतिबिम्बरूपप्रवेशकल्पनाऽयोगात् स्रष्टुरेव नियन्तृत्वश्रवणाच्च। न हि प्रविष्टस्य सृष्टिरस्ति। तत्पूर्वकत्वात् प्रवेशस्य 'कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव (मूढोऽन्ध इति) व्यवहरन्नास्ते माययैव' इति श्रुतेः प्रविष्टे मूढत्वान्ध्यादिजीवधर्मश्रवणाच्च स जीव एवेति भावः। **ईषद्विकल्पेति**। उत्थितस्य परामर्शयोग्यप्रकाशत्वं तत्र **विकल्प**शब्दार्थः ॥

लम्बनं भवति स्वप्ने। पुनरन्तःकरणसंसृष्टस्थूलशरीरोपरागात् स्थूलतमं भवति जागरणे। न चोपाधिभेदात् जीवभेदप्रसङ्गः। पूर्वपूर्वोपाध्यवच्छिन्नस्यैवोत्तरोत्तरेणावच्छेदात्। निरपेक्षोपाधिभेदे हि जीवभेदः॥

ननु स्थूलशरीरोपादानभूतसूक्ष्मरूपसहितेन लिङ्गशरीरसंस्कारेणोपरक्तमज्ञानं सुषुप्ते न जीवमवच्छेत्तुमर्हति। तत्र भ्रान्त्यभावात्। तल्लक्षणत्वाच्च विभागस्य। अथ भ्रान्तिज्ञानमनपेक्ष्यैवार्थगत एव विभागः कल्प्यते, तत्र विभागस्य कार्यत्वे सुषुप्तिप्रलयादावभावात् ब्रह्मण्येव अविद्यादिसाङ्कर्यं स्यात्। अकार्यत्वे विभागस्यानादित्वादविद्यानिमित्तत्वं न स्यात्। उच्यते—ब्रह्मण्यविद्यादिसाङ्कर्यपरिहाराय सुषुप्त्यादावपि अस्त्येव जीवब्रह्मविभागः इति कल्प्यते। ननु अर्थगत एव तर्हि विभागो न विभ्रमगतः। सत्यम्, सुषुप्त्यादिगतविभागादन्यत्र जीवब्रह्म-

---

ता. कुत्र तर्हि जीवभेदः? इति; अत्राह—**निरपेक्षेति**। अज्ञोऽहमीश्वराद्भिन्नः इति भ्रमाभावादिति हेतुमाह—**तत्रेति**। भ्रान्त्यभावे कथमवच्छेदाभावः? इत्यत आह—**तल्लक्षणत्वाच्चेति**। वास्तव एव विभागः किं न स्यादिति सिद्धान्तिनो मतं आददाति—**अथेति**। एतद्विकल्प्य दूषयति स एव पूर्ववादी—**तत्र विभागस्येति**। भ्रमरूपविभागमन्तरेणाविद्याकृतविभागं आश्रित्य परिहरति—**उच्यते** इति। कार्याकार्यविभागद्वयमङ्गीकृत्य परिहरति—**सत्यम्, सुषुप्तीति**। अविद्योपादानत्वाभावे कथं तत्तन्त्रता?

---

भा. सुषुप्तिकालीनजीवभेदस्याविद्यकत्वायोगात् तस्यौपाधिकत्वं न घटत इति शङ्कते—**ननु स्थूलेति**। ननु मा भूद्भ्रम इत्याशङ्क्य धर्मिविषमसत्ताकविभागवत्त्वाच्चन्द्रादिविभागस्येव प्रतीयमानत्वनियमात्तदयुक्तमित्याह—**तल्लक्षणत्वादिति**। अप्रयोजकत्वमाशङ्कते—**अथेति**; **अर्थगत** इति। अज्ञात इत्यर्थः। अज्ञानमात्रप्रयुक्तोऽनादिः अज्ञातसत्ताकश्च। अन्तःकरणादिप्रयुक्तभेदस्तु कार्योपाधितया कार्यं इत्यविद्योपादानकः स इत्यभिप्रेत्याह—**सुषुप्त्यादीति**॥

**विभागो विभ्रममात्रतया अविद्योपादान उच्यते। ननु अर्थगतो विभागस्तर्हि नाविद्योपादानः, अनादित्वात् अविभ्रमत्वाच्च। सत्यम्, तथाप्यविद्यातन्त्रो विभागोऽनादित्वेपीऽति ब्रूमः। यथा हि स्वात्माविद्यासम्बन्धोऽविद्यातन्त्रः, नाविद्योपादानः। सम्बन्धजननात् प्राक् स्वातन्त्र्येणावस्थानानुपपत्तेः। अज्ञानस्यानादित्वाच्चात्माविद्यासम्बन्धस्य नाविद्योपादानता॥**

---

इति; तत्र दृष्टान्तमाह—**यथा हीति**। तत्रापि तत्तन्त्रत्वे तदुपादानता किं न स्यात्? इति; तत्राह—**सम्बन्धजननादिति**। अज्ञानमेव तर्हि प्राङ्मास्त्विति; तत्राह—**अज्ञानस्येति**॥ ता.

न विभागस्याविद्यापरतन्त्रत्वमविद्याकार्यतया, तस्यानादित्वात्। किन्तु तदाश्रिततयेति वक्तव्यम्। तच्चायुक्तं जीवब्रह्मनिष्ठत्वात् विभागस्य इत्याक्षिपति—

---

तर्ह्यर्थगतस्याविद्याप्रयुक्तत्वमपि न स्यादुभयोरनादित्वादिति शङ्कते— **नन्वर्थेति**। अनादित्वमङ्गीकरोति—**सत्यमिति**। तथापि तस्य ज्ञाननिवर्त्यस्य साक्षात् ज्ञाननिवर्त्याज्ञानप्रयुक्तत्वं वक्तव्यम्, नियमेन तत्काल एव तस्य स्थितिदर्शनात्, तस्मिन् सत्यपि ज्ञानादज्ञाननिवृत्तेर्नाज्ञानस्थितौ तत्प्रयोजकं इत्यभिप्रेत्याह—**तथापीति**। किञ्च विभागोऽविद्याधीनसत्ताकः दृश्यत्वाच्छुक्तिरूप्यवत्। अविद्यापि (विद्यमाना)[अविद्या]धिकरणकालमात्रवृत्तिसत्ताकेति सा स्वप्रयुक्तसत्ताका॥ भा.

तदाहुः—

'नाविद्याऽस्येत्यविद्यायामेवासित्वा प्रकल्पते।
ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यते॥"

इति। अत्र श्लोके नेति प्रागुक्तनिषेधः। अतो न दृश्य[त्व]हेतौ व्यभिचारः, न चाविद्याकार्यत्वमुपाधिः तत्सम्बन्धादौ साध्याव्यापकत्वादित्याह—**यथेति**। अविद्यासम्बन्धोऽनादिः निष्क्रियानादिमात्रसम्बन्धत्वात् जीवत्वादिसम्बन्धवत्। परमते परमाणुसंयोगे रूपत्वादितादात्म्ये च व्यभिचारवारणाय विशेषणद्वयम्। न चाप्रयोजकत्वमित्याह—**सम्बन्धेति**।

ननु जीवब्रह्माश्रयो विभागः कथमविद्यातन्त्रः स्यात् ? उच्यते—अनाद्यविद्याविशिष्टं चैतन्यमनादिजीवभावेन काल्पनिकानादिभेदस्य आश्रयः, न स्वरूपेण, तस्यैकत्वात्। अतो विशिष्टाश्रयो विभागः स्वरूपेऽपि उपरज्यमानो विशेषणाविद्यातन्त्रो विशिष्ट इत्यविद्याकृतो विभाग उच्यते। अविद्यातन्त्राणां चानिर्वचनीयत्वमनादित्वं चाविद्यासम्बन्धवन्न विरुध्यते। लोके च दर्पणघटादिविशिष्टयोरेव मुखाकाशयोः मिथ्याभेदावभासो न स्वरूपेण इत्युपाधितन्त्रता भेदस्योच्यते। तस्मादनाद्यविद्याप्रतिबिम्बकृतविभागस्यैव जीवस्य तदुत्पन्नाहंकारादिविशेषेषु स्थूलप्रतिबिम्बापेक्षया सर्वेषामुपाधित्वं न विरुध्यते॥

अत्र सर्वसङ्करवादी प्रतिबिम्बस्यावस्तुत्वाभ्युपगमात् न जीवः प्रतिबिम्बमिति जल्पति। तत्र मुखचित्स्वरूपयोः प्रतिबिम्बेषु नावस्तु-

---

ता. नन्विति। चिन्मात्राश्रयो विभाग इति न ब्रूमः, किं तु अविद्याविशिष्टाश्रयः इति, तेन विशेषणीभूतायाः अविद्याया अप्याश्रयत्वात् तत्तन्त्रता न विरुध्यते विभागस्येति परिहरति—उच्यते इति। तावता कथमविद्यातन्त्रत्वं विभागस्येति; तत्राह—अत इति। स्वरूपेऽप्युपरज्यमान इति विशेषणं विभागस्य जीवब्रह्माश्रितत्वमप्यस्तीति दर्शयितुम्। ननु विभागस्य अविद्यातन्त्रत्वे घटादिवदविद्याकार्यत्वं अकार्यत्वे चाविद्याव्यतिरिक्तत्वे सत्यनादित्वादात्मवत् सत्यत्वं इत्याशङ्क्य परिहरति—अविद्यातन्त्राणामिति। उपहितगतस्यापि विभागस्योपाधिपरतन्त्रत्वे दृष्टान्तमाह—लोके चेति। अविद्योपाध्यवच्छिन्नस्याहंकाराद्युपाध्यवच्छिन्नत्वं न युक्तमित्याक्षेपस्य समाधानमुक्तमुपसंहरति—तस्मादनादीति। सिद्धान्तिना प्रतिबिम्बस्य अवस्तुताभ्युपगमात् किं जीवस्य च सत्यत्वात् न प्रतिबिम्बत्वमिति चोदयति—अत्र सर्वेति। इति विकल्प्य मुखचित्स्वरूपयोरवस्तुत्वम् ? किं वा भेदविपर्यासादीनाम् ? मुखचित्स्वरूपयोः कथं वस्तुत्वम् ? क्रमेण दूषयति—तत्र मुखेति।

---

भा. अविद्याया आश्रयत्वमपि वक्तुं शक्यत इत्याह—अनाद्यविद्येति। तस्माद्विद्यक एव भेद इति हृदि निधायोपसंहरति—तस्मादिति॥

त्वमिष्यते । भेदविपर्यासादीनामवस्तुत्वाभ्युपगमेऽपि न मुखचैतन्ययोः काचित् क्षतिः । मुखचित्स्वरूपयोश्च बिम्बात्मतां प्रमिमीमहे मिथ्यांशपर्युदासेन । न च मिथ्यांशस्य बन्धमोक्षौ ; किं तु स्वरूपस्यैव । स्वरूपगतस्यापि साङ्कर्यपरिहारायोपाधिभेदो दर्शितः । तस्मात् परसिद्धान्तापरिज्ञानविलसितोऽयं सर्वसङ्करवादिनो विभ्रमः 'अवस्तुत्वाभ्युपगमात्' इति ॥

अहंकारोपाधिनिमित्तो जीवब्रह्मविभागोऽनात्माध्यासश्च दृष्टान्तद्वयेन सिद्धः, तत्र किं रज्जुसर्पोदाहरणेन वेदान्तविहितेनेति चोदिते, तस्य प्रयोजनमाशङ्कान्तरनिवृत्तिरित्याह—ननु तत्र विभ्राम्यतः इति । 111 - 6
निरुपाधिकाध्यासपरिनिष्पन्नाहंकारोपाधिकः कर्तृत्वाद्यध्यास इति कथयितुमित्यर्थः । ननु सर्वत्राधिष्ठानाध्यस्यमानव्यतिरिक्तोपाधिनिमित्त एवाध्यासो न निरुपाधिक इति चोदयति—ननु तत्रापि यदि नामेति । 112 - 3
पूर्वानुभवसंस्कारमात्रोपाधिमात्रमिहापि विद्यते स्वतन्त्रोपाधिरेव निरा-

---

ता. इत्यत आह—**मुखचित्स्वरूपयोरिति** । प्रत्यभिज्ञया मुखस्य श्रुत्या चैतन्यस्य सत्यत्वावगमादित्यर्थः ॥

ननु उपाधिविशिष्टस्य जीवत्वात् विशेषणनाशे विशिष्टनाशात् बन्धमोक्षाभाव इत्याशङ्क्य आह—**न च इति** । तर्हि ब्रह्मण एवाज्ञानभ्रमादिप्रसङ्ग इत्यत आह—**स्वरूपगतस्येति** । ननु निरुपाधिकाध्याससद्भावे रज्जुसर्पदृष्टान्तः, सर्पाध्यासे च पूर्वानुभवसंस्कारसत्त्वात् कथं निरुपाधिकत्वम् ? इत्यत आह—**पूर्वानुभवेति** । केवलव्यतिरेकहीनत्वात् प्रमाणानुभवसंस्कारस्य तत् व्यावर्तयति—**मात्रेति** विशेषणेन । अध्यस्यमानधर्मेण लौहित्यादिना समानो धर्मो लौहित्यम्, तदाश्रयो जपाकुसुमादिरुपाधिः लोकसिद्धः, तस्य सर्वभ्रमेष्वनुगमाभावात् तत् व्यावर्तयति—**उपाधिमात्र**विशेषणेन । कथं तर्हि निरुपाधिकत्वम् ? इत्यत आह—**स्वतन्त्रेति** । ननु तथापि प्रमाणानुभवसंस्कारं

---

भा. मुखचैतन्ययोरवस्तुत्वाभावे हेतुमाह—**मुखचित्स्वरूपयोश्चेति** । प्रत्यभिज्ञानात्तत्त्वमस्यादिवाक्याच्चेति भावः । **स्वतन्त्रेति** । दर्पणजपाकुसुमादि-

112-4 **क्रियते इति परिहरति**—बाढमिहापीति। न **पूर्वानुभवसंस्कार एव**
**भ्रमहेतुः न पूर्वभ्रान्तिसंस्कारः इति नियमोऽस्तीति भावः ॥**

**ननु आत्मनि सोपाधिकस्य निरुपाधिकस्य चाध्यासस्योदाहरण-**
**त्रयेणैव सिद्धत्वात् न घटाकाशोदाहरणेन वेदान्तविहितेन कृत्यमस्तीति**
**आशङ्क्य, चोद्यान्तरनिराकरणेनासङ्गत्वसिद्धिः प्रयोजनमित्याह—**
112-6 तत्र यद्यप्यनिर्वचनीयतयैवेति। **अरुणादिना स्फटिकादेः गुणगुणित्वेन**
**सम्भेदे योग्यस्याप्यनिर्वचनीयतया अरुणादेरसम्भेदावभासः सिद्ध**
**इत्यन्वयः। कथं पुनर्घटाकाशोदाहरणेनासङ्गत्वसिद्धिः? इति; तदाह-**
113-3 तत्र हीति। **ननु उदाहरणैरेवात्मनोऽविकारित्वैकत्वासङ्गत्वानां सिद्धत्वात्**
113-4 **न आगमेन कृत्यमिति; नेत्याह**—एतच्च **सर्वमुदाहरणजातमिति।**
**प्रमाणमन्तरेणोदाहरणमात्रादर्थसिद्ध्ययोगात् प्रत्युदाहरणसम्भवादिति**
**भावः ॥**

**अस्मत्प्रत्ययविषयत्वादिति भाष्यमात्मन्यध्यासोपपत्त्यर्थम्।**
**तत्रास्मत्प्रत्ययः तन्निमित्ताध्यासश्च दर्शितः। विषयशब्दार्थमिदानीमाह**
113-7 —तदेवं यद्यपीति। **गौण्या वृत्त्या विषयशब्दप्रयोगे किं गुणसाम्यम्?**
114-1 **इति; तदाह**—प्रमेयस्य चेति। **ननु सविकल्पकाध्यासस्य सविकल्पक-**
**मेवाधिष्ठानं वक्तव्यम्, तथा दर्शनात्, न निर्विकल्पकचिन्मात्रम्,**
**तत्र कथमहंकाराद्यध्यासेन सविकल्पकेऽहंकाराध्यासः? इति चोदयति**

---

ता. विना कथं भ्रमोद्भवः? इत्यत आह—**न पूर्वानुभवेति।** केवलव्यतिरेका-
भावादित्यर्थः ॥

**ननु उदाहरणैरेवेति।** अविकारित्वं स्फटिकदृष्टान्तेन रज्जु-
सर्पदृष्टान्तेन च, दर्पणदृष्टान्तेन जीवब्रह्मणोरेकत्वम्, घटाकाशदृष्टान्तेन
चासङ्गित्वम्, इति विभागो द्रष्टव्यः। तर्ह्यहंकाराध्यासेन सविकल्पकेऽहंका-
राध्यासोऽस्तु इत्याशङ्क्य, मैवं आत्माश्रयत्वप्रसङ्गात् इत्याह—**तत्र कथमिति।**

---

भा. सदृशेत्यर्थः। **सविकल्पकाध्यासस्येति।** परिच्छिन्नाध्यासस्येत्यर्थः।

—ननु व्यवहारयोग्यत्वे इति। **निर्विकल्पेऽपि सविकल्पाध्यासदर्शनात्। अज्ञानाध्यासेन सविकल्पे पूर्वाहंकाराध्यासेन वा सविकल्पके चिदवभासे सम्भवत्येवोत्तराहंकाराध्यासः इत्याह**—नानादित्वेनेति ॥ 114-3 114-5

**ननु अविकारिचैतन्यैकतानस्य निष्कलङ्कस्वभावानन्दस्यासङ्गस्य आत्मनो न प्रमातृत्वमुपपद्यते; प्रमाणक्रियापरिणामाभावात्। न च प्रमातृत्वहीनस्य कर्तृत्वभोक्तृत्वे सम्भवतः इति प्रमातृप्रमाणप्रमेयकर्तृकर्मकार्यभोक्तृभोगभोक्तव्यसंसर्गलक्षणस्य व्यवहारस्यात्मन्यसम्भवात्**

---

ता. **निर्विकल्पकेऽपीति**। निर्विकल्पकचिन्मात्रे सविकल्पकाज्ञानाध्यासदर्शनादिति यावत्। अथ सविकल्पके एव सविकल्पकाध्यास इत्यभिनिवेशः सोऽपि सम्पादयितुं शक्यते इत्याह—**अज्ञानेति**। प्रतिकर्मव्यवस्थाप्रतिपादनपरोत्तरग्रन्थव्यावर्त्यां शङ्कां दर्शयति—**नन्वविकारीति**। अविकारित्वात् प्रमाणव्यापार एवात्मनो न संभवति। चित्स्वभावत्वाच्चिदाश्रयत्वलक्षणं ज्ञातृत्वं दुर्घटम्, दुःखपरिहाराय सुखावाप्तये वा परिणामः स्यात्, तच्चोभयमिह नास्ति स्वभावसिद्धत्वात् इत्याह—**अविकारीत्यादि**विशेषणत्रयेण। कलङ्कशब्देन दुःखमुच्यते। हेतुसं[बन्धाभावादपि परि]णामो न युक्त इत्याह—**असङ्गस्येति**। ननु किं प्रमातृत्वेन? कर्तृत्वभोक्तृत्वे संभवतः, एतावता व्यवहारः सिध्यति इत्यत आह—**न चेति**। जाना[ति इच्छति यत]ते इति न्यायादित्यर्थः। ननु अहंकारस्य प्रमाणाकारेण परिणामसम्भवात् प्रमातृत्वादिव्यवहारः सिध्यतीति;

---

भा. **निर्विकल्पेऽपीति**। केवलचैतन्येऽप्यज्ञानाध्यासदर्शनादित्यर्थः। वस्तुवृत्तमाह—**अज्ञानेत्यादिना**। **पूर्वाहङ्काराध्यासेनेति**। प्राक्तनाहङ्कारवासनयेत्यर्थः। अतोऽहङ्कारे सति न तदध्यासवैफल्यमिति भावः। निरवयवे आत्मनि हेतूपरागाभावात्तस्मिन् कर्तृत्वादेर्विकारस्य सत्यत्वानुपपत्तेर्मिथ्यात्वमुक्तम्। नन्वेवं प्रमातृत्वस्यात्मन्यसम्भवादुत्सन्नव्यवहारं जगदभविष्यत्, अत आत्मनो विकारित्वमेष्टव्यम्, अतः कर्तृत्वादिकमपि वास्तवमेवेत्यभिप्रेत्य, किमद्वैतवादे आत्मनः प्रमातृत्वम्? अहङ्कारस्य वा? इति विकल्प्य क्रमेण दूषयति—**नन्वविकारीत्यादिना**। ननु स्वरूपचैतन्येनैवात्मनः प्रमातृत्वमस्तु, न च

**अहंकारस्य चाचेतनतया तदाश्रयत्वायोगादुच्छिन्नव्यवहारमिदं जगदापद्येतेति प्राप्तम् । अथ स्वभावसिद्धचैतन्यप्रकाशेनैव विषयं प्रकाशयेत्, तर्ह्यविशेषात् सर्वगतत्वाच्च सर्वं प्रकाशयेदित्यव्यवस्थैव । तस्मात् विकारसमर्थ एवात्मेति ॥**

---

ता. तत्राह—**अहंकारस्य चेति**। तथापि स्वरूपचैतन्येनैव प्रमातृत्वं स्यादित्याशङ्कय तर्हि ज्ञाताज्ञातविभागो न सिध्येदिति परिहरति—**अथेति** ॥

---

भा. प्रमाकर्तृत्वाभावे न प्रमातृत्वमपीति वाच्यम्, परमते ईश्वरस्येव तेन विनापि तदुपपत्तेरिति शङ्कते—**अथ स्वभावेति** ॥

एवं सिद्धान्ते परैः प्रमातृत्वाभावे आपादिते सिद्धान्ती [वैतण्डिक]-मुद्रया प्रत्यवतिष्ठते । तत्र यद्यपि परमते आत्मनः प्रमातृत्वमस्ति, तथाप्यात्मगतप्रमायाः ज्ञेयेन विषयविषयित्वप्रयोजकः कः सम्बन्धः ? संयोगादेरयोगात्। स्वरूपसम्बन्ध इति चेत्, न—तस्यैव दुर्निरूपत्वात् । ननु सम्बन्धान्तरमन्तरा विशिष्टप्रत्ययविषयत्वमेव स इति चेत्, न तावत् स्वस्यैव विशिष्टप्रत्ययस्य स्वयं विषयो भवति। वेद्यज्ञानस्य तदयोगात्। नापि ज्ञानान्तरस्य । तत्पूर्वं ज्ञेयेन असम्बन्धप्रसङ्गात्। तदा स्वस्याभावेन विषयत्वायोगात् । न ह्यसदपि ज्ञानविषयो भवति । [स्वप्रकाशज्ञानस्यापि] न स्वविषयत्वं इत्युक्तम् ॥

किञ्च, अनुव्यवसायस्यैव अभावा(दात्म) त् न तद्विषयत्वम्। अनुव्यवसाय (जन्य)[हीन]ज्ञानस्यासम्बन्धप्रसङ्गाच्च । न हि ज्ञानेऽनुव्यवसायनियमोऽस्ति । तस्यापि तद्योग्यत्वमस्तीति चेत्, न—घटविषयज्ञानत्वेन तद्योग्यत्वे, विषयत्वयोग्यतैव सम्बन्धं विना दुर्निरूपा । निर्विषयं च ज्ञानं नानुव्यवसायविषयतायोग्यम् । तस्य कदापि तददर्शनात् ॥

किञ्च, विशिष्टज्ञानत्वं विशेषणविशेष्यवैशिष्टयविषयज्ञानत्वम्, वैशिष्टयं च ज्ञानज्ञेययोः वैशिष्टयज्ञानविषयत्वमित्यन्योन्याश्रयः । अपि चैतत्स्वरूपसम्बन्धः किं स्वरूपद्वयातिरिक्तः ? तदेव वा ?। नाद्यः, द्रव्यगुणादिष्वन्यतमत्वासंभवात् । न चोपाधिसामान्य[मेव स्वरूप]सम्बन्धः न चोपाधेर्दुर्निरूपत्वं अखण्डधर्मस्य कस्यचित् तत्त्वादिति वाच्यम् । तस्यैव ज्ञानेनासम्ब-

न्वप्रसङ्गात्। तस्य तदवृत्तित्वात्। न च तत् केवलान्वयि। केवलान्वय्यसम्भव- भा.
स्योक्तत्वात् ॥

किञ्च, तस्यैकत्वे समवायो न स्यात्। तदनुमानस्यैतद्विषयत्वात्। तदन्य-प्रमाणाभावात्। नित्यातीन्द्रियस्यापरोक्षज्ञानाविषयतया घटादिज्ञानात् पटादि-व्यवहारश्च स्यात्। प्रतिपदार्थं भिन्नत्वे चानित्यमात्रवृत्तिधर्मस्यानित्यत्वनियमेन रूपादौ तदभावप्रसङ्गात्। नित्यत्वेऽपि [प्रतिपदार्थं सम्बन्धानन्त्य] प्रसङ्गः। (तत्तत्प्रतिसन्धानस्य) जातिविलोपप्रसङ्गाच्च। न ह्यखण्डधर्मद्वैविध्ये [प्रमाणमस्ति]। न च समवेतोऽखण्डो धर्मो जातिरुपाधिर्न तथेति वाच्यम्, अखण्डधर्ममात्रस्य समवेतत्वात्। अन्यथा तस्यापि तदयोगात्। न च अभावत्वादिकमखण्डमप्यसमवेतमिति वाच्यम्। तस्यासम्प्रतिपत्तेः ॥

नाप्यभावेऽन्तर्भावः, प्रतियोगिनोऽनिरूपणात्। न द्वितीयः, सम्बन्धि-त्वायोगात्। सम्बन्धि(त्वमा)[द्वया]श्रयस्य सम्बन्धत्वात्। अन्यथा अवि-शिष्टव्यावृत्तरूपाभावे ज्ञानज्ञेययोः सम्बन्धत्वासम्भवात्। किञ्च, अविशिष्टव्यावृत्त-विशिष्टधीजनकत्वं हि सम्बन्ध(त्वमस्येति)[त्वमिति त्वयेष्यते।] न च स्वरूप-द्वयमात्रमेकं स्वरूपं वा अविशिष्टव्यावृत्तम्। किं चैवं देवदत्ते ज्ञानं घटं च पश्यतः तज्ज्ञाने घटीयत्वसन्देहो न स्यात्। तदुभयात्मकसम्बन्धस्य निश्चित-त्वात् ॥

अपि च, घटज्ञाने विश्वमात्रं प्रतीयात्। स्वरूपद्वयात्मकसम्बन्धस्य सर्वत्र सत्त्वात्। घटतज्ज्ञानस्वरूपद्वयमेव सम्बन्ध इति चेत्, तर्हि पट इति ज्ञाने पटो विषयो न स्यात्। घटज्ञान एव तत्स्वरूपं सम्बन्धः, एवं पटादिज्ञानेऽपि तत्स्वरूपमिति चेत्, न—ज्ञाने विषयत्वव्यतिरेकेण घटीयत्वाभावेन घटज्ञान-मिति व्यवहारायोगात्। घटजन्यत्वस्यापि तस्मिन् घटीयत्वेनैव ग्राह्यत्वात्। न चैतज्ज्ञानं घटश्च तत्सम्बन्धः एतत्सम्बन्धज्ञाने पटज्ञानव्यावृत्तव्यक्तिविशेषः एवं तत्तज्ज्ञानं पटादिश्च सम्बन्ध इति वाच्यम्। व्यक्त्यन्तरे तदभावप्रसङ्गात्। घटज्ञाने घटीयत्वस्यापि दुर्निरूपतया पटादिज्ञानव्यावृत्तत्वेन ज्ञानासम्भवात्तस्य दुर्विज्ञेयत्वाच्च ॥

**अत्र अपर आह—न तावत् सर्वगतात्मवादिनामिदं चोद्यं सम्भवति। कथम्? यदि तावदात्मविषयेन्द्रियमनश्चतुष्टयसंनिकर्षादिनो-**

ता. अत्र पार्श्वस्थः कश्चित् द्वैतिनामपि पक्षं दूषयति—**अत्र अपर आहेति।** सर्वगतत्वेऽपि ज्ञानपरिणामसंभवात् व्यवस्था (या:····का शङ्का) [स्वसमवेतेन ज्ञानेन] सिध्यतीति शङ्कते—**कथमिति।** क्रियेति भाट्टाः, गुण इति वैशेषिकादयः,

भा. अपि च, एवमिष्टानिष्टसमूहालम्बनादनिष्टेऽप्युपादानरूपा प्रवृत्तिः स्यात्; तत्संयोगादिजन्यत्वमपि स्यात्; स्वरूपातिरिक्तजन्यत्वाभावेन तस्मिन्नानाधर्मनिरूप्यानेकजन्यत्वासम्भवेन अनेकसन्निकर्षजन्यत्वासम्भवात्। तदुभयसम्बन्धिज्ञानव्यक्तेरेकत्वेन तस्यास्तदुभय[स्वरूप]सम्बन्धसत्त्वात्। भेदाग्रहस्य च प्रवृत्तौ साक्षाद्धेतुत्वाङ्गीकारे जितमविवेकिनेत्युक्तम्। इष्टाकारज्ञानविषयत्वस्यैव लाघवेन प्रवृत्तिविषयत्वे प्रयोजकत्वम्, न तु यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयीकरोति तस्य प्रवृत्तिविषयत्वम्, गौरवात् रजताभेदभ्रमादप्रवृत्तिप्रसङ्गाच्चेत्युक्तम्॥

किञ्च, यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयीकरोति (तस्य) [इत्यस्य] यदि तादृशज्ञानविषयत्वमर्थः तदा अतिप्रसङ्गस्तदवस्थ एव। यदि प्रकारीभवदिष्टतावच्छेदकवैशिष्ट्याश्रयत्वम्, तदापि स एव। इष्टज्ञानांशस्यानिष्टं विषयो [न] भवतीति चेत्, न—ज्ञाने स्वतोंऽशभेदस्याभावात्। विषयभेदादंशभेद इति चेत्, न—एकांशेनोभयविषयत्वेन तदयो(गेन)[गात्।] अंशभेदेन विषयसम्बन्धसिद्धौ तत्प्रयुक्तांशभेदो ज्ञाने सिध्यति, सिद्धे च तस्मिन्नसङ्कीर्णविषय-[संबन्धसिद्धिरि]त्यन्योन्याश्रयः। तस्मान्न स्वरूपसम्बन्धेन विषयविषयिभावव्यवस्था युज्यते। अपि च, एवमनुमेयव्यावृत्तः प्रत्यक्षविषये सम्बन्धो वाच्यः। अन्यथा तस्यापरोक्षत्वायोगात्। अपरोक्षज्ञानविषयत्वेन विषयापरोक्षत्वस्य असम्भवात्। तस्यैव तत्प्रयोज्यत्वात्। तस्मान्नापरोक्ष[ज्ञानविषययोः] स्वरूपसम्बन्धः इत्यभिप्रेत्याह—**अत्रापर इति॥**

ननु य(दा)[था] प्रभाप्रकाशः स्वाश्रयप्रभासम्बद्धं घटादि प्रकाशयति एवं प्रकाशत्वात् ज्ञानमप्यस्त्वित्याशङ्क्य, किं विषयविषयिभावे अपरोक्षज्ञानस्य तावन्मात्रमपेक्षितम्? उत अन्यदपि?। नाद्यः, इत्याह—**यदि (च) इति।**

त्पद्यमानं विज्ञानं क्रिया वा गुणो वा, यावदात्मसमवाय्येवोत्पद्येत निरवयवे प्रदेशाश्रयत्वानुपपत्तेः, तदा युगपत् सर्वमूर्तद्रव्यसंयोगलक्षणत्वात् सर्वगतत्वस्य स्वाश्रयात्मसंयुक्तवस्तुनः सर्वस्यावभासि विज्ञानं स्यात्। प्रदीपादिषु क्रियाप्रकाशगुणयोः स्वाश्रयसंयुक्ते वस्तुन्यनुरूपप्रकाशाद्यतिशयहेतुत्वात्। अदृष्टेन क्वचिदेव विषये ज्ञानं नियम्यते इति चेत्, न—प्रदीपादिषु यावत्संयुक्तवस्त्ववभासिष्वदृष्टेन वस्तुसामर्थ्यमतिक्रम्य नियमादर्शनात्। सुखदुःखाद्यनिमित्ततृणाद्युपेक्षणीयसर्वविषयावभासेन चादृष्टनियमानुपपत्तेः। जनकमेव ज्ञानं प्रकाशयति न सर्वमिति चेत्, न—चक्षुरादिषु प्रकाशप्रसङ्गात्। विषयस्य निरूप्यमाणत्वात् विषयतया

---

तत उक्तम्—**क्रिया वा गुणो वेति**। **प्रदीपादिषु** इत्यादिशब्देन शरीरादिकं गृह्यते। धर्माधर्मयोः सुखदुःखसाधने विषये स्रक्चन्दनादावेव नियामकत्वात् तदसाधने व्यवस्था न सिध्यतीति दूषणान्तरमाह—**सुखदुःखेति**। ननु विषयतया जनकं प्रकाशयति न तु जनकमात्रमित्याशङ्क्याह—**विषयस्येति**। विषयतया जनकत्वं लोकप्रसिद्धिसिद्धमङ्गीकृत्यापि दूषयति— ता.

---

**प्रदेशा** (ताति)[**श्रयत्वानुपपत्तेरिति**]। निरवयवे तत्र तदत्यन्ताभावाश्रयभेदासम्भवादित्यर्थः। **प्रदीपादिषु** इत्यादिपदेन इष्वादिकमुच्यते। स्वाश्रयद्वारा ज्ञानस्य सर्वसम्बन्धित्वेऽप्यदृष्टबलात् किञ्चिदेव विषयो भवतीति द्वितीयं शङ्कते—**अदृष्टेनेत्यादिना**। ज्ञाने निष्पन्ने अदृष्टसाध्याभावादित्याह—**नेति**। न च (निर्वि)[अवि]षयत्वमेव तज्जन्यं स्यादिति वाच्यम्। गुणादौ तदभावात् परेषामसम्मतत्वाच्च। अङ्गीकृत्याह—**प्रदीपादिष्विति**। विद्यमानेऽपि ज्ञाने अदृष्टबलाद्विषयविशेष[सम्बन्धा]ङ्गीकारे विषयनिरूपणीयज्ञानस्य अदृष्टव्यतिरेकेण विषयवत्त्वाभावदशायामनुपलम्भसम्भवेन ज्ञानानुपलम्भा[दभावा]नुभवः परस्य न स्यात्। ज्ञानभेदोऽपि न सिध्येत्। एकस्यैव ज्ञानस्य अदृष्टमहिम्ना (नि)[स]मयभेदेन विषयभेद[संबन्ध]सम्भवादिति द्रष्टव्यम्॥ भा.

ननु मा भूददृष्टं नियामकम्, जन्यजनकभाव एव विषय[विशेष]सम्बन्धोऽस्त्वित्याशङ्क्य दूषयति—**जनकमिति**। ननु यदुद्देशेनेन्द्रियव्यापारस्तज्जन्य-

जनकमिति विशेषणायोगात् । प्रदीपादिषु च प्रकाशगुणस्य स्वाश्रयसंयुक्ताजनकविषयस्यापि प्रकाशकत्वदर्शनात् । क्रियारूपेऽपि विज्ञाने समानमेतत् । इष्वादिव्यापाराणामनुद्दिष्टेऽपि विषये स्वाश्रयसंयोगे सत्यतिशयहेतुत्वदर्शनात् । निरवयवत्वादात्मनो न सर्वसंयोगः इति चेत्, किंचिदपि न प्रकाशेत । क्रियागुणयोः स्वाश्रयमतिलङ्घ्य अन्यत्र संसर्गायोगादसंसर्गात् असंसृष्टे चातिशयायोगात् ॥

अथ शरीरावच्छिन्नात्मप्रदेशसमवाय्येव ज्ञानं न यावदात्म-

---

ता. **प्रदीपादिषु चेति** । गुणपक्षे दर्शितन्यायं क्रियापक्षेऽप्यतिदिशति—**क्रियारूपेऽपीति** । यस्मिन्नतिशयमुद्दिश्य आत्मा ज्ञानव्यापारं संपादयति तस्यैवासौ प्रकाशक इत्याशङ्क्याह—**इष्वादीति** । आत्मनः सम्बन्धाभावेऽपि तदुत्पन्नज्ञानस्य स्वसंसृष्टविषयावभासकत्वं भविष्यतीत्याशङ्क्याह—**क्रियागुणयोरिति**। मास्तु संसर्ग इति ; तत्राह—**असंसृष्टे चेति** ॥

---

भा. ज्ञानं स्वाश्रयसम्बन्धात् सर्वसम्बन्ध्यपि तदेव विषयीकरोतीति चेत्, न—(किं) [यदुद्देशेनेत्यादिवाक्यस्य] यज्ज्ञानोद्देशेन इन्द्रियव्यापार इत्यर्थः [वक्तव्यः], विषयस्य स्वतस्सिद्धस्योद्देश्यत्वासम्भवात् । ततश्चान्योन्याश्रयः । किं च, एवं पटायोन्मीलितं चक्षुर्नेतरत् (न) प्रकाशयेत् इत्यभिप्रेत्याह—**इष्वादीति** । न प्रकाशः उ(ल्मुका)ल्कादिप्रकाशानाश्रयकाष्ठप्रदेशसम्बन्धिनो घटादेर्यथा न प्रकाशः तथा अत्रापीत्यभिप्रेत्य शङ्कते—**अथ शरीरेति** । निरवयवेऽप्यौपाधिकप्रदेशभेदः सम्भवति इति भावः ॥

स किमौपाधिकभेदः सत्यः ? असत्यो वा ? । नाद्यः, अभिन्ने तस्मिन् तदयोगात् । न हि शरीरानवच्छिन्नेनात्यन्तमभिन्नेनात्मना अत्यन्तमभिन्नस्य [शरीरावच्छिन्नस्य] ततो भेदः सम्भवति । ननु अवच्छेदभेदमात्रात् एकस्मिन्नेव विरुद्धद्वयवृत्तिरविरुद्धेति चेत्, न—निष्प्रदेशे विरुद्धावच्छेदद्वयस्याप्यसम्भवात् । अवच्छेदयोरनधिकरणत्वेन भावाभावाधिकरणत्वविरोधस्य तेन अपरिहाराच्च । एकाधिकरणप्रदेशवृत्तियोग्ययोर्भावाभावयोरवच्छेदभेदस्यानपेक्षित्वात् । तदयोग्ययोस्त्ववच्छेदभेदेऽपि न तदयोग्यता गच्छतीति किम-

**समवायीति मतम्, तर्हि सावयवत्वमात्मनः न व्यवहितविषयावभासश्च स्यात्। आत्माश्रयप्रकाशस्य विषयेणासंसर्गात्। न चाश्रयातिलङ्घनं क्रियादेरित्युक्तम्। न च अनाश्रयात्मप्रदेशसंबन्धादवभासः। सर्वस्य अवभासप्रसङ्गात्। ननु अभिचारकर्म स्वाश्रयात्मप्रदेशासंयुक्ते पुरुषान्तरे अनर्थं जनयति, तद्वदिहापि स्यात्। नैतत् सारम्—दृष्टक्रियासामर्थ्यादेवादृष्टेऽप्युभयात्मप्रदेशसंयुक्तस्य देवतात्मनो वा ईश्वरस्य वा हेत्व-**

---

ता. शरीराद्यात्मप्रदेशः सत्यो वा असत्यो वा?। असत्यश्चेत् तन्निष्ठज्ञानसमवायादेरप्यसत्यत्वप्रसङ्गः। अथ सत्यः, तत्राह—**तर्हीति**। नन्वात्मना स्वरूपेण सम्बन्धोऽस्तीति, तत्राह—**न चानाश्रयेति**। प्रथमपक्षेण शङ्कते—**नन्विति**। **हेत्वन्तरस्य वा इति**। कृत्यादेरित्यर्थः। चतु-

---

भा. वच्छेदभेदेनाधिकरणभेदासम्पादकेन। एतेन परस्परविरहात्मत्वमेव अवच्छेदकभेदापेक्षत्वे प्रयोजकमिति निरस्तम्। तत्त्वेऽप्येकाधिकरणप्रदेशवृत्तियोग्यत्वायोग्यत्वयोरन्यतरस्य वक्तव्यत्वात्, तत्र चोक्तदोषानपायात्॥

किञ्च, प्रमेयत्वाद्येकैकावच्छिन्ने भावा[भावा]त्मकं जगदस्तीति नावच्छेदकभेदापेक्षा। तस्मात् परस्परविरहत्वेनैकाधिकरणप्रदेशवृत्त्ययोग्यत्वम्, तत्त्वेन च भिन्नाधिकरणवृत्तित्वमिति नाधिकरणभेदं विनैकत्र भावाभावयोर्वृत्तिः। अभावाधिकरणात् प्रतियोग्यधिकरणस्याभेदे च प्रतियोगिज्ञानस्य तदभाववद्विशेष्यकतया अप्रमात्वापाताच्च। अवच्छिन्नयोरभेदे चैकावच्छेदेनैव तदभाववद्विशेष्यकज्ञानत्वस्य तदभिमतभ्रमलक्षणस्य सत्त्वात्॥

अपि च, भावाभावाश्रयत्वेऽधिकरणभेद एव लाघवात् प्रयोजकः; न त्वभावस्याधिकरणसम्बन्धावच्छेदकभेदः, गौरवात्, प्रतीयते च मूले वृक्षः कपिसंयोगवान्न भवतीति भेदः, (अभे)[स च भे]द आत्मनि बहिश्च परमते सत्यश्चेत्, कथं तस्य विभुत्वैकत्वादिकं निर्वहति; इत्यभिप्रेत्याह—**[तर्हि] सावयवत्वमिति**। द्वितीयेऽप्यसत्त्वं नाम तुच्छत्वम्? अनिर्वचनीयत्वं वा?। नाद्यः, अधिकरणभेदाभावदोषापरिहारात्। न द्वितीयः, वैशेषिकादिमते तदभावात्। प्रदेशभेदमङ्गीकृत्याप्याह—**न व्यवहितेति**। शरीरव्यवहितेत्यर्थः॥

न्तरस्य वा अनुमीयमानत्वात् । न च आत्मसंयुक्तमनस्संसृष्टेन्द्रियसंयुक्तविषये अतिशयः पुरुषाश्रयज्ञानादुपपद्यते । विषयसंयुक्तेऽपि वस्त्वन्तरे 'प्रकाशते' इति व्यवहारातिशयप्रसङ्गात् । पूर्वभावित्वाच्च संयोगप्रवाहस्य ज्ञानवता विषयस्य वर्तमानसंयोगप्रवाहाभावात् । एवमणुदेहपरिमाणात्मवादेऽपि तुल्यो दोषः । तस्मात् न सर्ववादिनां प्रमाणादिव्यवहारसम्भवः इति ॥

सत्यम् । अस्मत्पक्षे तु कथंचित् संभवं प्रदर्शयिष्यामीत्याह—
114-5-6 तत्रैवंभूतस्याहंकर्तुरिति । इदमंशस्य—अन्तःकरणस्येत्यर्थः । व्यापारविशेषः इति परिणामोऽभिधीयते । प्रकाशस्वभावं सावयवमन्तःकरणमदृष्टेन्द्रिया-

---

ता. ष्टयसन्निकर्षस्य हेतुत्वमतिप्रसङ्गेन निराकरोति—न चेति । विषयसंयुक्तेऽपि वस्त्वन्तरे परम्परासम्बन्धस्याविशिष्टत्वात् तत्रापि व्यवहारः स्यादित्यर्थः । चतुष्टयसन्निकर्षस्य ज्ञानोत्पत्तावेव क्षीणत्वादुत्पन्नस्य ज्ञानस्य विषयेण सम्बन्धो वक्तव्यः, स च न निरूपयितुं शक्य इति युक्त्यन्तरमाह—पूर्वेति । उक्तन्यायं पक्षान्तरेऽप्यतिदिशति—एवमिति । इदानीं वेदान्ती स्वमते व्यवस्थां दर्शयितुं उपक्रमते—सत्यमिति । कथञ्चिदिति व्यवस्थायाः परमार्थसत्यतां निराकरोति । भाट्टमतसिद्धद्रव्यांशत्वमात्मनो व्यावर्तयति—अन्तःकरणस्येति । प्रकाशस्वभावमिति विशेषणेन परिणामस्योत्पत्तिप्रकारमाह—प्रकाशेति ।

---

भा. अव्यवधानेन क्रियाजन्यफलाश्रयस्यैव तदाश्रयसंसर्गित्वनियमः, तथा दर्शनात्, न परम्परया क्रियाफलाश्रयस्य इत्यभिप्रेत्य परिहरति—नैतत् सारमित्यादिना । विषयसंयुक्तेऽपीति । अन्धकारस्थे घटे ग्राह्यपटसंयुक्ते ज्ञानजनकेन्द्रियसंयुक्तत्वसम्भवादित्यर्थः । न च [यज्ज्ञानजनकेन्द्रिय]संयोगाश्रयो यः तस्यैव विषयत्वम्, ग्राह्यसंयुक्तपटस्तु न ज्ञानजनकेन्द्रियसंयोगाश्रयो भवतीति वाच्यम् । इन्द्रियस्यापि विषयत्वप्रसङ्गादिति भावः । पूर्वभावित्वाच्चेति । निमित्तकारणानां का(र्याधार)[ैककालिक]त्वनियमाभावेन तत्काले तत्सत्त्वे प्रमाणाभावादित्यर्थः ॥

कथञ्चिदिति । [अपरोक्षस्थले अन्तः]करणोपाधिबलात्, परोक्षे

दिसहकृतं ध्रुवादि [विषय] पर्यन्तं दीर्घप्रभाकारेण परिणमते। तेजसः शीघ्रातिदूरगमनदर्शनात्। परिणामद्वारेण च कर्तृकर्मसम्बन्धोऽवस्थाविशेषः इत्याह—स च प्राप्नोतिक्रियाहितेति॥ 115 - 2

स्यादन्तःकरणस्य स्वपरिणामद्वारेण विषयसंबन्धः, आत्मनस्तु विषयविशेषावभासः कथम्? इति; तदाह—तेन विषयविशेष- 115 - 3
संबद्धमिति। सर्वत्राविद्यावृततया अनभिव्यक्तस्वभावमपि चैतन्यं अन्तःकरणं येन येनावस्थाविशेषेण विवर्तते तेन तेनाकारेण व्यज्यते। अयःपिण्डेनेव चतुष्कोणत्वाद्यवस्थाविशेषमापद्यमानेन कृशानुः, इति विषयसंसृष्टान्तःकरणावच्छिन्नं चैतन्यं तदाकारमवभासते इति भावः। ननु प्रमातृरूपावच्छिन्नं चैतन्यं तद्रूपेण भासताम्, कथं चैतन्यस्य विषयावच्छेदः? इति; तदाह—कर्मकारकमपीति। स्वव्यापारा- 115 - 4-5
विष्टं इति परिणामसंसर्गादापन्नजाड्याभिभवलक्षणयोग्यत्वमुच्यते।

---

ता. ध्रुवादिपर्यन्तशीघ्रातिदूरगतियोग्यतोच्यते। सावयवमिति परिणामयोग्यता। अस्य विषयप्रतिनियमहेतुमाह—अदृष्टेन्द्रियादि इति। तत्र युक्तिमाह—तेजस इति। सत्त्वगुणप्रधानत्वात् तेजस्साम्यमन्तःकरणस्योक्तम्। आदिशब्देन आलोक उच्यते। एतावता ज्ञातुः ज्ञेयेन सम्बन्धः कथं लभ्यते? इत्याशङ्क्य अयमेव सम्बन्धः इत्याह—परिणामेति॥

नन्वात्मचैतन्यं सर्वगतत्वात् स्वत एव सर्वविषयैस्संबद्धमिति, मैवम्—अविद्यावच्छिन्नत्वादन्तःकरणपरिणामं विना व्यवहारहेतुः तन्न भवतीत्याह—सर्वत्रेति। तदाकारमवभासते इति। अयमर्थः—कर्तृरूपान्तःकरणे प्रमातेति परिणामप्रदेशे ज्ञानमिति विषयप्रदेशे प्राकट्यमिति च प्रतिभासते इति। विषयावच्छेदशब्देन घटप्रकाशः पटप्रकाश इति तत्तद्व्यावृत्तरूपतोच्यते। तादृश-

---

भा. त्वविद्यामहिम्नैवेत्यर्थः। ध्रुवादिपर्यन्तं दीर्घप्रभाकारेण परिणमत इति। यथा चक्षुरादि स्वोपादानस्थमेव ध्रुवादिमण्डलव्यापि परिणमते एवमन्तःकरणमपीत्यर्थः॥

**अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि चैतन्याभिव्यक्तियोग्यतामा-
पादयतीति भावः ॥**

**ननु अवच्छेदकभेदे चित्प्रकाशभेदात् कथं विषयावच्छिन्नानुभव-
स्य प्रमातृरूपावभाससंसर्गः ? असंसर्गे वा कथं मयेदमवगतमिति** प्रमातृ
**प्रमेयसंसर्गावभासि संवेदनं स्यात् ? अनुभवभेदात् एकस्मिन्** संबन्धा-
115 - 5 **वगमे पदार्थयोरवभासायोगादिति ; तत्राह**— प्रधानक्रियाहितप्रमात्रवस्था-
विशेषावच्छिन्नापरोक्षतैकरूपां इति । **एकामित्यर्थः । परिणामस्योभय-**
**संसर्गात् व्यञ्जकाभेदेन व्यङ्ग्याविच्छेदः इति भावः । ननु उभयत्र**
**चैतन्याभिव्यक्त्यविशेषे घटावच्छिन्नानुभवः प्रमाता किं वा अन्तःकरणा-**
116 - 2 **वच्छिन्नः ? इति न विशेषः स्यादिति ; नेत्याह**— ततश्चात्मनोऽन्तःकरणा- **कर्तुर्हि**
वस्थाविशेषोपाधिजनितो विशेषः इति । **प्रमातेति वाक्यशेषः । प्रमाते-**
**प्रमातृता न कर्मणः । तत्रान्तःकरणस्य कर्तृत्वात् तदवच्छिन्नः** विरुद्धमापन्नमिति;
**त्यर्थः । ननु चैतन्यस्यैकत्वे प्रमातैव फलमिति** अन्तःकर-
116 - 3 **तत्राह**— विषयानुभवसंशब्दितो विषयस्थापरोक्षैकरसः फलं इति ।
**णावच्छिन्नतया प्रमाता विषयावच्छिन्नतया फलमिति भावः ॥**

---

ता. योग्यत्वस्य कथमुत्पत्तिसंभवः ? इत्यत आह— **अन्तःकरणं हीति ॥**

**अवच्छेदकभेदे** इति । अन्तःकरणतद्वृत्तितद्विषयाणां भिन्नत्वादित्यर्थः ।
**प्रमातृरूपावभास** इति अहंकारावच्छिन्नं चैतन्यमुच्यते । मास्तु संसर्ग इति;
तत्राह— **असंसर्गे वेति ।** का अनुपपत्तिरिति ; अत आह— **अनुभवेति ।**
**एकरूपा**मिति सादृश्यमेवोक्तं न त्वैक्यमिति ; तत्राह— **एकामिति ।** एकत्व-
मेवोपपादयति— **परिणामस्येति । उभयसंसर्गात्**— प्रमातृप्रमेयाभ्यां संसर्गात् ।
तत्र का युक्तिः इति ; अत्राह— **कर्तुर्हीति ॥**

---

भा. **विषयावच्छिन्नतया फलमिति ।** यद्यपि विषयावच्छिन्नचैतन्य-
मज्ञातं प्रमेयमेव, तथापि तदेवाभिव्यक्तं सत् फलमित्यर्थः ॥

ननु अहं जानामि उपलभे इति क्रियाफलयोरेकाश्रयत्वमनुभूयते,
तदेवं सति न स्यात् । क्रियारूपवृत्तेरन्तःकरणाश्रय[त्वात् प्रमातृ] चैतन्या-

नन्तु क्रियाफलयोरन्तःकरणात्मसमवायिनोः भिन्नाश्रयत्वम्, घटान्तःकरणविषयतया च भिन्नविषयत्वमिति क्रियाफलयोरेकाश्रयत्वैकविषयत्वनियमविरोधः इति; नेत्याह—इति क्रियैकविषयता फलस्येति। विषयेत्याश्रयस्याप्युपलक्षणम्। अन्तःकरणात्मनोरैक्याध्यासेनैकाश्रयत्वं चैतन्यस्यापि घटावच्छेदादेकविषयत्वमिति। ननु बुद्धिस्थमर्थं पुरुषश्चेतयते इति साङ्ख्याः, तद्विरुद्धं आत्मा स्वचैतन्योपरक्तं चेतयते इति; तत्राह—एवं चाहंकर्तेति। प्रथमं बुद्धिस्थमर्थं तदात्मतामापन्नः पश्चाच्चेतयते इत्यर्थः। उक्तं तावत् सर्वगतस्याप्यात्मनोऽविद्यावृतप्रकाशस्य परिच्छिन्नान्तःकरणपरिणामोपाध्यभिव्यक्त्यपेक्षया विषयविशेषं प्रति प्रमातृत्वम्॥

116 - 3

116 - 4

ननु केयमभिव्यक्तिः?। आवरणाभिभव एव। न स्वरूपातिशयः। ननु उक्तोपाधिः किंप्रमाणकः?। उक्तं–'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'

---

ता. व्यापारवदन्तःकरणैक्याध्यासादात्मनः कर्तृत्वं आत्मैक्याध्यासादन्तःकरणस्याप्यनुभवाश्रयत्वं फलस्यापि घटाकारवृत्तिद्वारेण घटविषयत्वादेकविषयता च लभ्यते इत्याशयेनाह—अन्तःकरणात्मनोरिति। वृत्तं कीर्तयति—उक्तं तावदिति। चैतन्यरूपस्यात्मनो न हि व्यक्तिरव्यक्ता सदा स्वयंप्रकाशत्वाविशेषात् इति चोदयति—ननु केयमिति॥

---

भा. भेदेनाभिव्यक्तविषयचैतन्यात्मन उपलब्धेरतद्धर्मत्वात्। एवं तयोर्घटविषयत्वमपि प्रतीयमानं न स्यात्, घटादेर्वृत्तिविषयत्वाभ्युपगमे तावतैव तद्व्यवहारोपपत्तौ चैतन्यविषयत्वे प्रमाणाभावात् वृत्त्यविषयान्तःकरणादेरेव चैतन्यविषयत्वादिति शङ्कते—ननु क्रियेति॥

(गोचर) एकविषयत्वमिति। घटादेश्चैतन्यागोचरत्वे तद्व्यवहारो न स्यात्, अनात्मव्यवहारे तद्विषयचैतन्यस्य हे(य)[तु]त्वादित्यर्थः। आवरणाभिभव इति। अवस्थाज्ञाननिवृत्तिरित्यर्थः। यदा त्वेकमेवाज्ञानं तदापि तस्य पूर्णब्रह्मनिरूपितावरणात् घटा(दि) [द्यवच्छिन्न] चैतन्यनिरूपितं तत् अन्यदेव, अन्यथा तत्र न जानामि इति प्रतीत्ययोगादिति तस्य निवृत्तिरित्यर्थः॥

इति। धीशब्दवाच्यज्ञानपरिणामवत् मनो विज्ञानं बुद्धिरिति। तदेवमुपाधिवशात् नियमेऽपि तदज्ञानात् यच्चोदितं—चैतन्यस्य सर्वविषया-
117-2 विशेषित्वात् सर्वमस्य युगपदवभासेतेति; तत् परिहरति—तत्र च प्रमातुः स्वयंज्योतिषः इति। परिणामसंसृष्टकर्मोपाधिनियमात् न असंसृष्टेषु चैतन्याभिव्यक्तिरिति नैकस्य प्रमातुः सर्वविषयावभासः इति भावः। ननु कर्मकारकेऽपि चैतन्यमभिव्यक्तं चेत् सर्वप्रमातृसाधारणतया
117-5 सर्वेषामवभासतामिति; नेत्याह—कर्मकारकमपीति। एतत्प्रमातृचैतन्याभिन्नतयैवाभिव्यक्तं तद्विषयचैतन्यं न प्रमात्रन्तरचैतन्याभेदेन अभिव्यक्तम्, अतो न सर्वेषामवभास्यत्वमित्यर्थः॥

ननु स्वयंप्रकाशमानस्य प्रदीपादिवत् स्वसंसर्ग्यशेषवस्तुप्रकाशित्वे प्राप्ते कथमहंकारोपाधिनियमः कल्प्यते?। न चान्तःकरणपरिणामसंसृष्टविषयादन्यत्र चैतन्यमुपरक्तमपि न प्रकाशयतीति युक्तम्। संसृष्टविषयादन्यत्र चैतन्यमुपरक्तमपि न प्रकाशयतीति युक्तम्। प्रकाशसंसर्गस्यैव प्रकाशमानताभिधानात्। विषयान्तरेषु चैतन्यस्यासङ्गितया नोपरागः इति चेत्, अन्तःकरणेऽपि तर्ह्यसङ्गितया नोपरागः इति तदुपाधिनापि न किंचिदपि प्रकाशेत। स्यादेतत्—

---

ता. परिणामेति। अन्तःकरणपरिणामेन संसृष्टो योऽसौ कर्मकारकलक्षणोपाधिः तत्रैव चैतन्यमभिव्यज्यते नान्यत्रेति नियमात् नातिप्रसङ्गः इत्यर्थः। प्रदीपे क्वचित् स्थापिते स्थापयितुरेव तत्प्रकाश इति नियमाभावादन्यत्रापि अनियमः स्यादिति चोदयति—ननु कर्मेति। उक्तां व्यवस्थामाक्षिपति—ननु स्वयमिति। सर्वविषयावभासानुपलब्धेः तत्कारणतया उपाधिवर्णनं युक्तमिति चेत्, तर्हि वक्तव्यं किं विषयोपरक्तस्यापि तत्प्रकाशतार्थमुपाधिः कल्प्यते? किं वा विषयोपरागस्यैव सिद्ध्यर्थम्? इति विकल्प्य आद्यं दूषयति—न चान्तःकरणेति। द्वितीयं पक्षमुत्थापयति—विषयान्तरेष्विति॥

---

भा. उक्तप्रक्रियामाक्षिपति—नन्विति। जीवः सर्वगतः परिच्छिन्नो वा?। आद्य आह—स्वयम्प्रकाशमानस्येति। न किञ्चिदिति। इन्द्रियसन्निकृष्टं घटादिकमपीत्यर्थः। चैतन्यस्यान्तःकरणसंसर्गो वा तद्वदन्यसंसर्गस्यापि

**अन्तःकरणावच्छिन्नो हि जीवः प्रतिबिम्बस्थानीयः परिच्छिन्नः तत्संसृष्टमेव विषयं प्रकाशयेत् । ब्रह्म तु बिम्बस्थानीयं सर्वगतत्वात् सर्वमवभासयिष्यति। न च ब्रह्मणि सर्वदर्शित्वं मुखावदातत्ववत् जीवमनुगच्छति। जीवगतं वा किञ्चिज्ज्ञत्वं मुखश्यामत्वादिवत् न ब्रह्मानुगच्छतीति सर्वमुपपन्नमिति। नैतत्सारम्—तथा सति विषयावच्छिन्नचैतन्यस्य ब्रह्मचैतन्यतया अहङ्कारावच्छिन्नजीवानुषङ्गाभावात् सर्वज्ञत्वमिव विषयावभासोऽपि जीवस्य न स्यात्। ननु जीवोपाधेरन्तःकरणस्य विषयस्य च परस्परान्वयादुभयावच्छिन्नमपि चैतन्यमन्योन्यसंसृष्टमिति युक्तो जीवस्य विषयावभासः इति। नैतद्युक्तम्—तथा सति सर्वगतेन**

---

ता. किं जीवचैतन्यस्य सर्वावभासकत्वं प्रसञ्जयसि? उत ब्रह्मचैतन्यस्य? इति विकल्प्य, आद्योऽनुपपन्नः, जीवस्य परिच्छिन्नत्वात्, द्वितीये तु न अनिष्टापत्तिः तस्य सर्वावभासकत्वाङ्गीकारात् इति सिद्धान्तिनो मतमुत्थापयति—**स्यादेतदिति**। ननु तयोः भेदाभावात् ब्रह्मनिष्ठं सर्वावभासकत्वं जीवे स्यात् जीवनिष्ठञ्च किञ्चिज्ज्ञत्वं ब्रह्मणि स्यात् इत्याशङ्क्य वेदान्ती परिहरति—**न चेति**। एवं सिद्धान्तिनो मतमनूद्य दूषयति पूर्ववादी—**नैतत् सारमिति**। जीवस्याहंकारोपाधिपरिच्छिन्नतया घटपटादिबाह्यविषयैः संसर्गाभावात् घटादिप्रकाशकत्वं न स्यादित्यर्थः। परिच्छिन्नत्वेऽपि जीवस्य स्वोपाधिभूतान्तःकरणवृत्तिप्रतिबिम्बविषयचैतन्याभेदात् तदवभासकत्वं युक्तमिति शङ्कते—**ननु जीवेति**। एतन्मतमतिप्रसङ्गेन दूषयति पूर्ववादी— **नैतदिति**। अन्तःकरणसंसृष्टत्वे युक्तिः—**सर्वगतेनेति** ॥

---

भा. अविरोधात् सर्वं युगपद्भासेतेत्यर्थः। द्वितीयं शङ्कते—**स्यादेतदिति**। **अवच्छिन्नः प्रतिबिम्बस्थानीयः इति** मतद्वयानुसारेणेति द्रष्टव्यम्। ब्रह्मणि तु तदभिन्नेऽपि न तद्दोष इत्याह—**ब्रह्मेति**। अस्मिन् पक्षे सन्निकृष्टघटादेरपि भानं न स्यादित्याह—**नैतत् सारमिति**। **परस्परान्वयादिति**। घटाद्याकारापरोक्षवृत्तिदशायामित्यर्थः। **संसृष्टं** अभिन्नमित्यर्थः। एकान्तःकरणसम्बन्धाच्चेत् बिम्बप्रतिबिम्बचैतन्ययोरभेदस्तर्हि सर्वदा अभेदप्रसङ्गादौपाधिकभेदस्याप्यभावात् सर्वज्ञत्वादेः साङ्कर्यापत्तिरित्याह—**नैतद्युक्तमिति** ॥

ब्रह्मणा नित्यसंसृष्टमन्तःकरणमिति तदुपाधौ जीवब्रह्मचैतन्याभेदाभिव्यक्तेः ब्रह्मसार्वज्ञ्यं जीवस्य नित्यवत् प्रकाशेत ॥

अथ मतम् — सर्वगतमपि चैतन्यमविद्यावृतत्वात् स्वयमपि तावत् न प्रकाशते। न च स्वयमप्रकाशमानः चैतन्यप्रकाशः प्रदीपवत् प्रकाश्यमवभासयितुं क्षमः। अङ्गुलिमात्रेणादित्यवत् परिच्छिन्नेनापि अज्ञानेन सर्वगतमपि चैतन्यं तिरोधीयते। तत्रान्तःकरणोपरागेणावरणाभिभवात् तत्रैवाभिव्यक्तं चैतन्यं किंचिदेव प्रकाशयतीति। तदपि न युक्तम्—कार्यभूतेनान्तःकरणेन स्वोपादनाज्ञानाभिभवायोगात्। तस्मात् न युक्तं किञ्चिज्ज्ञत्वे अहंकारोपाधिवर्णनमिति ॥

अत्रोच्यते—युक्त एवायमुपाधिः। सर्वगतस्यापि जीवस्यासङ्गि-

---

ता. अविद्योपाधिको जीवः सर्वगतः इति पक्षमाश्रित्य व्यवस्थामाशङ्कते वेदान्ती —अथ मतमिति। स्वयमप्रकाशमानोऽपि चक्षुर्वत् विषयान् प्रकाशयतु इत्यत आह—न चेति। अव्यवधानेन प्रदीपवत् प्रकाशकत्वादप्रकाशमानस्य तत् दुर्घटमित्यर्थः। ननु अहमज्ञः इति परिच्छिन्नतया अवगतस्याज्ञानस्य कथं सर्वगतात्मतिरोधायकत्वम्? इत्यत आह—अङ्गुलिमात्रेणेति। तर्हि कथमावृतस्य प्रकाशकत्वम्? इत्यत आह—तत्रेति। एतत् सिद्धान्तिमतं दूषयति पूर्ववादी-

---

भा. पुनरपि सर्वगतो जीव इति पक्षमादाय व्यवस्थां शङ्कते—अथेति। ननु अविद्यया परिच्छिन्नया सर्वगतचैतन्यस्य तिरोधानमनुपपन्नम्, न हि [करतलेन] गगनमीच्छादयितुं शक्यम्, अविद्या च 'पादोऽस्य विश्वा भूतानि' इत्यादिशास्त्रात् परिच्छिन्नेति; तत्राह—अङ्गुलिमात्रेणेति। न चाङ्गुलिर्नयनपिधायिकैव नादित्यमण्डलस्य पिधायिकेति वाच्यम्; तथा सति नयनरश्मीनामनिर्गमनप्रसङ्गेनाङ्गुल्यादिज्ञानमपि न स्यात्। किञ्च अस्य तिरोधायकत्वं भाण्डेन दीपस्येव नेष्यते। किन्तु प्राग्वर्णितयोग्यतारूपप्रकाशप्रतिबन्धप्रयोजकत्वम्, तच्च परिच्छिन्नस्याप्यज्ञानस्य काचादेरिवाविरुद्धमिति भावः ॥

तत्र प्रथमं जीवस्याज्ञानोपाधितया परिच्छिन्नत्वेऽपि साक्षिणो विषयोपरागार्थमन्तःकरणवृत्तिरेष्टव्येत्युपाधिबलाद्व्यवस्था युक्तेत्याह—युक्त एवाय-

तया सर्वेणासंयोगात् । प्रकाशस्य च संयुक्तवस्त्ववभासित्वात् । ब्रह्म तु सर्वोपादानतया स्वात्माभिन्नं जगदात्मानमिवावभासयति । न तु जीवः, अनुपादानत्वात् ॥

कथं पुनः सर्ववस्तुदेशाव्यवहिततया सर्वगतस्य विषयान्तरेष्वसङ्गितया असंसृष्टस्यान्तःकरणसंसर्गिता संभवेत् ? ।

उच्यते—यथा गोत्वादयो जातिविशेषाः केसरादिमद्व्यक्त्यन्तरप्रदेशसंनिहिता अपि स्वभावविशेषादश्वादिव्यक्त्यसङ्गितया तैरनभिव्यक्ता अपि सास्नादिमत्पिण्डसङ्गितया अभिव्यज्यन्ते । यथा वा

---

ता. तदपीति । मास्तु संयोगः, तथापि प्रकाशयतु इत्यत आह—**प्रकाशस्य चेति**। ब्रह्मणोऽप्यसङ्गितया सर्वावभासकत्वासिद्धेः सर्वज्ञत्वं न स्यादिति ; अत्राह—**ब्रह्म त्विति** । तर्हि अन्तःकरणेनाप्यसङ्गत्वात् सम्बन्धो न युक्तः इति शङ्कते—**कथमिति** ॥

इदानीं सर्वगता जातिरिति मतमाश्रित्य परिहरति—**उच्यते इति** । इतरेषां दृष्टान्तमाह—**यथा वा प्रदीपेति**। स्वरूपेणासमर्थस्य उपाधिसम्बन्धात्

---

भा. मिति । ननु संयोगाभावेऽप्याध्यासिकं तादात्म्यं जीवेन विषयस्यास्तु, अन्यथा ब्रह्मणोऽपि सर्वज्ञत्वं न स्यादिति ; तत्राह—**ब्रह्म त्विति** । बिम्बभूतस्य ब्रह्मण एवोपादानत्वात् प्रपञ्चस्य तेनैव कल्पितमपि तादात्म्यम्, न जीवेन प्रतिबिम्बात्मना, तस्यानुपादानत्वादित्यर्थः । तर्ह्यन्तःकरणस्यापि न तेन तादात्म्यमिति तदुपरागो वा तस्य कथम्? इति शङ्कते—**कथं पुनरिति** । अविद्याप्रतिबिम्बचैतन्यस्यैवान्तःकरणाधिष्ठानत्वात्तदुपादानत्वम् । न चैवं ब्रह्मणः सर्वोपादानत्वभङ्गप्रसङ्गः ; वस्तुतो जीवस्यापि ब्रह्माभिन्नत्वेन तत्कर्तृके ब्रह्मणः कर्तृत्ववत् तदुपादानकोपादानत्वाविरोधात् । अन्यथा जीवस्य इच्छाद्युपादानत्वमपि न स्यात् । अन्तःकरणाधिष्ठानचैतन्यस्यैव तदवच्छिन्नतया प्रमातृभूतस्य ब्रह्मतानुपपत्तेश्च । तस्मादस्त्येव जीवस्यान्तःकरणेन तादात्म्यमिति विशेषमभिप्रेत्याह—**उच्यत इति** । इयं शङ्का परस्यानुपपन्नेत्याह—**यथेति**। चैतन्यस्य साक्षात् स्वोपरक्तेन्द्रियाप्रकाशकत्वेऽपि अन्तःकरणप्रकाशकत्वं युक्तमित्यत्र दृष्टान्तमाह—**यथा वेति** । केवलचैतन्यस्याप्रकाश्यमपि घटादि

**प्रदीपप्रभा वाय्वाकाशरसगन्धादिप्रदेशव्यापिन्यपि स्वभावविशेषात्तानि न प्रकाशयन्ती रूपसंसर्गितया तदेव प्रकाशयति । एवं चैतन्यमपि स्वभावविशेषादन्तःकरणे संसृज्यते नान्यत्रेति युक्तम् । यथा च केवलेन वह्निना न दाह्यमपि तृणादि अयःपिण्डसमारूढेन दह्यते तथा अहंकारसमारूढेनात्मना केवलेनाप्रकाश्या अपि विषयाः प्रकाश्यन्ते इति युक्तमहंकारोपाधिवर्णनम् ॥**

---

ता. सामर्थ्ये दृष्टान्तमाह—**यथा च केवलेनेति** ॥

---

भा. अन्तःकरणसम्बद्धचैतन्येन प्रकाश्यत इत्यत्र दृष्टान्तमाह—**यथा चेति** ॥

ननु सर्वगतस्य चैतन्यस्य घटादिना कोऽयमुपरागः ? य उपाध्यधीनः । न तावत् संयोगः ; चैतन्यस्य निरवयवत्वात् । सावयवान्तःकरणतादात्म्यविशिष्टस्य सावयवत्वमस्तीति चेत् , सत्यम् ; तत्तादात्म्येऽपि ततोऽन्यस्य तस्य निरवयवत्वात् । किञ्च, एवमपि सर्वगतस्य संयोगासंभवात्तत्र कल्पितस्यापि भेदस्य अभावेन अधिकरणभेदं विना अव्याप्यवृत्तिसंयोगस्य तस्मिन्नयोगात् । न चान्तःकरणोपाधिना भेदस्तत्रास्त्विति वाच्यम् ; एवं सत्यन्तःकरणोपहितस्यैव संयोगाश्रयत्वप्रसङ्गेन अन्तःकरणावच्छिन्नस्यासर्वगतस्य विषयेण तदधीनोपरागाभावात् । न हि एवं सर्वगतचैतन्यस्य निश्चलस्थाण्वादिना क्रियाऽभावादपि न संयोगः । निष्क्रिययोरप्य(न्या)[न्तःकरणा]धीनसंयोगः सम्भवति ; अन्तःकरणस्यान्यतरसम्बन्ध्यजनकत्वात् । नापि तादात्म्यमुपरागः ; अनुपादानजीवस्य तदयोगात् , (जीव) चैतन्यघटादितादात्म्यस्यान्तःकरणाधीनत्वायोगाच्च । न हि सम्बन्धिनोः सतोः तादात्म्यमपि तत्समानसत्ताकं संयोग इव हेत्वन्तरेण भवति । नापि चैतन्यघटयोरवच्छेद्यावच्छेदकभावः अन्तःकरणवृत्त्यधीनः । तस्यापि मूलसम्बन्धपूर्वकत्वात् । अन्यथा प्रागपि तत्प्रसङ्गात् । [ननु] यथा परोक्षवृत्त्यवच्छिन्नचैतन्यविषययोर्न सम्बन्धोऽस्ति तथा अत्रा[पि । तत्रापि] तदवच्छिन्नचैतन्यविषयस्वरूपमेव सम्बन्ध इति चेत् , प्रकृतेऽपि तत्सम्भवात् । न चैवमुपाधिवैयर्थ्यम् ; समयविशेष एव विषयस्फुरणदर्शनेन वृत्त्यवच्छिन्नचैतन्यविषयस्वरूपयोः सम्बन्धात्मकत्वादिति चेत् , न—वृत्तिनिर्गमनाभ्युपगमवैयर्थ्यात् । न च

विषयापरोक्षतार्थं तदिति वाच्यम्; वृत्तिसंसृष्टस्यैवात्मनोऽपरोक्षत्वे अन्तः-करणादेः रजतादेश्च (तदा)[तदभावा]पत्तेः। सम्भेद[संविदभेद]स्तु (निर्गमन)[निर्गत]वृत्त्यापि न सम्भवतीति चेत्— भा.

अत्रेदं प्रतिभाति—यद्यपि अविद्याप्रतिबिम्बतया जीवोऽन्तःकरणावच्छिन्न इव[न]परिच्छिन्नः, तथापि तस्य साक्षित्वं न तेन रूपेण, पुरुषान्तरान्तःकरणसुखादेरपि प्रत्यक्षत्वप्रसङ्गात्। न च पुरुषान्तरान्तःकरणादेर्भानेऽपि घटादेरिवान्तःकरणवृत्तिरपेक्ष्यत इति वाच्यम्। किं चिदुपरागाय सा? आवरणाभिभवाय वा?। नाद्यः, एतदन्तःकरणवत् तस्यापि साक्षिण्यध्यासात्। न द्वितीयः, एतत्साधकचैतन्यवत् तस्याप्यनावृतत्वात्। पुरुषान्तरसुखादिकमपि पुरुषान्तरं प्रत्यावृतमेवेति चेत्; भवेदेवं साक्षिभेदे। तदभेदे तु स्वरूपविभागः कुतः॥

न चान्तःकरणभेदे प्रमातृभेदोऽस्तीति वाच्यम्; अन्तःकरणसुखादेः साक्षिमात्रभास्यस्य प्रमातृभेदेऽपि साक्ष्यभेदे आवृतत्वायोगात्। पुरुषान्तरसुखादेः पुरुषान्तरान्तःकरणावच्छिन्नचैतन्यसम्बन्धाभावादेवाप्रतीतौ घटादेरपि तथात्वेन अविद्यावच्छिन्नचैतन्यमात्रस्य साक्षित्वे प्रमाणाभावात्। अस्मिन् पक्षे यज्ञदत्तस्यापरोक्षो घटो देवदत्तस्याप्यपरोक्षः स्यात्। साक्षिसम्बन्धस्य सत्त्वात्। यज्ञदत्तस्यापि वा अपरोक्षो न स्यात् असम्बन्धात्, साक्ष्यभेदे च तस्य पुरुषान्तरं प्रत्यावृतत्वकल्पनाऽयोगाच्च॥

न च शरीरान्तरसम्बन्ध्यन्तःकरणमेव नेति वाच्यम्; प्रपञ्चस्य स्वप्नवैलक्षण्याभ्युपगमदशायां शरीरान्तरे नियतचेष्टादिना विनिगमकाभावेन कर्मकाण्डप्रामाण्याय च अनेकान्तःकरणस्य स्वीकर्तव्यत्वात्। तदभावे प्रतिकर्मव्यवस्था वा कथमुपपद्यते?। तस्मादन्तःकरणोपहितचैतन्यं जीवस्य व्यवहाराङ्गं साक्षीत्युच्यते। न च तस्य प्रमातृत्वमेव न साक्षित्वमिति वाच्यम्; अन्तःकरणविशिष्टस्य प्रमातृत्वेऽपि तदुपहितस्य साक्षित्वात्। विशेषणोपाध्योश्च भेदः सिद्धान्ते सिद्ध एव। न चैवं सुषुप्तौ साक्षी न स्यादिति वाच्यम्; तदाप्यन्तःकरणस्य सूक्ष्मरूपतया चैतन्यव्यावर्तकस्य सत्त्वात्। ततश्च वृत्तिमदन्तःकरणोपहितसाक्षिणा घटाद्यवच्छिन्नचैतन्यस्याभेदेन अभिव्यक्तौ विषयोऽपि साक्षिणा संसृष्ट इति चिदुपरागार्था वृत्तिर्भवति। यथा हि पूर्वं घटानवच्छि-

भा॰ न्नोऽप्याकाशो विपुलीभूतः तद्घटेनावच्छिद्यमानस्तदाकाशाभिन्न एव, एवं पूर्वमुपाधितो भिन्नमपि विषयचैतन्यमविद्याकार्येणान्तःकरणेन अवच्छिद्यमानमविद्याप्रतिबिम्बत्वविशिष्टान्तःकरणावच्छिन्नजीवसाक्ष्यभिन्नम् ॥

ननु बिम्बत्वाधिकरणचैतन्यमेव सर्वोपादानतया अविद्यावच्छिन्नम्, न तु प्रतिबिम्बत्वविशिष्टम्। ततश्च तस्य कथं प्रतिबिम्बचैतन्येनाभेदः?। न हि व्यावर्तकोपाधौ सति भेदो निवर्तते। अन्यथा प्रमातुर्जीवत्वब्रह्मत्वयोः आपत्तिः। जीवस्य घटद्रष्टृत्वदशायां ब्रह्मणस्तत्सम्बन्धाभावात् तदद्रष्टृत्वप्रसङ्गोऽपीति चेत्—

न—यद्यपि बिम्बत्वाधिकरणमेव चैतन्यं विषयाधिष्ठानम्, तथापि तत् वस्तुतस्तदुपलक्षितं भवति। अन्यथा बिम्बत्वप्रतिबिम्बत्वविशिष्टचैतन्यातिरिक्तचैतन्यस्येदानीमसत्त्वेन शास्त्रार्थस्य ब्रह्मणोऽसत्त्वप्रसङ्गात्। तथा च ब्रह्मचैतन्यं प्रतिबिम्बात्मकताविरोधिचैतन्यात्मना अन्तःकरणेनावच्छिद्यत इति भवति तस्य प्रतिबिम्बत्वविशिष्टान्तःकरणावच्छिन्नजीवसाक्ष्यभेदः। न ह्यविद्या अन्तःकरणं वा जीवस्य चैतन्यमात्राद्भेदं सम्पादयति। यथा दर्पणं घटो वा मुखमात्रादाकाशमात्राद्वा घटावच्छिन्नाकाशप्रतिबिम्बमुखयोर्भेदं न सम्पादयति, किन्तु बिम्बत्वानवच्छिन्नत्वविशिष्टमुखाकाशाभ्याम्। अन्यथा अवच्छिन्नादावाकाशादिबुद्धिर्न स्यात्। एवं जीवेऽपि चैतन्यबुद्धिर्न स्यात्। तथा चैतन्यमात्रस्याविद्याद्युपाधिदशायामपि न जीवाभेदविरोधः। न च जीवब्रह्मतासाङ्कर्यम्। बिम्बत्वविशिष्टस्य तदभेदाभावात्। नापि ब्रह्मणस्तदा घटादिद्रष्टृत्वासम्भवः। घटाधिष्ठानचैतन्यस्याप्यन्तःकरणावच्छेददशायां बिम्बप्रतिबिम्बभावेन द्विधा वृत्तत्वेन तत्सम्बन्धस्याप्यनपायेन घटादावुभयद्रष्टृत्वोपपत्तेः ॥

नन्वेवमपि प्रतिबिम्बचैतन्यगतान्तःकरणस्य कथमपि न विषयावच्छिन्नब्रह्मणा सम्बन्धः। तस्य स्वोपादानान्येन तादात्म्यायोगात्। अस्तु तर्हि संयोगः, स्वोपादाने स्थितस्यैवान्येन संयोगदर्शनादिति। [न—] अन्तःकरणावच्छेदेन विषयावच्छिन्नस्य जीवाभेदे एकस्यैव तस्मिन् तादात्म्यसंयोगलक्षणसम्बन्धद्वयापातात् इति चेत्—

सत्यम्। दीर्घैस्तन्तुभिरर्धप्रदेशारब्धपटस्यानारम्भकतन्तुप्रदेशेन सम्बन्धे

**अथ वा, सोपाधिकत्वात् जीवः परिच्छिन्नो न सर्वमवभासयति। जीवावच्छेदनिमित्तान्तःकरणपरिणामसंसर्गकृता [भेदा] भिव्यक्तित्वात् विषयावच्छिन्नचैतन्यस्य जीवचैतन्यता च न विरुध्यते। ब्रह्माकारपरिणतान्तःकरणसंसर्गाभावाच्च न नित्यवत् ब्रह्मणः प्रकाशप्रसङ्गः। न च**

---

ता. इदानीमन्तःकरणोपाधिपरिच्छिन्नत्वेन असर्वगतो जीवः इति मतमाश्रित्याह—**अथ वेति**। विषयावच्छिन्नचैतन्यस्य ब्रह्मरूपत्वात् जीवस्य विषयाभासो न युक्तः इति यदुक्तम्, अत्राह—**जीवावच्छेदेति**। तर्हि अन्तःकरणसम्बन्धात् ब्रह्मणोऽपि सदा प्रकाशः स्यादिति यदुक्तम्, तत्राह—**ब्रह्माकारेति**। ननु जीवस्य यथा अन्तःकरणसंसर्गिणः प्रतीतिः, तद्वद्ब्रह्मणोऽपि किं न स्यात्? इति; तत्राह—**न चेति**। किमिति नाङ्गीकृतः? इति; तत्राह—

---

भा. युगपदेकस्यैवैकेन प्रदेशभेदेन तादात्म्यसंयोगदर्शनेन तस्याविरुद्धत्वात्। एकप्रदेशेऽस्माकमपि तदुभयाभावात्। शरीरतादात्म्यप्रदेशाङ्गुल्यन्तरसंयोगदशायां शरीरस्यापि संयोगानुभवेन एकदेशेऽपि सम्बन्धद्वयं न दोषाय। किञ्च, प्रतिबिम्बचैतन्यमपि चैतन्यरूपेणान्तःकरणाधिष्ठानत्वयोग्यमिति विषयचैतन्यमपि तद्योग्यम्, पश्चात् प्रतिबिम्बत्वाधिकरणाभेदेन तदधिकरणं च भवति। अतः तत्रापि वृत्त्यवस्थापन्नान्तःकरणतादात्म्यं सम्भवत्येवेति न सम्बन्धद्वयापत्तिरपीति॥

एवमविद्याप्रतिबिम्बः सर्वगतो जीव इत्यस्मिन् पक्षे चिदुपरागार्थो वृत्तिरित्युक्त्वा, अन्तःकरणोपाधिको जीव इति मतेऽपि वृत्तेस्तदर्थत्वं दर्शयति—**अथ वा सोपाधिकत्वादिति**। तर्हि ब्रह्माभेदाभिव्यक्तिरपि स्यादित्याशङ्क्य, वाक्यार्थस्य ब्रह्मणोऽभेदाभिव्यक्तिरापाद्यते? किं वा सर्वज्ञत्वादिविशिष्टस्य?। नाद्यः, तस्येदानीं सत्त्वेऽपि अविद्यावृतस्यान्तःकरणवृत्तिं विना अभिव्यक्त्ययोगादित्याह—**ब्रह्माकारेति**। तर्हि सर्वज्ञत्वादिगुणकस्य अविद्यावृतत्वाभावेन तदाकारवृत्तिं विनैव अन्तःकरणसम्बन्धमात्राज्जीवचैतन्याभेदाभिव्यक्तिः स्यादित्याशङ्क्य, तदाकारभेदप्रयोजकोपाधौ सति तदभेदो न युक्तः, न हि येनोपाधिना यस्य यस्माद्भेदो भवति स एव तयोरभेदनिमित्तं भवति इत्याह—**नचान्तःकरणस्वरूपेति**। अन्तःकरणस्वरूपमात्रस्याभिव्यञ्ज-

अन्तःकरणस्वरूपमात्रसंसर्गिणोऽभिव्यक्तिरङ्गीकृता । तद्गतधर्मादीनामपि प्रसङ्गात् । जीवाकाराहंवृत्तिपरिणतान्तःकरणेन च जीवोऽभिव्यज्यते । अन्यथा जीवस्य सुषुप्तेः । अतः परिच्छिन्नत्वात् न सर्वविषयावभासिता ॥

अथ वा, अज्ञानावृतः स्वयमप्रकाशमानतया विविधविषयाननवभासयन् अन्तःकरणोपरागादावरणतिरोधाने तत्रैवाभिव्यक्तः तत्सं-

---

ता. **तद्गतेति** । कथं तर्हि जीवस्याभिव्यक्तिरिति ? तत्राह—जीवाकारेति । कथमेतदवसीयते ? इत्याशङ्कायां, अहंवृत्तिव्यतिरेके जीवस्यानवभासदर्शनादित्याह —**अन्यथेति** ॥

जीवस्य सर्वगतत्वपक्षमङ्गीकृत्याह—**अथ वेति** ॥

---

भा. कत्वे दूषणान्तरमाह—**तद्गतेति** । वस्तुतोऽपरोक्षत्वायोग्यत्वं तु प्रकृतेऽपि समानम्, ग्राहकभिन्नचैतन्यस्यापरोक्षत्वायोग्यत्वात् इति भावः । कथं तर्ह्यन्तःकरणमात्राज्जीवस्याभिव्यक्तिः ? इति चेत्, न—स्वत एवानावृतसाक्षिण्यन्तःकरणमध्यस्तत्वात् प्रतीयते, न तु तेन चैतन्यमभिव्यज्यते । कथं तर्ह्यसंप्रत्ययविषयत्वमात्मनः उच्यते ? तत्राह—**जीवाकारेति** । अभिव्यज्यते—अहमिति व्यवह्रियते इत्यर्थः । **सुषुप्तेः इति** । निर्विकल्पकतया स्फुटव्यवहाराभावादित्यर्थः । (एतद्ग्रन्थस्यैव तु) [यथाश्रुतार्थस्यैव] व्याख्याने स्वात्मनि **प्रकाशाव्यभिचारा**दित्यादिग्रन्थस्य आत्मनः स्वप्रकाशत्वसाधनस्य च विरोध एव स्यात् ॥

**अथ वेति** । ननु अस्य प्राचीनपक्षात् को विशेषः ? । अथ तत्र चिदुपरागार्था वृत्तिः आवरणनिवृत्त्यर्था अत्रेति स्पष्ट एव भेद इति चेत्, न—तत्रापि आवरणनिवृत्तेः अत्रापि चिदुपरागस्य प्रयोजनत्वात् । न ह्यनुक्तमित्येतावता तस्य उभयत्र तदुभयप्रयोजनत्वं गच्छति । अन्यथा तत्रावृतचैतन्येन अत्र असंसृष्टचैतन्येन विषयभानायोगात् । ननु प्रथमपक्षे जीवस्याविद्याप्रतिबिम्बस्यानावृतत्वम्, तृतीये तु न तदभिमतमिति न तद्भेदः (मतभेदः) इति चेत्, किमेतदनुभवबलात् ? उत युक्तितः ? । नाद्यः, सर्वगततया स्वतो जीवस्यानुभवाभावात् । न द्वितीयः, चिन्मात्रस्याज्ञानविषयस्य जीवेश्वरविभागाश्रयतया जीवस्यापि सर्वगतस्याविद्यावृतत्वात् । अन्यथा अस्मिन् पक्षेऽपि न स्यात् ।

सृष्टमेव विषयमवभासयति । दृष्टं च वृश्चिकवृक्षादिकार्यस्य गोमयमृदादिकारणस्वभावतिरोधायकत्वं इति सिद्धैवात्मनि प्रमातृत्वादिव्यवस्थेति ॥

विषयस्य चैतन्यविवर्तत्वात् तदभिन्नमपि चैतन्यमहमवभासैकरूपमुक्तम् । तत्र अपसिद्धान्तप्रसङ्गं चोदयति—ननु नीलादिविषयोऽपि 118-1
चेदिति । यत्किञ्चित्साम्यादपसिद्धान्ते सर्वसिद्धान्तसंकरः स्यात् । अस्ति चात्र महान् सिद्धान्तभेदः । क्षणिकाद्विज्ञानात् भेदेनार्थक्रियासामर्थ्यसत्त्वशून्यं विषयमाहुर्विज्ञानवादिनः । तत्त्वदर्शिनस्तु, अद्वितीयात् संवेदनादभेदेऽपि विषयस्य भेदेनाप्यर्थक्रियासामर्थ्यसत्त्वं स्थायित्वं चाबाधितमस्तीति वदन्ति । तत्र कथं सिद्धान्तसङ्करः ? इति वदितुं संवेदनैक्यं दर्शयति—मैवम्, परस्परव्यावृत्ताविति । अस्त्वेकरूपता प्रत्यभिज्ञानात्, 118-3

---

ता. ननु कार्येण कारणस्याभिभवो न युक्त इति ; तत्राह—दृष्टं चेति । कर्मकारकमपि चैतन्यविवर्तत्वादपरोक्षतामभिव्यनक्तीत्युक्तम्, तत्र बौद्धराद्धान्तप्रसक्तिरिति चोद्यग्रन्थस्य तात्पर्यमाह—**विषयस्येति** । यत्किञ्चित्साम्यादपसिद्धान्तः ? किं वा सर्वसाम्यात् ? । नाद्यः इत्याह—**यत्किञ्चिदिति** । द्वितीयस्तु नास्तीत्याह—**अस्ति चेति** । तमेव भेदमाह—**क्षणिकेति** । प्रत्यभिज्ञानं सामान्यविषयं भेदप्रतीतिस्तु व्यक्तिविषयेति शङ्कते—**अस्त्विति** । नील-

---

भा. न च सर्वगतो जीव आवृतोऽनावृतश्चेति विरुद्धपक्षद्वयस्य प्रामाण्यं युज्यते । अत एव—**आचार्यः** स्वानभिमते अन्तःकरणोपाधिको जीव इति मतेऽपि यथा व्यवस्थामवर्णयत् एवमावृतो जीव इति मतान्तरमादाय तां वर्णयति इति निरस्तम् । पूर्वपक्षेऽपि सर्वगतजीवस्वरूपस्यावृतत्वात् । न च प्रथमपक्ष एव स्वानभिमत इति वाच्यम् ; तत्रानभिमतिद्योतकाभावात् । एतेन—सर्वगतस्यापि जीवचैतन्यस्य विषयासङ्गित्वं पूर्वमुक्तम्, अत्र तु सङ्गित्वमभिप्रेतम्, इति पक्षभेद इति निरस्तम् । पक्षद्वयेऽप्याचार्याणां जीवव्यावृत्तब्रह्मण एव उपादानत्वमभिप्रेतमिति जीवचैतन्यस्यासङ्गित्वस्य तुल्यत्वादिति चेत, सत्यम्—प्रथमोक्तपक्षद्वय एव वृत्तिनिर्गमने प्रयोजनान्तरमनेनोच्यते, न तु पक्षान्तरम् । तथा च अपि चेत्यर्थे **अथवेति** द्रष्टव्यम् ॥

**तिरोधायकत्वमिति** । एतच्च कारणनिवर्तककार्यस्याप्युपलक्षणम् ।

118-4 **भेदोऽपि घटसंवित् पटसंविदित्यवभासते इति ; तत्राह— विच्छेदवभासेऽ-**
**पीति । स्वरूपप्रत्यभिज्ञा परोपाधिविच्छेदेन न बाध्यते इति भावः ।**
118-5 **ननु एकत्वेऽपि संविदां विषयाभेदः किं न स्यात् ? इति ; तत्राह— यदि**
**स्यादिति । अनुवृत्तस्य व्यावृत्तात् नाभेदः, अनुवृत्तत्वात्, आकाशघटा-**
**दिवत् इत्यनुमानमुक्तम् । इदानीं प्रत्यक्षोऽपि विषयसंविद्भेदः इत्याह—**

---

ता. पीतादिविषयभेदेऽपि तदुपरक्ततया अवभासमानसंविदः व्योम्न इव घटादिभेदेऽपि भेदासिद्धेः एकत्वप्रत्ययस्य न सामान्यविषयता कल्पनीयेत्यभिप्रेत्याह—

---

भा. यथा परमते शब्दबुद्ध्यादीनां स्वकारणनाशकत्वम्, लोके च अरणिप्रभूतवह्नेस्तद्दाहकत्वम्, एवं ज्ञानस्याप्यन्वयव्यतिरेकाभ्यामज्ञाननिवर्तकत्वमभ्युपगन्तव्यम् । वस्तुतस्तु, वृत्तिः स्वाजनक(मा)[मज्ञानप्रयुक्ता]वरणं निवर्तयति, चैतन्यं चानादि अप्रतिबद्धं अज्ञानमिति न प्रकृतेः कार्यस्य कारणनिवर्तकत्वमिति द्रष्टव्यम् ॥

**भेदोऽपीति ।** तथा च संविद्यनुगतबुद्धिर्जातिविषयेत्यर्थः । भेदप्रत्ययस्य प्रामाण्ये निश्चिते तथा स्यात् न च तदस्तीत्याह—**तत्राहेति ।** ननु अभेदज्ञानस्यापि प्रामाण्यं [न] निश्चितम्, विनिगमकाभावात् ; तत्राह—**स्वरूपेति ।** अनुगतबुद्धिर्ह्येकं वस्तु विषयीकरोति न धर्ममेवेति नियमः । घटाद्यवच्छिन्नाकाशानुगतबुद्धौ धर्मविषयत्वाभावाच्च । संविद्भेदस्य नियमेन घटाद्युपाधिदशायामेव प्रतीतिः । ततश्चोपाधिदशायामेव प्रतीयमानभेदस्य स्वाभाविकत्वं कल्पयित्वा अन्यथासिद्धानुगतबुद्धेः जातिविषयत्वमेव कल्पनीयम् ? किं वानुगतबुद्धेराकाशानुगतबुद्धिवत् व्यक्तिविषयत्वं कल्पयित्वा उपाधिपरामर्शदशायामेव प्रतीयमानभेदस्यौपाधिकत्वं कल्पनीयम् ?। तत्र न्यायविदोऽबाधितलाघवानुगृहीतानुभवानुसारेण वस्तुनिर्णयमिच्छन्तोऽभिन्ना संविद्व्यक्तिः भेदस्त्वौपाधिक इत्यङ्गीकुर्वते इति तदेव न्याय्यम् । न चैवमतिप्रसङ्गोऽपि ; व्यक्त्यैक्यसम्भवस्थले सर्वत्राप्येवंरूपत्वात्, तदसंभवे तु न लाघवावतारः इति भावः । जातिव्यक्तिदृष्टान्तेन अनुवृत्तव्यावृत्तभेदं शङ्कते—**नन्वेकत्व इति ।** विरुद्धयोः कुत्राप्यबाधिताभेदो नास्तीत्याह—**तत्राहेति ॥**

किं च तैरपीति। नीलात्मकसंविदिति **नीलमेवोच्यते। युगपद्विषयविषयि-** 118-6
**संविद्द्वयानभ्युपगमात् ।** प्रत्यगवभास इति **अहंसंवेदनमात्रम् । अहं** 118-7
**नीलं पश्यामीति कर्तृकर्मतया भेदः प्रत्यक्षः इत्यर्थः ॥**

**अत्र विज्ञानवादी चोदयति—**नैतत् द्वयोरपीति। **अयं भावः–** 119-2
**संविदोऽन्यचेन्नीलं न तत् संवेदनेऽवभासेत। भासते चेत् सर्वं किमिति नावभासते ? विशेषसंबन्धाभावात्। नीलस्य संविदो जनकता विशेष-संबन्धः इति चेत् , न–इन्द्रियस्यापि विषयताप्रसङ्गात्। तस्मात् स्वाभाविकासाधारणाभेदसंबन्धादेव विज्ञाने नीलमवभासते इति ॥**

**सिद्धान्ती तु भेदावभासोऽपि प्रत्यक्षो युक्त्या कथमपह्नूयते इत्याह—** कथं पुनरिदमहं जानामीति ॥ 120-1

**विज्ञानवादी तु नैतत् त्रयमेकसंवित्प्रतिभासि, किं तु संवित्त्रय-मेतत् क्रमवर्तीति परिहरति—** नायं तदवभासः इति ॥ 120-1

**क्रमवर्तित्वे अन्यसंवित्काले अन्यत् नावभासेत। इदं तु त्रितयं युगपत् प्रत्यक्षमेवावभासते। ततः प्रत्यक्षविरुद्धः क्रमः इत्याह सिद्धान्ती—** कथं पुनस्तेष्विति ॥ 120-3

**आह विज्ञानवादी —** तद्वासनासमेतसमनन्तरप्रत्ययसमुत्थमिति । 120-4
**अहमित्यहंकल्पनोपारूढं कदाचिद्विज्ञानं भवति। अनन्तरं चेदमिति विषयविकल्पितं विज्ञानं भवति। ते एव विज्ञाने वासना। सजातीय-**

---

ता. **स्वरूपेति।** नीलमेवोच्यते इति व्याख्याने युक्तिमाह—**युगपदिति।** एतावता प्रत्यक्षं प्रमाणं कथमुपन्यस्तम् ? इति ; अत आह–**अहं नीलमिति। तद्वासनासमेतेति** ग्रन्थं व्याचष्टे—**अहमितीति।** प्रत्ययक्रमः अनुपलब्धिपराहतः

---

भा. **युगपद्विषयेति।** ननु देवदत्तयज्ञदत्तसन्ता(न तज्ज्ञान)[नान्तर्भूतज्ञान]-यौगपद्यवन्नीलज्ञानालयज्ञानसन्तानद्वयगतज्ञानद्वयस्य यौगपद्यमविरुद्धमिति चेत्–न–सन्तानभेदे आलयज्ञानस्य[नीलादि]द्रष्टृत्वतद्व्यवहारतद्भोक्तृत्वाद्यभावप्रसङ्गेन सन्तानैक्यस्य वक्तव्यत्वादित्येकसन्ताने युगपत् ज्ञानद्वयं विरुद्धमिति भावः।

ज्ञानस्य पूर्ववृत्तसजातीयज्ञानमेव वासना नान्यः संस्कारः इत्युक्तम्। तत्र वासनाद्वयसमेतात् जानामीति क्रियाविकल्पप्रत्ययात् कारणत्रितयानुरूपेण अहमिदं जानामीति विषयक्रियाहंकल्पनाविकल्पितं त्र्याकारमेकं विज्ञानमुत्पद्यते इति ॥

120 - 5 आह सिद्धान्ती—किं पुनरेवमिति। न हि केवलमहमिति च इदमिति वा जानामीति वा प्रत्यया दृष्टाः; किं तु प्रथमत एव प्रत्ययः 'अहमिदं जानामी'ति कर्तृकर्मानुभवात्मको दृष्टः। तस्मात् यथाप्रतिभासमेवाहमिति विज्ञानात् भिन्नमर्थक्रियासमर्थं नीलवस्त्वनुमन्तव्यमिति भावः। सत्यं नानुभवमाश्रित्य संवेदनादभिन्नं नीलं ब्रूमः, किं तु विज्ञानेन नीलस्य प्रतिभासान्यथानुपपत्त्या। कथम्?। स्थायित्वे हि विज्ञानविषययोः क्रियानिमित्तासाधारणपरस्परसंबन्धादसाधारणो विषयावभासः स्यात्, क्षणिकस्य तु आगन्तुकसम्बन्धाभावे यदि स्वाभाविकाभेदसंबन्धोऽपि न स्यात्, तत्र चैतन्येनासंसृष्टस्य प्रतिभास एव न स्यात्, अतः प्रतिभासानुपपत्तिरभेदं साधयतीति विज्ञानवादी
120 - 6 वर्णयति—क्षणविध्वंसिनः क्रियानुपपत्तेरिति। तत्र प्रत्यक्षेण विज्ञानानां क्षणिकत्वमुच्यते? किं वा अनुमानेन?। ननु प्रत्यक्षेण—तथाहि—वर्तमानावभासिज्ञानं स्वात्मनोऽवर्तमानात् व्यावृत्तिमपि गमयति। नीलज्ञानमिवानीलव्यावृत्तं नीलम्। अतो वर्तमानक्षणमात्रं विज्ञानं प्रत्यक्ष-इत्याह—यद्येवमहमिति
120 - 9 मिति। न तावत् प्रत्यक्षेण विज्ञानभेदावभासः संविदः इति ॥

---

ता. इत्याह—न हीति। ननु भेद एव ग्राह्यग्राहकभावे उपपन्नः इति शङ्कते—कथमिति। क्षणिकपक्षे अभेदव्यतिरेकेण नीलादेः प्रतिभासानुपपत्तिं दर्शयितुं स्थायिपक्षे सम्बन्धान्तरसम्भवं दर्शयति—स्थायित्वे हि इति। क्रियाशब्देन

---

भा. किन्तु प्रथमत एव प्रत्ययोऽहमिदं जानामीति। घटादिवृत्त्यभिव्यक्तचैतन्येनान्तःकरणतद्वृत्तितद्विषयाणां प्रतिभासात् सर्वमेव ज्ञानं तदाकारमेव, अन्यथा स्वस्य ज्ञानस्य च अग्रे प्रतिसन्धानं न स्यादित्युक्तयुक्तेरित्यर्थः।

ननु सत्यपि भेदावभासे अतिसादृश्यात् न स्पष्टमवभासते इति
शङ्कते—अथात्यन्तसादृश्यादिति । कोऽयमभिप्रायः ? । यदि तावत् 120 - 11
संविदोऽन्यो भेदो ज्ञानान्तरगम्यश्च सादृश्यदोषात् स्पष्टं नावभासते
इत्यभिप्रायः, तदा धर्मिप्रतियोगिसंविदोः संविदन्तराविषयत्वात् न
तयोः भेदग्रहणं स्यात्। विषयत्वे वा धर्मिप्रतियोगिभेदाख्यत्रितयमपि
भेदसंवेदने कल्पितं तदभिन्नं च स्यात् । अथ संवित्स्वरूपमेव भेदः
संवेदनमेव तज्ज्ञानमिति, तत्राह—संविदोऽपि चेदिति । अपि च, ऐक्य- 121 - 1
प्रतिभासे सादृश्यकल्पनं प्रमाणविरुद्धम्, भिन्नयोरैक्यभ्रमश्च सादृश्य-
कल्पनायां प्रमाणम्, तदभावाच्च न सादृश्यसिद्धिरित्याह—अपि च तद्रूप- 121 - 3
प्रतिभासे इति । ननु ऐक्यावभासस्य व्यामोहत्वात् न सादृश्यकल्पना
प्रमाणविरुद्धा, ऐक्यभ्रमश्च भिन्नेषु सादृश्यमन्तरेण अनुपपन्न इत्यर्था-
पत्तिमूला च सादृश्यकल्पना, अतः सिद्धं सादृश्यमित्याह पूर्ववादी—
तद्रूपप्रतीतेर्व्यामोहत्वादिति । मैवम्—ऐक्यभ्रमसादृश्यसिद्ध्योरितरेतराश्रय- 121 - 4
त्वादिति परिहरति—न—इतरेतराश्रयत्वादिति । ननु ऐक्यप्रतिभासस्य 121 - 5
प्रामाण्यं न स्वतः सिद्ध्यति, किं तु सादृश्यस्य निर्मूलत्वप्रमाणविरुद्ध-
त्वापेक्षया, सादृश्यस्य च निर्मूलत्वप्रमाणविरुद्धत्वमैक्यप्रतिभासस्य
प्रामाण्यापेक्षया, इति तुल्यं तवापि इतरेतराश्रयत्वमिति चोदयति—
स्यादेतत्-अव्यामोहेऽपीति । ऐक्यप्रतिभासो न सादृश्याभावापेक्षः किं तु 121 - 9
स्वत एव प्रमाणमिति परिहरति—नैतत्-स्वारसिकमिति । ननु सादृश्यमपि 122 - 1
स्वत एव सिद्धमित्याशङ्क्याह—न तु सादृश्यकल्पना स्वत इति । 122 - 3

---

अन्तःकरणबहिष्करणव्यापार उच्यते । संविदन्तराविषयत्वात् स्वयंवेद्यत्वाङ्गी- ता.
कारादित्यर्थः । तदभिन्नश्च स्यादिति । ज्ञानज्ञेययोरभेदस्य त्वया
अङ्गीकृतत्वादित्यर्थः ॥

---

कल्पितं तदभिन्नं च स्यादिति । बौद्धेन ज्ञाने ज्ञेयस्य कल्पितत्वतदभेदयो- भा.
रभ्युपगमात् । तथा च कस्य कुतो भेदो गृह्येतेति भावः । ज्ञानस्य स्वतः-
प्रामाण्येन हि ज्ञानाकार एवार्थः सिध्यति न त्वन्यः अतिप्रसङ्गात् । नचात्र
सादृश्यं प्रत्यभिज्ञाकारः, किन्तु अभेद एवेत्यभिप्रेत्याह—इत्याशङ्क्याहेति ॥

122-4 **कुतस्तर्हि सादृश्यसिद्धिः? इत्यत आह**—अप्रामाण्यपूर्विकेति। ऐक्यभ्रमो **हि भिन्नेषु सादृश्यं कल्पयतीति भावः॥**

**ननु केयं प्रत्यभिज्ञा नाम? यत्सामर्थ्यबलात् संविदैक्यं प्रतीयते। पूर्वानुभवसंस्कारसहितादिदानींतनवस्तुप्रमितिकारणात् जातमेकस्य कालद्वयसम्बन्धविषयकं प्रत्यक्षज्ञानं प्रत्यभिज्ञेति चेत्, न तर्ह्यात्मनि सा संभवति। कथम्?। विज्ञानस्वभावस्य ह्यात्मनः स्थायित्वे स्वयंप्रकाशस्य ज्ञानान्तरागम्यत्वात् तद्विनाशसंस्काराभावात् स्वरूपस्य चाविनाशादविनाशिनः संस्काराभावात् स्वयंप्रकाशस्य चेदानीन्तनस्वरूपव्यतिरिक्तप्रमाणकारणाभावाच्च न प्रत्यभिज्ञाकारणं तात्र-**

---

ता. प्रत्यभिज्ञानिरूपणस्य कः प्रसङ्ग इति; तत्राह—**यत्सामर्थ्येति**। प्रत्यभिज्ञायते अनेनेति प्रत्यभिज्ञाशब्देन सामग्री पृच्छयते? किं वा प्रत्यभिज्ञायते अयं इति विषयः? यद्वा प्रत्यभिज्ञानं प्रत्यभिज्ञेति तत्स्वरूपम्? इति विकल्प्य क्रमेण परिहरति—**पूर्वानुभवेति**। एवं सामग्रीमभिधाय विषयमभिधत्ते—**एकस्येति**। स्वरूपमाह—**प्रत्यक्षेति**। एवंविधा प्रत्यभिज्ञा घटादौ भवतु नाम, तथाप्यात्मनि न सा सम्भवतीति दूषयति—**न तर्हीति**॥

ननु घटादिवदात्मनोऽपि स्थायित्वे कथमसम्भवः? इत्याक्षिपति-**कथमिति**। प्रत्यभिज्ञायाः सामग्र्यसंभवं दर्शयितुं संस्कारं तावद्विकल्प्य दूषयति—**विज्ञानेति**। किमात्मविषयज्ञानजन्यस्संस्कारः कारणम्? किं वा स्वरूपज्ञानजन्यः?। नाद्यः, स्वयंप्रकाशत्वेन तद्विषयज्ञानान्तराभावात्; न द्वितीयः, स्वरूपज्ञानस्याविनाशिनः संस्कारजनकत्वाभावादित्यर्थः। इदानीं संप्रयोगोऽपि न संभवतीत्याह—**स्वयंप्रकाशस्य चेति**। यस्य स्वरूपव्यतिरिक्तज्ञानेन सिद्धिः तस्य स्थायित्वमपि स्वरूपव्यतिरिक्तप्रत्यभिज्ञया सिध्यति। आत्मनस्तु स्वरूपज्ञानेनैव सिद्धिः, तेन तस्य स्थायित्वमपि स्वरूपभूतप्रत्यभिज्ञानेनैव सिध्यति,

---

भा. आत्मनि प्रत्यभिज्ञासम्भवं वक्तुं पृच्छति—**ननु केयमिति**। संस्काराभावमुक्त्वा प्रमाकरणाभावमप्याह—**स्वयम्प्रकाशस्येति**। ननु अन्तःकरणस्य

दात्मनि संम्भवति। न च स्वरूपज्ञानमेव प्रत्यभिज्ञा। तस्य प्रदीपप्रभावत् वर्तमानप्रकाशिनः पूर्वापरपरामर्शात्मकतायोगात्। सोऽहमिति च विषयाकाराभ्युपगमे स इति अहमिति च आकारभेदेन विषयभेदात् ज्ञानभेदसिद्धेः। तस्मात् न आत्मनि प्रत्यभिज्ञेति युक्त्या व्यामोहत्वसिद्धिरिति॥

अत्रोच्यते—अन्तःकरणविशिष्टे तावदात्मनि प्रत्यभिज्ञानं ब्रूमः, न निष्कलङ्कात्मस्वरूपमात्रे। तस्य मोक्षावस्थायिनः शास्त्रैकगम्यत्वात्। संसारावस्थायामन्तःकरणविशिष्टस्वरूपानपायात् तस्यैव प्रत्यभिज्ञया स्थायित्वाभिधानात्। तत्र चान्तःकरणजन्याहंप्रत्ययाधीनत्वात् विशिष्टात्माभिव्यक्तेः पूर्वकालविशिष्टात्मानुभवनिमित्ताहंवृत्तिसंस्कारसहितमन्तःकरणमेव इदनीन्तनात्माभिव्यक्तिनिमित्तं सत् पूर्वापरकालविशिष्टात्मविषयं प्रत्यभिज्ञानमुत्पादयति॥

---

तस्य च नित्यत्वात् न सामग्र्यभावो दोषाय इत्याशङ्क्याह—**न च स्वरूपेति**। इदानीमात्मनि प्रत्यभिज्ञाया विषयोऽपि दुर्भणः इत्याह—**सोऽहमिति**॥ ता.

स्वरूपे यद्यपि प्रत्यभिज्ञा अनुपपन्ना, तथापि विशिष्टे संभवतीति परिहरति सिद्धान्ती—**अत्रोच्यते इति**। तस्यापि स्थायित्वात् प्रत्यभिज्ञाविषयत्वं किं नाभ्युपेयते? इति; तत्राह—**तस्येति**। ननु अन्तःकरणस्यानुदिनं विनाशित्वेन तद्विशिष्टस्य विनाशित्वात् कथं प्रत्यभिज्ञाविषयत्वम्? इत्यत्राह—**संसारावस्थायामिति**। 'तदापीतेः संसारव्यपदेशात्' 'यावदात्मभावित्वात्' इति च सूत्रकारेणान्तःकरणस्य सुषुप्ताद्यवस्थास्वपि सूक्ष्मरूपेणावस्थानाङ्गीकाराद्विशिष्टस्यापि स्थायित्वं नानुपपन्नमित्यर्थः। संस्कारादपि सामग्रीं संपादयति—**तत्र चेति**। **पूर्वापरकालविशिष्टात्म-**

---

प्रतिदिनं सुषुप्तौ विनाशात् कथं तद्विशिष्टस्यापि प्रत्यभिज्ञा?। तत्राह—संसारेति। **विशिष्टस्वरूपानपायादिति**। सुषुप्त्यादावप्यनिर्वचनीयसूक्ष्मरूपविशिष्टमन्तःकरणमस्तीति भावः। **अहं(वृत्त्य)[प्रत्यया]धीनत्वादिति**। कदाचिदुत्पन्नाहमाकारवृत्त्यभिव्यक्तिसम्भवादिति भावः। चैतन्यस्य विषय एव भा.

ननु पूर्वापराभिज्ञयोरविषयतया अभिव्यक्तस्यात्मनः कथं प्रत्यभिज्ञाविषयत्वं इति। नैष दोषः—यथा संवेदनस्य स्वसंविदितरूपस्यापि कालान्तरे स्वसंस्कारजनितस्मृतिविषयत्वं तद्वदिहाप्यभिज्ञायामविषयस्यापि प्रत्यभिज्ञाविषयत्वं न विरुध्यते ॥

ननु स्वयंप्रकाशस्य विषयतैवानुपपन्ना। मैवम्—देशकालान्तःकरणविशिष्टतया विषयतोपपत्तेः। यथा धर्मस्यागमैकसमधिगम्यस्यापि इदानीं फलदानायोन्मुखीभावादिलक्षणधर्मविशिष्टतया वर्तमानफलोदयलिङ्गादिगम्यत्वं तद्वत्। ननु एकस्यैवात्मनः प्रत्यभिज्ञायां कथं कर्तृकर्मतया युगपत् विरुद्धरूपद्वयान्वयः ?। ननु सर्ववादिनां देहव्यतिरिक्ताद्यनुमानविषयतया कर्तृकर्मभावः संप्रतिपन्नः। तन्न—अनुमानादौ विषयस्य कारकताभावात् आकारमात्रतया विषयत्वात् तत्र

---

ता. **विषयमिति**। तदुपलक्षितात्मैकत्वविषयमित्यर्थः। उत्तरमाह—**ननु सर्वेति**।
परिहरति पूर्ववादी -- **तन्नेति**। कर्मकारकत्वाभावे कथं विषयत्वम् ? इत्यत आह-
**आकारेति** ॥

---

भा. संस्कारः, तच्चान्तःकरणमात्रविषयम्, न विशिष्टचैतन्यविषयम्, तत्रापि चैतन्य-
स्वरूपानपायात्, अन्यथा जडस्य संस्कारानुपपत्तेः इति शङ्कते—**ननु पूर्वेति**।
संस्कारजनकानुभवे प्रकाशमानत्वमात्रेण तज्जन्यसंस्कारो भवति न तु प्रकाश-
विषय एव। तत्र प्रमाणाभावात्। विषयत्वमन्तरेणापि प्रकाशमानत्वं ज्ञानप्रयुक्त-
संशयाद्यगोचरत्वं सम्भवत्येवेति सदृष्टान्तमाह—**नैष दोष इत्यादिना** ॥

इदानीं विषयत्वानुपपत्तेर्नात्मनि प्रत्यभिज्ञेत्याक्षिपति—**नन्विति**।
अत्र यद्यपि वृत्तिविषयत्वं चैतन्यस्याविरुद्धमेव। तथापि प्रत्यभिज्ञारूपवृत्त्यव-
च्छिन्नचैतन्यविषयत्वं केवलचैतन्यस्य नास्तीत्यन्तःकरणादिविशिष्टत्वाकारेण
तस्य विषयत्वमाह—**मैवमिति**। यस्य स्वतो न यत्प्रमाणगोचरत्वं तस्याका-
रान्तरेणापि कथं तद्विषयत्वं इत्याशङ्क्य, तदविरुद्धं अन्यत्रापि दर्शनादित्याह-
**यथेति**। कार्यत्वाकारेण वेदैकगम्यस्याप्यपूर्वस्य इदानीमहं सदृष्टवान् सुखि-
त्वात् सम्मतवदित्यनुमानगम्यत्वं यथेत्यर्थः ॥

कर्तृतैवात्मनः, न कर्मता। प्रत्यक्षे तु पुनः विषयस्यापि स्वविषयज्ञानजनकतया कर्मकारकत्वात् प्राप्तैवात्मनो युगपदेकस्यां क्रियायां विरुद्धरूपद्वयापत्तिरिति ॥

उच्यते—अन्तःकरणविशिष्टतया आत्मनो ज्ञातृत्वं पूर्वापरकालविशिष्टतया च ज्ञेयत्वमित्युपाधिभेदादविरोधः इति। सोऽहमिति च प्रत्यभिज्ञायाः स्वानुभवसिद्धत्वात् यथाकथंचिन्निमित्तं कल्पयितव्यम्। व्यवहाराविसंवादात् भ्रान्तित्वायोगात्। न च सोऽहमित्याकारभेदादर्थभेदेन ज्ञानभेदो युक्तः। विज्ञानं क्षणिकमित्याकारभेदेनार्थभेदात् विज्ञानस्य क्षणिकताभावप्रसङ्गात्। सत्यम्, विज्ञाने क्षणिकत्वादिधर्मोपरागो विकल्पव्यवहारमात्रं न सत्यतोऽस्तीति चेत्, तथा स्थायित्वादिव्यवहाराश्च कालादिधर्मोपाधित्वात् विज्ञाने विकल्पव्यवहाराः इत्यविशेषः। इयांस्तु विशेषः—सति काले स्थायित्वादिविकल्पप्रत्ययाः

ता॰ सिद्धान्ती परिहरति—**उच्यते** इति। उपाधिभेदेन तत्कल्पनं क्लिष्टकल्पनमित्यत आह—**सोऽहामिति चेति**। ननु भ्रान्तिरेव सा अस्तु इत्यत्राह—**व्यवहारेति**। यदुक्तं पूर्ववादिना—आकारभेदात् ज्ञानभेदे कथं प्रत्यभिज्ञाया एकत्वम्? इति; तत्राह—**न चेति**। तर्हि क्षणिकवादिनः सकाशात् को भेदः? इत्यत आह—**इयांस्त्विति**। प्रत्यभिज्ञां विनापि

भा॰ यद्यप्यहमाकारवृत्तिः क्लृप्तप्रमाणाजन्यत्वान्न ज्ञानम्। तथा च न तस्याः प्रत्यक्षत्वं विषयजन्यत्वं वा। नापि तज्जन्यफलमात्मनि सम्भवति। विशिष्टचैतन्यस्य सर्वदा अनावृतत्वेन तदधीनफलासम्भवात्। व्यवहारविषयत्वं त्वनुमेयात्मनोऽप्यस्तीति न तत् तस्य प्राधान्यप्रयोजकं फलम्। तथापि तत् सर्वमङ्गीकृत्य कर्तृकर्मविरोधं परिहरति—**उच्यते अन्तःकरणेति**। एकमपि ज्ञानमनेकाकारमविरुद्धमेव 'शुक्लो घटः' इति लोके दर्शनात्, अन्यथा तवाप्यनिष्टापत्तिरित्याह—**विज्ञानं क्षणिकमिति**। ननु आवयोर्मते ज्ञानस्वरूपं निर्विशेषमित्यत आह—**इयानिति** ॥

'सोऽहम्' इत्याद्यनुभवसिद्धा व्यवहाराविसंवादिनोऽर्थक्रियासमर्थाश्च दृश्यन्ते न तथा क्षणिकत्वादिव्यवहाराः इति ॥

अत्र प्राभाकरा मन्यन्ते—नैव प्रत्यभिज्ञायां विषयत्वेनायमात्मा सिध्यति, किं तु आश्रयत्वेनेति। तदयुक्तम्—पूर्वापरकालविशिष्टस्य आत्मनः क्षणमात्रवृत्तिप्रत्यभिज्ञानाश्रयत्वायोगात् तदाश्रयतया स्थायित्वसिद्ध्यभावात्। ननु पूर्वकालसंवेदनमिदानीमनुस्मर्यमाणं स्वाश्रयं तदानीन्तनमात्मानं साधयति, स्मृतिश्च स्वाश्रयतया इदानीन्तनं आत्मानं साधयति, इति कालद्वयविशिष्टात्मसिद्धिरिति। नैतत् सारम्—स्मृतिपूर्वानुभवौ हि तत्तत्कालमात्मानं साधयतः अभिज्ञाप्रत्यक्षद्वय-वत् एकस्य कालद्वयसंबन्धः केन सिध्यतीति वक्तव्यम्। पूर्वापरसंविद्द्वय-मेव साधयतीति चेत्, न—घटादिष्वभिज्ञाद्वयव्यतिरेकेण प्रत्यभिज्ञोपादा-नात्। किं च, न तावत् स्वयमेव संविद्द्वयं साधयति; एकैकस्य कालद्वय-

---

ता. स्थायित्वसिद्धिमाशङ्कते—**ननु पूर्वेति**। तथापि तत्कालविशिष्टस्यैकत्वे प्रमाणं न पश्यामः इति परिहरति—**नैतत् सारमिति**। किमेकैकं साधयति? संभूय वा? संविदन्तरमुत्पाद्य वा? इति विकल्प्य, क्रमेण

---

भा. **नैवेति**। आत्मनो ज्ञानविषयत्वे अनात्मत्वापत्तेरित्यर्थः। किं 'सोऽहम्' इति प्रत्यभिज्ञानमङ्गीकृत्य तदाश्रयत्वेन [आत्मनः] स्थायित्वं [सिद्धं] मनुषे? उत नैव? इति। आद्ये आह—**तदयुक्तमिति**। निर्विषयप्रत्यभिज्ञानायोगादित्यर्थः। अङ्गीकृत्याप्याह— **पूर्वापरेति** ॥

ननु आत्मनि प्रत्यभिज्ञैव नास्ति, अन्यतस्सिद्धात्माभेदः परं 'सोऽहम्' इति व्यवह्रियत इति शङ्कते—**ननु पूर्वकालेति**। किम[नु]स्मर्यमाणानु-भवस्मृतिभ्यामेव काल [द्वय]सम्बन्ध्यात्मसिद्धिरित्युच्यते? उत अनुस्मर्यमा-णानुभवः स्वाश्रयतया(तदात्मानं)[तदानीन्तनमात्मानं]साधयति स्मृतिरपि इदानी-न्तनं तदनन्तरं तयोर्व्यधिकरणयोर्हेतुहेतुमद्भावायोगादेक आत्मेति ज्ञानान्तरेण? इति विकल्प्य दूषयति-**नैतत् सारमित्यादिना**। प्रश्नं मत्वा आह—

वदात्माश्रयत्वाभावात् । न च संभूय पूर्वापरसंविद्द्वयं तद्वन्तमात्मानं साधयति; अन्योन्यस्य अन्योन्यसंविद्विशिष्टात्मविषयत्वाभावात्। अथ संविद्द्वयमेव पूर्वापरसंविद्द्वयाश्रयात्मैकत्वविषयसंविदन्तरमुत्पादयति, सिद्धं तर्हि प्रत्यभिज्ञानमात्मविषयम् । किं च 'अनुभूतं मये'त्याश्रयविशिष्टपूर्वसंविदनुस्मृतेः स्वानुभवसिद्धत्वात् स्मर्यमाणतयैव इदानीं पूर्वानुभूतात्मसिद्धिः, न पूर्वसंवेदनाश्रयतया। तस्याविद्यमानस्येदानीमसाधकत्वात्। स्वयंप्रकाशमानं हि संवेदनमात्माश्रयं साधयति, न स्मृतिविषयतया परप्रकाश्यम्। अन्यथा धर्मादीनामपि परतस्सिद्धानां स्वाश्रयात्मसाधकत्वप्रसङ्गात् । तस्मात् सिद्धमात्मनि प्रत्यभिज्ञानमिति ॥

---

ता. दूषयति—**किञ्चेति** । **संविद्विशिष्टात्मविषयत्वाभावादिति** । संविद्विशिष्टात्माश्रयत्वाभावादित्यर्थः । इतोऽप्यात्मनो विषयतयैव सिद्धिर्नाश्रयतयेत्याह—**किञ्चेति** । ननु स्मर्यमाणतया पूर्वसंवेदनस्य सिद्धत्वात् स्वाश्रयसाधकत्वं किं न स्यात् ? इति ; अत आह—**स्वयमिति** । स्वयम्प्रकाशत्वं विना विषयतया सिद्धत्वमात्रेण साधकत्वे [अति]प्रसङ्गमाह—**अन्यथेति** ॥

---

भा. **पूर्वापरेति** । द्वितीयं शङ्कते—**अथेति** । तर्हि अर्थापत्तिजन्यस्य ज्ञानस्यात्मा किं विषयः ? उत न ?। अन्त्ये पूर्वोक्तदोषः, तत्कालीनात्मनो विषयत्वाभावेनानुभवस्मृत्योः सामानाधिकरण्यासिद्धिश्च इत्यभिप्रेत्य आद्ये तत्प्रत्यभिज्ञाविषयत्वमपि किं न स्यात् ? विषयस्यानात्मत्वनियमस्य त्वयैव त्यक्तव्यत्वादित्याह—**सिद्धं तर्हीति** ॥

ननु परोक्षज्ञानस्य विषयता न विरुध्यते, तत्रात्मनः कर्मत्वाभावात्, प्रत्यक्षज्ञाने तु विषयः कर्मकारकमिति तस्यानात्मत्वं स्यादिति चेत्, किं प्रमातुः कर्मकारकाद्भेदनियमादेवम् ? तन्न, तस्य विषयमात्राद्भेददर्शने [न] आत्मनः परोक्षज्ञानेऽप्यविषयत्वापत्तेः । गुणत्वप्राधान्ययोरेकत्रायोगात (विरोधात्) प्रत्यक्षाश्रयविषययोर्भेद(इति) नियम इति चेत्, तन्मते घटादेरपि प्रत्यक्ष-

स्यात् तर्हि अनुमानात् क्षणिकत्वमिति घटादौ साधयति—
122 - 4 अथान्ते क्षयदर्शनादिति । घटस्य विनाशानन्तरपूर्वक्षणविशिष्टसत्त्वं अन्त इत्युच्यते। तस्य स्वसत्ताक्षणादुत्तरक्षणे विनाशो दृष्टः। तत्र अन्त्यक्षणावच्छिन्नघटसत्त्वात् पूर्वपूर्वक्षणावच्छिन्नघटसत्त्वानि आदिः इत्युच्यन्ते। तान्यपि स्वसत्ताक्षणादुत्तरक्षणे विनाशव्याप्तानि घटसत्तात्वात् अन्त्यक्षणावच्छिन्नघटसत्त्ववदित्यनुमानम् । ततश्च सतोऽनन्तरं विनाशात् क्षणिकत्वसिद्धिरिति क्षणिकेष्वैक्यं सादृश्यनिबन्धनमिति ॥

122 - 5 तत्र प्रत्यनुमानमाह—आदौ सत्तादर्शनात् इति । आदिरिति घटसात्तावच्छेदकाः क्षणाः उच्यन्ते । अन्त इति विनाशावच्छेदकत्वेन अभिमताः क्षणाः। तत्र अन्त्यक्षणाः सर्वे घटसत्तया व्याप्ता इति साध्यते। अभावानुभवविरुद्धकालत्वात् सत्तावच्छेदककालवदिति प्रत्यनुमानम्।

---

ता. एवं प्रत्यक्षतः क्षणिकत्वसिद्धिं निराकृत्य अनुमानतः तत्सिद्धिं निराकर्तुमाह—स्यात् तर्हीति । अन्तक्षयशब्दयोः पर्यायत्वात् क्षये क्षयदर्शनादिति पुनरुक्तिभ्रमो मा भूदिति विवक्षितार्थपरतया ग्रन्थं योजयति —घटस्येति ॥

---

भा. जन्यव्यवहारविषयत्वातिरिक्तक्रियाफलानाश्रयत्वात् । तस्य चानुमेयात्मन्यपि सत्वात् । न च प्रमा[प्रत्यक्ष]कर्मत्वं तदाश्रयभेदं विना न सिध्यतीति वाच्यम् ; अनुमितेरिव प्रत्यक्षस्यापि सविषयत्वातिरिक्तसकर्मकत्वान्तराभावादिति भावः ॥

*तान्यपीति। घटोत्पत्त्यनन्तरक्षणः तद्ध्वंसवान् एतदुत्पत्त्यनन्तरक्षणत्वात् एतद्विनाशक्षणवदिति भावः। तत्रान्त्यक्षणा इति। एतदुत्पत्तिविनाशमध्यवर्तिक्षणाः एतद्घटाधाराः एतत्प्रागभावविनाशानाश्रयकालत्वात् एतदुत्पत्तिकालवदित्यर्थः। किं मुद्गरादिपातानन्तरक्षयानुभवेन बाधः ? उत तत्पूर्वकालीनेन ?। नाद्यः, भिन्नविषयत्वात् । न द्वितीयः, तदसिद्धेः। प्रत्यभिज्ञायाश्च सत्त्वात । अत एव त्वदीयानुमानमनुभवविरुद्धमित्याह—

---

* आदर्शकोशे पुटविपर्यासादिकारणबलात् लेखकैः पुटद्वयानन्तरं पश्चात् लिखितोऽपि 'तान्यपीति' इत्यादिः ग्रन्थः अर्थक्रमौचित्यात् अत्रैव मुद्रित इति ज्ञेयम् ॥

मन्ते सत्तानुमानमिति चोदयति—क्षयानुभवेति। तर्हि अन्त्यक्षणात् 122-6
पूर्वक्षणावच्छिन्नघटसत्त्वानामनन्तरक्षयानुमानमपि प्रत्यभिज्ञाविरुद्ध-
मिति परिहरति—इहापि इति। क्षयानुभवोऽभिज्ञा अनुमानं बाधते, 122-7
न प्रत्यभिज्ञा अनुमानात् दुर्बलेति ; नेत्याह—न ह्युभयोरिति ॥ 122-7

सर्वे भावाः क्षणिकाः अर्थक्रियाकारित्वात्, यदक्षणिकं न तदर्थ-
क्रियाकारि यथा शशविषाणमित्यनुमानान्तरं दर्शयितुं स्थायिनोऽर्थ-
क्रियानुपपत्तिमाह—अथ मन्येत योऽसौ स्थिरत्वेनाभिमत इत्यादिना। ननु 123-1
स्थिरस्यैव निमित्तसंयोगादन्यथाभूतस्य क्रियापूर्वकं कार्यमुत्पादयितुं
सामर्थ्यं न क्षणिकस्येति सिद्धान्ती चोदयति—कथमयोग इति। 123-4
इत्थमयोग इत्यादिः परिहारः। क्रमेणेति। अनेकानि कार्याणि सातत्येन 123-4.5
कुर्यादित्यर्थः। एकं वा अनेकं वा कार्यं सकृत् कृत्वोपरमते इत्याह—
यौगपद्येनेति। क्रमपक्षं दूषयति—न तावदिति। अनेकानि कार्याणि 123-5
कर्तुं समर्थश्चेत् पुष्कलकारणस्य भावादेकस्य अनेककार्यदर्शनाच्च सकृदेव
कुर्यादिति भावः। द्वितीयं पक्षं दूषयति—नापि यौगपद्येनेति। अर्थ- 123-7
क्रियाकारित्वलक्षणत्वात् सत्त्वस्येति भावः। अतः सकृत्कर्तुः कालान्तरे
पुनः कर्तृत्वे निमित्ताभावात् अकर्तृत्वे वा असत्त्वात् सकृदेव सत्त्वमित्युप-
संहरति—अतोऽर्थक्रियाकारित्वादेवेति ॥ 123-9

---

नेत्याहेति। अयमर्थः—अभावानुभवलक्षणाभिज्ञाया अपि धर्मिप्रतियोगिसा- ता.
पेक्षत्वात् प्रत्यभिज्ञावद्विलम्बेन उत्पत्तिरविविशिष्टैवेति ॥

ननु एकस्य युगपदनेककार्यकरत्वं क्वापि न दृष्टं इत्याशङ्क्य, एकस्यापि
वह्नेः धूमज्वालाभस्मविषयविज्ञानलक्षणानेककार्यकरत्वं दृष्टमेवेति परिहरति—
एकस्येति। अकरणमात्रेण कथमसत्त्वम्? इति ; अत्र आह—अर्थक्रियेति।

---

तर्हीति। मध्ये क्षयानुभवाङ्गीकारेऽपि क्षणिकत्वनिश्चयाभावान्न त्वदिष्टसिद्धिः भा.
प्रत्यभिज्ञानविरोधादित्यभिप्रेत्य तस्य ततो विशेषमाशङ्क्य परिहरति—क्षयानुभव
इति। दुर्बलेति। संस्कारादिसापेक्षत्वस्य तुल्यत्वान्न ततो बलवतीत्यर्थः।
क्षयानुभवेऽपि प्रतियोग्यादिज्ञानापेक्षास्ति इत्याह—नेत्याहेति ॥

**सिद्धान्ती तु स्थायिनः सकृदेव कार्यं कृत्वा तूष्णींभूतस्यापि**
**न असत्त्वप्राप्तिः, सत्त्वस्य अर्थक्रियाकारित्वलक्षणत्वाभावादित्युपपादयति-**
124 - 1-2 अथ केयमित्यादिना । तत्राह—स्वविषयज्ञानजननमिति । **युक्तं बाह्यार्था-**
**नामेतादृशं सत्त्वम् ; विज्ञानानां तु स्वविषयविज्ञानाजनकत्वात्**
124 - 2 **न सत्त्वलक्षणमिति दूषयति** — प्राप्तं तर्हि सर्वासामिति । **ननु**
**एकसन्तानज्ञानानामन्योन्यविषयविषयिताऽभावेऽपि पुरुषान्तरज्ञानस्य**
**विषयतया पुरुषान्तरज्ञानं जनकमित्यर्थक्रियालाभः संविदामिति;**
124 - 3 **नेत्याह**—न सन्तानान्तरेऽपीति । **पुरुषान्तरज्ञानं प्रति पुरुषान्तरज्ञानस्य**
**अप्रत्यक्षत्वादनुमेयत्वादिति भावः । अनुमानज्ञानविषयत्वात् तर्हि**
124 - 4 **सन्तानान्तरज्ञानस्य सन्तानान्तरज्ञानं जनकमिति; नेत्याह**—अनु-
मानेऽपीति । **प्रत्यक्षमेवार्थजन्यं नानुमानादीति ते मतमित्यर्थः । ननु**
**सर्वं संवेदनजातं सर्वज्ञज्ञानस्य विषयतया जनकं भवति, तस्य सर्वविषय-**
124 - 5 **प्रत्यक्षत्वात्; इत्यत आह**—न सार्वज्ञेऽपीति । [सर्वज्ञेऽपि न इति ।] **साक्षा-**
**दिति । सह विज्ञानोपप्लवैः अव्यवधानेन सर्वज्ञज्ञानोपरक्ततया तदभेदे-**
124 - 6 **नेत्यर्थः । तत्र हेतुः**—संसारसंविदेकरूपत्वप्रसङ्गादिति । **संविद्विषययोर-**
**भेदोपगमात् सांसारिकज्ञानैः सोपप्लवैः सर्वज्ञज्ञानं दूषितं स्यादिति**
**भावः । ननु सर्वोपप्लवोपरक्तमपि तत्वज्ञानेन बाधितत्वात् न दोषमा-**
**वहति । न तावत् तदेव ज्ञानं स्वोपप्लवं बाधते ; प्राप्तिबाधयोरेकस्मिन्**
**क्षणे अनुपपत्तेः । ज्ञानान्तरस्य तु न पूर्वज्ञानोपप्लवो विषयः, येन**
**तदनुवादेन बाधः स्यात् । विषयत्वे च बाधकज्ञानेऽप्युपप्लवानामभेदः**
**स्यात् । तर्हि विनैवोपप्लवैः सार्वज्ञे ज्ञाने विज्ञानान्युपरज्यन्ते इति;**
124 - 6 **नेत्याह**—अतद्रूपत्वे इति । **सर्वज्ञस्य लौकिकोपप्लवानवभासनादुपदेशा-**
**योगः इति भावः ॥**

---

ता. अव्यवधानमात्रेण कथं संसारसंविदेकरूपत्वप्रसक्तिः ? इति ; अत आह–तदभेदे- इति

---

भा. **तस्येति** । ईश्वरज्ञानस्येत्यर्थः । यद्यपि स्वविषयज्ञानजननमर्थक्रियेति पक्षे ईश्वरज्ञाने तदसम्भवात्तस्यासत्त्वेन कार्यत्वायोगान्न जीवज्ञानस्यापि तज्जनकत्वम्, तथापि अङ्गीकृत्याह—**अत आहेति** । यद्यपि विषयत्वेऽपि विषय-

अथ न स्वविषयज्ञानजननमर्थक्रिया, किं तु सजातीयक्षणान्तरोत्पादः इति चोदयति—अथेति। उत्तरमाह—चरमक्षणस्यासत्त्वप्रसङ्गः इति। 124-7
अयमर्थः—अहमिति संतानपतितानि विज्ञानानि स्थायित्वानुसन्धानकल्पनाभ्यां रागादिदोषैः विषयैश्च उपप्लुतानि पूर्वपूर्वसजातीय (विषय) विज्ञानलक्षणसंस्कारेभ्यः उत्तरोत्तराण्युत्पद्यन्ते। तत्र सर्वमिदं क्षणिकमिति भावनया अनादित्व [स्थायित्व] कल्पना निवर्तते। स्वलक्षणभावनया द्रव्यगुणशब्दकर्मविशेषणविशेष्यकल्पना विनश्यति। दुःखमिति भावनया रागादिदोषप्रवृत्तिसुखदुःखोपप्लवाः क्षीयन्ते। शून्यमिति [भावनया] विषयोपप्लवविगमः। ततश्च भावनाभेदैः चतुर्भिः चतुर्विधसंस्कारविरोधिभिः चतुर्विधोपप्लवे क्रमेण मन्दीकृते भावनाप्रकर्षपर्यन्तात् समनन्तरप्रत्ययात् सर्वोपप्लवविरहि विज्ञानमुत्पद्यते। तत् संसारसन्तानस्य अन्त्यत्वात् चरममिति तस्य कार्यान्तराभावात् असत्त्वप्रसङ्गात् क्रमेण सर्वमसदेव पूर्वं स्यादिति। ननु चरमक्षणोऽपि स्वसन्तानज्ञानान्तराभावेऽपि सर्वज्ञज्ञानं विषयतया
जनयतीति; नेत्याह—न च सर्वज्ञज्ञानजननेनेति। तुल्यस्वभावयोः 125-1
कार्यकारणभाव एव एकसन्तानता नाम। चरमक्षणसर्वज्ञज्ञानयोः विशुद्धतया तुल्यस्वभावयोः कार्यकारणभावादविच्छिन्नः सन्तानः इति
भावः। मा भूत् संतानविच्छेदः इति; नेत्याह—मुक्त्यभावप्रसङ्गादिति। 125-2
सन्तानविच्छेदो हि मुक्तिरभिप्रेतेति भावः। अथ सर्वज्ञसन्तानस्य तुल्यसन्तानस्य तुल्यस्वभावतया जनकत्वात् तत्सन्तानैक्यमेव मुक्तिरिति;

---

नेति। **अनुसन्धानकल्पना** नाम विशेषणविशेष्यत्वकल्पना। विशुद्धविज्ञानसन्तानोदयो मुक्तिरिति पक्षे दूषणमुक्तम्। इदानीं सर्वज्ञसन्तानैक्यं मुक्तिरिति पक्षान्तरं शङ्कते—**अथेति**। प्रत्यक्षताभावे कथं तदधिगमः? इति; तत्राह— ता॰

---

विषयिणोः एकसन्तानत्वमनुपपन्नमेव, तथापि वस्तुस्थितिमाह—[तर्हि विषयतयेति।] (तर्हीति विषयेति।) तत् किं चैतन्यस्यापि विषयत्व- भा॰

125 - 2 **तर्हि विषयतया जनकत्वमेव नास्तीत्याह**—न च संवित् संविदो विषयः इति। प्रत्यक्षत्वं विषयशब्देनोच्यते ; पुरुषान्तरसंवेदनस्यानुमेयत्वात्। अथ वा प्रत्यक्षस्यैव संवेदनस्य देहान्तरसम्बन्ध एवानुमीयते इति
125 - 3 सर्वप्रमाणाविषयः संविदिति। अथ वा, संविदात्मना भेदाभावादिति। अयमर्थः—संवित् संविदन्तरात् न संविदाकारेण भिद्यते, प्रतियोगिनोऽसंवित्त्वप्रसङ्गादेका संवित् स्यात्। असंविदाकारेण भेदेऽपि संविदेकैव स्यादिति न संविदां विषयविषयिभावः इति ॥

---

ता. **पुरुषान्तरेति**। ननु संविदेकत्वात् स्वयंप्रकाशत्वाच्च प्रत्यक्षैवेत्यत्राह-अथ वेति। **संविदात्मना भेदाभावादिति** स्वयंप्रकाशाकारेणाविशेषादित्येवमर्थपरतया ग्रन्थो योजितः। प्रदीपदृष्टान्तश्च तेनैव सम्बध्यते। इदानीं व्यक्तिभेदनिरासपरतया योजयति—**अथ वेति** ॥

---

भा. मङ्गीकृतमेव ? नेत्याह—**अथ वेति**। पुरुषान्तरसंवेदनस्यापि स्वसंवेदनाभिन्नत्वात् **प्रत्यक्षस्येत्युक्तम्**। यद्यपि संवेदनस्य परोक्षापरोक्षवृत्तिविषयत्वं अविरुद्धमेव ; अन्यथा तस्य शास्त्रार्थत्वायोगात्, चैतन्यमात्रगोचरा[विद्या]या अनिवृत्तिप्रसङ्गाच्च। तथाप्यत्र वृत्तिप्रतिबिम्बचैतन्यविषयत्वमेव आचार्यैर्निराकृतमिति द्रष्टव्यम्। चैतन्यस्यैकत्वात् तत्सम्बद्धत्वलक्षणं तद्विषयत्वं तस्य न भवति अभेदस्यासम्बन्धत्वादिति भावः ॥

संविदभेदं प्रत्यभिज्ञासिद्धमप्युपपत्तितो निरूपयति—**अथ वेति**। प्रदीपअत्रस्थटीकावाक्यस्य सति भेदेऽपि वैलक्षण्याभावादविषयत्वमर्थः अथवेत्युक्तस्यैव **प्रदीपान्तरमित्युदाहरणादिति** मत्वा अर्थान्तराभिप्रायेण अथवेत्युक्तमिति द्रष्टव्यम्। संविदोऽपि संविद्भेदाङ्गीकारे किं तस्याः संवित्त्वमेव भेदकम् ? उतासंवित्त्वमेव ?। नाद्यः, व्यावर्तकस्य प्रतियोग्यवृत्तिता नियमेन तस्या असंवित्त्वात्, द्वितीये तु प्रतियोग्येव संविदिति एका संवित् स्यादित्यभिप्रेत्याह—**संवित् संविदन्तरादिति**। ननु तदेतत्संवित्त्वं व्यावर्तकमिति चेत्, न—घटपटादाविव व्यक्तिभेदज्ञानं विना तदेतत्त्वयोर्ज्ञातुमयोग्यत्वात्। न चात्र ज्ञानमात्रे व्यक्तिभेदज्ञानं कस्यचिदप्यस्ति। तदेतत्त्वयोरपि परमते सर्वज्ञानवृत्तित्वेन तदयोगात्। नापि देवदत्तादिनिष्ठत्वमेव तत्त्वादिनोच्यते। एकस्यापि

किं चेति । **अर्थक्रिया नाम कारणसत्त्वे हेतुः ? प्रतीतिनिमित्तं** 125 - 4
**वा ? इति विकल्प्य, हेतुत्वे दूषणमाह**—स्वकारणनिष्पन्नस्येति । **कार्यात्** 125 - 4
**प्रागेव कारणस्य निष्पन्नत्वादित्यर्थः । न च निष्पन्नमप्यर्थक्रियातः**
**पूर्वमसदिति शक्यं वक्तुम् ; शशविषाणतुल्यत्वेन अकारणत्वप्रसङ्गात् ।**
**प्रतीतिपक्षे अनवस्थादूषणमाह**—तत्र तस्या अन्यतः इति । **ननु कार्यमर्थक्रिया** 125 - 5
**नाम, ज्ञानानि च पूर्वेषामुत्तरोत्तराणि कार्याणि स्वयंसिद्धानीति न**
**प्रतीत्यनवस्थेति चोदयति**—ननु स्वज्ञानार्थक्रियायाः इति । **तर्हि कार्य-** 125 - 7
**कारणभूतानां ज्ञानानां स्वयंसिद्धत्वात् न अर्थक्रिया सत्तावगतिनिमित्त-**
**मित्याह**—न तर्ह्यर्थक्रियातः इति । **मा भूत् कारणभूतं ज्ञानं कार्यभूतज्ञाना-** 126 - 1
**धीनप्रकाशं स्वयंप्रभत्वात् ,तथापि स्वयं स्वेनैवावभासते इति स्वयमेव**
**स्वस्यार्थक्रियेति ; नेत्याह**—न हि स्वरूपमेवेति । **तस्मात् न अर्थक्रिया-** 126 - 2
**कारित्वलक्षणं सत्वम् , किं तु स्वाभाविकमिति सकृत् कार्यं कृत्वा तूष्णीं-**

---

भा. अनेकसम्बन्धित्वसम्भवेन तस्यापि तदयोगात् । तन्मात्रनिष्ठत्वं तु भेदग्रहाधीनग्रहमेव । एवं तत्कालसम्बन्धाद्यपि न भेदकम् । अत एव घटविषयत्वादिकमपि न तथा । एकस्यैव समूहालम्बनस्यानेकविषयत्वात् । नापि कार्यविशेषजनकत्वं भेदकम् । एकस्मादपि कालादेः क्रमेण युगपद्वा अनेककार्यदर्शनात् । संविदोऽनुत्पत्तेः कारणभेदस्तु नास्तीत्युक्तम् । तस्मात् संवित्त्वमेव तस्य व्यावर्तकमिति एकैव संविदिति न तस्याः संविद्विषयत्वं जनकत्वं वेत्यर्थः ॥

**अनवस्थादूषणमाहेति** । सत्त्वेन ज्ञायमानस्यैव लिङ्गत्वम् , धूमादेः पक्षधर्मतानिश्चयस्यानुमितौ कारणत्वादिति कार्यकारणत्वानुमाने अनवस्था स्यादिति भावः । ननु कस्याश्चि(कस्यचि)दर्थक्रियायाः स्वप्रकाशतया स्वसत्ता गृह्यते स्वकारणस्य स्वयमर्थक्रिया चेत्यर्थक्रियया सत्त्वावगतिरित्यस्य न बाध इत्याशङ्क्ते—**मा भूदित्यादिना** । **स्वस्यार्थक्रियेति** । स्वस्य सत्ताग्राहकार्थक्रियेत्यर्थः । तथापि स्वार्थक्रियया(ययोः) स्वसत्ताज्ञानमिति मतस्य बाध एव । किञ्च, तत्रापि स्वप्रकाश[तायां]तया स्वसाधकत्वमेव प्रयोजकम् । न तु यत्किञ्चिदर्थक्रिया[कारि]त्वमित्याह—**नेत्याहेति** ॥

**भूतस्यापि स्थायिनः सत्त्वं न विरुध्यते इति ॥**

**इदानीं क्रमेणापि कार्यं कृत्वा सत्त्वं न विरुध्यते** इत्याह—
126 - 3 यत् पुनः क्रमेणेति । **शक्तस्यापि सहकारिसन्निधानविशेषक्रमापेक्षया**
126 - 4 **कार्यक्रमो युज्यते इत्याह**—स्थायिनोऽपीति । **शक्तस्य सहकारिकारणा-**
126 - 6 **पेक्षामपलपति**—अथ कारणस्येति । **गूढाभिसन्धिरुत्तरमाह**—अकारण-
स्यापि न तरामिति । **मा भूत् तर्हि शक्तस्याशक्तस्य च सहकार्यपेक्षेति ;**
126 - 7 **तत्राह**—असहकारि विश्वं स्यादिति । **शक्तस्यैव सहकार्यपेक्षया कार्य-**
**करत्वानुभवविरोधः इति भावः । अशक्ता एव पदार्थाः सामग्रीलक्षण-**
126 - 7 **कारणोत्पत्तौ परस्परमपेक्षन्ते इति नानुभवविरोधः इत्याशङ्कते**—अथा-
कारणं कारणोत्पत्तये इति । **कार्यं प्रत्यशक्ता अपि पदार्थाः सामग्रीकारणं**
127 - 1 **प्रति शक्ता वा न वेति विकल्पयति**—अथ तत् कारणस्येति । **उभयत्र**
127 - 2 **दूषणं**—कारणं चेदिति । अथ नापेक्षा इत्युक्तार्थम् । **ननु शक्ताशक्तयोः**
**अपेक्षाऽभावे कथं सहकार्यनुभवः कथ्यते ? ननु कार्यस्याप्यसत्त्वा-**
**विशेषात् सर्वस्माज्जन्म किं न स्यात् ? कारणस्य वा विशेषसम्बन्ध-**
**हीनस्य सर्वस्य जनकता किं न स्यात् ? इत्यव्यवस्थायां, कथं कार्य-**
**कारणभावमात्रं त्वया व्यवस्थाप्यते ?।** अथ **अन्वयव्यतिरेकसामर्थ्यात्**
127 - 4 **कार्यकारणनियमः इति ; सहकारिणोऽपि तथेत्याह**—तस्माद्यथैव हेतोरिति ।
**क्व तर्हि सहकार्युपयोगः इति ? तत्र मतान्तरमुपन्यस्य पूर्ववादिनं दूषयति**
127 - 8 —यस्तु मन्यते सहकारिजनितविशेष इति । **यः सहकारिणमपेक्षते स**
**स्वात्मनि विशेषोत्पत्तौ शक्तो वा न वेति विकल्प्य, अहेतुत्वे**
127 - 10 **दूषणमाह**—विशेषोत्पत्ताविति । **न ह्यशक्तं सहकारिसहस्रसन्निधानेऽपि**
**कार्यस्यापीति ॥**

---

ता. प्रतिबन्दिन्यायेन परिहरति —**ननु कार्यस्यापीति ॥**

---

भा. ननु क्षीरस्यैव दध्यादिप्रागभाववत्त्वात् तज्जनकत्वम्, न तु मृदादे-
रिति । तत्राह—**कारणस्येति** । तस्य तदुपादानत्वयोग्यत्वेन हि तत्प्रागभाव-
सम्बन्धित्वं वाच्यमिति न तदुपादानत्वनियामकम्, तदानीमसता निस्स्वरूपेण

किंचित् कुर्वत् दृष्टमित्यर्थः। हेतुत्वे दूषणमाह—अथ हेतुरिति। तत्र 128 - 2
प्रथमविशेषस्य विशेषान्तरापेक्षया अनवस्थाप्रसङ्गदोषपरिहाराय किंचि-
[क्वचि]देव सहकारिभिः कारणे विशेषो जन्यते कार्यजननाय, क्वचित्तु
कारणे विशेषजन्मानपेक्षमेव सहकारिभिः कार्यं जन्यते, इत्यव्यवस्थां
स्वयमेव दर्शयति—अथ मतं न सर्वं कार्यमिति। तावत्येवाभवत्— 128 - 3-5
उच्छूनताविशेषे सत्येवेत्यर्थः। तर्हि शक्तिमता कारणेन स्वात्मन्यनुप-
पकुर्वन्नपि सहकार्यपेक्ष्यते इति त्वयैव स्वपक्षो निरस्तः इति परिहरति
—अनुपकुर्वन्नपि तर्हीति। आह साक्षात् क्षणिकवादी—नानुपकुर्वन्निति। 128 - 8-9
सर्वस्य सहकारित्वप्रसङ्गादित्यर्थः। क्व तर्हि उपकरोति? तदाह—स्वरूपे तु 129 - 1
नोपकरोतीति। कार्यं हि सहकारिणा जायमानमुपक्रियते इत्यर्थः। तर्हि
क्षणिकस्येव नित्यस्यापि कार्यस्योपकाराय सहकार्यपेक्षा न विरुध्यते इति
परिहरति—नित्योऽपि तर्ह्यनाधेयातिशय इति। तदेव प्रपञ्चयति—यथैव 129 - 2-4
क्षणिको भाव इति। सामग्रीसाध्यत्वादिति। बहुकारकव्यापारसाध्यत्वादि- 129 - 5
त्यर्थः। पुनश्चोप[कार्य]कार्यमेवोपकारकं सहकारिणमपेक्षिते नानुपकार्यं
कारणं इत्याशङ्कते—अथ मतं क्षणिकोऽपि नैवापेक्षत इति। यदन्यसंनिधौ 129 - 6
भवति तदपेक्षत इति सम्बन्धः। नित्येऽपि तर्हि कारणे कार्यमेव सह-
कारिणमपेक्ष्य क्रमेण भविष्यतीति; नेत्याह—नित्यस्य तु जन- 129 - 9
कस्येति। सहकारिणां कारणस्य च सर्वदा भावात् सर्वदा कार्यजन-
नप्रसं(गादि)[ग इ]त्यर्थः। ननु सहकारिणामपि संनिधानमपेक्षत इति;
नेत्याह—को हेतुरिति। कारणसहकारिणोरपि सम्बन्धः कार्यं चेत् सोऽपि 129 - 10
कारणसहकारिभ्यां सदा भवतीति कार्यजन्म सदा भवेदित्यर्थः।
ननु क्षणिकादपि सहकारिसव्यपेक्षात् किमिति सदा कार्यं न जायते?
विशेषवति सत्ताक्षणे कार्यजन्माभावात् पूर्वोत्तरकालयोः विशेषा- 129 - 10
भावादिति; तत्राह—क्षणिकस्तु यो जनक इति॥

---

स्वसत्ताक्षण एव कार्यमुत्पादयतीत्यत्राह—विशेषवतीति॥ ता.

130 - 2 इदमयुक्तं वर्तत इति। अयमर्थः—न तावदग्निस्वलक्षणस्यैव
धूमस्वलक्षणं प्रति कारणत्वमवगन्तुं शक्यम्; क्षणमात्रापवर्गिणोरन्वय-
व्यतिरेकबुद्धिद्वयकालावस्थानायोगात्। किं तु अग्निधूमसन्तानयोरन्वय-
व्यतिरेकाभ्यामग्निस्वलक्षणानि धूमस्वलक्षणानां कारणानीति सामा-
न्योपाधौ प्रमातव्यम्। तत्र अग्निस्वलक्षणानां विशेषाभावादङ्गारगताद-
प्यग्निस्वलक्षणात् धूमजन्म किं न स्यात्?। काष्ठस्वलक्षणाभावादिति
चेत्, न—तस्यापि स्वसंताने विद्यमानत्वात्। अग्निकाष्ठस्वलक्षण-
संसर्गापेक्षा विद्यत इति चेत्, न—सन्तानद्वयनित्यत्वे तन्निमित्तसंनि-
धानस्यापि सदा प्रसङ्गात्। तत्राप्यन्यापेक्षेति चेत्, इहापि नित्येऽपि
सहकारिसंनिधानस्य कदाचिद्भावान्नित्यवत्कार्यजननप्रसङ्गो न युक्तो
वर्तत इति। ननु सहकारिसन्निधानादेव कार्योदयनियमेऽपि धूमकाष्ठ-
130 - 2 सन्तानयोः न उपकार्योपकारकसम्बन्धः इत्याह—किमत्रायुक्तमिति। परि-
130 - 2 हरति—सति नियम इति। सहकारिणां कार्येणान्वयव्यतिरेकनियमेऽपि
नोपकार्योपकारकसम्बन्ध इत्युक्तिर्विरुद्धेत्यर्थः। ननु अन्वयव्यतिरेक-
नियमस्य उपकार्योपकारकसम्बन्धव्याप्तिः क्व दृष्टा? इति; दृष्टा कार्यका-
130 - 3 रणयोः इत्याह—तथा हि यः कश्चिदिति। उपकार्योपकारकसम्बन्धाभावे
जलधूमयोरिव अन्वयव्यतिरेकनियमानुपपत्तेरिति भावः॥

---

ता. धूमकाष्ठसन्तानयोरिति। अग्निधूमयोरेवोपकार्योपकारकभावो न
धूमकाष्ठयोरित्यर्थः॥

---

भा. दध्ना प्रागभावस्यासम्बन्धात्तस्य तदुपादानत्वप्रयोजकत्वासम्भवाच्चेत्यर्थः। अन्व-
यव्यतिरेकबुद्धिद्वयेति। अन्वयव्यतिरेकाभ्यां हि कार्यकारणभावो ज्ञायते,
ततश्च क्षणिकव्यक्त्योस्तत्कालद्वयावस्थानाभावात् न तद्ग्रहः; कथञ्चिदुपस्थित-
योर्नष्टयोरेव ग्रहणे न तत्प्रवृत्तावुपयुज्यत इत्यर्थः॥

ननु सहकारिसन्निधानादेव कार्योदयनियमेऽपीति। तन्तुरूपपटयोर-
न्वयव्यतिरेकानुविधायिनोरप्युपकार्योपकारकत्वादर्शनादित्यर्थः। अनन्यथासिद्धा-
न्वयव्यतिरेकानुविधायिनोः सोऽवश्यं स्वीकार्य इत्याह—सहकारिणामिति।

नन्ु ययोरेव अग्निधूमस्वलक्षणयोः कार्यकारणभावो दृष्टः तत्रैव अन्वयव्यतिरेकनियमः, न अग्निधूमसन्तानयोः, येन अविशेषात् सर्ववह्निस्वलक्षणेषु धूमस्वलक्षणकारणेषु काष्ठसंयोगासंयोगाभ्यां धूमभावाभावदर्शनेन सहकारिकारणेषु अन्वयव्यतिरेकनियमोऽपेक्षालक्षणोपकार्योपकारकसम्बन्धश्च स्यात्, तस्मात् न कार्यकारणस्वलक्षणादन्यत्र सामान्योपाधौ कार्यकारणयोग्यताप्राप्तिरिति; तत्राह—एवं हि कार्यकारणभाव- 130 - 4
सिद्धिरित्यादिना। सामान्योपाधौ हि व्यवहारो दृश्यत इति भावः। अस्तु सामान्योपाधौ जन्यजनकयोग्यतानियमः, ततः किम्? इति; तत्राह—तत्र यदि न क्षणिकं कारणमिति। तदेव साधयति—तथा हि 131 - 1-2
हेतुपरम्पराप्रतिबन्धादिति। स्वयं जननशक्तेरिति। कारणस्य स्वयं शक्तत्वा- 131 - 3
दित्यर्थः। नापि कार्यं (सहकारिणमपेक्षते) इति। कारणादेव जननादि- 131 - 4
त्यर्थः। ननु वह्निस्वलक्षणात् धूमजन्मनि काष्ठसंसर्गस्यापि संनिधानात् तदपि सहकारि कल्प्यत इति। तन्न—प्रागपि हि कृशानुस्वलक्षणस्य धूमजननयोग्यस्य काष्ठसंसर्गाभावात् तदहेतुत्वलक्षणस्य व्यतिरेकस्य दर्शनमन्तरेणान्वयमात्रात् न सहकारित्वसिद्धिरित्याह—काकतालीय- 131 - 6
मुच्यते इति। तर्हि मा भूत् सहकार्यपेक्षेति; कारणमपि मा भूदित्याह—तथा च कार्यकारणव्यवहारा इति। तस्मात् क्षणिकनित्ययोः सहकारिसन्नि- 131 - 6
धानक्रमस्याविशेषात् कारणत्वमविशिष्टमित्युपसंहरति—तस्मात् क्षणिकस्या- 131 - 7
पीति। अयमर्थः—यथैकस्मादग्निस्वलक्षणात् समानदेशे वह्निः उपरिष्टात् धूमः अधस्ताद्भस्म पुरुषे विज्ञानमिति सहकारिभेदाद्देशभेदेन एकस्मादनेकानि कार्याण्युत्पद्यन्ते तथैकस्मात् कारणात् कालभेदेन सहकारिभेदात् कार्यभेदा इति॥

तस्मात् सत्यपि विषयाभेदे अहंसंवेदनस्य यथाप्रतिभासमद्वितीयात् संवेदनाद्भेदेनाप्यर्थक्रियासमर्थतया स्थायित्वमस्तीति महदेतत् सिद्धान्तवैलक्षण्यमस्तीत्युपसंहरति—तदेवमहङ्कर्तुः सदैकरूपावगमादिति। 132 - 4

यत्किञ्चित्साम्येन च सिद्धान्तसाङ्कर्ये मन्त्रार्थवादेतिहासपुराणप्रामाण्यानभ्युपगमात् देवतास्वर्गेश्वरमोक्षानभ्युपगमात् क्षणिकप्रमाणसम्बन्धस्य क्षणिकस्यैव सत्त्वाभ्युपगमात् लोकायतबौद्धांशद्वयपरिणतः प्राभाकरः, भेदाभेदाभ्युपगमात् मन्त्राद्यप्रामाण्याच्च लोकायतक्षपणकांशद्वयपरिणतो वार्तिककारः। यस्तु कश्चित् क्षपणकपादावनतशिरोबिम्बः स्वपरतत्त्वदर्शनतन्निष्ठपरमहंसप्रद्वेषतीव्रवायुविक्षिप्तविवेकविज्ञानलवः स्वपरपक्षगुणदोषविभागदूरीकृतविज्ञानो भेदाभेदाभ्यां बन्धमोक्षादिसङ्करमिव कुर्वन् दुर्जनरमणीयां वाचं जल्पति—'सुगतविज्ञानवादसमानोऽयं वेदान्तवादः' इति, स सम्प्रदायश्रवणपरिचयशून्यतया दर्शनविवेकमनवबुद्ध्यमानो नापवाद्यः किन्तु शोचनीयः इत्युपेक्षणीयो विद्वद्भिः॥

ननु विज्ञाने प्रपञ्चस्य कल्पितत्वं तव तस्य च तुल्यम्। सत्यम्। विज्ञाने प्रतिभास्यमानत्वं च तव तस्य च तुल्यमिति विज्ञानवादस्त्वदीयं दर्शनं किं न स्यात्?। सत्यपि प्रतिभास्यत्वे सत्यमिथ्याविभागः अस्तीति चेत्, इहापि सत्यपि मिथ्यात्वे अर्थक्रियासामर्थ्यसत्त्वासत्त्वविभागोऽस्त्येव। [घटादेः] कल्पितत्वे नेयं विभागसिद्धिरिति चेत्, प्रतिभास्यत्वेऽपि न सत्यमिथ्याविभागसिद्धिः। दृश्यते विभागः इति चेत्, तदेव विभागदर्शनं मम किं न स्यात्?। घटादेर्मिथ्यात्वमप्रसिद्धमिति चेत्, न—प्रतिभास्यसत्यत्वस्याप्यसिद्धत्वात् शुक्तिरजत-

---

ता. भास्करीयः शङ्कते—ननु विज्ञाने इति। सिद्धान्त्याह—इहापीति। भवेदयं विभागः, न तु भवत्पक्षे, कल्पितत्वाविशेषादिति शङ्कते—घटादेरिति। त्वन्मतेऽपि प्रमाणाभावस्तुल्य इत्याह सिद्धान्ती—न प्रतिभास्येति। ननु सर्वस्य मिथ्यात्वात् कस्यचिदर्थक्रियाकारित्वं कस्यचिन्नेति विभागः त्वन्मतेऽपि न स्यादित्याशङ्क्य, मैवम्—अनुभवसिद्धत्वादित्याह—शुक्तीति।

---

भा. प्रतिभास्यत्वेऽपि न सत्यमिथ्याविभागसिद्धिरिति। दृश्यस्य मिथ्यात्वनियमादित्यर्थः॥

घटयोरर्थक्रियाभावाभावसत्त्वासत्त्वविभागदर्शनाच्च । दृश्यते च माया प्रीतिद्वेषादिकारणम्, श्रूयते च देवासुरसंग्रामादिषु मायाविनिर्मितशस्त्रभेदानां दाहच्छेदभेदादिहेतुत्वं इत्यलमतिप्रसङ्गेन ॥

ननु विषयस्यापि चैतन्यव्यञ्जकतया अपरोक्षत्वे अनुमानादिष्वपि तथा स्यात्, न तथा दृश्यते इति चोदयति—ननु नानुमेयादिष्विति । 132 - 8
अन्तःकरणपरिणामसंसर्गकृतयोग्यत्वापत्त्या विषयस्य चैतन्यं प्रति व्यञ्जकत्वम् । तदनुमेयादिष्ववर्तमानत्वसम्भवात् तेषु वर्तमानधर्मद्वयोत्पत्त्ययोगात् नापरोक्षतेति परिहरति—नानुमेयादिष्वपरोक्षत्वमिति । 132 - 8
अव्यापृतत्वादिति । कारकत्वव्यञ्जकत्वधर्मद्वयानुपपत्तेरित्यर्थः । 132 - 9
न हि विनष्टे घटे अग्निसंयोगात् लौहित्यमुत्पद्यते । ननु अतीतानागताकारेण वृष्ट्यादेः वर्तमानत्वमपि दृश्यते । न—वृष्टेः युगपदतीतत्ववर्तमानत्वायोगात् । अतीततधर्मस्यापि वर्तमानकालो घटादेरिव नान्वयितया अवच्छेदकः, किन्तु प्रतियोगितयेति

ननु मायाकार्यत्वे न विभागस्संभवतीति; अत आह—दृश्यते चेति । ता.
साधारणार्थक्रियाकारित्वेऽप्यसाधारणार्थक्रियाकारित्वं न दृश्यते इत्याशङ्क्याह—श्रूयते चेति ॥

उक्तं पुरस्तात् चैतन्याभिव्यञ्जकतया विषयस्य अपरोक्षत्वम्, तत्र चोदयति—नन्विति । अनुमेयादिषु अपरोक्षत्वासम्भवं दर्शयितुमपरोक्षत्वप्रयोजकं तावदाह—अन्तःकरणेति । धर्मद्वयशब्देन कारकत्वव्यञ्जकत्वे कथ्येते । एतदेव दृष्टान्तेनोपपादयति—न हीति । किं क्रमेणातीतत्वं वर्तमानत्वं च? किं वा युगपत्? इति विकल्प्य, क्रमपक्षे अविरोधः, अथोत्तरः, तत्राह—न वृष्टेरिति । तर्हि अतीतता वर्तते इति प्रतिभासस्य का गतिः? इति; अत्राह—अतीततेति ॥

अनुमेयादिष्ववर्तमानत्वसम्भवादिति । तथा चानुमित्यादौ व्यभिचाराद्विषयो न कारणमित्यर्थः । *कथं तर्हि सम्प्रत्यतीतो घट इति तस्मिन् वर्तमानकालसम्बन्धावगम इत्याकाङ्क्षापूर्वकमाह—किन्तु प्रतियोगितयेति । भा.

* आदर्शकोशे पुटविपर्यासादिकारणबलात् लेखकैः पुटपञ्चकात् पूर्वं लिखितोऽपि 'कथं तर्हि' इत्यादिः ग्रन्थः अर्थक्रमौचित्यात् अत्रैव मुद्रित इति ज्ञेयम् ।

**घटादिवत् न वर्तमानतासिद्धिः । किं च—अतीताकारेण वर्तमानस्य नेदानीन्तनक्रियागुणाश्रयत्वम्, अतीताकारतया वर्तमानस्य घटस्य वर्तमानलौहित्यगमनाश्रयत्वादर्शनात् । अतो नानुमेयादिषु कारकत्व-व्यञ्जकत्वे युक्ते । प्रत्यक्षे पुनरिन्द्रियसंयोगस्य गुणस्य गुणिव्या-पारमन्तरेणाव्यापारात् युक्तो विषयस्य सामग्र्यन्तर्भावः इति । कथं तर्हि विषयव्यापाराभावे अनुमेयादिषु विषयाकारता**
132-9 **विज्ञानस्य ? इति ; तदाह**—लिङ्गादीनामेवेति । **ननु अतीते वर्तमान-**

---

भा. वर्तमानध्वंसप्रतियोगित्वमतीतत्वमित्यर्थः । न चैवं ध्वस्तस्यापि तदा स्थितिप्रसङ्गः अन्यथा कस्येदं प्रतियोगित्वं धर्मः स्यात् इति ; विरोधादित्याह—**घटादिव-दिति** । नन्वेवं ध्वस्तो घटादिरिति व्यवहारो निर्विषयः स्यात्, निराश्रयस्य तस्याभावात् । न च ध्वंस एव तदाश्रयः, घटादिनिष्ठत्वेन तदनुभवात् । सत्यम् । परपक्षे तथैव । अस्माकं तु संस्कारात्मकसू[क्ष्मरूपता]पत्तिरेवा[तीत]त्वमिति न कोऽपि दोष इत्यभिप्रेत्याह—**किञ्चेति** ॥

**गुणिव्यापारमिति** । यत्संयोगो यत्र कारणं तत्र तदपि कारणमेव यथा स्वसंयोगजे पटे तन्तुः । विनिगमकाभावेन अवच्छेदकतया तस्यान्यथासिद्ध्य-योगात् । एवमर्थस्य **व्यापारं** प्रत्यक्षकारणत्वं विना अन्वयादिसिद्ध संयोगादिव्यापारकारणत्वं न सम्भवतीति प्रत्यक्षे विषयः कारणमित्यर्थः । **कथं तर्हीति** । प्रत्यक्षज्ञाने जनकस्यैव (कारकत्व)[आकारार्पकत्व]दर्शनादनुमेयादेर-जनकत्वे तदाकारत्वं न स्यादित्यर्थः । ज्ञाने कारकत्वं नामार्थस्य तन्निरूपक तया सम्बन्धविशेष एव । स च न जनक(त्वम)[त्वेन अ]ति प्रसङ्गात् । किन्तु सामग्रीत एवेति । संयोगादिना प्रत्यक्षे चेत् लिङ्गज्ञानव्याप्तिसंस्कारादिना अनुमित्यादावपि भवतीत्याह— **तदाह—लिङ्गादीनामिति** ॥

ननु अतीतार्थे विषयत्वमस्ति वा ? न वा ? । नचेन्निर्विषयं ज्ञानं स्यात्, अस्ति चेत्तस्य विषयधर्मस्य कादाचित्कस्य जन्यत्वं वक्तव्यम्, एवं तस्य[जनक]-त्वमपि किं न स्यात् ? इति चोदयति—**नन्वतीत इति** । संस्कारावस्थस्यातीन्द्रि-

विषयत्वजन्मवत् कारकत्वमपि स्यादिति ; नेत्याह—प्रमेयस्य चेति । 132 - 10
विषयत्वं नाम अनुमेयेषु सुषुप्तिव्यावृत्तिः । सा चाभावः तद्धर्मो न भवति । विज्ञानाकारतापि न विषयव्यापारः, किं तु विज्ञानस्यैव इति नातीते अर्थक्रियाकारित्वम् । जानातेश्च अनुमेयादिषु फलापेक्षया सकर्मकत्वं न कर्मकारकापेक्षयेति ; सकर्मकत्वे च प्रत्यक्षवदपरोक्षतापि स्यादिति ॥

अर्थमुपवर्ण्येदानी'मस्मत्प्रत्ययविषयत्वा'दिति भाष्यं योजयति—
तदेवमहंकारग्रन्थिरिति । ननु शारीरः क्षेत्रज्ञः इत्यादिबहुविधोपाधि- 133 - 3
संसृष्टमात्मानं वर्णयति श्रुतिः, तत्र कथमहंकारस्यैवोपाधितेति चोदिते, अहंकारतत्संस्कारोपरक्ताज्ञानोपाधिकस्यैव आत्मनोऽवस्थात्रयेऽपि बाह्य-

---

ता. **तद्धर्मो न भवति**—अनुमेयस्य धर्मो न भवति, किन्तु ज्ञातृधर्मः इत्यर्थः । अनुमेयस्य भावरूपत्वाभावे कथं विज्ञानाकारता ? इत्यत्राह—**विज्ञानाकारतेति** । जानातेः सकर्मत्वनियमादनुमेयादिषु कथं कर्माभावः ? इत्यत आह—**जानातेश्चेति** । **फलापेक्षयेति** । तद्विषयसुषुप्तिव्यावृत्त्यपेक्षयेति यावत् । विपक्षे दोषमाह—**सकर्मकत्वे चेति** । **तत्संस्कारोपरक्तेति** सुषुप्ताद्यवस्थापेक्षयोक्तम् । टीकाकारोक्तं विशेषाभावमेव

---

भा. यतया प्रत्यक्षजनकत्वं न सम्भवतीत्याह—**नेत्याह—प्रमेयस्य चेति** । विषयत्वमपि तत्र न ज्ञानजन्यातिशयाश्रयत्वं सम्भवति प्रत्यक्षवत्तत्र प्राकट्यासम्भवादिति तद्गोचरसंशयादिनिवृत्तिरेव वक्तव्या, सा च प्रतियोगिसमानाश्रया विषयनिष्ठा न भवतीत्याह—**विषयत्वं नामेति** ॥

ननु ज्ञाननिरूपकतया तत्सम्बन्धविशेष एव विषयत्वम् । तदेव च ज्ञाने आकारत्वं नाम । सम्बन्धश्च सम्बन्धिद्वयजन्य इति कथमनुमेयस्य तदजनकस्य तदाकारत्वम् ? इति ; तत्राह—**विज्ञानाकारतेति** । **विज्ञानस्य**—अनुमित्यादिजनकलिङ्गज्ञानस्य । अनुमित्यादेर्ज्ञानत्वेन प्राप्तं सकर्मकत्वमपि (न) विषयत्वमात्रेणेत्याह—**जानातेरिति** । **फलापेक्षया**—संशयादिनिवृत्त्यपेक्षित-

134-2 **बहुविधोपाध्यन्तरनिमित्तोऽयं व्यपदेशः** इत्याह—स पुनरेवंभूतो
134-4 **जाग्रत्स्वप्नयोरिति । गतागतमाचरन् इति अनेकोपाध्युपरागः** उच्यते । **सवि-**
**कल्पके अधिष्ठाने सविकल्पाध्यास इति वदतः अस्मत्प्रत्ययविषयत्वादिति**
**परिहार उक्तः । इदानीं निर्विकल्पकेऽपि सविकल्पाध्यासः सम्भवतीत्याह**
135-1 **—किं च न केवलमिति । ननु नित्यानुमेय आत्मा कथमपरोक्षतया सिद्धः**
135-3 **इति; नेत्याह—न** ह्यात्मन्यप्रसिद्ध इति । **स्वपरयोः मयेदं विदितमिति कर्तृ-**
**कर्मसम्बन्धावगमशून्यत्वाविशेषात् । अनुभवनिमित्तज्ञानाश्रयत्वमन्यतर-**
**स्य विशेष इति चेत्, न—आत्मपदार्थानुभवाभावे सम्बन्धावगमायोगात्,**
**अनुभवसम्बन्धाभावाविशेषे अन्यतराश्रयज्ञानानुमानायोगादिति भावः ।**
135-3 **अस्तु तर्हि विषयानुभवाश्रयतया सिद्धिः इति ; नेत्याह—न च संवेद्य-**
**ज्ञानेनेति ॥**

---

ता. स्पष्टयति—**स्वपरयोरिति ।** यथा परेण विदिते घटे स्वस्य सम्बन्धो न प्रतीयते एवं स्वेन विदितेऽपि सम्बन्धिनः स्वस्याविदितत्वात् घटवेत्तृत्वेन तत्सम्बन्धितया मयेदं विदितमिति योऽयमनुभवः स न स्यादित्यर्थः । मयेदं विदितमित्यनुसन्धातुः अननुसन्धातुः सकाशात् घटप्राकट्यनिमित्तज्ञानाश्रयत्वमेव विशेषः इति शङ्कते—**अनुभवेति ।** घटसम्बन्धिन आत्मनो वस्तुतः सत्यप्येवंभूते विशेषे स्वस्यैवासिद्धत्वात् स्वनिष्ठतया सम्बन्धानुभवो न सिध्यतीति परिहरति—**न आत्मेति ।** भाट्टान् प्रति दूषणान्तरमाह—**अनुभवेति ।** स्वस्यासिद्धत्वेनैव हेतुना अनुभवनिमित्तघटप्राकट्येनापि स्वस्य

---

भा. विषयत्वमात्रेण । न च प्रत्यक्षवत्तदाश्रयभेदं विना न सिध्यतीति वाच्यम्; अनुमितेरिव प्रत्यक्षस्यापि सविषयत्वातिरिक्तसकर्मकत्वाभावादिति भावः ॥

***अनुभवसम्बन्धाभावेति ।** पटादिनिष्ठप्राकट्यस्यात्मसम्बन्धाभावेन तज्जन्यत्वायोगात् । क्रियायाः स्वाश्रय एव फलजनकत्वनियमात्, ततस्तेन

---

*आदर्शकोशे पुटविपर्यासादिकारणबलात् लेखकैः ग्रन्थक्रमस्यान्यथाकरणेऽपि अर्थक्रमौचिन्यात् 'सकर्मकत्वाभावादिति भावः' इति ग्रन्थानन्तरं 'अनुभवसंबन्धाभावेति' इत्यादिग्रन्थः मुद्रित इति ज्ञेयम् ॥

**ननु संवित् स्वोपाधिं साधयति न कर्मकारकमिति। न तावदाश्रय उपाधिः, विषयेऽभावात्। आश्रयविषय उपाधिरिति चेत्, किं विषयत्वं नाम ?। संवित्प्रयुक्तव्यवहारयोग्यत्वमिति चेत्, न—आत्मापि तर्हि विषयः स्यात्। आश्रयव्यतिरिक्तत्वे सति संविद्व्यावर्तकत्वमिति चेत्, चक्षुषोऽपि प्रसङ्गः। न च आश्रयव्यतिरिक्तत्वे सति तत्प्रयुक्तव्यवहारयोग्यो विषयः। संवित्तदाश्रयसम्बन्धस्यापि विषयत्वप्रसङ्गात्।**

---

ता. सम्बन्धावगमाभावात् स्वनिष्ठज्ञानानुमानं न सिध्येदित्यर्थः। आश्रयविषययोरन्यतरः उपाधिरिति शङ्कते—**आश्रयेति**। **चक्षुषोऽपीति**। चाक्षुषज्ञानमित्यत्र चक्षुषोऽपि संविद्व्यावर्तकत्वेन विषयत्वप्रसङ्गः इत्यर्थः। **संवित्तदाश्रयसंबन्धस्यापीति**। संविदः तदाश्रयस्य चात्मनो यः सम्बन्धः

---

भा. तस्मिन्न तदनुमानमित्यर्थः। पूर्वमात्माप्रतिपत्तौ मयेदं विदितमित्यात्मानुभवसम्बन्धावगमायोगात् ततः स्वस्मिन् तज्जनकानुमानायोगात् घटादिनिष्ठानुभवस्य स्वीयत्वज्ञानं विना तदसम्भवादिति वा अर्थः। किं संविदुपाधिः संविदो विशेषणं तदाश्रयः? तत्कर्म? तदन्यतरो वा?। आद्ये आह—**न तावदाश्रय(त्वं) इति**। द्वितीये घटादि(विषयो) [विषयज्ञाने आत्मप्रतिभासो] न स्यात्, आत्मनस्तद्विषयत्वापत्तेरित्यर्थः॥

**आश्रयविष(यत्वमिति)य इति**। कर्मत्वं विषयशब्दार्थः। किं यो यज्ज्ञानजन्यव्यवहारविषयो भवति स तस्य कर्म? किं वा ज्ञानव्यावर्तकम्? अथ वा अनाश्रयत्वे सति ज्ञान[प्रयुक्त]व्यवहारयोग्यम्?। आद्ये आत्मनोऽपि कर्मत्वापत्तिमुक्त्वा, द्वितीयेऽपि ज्ञानव्यावर्तकत्वमात्रं देवदत्तस्य ज्ञानमित्यनुभवात् आत्मनोऽप्यस्तीति विशेषं शङ्कते—**आश्रयव्यतिरिक्तत्वे इति**। तृतीयेऽपि किं प्राभाकरस्य संविदात्मसम्बन्धो ज्ञानान्तरेण व्यवह्रियते? तेनैव वा?। नाद्यः, संविदात्मनोरपि तद्विषयत्वप्रसङ्गात्। न द्वितीय इत्याह—**संविदिति**। न च तस्य घटादिज्ञाने कर्मत्वं इष्टमिति वाच्यम्। तदिन्द्रियसंयोगानाश्रयघटादेरपि तत्प्रसङ्गात्। न च संविदाश्रयान्यत्वे सति संविज्जन्यापरोक्ष-

न च सम्बन्धो नास्ति इति तत्र वक्तुं शक्यम्। तस्मात् संप्रयुक्ता-
दिवस्त्वेव अवभास्यते इति। अस्तु तर्ह्यात्मविषयज्ञानान्तरादिति, नेत्याह
135 - 4 —न च ज्ञानान्तरेणेति। कुतः?। तच्च ज्ञानान्तरं विषयानुभवसमकालं वा?
135 - 5 भिन्नकालं वा?। विभिन्नकालत्वे दूषणमाह—भिन्नकालत्वे इति। एक-
136 - 1 कालत्वमिति चेत्, तत्राह—न ह्येककालमिति। निरवयवस्य युगपदेकदेशे
वा भिन्नदेशे वा परिणामद्वयायोगादित्यर्थः। एकस्य युगपत् सामस्त्येन
136 - 3 परिस्पन्दद्वयमनुपपन्नम्, परिणामस्तु सम्भवतीत्याह—मा भूदिति। परि-
136 - 4-6 णामद्वयमपि कात्स्न्र्येन युगपन्न सम्भवतीत्याह——मैवमिति। [यौवनस्था-
विरहेतुरिति।] यौवनस्थाविरयोः कृत्स्नशरीरवर्तित्वादिति। न च
136 - 6 भागेन परिणामः, निरवयवत्वादिति भावः। तस्मादिति परिशेषात्
स्वयंप्रकाशतया अपरोक्षत्वोपसंहारः॥

---

ता. समवायः तस्यापि प्रत्यक्षत्वप्रसङ्गः। नचासौ प्रत्यक्ष इष्यते, अनुमेयत्वाङ्गी-कारादित्यर्थः। ननु संविद एवात्मत्वात् तत्सम्बन्धो नास्तीत्याशङ्क्याह—**न चेति**। अनुभवामीत्यनुभवविरोधादित्यर्थः। [**यौवनेति**।] यौवनस्थाविरयोः कृत्स्नशरीर-व्यापित्वात् तद्धेतुभूतं परिणामद्वयं युगपत् न संभवतीत्यर्थः॥

---

भा. व्यवहारविषयत्वमेव संविद्विषयत्वे प्रयोजकम्। लाघवात् संविदतिरिक्तत्वे सति तज्जन्यपरोक्षव्यवहरविषयत्वस्यैव संविद्विषयत्वप्रयोजकत्वादित्युक्तत्वात्। तस्मादात्मनोऽपि संवित्कर्मत्वं गुरुमते स्यादित्याह——**तस्मादिति**॥

किमेकैकमात्रविषयं ज्ञानद्वयं युगप(दित्यु)दुच्यते? उत आत्मज्ञाना-नन्तरं विशिष्टविषयमेकं ज्ञानं भवति? इति। न द्वितीयः, चक्षुष आत्मज्ञाने मनसो घटादिज्ञाने च अशक्तत्वात्। न च व्यवसायोपनीतं घटं मनो विषयी-करोतीति वाच्यम्; ज्ञानप्रत्यासत्तेर्निरस्तत्वात्। व्यवसायानुपनीतसंवि-द्विषयत्वस्य [असंभवात्] न प्रथम इत्याह——**न ह्येककालमिति**। एकस्य **युगपत् सामस्त्येन परिस्पन्दद्वयमिति**। उपरि वृक्षश्चलति मूले नेत्यबाधि-तानुभवात् संयोगवत् कर्माप्यव्याप्यवृत्तीत्यभिप्रेत्य **सामस्त्येनेत्युक्तम्**॥

अध्यस्यमानेनैकेन्द्रियग्राह्यत्वमधिष्ठानस्य वक्तव्यं नापरोक्षता-मात्रेण कृत्यमित्याशङ्क्य आकाशदृष्टान्तः इति भाष्यतात्पर्यमाह—ननु न क्वचिदिति। अत्र शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वात् गन्धवत् द्रव्यव्यतिरेकेण उपलब्धेः संभवात् विशेषगुणत्वे वक्तव्ये स्पर्शादिगुणचतुष्टयसहवृत्तित्वा-भावात् बाह्येन्द्रियग्राह्यत्वात्-दिक्कालमनसां विशेषगुणशून्यत्वात् भूत-चतुष्टयात्मदिगादिव्यतिरिक्तद्रव्यस्यैव विशेषगुणः शब्दः तद्गुणश्चाकाश इति वैशेषिकादयोऽनुमिमते। बौद्धलौकायताश्च अनुपलब्धिलिङ्गकं मूर्तद्रव्याभावमात्रमाकाशमनुमिमते। प्राभाकराणां तु अस्त्येवाकाशोऽनु-पलब्धिलिङ्गः, मूर्तद्रव्याभावमात्रत्वात् भावान्तरस्यैव चाभावत्वात्। क्षप-णकवार्तिककारीयास्तु चाक्षुषमाकाशमिच्छन्ति। तथा सति स्पर्शित्वमपि स्यात्। अस्त्विति चेत्, न—रूपस्पर्शवत्येव द्रव्ये चक्षुरादिप्रवृत्ति-नियमात्। चक्षुःप्रसारणस्य च आकाशानुमानलिङ्गदर्शने अन्यथासिद्ध- 136-9

---

इन्द्रियग्राह्यत्वादित्युक्ते संयोगादौ व्यभिचारः, तद्व्यावृत्त्यर्थं एकेन्द्रियेत्युक्तम्। ता॰
सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगा इन्द्रियग्राह्याः इत्य-भ्युपगमात्। एकेन्द्रियग्राह्यत्वादित्युक्ते मनोमात्रवेद्ये आत्मनि व्यभिचारः, तदर्थं बाह्येति पदम्। बाह्येन्द्रियग्राह्यत्वादित्युक्तेऽपि रूपत्वादौ व्यभिचारः तदर्थं गुणत्वे सति इति विशेषणं द्रष्टव्यम्। गुणत्वे द्रव्योपलब्धिव्यतिरेकेण कथं तदुपलब्धिः? इति; अत आह—गन्धवदिति। तथापि पृथिव्यादिभूतचतुष्टयगुणत्वं किं न स्यात्? इति; अत आह—स्पर्शादीति। आत्मगुणत्वव्यावृत्त्यर्थमाह—बाह्येति। भावस्य कथमनुपलब्धिलिङ्गकत्वम्? इत्यत आह—मूर्तेति। पूर्व-मस्तीत्युक्त्वा पुनर्नास्तीति वचनं विरुद्धमिति; अत्राह—भावान्तरस्येति। स्पर्शवत्त्वमपि किं न स्यात्? इति शङ्कते—अस्त्विति चेदिति। तथापि चाक्षुषत्वं न स्यात् रूपरहितद्रव्यत्वादित्याह—न—रूपेति। रूपवत्येव द्रव्ये चक्षुषः प्रवृत्तिः, स्पर्शवत्येव द्रव्ये स्पर्शनप्रवृत्तिः, तदुभयाभावात् नाकाशः प्रत्यक्षः इत्यर्थः। आकाशप्रतीतेः कथं तर्हि चक्षुरन्वयव्यतिरेकौ? इत्यत आह—चक्षुःप्रसारणस्येति। तार्किकमते मूर्तद्रव्याभावस्य चाक्षुषस्य आका-

---

आकाशानुमानलिङ्गेति। मूर्तद्रव्यस्थित्या ह्यवकाशरूपाकाशोऽनुमीयते　भा॰

137 - 1-2 **त्वात् । तस्मात्** अप्रत्यक्षेऽपि ह्याकाशे **इत्युक्तम्** । अथवेति । साक्षिवेद्यतया
137 - 3 **मनोमात्रगम्यतया वा अपरोक्ष** इत्यर्थः । इन्द्रनीलमिति । इन्द्रनीलमिव
137 - 5 **नीलमित्यर्थः** । एवमविरुद्धः **इत्यादिः** स्पष्टार्थः । प्रतिपन्नोपाधौ
**निरस्यमानमर्थमविद्यान्वयव्यतिरेकाभ्यामविद्यां मन्यन्ते** इत्यर्थः ॥

**न केवलमविद्यान्वयव्यतिरेकसामर्थ्याद्** विद्योपादानतया अविद्या-
137 - 11 **त्वं किंतु विद्याविपरीतत्वाच्च इत्याह**—तद्विवेकेनेति । **नन्वविद्यामुपवर्ण्य**
**तस्या ज्ञाननिवर्त्यत्वप्रदर्शनेनाध्यासनिवृत्तिसिद्धेः किमध्यासोपवर्णनेनेति**
138 - 1 **चोदयति**—यद्येवमध्यास इति प्रक्रम्येति । **पुरुषाकाङ्क्षाया** अनर्थनिवृत्ति-
**विषयत्वादनर्थस्यैवाविद्यात्वेन ज्ञाननिवर्त्यत्वं वक्तव्यमिति परिहरति**
138 - 3 —नैतत् सारमिति । **अनर्थस्यैवाविद्यात्मकत्वे तदाश्रये** विषये वा वस्तुतः
**तन्निमित्तगुणदोषाभावात् ज्ञानेन सर्वानर्थनिवृत्तिः फलिष्यति** ; तत्फ-

---

ता. शानुमापकत्वात् तद्ग्रहणाय चक्षुःप्रसारणमित्यर्थः । **गुणदोषाभावात्** इति ।
अध्यस्तरजतादेः ज्ञानात् निवृत्तौ तदधिष्ठानस्य तदीयगुणदोषासंसर्गवदित्यर्थः ।

---

भा. इति तद्ग्रहे तदुपयुक्तमित्यर्थः । वस्तुतस्तु आकाशं न नित्यानुमेयम् ; शब्दा-
देस्तत्कार्यत्वप्रतीतिमन्तरेणापि तदनुभवात् । आकाशस्य मूर्तद्रव्याभावत्वा-
भावात् नानुपलब्ध्यापि तदनुमीयते । धर्मिप्रतियोगिज्ञानं विना प्रतीत्यनु-
पपत्तेः । नीलं नभ इति प्रत्यक्षभ्रमादप्याकाशः प्रत्यक्ष एवेत्याह—**साक्षिवेद्य-
तयेति** । अत्र च यद्वक्तव्यं तत् प्रागेवोक्तमिति नेह प्रपञ्च्यते ॥

ब्रह्मज्ञाने(त्यत्रा)[ना]विद्यानिवृत्तेरेव सूत्रितत्वादहङ्कारादेरध्यस्तत्वस्या-
विद्यात्मकत्वस्य च वर्णनं भाष्यकारस्यासङ्गतमिति शङ्कते—**नन्वविद्या-
मुपवर्ण्येति** । अविद्यायां सत्यामपि सुषुप्त्यादावनर्थादर्शनेन तन्निवृत्तिः न स्वतः
पुरुषैरर्थ्यते, किं त्वहङ्काराद्यनर्थनिवृत्तिहेतुत्वादेव इत्यहङ्कारनिवृत्तिरपि सूत्रेण
सूचितेति परिहरति—**पुरुषेति** । यद्यपि स्वरूपानन्दावारकत्वादविद्यायाः
स्वत एव तन्निवृत्त्याकाङ्क्षा भवत्येव, तथापि दुःखस्य क्षणमात्रमप्यसह्यस्वभावतया
तद्धेतुतया अवगते (घटे) [सर्पे] तन्निवृत्तिराकाङ्क्षिता भवतीति तथोक्तमिति

लवचनमुत्तरभाष्यमित्याह—तदेतदाह—यत्र यदध्यास इति। अविद्याध्या- 138 - 7
सविषयत्वप्रयुक्तस्तावत् गुणदोषाभावः सिद्धः। अत्राध्यासपरिणामितया आश्रयत्वप्रयुक्तदोषगुणाभावः कथ्यते। कथम्?। अनाद्यविद्याध्यासस्य नित्यचैतन्यावभासत्वात् न तत्राध्यासपरिणामः। कादाचित्काध्यासपरिणामस्याविद्योपादानत्वादविद्यासंभेदादात्माश्रयत्वादिसिद्धिरिति।
प्रतिज्ञेति सूत्रकारस्य ज्ञानेन बन्धनिवृत्तेरर्थात् सूत्रणमुच्यते॥ 133 - 10

वृत्तसंकीर्तनपूर्वकमुत्तरभाष्यस्य तात्पर्यमाह—एवं तावद्युष्मदस- 138 - 11
दित्यादिनेति। अत्र च प्रमातृप्रमाणप्रमेयकर्तृकर्मकार्यभोक्तृभोगभोग्यस्वलक्षणस्य व्यवहारत्रयस्य शरीरेन्द्रियादिष्वहंममाध्यासपुरस्सरत्वं प्रत्यक्षमिति प्रत्यक्षोपन्यासः कृतः। ननु विधिप्रतिषेधपराणि शास्त्राणीत्येव वक्तव्यं तन्निष्ठत्वात् सकलशास्त्रस्य, किमिदं मोक्षपराणीति? तत्राह—
मोक्षपरत्वं चेति। कथं पुनरित्यादिभाष्यस्याध्यासोपादानं व्यवहारत्रितय- 139 - 6
मित्यत्र प्रमाणान्तरप्रश्नविषयत्वं दर्शयति—बाढमुक्तलक्षणा अविद्येत्यादिना। 140 - 1
कथं पुनरित्याक्षेपार्थं दर्शयति—प्रमातारमाश्रयन्तीति। अविद्याध्यास- 140 - 2

---

ता. किं अविद्याध्यासपरिणामित्वादात्मनो दोषानुषङ्गः? किं वा अहंकाराध्यासपरिणामित्वात्? इति विकल्प्य क्रमेण दूषयति—**अनाद्यविद्येति**। अविद्योपादानत्वे कथमात्माश्रयत्वप्रतीतिः? इत्यत आह—**अविद्यासंभेदादिति**।

---

भा. द्रष्टव्यम्। अथ वा, कार्यमिथ्यात्वनिश्चयं विना अज्ञानस्यार्थक्रियाहेतोर्मिथ्यात्वनिश्चयासम्भवात्तन्निवृत्तिप्रार्थना न स्यादिति तद्वर्णनमिति द्रष्टव्यम्॥

**अविद्याध्यासविषयत्वेति**। अध्यासाधिष्ठानत्वेत्यर्थः। ननु अधिष्ठानस्य भ्रमकालेऽपि तदभाववत्त्वाद्भवतु तस्मिन्नध्यस्तगुणदोषासम्बन्धः। परिणामिनस्तु स्वसमानसत्ताककार्यसम्बन्धित्वात् कथमध्यासपरिणाम्यात्मनः न तत्सम्बन्ध इति शङ्कते—**कथमिति**। आत्मनः परिणामित्वमेवासिद्धं अविद्यातज्ज्ञानयोरनादित्वादहङ्कारादेरप्यविद्यापरिणामत्वात्तज्ज्ञानस्यापि नित्यसाक्षित्वादित्याह—**अनाद्यविद्येत्यादिना**॥

परिनिष्पन्नाहंकारात्मसंपिण्डितोपादानत्वे प्रमाणानां प्रामाण्यमेव न
140 - 4 सिद्ध्यतीत्यस्मिन्नर्थे भाष्यं योजयति—अथवा कथमविद्यावद्विषयाणीति।
140 - 6 अविद्यावदुपादानत्वे का प्रामाण्यानुपपत्तिरिति ? तदाह—अविद्या-
वद्विषयत्वे इति । 'उच्यते—देहेन्द्रियादि'ष्वित्यादिपरिहारभाष्यं[विभागेन]
140 - 9 अवतारयति—वस्तुसंग्रहवाक्यम्, अस्यैव प्रपञ्च इति। व्यवहारत्रितयमध्या-
सोपादानमित्यत्रार्थापत्तिव्यतिरेक्यनुमानप्रदर्शनाय 'यत्र यत्राध्या-
साभावः संपतिपन्नस्तत्र व्यवहाराभावो दृष्टः' इति व्यतिरेकव्याप्तिं
140 - 10 भाष्यार्थं दर्शयति—न हि देहेन्द्रियादिष्विति। देहादिशब्दार्थं विभा-
141 - 1 गेनाध्यासं च कथयति—यतो देहेऽहमभिमान इत्यादिना। प्रमाणान्तर-
141 - 4 प्रदर्शनाय व्यवहारत्रयमूलाध्यासे प्रत्यक्षमुक्तमनुवदति—सर्वो हि
मनुष्योऽहमिति । अत्रायं प्रयोगः—देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव
कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपुरस्सरप्रमातृत्वादिव्यवहार-
वन्तौ, तस्यैव सुषुप्तिकालादन्यकालत्वात्, यः कालस्तथाविधव्यव-

ता. देहेन्द्रियादिष्वहंममाध्यासपुरस्सरप्रमातृत्वादिव्यवहारवन्तावित्येतावन्मात्रे निर्दिष्टे पुरुषान्तरस्य तथा व्यवहारेण सिद्धसाधनता स्यादिति, अतो विशिनष्टि—तस्यैवेति । सुषुप्तिकालादन्यकालत्वात् इत्युक्ते असिद्धिः, देवदत्तस्य जाग्रत्स्वप्नकालौ यज्ञदत्तादेः स्सुषुप्तिकालो भवति इति, अतो विशिनष्टि—तस्यैव सुषुप्तिकालादिति ॥

भा. देवदत्तस्य जाग्रत्स्वप्नकालाविति । जाग्रत्स्वप्नयोरेकैकस्य पक्षत्वे तदितरत्र व्यभिचार इति तदुभयोपादानम् । एतच्च प्रतिज्ञाविषयस्यैव पक्षत्व-मिति मतेनोक्तम् । वस्तुतस्तु एकैकस्य पक्षत्वम् । पुरुषान्तरजाग्रत्स्वप्नयोर्बाध-परिहाराय देवदत्तेति । रजताध्यासपूर्वकत्वेनार्थान्तरनिवृत्तये देहेन्द्रि-यादिष्विति । एकस्यैव कालस्यानेकपुरुषजाग्रत्कालत्वात् पुरुषान्तराहमध्यास-पूर्वकत्वेनार्थान्तरत्वनिवृत्तये तस्यैवेति । सुषुप्तिकालादन्यकालत्वं देव-दत्तस्य सुषुप्त्याश्रये यज्ञदत्तस्य जाग्रत्कालेऽप्यस्तीति व्यभिचारनिवृत्तये हेतौ

हारवान् न भवति न स तस्यैव सुषुप्तिकालादन्यकालः, यथा तस्यैव सुषुप्तिकालः इति। व्यवहारत्रितयं वा दर्शिताध्यासोपादानमन्तरेणानुपपन्नं अध्यासाभावे व्यवहारादर्शनात् सुषुप्ते इत्यर्थापत्तिः॥

ननु कर्तृकरणयोः संबन्धमात्रं व्यवहारे अपेक्ष्यते न तादात्म्यसंबन्धः इति तत्र परिशेषानुमानार्थापत्तिद्वये संबन्धान्तराणि व्यावर्तयन् न तावत्स्वस्वामिसंबन्धः इत्याह—न स्वत्वेन संबन्धिनेति। सुषुप्तेऽपि तस्य 141 - 6
भावात् इत्यभ्युच्चयः। इच्छानुविधायित्वमेव व्यवहारनिमित्तं तदभावात् सुषुप्ते व्यवहारविपर्ययः इति चोदयति—अपर आह—आत्मेच्छानु- 142 - 3
विधायित्वमिति। अस्त्विच्छामात्रेण विनियोज्यविनियोजकसंबन्धः, ततः किमिति? तत्राह—तत आत्मन इति। नन्वेतत्संबन्धमूलो व्यवहार इति 142 - 5
किमत्र प्रमाणमिति; अत आह—तथाचोत्तिष्ठामीति। ननु भृत्यादयोऽपि 142 - 6
तदिच्छानुविधायिनः, तच्छरीरेणापि व्यवहारः स्यादिति; नेत्याह —न च भृत्यादिषु तदस्तीति। उच्यते—यदीच्छानुविधानयोग्य- 142 - 7

ता॰ न च भृत्यादिष्विति। स्वामिनः इच्छानुविधायिनी भृत्यादिष्वन्यैवेष्टा प्रमातृत्वादिव्यवहारहेतुरित्यर्थः। भृत्यादिशरीरस्यापि भोगसाधनत्वं परम्परया

भा॰ तस्यैवेति। यदेवं तदेवम्, यथा यज्ञदत्तजाग्रत्कालः, तत्राप्येवमन्यदृष्टान्तेन साधनीयमिति न साधनवैकल्यम्, यथा वैशेषिकाणां वाक्यस्य स्वपदार्थज्ञानपूर्वकत्वानुमाने, इत्यभिप्रेत्यैव विशिष्टव्यतिरेकव्याप्तिमाह—यः काल इति। अन्यथा पक्षादौ देवदत्तपदं व्यर्थं स्यात्। व्यवहारमात्रस्याभिमानपूर्वकत्वाभिप्राये तदनुभवायोगात् साध्याप्रसिद्धिश्च स्यादिति द्रष्टव्यम्। देवदत्तादिपदमविवक्षित्वा केवलव्यतिरेक्यनुमानमेव वा अस्तु। न च साध्याप्रसिद्धिः। व्यवहारोऽभिमानजन्यः व्यवहारत्वात् स्तुतिनिन्दादिप्रयुक्तव्यवहारवत्, अहमनेन सौन्दर्यबलादिना स्तुतः स्थौल्यादिना च निन्दित इति पूजां धिक्कारं वा कुर्वन्तीति न साध्यवैकल्यम्, तत उक्ताकारानुमानमिति भावः॥

सुषुप्तेऽपि तस्य भावादिति। न च सुषुप्तौ सम्बन्धसत्त्वेऽपि व्यापारा-

**तामात्रं संबन्धः, सुषुप्तेऽपि तदस्तीति तत्रापि** व्यवहारः स्यात्। **अथेच्छया अनुविधीयमानत्वं** संबन्धः, अत्यातुरे तदभावात् **प्रमातृत्वादिव्यवहारो न स्यात्। अथ दृश्यते अयं संबन्धो** व्यवहार-
142 - 8 **मूलमिति; नेत्याह**—नैतत् संविदि बहुमानवतो युक्तमिति। न च
142 - 10 **गौणत्वम्, मुख्यानुभवविरोधादित्याह**—गौणीत्यादिना। इच्छाप्यध्या-
143 - 1 **समूलैवेत्याह**—अपि चेच्छाऽपि परिणामविशेष इति। अन्तःकरणाध्यास-
143 - 2 **मूलैवेच्छेत्यत्र प्रत्यक्षमाह**—तथा चानुभव इति। **नचात्मानात्मनोः संयोगसमवायौ व्यवहारनिमित्तम्। सुषुप्तेऽपि भावात्। भोक्तृभोग्यान्वय-स्वकर्मारभ्यत्वस्वेन्द्रियाधिष्ठेयत्वादीनां भोगाद्यध्यासापेक्षत्वात् भृत्यादिशरीरे च भावात्। अव्यवधानेन भोग्यत्वं मूलसंबन्ध इति चेत्, यदि भोगयोग्यता संबन्धः, सुषुप्तेऽप्यस्ति। यद्यव्यवधानेन भुज्यमानत्वं संबन्धः, तन्न—आत्मनः सर्वशरीरदेशकालाव्यवधाने सत्यत्रैव भोगान्वयस्य मूलसंबन्धान्वेषणात्। तस्मात् यत्किंचिदेतत् संबन्धान्तरम्। अतः परिशेषादर्थापत्त्यनुमानाभ्यामध्यास एव व्यवहारमूलं सिद्ध इत्युप-**
143 - 4 **संहरति**—अतः स्वयमसङ्गस्येति ॥

---

ता. अस्तीति तद्व्यावृत्त्यर्थं **अव्यवधानेन** इति विशेषणम् ॥

---

भा. भावान्न प्रमातृत्वमिति वाच्यम्; इन्द्रियव्यापारयितरि प्रमातरि सति तदभावान्न प्रमातृत्वमिति सम्भवात्। न च तदा प्रमातृत्वादिव्यवहारनिमित्तादृष्टक्षयान्न प्रमातृत्वमिति वाच्यम्; अध्यासं विना अदृष्टस्यासङ्गात्मनि सम्बन्धाभावादिति भावः। संयोगादिकमङ्गीकृत्याह–**सुषुप्तेऽपि भावादिति। सर्वशरीरदेशकालाव्यवधाने सतीति।** ननु भृत्यादिशरीरे स्वमनस्सम्बन्धाभावादेतच्छरीरे सत्त्वादत्रैव भोगो नान्यत्रेति चेत्, न—मनस्स्वीयत्वप्रयोजकसम्बन्धाभावात्। नच स्वस्यादृष्टा-[रब्ध]त्वेन स्वीयत्वम्; अध्यासं विना अदृष्टस्य स्वीयत्वाभावादित्युक्तम् ॥

किञ्च, विभुमनोवादे शरीरान्तरे तदसंयोगो वक्तुं न शक्यते। अणुनापि शरीरप्रदेशस्थमनसा शरीरव्याप्येव सुखादि(वृत्त्या....।)[भृत्यादिशरीरावच्छेदे-

**ननु सर्वशरीरसंनिधानाविशेषे सति आत्मनः कथमस्मिन्नेव शरीरे अध्यासनियम इति ?। अनादिस्तावदविद्याध्यासः। तत्परिणामत्वाल्लिङ्गशरीरे, तत्कार्यभूतसूक्ष्मशरीरारब्धत्वात् तत्संश्लेषाद्वा स्थूलशरीरे अध्यासनियमो न विरुध्यते। ननु प्रमातैव व्यवहाराश्रयो नाध्यासः इति; न—प्रमातृत्वमेवाध्यासपरिनिष्पन्नमित्याह—**तेन यद्यपीति। 144 - 1
**यत्तु अध्यासपरिनिष्पन्नाहंकारात्मसंपिण्डितोपादानत्वे कारणदोषादप्रामाण्यं प्रमाणानामिति, तत्र यदि प्रतिपन्नोपाधौ केनापि प्रमाणेना-**

---

ता. **तत्कार्येति**। तस्या अविद्यायाः कार्यभूतं यत् सूक्ष्मशरीरं तदारब्धत्वात् स्थूलशरीरे (नियमा) अध्यासनियमः इत्यर्थः। लिङ्गशरीरकार्यं स्थूलशरीरं न भवति किन्तु मायाकार्यमिति मतेऽपि नियमहेतुमाह—**तत्संश्लेषाद्वा** इति।

---

भा. नापि अनुभूयतामित्यापाद्यते।] न च स्वशरीरावच्छिन्नात्मन्येव स्वमनस्संयोगाद्भोग इति वाच्यम्; स्वादृष्टारब्धत्वेन स्वसंयोगित्वेन वा तच्छरीरस्य स्वीयत्वेन भृत्यादिशरीरस्यापि तत् स्यात्। तस्मात् कल्पितं तादात्म्यं यस्य यच्छरीरेऽस्ति तत्रैव तस्य भोगो वाच्यः इति तदेव प्रमातृत्वादिमूलसम्बन्ध इति भावः॥

**अनादिरिति**। एक इत्यपि द्रष्टव्यम्। अतोऽनादित्वादेकत्वाच्च [न] तत्र अनियमशङ्केति भावः। शरीराध्यासस्यानियमोऽपि सर्वगताविद्याप्रतिबिम्बचैतन्यमात्रस्योच्यते चेदङ्गीक्रियत एव। एकस्यैव जीवस्य सर्वशरीराभिमानितया सर्वत्र व्यवहर्तृत्वात्। नानाजीवसाधारणं परि(णाम)[हार]माह—**तत्परिणामत्वाल्लिङ्गशरीरे इति**। पूर्वपूर्ववासनाविशिष्टाविद्यापरिणामत्वाल्लिङ्गशरीरस्य तद्वासनाविशिष्टात्मप्रदेशेनैव तत्तादात्म्यमित्यर्थः। **तत्कार्येति**। अविद्याकार्यं यद्भूतं तेन स्वनिष्ठादृष्टद्वारा **सूक्ष्मशरीरेण चारब्धत्वात्** स्थूलशरीरस्य यस्यादृष्टारब्धं तत् तेनैवात्मना तस्य तादात्म्यमिति नातिप्रसङ्गः। 'रमणीयचरणा रमणीयां योनिमापद्यन्ते' इति श्रुतेरित्यर्थः। कर्मद्वारा लिङ्गशरीरारब्धत्वं भूतारब्धत्वं च भृत्यादिशरीरेऽप्यस्तीत्यरुचेराह—**तत्संश्लेषादिति**। लिङ्गशरीरसंयुक्ततयैव स्थितभूतारब्धत्वात् स्थूलशरीरस्य यल्लिङ्गशरीरसंयुक्तभूतात् यस्य स्थूलशरीरस्योत्पत्तिस्तदात्मन एव तेन तादात्म्यमिति भावः॥

**बाध्यत्वलक्षणतत्त्वावेदनप्रामाण्यहानिरुच्यते तदङ्गीकृतमेव । अथागमेन परमार्थसत्यत्वांशे बाध्यमाने** व्यवहारसमर्थवस्त्वङ्गताप्रामाण्यहानि-

144 - 3
144 - 5
**रुच्यते, न—तत्र बाधाभावादित्याह**—तथा निरपेक्षाणामिति। विधिमुखो-पदर्शितमिति। **व्यवहाराङ्गतायां प्रत्यक्षेण अध्यासमूलतायां प्रत्यक्षानुमानार्थापत्तिभिः प्रदर्शितमुभयमित्यर्थः। अर्थक्रियासमर्थत्वाच्च शब्दादिप्रत्यक्षाणामविद्यानिवृत्तिब्रह्मावगतिलक्षणार्थक्रियाहेतुत्वं मिथ्यात्वेऽपि शब्दादीनां न विरुध्यते ॥**

**नन्वर्थक्रियासंवादात् प्रामाण्यप्रसङ्गः। न—ज्ञानादेवार्थतथात्वव-**

---

ता. (वस्तुप्रत्ययवत्) **व्यवहाराङ्गतायामिति ।** व्यवहाराङ्गतायां प्रत्यक्षेणाध्यासमूलतायां च प्रदर्शितायां प्रामाण्यमविद्याविषयत्वं चोभयं प्रदर्शितमित्यर्थः । विधिमुखेनेति टीकापदं व्याचष्टे—**प्रत्यक्षेणेति** । तच्चैतदुपलक्षणमित्याह — **प्रत्यक्षानुमानार्थापत्तिभिरिति** । ननु मिथ्यात्वे प्रपञ्चस्य तदन्तर्गतागमाचार्यानुमानानामपि मिथ्यात्वात् विद्योत्पत्त्यनर्थनिवृत्त्यादिप्रयोजनं न सिध्येदिति ; अत्राह—**अर्थक्रियेति** ॥

शब्दादिप्रत्यक्षाणामर्थक्रियासमर्थत्वात् शब्दादीनाम्—आगमाचार्यादीनां अविद्यानिवृत्त्यादिप्रयोजनहेतुत्वं मिथ्यात्वेऽपि न विरुद्ध्यते इत्यन्वयः। अर्थक्रियासमर्थवस्तुविषयत्वात् प्रत्यक्षादीनां प्रामाण्यमिति हेतुतः प्रामाण्यसमर्थनात् परतः प्रामाण्यं प्राप्तमित्याशङ्कते—**नन्विति** । तेनैव ज्ञानेन तत्सिद्धेः न ज्ञानान्तरापेक्षेति परिहरति—**न— ज्ञानादेवेति** ॥

---

भा. अबाधितार्थत्वं हि प्रमाणानां प्रामाण्यम्, न त्वनध्यस्तात्माश्रयत्वम् । अन्यथा शुक्तिरजतादिज्ञानस्यापि परमते प्रामाण्यप्रसङ्गः । तच्च यद्यप्यसन्मते वेदान्तानामेव । तदर्थब्रह्मण एव बाधायोग्यत्वात् । [न तु प्रत्यक्षादेः ।] तद्विषयस्य श्रुत्यनुमानाभ्यां बाधितत्वात् । तथापि प्रत्यक्षादिविषयस्य तत्तद्व्यवहारसामर्थ्यमस्तीति प्रत्यक्षादेरपि व्यावहारिकं प्रामाण्यं विद्यत एव । ततश्च प्रमाणानां प्रामाण्यं अविद्यावदाश्रयत्वं चाविरुद्धमित्याह—**बाधाभावादिति** ॥

**दर्थावगमादेवार्थक्रियासामर्थ्यनिश्चयात् । अन्यथा तवापि तथात्वज्ञानात् प्रामाण्यप्रसङ्गः । ननु ब्रह्मज्ञानस्याप्यध्यासोपादानत्वात् मिथ्यात्वमापन्नम् । यदि तावत् स्वरूपमिथ्यात्वमुच्यते, अङ्गीकृतमेव तत् । अथ विषयमिथ्यात्वं, न–ब्रह्मणि बाधाभावात् । प्रपञ्चस्यापि बाधादेव मिथ्यात्वं नाध्यासोपादानज्ञानगम्यत्वात् । ननु दुष्टकारणजन्यस्य विषयतोऽपि मिथ्यात्वं दृष्टमिति; नेत्याह-दोषस्त्वागन्तुक इति । प्रमा[करणेषु]ण-** 144 - 6
**कारणेषु सत्सु पश्चाद्भवन् दोषो दोष इत्युच्यते, स आगन्तुक इत्युक्तः । प्रमाणकारणत्वेनैव यो दोषो व्यवतिष्ठते स न दोषः,**

---

विपक्षे दोषमाह—**अन्यथेति** । यथार्थवस्तुविषयत्वात् प्रामाण्यमिति हेतुतः प्रामाण्यसमर्थनात् तवापि परतः प्रसङ्गः स्यादित्यर्थः । स्वरूपमिथ्यात्वं साध्यम् ? विषयमिथ्यात्वं वा साध्यम् ? इति विकल्प्य क्रमेण दूषयति—**यदि तावदिति** । तथाप्यध्यासोपादानज्ञानगम्यत्वात् प्रपञ्चवत् ब्रह्मणोऽपि मिथ्यात्वं प्रसज्यते इत्याशङ्क्याह—**प्रपञ्चस्यापीति** । अप्रयोजको हेतुरित्यर्थः । आगन्तुकदोषजन्यज्ञानगम्यस्यैव मिथ्यात्वं न नैसर्गिकदोषजन्यज्ञानगम्यस्येति परिहरति—**प्रमाकरणेष्विति** । प्रपञ्चज्ञाने दोषता नास्तीति चेत्, कुत्र तर्हि ता.

---

**[दुष्टकारण]जन्यस्येति** । (पर इत्युक्तम् ।) [परमतेनेदमुक्तम् ।] भा.
विशिष्टत्वाकारेण साक्षिणोऽपि तदङ्गीकृतमेवेति च द्रष्टव्यम् । ब्रह्मज्ञानस्यादुष्टवेदजन्यस्य दुष्टकारणजन्यत्वमेव नास्तीत्याह—**दोषस्त्विति** ॥

**प्रमाणकारणेषु सत्स्विति** । अबाधितरूपनिर्धारकं यत्सम्बन्धात् भ्रान्तिं प्रयोजयति स दोषः यथा काचा(दावि)[दिरि]ति दोषस्वरूपम्, स्वाश्रयविषयविशेषावभासविरोधित्वप्रयोजकरूपवदिति यावत् । तत इन्द्रियसंयोगादौ नातिप्रसङ्गः । दुष्टं चक्षुरपि सामान्यज्ञानद्वारा अर्थोत्पादनेन तद्विशिष्टसाक्ष्यात्मभ्रान्तिप्रयोजकमिति काचादिदोषोऽप्येवम्भूत एवेति भावः ॥

**प्रमाणकारणत्वेनेति** । अबाधितार्थज्ञानकरणत्वेनेत्यर्थः । अतो न ब्रह्मसाक्षात्कारे अविद्या मिथ्याज्ञानत्वप्रयोजको दोषः, प्रपञ्चज्ञाने तु तादृशो दोष इत्यर्थः । ननु निरुपाधिकाध्यासे अधिष्ठानविशेषावभासप्रतिबन्धक एव

कारणत्वात् । अविद्याध्यासस्तु चैतन्यस्याद्वितीयावभासं प्रत्येव दोषः
न तु द्वैतावभासं प्रति, तस्य कारणत्वात् , यथा काचादिः चक्षुरादि-
दोषः तथाविधपापादृष्टोदयमनुमापयन् तत्र प्रमाणत्वान्न दोषः
तद्वदित्यर्थः । चैतन्यदोषत्वादेव तत्प्रकाश्याव्यवहार्यब्रह्मविपरीतं
व्यवहारयोग्यं वस्तु प्रदर्शयति । दोषत्वं चाविद्यायाः चैतन्यस्य तथा-
ऽवभासविरोधितया अन्यथाप्रतिभासनिमित्तत्वात् । कथमागन्तुके दोष-
144 - 7 बुद्धिः न नैसर्गिके ? इत्येतावन्मात्रे दृष्टान्तमाह— न च सर्वसाधारणे
इति । ननु भाष्यकारेण दोषमात्रमेव विषयतोऽपि ज्ञानमिथ्यात्वे
145 - 2 हेतुरुक्त इति ; नेत्याह—अनैसर्गिकं च दोषमिति ॥

---

ता. दोषता इति ? तत्राह—**अविद्याध्यासः इति** । एकस्यैव क्वचित् दोषत्वं क्वचित्
गुणत्वं च कथम् ? इति ; तत्राह—**यथेति** । चैतन्यं प्रत्यपि दोषता कथं
अविद्यायाः ? इत्यत आह—**चैतन्यदोषत्वादिति** । व्यवहारयोग्यवस्तु प्रदर्शयति
चेत् गुण एवाविद्या न दोषः इत्यत आह—**दोषत्वं चेति** । ननु शाबरभाष्य-
विरुद्धमिदमिति शङ्कते—**ननु भाष्येति** ॥

---

भा. दोषः, प्रपञ्चाध्यासश्च निरुपाधिकः, अविद्या च तदधिष्ठानविशेषावभासं [न]
प्रतिबध्नाति, सत्यामपि तस्यां वेदान्तात्तद्विशेषप्रतिपत्तेरिति; तत्राह—
**अविद्याध्यास इति** । अधिष्ठानरूपात्मप्रमाणं चैतन्यावभासः तं प्रत्येव दोषः—
स्वरूपचैतन्यप्रयुक्ताधिष्ठानप्रकाशस्यैव प्रतिबन्धकः । **न तु द्वैतावभासं प्रति** ।
वेदान्तजब्रह्मप्रकाशस्येत्यर्थः । यो यत्र प्रमाणाश्रयदोषः स तत्प्रयुक्तमेव प्रति-
बध्नातीति चैतन्यदोषः अविद्यापि तथेत्यर्थः ॥

ननु एकस्यैवाज्ञानस्य कथं ब्रह्मसाक्षात्कारादोषत्वं प्रपञ्चभाने दोषत्वं
इति वैरूप्यमित्याशङ्क्य, तत्र दृष्टान्तमाह—**यथा काचादिरिति** । न चैवमपि
विपरीतमेव न कुतः ? तत्राह—**चैतन्यदोषत्वादिति** । ननु प्रपञ्चजनकस्य कथं
प्रपञ्चावभासदोषत्वम् ? न ह्यर्थजनकमपि दोषः अतिप्रसङ्गादिति चेत्, तर्हि
ज्ञानजनकमपि न स्यात् । अन्यत्रादर्शनात् । तस्मात् स्वाश्रयप्रमाणगम्यविपरी-
ताकारबुद्धिजनकत्वादर्थजनकस्यापि काचादिवद्दोषत्वमविरुद्धमित्याह—दोषत्वं

**ननु अविवेकिव्यवहारोऽध्यासमूलो भविष्यति, न विवेकिव्यवहार इति; नेत्याह**—इतश्चैतदेवं पश्वादिभिश्चेति। **पश्वादिदृष्टान्तेऽध्या-** 145 - 5
**समूलतां व्यवहारस्य दर्शयति**—तथा च पश्वादय इति। **अध्यासानुमाने** 145 - 5
**हेतुभूतव्यवहारस्य विवेकिष्वपि पक्षधर्मतामाह**—तदेकरूपयोगक्षेमा **इति।** 145 - 8
**तत्र हेतुदर्शनात् हेतुमन्तमध्यासमनुमिमीते**—अतस्तदेकरूपकार्यदर्श- 145 - 10
नादिति। **पश्वादिदृष्टान्तेऽप्यध्याससद्भावे प्रमाणं चोदयति**—ननु 146 - 1
पश्वादीनामिति। **पदार्थद्वयदर्शने सति प्रत्यक्षानुमानागमैः भेदाप्रतिपत्तौ अध्यासः परिशिष्यते इत्याह**—प्रौढमतिभ्य इति। **स्वाभाविकप्रत्यक्षेण** 146 - 3
**विवेकदर्शने दोषमाह**—एवमेवेति। **नन्वनुमानागमविचारहीनानाम-** 146 - 4
**प्यदृष्टार्थं व्यवहारदर्शनात् प्रत्यक्षेणैव विवेको गृह्यते इति चोदयति**—ननु गोपालाङ्गनादय इति। **न प्रत्यक्षेण विवेकग्रहः, किन्त्वाप्तवचनादि-** 146 - 6
**त्याह**—न—तदभिज्ञव्यवहारेति। **प्रत्यक्षश्चेद्विवेको विशेषतः प्रत्यगात्मानं** 146 - 7
**प्रतिपद्येरन्नित्याह**—तथा च ते पृष्टा इति। **अतो निगमनवाक्यमुपपन्न-** 146 - 8
**मित्याह**—तस्माद्युक्तमुक्तमिति। **तस्य व्यवहारस्य काल एव कालो यस्या-** 146 - 10
**ध्यासस्य सोऽध्यासस्तत्कालः, स च पश्वादिभिर्विवेकिनामपि समान इति॥**

---

कि विचारणापेक्षप्रत्यक्षादिभिः भेदो गृह्यते? किं वा स्वाभाविक- ता.
प्रत्यक्षेण? इति विकल्प्य, नाद्यः इत्याह—**पदार्थद्वयेति**। अत्र पदार्थद्वयं शरीरमात्मा च। न द्वितीयः इत्याह—**स्वाभाविकेति। विशेषतः इति।** देहाद्विलक्षणत्वेनेत्यर्थः। **तस्य व्यवहारस्येति**। ननु अध्यासस्य काल एव कालो यस्येति विग्रहः प्रदर्शनीयः, तत्र अयुक्तं व्यवहारस्य काल एव कालो यस्याध्यासस्येति वर्णनम्, व्याप्यव्यापकवैपरीत्यप्रसङ्गादन्वयासम्भवाच्च, व्यवहारः समान इति निश्चीयत इति ह्यन्वयो न त्वध्यासस्समान इति

---

चेति। पश्वादीनां[देहाद्य]भिमानस्यास्माकमप्रत्यक्षत्वात्तदन्यस्य च तत्राभावात् भा.
इत्यभिप्रेत्याह—**पश्वादीति**। आत्मानात्मपदार्थद्वयप्रतीतौ सत्यां तयोर्विवेकाज्ञानेऽध्याससामग्र्यास्सत्त्वादध्यासः सिध्यति इत्याह—**पदार्थद्वयेति॥**

146 - 12 एवं तावत् प्रत्यक्षादीनि इयुक्तानुवादः । 'न तेनानध्यस्तात्मभावेने'ति भाष्यं पूर्वं न व्याख्यातं, तदनुवादग्रन्थे व्याचष्टे । तत्रेयमाशङ्का—भवत्वध्यासस्य व्यवहारनिमित्तता, तथापि रजता [ध्यासा]दिवन्निमित्तकारणमेवाध्यासो व्यवहारस्य, आत्मैव केवलस्तु
147 - 2 उपादानमिति ; तत्राह—न तेनानध्यस्तात्मभावेनासङ्गस्येति। अयमर्थः—रजताद्यध्यासानां व्यवहाराश्रयकोटिनिक्षिप्तत्वाभावात् तदन्तरेण चात्मनि प्रमातृत्वादिव्यवहारदर्शनात् निमित्तकारणतैव युक्ता, इह तु पुनराश्रयकोटिनिक्षिप्तत्वात् केवलात्मनि सुषुप्ते व्यवहारादर्शनात् उपादानकारणस्याभ्यर्हितत्वात् अन्वयव्यतिरेकवतोऽध्यासस्योपादा-
147 - 5 नकारणत्वमेव व्यवहारं प्रति कल्पयितुं युक्तमिति । शास्त्रं पुनः
147 - 7 इत्युत्तरभाष्यस्याशङ्का । तस्यापीति तात्पर्याभिधानम्। शास्त्रीये त्विति अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानमभ्यनुजानाति । अभ्यनुज्ञामाक्षिपति—

---

ता. इति चेत्, सत्यम्—अध्यासस्य व्यवहारं प्रति व्यापकत्ववत् तद्व्याप्यत्वमपि सम्भवतीति दर्शयितुमेवं विवरणकारैर्व्याख्यातम् । न च अन्वयासम्भवः, प्रत्यक्षादिव्यवहारः तत्कालश्चाध्यासः समानः इति चकाराध्याहारेणान्वयस्यापि दर्शयितुं शक्यत्वादिति द्रष्टव्यम् । अन्वयव्यतिरेकवतोऽध्यासस्य । अहं-

---

भा. **रजताध्यासादिवन्निमित्तेति** । यथा (प्रमातृत्वा) [रजता]दिव्यवहारे शुक्तिरजतादि नोपादानं तद्वदहङ्कारोऽप्यध्यस्तत्वान्नोपादानम्, पूर्वोक्तानुमानं तु तन्निमित्तविषयतयाप्युपपद्यत इत्यर्थः । रजतादेः प्रमां प्रत्यनाश्रयतया तदनुपादानत्वेऽपि 'अहं जानामि, इच्छामि, करोमि' इति प्रत्यक्षेण, 'कामा येऽस्य हृदि श्रिताः' 'कामस्सङ्कल्पः' इत्यादिश्रुत्या च प्रमाद्याश्रयतया अनुभूयमानोऽहङ्कारः किमित्युपादानं न स्यात्? इत्याह—**इह तु पुनराश्रयेति**। सर्वप्रमाद्यनुविधायित्वादप्यहङ्कारो रजतादिविलक्षणः किमिति नोपादानम्? इत्याह—(**किञ्चेति**) [**केवलेति**] उत्पत्तिस्थितिप्रयोजकत्वादुपादानमभ्यर्हितम्। मीमांसकरीत्या चोदनामात्रप्रामाण्याभ्युपगमे व्यतिरिक्तात्मा न सिध्यतीत्याह—**अभ्यनुज्ञामिति** ॥

नतु फलनैयमिकेति। **फलचोदना तावत् पश्वादीनामस्मिन्नेव जन्मनि** 148 - 1
**लब्धुं शक्यत्वात् तज्जन्यसुखस्य च स्वर्गस्य पश्वादिचोदनाफलत्वा-**
**भावात् ज्योतिष्टोमादिफलत्वोपपत्तेः निरतिशयप्रीतेरप्यत्रैव सम्भवात् न**
**देहान्तरसम्बन्धिनमात्मानमापादयति। नैयमिकनैमित्तिकचोदना तु**
**सुतराम्। फलशून्यत्वात्। फलवत्त्वे [च] वा दृष्टेनैवोपभोक्तुं शक्यत्वात्।**
**प्रायश्चित्तस्य तु दोषनिबर्हणफलत्वात्, दोषफलस्यास्मिञ्जन्मनि**

---

कारादिलक्षणस्येति यावत्। **फलचोदना तावद्देहान्तरसम्बन्धिनमात्मानं** ता.
**नापादयतीत्यन्वयः**। तत्र देहव्यतिरिक्तात्मानं विना पश्वादिफलमनुपपन्नम्? किं वा स्वर्गादिफलम्? इति विकल्प्य, नाद्यः इत्याह—**पश्वादीनामिति**। न वैदिकफलत्वे कारीर्यादिभ्योऽनियतफलत्वेन पश्वादीनां विशेषो न स्यादिति शङ्कनीयम्। अस्मिन्नेव यौवनवार्धकादिकालानियमेनाप्यनियतफलत्वोपपत्तेः, कारीर्यादेस्तु अभ्यग्रशुष्यत्सस्यस्यैव विधानात् नियतसमनन्तरफलत्वमिति वैषम्योपपत्तेरित्यर्थः। द्वितीयं पक्षं दूषयति—**तज्जन्येति**। स्वर्गो नाम लोकविशेषो न भवति, किं तु इहैवानुभूयमानं सुखमेव। अतश्च स्वर्गोद्देशेन विहितज्योतिष्टोमादीनामप्यत्रैव फलभोगोपपत्तिः। 'चित्रया यजेत पशुकामः' इति श्रवणात् चित्रादीनां पशुलाभ एव फलम्, न तु सुखमित्यर्थः। ननु निरतिशयप्रीतिः स्वर्गः न सुखमात्रं इत्यत आह—**निरतिशयेति**। नित्यविधीनामपि न देहव्यतिरिक्तात्मापेक्षत्वमित्याह—**नैयमिकेति**। गुरुमतमाश्रित्येदमुक्तम्। इदानीं भाट्टमतमाश्रित्याह—**फलवत्त्वे चेति**। उपात्तदुरितक्षयलक्षणफलस्य प्रत्यवायपरिहारस्य वा फलस्यात्रैवोपभोक्तुं शक्यत्वादित्यर्थः। प्रायश्चित्तचोदनापि देहव्यतिरिक्तमात्मानं नापादयतीत्याह—**प्रायश्चित्तस्येति**। अकृतप्रायश्चित्तपापफलस्य नरकस्योपभोगायापि नापेक्षेत्याह—**दोषफलस्येति**।

---

स्वर्गादिफलचोदना व्यतिरिक्तात्मानमाक्षिपतीति चेत्, किं देशविशेष(कं) भा.
[गतं अलौकिकं]सुखं स्वर्गः? सुखमात्रं वा?। नाद्यः, मन्त्रार्थवादप्रामाण्या[न]भ्युपगमे तदसिद्धेः। द्वितीय आह—**तज्जन्येति**। **पश्वादिचोदनाफलत्वाभावादिति**। पशुमात्रस्यैव फलत्वेन श्रुतेः अश्रुतक्षीरपानादिजन्यसुखफल-

**भोक्तुं शक्यत्वात्, जन्मान्तरस्य चैतादृशत्वात्, फलादर्शने च कारीर्यादिवदङ्गवैकल्यप्रतिबद्धतया सहकार्यभावकल्पनोपपत्तेः। मन्त्रौषधादिसिद्धेनानेनापि शरीरेण स्वर्गादिभोगसम्भवात् न देहव्यतिरेक-**

---

ता. दुःखमेव निरयशब्दाभिधेयं न स्थानविशेषः इत्यर्थः। श्वसूकरखरोष्ट्रादिजन्मप्राप्तिः दुरितफलं श्रूयते तत् कथमेतद्देहव्यतिरिक्तस्य देहान्तरसम्बन्धिनोऽनपेक्षा ? इति; तत्राह—**जन्मान्तरस्य चेति**। श्वादियोनिसमानदुःखप्राप्तिपरत्वादस्य वाक्यस्य जन्मान्तरसम्बन्धे न प्रमाणमस्तीत्यर्थः। अनियतफलानां चित्रादियागानामिह पश्वादिफलादर्शने तत्फलोपभोगाय देहान्तरसम्बन्ध्यात्मापेक्षेति; तत्राह—**फलादर्शने चेति**। इदानीं सुखव्यतिरिक्तं स्वर्ग्यं चिरकालभोग्यं फलमङ्गीकृत्य परिहरति—**मन्त्रौषधेति** ॥

---

भा. त्वायोगादित्यर्थः। अलौकिकं स्वर्गमङ्गीकृत्याह—**म(न्त्रार्थवादेति।)[न्त्रौषधादीति]** ॥

अत्र ह्यनया विधया स्वर्गस्य मन्त्रार्थवादप्र(युक्तस्या)[मितत्वा][न]भ्युपगमे प्राभाकराभिमतविध्य(र्थे....त्य)[र्थेऽपि प्रमित्य]सम्भवेन तस्य श(ब्द)[ब्दाद्]प्रतीतौ न विध्यर्थबलात् व्यतिरिक्तात्मसिद्धिः। नापि सुखमात्रादित्युक्तम् ॥

एतेन—चरमेष्टिसहकृतदर्शपूर्णमासादिचोदनार्थ(वाद) एव शरीरातिरिक्तात्मानमाक्षिपति, तत्साध्यात्मापूर्वस्य फलस्य वा शरीरे असम्भवात्, एवं स्व(पर)[मरणाङ्गकसर्व]स्वारचोदनार्थोऽपि व्यतिरिक्तात्मानमाक्षिपतीति प्रत्युक्तम्। मन्त्रादिप्रसिद्धस्वर्गाभावे व्युत्पत्त्यभावेन चोदनार्थानवगमे ततस्तदाक्षेपायोगात्। न च कार्यसामर्थ्यादेव अलौकिकस्वर्गसिद्धिरिति वाच्यम्; प्रतिपन्नं हि कार्यं तदाक्षिपेत्। शब्दात् तत्प्रतीतिश्च तत्र सङ्गतिग्रहानन्तरमेव, तत्र तद्ग्रहश्च तदुपस्थितौ, सा चालौकिकस्वर्गादिपदसमभिव्याहारादिति (च....।)[चक्रकापत्तेः।] अतः (परस्य [सर्वस्वार] चोदनाबलादेव कश्चिद्धीरः स्वमरणाङ्गकेऽपि (स्व)सर्वस्वारे प्रवर्तत इति वाच्यम्। ततो [चोद]ना (दि)वाक्यवत् तत्र मरणाङ्गवाक्यमर्थवादो वेति न

**ज्ञानोपयोग इति। तत्र देवताधिकरणन्यायेन मन्त्रादिप्रामाण्याद्विशिष्ट-**
**देशकालशरीरादिभोग्यं स्वर्गादिफलमङ्गीकृत्येदमुक्तमिति परिहरति—**
सत्यमेवं तथापीति ॥ 148 - 4

**ननु मन्त्रादि(समन्वय)प्रामाण्यमनपेक्ष्यैव चोदनाभिरेव व्यतिरि-**
**क्तात्मा अपेक्ष्यते, कर्ममात्रनिर्णयप्रवृत्तेन भाष्यकारेणात्मनो निरूपित-**
**त्वादिति ; तत्राह**—तथा च विधिवृत्तेति । **विधिभिरेवापेक्षितश्चेत् सूत्रेणापि** 148 - 5
**भवितव्यमित्यर्थः। ननु अनपेक्षितस्यासूत्रितस्य च भाष्यकारेण प्रति-**
**पादनमयुक्तमित्याक्षिपति**—तत् कस्य हेतोरिति । **'तत् प्रमाणं बादरायण-** 148 - 7
**स्यानपेक्षत्वात्' इति सूत्रावयवेन मन्त्रादिप्रामाण्यद्वारेण परम्परया**
**सूत्रित एवात्मेति परिहरति**— धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञायेति। 148 - 7
**एवं सूत्रार्थं परम्परया भूतेऽप्यर्थे प्रामाण्यमाश्रित्य भाष्यकारेणात्मविचारः**
**कृतः न चोदनासामर्थ्यमाश्रित्येति कथमवगम्यते? इति ; तत्राह**—
तथा चोदना हि भूतमिति। **तर्हि चोदनापेक्षितत्वात् समन्वयोऽप्यत्रैव** 149 - 3
**वर्णनीय इति ; नेत्याह**—स च स्वरूपावगम इति । **ननु धर्मे प्रयतमाने-** 149 - 6

---

**कर्ममात्रेति** । यदि कर्ममात्रं व्यतिरिक्तात्मानं नापेक्षेत तदा ता.
तन्निर्णयाय प्रवृत्तस्य शबरस्वामिनो देहव्यतिरिक्तात्मप्रसाधनं व्यर्थं स्यादि-त्यर्थः। 'तत् प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सिद्धसाध्यविषयस्य अविशेषेण कृत्स्नस्य वेदस्य अनपेक्षत्वाविशेषात् प्रामाण्यं समर्थितम्, तेन मन्त्रादिप्रामाण्यात् देवतापूर्वस्वर्गादीनामपि सिद्धिः सूत्रकारेणैव सूचितेति दर्शयति—**तत् प्रमाणमिति** । तर्हि आत्मस्वरूपप्रतिपादनपराणि वेदान्तवा-क्यान्यपि चोदनाप्रामाण्यशेषत्वेन जैमिनिनैव विचारणीयानीति चोदयति—**तर्हीति** । मन्त्रार्थवादानां अप्रामाण्याभिप्रायेण नोक्तमिति कथमवसीयते? इति ;

---

व्यतिरिक्तात्मसिद्धिः। सर्वस्वारे शेषसमापनं तु ऋत्विजां 'ब्राह्मणा यज्ञ- भा.
शेषं मे समापयत' इति प्रैषोन्नीतविधिबलात्। अन्त्येष्टेः सर्वकर्माङ्गत्वे चित्रादेरनियतैहिकफलं न स्यात्, कारीरीफलं च न स्यात्। तस्मात् मन्त्रार्थवादप्रामाण्यपर्यालोचनया सिद्धमेवालौकिकं स्वर्गं स्वर्गकामादिवाक्ये अधिकारिविशेषणमङ्गीकृत्य चोदनासामर्थ्यात् व्यतिरिक्तात्माभ्यनुज्ञानमनु-ज्ञातं भाष्यकृद्भिरित्याह—**तत्र देवतेति** ॥

149 - 8 **नाप्यपेक्षितत्वात् कर्तव्य एवात्मविचार इति ; नेत्याह**—उपयोगाभावा-
दिति। **न हि धर्ममात्रं व्यतिरिक्तात्मानमपेक्षते, किन्तु फलमपेक्षते,**
**फले च न प्रयतते जैमिनिरित्यर्थः। ननु फलमप्यपेक्षते चेत् तत्रापि**
149 - 8 **प्रयत्नो युक्त इति ; न—अन्यथासिद्धत्वादित्याह**—भगवांस्तु पुनरिति।
150 - 1 **ननु ब्रह्मैव तत्र विचारितम्, न चोदनाफलमिति ; तत्राह**—तत्र च
150 - 2 देहान्तरोपभोग्य इति। तच्च सर्वमिति **स्पष्टार्थः ॥**

**ननु समन्वयसामर्थ्यादेव व्यतिरिक्तात्मसिद्धेरात्मविचारः पिष्ट-**
150 - 3 **पेषणमिति ; नेत्याह**—तत्सिद्धिश्चेति। **ननु प्रमाणान्तरयोग्यस्य तदभाव-**
150 - 5 **विरोधयोः शब्दस्याप्रामाण्यात् न आत्मसिद्धिरिति ; तत्राह**—अतः
तत्सिद्धौ पराक्रान्तवांस्तेनेति। **विरोधपरिहारफलेन विचारेणेत्यर्थः।**
150 - 6 सत्यं विनापि तेन सिध्येत् इत्यादिना **उक्तमर्थं संक्षेपतो दर्शयति।** अस्ति तु
150 - 7 तदिति। **भूतेऽर्थे प्रामाण्यम्, स्वर्गादावित्यर्थः।** न तेन विनेति। **व्यति-**
**रिक्तात्मना विनेत्यर्थः। ननु सूत्रकारभाष्यकाराभ्यां देवताधिकरणे**
**मुखत एव देवतादिषु मन्त्रादिप्रामाण्यं नास्तीत्युक्तम्, तत् कथं सूत्रावय-**
**वसामर्थ्यात् प्रामाण्यमनुमतमिति मन्यते ?। नैष दोषः—तत्र देवताया**
**विग्रहवत्त्वे सन्निपत्योपकारकत्वप्रसङ्गात् योग्यानुपलब्धिविरोधात्**
**कर्मणि विरोधप्रसङ्गाभिप्रायेणोक्तत्वात्। नाप्रामाण्याभिप्रायेण। अर्थवा-**
**दलिङ्गानामपि तत्र तत्र द्वादशलक्षण्यां प्रमाणत्वेनोदाहृियमाणत्वादिति।**

---

ता. तत्राह—**अर्थवादेति।** कार्यकारणयोः भिन्नाभिन्नत्वात् भेदज्ञाने सत्यप्यध्या-

---

भा.: **सन्निपत्योपकारकत्वेति।** समीप आगत्य अध्वर्य्वादिवत् हविस्स्वी-
कारप्रसङ्ग इत्यर्थः। **अर्थवादलिङ्गानामिति।** स्वगार्थवादस्याप्रामाण्ये त्वदभि-
मतविधिर्न सिध्येत्। न च विध्यनुकूलत्वात् तन्मात्रं प्रमाणमिति वाच्यम् ; देव-
ताया अपि 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्'

'तथापि न वेदान्तवेद्यम्' **इत्यादिभाष्यव्याख्यानं स्पष्टार्थम्** । 150 - 10
तत्र अशनायाद्यतीतं **इत्यादिना कर्त्रन्वयाधिकारान्वयभोक्त्रन्वयाः क्रमेण** 150 - 12
**निरस्यन्ते । प्राकू चेत्यादिभाष्यव्याख्यानं**—तत्त्वमसीतिवाक्यार्थावगमात् 151 - 6
**इत्यादि** ॥

---

भा. इति ध्यान(विशेषणतया) [विधिशेषतया] तदनुकूलत्वात् । न च ध्याने देवताज्ञानमात्रमपेक्षितं तच्च भ्रमादिरूपमिति वाच्यम्, अर्थ [बाधा] (वादा) भावे मन्त्रादुत्पन्नज्ञानस्य प्रमात्वात् । अन्यथा अतिप्रसङ्गात् । न चैवं तासामग्न्यगारेऽप्यागमनप्रसङ्गः । अर्थवादावगताणिमाद्यैश्वर्यविशिष्टानां तत्रागमनेऽपि बाधकाभावात् ॥

किञ्चैवं स्थायिकार्योपस्थितये स्वर्गज्ञानमपेक्षितम्, न स्वर्गः, तस्य पूर्वमसत्त्वात् । ज्ञानं च देवताज्ञानमिव तवा(र्थवादा)[र्था]भावेऽपि युक्तमिति को नाम स्वर्गः ? । न च ज्ञानस्य भ्रमत्वे स्थायिकार्यव्युत्पत्तिबाधः स्यादिति (न) तत्सिद्धिरिति वाच्यम् ; यावद्बाधं प्रवृत्त्युपपत्तेः । अग्निमा *नाम, तत् का नो हानिः? । न हि *तदेवतेति वाक्यार्थः । तस्मात् स्थायिकार्यापेक्षया स्वर्गार्थवादस्य स्वार्थे प्रामाण्यं चेत्, सिद्धे स्थायिकार्ये तस्यालौकिकस्वर्गे तच्छेषतया तत्प्रामाण्यम्, तत्प्रामाण्यबलात् सिद्धे अलौकिकस्वर्गे स्थायिकार्योपस्थितिः, ततो व्युत्पत्त्या शब्दात् तदवगमः, ततश्च तदाकाङ्क्षया[अर्थ]वादस्य स्वार्थे प्रामाण्यमिति चक्रकापत्तिः । तथा च कार्यापेक्षां विनैव अलौकिकविध्यर्थवादादीनां स्वार्थे स्वर्गार्थवादस्य प्रामाण्यमभ्युपेयम् । न चैवमतिप्रसङ्गः ; प्रत्यक्षादे(रेव)[रिव] शब्दसामर्थ्यात् प्रतीयमानस्याबाधितस्य (तद्वि)[स्वी]कारे तदभावात् ॥

किञ्च, न हि कार्यसिद्ध्यनुकूल एव (घटे) [वस्तुनि] अर्थवादस्य प्रामाण्यम्, नान्यत्र इति म(म)[नु]वचनमस्ति न्यायो वा । शतयातनाद्यर्थवादस्य स्वार्थे अप्रामाण्यप्रसङ्गात् । काम्यवाक्ये [एव] कार्यव्युत्पत्तिसिद्धेः तस्य कार्यानुकूलत्वाभावात् मानान्तराविरुद्धः शब्दात् प्रतीयमानः शब्दार्थ इति न्यायसिद्धमेवेति देवताविग्रहवत्त्वं तेषामपि सम्मतमित्यर्थः ॥

---

* अत्र उभयत्र ग्रन्थः त्रुटितः ।

कथं पुनर्व्यतिरेकज्ञानेनाध्यासस्य सहवृत्तिः ? । परोक्षापरोक्ष-
विभागात् चन्द्रद्वित्वज्ञानवदविरोध इति केचित् । सूक्ष्मशरीरस्य आत्मा-
विद्याकार्यत्वात् कार्यकारणयोः भेदाभेदभावात् स्थूलशरीरस्य अग्न्ययः-
पिण्डवत् सूक्ष्मशरीरेण संश्लेषात् भेदज्ञानेऽप्यध्यासः इत्यपरे । सर्वथापि
151 - 8 यावदपरोक्षज्ञानमध्यासो न निवर्तते इति भावः । तस्मात् इत्यध्यास-
प्रमाणोपसंहारः । न च केवलं प्रत्यक्षानुमानार्थापत्तिभिरेव अध्याससिद्धिः,
किं तु आगमोऽपि विधेः बोद्धारमधिकारिणं ब्राह्मणादिशब्दैरनुवदन्
151 - 10 चेतनाचेतनयोरैक्यावभासं दर्शयतीत्याह— तदेव दर्शयति—तथा हीति ।
152 - 3 यो ज्योगामयावी— उज्ज्वलामयवानित्यर्थः । वृत्तसङ्कीर्तनपूर्वक'मध्यासो
152 - 5 नामे'ति लक्षणभाष्यमवतारयति — एवमध्याससद्भावं प्रसाध्येत्यादिना ।
152 - 9 किमिति पुनरत्रोक्तलक्षणानुवादः ? इति ; तदाह —कस्य युष्मदर्थस्येति ।
152 - 10 भाष्यं योजयति—अतस्मिन्नयुष्मदर्थ इत्यादिना । 'आत्मानात्मनोरितरेत-
राध्यासं पुरस्कृत्य ' इत्यादिना प्रत्यक्षतो दर्शितस्याध्यासस्य विभज्य
152 - 11 155 - 6 प्रदर्शनायोत्तरं भाष्यमित्याह—तदाह-तद्यथा पुत्रभार्यादिष्वित्यादि । 'तथा
अन्तःकरणधर्मा ' नित्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः । अत्रोत्तरोत्तराध्यास-
विशिष्टे पूर्वपूर्वाध्यासः इति कथयितुमात्मन्यध्यस्यतीत्यात्मशब्दार्थ-
154 10 माह—अस्मदर्थश्च अहम्प्रत्ययिसम्भिन्न इति । ननु शरीरमप्यध्यस्यते न
155 - 2 धर्मा एवेत्यत आह— धर्मिणोऽपीति । ग्रहणमित्यध्याहारः । धर्म-

---

ता. सानुवृत्तिः सम्भवतीत्याह— सूक्ष्मेति । तथापि स्थूलशरीराध्यासस्य कथमनु-
वृत्तिः ? इत्यत आह— स्थूलशरीरस्येति । ब्राह्मणादिशब्दैरनुवदन्निति ।
अचेतनशरीरवाचकैः बोद्धारमनुवदन् चेतनाचेतनयोरभेदाध्यासं दर्शयतीत्यर्थः ।

---

भा. ननु तर्हि विचारानन्तरं प्रवर्तमानं ब्रह्मप्रमाणमविद्यावदाश्रयं न स्यात्
इत्याशङ्क्य भाष्यकारैरुक्तं—प्राक् च तथाभूतेति । तत्र विज्ञानात्—साक्षात्का-
रादित्यर्थः । विचारदशायामप्यविवेकाभावादध्यासो न स्यादिति शङ्कते—कथं
पुनर्व्यतिरेकेति । स्वमतमुक्त्वा एकदेशिमतमाह— सूक्ष्मेति ॥

शब्दस्तर्हि किमिति गृहीतः ? इत्यत आह—धर्मशब्दस्त्विति । शास्त्रीय- 155 - 3
व्यवहारमूलत्वेन प्राधान्याच्च धर्माध्यासस्य प्राधान्येन ग्रहण-
मित्याह—तन्निमित्तश्चेति । 155 - 4

ननु अन्तःकरणधर्माः कामादयो दण्ड्यादिवत् सम्बन्धितया
अवगमात् नाध्यासमर्हन्तीति ; नेत्याह—तथा अन्तःकरणधर्मान् कामा- 155 - 6
दीनिति । तथा हि—सत्यन्तःकरणे भावादसति च सुषुप्ते तेषामभावात्
अन्तःकरणधर्माः कामादयः सम्बन्धितया अध्यस्यन्ते, न तु तादात्म्येन
इति भावः । ननु आत्मसमवायिनामेव कामादीनामन्तःकरणस्य च
अन्वयव्यतिरेकौ करणविषयतया अन्यथासिद्धौ । न—कार्यस्य कारण-
परतन्त्रतानियमात् करणनियमाभावात् करणकल्पनात् उपादानकल्पनस्य
अभ्यर्हितत्वात् चक्षुरादिकरणान्तरभावाच्च ॥

---

ता. 'अहं कामः' इत्यभिमानाभावात् 'अहं कामी'ति सम्बन्धितयैवावभासात् कामादयो नाध्यासमर्हन्तीत्याह—**नन्वन्तःकरणेति** । अन्तःकरणधर्मत्वमुक्तमाक्षिपति—**नन्वात्मेति** । **करणनियमाभावादिति** । करणव्यापारेण करणान्तरापेक्षाभावात् अन्यथा अनवस्थाप्रसङ्गादित्यर्थः । करणनियममङ्गीकृत्याह—**करणकल्पनादिति** । **अभ्यर्हितत्वादिति** । सत्तास्थितिहेतुत्वेनान्तरङ्गत्वादित्यर्थः ॥

---

भा. **सम्बन्धितया अध्यस्यन्त इति** । अन्तःकरणधर्मा एव हि कामादयः न त्वात्मधर्मा इत्युक्तम् । ततश्च ते सम्बन्धितया अध्यस्यन्ते **न तु तादात्म्येन**—स्वरूपेणेत्यर्थः । एतच्च कर्तृत्वादिमदन्तःकरणतादात्म्यादेव आत्मनि कर्तृत्वं प्रतीयते न त्वपरं कर्तृत्वादिकमस्तीति पक्षमादायोक्तम् ॥

अथ वा, यथा स्वप्ने आत्माध्यस्तगजादेर्विच्छिन्नदेशत्वारोपात् तथा अनुभवः । एवमात्मनि स्वरूपतोऽध्यस्तानामपि कामादीनामात्मसम्बन्धित्वस्याप्यारोपात् तथा अनुभवः । अत्र **न तु तादात्म्येन** इत्यस्य न स्वरूपमात्रेणेत्यर्थः । न च **न तु तादात्म्येन** इत्यनेन सुखादीनामात्मनि तादात्म्यमेव निषिध्यत इति वाच्यम् ; सुखादेस्तेन सम्बन्धान्तराभावात् । न च अध्याससम्बन्धोऽस्तीति

**ननु 'अहं कामी'त्यादिप्रत्यक्षप्रत्ययादात्माप्युपादानान्तरमस्तीति चेत्, न—दण्डयादिवत् सम्बन्धिप्रत्ययात्, उपादानत्वे तादात्म्या'दहं काम' इति स्यात्। तस्मात् न्यायसहकृतान्वयव्यतिरेकौ अन्तःकरणस्यैव**
155 - 6 **कामाद्युपादानत्वं कल्पयत इति भावः।** अन्तःकरणमित्यहम्प्रत्ययिनः इत्यादिः स्पष्टार्थः। **'अशेषस्वप्रचारसाक्षिणि' 'प्रत्यगात्मनि' इति**
156 - 2 **पदद्वयं व्याचष्टे**—स्वशब्देनाहङ्कारग्रन्थिरित्यादिना। **साक्षिशब्दार्थमाह—**
156 - 5 असङ्गितया अविकारित्वेनेत्यादिना। **कथं पुनः सर्वान्तरस्य आत्मनः प्रत्यगञ्चनम्? इति; देहादिषु विप्रसृतचैतन्यस्य चित्तसमाधानविषये**
156 - 6 **अन्तरनुप्रवेशभ्रमापेक्षयेत्याह**—स एव देहादिष्विदन्तयेति ॥

---

ता. तद्वदुपादानेऽपि तुल्यमिति शङ्कते—**नन्वहं कामीति।** नन्वन्तःकरणं काम इत्यपि न सामानाधिकरण्यं दृश्यते। सत्यम्, तथाप्यात्मनोऽसङ्गत्वादविकारित्वाच्चिदेकरसत्वात् परिणामासम्भवे सत्यन्तःकरणमेवोपादानं कल्पनीयम्। सामानाधिकरण्याभावस्तु मण्यादौ मृद्बुद्ध्यभाववदुपपद्यते। आत्मनि पुनः सामानाधिकरण्याभावदर्शनमभ्युच्चयमात्रमित्यभिप्रेत्योपसंहरति—**तस्मादिति ॥**

---

भा. वाच्यम्; तस्यापि संयोगतादात्म्ययोरन्यतरत्वात्। सुखादेश्चैतन्यतादात्म्याभावे अपरोक्षत्वानुपपत्तेश्चेति ॥

ननु चक्षुरादिकमात्मेच्छायां न हेतुः, किञ्चैवमुपादानमपि क्लृप्तमिति मनो निमित्तमस्त्विति शङ्कते—**नन्वहं कामीति।** अहं काम इति **स्यादिति।** सिद्धान्ते तु मनसः 'कामः सङ्कल्पः.........इत्येतत् सर्वं मन एव'इति तादात्म्यानुभवोऽस्तीति भावः। किञ्च, कामादेरव्याप्यवृत्तित्वे निष्प्रदेशे आत्मन्यसम्भवः, इतरथा सर्वत्र तदुपलम्भः स्यात्। एवं [आत्मनः] कामादि-(ना) निमित्तसम्बन्धाभावादपि न तद्धर्मः कामादिः इत्यन्वयव्यतिरेकाभ्यामन्तःकरणमेव तदुपादानम्, अहं कामीति प्रतीतिस्तु तत्राप्यविरुद्धेत्युपसंहरति—**तस्मात् न्यायेति।** **अन्तरनुप्रवेशभ्रमापेक्षयेति।** अनृतजडानित्यदेहादि-

ननु न साक्षिवेद्यमन्तःकरणम्, किंतु आत्मेन्द्रियविषयेषु समवहितेषु ज्ञानोत्पादक्रमसामर्थ्यगम्यमिति ; न—अन्यथासिद्धत्वात्। आत्मन एव क्रमज्ञानजननसामर्थ्यकल्पनया अन्यथासिद्धः क्रमज्ञानोत्पादः । द्रव्यान्तरतत्क्रमसामर्थ्यकल्पनागौरवाच्च वरं प्रसिद्धस्यैव आत्मनः क्रमसामर्थ्यकल्पनालाघवम् । ननु नार्थापत्त्या मनः कल्पयामि, येन अन्यथासिद्धिः स्यात्। किं त्वनुमानेन। तथा हि —आत्मनः सर्वविषयसन्निधाने क्रमकार्योत्पादः कर्तुः क्रमकारि-

---

‘स्वप्रचारसाक्षिणि’ इत्यनेन अन्तःकरणस्य साक्षिवेद्यत्वमुक्तम्, तदाक्षिपति—**नन्विति** । अन्यथासिद्धिमेवाह—**आत्मनः** इति। ‘कारणापेक्षः’ ता०

---

प्रातिकूल्येन सत्यज्ञानादिस्वभावः आत्मा अञ्चति प्रकाशत इति प्रत्यगित्यपि द्रष्टव्यम् ॥ भा०

क्लृप्तप्रत्यक्षातिरिक्तं साक्षिप्रत्यक्षं नाम न किञ्चिदस्तीति नान्तःकरणादेः साक्षिवेद्यत्वमित्याक्षिपति—**नन्विति**। ननु स्वभावपक्षमाश्रित्याक्षेपेऽतिप्रसङ्गः इति चेत्, किमेतत् विभुमनोवादिनः चोद्यम्? उत मध्यमपरिमाणमनोवादिनः? तस्य अणुत्ववादिनो वा?। न प्रथमौ, ताभ्यामपि व्यासङ्गसमर्थनाय तत्स्वभावस्य आश्रयणीयत्वात्। न च तत्र अदृष्टादेरेव ज्ञानक्रम इति वाच्यम्; तस्यापि स्वभावतुल्यत्वात्। तृतीयेऽपि धारावाहिकबुद्धिस्थले तस्य स्वभाव आश्रयणीयः। अन्यथा पराभिमतविशेषणज्ञानादिघटितानन्तविशिष्टज्ञानसामग्र्याः प्रथमज्ञानात् पूर्वं सत्त्वेन युगपत् तावज्ज्ञानं को निवारयेत्?। न च प्रथमादिज्ञानं द्वितीयादिज्ञाने कारणमिति न तस्य प्रथमज्ञानसमये उत्पत्तिरिति वाच्यम्; मनस्स्वभावविशेषस्य प्रयोजकत्वं विना ज्ञाने प्रथमचरमभावस्यैवायोगात्। प्रथमादिज्ञानविशेषस्य ज्ञानत्वेनैव तन्मते उत्तरज्ञान[हेतु]त्वेन प्रथमज्ञानसामग्र्याः सकलज्ञानहेतुत्वाच्च। ततश्च परेषामपि द्रव्यान्तरं मनः तत्स्वभावश्चाश्रयणीय इति धर्मिकल्पनागौरवान्न मनः कल्पनीयमित्याह—**द्रव्यान्तरेति** ॥

**आत्मनः सर्वविषयसन्निधाने क्रमकार्योत्पाद** इति। तत्र कार्यपदं

**साधारणकरणापेक्षः, सन्निहितबहुविषयस्य कर्तुः क्रमकार्योत्पादत्वात्, सन्निहितबहुच्छेद्यस्य देवदत्तस्य कुठारसापेक्षक्रमच्छेदनवदिति ।**

---

ता. इत्युक्ते चक्षुरादिभिः सिद्धसाधनता स्यात्, ततो विशिनष्टि—**साधारणेति** । तथापीश्वरप्रयत्नेन सिद्धसाधनता स्यादित्यत आह—**कर्तुरिति** । 'कार्योत्पादत्वात्' इत्येतावत्युक्ते युगपत्कार्योत्पादे क्रमकारिकारणानपेक्षे व्यभिचारः स्यात्, तेनोक्तम्—**क्रमेति** । तथापि सामग्रीक्रमापेक्षया यत्र क्रमकार्योत्पादः तत्रापि क्रमकारिकारणराहित्यमस्ति, तेन तत्रानैकान्तता स्यात्, तद्व्यावृत्त्यर्थ-

---

भा. ज्ञानपरम् । अन्यथा क्रमेण जायमानेश्वरकर्तृककार्ये साधारणकारणजन्यत्वाभावेन बाधः स्यात् । न च तत्र कालादेरेव पराभिमतव्यापारवत्कारणत्वसम्भवात् करणत्वमिति वाच्यम्; तथा सति मनसोऽसिद्धिप्रसङ्गात् । (एवं च) एकस्मिन् ज्ञाने युगपज्जायमानानेकज्ञाने वा तन्निरूपितक्रमाभावाद्धेतोरसिद्धिपरिहाराय पक्षं सङ्कोचयति—**क्रमेति** । (एतेन) चक्षुषा विच्छिद्य जायमानज्ञानव्यावृत्तये **आत्मनस्सर्वविषयेति** । तथा च रूपरसादिविषयेष्वालोकचक्षुस्सन्निकर्षादि- विशिष्टेषु क्रमकार्योत्पाद इति समभिव्याहारसामर्थ्यात् तत्क्रमिकज्ञानं पक्षतया सिध्यतीति न चक्षुरादिना सिद्धसाधनम् ॥

**कर्तुः क्रमकारीति** । अत्र च साधारणक्रमकारित्वाकारेण मनस्सिद्धिः **ग्रन्थकृता** विवक्षितेति न **क्रमकारित्वविशेषणं** व्यर्थम् । ईश्वरप्रयत्नादेः करणत्वेन सिद्धिर्मा भूदिति **कर्तुरिति** विशेषणम् । कर्तृव्यापारगोचरेत्यर्थः । भवति हि मनो विनापि द्वारा प्रयत्न(धेय)[धिष्ठेय]मिति कर्तृव्यापारगोचरः । चक्षुश्शरीरादिपूर्वकत्वेनार्थान्तरनिवृत्तये **साधारणेति करणेति** च विशेषणद्वयम् । स्वनिरूपितक्रमवत्कार्यजनककर्तृव्यापारगोचरकरणपूर्वकत्वं साध्यं द्रष्टव्यम् । अन्यथा चक्षुरादिज्ञाने क्रमकारिसाधारणचक्षुरादिजन्यत्वेनार्थान्तरता स्यात् । स्वशब्दमहिम्ना रूपादिज्ञाननिरूपितक्रमवत्कार्यजनकसाधारणकरणजन्यत्व- लाभात् तन्निवृत्तिः । **सन्निहितबहुविषयस्येति** । युगप(ज्ज्ञा)[ज्जा]यमानघटादिषु व्यभिचारनिवृत्तये **क्रमेति** । क्रमिककार्यत्वादित्यर्थः ॥

**नैतत् सारम्**—मनसः प्रतीन्द्रियसंयोगव्यापारे क्रमवर्तिनि साधारणकारणान्तरशून्ये अनैकान्तिकत्वात्। फलस्य च वृक्षात् पततः क्रमवर्तिनि आकाशसंयोगे कुठारादिव्यापारे चानैकान्तिकत्वात् इन्द्रियाणां प्रतिविषयसंयोगव्यापारे चानैकान्तिकत्वाच्च ॥

---

मुक्तम्—**सन्निहितेति। साधारणकारणान्तरशून्ये अनैकान्तिकत्वादिति।** न च तत्रापीश्वरप्रयत्नः कारणमिति शङ्कनीयम्। देवदत्तकर्तृव्यापारागोचरस्य तद्व्यापारे करणत्वासम्भवात्, 'कर्तृव्यापारगोचरः करणम्' इति लक्षणाङ्गीकरणात्, अन्यथा ज्ञानक्रमोत्पादेऽपि ईश्वरप्रयत्नस्यैव कारणतया सिद्धसाधनत्वप्रसङ्गादित्यर्थः ॥ ता.

---

ननु तत्रोक्तहेतुरस्त्येव, तेषामपि तत्पूर्वकार्यापेक्षया क्रमस्य सत्त्वादिति चेत्, न—यमादाय तत्र हेतूपपादनं तमादाय साध्यस्यापि तत्र सत्त्वात्। यदपेक्षया तत्र साध्याभावः न तदपेक्षया तत्र हेतुरपि। हस्तेन करोतीत्यनुभवात्। (घटादिरिव) [घटादौ हस्तादिरेव] तादृशं करणम्। ईश्वरकार्ये व्यभिचारवारणाय **कर्तुरिति।** जीवसाध्यक्रमवत्कार्यत्वादित्यर्थः। एकत्वमपि कर्तृविशेषणं द्रष्टव्यम्। अतो न क्रमेण नानाजीवसाध्ये व्यभिचारः। एतदेव **सन्निहितबहुविषयस्य** इत्यनेनोक्तमिति द्रष्टव्यम्। **आत्मनस्सर्वविषयसन्निधाने इति** पक्षविशेषणेनैक(जन्य)[जीव]रूपरसादिज्ञानानामेव विवक्षितत्वेन हेतावपि [कर्तुरेकत्वविशेषणस्य स]मुचितत्वात्। अ(न्य)त्र च चेष्टान्यत्वेनापि हेतुर्विशेषणीयः। चेष्टादावेककरणासम्भवेन तेन विना हेतोः तत्र व्यभिचारादिति ॥ भा.

पूर्वोक्तविधया चक्षुरादिभिरेवात्मनि क्रमजनकस्वभावकल्पनया ज्ञानक्रमोपपत्तौ किं मनसेत्यभिप्रेत्याह—**नैतत्सारमिति।** व्यभिचारमप्याह—**मनस इति।** न च तत्र मन एव [तत्तत्क्रि](त्र क्रि)यावत् करणमिति वाच्यम्; उपादानान्यस्यैव करणत्वात्, अन्यथा ज्ञानेऽप्यात्मनः करणत्वापत्तेः। नापि (तत्रैव क्रि)[तत्तत्क्रि]यैव तत्र विभागादिद्वारा करणं एकस्याः क्रियायाः सर्वेन्द्रियसंयोगादिहेतुत्वादिति भावः। **फलस्य चेति।** जीवेन पातितफलस्येत्यर्थः। अन्यथा तत्र हेतोरभावादिति ॥

**अथ मतम्—विज्ञानादिविशेषगुणजन्म स्वाश्रये द्रव्यान्तरसंयोगलक्षणासमवायिकारणापेक्षम्, नित्यद्रव्यविशेषगुणजन्मत्वात्, अग्निसंयोगजन्यपरमाणुगतपाकजलौहित्यवदित्यनुमानम्। यत्तत् द्रव्यान्तरं तत् मन इति। नैतत्—शरीरेन्द्रियसंयोगस्य सिद्धत्वात् द्रव्यान्तरसंयोगे अनुमानायोगात् स्वप्नस्मृत्यादिज्ञानेष्वपि शरीरादि-**

---

ता. **विज्ञानादि** इति। बुद्ध्यादीनां परस्परासमवायिकारणत्वनिरासार्थं 'संयोगलक्षणे'त्युक्तम् 'गुणजन्मत्वात्' इत्युक्ते विभागसङ्ख्यागुणजन्मनि संयोगलक्षणासमवायिकारणरहिते अनैकान्तिकता, अत उक्तम्–**विशेषगुणेति**। तथापि कार्यद्रव्यनिष्ठशौक्ल्यादिगुणजन्मनि व्यभिचारः, तत उक्तम्–**नित्यद्रव्येति**। नित्यद्रव्यगुणजन्मत्वात् इत्येतावन्मात्राभिधाने परमाणुनिष्ठद्वित्वसङ्ख्यादिभिः व्यभिचारः, तत उक्तम्–**विशेषेति**। **लौहित्यवदिति**। लौहित्यजन्मवदिति द्रष्टव्यम्। अन्यथा दृष्टान्तस्य साधनवैकल्यप्रसङ्गात्। तथापि कथं मनस्सिद्धिः? इति; तत्राह–**यत्तदिति**। सिद्धसाधनत्वेन दूषयति—**नैतदिति**। शरीरेन्द्रियैः इत्युपलक्षणं आत्मसंयोगस्य इन्द्रियाणां शरीरसंयोगस्य वा विद्यमानत्वादित्यर्थः। उपलक्षणं तस्य चैतत्, विभागजन्यशब्दजन्मनि हेतोरनैकान्तिकत्वस्यापि सम्भवात् संयोगासमवायिकारणाजन्यत्वात्। ननु स्वप्नादिषु शरीरेन्द्रियसंयोगो नास्ति।

---

भा. **अथ मतं विज्ञानादीति**। संयोगासमवायिकारणकं (विच्छिन्नेन्द्रियग्राह्य) नित्यद्रव्यवृत्तिविशेषगुणत्वात्, परमाणुपाकजलौहित्यवदित्यर्थः॥

ननु सुखाद्युपलब्धिः इन्द्रियजन्या प्रत्यक्षत्वात् सम्मतवत् इति इन्द्रियान्तरसिद्धौ तदेव मन इति चेत्, न—ईश्वरज्ञाने व्यभिचारात्। किञ्च, सुखाद्युपलब्धिर्नेन्द्रियजन्यप्रत्यक्षत्वमपि शाब्दप्रत्यक्षे व्यभिचारि। न च परस्य तदजन्यत्वासिद्धिः; जन्या, अजन्यत्वात्, सम्मतवत्। न च मनोऽन्वयव्यतिरेकाभ्यां तत्सिद्धिः। तज्जन्यत्वस्यापि ममासिद्धेः। न च विषयकादाचित्कत्वादेवो- अद्यापि तदसिद्धेः। दुःखाद्यनुभवकादाचित्कत्वं

संयोगानपायात् द्रव्यान्तरसंयोगकल्पनानुपपत्तेः । तस्मात् नानुमानार्थापत्ती मनसि प्रमाणम्। आगमाच्च प्रागेव मनः सिद्धम्। न च ऐन्द्रियकत्वम्। अणुपरिमाणे परमाणुवदयोग्यत्वात्, अनन्तपरिमाणे मनसि युगपत् संयोगाद्युगपज्ज्ञानजन्मप्रसङ्गात्, मध्यमपरिमाणे च मनसि स्वप्नावस्थायामिन्द्रियाभावेऽपि मनोदर्शनात् 'मे

तथा अननुभवादित्यत आह—स्वप्नेति । अभिमानाभावेऽपि स्वरूपेण संयोगोऽस्त्येवेत्यर्थः । उपसंहरति—तस्मादिति ॥ ता.

ननु सुखसाक्षात्कारः इन्द्रियजन्यः, साक्षात्कारत्वात्, रूपादिसाक्षात्कारवत्, तथा सुखाद्युपलब्धयः करणजन्याः, कार्यत्वात्, छिदिक्रियावत्, इत्युदयनोदीरितमनुमानयुगलं प्रमाणमस्त्येवेति चेत्—नैवम्, ईश्वरसाक्षात्कारे प्रथमहेतोरनैकान्तिकत्वात्, अनीश्वरसुखसाक्षात्कारमात्रस्यैव वेदान्तिभिः नित्यताङ्गीकरणात् आश्रयासिद्धिश्च। द्वितीयहेतोश्च यागजन्यापूर्वेण अनैकान्तिकत्वात्, तस्य कार्यस्यापि करणजन्यत्वाभावात्। न च याग एव तत्र करणम्। निर्व्यापारस्य करणत्वानुपपत्तेः, तत्राप्यवान्तरापूर्वाख्यव्यापारकल्पनायामनवस्थापातात्, तैरेव स्वर्गस्यापि सिद्धेः प्रथमापूर्ववैयर्थ्यप्रसङ्गाच्च। तस्मात् नानुमानादिगम्यं मनः इति भावः। अस्तु तर्हि आगमात् सिद्धिरिति; अत आह—आगमाच्चेति। आगमिकज्ञानशून्यस्यापि मनसोऽनुभवसिद्धत्वादित्यर्थः। तथापि कथं साक्षिणा सिद्धिः? मनसः इन्द्रियगम्यत्वोपपत्तेरिति; तत्राह—न चेति। किमणुपरिमाणमन्तःकरणम्? किं वा सर्वगतम्? उत मध्यमपरिमाणम्? इति विकल्प्य, क्रमेण दूषयति—अणुपरिमाणेति। इन्द्रियाभावेऽपि मनोदर्शनादिति। अयमर्थः—श्रोत्रादिबाह्येन्द्रियाणां स्वप्नदशायामुपरतव्यापारत्वादान्तरस्य च मनस आत्मवत् बहिरिन्द्रियग्राह्यत्वाभावादन्तःकरणस्य कर्मत्वादेव स्वविषयज्ञानं प्रति

पपद्यते । एतेन—सुखाद्युपलब्धिः करणसाध्या क्रियात्वादित्यनुमानमपि प्रत्युक्तम्, इत्यभिप्रेत्याह—तस्मादिति। इन्द्रियाभावेऽपि मनोदर्शनात् इत्युपलक्षणम्। मध्यमपरिमाणस्यापि रूपादिरहितस्य बाह्यप्रत्यक्षविषयत्वानु- भा.

**मनोऽन्यत्र गतम्' इत्यनुभवाच्च साक्षिवेद्यमेव मन इति ॥**

**'तं च प्रत्यगात्मान'मित्यात्मनः अन्तःकरणादिष्वध्यासो दर्शितः। तदयुक्तम्। इतरेतराध्यासे द्वयोरध्यस्यमानत्वात् मिथ्यात्वापातात्। द्वयोरप्यधिष्ठानत्वे द्वयोर्विशेषावभासो न स्यादिति ; तत्राह—**
157 - 2 यदि युष्मदर्थस्यैवेति। **अयमर्थः—एकतराध्यासे अन्यतरस्य सामान्यावभासः अन्यतरस्यैव विशेषावभासश्च स्यात्। अत्र चिज्जडरूपेण द्वयोः विशेषावभासो द्वयोरितरेतराध्यासं गमयति। अध्यासे विशेषावभासस्या-**

---

ता. करणत्वानुपपत्तेर्नेन्द्रियग्राह्यत्वमिति। मा भूत् तर्हि मनसः प्रतीतिरेव; इत्यत आह—**मे मनः** इति ॥

**विशेषावभासो न स्यादिति।** जाड्यरूपेण चैतन्यरूपेण च

---

भा. पपत्तेरिति। ननु मा भूत्, परमते, मनसि प्रमाणान्तरम्, सिद्धान्ते परिशेषात् कामादिभिस्तदुपादानतया तदनुमातुं शक्यते इति चेत्, तर्हि 'अहं कामी'ति प्रत्यक्षसिद्धमेव मन इत्याह—**साक्षिवेद्यमिति** ॥

**एकतराध्यासे इति।** ([1] अत्र वृतियुतो न) चिज्जडयोरन्यतरविशेषस्यैवाध्यासे तदितरविशेषस्यानध्यस्तस्य शुक्तित्वादेरिव भ्रमे प्रतीतिर्न स्यादित्यर्थः। **अध्यासे विशेषावभासस्या**ध्यस्यमानताप्रयुक्तत्वादिति प्रकृतग्रन्थाभिप्रायं कल्पयित्वा ग्रन्थकारस्याहङ्काराध्यास एव [2] सागमलोक इत्यभिप्राय इति **केचित्**। एवं तेषा(मेवा)[मा]चार्याभिप्रायकल्पने बीजं न पश्यामः। प्रकृतग्रन्थस्योक्तविधया(व्य)[प्य]र्थसम्भवात्। लाघवेन अध्यास[विषयता]मात्रस्यैव अध्यस्तत्वप्रयुक्तत्वाच्च। किञ्च, अधिष्ठाने आरोप्यतत्तादात्म्ययोरारोपः [आरोप्ये अ]धिष्ठानतादात्म्यस्यारोप इत्येतदेव इतरेतराध्यासो नाम, अन्यादृशस्य कस्यचिदपि दुर्निरूपत्वाच्च, इदमंशस्यास्ति [सः] इति मदुक्त एव आचार्यग्रन्थाभिप्रायः। अत एव **विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मतयैकत्वमापन्नः** इति (वि. पु. 156) रजताध्यासग्रन्थसामञ्जस्यमिति ॥

---

1 अत्र ग्रन्थः अशुद्ध इति भाति। यथास्थितं मुद्रितम्।
2 अत्र ग्रन्थः त्रुटितः।

ध्यस्यमानताप्रयुक्तत्वात्। न च द्वयोरपि मिथ्यात्वापातः; चेतनस्याचेतने स्वरूपाध्यासाभावात् संसृष्टतयैवाध्यासात्। न च विशेषावभासादधिष्ठानत्वविरोधः; अधिष्ठानधर्मतया विशेषस्य अप्रतीतेः अधिष्ठानान्तरधर्मतया प्रतीतेरिति। ग्रन्थस्तु स्पष्टार्थः। ननु द्वयोः विशेषात्मना अवभासमानयोः नाध्यासः सम्भवति, सामानाधिकरण्यमस्ति चेत्, गौण-
मिति; नेत्याह– नात्र विवदितव्यमिति। ननु विशेषावभासे अध्यास- 158 - 1
विरोध उक्तः; नेत्याह–न हि दृष्टे अनुपपन्नमिति। 'तद्विपर्ययेण अन्तः- 158 - 3
करणादि' मित्यादिशब्दो विरुद्ध इत्याह—नन्वन्तःकरण एव प्रत्यगात्मन 158 - 4
इति। अन्तःकरणविशिष्टस्यैव बहिरध्यास इति कुतः; इति; तत्राह—अत 158 - 6
एव तद्विपर्ययेणेति। ननु तस्मिन् भाष्ये विशिष्टस्यैवाध्यासः कथमुक्तः?
इति। धर्मग्रहणसामर्थ्यादित्याह—अन्यथा चैतन्यमात्रैकरसस्येति। यद्यपि 158 - 7
चैतन्यस्य विषये अध्यासे अन्तःकरणमुपाधिः, तथापि चैतन्यमेव विषयावच्छिन्नं प्रकाशते नान्तःकरणमिति प्रतिभासाभिप्रायेणोक्तमि-
त्याह—सत्यमाह भवानिति। तस्यैव विषयस्य आत्मानं प्रति कार्यकरत्व- 159 - 1
मापाद्येत्यर्थः। ननु बहिरप्यहङ्कारस्य चैतन्यवत् सम्बन्धोऽवभासते

---

ता. विशेषावभासो न स्यादित्यर्थः। अध्यस्तत्वे द्वयोरपि मिथ्यात्वं स्यादिति; तत्राह—**न च द्वयोरिति**। तर्हि विशेषावभासादधिष्ठानत्वं न स्यात्, सामान्यरूपेणैव प्रतिभासमानस्याधिष्ठानत्वात् इत्यत आह—**न च विशेषेति**। अन्यतरस्य सामान्येनैवावभासे परस्य च विशेषाकारेणैवावभासेऽध्यासो दृष्टः, द्वयोः पुनर्विशेषाकारेणैवावभासेऽध्यासो न संभवति विशेषदर्शनस्य भ्रान्तिनिवर्तकत्वादित्याक्षिपति—**ननु द्वयोरिति**। नन्वहं मनुष्य इति सामानाधिकरण्याध्यासो दृश्यते इति; तत्राह—**सामानाधिकरण्यमिति**। 'सिंहो देवदत्त' इतिवदित्यर्थः। 'विषयेऽध्यास' इत्यत्र विषयशब्देन देहादिरुच्यते।

---

भा. यद्यप्यहं मनुष्य इति शरीरेऽहङ्कारसंसर्गः प्रतीयते, तथापि अहङ्कारस्य अन्तःकरणत्वं विवेकिभिरेव ज्ञायते, न सर्वैः, ज्ञानाश्रयमात्रस्याहङ्कार-

159 - 6 'अहं मनुष्य' इत्यादौ इत्यत आह—अत एव बुद्ध्यादिष्विति । **चिन्मात्रावगमादेव सर्वपदार्थेष्वात्मत्वविभ्रम इत्यर्थः । अन्यथा अहङ्कारस्य**
159 - 10 **चैतन्याव्यतिरेकात् स एव आत्मेति प्रतिपत्तिः स्यादिति ।** ननु उपन्यास-
161 - 3 काले 'नैसर्गिकोऽयं लोकव्यवहारः' **इत्यारभ्य** 'कर्तृत्वभोक्तृत्वप्रवर्तकः' इत्यतः **प्राक्तनो ग्रन्थः स्पष्टार्थः । अत्र साङ्ख्यव्यतिरिक्ताः सर्वे वादिनः स्वत एव कर्तृत्वभोक्तृत्वशक्तिमतः प्रवृत्तिमात्रनिमित्तमध्यास इति वदन्ति ।**
161 - 5-6 **तान्निराकरोति**—तेन कर्तुर्भोक्तुश्चेति । सर्वलोकप्रत्यक्षः इत्यादिः स्पष्टार्थः ।
162 - 1 **'अस्यानर्थहेतो'रिति भाष्यस्य वृत्तसङ्कीर्तनपूर्वकं तात्पर्यमाह**—एवं तावत् सूत्रेणार्थादुपात्तयोरिति ॥

**ननु अनर्थस्य प्रहाणायेति वक्तव्यं न हेतोः प्रहाणायेति; अत**
162 - 3-4 **आह**—हेतोः प्रहाण्या हीति । **प्रयोजनभाष्यमाक्षिपति**—ननु अनर्थहेतुरध्यासोऽनादिरिति । **ननु शास्त्रप्रामाण्यान्निवर्ततामिति; न—प्रत्यक्ष-**
162 - 5 **विरोधादित्याह**—तथा हि मनुष्य(त्व)ादीति । **न हि सादित्वमनादित्वं वा विनाशाविनाशयोः निमित्तम्, किन्तु विरोधिसन्निपाता-**

---

ता. शरीरादिषु चैतन्यमेव प्रतिभासते नान्तःकरणमित्यत्र युक्तिमाह—**चिन्मात्रेति ।** अन्तःकरणस्य जडत्वात् तदध्यासे सत्यात्मत्वविभ्रमो न स्यात्, तस्मादन्तःकरणस्योपाधित्वेनैवान्वयः चैतन्यमेव पुनश्शरीरादावध्यस्यते इत्यर्थः । शरीरादिषु चैतन्यस्याध्यासाभावे अहंकारे एव चैतन्याध्यासः इति तत्रैवात्मबुद्धिः स्यादिति विपक्षे दण्डमाह—**अन्यथेति ।** स्वतः कर्तृत्वादिशक्तिमत्त्वं चेत् नाध्यासेन कृत्यं इत्याशङ्क्य, मैवम्—सहकारित्वेनाध्यासस्योपयोगादित्याह—**प्रवृत्तिमात्रेति ॥**

अनादित्वात् न निवर्तते इति लौकिकानां चोद्यम्? किं वा परीक्षकाणाम्? इति विकल्प्य, आद्यं दूषयति—**लोके तावदिति ।** द्वितीयं

---

भा. पदार्थत्वेन लौकिकैर्निश्चितत्वादिति शरीरमेव ज्ञानाश्रयतया अहमिति प्रतीयत इति तदभिमानमनुसृत्याह—**चिन्मात्रावगमादिति ।** ननु अविद्या स्वविरोधिसंसृष्टा न भवति अनादित्वात् आत्मवदिति, तत्रैव परी-

सन्निपातौ इति परिहरति—नायं दोष इति। लोके तावदनादिः 162-7
प्रागभावो निवर्तते। सुगतानां तत्त्वपरिभावनाप्रकर्षेण अनादिवासनासन्तानानां निवृत्तिरिष्टा। नैयायिकादीनामप्यनादिः मिथ्याज्ञानप्रवाहः परमाणुश्यामता च निवर्तते। साङ्ख्यानामप्यविवेकोऽनादिः निवर्तते विवेकेन। मीमांसकादीनामिदानीन्तनधर्मतत्त्वज्ञानप्रागभावोऽनादिः निवर्तते। अनादिभावरूपं आत्मवत् न निवर्तते इति चेत्, न—अनिर्वचनीयत्वादज्ञानस्य। अनादिर्न निवर्तत इति सामान्यव्याप्तिः। ज्ञानेनाज्ञाननिवृत्तिरिति तु विशेषव्याप्तिः। अतः सैव बलवती। ननु स्वोपादानगतोत्तरावस्था विनाशः, तत्र कथमनादेः निरुपादानस्य विनाशः?। न—स्वश्रयगतोत्तरावस्थेत्येतावत्त्वात्; अन्यथा अणुश्याम-

ता. दूषयति—**सुगतानामिति**। धर्मज्ञानप्रागभावस्याभावरूपतया निवृत्तिरुपपद्यते, इह तु भावरूपत्वात् न निवृत्तिः संभवति इति मीमांसकश्शङ्कते—**अनादिभावरूपमिति**। भावरूपत्वमसिद्धमित्याह—**अनिर्वचनीयत्वादिति**। अनादिः निवर्तते इति सामान्यव्याप्तिमूलानुमानात् विशेषव्याप्तिमूलानुमानं अविलम्बितप्रतिपत्तिहेतुत्वात् बलवदित्यर्थः। अनादेः विनाशासम्भवं दर्शयितुं विनाशस्वरूपमाह—**नन्विति**। समवायिगतोत्तरावस्थेति लक्षणे संभवति समवायिकारणगतेति विशेषणं व्यर्थमिति परिहरति—**न—स्वाश्रयेति**। अव्याप्तिप्रसङ्गादपि न त्वदुक्तलक्षणमित्याह—**अन्यथेति**॥

भा. त्या व्यभिचारमाह—**लोके तावदित्यादिना**। अस्मन्मते त्वप्रयोजको हेतुरिति द्रष्टव्यम्। किं सत्त्वं भावत्वम्? उत अभावान्यत्वम्? तत्प्रयोजको वा कश्चिद्धर्मः?। आद्ये अज्ञाने असिद्धिरित्याह—**न अनिर्वचनीयत्वादिति**। परमते प्रागभावे व्यभिचाराच्चेति द्रष्टव्यम्॥

किञ्च, अप्रयोजको हेतुः। न च अनौपाधिकव्याप्तिभङ्ग एव दोषः; तस्य बलवद्व्याप्त्यन्तरबाधितत्वेन अनौपाधिकत्वासिद्धेः इत्यभिप्रेत्याह—**अनादिर्न निवर्तत इति**। [न च]यः पर्वतः सोऽनग्निक इति यथा न विशेषव्याप्तिः एवं(त)-

त्वादीनामनिवृत्तिप्रसङ्गात् । अभाववैलक्षण्यादात्मवदज्ञानस्य अनिवृत्तिः इति चेत्, न—सद्वैलक्षण्यात् प्रागभाववन्निवृत्तिः किं न स्यात्?। कस्तर्हि निर्णयः? ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तम् ॥

---

भा. [त्व] दभिमताज्ञानस्यापि न ज्ञाननिवर्त्यत्वेन व्याप्तिरिति वाच्यम्; भावरूपाज्ञानादन्यस्य ज्ञानानिवर्त्यत्वात् । पराभिमताज्ञानस्य प्रतियोगिमात्रविरोधितया ज्ञानत्वपुरस्कारेण तदनिवर्त्यतया न जानामीति ज्ञानादज्ञानं निवृत्तमिति च ज्ञानत्वेन ज्ञाननिवर्त्याज्ञानानुभवस्य विषयत्वायोगादित्युक्तत्वात् । यः पर्वतः सोऽनग्निक इति तु व्यप्तिग्राहकं न किञ्चिन्मानमस्ति, प्रत्युत बाधितैवेति भावः । परिशिष्टपक्षद्वयमाशङ्क्य निराकरोति—**अभाववैलक्षण्यादिति** । तत्प्रयोजको धर्मो भावत्वमित्यस्याप्युपलक्षणम् । अनादित्वमपि विशेषणं देयम् । **सद्वैलक्षण्यादिति** । सत्ताजात्याश्रयान्यत्वादित्यर्थः । अतो न परमते दृष्टान्ते साधनवैकल्यम् ॥

किञ्च, अनादिभावरूपाज्ञानस्य निवृत्त्यनङ्गीकारे(ण) कोऽयं मोक्षः, यदर्थं वेदान्तास्तत्त्वमुपदिशन्ति । न तावन्मिथ्याज्ञाननिवृत्तिः, अन्यथाख्यात्यादिनिरासात् परमते मिथ्याज्ञानासम्भवस्योक्तत्वात् । उत्पन्नमिथ्याज्ञानस्य तत्त्वज्ञानादृते विनाशात् । अनुत्पन्नस्य केनाप्यनाशात् । न च मिथ्याज्ञानप्रवा(ह)[होच्छेद]स्तत्त्वज्ञानकार्य इति वाच्यम्; अतिरिक्तप्रवाहस्य असत्त्वात् प्रवाह्युच्छेदं विना ज्ञानात्तदुच्छेदासम्भवाच्च । नापि मिथ्याज्ञानसंस्कारनिवृत्तिः तत्त्वज्ञानसा(ध्यतया)[ध्या । तयोः] लोके विरोधादर्शनात् मिथ्याज्ञानतत्संस्कारनिवृत्तेः अपुरुषार्थत्वाच्च । यागादिप्रवृत्तिहेतुर्मिथ्याज्ञानं सं(स्का)[सा]रहेतुः तत्त्वज्ञानाच्च तन्निवृत्तिः, इति चेत्, न—(एतेन) यागादेस्तद्गतस्वर्गादिसाधनत्वस्य च परमते सत्यत्वेन तज्ज्ञानस्य मिथ्याज्ञानत्वाभावात् । ममेति ज्ञानस्यापि तव सत्यत्वाच्च ॥

न च आत्मनि शरीराभेदज्ञानं मिथ्याज्ञानमिति वाच्यम्; तस्य परमते यागादिप्रवृत्तौ दुःखादौ च अनुपयुक्तत्वात् । ब्राह्मण[त्वा]दिविशिष्टसंयोगित्वमात्रेण वैदिककर्मादौ कर्तृत्वाभ्युपपत्तेः । कर्तृत्वादिकमपि तन्मते सत्यमेवेति

[न] सं(स्का)[सा]रहेतुर्मिथ्याज्ञानमस्ति । दुःखोच्छेदस्य स्वतोऽपुरुषार्थत्वेन तत्प्रयोजकमिथ्याज्ञानध्वंसस्याप्यपुरुषार्थत्वात् । अत एव—तत्त्वज्ञानसाध्यो दुःखोच्छेदो मोक्ष इति निरस्तम् । दुःखस्याप्युत्पन्नस्य अन्यतो नाशसम्भवेन तत्त्वज्ञानस्याफलत्वाच्च ॥ भा.

न च तत्त्वज्ञानं विना चरमदुःखध्वंसो नेति वाच्यम् ; तस्यापि ध्वंसत्वेनावश्यकप्रतियोगिज्ञाननाश्यत्वात् । परमते दुःखप्रागभावासहवृत्तिदुःखध्वंसत्वरूपस्य नीलघटत्वादिवत् सामग्रीद्वयाधीनतया तत्त्वज्ञान[जन्य]तानवच्छेदकत्वाच्च । न हि दुःखप्रागभावासहवृत्तित्वांशोऽपि तत्त्वज्ञानाधीनः तत्त्वज्ञानस्य तत्तद्दुःखाजनकत्वेन तत्तत्प्रागभावानिवर्तकतया तस्य तदंशेऽनुपयोगात् । न च तत्त्वज्ञानमेव दुःखहेतुरिति वाच्यम् ; अन्यत्र क्लृप्तकारणत एव तत्सम्भवेन तस्य तत्रान्यथासिद्धत्वात् तत्त्वज्ञानस्य दुःखहेतुत्वे प्रमाणाभावाच्च मुक्तिमात्रहेतुतया श्रुतस्यानर्थजनकत्वासम्भवाच्च । अन्यथा उत्पन्नदुःखनिवृत्तेरयत्नसाध्यत्वेन दुःखार्थमेव मुमुक्षुप्रवृत्तिः स्यादिति दुःखमेव मुमुक्षुपुरुषार्थः [प्रसज्येत ।] पराभिमतप्रागभावानां तत्त्वज्ञानादृतेऽपि नाशसम्भवेन तेन विनापि मुक्तिसम्भवाच्च ॥

एतेन—दुःखात्यन्ताभावो मोक्षः ; 'दुःखेनात्यन्तविमुक्तश्चरति' इति श्रुतेः, स च निखिलदुःखध्वंसदशायामेव आत्मनि वर्तत इति ध्वंसस्येव तत्सम्बन्धस्य यत्नसाध्यत्वेन पुरुषार्थः इति प्रत्युक्तम् । उक्तविधया दुःखध्वंसस्याप्ययत्नसाध्यत्वात् । प्रागभावप्रतियोगिप्रध्वंसाश्रयदेशे अत्यन्ताभावासम्भवाच्च । अन्यथा प्रागभावादिः परस्य न स्यात् ॥

ननु दुःखं मे मा भूदिति कामनया मुमुक्षुप्रवृत्तेः तत्प्रागभाव एव मोक्षः । न च प्रागभावस्य प्रतियोग्युत्पादकत्वनियम इति वाच्यम् ; शरीरादिसहकार्यभावे तस्य प्रतियोगिनमजनयित्वैव सदा स्थित्युपपत्तेः । न चैवमत्यन्ताभावादविशेषः, तस्यात्मन्यसम्भवादिति ; तन्न—इदानीमपि मुक्तिप्रसङ्गात् । प्रागभावस्येदानीमपि सत्त्वात् । नच दुःखासहवृत्तिर्मुक्तिः स चेदानीं नास्तीति वाच्यम् ; सुषुप्त्यादौ तस्य सत्त्वात् । न च निखिलदुःखध्वंससमानाधिकरणो

भा. दुःखप्रागभावो मोक्षः ; निखिलदुःखानां विनाशे अनुत्पन्नदुःखस्य अभावेन प्रागभावासम्भवात् । न च स्वप्रतियोग्यतिरिक्तनिखिलदुःखध्वंसो विवक्षित इति वाच्यम् ; मुक्तिरूपप्रागभावस्य तत्त्वे प्रमाणाभावेन स्वप्रतियोग्यतिरिक्तनिखिलदुःखध्वंससमानाधिकरणत्वासम्भवात् ध्वंसानाधारसमयवृत्तित्वे प्रागभावस्य मुक्तित्वायोगाच्च, प्रागभावस्य प्रमाणाभावादिना निरस्तत्वाच्च ॥

नापि सुखावाप्तिर्मुक्तिः, जन्यसुखस्य अनित्यत्वात्। ननु नायं नियमः ध्वंसे व्यभिचारादिति चेत्, न—अभूत्वा भाविमात्रस्यानित्यत्वात् । 'अतोऽन्यदार्तम्' इत्यात्मातिरिक्तस्य सर्वस्य मिथ्यात्वावगमात्। मिथ्याभूतस्य सर्वस्य च ज्ञाननिवर्त्यत्वनियमात् । न चैवं भावोन्मज्जनापत्तिः ध्वंसमालाऽपि स्यादिति वाच्यम् ; भावसामग्र्यभावेन तदापत्तेरभावात् । अविद्या चानादित्वात् पराभिमतप्रागभाव इव नोन्मज्जति । वस्तुतस्तु अविद्यानिवृत्तिरात्मैवेति न तदुन्मज्जनम् । अत एव न ध्वंसमालापि, तदभावस्य आत्मत्वात् । भवतु *भावकार्यस्य अनित्यत्वनियमाच्च । अशरीरमोक्षे कारणनाशस्य सुखविनाशसामग्र्या इदानीमिव तदानीमपि सम्भवाच्च ॥

न च मुक्तिर्नाशरीरत्वमिति वाच्यम् ; 'अशरीरं वा व सन्तम्' इति श्रुतेः । (अ)शरीरस्य अदृष्टकार्यस्य तत्क्षये प्रलयादाविव क्षयस्यावश्यकत्वाच्च । अदृष्टं च 'ज्ञानाग्निः सर्वकर्माणि' इत्यादि शास्त्रान्नश्यति। न च प्राकृशरीरमेव कर्मसाध्यं न मुक्तशरीरमिति वाच्यम् ; शरीरमात्रस्य पाञ्चभौतिकत्वेन 'रमणीयचरणा रमणीयां योनिम्' इत्यादिना अवगमात्, प्रकृतिरूपमायादृष्टकार्यतया प्राकृतत्वात्, मुक्तौ चाविद्यात्मकप्रकृत्यादेः क्षीणत्वात्, केवलात्मनो निरवयवस्य शरीरानुपादानत्वात्, असत्त्वाच्च। न च अनादि किञ्चिच्छरीरमिति वाच्यम् ; मुक्तेर्ज्ञानसाध्यत्वविरोधात्। सावयवस्य अनादित्वायोगाच्च। तत्सत्त्वे प्रमाणाभावाच्च ॥

नापि सुखाभिव्यक्तिरेव सुखावाप्तिः। तस्याप्यशरीरावस्थायामसम्भवेन मुक्तिसंसारयोरविशेषात्। किञ्च, अभिव्यक्तिः ज्ञानम् ? अविद्यानिवृत्तिर्वा; । नाद्यः,

* अत्र ग्रन्थः त्रुटितः ।

**यत्तु व्यतिरेकज्ञानेऽप्यध्यासो न निवर्तते इति; तत्राह**—तत्त्व- 162 - 7
मसीत्यादिवाक्यादिति । **ननु व्यतिरेकब्रह्मात्मज्ञानयोरध्यासनिवृत्तौ को विशेषः? इति; तत्राह**—तद्धि ब्रह्मणोऽवच्छिद्येति । **न च व्यतिरेकानव-** 163 - 1
**बोधनिमित्तः संसारः किं तु ब्रह्मानवबोधनिमित्तः इति श्रुति-तदर्थापत्तिभ्यां दर्शितम्, अतः तत्त्वज्ञानान्निवर्तते इति भावः। ननु ज्ञानमज्ञानस्यैव निवर्तकम्, कथमध्यासस्य निवृत्तिः? इति; तत्राह**—ततः कारणनिवृत्ताविति । **ननु अहम्प्रत्ययोऽप्यर्थतस्तथा-** 163 - 3
**भूतब्रह्मविषय एव, स किमित्यज्ञानं न निवर्तयति? इति। ब्रह्मा-त्मतानवभासकत्वादित्याह**—अहंप्रत्ययः पुनरिति । **ननु विचारात्** 163 - 5

---

ता. यदविद्याजृम्भितोऽध्यासः तद्विद्यैव तस्य निवृत्तिरिति नियमात् इह चाध्यासस्य ब्रह्माविद्याविलसिततया व्यतिरेकाविद्याविलसितत्वाभावात् न व्यतिरेकज्ञानेन निवृत्तिरित्याह—**न चेति** ॥

---

भा. मुक्तौ कार्यज्ञानासम्भवात्; उत्पन्नस्य च नाशात्। द्वितीये त्वसत्पक्ष एव। एतेन—लिङ्गशरीरलयो मुक्तिरित्यादिपक्षो निरस्तः इति वेदितव्यः। तस्माद-नाद्यविद्यानिवृत्तिरेव तत्त्वज्ञानसाध्या मुक्तिरिति तदनिवृत्त्यनुमानानि बाधिता-नीति भावः ॥

अविद्यानिवर्तकत्वं विशेष इत्याह—**तत्राह—तद्धि ब्रह्मणोऽवच्छिद्येति।** तदेव व्यतिरेकज्ञानस्य किमिति नेत्याशङ्क्य, देहादेस्त(द्य)[दव्य]तिरेकस्य वा उपादानाज्ञानस्य तज्ज्ञाननिवर्त्यत्वानुपपत्तेरित्यभिप्रेत्याह—**न च व्यतिरेका-नवबोधेति। ब्रह्मात्मतानवभासकत्वादिति।** जीवब्रह्मैक्यं ह्यभिव्यक्तं स्वगोचराज्ञानं निर(स्तमिति)[स्यति]। न चाहम्प्रत्ययेन तदभिव्यज्यते। तदाकारसत्तावधारणरूपापरोक्षवृत्तेरेव तदविद्याप्रयुक्तावरणनिवृत्त्या आत्मा-भिव्य (ज्यते) [क्ति]प्रयोजकत्वात् ॥

एतेन—चैतन्यातिरिक्तब्रह्मात्मताऽभावात् चैतन्यस्य चाहंवृत्तिविषय-त्वात् न तत् किमित्यविद्यां निवर्तयतीति प्रत्युक्तम्। विषयभेदाभावेऽप्यहंवृत्त्यन-न्तरं जीवपरैक्यसंशयदर्शनात् सा न तत्र सत्तानिश्चयः। वाक्यजन्या तु सा

**विवेकज्ञानान्तरमुत्पन्नं निवर्तयेदिति ; न**—अप्रमाणज्ञानत्वादित्याह—
163 - 7 नापि ज्ञानान्तरमिति ॥

**ननु नानर्थनिवृत्तिः शास्त्रस्य प्रयोजनम्, किं तु निरति-**
103 - 8 **शयब्रह्मानन्दावाप्तिरिति पुनः प्रयोजनभाष्यमाक्षिपति**—ननु निरति-
शयानन्दं ब्रह्म श्रूयत इति । **यथा शास्त्रजन्यब्रह्मविद्याफलमानन्दावाप्तिः**
**तथा अनर्थनिवृत्तिरपि श्रुता, तत्र कथं प्रयोजनाक्षेपः ?** इत्याह—
164 - 3 ननु चानर्थस्यापीति । **तर्हि कृत्स्नस्य फलस्य संकीर्तनं कर्तव्यं न**

---

ता. परमार्थतो (न) निवृत्तिलक्षणं प्रयोज(नम वि) [नं वि]षयान्तर्गतमेव प्रातिभासिकानर्थनिवृत्तिलक्षणं तु प्रयोजनं ज्ञानोदयनान्तरीयकमितीमं विभागमजानन्नाशङ्कते—**तर्हीति** ॥

---

भा. प्रमाणादिविचारबलात् सत्तानिश्चयरूपा। दृश्यते हि लोके जलाद्येकाकारज्ञानस्य तर्कावतारानवतारदशायां सत्तानिश्चयरूपत्वं तद्विपरीतत्वं चेति न तत्रापि तत् विरुद्धमिति भावः। **न—अप्रमाणज्ञानत्वादिति**। किं विचारादिसहकृतमनोमात्रात् ब्रह्मनिर्णय उत्पद्यते ? किं वा वाक्यात् ?। अन्त्योऽङ्गीक्रियते एव। न तत्र प्रथमः, तस्याबाधितत्वेऽपि प्रमाणाजन्यत्वेनाप्रमाणत्वात् 'वेदान्तविज्ञान' इत्यादिना शास्त्रेण जन्यज्ञानस्यैव पुरुषार्थहेतुत्वप्रतिपादनात् इति भावः ॥

**ननु नानर्थनिवृत्तिरिति**। दुःखनिवृत्तेः स्वतोऽपुरुषार्थत्वात् तत्कामनायाः स्वरूपसुखानुभवविषयविरोध्यभावतया अन्यथासिद्धत्वात् अविद्यानिवृत्तये सुतरां न शास्त्रमारम्भणीयमिति भावः। अनर्थनिवृत्तिरानन्दात्मैवेति न सा पुरुषार्थात् बहिर्भूतेति परिहरति—**(न)[यथा] शास्त्रेति**। तर्हि यदात्मत्वेनानर्थनिवृत्तेः पुरुषार्थत्वं तदेव पुरुषप्रवृत्त्यर्थं भाष्यकारैर्वक्तव्यमिति शङ्कते—**तर्हि कृत्स्नस्य फलस्येति**। आनन्दस्यैवोभयरूपत्वात् कृत्स्नेत्युक्तिः। अवास्तव्या अविद्याया विषयत्वेनानन्दात्मकब्रह्मात्मकत्वस्य शास्त्रविषयस्य निर्देशादेव सर्वेषां स्वारसिकानन्दकामनानुसारेण तच्छास्त्रे

फलांशस्येति चोदयति—उभयं तर्हीति। **न प्रयोजनत्वेन वक्तव्या** 164-5
**आनन्दावाप्तिः**, विषयत्वनिर्देशसामर्थ्यादेव पुरुषाकाङ्क्षया प्रयोजनत्वसिद्धेः, श्रुत्यर्थाभ्यां प्रयोजनसम्पूर्णतासिद्धिः विषयनिर्देशलाभश्चेति युक्तोऽयं व्यपदेशः इत्याह–न वक्तव्यमित्यादिना। **ननु ब्रह्मात्मतैव विषयो** 164-6
**भवतु आनन्दावाप्तिस्तु पृथक् प्रयोजनत्वेन निर्दिश्यतामिति; नेत्याह**–न 164-9
च सा विषयाद्बहिरिति। **ब्रह्मात्मतैव आनन्दप्राप्तिरित्यर्थः। ननु अनर्थनिवृत्तेरपि फलवचनविषयत्वात् साऽपि शास्त्रविषय इति; नेत्याह**—
समूलानर्थहानिरिति। **ब्रह्मात्मैकत्वमेव शास्त्रविषयः, फलं त्वर्थसिद्धमिति** 164-10
**भावः। तर्हि ब्रह्मात्मैकत्वशास्त्रविषय एव अनर्थनिवृत्तिः न फलवचनविषय इत्याह**—अनर्थहेतुप्रहाणमपि तर्हीति। **ननु तत्त्वमस्यादिवाक्येऽपि** 165-1
**अनर्थनिवृत्तिः विषयतया नावगम्यत इति; तत्राह**—यतः सर्वेषु 165-2
वेदान्तेष्विति। **वाक्यार्थस्य भावरूपत्वेऽपि ब्रह्मपदार्थस्य अनर्थाभावविशिष्टतयैव प्रतिपादनात् सोऽपि विषय इत्यर्थः॥**

---

प्रवृत्तिः सिध्यतीति न तस्य फलतया कीर्तनमपेक्षितमित्यभिप्रेत्य परिहरति—**न प्रयोजनत्वेनेति** ॥ भा.

ब्रह्मण आनन्दरूपत्वमसिद्धमित्याशङ्क्य परिहरति—**ननु ब्रह्मात्मतेत्यादिना**। तत्त्वमस्यादिशास्त्रविषय एवाज्ञातप्रतिपाद्यत्वाच्छास्त्रविषयः 'तरति शोकमात्मवित्' इत्यादिफलवाक्यार्थ इत्याह—**ब्रह्मा(त्मैकत्वमिति)[त्मतैवेति]**। ननु अनर्थनिवृत्तेरपि तत्त्वमस्यादिशास्त्रविषयब्रह्मस्वरूपत्वात् साऽपि शास्त्रविषय एवेति गूढाभिसन्धिः शङ्कते—**तर्हीति**। तामजानान इव सिद्धान्त्याह—**ननु तत्त्वमस्यादिवाक्ये इति**। पूर्ववादी स्वाभिप्रायमुद्घाटयन्नाह—**तत्राह—यतस्सर्वेष्विति**। तमेव विवृणोति—**वाक्यार्थस्येति**। **अनर्थाभावविशिष्टतयेति**। सत्यज्ञानानन्दात्मकस्यापि ब्रह्मणः स्वस्मिन्नारोपितप्रपञ्चाभावतया वेदान्ते प्रतिपादनादित्यर्थः। न तु भूतलमिव घटाद्यभावेन प्रपञ्चाभावेन विशिष्टतया प्रतिपादनात् इत्यर्थः। विशिष्टशब्द-

**नन्‍नु न पदार्थप्रतिपादकं वाक्यमस्ति, किन्तु ऐक्यप्रतिपादकमेव**
165 - 3-5 **इत्याशङ्क्याह**—तद्यथा सदेव सोम्येदमित्यादि। समर्पयदेकं वाक्यमिति।
**अयमर्थः—अलौकिकत्वात् ब्रह्मपदार्थं प्रतिपाद्य तादात्म्यवाक्येनैकं**
**वाक्यमिति। [ननु]ब्रह्मणि निष्प्रपञ्चे शास्त्रविषये जीवगतानर्थनिवृत्तिः**
165 - 5 **कथं शास्त्रविषयः? इत्याशङ्क्याह**—तथा सति तादृशेन तत्पदार्थेनेति।

---

भा. प्रयोगस्य तदभावात्मनोऽपि ब्रह्मणः कल्पितभेदेनोपपत्तेः। अन्यथा वाक्यस्याखण्डार्थत्वायोगात्। विशेषणीभूताभावस्य मिथ्यात्वे तत्त्वावेदकाद्वैतश्रुतितात्पर्यगोचरत्वायोगात्। सत्यत्वे च अद्वैतहानेः, श्रुतावभावपदाभावाच्च। विरहैकस्वभावाभावस्य प्रतियोगिसमानसत्ताकत्वनियमेन सत्यत्वानुपपत्तेश्च इति भावः॥

**अयमर्थ इति**। पदार्थनिश्चयो हि वाक्यार्थनिर्णयकारणम्। न च ब्रह्मपदार्थो गवादिपदार्थवत् मानान्तरेण निर्णेतुं शक्यते। अतस्तत्पदार्थपरिशोधकानि 'एकमेव' इत्याद्यवान्तरवाक्यानि सत्यज्ञानानन्दात्म निष्प्रपञ्चं ब्रह्म प्रतिपादयन्ति सन्ति महावाक्येन सङ्गच्छन्त इत्यर्थः। जीवोऽपि 'योऽयं विज्ञानमयः' इत्यादित्वम्पदार्थशोधकावान्तरवाक्यैः कर्तृत्वादिप्रपञ्चरहितप्रकाशानन्दतया प्रतिपाद्यत इत्याह—**तथा सतीति**। तस्मात्तानर्थनिवृत्तिः पृथङ्निर्दिष्टव्येत्यभिप्रायः॥

सत्यमानन्दात्मब्रह्मैवाविद्यातत्कार्याभावः, तथापि तस्यैव अज्ञानदशायां शास्त्रविषयत्वम्, प्रयोजनत्वं तु प्रकाशमानस्य इत्यभिप्रेत्य भगवता भाष्यकृता निवृत्ताविद्यानन्दब्रह्मस्वरू[पं फलभूतं](पभूत)विषयभूतं[च] पृथङ्निर्दिष्टमिति न विरोधः। अनर्थनिवृत्तेः स्वतः पुरुषार्थत्वप्रदर्शनमुखेन तस्य आनन्दात्मत्वं वक्तुं चैवं निर्देशः॥

ननु एवमविद्यानिवृत्तेरात्ममात्रत्वे ज्ञानं विफलं स्यात्। तत्पूर्वमप्यात्मनस्सत्त्वात्। न च प्रकाशमान आत्मा प्राङ्नास्तीति वाच्यम्; प्रकाशमानत्वस्यात्मस्वरूपातिरिक्तत्वे अद्वैतक्षतेः। स्वरूपमात्रत्वे च तस्य नित्यसिद्धत्वात् ज्ञानं विफलमेव। अत एव—ज्ञानत्वेनोपलक्षित आत्मा अविद्यानिवृत्तिरिति प्रत्युक्तम्। तत्राप्युक्तविकल्पदूषणानपायात्। किञ्चैवमविद्यैव न स्यात्

प्रतियोगि[नो]निवृत्त्यसमानकालत्वादिति चेत्, न—अविद्यानिवृत्तिस्तावदात्मैव, कल्पितप्र(देश)[तियोगिक]तया तदत्यन्ताभाववत् ततोऽन्यत्वायोगात्। न चैवं प्रतियोग्यसिद्धिप्रसङ्गः, स्वसमानसत्ताकप्रतियोगिक एव ध्वंसे तदसमानकालत्वात्। तदत्यन्ताभावस्य प्रतियोगिसमानसत्ताकस्येव ध्वंसस्यापि तादृशस्यैव तद्विरोधित्वात्। अत एव—ध्वंसः कथं प्रतियोग्याश्रयः विरोधादिति प्रत्युक्तम्॥ भा.

नापि ज्ञानं विफलम्। ज्ञानात् पूर्वमारोपिताविद्यातत्कार्यानर्थस्य नियमेन सत्त्वात्। एवमपि तन्निवृत्तिर्न ज्ञानसाध्येति ज्ञानं विफलमिति चेत्, सत्यम्—तथापि ज्ञानोत्तरं अनर्थासत्त्वात् तत्पूर्वं च तस्य सत्त्वात् न तत् व्यर्थम्। निवर्तकं हि स्वस्थितिसमये स्वनिवर्त्यासमानाधिकरणमिति न ज्ञानोत्तरमनर्थः सम्भवति। न चैवमपि तत्साधनत्वज्ञानाभावात् कथं तदर्थप्रवृत्तिरिति वाच्यम्; अविद्यानिवृत्तेरात्मत्वेऽपि प्रवृत्त्यङ्गसाध्यत्वस्य सत्त्वात्। यस्मिन् सति अग्रिमक्षणे यस्या निवृत्तेः सत्त्वम्, यदभावे च तस्या अभावः प्रतियोगी वर्तते, सा निवृत्तिः तत्साध्या, यथा तमोनिवृत्तिः प्रकाशस्य। अत्र च साक्षात्कारे सति अग्रिमक्षणे अविद्यानिवृत्तेरप्यात्मनः सत्त्वम्। पूर्वं सतोऽपि तदा असत्त्वात्। तदभावे च तस्या निवृत्तेरभावोऽविद्या। आत्मनोऽविद्याभावत्वे अविद्याया अपि तदभावत्वात्॥

एवम्भूतसाध्यसाधनत्वज्ञानमेव प्रवृत्त्यर्थमपेक्षितम्। अव्यवहितपूर्वसमयवर्तित्वरूपसाधनत्वज्ञानस्य प्रवृत्तावनुपयुक्तत्वात्। यागादौ तस्या असम्भवाच्च॥

न च अपूर्वस्याव्यवहितपूर्वसमयवर्तित्वेन यागस्यापि तदस्ति। तस्य शब्देन अप्रतिपाद्यत्वात्। न च यस्मिन् सत्येव यस्य अग्रिमक्षणे सत्त्वं तत् तत्साध्यम्, तज्ज्ञानमेव च प्रवृत्त्यङ्गम्, अन्यथा दण्डादेरप्याकाशसाधनत्वं स्यात्, आत्मनश्च न प्रागविद्यमानत्वमिति वाच्यम्॥

न हीदं साधनत्वलक्षणम्, येनेदमतिव्याप्तिदुष्टं स्यात्। किन्तु ध्वंसार्थिप्रवर्तकज्ञानविषयाभिमतसाधनत्वस्वरूपम्। अन्यथा त्वदुक्तविधयापि घटरूपादेर्दण्डसाध्यत्वप्रसङ्गात्। * भावाभावार्थिप्रवृत्तौ यस्मिन् सति अग्रिमक्षणे

* अत्र ग्रन्थः त्रुटितः।

**एवमपि स्वाभाविकनिष्प्रपञ्चता शास्त्रविषयः, अविद्यातत्कार्यनिरासस्तु**

भा. यस्य विद्यमानत्वं यदभावे च अविद्यमानत्वं तत्तस्य साध्यमिति ज्ञानं हेतुः। आत्मरूपाविद्यानिवृत्तेर्हि विद्यमानत्वं स्वरूपमेव, न तज्जडस्येव देशकालसम्बन्धित्वम्, अज्ञानध्वंसानन्तरं देशकालयोरभावात्। तदभावश्चाविद्या ज्ञानात् प्राक्कालेऽस्तीति मुमुक्षोरपि वर्णितप्रवर्तकज्ञानमस्त्येव। परमतेऽपि दुःखप्रागभावे प्रायश्चित्तसाध्यता एवमेव॥

ननु निवृत्तेरात्मनः पूर्वोत्तरकालयोरविशेषात् कथं पूर्वमविद्यमा[नता] नोत्तरसमय इति विशेष इति चेत्, न—निवर्तकस्य स्थितिक्षणे स्वनिवर्त्यासमानाधिकरणत्वनियमेन विशेषसत्त्वात्। तस्मादात्मरूपाविद्यानिवृत्तिर्ज्ञानसाध्यैव। न चैवं साध्यत्वान्मुक्तेरनित्यत्वापत्तिः; किञ्चित्कालसम्बन्धित्वे सति किञ्चित्कालासम्बन्धि(त्वस्यै)[न ए]व अनित्यत्वनियमात्; मुक्तेर्विनाशहेत्वभावाच्च श्रुत्यादिविरोधेन तदनित्यत्वानुमानायोगाच्चेत्येकं मतम्॥

अपरमपि—प्रपञ्चात्यन्ताभावो ब्रह्मैव। अत्यन्ताभावस्य अनादित्वेन ब्रह्माभेदयोग्यत्वात्। अभावत्वं तु न भावत्वविरुद्धम्। परमतेऽपि घटादेः स्वात्यन्ताभावविरहत्वात्। भावस्य भावाभावात्मत्वमदृष्टमिति चेत्, न—भावाभावत्वयोरविरोधे प्रमाणबलादत्रैव तद्दर्शनमस्तु। शुक्त्यवच्छिन्नचैतन्यस्यैव (रजते) रजतात्यन्ताभावत्वाच्च। अन्यथा अस्थूलादिवाक्यं निर्विषयं स्यात्। मिथ्याऽभावस्य तत्त्वावेदकश्रुतितात्पर्यागोचरत्वात्। विरहैकस्वभावस्य अनिर्वचनीयप्रतियोगिकस्य सत्त्वानुपपत्तेः। वाक्यस्य अखण्डार्थत्वभङ्गप्रसङ्गात्। अतः प्रपञ्चात्यन्ताभावात्मतया निष्प्रपञ्चं ब्रह्म शास्त्रप्रमेयम्। प्रपञ्चनिवृत्तिस्तु न ब्रह्म, निवृत्तेः प्रतियोग्यसमानकालत्वात्। अतो न सा सिद्धब्रह्मगोचरशास्त्रप्रतिपाद्या। अतस्तस्याः सत्त्वाभावेऽपि न काचित् क्षतिः। एवं सति अद्वैतश्रुतिसङ्कोचो न कार्यः। प्रतिबन्धकाभावत्वेन पुरुषेच्छागोचरत्वमपि सङ्गच्छते इति॥

तत्र सर्वेषां प्रतिपत्तिसौकर्यार्थं द्वितीयं पक्षमादाय परिहरति—एवमपि स्वाभाविकनिष्प्रपञ्चतेति॥

**निष्प्रपञ्चब्रह्मात्मतावगतिसामर्थ्यलभ्यः, न शास्त्रविषयः। अविद्यातत्कार्यप्रतिभासाभावस्य तत्प्रतिभासविरोधादेव शास्त्रेण प्रतिपादयितुमशक्यत्वादिति परिहरति**—यद्येवं ब्रह्मात्मावगतिनान्तरीयकमिति ॥ 165 - 7

**ननु यथा प्रातिभासिकाविद्यातत्कार्यविरोधात् न तदभावविशिष्टो वाक्यार्थः प्रतिपत्तुं शक्यते तथा ब्रह्मणि प्रपञ्चावभासविरोधात् निष्प्रपञ्चं ब्रह्म आत्मत्वेन नावेदयितुं शक्यं अस्थूलादिवाक्यैरिति। उच्यते—**

---

ननु भूतलाधेयघटाभावस्तस्मादिव ब्रह्माधेयप्रपञ्चाभावो [ब्रह्मणो]भिद्यत एव। न च तत्र भूतलभिन्नसत्ताकप्रतियोगिकत्वादभावस्य ततो भेदः प्रपञ्चस्य त्वप्रामाणिकस्य तदभावात् रजतादेरिव अधिष्ठानमेव अभाव इति वाच्यम्। प्रपञ्चस्यापि प्रमाणसिद्धत्वात् इत्यभिप्रेत्य शङ्कते—**ननु यथेति** ॥ भा.

न च अत्र ब्रह्मणः प्रपञ्चाभावत्वं न प्रतिक्षिप्यते किन्तु प्रपञ्चप्रतीतिविरोधात् तस्य शास्त्र(स्य) प्रतिपाद्यत्वमेव अत एव अग्रे प्रपञ्चप्रतीतेरप्रामाणिकत्वं प्रतिपादयतीति भ्रमितव्यम्। ब्रह्मणः प्रपञ्चात्यन्ताभावत्वाङ्गीकारे रजतादिकालेऽपि शब्देन तदत्यन्ताभाववत् प्रपञ्चात्यन्ताभावस्यापि योग्यतादिसत्त्वेन प्रतिपादनसम्भवात्। अतिरेकेऽप्यत्यन्ताभावस्य रजताभाववत् तत्सम्भवात्। अस्तु तर्हि प्रतियोगिसमये तदधिकरणे तदत्यन्ताभावविषय एव अयमाक्षेपः इति चेत्, तर्हि तस्य ततो भेदासम्भवेन समाधानस्य तत्र तात्पर्यवर्णनासम्भवात् अस्मदुक्त एव अभिप्रायः—प्रपञ्चस्य (अप्रा)[प्रा]माणिकत्वात्(शुक्तिरजतस्येव) अत्यन्ताभावः तदधिकरणाद्भिद्यते भिन्नसत्ताकप्रतियोगि[कत्वात्] भूतलात् घटाभाववत्। भूतलं घट इति प्रतीत्यभावेन तयोर्भिन्नसत्ताकत्वात् [इति] ॥

प्रपञ्चस्तु ब्रह्मकार्यत्वात् सन् घटः इत्याद्यनुभवाच्च रजतमिव स्वाधिष्ठानब्रह्माभिन्नसत्ताक इति तदभावो रजताभाव इव अधिष्ठानान्न भिद्यते। अधिकरणादत्यन्ताभावभेदे गुरुशरीरस्याप्युक्तस्यैव प्रयोजकत्वात्। ध्वंसे तु भेदे बाधकाभावात् प्रतियोगिनोऽधिकरणभेदमात्रमेव प्रयोजकमित्यभिप्रेत्य प्रपञ्चस्य प्रामाणिकत्वं निराकरोति—**उच्यते इत्यादिना**। प्रपञ्चः सोपादानः कार्य-

**न तावत् प्रत्यक्षादिसिद्धो ब्रह्मणि प्रपञ्चः; तस्य तदगोचरत्वात्। न च प्रपञ्चसिद्धिमात्रेण ब्रह्मसम्बन्धावगमः; कारणमात्रकल्पकत्वात् तस्य॥**

**ननु इदं सर्वं 'यदयमात्मा' इत्यादिसप्रपञ्चवाक्यैः ब्रह्मणि प्रतिभासते प्रपञ्चः। सत्यम्—तेषां ब्रह्मणः सर्वोपादानकारणत्वसामर्थ्य-सिद्धसार्वात्म्यानुवादेन निषेध्यसमर्पकतया निषेधकवाक्यैरेकवाक्यतया अन्वयात् निष्प्रपञ्चविरोधित्वाभावात्। न च सर्वोपादानतया सर्वात्मभावे**

---

ता. किं ब्रह्मणि प्रत्यक्षादिभिः प्रपञ्चो गम्यते? किं वा आगमेन?। नाद्य इत्याह—**न तावत् प्रत्यक्षादीति**। ब्रह्मणः प्रत्यक्षाद्यगोचरत्वेऽपि प्रपञ्चस्य तद्गोचरत्वात् तत्सम्बन्धावगमः किं न स्यात्? इति; अत आह—**न चेति**। सम्बन्धस्य द्विनिष्ठत्वात् एकतरप्रतीतिमात्रेण न तदवगतिरित्यर्थः॥

इदानीं द्वितीयं कल्पमुत्थापयति—**नन्विति**। सत्यमागमात् प्रतीयते ब्रह्मणि प्रपञ्चः, किन्तु न प्रमीयते, अन्यत एव प्राप्तत्वात् तस्य, निषेधक-वाक्यापेक्षितनिषेध्यसमर्पणपरतया तत्र प्रामाण्याभावाच्च इत्याह—**सत्यमिति**। 'इदं सर्वं यदयमात्मा' इति यच्छब्देन आत्मानमनूद्य तस्य सर्वात्मत्वविधिप्रतीते-रनुवादकत्वमनुपपन्नमिति आशङ्क्य, आह—**न च सर्वेति**। 'यदाग्नेयोऽष्टा-कपालः' इत्यादौ विधीयमानेऽपि यच्छब्दप्रयोगदर्शनात् 'योऽयमात्मा स एवेदं सर्वम्' इति बाधायामिदं सामानाधिकरण्यं, 'योऽयं स्थाणुः स पुरुषः' इति-त्वात् सम्मतवदित्यादिना प्रामाणिकत्व(पदार्थ)माशङ्क्याह—**न च प्रपञ्चेति**॥

---

भा. **सार्वात्म्यानुवादेनेति**। तथा च अनुवादस्य न स्वार्थे तत्सत्ताप्रयोजकं प्रामाण्यमिति न (ततः प्रमाणस्य) ब्रह्मनिष्प्रपञ्चताविरोधि(त्वा)त्वसिद्धिरित्यर्थः। न केवलमस्य ब्रह्मणि प्रपञ्चसंसर्गपरत्वाभावः अपि तु तदभावपरत्वमेव इत्याह—**निषेधकेति**। 'स एष नेति नेत्यात्मा' इति स्वप्रकरणस्थनिष्प्रपञ्चवाक्यैकवाक्य-त्वादित्यर्थः। ननु श्रुतार्थापत्तेः (श्रुतिः स्वार्थे त्वनया) [अनपेक्षया श्रुतिः स्वार्थे] प्रवर्तत इति नास्य [सप्रपञ्चवाक्य] स्य श्रुतोपादनता[सामर्थ्यसिद्ध]सार्वात्म्यानु-वादकत्वम्। ततश्च अनुवादकत्वान्न स्वार्थस्य सत्ताप्रयोजकं प्रामाण्यमित्यसङ्ग-तमित्याशङ्क्याह—**न चेति**। **असिद्धे** इति छेदः। यच्छब्दसमभिव्याहारात्

**सिद्धे सप्रपञ्चवाक्यैः सर्वात्मता प्रतिपादयितुं शक्यते; न च निषेधवाक्यैः निषेध्याकाङ्क्षितसमर्पणेनैकवाक्यतासम्भवे वाक्यभेदं कृत्वा स्वातन्त्र्येण प्रयोजनवन्निष्प्रपञ्चविरुद्धं सप्रपञ्चं प्रयोजनशून्यं च प्रमातुं शक्यम्। दृष्टश्च सुषुप्ते चेतनस्य निष्प्रपञ्चता पुरुषार्थ इति। श्रुतं च 'अशब्दमस्पर्शमरूपमव्ययं.... निचाय्य तन्मृत्युमुखात् प्रमुच्यते' इति। दृष्टा च चेतनस्य सप्रपञ्चता अनर्थकरीति, न च तत्र श्रूयते फलम्, अतो निषेधैरेकवाक्यता युक्ता। न च निषेध्यप्रपञ्चानुवादप्रतिभासो निष्प्रपञ्चमितिं बाधते। तादर्थ्यादनुवादस्य॥**

---

वदित्यर्थः। 'संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति न्यायादप्येवमवसीयते इत्याह—**न च निषेधेति**। सप्रपञ्चवाक्यस्य फलशून्यतया 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायाच्च न प्रतिपादकतया स्वातन्त्र्यमित्याह—**प्रयोजनशून्यं चेति**। निष्प्रपञ्चवाक्यानां सप्रयोजनत्वं कथम्? इत्याशङ्क्याह—**दृष्टश्चेति**। न केवलं लोकत एव, श्रुतत्वाच्चेत्याह—**श्रुतं चेति**। सप्रपञ्चताया न प्रयोजनशून्यत्वमेव किन्तु अनर्थकरत्वमप्यनुभवसिद्धमित्याह —**दृष्टा चेति**। फलाश्रवणादपि निष्प्रयोजनत्वमित्याह—**नच तत्रेति**। ननु सति प्रपञ्चप्रतीतिविरोधे कथं निष्प्रपञ्चप्रतिपादकत्वमागमस्य? इत्यत आह—**न च निषेध्येति**। शेषत्वादपि शेषिबाधकत्वमनुपपन्नमित्याह—**तादर्थ्यादिति**॥ ता.

---

इदं वाक्यं स्वार्थस्य अन्यतः प्रसिद्धिमपेक्षत इति वाक्यान्तरवत स्वार्थं झटिति न बोधयति, तत्प्रसिद्धिश्च वर्णितार्थापत्त्यैवेति तत्सिद्धानुवाद एवेति भावः॥ भा.

अथ वा, **सिद्धे** इत्येव पदम्। त्रिकालाप्रापिता[र्थ एव तात्पर्यम्, अन्यत्र तु]अनुवादकत्वं वाक्यस्य। अत्र च जगदुपादानत्वसामर्थ्यादेव ब्रह्मणः सार्वात्म्यं सिद्धमिति नास्यापि तत्र तात्पर्यं कल्पनीयमित्यर्थः। एतेन—यच्छब्दः प्रत्यक्षादिसिद्धं सत्त्वमनुवदति न तादात्म्यमिति न तस्य श्रुतार्थापत्त्यपेक्षेति निरस्तम्। विरुद्धयोर्वास्तवतादात्म्यायोगाच्च। निषेधशेषत्वमप्युपपादयति—**न चेति**। इदमपि वाक्यं य(च्छब्दोत्त)[श्चो]रः स स्थाणुरिति वाक्यमिव बाधकं द्रष्टव्यम्। **सप्रपञ्चतानर्थकरीति**। स्वप्नादाविति शेषः। **न च तत्र श्रूयते फलमिति**।

**ननु अप्राप्तं प्रपञ्चं ब्रह्मणि सप्रपञ्चवाक्यैः प्रापय्य पुनः तन्निषेधोऽनर्थक एव, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्। उच्यते—अद्वितीयब्रह्मप्रतिपत्त्यर्थं सर्वजगदुपादानत्वप्रतिपादनसामर्थ्यादेव प्राप्तस्य ब्रह्मणि प्रपञ्चस्य अद्वितीयपुरुषार्थसिद्ध्यर्थमनूद्य निषेधो युज्यते ॥**

**ननु तर्हि सर्वोपादानत्वसामर्थ्यादेव सप्रपञ्चताप्रमितिः प्राप्ता। न—श्रुतसामर्थ्यप्राप्तस्य सप्रपञ्चत्वस्य साक्षात् निषेधश्रुतिविरोधे दौर्बल्यात्। न तर्हि सर्वोपादानतया सप्रपञ्चताप्राप्तिः। न—यावद्बाधं श्रुतोपादानत्वसामर्थ्यादेव शुक्तिकारजतादिवत् सप्रपञ्चताप्रतिभासात्। प्रतिपन्नमेव तु बलवत्प्रमाणेन बाध्यते, नाप्रतिपन्नम्; नापि प्रमितम्। न च उपासनाप्रकरणपठितसप्रपञ्चवाक्यैः ब्रह्म तथा**

---

ता. मैवम्—प्रयोजनपर्यवसायित्वादित्याह—**उच्यते** इत्यादिना। यदि ब्रह्म कारणमात्रं स्यात्, तदा निमित्तकारणत्वे प्रपञ्चस्य भेदेन व्यवस्थानं स्यात्। तदा अद्वितीयत्वं न सिध्येत्। यदा पुनरुपादानत्वमुच्यते तदा प्रपञ्चस्य सुवर्णकुण्डलन्यायेन ब्रह्मतामात्रत्वात् अद्वितीयत्वं लभ्यते। ततश्च सिद्धप्रपञ्चस्य अनूद्य निषेधोऽपि घटते इत्यर्थः। उपादानत्वं प्रतिपादितमित्युक्तम्, प्रमितमित्याश्रित्य शङ्कते—**ननु तर्हीति**। श्रुतिविरोधे श्रुत्यर्थापत्तेः दुर्बलत्वात् मैवमित्याह—**न श्रुतेति** ॥

ननु तर्हि निष्प्रपञ्चवाक्यविरोधात् सप्रपञ्चताप्रतीतिरेव नोत्पद्यते, तत्र कथं निषेधः? इति शङ्कते—**न तर्हीति**। बाधोदयात् प्राक् लौकिकविभ्रमादिवत् प्रतिभासः सम्भवतीति परिहरति—**न—यावदिति**। प्रतिपन्नस्य तर्हि कथं बाधः? इत्यत आह—**प्रतिपन्नमेव त्विति**। तर्हि प्रतीतिसिद्धये प्रत्यायकं प्रमाणमप्यङ्गीकर्तव्यमित्यत आह—**नापि प्रमितमिति**। निषेधप्रकरणस्थसप्रपञ्चवाक्यानां तच्छेषत्वेऽपि उपासनाप्रकरणपठितानां 'सर्वकामः सर्वगन्धः सर्वरसः' इत्यादीनां तत्परतैवाभ्युपेयेत्याशङ्क्याह—**न चेति**। तेषामप्युपासनापरत्वात् स्वार्थपरनिषेधकवाक्यविरोधात् बाध्यत्वमेवेत्यर्थः ॥

---

भा. स्वर्गादेः फलाभा(व)[स]त्त्वादिति भावः। एतच्च 'उदरमन्तरं कुरुते। अथ तस्य भयं भवति' इत्यादेरुपलक्षणम् ॥

प्रमीयते। अन्यपराणां तत्परवाक्यविरोधात्, आरोपितरूपेणापि उपासनासम्भवात्, सृष्टिवाक्यैरद्वितीयब्रह्मप्रतिपत्तये निषेध्यप्राप्तिपरैः प्राप्तत्वाच्च। तस्मात् निष्प्रपञ्चब्रह्मात्मप्रमितौ शाब्दी वा लौकिकी वा प्रमितिः न विरुध्यते॥

ननु जीवोऽपि वाक्यार्थप्रमितिविषयः तस्मिन् प्रपञ्चे प्रत्यक्षावगते कथं निष्प्रपञ्चवाक्यार्थप्रमितिः? इति। उच्यते—न तावदनुमानादिगम्यः कर्तृत्वादिप्रपञ्चः; अपरोक्षत्वात्। नापि चक्षुरादिगम्यः; प्रत्यगात्मनो बाह्येन्द्रियाविषयत्वात्। मानसप्रत्यक्षगम्य इति चेत्, किं तत्र प्रमाणम्?। सत्येव मनसि आत्मनि बन्धोपलब्धेः असति च सुषुप्ते अनुपलब्धेः अन्वयव्यतिरेकौ प्रमाणमिति चेत्, न—अन्यथासिद्धत्वात्। आत्मनि कर्तृत्वादिप्रपञ्चसत्ताकारणतयापि अन्वयव्यतिरेकोपपत्तेः। सुषुप्ते कर्तृत्वाद्यनवभासः किं मनसोऽभावात् किं वा स्वयमभावात्

---

ता० ननु सप्रपञ्चवाक्यानां यथार्थत्वाभावे कथं तथोपासनं स्यात्? इति; अत आह—**आरोपितेति**। अन्यतः प्राप्तत्वादपि सप्रपञ्चतायाः नोपासनवाक्यानां तत्प्रतिपादकत्वमित्याह—**सृष्टिवाक्यैरिति**।

ननु तत्त्वमसिवाक्येन जीवब्रह्मणोरेकत्वविषयेण जीवस्यापि विषयीकरणं वक्तव्यम्, तच्चानुपपन्नम्; जीवस्य सप्रपञ्चताप्रमितेः, इति शङ्कते—**नन्विति**। किं अनुमानादिभिः सप्रपञ्चता अवसीयते? किं वा प्रत्यक्षेण? इति विकल्प्य, नाद्यः, इत्याह—**न तावदिति**। द्वितीयेऽपि किं बाह्यप्रत्यक्षगम्यत्वम्? उत मानसप्रत्यक्षगम्यत्वम्? इति विकल्प्य, आद्यं दूषयति—**नापीति**। द्वितीयं विकल्पमुत्थापयति—**मानसेति**। अन्यथासिद्धिमेवाह—**आत्मनीति**। एवमन्वयव्यतिरेकावङ्गीकृत्य अन्यथासिद्धिरुक्ता, इदानीं व्यतिरेकव्याप्तिरपि नास्तीत्याह—**सुषुप्ते इति**। यद्वा तद्वा भवतु, उपादानतया प्रतीतिकारणापेक्षायां मन एव

---

भा० प्रपञ्चाभावे उपासनैव कथम्? इत्यत्राह—**आरोपितेति**। यावत्तत्त्वज्ञानमारोपितप्रपञ्चस्य सत्त्वादित्यर्थः॥

इति संदिग्धव्यतिरेकत्वात्। प्रती(तिका) [तिः क]रणमप्यपेक्षते इति चेत्, न—आत्मचैतन्येनैव अव्यवधानात् प्रतिभासोपपत्तेः॥

ननु कर्तृत्वभोक्तृत्वरागद्वेषसुखदुःखादयोऽप्यात्मनि स्वयंप्रकाशा इति बौद्धप्राभाकराः कल्पयन्ति। नैतद्युक्तम्—तेषां द्रव्यत्वे बहुप्रकाशगुणकल्पनया तद्विशिष्टात्मप्रकाशकल्पनादात्मन एवैकं प्रकाशगुणं परिकल्प्य तदन्वयादितरेषां प्रकाशकल्पनाया लघीयस्त्वात्। तेषां गुणत्वे सति गुणस्य गुणान्तराभावात् न स्वयंप्रकाशता। ते एव प्रकाशगुणा इति चेत्, न—प्रकाशगुणस्य स्वाश्रयोपाधावादित्यादा-

---

ता. तत्प्रतीतिकारणमेष्टव्यमिति शङ्कते—**प्रतीतिकारणमिति**। साक्षिणः प्रतीतिकारणस्य सम्भवात् मैवमिति परिहरति—**न—आत्मेति**॥

**प्राभाकराः**—जरत्प्राभाकरा इति यावत्। किं कर्तृत्वादीनां द्रव्यत्वम्? उत गुणत्वम्? इति विकल्प्य, आद्ये दूषणमाह—**तेषामिति**। **तदन्वयात्**—तस्मिन् प्रकाशगुणवत्यात्मनि अभेदेन अध्यस्तत्वात् सिद्धेरिति यावत्। अथोत्तरः कल्पः, तत्रापि तेषां प्रकाशो गुणः? किं वा स्वरूपम्? इति विकल्प्य, गुणत्वे दूषणमाह—**तेषां गुणत्वेति**। द्वितीयमुत्थापयति—**त एवेति**। कर्तृत्वादीनां प्रकाशस्वरूपत्वे स्वाश्रये आत्मनि जन्मैव न सम्भवति सवितरीव प्रकाशगुणस्य, कर्तृत्वादयश्च स्वाश्रयोपाधौ जायन्ते, तेन तेषां न प्रकाशगुणरूपत्वमिति परिहरति—**प्रकाशगुणस्येति**। कर्तृत्वादिप्रपञ्चे प्रतीतिव्यतिरेका-

---

भा. **स्वयम्प्रकाशा इति**। यथा तात्पर्यं सर्वशब्दवृत्त्यनुस्यूततया न वृत्त्यन्तरम्, एवं सर्वप्रमाणसहकारितया [मनः] न पृथक् प्रमाकरणमिति सुखादेः ग्राहकाभावात् स्वसत्तायां प्रकाशाव्यभिचाराच्च स्वप्रकाशत्वमित्यर्थः। एवं चेदिच्छादेः सर्वविषयस्यार्थप्रकाशत्वेन ज्ञानत्वापत्तिः। न च इष्टापत्तिः, ज्ञानमिच्छेत्यप्रतीतेः तस्याः प्रत्यक्षाद्यनन्तर्भावाच्च। अतो नेच्छादिकं स्वप्रकाशमिति सुखादिकमपि तत्तुल्यमित्यभिप्रेत्याह—**नैतद्युक्तमिति**। न च साक्ष्यनुभवबलादेव कर्तृत्वादेः सत्यत्वमस्तीति वाच्यम्; शुक्तिरजतादेरपि

विवानुपपत्तेः। बन्धस्य स्वसत्तायां प्रतीतिव्यतिरेकाभावोऽपि न स्वयंप्रकाशमानतां कल्पयति। नित्यात्मप्रकाशसंसर्गादपि तदुपपत्तेः। न च क्लृप्तकारणाभावेऽपि बन्धापरोक्ष्ये प्रमाणकारणान्तरं कल्पयितुं युक्तम्; निष्प्रपञ्चागमविरोधात् 'इन्द्रो मायाभि'रिति मिथ्याकारणान्तरक्लृप्तेश्च। तस्मादज्ञानादिसत्यमिथ्यावस्तुसाधारणेन साक्षिमात्रेण वेद्यत्वात् प्रपञ्चस्य सत्यतो निष्प्रपञ्चब्रह्मात्मप्रमितिः सप्रपञ्चप्रमित्या न बाध्यते। तस्मात् अविद्यातत्कार्यप्रपञ्चप्रतिभासाभावस्य तद्विरोधादेव ब्रह्मात्मविशेषणत्वेन प्रमातुमशक्यत्वात् ब्रह्मात्मावगतिनान्तरीयकतया प्रातिभासिकबन्धनिवृत्तिरिति सूक्तम्॥

ननु अनर्थनिवृत्तिः न शास्त्रविषयश्चेत्, कथं विषयावगतिसामर्थ्यलभ्येति?। तत्र किमनर्थनिरासः पर्यनुयुज्यते? तन्निरासप्रतिभासो वा?। यदि निरासः, तत्राह—युक्तं चैतदिति। तत्त्वावभासविरोधित्वात् 165 - 9

ता. भावात् स्वयंप्रकाशतैव किं न स्यात्? इत्याशङ्क्य परिहरति—**बन्धस्येति**। **संसर्गात्**—अभेदाध्यासादित्यर्थः। विद्यमानस्य प्रपञ्चप्रतिभानस्य कारणाभावेनापलापायोगात् कारणान्तरं कल्प्यते इत्याशङ्क्याह—**न चेति**। [कारणान्तराकल्पने हेत्वन्तरमाह—**इन्द्र इति**।] साक्षिसिद्धत्वात् प्रपञ्चस्य तद्विरोधात् न निष्प्रपञ्चप्रतीतिसिद्धिरित्याशङ्कां परिहरन्नुपसंहरति—**तस्मादिति**। **साक्षिमात्रेणेति**। स्वाकारवृत्तिव्यवधानं विनेत्यर्थः। वस्तुतः प्रपञ्चशून्यतायाः शास्त्रप्रमेयत्वे प्रत्यक्षादिप्रमाणविरोधाभावात् प्रातिभासिकबन्धनिवृत्तेश्च शास्त्रप्रमेयत्वानङ्गीकारात् न कोऽपि दोषः इत्युपपादितमर्थमुपसंहरति **तस्मादविद्येति**। **तद्विरोधात्**—प्रपञ्चप्रतिभासविरोधात्। **ब्रह्मात्मविशेषणत्वेन**—ब्रह्मात्मनोः विशेषणत्वेन॥

भा. साक्षिभास्यत्वेन तद्विषयत्वस्य ज्ञेयसत्त्वाप्रयोजकत्त्वादित्याह—**तस्मादिति**। तथा च प्रपञ्चात्यन्ताभाव आत्मैवेति भावः॥

ननु प्रमाणवृत्तेः विषयाभिव्यक्तेरेव साध्यतया विषयः [सिध्यति], कथं तद्विषयातिरिक्ताविद्यानिवृत्तिः सिध्यति इत्याशङ्क्य, किं सिद्धिर्ज्ञानम्? उत्पत्तिर्वा? नाद्यः, अविद्यानिवृत्तेरस्माभिः शब्दार्थत्वानङ्गीकारात् द्वितीये तु

अविद्यातत्कार्यत्वाच्चेति भावः । ननु नेदं रजतमिति विज्ञानं तत्र 'रजत'
मिति विपर्यासं निवर्तयति । इह तु 'अहं ब्रह्मास्मी'ति विज्ञानं वस्तु-
स्वरूपनिष्ठं न प्रपञ्चनिषेधविषयम् , तत्र कथं विपर्यासनिरासः ? इति
166 - 4 चोदयति–ननु च नञादेर्निरासकृत इति। तत्र द्वे ज्ञाने विपर्यासविरोधिनी-.
विरोधिशुक्तिकादिभावान्तरात्मज्ञानं अध्यस्तवस्तुतत्त्वाभावज्ञानं च।
तत्र अध्यस्ततत्त्वाभावज्ञानेन अध्यासनिरासे नञाद्यपेक्षा न विरोधि-
166 - 5 भावान्तरज्ञाने इति परिहरति—नेदं रजतमिति यत्रेति। ब्रह्मणि तु
166 - 7 विरोधिभावान्तरज्ञानादध्यासनिवृत्तिरित्याह—इह पुनर्विज्ञानमेव तादृश-
मिति। ननु सर्वो हि व्यापारः स्वविषयमेव साधयति, न नान्तरीयक-
मर्थान्तरम् । अतो विपर्यासनिरासविषयो ज्ञानव्यापारो वक्तव्यः,
167 - 1 न भावान्तरविषयः इति ; नेति दृष्टान्तमाह—तुलोन्नमनव्यापार इवेति।
167 - 2 अन्यविषयव्यापारादन्यविषयस्य नान्तरीयकसिद्धिं साधयति—तथा
ह्युन्नमनव्यापार इति । ननु व्यापार एवोभयविषय इत्युभयं विषयतयैव
167 - 4 सिध्यति, नान्यतरत् नान्तरीयकमिति ; नेत्याह— न चोन्नमन-
कारकस्येति ॥

भवतु शुक्तिब्रह्मात्मज्ञानाभ्यां रजतबन्धयोः नान्तरीयको
निरासः निरासप्रतिपत्तिस्तु कथम् ? इति ; सापि नान्तरीयकेत्याह—
167 - 6 तदेवं विपर्यासगृहीते वस्तुनीति । एवमिति । यथा निरासः तथा तत्प्रति-
167 - 7 पत्तिरपीत्यर्थः । अभिनयेन दर्शयति–नाहं कर्ता ब्रह्माहमिति। व्युत्क्रमेण

---

ता. प्रपञ्चावभासविरोधित्वाभावात् ' ब्रह्मास्मि ' इति ज्ञानस्य न विपर्यासनि-
वर्तकत्वमित्याशङ्कते—**ननु नेदमिति**। विरोधिभावान्तरज्ञानं विपर्यासनिवर्तक-
मिति दर्शयितुं मतभेदेन निवर्तकज्ञानद्वैविध्यमाह—**तत्र द्वे इति** ॥

तत्प्रतिभासो वेति द्वितीयं कल्पमुत्थापयति—**भवत्विति** । ननु
पुरोवादाभावे कथमनुवाद इत्याशङ्क्य सिद्धस्यार्थस्य प्रत्यायकत्वमेव अनुवादकत्वं

---

भा. न विरोधः, तस्याः स्वविषयनिष्ठातिशयजनकत्वादित्याह—**ननु सर्वो हि**
**व्यापार इत्यादिना** ॥

सम्बन्धः। ब्रह्माहमिति वाक्यार्थबोधे अहं ब्रह्मैव चेत् नाहं कर्ता इति नान्तरीयकबोधः। 'नेदं रजत'मित्यत्राप्येषैव योजना। ननु वाक्यमेव द्व्यर्थं किं न स्यात् ? इति ; नेत्याह—तस्माच्छुक्तिकेयमित्येव निराकाङ्क्षमिति। 167 - 8
अनुवाद इति। वाक्यार्थज्ञाननान्तरीयकसिद्धस्य अनुवाद इत्यर्थः। अर्था- 167 - 9
न्तरज्ञानेन अर्थान्तरज्ञानस्य नान्तरीयकप्रतिभासे दृष्टान्तमाह—अत एव 168 - 1
आख्यातपदस्येति। वाक्यार्थभूतक्रियावाचकत्वादाख्यातस्य वाक्यत्वम्। क्रियाज्ञानसामर्थ्यादेव सर्वसाधनानां विकल्पेन क्रियान्वयप्रतिपत्तौ पदान्तराण्यन्यतमनियमार्थानि, नित्यवदन्वयप्रतिपत्तौ अनुवादमुखेन अन्यनिवृत्त्यर्थानीत्यर्थः। सम्भवति च नित्यवदन्वयप्रतिपत्तिः, एकस्य
बहुसाधनतोपपत्तेः। तथा चाहुः—यजतिचोदनेत्यादि उदाहरणान्तरं 168 - 3
श्रुतार्थापत्त्यैव अर्थान्तरप्रतिपत्तौ। कथं द्रव्यदेवतयोः यागश्रुत्यन्य-
थानुपपत्तिगम्यतया यजत्यर्थता ? इत्याशङ्क्याह—कथं क्रियामात्र- 168 - 6
वाचिन इति॥

ननु यत्र विपर्यासगृहीतस्य वस्तुनो विरोधिभावान्तरात्मविषयं वाक्यं विपर्यासं निवर्तयति तत्र विपर्यासनिरासप्रतिपादने वाक्यस्य सामर्थ्याभावात् नान्तरीयकं निरासज्ञानमस्तु। यत्र पुनः प्रत्यक्षबाधकं

---

विवक्षितमित्याह—वाक्यार्थेति। विकल्पेन क्रियान्वयप्रतिपत्ताविति। ता.
अयमर्थः—गच्छतीत्युक्ते पद्भ्यां रथेन वेति गमनसाधनानां सामान्येनान्वयः प्रतीयत एवेति। एतावता कथं नान्तरीयकतया अन्यनिवृत्तिपरत्वम् ? इत्यत आह—नित्यवदिति। एकस्य कथमनेकैः नित्यवदन्वयप्रतिपत्तिः ? इत्यत आह—सम्भवति चेति। एकस्यैव भोजनस्य दधिघृतगुडाद्यनेकसाधनान्वयो दृश्यते इत्यर्थः॥

तत्र (नेत्रा) नञा विरहितवाक्यस्य नान्तरीयकतया अन्यनिरासकत्वमङ्गीकृत्य, प्रत्यक्षज्ञानस्य नान्तरीयकतया तन्निरासकत्वमनुपपन्नं प्रत्यक्षेणैव विरोध्यभावस्य विषयविशेषणतया विषयीकर्तुं शक्यत्वात् इति शङ्कते—नन्विति। तथापि अहं ब्रह्मास्मीति वाक्यज्ञानस्य किमायातम् ? इत्यत

तत्र विपर्यासनिरासविशिष्टभावान्तरज्ञानमेव बाधकम्। न तत्र विपर्यासनिरासस्य नान्तरीयकज्ञानम्। इहाप्यपरोक्षज्ञानात् बन्धनिवृत्तेः उभयविषयमेव ज्ञानम्, नान्यतरस्य नान्तरीयकता, इत्याशङ्क्याह—
169 - 1 प्रत्यक्षबाधस्यापीति। न तावदनुपलब्धिगम्यो रजताभावः; पुरोदेशे
169 - 1 दृश्यमानत्वात्। अथ संप्रयोगगम्य इति; नेत्याह—असंप्रयुक्तविषयत्वा-
169 - 2 दिति। रजततदभावौ न संप्रयोगयोग्यावित्यर्थः। तदेवमशाब्द इत्युपसंहारः स्पष्टार्थः॥

ननु ब्रह्मविद्याफलमनर्थहेतुनिरासः, न वेदान्तारम्भफलम्; तत्र
169 - 4-5 कथं प्रहाणाय वेदान्ताः? इत्याशङ्क्याह—चतुर्थीप्रयोगोऽपीति। उपादानं वेदान्तारम्भ इत्यर्थः। तर्हि ब्रह्मविद्याफलत्वात् शास्त्रस्य न अनर्थनिरासः प्रयोजनम्; न—परम्परयापि पुरुषाकाङ्क्षितप्रयोजनत्वोपपत्तेरित्याह—
169 - 5 प्रयोजनत्वं चेति। 'विद्याप्रतिपत्तये' इति प्रतिपत्तिशब्दमाक्षिपति—

---

ता. आह—इहापीति। किमनुपलब्धिगम्यो रजताभावः? किं वा प्रत्यक्षगम्यः? इति विकल्प्य, आद्यपक्षे दूषणमाह—न तावदिति। शुक्तिवदेवापरोक्षतया पुरोदेशे प्रतीयमानत्वम्, नानुपलब्धिगम्यत्वमित्यर्थः। द्वितीयं कल्पमुत्थाप्य दूषयति—अथेति। कल्पितरजतं तदभावश्च न कदाचिदपि पुरोदेशे संप्रयोगयोग्यौ, देशान्तरस्थं रजतमिह न निषिध्यते, तद्रजतं न भवतीत्यनिषेधात् इदं रजतं न भवतीत्येव निषेधादित्यर्थः॥

अनर्थहेतुनिवृत्तेः विद्याफलत्वात् न शास्त्रारम्भफलत्वमित्याक्षिप्य परिहरति—नन्वित्यादिना। शास्त्रारम्भसाध्यविद्यासाध्यत्वविवक्षया एतदुक्तमित्यर्थः। उक्तमेवार्थं स्पष्टीकर्तुं चोदयति—तर्हीति। परिहरति—न—परम्परयेति।

---

भा. यद्यपि ब्रह्मसाक्षात्कारोऽपि शाब्द एव। तथापि साक्षात्कारत्वसाम्येनाह—इहाप्यपरोक्षज्ञानादिति। रजतस्यार्थक्रियाऽयोग्यतया सम्प्रयोगानाश्रयतया तदभावस्यापि सम्प्रयोगायोग्यत्वात् न तस्येन्द्रियजन्यप्रत्यक्षविषयत्वमित्याह—रजततदभावाविति॥

विद्याप्रतिपत्तये इत्यत्र प्रतिपत्तिशब्देन न ज्ञानमुच्यते वैयर्थ्यात् तदर्थं यत्नान्तरानपेक्षणाच्चेति अवाप्तिरेव तदर्थ इति मत्वा आह—विद्याप्रतीति।

न हि विद्या गवादिवदिति । ज्ञानं हि वस्तुतः प्रतीतितश्च ज्ञातुरुत्पत्त्यैव 170 - 1
आप्तमेवेत्यर्थः । तत्र प्रत्यक्षान्तरेषु स्वविषयेण सह अपरोक्षावभासा विद्या भवति, आप्तिशब्देन च विषयेण सहापरोक्ष्यनिश्चयो विवक्ष्यते, तदिह
न संभवतीत्याह—सत्यमेवमन्यत्रेति । अत्र विद्येति शक्तितात्पर्यविचार- 170 - 3
सहकृताच्छब्दात् यत् प्रमाणज्ञानमुत्पद्यते तदभिधीयते, तस्य प्रतिष्ठा स्वविषयेण सह आपरोक्ष्यमिति। तत्र असम्भावनेति चित्तस्य ब्रह्मात्मपरिभावनाप्रचयनिमित्ततदेकाग्रवृत्त्ययोग्यतोच्यते । विपरीतभावनेति शरीराद्यध्याससंस्कारप्रचयः ॥

---

उत्पन्नाया अपि विद्याया विषयेण सहापरोक्ष्यं प्राप्तिः तदभावश्च अप्राप्तिरिति विशेषं दर्शयितुमाह—तत्रेति ॥ ता.

ननु विषयेण सह अपरोक्षैव विद्या विद्याशब्देन निर्दिष्टा तत् कथं प्राप्तिरुच्यते ? इत्याशङ्क्य, शाब्दज्ञानमेवात्र विद्याशब्देन निर्दिष्टमित्याह—अत्र विद्येति । टीकागतयोः असंभावनाविपरीतभावनाशब्दयोरर्थं दर्शयति—तत्रासम्भावनेति । परिभावनायाः प्रचयः प्रकर्षः तन्निमित्ता या चित्तस्यैकाग्रतया वृत्तिः तदयोग्यत्वं चित्तस्यासंभावना । ननु मरीचिफलमित्याप्तेनोक्तं निश्चिनोत्येवेति;

---

यद्यपि प्रथममेव शब्दादपरोक्षज्ञानमुत्पन्नम्, तथापि सत्तावधारणरूपमेव अपरोक्षज्ञानं पुरुषार्थसाधनम्, तच्च न प्रथममित्यभिप्रेत्याह—तत्रेति । अत्र विद्येति । यद्यपि साङ्गाध्ययनमात्रादुत्पन्नमेव अत्र विद्येति वक्तुमुचितम् । तस्यैव श्रवणमननादिना स्वविषये पुरुषे (तत्त्व)[प्रतिष्ठितत्व]साधनात् । न च शक्तितात्पर्यविचारात् पूर्वं ज्ञानमेव नेति वाच्यम् ; तथा सति ब्रह्मजिज्ञासाया असम्भवेन विचारस्यैवायोगात् विचारसहकृतशब्दान्निष्पन्नज्ञानदार्ढ्याय वेदान्तस्य उपनिषदः सूत्रात्मकशास्त्रस्य [च] आरम्भायोगात्[वेदान्ता आरभ्यन्ते] इत्यसङ्गतत्वात् । न हि तदर्थमुपनिषदध्ययनम् ; न वा चतुर्लक्षणी मीमांसा प्रारभ्यते । तथापि सत्तावधारणविद्यायाः करणकोटौ प्रवेशो विचारस्य अस्तीति पश्चादपि सन् तदुत्पत्तिहेतुः, इतरयोस्तु तदभावात् तदवाप्तिहेतुत्वमित्यभिप्रेत्य एवमुक्तमिति द्रष्टव्यम् ॥ भा.

ननु अपरोक्षावभासनिमित्तप्रमाणगृहीते वस्तुनि नोभयविध-
170 - 5 चित्तदोषात् अपरोक्षनिश्चयाभावदर्शनमस्तीति; तत्राह—तथा च
लोकेऽस्मिन् देशे काले इति। यथा दूरदेशवर्तिनि आर्द्रमरीचफलादौ
तथाविधवस्तुदर्शनसंस्कारशून्यतया विपरीतसंस्कारवत्तया च प्रत्यक्ष-
दृष्टेऽपि न निश्चिनोति, असम्भावितविशेषांशापरोक्षनिश्चयो नोत्पद्यते
इत्यर्थः। ननु प्रमाणादनिश्चीयमानः कथं तर्कप्रत्ययान्निश्चीयते? इति;
171 - 3 तत्राह—अत एव प्रमाणानामिति। प्रसिद्धैव सहकारिसंपत्तौ फलसिद्धि-
रित्यर्थः। ननु तर्कस्यापि प्रमाणत्वे कथं प्रमाणद्वयादर्थनिश्चयो भवति?
171 - 5 अप्रमाणत्वे न तरां इति मन्वान आह—अथ कोऽयमिति। अप्रमाणमपि
171 - 6 तर्कः सहकार्येव, प्रत्ययविशेषत्वादित्याह—प्रमाणशक्तिविषयतदिति।
तेषां तत्त्वं तदित्युच्यते। प्रमाणादितत्त्वे सम्भवासम्भवप्रत्ययः, तर्कः,
न निश्चयरूप इत्यर्थः॥

तत्रेदं निरूपितं प्रथमे तन्त्रे—ज्ञानानां प्रामाण्यमप्रामाण्यं च
स्वत इति केचित्। उभयमपि परत इत्यन्ये। प्रामाण्यं परतः अप्रामाण्यं
स्वत इत्यपरे। अप्रामण्यं परतः, स्वतः प्रामाण्यमिति वेदवादिनः।
तत्र न तावत् ज्ञानानां प्रामाण्यमप्रामाण्यं च स्वत इति युज्यते,

---

ता. तत्राह—असम्भावितेति। आर्द्रतादिविशिष्टमरीचफलत्वं नाम विशेषं न
निश्चिनोतीत्यर्थः। परिच्छेदशब्दस्यार्थमाह—(प्रत्ययेति) [प्रमाणादीति]॥

इतरसापेक्षस्य प्रमाणस्य निश्चायकत्वे अपसिद्धान्तः स्यादिति वक्तुं
मतभेदमाह—तत्रेदमिति। स्वतः इति साङ्ख्याः। उभयं परत इति
तार्किकाः। अप्रामाण्यं स्वतः प्रामाण्यं परत इति बौद्धाः। तत्र
साङ्ख्यमतं तावन्निराचष्टे—न तावदिति। एकसामग्रीप्रयोज्यतया एक-
स्याक्षिप्योक्तावुभयोरपि युगपद्विरुद्धयोर्वृत्तिप्रसङ्गादित्यर्थः। काचिदेव ज्ञान-

---

भा. तत्र न तावत् ज्ञानानामिति। उत्पत्तौ स्वतस्त्वं हि प्रामाण्यस्य
ज्ञानत्वसामान्यप्रयोजकप्रयोज्यत्वम्। तच्च यद्यप्रामाण्येऽप्यस्ति तर्हि सर्वं ज्ञानं
ज्ञानत्वसामान्यप्रयोजकप्रयोज्य(मित्यु) [प्रमित्यप्रमित्यु] भयात्मकं (न) स्यात्।
तच्च न सम्भवति विरोधादित्यर्थः॥

**विरोधात्। ननु व्यक्तिभेदेन व्यवस्था। सत्यमर्थतस्तथैव। प्रतीतितस्तु प्रमाणाप्रमाणप्रतिभासाविशेषात् कस्य किमित्यनवगमात् व्य-**

---

ता. सामग्री कस्यांचिदेव व्यक्तौ प्रमात्वं जनयति काचिदेव पुनः ज्ञानसामग्री कस्यांचिदेव व्यक्तौ अप्रमात्वं जनयतीति व्यवस्थेति शङ्कते—**नन्विति**। उत्पत्तिव्यवस्थामङ्गीकृत्य प्रतीतिव्यवस्थां दूषयति—**सत्यमिति**। ज्ञानत्वादेव प्रमाणमिति ज्ञातव्यम्, एवं ज्ञानत्वेनैव हेतुना अप्रामाण्यमपि ज्ञातव्यम्, इत्येकस्यामेव व्यक्तावुभयोरपि प्रतीतिप्रसङ्गात् इदं प्रमाणं इदं त्वप्रमाणमिति व्यवहारभेदो न सिध्येदित्यर्थः। उक्तञ्च वार्तिककारैः—

'बाह्यचिह्नानपेक्षत्वे किं क्वेति न निरूप्यते।'

---

भा. ननु प्रामाण्यस्य स्वतस्त्वे यथा व्यक्तिभेदेन प्रामाण्यतदभावव्यवस्था, एवं (विषयस्य) [अप्रामाण्यस्य] स्वतस्त्वेऽपि किं न स्यात्?। न चास्मत्पक्षे [अप्रामा]ण्यस्य दोषजन्यत्वात् दोषाजन्यज्ञानस्य नाप्रामाण्यं न वा दोषजन्यस्य प्रामाण्यमिति व्यवस्था युज्यत इति वाच्यम्; अप्रमायां प्रमात्वस्यानिवार्यत्वात्। दोषेण ज्ञानकारणानां प्रमाशक्तिप्रतिबन्धात् न सा प्रमेति चेत्, तर्हि दोषस्य अन्यथासिद्धत्वान्न अप्रमाकारणत्वमित्यप्रमास्वतस्त्वेऽपि नाव्यवस्थापत्तिः, दोषाभावश्च अप्रमाप्रतिबन्धक इति न दोषाजन्यज्ञानस्य अप्रमात्वमिति शङ्कते—**ननु व्यक्तीति**॥

व्यवस्थामङ्गीकृत्य सा अस्मदुक्तविधयैव भवति न त्वदुक्तरीत्या, इत्याह—**सत्यमर्थतस्तथैवेति**। दोषोत्कर्षे भ्रमोत्कर्षात् दोषस्य भ्रान्त्यादौ कारणत्वमवश्यं वाच्यम्। अकारणोत्कर्षात्तस्य तदयोगात्। अतोऽप्रमाया अतिरिक्तकारणजन्यत्वान्न स्वतस्त्वम्। न च तत्र तदभावः प्रतिबन्धकः; वक्ष्यमाणविधया दोषाभावस्यैव तत्रासम्भवादिति न तन्मते व्यवस्थेति भावः॥

(अप्रामाण्यस्य) [प्रामाण्याप्रामाण्योभयस्य]स्वतः प्रतीतिमपि दूषयति—**प्रतीतितस्त्विति**। **तुशब्दो**ऽप्यर्थः। प्रतीतिव्यवस्थापि न सम्भवतीति भावः। तत्र हेतुमाह—**प्रमाणेति**। दोषासहकृतज्ञानग्राहकसामग्रीग्राह्यत्वं

**वहाराभावप्रसङ्गात्। न च मूर्तामूर्तविभागवत् प्रमाणाप्रमाणविभागः प्रत्यक्षतोऽवभासते। अर्थतस्तु व्यक्तिभेदे न व्यवस्थीयते। नाप्युभयं परतः; प्रमाणाप्रमाणविभागहीनस्य ज्ञानस्य स्वरूपानवगमात्। नापि**

---

ता. इति। किमुपायान्तरेण, प्रत्यक्षेणोभयं व्यवस्थया(मित्य)गृह्यते इत्याशङ्क्याह **—न च मूर्तामूर्तेति**। तथा अनुपलब्धेः, उपलब्धौ वा प्रामाण्याप्रामाण्यविवादाभावप्रसङ्गादित्यर्थः। **नाप्युभयमिति**। प्रामाण्याप्रामाण्ययोः व्यतिरिक्तकारणकत्वे तदुभयस्वभावहीनं ज्ञानमात्रमुभयसामग्रीव्यतिरिक्तसामग्रीजन्यं प्रतीयेत। न चैवं सामग्रीत्रयं प्रतीयते इत्यर्थः। उक्तञ्च—

'स्वतस्तावत् द्वयं नास्ति विरोधात् परतोऽपि च।
निस्स्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते॥' इति॥

इदानीं किं प्रामाण्यं परतो ज्ञायते? किं वा जन्यते? इति विकल्प्य, आद्यं दूषयति

---

भा. हि ज्ञप्तौ प्रामाण्यस्य स्वतस्त्वम्। तच्चेदप्रामाण्यस्याप्यङ्गीक्रियते तर्हि सर्वं ज्ञानं प्रमाणतया अप्रमाणतया [च] ज्ञायेतेति, अशक्यत्वात्तथावगन्तुं किमपि ज्ञानं केनापि रूपेण न गृह्येतेति निष्कम्पप्रवृत्तिर्निवृत्तिर्वा क्वापि न स्यादिति भावः। ननु यत्र प्रामाण्यमप्रामाण्यं च वर्तते तत्र स्वतः प्रतीयत इति किमिति न निष्कम्पप्रवृत्तिः निवृत्तिर्वा इत्याशङ्क्य, तयोर्वस्तुतो व्यवस्थामङ्गीकृत्य प्रामाण्याप्रामाण्ययोः प्रत्यक्षानुभवो नास्तीत्याह—**न च मूर्तामूर्तेति**। अन्यथा भ्रान्तेः प्रवृत्तिः न स्यादित्यर्थः। इदानीमङ्गीकृतां व्यवस्थां परित्यजति—**अर्थत इति**। तुशब्दोऽप्यर्थः। **व्यक्तिभेदे** इति छेदः। एतेन अप्रामाण्यमेव स्वत इति पक्षो निराकृतो वेदितव्यः॥

वैशेषिकादिमतं दूषयति—**नापीति**। दोषाजन्यज्ञानस्य नियमेन प्रमात्वदर्शनेन प्रमायाः भ्रमाजनककारणजन्यत्वं नास्ति प्रमाणाभावादित्यर्थः। एतदुक्तं भवति—रज्ज्वादिप्रमा हि न सर्पादिभ्रमाजनककारणजन्या, आत्ममनइन्द्रियार्थसम्बन्धानां भ्रान्तिसाधारणत्वात्। तेषां रज्ज्वादिप्रमा(याः)[मात्रस्य] अजनकत्वात्। न च विशेषणप्रमा तत्र अधिकं कारणम्, तस्याः

प्रमामात्राहेतुत्वात् विशेषणस्मरणस्य भ्रमप्रमासाधारणत्वात्। न च विशेषणेन्द्रियसन्निकर्ष एव तत्र अधिको हेतुः। इन्द्रियजन्यप्रत्यक्षमात्रे तद्धेतुत्वोपपादनात्। न च संयुक्तसमवायः प्रमायामेव कारणमिति वाच्यम्; तस्यापि विशेषणसन्निकर्षत्वेनैव हेतुत्वात्, सुरभि चन्दनमित्यादिज्ञाने तदभावात्, धर्म्यंशप्रमायां तदसत्त्वाच्च ॥ भा.

न च तत्र विषय एव अधिकं कारणं भ्रमस्य विषयाजन्यत्वादिति वाच्यम्; इन्द्रियार्थसंयोगजन्यभ्रमस्य विषयजन्यत्वनियमात्। अन्यथा प्रमायामप्यर्थो न हेतुः स्यात्। सौरभ्यांशे तदभावाच्च। न च दोषाभावस्तत्राधिको हेतुरिति वाच्यम्; धर्म्यंशे भ्रान्तेः कुत्राप्यभावेन तन्निरूपितदोषस्याप्यसत्त्वेन तदभावासम्भवात्। विशे(ष्यां)[षणां]शनिरूपितदोषस्य च तत्राभावाभावात्। न च धर्म्यंशज्ञाने प्रतिबन्धकरागादिर्दोषोऽस्त्विति वाच्यम्; परमते प्रतिबन्धकाभावस्य कार्यमात्रहेतुत्वे तत्र प्रमाऽसाधारणकारणत्वाभावात्। वस्तुतस्तु तस्य कुत्राप्यहेतुत्वात्। तस्मान्न प्रमाया अप्रमाऽजनकहेतुः सम्भवति ॥

नापि तत्र प्रमाणदोषोत्कर्षानुविधायिन्यामप्रमायामिव दोषस्य प्रमायां कस्यचिद्विशेषहेतोः [कारणत्वम्], अन्वयव्यतिरेकाभावात्। न च भ्रान्तिवैजात्यार्थमतिरिक्तकारणजन्यत्वं कल्प्यत इति वाच्यम्; जातिरूपवैजात्यस्यैव कारणवैजात्यप्रयोज्यत्वात्। कारणवैजात्येऽपि ध्वंसे वैजात्याभाववदौपाधिकवैलक्षण्यस्य तेन विनाप्युपपत्तेः। अर्थसत्त्वासत्त्वप्रयुक्ततया प्रामाण्याप्रामाण्ययोः कारणवैजात्यानपेक्षणात्। अन्यथा पराभिमतेश्वरज्ञानस्य सदसद्विषयत्वं न स्यात्। भ्रान्तेर्विलक्षणकारणजन्यत्वेन प्रमावैजात्ये तस्या अपि ततः कारणभेदं विनापि वैलक्षण्यापत्तेश्च ॥

ज्ञानवैलक्षण्यं प्रमायां कथम्? इति चेत्, किं तस्याः ज्ञानव्यक्तिभेदे निमित्तं पृच्छ्यते? उत तस्याः ज्ञानत्वप्र(युक्त)[मात्व]रूपधर्मद्वये?। नाद्यः, तदभावात्। न द्वितीयः, न हि कार्यवृत्तिधर्माणां कारणप्रयोज्यत्वनियमोऽस्ति। प्रमेयत्वाभिधेयत्वादौ तदभावात्। न च कार्यमात्रवृत्तिधर्माणां तदस्तीति वाच्यम्; घटत्वकम्बुग्रीवत्वयोस्तददर्शनात्। न च सामान्यविशेषभूतकार्यधर्माणां

**प्रामाण्यमर्थपरिच्छेदसामर्थ्यं कारणगुणज्ञानात् परतोऽवगम्यते ।**

---

ता. —**नापि प्रामाण्यमिति ।** कारणगुणज्ञानस्यापि कारणगुणज्ञानान्तरापेक्षया प्रामाण्यमवधारणीयमित्यनवस्था । न च कारणगुणज्ञानस्य प्रामाण्यानिश्चयेऽपि प्रथमज्ञानप्रामाण्यव्यवहारहेतुत्वात् न अनवस्थेति वाच्यम् ; तथा सत्याद्यज्ञानस्यापि तथैव स्वविषयव्यवहारहेतुत्वेन कारणगुणज्ञानानपेक्षत्वप्रसङ्गादित्यर्थः ।

---

भा. पृथक् प्रयोजकापेक्षा अन्यथा धर्मद्वयस्य तुल्यव्यक्तिकत्वा(भावा) [पाता]दिति वाच्यम् ; अनित्यप्रमेयत्वाभिधेयत्वयोस्तदभावात् । ज्ञानकारणानां दोषेण प्रमोत्पत्तिप्रतिबन्धकत्वेऽपि अप्रमात्वाश्रयज्ञानस्य प्रतिबन्धकाभावात् तत उत्पत्तौ प्रमाविलक्षणज्ञानसम्भवेन प्रयोजकभेदकल्पनायोगात् । अत एव—अप्रमापि प्रमैव स्यादिति प्रत्युक्तम् । दोषस्य भ्रान्तिमात्रहेतुत्वात् प्रमाप्रतिबन्धकत्वाच्च । एतेन—दोषाभावः प्रतिबन्धकाभावत्वेन प्रमायामेव हेतुश्चेद्गुणाभावोऽपि तत्त्वेनाप्रमायां (न) हेतुः स्यादिति प्रत्युक्तम् । धर्म्यंशप्रमायां भ्रान्त्यजन(का)-[क]भावरूपगुणस्य कस्यचिदभावात् दोषाभावस्याप्यसम्भवादित्युक्तम् । अतः प्रामाण्यस्योत्पत्तौ स्वतस्त्वमेवेति ॥

नापि प्रामाण्यं परतो ज्ञायते । तत्र किं गुणजन्यत्वेन ज्ञानस्य प्रामाण्यमनुभूयते ? समर्थप्रवृत्तिजनकत्वेन वा ?। नाद्यः, इत्याह—**नापि प्रामाण्यमिति । अर्थपरिच्छेदसामर्थ्यमिति ।** अर्थसत्तानिश्चयप्रयोजकं यथार्थज्ञानत्वमिति यावत् । प्रामाण्यसंशयव्यतिरेकनिश्चयदशायां न निष्कम्पप्रवृत्तिरिति प्रामाण्यनिश्चयस्तद्धेतुः । स च न साक्षात्, भिन्नविषयत्वात् । किन्तु अर्थसत्तानिश्चयद्वारा । तन्निश्चयश्च यदि प्रामाण्यनिश्चयं विनापि भवेत् तर्हि न (तत्त)[स त]स्य द्वारमिति नियमेन स तत्साध्यः । एवं प्रामाण्यसंशयादिदशायां तस्याभावादपि प्रवृत्ति(रेव)[रिव] सोऽपि तत्साध्य एव । न च प्रामाण्यनिश्चय एवार्थनिश्चय इति स न तत्प्रयोजक इति वाच्यम् ; घटत्ववति तत्प्रकारक(त्वे सति तत्प्रकार)[त्वरूपप्रामाण्य]निश्चयात् तत्प्रकारकसत्तानिश्चयस्यान्यत्वात् । ततश्च प्रामाण्यलिङ्गसत्तानिश्चयस्य प्रामाण्यनिश्चयाधीनत्वात् । एवं तत्तल्लिङ्गप्रामाण्यनिश्चयात्तत्तल्लिङ्गस्य सत्तानिश्चय इत्यनवस्था । एतेन—अप्रा-

**अनवस्थापातात्। नापि ज्ञानकारणव्यतिरिक्तात् कारणात् प्रामाण्यं जन्यते ; क्षणमात्रापवर्गिणि ज्ञाने तदयोगात्। प्रतिभासतो भ्रान्तिसम्यग्ज्ञानयोः विशेषाभावे चक्षुरादिगुणजन्यत्वावगमात् प्राक् प्रामाण्यनिश्चयाभावात् व्यवहाराभावप्रसङ्गात्। प्रामाण्यनिमित्तचक्षुरादिगुणज्ञानस्यापि गुणान्तरजन्यत्वावगममन्तरेण प्रामाण्यनिश्चयनिमित्तत्वायोगात्। प्रतिभासतो भ्रान्तेरविशेषात् स्वतो गुणजन्यत्वानिश्चयात्। ज्ञानस्य गुणान्वयव्यतिरेकयोश्च प्रामाण्यप्रतिबन्धकदोषाभावविषयतया अन्यथासिद्धत्वात्। दोषनिवृत्तिव्यतिरेकेणेन्द्रियादिषु गुणादर्शनाच्च।**

---

द्वितीयं कल्पं दूषयति—**नापि ज्ञानेति**। धर्मधर्मिणोर्यौगपद्यायोगादुत्तरकालं प्रामाण्यं जायते इति वक्तव्यम्, तच्च न सम्भवति, ज्ञानस्य क्षणिकत्वात्। न च द्वित्रिक्षणावस्थायित्वान्न दोषः, कार्यसमवायित्वे द्रव्यत्वप्रसङ्गादित्यर्थः। प्रामाण्यं परतो ज्ञायते इति पक्षे दूषणान्तरमाह—**प्रतिभासत इति**। अस्तु तर्हि गुणजन्यत्वनिश्चयादेव व्यवहार इति ; तत्राह—**प्रामाण्यनिमित्तेति**। आद्यज्ञानेनैव स्वगुणजन्यत्वं किमिति न निश्चीयते? इत्याशङ्क्य, मैवम्—तस्य घटादिविषयत्वेन तद्विषयत्वायोगादिति परिहरति—**स्वत इति**। प्रामाण्यस्य गुणजन्यत्वाभावे कथं गुणान्वयव्यतिरेकौ? इत्यत आह—**ज्ञानस्येति**। दोषनिवृत्तिव्यतिरेकेण गुणोऽपि न दृश्यते इत्याह—**दोषनिवृत्तीति**। अस्तु वा ता.

---

माण्याशङ्कायां सत्यां तन्निवृत्तये प्रामाण्य[निश्चयापेक्षा] नान्यत्रेति क अनवस्थेति प्रत्युक्तम्, उक्तविधया सत्तानिश्चयेन निष्कम्पप्रवृत्ता(विव) [वेव] प्रामाण्यनिश्चयस्य हेतुत्वादित्यभिप्रेत्याह—**अनवस्थापातादिति**। गुणजन्यत्वहेतोः स्वरूपासिद्धिं चाह—**नापीति**। वर्णितविधया तस्यासम्भवादित्यर्थः॥ भा.

प्रमायां प्रामाण्यस्य जन्यत्ववादिनं प्रत्याह—**क्षणेति**। विनश्यदवस्थे (य....मान्तरो) [प्रामाण्यो]त्पत्त्यविरोधश्चेत् ज्ञानस्यापि समवायिकारणतया द्रव्यत्वापत्तिरिति द्रष्टव्यम्। प्रवृत्तेः पूर्वं ज्ञानस्य गुणजन्यत्वनिश्चयाभावादज्ञानासिद्धिमपि हेतोराह—**प्रतिभासत इति**। पूर्वं सूचितानवस्थाप्रकारमाह—**प्रामाण्यनिमित्तेति**॥

अन्यतोऽपि प्रामाण्यस्य ज्ञानेन सह जन्म[न सम्भवति]भावः। अर्थक्रियासंवादज्ञानात् प्रामाण्यनिश्चयेऽपि तुल्योऽनवस्थादिदोषः। साधनज्ञानानामेव अर्थक्रियासंवादात् प्रामाण्यं न फलज्ञानानाम्, अर्थक्रियान्तराभावात्, अतो नानवस्थेति चेत्, तद्वदेव साधनज्ञानानामपि तत स्वत एव स्यात्। अन्यथा प्रवृत्तस्य अर्थक्रियातः प्रामाण्यम्, प्रामाण्याच्च प्रवृत्तिः, इति इतरेतराश्रयत्वं स्यात्। न च प्रामाण्यनिश्चयाय प्रवृत्तिः। असन्दिग्धार्थत्वात् ज्ञानानाम्। रूपकपरीक्षादौ प्रत्ययचतुष्टयात् दृश्यते

---

ता. कारणगतः कश्चित् गुणः, तथापि तज्जन्यत्वं प्रामाण्यस्यानुपपन्नमित्याह—अन्यतोऽपीति। धर्मधर्मिणोः युगपज्जन्मायोगात्, ज्ञानस्य क्षणिकत्वेनोत्तरकालं तत्र प्रामाण्यजन्मायोगात्, द्वित्रिक्षणावस्थायित्वेऽपि कार्यसमवायितया ज्ञानस्य द्रव्यत्वप्रसङ्गात्, प्रामाण्यं जातिरित्यङ्गीकारे च जातेः नित्यतया जन्यत्वायोगात्, उपाधित्वेऽपि चाबाधितत्वे सति ज्ञानत्वसमवायस्याजन्यत्वाच्चेति भावः। उक्तं न्यायमन्यत्राप्यतिदिशति—अर्थक्रियेति। दण्डोदकादिक्रियासाधनज्ञानानामेव परतः प्रामाण्यम्, नतु घटजन्म(क्ल)[तृ]प्त्यादिफलविषयाणामिति शङ्कते—साधनेति। साधनज्ञानानि स्वतः प्रमाणानि ज्ञानत्वात् फलज्ञानवत् इत्यनुमानप्रसक्तेः इति परिहरति—तद्वदेवेति। विपक्षे बाधकतर्कमाह—अन्यथेति॥

ननु प्रामाण्यनिश्चयात् न प्रवृत्तिः किन्तु प्रामाण्यनिश्चयार्थमित्याशङ्क्याह—न चेति। अभ्यस्तविषयज्ञाने(ति) सन्देहस्यैवाभावादित्यर्थः। क्वचि(दसिद्धार्थं न) [दसन्दिग्धार्थत्वं न] दृश्यत इति शङ्कते—रूपकेति। स्वतो निश्चायकस्यैव प्रथमज्ञानस्य कुतश्चिदप्रामाण्यशङ्कायां तन्निरासायैवोत्तरज्ञानानि

---

ता. अन्यथापीति [अन्यतोऽपीति]। दोषाभावस्यापि धर्म्यंशप्रमादावसम्भवात्। सम्भावितस्थलेऽपि प्रतिबन्धकाभावतया तस्याहेतुत्वात्। प्रामाण्यस्य ज्ञानेन सह जन्मापि—प्रमात्वाकारेण ज्ञानजन्मापि अन्यतो न सम्भवतीत्यसिद्ध एवायं हेतुरित्यर्थः। द्वितीयं दूषयति—अर्थक्रियेति॥

ननु ज्ञानप्रामाण्यस्य यावत्तद्ग्राहकसामग्रीग्राह्यत्वाङ्गीकारे अनभ्यास-

अर्थनिश्चय इति चेत्, न—प्रथमज्ञानस्यैव संशयादिप्रतिबन्धनिरासित्वादुत्तरज्ञानानाम्। तस्मात् ज्ञानोत्पत्तिमात्रप्रयुक्तार्थव्यवहारदर्शनात् प्रतीतितोऽर्थतश्च स्वत एव अर्थनिश्चयः प्रामाण्यम्, अप्रामाण्यंजन्म दोषसहितात् कारणात् तत्प्रतीतिः बाधादिति परत एव अप्रामाण्यं युक्तम्। न च अप्रामाण्यस्य परतो जन्म संभवति, प्रामाण्यप्रागभावत्वादिति चेत्, न—अज्ञानसंशयमिथ्यात्वानामप्रामाण्यानां भावरूपत्वात्। ननु स्वतःप्रमाणस्य कथं परतोऽप्रामाण्यं [स्वभाव] विरोधात् इति चेत्, दोष-

---

ता. न तु प्रामाण्यनिश्चयायेति परिहरति—**न प्रथमेति**। अर्थनिश्चय एव प्रामाण्यं तच्च स्वतः, इति योजना। अभावत्वमसिद्धमिति परिहरति—**न—अज्ञानेति**। अत्र अज्ञानशब्देन अन्यवस्तुविज्ञानमभिप्रेतम्, 'आत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि' इति वार्तिककारैरुक्तत्वात्। यदा पुनरात्मनोऽपरिणाम एवाज्ञानं तदा तस्याजन्यत्वेऽपि इतरयोः जन्यत्वमस्तीति भावः। उक्तञ्च भट्टपादैः—

'अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः।
वस्तुत्वात् द्विविधस्यात्र सम्भवो दुष्टकारणात्॥
अविज्ञाने तु दोषाणां व्यापारो नैव विद्यते।' इति।

**विरोधादिति**। स्वभावविरोधादित्यर्थः। प्रतिबन्धवशात् स्वभाववैपरीत्यस्यापि दृष्टत्वादिति परिहरति—**दोषेति**। स्वतः स्फोटादिजननसमर्थस्यापि वह्नेः मन्त्रादिप्रतिबन्धवशात् तद्विपरीतकार्यकरत्वं दृश्यते इत्यर्थः। सति ज्ञानोदये सर्वेषां

---

भा. दशायां ज्ञानप्रामाण्यसंशयो न स्यात्, निश्चिते संशयायोगात्। अनिश्चिते वा किं नाम स्वतस्त्वम्? इति चेत्, मैवम्—गृह्यत एव तत्रापि प्रामाण्यम्। परन्तु दोषात्तज्ज्ञानं सत्तानवधारणं भवति। न हि ज्ञानमात्रं संशयविरोधि, संशयधाराऽभावप्रसङ्गात्। निश्चयत्वं च न जातिः, संशयस्यापि धर्म्यंशज्ञानांशे निश्चयत्वात्, अव्याप्यवृत्तिजात्यनभ्युपगमात्, अनभ्यासदशापन्नदेशादौ ज्ञायमाने संशयाभावप्रसङ्गाच्च॥

**प्रतिबन्धबलात् अग्नेरिव शैत्यस्पर्शो न विरुध्यते। स्वतःप्रामाण्यादेव च यावद्दोषावगमं ज्ञानादेव व्यवहारदर्शनम्। तस्मात् प्रामाण्यतत्प्रतीत्योः गुणतज्ज्ञानान्तराद्यनपेक्षमेव ज्ञानं स्वतः सत्तयैव निश्चयव्यवहारनिमित्तमिति स्थापितम्। तदेतद्विरुध्यते तर्कप्रत्ययापेक्षया ज्ञानस्य स्वविषयं प्रति निश्चायकत्वे इति चोदयति–** नन्वेवं तर्कसापेक्षं
171 - 7
172 - 1 स्वमर्थमिति। **परिहरति—**न स्यात् स्वमहिम्नैवेत्यादिना। **प्रमाणादेव अर्थापरोक्ष्यनिश्चये तत्प्रतिबन्धविगमे तर्कस्य उपयोगात् नार्थनिर्णयहेतुतेत्युक्तम्॥**

**ननु एवं बहिरर्थे प्रमाणप्रतिबन्धसम्भवात् तद्विगमाय भवतु तर्कोपकारः, न तथा आत्मनि स्वयंप्रकाशे, प्रतिबन्धाभावादिति; तत्राह–** असम्भावयन्निति आपरोक्ष्याभाव
172 - 4-5 तथा च तत्त्वमसिवाक्ये त्वम्पदार्थः इति।

---

ता. निश्शङ्कव्यापारदर्शनादपि स्वत एव प्रामाण्यमवसीयते इत्याह— **स्वतः प्रामाण्यादिति।** इदानीमुपसंहारव्याजेनोक्तार्थस्य प्रकृतोपयोगमाह–**तस्मादिति॥**

---

भा. न च तत्र प्रामाण्यसंशयादेव संशय इति वाच्यम्; एककोटिकज्ञानमात्रस्य निश्चयत्वेन संशयविरोधित्वे तत्र वैशिष्ट्यसंशयायोगेन जलत्वप्रकारकत्वेन निश्चिते ज्ञाने जले जलत्ववैशिष्ट्यसंशयपर्यवसन्नप्रामाण्यसंशयायोगात्। न हि भवति–जलमेवेदम्, तस्मिन् जलज्ञानं जलत्ववति तदभाववति वेति संशयः। अतः संशयविरोधिस्वरूपविशेषज्ञानमेव निश्चय इति ज्ञायमानेऽपि प्रामाण्ये अर्थ इव संशय उपपद्यत इति न तस्य स्वाश्रयग्राहकसाक्षिग्राह्यत्वं विरुध्यते। प्रतिबन्धके तु निवृत्ते स्वयमेव ज्ञानं प्रामाण्यांशे सत्तानिश्चय इति न तस्यान्यापेक्षा। तस्मात् प्रामाण्यस्य स्वत एवोत्पत्तौ स्वाश्रयग्राहकसाक्षिभास्यत्वे च बाधकाभावात् अन्यथा प्रवृत्त्यनुपपत्तेश्च प्रामाण्यं स्वत एव जायते गृह्यते च अप्रामाण्यं तु विपरीतमित्युपसंहरति—**तस्मात् प्रामाण्यतत्प्रतीत्योरिति॥**

एवं प्रथममेवापाततः साक्षात्कारोत्पत्तावपि श्रवणमननादिभिः प्रतिबन्धनिवृत्तौ वेदान्तवाक्यात् सत्तानिर्णयरूपापरोक्षविद्योत्पत्तिः विद्याप्रतिपत्तये

उच्यते। विपरीतमिति च पारोक्ष्यमुच्यते। 172 - 5

**अत्रायमाशयः—लोके तावद्विषयस्यापरोक्षता संविदभेदाद्वा विषयस्याव्यवधानतया स्वसंविज्जनकत्वाद्वा प्रमाणकारणेन्द्रियसम्प्रयुक्तत्वाद्वा भवति; उक्तकारणत्रयहीने अनुमेयादौ परोक्षतादर्शनात्।**

---

शब्दस्य परोक्षज्ञानजनकत्वात् अपरोक्षज्ञानजनकत्वप्राप्त्यभावात् कथं तस्य आत्मनि अपरोक्षज्ञानजनकत्वमुच्यते? इत्याशङ्क्य, तदुपपादयितुमपरोक्षज्ञानसामग्रीं तावद्दर्शयति—**लोके तावदिति।** **संविदभेदा**दिति भाट्टवेदान्तिनोर्मतमाश्रित्योक्तम्। **अव्यवधानतयेति** पदं ज्ञानव्यवधानेन संविज्जनकेन्द्रियसंस्कारादिव्यावृत्त्यर्थम्। तार्किकमतमवलम्ब्याह—**प्रमाणेति।** व्यतिरेकमुखेनैतत् साधयति—**उक्तेति।** ता.

---

इति भाष्यार्थः इत्युक्तम्। तत्र वेदान्तात् कथमपरोक्षज्ञानम्, शब्दस्य ज्योतिष्टोमादिवाक्यवल्लौकिकवाक्यवच्च परोक्षज्ञानजनकत्वादित्याशङ्क्याह—**अत्रायमाशय इति।** इन्द्रियस्य यथा अपरोक्षज्ञानजनकत्वं एवं शब्दस्यापि तदविरुद्धम्, अपरोक्षार्थविषयत्वस्य शाब्दज्ञानेऽपि सत्त्वादित्यभिप्रेत्याह—**लोके तावदिति।** परमत आह—**अव्यवधानतयेति।** विषयतया [विषयस्य] स्वज्ञानजनकत्वादित्यर्थः॥ भा.

एतदुक्तं भवति—अस्ति हि प्रत्यक्षानुभवविषयत्वे समानेऽपि इन्द्रियजन्ये व्यवहितवन्ह्यादिगोचरे लिङ्गादिजन्ये च ज्ञाने परोक्षत्वापरोक्षत्वव्यवहारो वृद्धानाम्। तत्रापरोक्षत्वं किं करणस्वभाव(कृतं)[प्रयुक्तम्?] विषयस्वभावप्रयुक्तं वा?। करणस्वभावप्रयुक्तमेव? इत्यन्ये। विषयस्वभावसिद्धमेवेति सिद्धान्तः। तथा हि—न तावदिन्द्रियजन्यज्ञानत्वमपरोक्षत्वम्, अनुमितावपि मनइन्द्रियजन्यत्वात्। सिद्धान्ते अहङ्कारतद्धर्मप्रत्यक्षे तदभावात्। अत एव—इन्द्रियत्वेन तज्जन्यज्ञानमपरोक्षं अनुमित्यादौ च न मनस्तथा जनकं इति प्रत्युक्तम्। इच्छादिप्रत्यक्षे शुक्तिरूप्यादिप्रत्यक्षे च तदभावात्। मनसः प्रमाणत्वे प्रमाणान्तरसहकारित्वायोगेन इच्छादिग्राहकप्रमाणाभावाच्च। न हि प्रमाणं प्रमाणान्तरसहकारि दृष्टम्॥

भा. किञ्च, इन्द्रियत्वं न तावज्जातिः; तेजस्त्वादिना साङ्कर्यात्। किन्तु स्मृत्यजनकज्ञानजनकमनस्संयोगाश्रयत्वमेव। न च मनसि मनस्संयोगोऽस्ति; आत्माश्रयात्। न वा तेन रूपेण मनआदि कारणम्; तत्र प्रमाणाभावात्। नाप्यर्थजन्यज्ञानं अपरोक्षम्; साक्षात्कारत्वस्य कारणस्वभावप्रयुक्तत्वविरोधात्, आत्मानुमित्यादौ तत्प्रसङ्गात्, सिद्धान्ते सुखादिसाक्षिण्यसम्भावाच्च। अत एव—अर्थत्वेन अर्थजन्यं ज्ञानमपरोक्षमिति निरस्तम्। अर्थत्वस्य विषयत्वस्य वा अतिप्रसक्तस्य विषये ज्ञानजनकतानवच्छेदकत्वात्। विषयत्वस्य ज्ञानकालमात्रे वर्तमानस्य तत्पूर्वभाविजनकतानवच्छेदकत्वाच्च ॥

उभयमप्येतल्लक्षणं पराभिमतेश्वरप्रत्यक्षेऽव्याप्तम्। न च जन्यप्रत्यक्षस्यैव एतल्लक्षणम्। तदन्यस्य सामान्यलक्षणस्याभावात्। न च ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्, मनःकरणकानुमितावतिव्याप्तेः। न च तत्र परामर्शो व्याप्तिस्मृतिर्वा करणमिति न मनः करणमिति वाच्यम्; व्यापाराभावेन परामर्शस्याकरणत्वात्। स्मरणरूपपरामर्शात् व्यभिचाराभावादिविषयसमूहालम्बनस्मरणोत्पन्नपरामर्शाद्वा अनुमितौ तदतिरिक्तव्याप्तिज्ञानाभावाच्च। धारावाहिकतृतीयादिप्रत्यक्षे विशेषण-ज्ञानतया प्रथमादिज्ञानजन्ये जानामीति ज्ञाने च व्यवसायप्रथमानुव्यवसाय-जन्ये अव्याप्तिः। न च स्मरणादप्यनुव्यवसायसम्भवान्न प्रथमानुव्यवसायनियम इति वाच्यम्; विशेषप्रकारानुव्यवसाये तदसम्भवात्। प्रथमविशिष्टज्ञाने जन्मान्तरस्मरणकल्पने तव निर्विकल्पकासिद्धिश्च। परमते [तत्तांश]प्रत्यक्षे अव्याप्तेश्च। तत्र पूर्वानुभवस्य संस्कारद्वारा करणत्वात् ॥

ननु तत्र तत्तास्मृतिरेव कारणम्, अन्यथा तत्तांशे स्मृतित्वापत्तेः संस्कारजन्यत्वस्यैव लाघवेन तत्प्रयोजकतया संस्कारमात्रजन्यत्वस्य गौरवेण तदप्रयोजकत्वादिति चेत्, न—दोषतया विपरीतसंस्कार[जन्य]भ्रमे स्मृति-त्वाभावेन संस्कारत्वेन तज्जन्यज्ञानत्वस्यैव स्मृतित्वप्रयोजकत्वात्। प्रत्यभिज्ञायां च संस्कारः प्रत्यासत्तित्वेनैव कारणमिति न तस्याः स्मृतित्वम्। असन्मते तु तदंशे स्मृतित्वेऽपि न हानिः। साक्षात्करोमीत्य[न]नुभवात्। अतस्तत्रानु-भूयमानमपि न ज्ञानान्तरं कल्पनीयमिति पूर्वानुभव एव करणम्। न च विशिष्टज्ञानस्याव्यवहितविशेषणज्ञानजन्यत्वनियमात् मध्ये स्मृतिरिति वाच्यम्;

विशेषणज्ञानस्यैवाहेतुत्वात्। लाघवेन विशेषणज्ञानत्वेनैव तस्य हेतुत्व-सम्भवाच्च। स्मृतौ व्यभिचारेण विशिष्टज्ञाने तन्नियमाभावाच्च ॥ भा.

किञ्च, अनुभूते[ष्टज्ञाने] प्रत्यभिज्ञानमिति तत्रान्वयव्यतिरेकाभ्या-मनुभवस्य तत्कारणत्वे सिद्धे संस्कारो द्वारं कल्प्यत इति याग इव स्वर्गे प्रत्यभिज्ञायां पूर्वानुभवः करणम्। नापि साक्षात्कारत्वं जातिः, सुखादिप्रत्यक्षस्य साक्षिण एकतया जात्यनाश्रयत्वात्। जात्याश्रयप्रत्यक्षवृत्तेस्तत्राभावात्। प्रत्यभिज्ञायाः तत्तांशे इन्द्रियसन्निकर्षाभावेन तदजन्यतया तस्याप्रत्यक्षत्वेन अव्याप्यवृत्तित्वाच्च। निश्चयत्वेन साङ्कर्यप्रसङ्गाच्च। न च निश्चयत्वं जातिः, वैपरीत्यापत्तेः। भूतत्वमूर्तत्ववत् उभयस्याप्यजातित्वात् ॥

किञ्चैवं घटादौ परमाण्वादिविलक्षणमपरोक्षत्वं न स्यात्। अपरोक्षत्व-जातिमज्ज्ञानविषयत्वस्य तव मते कालान्तरीयघटपरमाण्वोः सन्निकृष्टघटेन तुल्यत्वात्। लौकिकप्रत्यक्षविषयत्वं ततो विशेष इति चेत्, तद्धि न तावज्जातिः, प्रत्यभिज्ञाभावप्रत्यक्षादावव्याप्यवृत्तेः। नापि [अ]लौकिकप्रत्यक्षान्यत्वम्, तव अव्याप्यवृत्तिभेदाभावेन प्रत्यभिज्ञादौ धर्म्यंशे [च तदभावप्रसङ्गात्।] नापि संयोगादिषडन्यप्रत्यासत्त्यजन्यत्वम्, तत्तांशप्रत्यक्षादेरपि [विशेष्य]-संयोगजन्यत्वात्। अव्याप्यवृत्तिभेदाभावे विरुद्धधर्मद्वयस्य एकस्मिन्नसम्भ-वाच्च। शुक्तिरजतस्वप्नादिप्रत्यक्षस्य त्वन्मते अलौकिकतया तद्विषयस्य परमा-ण्वादेरिव साक्षात्करोमीत्य[न]नुभवप्रसङ्गाच्च ॥

तस्मान्नापरोक्षत्वं करणप्रयुक्तं जातिर्वा, किन्त्वपरोक्षार्थविषयत्वमेव। अर्थस्य घटादेश्चानपरोक्षस्वभावस्याप्यपरोक्षसंवित्तादात्म्यादपरोक्षत्वम्। 'यत्सा-क्षादपरोक्षात्' इति श्रुतेः संविदोऽपरोक्षस्वभावत्वात्। संविदिति चात्राभि-व्यक्तचैतन्यमेव विवक्षितम्; न तु चैतन्यमात्रम्। अत एव व्यवहित-घटादेस्तदभेदेऽपि नापरोक्षत्वम्। धर्मादेरप्यनुद्भूतस्वरूपतया नापरोक्षत्वम्। विषयविशेषस्वरूपानुसरणं तु परेषामप्यस्त्येव। अन्यथा सुखादे[रिव धर्मा]-देरपि स्वविषयप्रत्यक्षजनकत्वापत्तेः ॥

तस्मा[द्यथा अना]त्मसत्ताव्यवहारः कल्पिततादात्म्यात् भवन् आत्मा-

**तत्र ब्रह्मण एव सर्वसंविदुपादानत्वात् ब्रह्माकारशब्दप्रमाणजन्यसंवेदनेऽपि**

---

ता. भवतु लोके तथा, ब्रह्मणि तु कथम्? इत्याशङ्क्याह—**तत्रेति**। घटादिसंविदा-

---

भा. नमेव सद्रूपं विषयीकरोति, एवं तेषां स्वरूपविशेष[तादात्म्य]वताम-
परोक्षत्वव्यवहारोऽपि। आत्मनि तु सत्ताव्यवहार इव अपरोक्षत्वव्यवहा-
रोऽपि स्वरूपविषय एव। वाक्यार्थो ब्रह्म सर्वदा अपरोक्षम्। तस्य संविन्मात्र-
त्वात्। सर्वज्ञत्वादिविशिष्टं तु तदा परोक्षं परोक्षधर्मघटितस्वभावत्वात्।
तत्स्वरूपं चैतन्यं तु वाक्यार्थो ब्रह्मैवेत्यपरोक्षम्। एवं जीवान्तरेऽपि द्रष्टव्यम्।
ततश्च अखण्डब्रह्मविषयशाब्दज्ञानमपरोक्षार्थविषयत्वात् घटादिविषयेन्द्रियजन्य-
ज्ञानवदपरोक्षमेव। सर्वज्ञत्वादिविशिष्टब्रह्मज्ञानं तु व्यवहितवह्न्यादिविषयज्ञान-
वत् परोक्षविषयत्वात् परोक्षम्। केचित्तु अपरोक्षघटादिविषयसंविद एव ज्ञाना-
परोक्षत्वमपि, तदवच्छेदकत्वात् वृत्तेरपरोक्षत्वमित्याहुः॥

नन्वेवमपरोक्षविषयानुमितेरप्यपरोक्षत्वं स्यादिति चेत्, सत्यम्—
शाब्दज्ञानवत् तस्या अपि अपरोक्षविषयिण्या अपरोक्षत्वात्। अत एव पर्वतांशे
अनुमितिः साक्षात्करोमीत्यनुभूयते। न चैवमात्मानुमानादप्यविद्यानिवृत्ति-
प्रसङ्गः। अखण्डाद्वैतानन्दब्रह्मसत्तानिर्णयरूपानुमितेरनुकूलतर्काभावेन असम्भ-
वात्। भेदश्रुत्यादिविरोधेन लाघवमात्रात् तन्निर्णयायोगात्। अखण्डब्रह्मज्ञानस्यैव
अविद्यासमानविषयतया तन्निवर्तकत्वात्॥

किञ्च, प्रपञ्चपक्षकानुमानस्य निवर्त्याज्ञान[कार्य]विषयतया तन्निवर्त्यत्वात्
(किञ्च प्रपञ्चाज्ञानकार्यविषयतया) तदयोग्यत्वम्। आगमात् ब्रह्मसिद्धिपूर्वं तु
न प्रकारान्तरेणानुमितिः सम्भवति। 'तं त्वौपनिषदम्', 'वेदान्तविज्ञान'
इत्यादिवाक्याच्छाब्दसाक्षात्कारस्यैव मुक्तिहेतुत्वावगमाच्च। तदुक्तं भगवता
नारदेन—

'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्' इति।

एकविषयत्वेऽप्यनधीतवाक्यभाषादिजन्यज्ञानस्येव अनुमितेरप्ययोग्यत्व-
सम्भवाच्च। मननानन्तरं यत्नान्तरविधानादप्येवमेव कल्पनीयम्। ततः शाब्द-
ब्रह्मप्रतिपत्तिः अपरोक्षैवेत्यभिप्रेत्याह—**तत्र ब्रह्मण एवेति**॥

**तदभिन्नतया वा तज्जनकतया वा ब्रह्मापि प्रथममेवापरोक्षतया अवभासते। तच्च चित्तस्यातिसूक्ष्मे अनेकाग्रतादोषाद्विपर्ययसंस्कारदोषाच्च प्रतिबद्धं भ्रान्त्या परोक्षवदवभासते। तत्रापरोक्षज्ञानमुद्दिश्य यज्ञादीनां शमादीनां निदिध्यासनादीनां च विधानसामर्थ्यात् यज्ञादिनिर्वर्हितकल्मषप्रतिबन्धं शमादिनिरुद्धविपरीतप्रवृत्तिदोषं मनन-संदर्शितप्रमेयादिसंभावनागुणप्रदीपोज्ज्वलितं अतिसूक्ष्मतरब्रह्मात्म-विषयनिदिध्यासनप्रचयपरिनिर्मिततदेकाग्रवृत्तिगुणं चित्तेन्द्रियं पारोक्ष्य-विभ्रमनिमित्तप्रतिबन्धनिरासेन शब्दादेवापरोक्षनिश्चयनिमित्तं भवतीति**

---

मपि बिम्बस्थानीयब्रह्मण एवोपादानत्वात् स्वाकारान्तःकरणवृत्तिप्रतिबिम्बित-संविदोऽपि तदुपादानमिति किमु वक्तव्यमित्यभिप्रेत्य **सर्वसंविदुपादानत्वादि**-त्युक्तम्। किमिति तर्ह्यपरोक्षतया न व्यवह्रियते? इत्यत आह––**तच्चेति**। केन तर्ह्यपरोक्षतासिद्धिः? इत्यत आह––**तत्रापरोक्षेति**। केन केन द्वारेण यज्ञादी-नामुपयोग इत्यत आह––**यज्ञादीति**। घटादिज्ञानान्येकाग्रताऽभावेऽपि जायन्ते इत्यत उक्तं––**सूक्ष्मतरेति**। सूक्ष्मतरो योऽसौ ब्रह्मस्वरूपात्मा तद्विषयं निदि-ध्यासनं तस्य प्रचयो भूयस्त्वं तेन निर्मिता या तदेकाग्रा वृत्तिः सैव गुणो यस्मिन् चित्तेन्द्रिये तत् तथोक्तम्। **चित्तेन्द्रिय**मित्यत्रेन्द्रियग्रहणमपरोक्षज्ञाननिमि-त्तत्वद्योतनार्थम्। प्रतिबन्धनिरासे एव यज्ञादीनामुपयोगिता, साक्षात्कारिज्ञाने पुनः तत्त्वमस्यादिवाक्यमेव स्वतन्त्रमित्याह––**शब्दादेवेति**। अन्वयव्यति- ता.

---

तत्र वृत्तिप्रतिबिम्बितचैतन्यस्य बिम्बाधीनाग्रिमक्षणसत्ताकत्वेन ब्रह्म-विकारत्वं कैमुतिकन्यायं चाभिप्रेत्य **सर्वसंविदुपादानत्वादित्युक्तम्**। वस्तुतः संविद्रूपत्वादेव ब्रह्म सर्वसंविदभिन्नमेवेति द्रष्टव्यम्। **प्रथममेवेति**। विचारादिभ्यः प्रागेवेत्यर्थः। तर्हि श्रवणादिर्व्यर्थः, न––असम्भावनादि-प्रतिबन्धनिवृत्तिद्वारा सत्तानिर्णयज्ञाने तस्योपयोगा(च्चेति)[दित्याह––**तच्चेति**।] **विपर्ययसंस्कारेति**। तात्पर्यानिर्णयस्याप्युपलक्षणम्। **मननेति** श्रवणस्याप्यु-पलक्षणम्। शब्दसहायं सदपरोक्षज्ञानं जनयतीति उपचारात् **चित्तेन्द्रियं** भा.

गम्यते। लोके च अतिसूक्ष्मवस्तुनिर्धारणे चित्तैकाग्र्यविशेषापेक्षाया दर्शनात्। तर्कशब्देन चात्र एतादृशं सर्वप्रतिबन्धनिरासि चित्तदर्पणमुच्यते। यौक्तिकासम्भावनाविपरीतभावनानिरासितर्काणां प्रथमज्ञाने अन्तर्भूतत्वात्। एवं च 'तं त्वौपनिषदम्' इति तद्धितप्रत्ययेन अपरोक्षावगतेरेव ब्रह्मावगतिहेतुत्वं शब्दस्य दर्शितमुपपन्नं भवति।

---

ता. रेकसिद्धं च निदिध्यासनस्य विक्षेपलक्षणप्रतिबन्धनिरासितया प्रमाणोपकारित्वमित्याह—**लोके चेति**॥

ननु टीकाकारेण तर्कस्योपयोगित्वमुक्तम्, भवद्भिश्चित्तस्योच्यते इति असङ्गतमित्याशङ्क्याह—**तर्कशब्देनेति**। शब्दस्य शक्तितात्पर्यावधारणापेक्षत्वाविरोधायोक्तः तर्क एव तर्कशब्देन किमिति न गृह्यते? इत्यत आह—**यौक्तिकेति**। **ज्ञाने अन्तर्भूतत्वादिति**। ज्ञानसाधने अन्तर्भूतत्वादित्यर्थः॥

ननु निदिध्यासनादेवापरोक्षज्ञानं जायताम्, किं शब्देन? इत्यत आह—**एवं चेति**। परोक्षप्रत्ययहेतुत्वेनापि तद्धितप्रत्ययो घटते इत्याशङ्क्याह—

---

भा. इत्युक्तम्। **तर्कशब्देनेति**। तेन तत्त्वरूपप्रतिष्ठायै तर्कं सहायीकरोतीति (प. पु. 171) टीकाग्रन्थस्थतर्कशब्देनेत्यर्थः। **सर्वप्रतिबन्धनिरासि चित्तदर्पणमिति**। चित्तदर्पणस्य प्रतिष्ठाहेतुर्मननाख्यस्तर्क इत्यर्थः, न तु चित्तदर्पणमेव तर्कः, तस्य प्रतिबन्धानिरासकत्वात्, विशिष्टस्य तस्य तर्कत्वमपि विशेषणांश एव पर्यवसन्नमिति भावः॥

ननु विचाराख्यस्तर्कोऽत्र किमिति न गृह्यते? तत्राह—**यौक्तिकेति**। तात्पर्यावधारणमपि लक्षणाद्वारा वाक्यार्थनिर्ण[योपायकोटौ]प्रविशति, तेन विना शक्त्यवधारणस्य वाक्यार्थावबोधकारणकोटौ प्रवेशः सुप्रसिद्ध एव। लक्षणानवतारात्। आपातज्ञानात् पूर्वमपि तात्पर्यज्ञानमापातरूप(युक्त)मेव। अतो विचारस्य प्रतिबन्धकनिरासित्वेऽपि मननात् अयं विशेषोऽस्तीत्येवं विभागवर्णनमिति द्रष्टव्यम्॥

ननु वाक्यस्य परोक्षज्ञानजनकत्वेऽप्यौपनिषदमिति तद्धितो न विरुध्यते;

सम्यगवगतित्वादिति ॥

अन्यन्मतम्—न प्रथमोत्पन्नं शाब्दज्ञानमेव प्रतिबन्धविगमापेक्षया अपरोक्षावभासं भवति ; किं तु शब्द एव प्रथमं ब्रह्मणि परोक्ष-ज्ञानमुत्पाद्य पुनः वर्णितचित्तदर्पणसहकारिकारणापेक्षया द्वितीयमपरोक्ष-ज्ञानमुत्पादयति । शब्दादीनां तद्धितप्रत्ययादिना अपरोक्षज्ञाने

---

ता. अपरोक्षेति । अपरोक्षस्वभावे वस्तुनि परोक्षज्ञानस्य विभ्रमत्वात् तज्जनकत्वे शब्दस्याप्रामाण्यं स्यादित्यर्थः ॥

ननु द्वितीयज्ञानोत्पत्तौ चित्तमेव यथोक्तं समर्थम्, किं तत्र शब्देन ? इति ; तत्राह—**शब्दादीनामिति**। **शब्दादीना**मित्यत्र आदिशब्देन यज्ञादयः शमादयश्च गृह्यन्ते । **तद्धितप्रत्यया**दिनेत्यादिशब्देन 'यज्ञेन दानेन तपसे'ति तृतीया-

---

भा. तत्राह—**अपरोक्षावगतेरेवेति**। शाब्दब्रह्मज्ञानस्य परोक्षत्वे ब्रह्मणोऽपि परोक्षत्वं वाच्यम् , अन्यथा तज्ज्ञानपारोक्ष्यानुपपत्तेः । न च निरुपाधिकं ब्रह्म परोक्ष(मस्ति)[मिति] तज्ज्ञानं विषयबाधादप्रमा स्यादिति अपरोक्षज्ञानमेव ब्रह्मणि सम्यग्ज्ञानं स्यादित्यर्थः । एवं वेदान्तः परोक्षज्ञानजनकः, वाक्यत्वात्, सम्मतवत्, इत्यनुमाने आगमबाधो दर्शितः । प्रतिकूलतर्कबाधश्च वर्णित एव । किञ्च दशमस्त्वमसीति वाक्ये व्यभिचारः । न च तत्रेन्द्रियमेवापरोक्षज्ञानमुत्पादयति निमीलिताक्षस्यापि त्वगिन्द्रियव्यापारसम्भवादिति वाच्यम् ; तच्छब्दश्रवणात् प्रागपि तत्प्रसङ्गात् ॥

न च वाक्यसहकृतमिन्द्रियं तदुत्पादयतीति वाच्यम् ; अपरोक्षज्ञानस्य शब्दजन्यत्वे अविवादात् । न च तत्र वाक्यं करणं न भवतीति वाच्यम् ; व्यापारवत्तया अन्यत्रेव तत्रापि तस्य करणत्वात् । वाक्यार्थज्ञानं सहकारि, न वाक्यम्, इति चेत् , न—इन्द्रियस्य घटादिज्ञाने तदनपेक्षत्वात्। विशेषण-ज्ञानत्वेन तस्य कारणत्वे च उपायान्तरेण दशम इति ज्ञानादपि दशमोऽहमिति ज्ञानप्रसङ्गः । न च तत्र परोक्षज्ञानमेव न त्वपरोक्षज्ञानं इति वाच्यम् ; अपरोक्षभ्रमाज्ञानानिवृत्तिप्रसङ्गात । तस्माच्छब्दादेव तत्रापरोक्षज्ञानमिति वाक्यत्वहेतोर्व्यभिचारो दृढ एव। एतेन रत्नतत्त्व[साक्षात्कारोऽपि] व्याख्यातः । स्वानभिमतं स्वयूथ्यमतमाह—**अन्यन्मतमिति** ॥

विनियोगसामर्थ्यात् । यथा संप्रयोगोऽभिज्ञामुत्पाद्य पुनः पूर्वानुभव-संस्कारापेक्षया प्रत्यभिज्ञामुत्पादयति तद्वत् । न च स्वयम्प्रकाशे ब्रह्मणि परोक्षज्ञानं विभ्रमः । स्वयम्प्रकाशेऽपि पुरुषान्तरसंवेदने परोक्षानुमानदर्शनादिति ॥

सर्वथापि आपरोक्ष्यस्य प्रयत्नान्तरलभ्यत्वात् युक्तं पृथक् प्रति-
172-7 पत्तिशब्दग्रहणमित्याह—ततः प्राग्विद्योदितापीति । कैः पुनः सहकारिभिः
172-8 शब्दप्रमाणादापरोक्ष्यं लभ्यते? इति; तत्राह—अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्ट इति ॥

ननु मनननिदिध्यासनयोः कथं श्रवणं प्रत्यङ्गतावगमः? यावता ब्रह्मण्येव शक्तितात्पर्यविशिष्टवेदान्तशब्दावधारणाच्छ्रवणशब्दाभिधेयादात्मन्यवबुद्धे पश्चान्मननमर्थसंभावनोपपत्तिपर्यालोचनाद्वारा जनिता ब्रह्मणि प्रत्ययावृत्तिरुत्पद्यते । ततश्च प्रमाणयुक्तिसम्भावनाभ्यां परिनिश्चितेऽपि विषये तदेकाकारं चित्तसमाधानं निदिध्यासनमुत्पद्यते । तदेवं

ता. श्रुतिः 'शान्तो दान्त' इत्यधिकारिविशेषणत्वलिङ्गं च गृह्यते । सहकारिभेदमात्रेण तस्यैव शब्दस्य कथं ज्ञानान्तरजनकत्वम्? इत्याशङ्क्य, दृष्टान्तेन एतदुपपादयति यथेति ॥

ननु अपरोक्षस्वभावे परोक्षज्ञानस्य विभ्रमत्वं दर्शितं, तत् कथं शब्दप्रमाणस्य तज्जनकत्वम्? इति; तत्राह—न चेति। पक्षद्वयेऽपि 'विद्याप्रतिपत्तये' इति युक्तमेवोक्तमित्युपसंहरति—सर्वथेति ॥

शब्दस्यापरोक्षज्ञानहेतुत्वेन अर्थात् श्रवणस्याङ्गित्वं मनननिदिध्यासनयोश्च अङ्गत्वमुक्तम्। तत्र मण्डनमिश्रमतमुद्भावयति—नन्विति। का अनुपपत्तिरित्याशङ्क्य विपरीतस्यैव अङ्गाङ्गिभावस्य दर्शनादित्याह—यावतेति।

भा. ननु श्रवणादीनामाग्नेयादीनामिव न समप्राधान्यम्; ज्ञानातिरिक्तैकफलाभावात् ज्ञानस्य चातत्फलत्वात्। अत एव नाङ्गाङ्गिभावोऽपि। ननु विचारस्य शक्तितात्पर्यनिर्णयहेतोः शाब्दज्ञानकारणत्वात् प्रधानत्वम्, इतरयोः प्रतिबन्धकनिवृत्तिमात्रफलयोरपि कथञ्चित् फलापेक्षेत्यङ्गत्वम्, इति चेत्, तर्हि वैपरीत्यमेव युक्तमित्याशङ्कते—ननु मननेति। तदेवं निदिध्यासनेति। तस्यैव

निदिध्यासनस्वरूपोपकारितया श्रवणमननयोस्तदङ्गभावेऽवगते न युज्यते श्रवणाङ्गता मनननिदिध्यासनयोरिति। अत्रोच्यते—यस्मिन् पक्षे शक्तितात्पर्यविशिष्टशब्दावधारणं प्रथमं ब्रह्मणि परोक्षज्ञानमुत्पाद्य मनननिदिध्यासनसंस्कारविशिष्टान्तःकरणापेक्षया अपरोक्षज्ञानमुत्पादयति, तत्र ब्रह्मणि परोक्षज्ञानस्य निदिध्यासनोपकारितया तदङ्गत्वेऽपि तात्पर्यविशिष्टशब्दावधारणादपरोक्षज्ञानोत्पत्तौ मनननिदिध्यासने श्रवणस्य फलोपकार्यङ्गतामश्नुवाते॥

ननु अपरोक्षफलोदयेऽपि निदिध्यासनाङ्गतैव श्रवणमननयोः किं न स्यात्? त्रयाणामपि सन्निपत्योपकाराविशेषात्, दर्शपौर्णमासवत् समप्रधानता वा किं न स्यात्? इति; उच्यते—विशिष्टशब्दावधारणं प्रमेयावगमं प्रति अव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्। मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण

---

शब्दात् प्रथमतः परोक्षज्ञानोत्पत्तिपक्षे श्रवणस्य निदिध्यासनाङ्गत्वं यद्यपि, ता.
तथापि शब्दात् प्रथमत एव अपरोक्षज्ञानोत्पत्तिपक्षे श्रवणस्यैव अङ्गित्वमिति परिहरति—**यस्मिन्निति**। स्वसमवायिनि चित्ते संस्कारमुत्पाद्य प्रधानस्य अपरोक्षज्ञानस्यैवोपकारकत्वात् श्रवणादीनां त्रयाणामपि सन्निपत्योपकारकत्वमुक्तम्। समप्रधानतामात्रे तु दर्शपूर्णमासयोः दृष्टान्तत्वम्, तयोः प्रधानतया अङ्गत्वाभावात्, सन्निपत्य आराद्वा उपकारकत्वस्य अङ्गधर्मस्य तत्रासम्भवादिति द्रष्टव्यम्॥

इदानीं श्रवणस्य अङ्गित्वमुपपाद्य तत् परिहरति—**उच्यते इत्यादिना**। श्रवणस्य आङ्गित्वं दर्शयितुं श्रवणविषयस्य शब्दप्रमाणस्य अङ्गितामाह—**विशिष्टेति**। इतरयोः पुनः व्यवधानेन श्रवणकार्ये अन्वयात् अङ्गत्वमेवेत्याह—**मननेति**।

---

साक्षात् कारणत्वादित्यर्थः। किं विचारस्य प्रमित्यकारणत्वेन अप्रधानत्वात्तयोः भा.
तदनङ्गत्वम्? उत तत्कृतोपकाराभावात्?। नोभयमपीत्याह—**यस्मिन्**

ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितस्य करणस्य विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे अङ्गीक्रियेते। यदा तु पुनः शब्दादेव प्रथममपरोक्षानुभवफलं विज्ञानमुत्पन्नं भ्रान्तिविक्षेपसंस्कारखचितान्तःकरणदोषात् अर्थेऽपि परोक्षानुभवफलतया विभ्रान्त्या अवतिष्ठते, तदा मनननिदिध्यासने चित्तगतविक्षेपादिदोषप्रतिबन्धनिरासेन अपरोक्षफलप्रतिष्ठाहेतुतया प्रमाणस्य फलोपकार्यङ्गमिति न विरुध्यते। न च शब्दकरणमन्तरेण निदिध्यासनादेव अपरोक्षानु-

---

ता. प्रथमतः परोक्षज्ञानजननेऽपि श्रवणस्यैवाङ्गित्वमुपपाद्य इदानीं प्रथमत एव अपरोक्षज्ञानजनने श्रवणस्यैव अङ्गित्वमुपपादयति—**यदा तु पुनरिति**। शब्दः परोक्षज्ञानं जनयति, अपरोक्षज्ञानं तु निदिध्यासनात्, इति मतान्तरं निराचष्टे—**न चेति**॥

---

भा. **पक्ष इत्यादिना**। सिद्धान्ते कथम्? इति। तदाह—**यदेति**; **फलोपकार्यङ्गमिति न विरुध्यत इति**। अत्र श्रवणस्य करणकोटौ निवेशमात्रेण करणत्वमुपचर्यते; अप्रमाणस्य तस्य साक्षात् प्रमाकरणत्वासम्भवात्, लोके शक्त्यादिज्ञानस्याकरणत्वाच्च। ततस्तस्याङ्गित्वमपि तादृशमेव। मननादेस्तु करणकोटौ अप्रवेशात् प्रमायां तत्प्रत्यासत्तिविशेषो नास्तीति तदपेक्षया अप्रधानत्वात् प्रतिबन्धाभावस्याहेतुत्वेऽपि श्रवणफले अपेक्षा अस्तीति तदङ्गत्वम्, न तु प्रयाजादेरिवाङ्गत्वम्। तत्फलाजनकत्वात्॥

ननु वाक्यस्य अन्यत्राविनियुक्तस्य न श्रवणसंस्कार्यत्वमिति न तस्य करणकोटावनुप्रवेशः, किञ्च 'आत्मा श्रोतव्यः' इत्यात्मैव संस्कार्योऽवगम्यत इति चेत्, सत्यं आत्मा कर्मतया अवगम्यते। सा तस्य श्रवणसंस्कार्यशब्दकर्मतयैव अन्यथासिद्धा। विचारस्य शब्दधर्मविषयस्य साक्षाच्छब्दकर्मकत्वात्। वाक्यस्य पुरुषार्थसाधनतामात्रेण संस्कार्यत्वात्। अध्ययनविधिना स्वाध्याय[वत्] वाक्यनिष्ठस्य नियमापूर्वस्य सिद्धिहेतुत्वमात्रेण अध्ययनसंस्कारवन्न विरुध्यत इति। निदिध्यासनसंस्कृतं चित्तं तदेव वा अपरोक्षज्ञानकारणमिति पूर्वपक्ष्यनुशयं दूषयति—**न च शब्दकरणमन्तरेणेति**। मनसो निदिध्यासनस्य च प्रमाकरण[त्वा भावेन](त्वेन) साक्षात्कारस्याप्रमात्वापातादिति हेत्वर्थः॥

भवफलजन्म संभवति; तस्य प्रामाण्यासिद्धेः। शब्दावगतब्रह्मात्मविषयत्वादपरोक्षस्य तद्द्वारेण प्रामाण्यनिश्चय इति चेत्, नैवम्—उत्पन्नस्य हि विज्ञानस्य प्रमाणान्तराधीनविषयसद्भावनिश्चयाधीनप्रामाण्यकल्पनात् वरं स्वस्यैव क्लृप्तप्रमाणजन्यत्वकल्पनम्। अन्यथा परतःप्रामाण्यात् इतरत्र स्वतःप्रामाण्यात्। तस्मात् युक्तं श्रवणस्य फलोपकार्यङ्गता मनननिदिध्यासनयोरिति ॥

नन्ु ब्रह्मापरोक्षज्ञानमपि नानर्थनिवृत्तिनिमित्तम्; सत्यपि तस्मिन् संसारानुवृत्तिदर्शनात्। अन्यथा सद्य एव शरीरपातः स्यात् इति
चोदयति—नन्वात्मैकत्वविद्याप्रतिपत्तिरिति। ननु व्यतिरेकज्ञानात् तत्त्व- 173 - 1
ज्ञानस्य विशेषो दर्शितः; सत्यम्, फलतो न विशेष इत्याह—तथा हि 173 - 2
जीवस्येति। नैतद्युक्तम्–तत्त्वापरोक्षात् समूलाध्यासनिवृत्तेः अन्वयव्यति-
रेकशास्त्रसिद्धत्वादित्याह—भवतु तत्राविद्याया इति। ननु अध्यासविरो- 173 - 5

---

ता. नन्ु यथार्थविषयत्वात् प्रामाण्यमिति शङ्कते—शब्दावगतेति। संवादात् प्रामाण्यकल्पनात् प्रमाणकरणजन्यत्वेन प्रामाण्याभ्युपगमो युक्त इति परिहरति—नैवमिति। विपक्षे अपसिद्धान्तः स्यादिति दोषमाह—अन्यथेति।

---

भा. नन्ु शब्दस्यैव मनस एव निदिध्यासनस्य वा साक्षात्कारे करणत्वं कल्प्यताम्, कल्पनाया उभयत्राविशेषात्। न चैवं नष्टपुत्रभावनाजन्यसाक्षात्कारवत् आत्मसाक्षात्कारस्य भ्रान्तित्वापत्तिः, तस्य मूलप्रमाणाभावेन बाधितार्थत्वात् अत्र तु बाधकानामुपनिषद्विरोधेन आभासत्वादिति शङ्कते—शब्दावगतेति। तर्हि करणत्वेन क्लृप्तशब्द एव आत्मसाक्षात्कारकरणमस्तु लाघवात्, न तु मनः तस्य ज्ञानकरणत्वसाक्षात्कारकरणत्वयोरुभयोरपि कल्प्यत्वेन गौरवादित्यभिप्रेत्याह—नैवमिति। [ननु] साक्षात् प्रमाणाजन्यत्वेऽपि परम्परया तज्जन्यत्वात्तस्य प्रमात्वं (किमिति चे) [किं न स्यादिति चे]त्; तत्राह—अन्यथेति। अप्रमाणजन्यस्यान्यतः प्रामाण्यकल्पने प्रामाण्यस्य करणस्वभावाप्रयुक्तत्वात् परतस्त्वं स्यादित्यर्थः ॥

धिव्यतिरेकावगमवत् तत्त्वावबोधोऽध्यासविरुद्धोऽपि तन्नापनयतीत्यनु-
173 - 7 मीयतामिति; नेत्याह—न हि जीवस्येति। अनवबोधविरुद्धं तत्त्वज्ञानं न व्यतिरेकज्ञानमित्यर्थः। सशरीरेन्द्रियस्यैवापरोक्षावगमात् तर्हि
174 - 1 सद्य एव शरीरपातः स्यादिति चोदयति—ननु ब्रह्मज्ञानादिति। तत्त्व-
174 - 2 ज्ञानादविद्यानिरोधेऽपि पुनरनुवृत्तिः युज्यते इत्याह—न–संस्कारादिति।
174 - 3 तदेव प्रपञ्चयति—तथा हीति ॥

ननु क्रियाज्ञानयोरेव संस्कारः सम्भवति, न अज्ञानतत्कार्ययोः। न–गन्धादिसंस्कारदर्शनात्। प्रलयावस्थायां सर्वकार्यसंस्कारोपगमात्। सर्वत्र च विनाशमात्रप्रयुक्तसंस्कारजन्मानुमानात्। अविद्यातत्कार्यस्य भ्रान्तिज्ञानात्मकत्वात्। अज्ञानादौ च साक्षिचैतन्यावच्छेदकज्ञानाभासोपगमात् संस्कारसिद्धेः। ननु संस्कारात् स्मृतिमात्रहेतोः कथमपरोक्षद्वैतावभासः स्यात्?। अविद्यावत् संस्कारस्यापि चैतन्य-

---

ता. मायावादिमते सद्य एव शरीरपातप्रसङ्गस्य अनिष्टतामापादयति—सशरीरेन्द्रियस्येति। एकदेशिवत् मरणकाले भवद्भिरपरोक्षज्ञानं नाभ्युपेयं इत्यर्थः॥

संस्कारादनुवृत्तिरित्युक्ते चोदयति—**नन्विति**। अपनीतपुष्पायां पुष्पपुटिकायां आश्रयाभावेऽपि संस्कारात् गन्धानुवृत्तिदर्शनादिति परिहरति—न **गन्धादीति**। न तत्र गन्धसंस्कारो विद्यते किन्तु पुष्पत्रसरेणवः तत्र गन्धबुद्धिमुत्पादयन्तीति वैषम्यमाशङ्क्याह—**प्रलयावस्थायामिति**। ननु प्रलय एव मीमांसकैः नाभ्युपगम्यते इति; तत्राह—**सर्वत्र चेति**। क्रियाज्ञानयोरेव संस्कारजनकत्वमिति नियमेऽपि न विरोध इत्याह — **अविद्येति**। ननु तथाप्यविद्याया न ज्ञानरूपत्वमिति; तदाह—**अज्ञानादौ चेति**।

---

भा. अविद्यानाशजन्यसंस्कारः उपादानमित्युक्त्वा रजतादेरिव प्रातिभासिकस्य निमित्तं पूर्वानुभवसंस्कारमप्याह—**अविद्यातत्कार्यस्येति**। भ्रान्तिज्ञानविषयत्वादित्यर्थः। तथापि साक्षिणोऽनाशात् कथं संस्कारः? तत्राह—अज्ञा-

**दोषत्वादिति वदामः । अपरोक्षावभासकारणगतो दोषोऽपरोक्षभ्रमहेतुरिति सिद्धत्वात् आत्ममात्रस्यैव अविद्याश्रयत्ववत् संस्काराश्रयत्वोपपत्तेश्च। अविद्यासंस्कारव्यतिरिक्तकार्याणामेव अविद्योपादानत्वात् । आत्मनो मिथ्याभूतसंस्कारोपादानत्वाभावेऽपि आश्रयोपाधित्वस्य अविद्योपाधित्ववदविरोधात् । तत्त्वज्ञानानुसन्धानादेव च क्रमेण संस्कारनिवृत्तेः कंचित् कालमवस्थायैव विदेहमुक्तिः न विरुध्यते, अविद्यालेशो वा तमोलेशवत् संस्कारशब्देनाभिधीयते इति निरवद्यम् ॥**

---

चैतन्यदोषतामात्रेण कथमपरोक्षावभासे हेतुत्वम्? इति; तत्राह—**अपरोक्षेति**। अपरोक्षावभासकारणनयनादिगतदोषस्याप्यपरोक्षभ्रमहेतुत्वदर्शनादित्यर्थः । ननु अन्तःकरणाज्ञानयोरभावे निराश्रयः कथं संस्कारः स्यात्? इत्याशङ्क्य, आह—**आत्ममात्रस्यैवेति**। संस्काराधायकाधारस्यैव संस्काराधारत्वदर्शनात् अध्यस्तार्थानां तत्प्रत्ययानां तत्संस्काराधायकानां साक्षिचैतन्याश्रयत्वात् तदाहितसंस्कारस्य नोपादानापेक्षा, प्रध्वंसवदित्यर्थः । ननु आत्मनः संस्कारानुपादानत्वे तदाश्रयत्वमेव न युक्तम्, कार्यानुपादानस्य कार्यानाश्रयत्वात् । इत्याशङ्क्याह—**आत्मन इति**। संस्काराधायकं प्रति यदुपादानं तस्यैव तदाहितसंस्कारोपादानतया आश्रयत्वं दृष्टम्; इह पुनः अविद्याया उपादानत्वमन्तरेण केवलाश्रयत्वात् तदाहितसंस्कारस्याप्याश्रय एवात्मा उपादानत्वाभावेऽपीत्यर्थः। संस्कारस्य निवर्तकाभावात् न विदेहमुक्तिः स्यात् इत्याशङ्क्याह—**तत्त्वज्ञानेति**। **तत्त्वज्ञानानुसन्धानं**—तत्त्वज्ञानानुवृत्तिरिति यावत् ॥ ता.

ननु संस्कारस्यापि कार्यत्वादुपादानं वाच्यम्, ततश्च उपादानाविद्याभावे न संस्कारः स्यात्, संस्कारान्तरेषु तथा दृष्टत्वात्, इत्याशङ्क्य, अपरितोषात पक्षान्तरमाह—**अविद्यालेशो वेति**।

---

**नादाविति**। **तत्त्वज्ञानानुसन्धानादिति**। प्रागुत्पन्नवृत्त्यभिव्यक्तसाक्षिण एव प्रारब्धकर्मणः प्रतिबन्धकस्य क्षये तन्निवृत्तिरित्यर्थः। उपादानं विनापि भावकार्यमित्याद्यनुपपन्नमिति मत्वा आह—**अविद्यालेशो वेति**। प्रारब्धकर्मस्थिति- भा.

174 - 7 ननु न सर्वे वेदान्ता इति स्पष्टार्थः। तत्र निर्विशेषब्रह्मप्रतिपत्त्यर्थेषु
175 - 1 वेदान्तेषु सगुणब्रह्मोपासनानां तावत् प्रासङ्गिकत्वं दर्शयति-सत्यम्।
उपासनाकर्म त्विति । ननु निर्विशेषं चेत् ब्रह्म प्रतिपाद्यम्, तस्य कथं सगुणो-
पासनालम्बनं सप्रपञ्चं ब्रह्म अङ्गभूतं स्यात्? येनाश्रित्य विधानमुच्यते
175 - 2 इति ; अध्यारोपापवादन्यायमभिप्रेत्येत्याह-तच्चापाकृताशेषप्रपञ्चमिति।
निराक्रियमाणे प्रपञ्चे कथमुपासनाविधानम्? निराकरणप्रत्ययविरोधात्
175 - 4 इति ; तत्राह—अस्यां चावस्थायामिति । ननु आश्रित्य विधाने गोदोहनवद-
धिकृताधिकारतापि स्यादिति मुमुक्षोरेव उपासनास्वप्यधिकारः स्या-
दिति। उच्यते—अपां प्रणयनस्य प्रकृततया उद्देश्यत्वात् न गोदोहनवि-
धिना अनुष्ठेयतया सिद्धिः। अतः प्राप्तोद्देशनत्वात् प्रणयनस्य स्वतन्त्रपशु-
कामिनोऽप्राप्तत्वात् प्राप्तप्रणयनस्य दर्शपूर्णमासाधिकारिण एव पशुका-
मस्य गोदोहनेऽप्यधिकारो दर्शितः। सप्रपञ्चब्रह्मप्रतिपत्तिश्च आश्रीय-
माणा मुमुक्षोरमुमुक्षोश्च शब्दादविशेषेण प्राप्तेति तदाश्रित्य विधानं
अमुमुक्षूणामप्युपपद्यते इति न मुमुक्ष्वधिकारकल्पना । किं तु आश्रित्य

---

ता. 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायेन प्रति-
पत्तिसौकर्यार्थं अविद्यमानोऽपि प्रपञ्चो ब्रह्मणि निषिध्यते इत्याह—
अध्यारोपेति । 'चमसेनापः प्रणयेत्' इति प्राप्तप्रणयनस्य दर्शपूर्ण-
मासाधिकारिण एव पशुकामिनो गोदोहनाधिकारवत् विद्याधिकारिणः प्रति-
पत्तिसौकर्यार्थं प्रपञ्चस्य आरोपितत्वात् तमाश्रित्योपासनाविधाने मुमुक्षोरेवा-
धिकारः स्यादिति शङ्कते—नन्विति । वैषम्यप्रदर्शनेन परिहरति—उच्यत इति।
तत्र दर्शपूर्णमासाधिकारिण एव प्रणयनप्राप्तिः, प्राप्तप्रणयनस्यैव च गोदोहन-
विधिः, इह तु शब्दादारोपितप्रपञ्चप्रतिपत्तिः अमुमुक्षूणामप्यस्तीति
वैषम्यमित्यर्थः ॥

---

भा. तत्कार्यसम्पादनपटीयान् विक्षेपशक्तिमदज्ञानलेशविशेषोऽनादिरित्यर्थः । अपां
प्रणयनस्येति। अङ्गतया दर्शपूर्णमासापूर्वप्रयुक्तं अपां प्रणयनमाश्रित्य गोदोहनं
विधीयते पशुफलाय, न तु गोदोहनविशिष्टं प्रणयनान्तरम्, गोदोहननियो-
गस्य प्रयुक्तिगौरवप्रसङ्गात् सन्निहितलाभे तदयोगात् गौरवाच्चेति भावः ॥

विधानमात्रमिति निरवद्यम्। अतो महातात्पर्यप्रक्रमो ब्रह्मपर इत्यु-
पसंहरति—तस्मात्तदर्थोपजीवित्वादिति ॥ 175-7

नन्वब्रह्मोपासनान्यपि इत्यादेरयमर्थः—साक्षाद्वा परम्परया वा 176-1
अन्तःकरणशुद्धिद्वारेण ब्रह्मात्मैकत्वावगतिपराः सर्वे वेदान्ता इति।
वेदान्तविषयप्रयोजनयोरेव विचारशास्त्रस्यापि विषयप्रयोजनत्वमिति
कथयितुमाह—यथा चायमर्थ इति। भाष्यस्य तात्पर्यमाह—प्रतिज्ञातेऽर्थ 176-4-6
इति। शरीरमेवेत्यादिः स्पष्टार्थः। वेदान्तानां शारीरकपरत्वेऽपि 176-8
विचारस्य कथं शारीरकपरत्वमिति? तदाह—तदिह वेदान्तानामिति। ननु 176-9
विचारकर्तव्यतामात्रं सूत्रार्थः, तत्र विषयप्रयोजनयोरसूत्रितयोरुपादानं
वेदान्ततद्विचारसम्बन्धितया नोपपद्यते, इत्याशङ्कामपनुद्य वृत्तसङ्कीर्तन-
पूर्वकमुत्तरभाष्यस्य तात्पर्यमाह—मुमुक्षुत्वे सत्यनन्तरमित्यादिना। कथं 177-3
ब्रह्मज्ञानस्य मोक्षः प्रयोजनमर्थसिद्धम्? इति; तदाह—पुरुषार्थवस्तु- 177-5
कामनेति। प्रवृत्तिरिति प्रवृत्तिविषयेष्टसाधनता अभिधीयते। सैव हि 177-6
विधिरिति वक्ष्यामः। यस्मिन् धात्वर्थे प्रवृत्तेः हितसाधनता लिङादि-
पदैरुपदिश्यते स धात्वर्थः सामान्येन हितसाधनोऽधिकारिविशेषणेन
फलविशेषेण सामर्थ्यात् सम्बध्यते। सामान्यप्रतीतेः विशेषपर्यवसान-
मन्तरेण अनुपपत्तेः। ततश्च विचारो हि सामान्येन हितसाधनतया
अवगम्यमानः स्वसामर्थ्यसिद्धज्ञानद्वारेण अधिकारिविशेषणमोक्षविशेष-
फले पर्यवस्यति इत्यर्थः ॥

---

भावनापक्षे प्रवृत्तिरिति स्यात्, न तु इष्टसाधनपक्षे इत्यत आह— ता.
प्रवृत्तिविषयेति। ननु लिङादिशब्दैः विधिरुच्यते, न प्रवृत्तिः, नापि इष्टसाधनता,
इत्यत आह—सैव हीति। टीकावाक्यगतप्रवृत्तिपदार्थं कथयित्वा वाक्यार्थं
कथयति—यस्मिन्निति। कया अनुपपत्त्या? इत्यत आह—सामान्येति।
सामान्योक्तन्यायं प्रकृतविशेषे योजयति—ततश्चेति ॥

---

वेदान्तविषयप्रयोजनयोरेवेति। ननु इदं 'अस्यानर्थहेतोः' भा.
इति भाष्येणैव सिद्धमिति चेत्, सत्यम्, (तत्र) [श्रुतौ हि] जीवपरभेदः प्रतीयते,

**ननु च पुरुषार्थकामिनो यत्र नियोग उपदिश्यते तत्र नियोगो धात्वर्थस्य पुरुषार्थसाधनत्वं कल्पयति। ततश्च विधीयमानो विचारो नियोगसामर्थ्यात् मोक्षसाधनमिति कल्प्यतां किमिष्टसाधनत्वविधि-सामर्थ्यकल्पनया ? इति ॥**

---

ता. ननु नेष्टसाधनत्वं लिङादिपदैः बोध्यते, किन्तु लिङादिपदबोधित-विधिसामर्थ्याद्धात्वर्थस्येष्टसाधनता प्रतीयते, इति मतान्तरमुत्थापयति—**ननु चेति**। भवत्वेवम्, प्रकृते किमायातम् ? इत्यत आह—**ततश्च विधीयमान** इति॥

---

भा. तत् (किं) [कथं] ब्रह्मात्मैक्यविद्याप्रतिपत्त्यर्थत्वं वेदान्तानाम् ? अतस्तद्विचार-शास्त्रस्यापि न तत् विषयः, अतः प्रयोजनमपि नास्तीत्याशङ्क्य, अयमर्थो यथा न बाधितः तथा **अस्यां मीमांसायां प्रदर्शयिष्याम** इति भाष्येण पूर्वभाष्यार्थ एव स्थिरीक्रियत इति स्थिरीकरणप्रतिज्ञाभिप्रायेणैवं व्याख्यातमिति ॥

केचित्तु **अस्यानर्थहेतोरिति भाष्येण** वेदान्तानां विषयप्रयोजने दर्शिते, तत्र **विद्याप्रतिपत्तिशब्देन** विद्योत्पत्तिरेवोच्यते, (अथवास्तताप्या)-[उत्पत्तावपि तस्य] मुख्यत्वात्, अनेन भाष्येण विचारशास्त्रस्य विषयप्रयोजने वर्णिते इत्यभिप्रेत्य **आचार्यैरेवं** व्याख्यातम्। पूर्व(पुटे)[त] व्याख्येयटीकानु-सारेण **आचार्यैः** प्रतिपत्ति[शब्दस्यावाप्ति]मर्थमादाय विचारादितात्पर्यं कथि-तमित्याहुः ॥

**ननु च पुरुषार्थकामिन इति**। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र हि लोकव्युत्पत्त्यनुरोधेन लिङा कार्यमभिधीयते। तच्च धात्वर्थातिरिक्त-मेव स्थायिरूपम्। धात्वर्थस्य क्षणिकस्य काम्यमानस्व(कामस्य)[र्गसाधनस्य स्वर्ग]-कामिनियोज्यकृत्यसाध्यत्वात्। तच्च कृतिसाध्यं कार्यं विषयं नियोज्यं चापेक्षते। तत्र स्वर्गकामो नियोज्यत्वेन यागो विषयतया अन्वेति। ततः स्वविषये प्रवर्तकतया कार्यमेव नियोगः स्वविषयीभूतस्य (नियो)[या]गस्य [फल]करणत्वं कल्पयतीति तत् औपादानिकम्। न तु शब्द एव तस्य स्वर्ग-साधनत्वं बोधयति। तस्य तदयोग्यत्वात्। एवं विचारेऽपि नियोग एव फल-करणत्वं बोधयतीत्यर्थः ॥

यदि अयोग्यत्वात् यागो न स्वर्गसाधनतया शब्दार्थः तर्हि त्वदभिमत-कार्यमपि न वाक्यार्थः स्यात्। (बाध्य) [कल्प्य]स्या[प्य]पूर्वस्य भावनासाध्यत्वानुपपत्तेः अयोग्यताया अविशेषात्। ननु पदात् कृतिसाध्यत्वेनोपस्थितौ न योग्यताज्ञानमपेक्षितमिति चेत्, सत्यम्—यदि लोकव्युत्पत्त्यैवोपगमः स्यात्। व्युत्पत्तौ तु अभव्यात्मनोपस्थितं (स्वर्गसाध्याध्यय) तत् कृतिसाध्यतया न शब्दार्थतामर्हति। तथा च कृत्ययोग्यमपूर्वं कृतिसाध्यत्वेन रूपेण यागादिना नान्विताभिधानार्हम्। केचित्तु तिङ्त्वलिङ्त्वाभ्यां कृतिरपूर्वं चोपस्थाप्यत इति पदार्थद्वय(सत्त्वाद्योग्यतापेक्षेति) [सत्त्वं योग्यता अपेक्षते] तिङादितोऽपि प्रतीयमानकृतेः लिङर्थत्वायोगादित्याहुः (?) ॥ भा॰

ननु अभव्यमपि धात्वर्थद्वारा कृतिसाध्यमेव, अन्यथा घटादिकं कृतिसाध्यं न स्यात्, न चैवं स्वर्गोऽप्यपूर्वद्वारा यागसाध्योऽस्त्विति वाच्यम्; द्वारस्याशाब्दत्वादिति चेत्, सत्यम्—तर्हि यागस्य कृतिसाध्यत्वप्रतीतिः प्राक् वाच्या। सा च न लिङा, तस्या अप्यार्थत्वात्। न च विषयान्वितमपूर्वं विध्यर्थ (लिङर्थ) इति वाच्यम्; [प्र]कृतिप्रत्ययसमभिव्याहारलभ्यं हि तत्। न केवलप्रत्ययलभ्यम्। कृतिसाध्यत्वमभिदधतो लिङो यागोऽपूर्वं चार्थ इति चेत्, एवं हि घटपटशब्दमपूर्वं स्यात्। अलौकिकस्य सामान्यसम्बन्धितया अनवगतस्य (वाक्य)[कार्य]स्य अपर्यवसाना(द)लाभाच्च। एकवृत्त्युपस्थितयोर्यागापूर्वयोः परस्परान्वयानुपपत्तेश्च। [भाव्या]भाव्यसाधारणैककृतिसाध्यत्वासम्भवाच्च। कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपतत्साध्यत्वस्य लिङर्थत्वे स्वर्गेऽप्येवंविधया साध्यत्वसम्भवाच्च ॥

ननु धातुना यागस्य साध्यत्वं प्रतीयते, आख्यातान्तो हि धातुरेकफलसाधनत्वावच्छिन्नक्रियानिचयं ब्रूते, तत्र च फलसाधनत्वमुपाधिः, नचासाध्यक्रियानिचयस्य फलसाधनत्वं इति क्रियायाः साध्यत्वमपि प्रतीयत इति चेत्, तर्हि धातुना स्वार्थेऽभिहिते पश्चात् साध्यता प्रतीयते, ततो नियोगेन अन्वयार्थं स्वार्थं बोधयति अन्वितं च स्मारयतीति तस्य (तद्विकारत्वापत्तिः) [बहुवारं श्रवणापत्तिः]। किञ्चैवं यागे कृतिविषयत्वस्य अर्थापत्तिगम्यत्वेन तस्य

भा. नियोगविषयत्वस्य अशाब्दत्वम्। कृतिविषयत्वस्यैव तदर्थत्वात् (अन्यथा तस्यैक) [अन्यान्वित]कृतेः अपूर्वसाधनत्वेन प्रतीत्यसम्भवाच्च। न च अन्यकृतेरपि परम्परया अ(स्य)[न्य]साधनत्वमविरुद्धमिति वाच्यम्; परम्परासाधनत्वस्य प्रथममनुपस्थितौ अयोग्यस्य तस्य शब्दप्रतिपाद्यत्वानुपपत्तेः। तदुपस्थितौ वा साधनसाधनत्वेनोपस्थितकृतेरपूर्वसाधनत्वाभावेन तस्य तत्साध्यत्वाभावात्। प्रथमं यागस्यापूर्वसाधनत्वबोधकाभावाच्च॥

यत्तु लिङा [अपूर्वं]कृतिसाध्य(ता)[तया] प्रतीयते तदपर्यवसानात् यागस्य कृतिसाध्यत्वमिति, तन्न—किं कृत्यंशाभिधानस्यापर्यवसानम्? नियोगांशस्य वा?। आद्ये जातेरिवाश्रयं विना तत्परतन्त्रत्वात् कृतेर्न यागं विना अभिधानापर्यवसानम्, किन्तु सविषयत्वात कृतेर्विषयान्वयं विना तदाकाङ्क्षाया अनिवृत्तिरेव। कृतिविषयत्वं च कृतिसाध्यत्वम्। भावार्थेऽपि तदन्यस्याभावात्। तथा च अभव्योऽपि मृदादेरपि घटादिकृतिविषयत्वं व्यापारवत्तया तत्साध्यत्वमेव। तथा च अभव्योऽपि नियोगो यदि लोके भावार्थ[इव शब्दात्] कृतिसाध्यतया प्रतीयते तदा सविषयतया कृतेरभिधानात् किं तस्या अपर्यवसानम्। न च कृतियोग्यार्थस्य शब्देन तथाभिधाने अभिधानापर्यवसानमिति नियमोऽस्ति; घटत्वानाश्रयस्यापि भ्रान्त्या घटपदेनाभिधाने अभिधानपर्यवसानात्। नापि द्वितीयः, कृत्यसंसृष्टापूर्वमात्रांशाभिधानस्यापर्यवसानाभावात्, कार्यत्वेन तदभिधानं विषयं विना अपर्यवसन्नमिति वाच्यम्; तच्च कृतेरेवाभिधानापर्यवसानमिति कृतेर्यागविषयत्वस्य कार्यापर्यवसानलभ्यत्वे करणत्ववदशाब्दत्वापत्तेश्च॥

अत्रायं संक्षेपः—अभव्यमपूर्वं न लिङादिर्भावनासाध्यतया उपस्थापयितुमीष्टे अघटमिव घटपदं घटत्वेन। यद्यभव्यत्वाप्रतिसन्धानदशायां लिङादिरपूर्वं तथोपस्थापयति तस्य निर्वाहो धात्वर्थद्वारेति कल्प्यते, तर्हि समयान्तरभावित्वाप्रतिसन्धानदशायां स्वर्गसाधनत्वं यागस्य लिङादिः प्रतिपादयतु तस्य निर्वाहोऽपूर्वद्वारेति तुल्यम्। यदि स्वर्गपदव्युत्पत्तिदशायां तथैव तस्योपस्थितत्वादग्रेऽपि तथा प्रतिसन्धानं भवत्येव, तर्ह्यपूर्वस्यापि व्युत्पत्तिदशायां धात्वर्थान्यत्वेनोपस्थितत्वात्तस्यापि तत् प्रतीयेतेति तुल्यम्। न हि पदवाक्ययोर्बाधितार्थानुपस्थाने

विशेषोऽस्ति। यदि धात्वर्थस्य धातुसामर्थ्यात् कृतिसाध्यत्वं प्रतीयते स च अपूर्वस्य विषय इति अभव्यस्यापि कृतिसाध्यत्वं सम्भवतीति, तर्हि लिङ्पदस्य स्वार्थोपस्थापने उपपदसापेक्षत्वापत्तिः ॥ भा॰

यदि च वेदप्रामाण्यबहुमानादयोग्यता[ज्ञान]तिरस्कारेण निरपेक्षलिङ्पदेन कृतिसाध्यतया अपूर्वे उपस्थिते उपपदेन तन्निर्वाह एवं क्रियते इति, तर्हि यागस्यापि स्वर्गसाधनत्वे तुल्यम्। तत्र द्वारं शाब्दं अत्र त्वशाब्दमिति न किञ्चिदेतत्। निर्वाहप्रतीतिपार्ष्ठिकतयोस्तुल्यत्वात्। किञ्च, धातुना यागस्य कृतिसाध्यत्वोपस्थितौ कृतिरन्यावरुद्धेति क्षणिकस्य कर्मणः स्वर्ग इव अन्यावरुद्धकृतेः अन्यत्र साक्षात्तदयोग्यत्वान्नापूर्वस्य कृतिसाध्यताप्रतीतिनिर्वाहः ॥

यदि ह्याख्यातान्तधातूपस्थितैकफलसाधनत्वस्यैव सन्निहितापूर्वमादायैव पर्यवसानात् पारम्पर्यप्रतीतेः अन्यविषयकृतिसाध्यत्वमपूर्वस्य सम्भवतीति, तर्हि प्रतीतिदशायामेव पारम्पर्यप्रतीतौ तन्त्ववयवानां पट इव कृतेरपि नापूर्वसाधनतेति न तस्य कृतिसाध्यता। किन्तु यागसाध्यतयैव तस्य कृतिसाध्यता। ततश्च कार्यमपूर्वं न विध्यर्थः, अपि तु लोक इव धात्वर्थः स्यात्। लिङुपस्थितकृतेरपूर्वविषयतयैवोपस्थितेर्नाभिधानापर्यवसानमिति न प्रथमावगता(तौ)[पूर्वकृतिसाध्यता-] पर्यवसानादेव यागस्य कृतिसाध्यतालाभ इति निरस्तमेव ॥

तस्मादपूर्वस्य कृतिसाध्यत्वमिच्छता अपूर्वकृत्योः साध्यत्वसाधनत्वमात्रयोग्यताज्ञानेन अपूर्वे कृतिसाध्यतया शब्दादवगते तदनुपपत्त्यैव यागस्य कृतिसाध्यत्वं कल्प्यत इति वाच्यमिति तुल्यं यागस्य स्वर्गसाधनत्वेऽपि। वस्तुतस्तु न तौल्यम्। कृतिसाध्यातिरिक्तत्वेनोपस्थिते अपूर्वे कृतिसाध्यार्थतया लोके व्युत्पन्नस्य लिङादेः प्रथमावगतव्युत्पत्तिविरोधेन अपूर्वस्य न ततः कार्यात्मनोपस्थितिः सम्भवति। श्रेयस्साधनत्वे तु यागस्य लोकव्युत्पत्त्यनुरोधेनोपस्थितिः सम्भवतीति यागस्वर्गयोः साध्यसाधनत्वेनान्वयो वाक्यार्थ इति नापूर्वं कल्प्यम् ॥

किञ्च, अपूर्वस्य यागविषयकृतिसाध्यत्वं नाम कृतिजन्ययागजन्यत्वम्, न त्वन्यत् सम्भवति। तथा च कार्यत्वेनापूर्वे पदावगते ततो यागादेरन्वयः तदन्वयादेव तस्य कार्यत्वेनावगम इतीतरेतराश्रयः। अपूर्वकरणत्वं वा तव कथमौपा-

भा. दानिकं स्यात् । न चैवं विमर्शमादाय शब्दो विषयान्वितं कार्यं बोधयतीति वाच्यम् ; विमर्शस्य शब्दत्वे कदाचित् करणत्वं शाब्दं कदाचिदौपादानिकमिति स्यात् । अशब्दत्वेऽपि विमर्शोपस्थितमपूर्वमादाय वाक्यं स्वर्गसाधनत्वमेव बोधयतु अपूर्वं चौपादानिकं भवतु ॥

किञ्च, कार्ये कथं यागस्यान्वयः ?। विषयत्वेनेति चेत्, किं यागस्यापूर्वप्रत्यवच्छेदकत्वं विषयत्वम् ? घटकत्वं वा ?। नाद्यः, कृतिर्हि स्वविषयेणावच्छिद्यते। तत्साध्यं च तद्विषयः। तत्र यदि लिङा कृतिसाध्यत्वेन धात्वर्थातिरिक्तं कार्यमुपस्थाप्यते, तर्हि विषयतयैव कृतेरभिधानान्न तस्या विषयाकाङ्क्षा किंविषयकृतिसाध्यं इति । अतो न या[गो] विषयीभूतकृतिमवच्छिनत्ति । शब्दात् प्रतिपन्नमेवानुपपन्नमिति चेत् , तत् किं त्यक्तमेव ?। अथ न त्यक्तं (एवं) तर्हि सविषयतया प्रतीयमानकृतेर्न विषयाकाङ्क्षेति न यागस्य विषयत्वेनान्वयः॥

तदुपादानं तेन विना न भवतीति चेत्, सत्यम्—तर्हि केन द्वारेण तत् कृतिसाध्यं ? इत्याकाङ्क्षायां करणत्वेनैव कृतौ यागस्यान्वयः। तद्द्वारस्यैव भाव्यावच्छिन्नकृतिकारणत्वात् । करणत्वातिरिक्तस्य केन ? इत्याकाङ्क्षिततृतीयार्थस्य अभावाच्च। अत एव—'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः' इति निरस्तम् । कृतितत्साध्यमध्यस्थस्य कृतिद्वारतया करणत्वात् । कृतिं प्रति विषयत्वेन यागस्यावच्छेदकत्व एव तस्यापूर्वविषयत्वात् । एतेन मध्यस्थः प्रतीतिसम्बन्धित्वाद्विषयः उत्पत्तिसम्बन्धि सत् करणमिति विवेको निरस्तः । आकाङ्क्षाऽभावे उत्पत्तिसम्बन्धित्वं विना यागस्य कार्यप्रतीतिसम्बन्धाभावात् । आकाङ्क्षाऽभावे पृथक्करणत्वान्वयासम्भवाच्च ॥

न च कृतिसाध्यत्वमेव कृतिविषयत्वम्, तच्च यागस्याप्यस्तीति किं तस्य निराक्रियत इति वाच्यम्। क्रियात्ववदविद्यमानस्यापि तस्य विघ्यनपेक्षिततया शब्दाबोध्यत्वात् । कृतिद्वारतया अपूर्वावच्छिन्नभावनाकरणत्वस्यैव तदाकाङ्क्षितस्य शब्दार्थत्वात् । एवं घटकतयैव कृतिविषयत्वमित्यत्रापि यागः कस्य किं घटयति ?। कृतेः सविषयत्वम् ? अपूर्वस्य वा तत्साध्यत्वम् ? नाद्यः, अपूर्वस्य शब्दावगतकृतिसाध्यत्वपरित्यागे कृतेरपि तद्विषयत्वपरि-

**नैतत् सारम्—अनुपपत्त्यभावात्। तथाहि—नियोगस्वरूपं तावत् न फलधात्वर्थसम्बन्धमन्तरेण अनुपपन्नम्; अनाप्तनियोगे नैयमिके [नैमि-**

---

किं नियोगस्वरूपमेव फलसाधनत्वं कल्पयति? उत अन्यप्रवर्तकत्वम्? इति विकल्प्य, आद्यं दूषयति—**तथा हीति**। ननु 'स्वर्गकामः सिकतां भक्षयेत्' इत्यनाप्तनियोगो नियोग एव न भवतीत्याशङ्क्याह—**नैमित्तिके चेति**। नैमित्तिकशब्दो नित्यस्याप्युपलक्षणम्। फलमन्तरेणापि नित्यनैमित्तिकयोः  ता

---

त्यागात्। तस्य च कृतेर्यागविषयत्वे अभावप्रसङ्गात्। न द्वितीयः, न ह्य(स्य)-[न्य]साधनया [कृत्या] अन्यत् (साक्षात्कारेण) [साक्षात्] साध्यते। तस्याः परम्परया साधनत्वं तु यागस्य तत्करणत्वं विना न सम्भवतीति तेनैव रूपेण यागस्यान्वय इति नान्वयान्तरं कल्प्यम्। अस्तु इति चेत्, एवं व्यवहितस्य परमापूर्व इव स्वर्गेऽप्युपायत्वं सम्भवति। अपूर्वत्वाकारेण परमापूर्वस्य क्रियानन्तरभावित्वयोग्यत्वं स्वर्गेऽपि केनचिद्रूपेण वक्तुं शक्यत एव। स्वर्गत्वाकारेण तस्य तदयोग्यत्वं तु अधिकारापूर्वेऽपि विशेषरूपेण समानम्। किञ्च, अपूर्वाय प्रवृत्ता कृतिः कथं यागं विषयीकुर्यात्? तदुपायस्यैव तदर्थकृतिगोचरत्वात्, यागस्य च व्यवहिततया अपूर्वानुपायत्वात्। अन्यथा स्वर्गार्था कृतिरेव व्यवहितं यागं विषयीकरोतु॥  भा

वस्तुतः परमते व्युत्पत्तिकाले कृतिव्यवहिततयोपस्थिते कृतिसाध्यत्वेन व्युत्पत्तिरेव न सम्भवतीति न शब्दादपूर्वस्य कार्यत्वेनोपस्थितिः। किंतु अ(पूर्वादिद्वारे) [पूर्वत्वादिरूपे]णैव वाच्यमिति न यागः तस्मिन् विषयो न वा करणम्; क्रियां प्रत्येव करणतया अन्वयस्य वक्तव्यत्वात्। अतो यागस्य प्रत्ययार्थे न कथमप्यन्वय इति पापीयसी इयं प्रक्रियेत्यभिप्रेत्याह—**नैतत् सारमिति**॥

गुरुप्रक्रियायामपि यागस्य फलसम्बन्धो न सिध्येत् इत्याह—**अनुपपत्त्यभावादिति**। **नियोगस्वरूपम्**। विषयान्वितनियोगस्वरूपमित्यर्थः। **अनाप्तनियोगे**। स्वर्गकामस्य चैत्यवन्दनादिनियोगे। एतच्चोपक्रममात्रम्। **नैयमिके**—नित्यनियोगे। एतदुक्तं भवति—सविषयनियोगापर्यवसानाद्धि

त्तिके] वा [च] अदर्शनात्। प्रवर्तकत्वमनुपपन्नमिति चेत्, यदि फलकामनापि नियोगेन प्रवृत्तावपेक्ष्यते सैव तर्हि प्रवृत्तिहेतुः, न नियोगः। प्रत्यक्षादिषु तस्याः प्रवर्तने स्वातन्त्र्यदर्शनात्। अथ नापेक्ष्यते कामः, तर्हि फलकामनामनपेक्ष्य बलवदनिलसलिलौघनुद्यमान इव पुरुषे नियोगेन प्रवर्त्यमाने न फलसम्बन्धकल्पनावकाशः, सलिलादिनोदनेऽपि प्रसङ्गात्॥

**ननु फलकामिनो नियोगः प्रमीयमाणोऽनुपपन्नः फलसम्बन्ध-**

---

ता. नियोगस्वरूपं प्रतीयते इत्यर्थः। द्वितीयमुत्थापयति—**प्रवर्तकत्वमिति**। तर्हि फलकामना नियोगेन प्रवृत्तावपेक्ष्यते? उत नापेक्ष्यते? इति विकल्प्य, आद्यं दूषयति—**यदि फलेति**। तस्याः स्वातन्त्र्येण प्रवर्तकत्वे युक्तिमाह—**प्रत्यक्षादिष्विति**। द्वितीयमुत्थाप्य दूषयति—**अथ नापेक्ष्यत इति**॥

विशिष्टस्वरूपनियोगस्यान्यथानुपपत्त्या फलं कल्प्यत इति शङ्कते—

---

भा. फलकरणत्वं धात्वर्थस्येति त्वया वर्ण्यते। तन्न युक्तम्—फलधात्वर्थसम्बन्धं विनापि नित्यनियोगस्येवान्यस्यापि पर्यवसानसम्भवात्। शब्दप्रवृत्तेरुभयत्रापि तुल्यत्वात्॥

ननु स्वर्गसाधननियोगः काम्यवाक्येन प्रतीयते न तु नित्यनियोगः इति कथमुभयत्र [तौल्यम्? इति] चेत्, न—स्वर्गसाधनत्वेनापूर्वस्याशाब्दत्वात्। शब्दादन्यस्य तदुपस्थापकस्याभावात्। अशाब्दविशेषाकाङ्क्षया शब्दस्याभिधानापर्यवसानासम्भवाच्च। अपूर्वस्यैव स्वर्गार्थि[कृति]गोचरत्वात्। यागस्य तदुपायस्य तदयोगात्। अतो यागस्यापूर्वार्थकृतिगोचरत्वेन तत्करणत्वस्यैव वक्तुमुचितत्वादिति॥

किञ्च, नियोग(विधे)[सिद्धे]रेव त्वन्मते पुरुषार्थत्वेन फलधात्वर्थसम्बन्धं विना न तस्य प्रवर्तकत्वासम्भवः, तत्र कामाधिकारे करणांशे राग एव प्रवर्तक इति धात्वर्थफलसम्बन्धो वाच्य इ(त्या)[त्यत आ]ह—**यदीति**। व्यभिचारा-(दंशे)[दङ्गे]ऽपि (प्रवर्तक)[प्रधानफल]रागात् प्रवृत्त्युपपत्तेः (चेति भावः। फलधात्वर्थेऽपि) [प्रधानेऽपि] स्वतः पुरुषार्थनियोगायैव प्रवृत्त्युपपत्तेरिति भावः।

मन्तरेण, अन्यथा फलकामिनियोगो न स्यात् । कोऽयमभिप्रायः ? । यदि तावत् फलकामना नियोगाधिकारिविशेषणं न स्यात् फलधात्वर्थसम्बन्धमन्तरेणेति, तन्न—जीवनादीनामसाध्यानामप्यधिकारिविशेषणत्वदर्शनात् । साध्यस्य विशेषणत्वमनुपपन्नमिति चेत्—न तावदनेन साध्यत्वं सिद्धवत्कर्तुं शक्यते । स्वरूपेण साध्यत्वं चेत् न—अविवक्षितत्वात् । तथा हि—अधिकारिविशेषव्यावृत्तिमात्रप्रयोजनतया विशेषणपरेण शब्देन साध्यता न विवक्ष्यते । नार्थादपि साध्यत्वविवक्षा ; तत्र प्रमाणस्य अद्याप्यदर्शनात् । कामनैव च सिद्धस्वरूपा अधिकारिविशेषणम् । स्वर्गस्य तद्व्यावर्तकत्वात् ॥

---

ता. **नन्विति** । अनुपपत्तिमेव दर्शयति—**अन्यथेति** । किं कामनाया अधिकारिविशेषणत्वप्रतीत्यन्यथानुपपत्त्या धात्वर्थफलयोः संबन्धः कल्पनीयः इत्युच्यते ? किं वा साध्यस्याधिकारिविशेषणत्वान्यथानुपपत्त्या ? इति विकल्प्य, आद्यं दूषयति—**यदि तावदिति** । द्वितीयमुत्थापयति—**साध्यस्येति** । तत्रापि किमनेनैव धात्वर्थेन साध्यविशेषणत्वान्यथानुपपत्तिः ? किं वा साध्यमात्रस्य विशेषणत्वान्यथानुपपत्तिः ? इति विकल्प्य, आद्यं दूषयति—**न तावदिति** । यागसाध्यस्य स्वर्गस्याधिकारिविशेषणत्वे सिद्धे यागस्य फलहेतुत्वकल्पना, सत्यां च तस्यामनेन यागेन साध्यत्वं फलस्य सिध्येत, इति परस्पराश्रयत्वं स्यादित्यर्थः । द्वितीयमुत्थापयति—**स्वरूपेणेति** । स्वरूपेण साध्यत्वमपि स्वर्गकामपदेनावगम्यते ? किं वा अर्थापत्तेः ? इति विकल्प्य, आद्यं दूषयति—**न—अविवक्षितत्वादिति** । अविवक्षितत्वमेवोपपादयति—**तथा हीति** । द्वितीयं दूषयति—**नार्थादिति** । जीवनादिवत् साध्यत्वमन्तरेणापि विशेषणत्वसम्भवादित्यर्थः । स्वर्गस्याधिकारिविशेषणत्वमङ्गीकृत्यैतदवोचाम, सैव तु नास्तीत्याह—**कामनैवेति** । तर्हि स्वर्गग्रहणं कथम् ? इत्याशङ्क्य, कामनाया एव विशेषणत्वेनेत्याह—**स्वर्गस्येति** ॥

---

भा. **फलकामना** । काम्यमानं फलमित्यर्थः । **अनेनेति** । यस्य धात्वर्थस्य फलसम्बन्धो नियोगाधीनो वर्ण्यते (तेन तस्य) [तत्साध्यत्वस्य] पूर्वमप्रतीतेरित्यर्थः ॥

**शब्देन साध्यता न विवक्ष्यते इति** । ननु कामनागोचरतया स्वर्गस्य

**किञ्च, अन्यसाध्यस्यापि व्यापारान्तरे अधिकारिविशेषणत्वं दृश्यते—'अध्येतुकामो भैक्ष्यं चरेत्' 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' 'ग्रामकामो[म]स्रुङ्क्ष्व' इत्यादौ। न चाधिकारिविशेषणत्वमपि स्वर्गकामनायाः सम्भवति; अयोगान्ययोगव्यवच्छेदासम्भवात्। तथा हि—स्वर्ग-**

---

ता. अस्तु वा स्वर्गस्य कामनाविशेषणतया साध्यत्वमधिकारिविशेषणत्वञ्च, तथापि तेन धात्वर्थेन साध्यत्वमन्तरेणापि तत् घटते इत्याह—**किञ्चेति**। पूर्वं स्वर्गकामनाया अधिकारिविशेषणत्वमङ्गीकृत्योक्तम्, इदानीं तदपि नास्तीत्याह—**न चेति**। अयोगान्ययोगव्यवच्छेदासम्भवमेव प्रपञ्चयति—**तथा हीति**।

---

भा. साध्यत्वं प्रतीयते साध्यस्वर्गश्च नियोज्यविशेषणमिति न शब्दस्य नियोज्यपरत्वविरोधोऽपीति चेत्, न—अनेन वाक्येन स्वर्गस्य साध्यत्वप्रतिपत्तौ साध्यनियोगानुभेदेन शास्त्रभेदापत्तेः। न च साध्यस्वर्गो नियोज्यविशेषणतया साध्यनियोगानुगुण इति न स्वतन्त्रसाध्यभेदोऽस्तीति वाच्यम्; नियोगस्य शब्दादुपस्थितिदशायां काम्यमानस्वर्गसाधनत्वेनानुपस्थिततया स्वर्गकामिनः तत्कार्यबुद्ध्यसम्भवेन तस्य नियोज्यविशेषणतया तदनुकूलत्वायोगात्। न हि शब्दात् कृतिसाध्यतामात्रेण अवगमे स्वर्गो नियोज्यविशेषणतया अपेक्ष्यते। तद्व्युत्पत्तिपूर्वं तु न शब्दात् स्वर्गस्य साध्यत्वेन प्रतिपत्तिः। समभिव्याहृततावत्पदैरेव वाक्यार्थप्रतीतेर्निष्पाद्यत्वात्। अतः शब्दोपस्थितस्वर्गसाध्यत्वं कथमपि न नियोगेऽनुगुणमिति शास्त्रभेद एव। किञ्च, स्वर्गस्य साध्यत्वेनोपस्थितौ तस्य साधनत्वेनान्वयं विना अन्विताभिधानापर्यवसानम्, नासाधनेन पुरुषेण न वा असाध्येन नियोगेन (?)। अतः शब्दात्तस्य साध्यत्वप्रतीतिमिच्छता त्वया (वि)[ऽपि]नियोगस्यैव तत्साधनत्वेन अन्वयो वाच्य इति स्वर्ग एवापूर्वसाध्यं प्रधानम्, अपूर्वं तु तद्गुणभूतमिति साधु समर्थितं **गुरुरहस्यम्**। अतो न स्वर्गस्य तव मते शब्दात् साध्यत्वप्रतीतिः सम्भवति। एवं स्थायिकार्ये [न] व्युत्पत्तिः सिध्यतीति चेत्, मा भूत् का नः क्षतिरिति भावः॥

**अन्यसाध्यस्यापि अधिकारिविशेषणत्वं** दृष्टमित्युक्त्वा स्वर्गस्य परमते विशेषणत्वमेव न संभवतीत्याह—**न चाधिकारीति**। न चाधिकारि-

कामपदं दर्शपूर्णमासनियोगस्य पुरुषेण असंयोगं न व्यवच्छिनत्ति ; नित्यविधिनैव पुरुषान्वयस्य सिद्धत्वात्। नापि नियोगस्य अस्वर्गकामसम्बन्धव्यवच्छेदार्थं विशेषणम् ; अत्रापि दर्शपूर्णमासनित्यविधिसम्बन्धविरोधात् । न च नित्यकाम्यनियोगभेदः ; साङ्गदर्शपौर्णमासनियोगस्य अविशिष्टत्वात् अधिकारिमात्रभेदात् । तस्मात् 'दण्डी प्रैषानन्वाहे'तिवत् विशेषणस्वर्गपरमिदं वचनं न विशिष्टपुरुषपरमिति फलवचनमेतत्

---

इदानीमन्ययोगव्यवच्छेदकत्वमपि नास्तीत्याह—**नापीति**। अकामिनोऽपि जीवनवतो दर्शपूर्णमासादिनियोगेन सम्बन्धादन्ययोगव्यवच्छेदकत्वमपि नास्तीत्यर्थः॥ ता.

ननु काम्यनियोगोऽन्यः, नित्यनियोगश्चान्यः, तत्र काम्यनियोगे अयोगान्ययोगव्यवच्छेदकत्वमस्तीत्याशङ्क्याह—**न च नित्येति**। नियोगैक्ये प्रत्यभिज्ञायमाने फलसंयोगमात्रस्य भेदकत्वाभावादित्यर्थः। कथं तर्हि नित्यकाम्यभेदः ? इत्यत आह—**अधिकारिमात्रेति**। व्यर्थं तर्हि स्वर्गकामपदमिति ; नेत्याह—**तस्मादिति**। यत्प्रैषानन्वाह तद्दण्डी सन्निति विशेषणपरं यथा वाक्यम्, तथा स्वर्गकामपदमपि विशेषणस्वर्गपरमित्यर्थः। तदाहुः पार्थसारथिमिश्राः—

अपेक्षितत्वाद्भाव्यस्य कामशब्दा हि तत्पराः ।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम् ॥ इति ॥

---

भेदादेव नित्यकाम्यवैजात्यम्, नियोगभेदे सिद्धे अर्थवत्त्वादस्याधिकारिविशेषणत्वं तद्भेदेन नियोगभेद इत्यन्योन्याश्रयः इत्यभिप्रेत्याह—**अधिकारिमात्रभेदादिति** ॥ भा.

किञ्च, अपूर्वे व्युत्पत्त्यसम्भवान्नापूर्वं लिङर्थः ; तस्य मानान्तरागोचरत्वात् । अनधिगते च व्युत्पत्त्यसम्भवात् । न च शब्दोपस्थिते व्युत्पत्तिः, अन्योन्याश्रयात् । न च स्वर्गकामपदसमभिव्याहाराख्यतर्कादेव तस्योपस्थितिरिति वाच्यम् ; लिङादिव्युत्पत्तेः पूर्वं स्वर्गस्य साध्यत्वेन शब्दादुपस्थितौ तदाकाङ्क्षया यागादेः साधनतयैव वाक्येनान्वयस्य प्रतिपाद्यत्वात् । लोकावगतव्युत्पत्त्या सर्वपदार्थोपस्थितौ शाब्दबोधे विलम्बायोगात् । स्वर्गस्य साध्यत्वाप्रतीतौ च न त्वदभिमततर्कस्याप्यवतारः ॥

**स्वर्गकामपदम् । अर्थात् स्वर्गकामोऽधिकारी भवति । फलवचनं च साधनवचनेन अन्विताभिधानमर्हतीति न नियोगाभिधानावकाशः ।**

---

ता. कथं तर्ह्यधिकारिसिद्धिः ? इत्यत आह—**अर्थादिति** । यागस्य स्वर्गसाधनत्वे बोधिते ममापेक्षितफलसाधनमिदं कर्मेति कर्मण्यैश्वर्यलक्षणमधिकारं पुरुषः प्रतिपद्यते इत्यर्थः । भवत्वेवम्, तथापि नियोगो वाक्यार्थः किं न स्यात् ? इत्यत

---

भा. किञ्च, यदि स्थायिकार्यं न स्यात् तर्हि स्वर्गकामपदसमभिव्याहारो न
स्यादिति प्रसञ्जनरूपतर्कस्य व्याप्तिग्रहोऽपेक्षित इति कथं तदभावे तर्कादु-
पस्थितिः, तत्सद्भावे वा कथं तस्यापूर्वत्वम् । न च यागस्य साधनत्वमपि
बाधितं कथं शब्दः प्रतिपादयति इति वाच्यम् ; अपूर्वेऽपि कृतिसाध्य-
त्वप्रतीतिबाधस्योक्तत्वात् । किञ्च, प्रवृत्त्यङ्गमेव यागस्य साधनत्वं श्रुत्यो-
पदिश्यते । तच्च यागादेः फलानुकूलत्वमेव, न तु अनन्यथासिद्धत्वे सति
फलाव्यवहितपूर्वकालत्वम् । प्रवृत्तौ तज्ज्ञानस्यानुपयुक्तत्वात् ॥

तदनुकूलत्वं च तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वम्, एतच्च
परम्परासाधनेऽपि यद्यप्यस्ति ; तथापि यस्मिन् सत्यग्रिमपुरुषव्यापारो नापेक्ष्यते
तदेव श्रेयस्साधनं शास्त्रेणोपदिश्यते, यागश्च तथा इति श्रेयस्साधनतया
श्रुत्योपदिश्यते । न चैवं यागस्य साधनत्वं केनचित् प्रमाणेन बाध्यते ; स्वर्गा-
व्यवहितपूर्ववर्तित्वेऽपि नियोगस्यानुष्ठानायोग्यस्य प्रवर्तकशास्त्रार्थत्वायोगात् ।
त्वत्पक्षेऽपि लोकव्युत्पत्त्यनुसारेण क्रियाकार्यस्यैवोपदेशोऽस्तु ; उक्तविधया
तस्यापि कामिनियोज्यकृतिसाध्यत्वोपपत्तेः । किञ्च, धात्वर्थव्युत्पत्त्यनुरोधेन
स्थायिकार्ये [तर्केण] धात्वर्थसम्बन्धितया निर्णीते लिङो लक्षणा अस्तु । किं
लोकव्युत्पत्तिविरुद्धशक्तिकल्पनया । वाच्यार्थसम्बन्धित्वेन निर्णयमात्रस्य
लक्षणाबीजत्वात् ॥

तस्मात् कृतिसाध्यत्वे सति श्रेयस्साधनत्वमेव लिङर्थः । न चैवं
साध्यत्वसाधनत्वयोर्विरोधः ; (स्वस्मिन्) [स्वर्ग]साधनत्वे[नोपस्थिता] पूर्वस्यैव
त्वयापि कृतिसाध्यत्वेन ज्ञानाङ्गीकारात् । अन्यान्यनिरूपितसाध्यत्व-
साधनत्वयोः स्वरूपेणैकत्र प्रतीत्यविरोधात् । न हि यदा साध्यत्वं (तदा)

ततश्चेष्टसाधनमेव लिङ्गादिशब्दार्थो विधिरिति ॥

अन्ये मन्यन्ते—विषयनियोज्यव्यावृत्ते नियोगे अभिधीयमाने विषयनियोज्ययोरन्वयः सामर्थ्यादवगम्यते। अन्यथा अधिकारिणो विषयेण कर्तृकर्मानन्वयेन अननुष्ठीयमाने विषये नियोगस्य निर्वृत्त्ययोगात्। ततश्च अधिकारिणा धात्वर्थोऽन्वीयमानः तद्विशेषणेन स्वर्गेणापि अन्वेति। विशिष्टान्वयस्य विशेषणेनापि अन्वयात्। तत्र अन्वयो गुणप्रधानभावादृते नोपपद्यते इति स्वर्गः प्राधान्येन कर्म गुणभावेनेति सम्पत्स्यते साध्यसाधनसम्बन्ध इति ॥

नैतत् सारम्—जीवनगृहदाहादिविशेषणेनापि यागस्य अन्वयप्रसङ्गात्। को दोषः? इति चेत्, जीवनादेः धात्वर्थं प्रति अङ्गत्वेन अन्वये विकृतावतिदेशः प्राप्नुयात्। तत्र 'यावज्जीवं सौर्यं चरुं निर्वपेत' इति

---

आह—फलवचनं चेति। कस्तर्हि वाक्यार्थः? इत्यत आह—ततश्चेति ॥ ता

साध्यसाधनसम्बन्धावगमे पक्षान्तरमुत्थापयति—अन्ये मन्यन्ते इति। यागो विषयः नियोज्यः स्वर्गकामः, तद्व्यावृत्ते—तद्विशिष्टे। नियोगेनान्वीयमानयोः विषयनियोज्ययोः कथं परस्परान्वयावगमः? इत्यत आह—सामर्थ्यादिति। सामर्थ्यमेव दर्शयति—अन्यथेति। विषयसिद्ध्या नियोगसिद्धिरिति न्यायात नियोज्येनाननुष्ठीयमानविषये नियोग एव न सिद्ध्येत्। ततश्च नियोगः स्वसिद्धये तयोरन्वयमनुपपद्यमानः कल्पयतीत्यर्थः। भवत्वेवम्, तथापि धात्वर्थफलसम्बन्धः कथम्? इत्यत आह—ततश्चेति। विशिष्टेन स्वर्गकामेनान्वयो यस्य धात्वर्थस्य तस्य तद्विशेषणीभूतस्वर्गेणान्वयो भवति दण्डिनान्वीयमानस्य दण्डेनेवेत्यर्थः। तथापि कथं स्वर्गयागयोः साध्यसाधनभावः? इत्यत आह—तत्रान्वयः इति ॥

यदुक्तं विशिष्टान्वयस्य विशेषणेनाप्यन्वय इति; तद्दूषयति—नैतदिति। जीवनादेरङ्गत्वेनान्वयः? किं वा प्राधान्येन? इति विकल्प्य, आद्यं दूषयति—जीवनादेरिति। तत्र को दोषः? इत्यत आह—तत्रेति। द्वितीयं दूषयति

---

[तदैव तस्य] साधनत्वं श्रुत्योपदिश्यत इत्यभिप्रेत्योपसंहरति—ततश्चेति। भा.

स्यात् । प्राधान्येनान्वये जीवनादेरपि कर्मसाध्यत्वं स्यात् । तस्मात् स्वर्गकामपदं फलविशेषपरतया सामान्येन श्रेयस्साधनविध्यभिधायिना लिङादिपदेन अन्विताभिधानं करोति ॥

ननु शाब्दे फलविशेषान्वये सामान्येन श्रेयस्साधनत्वापर्यवसानसामर्थ्यात् विशेषान्वय इत्युक्तमयुक्तम् । नैष दोषः—विशेषसाकाङ्क्षश्रेयस्सामान्यसाधनत्वविधिसामर्थ्यात् स्वर्गकामपदं फलविशेषपरं कल्प्यते । विध्याकाङ्क्षानिबन्धनत्वात् पदान्तरतात्पर्यस्य । ततश्च विधिसामर्थ्यात् फलसम्बन्ध इत्युक्तम् । ननु तिङ्-कृत्-तद्धित-समासैरनभिहित इति विशेषणात् लिङा यागस्य करणताभिधाने ज्योतिष्टोमेनेति तृतीया नोपपद्यते इति, न—यागज्योतिष्टोमसामान्यविशेषप्रकृत्यर्थभेदोपरक्तकरणत्वभेदाददोषः इत्यलमतिप्रसङ्गेन ॥

177 - 7.9 विषयसिद्धिः कथम्? इति; तदाह—तथा सति कुत इति। तदेवं
178 - 3 इत्याद्युक्तानुकीर्तनम्। प्रथमं तावदिति भाष्यस्य तात्पर्यकथनम्। ननु विषयः समन्वयलक्षणेनैव गम्यते। प्रयोजनं च चतुर्थाध्यायेनैव

---

ता. —प्राधान्येनेति ॥

पूर्वापरविरोधमाशङ्कते—ननु शाब्दे इति। फलविशेषान्वयस्य शाब्दत्वं न निराकुर्मः, किन्तु सामान्येन हितसाधनाभिधायि लिङादिपदं स्वर्गकामादिपदसमभिव्याहारात् फलविशेषसाधनत्वपरतया निर्णीयते इति ब्रूमः, तेन न पूर्वापरविरोधः, इति परिहरति—नैष दोष इति। तत्र हेतुमाह —विध्याकाङ्क्षेति। प्रधानापेक्षितार्थसमर्पकत्वादितरेषां पदानामित्यर्थः। व्याकरणविरोधमाशङ्कते-—नन्विति। यागमात्रस्य करणत्वे लिङा अभिहितेऽपि ज्योतिष्टोमाख्ययागविशेषस्य तृतीयया करणत्वाभिधानात न दोषः इति परिहरति—यागज्योतिष्टोमेति ॥

इति पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपिकायां
प्रथमवर्णकं समाप्तम् ॥

---

भा. साधनत्व[करणत्वयोः] सामान्य(विषय) [विशेष]तया भेदादपि करणत्वमनभिहितमि(त्या)[त्यभिप्रेत्या]ह—अलमतिप्रसङ्गेनेति ॥

प्रमीयते । तत्र किमिति विषयप्रयोजने प्रथमसूत्रेण सूचिते इति ;
तत्राह—शास्त्रस्यादिरयमिति । ननु एकस्य सूत्रवाक्यस्य अनेकार्थत्वम- 178-6
युक्तमिति ; तत्राह—सूत्रं चैतदिति । 'तत्र अथशब्दः' इत्यादिपदव्याख्या- 178-7
नभाष्यस्य वृत्तसङ्कीर्तनपूर्वकं तात्पर्यमाह—एवं सूत्रस्यादित्वेनेति ॥ 178-9

॥ इति पञ्चपादिकाविवरणे प्रथमवर्णकं समाप्तम् ॥

---

सूत्रवाक्यस्यानेकार्थत्वं न दूषणम्, पौरुषेयवाक्ये विवक्षानुसारेण भा.
तस्यादोषत्वादित्याह—सूत्रं चेति ॥

उत्पत्तिस्थितिसंहारलीलाविग्रहवैभवम् ।
विश्वस्यानन्दसन्दोहं वन्दे नरहरिं गुरुम् ॥

इति पञ्चपादिकाविवरणव्याख्यायां भावप्रकाशिकायां
प्रथमवर्णकं समाप्तम् ॥

---

## ॥ अथ द्वितीयवर्णकम् ॥

**तत्र उक्तस्तावद्विचारविधेः फलानुबन्धो व्यवहितविषयब्रह्मात्म-**

---

भा.

स्वाध्यायाधीतिमन्तोऽपि यं प्रमातुमनीश्वराः ।
मुनयोऽनिशमीशानं तं वन्दे नृहरिं गुरुम् ॥

ननु '**सिद्धेव ननु ब्रह्मजिज्ञासा**' इति (पञ्च-180) कथमयमाक्षेपः सङ्गच्छताम् ?। न हि धर्ममीमांसायां ब्रह्म निरूपितमुपलभ्यते। ननु तत्र सशेषं कार्यं निरवशेषं निरूपितम्, आत्मा च भूतभव्यन्यायेन तच्छेषः इति चेत्, न— असङ्गस्यात्मनो भूतस्यापि कर्मानङ्गत्वात्। आत्मा च असङ्ग इत्यध्यासभाष्ये निरूपितमिति नात्र गतार्थत्वशङ्कावकाशः ॥

ननु उक्त एवार्थोऽत्राक्षिप्यते, न तावदात्मनोऽसङ्गत्वं प्रत्यक्षादिसिद्धम्, नापि श्रुत्या सिध्यति, तस्याः कार्यपरत्वादिति चेत्, तर्हि समन्वयसूत्रेणैव गतेयमाशङ्का । तत्रैव आम्नायस्य कार्यपरतामाशङ्क्य सिद्धेऽपि स्वप्रधानात्मनि प्रामाण्यप्रतिपादनात् । एतेन—अत्र जैमिन्यादिवाक्यपर्यालोचनात् प्राचीन- विचारस्य एकदेशविषयत्वोपस्थापनमुखेन अस्य विचारस्य अगतार्थत्वं व्यवस्था- प्यते, न चैवं तत्र व्युत्पादितम्, अतो व्युत्पादनप्रकारभेदात् नायं विचारः तेन गतार्थः इति प्रत्युक्तम्। तथापि तत्र सिद्धे व्युत्पत्तिप्रतिपादनेन अत्र कार्यशेषतया गतार्थत्वशङ्कानवतारात्। न च सिद्धार्थत्वेऽपि लोके पदानां वेदान्तानां प्रयोजनसिद्ध्यर्थं कार्यपरत्वमादाय शङ्केति वाच्यम् ; एतस्या अपि तत्रैव प्रथमवर्णके निराकृतत्वात्, अत्र तन्निरासाभावाच्च। जैमिन्यादिवाक्य- स्यापि (तद्भावमात्रविषया तस्येति) [तद्भूतानामित्यादेः प्रकान्तविधिभागमात्र- विषयत्वस्य] भाष्यकारैः व्युत्पादितत्वाच्च । अत एव इदमपि निरस्तम्— उत्पत्त्याद्यसम्भवेन तत्र ज्ञानविधिर्निरस्तः अत्र वैरूप्यप्रसङ्गेनेति न विफलोऽयं विचार इति । अत्र ज्ञानविधिपरत्वशङ्काया एवानुदयात् ॥

ननु नात्र गतार्थत्वशङ्कानिरासे तात्पर्यम् ; किन्तु **वेदान्तमीमां- साशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्** इति भाष्याक्षेपसमाधाने इति चेत्, तथापि आक्षेपहेतोरनिरूपणात् इत्याशङ्क्याह—तत्रोक्त-

तानुबन्धश्च। इदानीमव्यवहितविचारविषयानुबन्धमन्यत एव अप्राप्तानु-
ष्ठानं दर्शयितुं प्रथममाक्षिपति—सिद्धैव ननु ब्रह्मजिज्ञासेति। वेदान्तानामर्थ- 180 - 1
निर्णयापेक्षितो न्यायकलापः 'अथातो धर्मजिज्ञासा' इत्यादिसूत्रैः सूत्रित
इत्यर्थः ॥

ननु विधिवाक्यार्थनिर्णयस्तत्र प्रवृत्तः इत्याशङ्क्याह—सकलवेदार्थ- 180 - 2
(स्य विचारि) [विचारस्य उदि] तत्वादिति। वेदस्य कार्यमात्रपरत्वादित्यर्थः।
ननु वेदान्ततात्पर्यात् ब्रह्मावगम्यते न कार्यम्, अनवगम्यं च न वाक्य-
प्रमेयमिति; तत्राह—ब्रह्मज्ञानस्य चेति। ननु क्रियाविधिकलापो निरू- 180 - 2
पितः, ज्ञानविधिनिरूपणायेदमारभ्यत इति; नेत्याह—अतः सिद्धैवेति। 180 - 3
उत्पत्तिविनियोगप्रयोगाधिकाराणां विध्यपेक्षितरूपाणां क्रियाप्रति-

---

उत्पत्तिविनियोगेति। तत्रोत्पत्तिविधिर्नाम कर्मस्वरूपमात्रबोधकः। ता.

---

स्तावदित्यादिना। प्रथममाक्षिपतीति। एकदेशिनामारम्भमिति शेषः। भा.
स्वप्रधानब्रह्मपरत्वमङ्गीकृत्य। आक्षेपबीजं तु धर्मजिज्ञासासूत्रस्थातश्शब्दसा-
मर्थ्यादि उपरिष्टात् व्यक्तम्। अत्र ब्रह्मजिज्ञासासूत्रं [व्यर्थमिति] आक्षेपाभि-
प्रायः। धर्मजिज्ञासासूत्रस्थातश्शब्दसामर्थ्यात् वेदार्थमात्रविचारप्रतिज्ञासिद्धौ
अस्य वैयर्थ्यात्। न तु जन्मादिसूत्रविचारस्याप्याक्षेपः; [पूर्वतन्त्रे] 'यतो
वा' इत्यादिवाक्यार्थविचारस्यानुपलम्भात्। प्रमेयभेदे न्यायसा(म्यतया)।
[म्याभावात्।] तथा च धर्मजिज्ञासासूत्रे प्रतिज्ञातस्वप्रधानब्रह्मविचाराय
जन्मादिसूत्रमर्थवत् न तु ब्रह्मजिज्ञासासूत्रमिति भावः ॥

अथवा न वेदान्तानां पुरुषार्थाय व्युत्पत्तिबलाद्वा कार्यपरत्वमत्रोच्यते;
येनेदं वर्णकं समन्वयसूत्रग्रस्तं स्यात्। किन्तु वेदत्वात्। अत्र यद्यपि प्रथम-
वर्णकार्थस्य प्रमाणाभावादाक्षेपो भवति; तथापि गतार्थत्वमपि भवति स्वात-
न्त्र्येणानारम्भहेतुः इति न वृद्धानां पृथ(गधिकरणा)[ग्वर्णका]रम्भानुपपत्तिः।
प्रयोजनाभावेन नानारभ्यत्वशङ्का सर्वेषामुत्कटेति तन्निरासे तन्निरसनमिति
द्रष्टव्यम् ॥

पत्त्योः अविशेषेण निरूपितत्वादित्यर्थः ॥

ननु तत्र यथा प्रथमेऽध्याये वेदस्य प्रामाण्यं निरूपितम्, द्वितीये कर्मोत्पत्तिविधिभेदः, तृतीये विहितानामङ्गाङ्गिभावो निरूपितः, चतुर्थे क्रतुपुरुषार्थप्रयुक्तानुष्ठेयपरिमाणम्, पञ्चमे अनुष्ठानक्रमः, षष्ठे विध्यपेक्षितोऽधिकारनिर्णयः, इति पूर्वषट्केन प्रकृतिविध्यपेक्षितो विचारः

---

ता. यथा 'अग्निहोत्रं जुहोति' इत्यादिः। सम्बन्धबोधको विधिः विनियोगविधिः, यथा 'दध्ना जुहोति' इति। साङ्गप्रधाने कर्मण्यनुष्ठानबोधको विधिः प्रयोगविधिः। स च श्रौत इति **भाट्टाः**। विध्याक्षेपलक्षणोपादानप्रमाणेन कल्पनीय इति **प्राभाकराः**। फलकामिनो जीवनादिनिमित्तवतो वा कर्मण्यधिकारप्रतिपादको विधिरधिकारविधिः इत्यर्थः। **क्रियाप्रतिपत्त्योरिति**—अनुष्ठानज्ञानयोरित्यर्थः ॥

यथा तत्तच्छङ्कानिरासाय पूर्वमीमांसायां तत्तदध्यायारम्भः, तथा शङ्कान्तरनिरासाय ब्रह्मजिज्ञासारम्भो भविष्यतीति शङ्कां दर्शयितुमध्यायप्रतिपाद्यार्थं दर्शयति-**तत्र यथेति। प्रथमे** पादे विधायकवाक्यानां प्रामाण्यं निरूपितम्, पादत्रयेण चार्थवादमन्त्रनामधेयस्मृतीनाम्। **द्वितीये इति**। शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयैः कर्मभेदो निरूपित इत्यर्थः। **तृतीये इति**। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिरङ्गाङ्गिभावो निरूपितः। **चतुर्थे इति**। 'अथातः क्रत्वर्थपुरुषार्थयोः जिज्ञासा' इति प्रतिज्ञाय, क्रतुप्रयुक्तानामियतामनुष्ठानम्, पुरुषार्थप्रयुक्तानां चेयताम्, इति प्रयोज्यप्रयोजकभावो निरूपित इत्यर्थः। यथाहुः—

'शेषिणं प्रति शेषत्वे तृतीये साधिते सति।
प्रयोजकप्रयोक्तृत्वं चतुर्थे चिन्त्यते विधेः ॥' इति।

'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति', 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' 'अग्निं चित्वा सौत्रामण्या यजेत', 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' ('समाप्य पौर्णमासीं वैमृधमनुनिर्वपति')इत्यादिना क्त्वाश्रुतिचतुष्टयेनानुष्ठानक्रमो दर्शित इत्याह-**पञ्चम इति। षष्ठेऽधिकारेति**। इह कामिनोऽधि-

कृतः। तत्र समग्राङ्गसंयुक्तो विधिः प्रकृतिः विकलाङ्गसंयुक्तो विकृतिरित्युच्यते। तत्र सप्तमेन प्रकृत्युपदिष्टानामङ्गानां विकृतावतिदेशो निर्णीतः। अष्टमे तु 'आग्नेयोऽष्टाकपालः' इत्यादिप्रकृत्युपदिष्टानामङ्गानां 'सौर्यं चरुं निर्वपेत्' इत्यादिविकृतौ द्रव्यदेवतादिसामान्यद्वारेण विशेषातिदेशो निरूपितः। नवमे तु प्रकृत्युपदिष्टमन्त्रसामसंस्कारकर्मणां विकृतावतिदिष्टानां प्रकृतिविकृत्योर्द्रव्यदेवताभेदे सति प्रकृतिगतद्रव्यादिशब्दं विहाय विकृतिगतद्रव्यादिशब्दाध्याहारलक्षण ऊहो दर्शितः। यथा—'अग्नये जुष्टम्' इति मन्त्रस्य विकृतौ 'सूर्याय जुष्ट'मिति पदप्रक्षेपः। दशमे तु विकृतावतिदिष्टानामङ्गानां प्रकृतौ सावकाशानां विकृतिगतविशेषाङ्गोपदेशादिना बाधो दर्शितः। यथा—प्रकृतेः विकृतावतिदेशप्राप्तानां बर्हिषां

---

कारः, इह च जीवनादिनिमित्तवतः, इति विचारः कृत इत्यर्थः। प्रकृतिविकृतिविध्योः स्वरूपमाह—**तत्र समग्रेति**। **सप्तमेन इति**। इत्थं कुर्यादित्युपदेशः प्रकृतिविधिः। तद्वत् कुर्यादित्यतिदेशविधिः। तत्र तत् कुर्यादित्युक्तप्राकृतानां धर्माणां विकृतौ व्याप्तिः सामान्येन प्रदर्शितेत्यर्थः। **अष्टमे त्विति**। दर्शपूर्णमासाख्येष्टौ प्रकृतिभूतायां 'आग्नेयोऽष्टाकपालः' इत्यत्र पुरोडाश[प्रकृति] द्रव्यभूतानां व्रीहीणां ये निर्वापावघातप्रोक्षणादयो धर्माः प्रोक्ताः ते 'सौर्यं चरुं निर्वपेत्' इत्यत्र सौर्ये चरौ व्रीहिद्रव्यसारूप्यद्वारेण चरुप्रकृतिभूतव्रीहिष्वतिदिश्यन्ते, 'ये पुरोडाशास्ते वै चरवः' इति न्यायादित्यर्थः। तदुक्तं तन्त्रटीकायाम्—

सप्तमेनातिदेशेन धर्माः सन्तीति साधिते।
ततोऽष्टमेन यो यस्या यतश्चेति निरूपणा॥ इति।

**विशेषाङ्गोपदेशादिना** इत्यत्र **आदिशब्देन** कृष्णलादौ तुषकणविमोकलक्षणद्वारलोपादवघातस्य बाधः, 'न तौ पशौ करोति'इत्याज्यभागयोः पशौ निषेधात् **बाधो दर्शित** इत्यर्थः। प्रत्याम्नायाद्बाधं दर्शयति—**यथेति**। एवमर्थलोपप्रत्याम्नायप्रतिषेधैः प्राकृतानामङ्गानां विकृतौ **बाधो दशमे दर्शित** इत्यर्थः॥

ता.

'शरमयं बर्हि'रिति विकृतौ विशेषोपदेशेन बाधः। एकादशे तु अनेकशेषि-
विधिप्रयुक्तस्य शेषस्य सकृदनुष्ठानादेव सर्वशेषिणामुपकारसाम्यं तन्त्रं
नामोक्तम्। यथा—'यदाग्नेयोऽष्टाकपालः' 'उपांशुयाजमन्तरा
यजति' 'अग्नीषोमीयमेकादशकपालम्' इति च पौर्णमासकर्मत्रय-
प्रयुक्तस्य प्रयाजादेः सकृदनुष्ठानादेव शेषित्रयोपकारः इति। द्वादशे
तु एकशेषिप्रयुक्तस्य शेषानुष्ठानस्य अप्रयोजकसामर्थ्ययुक्तशेष्यन्तरेऽपि
उपकारः प्रसङ्गो नाम दर्शितः। यथा—पशुविधिप्रयुक्तानामङ्गानां पशुपु-
रोडाशेऽप्युपकारः। तदेवं प्रत्यध्यायमाशङ्कान्तरनिराकरणेन विध्यंश-
भेदो निरूपितः। तथा प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षादिभिरसिद्ध-
त्वात् प्रतिपत्तिविध्ययोगाशङ्कायां तन्निराकरणायेदमारभ्यते इति।
180-4 तत्राह—अभ्यधिकाशङ्काऽभावादिति। यूपाहवनीयादिवत् ब्रह्मणः सिद्धिः
असिद्धौ वा आरोपितरूपेणैवोपासनसिद्धिरित्यर्थः॥

अत्र पूर्ववादी सिद्धान्त्येकदेशीयान् दूषयितुं वेदान्तानां विधि-
निष्ठत्वमङ्गीकृत्यैव या अभ्यधिकाशङ्का तन्निराकरणायैव तेषामारम्भ-
180-5 प्रकारं दर्शयति—अत्र केचिदिति। ननु क्वचिदेव विधिश्रवणेऽपि तदा-
काङ्क्षितानुबन्धसमर्पणेन व्यवहितमपि वेदान्तवाक्यजातं तदेकवा-
181-2 क्यतया संबध्यते, किं सर्वत्र विधिश्रवणेन? इत्याशङ्क्याह—यत्रापि विधिः
श्रूयत इति। तत्रापि विधेरनुपपत्तिरिति[शेषः]भावः। ननु भावकर्मणोर्वि-
हितानामपि कृत्यप्रत्ययानां 'कृत्याश्च' इति विधौ स्मरणात् तव्यप्रत्ययेन
181-3 ज्ञानं विधीयते इति; तत्राह—तत्र यद्यपि कृत्या इति। तथापीह विधिर्न सम्भ-

---

ता. यूपाहवनीयादिवन्नात्मनः सिद्धिः प्रत्यक्षविरोधादित्याशंक्याह—असिद्धौ वेति। तत्रापि विधेरिति। भावकर्माभिधायित्वात् तव्यप्रत्ययस्येत्यर्थः। विधौ स्मरणात्। विधावपि स्मरणादित्यर्थः। तथापीह विधिर्न सम्भवति इति। कर्मविषयेणापि प्रत्ययेन क्रियाविधानं द्रष्टव्य इति कर्मप्रधानत्वादित्यर्थः।

वतीत्यर्थः। ननु गन्तव्यमिति गमनविधानवत् ज्ञानं विधीयताम्;
सत्यम्—युक्तं भावविषये तव्यप्रत्यये विधानमित्याह—यो भावाभिधायीति। 181 - 4
भाव इति धात्वर्थमात्रमुच्यते। तत् प्राधान्येन स्वतन्त्रफलाय विधातुं
शक्यत इत्यर्थः। ननु कर्माभिधायितव्यप्रत्ययादपि धात्वर्थविषयो
विधिरवगम्यते—'स्वाध्यायोऽध्येतव्यः' इति; तत्राह—यत्र पुनः कर्म 181 - 6
प्राधान्येनोच्यत इति। तत्रापि स्वतन्त्रफलाय वा कर्म विधीयते? किं
वा कर्मकारकगतफलाय? इति। तत्र न तावत् स्वतन्त्रफलायेत्याह—तत्र 181 - 6
द्रव्ये गुणभूतामिति। अथ कर्मकारकसमवायिफलाय विधिः; तत्राह—
द्रव्यपरत्वे इति। ननु आत्मनि विहितक्रियासामर्थ्यात् अज्ञानाधर्मादिम- 181 - 7
लापकर्षः संस्कारः स्यादिति; नेत्याह—संस्कृतस्य चेति। तत्र 'सक्तून् 182 - 1
जुहोति' इति क्रतुप्रकरणे श्रवणात् क्रत्वङ्गता सक्तुहोमस्य अवगता॥

तत्र अङ्गानि च द्विविधानि—अर्थकर्माणि संस्कारकर्माणि च। क्रतूपकारकाण्यनाश्रित्य स्वातन्त्र्येण विहितानि प्रयाजादीन्यर्थकर्माणि। व्रीह्यादिकारकगुणभूतानि संस्कारकर्माणि। तत्र न तावत् सक्तुहोमस्य अर्थकर्मता। सक्तुद्रव्यस्य गुणभूतत्वात् प्रोक्षणादिवत्। संस्कारकर्म च द्विविधम्—विनियुक्तसंस्कारः—यथा 'व्रीहिभिर्यजेत' इति विनियुक्तव्रीहीनुद्दिश्य प्रोक्षणादिसंस्कारः। कश्चिद्विनियोक्ष्यमाणसंस्कारः—यथा 'आहवनीये जुहोति' इति विनियोक्ष्यमाणस्य आधानेन संस्कारः, संस्कृतस्य विनियोग इत्यर्थः। तत्र होमेन भस्मीकृतानां

---

दृश्यत इति चोदयति—**नन्विति**। नायं कर्मपरः प्रत्ययः किन्तु भावपर ता.
इति परिहरति—**सत्यमिति**। **तदिति**। धात्वर्थमात्रमित्यर्थः। भवत्वेवं द्वैविध्यम्, प्रकृते किमायातम्? इत्यत आह—**तत्र न तावदिति**। अस्तु तर्हि संस्कारकर्मता इत्याशङ्क्य, तत्राप्यनुपपत्तिं दर्शयितुं संस्कारकर्मणोर्द्वैविध्यमाह—**संस्कारकर्म चेति**। भवतु संस्कारकर्मणोर्द्वैविध्यम्, प्रकृते किमायातम्? इति; अत आह—**तत्र होमेनेति**। अस्तु तर्हि वैयर्थ्यमिति; मैवम्—अध्ययनविधि-

सक्तूनामुभयथापि क्रतौ विनियोगाभावात् वैयर्थ्यायोगाच्च संस्कारकर्मत्वं परित्यज्य सक्तूनिति प्राधान्यं च विहाय सक्तुभिरिति गुणभावेन कर्मप्राधान्यमुपादाय अर्थकर्मता निरूपिता यथा, तथा आत्मानमिति साध्यतया प्राधान्यं विहाय 'आत्मनोपासीत' इति गुणत्वोपगमेन
182 - 3 स्वतन्त्रफलायोपासनं प्राधान्येन विधीयतामिति शङ्कते—अथ पुनर्विपरीत इति। तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाद्धातोः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते एवमवगमस्यापि सकर्मकत्वात् अर्थतः
182 - 4 कर्माभावे न विधानमिति परिहरति— तत्रापि न ज्ञायत इति। शब्दतः
182 - 5 करणत्वेऽप्यर्थतः कर्मता आत्मन एवेत्याशङ्कते—अथ ज्ञायत इति। तर्हि कर्मकारकत्वे सति आत्मनि कश्चिदतिशयो वक्तव्यः, तदभावान्निष्कर्मकं
183 - 1 ज्ञानं न विधातुं शक्यत इत्याह—एवं तर्हि तदेवायातमिति। ननु
183 - 2 अवभास्यतया अवाप्तिरात्मनि विधेयक्रियाफलमिति; नेत्याह—तच्च कृतकरणमनर्थकमिति। नित्यचैतन्येन प्रतीतितोऽवा(ऽप्या)प्तत्वात् न ज्ञानकर्मता इत्यर्थः॥

184 - 2 अपरे पुनः इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। अविद्याधर्मादिनिवृत्तिः संस्कारः। न च संस्कृतस्य अन्यत्र विनियोगाकाङ्क्षा, स्वयंपुरुषार्थत्वात् अपुरुषार्थसंस्कारस्य च विनियोगापेक्षत्वात् तदर्थमारभ्यते इति पृथगारम्भवादिनो मतम्॥

184 - 2 अपरे पुनरेवमारभन्ते इत्यादेरयमर्थः—प्रतिपत्तिविध्यपेक्षितोऽपि चतुर्विधो न्यायः प्रथमतन्त्रे निरूपितः, तत्र तद्विषयस्य ब्रह्मणो निरूपणाय शास्त्रमारब्धव्यम्; तच्च न संभवति; ब्रह्मणि प्रमाणाभावात् इति॥

185 - 4
185 - 1 अत्रोच्यते इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। अधिकारिनियोगविषयतयेति। अयमर्थः—ज्ञानस्य फलसम्बन्धोऽवगम्यते। तत्फलकामिना तदनुष्ठेयम्, नियोगाच्च अनुष्ठानमिति फलकामिनियोगविषयतया अवगमादिति भावः॥

---

ता. परिगृहीतत्वात्तदयोगादित्याह—वैयर्थ्यायोगादिति। प्राधान्यम्—द्वितीयाविभक्त्या प्रतिपादितं कर्मत्वमिति यावत्॥

अत्रोच्यते इत्यादिना आरम्भद्वयं पूर्ववादी निराचष्टे। यदि 185 - 4
लोके कृत्यप्रत्ययो न नियोगं गमयतीति शङ्कते तन्नास्तीत्याह—
तत स्वयमेवेति । अथ वेदे, तत्राह—प्रसिद्धं चैतदिति । अतः प्रथमसूत्रेण 185 - 6
अध्ययनविधिमङ्गीकुर्वतां गत एवायं विचार इत्यर्थः। ननु चतुर्विधस्य 185 - 8
इत्यादिरुक्तार्थः। करणत्वेऽपि च आत्मन एव कर्मकारकत्वे
स्वतोऽपरोक्षतया नित्यसिद्धस्य विधेयक्रियाजन्यप्रतिभासायोगात्
अकर्मत्वात् निष्कर्मकं ज्ञानं न विधातुं शक्यमित्युक्तमित्याह—तदपि 186 - 1
नेति । आत्मनि चतुर्विधफलाभावादकर्मत्वेऽपि कर्तृसमवायिमोक्षफलाय
तदवभासिज्ञानसन्ताननियमविधिः स्यात्, यथा–'हिरण्यं बिभृयात' इति
पक्षे प्राप्तस्य नियमविधिरभ्युदयफलः तद्वदित्याह—सिद्धस्यैवेति। ननु 186 - 2
अवस्थात्रयेऽपि ज्ञानसन्तानाविच्छेदात् न नियमविधिरित्याह—ननु न 186 - 4
विधानतोऽपीति । तर्हि अनात्मप्रतिभासनिवृत्तये परिसङ्ख्याविधिरदृष्टार्थः
स्यादित्याह—एवं तर्हीति। अतो गतार्थत्वात् न अधिकाशङ्केति भावः। 186 - 5
सत्यपि ज्ञानविधाने प्रयोजनाभावात् न शास्त्रारम्भ इत्याह—यत् 186 - 6
पुनरात्मज्ञानादित्यादि। न च अनर्थनिवृत्तौ स्वयमहेतुरपि ज्ञानसन्तानो
विधानादनर्थं निवर्तयति । विशेषाभावादित्यर्थः। तर्हि अलौकिकात्म-
तत्त्वज्ञानमविद्यादिदोषनिवृत्तिफलं विधीयतामित्याशङ्कते—अथ पुन- 186 - 9
रहंप्रत्ययावसेयादिति । न–अत्यन्तमसिद्धमुद्दिश्य विधानानुपपत्तेरित्याह–
तदसत्–विधिर्हीति। यथा सामान्यप्रसिद्धं यागमुद्दिश्य पूर्वानुभूतयाग- 187 - 2
व्यक्तिसदृशं व्यक्त्यन्तरं बुद्धिस्थमेव विधीयते, एवमलौकिकात्मज्ञानं

---

(त)[य]था हिरण्यमिति। यथा भूषणार्थत्वेन पक्षे प्राप्तं हिरण्यधारण- ता.
मभ्युदयार्थत्वेन नियम्यते, तद्वन्नियमविधिरित्यर्थः। ननु धारणस्य पक्षेऽप्राप्तिरपि सम्भवतीति नियमविधिः, इह तु पाक्षिकाप्राप्तिरपि नास्तीति शङ्कते—नन्वस्थात्रयेऽपीति। सुषुप्त्यवस्थायामपि चैतन्यस्याविद्योपाधौ प्रतिभासमङ्गीकृत्यैतदुक्तम्। यद्वा अवस्थात्रयशब्देन जागरणस्य आदिमध्यावसानानि गृह्यन्ते।

**सामान्यतः प्रसिद्धमुद्दिश्य पूर्वानुभूतज्ञानव्यक्तिसदृशं** व्यक्त्यन्तरं **बुद्धावाकलय्य तत् कर्तव्यतया विधेयमित्यर्थः । ननु ज्ञानसामान्यस्य लोके सिद्धत्वात् तदुद्देशेन विधाने तद्व्यक्तित्वेन** अलौकिकात्मज्ञानं
187 - 3 **कर्तव्यतया प्रतीयतामिति ; नेत्याह**—तद्यदि नाम ज्ञानमिति । ताद्द-**गात्मज्ञानस्य ज्ञानसामान्यव्यक्तित्वेनाप्रसिद्धत्वात् तादृशं ज्ञानं कर्तव्यतया बुद्धावारोपयितुं न शक्यमित्यर्थः। अथ तादृगात्मज्ञानं सिद्धम्, किं स्वात्मनि? पुरुषान्तरे वा?। पुरुषान्तरे चेत्, अन्यस्य अधिकारिणः तदप्रतिपत्तेः न तादृशं व्यक्त्यन्तरं कर्तव्यतया बुद्धावारोपयितुं शक्यम्।**
187 - 6 **अथ स्वात्मनि, तत्राह**—किं विधिनेति ॥
187 - 7-10 यदपि मतान्तरं **इत्यादिरुक्तार्थः** । तद्विचाराय—ब्रह्मविचाराय **शास्त्रारम्भ इत्यर्थः ॥**
188 - 1 अपरं मतमिति **स एव प्रतिपत्तिविधिवादी स्वपक्षमुपपादयति । सत्यम्, कार्यपरादपि वेदात् ब्रह्मणोऽपि प्रतिपत्तेः युक्तः प्रतिपत्ति-**
188 - 1 **विधिरित्याह**—न तु तावन्मात्र इति । **ननु विरुद्धमिदं अर्थान्तरपरात्**
188 - 2 **शब्दादर्थान्तरप्रतिपत्तिरिति ; तत्राह**—तस्मिन् सतीति । **विधिप्रमाणात् विधिसंसृष्टतया अन्येऽपि पदार्थाः तदपेक्षिताः प्रमीयन्ते इत्यर्थः । यथा**
188 - 2 **रूपविषयस्य चक्षुषः तत्संसर्गि सर्वं विषयः इति दृष्टान्तमाह**—यथा रूपे सतीति । **ननु द्रष्टव्य इत्यादिना नापरोक्षज्ञानं विधेयम् ; सुखसंवेद-**

---

भा. ननु यथा यागसामान्यप्रसिद्धौ तद्विशेषस्य विधितः कर्तव्यताधीः, एवं ज्ञानमात्रप्रसिद्धावपि अलौकिकज्ञानविशेषस्य विधिः किं न स्यात्? इति शङ्कते—**ननु ज्ञानसामान्यस्येति** । यागादिविशेषो हि द्रव्यदेवतादिविशेष एव, तद्विशेषश्च शब्देनैवोपात्तः इति भवति तत्र विशेषप्रतीतिः, न तथा ज्ञानमात्रप्रसिद्धावत्रेत्याह—**नेत्याहेति** । ननु यथा यागादिशब्दादपर्यवसानादाक्षेपाद्वा व्यक्तिविशेषलाभः तथा अत्राप्यस्तु इत्याशङ्क्याह—तादृगिति । प्रसिद्धसजातीयमेवापर्यवसानादिना लभ्यं इत्यर्थः। **सुखसंवेदनतया** स्वर्गादि-

नतया स्वर्गादिवत् पुरुषार्थस्य अविधेयत्वात् । नापि शाब्दज्ञानम्,
तत्र विधेरश्रवणात् इति चोदयति—कथमिति । अस्ति शाब्दज्ञाने 188-5
विधानमित्याह–(उ) [तदु]च्यत इति । ननु इदं वाक्यमात्मनः अनात्म-
रूपताविधानपरम्, अतोऽपुरुषार्थत्वान्न विधेयमिति ; नेत्याह–न तावत् 188-5
सर्व[सर्वात्म]रूपतेति । प्रतिपन्नमुद्दिश्य अप्रतिपन्नात्मरूपस्यैव विधानादि-
त्यर्थः । दूषणान्तरमाह–यदि सर्वरूपता आत्मन इति । किं तर्हि विधीयते ? 188-6
इति ; अत आह–अतः सर्वस्येति । नेतिनेत्यादिवाक्यपर्यालोचनयाप्यना- 188-8
त्मोपमर्देन आत्मैव विधेय इत्याह–अनात्मस्वरूप[स्वभाव]विलयेनेति । ननु 188-9
आत्मनोऽद्वितीयत्वप्रतिपादनपरमिदं वाक्यम्, न तत्र ज्ञाने वस्तुनि वा
विधिरवगम्यते इत्याह—ननु अत्र विधिर्न श्रूयत इति । 'पूषा प्रपिष्टभागः' 188-9
इत्यादाविव कल्प्यतामित्याह—कल्प्यतां तर्हीति । किं प्रतीते विध्यर्थे 189-1
इत्यादेरयमर्थः–कालत्रयानवमृष्टे अनुष्ठानयोग्ये कर्मणि शब्दसामर्थ्यात्
प्रतिपन्ने तदन्यथानुपपत्त्या च कर्तव्यरूपे नियोगे अवगते विधायक-
पदार्थे पश्चाद्विधिर्विधायकपदं कल्प्यते ? किं वा एवंविधार्थेऽप्रतिपन्ने अन-
नुष्ठेये वस्तुमात्रे च प्रतिपन्ने विधिपदं कल्प्यते ? इति । प्रतीते चेत्,
प्रमितये अनुवादाय वा पदं कल्प्यते ; नानुवादेन प्रयोजनम् । प्रमि-
तये चेत्, तत्राह—प्रतीते कल्पनावैयर्थ्यमिति । प्रतिपादकतया लिङादि- 189-2
पदकल्पनावैयर्थ्यमित्यर्थः । अननुष्ठेयवस्तुप्रतिपत्तौ विधिकल्पना-
हेत्वभावात् न तत्र पदादनुष्ठेयप्रतिपत्तिरित्याह—अथाप्रतीत इति । 189-4
अर्थवादसंसर्गेष्वपि कल्पनाप्रसङ्गादिति भावः ॥

---

वदिति । ननु सुखसंवेदनत्वेऽपि अविद्यानिवृत्तिरूपपुरुषार्थसाधनत्वात् विधेय- भा.
त्वमविरुद्धमिति चेत्, न—स्वर्गादिवत् साक्षात्कारस्य काम्यमानतया अविधे-
यत्वात् स्वर्गादिवदेव अन्यथासिद्धत्वाच्च श्रवणादिविधौ सति अन्यान-
पेक्षणादिति भावः । विधेरश्रवणादिति । वेदान्तेषु श्रूयमाणदर्शनादिपदस्य
अपरोक्षज्ञानवाचित्वादित्यर्थः ॥

ननु विकल्पदूषणयोः सर्वत्र अविशेषात् न क्वचिदपि विधि-
189 - 6 कल्पनमिति मन्वानश्चोदयति—नन्वश्रूयमाणेति। तत्र द्रव्य-
देवतासम्बन्धः कालत्रयानवमृष्टः प्रमीयमाणः स्वाविनाभूतं यागं
गमयति, यागश्च स्वाविनाभूतं नियोगमिति श्रुतसामर्थ्यादेव विध्यर्थः
प्रतिपन्नः, तत्र व्यवहारमात्राय पूषोद्देशेन पिष्टद्रव्यत्यागः कर्तव्य
इत्युपसंह्रियते। न तथेह श्रुतसामर्थ्यात् विध्यर्थः प्रतिपन्न इत्याह—
189 - 7 सत्यम्—युक्तं तत्रेति। ननु इहापि श्रुतस्य आत्मनः सामर्थ्यात्
190 - 1 नियोगः प्रतिपन्न इत्याह—नन्विहाप्यात्मपदमिति। न—यागनियो-
गयोः नियोगप्रतिपत्तारमन्तरेण अनुपपत्तिवत् प्रतिपत्तुर्नियोगमन्तरेण
190 - 2 अनुपपत्त्यभावादित्याह—नैतत् सारम्—नियोगो हीति॥

ननु यः कश्चित् वेदे संसर्गः प्रतिपन्नः स साक्षात् परम्परया वा
नियोगसंसृष्ट एव। 'वायुर्वै क्षेपिष्ठा' इत्यादावपि परम्परया विधिसं-
सर्गाभ्युपगमात्। तत्र सर्वस्य आत्मस्वभावताप्यविनाभावात् विधिमु-
190 - 5 पस्थापयतीति; तत्राह—अथापि भवतु नामेति। भावार्थविषयत्वात्
नियोगस्य नासौ भूतसंसर्गविषय इति भावः। एवं तर्हि भावार्थोऽपि
विधिविषयः संसर्गमात्रेण अविनाभूत इति सोऽपि कल्प्यतामित्याह—
190 - 6 धातुनैव सह कल्प्यत इति॥

190 - 7 सर्वधात्वर्थदोषविवक्षया पृच्छति—कोऽसाविति। प्रथमं सर्वधा-
190 - 7 त्वर्थसामान्यातिलङ्घने कारणाभावात् कृतिधातुमुपस्थापयति—यदि
190 - 7 तावत् कर्तव्यमिति। तत्र दूषणमाह—तत्रानात्मस्वभावतेति। प्रपञ्चविल-
190 - 9 यनेनैव ह्यात्मदर्शनमिति भावः। दूषणान्तरमाह—इतिकर्तव्यता चेति।
शमादयस्तु ज्ञानेतिकर्तव्यम्, न प्रपञ्चविलयनेतिकर्तव्यमित्यर्थः।
190 -10-11 धात्वन्तरमाह—अथेति। दूषयति—एवमपीति। न हि योषिदादिषु
अग्न्यादिभावेन ज्ञायमानेषु योषिदादिभावो निवर्तते। विधेयबुद्धेः
अप्रामाणिकत्वादिति भावः। उभयथापि धात्वर्थविधौ दूषणान्तरमाह—
191 - 1 अशक्यार्थोपदेशश्चेति॥

**ननु योषिदग्न्यादिषु मानसी क्रिया ; ज्ञानं तु विधीयमान-
मनात्मानं निवर्तयतीति ; तत्राह**—न हि वस्तु वस्त्वन्तरात्मनेति । **तर्हि** 191 - 1
**पुरुषस्वरूपप्रविलयनेन स्थाणुनिश्चयप्रमाणवत् अनात्मप्रविलयेन आत्मनो
निश्चायकं प्रमाणज्ञानमन्यतः प्राप्तमनूद्य विधिमात्रमध्याह्रियते
इत्याह**–एवं तर्हि ज्ञातव्य **इत्यादिना। तर्हि विधिवाक्यार्थमितिव्यतिरेकेण** 191 - 2
**ब्रह्मसंवेदनस्य अन्यतः प्राप्तस्य अनुवादो वक्तव्यः। न च प्रमाणान्तरम-
स्तीत्याह**–कुतः प्राप्तेरिति **। ननु विधायकपदव्यतिरिक्तेभ्यो वेदान्ताभि-** 191 - 3
**धानेभ्य इत्याह**—अभिधानत इति। **तर्हि विधिनिमित्तप्रतिपत्तिमनपेक्ष्य** 191 - 4
**अभिधानप्रमाणादेव ब्रह्मसंवेदने सिद्धे न विधिना कृत्यमित्याह**—एवं 191 - 4
तर्हि विधानमनर्थकमिति । **ननु निष्पन्नेऽपि संवेदने पुनः तादृशं
व्यक्त्यन्तरं चोद्यते इत्याह**—पुनः कर्तव्यतयेति। **ननु किं तेन कार्यम् ?** 191 - 5
**पूर्वेणैव प्रयोजनसिद्धिरिति ; तत्राह**—यथा मन्त्रेष्विति ॥ 191 - 6

**अयमर्थः—मन्त्राः स्वाध्यायविधिनैव उपात्ता गृहीतपदपदार्थ-
सम्बन्धस्य स्वार्थे प्रत्ययमुत्पाद्य व्यवस्थिताः स्वार्थस्य अननुष्ठेयत्वात्
ब्राह्मणवाक्यैश्च प्रमितत्वात् प्रवृत्तिनिवृत्तिप्रयोजनशून्या व्यवतिष्ठन्ते ।
तत्र 'ऐन्द्र्या गार्हपत्यम्' 'बर्हिर्देवसदनं दामि' 'इमामगृभ्णन् रशना-
मृतस्येत्यश्वाभिधानीमादत्ते' इत्यादिश्रुतिलिङ्गवाक्यादिभिः व्रीह्यादिवत्**

---

**स्वाध्यायविधिनोपात्ता** इति निष्प्रयोजनत्वासम्भवे हेतुः । स्वार्थानुष्ठा- ता.
पकत्वमेव प्रयोजनमस्तु, इत्यत आह—**स्वार्थस्येति** । द्रव्यदेवतादिस्वरूप-
प्रकाशकत्वात् तस्य चाननुष्ठेयत्वादित्यर्थः । ननु तर्हि स्वार्थप्रमित्युत्पादकत्वेन
पुरुषार्थपर्यवसायित्वं किं न स्यात् ? इत्यत आह—**ब्राह्मणेति** । कथं तर्हि
प्रयोजनपर्यवसायित्वम् ? इत्यत आह—त(त्रैवे) [त्रे]ति ॥

गार्हपत्यमिति द्वितीयाश्रुतिः 'कदाचन स्तरीरसि'इत्यस्य मन्त्रस्येन्द्र-
प्रकाशनसमर्थस्यापि गार्हपत्योपस्थाने विनियोगं बोधयति । श्रुतेः [श्रुतार्थ]-
सामर्थ्यलक्षणाल्लिङ्गात् बलीयस्त्वात् । एवं 'बर्हिर्देवसदनं दामि' इति बर्हिर्लवने

कर्माङ्गभावेन विनियुक्ताः प्रधानापूर्वनिर्वृत्तिद्वारेण प्रयोजनवन्तो मन्त्रा इत्युच्यन्ते। तत्र मन्त्राः केन उपकारेण अपूर्वसिद्धेरुपकुर्वन्तीति वीक्षायामध्ययनविधेरर्थज्ञानार्थत्वात् दृष्टोपकारे सति अदृष्टकल्पनानुपपत्तेः (तेषु) अनुष्ठानकाले प्रतिपत्त्यपेक्षस्य द्रव्यदेवतादेः प्रतिपत्तिमुत्पाद्य तद्द्वारेण अपूर्वस्य उपकुर्वन्तीति कल्प्यते। ततश्च मन्त्रैरेवानुस्मृत्यानुष्ठाने अपूर्वसिद्धिः न ब्राह्मणवाक्यैरिति गम्यते। तत्र प्रयोगविधिः अङ्गैरपूर्वोपकारं कारयन् मन्त्रैरर्थज्ञानं कारयतीति। तत्र यथा प्रयोगवचनो मन्त्रैः प्रथमोत्पन्नज्ञानातिरिक्तमपूर्वोपकारि ज्ञानान्तरमनुष्ठापयति एवं ब्रह्मसंवेदनमपरमनुष्ठीयते मोक्षफलायेति ॥

ननु युक्तं तत्र स्वार्थे प्रत्ययमुत्पाद्य निवृत्तानां मन्त्राणां श्रुत्यादिविनियोगसामर्थ्यात् प्रयोगवचनेन ज्ञानस्य पुनः कर्तव्यत्वम्। न च
191-6 आत्मज्ञाने प्रयोगवचनोऽस्तीत्याह—प्रयोगवचनस्तत्र विधायक इति।
191-6 इहापि तर्हि स सम्पाद्यते इत्याह पूर्ववादी—इहापि प्रयोगवचनो विधायक
इति। कथम्? वेदान्तवाक्यैः आत्मज्ञानं कुर्यादिति वेदान्तशब्दकरणविशिष्टोत्पत्तिविधिस्तावदध्याहृतः 'सोमेन यजेत' इतिवत्। स च विधिः

---

ता. मन्त्रो [लिङ्गेन] विनियुज्यते, 'अश्वाभिधानीमादत्ते' इति वाक्यं 'इमामगृभ्णन्' इत्यस्य मन्त्रस्याश्वाभिधान्यादाने विनियोगं बोधयति। आदिशब्देन प्रकरणस्थानसमाख्या गृह्यन्ते। तथापि प्रयोजनपर्यवसायित्वं कथम्? इत्यत आह—तत्र प्रधानापूर्वेति। तथाप्यर्थप्रकाशकत्वं किमिति कल्प्यते? इत्यत आह—तत्र मन्त्रा इति। हेत्वन्तरमाह—दृष्टोपकारे इति। अक्षरग्रहणान्तोऽध्ययनविधिरिति पक्षे पुनः एक एव हेतुः ॥

ननु द्रव्यदेवता[देः]तथाप्याकाङ्क्षा नास्तीत्यत आह—अनुष्ठानकाले इति। ननु ब्राह्मणवाक्येभ्योऽपि प्रतिपत्तिर्भवतीत्यत आह—ततश्चेति। तथापि विनियोजकाभावात् कथमनुष्ठानमित्यत आह—तत्रेति। उक्तं न्यायं दार्ष्टान्तिके दर्शयति—तत्र यथेति। उत्पत्त्यादिविधित्रयाभावे कथं प्रयोगविधिः? इति चोदयति—कथमिति। अङ्गाङ्गिनोः सम्बन्धबोधकत्वादुत्पत्तिवि-

कथं ज्ञानं कर्तव्यमिति इतिकर्तव्यताभेदमीक्षमाणः प्रकरणपठितशमादिविधीन् फलवदात्मज्ञानविधिसन्निहितानितिकर्तव्यतात्वेन विनियोजयन् विनियोगविधिः सम्पद्यते। पुनश्च साङ्गे कर्मणि नियोज्यमधिकारिणं ममेदं कर्तव्यमिति प्रतिपत्तारमाकाङ्क्षन् अर्थवादगतं मोक्षं रात्रिसत्रन्यायेनोपसंहृत्य मोक्षकामो वेदान्तवाक्यकरणैः शमादीतिकर्तव्यतानुगृहीतैरात्मज्ञानं कुर्यादिति स एव विनियोगविधिरधिकारविधिः सम्पद्यते। पुनः स एव साङ्गं तत्त्वज्ञानमधिकारिणमनुष्ठापयन् प्रयोगविधिः सम्पद्यते इति ॥

पुनश्च सिद्धान्ती मन्त्रेभ्यो वेदान्तानां वैलक्षण्यमाह—ननु मन्त्रे- 192 - 1
ष्विति। प्रत्ययपरत्वमिति। अपूर्वोपकारिप्रत्ययमात्रे मन्त्राणां तात्पर्य 192 - 1
नार्थतथात्वे इत्यर्थः। तत्र, वेदान्तानां स्वार्थविधिपरत्वं प्रयोजनवदज्ञातार्थावगन्तृत्वादिति तत्र विधेयप्रत्ययसमर्पणेन विधिपरत्वमज्ञातार्थ-
परत्वं चोभयं न विरुद्धमित्याह—अन्यार्थमपि कृतमिति। ननु स्थायि- 192 - 3
पदार्थानां क्रमेण वा युगपद्वा अनेकानि कार्याणि सम्भवन्ति। शब्दस्य
तु तात्पर्यात् सकृत् कार्यहेतोः कथमुभयपरत्वम्? इति; तत्राह—यथा वा 192 - 5
पदार्थानामिति। सिद्धान्ती ब्रह्मण्याभिधानिकप्रथमप्रत्ययोपगमे [ते]नैव पुरुषार्थसिद्धेः न मन्त्रेष्विव विधिशेषतया द्वितीयप्रत्ययाय उत्पत्तिविनियोगाधिकारप्रयोगविधिकल्पनं अपेक्ष्यते इति दर्शयितुं मन्त्रेभ्यो
वैलक्षण्यमाह—तदेतदनिरूपितमिवेति। विधिविषयसमर्पणेन विधिप्रमि- 192 - 7
तिशेषस्य योषिदग्न्यादिवाक्यस्य तज्जन्यज्ञानस्य वा प्रमेयपरत्वादर्शनादिति वाक्यशेषः। ननु तत्र लौकिकप्रमाणगम्यत्वात् प्रमेयस्य तत्परत्वाभावः इह तु विधिब्रह्मणोरलौकिकत्वादुभयपरत्वं स्यादिति;

---

धिरेव विनियोगविधिः सम्पद्यत इत्याह—स चेति। इदानीं तस्यैवाधिकारविधित्वमाह—पुनश्चेति। इदानीं तस्यैव प्रयोगविधित्वं दर्शयति—पुनः स एवेति। ता.
(अत्र)[पुनश्च] सिद्धान्तीति। [अत्र] सिद्धान्तोपयुक्तार्थाभिधायकत्वादनारम्भवाद्येव सिद्धान्ती कथ्यते ॥

193 - 5 **नेत्याह--न च युगपदुभयमिति। ज्ञानं प्रति ब्रह्मणः प्रमेयतया प्राधान्यम्, विधेयज्ञानविशेषणतया गुणभावः, प्रमेयत्वादुपादेयता, विधिं प्रत्युद्देश्यता, प्रमेयत्वाद्विधेयता, विधानायानुवाद्यता चेति ब्रह्मणः स्वज्ञानस्य विधिविषयतया तत्प्रमितिशेषत्वे च प्राधान्योपादेयत्वप्रमेयत्वानि तद्विरुद्धगुणत्वोद्देश्यत्वानुवाद्यत्वानि च एकस्यां शब्दजन्यप्रमितौ प्रसज्यन्ते। तदिदं वैरूप्यम् ॥**

---

ता. किमेकस्यैव ज्ञानस्य विधिविषयत्वं प्रमेयपरत्वं च? उत एकस्य प्रमेयपरत्वमपरस्य विधिविषयत्वं च? इति विकल्प्य, आद्यं दूषयति—**ज्ञानं प्रतीति।**

---

भा. किं विधिविषयज्ञानादेव ब्रह्मणः सिद्धिः? उत तद्विषयादन्यत् तत्साधनम्? इति। नाद्य इत्याह—**नेत्याह-न च युगपदुभयमिति। प्रमेयतया प्राधान्यमिति।** प्रमेयस्य प्रमाजन्यातिशयवत्त्वेन तत्साध्यतया प्राधान्यमित्यर्थः। **उपादेयता**—साध्यतेत्यर्थः। **विधेयता** अज्ञाततेत्यर्थः ॥

ननु न तावत् ब्रह्मकर्मकज्ञानविधाविदं वैरूप्यम्; तत्र ब्रह्मणो व्रीह्यादिवत् साध्यतया प्राधान्यादिमात्रयुक्तत्वात्। ननु ज्ञानं तदा प्रोक्षणादिवत् विधिं प्रति गुणभूतम्, ब्रह्मापि तन्निरूपकतया तद्विशेषणं सुतरां गुणभूतम्, न हि विषयविशेषानिरूपितं ज्ञानं विधातुं शक्यम्, एवं विशिष्टं ज्ञानमुद्दिश्य तस्य कर्तव्यताप्रतिपादने तस्योद्देश्यत्वादिकमपि इत्यस्त्येव वैरूप्यमिति चेत्, ब्रह्मकर्मकज्ञानविधौ हि 'यदपहतपाप्मत्वादिविशिष्टं तज्जानीयात्' इति वचनव्यक्तिः स्यात्। तत्र च ब्रह्म कर्मतयैव निरूपकं प्रोक्षण इव व्रीहिरिति न गुणः, एवमु(द्देश्य) [पादेय]त्वादिकमपि न। तस्य ब्रह्मणो विधेयज्ञानफलत्वेन विधेयविशेषणत्वाभावात्। ननु कर्मणोऽपि कारकत्वात् गुणत्वमिति चेत्, न-विधेयज्ञानस्येन्द्रियाजन्यत्वेन विषयाजन्यत्वात्। कर्तृत्वेन गुणत्वमिति चेत्, न-अन्तःकरणविशिष्टस्यैव कर्तृत्वात्। नाप्यर्थकर्मविधया ज्ञानविधौ वैरूप्यम्। तदा तु आत्मना ज्ञानं कर्तव्यमिति वचनव्यक्तिः। तत्र चात्मा गुणभूत एव; न प्रधानम्। ननु मोक्षफलाय ज्ञानं विधीयत इति मोक्षे प्राधान्यादिकमस्ति स

चात्मेति आत्मन्येव तत् इति चेत्, आत्मरूपमोक्षस्य साक्षादपूर्वद्वारा वा विधेयज्ञानासाध्यत्वात्। किञ्च, तृतीयानिरूपितार्थस्यात्मनः कर्तृतया गुणत्वम्? करणतया वा ?। न सर्वथापि ; ब्रह्मणस्तदभावात्। मनआदिकरणस्य सत्त्वाच्च। (भावि) [नापि] मनआदाविव जीवे ब्रह्माकारबुद्धिविधानादाकारस्य व्यावर्तकतया गुणत्वमिति वाच्यम् ; तथापि प्रधानत्वाभावात् ॥ भा.

ननु मोक्षाय वेदान्तकरणकज्ञानविधौ वाजपेयपूर्वपक्ष[न्यायेन]वैरूप्यमिति चेत्, तद्वदत्र एकस्मिन् वाक्ये गुणफलयोरश्रवणात्। अपि चेदं विरुद्धत्रिकद्वयं प्रतीयमानं विरुध्यते ? सत्तामात्रेण वा ?। नाद्यः, अ(नू)[नुवा]द्यत्वादेः शाब्दज्ञाने अप्रतीतेः। न द्वितीयोऽपि [निरूपकभेदेनाविरोधात्* ॥

अत्र यद्यपि **वैरूप्यप्रसङ्गादिति टीकायां** (पञ्च-193) विविधरूपत्वं भिन्नवाक्यत्वमेव विवक्षितम्; वाक्यस्य ब्रह्मणि विधौ च महातात्पर्ये वाक्यभेदप्रसङ्गात्। ब्रह्मणि महातात्पर्यं विना अद्वैतं तत्स्वरूपं न सिध्यति। अत्रार्वाचीनाः (नैतदा) [एवमा]हुः। मा भूद्विधिपराद्वाक्यात् प्रत्यक्षादिविरुद्धाद्वैतब्रह्मसिद्धिः, तदविरुद्धसर्वज्ञत्वादिगुणकं ब्रह्म सिध्यत्येव। न हि ब्रह्मणः सर्वज्ञत्वादौ प्रत्यक्षविरोधोऽस्ति। ननु यश्चेतनः स किञ्चिन्न जानाति अनित्यज्ञानाश्रयश्चेत्याादिव्याप्तिविरोधोऽस्तीति चेत्, नैवम्—अप्रयोजकत्वेनाव्याप्तेः। अतोऽन्यपरादपि देवताधिकरणन्यायेन सर्वज्ञं ब्रह्म (न) सिध्यतीति न वैरूप्यमिति। [तन्न] (न) निर्गुणवाक्यादिविरोधस्य सत्त्वात्। न च तद्वाक्यमुपासनापरमिति न सर्वज्ञत्वं बाधत इति वाच्यम् ; अन्यपरादपि सर्वज्ञत्ववत्तस्यापि सिद्धेः। न हि ब्रह्मण्यपि निर्गुणे प्रत्यक्षा भ्रान्तिर्विरुध्यते। न च सर्वज्ञत्वादिविरोधः तुल्यत्वात** तत्पक्षासिद्धेः ॥

न च निर्गुणवाक्यं सत्त्वादिनिषेधपरम्। तत्र तस्याश्रुतत्वात्, कल्पनायां च प्रमाणाभावात्। न च ब्रह्मणः सर्वज्ञत्वाभावे जगत्कारणत्वानुपपत्तिः

* अत्र कियानपि ग्रन्थभागः त्रुटितः। अत एव पूर्वपक्षस्य समाप्तिर्न दृश्यते। आदर्शकोशेऽपि न लभ्यते। इतः पूर्वतनाः काश्चित् त्रुटयः कोशान्तरैः पूरिताः। अत्र कोशान्तरमपि न लभ्यते ॥

** अत्र ग्रन्थः त्रुटितः।

भा. इति निर्गुणवाक्यं तदितरगुणान्निषेधतीति वाच्यम्। नित्यकृतिवादे तदनुपपत्त्य-
भावात्। अनित्यकृतेश्च कारणेष्टसाधनत्वज्ञानादिरहिते तस्मिन्नयोगात्। एवमपि
प्रमाणान्तरसिद्धं सर्वज्ञत्वमिति न श्रुत्यर्थः। अतो वाक्यात् ब्रह्मसिद्धिमिच्छतः
तस्य महातात्पर्यमेव वक्तव्यमिति भवत्येवोक्तवैरूप्यम्। एवमुत्तरत्रापि
टीकायाम् ॥

ननु विध्यपेक्षिते अर्थान्तरे शब्दतात्पर्येऽपि न वाक्यभेदः अन्यथा
'व्रीहीन् प्रोक्षति' इत्यादिगुणकर्मविधानं न स्यादित्याशङ्क्य, द्रव्यादेः प्रत्यक्ष-
त्वान्न वाक्यं तत्परं अतो न वाक्यभेद इत्युक्तमिति वक्तुं शक्यते; तथापि
ज्ञानविधौ विरुद्धत्रिकद्वयमपि वक्तुं शक्यमिति आचार्यैस्तदुक्तम् ॥

तथा हि—अस्थूलादिवाक्यतात्पर्यान्निर्विशेषमेव ब्रह्म विधेयज्ञानात्
सिध्यतीति वक्तव्यम्। तत्र योऽपहतपाप्मादिस्वभाव आत्मा स द्रष्टव्यः इति
वचनव्यक्तिर्नोपपद्यते। आत्मनोऽपहतपाप्मादिस्वरूपस्य ज्ञानविधेः पुरस्ताद-
सिद्धेः। किन्तु 'य आत्मा सोऽपहतपाप्मत्वादिना स्वरूपेण द्रष्टव्यः' इति।
तथा च अपहतपाप्मत्वादिभिरात्मस्वरूपैर्ज्ञानाकारभूतैर्निरूप्यत इति ज्ञानं
प्रति गुणभूतम्, कर्मतया च प्रधानम्। न च अपहतपाप्मत्वादिधर्म एवोपसर्जनं
नात्मेति वाच्यम्। निर्धर्मात्मन एव श्रुतिप्रमेयतया अपहतपाप्मत्वादेर्धर्मत्वा-
योगात्। ततश्च कर्मतया प्राधान्यसाध्यत्वयोः प्रमेयतया अज्ञातत्वस्य विधेय-
ज्ञानाकारतया गुणत्वस्य विशिष्टस्य विधेयस्य साधनत्वेन विशेषणीभूतब्रह्मणोऽपि
साधनतया साध्यत्वप्रतियोगिसिद्धत्वस्य विधेयविशेषणतया अज्ञातत्वविरोधिज्ञात-
त्वस्य च सत्त्वादस्त्येव विरुद्धत्रिकद्वयम् ॥

यद्यपि शाब्दज्ञाने [उक्तानि] सर्वाणि रूपाणि न प्रतीयन्ते, तथापि एक-
विरुद्धप्रतीतौ इतराण्यपि विध्यपेक्षितानीति विधितात्पर्यं तत्र वक्तव्यम्। तच्च
न सम्भवति। विरुद्धयोरेकत्रासम्भवात्। यदा पुनरर्थकर्मविषया आत्मना ज्ञानं
कर्तव्यमिति स्वाकारः, तत्र आत्मनो गुणत्वं स्पष्टमेव। तृतीयार्थस्य कर्तृकरणत्वा-
न्यतरत्वेन आत्मनो गुणत्वस्यावश्यकत्वात्। यत्तु कर्तृत्वादिकं ब्रह्मणो नास्तीति,
तदपि आत्मनस्तृतीयान्तपदाभिधेयत्वमिच्छतः तवैव दूषणमित्यस्त्येव गुणत्वम्।
एवं विधेयज्ञानादात्मसिद्धिमिच्छतः आत्मनः तत्साध्यतया प्राधान्यं प्रमेयतया

नन्वु प्रथमज्ञानमर्थपरं द्वितीयज्ञानं विधिविषयतया तत्परमित्यविरोधः किं न स्यात्?। न—शब्दस्य उभयपरत्वाभावे तज्जन्यज्ञानस्य असकृज्जनितस्यापि उभयपरत्वानुपपत्तेः ॥

ननु वैरूप्यप्रसङ्गो न दोषमावहति, अन्यथा गुणकर्मविधानानुपपत्तेरिति चोदयति—नन्वेवं सति गुणकर्मणामिति। क्रत्वङ्गभूतकार- 193 - 7
कसंस्कारार्थानि कर्माणि गुणकर्माणि। तत्र क्रियाजन्यातिशयविशिष्टमेव कर्मकारकं कारकविभक्त्यभिधेयमित्यङ्गीकृत्य वैरूप्यमुच्यते। व्रीहीणां तावत् प्रमाणान्तरसिद्धत्वात् कारकत्वाच्च अनुवाद्यत्वगुणत्वोद्देश्यत्वानि सिद्धानि। विधेयप्रोक्षणजन्यातिशयवत्तया साध्यत्वात् उपादेयत्वप्राधान्यविधेयत्वानि विभक्तिसामर्थ्यात् प्रतीयन्ते इत्येकस्यां प्रमितौ गुणकर्मसु वैरूप्यमिति। तत्र न क्रियाजन्यातिशयो वैभक्तिकः, किन्तु तदर्थक्रियाविध्यनुपपत्तिगम्यः। अतः शाब्दज्ञाने गुणत्वोद्देश्यत्वानुवाद्यत्वान्येव प्रतीयन्ते। प्राधान्यप्रमेयत्वोपादेयत्वानि त्वर्थापत्तिप्रमित्यन्तरेऽवभासन्ते इति ज्ञानभेदान्न वैरूप्यदोष इति परिहरति—
न निराकृतं स्यादिति। इहापि तर्हि ब्रह्मज्ञानविधेयज्ञानयोर्भेदाद्विरुद्धत्रिक- 193 - 8
स्य व्यवस्थया अवभास इति; नेत्याह—यत्र पुनः प्रमाणान्त(रादि)[रे]ति। 193 - 8

---

ता. द्वितीयं पक्षमनुवदति—**ननु प्रथमेति**। ननु तत्र वैरूप्यमेव न सम्भवति; तेषां गुणत्वोद्देश्यत्वानुवाद्यत्वेनैव व्यवस्थितत्वादिति; तत्राह—**तत्रेति**। कर्मकारकतया प्राधान्यमपि प्रतीयत इत्यर्थः। वैरूप्यमेव दर्शयति—**व्रीहीणां तावदिति**। इदानीं वैरूप्यपरिहारमाह—**तत्र न क्रियेति**।

---

भा. साध्यत्वरूपोपादेयत्वरूपमज्ञातत्वं च, एवं विधेयविशेषणतया पूर्ववत् सिद्धत्वमज्ञातत्वं चेति सर्वथा विरुद्धत्रिकद्वयापत्तिरिति ॥

अन्यत् विधेयं अन्यच्च ज्ञानं प्रमेयसाधकमिति मतमाशङ्क्य परिहरति—**ननु प्रथमज्ञानमित्यादिना। तत्र न क्रियाजन्यातिशयो वैभक्तिक इति**। कारकाधिकारात् द्वितीयायाः कारकत्वमेवार्थः। न च अतिप्रसङ्गः। करणाद्यर्थ(स्यैवो)[स्य उ]पाधित्वादिति मतान्तरेणोक्तम्। वस्तुतस्तु तद-

ननु इहापि ज्ञानद्वयमेवेष्यताम् ; कस्त[त्र]र्हि सामग्रीभेदः ? न चैकसाम-
ग्रीजन्यज्ञानसहस्रस्यापि प्रमेयभेदः सम्भवति । अस्तु तर्हि विधायक-
पदव्यतिरिक्तपदसमुदायस्य पृथगेव ब्रह्मस्वरूपं प्रतिपाद्य पुनस्तदनुवाद-
ज्ञानं जनयित्वा तस्य विधिविषयत्वसमर्पणेन पुनर्विधायकपदेन पदैक-
194 - 5 वाक्यतेति ; नेत्याह—न च स एव समन्वय इति । ननु तर्हि विधिपदेन यानि
पदैकवाक्यभूतानि तद्व्यतिरिक्तपदानां पृथगन्वयेन ब्रह्मप्रतिपत्तिशेषते-
194 - 7 त्याशङ्कते—अथ अर्थवादपदानामिवेति । एवं तर्हि न ब्रह्मवाक्यस्य विधि-
194 - 8 वाक्यशेषता नाप्यर्थवादता इत्याह—तदसत्—युक्तमर्थवादपदानीति । ननु
194 - 10 इहापि भूतार्थत्वात् अर्थवादजन्यज्ञानवद्विधिशेषतेति ; नेत्याह—इह
पुनरपरामृष्टेति । प्रयोजनपर्यन्तत्वाय विधिशेषता न भूतत्वनिमित्तेति
भावः । यद्यपि शाब्दज्ञानात् अग्रहणं निवर्तते, तथापि मिथ्याज्ञान-
तत्संस्काराविद्यानिवृत्तिरपरोक्षानुभवात् , तस्य च शाब्दज्ञानात् अनुत्प-
195 - 2 द्यमानफलस्य सिद्धये ज्ञानं विधीयते इत्याशङ्कते—अथ पुनः शाब्दज्ञाना-
दिति । तर्हि विधीयमानज्ञानस्य व्रीह्यादिवत् करणकारकं वक्तव्यम् ,
195 - 4 तन्न सम्भवतीत्याह—किं तज्ज्ञानमिति । ननु प्रत्यक्षादीनामपरोक्ष-

---

ता. प्रमाणद्वयमेव पृच्छति—**कस्तत्रेति** । एकयैव सामग्र्या ज्ञानद्वयं जायतामित्य-
त्राह—**न चेति** । कार्यभेदे सामग्रीभेदस्य अवश्याभ्युपेयत्वात् (अङ्गीकृत्यैतदुक्तम्)
इति द्रष्टव्यम् । अत्र सामग्रीभेदमाशङ्कते पूर्ववादी—**अस्तु तर्हीति** । तर्हि पदैक-
वाक्यत्वाभावेऽपि वाक्यैकवाक्यता भवत्विति शङ्कते—**ननु तर्हीति** ॥

---

भा. युक्तम्—‘कर्मणि द्वितीया’ इति कर्मार्थे द्वितीयायाः प्रतिपदविधानात् ।
अधिकारापेक्षया प्रतिपदविधेर्बलीयस्त्वात् । कारकसमवेतोत्पत्त्यादिक्रियाफलार्थ-
त्वेन कारकविभक्तित्वोपपत्तेः । तत्र कारकप्रतीतिरप्यर्थात् । तदुक्तं
**नयविवेके**—‘चतुर्विधकर्मावस्था हि द्वितीयावाच्या । कारकावस्था तु
क्रियाफलानां तदवस्थाश्रितानामेवोत्पत्तिरर्थलभ्या ’इति । अतो न वैरूप्यमि-
त्यपि द्रष्टव्यम् ॥

ज्ञानसाधनत्वं प्रसिद्धमिति ; [नेत्याह—प्रत्यक्षादीनामिति । ननु शब्द 195 - 4
एव अपरोक्षज्ञानसाधनम् ;] न—पूर्वज्ञानवदतत्फलत्वप्रसङ्गादित्याह—
शाब्दं चेति ॥ 195 - 5

ननु विधीयमानं शाब्दं ज्ञानमिति । किं तज्ज्ञानं विधीय-
मानतया अपरोक्षफलम्, प्राथमिकज्ञानम्? तत्सन्तानो वा?। न
तावत् प्राथमिकमित्याह— तदयुक्तं यत्तावदिति । उभयपरत्वे वैरूप्यस्य 195 - 7
दर्शितत्वादिति वाक्यशेषः। ननु प्रथमज्ञानेन अवगते ब्रह्मणि तदुद्देशेन
प्रत्ययसन्तानो विधीयताम्, तत्संस्कारप्रचयादपरोक्षसिद्धेः इति शङ्कते—
अथ पुनस्तदेव ज्ञानमिति । किमुपासनविधिसामर्थ्यादिदमवगतम्? किं 195 - 10
वा 'आत्मन्येवात्मानं पश्येत्' इति दर्शनविधानसामर्थ्यात् इति। न ताव-
दुपासने विधिः श्रूयते। 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपा-
सीत' 'तमेव धीरो विज्ञाय' इत्यादेः स्वभावसिद्धप्रत्ययोपादानेन
अलौकिकात्मविषयप्रतिपादनपरत्वात्, एवकारविशेषणश्रवणात् वाक्य-
स्य विशेषणपरत्वात्, उभयप्रतिपादने वाक्यभेदात्। 'निदिध्यासितव्यः'
इति च आत्मप्रतिपादनपरे वाक्यभेदाभावाय स्तुतिपरत्वात्। अथ दर्शन-
विधिसामर्थ्यादिति ; नेत्याह—तत् कथं लभ्यते उपास्तिध्यायत्योरिति। 195 - 10
ननु ज्ञानस्य सर्वत्र प्रवाहेण अविनाभावात् ज्ञानविधानेन सन्तान-
विधिः लक्ष्यते इति ; नेत्याह—नापि ज्ञानेनैवेति। अथापि कथञ्चिदुपासन- 195 - 12

ननु श्रूयत एव 'आत्मेत्येवोपासीत' इत्यादि, तत्राह—आत्मेत्येवेति । ता.
उपासनाविधिपरत्वे स्पष्टे कथमात्मपरत्वम्? इति ; तत्राह—एवकारेति ।

'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥'

इति न्यायादित्यर्थः । ननु 'निदिध्यासितव्यः' इत्यस्त्येवोपासनाविधानमित्यत
आह—निदिध्यासितव्य इति। स्तुतिपरत्वाङ्गीकारात् नोपास्तिविधानमिति
शेषः। द्वितीयं कल्पमुत्थापयति—अथेति। ननु दर्शपूर्णमासप्रकरणे मलवद्वाससो
व्रतकलापविधानवत् आत्मप्रकरणे निदिध्यासनविधानं भविष्यतीति ; तत्राह—
अथापीति ॥

विधानं कल्प्येत निदिध्यासनविधेः, तथाप्यपरोक्षफलस्य अहेतुत्वात्
196 - 1 उपासनस्य न शाब्दज्ञानाद्विशेष इत्याह— नाप्यभ्यासादिति। अभ्यासस्य
अप्रमाणत्वात् विषयस्य असम्प्रयुक्तत्वाच्च न वस्त्वापरोक्ष्यमभ्यासात्।
किंतु मिथ्याऽऽपरोक्ष्यमित्यर्थः ॥

ननु 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति ध्यानमपरोक्षफलं श्रूयते। सत्यम्। एकत्र चित्तस्य समवधानता तदैकाग्र्यनिमित्तं भवति। तदेकाग्रचेतसा सहकारिणा शब्द एव औपनिषदमिति तद्धितप्रत्ययसामर्थ्यात् अपरोक्षज्ञानमुत्पादयति। ध्यायमानो ज्ञानप्रसादेन पश्यतीति वाक्यस्य अन्वयात्। चित्तैकाग्र्यस्य सूक्ष्मवस्तुदर्शननिमित्तत्वात्। दृष्टेनैव उपकारसिद्धावदृष्टकल्पनायोगात्। अपरोक्ष-

---

ता. **निदिध्यासनविधेः**। श्रवणादिति शेषः। ननु विनष्टपुत्रादेः भावनाधिक्यादापरोक्ष्यं दृश्यत इति; तत्राह— **अभ्यासस्येति**। हेत्वन्तरमाह— **विषयस्येति**। पुत्राद्यापरोक्ष्यं वास्तवापरोक्ष्यं न भवति,

'भावनाबलतः स्पष्टं भयादाववभासते।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥'

इति दर्शनादित्यर्थः। शब्द एवापरोक्षज्ञानं उत्पादयतीत्यत्र हेतुमाह— **औपनिषदमिति**। 'ध्यायमानः पश्यति' इति श्रुतेः ध्यानस्यैवापरोक्षज्ञानहेतुत्वं प्रतीयते इति; अत्राह— **ध्यायमान इति**। ज्ञायतेऽनेनेति ज्ञानमन्तःकरणम्, तत्प्रसादेनेत्यर्थः। तेन ध्यानं ज्ञानप्रसादकारणं ज्ञानप्रसादश्च दर्शनकारणमिति साधनसाधनं ध्यानमित्यर्थः। ध्यानस्य चित्तैकाग्र्यद्वारेण दर्शनसाधनत्वेऽन्वयव्यतिरेकावपि प्रमाणमित्याह— **चित्तैकाग्र्यस्येति**। ध्यायमानः पश्यतीति श्रुतस्य [अन्वयस्य] वैपरीत्यकल्पनमयुक्तमित्याशङ्क्याह— **दृष्टेनैवेति**। अदृष्टकल्पनात् श्रुतवैपरीत्यकल्पनमेव लघीयः, प्रमाणान्तराविरोधादित्यर्थः। अन्वयव्यतिरेकसिद्धसाधनत्वादपि न निदिध्यासनस्य विधेयत्वमित्याह— **अपरोक्षकामस्येति**। पूर्वं निदिध्यासनविधिरस्तीत्युक्तम्, इदानीं

कामस्य उपासनायां स्वयंप्रवृत्तेः अदृ[दृ]ष्टार्थत्वाच्च निदिध्यासनविधानस्य इत्युक्तम्। तदेतदाह—नापि श्रूयत इति। दृष्टसामर्थ्यानुवादत्वात् 196 - 2
वाक्यस्य विधिर्न श्रूयते इत्यर्थः। ननु ऐकाग्रयद्वारेण आपरोक्ष्यनिमित्तत्वाद् दृष्टद्वारेणापि प्रवर्ततामिति चोदयति—ननु किमत्र श्रवणेनेति। 196 - 3
परिहारग्रन्थः स्पष्टार्थः। अतो ज्ञानद्वयाभावात् एकस्य ज्ञानस्य उभयार्थताऽयोगात् न ब्रह्मज्ञानं विधेयमिति भावः॥

यत्पुनरिति स्पष्टार्थः। न स्थायिवस्तुदृष्टान्तेन तात्पर्यसापेक्षशब्द- 196 - 6
व्यापारनिर्णय इत्याह—युक्तं तत्रेति। ननु 'समिधो यजति' 'तनूनपातं 196 - 7
यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इति पञ्च वाक्यानि पञ्च पदार्थान् विधाय तेषां क्रममपि विदधति। अतः शब्दस्यैव द्वैयर्थ्यमित्युक्तमनुवदति—यदपीदमुक्तमिति। पदार्था एव शब्द- 197 - 1
गम्याः, क्रमस्त्वर्थापत्तिगम्यो न शब्दगम्य इति परिहरति—यत्तावत् 197 - 4
प्रत्येकमिति। ये तावदित्यर्थः। तेषामेव न क्रमस्य विधानमित्यध्याहारः। किं पदार्थेभ्योऽर्थान्तरभूतस्य क्रमस्य वाक्यैः प्रतिपादनमुच्यते? किं वा पदार्थमात्रस्यैव क्रमस्य प्रतिपादनमिति? न तावत् उत्तरः कल्प इत्याह—नापि ते क्रमशब्दाभिधेया इति। ननु विहितमङ्गं 197 - 5
भवति। अङ्गं च प्रयुङ्क्ते प्रयोगविधिः। अतः प्रयोगवचनप्रयोज्यत्वात् क्रमस्यापि विधेयत्वे वाक्येभ्य एव अपदार्थस्यापि क्रमस्य विधिरेष्टव्य इति; नेत्याह—प्रयोगवचनोऽपीति। विहितस्यैव प्रयोज्यत्वात् 197 - 5
पदार्थानामेव विहितत्वादित्यर्थः। अन्यथा विहिते प्रयोगविधिः,

---

नास्तीत्युच्यमाने पूर्वापरविरोधः, इत्यत आह—अदृष्टार्थत्वाच्चेति। 'व्रीहीनवहन्यात्' इतिवन्नियमविधिरयम्, न केवलं दृष्टार्थः नापि केवलादृष्टार्थ इत्यर्थः। ता.
इदानीं प्रकरणार्थमुपसंहरति—अत इति॥

विपक्षे दोषमाह—अन्यथेति॥

प्रयोगविधौ च विधिकल्पना इतीतरेतराश्रयात्। ननु पदार्था एव
क्रमः, तस्मात् पदार्थान् प्रयुञ्जानः क्रममपि प्रयुङ्क्ते इति; नेत्याह—
197 - 6 न ते क्रम इत्युक्तमिति ॥

अपर आह—न क्रमो नाम कश्चिदस्ति । एकैकस्मिन्
पदार्थेऽदर्शनात्, अनेकपदार्थाश्रयत्वे पदार्थयौगपद्यात् क्रमायोगात्।
197 - 6 अयौगपद्ये च उभयाश्रयधर्मायोगादिति; तत्राह—न च क्रमो नामेति।
197 - 8 ननु संयोगवत् उभयाश्रयत्वे पदार्थयौगपद्यमित्युक्तम्, तत्राह—तत्र क्रमो
नाम वस्तुभूत इति । क्रमत्वादेव न यौगपद्यापेक्षेति भावः। ननु देश-
197 - 8 कालवस्तूपाधिपरामर्शमन्तरेण क्रमो न दृश्यते इति, तदाह—त एवेति। ननु
अनुष्ठेयपदार्थानामनिष्पन्नस्वभावत्वात् न देशकालवस्तुक्रम इति; तत्राह
198 - 1 —स्मृतिविज्ञानमेवेति । पाठक्रम एव स्मर्यमाणोऽनुष्ठेयपदार्थेषूपरज्यते
198 - 2 इत्यर्थः। सर्वथा इत्युपसंहारः। ननु क्रमस्य विधायकं वक्तव्यम्। न-
क्रमस्य अविधेयत्वात्। किंतु अनुष्ठेयविशेषणतया प्रमीयते क्रमः न
विधीयते; अननुष्ठेयत्वात्। केन तर्हि प्रमीयते? एकस्यानेकपदार्थप्रयो-
198 - 3-4 गानुपपत्त्येत्याह—तच्चैकत्त्वात् कर्तुरिति । सन्निहितं चेति । अर्थक्रमा-
भावे पाठक्रम इत्यर्थः। तस्मात् सर्वत्र प्रमाणद्वयेनैव प्रमेयद्वयसिद्धिरिति
प्रकरणार्थः ॥

198 - 5-9 न तथेह ज्ञानद्वयं इत्यारभ्य वेदोऽवगमयति इतिपर्यन्तः स्प-
ष्टार्थः। प्रतिवस्तुसंप्रयोगं निरपेक्षमेव प्रमाणं चक्षुः, न तथा प्रतिपदार्थं
प्रमाणं शब्दः, किन्तु यत्र तात्पर्यं तत्र सम्भूयैव प्रमाणमित्याह—
199 - 2 युक्तं तत्र यद्यदवबोधयतीति । नन्वाभिधानिकमात्मतत्त्वज्ञानं प्रमेयपरमेव
मा भूत्, किन्तु विधिविषयतया विधायकपदजन्यविधिप्रमितिविषय-
199 - 6 त्वेन विधिशेष इत्याह—मा भूदिति । कथं तर्हि ब्रह्मात्मसिद्धिरिति;

---

ता. किं क्रम एकद्रव्यवृत्तिः? [अनेकद्रव्यवृत्तिर्वा?] अनेकद्रव्यवृत्तित्वेऽपि,
युगपदनेकद्रव्यवृत्तिः? अयुगपद्वा?। नाद्य इत्याह—एकैकस्मिन्निति ।
द्वितीये दूषणमाह—अनेकेति। तृतीये दूषणमाह—अयौगपद्ये चेति ।
तर्हि यौगपद्यं प्राप्तमित्यत्राह—क्रमत्वादेवेति ॥

तत्राह—तस्मिन् विहितेऽर्थादिति। ननु कस्यानुपपत्त्या तत्त्वसिद्धिरिति; 199 - 7
तदाह—सविषयत्वादिति। अवगमविध्यन्यथानुपपत्त्यैवेत्यर्थः। परि- 199 - 8
हरति—एवमप्यविवक्षितोऽर्थ इति। एकस्मिन्विषये प्रथमप्रतिपत्तिरप्रमाणं 199 - 8
तस्मिन्नेव द्वितीयज्ञानं प्रमाणमिति श्रुतिश्च न प्रमाणं श्रुत्यर्था-
पत्तिश्च प्रमाणमित्यादि विरुद्धमित्यर्थः। किञ्च अवगमविधानानुप-
पत्तिः न अवगम्यस्य वस्तुत्वं गमयतीत्याह—न च नियोगत इति। 199 - 10
ननु ज्ञानस्य स्वतःप्रामाण्यात् तथाभूतार्थतैव युक्ता, अन्यथा आरोपित-
ज्ञानस्य विधौ प्रयोजनाभावादिति; तत्राह—भवन्ति हि परिकल्पित- 199 - 11
विषया इति। आभिधानिकप्रत्ययस्य विधिसंसर्गात् प्रागपि स्वतः-
प्रामाण्यं किं न स्यादिति भावः। ननु विधेयज्ञानस्यापि स्वविषय-
प्रमितिरेव दृष्टं फलम्, तत् परित्यज्य आरोपितविषयत्वे अदृष्टकल्पना
स्यादिति; तत्राह—एतदेवात्र युक्तमिति। सकलप्रमाणविरोधेन दृष्ट- 200 - 2
कल्पनाददृष्टकल्पनमेव युक्तमित्यर्थः। तस्मात् कार्यनिष्ठे वेदे इति 200 - 3
अनारम्भवादी सिद्धान्त्येकदेशीयदूषणमुपसंहरति॥

ननु वेदान्तानां धर्मब्रह्मविषयत्वाभावे अध्ययनविध्युपात्ता-
नामानर्थक्यं स्यादिति; नेत्याह—एवं च सत्ययमात्मा ब्रह्मेत्यादिना। 200 - 6
तत्र आत्मनो वेदान्तसङ्कीर्तितसमस्तगुणविशिष्टस्योपासनोत्पत्तिविधौ
शमादीतिकर्तव्योपसंहारेण विनियोगविधौ मोक्षकामनियोज्यसम्ब-
न्धितया चाधिकारविधौ साङ्गे कर्मण्यधिकारिणोऽनुष्ठापकतया च
प्रयोगविधौ वेदान्ताः पर्यवस्यन्ति। तच्च सर्वं निरूपितमिति। अत्र
किं शब्दानां कार्यान्वितस्वार्थावबोधसामर्थ्यात् सर्वो वेदः कार्यपरतया
निरूपित इत्युच्यते? किं वा सूत्रकाराद्यभियुक्तवचनसामर्थ्यादिति?।
न तावत् प्रथमः कल्पः। समन्वयसूत्रे तस्य निराकरिष्यमाणत्वात्।

---

अवगमविध्यन्यथानुपपत्त्येति। अवगमस्य निर्विषयस्य असम्भवा-　　ता.

---

न तावत् प्रथमः कल्पः, समन्वयसूत्रे तस्य नि(रसिष्य)[राकरिष्य]-　　भा.

201 - 4 **अभियुक्तवचनसामर्थ्याच्चेत्, तत्राह**—स्यादेतदेवं यदि सर्व एव वेदार्थ इति। ननु धर्मस्यैवोपक्रान्तत्वेऽपि प्रासङ्गिकत्वेनेदं ब्रह्म निरूपितमिति; **कथमवगम्यते न वेदार्थोपाधौ विचारः प्रवृत्त**

201 - 5 **नेत्याह**—विचारितश्चेति। **अभियुक्तवचनसामर्थ्यादित्याह**—यावता कार्यनिष्ठ

201 - 5 **इति ?। सूत्रभाष्यवार्तिककारवचनसामर्थ्यादित्याह**—यावता कार्यनिष्ठ एवेति ॥

**अत्रायमाशयः—अथातो धर्मजिज्ञासा। धर्ममीमांसाशास्त्रं विषयः। तत् किमारम्भणीयं न वेति विचारः। नारम्भणीयमिति पूर्वः पक्षः। विचार्यमाणार्थनिर्णये प्रत्यक्षादीनामसाधनत्वात् आम्नायस्य चाध्ययनविधिना अदृष्टार्थतया विनियोगात्। तदर्थमध्य- यनविधिः अदृष्टार्थो दृष्टार्थो वेति विचार्यते। दृष्टसाधने विधेरयोगा- ददृष्टनियमाद्विधेरदृष्टार्थ इति प्राप्तम्। ननु स्वाध्यायः अध्ययनक्रिया-**

---

ता. दित्यर्थः। **प्रासङ्गिकत्वेनेति**। प्रतिषेधचोदनादिनिरूपणवदित्यर्थः॥ धर्मोपाधावेव विचारः प्रवृत्त इति दर्शयितुं धर्ममीमांसारम्भप्रकारं दर्शयति—**अत्रेति**। प्रमाणानुग्राहकत्वात् विचारस्य अनुग्राह्यप्रमाणाभावे तदसम्भव इत्याह—**विचार्यमाणेति**। अस्तु तर्हि वेद एव मूलप्रमाणमित्यत आह—**आम्नायस्य चेति**। 'स्वाध्यायोऽध्येतव्यः' इति विहितस्य अध्ययनस्य फलाकाङ्क्षायामर्थावबोधाक्षरस्वीकारयोरन्वयव्यतिरेकसिद्धतया विधेयफलत्वा- सम्भवात् विश्वजिन्न्यायेन स्वर्गः रात्रिसत्रन्यायेन घृतकुल्यादयो वा फलमित्य- विवक्षितार्थत्वान्नाम्नायः प्रमाणमित्यर्थः। **तदर्थमिति**। आम्नायस्य विवक्षितार्थ- त्वसिद्ध्यर्थमित्यर्थः॥

**अदृष्टनियमाद्विधेरिति**। यत्रैवादृष्टं तत्रैव विधिरिति व्याप्तेरित्यर्थः।

---

भा. **माणत्वादिति**। वेदत्वेन हि वेदान्तानां कार्यपरत्वं साधयितुमयुक्तम्, अप्र- योजकत्वात्। किन्तु प्रयोजनाय व्युत्पत्तिबलाद्वा तत् साधनीयम्। तदुभयमपि समन्वयसूत्रे निराकरिष्यत इत्यर्थः। अनेन कृत्स्नविचारस्य गतार्थत्वशङ्का निरस्ता। वेदान्तानां सिद्धब्रह्मपरत्वमङ्गीकृत्य जिज्ञासासूत्रमात्रस्य गतार्थत्वशङ्कां धर्म- जिज्ञासासूत्रस्य धर्मविचारारम्भमात्रविषयत्वप्रदर्शनेन परिहरिष्यन्नाह—**अभि- युक्तवचनसामर्थ्याच्चेत्तत्राहेति** ॥

कर्मतया अवगम्यमानः संस्कार्यो वा आप्यो वेति दृष्टसम्भवे कथमदृष्टार्थता सम्भवेत्। न--संस्कृतस्य क्रत्वन्तरे विनियोजकप्रमाणाभावात्। अवाप्तस्य च निष्फलत्वात्। ननु अवाप्तादाम्नायात् फलवदर्थावबोधे दृष्टफले नादृष्टं कल्पयितुं शक्यते। न—दृष्टफलसाधने अन्यत एव प्रवृत्तेः विधिवैयर्थ्यप्रसङ्गात्। ननु कर्मकारकप्रधानस्याध्ययनस्य कथं स्वतन्त्रादृष्टफलत्वं कल्प्यते?। न—कर्मकारकस्य वैफल्यात् सक्तुन्यायेन 'स्वाध्यायेनाधीयीते'ति वैपरीत्यकल्पनात्। ननु न श्रूयते फलमध्ययनस्यार्थवादेऽपि, तन्न—जपाध्ययनफलस्य घृतकुल्यादेरध्ययनत्वसामान्येन प्रथमाध्ययनेऽप्यतिदिश्य रात्रिसत्रन्यायेन 'घृतकुल्यादिकामः स्वाध्यायेनाधीयीते'ति फलविपरिणामात्। संस्कारकर्मत्वाभावाच्च न फलश्रुतेरर्थवादता। नन्वदृष्टार्थत्वेऽपि स्वाभाविकस्यार्थावबोधसामर्थ्यस्य का हानिः? न—विषनिर्हरणादिकार्यान्तरे विनियुक्तानां मन्त्राणामर्थविवक्षाप्रतिबन्धदर्शनात्। तस्मादाम्नायस्यार्थविवक्षाऽभावात् प्रत्यक्षाद्यविषयत्वात् प्रमाणानुग्राहकत्वाच्च विचारस्य निरालम्बनो धर्मविचारो नारब्धव्य इति प्राप्तम्॥

आरम्भणीय एवायं विचार इति सिद्धान्तः। तस्य स्वाध्या-

---

**अन्यत एवेति**। अन्वयव्यतिरेकादित्यर्थः। यत्र फलं श्रूयते, तत्रैव स्वतन्त्रादृष्टार्थतया विधानं दृष्टं इह तदभावे कथं स्वातन्त्र्येण विधानमिति शङ्कते—**ननु न श्रूयत इति**। 'यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति' इत्यर्थवादे फलं श्रूयत इत्याशङ्क्य, तस्य जपाध्ययनविधिफलत्वान्न प्रथमाध्ययनविधिफलत्वमित्याह—**अर्थवादेऽपीति**। 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' इति न्यायेन अध्ययनस्य संस्कारकर्मत्वात् फलश्रुतेरर्थवादत्वमित्याशङ्क्याह—**संस्कारेति**। संस्कृतस्य अन्यत्र विनियोगाभावेन संस्कारकर्मत्वनिराकरणादित्यर्थः। **अर्थविवक्षाप्रतिबन्धदर्शनादिति**। **अर्थविवक्षायाः प्रतिबन्धः** अभावो दृश्यत इत्यर्थः। यद्वा, **अर्थविवक्षया** कार्यविषनिर्हरणादेः **प्रतिबन्धदर्शनात्** अर्थपरत्वम्, नास्तीत्यर्थः॥   ता.

**तस्य स्वाध्यायेति**। अध्ययनविधिः स्वविषयानुष्ठानजन्यसंस्कारस्य

याध्ययनविधिप्रमितकर्तव्यत्वात् ॥

ननु निरालम्बनत्वमुक्तम् । न—आम्नायस्य आलम्बनत्वात् । ननु अदृष्टार्थोऽसौ दर्शितः । न—अध्ययनस्य कर्मकारकप्रधानत्वात् स्वतन्त्रादृष्टार्थत्वायोगात् । ननु कर्मकारके न किञ्चित् प्रयोजनमस्ति इत्युक्तम् । न—उभयस्याप्युपपत्तेः । अध्ययनेन दृष्टद्वारेण आप्यते साङ्गाध्ययनविधिसामर्थ्यात् संस्क्रियते च स्वाध्याय इति । ननु संस्कृतस्य विनियोगाभाव उक्तः । न—क्रतुविध्युपादानप्रमाणादेव विनियोगसिद्धेः । क्रतुविधिर्हि स्वविषयावबोधमाकाङ्क्षमाणः तस्य जनकतया संस्कृतं स्वाध्यायमुपादत्ते । ननु उपादानप्रमाणं ज्ञानस्य जनकतया स्वाध्यायमात्रमादत्ते न संस्कारमिति । सत्यम्—अध्ययनविधिसामर्थ्यादेव संस्कृतस्वाध्यायजन्यविशिष्टज्ञानवत्तैव अनुष्ठितो यागोऽपूर्वं जनयतीति कल्प्यते । अतः स्वाध्यायविधिसामर्थ्यमीक्षमाणः क्रतुविधिः स्वविषयज्ञानजनकतया संस्कृतस्वाध्यायमुपादत्ते । ननु स्वतन्त्रादृष्टं कल्प्यतामित्युक्तम् । न—दृष्टार्थाक्षरस्वीकरणतज्जन्यस्वज्ञानादिसमवाय्यदृष्टसम्पत्तौ श्रुतविरोधेन कारकवैपरीत्यमादाय स्व-

---

ता. फलपर्यन्ततामाकाङ्क्षन् तद्द्वारत्वेन अक्षरावाप्तिं स्वीकृत्य तद्द्वारेण फलवत्क्रतुविधिज्ञानमाक्षिपति । सन्दिग्धतया च प्रतिपन्नः क्रतुविधिः स्वविचारमाक्षिपतीत्यर्थः । **निरालम्बनत्वम्** । अनुग्राह्यप्रमाणशून्यत्वमिति यावत् । उभयार्थत्वमेव दर्शयति—**दृष्टद्वारेणेति** । आप्तिस्संस्कारश्चेत्युभयमस्तीत्यर्थः । उपा**दानप्रमाणात्** । विध्यन्यथानुपपत्त्येति यावत् । तदेव स्पष्टयति–**क्रतुविधिरिति** । विध्यन्यथानुपपत्ति**विधिसामर्थ्यम्** । प्राङ्मुखत्वपवित्रपाणित्वाद्यङ्गसहिताध्ययनविध्यन्यथानुपपत्तिमिति यावत् । **कारकवैपरीत्यमिति** । [ स्वाध्यायोऽध्येतव्य इति ] कर्मकारकस्वाध्यायविषयत्वमध्ययनस्य श्रूयमाणं परित्यज्य स्वाध्यायेनेति करणत्वेन अप्राधान्यं अध्ययनस्य च शेषत्वेन श्रुतस्य प्राधान्याङ्गीकरणमयुक्तमित्यर्थः । तर्ह्यक्षरावाप्तिकर्मावबोधयोरन्यतरफलत्वेन अध्ययनस्य क्रतुशेषता न स्यादित्यत

तन्त्रादृष्टकल्पनानुपपत्तेः । आधानवदनङ्गस्याप्यध्ययनस्य क्रतूपकारित्वं न विरुध्यते ॥

ननु तव्यप्रत्ययेन प्रकृत्यर्थोपरक्तमपूर्वमेव स्वतन्त्रमभिधीयते । तन्न—अपूर्वाभिधानेऽपि भिन्नपदोपात्तप्रकृत्यर्थोपरक्तापूर्वाभिधानात् वरमेकपदोपात्तकर्मकारकगतापूर्वाभिधानम् । भावार्थजन्यमपूर्वं न द्रव्यादिजन्यमित्येतावत् । समवायस्तु यत्र क्वापि सम्भवति । अदृष्टार्थतया च स्वाध्यायस्य अर्थविवक्षाऽभावे अध्ययनविधिवाक्यस्याप्यर्थविवक्षाऽभावात् अदृष्टार्थतया अध्ययनविधानमेव न स्यात् । तस्मात् साङ्गाध्ययनविधिप्रयुक्तादृष्टस्य स्वसमवायितया अक्षरग्रहणार्थावबोधक्रतुप्रवृत्त्यादिदृष्टफलसापेक्षत्वात् स्वाध्यायस्य स्वभावनिमित्तार्थावबोध-

---

आह—**आधानवदिति** । अग्निसंस्कारफलस्याप्याधानस्य अनङ्गस्यापि संकृताग्निद्वारा तत्र कारकत्ववत् स्वीकृताक्षरैः कर्मावबोधद्वारेणानङ्गस्या[प्य]ध्ययनस्य क्रतूपकारकत्वं न विरुध्यत इत्यर्थः ॥ **ता.**

स्वाध्यायसंस्कारार्थत्वमध्ययनस्य प्रतीयत इति यदुक्तम्, तदयुक्तमिति शङ्कते—**नन्विति** । **भाट्टमते** तव्यप्रत्ययादिना भावनैवाभिधीयते नापूर्वम्, तत्कथमपूर्वाभिधानमिति, सत्यम्, अङ्गीकृत्यैतदुक्तमित्याह—**अपूर्वाभिधानेऽपीति** । अध्येतव्य इत्यत्र अध्ययनमपूर्वञ्च प्रकृतिप्रत्ययाभ्यां प्रतीयते, तत्र प्रकृत्यर्थाध्ययनोपरक्तापूर्वाभिधानात् कर्मणि विहितेन तव्यप्रत्ययेन उपरक्तस्वाध्यायगतापूर्वाभिधानं युक्तमित्यर्थः । प्रकृतिप्रत्यययोश्च भिन्नपदत्वमङ्गीकृत्य एतदुक्तम् । ननु भावार्थसाध्यत्वादपूर्वस्य तद्गतत्वमेव युक्तं न कर्मकारकगतत्वमित्याशङ्क्याह—**भावार्थेति** । इदानीमध्ययनविधेरदृष्टार्थत्वे अध्ययनस्य विधानमेव न सिध्येदित्याह—**अदृष्टार्थतयेति** । अध्ययनविधायकवाक्यस्याप्यविवक्षितार्थतया अध्ययनविधानाप्रतीतेरित्यर्थः । तर्हि नियमादृष्टस्य केन द्वारेण फलपर्यवसायित्वम् ? इत्याकांक्षायां तद्दर्शयन् प्रकृतमुपसंहरति—**तस्मादिति** । **स्वसमवायितया**—स्वाध्यायसमवायितयेति यावत् । अर्थविवक्षाप्रतिबन्धदर्शनादिति यदुक्तम्, तत्राह—**स्वाध्यायस्य स्वभावेति** ॥

प्रतिबन्धकताऽभावात् विवक्षितार्थमाम्नायमवलम्ब्य धर्मविचारः कर्तव्य
इति ॥

तदेवमर्थविवक्षाधर्मविचारावसरप्रदर्शनपरे शास्त्रारम्भे न सर्व-
वेदार्थविचारसिद्धिरिति प्रारभ्यमाणविचारो धर्मविषयो न वेदार्थमात्र-
201 - 6 विषय इत्युपपादयति—तथा हि शास्त्रारम्भ इति ॥

ननु 'वेदवाक्यानि विचारयेत्' इत्यादिभाष्यलिङ्गात् वेदार्थमात्र-
201 - 7 विचारारम्भोऽवगम्यते इति शङ्कते—कथमिति । सामान्यप्रसिद्धिविशेष-
विप्रतिपत्त्योः भाष्यकारेण धर्मे प्रदर्शितत्वात् स एव विचार्यते
201 - 7 इत्याह—धर्मो नाम कश्चित् साधयितुरिति । एवं विषयविप्रतिपत्ती
202 - 2 दर्शयित्वा धर्मविषय एव पूर्वपक्षप्राप्तिं दर्शयतीत्याह—तत्राग्निहोत्रादि-
202 - 7 लक्षण एवेति । नकारस्तु पूर्वपरयोः सम्बध्यते । एवमाशङ्किते इत्यतः
प्राक्तनो ग्रन्थः स्पष्टार्थः ॥

एवमाशङ्किते शास्त्रारम्भे सिद्धान्तसूत्रं तत्प्रतिपाद्यार्थकथनेन अव-
202 - 7 तारयति—धर्माय वेदवाक्यानीति । यस्य आम्नायस्य अर्थविवक्षा तस्यैव
विचारावसरश्चेति तदर्थविवक्षाविचारावसरौ । विवक्षाविचारावसरधर्म-
202 - 9 विचारान् सूत्रार्थान् सूत्रयोजनया दर्शयति—वेदमधीत्यानन्तरमिति । ततः
203 - 2 किमायातम्? इत्यत आह—एवं स्थित इति । किं तत्र विवक्षितं गम्यते
203 - 3 इति? तदाह—किं तु धर्मातिरिक्त इति । अयमर्थः—वेदस्य अर्थविवक्षा-
प्रदर्शनेन वेदार्थविचारः कर्तव्य इति वक्तव्ये धर्मग्रहणं कुर्वन् मा भूत
सर्ववेदार्थविचारप्रतिज्ञा किंत्वेकदेशविचारोऽयमिति मन्यते सूत्रकार
इति गम्यते ॥

---

ता. [तदेवमिति] धर्मविचारस्यावसरो वेदाध्ययनानन्तरं समावर्तनात्
पागित्यथातश्शब्दाभ्यां प्रदर्शित इत्यर्थः ॥

मैवम्, धर्मस्यैव जिज्ञासायोग्यत्वप्रतिपादनात् वेदार्थमात्रस्य तदप्रति-
पादनात् इत्याह—सामान्येति ॥

नन्ु अथातश्शब्दाभ्यां स्वाध्यायस्य पूर्वनिर्वृत्ततया विचार-
हेतुत्वमुच्यते। स्वाध्यायो हि स्वार्थविचारहेतुर्भवति, न धर्म-
विचारहेतुः। अतः अथातश्शब्दविरोधात् न धर्मविचारः प्रतिज्ञातुं
शक्यत इति चोदयति—तत् कथम्? यत्तावदिदमिति। सामान्यविशे- 204 - 1
षाभ्यां विचार्यमाणप्रधानाभिधायिधर्मपदग्रहणसामर्थ्यात् तस्यैव विप्रति-
पत्त्या पुरुषार्थसाधनतया च जिज्ञासितत्वात् प्रामाण्यप्रतिपादनात्
प्राक् वेदार्थे सामान्यप्रतिपत्तिविशेषविप्रतिपत्तिपुरुषार्थसाधनत्वादीनां
अनवगमात् जिज्ञासितत्वायोगात् धर्म एव विचार्यत इत्याह—उच्यते 204 - 1
धर्मो नामेत्यादिना। तत्र धर्मे जिज्ञासायोग्यत्वप्रदर्शनेन वेदार्थे
तदभावं विवक्षति—लोकप्रवादादिति। ननु धर्मविचारे स्वाध्यायस्य 204 - 2
पूर्वनिर्वृत्ततया हेतुत्वम्, अर्थविवक्षायाः प्रदर्शनं च अनुपयोगि इत्युक्तम्।
सत्यम्—अग्निहोत्रादेरपि धर्मस्कन्धत्वात् दैवगत्या च धर्मत्वादुपयोग
इत्याह—अग्निहोत्रादिरपि वेदार्थ इति। यत इति। विप्रतिपत्तिस्कन्ध- 204 - 3-4
त्वादित्यर्थः। तेन विवक्षितोऽसौ स्वाध्याय इति प्रदर्शनीयमित्यर्थः।
ननु पुरुषार्थत्वाच्चेद्धर्मविचारः अध्ययनेनैव तत्सिद्धेः किं धर्मविचारेण?
इति; नेत्याह—न च अध्ययनमात्रादिति। अतो न अथातश्शब्द- 204 - 4

---

**स्वाध्यायस्य**। अधीतस्येति यावत्। एतावता कथं वेदार्थोपाधौ विचारः प्रवर्तत इति ज्ञायते? इत्यत आह—**स्वाध्यायो हीति**। **सामान्यविशेषाभ्यामिति**। श्रेयस्साधनं धर्म इति सामान्यतः, अग्निहोत्रादिरेव न चैत्यवन्दनादिरिति विशेषतः। [**विचार्यमाणः**] अत एव **प्रधानो** यो धर्मः **तदभिधायी** यो **धर्मशब्दः तद्ग्रहणसामर्थ्यादिति** योजना। न केवलं धर्मशब्दग्रहणसामर्थ्यादेव धर्मस्य जिज्ञास्यत्वम्, किन्तु योग्यत्वादपीत्याह—**तस्यैवेति**। ननु वेदार्थोऽपीदृश इत्यत आह—(वेद)**प्रामाण्येति**। ननु चैत्यवन्दनादिरपि धर्मस्कन्धतया विप्रतिपन्नः, तेन तत्प्रतिपादकबौद्धवाक्यादेरपि विवक्षितार्थता किं न प्रदर्श्यते? इत्यत आह—**दैवगत्या चेति**, इति केचित्।* ता.

* केचित् तत्वदीपनकारादयः।

204 - 5 **विरोध इत्याह**—अतोऽध्ययनानन्तरमिति । **किं च धर्मशब्दस्य प्रधान-**
204 - 7 **त्वात् अथातश्शब्दविरोधेऽपि धर्मविचार एव युक्त इत्याह**—इति वदितुं
धर्मग्रहणं युक्तमिति । **पुरुषा हि धर्ममेव जिज्ञासन्ते न वेदार्थम्**, तस्यापि
204 - 8 **धर्मत्वप्रयुक्तत्वात् उपादानस्य इत्याह**—यतो न वेदार्थतयेति ॥

**सामान्यग्रहणविशेषविप्रतिपत्तिपुरुषार्थसाधनत्वधर्मशब्दग्रहणैः धर्म-**
205 - 1 **विचारपरं प्रथमसूत्रमित्युक्तम् । द्वितीयमपि सूत्रं तथैवेत्याह**—यत् पुनः
धर्मस्येति । **धर्मलक्षणपरं सूत्रं अर्थात् प्रमाणप्रतिज्ञेति** प्राभाकराः । सर्व-
**मुखतः प्रमाणप्रतिज्ञा अर्थात् धर्मलक्षणमिति** वार्तिककारीयाः । सर्व-
थाप्युभयं विवक्षितमिति । **तत्र वेदग्रहणे प्राप्ते सर्वो वेदो धर्मविषयो**
205 - 3 **मा भूदिति चोदनामग्रहीत् इति गम्यत इत्याह**—तन्नूनमिति ॥

---

ता. वेदार्थमपि जिज्ञासते पुरुषः, कथं धर्ममेव इत्यत आह—**तस्यापीति** । एकस्य (पूर्व)[सू]त्रवाक्यस्य कथमर्थद्वयपरत्वम् ? इत्यत आह—**धर्मलक्षणेति** । भवतु, प्रकृते किमायातम् ? इत्यत आह—**तत्रेति** । यदि कृत्स्नो वेदो धर्मपरः, तदा वेदप्रमाणको धर्म इत्येव वक्तव्यं स्यात्, न तथा ब्रवीति, ततो न कृत्स्नवेदार्थो धर्मः, किन्तु तदेकदेशस्यैवार्थ इत्यर्थः ॥

---

भा. ननु **सूत्रकारवचनसामर्थ्यात्** सर्वो वेदः कार्यपर इति सर्वोऽप्ययं विचारो गतार्थ एवेत्याशङ्क्य, किं धर्मजिज्ञसासूत्रसामर्थ्यात्तत्सिद्धिः ? उत चोदनासूत्रसामर्थ्यात् ? नाद्य इत्याह—**सामान्यग्रहणविशेषविप्रतिपत्तीति** । द्वितीयं निराकरोति—**द्वितीयमपीति** । यत्तु प्रथमसूत्रतात्पर्यवर्णनेनापि कृत्स्नविचारस्य गतार्थत्वशङ्का निरस्यत इति, तन्न —अथातश्शब्द-सामर्थ्येन हि सकलवेदाध्ययनानन्तर्यकृत्स्नस्वाध्यायार्थपरत्वगोचरेण सर्व-शाखाध्ययनानन्तर्यप्रयुक्तवेदार्थविचारप्रतिज्ञायां ब्रह्मविचारगोचरत्वमेवायाति । न तु (ब्रह्म) [धर्म] विचारस्यापि ब्रह्मगोचरत्वम्, येन ब्रह्मविचारो गतार्थो भवेत् ॥

ननु प्रतिज्ञातस्याप्रतिपादनायोगात् ब्रह्मविचारोऽपि कृत एव इति चेत्, न—सिद्धस्य साध्यसमानन्यायत्वायोगात् सिद्धब्रह्मगोचरन्यायस्यानुपलम्भाच्च ।

**ननु चोदनाग्रहणं सर्ववेदस्य धर्मे प्रामाण्यपरिहाराय न भवति, किं त्वन्यदेव प्रयोजनमित्याह**—ननु चोदनाग्रहणस्येति ॥ 206 - 1

**अयमर्थः—लिङादिशब्दव्यापारः पुरुषप्रवृत्तिलक्षणार्थभावनालक्षणभाव्यनिष्ठः स्वज्ञानकरणकः स्तुतिनिन्दार्थवादादिज्ञानेतिकर्तव्यताको लिङादिशब्देन आख्यातत्वसामान्यादर्थभावनाभिधायिनाऽपि लिङ्विशेषेण अभिधीयमानः शब्दभावनेति कथ्यते। शब्द एव वा**

---

ता. चोदनाग्रहणं वेदैकदेशग्रहणपरमित्युक्तम्, तत्र शङ्कते—**ननु चोदनेति**। **अन्यदेवेति** अर्थभावनारूपायाः पुरुषप्रवृत्तेः पुरुषार्थपर्यवसायित्वद्योतनमेवेत्यर्थः। तत्र तावद्विधेः स्वरूपं दर्शयति—**अयमर्थ इत्यादिना**। **व्यापार इति**। प्रवृत्त्यनुकूलः प्रेरणारूपः शब्दभावनेति यावत् ॥

इदानीं तस्या भावनायाः किं केन कथमिति भाव्यकरणेतिकर्तव्यतासाकाङ्क्षायाः क्रमेण अंशत्रयं सम्पादयति—**पुरुषप्रवृत्तीति**। तस्य किं वाचकं इत्यत आह—**लिङ्विशेषेणेति**। ननु लिङादेरप्याख्यातत्वादर्थभावनाभिधायकत्वमेव, न शब्दभावनाबोधकत्वमित्यत आह—**आख्यातत्वसामान्यादिति**। आख्याततया अर्थभावनाबोधकत्वं [लिङ्त्वेन शब्दभावनाबोधकत्वं] अपि न विरुध्यते [लिङादेः] आख्यातविशेषत्वादित्यर्थः। उक्तं हि तन्त्रटीकायाम्—

'अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते॥' इति।

अत्राभिधाभावनामप्याहुरेव इत्यन्वयः। **भाट्टानामेव** मतान्तरमाह—**शब्द एवेति**। तदप्युक्तं **भट्टपादैः**—

'किमाद्यपेक्षितैः पूर्णस्समर्थः प्रत्ययो विधौ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते॥' इति।

---

भा. न च अभियुक्तवचनसामर्थ्यात् ब्रह्मणोऽपि कार्यशेषत्वमभिप्रेत्य समानन्यायतया गतार्थत्वं तत्राप्यभिप्रेतमिति वाच्यम्; पूर्वपक्षे धर्मपदस्य वेदार्थपरत्वशङ्काऽयोगात्। न हि तयोर्वेदान्तानां कार्यपरत्वं सिध्यति। अतो (यथा) विचारान्तरोपयोगितया उपनिषदामपि धर्मजिज्ञासासूत्रे तात्पर्यं निरूपितमेव। समानप्रयोजनतया विचारकर्तव्यताप्रतिज्ञापि कृतेत्येव शङ्का तत्र निरस्तेति ॥

प्रदर्शितांशत्रयविशिष्टः शब्दभावना शब्दगुणो वा। सर्वत्र हि करणमितिकर्तव्यतानुगृहीतं भाव्यनिर्वृत्तिद्वारेणैव भावनां प्रति करणं भवति। तत्र शब्दभावनाविषयं ज्ञानं लिङादिशब्दजन्यं प्रवर्तकज्ञानत्वात् स्तुत्यादिज्ञानानुगृहीतं पुरुषप्रवृत्तिनिवृत्तिहेतुरिति भाव्यनिर्वृत्तिद्वारेण शब्दभावनां प्रति करणमुच्यते। सा च शब्दभावना पुरुषप्रवृत्तिमुत्पादयन्ती तस्याः पुरुषार्थविषयत्वमन्तरेण नोत्पादयितुं क्षमते; अपुरुषार्थे पुरुषस्य अप्रवृत्तेः। ततः चोदनाप्रयुक्तपुरुषप्रवृत्तेः समानपदोपात्तमपुरुषार्थं धात्वर्थं भाव्यं विहाय पुरुषविशेषणमपि स्वर्गादिकं भाव्यत्वेनोपादाय धात्वर्थकरणिका प्रयाजादीतिकर्तव्यताका स्वर्गादिभाव्यनिष्ठा पुरुषप्रवृत्तिरर्थभावना सम्पद्यते। तत् एवंविधार्थभावनानिष्पत्तये शब्दभावनायाः प्रवर्तकत्वद्योतनाय चोदनाग्रहणमिति॥

---

ता. **शब्दगुणो वा** इति शब्दसामर्थ्यमुच्यते 'समर्थः प्रत्ययो विधौ' इत्युक्तत्वात्। स्वज्ञानकरणक इत्यत्र शब्दव्यापारविषयज्ञानस्य करणत्वमुक्तम्, तत्साधयितुं लोकप्रसिद्धं करणस्वरूपं दर्शयति—**सर्वत्र** हीति। प्रकृते योजयति—**तत्रेति**॥

ननु 'सम्बन्धबोधः करणं तदीयम्' इति स्वर्गयागयोः साध्यसाधन[भाव]सम्बन्धावबोधस्य करणत्वं मण्डनाचार्यैरुक्तम्, तत्कथं स्वज्ञानकरणक इत्युच्यते। सत्यम्—उभयोरपि करणत्वात् अदोषः। हस्तेन शरेण विद्ध इति दर्शनादित्यपि द्रष्टव्यम्॥

भवत्वेवम्, तथापि चोदनाग्रहणस्य किं प्रयोजनं दर्शितम्?। इत्यत आह—**सा चेति**। तथापि किमायातम्? इत्यत आह—**ततश्चोदनाप्रयुक्तपुरुषप्रवृत्तेरिति**। शब्दभावनाभाव्यार्थभावनाया इति यावत्। यदर्थमेतत्सर्वमुक्तम्, तत् दर्शयति—**तदेवमिति**॥

अध्ययनस्य पुरुषार्थपर्यवसायित्वकथनमात्रेण कथं यागभावनाया धात्वर्थं विहाय स्वर्गभाव्यनिष्ठत्वं लभ्यते? इति तद्दर्शयितुं **टीकायास्तात्पर्यार्थमाह**—

नैतत् सारम्—अध्ययनविधिः इत्यादिः परिहारः। तस्यायमर्थः— 206 - 5
'स्वाध्यायोऽध्येतव्यः' इति तव्यप्रत्ययव्यापारः शब्दभावना अध्ययने पुरुषप्रवृत्तिलक्षणार्थभावनाभाव्यनिष्ठा स्वविषयप्रवर्तकज्ञानकरणिका अध्ययनफलार्थवादादिविज्ञानेतिकर्तव्यताका भवति। सा च पुरुषप्रवृत्तिलक्षणामर्थभावनामध्ययनकरणिकां स्वाध्यायभाव्यनिष्ठां प्राङ्मुखत्वादीतिकर्तव्यताकामुत्पादयति। सा च भाव्यस्य स्वाध्यायस्य फलवद्विज्ञानजननिमित्तत्वमन्तरेण अर्थभावनामुत्पादयितुमसमर्था स्वाध्यायगतलिङादिशब्दाभिधेयक्रतुभावनानां स्वर्गादिविषयत्वं परम्परया कल्पयति इत्यध्ययनविधिसामर्थ्यादेव वेदस्य विशिष्टफलविषयभावनानां प्रतिपादकत्वं सिद्धम्। अतो वेदग्रहणेनैव भावनानां धात्वर्थं विहाय स्वर्गाद्यालम्बनकत्वं सिध्यतीति ॥

अपि च, चोदनाग्रहणे वेदान्तानामर्थान्तरपरत्वाशङ्का स्यात्, तन्निवृत्तये वेदग्रहणमेव युक्तमित्याह—अपि च वेदग्रहणमेवेति। संदेहा- 207 - 1
न्तरमाह—चोदनाग्रहणे हीति। ननु वेदाध्ययनानन्तरं धर्मविचारं 207 - 1
प्रतिज्ञाय चोदनालक्षण इति ब्रुवन् वैदिकचोदनामेव ब्रवीति। न—तत्र विशेषाभावात्। अनेन च सूत्रेण तत्रापि सर्वचोदनानन्तर्यं किं न
स्यात्। प्रकारान्तरेण वैदिकचोदनानियममाह—अथ वेदाधिकरणे 207 - 2
इति। लक्षणसूत्रे प्राप्तं वेदग्रहणं विहाय अन्यत्र कुर्वन् न बुद्धिपूर्वकारी
स्यादिति परिहरति—सोऽयमाभाणक इति। अतो वेदान्तानां धर्मपरत्व- 207 - 4

---

तस्यायमर्थ इति। स्वविषयं च तत्प्रवर्तकज्ञानं चेति स्वविषयप्रवर्तकज्ञानं ता.
तत्करणिकेति यावत्। अध्ययनफलप्रतिपादका ये अर्थवादाः तज्ज्ञानेतिकर्तव्यताकेति यावत्। अर्थवादादीत्यत्र आदिशब्देन प्राकरणिकफलज्ञानमपि कचिदितिकर्तव्यता भवतीति सूचयति। तथापि प्रकृते किमायातम्? इत्यत आह—सा चेति। तथापि किम्? इत्यत आह—सा च भाव्यस्येति ॥

207-5 पर्युदासाय चोदनाग्रहणमित्याह—अतश्चोदनाग्रहणादिति । तस्मात् सूत्रभाष्यवार्तिककाराभिप्रायेण ब्रह्मपरत्वमेव न धर्मपरत्वमित्याह—
208-1 तदेवं सूत्रकार इति ॥

ननु तेषामेव कृत्स्नस्य वेदस्य धर्मे विनियोजकं वचनमस्तीत्याह
208-2 —ननु दृष्टो हि तस्यार्थ इति । सत्यम् । धर्मचोदनासूत्रप्रक्रमसामर्थ्यादुत्तरं
208-5 सामान्यवचनं प्रकृतविशेषे उपसंह्रियते इत्याह—सत्यम्, तत्प्रक्रमबला-
208-6 दिति । सामान्येन परिहारमभिधाय प्रत्येकमाह—अपि च–दृष्टो हीति । ननु आम्नायशब्देन सकलवेदस्य धर्मावबोधे विनियोगः स्पष्ट इति चोद-
208-7 यति–कथमिति । न विनियोगकार्त्स्न्यपरं भाष्यम्, किं तु आम्नायस्यार्थसद्भावपरम्, यथा 'रूपं प्रत्यक्ष'मित्युक्ते न सर्वप्रत्यक्षस्य रूपे विनियोगः किं तु रूपस्य प्रत्यक्षान्वयमात्रं कथ्यते तद्वत्, इति परिहरति—
208-7 209-5 वेदाध्ययनानन्तरमित्यादिना । अयोगव्यवच्छेद इति । वेदस्य कर्माव-
209-5 बोधेनासंबन्धं निराकृत्य सम्बन्धः प्रतिपाद्यत इति । नान्ययोगव्यवच्छेद इति । वेदस्य अर्थान्तरसम्बन्धो नास्तीति नाभिधीयत इत्यर्थः । ननु कर्मशब्दः प्रमेयमात्रपरतया धर्मब्रह्मणोरविशिष्टः किं न स्यात्? इति;
209-5 नेत्याह—कर्मशब्देन चेति । क्रियायां विषयमात्रे च प्रसिद्धस्य
209-6 शब्दस्य कुतः क्रियापरत्वम्? इति; प्रकरणादित्याह—यतस्तदवबोधेति ।
209-8 तस्मात् इत्युपसंहारः ॥

209-9 यत् पुनः इत्युक्तानुवादः । आनर्थक्यशब्देन अभिधेयाभावः
209-10 प्रयोजनाभावो वाभिधीयते? । न तावदभिधेयाभाव इत्याह—तत्र
210-2 यद्यानर्थक्यमर्थाभाव इत्यादिना । अथेति निष्प्रयोजनत्वमनूद्य दूषणमाह-
210-3 भवतु सोऽरोदीदिति । ननु तेषामपि 'पूषा प्रपिष्टभागः,' इत्यादि-
210-4 संसर्गेष्विव प्रयोजनं कल्प्यतामिति; नेत्याह—एकवाक्यत्वादिति । ननु 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यः' इत्युपरिधारणस्य

---

ता. सत्यम् । धर्मचोदनेति । प्रमेयविशेषप्रतिपादकप्रथमसूत्रसामर्थ्यात् प्रमाणविशेषप्रतिपादकद्वितीयसूत्रसामर्थ्याच्चेत्यर्थः ॥

पूर्वेण एकवाक्यस्य विधानवत् सप्रयोजनो विधिः कल्प्यतामिति; नेत्याह
—कल्पयितुं चाशक्यत्वादिति। वेदान्तवाक्यान्यपि तर्हि प्रयोजनशून्य- 210-5
तया क्रियार्थानीति; नेत्याह—यानि पुनरपास्ताशेषाशिवमिति। अतः 210-5
सूत्रं क्रियाप्रकरणपठितवाक्यविषयमित्याह—अतः स्वयमपुरुषार्थत्वा- 210-7
दिति। क्रियाप्रकरणपठितानामेव प्रयोजनशून्यानां स्तावकत्वेन
क्रियान्वयो दर्शितो न वेदान्तानामित्यत्र लिङ्गमाह—तथा च तद्वि- 210-10
धान्येवेति। न वेदान्तवाक्यं किंचिदप्यर्थवादाधिकरणे क्रियाशेषत्वे-
नोदाहृतमस्तीत्यर्थः।

यदपि केचिदिति प्राभाकराणां शास्त्रारम्भप्रकारं दर्शयति। 211-1
अयमाशयः—अध्ययनविधिर्हि विचारं विदधाति। स च स्वाध्यायस्य
फलपर्यन्ततामाकाङ्क्षन् वेदार्थविचारमेव विदध्यात् न धर्मविचार-
मिति। ननु सामान्यप्रतिपत्तिविशेषविप्रतिपत्तिभ्यां जिज्ञासितोऽर्थो
विचारमर्हति, न तथा वेदार्थ इति; तत्राह—किं तर्हि अधीतवेदस्येति॥ 211-3

'उद्भिदा यजेत पशुकाम' इत्यत्र पशुकाममुद्दिश्य यागो विधीयते? यागविधानं वोद्दिश्य पशुकामाधिकारः? किं वा उभयम्? इति। तथा सत्रे यजमाना एवर्त्विज इति यजमानानुद्दिश्य ऋत्विग्भावो विधीयते? किं वा ऋत्विज उद्दिश्य यजमानभावो विधीयते? इत्यादिवचनव्यक्तिसंशयाद्विचार इति। 'अथातो धर्मजिज्ञासा।' वेदार्थविचारो विषयः। स कर्तव्यो वा न वेति विचारः। नेति तावत् प्राप्तम्। आलम्बनप्रमाणाभावात्। ननु आम्नायालम्बनो विचारः स्यात्। न—अध्यापनविधिशेषतया आम्नायस्य स्वार्थविवक्षाऽभावात्। कथम्?। अध्ययनं तावत् अध्यापनविधिप्रयुक्तानुष्ठानत्वात् तच्छेषता- मश्नुते। स्वाध्यायोऽप्यध्ययननिर्वृत्तिद्वारेण अध्यापननिर्वृत्तिपरो विष- निर्हरणादिवाक्यवत् न स्वार्थविवक्षामर्हतीति केचित्॥

अन्ये तु, स्वाध्यायविधिवाक्ये तव्यप्रत्ययेन अपूर्वस्य प्रतिपाद-

नात् तदङ्गता तावत् स्वाध्यायस्याधिगता। तत्र विहिताध्ययनस्य
प्रयोजकत्वात् अध्यापनविधेः प्रथमावगतामपूर्वाङ्गतामनपाकृत्यैव अध्य-
यनेन अध्यापनं निर्वर्त्यते इति ॥

ततश्च अपूर्वाङ्गत्वादविवक्षितार्थत्वाद्विचारानारम्भः प्राप्तः ॥

तत्र आरम्भणीयो विचारः। स्वाध्यायस्य विवक्षितार्थत्वात्। ननु
अध्यापनविधिशेषः स्वाध्याय इत्युक्तम्। न—प्रयुक्तिमात्रेण अङ्ग-
त्वानुपपत्तेः। न ह्याधानमुत्तरक्रतुप्रयुक्तिमात्रात् तदङ्गं भवति। ननु
लिङ्गसंख्याप्रयाजादयः क्रतुविधिप्रयुक्तानुष्ठानाः तदङ्गतामश्नुवते।
न—प्रकरणादिविनियोगप्रमाणसामर्थ्यादङ्गभावः। तदङ्गत्वाच्च तत्प्रयुक्ता-
नुष्ठेयता। न तथेह विनियोगे प्रमाणमस्ति। न च प्रयुक्तिमात्रादङ्गतेति
विशेषः। अतः स्वातन्त्र्यात् विवक्षितार्थः स्वाध्याय इति। यत्तु अध्य-
यनापूर्वाङ्गतेति, तत्रापि अपूर्वस्य प्रयोजनाकाङ्क्षायां, दृष्टे सत्यदृष्ट-
कल्पनानुपपत्तेः स्वाध्यायसामर्थ्यजन्यं प्रयोजनवद्विज्ञानं फलत्वेन
कल्प्यते। ननु न नैयोगिकं तत्, किं तु दृष्टसामर्थ्यजन्यं फलविज्ञा-
नम्। सत्यम्। [अ]नैयोगिकफलस्यैव विज्ञानस्य अनुष्ठानाङ्गतया
अपूर्वोपकारः कल्प्यते। अथ वा, अर्थे तात्पर्यं विज्ञानस्य नैयोगिक-

---

ता. ननु अध्यापनविधिप्रयोज्यत्वेन अध्ययनस्य तच्छेषतोक्ता, तत् कथमध्ययन-
स्य स्वनियोगशेषत्वम्? इति; तत्राह—तत्र विहितेति। विहिताध्ययनं प्रत्य-
ध्यापनविधेः प्रयोजकत्वात स्वापूर्वाङ्गतामनपाकृत्यैवाध्ययनेनाध्यापनन्निर्वर्त्यत
इत्यर्थः। प्रयुक्तिमात्रेणाङ्गत्वाभावे दृष्टान्तमाह—न हीति। ननु प्रयु-
क्तिमात्रेण अङ्गत्वमपि दृश्यत इति शङ्कते—ननु लिङ्गेति। 'पशुना यजेत'
'अरुणया क्रीणाती'ति लिङ्गम्। 'सप्तदश प्राजापत्या'नित्यादिका सङ्ख्या। तत्प्र-
युक्तानुष्ठेयत्वादङ्गत्वं न भवति किन्त्वन्यत इत्याह—न प्रकरणादीति। अध्यय-
नापूर्वाङ्गत्वादविवक्षितार्थत्वं यदुक्तम्, तत्राह—यत्त्विति। [अ]नैयोगिक-
[फल]स्येति। साङ्गाध्ययनसंस्कृतस्वाध्यायजन्यार्थावबोधस्येत्यर्थः। पक्षान्तर-

फलत्वाधीनमिति कल्प्यते ; लौकिकतात्पर्यनिमित्तविवक्षाद्यभावात्। तदेवं विवक्षितार्थत्वात् शास्त्रमारम्भणीयमिति ॥

तत्र वेदार्थविचारारम्भेऽपि न वेदान्तानां गतार्थत्वमिति परिहरति—तत्रापि न निखिलवेदार्थेति। वेदार्थोपाधिविचारेऽपि धर्मग्रहण- 211-5
सामर्थ्यात् तदेकदेशो विचारित इति भावः। ननु कृत्स्नाध्ययनविधि-
प्रयुक्तो विचारः कथमेकदेशविषयः स्यात्? इति चोदयति—तत्कथ- 211-5
मिति। परिहरति—तथा सत्यथात इति। प्रतिवाक्याध्ययनविचारं 211-6
विधिव्यापारभेदात् प्रयोजनभेदवशात् एकदेशविचारेऽपि न विधिप्रयोज्यत्वविरोधः। यथा चक्षुषा रूपं पश्येदिति विधिप्रयुक्त्या रूपैकदेशनीलदर्शनेऽपि तत्प्रयुक्तिः न विरुध्यते तद्वदित्यर्थः। अन्यथा विध्य-
नुसारेण कृत्स्नवेदार्थविचारविवक्षायां धर्मग्रहणं न स्यादित्याह—यतो 211-7
धर्म इति कृत्वेति ॥

धर्मग्रहणस्य न वेदार्थैकदेशविचारपर्युदासः प्रयोजनं
किं तु वेदार्थस्य पुरुषार्थतासिद्धिः प्रयोजनमिति शङ्कते—सत्यम्, 211-7
तथापि शास्त्रकाराणामिति। परिहरति—एवं तर्हीति। धर्मशब्दस्य 212-2
हि वेदार्थे प्रयोगनिमित्तं वक्तव्यम्। न तावद्रूढिः। चैत्यवन्दनादावपि प्रयोगविप्रतिपत्तेः। अथ अन्वयव्यतिरेकसिद्धश्रेयस्साधनाभिधायी

---

माह—अथ वेति। साङ्गाध्ययननियोगफलत्वादर्थावबोधस्य अर्थे तात्पर्यं कल्प्यते। तत्रापि पुरुषार्थपर्यवसायित्वाय तत्प्रमितिपरत्वमपि कल्प्यत इत्यर्थः ॥ ता.

प्रतिवाक्याध्ययनविचारम्। प्रतिवाक्याध्ययनम्, प्रतिवाक्यविचारं चेत्यर्थः। प्रयोजन[भेद]वशादिति। अपेक्षितस्वर्गादिप्रयोजनवशात् तद्वाक्यविचारमेव प्रयोजयति न कृत्स्नवेदविचारम्, सर्वस्य मुमुक्षुत्वाभावादित्यर्थः। प्रयोगविप्रतिपत्तेरिति। अविप्रतिपन्नप्रयोगस्यैव रूढित्वादित्यर्थः। आपाततः

---

चैत्यवन्दनादावपि प्रयोगविप्रतिपत्तेरिति। न च यवादिशब्दवदार्यप्रसिद्धिबलात् वेदार्थ एव तदर्थ इति वाच्यम्; आर्याणामपि वेदार्थपर्यायत्वेनापि सम्प्रतिपन्नप्रयोगाभावात्। प्रयुञ्जते ह्यखण्डब्रह्मापि वेदार्थ इति भा.

**धर्मशब्दः तथाभूतत्वात् वेदार्थस्यापि (धर्मशब्दः) तत्र प्रवर्तत इति। एवं तर्हि स्वाध्यायपाठादेव ब्रह्मणः प्रतीयमानस्य धर्मशब्दाभिधेयत्वाभावात् श्रेयोरूपत्वात् तस्य अर्थात् पर्युदस्तत्वात् धर्म इत्येवं कृत्वा विचारो युक्तः। अन्यथा आपातप्रतिपन्नधर्मब्रह्मसंग्रहज्ञापनाय वेदार्थजिज्ञासेति वक्तव्यमिति भावः। न हि अनुष्ठेयश्रेयस्साधनवत् अननुष्ठेयश्रेयोरूपमपि ब्रह्म पदान्वयमात्रादेव विचारात् प्राक् न प्रतीयते इति शक्यं वक्तुम्॥**

212 - 3 **लक्षणसूत्रमपि धर्मविषयं न वेदार्थविषयमित्याह**—तथा चोत्तर-
मपीति। **लक्षणं हि लक्ष्यस्य अन्यप्रसङ्गविभ्रमनिरासपरम्। तत्र च
धर्म एव चैत्यवन्दनादौ प्रसक्ततया विप्रतिपन्नः, न वेदार्थः। अतो
212 - 5 लक्षणस्य कृतार्थत्वाय धर्म एव लक्ष्यते इत्याह**—धर्मस्वरूपविप्रतिपत्ति-
निरासपरमिति। **ननु वेदार्थेऽपि विप्रतिपत्तयः सन्ति—किमर्थवादलक्षणो
वेदार्थः? किं वा चोदनालक्षणः? इति, तन्निरासाय लक्षणमुच्यत
212 - 5 इति; तत्राह**—इतरथा वेदार्थविप्रतिपत्ताविति। **मन्त्रादिषु कार्यस्य
अप्रतीतेः येन यत् प्रतीयते स तस्य अर्थ इति नियमात् नैवं विप्रति-
पत्तिरिति भावः। ननु धर्मग्रहणेऽप्यर्थवादलक्षणत्वं निराकृत्य चोद-
212 - 6 नालक्षणत्वं वेदार्थस्य किं न सिध्यति? इत्यत आह**—यतो न धर्मग्रहणे
सतीति। **वेदार्थविप्रतिपत्तिनिराकरणप्रतिभासाभावात् धर्मविप्रति-
पत्तिनिरासप्रतिभासात् अप्रतिपन्नवेदार्थविप्रतिपत्तिनिरासग्रहणायोगा-
दित्यर्थः॥**

---

ता. प्रतीतिरेव ब्रह्मणो नास्तीत्यत आह—**न हीति**। ननु कार्यस्यैव वेदार्थत्वात् तद्वाचकत्वाच्च धर्मशब्दस्य धर्मग्रहणेन विप्रतिपत्तिनिराकरणं युक्तमित्यत्राह— **मन्त्रादिष्विति**। किं जहल्लक्षणया? किं वा अजहल्लक्षणया? इति विकल्प्य, आद्यं

---

भा. बहुलम्। यवादौ वाक्यशेषस्येव कस्यचिदार्थप्रसिद्धिप्राबल्यहेतोरभावाच्च इति

अथ धर्मशब्दस्य वेदार्थे प्रयोगात् तद्विप्रतिपत्तिनिरास एव विवक्ष्यतामिति चोदयति—कथमिति। तत्र न तावत् रूढिमाश्रित्य 212-8
धर्मशब्दस्य वेदार्थे प्रयोग इत्युक्तम्। नापि लक्षणया। अभिधेयात् अन्यस्य लक्ष्यत्वेन वेदार्थस्य अधर्मत्वप्रसङ्गात्। इदानीं स्वार्थप्रक्षेपेण वा तत्र प्रवृत्तिः शब्दमात्रस्य वा संज्ञासंज्ञिसम्बन्धपरतयो-
पयोग इति शिष्यते। तत्र न तावत् स्वार्थप्रक्षेपेणेत्याह—यत्तावच्चो- 213-1
दनालक्षणो योऽर्थ इति। चोदनालक्षणस्य धर्मत्वेऽभिधीयमाने धर्मस्य वा चोदनालक्षणत्वे वेदार्थस्त्वेतावानिति न निर्णीतं भवति। चोदनाधर्मशब्दयोः वेतदर्थाभिधायित्वाभावात्। यथा यच्चाक्षुषं तद्रूपमित्युक्ते न

---

ता. दूषयति—**अभिधेयादन्यस्येति**। अजहल्लक्षणापक्षं दूषयति—**तत्र न तावदिति**। शब्दमात्रस्य संज्ञासंज्ञिसम्बन्धपरतयोपयोग इति पक्षं दूषयति—**चोदनेति**॥

---

भा. भावः। **वेदार्थस्याधर्मत्वप्रसङ्गादिति**। यदि धर्मपदवाच्यातिरिक्तवेदार्थं धर्मपदं जहल्लक्षणया बोधयति इति मतम्, तर्हि सिद्धार्थस्यैवेदं लक्षणमित्यसङ्गतम्। प्रतिज्ञातधर्मविचारत्वं च [न] स्यात्। अथ तत्रापि धर्मपदे जहल्लक्षणा, तर्हि सिद्धविचारप्रतिज्ञेयमिति उत्तरविचाराणां प्रतिज्ञा(न)[ना]गोचरत्वापत्तिः, धर्मपदं वा कस्यचित् सिद्धस्य वाचकं स्यात्। तेन त्वदभिमते वेदार्थे तस्य जहल्लक्षणा स्यात्। तच्च प्रसिद्धिविरुद्धमिति भावः। * न्यमेव धर्मपदवाच्यं वेदार्थश्चेति चेत्, न तर्हि लक्षणा, अभियुक्तानां वेदार्थपर्यायत्वेन तत्प्रयोगाभावाच्च॥

तर्हि वेदार्थे धर्मपदमजहल्लक्षणया प्रवर्ततामित्याशङ्क्याह—(**तर्हि स्वार्थप्रत्यक्षेणेति**) [**तत्र न तावत् स्वार्थप्रक्षेपेणेति**।] तथा सति कार्यातिरिक्तो वेदार्थस्त्वदनभिमतः प्रसज्यत इति चोदनागम्यो वेदार्थ इति त्वदभिमता वेदार्थेयत्ता [न] सिध्येदित्यर्थः। अस्मिन् पक्षे लक्षणमप्यसङ्गतमित्याह—**चोदनाधर्मशब्दयोर्वेदतदर्थाभिधायित्वाभावादिति**। एवं हीदं वेदार्थलक्षणं स्यात् यदि चोदनाशब्दस्य वेदवाचित्वं स्यात्; अन्यथा अव्याप्तेः।

---

* अत्र ग्रन्थः त्रुटितः॥

सर्वस्य प्रत्यक्षस्य रूपमर्थ इत्युक्तं भवति तद्वदिति भावः। चोदना-
213 - 2 लक्षणेऽर्थे धर्मसंज्ञाविधिपरत्वं सूत्रस्य निराकरोति—अथ पुनरित्यादिना।
214 - 1 अङ्गीकृत्य दूषणमाह—अथापि कथञ्चिदिति। अयं भावः—चोदना-
लक्षणस्य वेदार्थत्वे अर्थशब्दस्य वैयर्थ्यं स्यात्। श्येनादीनामपि चोदना-
लक्षणत्वाद्वेदार्थत्वाच्च तद्व्यावृत्त्यनुपपत्तेः। अचोदनालक्षणत्वे अवेदार्थत्वे
च ताभ्यामेव श्येनादिनिवृत्तेरर्थशब्दस्य वैयर्थ्यं स्यात्। लक्षणवाक्ये
अनुवादमात्रानुपपत्तेश्च। प्रमाणप्रतिज्ञायामप्यर्थशब्दस्य वैयर्थ्यं स्यात्।
धर्मविचारपक्षे श्येनादेः प्रतिषेधचोदनाविषयस्यानर्थत्वेनाधर्मत्वसिद्धिः
प्रयोजनमिति। तथा चोदनाशब्दोऽपि कृत्स्नवेदलक्षणापरो वक्तव्यः।

---

ता. श्येनादिव्यावृत्त्यर्थं अर्थशब्द इति चेत्, तर्हि वक्तव्यं श्येनादीनां चोदना-
लक्षणत्वं वेदार्थत्वं चास्ति वा ? न वा? इति। यद्याद्यस्तत्राह—श्येनादीनामिति।
द्वितीयपक्षे दूषणमाह—**अचोदनेति। ताभ्यामिति।** चोदनालक्षणत्ववेदार्थ-
त्वाभ्यामित्यर्थः। ताभ्यां व्यावृत्तिसिद्धावप्यनूद्यत इत्यत आह—**लक्षणवाक्ये**
इति। इदानीं **भाट्टमते** दूषणमाह—**प्रमाणेति।** स्वपक्षे कथम्? इत्यत आह
—**धर्मेति।** दूषणान्तरमाह—**तथेति।** धर्मशब्दस्य वेदार्थमात्रपरत्वे
द्वितीयसूत्रस्य च तद्विप्रतिपत्तिनिरासपरत्वे च वेदलक्षणो वेदार्थ इति
पौनरुक्त्यं स्यादिति शेषः ॥

---

भा. न च तदस्ति। न च कार्यस्यैवेदं लक्षणम्, अस्मन्मते धर्मशब्दे चोदनार्था-
भिधायित्वाभावात् इति भावः। अथ वा, धर्मशब्देन वेदार्थलक्षणायामेतावानेव
वेदार्थ इति सूत्रं न सिध्यतीत्यर्थः। तत्र हेतुः—**चोदनेति।** तथा हि—
शक्यलक्ष्यसाधारणमनतिप्रसक्तमेकं रूपं वक्तव्यम्। तच्च न धर्मपदार्थत्वं
वर्णितरीत्या (न) सम्भवति। न च अन्यत् सूत्रे किञ्चित् प्रतीयत इत्यर्थः॥

**अधर्मत्वसिद्धिः प्रयोजनमिति।** ननु यद्यलौकिकश्रेयस्साधना-
भिधायी धर्मशब्दः, तर्हि श्येनोऽपि धर्म एव ; तदीयवैरिवधहेतुत्वस्यालौकि-
कत्वात्। वैरिवधोऽनर्थहेतुः श्रेयो न भवतीति चेत्, तथापि दुःखनिवर्तक-

कथम् ?। चोदनाव्यतिरिक्तोऽपि वेदभागोस्ति वा न वा। नास्ति चेत्, चोदनालक्षणोऽर्थः चोदनार्थ इति लक्ष्यलक्षणयोरैक्यमेव स्यात्। अस्ति चेत्, सोऽप्यर्थवान् वेदभागो निरर्थको वा? अर्थवांश्चेत्, कथं चोदना-प्रमेयोऽचोदनाभागस्यार्थः स्यात्। अर्थशून्यश्चेत् चोदनाव्यतिरिक्तो वेदभागः, कथं तर्हि चोदनार्थोऽर्थानर्थवद्भागद्वयसमुदायवेदार्थः स्यात्। तस्मात् चोदनाशब्दः कृत्स्नवेदलक्षणापर इति चोदनालक्षणो वेदार्थ इति वाक्ये शब्दद्वयदूषणमभिप्रेत्य अथापि कथंचित् इत्युक्तम्। तथा सति 214 . 1
वेदस्य प्रामाण्यात् अर्थवत्त्वनिश्चये विचारात् प्रागेव संजाते किं वेदार्थः चोदनालक्षणः? किं वा अर्थवादादिलक्षणः? इति विशये, नार्थवादादि-लक्षणः किं तु चोदनालक्षणो वेदार्थः इति निर्णयपरं सूत्रं स्यात्। तच्चानुपपन्नम्, निश्चितत्वादर्थवत्त्वस्येत्याह—तथा सति चोदनालक्षण इति॥ 214 . 2

ननु प्रथमसूत्रे स्वाध्यायस्य अर्थविवक्षायाः प्रदर्शितत्वादर्थवत्त्व-निश्चयात् तदुद्दिश्य लक्षणविधानं युक्तम्। न—अनिश्चिते प्रामाण्ये अर्थविवक्षाऽयोगात्। तत्र च अध्ययनविधिप्रयुक्ताप्रामाण्यमात्रनिरा-

---

ता. एतदेव विवेक्तुं पृच्छति—**कथमिति**। एतद्दर्शयितुं विकल्पयति—**चोदनाव्यतिरिक्त इति**। **विचारात् प्रागेव**। प्रामाण्यविचारात् प्रागेवेत्यर्थः। ननु विवक्षितार्थप्रदर्शनेन प्रामाण्यमपि प्रदर्शितमेवेत्यत आह—**तत्र चेति**।

---

भा. त्वेन श्रेयस्त्वात् अन्यथा तदर्थिप्रवृत्त्यनुपपत्तेरित्यर्थपदं ऽर्थमिति चेत्, न—यत् खलु बलवद्दुःखाननुविद्धश्रेयस्साधनं भवति स एव हि धर्म इत्युच्यते। कथं तर्हि तत्र प्रवृत्तिः ?। वैरिवधे प्रवृत्तस्य किं स न बलवद्-द्वेषागोचरः ?। अन्यथा प्रवृत्त्ययोगात्। बलवद्द्वेषागोचरश्रेयस्साधनत्वज्ञानं च प्रवृत्तिहेतुः। न च धर्मस्य स्वरूपलक्षणमिदमेवास्त्विति वाच्यम्; तस्यैव तस्मिन् समयभेदेन बलवद्द्वेषदर्शनात्। न च तदा स [न] धर्मः; वस्तु-वैरूप्यायोगात्। यत्तु—वेदार्थलक्षणपक्षेऽपि तन्न व्यर्थम्, यतः पुरुषार्थस्य इदं लक्षणम्, श्येनादिश्चापुरुषार्थस्वभाव इति। तन्न—धर्मलक्षणपक्षादविशेषात्। न हि त्वन्मते धर्मातिरिक्तस्तादृशोऽस्तीति॥

करणेन अर्थविवक्षा दर्शिता, न तु पौरुषेयत्वप्रमाणान्तरयोग्यविषयत्वादिनिमित्ताप्रामाण्यं तत्र निराकृत्य प्रामाण्यं व्यवस्थापितम्। तस्मात् अर्थवत्त्वानिश्चयात् वेदार्थश्चोदनालक्षण इति नियन्तुं न शक्यते॥

अथ प्रथमसूत्रसामर्थ्यादेव अर्थवत्त्वमङ्गीकृत्य लक्षणविधानमिति;
214-4 तत्राह—तत्रानन्तरं प्रामाण्यप्रतिपादनं न युज्येतेति। ननु तस्यैव दृढीकरणाय पुनः प्रतिपादनम्। न—अर्थवत्त्वे निश्चिते दृढीकरणप्रयोजनाभावात्। अनिश्चिते च लक्षणप्रवृत्त्यभावात्। ननु वेदप्रामाण्यस्यापि वेदार्थत्वादेव प्रतिपादनं न वेदस्य अर्थवत्त्वनिश्चयायेति। न—वेदप्रामाण्यस्यापि वेदार्थत्वे सिद्धे वस्तुनि प्रामाण्यप्रसङ्गात्। भाष्यकारश्च द्वितीयाध्यायमारभमाणो वृत्तं प्रमाणलक्षणमिति प्रथमाध्यायेन वेदस्य प्रामाण्यमेव साधितं दर्शयति। तन्न युज्यते वेदस्य अर्थवत्त्वनिश्चयपूर्वे विचारे।
214-4 अतो धर्मे प्रमाणप्रतिज्ञैव लक्षणं वा द्वितीयसूत्रेण क्रियत इत्याह—वृत्तं प्रमाणलक्षणमिति चेति। किं च—अस्मिन्नेव सूत्रे मन्त्रार्थवादयोर्धर्मे
214-5 प्रामाण्यनिराकरणात् अर्थवादाधिकरणमनपेक्षितं स्यादित्याह—मन्त्रार्थवादेषु चेति। स्तावकत्वेन अन्वयप्रकारप्रतिपादनार्थमधिकरणमिति चेत्, न—अत्रैव धर्मे प्रामाण्यनिराकरणाद्धर्मस्य प्रतिपादकतया तत्र पूर्वपक्षानुदयात्॥

215-1 उपसंहरति—अतः पूर्वोक्तेन न्यायेन कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तो विचारितश्च न वस्तुनिष्ठ इत्यतो वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यते 'अथातो ब्रह्मजिज्ञासा' इति, इति॥

॥ इति पञ्चपादिकाविवरणे द्वितीयवर्णकं समाप्तम्॥

---

ता. उपसंहरति—तस्मादिति। सर्वप्रकाराप्रामाण्यनिराकरणादित्यर्थः। स्वाध्यायाध्ययनविधिवाक्यमध्ययनस्य प्रयोजनपर्यन्तत्वाय वेदस्य फलवदर्थावबोधनसामर्थ्यं प्रतिपादयति, तेन वेदप्रमाण्यमपि वेदार्थ इति शङ्कते—ननु वेदप्रामाण्यस्येति। त[अ]स्मिन्नेव सूत्रे—द्वितीयसूत्रे॥

इति पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपिकायां
द्वितीयवर्णकं समाप्तम्॥

भा. तदयमत्र सङ्क्षेपः—न ब्रह्मविचारप्रतिज्ञासूत्रं धर्मविचारसूत्रेण गतार्थम्, तत्रत्यधर्मशब्दस्य मुख्यार्थत्वे श्रेयोरूपब्रह्मविचारविषयत्वासम्भवात्। लक्षणाबीजानुपपत्त्यभावाच्च न लक्षणा। न च कृत्स्नाध्ययनविधिप्रयुक्तत्वानुपपत्तिः लक्षणाबीजम्। अध्ययनं तु विचारे हेतुः, न तु तत्प्रतिज्ञायाम्, ब्रह्मविचारश्च [उपरि]नास्तीति[न]लक्षणा। न च अन्यप्रतिज्ञा अन्यप्रतिपादनेऽङ्गम्। अध्ययनं तु यद्यपि कर्मभागस्यैव तद्विचारहेतुः, तथापि न तावन्मात्रं कृत्वोपरन्तुं शक्यते। शब्दैकदेशाध्ययनस्य अशास्त्रार्थत्वात्। वेदान्तानां विवक्षितार्थत्वसाधनं तु तेन विना कर्मभागस्यपि न तत् साधयितुं शक्यत इति, वेदान्तभागस्य स्वार्थे तात्पर्याभावे अर्थाववोधाव्याप्ततया अध्ययनप्रयोजकत्वाभावेन कर्मभागस्यापि तदसिद्धेः। एवमुपरितनप्रामाण्यविचारोऽपीत्यन्यथासिद्धं तदिति न तत्र जहल्लक्षणा। नापि द्वितीयसूत्रबलेन सर्वस्य वेदस्य कार्यपरत्वात् वेदान्तानां गतार्थत्वम्, तत्रापि धर्ममात्रस्यैव लक्षणकथनात्। न च वेदान्तार्थोऽपि कार्यात्मैवेति धर्मलक्षणत्वेऽपि गतार्थतेति वाच्यम्, अभियुक्तवचनबलाद्वेदान्तानां कार्यपरत्वाशङ्कायाः प्रत्युक्तत्त्वात्। व्युत्पत्त्यादिबलात् कार्यपरत्वं तु समन्वयसूत्रे सति नाशङ्कनीयम्। धर्मपदलक्षणा च अनुपपन्नेत्युक्तमिति ॥

इति पञ्चपादिकाविवरणव्याख्यायां भावप्रकाशिकायां
द्वितीयं वर्णकं समाप्तम् ॥

---

## ॥ अथ तृतीयवर्णकम् ॥

तत्र लोकेऽथशब्दस्य चत्वारोऽर्था वृद्धव्यवहारे प्रयोग-
सामर्थ्यात् प्रसिद्धाः। आनन्तर्यं, अधिकारः, मङ्गलाचरणम्, प्रकृता-
दर्थादर्थान्तरत्वं च। तत्र इतरपर्युदासेन अनन्तर्यमथशब्देनोपादीयते
इत्यस्मिन्नर्थे 'सति चानन्तर्यार्थत्वे' इत्यतः प्राक्तनभाष्यस्य तात्पर्य-
216 - 1 माह—तत्राथशब्द आनन्तर्यार्थ इत्यादिना। कथम्?। जिज्ञासाशब्दस्य अव-
यवार्थेन अर्थवत्त्वे सति इच्छायाः कर्तव्यतया प्रारम्भानुपपत्तेः प्रत्यधि-
करणं च अप्रतिपाद्यत्वात् न अधिकारार्थोऽथशब्दः। ब्रह्मज्ञानेच्छाया
मङ्गलाचरणार्थत्वस्य प्रसिद्धतरत्वात् अप्रसिद्धत्वेऽपि प्रशंसापरतया
अर्थवादत्वप्रसङ्गात् सूत्रस्य न मङ्गलाचरणार्थता। इच्छायाश्च कुतश्चित्
प्रकृतात् अर्थात् अर्थान्तरभावस्य प्रसिद्धतरत्वात् नाभिधानेन कृत्यमिति
अथशब्दस्य न तदर्थतेति ॥

ननु इच्छायाः कुतश्चिदानन्तर्यमपि प्रसिद्धम्। सत्यम्। हेतुफलभावेन आनन्तर्यस्य विवक्षितत्वात् आनन्तर्याभिधानमुखेन पूर्वप्रकृतपुष्कलकारणमथशब्देन अवद्योत्यते। ननु ब्रह्मज्ञाने प्रवृत्ति-

---

ता. नन्वप्रसिद्धार्थत्वाभावादथशब्दस्य व्याख्यानमयुक्तमिति शङ्कां निरसितुं तस्यानेकार्थतया संशयापादकत्वमाह—तत्र लोके इति। इतरचतुर्ष्वप्यर्थेषु रूढ एव अथशब्द इत्याह—वृद्धव्यवहारे इति। अन्यव-परिशेषे युक्तिं पृच्छति—कथमिति। यतः कुतश्चिदानन्तर्यं तु गौणं अव्यवस्थितत्वात् पुष्कलकारणानन्तर्यं तु मुख्यं व्यवस्थितत्वादित्यभिप्रेत्य परिहरति—सत्यमिति। तथाप्यानन्तर्याभिधानस्य किं प्रयोजनम्? इत्यत आह-पूर्वप्रकृतेति। अनुमीयमानमपि पुष्कलकारणं शास्त्रीयतया यदि न ज्ञायते तदा फलपर्यन्तप्रवृत्तिजनकं न स्यात्। किमहं शास्त्रेण पर्युदस्तः न वा इति सन्देहानपायात्।

---

भा. व्यवहिताव्यवहितविषयलाभेऽपि अधिकार्यलाभात् शास्त्रमनारम्भणीयमित्याशङ्क्य अधिकारिणं निरूपयितुमथशब्दः सूत्रे प्रयुक्तः। तद्व्याख्यानभाष्यस्याभिप्रायमाह—अथशब्दस्येति ॥

पर्यन्तेच्छोदयसामर्थ्यादेव पुष्कलकारणमनुमीयते, किमथशब्देन? । सत्यम् । इच्छोदयप्रभृति इष्यमाणज्ञानोदयपर्यन्तस्य कार्यस्य पुष्कलकारणतया पूर्ववृत्तस्य शास्त्रीयस्य अधिकारिविशेषणस्य प्रतिपत्तिपरत्वात् अथशब्दस्य न दोषः । तत्प्रतिपत्तिश्च इष्यमाणज्ञाने प्रवृत्तिपर्यन्तेच्छोदयद्वारेण प्रवृत्त्यङ्गभावं भजते इति तेन आनन्तर्याभिधानमुखेन प्रवृत्तिनिमित्तविशिष्टेच्छोदयप्रभृतेः ज्ञानोदयपर्यन्तस्य कार्यस्य पुष्कलकारणतया पूर्वनिर्वृत्तसाधनचतुष्टयावद्योतनाय आनन्तर्यार्थोऽथशब्द इति सूक्तम् ॥

---

अतस्तत्प्रतिपत्त्यर्थं पूर्वप्रवृत्तं पुष्कलकारणमथशब्देन अवद्योतनीयमेवेति परिहरति —सत्यमिच्छोदयेति । किं तत्प्रतिपत्त्या ? इत्यत आह—तत्प्रतिपत्तिश्चेति । फलितमाह—तेनेति ॥ ता.

---

ननु गौणी[न] वृत्त्यन्तरम्, शक्य एव वृत्तिर्वृत्तिशब्दार्थः । तथा हि-अर्थव्यवहारार्थं शब्दो मृग्यते । न च शक्त्या विना शब्दार्थव्यवहारो(न चेति।) [भवति] अतिप्रसङ्गात् । न चै(क)[वं]वाक्येनैव व्यवहार इति तस्यैव (प्र)वृत्तिर-(न)र्थे इति वाच्यम् । आवापोद्वापप्रसिद्धां पद एवार्थशक्तिमादायैव हि वाक्येन व्यवहार इति न वाक्यस्य वृत्तिः । अतः अग्निर्माणवक इति प्रयोगेऽपि पिङ्गलत्वमग्निपदात् प्रतीयमानं तच्छक्यम् । [ननु] अग्निपदात् ज्वलनः प्रतीयते, ततस्तद्गुण इति प्रतीतेरन्यथासिद्धत्वात् न तत्र शक्तिकल्पना, अन्यथा अनेकशक्तिकल्पनापि स्यादिति चेत् ; स्यादेवं यदि तत्र अग्निपदात् ज्वलनः प्रतीयते। न हि 'ज्वलनो माणवकः' इति प्रतीतिरस्ति ; ज्वलनस्य वाक्यार्थानन्वयेन पदादुपस्थितिकल्पनाऽयोगाच्च। तथा च अप्रतीयमानज्वलनात् न तद्गुणप्रतीतिः किं तु तच्छब्दादेव 'पिङ्गलो माणवकः' इति धीर्वाच्या इत्यनन्यलभ्यो गुणः । अतोऽक्षादिपदवदनेकशक्तिरविरुद्धैव। ननु एवं लक्षणाऽपि न स्यादिति चेत्, न स्यादेवेति ॥ भा

उच्यते—गृहीतसम्बन्धादग्निपदात् तावत् ज्वलने धीर्भवत्येव । न च पिङ्गलताधीदशायां [न] ज्वलनधीर्भवति। न हि अक्षशब्दादेकज्ञानदशायां तदन्यज्ञानं (न) भवतीति वाच्यम् ; अक्षशब्दस्येव अनेकेषु पैङ्गल्येऽपि ज्वलन-

भा. शब्दस्य श(क्ति)[क्तेर]निर्णयेन आहत्य तद्बोधस्य वक्तुमशक्यत्वात्। प्रतीतेः अग्निपदावगतज्वलनात् अन्यथासिद्धेः। अतो नानेकशक्तिः कल्पनीया। न च तत्र ज्वलनस्य वाक्यार्थप्रतीत्यनन्वितत्वात् तादृशस्य पदादुपस्थित्यसम्भवात नाग्निपदात्तत्प्रतीतिरिति वाच्यम्। 'अग्निर्माणवकः' इति प्रयोगात् अग्निसदृशो माणवक इति धीर्भवति; न तु पिङ्गलो माणवक इति; तदुपस्थापकाभावात्; अस्वशब्दोपात्तत्वात्; प्रयोगान्तरे ततः शुचित्वाद्यप्रतीतिप्रसङ्गात् अनेकशक्तिकल्पनाऽयोगात्; अनन्यलभ्यत्वाभावाच्च। ज्वलनमात्रे व्युत्पन्नस्य अग्निर्माणवक इति वाक्यार्थप्रतीतिदर्शनाच्च। अतोऽग्निसदृश इत्येव ततो धीर्वक्तव्या। अत एव ना(मिका)[मा]तिदेशसिद्धिः। एतेन—अग्निशब्दात् पिङ्गलत्वादिधीः ततोऽर्थात् सादृश्यधीरिति निरस्तम्। ततश्च प्रतीयमानसादृश्यप्रतियोगित्वेन अग्नेरपि वाक्यार्थप्रतीत्यन्वितत्वमिति न तस्य पदादुपस्थित्यनुपपत्तिः॥

न च एतस्मादग्निशब्दात् युगपत् ज्वलनतत्सादृश्यप्रतिपत्तौ युगपत् वृत्तिद्वयप्रसङ्ग इति वाच्यम्; यस्मिन्नर्थे शब्दस्य तात्पर्यं तत्रैव हि वृत्तिः, तच्च सादृश्ये इति स एव शब्दार्थः। अग्निस्तु तत्प्रतियोगित्वेनोपस्थाप्यत इति नात्र तात्पर्यम्। न वा स शब्दार्थः। न च अग्निसादृश्यस्य अग्निगुणत्वाभावेन तद्विशिष्टप्रतीतिः कथमग्निगुणाधीना? इति वाच्यम्; सादृश्यस्य अग्निगुणनिरूप्यतया अग्निगुणत्वात्। ननु एवं सति अग्न्यादिशब्दस्य माणवकवाचित्वेऽपि शक्तिकल्पनालाघवमस्तीति चेत्; सत्यम्, तथा सति अग्निर्माणवक इति प्रयोगात् माणवकसदृशोऽग्निरिति धीप्रसङ्गः(?)। तस्मात् शक्तितोऽन्यैव गौणी वृत्तिः। एवं लक्षणाऽपि॥

अत एव एतयोरभिधेयप्रतीत्यधीनतया विलम्बितत्वेन जघन्यत्वम्। कस्तर्हि तयोर्भेदः?। उच्यते—लक्षणा हि विसदृशेऽपि सम्बन्धिमात्रे वृत्तिः गौणी तु दूरस्थेऽपि सदृश एव इति सम्बन्धसादृश्याधीनप्रवृत्तितया भिन्ने। केचित्तु सादृश्यमपि सम्बन्ध इति गौणीमपि लक्षणामाहुः, तन्न—लाक्षणिकप्रयोगेऽन्यत्र सादृश्यनिमित्तवि(शेष)[शिष्ट]प्रतीतिविरहेण तस्यासम्बन्धत्वात्। न हि अग्निमाणवकयोः सादृश्यविषया विशिष्टप्रतीतिरस्ति। अग्निसदृशो

ननु जिज्ञासाशब्दस्य विचारे रूढस्य कथमवयवार्थेन अर्थवत्त्वमादीयते ? 'रूढिर्हि योगमपहरति'इति न्यायादित्याक्षिपति—अयं तु 216 - 5
जिज्ञासाशब्दो विचारवचनः इत्यारभ्य' उच्यते इत्यतः प्राक्तनेन। ग्रन्थः 218 - 5
स्पष्टार्थः ॥

उच्यते—नायं जिज्ञासाशब्दः इत्यादिः परिहारः। अयमाशयः— 218 - 5
चत्वारः शब्दप्रवृत्तिप्रकाराः। तत्र रूढिः यथा—वृद्धव्यवहारे अभिधानाभिधेयव्यतिरिक्तमनपेक्ष्यैव प्रयोगसामर्थ्यात् अखण्डाभिधानसम्बन्धः। योगः समासादिना ऐकपद्यमापन्नस्य शब्दस्य स्वावयवगतानेकाभिधानशक्तिद्वारेण विशिष्टार्थाभिधानम्। एतच्च उभयं मुख्यवृत्तिरित्यु-

---

अखण्डाभिधानस्य अभिधेयेन सम्बन्धो रूढिरित्युक्ते, पारिभाषिक- ता.
शब्देषु संकेतनिमित्तेष्वतिव्याप्तिः स्यात् तद्व्यावृत्त्यर्थमाह—अभिधानेति। तत्प्रतिपत्तिहेतुमाह—वृद्धव्यवहारे प्रयोगसामर्थ्यादिति। अखण्डेति च विशेषणं योगवृत्तिव्यवच्छेदार्थम्। विशिष्टार्थाभिधानमित्युक्ते सेनावनादिशब्देषु प्रसङ्गः, तद्व्यावृत्त्यर्थमाह—स्वावयवगतेति। तथापि वाक्ये प्रसङ्गः स्यादिति; तद्व्यावृत्त्यर्थमाह—ऐकपद्यमापन्नस्येति। ऐकपद्ये हेतुमाह—समासादिनेति। उभयोः संकलनोपाधिमाह—एतच्चेति। अभिधेयादर्थाद-

---

माणवक इति ज्ञाने तु सादृश्यमेव माणवकविशेषणम्, नाग्निः। शुक्तिरज- भा.
तादावपि सादृश्यं कारणमात्रम्, न तु सम्बन्धः॥

यत्तु विषस्येव शत्रुगृहभोजनेन अग्नेः सादृश्यद्वारा माणवकेन परम्परासम्बन्ध इति; तन्न—तदा हि शत्रुगृहभोजनमिव माणवकमात्रं लक्षणीयं स्यात्; पदद्वयमनर्थकं स्यात्; अग्निसदृशो माणवक इति प्रतीतिनियमोऽपि न स्यात्; लाक्षणिकपदानां सम्बन्धविशिष्टप्रतीतिजनकत्वानियमात्। अत एव गौणी लक्षितलक्षणेति निरस्तम्। अनयोश्च गौणी प्रबला। लक्षणायां हि मानान्तराधीना लक्ष्योपस्थितिरिति सा विलम्बिता। गौणी तु पदद्वयस्य समभिव्याहारमात्रादेव सादृश्य(विषयं)[धियं] जनयतीति शीघ्रप्रतीतेः प्रबला भवति॥

**च्यते। गौणस्तु स्वाभिधेयात् अर्थात् अर्थान्तरे गुणयोगात्** लक्षणया **वृत्तिरिति। तत्रैकस्यैव शब्दस्य अर्थान्तरे रूढस्य अर्थान्तरे च योगवृत्तिसम्भवे 'रूढिर्योगमपहरति' इति न्यायेन योगं परित्यज्य रूढिरुपादीयते। रूढियोगमुख्यवृत्तिसम्भवे गौणः परित्यज्यते। तत्रैकस्मिन्नर्थे**

---

ता. **र्थान्तरे वृत्तिरित्युक्ते** यतः कुतश्चिदभिधेयादर्थान्तरे वृत्तिः सर्वस्यापि विद्यत इत्यत आह—**स्वाभिधेयादिति। स्वाभिधेयादर्थान्तरे वृत्तिरित्युक्ते,** सोमशब्दस्य स्वाभिधेयात् चन्द्रात् अर्थान्तरे उमासहिते महेश्वरे वृत्तिरस्तीति तद्व्यावृत्त्यर्थमाह—**लक्षणयेति।** वाच्यार्थाविनाभूते वृत्तिर्लक्षणा वाच्यगतगुणयुक्तेऽर्थे वृत्तिर्गौणीति यद्यपि विभागोऽस्ति, तथापि मुख्यादर्थादर्थान्तरे वृत्तिसाम्यादुभयोः गौणत्वेनैकत्वमुक्तमिति द्रष्टव्यम् ॥

अस्तु, प्रस्तुते किमायातम्? इत्यत आह—**तत्रैकस्येति। रूढियोगमुख्यवृत्तिसम्भवे इति।** रूढियोगाख्यमुख्यवृत्तिसम्भवे इति यावत्। तथापि जिज्ञासापदस्य कथं रूढिवृत्तिपरित्यागः? इत्यत्राह— **तत्रैकस्मिन्निति।** ननु उक्तवृत्ति-

---

भा. ननु गौण्यामपि अग्निपदा[न]भिधेयत्वात् सादृश्यस्मृतिस्त्वाहत्य[न]शब्दादित्युक्तम्। सा च मानान्तराधीना। न च माणवकस्य अग्निसादृश्यं मानान्तरान्न सिद्धमिति वाच्यम्; वाक्यार्थे तस्मिन् तदनपेक्षायामपि पदार्थसदृशमात्रस्य अपेक्षणीयत्वादिति चेत्, सत्यम्—गौणेन हि स्वाभिधेयद्वारा सदृशसामान्यमुपस्थापनीयम्। तच्च अवश्यं किञ्चित् कस्यचित् सदृशमित्युत्सर्गनया(दित्यु)दुपस्थितम्। लाक्षणिकेन तु सम्बन्धिविशेष एवोपस्थापनीयः तत्र च प्रमाणापेक्षेति विलम्बः। अथ वा, गौणे समभिव्याहारमात्रायत्तं विशिष्टतात्पर्यं लक्षणायां तु मानान्तराधीनमिति गौणो बलवान्। केचित्तु 'लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' इति विपरीतो गुणप्रधानभाव इत्याहुः ॥

एतत् सर्वमभिप्रेत्याह—**गौणस्त्विति। स्वाभिधेयादर्थान्तरे** लक्ष(णाया:)[णया] स्वाभिधेयोपस्थितगुणेन सह स्वाभिधेयोपस्थितसादृश्यविशिष्ट इति यावत्। **वृत्तिः।** गौणीत्यर्थः। एतच्च स्वाभिधेयादर्थान्तरे तत्सम्बन्धिनि वृत्तिर्लक्षणेत्यस्योपलक्षणम्। **गौणः परित्यज्यते इति।** एतच्च योगपूर्वक-

[क्लृप्तसामर्थ्येन] शब्दस्य योगवृत्तिसम्भवे तत्रैव तस्यैव शब्दस्य शक्त्यन्तरकल्पनानिमित्तकार्यान्तराभावात्। ननु पङ्कजशब्दादिषु योगरूढिरिति वृत्त्यन्तरं [शक्तिद्वयं] वा कल्प्यते इति। न—तत्रापि योगवृत्त्यैव अर्थप्रतिपत्तेः। ननु उत्पलादिवस्त्वन्तरं विहाय पङ्कजशब्दात् झटिति तामरसे प्रतिपत्तिदर्शनात् वृत्त्यन्तरं शक्तिद्वयं वा कल्पनीयम्। न—प्रयोगबाहुल्यादपि सामर्थ्याविशेषे प्रथमप्रतिपत्तिदर्शनात्। यथा नवसु अर्थेषु शक्त्यविशेषेऽपि गोशब्दात् सास्नादिमदाकृतौ प्रयोगबाहुल्यादेव प्रथमप्रतिपत्तिः। तस्मात् क्लृप्तसामर्थ्यादेव प्रयोगप्रतिपत्तिसम्भवे न शक्त्यन्तरकल्पना इत्याह—नायं जिज्ञासाशब्द इति। कथं इत्यतः प्राक्तनो 218-5-9
ग्रन्थः स्पष्टार्थः॥

ननु अवयवार्थसंसर्ग एव योगवृत्त्यापि शब्देन प्रतिपाद्यते, विचारस्तु न जिज्ञासाशब्दावयवार्थः, कथं तदवगमस्य क्लृप्तसामर्थ्येनैव अन्यथासिद्धिरिति चोदयति—कथमन्यथासिद्धत्वमिति। स्वयमवय- 218-9
वार्थत्वाभावेऽपि अवयवार्थसंसर्गाविनाभावादपि तल्लक्षणया प्रयोगप्रत्य-

---

ता. द्वयात् वृत्त्यन्तरमपि दृश्यत इति शङ्कते—**नन्विति। शक्तिद्वयं वेति।** अक्षादिशब्दवत् अनेकत्र शक्तिसद्भावो वेत्यर्थः॥

---

भा. गौणादिविषयं रूढिपूर्वकगौणादेर्योगात् प्रबलत्वादिति। **प्रयोगबाहुल्यादिति।** निरुपपदपङ्कजपदस्य पद्म एव प्रयोगदर्शनादित्यर्थः। न च पद्मत्वोपस्थित्यर्थं तस्मिन् शक्तिरपि कल्पनीयेति वाच्यम्; तस्य निरुपपदपङ्कजपदाभिहितपङ्कजत्वा(दि)[वि]नाभावादपि प्रतीतिसम्भवेन पद्मपदस्य (परपक्षे बुद्ध्याश्रयत्वे) इव तस्मिन् शक्तिकल्पनाऽयोगात्। [पङ्कज]पदात्तु तत्प्रतीतिरसिद्धैव॥

ननु त्वया निरुपपदप्रयोगस्य उत्पलादिप्रतीतिप्रतिबन्धकत्वं कल्प्यमिति पद्मत्वे शक्तिरेव कल्प्यतामिति चेत्, न—पद्मत्वे श(क्तौ त्वप)[क्तिप]क्षेऽपि पङ्कजपदादवयवशक्त्यैव उत्पलादि[प्रतीति]प्रतिबन्धकत्वस्य कल्प्यत्वात्। अन्यथा ततस्तदप्रतीत्यनुपपत्तेः। ततः शक्तिं कल्पयित्वा तस्याः प्रतिबन्धकत्वकल्पनात् सिद्धनिरुपपदप्रयोगस्यैव तत्कल्पनं वरमिति भावः॥

योपपत्तौ न शक्त्यन्तरकल्पना अनन्यथासिद्धकार्याभावात् इति परिहरति
218 - 9 —अन्तर्णीतविचारार्थत्वादिति । ननु ज्ञानमात्रमिष्यमाणं कथं विचारेण
219 - 1 अविनाभूतम् ? इति; तदाह—तथा हीति । किं तत्र प्रमाणम् ? इति; तदाह
219 - 3 —एवं प्रयोगप्रत्यययोरिति । ज्ञानं खलु इष्यमाणं विषयेण सह अवगतमिष्य-
ते । अनवगतविषयेच्छाऽयोगात् । ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं
संदिग्धे निश्चयफलं वा परोक्षेऽपरोक्षफलं वेष्यते । तच्च उभयं प्रमाणादि-
विचारप्रयत्नसाध्यमिति प्रतिपन्ने वस्तुनि विशिष्टज्ञानमिष्यमाणं प्रमाणा-
दिविचारमविनाभावेन गमयतीति विचारसाध्यज्ञाने प्रयोगप्रत्यया-
वित्यर्थः ॥

ननु नेच्छामात्रं सूत्रेण प्रतिपाद्यते ; प्रयोजनाभावात् । किं तु इष्यमाणज्ञानप्रदर्शनमुखेन तत्साधनं विचारमन्तर्णीतमुपलक्ष्य स एव तात्पर्येण प्रतिपाद्यते । अतो विचारज्ञानब्रह्मणामन्यतमस्य तात्पर्येण
219 - 5 प्रतिपाद्यस्य आरम्भाय अथशब्द इति चोदयति—नन्वेवमपि कुत एतदिति ।
219 - 5 तदेव प्रपञ्चयति—अन्तर्णीतं विचारमाश्रित्येति । अर्थलक्षणेन प्राधान्येन
अन्तर्णीतं विचारमाश्रित्येति सम्बन्धः । अतः त्रयाणामन्यतमस्य अधि-
क्रियमाणत्वमङ्गीकृत्येति योजना । तत्र अथशब्देन आनन्तर्याभिधानमु-
खेन शास्त्रीयसाधनचतुष्टयसम्पन्नाधिकारिविशेषस्य न्यायतः समर्पणा-
भावे विचारारम्भार्थत्वे च कर्तव्यतया विधीयमानो विचारो निरधिका-
220 - 3 रोऽननुष्ठेयः स्यादिति परिहरति—उच्यते—शास्त्रस्यानारम्भप्रसङ्गादिति । ननु
विचारविधिरेव विश्वजिन्न्यायेन अधिकारिविशेषं कल्पयित्वा प्रवृत्तिपर्य-
न्तो भविष्यति, किमथशब्देनेति । ननु कर्तव्यतया अवगतो विचारो-
ऽपि आरम्भमर्थात् गमयति, किं विचारप्रारम्भार्थेन अथशब्देन । ननु
विधिसामर्थ्यात् उभयप्राप्तौ कस्तत्र निर्णयः । विध्यपेक्षितोपाधित्वादान-

---

ता. इदानीं विचारस्यान्तर्नीततामेव दर्शयति—ज्ञानं खल्विति । ननु

---

भा. कर्तव्यतया विधीयमान इति । सूत्रेणेति शेषः ॥

न्तर्याभिधानमुखेन अधिकारिसमर्पणमेव युक्तमित्याह—अधिकारार्थत्वे 220 - 4
ह्यप्रयोजनमिति। प्रवृत्तिद्वारेण प्रयोजनपर्यन्तताशून्यमित्यर्थः॥

ननु मोक्षकामः कल्प्यते। न—प्रसज्यप्रतिषेधप्रसङ्गात्। तथा हि—कर्तव्य इत्युक्ते अविशेषात् सर्वाधिकारप्रतिपत्तौ तदनुपपत्त्या विशिष्टाधिकारः कल्पनीयः। ततो वरं शब्देनैव विशिष्टाधिकारिसमर्पणमिति भावः। ननु रात्रिसत्रन्यायेन अर्थवादगतमेव मोक्षं ब्रह्मज्ञानं वा प्रयोजनं साध्यत्वेन परिणमय्य मोक्षकामो ब्रह्मज्ञानकामो वा विचारयेदिति विधिप्रतिपत्तिसमये अधिका विशिष्टविधिप्रतिपत्तेः न प्रसज्यप्रतिषेध इति चोदयति—ननु ब्रह्म प्रयोजनमिति। तत्रेदं वक्तव्यम्—किं सर्वेषां फल- 220 - 6
कामितया सर्वाधिकारं शास्त्रमुच्यते? किं वा विशिष्टाधिकारम्? इति। विशिष्टाधिकारत्वे विधिप्रतिपत्त्यधीनत्वात् अर्थवादसामर्थ्यलभ्याधिकारिकल्पनायाः प्रसज्यप्रतिषेधव्यापारगौरवं तदवस्थमेव। अतः अथशब्देन

---

स्वत एव प्रयोजनवत्त्वात् विधेः प्रयोजनशून्यत्वमयुक्तमित्यत आह—प्रवृत्तिद्वारेणेति। विशिष्टाधिकारिणोऽसमर्पणे प्रवृत्तिद्वारेण प्रयोजनं सम्भाव्यमानमपि न सिध्यतीत्यर्थः। प्रसज्यप्रतिषेधमेव दर्शयति—तथा हीति॥ ता.

---

अविशेषात् सर्वाधिकारप्रतिपत्ताविति। विश्वजि(त्सामान्यात्) [न्न्यायात्] सर्वेषां कामनायोग्यस्वर्गकामाधिकारप्रतिपत्तावित्यर्थः। तदनुपपत्त्येति। ब्रह्मज्ञानस्य निखिलभोगविरोधित्वेन तत्साधनविचारे स्वर्गकामाधिकारानुपपत्तेरित्यर्थः। शब्देन। अथशब्देनेत्यर्थः। ननु अस्य सूत्रस्य श्रोतव्य इति वि(धीयमान)[धिमूल]त्वादर्थवादप्रतिपन्न एव अधिकारी सिध्यति इति शङ्कते—ननु रात्रीति। सत्यम्—स एव अथशब्देन सम(र्थ्य)[र्प्य]ते चेत् विधिप्रतिपत्तिसमयकल्प्यमानमुमु(क्षा)[क्षु]तिरिक्ताधिकारिविशेषाप्रतिपत्तेः [न प्रसज्यप्रतिषेधः।] पश्चात् तदधिगमे च स एव दोषः। रात्रिसत्रे तु वाक्यैकदेशस्य अर्थवादभागं विना अबोधकत्वेन साधिकारविधिरेव ततः प्रतीयत इत्यभिप्रेत्य परिहरति—विशिष्टाधिकारत्वे इति॥ भा.

श्रोतव्यादिविधिप्रकरणपठितसाधनचतुष्टयसम्पन्नाधिकारिप्रतिपत्तिपूर्वके विचारविध्यवगमे नासौ दोष इति अथशब्देन श्रौतविशेषाधिकारिसमर्पणमेव युक्तमिति। अथ सर्वाधिकारं शास्त्रमिति न प्रसज्यप्रतिषेधः, नापि विशेषाधिकारिसमर्पणे शब्दापेक्षेति। तत्र वक्तव्यम्—किं फलतः सर्वाधिकारं शास्त्रम्? किं वा विधितः?। न तावत् फलतः; सर्वेषां फला-
220 - 6 222 - 1 र्थिताऽभावात् इत्याह—न—ब्रह्मज्ञाने अर्थित्वानुपपत्तेरिति। मा भूत् ब्रह्मज्ञानार्थिता इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः॥

222 - 1 ननु अध्ययनविधेः त्रैवर्णिकाधिकारत्वात् तत्प्रयुक्तत्वाच्च विचारस्य विधित एव सर्वाधिकारं शास्त्रमिति चोदयति—मा भूत् ब्रह्मज्ञानार्थितेति। ननु विधिर्नाम स्वविषयस्य तदुपकारकस्य वा अनुष्ठाननिमित्तं भवति। न च विचारोऽध्ययनविधेर्विषयः तदुपकारको वा; तत् कथ-
222 - 2 मध्ययनविधिविधेयो विचारः? इति; तत्राह—स्वाध्यायाध्ययनस्य अर्थावबोधफलकत्वादिति। अयमाशयः—दृष्टफलस्य अध्ययनविधेः यावदर्थावबोधफलं व्यापारात् विचारमपि फलनिष्पत्तये अध्ययनविधिरनुष्ठापयतीति।

ननु विषयतदुपकारिव्यतिरिक्तस्य व्यापारस्य फलनिष्पत्त्यपेक्षया विधिप्रयुक्तानुष्ठेयत्वं क्व दृश्यते?। अवघातादिष्विति चेत्। न। विधेयावघातस्यैव फलपर्यन्तमावर्त्यमानत्वात्। विचारस्तु स्वतन्त्रमेव भावार्थान्तरं कथं विधीयते इति वक्तव्यम्। नैष दोषः—आवृत्तिगुणस्य अविहितस्य विहितानुपकारकस्य च विधेः फलपर्यन्ततानुपपत्त्या विधेयत्वकल्पनवत् विचारस्यापि तदुपपत्तिरिति। तत्र किं विचारसाध्य-

---

भा. केचित्तु श्रुतिविषय एवायं विचार इत्याहुः। [तन्न] श्रुतिवाक्यस्य सौत्राथशब्देन अन्विताभिधानासम्भवेन विधिप्रतिपत्तिसमये विशिष्टाधिकारिप्रतीत्यसम्भवात्। भिन्नवाक्यगतानां वैराग्यादीनां प्रतिष्ठाद्यसमानन्यायत्वाच्च। अत एव वैराग्यादिकं न साक्षादधिकारिविशेषणमिति ग्रन्थकाराभिप्राय इति॥

ज्ञानमर्थनिश्चयफलं अध्ययनस्य अन्वयव्यतिरेकसिद्धं दृष्टफलम्? किं वा तदुद्देशेन विधानात् अधिकारिविशेषणतया शास्त्रीयं फलम्? किं वा विधेः प्रयोजनपर्यन्ततासामर्थ्यलभ्यं फलम्? इति। न तावत् दृष्टं फलम्; अध्ययनमात्रात् आवृत्तिगुणकादप्यर्थनिश्चयानुदयात्। आपातदर्शनस्य च विचारानपेक्षत्वात्। अतो नार्थनिश्चयदृष्टफला अध्ययनक्रिया स्यादिति ॥

ननु तव्यप्रत्ययेन स्वव्यापारः शब्दभावना विधिरूपतया अभिधीयते। सा च शब्दभावना अध्ययनकरणिकामर्थभावनां निष्पादयन्ती फलवदर्थावबोधं पुरुषार्थं अर्थभावनाभाव्यत्वेन कल्पयति। अपुरुषार्थे पुरुषप्रवृत्त्ययोगात्। ततश्च भाव्यान्तरलाभात् समानपदोपात्तमध्ययनं भावनायाः करणतामापन्नं भाव्यस्य अर्थावबोधस्य निर्वर्तकतया करणं भवति। कुठारादीनामपि क्रियाभाव्यद्वैधीभावनिर्वर्तनद्वारेण छिदिभावनाकरणत्वदर्शनात्। अतः अध्ययनविधेः प्रवर्तकत्वान्यथानुपपत्त्यैव अर्थभावनाकरणस्य अध्ययनस्य अर्थावबोधः फलमिति सिद्धम्, अन्यथा समानपदोपात्तस्य अध्ययनस्यैव भाव्यतया स्वाध्यायावाप्तेरपि विधिफलत्वाभावप्रसङ्गात् इत्यत आह—सा ह्यधीय- 222 . 4
मानावाप्तिफलत्वादक्षरग्रहणान्तेति। अयमाशयः— तव्यप्रत्ययेन भावनाकर्मकारके अभिधीयमाने स्वाध्याये स्वावाप्तिफले च न भाव्यान्तरं कल्पनीयम्, भावनाकर्माभिधायिशब्दविरोधादिति। ननु न भाव्यमात्रेण पुरुषप्रवृत्तिर्विधिना जन्यते, किं तु पुरुषार्थभाव्यापेक्षयैव। ततश्च शब्दविरोधेऽपि भावनानिष्पत्तये अर्थावबोधो भाव्यः इति शङ्कते ता.

भवत्वेवमर्थावबोधोऽर्थभावनाभाव्यः, तथापि अध्ययनस्य कथमर्थावबोधः फलमित्यत आह—ततश्चेति। ननु भावनानिर्वर्तकत्वं विहाय भावनाभाव्यनिर्वर्तकत्वेन करणत्वं कथमिति; तत्राह—कुठारादीनामिति। ननु स्वाध्यायावाप्तिरेव फलं भवतु, किमर्थमर्थावबोधस्य फलत्वं कल्प्यते? इत्यत आह—अन्यथेति। तथापि अपुरुषार्थरूपस्य कथं भाव्यत्वम्? इत्यत आह—स्वावाप्तीति ॥

222 - 4-5 —अथाक्षरग्रहणं निष्प्रयोजनमिति । **परिहरति**—भवतु तर्हि सक्तूनां गतिरिति । **अयमाशयः—अर्थनिर्णयस्य अध्ययनमात्रात् अनिष्पत्तेः श्रूयमाणस्य स्वाध्यायस्य च अफलत्वात् अध्ययनमात्रस्य च अप्रयोजनतया भाव्यत्वायोगात् 'स्वाध्यायाध्ययनेन स्वर्गं भावयेत्' इति कल्प्यते इति ॥**

**ननु व्याकरणस्याप्यङ्गत्वात् साङ्गात् अध्ययनाद्विधीयमानात् अर्थनिश्चयो दृष्टफलतया जायते, तस्य च विरोधपरिहाराय विचारः प्रयुज्यते,**
222 - 6 **अतः दृष्टे सति अदृष्टकल्पना न न्याय्या इति चोदयति**—तदपि न—अक्ष-
222 - 7 रेभ्यः प्रयोजनवदिति। **परिहरति**—न तर्हि निष्प्रयोजनानीति। **श्रूयमाणस्वाध्यायलक्षणात् कर्मण एव अध्ययनभावनया भाव्यमानात् फलवदर्थावबोधसिद्धेः पश्वन्नादीनां प्रयोजनं प्रति परम्परया साधनानामपि भाव्यत्वदर्शनात् श्रूयमाणस्वाध्यायावाप्तिपर्यन्त एव विधिव्यापार इति भावः ॥**

**ननु अक्षरग्रहणपर्यन्ते विधिव्यापारे फलवदर्थावबोधस्य**
223 - 1 **निर्निमित्तता स्यादिति; तत्राह**—फलप्रयुक्त एवार्थावबोध इति। **अयमाशयः—लौकिकाप्तवाक्यानां विधिमन्तरेणापि फलवदर्थावबोधकत्वदर्शनात् साङ्गाच्च कर्मणो विधीयमानात् अवघातादिष्विव अदृष्टजन्मनियमात् न विधिफलमर्थावबोधः; किं तु स्वीकृतस्वाध्यायमात्रजन्यं फलमिति। विधेस्तु दृष्टसमवाय्यदृष्टमेव किंचित् फलमिति दृष्टफलाविरोधेन अदृष्टसिद्धौ न तद्विरोधिस्वतन्त्रादृष्टं कल्पयितुं युक्तमिति ॥**

**किं च, फलवदर्थावबोधफले अध्ययनविधौ यस्य यस्मिन् कर्मणि अधिकारः तस्य तद्वाक्याध्ययनमेव स्यात्, न वाक्यान्तराध्ययनम्,**

---

ता. ननु साक्षादपुरुषार्थरूपस्य कथं भाव्यत्व(रूप)मित्यत आह—**पश्वन्नेति**। युक्त्यन्तरमाह—**साङ्गाच्चेति**। कस्य तर्हि फलमर्थावबोधः? इत्यत आह—**किन्त्विति**। विधिस्तर्हि निष्फलः स्यादित्यत आह—**विधेस्त्विति** ॥

---

भा. **न वाक्यान्तराध्ययनमिति**। ननु तत्रापि परोपदेशेन द्रव्यादि-

तत्र प्रवृत्त्यादिफलाभावात् इति न कृत्स्नवेदाध्ययनसिद्धिरित्याह—अपि च 223 - 2
अक्षरग्रहणान्तो विधिरिति। ननु कृत्स्नस्वाध्यायाध्ययनस्य नित्यतया विधेयत्वेऽपि सकलस्वाध्यायावाप्तिसमवेतस्य अदृष्टस्य अनधिकृतकर्मवाक्यगतस्य अर्थावबोधानुष्ठानादिद्वारेण कथमपूर्वसिद्धिहेतुता? इति। नैष दोषः—प्रायश्चित्तजपाद्यपूर्वोपकारित्वोपपत्तेः। ननु अध्ययनात् अक्षरावाप्तेः को विशेषः?। अस्त्यत्र विशेषः। स्वाधीनोच्चारणक्षमत्वं नाम अक्षरधर्मोऽवाप्तिः, तदर्थो वाङ्मनसव्यापारोऽध्ययनमिति॥

ननु अधिकारिविशेषणमर्थावबोधमुद्दिश्य अध्ययनं विधातव्यम्, निरधिकारविधानायोगात्; अर्थावबोधमुद्दिश्यैव च विहितशब्दोच्चारणे सति वाक्यतात्पर्यसिद्धेः अर्थावबोधमुद्दिश्य रागप्रयुक्तशब्दोच्चारणे लोके
तात्पर्यदर्शनादिति चोदयति—ननु चाश्रूयमाणाधिकारोऽध्ययनविधिरिति। 223 - 8
अधिक्रियतेऽस्मिन् कर्मण्यनेनेत्यधिकारो विधिपुरुषसम्बन्धनिमित्तं जीवनकामादिरुच्यते। ननु विश्वजिन्न्यायेन अधिकारी कल्प्यताम्, अथ वा, वाजसनेयिनां 'ब्रह्मचर्यमागाम्' इत्यादिना उपनयनस्य प्रकृतत्वात्
उपनीतोऽधिकारीति प्रकरणप्रमाणेन कल्प्यतामिति; नेत्याह—दृष्ट- 223 - 8

---

ता. प्रायश्चित्तजपादीत्यादिशब्देन नित्यजप उच्यते॥

ननु ताल्वादिभिः अक्षराणां उच्चारणमध्ययनम्, प्राप्तिरपि सैव, तत् कथमध्ययनस्य स्वाध्यायावाप्तिः फलम्? इति शङ्कते—नन्विति। क्षमत्वं योग्यत्वम्। नन्वक्षरावाप्तिकामोऽधिकारी किं न स्यादित्यत आह—अर्थावबोधमिति। तदुद्दिश्य विधानमात्रेण कथं तात्पर्यसिद्धिरित्यत आह—अर्थावबोधमिति।

---

भा. लाभात् फलवदर्थावबोधोऽस्त्येव, क्षत्रियादेरपि आपद्युपदेष्टृत्वसम्भवादिति चेत्, न—कलावेकवर्णे ब्राह्मणस्य विपुलधनस्य विरक्तस्य वा वर्णितरीत्या अर्थवत्त्वासम्भवादिति भावः। ननु विश्वजिन्न्यायेनेति। एवं सति अर्थे प्रामाण्यं न सिध्येत्, मा भूदिति भावः। दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् स्वर्गकामस्तावन्नाधिकारी, उपनीतो यद्यप्यधिकारी, तथाप्यर्थज्ञानस्यापि दृष्टत्वादुपनीतो धर्माधर्मजिज्ञासुरधिकारीत्याह—दृष्टश्चाक्षरग्रहणेऽर्थावबोध इति॥

श्चाक्षरग्रहणे अर्थावबोधः, स कल्पनामधिकारस्य निरुन्धन्नित्यादिना ॥

भा. ननु एवं सति जिज्ञासा(सूत्र)[मात्र]विलोपः स्यात् । [न स्यात् ।] सामान्यतो ज्ञाते विशेषतश्चाज्ञाते हि जिज्ञासा लोके दृष्टा। अत्राप्युपनेत्रादिवाक्याद्धर्माधर्मयोः श्रेयस्करत्वतद्विपरीतरूपाभ्यां ज्ञातयोर्विशिष्य तत्परिज्ञानाभावे तदुपादानपरिवर्जनासम्भवात् जिज्ञासा । ननु नित्यनैमित्तिकवाक्यार्थस्य [न] लौकिकरीत्या पुरुषार्थत्वं सिध्यतीति न प्राक्(तद्धाने)[तज्ज्ञाने] कामना उपपद्यत इति चेत्, भवेदेवं लिङ्कार्यार्थत्वे । अस्मन्मते तु तद्वाक्यार्थोऽपि प्रत्यवायनिवृत्तिद्वारा पुरुषार्थसाधनमिति भवत्येव लौकिकरीत्यापि कामना । (वचः)[न च] अध्ययनात् प्रागेव धर्मजिज्ञासोदये 'अथातो धर्मजिज्ञासा' इति तस्य अध्ययनानन्तर्याभिधानमसङ्गतं स्यादिति वाच्यम्; सूत्रोक्तजिज्ञासायाः ततोऽन्यत्वात् । इयं हि साङ्गाध्ययनानन्तरमापातरूपवाक्यार्थावबोधेन चैत्यवन्दनादौ धर्मविप्रतिपत्त्या वा(ज्ञा)[जा] यते । सा तु नैवम् । किन्तु पूर्वोक्तविधयैव । तदुक्तं शाबरभाष्ये—न जिज्ञासामात्राभिप्रायेण इदमुच्यते, किन्तु तादृशीं धर्मजिज्ञासामधिकृत्यामुमथशब्दं प्रयुक्तवानाचार्यो [या] वेदाध्ययनमन्तरेण न सम्भवति इति ॥

न च एवमपि श्रुतवा(क्यार्थस्य) [क्यस्य] स्वार्थावगमहेतुत्वस्य लोकसिद्धत्वान्न तदुद्देशेन अध्ययनं विधातव्यमिति वाच्यम्; अवघातादिवन्नियमार्थत्वात् । न च अवघातस्य क्रत्वर्थत्वात्तदर्थतया नियमः अन्यथा तुषनिवृत्तिमात्रे साधनान्तरस्यापि सत्त्वेन बाधप्रसङ्गात् न च अध्ययनं क्रत्वर्थं इति नियम इति वाच्यम्; पुरुषार्थानामपि प्राङ्मुखत्वादिनियमानां सत्त्वात् ॥

**केचित्तु** अधीतस्वाध्यायजन्यज्ञानवान् पुरुषः क्रतौ नियम्यते स एव अधिकारी न व्रात्य इति । **अन्ये तु** अधीतस्वाध्यायस्य प्रथममेव 'स्वाध्यायोऽध्येतव्यः' इति वाक्येन अर्थावबोधहेतुत्वं बोध्यते अनुमानस्य व्याप्तिग्रहादिसापेक्षत्वेन विलम्बितत्वादित्यपूर्वविधिरेव अयं फलतो नियम इत्युच्यते अर्थावबोधेऽधीतवेदस्य साधनताबोधेन उपायान्तरशङ्काया अर्थान्निवृत्तेः इति । **अपरे तु** फलवदर्थावबोधे साधनमध्ययनं फलवत्त्वं च बोधस्य क्रतुशेषत्वेनेति अपूर्वविधिरेव फलतो नियम इत्याहुः ॥

ननु एवमपि अव्याप्तिमत्त्वान्नार्थावबोधः फलम् । हुमित्येवमादेः अनधि- भा०
(ग) [कृ]तकर्मभागाच्च फलवदर्थावबोधाभावादिति चेत्—अत्र **केचित्**—शब्दस्व-रूपविषयमर्थस्वरूपविषयं च यदध्ययनजन्यं विध्यपेक्षितं च तत् फलवद्विज्ञान-मध्ययनफलम्, शब्दज्ञानमपि जपविध्यपेक्षितमिति ज्ञानकामाधिकारे न किञ्चित् दूषणम् । न चैवमध्ययनस्य संस्कारकर्मत्वप्रतीतिविरोधः, यथा 'उत्पत्तौ तु बहुश्रुतेः' (जै-सू-3-7-26) इत्यत्र 'चमसाध्वर्यून् वृणीते' इति श्रूयमाणं बहु-त्वमुद्देश्यविशेषणत्वात् ग्रहैकत्वमिव न विवक्षितमित्याशङ्क्य, ग्रहवदेतेषामपि अन्यतः क्रतुसम्बन्धासिद्धेरियमेवोत्पत्तिरिति प्रकरणसहितेनैतद्वचनेन वरण-संस्कृताश्चमसाध्वर्यवः क्रतुं प्रति विधीयन्ते तथा अध्ययनसंस्कृतस्वाध्यायोऽपीति॥

उच्यते—वाक्यार्थविशेष एव हि ज्ञाने इष्टसाधनतावच्छेदकः । तदाकारज्ञानं विना न तदिच्छा । न चैतदुपनेत्रादिवाक्याद्भवति । निर्णीते कामनाऽयोगाच्च । न च अध्ययनेन पुनः ज्ञातुं कामना । अध्ययनस्य काम्यकोटि-निवेशे विधेयत्वायोगात् । किञ्च, यद्याप्तोपदेशात् पदार्थज्ञानं श्रेयस्करमिति निश्चितम्, तत्साधनीभूते विचार एव प्रथमं किमिति न प्रवर्तेत ? । तस्याप्याप्तो-पदेशात् तत्साधनत्वज्ञानसम्भवात् । न च अध्ययनानन्तरमेव प्रवर्तितव्यमित्यत्र किञ्चित् बीजमस्ति । फलरागस्याध्ययन इव तत्रापि प्राक् सम्भवात् । न च औपदेशिकज्ञानमापातरूपमिति न तदर्थात् प्राक् विचारे प्रवृत्तिरिति वाच्यम्; अध्ययनेऽपि तदभावप्रसङ्गात् । अध्ययनमात्रात् तन्निर्णयासम्भवेन पश्चादप्यत्र प्रवृत्तिप्रसङ्गाच्च । न च वेदज्ञानाभावे तद्विचारो न भवतीति तदध्ययनानन्तरं विचार इति वाच्यम्; मीमांसादिग्रन्थलिखितं वाक्यं दृष्ट्वापि शाखान्तर-वाक्य(मि)[स्ये]व विचारस्य कर्तुं शक्यत्वात् । न च स्वशाखावाक्यस्य लिखित-पाठो निषिद्ध इति वाच्यम्; स्वाध्यायावाप्त्यर्थो हि लिखितपाठो निवार्यते; न तु विचाराय तद्दर्शनमपि । ग्रन्थेषु वा(क्यो)[क्यानामनु]पन्यासप्रसङ्गात् ॥

न च फलवत् ज्ञानमभिलषितं तच्च अध्ययनमन्तरेण न सम्भवति मन्त्रादिज्ञानं विना अनुष्ठानासम्भवादिति वाच्यम् । विचारानन्तरमध्ययनेऽपि तदुपपत्तेः । एतेन—अध्ययनजन्यार्थावबोध एव काम्यत इति तदनन्तरं विचारः इति प्रत्युक्तम् । न च अनुपनीतस्य श्रुतिसंयोगनिषेधादुपनीतस्य च अध्ययन

भा. एव अधिकारात् जघन्यो विचार इति वाच्यम्; त्वत्पक्षे विचारस्य अङ्गत्वेन श्रौतादिक्रमस्य अभावे ऐच्छिके तस्मिन् अध्ययनप्राथम्यनियमे प्रमाणाभावात्। न च पदार्थज्ञानवतैव वाक्यार्थविचारः कर्तव्यः न च अध्ययनात् प्राक् तदस्तीति वाच्यम्; स्वाध्यायाध्ययनेनापि तदसिद्धेः। अङ्गत्वप्रतिसन्धानं तु प्रागप्यर्थज्ञानप्रयुक्तं न निवारयितुं शक्यम्॥

न च माणवकोऽसमर्थः कथं विचारयेत् इति वाच्यम्; न हि शक्तिरशक्तिर्वा सर्वेषामेकरूपा दृश्यते। तर्हीदानीमपि गर्भाष्टम एव कश्चित् सकृच्छ्रुतधारी। प्रौढोऽपि कश्चिन्मन्दमतिः। अन्यथा माणवकस्य स्वविधिप्रतिपत्त्यभावात् अध्यापनविधिप्रयुक्तमेव अध्ययनं किं न स्यात्। एवं सति 'वेदमधीत्य स्नायात्' इति स्मृतिरप्यनुगुणा भवति। कश्चिदस्त्वेवमिति चेत्, न—सौत्राथशब्दविरोधात्। एवं सामान्यतोऽर्थनिश्चयपूर्वकेऽध्ययने धातुशब्दाभ्यामर्थविवक्षाऽपि न निरूपणीया। 'वेदमधीत्य' इति स्मृतेः वेदस्यार्थवत्त्वेऽपि उक्तरीत्या प्रतीयमानेऽर्थे प्रामाण्योपपत्तेः तत्प्रयुक्तत्वशङ्काया अप्यनुदयात्। अध्ययनविधेः प्रागेव दृष्टफलार्थत्वनिश्चये अदृष्टार्थत्वशङ्काया अप्यनुदयात्। अनिश्चये वा ज्ञानकामाधिकारोऽध्ययनविधिर्न स्यात्॥

एतेन—अतश्शब्दसूचितन्यायमूलाप्तोपदेशात् तन्निश्चयेऽपि न तद्वैयर्थ्यमिति प्रत्युक्तम्। अध्ययनात् प्राक् न्यायाननुसन्धानेऽपि बालस्योपदेशादेव तन्निश्चये पूर्वपूर्वाचार्याणामप्येवमेव तन्निश्चयसम्भव इति तदुपदेशस्य न्यायमूलत्वासिद्धेः। न च आसैन्र्यायोऽप्युपन्यस्त इति वाच्यम्; अध्ययनस्य विचारानन्तर्यप्रसङ्गात् अनन्तरं तन्न्यायजिज्ञासाऽयोगाच्च। तस्मादध्ययनविधेः ज्ञानकामाधिकारवर्णनं न सूत्रकृत्सम्मतम्॥

अयुक्तं चेदम्। भवतु प्रागपि वेदार्थज्ञानं स्वर्गादिसाधनमित्युपदेशात् माणवकस्य ज्ञानपूर्विका कामना, तथाऽपि न वेदार्थज्ञानमध्ययनभावनाभाव्यम्। न तावत् नानाकर्मब्रह्मप्रतिपादकवाक्यसमुदायात्मकस्वाध्यायात् एकोऽर्थावबोधो जायते यः स्वाध्यायाध्ययनभावनाभाव्यः स्यात्। अर्थानां परस्परविशेषणविशेष्यभावं विना तद्विशिष्टैकज्ञानायोगात्। नापि समूहालम्बनरूपम्; अनन्तकर्मादिविषयसमूहालम्बनसामग्र्यभावात् युगपदनन्तकर्म-

भवतु नाम 'अध्ययनेन अर्थावबोधं भावयेदर्थावबोधकामः' इति विधिः, तथापि 'विचारेण अर्थावबोधं भावयेत्' इति विचारे प्रवृत्तिरध्ययनविधिना न विधीयत इति ; तत्राह—दृष्टाधिकारेषु प्रत्यक्षत इति। तत्र 224.1
किमर्थसामर्थ्यादेव अध्ययनस्य अर्थावबोधः साक्षाद्वा परम्परया वा फलमित्युच्यते ? किं वा अर्थावबोधकाममुद्दिश्य विधानतः ? इत्यभिप्रेत्याह-अत्रोच्यते इति । प्रथमः कल्पोऽङ्गीकृत इत्याह— भवेदध्ययनविधेरिति। 224.4
द्वितीयः पक्षोऽनुपपन्न इत्याह—नाधिकारहेतुतेति । अध्ययनात् प्राक् 224.4
अर्थावबोधस्य अप्रतिपन्नस्य कामनाऽयोगात् नार्थावबोधकाममुद्दिश्य विधानमित्यर्थः ॥

ननु कथमर्थावबोधस्य अप्रतिपत्तिः? । अध्ययनात् प्राक् वेदार्थस्य अप्रतिपत्तेः, विशेषणापरिज्ञाने तद्विशिष्टावबोधानवगमात् । ननु वेदस्य वाक्यप्रमाणत्वात् आप्तवचनवत् अर्थो विद्यते इत्यर्थसद्भावमात्रमनुमानेन अवगम्यते । न—अर्थवत्त्वज्ञानमात्रस्य अनुमानसिद्धत्वात् तज्ज्ञानकामनाऽयोगात् । अग्निहोत्रादिविशिष्टवाक्यार्थानामप्रतिपन्नतया तद्वि-

---

ता. लोकवदिह रागाभावात् विधिरेव तात्पर्यनिमित्तमित्यर्थः । तत्र अर्थावबोधमात्रं काम्यते ? कि वा अग्निहोत्रादिविशिष्टार्थावबोधः ? इति विकल्प्य, आद्यं दूषयति— न—अर्थवत्त्वेति । द्वितीयं दूषयति—अग्निहोत्रादीति । तत्र औपदेशिकज्ञानस्य

---

भा. विषयज्ञानस्य प्रयोजनाभावाच्च । नच एकैककर्ममात्रविषयं फलवत्ततो भवतीति वाच्यम् ; तस्यापि तद्वाक्यमात्रजन्यत्वेन समुदायाजन्यत्वात् माणवकस्य युगपदनन्तकर्मविशेषज्ञानानां बुद्धिस्थत्वाभावेन कामनाऽसम्भवात् तदुद्दिश्य विधानासम्भवाच्च । स्वर्गत्वसामान्यरूपेणापि तर्कादुपस्थितं तद्विशेषमुद्दिश्यैव यागो विधीयते ॥

एतेन—-विशेषज्ञानान्येव सामान्यरूपेण काम्यन्त इति प्रत्युक्तम् । अत एव इदमपि प्रत्युक्तम्—-स्वाध्यायावयववाक्याध्ययनभावनाभाव्यानि तानि ज्ञानानि सामान्येन रूपेण विशेषाणामेव साधनत्वप्रतिपादनात् इति। अवय-

शिष्टज्ञानकामनाऽयोगात्। उपदेशत एव अग्निहोत्रादिवाक्यार्थविशेषाः प्रतिपन्ना इति चेत्, तर्हि वाक्यार्थविशेषज्ञानानामपि सिद्धत्वात् न तत्र कामना सम्भवेत्। अथ औपदेशिकज्ञानस्य अप्रमाणत्वात् निर्णयज्ञानं काम्यते इति चेत्, अप्रामाण्ये निश्चिते न तत्र निर्णयज्ञानकामना अर्थस्य। विभ्रममात्रत्वात् औपदेशिकज्ञानस्य। सन्दिग्धे प्रामाण्यविचारस्यैव अवसरः न अध्ययनस्य। किं च, सर्ववाक्यार्थज्ञानानां युगपत् एकबुद्ध्या उद्देशनासम्भवात् सामान्येनोद्दिश्य शब्दोच्चारणायामर्थमात्रज्ञाने शब्दस्य तात्पर्यप्रसङ्गात् अग्निहोत्रादिविशेषज्ञाने तात्पर्याभावात् वाक्यशक्त्यनुसारेण विशिष्टार्थे तात्पर्यकल्पनया अर्थज्ञानमुद्दिश्य अध्ययन-

---

ता. अप्रामाण्यं निश्चितम्? सन्दिग्धं वा?। न तावदाद्य इत्याह—**अप्रामाण्ये इति**। द्वितीयं दूषयति—**सन्दिग्धे इति**॥

अर्थाववोधस्य अधिकारिविशेषणत्वमनुपपन्नमित्युक्तम्, इदानीं तदुद्देशेन विधानमप्यनुपपन्नमित्याह—**किञ्चेति**। तत्र ज्ञानमात्रमुद्देश्यं किं वा अग्निहोत्राद्यर्थविशेषज्ञानमिति विकल्प्य, आद्यं दूषयति—**सामान्येनेति**। तदुद्दिश्य विधानाभावेऽपि वाक्यशक्त्यनुसारेण विशिष्टार्थेऽपि तात्पर्यं कल्प्यत इत्यत आह—**वाक्येति**। शक्त्यनुसारेण तात्पर्यकल्पनायां विधितस्तात्पर्यं न सिध्ये-

---

भा. वाध्ययनस्य एतच्छास्त्रार्थत्वाभावाच्च। न च सामान्यशास्त्रमेव व्रीहिशास्त्रवत् विशेषविषयमिति वाच्यम्; नियतविशेषोपादाने हि तथा। न चात्र [कस्यचित् विशेषस्य उपादानम्] (कस्यचिद्वाक्यस्य यत्किञ्चिदर्थाववोधं प्रति अनुपायत्वात्। न) नियतविशेषविवक्षायां तु सामान्यशब्दस्य 'व्रीहीन् प्रोक्षति' इत्यत्रेव लक्षणैव। तथा च सामान्यविशेषयोः उभयोरपि साधनत्वबोधने वाक्यभेदः। न च एवमनन्तज्ञानानां भाव्यत्वे स्वतन्त्रसाध्यभेदात् शास्त्रभेदापत्तिः; न च जातेष्टाविव सङ्कलिताधिकारि(स)कल्पना। तत्तदर्थज्ञानहेत्वनन्तकामनात्मककरणावच्छिन्नभावनाया आनन्त्येन तदयोगात्। काव्यादिपाठे तु विध्यभावात् तद्वाक्यार्थज्ञानमात्रमुद्दिश्य तद्वाक्यमात्रपाठेऽपि

**विधेः तात्पर्यानिमित्तत्वप्रसङ्गात् । तस्माद्विशेषज्ञानानां प्रागसिद्धत्वात् न तत्काममुद्दिश्य विधानमित्याह—प्राक् चाधिकारज्ञानेन प्रयोजनमिति ।** 224.5
**किं च, उद्दिश्य विधानेऽपि न अध्ययनमात्रात् दृष्टफलतया अर्थावबोधसिद्धिः उ. .ादित्याह—अतो न विधेरिति ॥** 224.6

**ननु अर्थावबोधमुद्दिश्य शब्दोच्चारणायां तात्पर्यं लोके दृश्यते । न तावत् श्रोतुरुच्चारणा तात्पर्यनिमित्तम् । लोके तदभावात् । न वक्तुरुच्चारणा । वेदेऽपौरुषेये तात्पर्याभावप्रङ्गात् । तस्मात् स्वभावत एव अर्थप्रतिपादनसमर्थस्य शब्दस्य पुरुषसम्बन्धकृतदोषपरिहाराय अर्थज्ञानमुद्दिश्य शब्दोच्चारणा अपेक्ष्यते । तात्पर्यमपि शब्दधर्म एव षड्विधलिङ्गगम्यः न पुरुषधर्मः इति वक्ष्यते ॥**

---

दित्यर्थः। द्वितीयं कल्पमुपसंहारव्याजेन (दर्शयति) [दूषयति]—**तस्मादिति ॥** ता.

ननु अर्थज्ञानमुद्दिश्य शब्दोच्चारणे लोके तात्पर्यं दृश्यते, तत् कथं निराक्रियते ? इत्यत आह—**तस्मात्स्वभावत इति ।** ननु अर्थावबोधमुद्दिश्य शब्दोच्चारणे लोके तात्पर्यं दृश्यते, तात्पर्यस्य पुरुषधर्मत्वा(दे:) [त्। वेदे] पुनः पुरुषाभावात् विधितस्तात्पर्यमेष्टव्यमित्यत्राह—**तात्पर्यमपीति ॥**

---

न दोषः । तत्तल्लौकिकार्थजिज्ञासा च पुस्तके तत्तच्छ्लोकदर्शनात् आप्तोपदेशाद्वोपप [द्यते तस्माद] र्थावबोधः फलमित्यभिप्रेत्याह—**तस्माद्विशेषज्ञानानामिति ।** विशेषज्ञानानां प्राक् सिद्धौ च तदर्थं नाध्ययनं वक्तव्यम् ॥ भा.

यत्तु अर्थावबोधे पुरुषार्थो नियम इति ; तदसत्, अहेतोः स्वाध्यायाध्ययनस्य नियमानुपपत्तेः । वाक्यसमुदायात्मकस्वाध्यायस्य अर्थज्ञानहेतुत्वेन तदध्ययनस्य अहेतुत्वात् । वेदार्थज्ञाने उपायान्तराभावादपि न नियमः ; निवर्त्यमन्तरेण तदनुपपत्तेः । इदं च भवनाथेन प्रपञ्चितमिति नात्र लिख्यते । यत्तु क्रतौ पुरुषादिनियम इति; तदपि मन्दम् , तदप्रतीतेः । कल्पनायामपि अनुपपत्त्यभावात् । यदप्यनुमानाच्छब्दः प्रथमं प्रवर्तते इत्यप्राप्तविषयोऽप्ययं फलतो नियमविधिरिति ; तदपि न, शब्दस्यापि पदार्थज्ञानसापेक्षत्वेन अनुमानात् प्राथमिकत्वे बीजाभावात् ॥

भा. प्रकृते चेदमपरं विलम्बनिमित्तम्। तव्यप्रत्ययेन हि स्वाध्यायो भाव्यतया अवगम्यते। तस्य अपुरुषार्थत्वेन तत् परित्याज्यम् अर्थावबोधस्य चोपस्थितिः कल्प्या तस्य च कर्मशेषतया फलवत्त्वं कल्प्यमित्यादि। (त)-[य]दपि फलवदर्थावबोधस्य न मानान्तरा[द] ध्ययनभाव्यत्वं सिध्यतीति; [तदपि] न, स्वाध्यायस्य भाव्यत्वात्। तव्यप्रत्ययेन हि स्वाध्याय एव भाव्योऽवगम्यते, न तु बोधः; तस्य शब्दादप्रतीतेः; अध्ययनात् प्राक् तस्य प्रत्यक्षेणाप्यनुपस्थितत्वात्; प्रामाण्यविचारात् प्राक् तदनुमानायोगाच्च ॥

यत्तु स्वाध्यायस्य अपुरुषार्थत्वात् न तस्मिन् विधिपर्यवसानमिति अर्थावबोधः फलमिति; तदुक्तरीत्या न सम्भवति। किञ्च, अर्थावबोधोऽपि स्वाध्यायतुल्य एव। न च तस्य क्रत्वनुप्रवेशात् फलवत्त्वं क्रत्वनुप्रवेशश्च क्रतुविधिसामर्थ्यात् सिद्ध इति वाच्यम्; क्रतुविधिर्हि ज्ञानमात्रमपेक्षते न त्वध्ययनविधिफलमिति। सत्यमध्ययनविध्यभावे तथा, सति तु तस्मिन् तत्फलमेवोपादीयेतेति चेत्, न—एवं सति अध्ययनविधेः स्वार्थप्रतिपादने क्रतुविध्यपेक्षा वक्तव्या। क्रतुविधिरपि स्वविषयानुष्ठानाय ज्ञानमीक्षमाणोऽध्ययनविधिमपेक्ष्य तत्फलमपेक्षत इति परस्पराश्रयः। अपि च एवमक्षरावाप्तिरपि न निष्फला; अवाप्तस्वाध्यायस्य त्वर्थज्ञानद्वारा फलवत्त्वात्। तथा च अध्ययनस्य न श्रुतसंस्कारकर्मत्वं त्याज्यम्; अविनियुक्तस्यापि स्वाध्यायस्य पुरुषार्थतया संस्कार्यत्वोपपत्तेः। सकलस्वाध्यायसंस्कारस्य उपकारः आचार्यैरेवोक्तः जपाद्युपयोगितया ॥

किञ्च, 'सर्वे वेदा यत्पदमामनन्ति' 'वेदानुवचनेन ब्राह्मणा विविदिषन्ति' 'वेदैश्च सर्वैरहम्' इत्यादिविनियोगात् सर्वस्वाध्यायगतसंस्कारो ब्रह्मावबोधे विनियुज्यते। न च द्वाराभावः; विविदिषावाक्यसिद्धद्वारस्य सत्त्वात्। (स त्व) [यत्तु अ]पूर्वोपयुक्तज्ञानमात्र*धिकृतवाक्यादिस्वरूपज्ञानमपि जपाद्यपूर्वोपयुक्तमिति। तत्र किं शब्दविषयप्रत्यक्षमध्ययनफलम्? उत समयान्तरे तत्स्मृतिः?। [नाद्यः], तस्य जपादौ साक्षादनुपयोगात्। न हि प्रत्यक्षेण ज्ञात्वा जपन्ति। द्वितीये अध्ययनं (नम) [मन्त्रजपे] न साक्षाद्धेतुः; किन्तु स्वाध्याय-

* अत्र ग्रन्थे त्रुटिः।

इदानीमध्ययनविधेर्नित्याधिकारतां प्रतिपादयितुमधिकारिविशेष-
णाभावात् अनध्ययनमेव इत्यध्ययनप्रवृत्तिमाक्षिपति—यद्येवमधिकाराश्रव- 224 . 7
णादिति । तत्र विधिर्हि स्वविषये प्रवर्तकतया प्रतिपन्नः, तदन्यथानुप-
पत्त्या 'ममायं नियोगः' इति प्रतिपद्य प्रवृत्तिसमर्थमधिकारिणं कल्पयति।
यदा तु पुनर्विधिविषयस्य निमित्तान्तरादनुष्ठानं सम्पद्यते तदा विधेः
प्रवर्तकत्वं प्रतिबध्यते । प्रतिबद्धप्रवर्तकभावश्च विधिः प्रवृत्तिसिद्धये न
स्वामिनमधिकारिणं कल्पयित्वा प्रवर्तयति। तत्र अध्ययनविधिरपि
स्वविषयस्य अध्यापनविधिप्रयुक्तानुष्ठानत्वात् स्वयं प्रतिबद्धप्रवर्तक-
भावो न अधिकारं कल्पयित्वा प्रवर्तयति इति प्राभाकराः प्रत्यवतिष्ठन्त 225 . 1
इत्याह—अत्र केचिदाहुरिति ॥

ननु 'अष्टवर्षं ब्राह्मणमुपनयीत । तमध्यापयीत' इति श्रुतौ अध्यापनविधिः अश्रूयमाणाधिकारः कथमध्ययनं प्रयोजयेत् ?। कल्प्य-तेऽत्र अधिकारः इति चेत्, न—अध्ययनेप्यधिकारं कल्पयित्वा स्वविधिप्रयुक्तिरेव अध्ययनस्य गृह्यतां सन्निधानात्। ननु कल्पिता-

---

ता. ननु अध्ययनविधिसामर्थ्यादेव अधिकारी विश्वजिद्यागादाविव कल्प्यता-मित्याशङ्क्य, मैवम्—अनुष्ठानसिद्ध्यर्थत्वात् अधिकारिकल्पनायाः तस्य च इह अन्यतः प्राप्तत्वादित्याह—**तत्र विधिर्हीति**। अस्तु, प्रस्तुते किमायातम् ? इत्यत आह—**तत्राध्ययनेति**। अध्ययनविधिवाक्य एव अधिकारकल्पनं [लघीयः] (बलीयः), अध्यापनवाक्येऽधिकारं कल्पयित्वा अध्ययने तत्प्रयुक्तिकल्पनं तु गौरवाय व्यवधानादित्याह—**सन्निधानादिति** ॥

---

भा. गोचरदृढतरसंस्कारद्वारा। तथा च आप्तिरपि (तन्नैव) [स एव] तन्नियतो धर्मो वेति, तत्र आप्तिरे(क)[व] फलमित्य[न्य]त्रापि सैवास्त्विति स्वाध्यायावाप्तिरेव शब्दोपात्ता अध्ययनविधेः फलम् । लिखितपाठादिव्यावृत्त्यर्थं चेदम् । अध्ययने चायं नियमविधिः । गुरुमुखोच्चारणानूच्चारणस्यैव अध्ययनत्वात् । 'आचार्याधीनो वेदमधीष्व' इति स्मृति[रपि] तद्विधिमूलैवेति। न ततोऽन्य(द्या)-[न्या]वृत्तिरिति ॥

धिकारे अध्यापनविधौ तत्प्रयुक्तानुष्ठानत्वात् अध्ययनस्य न तत्र अधिकारः कल्प्यत इति चेत्, विपरीतं किं न स्यात्? अध्ययने कल्पिताधिकारे तत्प्रयुक्तानुष्ठानत्वात् अध्यापनस्य न तत्र अधिकारः कल्प्यत इति। ननु लिखितपाठादपि अध्ययनसिद्धेः न अध्ययनविधिरध्यापनं प्रयोजयति। तर्हि अविहिताध्ययनेनापि अध्यापनविधिसिद्धेर्न विहितमध्ययनमध्यापनविधिः प्रयोजयेत्। अथापि अध्ययनाध्यापनयोर्माणवकस्य प्राङ्मुखत्वपवित्रपाणित्वाद्यङ्गसाम्यात् विहितमेव अध्ययनमध्यापनविधिः प्रयुङ्क्त इति। अध्यापनस्य अध्ययनविधिप्रयुक्तावपि समानमेतत्। किं च, 'आचार्याधीनो वेदमधीष्व' इति नियमविधानाल्लिखितपाठो न युक्तः, अध्यापनात् उत्तरभावित्वात् आचार्यत्वस्य अचार्यकरणविधिप्रयुक्तः अधीष्व इति वाक्यार्थ इति चेत्, न—'तत् द्वितीयं जन्म तद्यस्मात् स आचार्यः' इत्युपनयनमात्रात् आचार्यत्वश्रवणात् आचारान् ग्राहयतीति व्युत्पत्त्या आचार्यत्वस्य प्रागेव सिद्धेः आचार्यकरणविधिप्रयुक्त इत्यध्याहारात् शब्दस्य भाविवृत्त्याश्रयणस्यैव लवीयस्त्वात्। तस्मात् अधिकारकल्पनासाम्यात् इतरेतरप्रयुक्तिसाम्याच्च स्वविधिप्रयुक्तिसम्भवे अध्ययनस्य कथम-
225 - 1 ध्यापनविधिप्रयुक्तिः इति; तत्राह—आचार्यकरणविधिप्रयुक्तस्याध्ययनस्यानुष्ठानमिति ॥

---

ता. अविहिताध्ययनेनेति। प्राङ्मुखत्वादिनियमविरहितेनेत्यर्थः। समानमिति। 'प्राङ्मुखं पवित्रपाणिमध्यापयेत्' इतिवत् 'प्राङ्मुखः पवित्रपाणिरधीयीत' इत्यङ्गसाम्यमित्यर्थः। लिखितपाठाभावे युक्त्यन्तरमाह—किं चेति। अध्यापनविधिवादी शङ्कते—अध्यापनादिति। अध्यापनात् प्राक् आचार्यस्यैव अभावात् तदधीनोऽधीष्वेति वक्तुं अयुक्तत्वात् तद्विधिप्रयुक्तोऽधीष्वे[ति वाक्यार्थ इ]त्यङ्गीकरणीयमित्यर्थः। अध्यापनमन्तरेणैव आचार्यत्वसम्भवात् मैवमिति परिहरति—न—तत् द्वितीयमिति। युक्त्यन्तरमाह—आचारानिति। अध्यापनसाध्यत्वेऽप्याचार्यत्वस्य 'गृहस्थस्सदृशीं भार्यामुपेयात्' इतिवत् य आचार्यो भविष्यति तदधीनोऽधीष्वेति कल्पनं युक्तमित्याह—आचार्यकरणविधिप्रयुक्त इति ॥

अयमाशयः— 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इति संमाननादिषु साध्येषु नयतेर्धातोरात्मनेपदं विधीयते। तत्र च 'उपनयीत, तमध्यापयीत' इत्येकप्रयोगतावगमात् उपनयनाध्यापनयोः माणवकस्य अध्यापनं प्रति कर्मकारकांशेन गुणभूतत्वात् माणवकः केनोपकारेणाध्यापनविधिं निर्वर्तयेत् इति वीक्षायां उपगमेन अध्ययनं कुर्वन्नध्यापनविधेरुपकरोतीति गम्यते। तत्र 'उपनीयाध्यापयेत्' इति प्रयोगैक्यकल्पनायां नयत्यर्थसाध्यमेवाचार्यकरणमध्यापनस्यापि फलं गम्यते। ततश्च 'उपनीयाध्यापयेदाचार्यकरणकामः' इति श्रुतस्यैव आचार्यत्वस्य फलस्य कामोपबन्धमात्रकल्पनात् साधिकारोऽध्यापनविधिः सम्पद्यते। अथ वा—

---

ता. अध्यापनविधेरधिकारी न कल्पनीयः श्रूयमाणत्वादिति प्राभाकरः प्रत्यवतिष्ठत इत्याह—**अयमाशय इति**। सूत्रस्य स्वयमेवार्थमाह—**सम्माननादिष्विति**। ननु एवमपि उपनयनसाध्यमाचार्यत्वं प्रतीयते, न तु अध्यापनसाध्यमित्यत्राह—**तत्र चेति**। तथापि प्रस्तुते किमायातम्? इत्यत आह—**माणवकस्येति**। माणवकविषयाध्यापनेन आचार्यत्वं भावयेदिति वाक्यार्थस्वीकरणादध्यापनक्रियानिर्वर्तकतया तां प्रति गुणभूतत्वादुपकारकत्वे वक्तव्ये दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वात् उपनयनाध्ययनाभ्यामुपकरोतीति कल्प्यते इत्यर्थः। तथापि कथमुपनयनफलमध्यापनफलं भवेत् इत्याशङ्क्य, उपनयनस्य अध्यापनाङ्गत्वात् तयोरेककर्म(फलतै)[तया ए]कफलता युक्तैवेत्याह—**तत्रोपनीयेति**। एतावता कथमध्यापनविधेः साधिकारत्वसिद्धिरित्यत आह—**ततश्चेति**॥

उपनयीतेत्यात्मनेपदसामर्थ्यात् अध्यापनविधेराचार्यत्वं फलमित्युक्तम्। इदानीमध्यापनविधेः साक्षादेव आचार्यत्वं फलमभ्युपगम्यते इत्याह—**अथ वेति**।

---

भा. **कर्मकारकांशेन गुणभूतत्वादिति**। अत्र कर्मत्वं [अ]विवक्षितम्। अध्ययनस्य अर्थकर्मत्वेन माणवकस्य अकर्मत्वात्। अतो (न) गुणभूतत्वादित्येतत् न विरुद्धमिति भावः।

'उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥'

इत्युपनयनाध्यापनयोः प्रयोगैक्यात् अध्यापने विधिश्रवणात् आचार्यत्वफलश्रवणाच्च 'आचार्यत्वकामो माणवकमुपनीयाध्यापयेत्' इति विधिर्निष्पद्यते। अध्ययने तु नाधिकारनिमित्तं किंचित् श्रुतमस्तीति विशेषः ॥

ननु अध्यापनविधिविषयतदङ्गताभावेऽध्ययनस्य स्वतन्त्रविध्यन्तरविहितस्य कथं स्वतन्त्रविध्यन्तरप्रयुक्तानुष्ठानता? इति; तत्राह—
225-2 आधानस्येव कामश्रुतिप्रयुक्तस्येति। अयमाशयः—'ब्राह्मणोऽग्नीनादधीत' इति श्रूयते। तत्र न तावत् पुरुषमुद्दिश्य स्वातन्त्र्येण नित्यमाधानं विधीयते। द्रव्यपरतया प्रोक्षणादिवत् कर्मकारकसंस्कारकर्मताप्रतीतेः। अश्रूयमाणफलत्वादेव न स्वतन्त्रकाम्याधिकारता। न च सक्तुन्यायेन गुणप्रधानवैपरीत्यात् नित्यकाम्याधिकारता। 'यदाहवनीये जुहोति' इति संस्कृताग्नीनां क्रत्वन्तरे विनियोगात्। तस्मात् उभयविधाधिकारशून्यो न आधानविधिराधाने प्रवर्तयितुं क्षमः। तर्हि उत्तरक्रतुविधिविधिप्रयुक्तानुष्ठानमाधानं स्यात्। उच्यते—न तावन्नित्यदर्शपूर्णमासादिविधिप्रयुक्तानुष्ठानं आधानम्। आहवनीयस्योद्देश्यतया अनुपादेयत्वात्

---

ता. ननु अध्ययनेऽप्यधिकारः कल्प्यतामित्याशङ्क्याह—अध्ययने त्विति। अधिकारो विधिपुरुषसम्बन्धः। तन्निमित्तं जीवनकामनादि। आधानविधिः किं स्वतन्त्रनित्यविधिः? उत स्वतन्त्रकाम्यविधिः? इति विकल्प्य, क्रमेण दूषयति—न तावदिति। नित्यकाम्याधिकारतेति। नित्याधिकारता काम्याधिकारता चेत्यर्थः। तत्र हेतुमाह—यदाहवनीये इति। भस्मीकृतानां सक्तूनां भूतभव्योपयोगाभावात् विभक्तिविपरिणामः कल्पितः, इह तु विनियोगसम्भवान्न वैपरीत्यं कल्प्यत इत्यर्थः। अनुपादेयत्वेऽप्यनुष्ठेयत्वं किन्न स्यात्? इत्यत

---

भा. आहवनीयस्योद्देश्यतयेति। अग्निविशिष्टं पुरुषमुद्दिश्य कर्मविधाना-

क्रतुविधिप्रयुक्तानुष्ठेयत्वायोगात् । उपादेयमेव हि विधिरनुष्ठापयति । अन्यथा स्वर्गकामादीनामप्यनुष्ठेयत्वप्रसङ्गात् । तस्मादुत्तरकाम्यविधिप्रयुक्तमेव आधानस्य अनुष्ठानमिति । न हि विधिरिव कामोऽप्युपादेयमेव अनुष्ठापयति ; किं तु यद्यदुद्देश्यमुपादेयं वा विना काम्यमानं न सिध्यति तत् सर्वं विधिः सहकारितया अनुष्ठापयति । एवं विधिरागयोर्विभागदर्शनात् । यथा 'सौवर्णे पीठे समुपविशेत्' इति विधौ तथाविधपीठाभावे विधिर्नानुष्ठापयति । रागस्तु तथाविधं पीठमुत्पाद्यापि तत्र निवेशयति । एवमाचार्यकरणकामनैव अध्ययनमाचार्यप्रेरणाद्वारेण माणवकेन निर्वर्तयत्यध्यापनसिद्ध्यर्थमिति ॥

अत्र अध्ययनविधिरेव नित्याधिकारेण साधिकारोऽध्ययने प्रवर्तयतीति प्रतिपादयितुमध्यापनविधिप्रयुक्तिं निराकरोति—तदयुक्तमित्यपरे इति । अयमाशयः—न तावदाचार्यत्वं स्वयमेव विधेयमिति युक्तम्, उपनयनाध्यापनभावार्थविषयत्वात् विधेः । नापि विधिपदाभिधेयतया विधिरूपमाचार्यत्वम् । आत्मनेपदमात्राभिधेयत्वात् । नापि नैयोगिकफलमाचार्यत्वम् ; 'आचारान् ग्राहयति' इति प्रयोज- 225 . 2

---

ता. आह—**उपादेयमेव हीति** । विपक्षे बाधमाह—**अन्यथेति** । ननु विधिरुपादेयं नानुष्ठापयतीत्युक्तमिति, तत्राह—**न(हीति) [हि] विधिरि[वे]ति** । दर्शनमेवाह—**यथेति** । दार्ष्टान्तिकमाह—**एवमिति** ॥

किमाचार्यत्वं विधिविषयत्वादनुष्ठेयम् ? उत विधिरूपतया ? किं वा विधिफलतया ? इति विकल्प्य, नाद्य इत्याह—**न तावदिति** । नापि द्वितीय इत्याह—**नापीति** । उपनयीतेत्यत्र आत्मनेपदमात्रस्याचार्यत्वमर्थः न तु लिङादेः वर्तमानप्रयोगेऽप्याचार्यत्वप्रतीतेरित्यर्थः । नापि तृतीय इत्याह—**नापि नैयोगि-**

---

भा. दमिरुद्देश्य इति भावः । **अन्यथा स्वर्गेति** । ननु अग्निरङ्गमिति चेत्, सत्यम्—अन्यतस्तत्सिद्धेर्विधिरुदास्त इति भावः । तदेवान्यदाह—**तस्मादिति** । (हेतु)प्रयोजककर्तृत्वनिबन्धनस्य आचार्यत्वस्य लौकिकत्वादिति । वक्ष्य-

**ककर्तृत्वनिबन्धनस्य आचार्यत्वस्य लौकिकत्वात्। अथ माणवकविषयनयत्यर्थजन्यमाचार्यत्वमलौकिकमिति। न—'तत् यस्मात् स आचार्यः' इति स्मृतौ माणवकसंस्कारं प्रति हेतुकर्तृत्वस्यैव लौकिकस्य आचार्यशब्दनिमित्तत्वावगमात्। सहपठितानां च संमाननादीनामलौकिकत्वाभावात्। आचार्यत्वस्य अलौकिकत्वेऽप्युपनयननियोगफलं भविष्यति। तेन अध्यापनविधेः कुतः साधिकारता। अथ 'तमध्यापयीत' इत्येकप्रयोगतावगमात् 'उपनीयाध्यापयीत' इति विधिः परिणम्यते इति, तथाप्यङ्ग-**

---

ता. **केति।** आचारग्राहकत्वेन यदाचार्यत्वं तदस्तु नाम लौकिकम्, शास्त्रीयोपनयनजन्यं पुनराचार्यत्वमलौकिकमिति शङ्कते—**अथेति।** युक्त्यन्तरमाह—**सहपठितानामिति।** अङ्गीकृत्याप्याह—(**अलौकिकत्वेऽपीति**) [**तथापीति।**]

---

भा. माणविधया आचार्यव्यापारस्य अविधेयत्वात् तदधीनमाचार्यत्वं लौकिकमेवेत्यर्थः ॥

ननु सत्यं 'तमाचार्यं प्रचक्षते' इति संज्ञामेव विधत्ते; तथापि संज्ञायाः किञ्चिदभिधेयं वक्तव्यम्। न च टिड्ढादिवत् स्वरूपमात्रे सङ्केत इति वाच्यम्; 'तमाचार्यं प्रचक्षते' इत्यर्थविशेषविषयवृद्धव्यवहारप्रदर्शनस्य अनुपयोगात्। शक्तिनिश्चये हि प्रयोगोऽपेक्ष्यते। अर्थविशेषनिमित्तस्य साङ्केतिकत्वायोगाच्च। न च टिड्ढादिशब्दोऽर्थविशेषाभिप्रायेण क्वचित् प्रयुज्यते। अस्तूपनयनादिक्रियाविशिष्ट एव तदर्थ इति चेत्, न—तत्र न तावदुपनयनाद्येकैकक्रियाविशिष्टस्तदर्थः। अनेकशक्तिकल्पनाप्रसङ्गात् विनिगमकाभावे-(नानेक)[न एक]शक्त्ययोगाच्च। न च निखिलक्रियाविशिष्टस्तदर्थः। कर्मणां मेलनायोगात्। अतोऽध्यापनसाध्यनियोगविशिष्ट एव अलौकिको यूपादिरिव यूपादिपदस्य आचार्यपदस्यार्थः। न च 'आचार्याधीनो वेदमधीष्व' इति स्मृत्या प्रागप्याचार्यत्वप्रतिपत्तेर्न साङ्गवेदाध्ययनापूर्वघटितं तदिति वाच्यम्; भाविपरतयापि तत्र आचार्यपदप्रयोगसम्भवात् अनेकार्थत्वायोगात्। एतेन—'द्वितीयं जन्म' इत्युपनयनं प्रस्तुत्य 'तद्यस्मात् स आचार्यः' इत्येतत् व्याख्या-

फलस्य अर्थवादस्य न प्रधानविध्यधिकारनिमित्तता कल्पनीया—'आचार्य-करणकामो माणवकमुपनीयाध्यापयेत्' इति। तदेवमध्ययनविधेरप्युपनयनप्रकरणत्वात् वाजसनेयिनां सर्वस्मृतिषु च उपनीतोऽधीयीतेति प्रकरणप्रमाणात् साधिकारत्वसिद्धेः स्वविधिप्रयुक्तमेव अध्ययनमिति युक्तम्। यत्तु मानवं वचनमुक्तं तत् स्वयमेव वा मूलश्रुत्यनुमानेन वा न

---

उपनीयाध्यापयेदित्येकप्रयोगतावगमादुपनयनमध्यापनाङ्गम्, अङ्गेषु च फलश्रुतिरर्थवादः, तेन [न] प्रधानविधिसम्बन्धनिमित्तत्वकल्पनं युक्तमित्यर्थः। कल्पनाप्रकारमेवाह—आचार्येति। तथैव [कि]मिति [न]कल्प्यते? इत्याशङ्क्य, मैवं गौरवादित्याह—तदेवमिति। कल्पनायामपि तदीयकल्पनातोऽस्मदीयकल्पनं  ता.

---

तम्। ननु अध्यापनस्य वृत्त्यर्थत्वेन अन्यतः प्राप्ततया लौकिकत्वात् कथं तदधीनमाचार्यत्वमलौकिकमिति चेत्, न—वृत्त्यर्थाध्यापनादुपाध्यायव्यापारात् [अन्यस्य] आचार्यत्वकामाध्यापनस्य अलौकिकत्वात्। तथा च मानवं वचनम्—  भा.

एकदेशं तु वेदस्य वेदाङ्गानि तु वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥ इति।

न च अलौकिकाचार्यसंज्ञाया उपयोगाभावः, 'आचार्याय प्रियं धनमाहृत्य' इत्यादिशास्त्रसिद्धधनप्राप्त्याद्युपायत्वादिति॥

मैवम्—यद्यध्यापनापूर्वघटितं(तदेवा)[आ]चार्यत्वम्। न तर्हि तत्कामो नियोज्यः। न हि स्वरूपेण नियोगः केन चित् काम्यते। नित्यादिनियोगे मानाभावात। कामनायाः लोके सुखदुःखाभावतत्साधनविषयत्वदर्शनात्। कामाधिकारे काम्यसाधनस्यैव कार्यत्वेन काम्यस्य तस्य कार्यतया शब्देन प्रतिपादनायोगाच्च। अन्यथा स्वर्गपश्वादिरेव (काम्य)[कार्य]तया किमिति नोपदिश्येत। व्यवधानेन धात्वर्थकृतिसाध्यत्वस्य अपूर्वस्येव स्वर्गादेस्तुल्यत्वात्। निरुपाधिककामनागोचरत्वेन काम्यस्य स्वर्गादेरेव प्रथमं कृत्युद्देश्यत्वात्। अतः काम्यसाधनमेव त्वन्मते कृत्युद्देश्यमित्यध्यापनापूर्वं काम्यं सन्न कार्यमिति न तदधीना प्रवृत्तिः स्यात्॥

**आचार्यकरणकामस्य किंचिद्विदधाति। किं तु यच्छब्दोपबन्धादुपनयनाध्यापनानुवादेन कर्तुराचार्यसंज्ञामेव विदधाति। 'तमाचार्यं प्रचक्षते' इति वचनात्। संज्ञायाश्च वक्ष्यमाणनमस्कारपूजादिविधानाङ्गत्वात्।**

ता. लाघवात् युक्तमित्यर्थः। किञ्चिदपि न विदधाति चेत् वाक्यं व्यर्थं स्यादित्यत आह—**किंत्विति**। कथमेतदवगम्यते? इत्यत्राह—**तमाचार्यमिति**। ननु संज्ञाविधानेऽपि प्रयोजनं न पश्याम इत्यत आह—**संज्ञायाश्चेति**॥

भा. न च अपूर्वसाध्यतया आचार्यत्वमन्यदस्त्विति वाच्यम्; तत्र प्रमाणाभावात्। न च संज्ञास्मृतिः उपनयीत इत्यात्मनेपदं च तत्र प्रमाणमिति वाच्यम्; अपूर्वात्मत्वेऽपि तस्य तयोरुपपत्तेः। न च अन्यत् प्रमाणमस्ति। एतेन—अध्यापनापूर्वं स्वतोऽकाम्यमपि फलान्तरानुपायोऽपि आचार्यत्वस्वरूपतया आचार्यसम्प्रदानकदानादिनिमित्तत्वेन फलवदिति कामना सम्भवतीति निरस्तम्। तथा सति पश्वादिवत् कार्यत्वानुपपत्तेः। किञ्चैवमाचार्यमुद्दिश्य यच्छुश्रूषादक्षिणादि विधीयते तन्निखिलकामो नियोज्योऽस्तु। आचार्यत्वकामस्यापि अश्रुतत्वेन कल्पनायां तस्यैवोचितत्वात्। दक्षिणादेराचार्यत्वनियोगोद्देशेन विधेर्नैयोगिकत्वाच्च। न चैवमुक्तस्मृतिविरोधः, आचार्यत्वस्याध्यापन(मात्र)-साध्यत्वमात्रस्यैव तदर्थत्वात्। तस्य धनादिकामाधिकारेऽप्यविरोधात्। अत एव उपनयीत इत्यात्मनेपदेनापि न विरोधः। अर्थवादतया तस्याः तत्साध्यत्वाभिप्रायत्वाच्च। अतो जातेष्टिरिव संवलिताधिकारमध्यापनं युक्तम्॥

वस्तुतस्तु आचार्यसंज्ञा[पि] पाचकादि[संज्ञा]वत् होत्रादिसंज्ञावच्च लौकिकी। न च 'होतारं वृणीत' इत्यादिविहितवरणाधीनत्वात् होतृत्वादेर्यूपत्वादिवत् अलौकिकत्वमेवेति वाच्यम्; 'होताऽहमस्मि' इति तदीययजमानानुमतसङ्कल्पमात्रायत्ततया लौकिकत्वात्। वरणेऽपि सङ्कल्पाभावे तदसिद्धेः। वरणं त्व (त्वेवम)प्रवृत्ताभ्यर्थनं दृष्टार्थमपेक्षितम्। अन्यथा सत्रेष्वर्थलोपाद्वरणलोपे होत्रादयो न स्युः। न च होत्रादिशब्दो गौण एव। तत्र प्रमाणाभावात्। एवमुपाध्यायसंज्ञापि लौकिकी[भव]त्येव, तद्वदाचार्यसंज्ञा अस्तु। न चैवमध्याप(नीयैकैकक्रियापि)[नाद्येकैकक्रियाभिरपि] दृष्टस्वरू(पोपादान)[पाचा-

र्यत्व]लक्षणसम्भवात् साङ्गाध्यापनक्रियोपादानं [न] वक्तव्यं अलौकिकं तु साङ्गाध्ययनादेवेति न व्यर्थमिति वाच्यम्। उपाध्यायाद्भेदकत्वेन तदुपपत्तेः। तत्प्रयोजनं च प्रियधनप्राप्तिः ॥ भा.

न च उपनयनाद्यनेकविजातीयक्रियाभिरेकोपलक्षणं[न] युक्तम्, पाके तु विजातीयक्रियाणामप्येकफलहेतुत्वावच्छेदेन तत्सम्भव इति वाच्यम्। उपनयनसहिताध्यापनक्रियाया एव उपलक्षणत्वात्, एकधनप्राप्तिफलत्वाच्च पाकान्न विशेषः। न च 'अध्यापयेत्' इत्युपात्तापूर्वस्य विशेषणत्वे सम्भवति नोपलक्षणत्वमिति वाच्यम्। वक्ष्यमाणविधया साङ्गाध्ययनविधिसामर्थ्यप्राप्तसाङ्गाध्यापनस्य अविधेयत्वेन अपूर्वाभावात्। क्रियायाश्च विशेषणत्वाभावात् ॥

किञ्च, एवं सति 'सकल्प'मित्यादि व्यर्थं स्यात्। ततः पृथगपूर्वभावात् अप्रतीतेश्च। अध्यापनापूर्वं तु 'अध्यापयेत्' इत्यनेनैवोपस्थितम्। न च वृत्त्यर्थाध्यापनापूर्वविलक्षणमपूर्वं तत्समभिव्याहारादेव सिध्यतीति वाच्यम्। अध्यापनेऽन्यतस्सिद्धे(ऽपि) विध्यसम्भवेन तदभावात्। 'योऽध्यापयीत वृत्त्यर्थम्' इति स्मृतौ यच्छब्दाद्युपबन्धेन तद्विध्यसम्भवाच्च। न च अन्यत् तद्विधायकमस्ति। न च सिद्ध(पदमभावा) [वदनुवादा]देव तद्विधिः कल्पनीय इति वाच्यम्। मानान्तरसिद्धस्यापि तदुपपत्तेः। न च आचार्यकामनाध्यापनभेदोऽस्ति ॥

ननु 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इति श्रुतौ सोपनयनाध्यापनमात्रसाध्यमाचार्यत्वं प्रतीयते स्मृतौ सकल्पमित्यादिविशेषणसा(मर्थ्य)-[थ्य]मित्याचार्यकरणकामाध्यापनापूर्वद्वैविध्याद्विशेषणमर्थवदिति चेत्; न— श्रुतौ स्वाध्यायशब्दाभावेन स्मृतिसिद्धाध्यापनस्यैव स्वीकार्यत्वात्। आचार्यसंज्ञाया अनेकार्थत्वायोगाच्च। न च आचार्याध्यापनातिरिक्तमलौकिकमस्ति। न च आचार्याध्यापने (अ)विशेषः तेन प्रतिपाद्यत इति वाच्यम्। यच्छब्दसमभिव्याहारादेतस्य विधिपरत्वाभावात्। अङ्गविधिरपूर्वसंज्ञा चेत्यर्थभेदप्रसङ्गाच्च। व्युत्पत्ति*वाक्यतासम्भवे लोकेऽपि तद्भेदस्य अन्याय्यत्वात्। तस्मात् क्रियामात्रमभिप्रेत्य शिष्यस्य आचार्यदक्षिणादिविशेषतया साङ्गाध्ययनविधिसामर्थ्यप्राप्तसाङ्गाध्यापने कर्तुराचार्यसंज्ञां विधत्ते इति नालौकिक-

---

* अत्र ग्रन्थे त्रुटिः।

तस्मात् आचार्यकरणविधिप्रयुक्तिरयुक्तेति ॥

ननु एवमपि उभयत्र अधिकारकल्पना न युक्ता, अन्यतरेणैव अन्यतरस्य प्रयुक्तिसिद्धेः। अतः कस्य अन्यतरस्य कल्प्यते इति वीक्षायां माणवकस्य अप्रबुद्धत्वात् स्वाधिकारं प्रतिपद्य अनुष्ठातुमशक्तत्वात् अध्यापनविधिरेव साधिकारोऽध्ययनं प्रयुङ्क्ते इति चोद-
225 - 3 यति–कथमिति। तत्र उत्तरमाह–अष्टवर्षं ब्राह्मणमुपनयीतेति। यद्ययमाचार्यस्य नियोग इति। आचार्यकरणकामस्य नियोग इत्यर्थः। अयमभिसन्धिः– आचार्यकरणविधिस्तावत् नाविहितमध्ययनं प्रयुङ्क्ते। अध्ययनानधिकारिणां तत्र प्रयोजनशून्यतया आचार्यगुणभावेन प्रवृत्त्योगात्। अथ विहितमेवाध्ययनं प्रयोजयति, तत्र वक्तव्यम्—किं विधिः स्वरूपनिर्धारणोपाधित्वेन अधिकारिणं विषयं चापेक्षते न वा इति। स्वरूपोपाधितया विषयमपेक्षते न अधिकारिणं प्रवर्तकत्वोपाधित्वादधिकारिणः इति चेत् तर्हि अस्य अयं विधिरिति विहितस्य अध्येतृविशेषस्य अपरिज्ञानात् यं
225 - 4 कंचिदध्यापयेत्। तदाह–माणवको न नियुक्तो भवतीति। अथ स्वरूपोपाधि-

---

ता. ननु तस्य आचार्यत्वं [न] सिद्धमित्यत आह — आचार्येति। अध्यापनविधिप्रयुक्तिवादिनापि विहितमेव अध्ययनमध्यापनविधिः प्रयोजयतीति वाच्यम्, विधिश्च अधिकारिण एव सम्भवतीति स्वविधिप्रयुक्तत्वसम्भवात् न विध्यन्तरापेक्षेति दर्शयति—अयमभिसन्धिरिति। अध्ययनानधिकारिणाम्। अध्ययननियोगेन अप्रेरितानामित्यर्थः। स्वरूपनिर्धारणोपाधित्वेनेति। निर्धार(णोपच्छेदक)[णहेतु]त्वेनेति यावत्। अनेन इदं कर्तव्य-

---

भा. माचार्यत्वम्। न वा तत्कामनाधिकारमध्यापनमियं श्रुतिर्दर्शयतीत्यभिप्रेत्याह —तस्मादाचार्यकरण(काम)[विधि]प्रयुक्तिरयुक्तेति ॥

यं कश्चिदध्यापयेदिति। न कम[प्य]ध्यापयेदित्यर्थः। कार्यं श्रेयस्साधनत्वं वा प्रतिपद्य मदीयमिदमिति प्रतिपत्तिपूर्विका प्रवृत्तिर्वक्तव्या। अध्ययने च त्वन्मते तदभावान्न कोऽपि प्रवर्तेत। अत आचार्यः कं प्रवर्तयेत्। न च राजा भृत्यमिव विष्टिगृहीतमाचार्यो माणवकं प्रवर्तयतीति वाच्यम्। विष्टि-

त्वेनैव अधिकारिणमपेक्षते विधिः; तर्हि सिद्धमध्ययनविधेः साधिकारत्वम्। तत्र प्रकरणादुपनीतोऽधिकारी सम्पद्यते। साधिकारत्वे च अध्ययनविधेः प्रयोजयितृत्वमपि सिध्यति, परप्रयुक्तानुष्ठानसम्भवे साधिकारोऽपि विधिर्न प्रयोजयतीति चेत्, तत्राह— अनियुक्तस्य च स्वाध्यायाध्ययन इति। अनियुक्तस्येति स्वाधिकारविधिनैव अप्रवर्तितस्येत्यर्थः॥ 225 - 4

नन्वु एकस्मिन् अप्रवर्तमानेऽप्यन्यः प्रवर्तिष्यत इति स्रोतोरूपेण अध्यापनस्य सिद्धिरिति। न—उपनेतृत्वस्यापि तदङ्गत्वात्। स्वात्मनैव उपनीतमध्यापयेत्, नान्येन उपनीतम्। अन्यथा अङ्गवैकल्यात् अधिकारानिष्पत्तेराचार्यत्वफलासिद्धेः। तर्हि अन्यानप्युपनीय अध्यापयेत्। तन्न। सर्वे च माणवका न प्रवर्तन्ते निष्प्रयोजनव्यापार इति नाध्यापनं सिध्यति। ननु बालकस्य कथं स्वाधिकारप्रतिपत्तिः? सन्ध्योपासनसमिदाहरणादिकर्तव्यताप्रतिपत्तिवत् उपदेशसामर्थ्यात् अध्ययनकर्तव्यताप्रतिपत्तिरिति न विरोधः॥

मिति अधिकारिविषयाभ्यां विधिरूपं निर्धार्यते, तेन अधिकारिविषयौ विधिस्वरूपनिर्धारणोपाधिभूतावित्यर्थः। ननु विध्युद्देशवाक्येऽधिकारी न श्रूयत इत्यत आह —**तत्र प्रकरणादिति**। ननु साधिकारत्वेऽपि अन्यत एव विधिः प्रवर्तते इत्यत्राह—**साधिकारत्वे चेति**। **अधिकारानिष्पत्तेरिति**। नियोगानिष्पत्तेरिति यावत्॥ ता.

गृहीतस्याप्य[ना]गमने अ[न]र्थो भवतीति तत्परिहारोपायताज्ञानस्य सत्त्वात्। भा.
माणवकस्य तु प्रवृत्त्यभावापेक्षया प्रवृत्ताविन्धनतृणोदकाद्यानयनदुःखपूर्विकायामधिकोऽनर्थ इति स्वव्यापारविधिज्ञानाभावे न कोऽपि प्रवर्तेतेत्यर्थः। **सन्ध्योपासनेति**। यथा माणवकस्यासमर्थत्वेऽपि तद्व्यापारं विधिप्रयुक्तमेवेक्षमाणाः पित्रादयो माणवकं प्रवर्तयन्तीति न त(स्यानु)[स्य न] विधिप्रयुक्तिः, एवमध्यापनेऽपीति न कथमप्यध्यापनविधिप्रयुक्तिरित्यर्थः॥

ननु उपाध्यायकर्तृकाध्यापनमेव वृत्त्यर्थत्वेन स्मरणादनित्यं न त्वाचार्य-

किं च, अनित्येन विधिना नित्यस्य अध्ययनस्य अनुष्ठाने तदु-
225-5 परमे नित्यमध्ययनं सम्पादयितुं न शक्यत इत्याह—किं चान्यत्—आचार्य-
करणविधिरिति । अयमाशयः—काम्यमानमाचार्यत्वं न तावत् स्वयमेव
पुरुषार्थः; परम्परया च सुखदुःखप्राप्तिनिवृत्त्योरेव पुरुषार्थत्वात् । तत्र
आचार्यत्वस्य अध्यापनमात्रस्य वा प्रयोजनाकाङ्क्षायां दृष्टे सत्यदृष्ट-
कल्पनानुपपत्तेः द्रव्यार्जनोपायत्वेन 'षण्णां तु कर्मणामस्य त्रीणि
कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति
स्मरणात् माणवकस्य च अध्ययनाङ्गत्वेन गुरुदक्षिणादिविधानात्
अङ्गिन्यध्ययने अनुष्ठापकस्य अध्यापनविधेर्दक्षिणाशुश्रूषाद्यङ्गेष्वनुष्ठाप-
कत्वात् द्रव्यार्जनमेव प्रयोजनम् । तत्र प्रयोजनवत्तया काम्यत्वात्
न नित्यवत् प्रयोक्तृत्वसिद्धिरिति ॥

225-7 उपगमनाध्ययने तर्ह्यनित्ये इति; नेत्याह—उपनयनाख्यस्तु
संस्कारो नित्य इति। ननु प्रायश्चित्तस्याप्यकरणे दोषः श्रूयते—'अतीते
चिरकाले तु द्विगुणं व्रतमर्हति' इति, तत्र कथं प्रत्यवायश्रवणादुप-
नयनस्य नित्यता? इति। उच्यते—न प्रायश्चित्ताकरणनिमित्तदोष-
निरासाय द्विगुणं व्रतमुच्यते। किन्तु प्रायश्चित्तेन निराकर्तव्यस्य पूर्व-
दोषस्यैव अतीतचिरकाले द्विगुणव्रतापेक्षयैव निरास इत्युच्यते। अन्यथा
प्रायश्चित्तानवस्थाप्रसङ्गात् । ननु उपनयनसंस्कारस्य नित्यत्वेऽप्यध्यय-
226-3 नस्य कथं नित्यतासिद्धिः? इति; तत्राह—संस्कारश्चेति । अङ्ग्यु-

---

भा. कर्तृकमपीत्याशङ्क्याह—अयमाशयः—काम्यमानमाचार्यत्वमिति। 'याज-
नाध्यापने चैव' इत्यादिस्मृतावध्यापनमात्रस्यैव वृत्त्यर्थत्वप्रतिपत्तेः । 'योऽध्याप-
यति वृत्त्यर्थमुपाध्यायः सः' इति स्मृतेरन्यतस्सिद्धवृत्त्यर्थानुवादेनैकदेशनिमित्त-
संज्ञाकल्पनातत्परत्वात्, अध्यापनस्य फलापेक्षस्य धनप्राप्तिफलातिरिक्तफला-
सम्भवात्, अध्यापनमात्रं वृत्त्यर्थमेवेत्यनित्यमित्यर्थः ॥

पाधिविहितत्वादङ्गस्य उपहिताङ्गनित्यता स्वोपाधेरध्ययनस्यापि नित्यत्वं कल्पयतीति ॥

ननु अध्ययनमनारभ्य अधीयमानमुपनयनफलं कथमध्ययनाङ्गं स्यात्। न च उपनयनसंस्कारविधिमात्रमेव अनुपपत्त्या शेषित्वेनाध्ययनं कल्पयति। श्रुत्यादिविशेषसम्बन्धनिमित्तप्रमाणाभावे अध्ययनविशेषेण सम्बन्धासिद्धेः। यथा 'हिरण्यं भार्यम्' इति विधिः प्रतीतितो हिरण्यसंस्कारार्थोऽपि श्रुत्यादिविशेषसम्बन्धप्रमाणाभावात् संस्कार्यहिरण्यपदार्थसामर्थ्यात् क्रतुसम्बन्धे सर्वक्रतुसम्बन्धप्रसङ्गात् एकस्य संस्कारस्य सर्वक्रतूपकारित्वानुपपत्तेश्च अन्याङ्गतामनश्नुवानः संस्कारकर्मत्वं परित्यज्य अभ्युदयफलः स्वतन्त्रो विधिरभ्युपगतः, एवमुपनयनविधिरपि श्रुत्यादिप्रमाणविरहात् संस्कार्यमाणवकसामर्थ्यात् क्रतुसम्बन्धे सर्वक्रतुसम्बन्धप्रसङ्गात् अन्याङ्गतामनश्नुवानः संस्कारकर्मत्वं परित्यज्य स्वतन्त्र एव अभ्युदयफलः स्यात्। कर्मस्वरूपविधिर्हि सर्वः स्वभावसामर्थ्यादेव अङ्गाङ्गिभावं सामान्येन प्रमिमाणः श्रुत्यादिसहकृत

---

अङ्ग्युपाधीति। अध्ययनमङ्गि, अङ्गं च उपनयनम्, तच्चोपनयनं नित्यम्, तदिदमध्ययनस्याङ्गिनो नित्यतां कल्पयति, स्वव्यावर्तकाङ्गिनित्यत्वं विना तेन विशेषिताङ्गस्य नित्यतानुपपत्तेरित्यर्थः। विनियोजकप्रमाणादेरभावात् उपनयनस्य अध्ययनाङ्गत्वमनुपपन्नमित्याक्षिपति—**नन्वित्यादिना**। **श्रुत्यादीति**। संस्कारविध्यन्यथानुपपत्तिरङ्गिनमाक्षिपति न तु अध्ययनमेव, तत्र प्रमाणाभावादित्यर्थः। तर्हि संस्कारविधेः का गतिरित्याशङ्क्य, दृष्टान्तेन तस्य अभ्युदयफलत्वमुपपादयति—**यथा हिरण्यमिति**। तर्हि संस्कारार्थ एव किं न स्यात्? इत्यत आह—**श्रुत्यादीति**। ननु संस्कारस्य हिरण्यपदार्थद्वारा क्रतुसम्बन्धः कल्प्यतामित्याशङ्क्याह—**संस्कार्येति**। भवतु सर्वक्रत्वर्थ इति, तत्राह—**एकस्येति**। दार्ष्टान्तिकमाह—**एवमिति**। ननु कर्मस्वरूपविधिसामर्थ्यादेव विशेषसम्बन्धोऽपि प्रमीयतामित्याशङ्क्याह—**कर्मस्वरूपेति** ॥ ता०

एव विशेषसम्बन्धं प्रमिमीत इति नोपनयनस्य संस्कारकर्मता सिध्यतीति ॥

अत्रोच्यते—अध्ययनविधिरेव श्रुत्यादिप्रमाणानपेक्षतया चातुर्थिकेन प्रमाणेन उपगमनमात्मीयाङ्गत्वेन स्वीकरोति। 'आचार्याधीनो वेदमधीष्व' इत्यादिनियमविधानात् लिखितपाठादिप्रतिषेधे सत्याचार्योपगमनमन्तरेण माणवकाध्ययननिर्वृत्त्ययोगात्। ननु दृष्टमाचार्योपगमनमध्ययनविधिसामर्थ्यादुपादीयताम्, अदृष्टस्तूपनयनसंस्कारः कथमङ्गतयोपादीयते? इति। उच्यते—आचार्योपगमनविधिरेव नानाविधेतिकर्तव्यताकलापानुगृहीतः अदृष्टं संस्कारमुत्पादयति। स च विधिः विधिप्रयुक्तप्रयोजनमीक्षमाणो दृष्टोपगमनद्वारेण अध्ययनविध्युपकारे सम्भवति नादृष्टं कल्पयति। दृष्टे सत्यदृष्टकल्पनानुपपत्तेः। दृष्टफला-

ता. श्रुत्यादिप्रमाणाभावेऽपि विध्याक्षेपलक्षणोपादानप्रमाणेनोपनयनस्याध्ययनाङ्गत्वं सिध्यतीति परिहरति—**अत्रोच्यत इति**। उपादानप्रमाणमेव दर्शयति—**आचार्याधीन इति**। उपगमनविधिसामर्थ्यादेव अदृष्टसंस्कारसिद्धौ दृष्टोपगमनद्वारेण च तस्योपकारित्वसिद्धेः(न)लौकिकमेवोप[गमनमध्य](न)यनाङ्गमिति परिहरति—**उच्यत इति**। ननु पूर्वं विधेरदृष्टं फलमित्युक्तं इदानीं दृष्टं फलमिति पूर्वापरविरोध इत्याशङ्क्याह—**दृष्टफलातिशये इति**। दृष्टं फलं यस्योपगमनस्य तस्मिन् अदृष्टमतिशयः तस्मिन् संभवतीति योजना। उक्तमेवार्थं

भा. **चातुर्थिकेनेति**। गुरुमते हि चतुर्थाद्येन अभिधानाभिधेयापर्यवसानात्मकमुपादानं व्युत्पादितम्। तेन प्रोक्षणादीनां करणे शेषत्वं यथा एवमुपनयनस्याप्यध्ययनशेषत्वमस्तीत्यर्थः ॥

ननु प्रोक्षणादेः प्रकरणाधीतस्य ग्राहकान्वये सति अकरणस्य करणीयत्वं विना ग्रहणीयताया अनिर्वाहादुपादानात्तत् सिध्य(ती)ति। न च एवमुपनयनमध्ययनप्रकरणाधीतम्। अतोऽध्ययननियोगस्य तेन विना अपर्यवसानाभावान्नेदमौपादानिकम्। न च अप्रकरणाधीतस्यापि स्वर्गकामस्य विश्वजिदुपादानात् तत् सिध्यति, न च एवमुपनयनवि[धि]कल्पना अस्ति तद्वदिहापि स्यादिति वाच्यम्;

तिशये अदृष्टे संभवति स्वतन्त्रादृष्टकल्पनानुपपत्तेरित्यर्थः। तदेवमध्ययनविधिसामर्थ्यादुपादीयमाने सत्याचार्योपगमने तदाश्रितोपनयनविधिजन्यसंस्कारस्यापि तद्द्वारेणाध्ययनविधिसम्बन्धस्योपनयनविधिसामर्थ्यादेव सिद्धेः उभयविध्युपादानसामर्थ्यात् अध्ययनाङ्गमुपनयनमिति सिद्धम् ॥

---

ता. स्पष्टीकुर्वन् उपसंहरति—**तदेवमिति**। **उभयविध्युपादानेति**। अध्ययनविधिरुपगमनमाक्षिपति, उपनयनविधिश्च तस्मिन्नेवोपगम(न)[ने संस्कार]माक्षिपतीत्यर्थः ॥

---

भा. इह हि उपादानाच्छेषत्वं कल्प्यते। विश्वजिदुपादानाद्विषयानुष्ठानायापेक्षितः कर्ता नियोज्यादृते न निर्वहतीत्यनुपादेयो नियोज्यः कल्प्यते। कार्यान्विते च नियोज्ये शाब्दे प्रमाणभेदोपादानसिद्धे नियोज्योऽपि प्रकरणाधीत एवेति तस्य कर्तृत्वेन शेषत्वं कल्प्यमानं प्रोक्षणादिजन्यशेषत्वतुल्यमेवेति नौपादानिकं शेषत्वं प्रकरणादृते सिध्यतीति। सत्यं—अत्रापि प्रकरणास्तित्वस्य वक्ष्यमाणत्वात्। (यथा च) [यच्च] आचार्याणां प्रकरणं नास्तीति कृत्वाचिन्तेयम्—यदौपादानिकत्ववर्णनमिति ; तन्न—औपादानिकशेषस्य प्रकरणाधीतत्वात, तत्कृत्वाचिन्ताभिप्राये च बीजं न पश्यामः। 'प्रकरणानुगृहीत एवोपनयनविधि'रिति वक्ष्यमाणविरोधाच्च। **अध्ययनाङ्गमुपनयनमिति**। ननु दृष्टोपगमनं भवत्वध्ययनाङ्गम्, (न च यागः,) [न तु अदृष्टार्थमपि,] तस्य निखिलकर्मशेषतया 'द्विजातीनामध्ययनमिज्या दानम्' इति स्मृत्या(पि) [वि]नियुक्तत्वात्। अत एव अभक्ष्यभक्षणेन दुष्टदेशादिगमनेन वा संस्कारविनाशे पुनरुपनयनं कर्माधिकारसिद्ध्यर्थं विधीयते। नं च अध्ययनम्। न च अध्ययनाङ्गस्यैव तस्य सर्वार्थत्वमिति वाच्यम्; अङ्गिनि सिद्धे अङ्गे संस्काराणां विनाशादिति चेत्। सत्यम्—उपनयनसंस्कारस्य अध्ययनद्वारैव सर्वार्थत्वं स्मृत्यर्थः ; न तु साक्षात्। दृष्टपरम्परया सर्वार्थत्वे सम्भवति प्रमाणसिद्धाध्ययनाङ्गत्वविरुद्धस्य साक्षात् सर्वकर्मार्थत्वस्य कल्पनानुपपत्तेः। पुनरुपनयनं तु दोषविघातार्थम्, तत्संयोगे सत्येव बोधितत्वात्। न तु साक्षादधि-

**ननु उपनयनस्य संस्कारकर्मतायां सिद्धायां संस्कारविधेः प्रयोजनाकाङ्क्षा, ततश्च अध्ययनविध्याक्षिप्ताचार्योपगमनदृष्टद्वारेण उपनयनविधिरध्ययनाङ्गतामात्मनः सामर्थ्यात् प्रमिमीते। न च उपनयनस्य संस्कारकर्मत्वे प्रमाण[मस्ति]मिति। अत्रोच्यते—परस्परोपादानसामर्थ्यादेव उपनयनाध्ययनयोरङ्गाङ्गिभावे सिद्धे, किमुपनयनं प्रोक्षणादिवत् संस्कारकर्मतया अङ्गम्? किं वा प्रयाजादिवदध्ययनफलोपकार्यङ्गम्? इति विशये, संस्कारकर्मतया अङ्गत्वमुपादीयते। अङ्गिस्वरूपोपकारलाभात् सन्निपत्याङ्गत्वात्। फलोपकार्यङ्गानां विप्रकृष्टतया अङ्गत्वात्।**

---

ता. सत्यं उपनयनस्य संस्कारकर्मत्वे सिद्धे भवदुक्तं सिध्येत्, तदेव तु नास्ति प्रमाणाभावादिति शङ्कते—**नन्विति**। इदानीमुपनयनस्य परिशेषन्यायेन संस्कारकर्मत्वं दिदर्शयिषुः परिहरति—**अत्रोच्यत इति**। तत्रैव युक्तिमाह—**अङ्गिस्वरूपेति**। स्वसमवायिन उत्पत्तिं प्राप्तिं विकृतिं संस्कृतिं वा कुर्वत् प्रधानस्योपकरोति यत् तत् सन्निपत्योपकारकमिति स्थितिः, तदेवात्र स्वीकर्तव्यमभ्यर्हितत्वादित्यर्थः। **विप्रकृष्ट[तयाङ्ग]त्वादिति**। स्वसमवायिन्युपकारजननं विनैव अपूर्वद्वारेण प्रधानोपकारकत्वादित्यर्थः॥

---

भा. कारार्थम्, तत्र प्रमाणाभावादिति नाध्ययनाङ्गत्वं विरुध्यते। न च एवं 'पञ्चमे ब्रह्मवर्चसकामः' इति फलश्रवणविरोधः, तस्य पञ्चवर्षा*फलत्वादिति भावः। **न च उपनयनस्य संस्कारकर्मत्वे प्रमाणमस्तीति**। यद्यपि 'ब्राह्मणमुपनयीत' इति द्वितीयाश्रुत्या तस्य संस्कार्यत्वं प्रतीयते; तथापि सिद्धान्ते आचार्यव्यापारे विध्यनभ्युपगमात् माणवकव्यापारस्य विधित्सितस्य माणवककर्मकत्वाभावात् न तस्य संस्कारकर्मत्वमित्यर्थः। सत्यं द्वितीयया न उपनयन[स्य]संस्कारकर्मत्वमवगम्यते, तथापि तस्य न्यायतः संस्कारकर्मत्वमेव दीक्षादेरिव युक्तमित्यभिप्रेत्य तमेव न्यायमाह—**अङ्गिस्वरूपोपकारेति**। अलौकिकाध्ययनस्वरूपं लिङ्गावगतदृष्टोपादेयप्रत्यासत्त्युपनयनसंस्कारायत्तमिति प्रधानप्रत्यासत्तेः संस्कारकर्मत्वमुचितमित्यर्थः॥

---

* अत्र ग्रन्थे त्रुटिः।

विप्रकर्षात् सन्निकर्षग्रहणस्य युक्तत्वात्। अतो माणवकसंस्कारतया उपनयनमध्ययनस्वरूपोपकार्यङ्गमुभयविध्युपादानसामर्थ्यात् सिद्धम्। किं च 'अष्टवर्षो ब्राह्मण उपगच्छेत् सोऽधीयीत' इति वाक्यविपरिणामस्य वक्ष्यमाणत्वात् तच्छब्दश्रुतिरेव उपनयनसंस्कृतं माणवकमादाय स्वाध्यायाध्ययने नियुङ्क्ते इति श्रुत्यनुगृहीत एव उपनयनविधिरध्ययनाङ्गतामात्मनः प्रतिपादयति। तच्छब्देन संस्कारो न परामृश्यते किं तु माणवक एवेति न युक्तं वक्तुं। अनन्तरप्रकृतत्वात् संस्कारस्य, उपनयनाध्ययनयोः परस्परसाकाङ्क्षत्वस्य दर्शितत्वात्, आकाङ्क्षितसमर्पणत्वाच्च श्रुतेः, अविभक्तेरपि प्रातिपदिकस्य अन्विताभिधायितया सम्बन्धप्रतिपादकत्वात्। तस्मात् श्रुत्यनुगृहीत एव विधिः अङ्गाङ्गिभावं प्रमिमीत इति। किं च—वाजसनेयिनां सर्वस्मृत्यनुमितश्रुतिषु च

---

ता. न केवलमुपादानप्रमाणादेव अध्ययनाङ्गत्वम्, किन्तु श्रुतितोऽपीत्याह—**किञ्चेति**। ननु 'सोऽधीयीत' इति तच्छब्दश्रुत्या माणवक एव परामृश्यते न संस्कार इत्याशङ्क्य परिहरति—**तच्छब्देनेति**। **अनन्तरप्रकृतत्वादिति**। 'ब्राह्मण उपगच्छेत्' इत्यत्र केवलात् ब्राह्मणात् [अ]व्यवहितः उप(गम्यते)[नयनसंस्कृत] इत्यर्थः। ननु आकांक्षाऽभावे कथमन्विताभिधानम्? इत्यत आह—**उपनयनाध्ययनयोरिति**। ननु 'सोऽधीयीत' इत्यत्र संस्कृतः प्रातिपदिकार्थ एव, न तु विभक्त्यर्थः, ततश्च प्रत्ययार्थोपसर्जनत्वात् तस्य अध्ययने नान्वयः इत्याशङ्क्याह—**अविभक्तेरपीति**। अन्विताभिधायित्वाभावे प्रयोगस्यैव अयोगात् प्रातिपदिकार्थ-

---

भा. अत्रापि प्रकरणमस्तीति यदुक्तं तदाह—**किञ्च—वाजसनेयिनामिति**। 'ब्रह्मचर्यमागाम्' इति प्रस्तुत्य 'य एवं विद्वान् स्वाध्यायमधीते.... तस्मात् स्वाध्यायोऽध्येतव्यः' इति श्रूयते। ननु इदं ब्रह्मयज्ञं प्रस्तुत्य श्रूयमाणं कथं गुरुमुखाध्ययनं स्यात्?। सत्यम्—अध्ययनासंस्कृतस्वाध्यायेन जपस्वाध्यायायोगादित्युपनीतस्य तदेवात्र विधीयते। तदुक्तं **वेदभाष्ये**—'एवं विद्वा'निति—वागादेर्जुह्वादिसम्पत्तिपुरस्सरं वेदाध्ययनस्य यज्ञरूपतां जानन्नित्यर्थः। इत्थं

**उपनयनं प्रकृत्याध्ययनविधानात् फलवदध्ययनप्रकरणानुगृहीत एव**
226 - 3 **उपनयनविधिरध्ययनाङ्गतामात्मनः प्रतिपादयति। तस्माद्युक्तं**—संस्कारश्च स्वाध्यायाध्ययनार्थ इति ॥

**ननु काम्यत्वेऽपि आचार्यकरणविधिः नित्यसमीहितफलत्वात् नित्य एव, ततश्च न नित्यानित्यसंयोगविरोध इति चोदयति—**
226 - 6 ननु कथमाचार्यकरणेत्यादिना। **फलस्य नित्यसमीहितत्वमङ्गीकृत्य**
226 - 10 **परिहरति**—भवेदेवं नित्यता फलवशेन न शब्दादिति। **ननु फलसामर्थ्याद्वा शब्दसामर्थ्याद्वा अनुष्ठेयं नित्यकर्तव्यं चेत् किं प्रमाण-**
226 - 10 **विशेषेण हीयते इति; तत्राह**—तथाहि—फलस्य नित्यसमीहितत्वादिति। वास्तवी—**फलवस्तुसामर्थ्यनिबन्धनेत्यर्थः। ननु अध्यापने क्वचित् फलसाधनकामनाधीना कर्तव्यताप्रतिपत्तिः, अन्यत्र तु शाब्द-कर्तव्यताप्रतिपत्त्यधीना अध्यापने फलसाधनेच्छा, किमत्र अध्या-**
227 - 2 **पनस्य नित्यकर्तव्यताप्रतिपत्तेरायातमिति; तत्राह** — शाब्द्यां हि नित्यकर्तव्यताप्रतिपत्ताविति। **अस्त्यत्र विशेषः। कथम्?। अध्यापनविधिर्हि शब्दान्नित्यतया प्रतिपन्नो विशेषेण स्वाधिकारोपाधौ सर्वदा सर्वान् प्रत्यनुष्ठेयेच्छामुत्पाद्य प्रवर्तयति। प्रामाणिककर्तव्यताप्रतिपत्तेः**

---

**ता.** स्याप्यन्वयोऽस्तीत्यर्थः। अङ्गीकृत्य **चैतदुक्तम्**, प्रथमाविभक्तेः प्रातिपदिकार्थमात्रे विधानात् प्रकृत्यर्थान्वये प्रत्ययार्थान्वयस्यापि सिद्धत्वादित्यपि द्रष्टव्यम्। तर्हि उपनयनाङ्ग[त्व]मध्ययनस्य किं न स्यात्? इत्यत आह—**फलवदिति। क्वचिदिति।** आचार्य(लक्ष)[कर]णविधिप्रयुक्तिपक्षे। **अन्यत्र त्विति।** अध्यापनविधेः नित्यत्वपक्षे। **स्वाधिकारोपाधाविति।** ब्राह्मण्यादौ विधिसम्बन्धनिमित्ते सतीत्यर्थः। तत्रैव हेतुमाह—**प्रामाणिकेति ॥**

---

**भा.** प्रेक्षावत्प्रवृत्तितत्प्रयोजकफले प्रतिपाद्य तद्धेतुभूतमध्ययनं विधत्ते—'तस्मात् स्वाध्यायः' इति। यस्मादेवं ब्रह्मयज्ञस्वाध्यायस्य एतावत् फलं तस्मात् स्वाध्यायोऽध्येतव्यः—गुरुमुखादवगन्तव्यः, अध्ययनसंस्कारसंस्कृतो हि तावत्फलं साधयितुं शक्नोति, न तु प्रकारान्तरावगतः इति विधेरभिप्रायः' इति ॥

स्वोपाधौ संकोचाभावात् । इच्छाधीने तु कर्तव्यतावगमे तत्सङ्कोचादेव कर्तव्यतावगमसङ्कोचात् न नित्यवदध्यापनसिद्धिरिति ॥

ननु प्रामाणिकनित्यकर्तव्यताधीनापि इच्छा क्वचिद्देशे काले वस्तुनि च कारकसामर्थ्याभावादिवशेनौचित्यात् प्रतिहन्यते । तत्र कथं नित्यकर्तव्यताधीननित्येच्छाद्वारेण नित्यवदनुष्ठानम् ? इति ; तत्राह—
औचित्यादिभावेऽपीति । प्रमाणतस्तावन्नित्योऽध्यापनविधिः प्रत्यवाय- 227 - 4
भयादेव यावच्छक्यमिच्छादिद्वारेण अधिकारिणमनुष्ठापयतीत्यर्थः ।
तेनेति स्पष्टार्थः । ननु प्रमाणतो विधिनित्यत्ववत् इच्छातोऽपि कर्तव्य- 227 - 5
तानित्यत्वं किं न स्यात् ? इति ; नेत्याह—फलवशात्तु तत्कर्तव्यताप्रतिपत्ता- 227 - 6
विति । [अतः]अनित्यैव सा स्यादित्यध्याहारः । ननु अर्थस्य नित्यसमी-
हितत्वात् कर्तव्यताप्रतिपत्तिनिमित्तकामोऽपि नित्य एवेत्यत आह—
यद्यपीति । उपेयनित्यत्वेऽपि उपायभेदात् अध्यापनकर्तव्यताप्यनित्यै- 228 - 1
वेत्यर्थः । ननु कस्यचित् उपायान्तरासमर्थस्य तदेकोपायत्वात् नित्य-
कर्तव्यतेति ; तत्राह—तदेकोपायत्वेऽपीति । अतो नित्यानित्यसंयोग- 228 - 2
विरोध इति ॥

---

ननु प्रतिबन्धादिना प्रामाणिकनित्यकर्तव्यताप्रतिपत्तावपि इच्छायाः सं- ता.
कोचो दृश्यत इति शङ्कते—**ननु प्रामाणिकेति** । नित्यस्य प्रयोज्यत्वमुपपद्यत इति तस्योपसंहारभागं पूरयति—**अतोऽनित्यैवेति** ॥

---

नन्वेतावतापि नाभिमतसिद्धिः, प्रकरणेन अवघातादिसंस्काराणां भा.
ग्राहकसम्बन्धे सिद्धे श्रुत्यादिना च तदीयद्वारशेषत्वेऽवगते उपादानात् तेषामकरणभूतानां करणशेषत्वमवगम्यते । न च उपगमनस्य द्वारनियोजकं श्रुत्याद्यस्ति । न च उपगमनस्य उपगन्तृशेषत्वं लिङ्गादवगम्यते तस्य तस्माच्च आचार्यप्रत्यासत्तिरूपातिशयजनकत्वादिति वाच्यम् । उपगन्तुः प्रकरणे अनवगतस्य ग्राहकीयत्वाभावात् । न च प्रयाजादीनामिव श्रुत्यादिकं विनैव करणीयत्वमस्त्विति वाच्यम् । आरादुपकारकाणां हि प्रकरणं विनियोजकम् । अन्यथा अवघातादीनामपि प्रकरणादेव करणीयत्वं किमिति न भवेत् । उपगमनं तु

इदानीं स्वतो नित्यत्वाभावेऽपि नित्यपुत्रोत्पादनविधिशेषतया उपनयनाध्यापनयोः नित्यत्वात् न नित्यानित्यसंयोगविरोध इति
228 - 5 चोदयति–ननु पितुः पुत्रोत्पादनविधिरिति। तत्र पुत्रोत्पादनविधेः पितॄणां परलोकगतानामस्मिन् लोके पिण्डपितृयज्ञाद्यनुष्ठानद्वारेण तृप्तिसम्पादनं प्रयोजनम्। न च उपनयनाध्यापनार्थज्ञानादिव्यतिरेकेण अनुष्ठानं सम्भवति। ततश्च नित्यस्य पुत्रोत्पादनविधेः फलपर्यन्ततापेक्षितमनुशासनं तच्छेषतया विदधाति 'तस्मात् पुत्रम्' इति वाक्यम्। ततश्च पितुरेव नित्यपुत्रोत्पादनविधिसामर्थ्यात् उपनयनाध्यापनादिविधीनां नित्यत्वं प्राप्तम्। ततश्च अर्थज्ञानपर्यन्तत्वात् अनुशासनस्य अध्ययन-
228 - 9
229 - 1 मपि अर्थज्ञानफलमित्याह—कथं वा अध्ययनस्येति। परिहरति— नानेन पुत्रानुशासनं विधीयत इति। 'अथातः संप्रत्तिः यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः' इति वेदतदर्थतफलानां स्वानुष्ठेयानां पुत्रे समर्प्यमाणानां 'स पुत्रः प्रत्याह अहं ब्रह्माहं यज्ञोऽहं लोकः' इति पुत्रेण अनुष्ठेयतया स्वीकरणं संप्रत्तिकर्म। तत्र च पूर्वानुशासनमन्तरेण अकस्मादेव सकलकर्तव्यसंग्रहानुपपत्तेः फलपर्यन्तपुत्रोत्पादनविधिना आक्षिप्तमनुशासनं पूर्वनिर्वृत्तमेव अर्थवादतया अनुवदत्येतद्वाक्यमिति भावः। मा भूत् तदेतद्वाक्यमनुशासनविधायकम्, तथापि

---

ता. प्रैष्यन् मन्यत इति। अरिष्टादिदर्शनेन स्वात्मनः परलोकगमनं निश्चिन्वन्निति यावत्। ननु अध्यापनविधेर्नित्यत्वेऽप्यध्ययनविधेः प्रकारान्तरेण

---

भा. सन्निपाति। अतो नोपगमनस्यौपादानिकं विधिशेषत्वं सम्भवतीति चेत्—अध्ययनविधिसामर्थ्यादेव सामान्यतः कर्तुः प्रमितत्वेन उपगमनस्य लिङ्गात् ग्राहकीयकर्तृशेषतया अवगतस्य उपादानात् करणशेषत्वकल्पनोपपत्तेः। न च प्रकरणे पठित एव कर्ता संस्कारैरन्वीयत इति नियमोऽस्ति, विश्वजित्कर्तुरातिदेशिकैर्दीक्षादिसंस्कारैः आतिदेशिकस्य होत्रादेरौपदेशिकैर्हिरण्यमालादिसंस्कारैश्च अनन्वयप्रसङ्गात्। (अथ)[अतः] उपादानाद्विश्वजितः स्वर्गकाम इव

नित्यपुत्रोत्पादनविधिसामर्थ्यादेव पितुरुपनयनाद्यनुशासनविधिर्नित्य
एव प्राप्त इति ; तत्राह—गर्भाष्टवर्षेणेत्यादिना । अयमर्थः—नित्यपुत्रो- 229.9
त्पादनविध्यधिकारिणः पितुः आयुर्नियमाभावात् अनुशासनपर्यन्तमव-
स्थानानुपपत्तेः कर्तव्यार्थोपदेशनमेव अनुशासनम् , नानुष्ठापनम् , अतो
नित्यपुत्रोत्पादनविध्याक्षिप्ततयापि नोपयनादिविधेर्नित्यतेति । ननु
पितुः कर्तव्योपदेशनमेव अनुशासनं नोपनयनाद्यनुष्ठापनमिति कथमव-
गम्यते ? तदाह—तथा च लिङ्गम्—श्वेतुकेतुरिति । ततश्च नित्यानित्य- 229.11
संयोगविरोधः तदवस्थ एवेत्याह—तदेवमनित्येनेति ॥ 230.3

ननु माणवक एव एकस्मिन्नाचार्ये मरणादिना निवृत्ते पुनराचार्या-
न्तरमाहूय नित्यमध्ययनं सम्पादयिष्यतीति ; नेत्याह—किं च आचार्ये 230.4
प्रेत इति । न तावन्माणवकः स्वनियोगेन प्रेर्यमाणः स्वाधिकारं निर्वर्त-
यितुमाचार्यान्तरं सम्पादयति । अनङ्गीकरणात् । नापि आचार्यनियो-
(गम्)गेन । अधिकारिणः अभावे नियोगस्य कर्तव्यताप्रतिपत्त्य भावात् ,
अकर्तव्यानुष्ठानाय साधनसम्पादनायोगादिति । ननु साधनान्तरप्रति-
निध्युपादानवत् अधिकारिणोऽपि प्रतिनिध्युपादानेन कर्तव्यं माणवकः
सम्पादयेदिति ; नेत्याह—न चा[ह्य]धिकारी प्रतिनिधीयत इति । अवश्य- 230.5

---

ता. नित्यत्वं भविष्यतीत्याशङ्कते—नन्विति । अनङ्गीकरणादिति । माणवकं प्रत्यध्ययनवि(धौ)[धेः] अध्यापनविधिवादिना अनङ्गीकरणादित्यर्थः । नाप्याचार्यनियोगम् । निर्वर्तयितुमिति शेषः । अधिकारिप्रतिनिध्यभावे युक्ति-

---

भा. अध्ययनेऽप्युपनीतोऽधिकारी प्रतीयते । अत्र साधितस्यैवाग्रे सिद्धवन्निर्देशान्न पुनरुक्तिः । प्रकरणं तु स्वतन्त्रमेव विनियोजकमस्तु । अवघातादीनामपि प्रकरणात् करणशेषत्वस्य भट्टप्रस्थानानुसारिभिराश्रितत्वात् । तदुक्तम्—'अवघातादीनामपि क्रतुभावनेतिकर्तव्यताभूतानां क्रत्वर्थत्वम्' इति । 'असंयुक्तं प्रकरणात्' इति सूत्रं श्रुत्यादिभिरविनियुक्तमपि प्रकरणाद्विनियुज्यत इत्येवम्परतया तेनैव व्याख्यातमिति सर्वथाप्युपगमनमध्ययनाङ्गमिति ॥

कर्तव्यस्य ह्यननुष्ठाने प्रत्यवायात् तदनुष्ठानाय(हि)मुख्याभावे प्रतिनिधिरादीयते। अधिकार्यभावे ममेदमिति सम्बन्धानवगमादकर्तव्ये नियोगे कस्य अवश्यानुष्ठानाय प्रतिनिधिरादीयते। न तावन्मृतस्य ; तस्य विधिसम्बन्धनिमित्तनिवृत्तेः कर्तव्याभावात्। नापि प्रतिनिधेः आचार्यस्येदं कर्तव्यम् ; तस्य कर्तव्यसिद्ध्युत्तरकालत्वात्। तस्मान्नाधिकारिणः प्रतिनिधिसम्बन्धः। न तर्हि सर्वत्र प्रतिनिधिवार्तावकाश इति ; तदाह—
230 - 6 अधिकारी स्वाधिकारसिद्ध्यर्थमिति ॥

ननु आचार्ये प्रेते अन्यः कश्चिदाचार्यः स्वाधिकारं निर्वर्तयितुं माणवकं स्वीकरिष्यति, किं माणवकस्य आचार्यान्तरकरणव्यापारेण ? इति। न–पुनरुपनयनाभावात्। उपनेतृत्वस्याङ्गस्य आचार्यव्यापारस्य अभावे अङ्ग्यध्यापननिर्वृत्त्ययोगात्। माणवकान्तरे अङ्गं निर्वृत्तमिति चेत् ; तेनैव अध्यापनस्यापि सिद्धेर्न माणवकान्तरस्वीकारः। अनुपनीतं वा अध्यापयीत। अङ्गस्य निर्वृत्तत्वात्। वृत्त्युपचयार्थः संग्रह इति चेत्, न–दरिद्रस्य माणवकस्य अग्रहणप्रसङ्गात्। अल्पव्यवहितग्रामवासिनां च

---

ता. माह—अवश्यकर्तव्यस्येति। तस्येति। पूर्वाचार्यस्य यदि कर्तव्यता सिद्धा तदैव प्रतिनिधेराचार्यस्यापि कर्तव्यता सिध्यति, तदेव नास्तीत्यर्थः ॥

तत्किमन्योऽप्याचार्यः उपनीयाध्यापये(दित्थमेव)[त् अनुपनीयैव] वा ?। नाद्य इत्याह—[न] पुनरुपनयनेति। नापि द्वितीय इत्याह—उपनेतृत्वस्येति। दोषान्तरमाह—अनुपनी(तं चे)[तं वे]ति। स्वेनोपनीतमाणवकाध्यापनेन विधौ निष्पन्नेऽपि द्रव्योपचयाय माणवकान्तरसङ्ग्रह इति शङ्कते—वृत्तीति। अस्मिन् पक्षे लोकविरोधोऽपि स्यादित्याह—अल्प(दूर)[व्यवहित]ग्रामवासिनामिति। त्वन्मतेऽपि ग्रामान्तरगमनं किमर्थम् ? इत्यत आह—

---

भा. ननु आचार्यस्यैव अध्यापने उपगमनमङ्गं न तूपाध्यायस्य। न चैवं तस्य शूद्रादिसङ्ग्रहप्रसङ्गः तस्य निषिद्धत्वादित्याशङ्कयाह—वृत्त्युपचयार्थ इत्यादिना ॥

माणवकानामाचार्यसम्पादनाय ग्रामान्तरगमनं न स्यात्। न हि तत्र तत्राध्यापयितारः श्रोत्रियाश्च दृश्यन्ते। तथा च माणवकस्य उपनयनादिसिद्ध्यर्थं स्वयमेव आचार्यगमनं श्रूयते 'सत्यकामो ह वै जाबालो ....ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तम्' इत्यादिश्रुतौ। उपसंहरति—एवमेषा बहुदोषेति॥ 230 - 7

ननु स्वविधिप्रयुक्तत्वे सति उपगमनाध्ययनयोः तत्प्रयुक्ततया उपनयनाध्यापनसिद्धेः तत्र विधानमनर्थकमिति। नायं प्रयोजकव्यापारयोर्विधिः, किं तु उगमनाध्ययनयोः कर्तृव्यापारयोर्विधिरित्याह– 230 - 8
तस्मान्माणवकस्यैव नियोग इति। ननु णिजर्थसंसृष्टस्वार्थाभिधायिनि विधिपदे कर्तृव्यापारे विधिसंसर्गो वाक्यप्रमाणविरुद्ध इति चोदयति —कथं गुणकर्तृव्यापारसम्बद्ध इति। किं न्यायविरोध उच्यते? किं वा 230 - 8
शब्दविरोधः? न तावच्छब्दविरोधः अन्यत्रापि दर्शनादित्याह— यथैतया ग्रामकाममिति। नापि न्यायविरोधः प्राप्तानुवादेन अप्राप्त- 231 - 1
विधानादित्याह—ग्रामकामस्य यागो विधीयत इत्यादिना। ननु अध्यापन- 231 - 1
याजनयोः कर्तृप्रयोजकव्यापारद्वयावगमात् अन्यतरानुवादेन अन्यतरो

ता.

न हीति। न केवलं लोकव्यवहारविरोधः किन्तु वैदिकव्यवहारविरोधोऽपि तवास्तीत्याह—तथा चेति॥

उपनयनाध्यापनयोर्विधायकमेवेदं वाक्यं न भवति येनानर्थक्यं स्यात् किं (चा) [त्व]न्यपरमित्याह—नायमिति। कर्तृप्रयोजकव्यापारद्वयेति। अध्यय-

भा.

अत्रायं सङ्ग्रहः—न तावदर्थावबोधकामाधिकाराध्ययनविधिना माणवकस्याध्ययने प्रवृत्तिः। 'स्वाध्यायोऽध्येतव्य' इति वाक्यादश्रुतेः। न च अधिकारिसाकाङ्क्षेण विधिना दृष्टपक्षपातितया अर्थज्ञानकामाधिकारी कल्प्यत इति वाच्यम्। तव्यप्रत्ययोपात्तस्वाध्यायावाप्तिकामस्यैव तदा कल्पयितुमुचितत्वात्। न च तस्या अपुरुषार्थत्वान्न तत्कामोऽधिकारीति शङ्क्यम्। ज्ञान-

**विधीयत इति युक्तम्, उपनयने तु धात्वर्थस्य प्रयोजकव्यापारत्वात्**
231 - 4 **अनभिधीयमानः कर्तृव्यापारः कथं विधीयते? इति चोदयति**—युक्तं याजयेदित्यादिना ॥

**ननु उपनयने मा भून्माणवकव्यापारविधिः, अध्ययने**
231 - 11 **तु भविष्यति। तन्न—वाक्यसारूप्यादित्याह**—तदेवमाचार्यकरणविधिप्रयुक्तत्वादिति। **तत्र प्रयोजकव्यापाराभिधायिनापि नयतिधातुना माणवकव्यापारस्य अनभिधीयमानस्यापि गम्यमानत्वात् स एव धातुना**

ता. नाध्यापनयोः यजनयाजनयोश्च अवगमादित्यर्थः। उपनयने प्रयोजकव्यापारविधिश्चेदध्ययनेऽपि प्रयोजकव्यापार एव विधीयतामित्याह—**तन्नेति**। अभिधानतः

भा. स्यापि स्वतोऽपुरुषार्थत्वात्। प्रणाड्या तत्कल्पना तु प्रकृतेऽपि समाना। न च फलं प्रति प्रत्यासन्नत्वात् ज्ञानमेव विध्यभि[मतं] फलमिति वाच्यम्। फले व्यवहिताया अपि ग्रामादिवत् श्रूयमाणावाप्तेरेव पुरुषार्थत्वात्, अर्थज्ञानादिव्यवधानमन्तरेणापि जपादिना पुरुषार्थस्य प्राप्तुं शक्यत्वाच्च। विरक्तस्य प्रचुरधनस्य वा अनधिकृतकर्मभागस्य अध्ययने [च] प्रकारान्तराभावाच्च। अवाप्तस्वाध्यायफलत्वेन तस्यान्यथासिद्धस्य विध्यनभिहितत्वाच्च ॥

किं च, न प्रागर्थावबोधकामना सम्भवति। ननु वेदार्थः श्रेयस्साधनमिति आप्तमुखादवगमात् किमिति न कामना? इति चेत्, न हि ज्ञानमात्रमुद्देश्यम्; तस्यापुरुषार्थत्वादन्यतोऽवगतत्वाच्च। किन्तु तत्तद्वाक्यार्थविशेषज्ञानम्। न हि तदध्ययनात् प्राक् ज्ञातमस्ति, न वा तच्छक्यम्। न हि तत्तदधिकरणेन मीमांसाद्वयसाध्यं यत् फलवत् ज्ञानं तत् माणवकेन युगपत् क्रमेण वा प्राक् ज्ञातुं शक्यते। तदज्ञाने च किंकामनया[प्रवृत्तिः।]काम्यादिप्रवृत्त्यङ्गं कामनोपपादितैव। किं च, एवं सति अध्ययनात् प्राक् विचारेऽपि कश्चित् प्रागुक्तरीत्या प्रवर्तेतेति अथशब्दोऽपि धर्मजिज्ञासासूत्रस्थो विरुध्येत। स्वाध्यायशब्दवाच्यकृत्स्नस्वशाखाध्ययनस्य कस्मिंश्चिदपि वाक्यार्थे ज्ञानहेतुत्वासम्भवाच्च। तत्तद्वाक्यार्थविशेषज्ञानाय तत्तद्वाक्यविशेषाध्ययनविवक्षायां च अनन्तकरणभाव्यावच्छिन्नभावनाभेदाद्वाक्यभेदः स्यात् ॥

लक्षणया उपादाय विधीयते, न प्रयोजकव्यापारः, स्वयंप्राप्तेः इति परिहरति—उच्यते—माणवकस्यैवायमिति। ननु माणवकव्यापारो गम्यमानतया वा कथं प्रतीयते ? कथं वा प्रयोजकव्यापारः प्राप्तानुवादः ? इति चोदयति—कथम् ? यत्तावदिति। माणवकव्यापारस्य गम्यमानतामुपपादयितुं प्रथममाचार्यव्यापारस्य अविधेयतामुपपादयति—उपनयीतेत्यस्याभिधानतो न्यायतश्चेति। 'माणवकमुपनयीत' इत्युक्ते माणवकस्य स्वात्मसमीपगमनमभिधानतः प्रतीयते, न स्वस्य माणवकसमीपगमनम्। अन्यथा माणवकमुपगच्छेदिति वचनं स्यात्। न्यायतश्च प्रतीयते—यथा बालानक्षराणि शिक्षयन् लौकिकः पुरुषो न बालगुणभावं गच्छति, किं तु बालानेव स्वयमात्मगुणभावं नयति॥ 232 - 1 232 - 2 232 - 2

ननु एवमपि आचार्यव्यापारो न प्राप्तानुवादः। कथम् ?। शुश्रूषाद्यङ्गसहितेऽध्ययने माणवकस्य विहिते स्वविधिप्रयुक्ते चाध्ययने वृत्त्यर्थतया आचार्यप्रवृत्तिः प्राप्नोति, वृत्त्यर्थप्रवृत्तौ च प्राप्तायां तदनुवादेन माणवकव्यापारोऽध्ययनादिर्विधातुं शक्यते, इति इतरेतराश्रयप्रसङ्गात्। ननु 'ग्रामकामं याजयेत्' इत्यत्रापि समानोऽयं दोषः। अथ स्वविधिप्रयुक्तेषु यागान्तरेषु सामान्येन वृत्त्यर्थतया प्राप्तं प्रयोजकव्यापारमनूद्य ग्रामकामस्य यागविशेषो विधीयत इति; तर्हि इहापि

ता. प्रतीतिमुपपादयति—**माणवकमिति**। यतः शुश्रूषाद्यङ्गसहितमध्ययनं माणवकस्य विहितं अत एव स्वविधिप्रयुक्तमध्ययनं भवतीत्याह—**स्वविधिप्रयुक्ते चेति**। प्रतिबन्दिन्यायेन इतरेतराश्रयं परिहरन्नाह सिद्धान्ती—**नन्विति**।

भा. किं च अर्थावबोधस्य स्वतोऽपुरुषार्थस्य क्रत्वङ्गतया अवगतस्यैव अध्ययनभावनाभाव्यत्वं वक्तव्यम्, क्रतोश्चार्थज्ञानमात्रेण निराकाङ्क्षस्याध्ययनभाव्यत्वबलादेव तदर्थावबोधग्राहकत्वमिति इतरेतराश्रयः। तस्मान्नार्थावबोधकाधिकाराध्ययनविधिप्रयुक्तमध्ययनम्, [विधिप्रयुक्तं] स्वविधिप्रयुक्तिसम्भवात्।

विध्यन्तरेषु सामान्यप्राप्तप्रयोजकव्यापारानुवादेन माणवकव्यापार उपगमनाध्ययनादिर्विधीयताम्। अथ वा माणवकव्यापारविधिसामर्थ्यादेव प्रयोजकव्यापारः प्राप्स्यते न प्रयोजकव्यापारविधानेन माणवकव्यापारः प्राप्स्यत इत्युक्तम्। तत्र माणवकव्यापारविधानादेव भाविनीं प्राप्तिमनूद्य माणवकव्यापारः कदाचिदप्यप्राप्तो विधीयत इति। तदेतदाह—
232 - 4 एतच्च सर्वं वृत्त्यर्थत्वेन ब्राह्मणस्यान्यत एव प्राप्तमिति ॥

**ननु प्रयोजकव्यापारं प्राप्तमेवानूद्य गुणाधिकारादिविशेषविधिपरं वाक्यं किं न स्यात्? इति। न तावदधिकारविधिपरं वाक्यम्।**

ता. भवत्वेवम्, तथापि इतरेतराश्रयस्य कः परिहारः इत्यत आह—**तत्र माणवकेति** ॥

शङ्कते — **ननु प्रयोजकव्यापारमिति**। 'अरुणया पिङ्गाक्ष्या क्रीणाति' इतिवत् अष्टवर्षब्राह्मणविशेषविधिपरं विधिपुरुषसम्बन्धनिमित्तजीवनकामनादियुक्ताधिकारिविशेषविधिपरं [वा] वाक्यं किन्न स्यात् इत्यर्थः। परिहरति—**न तावदिति**। प्रस्तुते वाक्यभेदं दर्शयितुं वाक्यभेदाभावस्थलं

भा. ननु अध्ययनविधिरनियोज्यो न प्रवर्तयतीति चेत् 'अष्टवर्षं ब्राह्मणमुपनयीत' 'उपनीय तु यश्शिष्यम्' इत्यादिश्रुतिस्मृतिभ्यामुपनीयाध्या* चार्यत्वं सिद्धमिति तत्कामो नियोज्य इति। न तावत् श्रुतावाचार्यत्वकामपदमस्ति। तत्कल्पनायां च स्वर्गकाम एव कल्प्यः। अन्यथा विश्वजित्यपि न तत् कल्प्येत ॥

ननु न कल्प्यते आचार्यत्वम्, किन्तु कमिपदमात्रम्। 'उपनयीत' इत्यात्मनेपदा[देव] साध्यं तदवगम्यते। सत्यम्। तद्धि नोपपन्नमत्र आचार्याभिलषितम्। 'सम्मानने'त्यस्य आरम्भस्याकर्त्रभिप्रायत्वात्। अकर्त्रभिप्रायत्वे हि कर्तुरनभिलषितं (च) न फलम्। किं चैवमुपनयनस्य आचार्यत्वं साध्यं भवतु शाब्दम्, स्मृतौ तथैवावगमात् नाध्यापनस्य। उपनयस्याध्यापनाङ्गत्वात् तत् फलं तस्यैवेति चेत्, तदेव कुतः?। फलवदुपनयनं प्रत्येवाफलस्याध्यापनस्याङ्गत्वात् ॥

ननु अध्यापनमपि धनप्राप्त्युपायत्वात् फलवदिति चेत्, न—आचार्यत्वनिमित्तधनानां तत्साधनोपनयनफलत्वात्। वृत्त्यर्थधनस्य त्वन्मते अध्यापनान्तर-

* अत्र ग्रन्थे त्रुटिः।

जीवनादिनित्यकाम्याधिकाराश्रवणात्। अतो गुणविधिरेव 'दध्ना जुहोति' इत्यादिवत् परिशिष्यत इत्याह—तत्र कमध्यापयेदिति। 232 - 6
भवतु तर्हि गुणविधिरिति; नेत्याह—तत्र च प्राप्ते व्यापार इति। 232 - 7
अयमाशयः—यदा विशेष्योऽपि पदार्थः प्रमीयते तदा नानाविधगुण-

---

ता. दर्शयति—अयमाशय इति ॥

'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥'

इति न्यायादित्यर्थः ॥

---

भा. फलत्वात्। ननु द्वितीयाश्रवणात् उपनयनं गुणकर्म न प्रधानमिति चेत्, न—माणवकस्याविनियुक्तस्यासंस्कार्यत्वात्। न च तमिति द्वितीया माणवकं गुणत्वेन विनियोक्ष्यतीति वक्तुं शक्यते येनाध्यापनसाम्यं भवेत्। अत एव—तच्छब्दश्रुत्योपनयनसंस्कृतोऽध्यापने विनियुज्यत इत्युपनयनमेवाङ्गमिति प्रत्युक्तम्। एतेन—उपनयनसाध्यतयावगताचार्यत्वस्य अङ्गफलत्वेन प्रयाजादिफलवदर्थवादिकत्वेऽपि न विश्वजित्साम्यम्। 'फलमात्रेयो निर्देशा'दिति रात्रिसत्रसाम्यमेव। अध्ययने तु नैवमिति तत्र फलस्वरूपं तस्य काम्यत्वं तस्य विधिनैकवाक्यत्वमपि विश्वजितीव कल्प्यमिति गौरवमित्यध्यापन एव नियोज्यकल्पनमिति प्रत्युक्तम् ॥

किं च आचार्यत्वमपूर्वम्? तत्साध्यं वा?। आद्ये न तत्कामस्य नियोज्यत्वम्; कामाधिकारे नैयोगिकस्यैव नियोज्यविशेषणत्वात्। अन्यथा अध्ययनविधावपि स्वाध्यायावाप्तिमर्थावबोधं वा कामयतो नियोज्यत्वं केन वारणीयम्। विधेः पूर्वमनवगतस्य आचार्यत्वस्य अपूर्वरूपस्य कामनाऽयोगाच्च। विधिवाक्यादेव अवगताचार्यत्वकामनायामन्योन्याश्रयात्। न च 'उपनयीत' इति वाक्यात् तदवगतमिति वाच्यम्। 'अध्यापयीत' इति लिङोऽनुवादत्वप्रसङ्गात्। उपनयनधात्वर्थसाध्यतया अवगतस्य धात्वर्थान्तरप्रवृत्त्यनुकूलनियोज्यविशेषणत्वानुपपत्तेश्च। अत एव—आचार्यायेत्यादिवाक्यावगतं तत् काम्यत इति प्रत्युक्तम्। आचार्यपदस्य अद्याप्यप्रसिद्धत्वाच्च ॥

**विशिष्टतया स एको विशिष्टः पदार्थः प्रमीयत इति न वाक्यभेदः स्यात्। यदा तु विशेष्यमनूद्य विशेषणानि प्रमीयन्ते तदा विशेषणानामन्योन्यविशिष्टतयैकत्वापत्त्यभावात् अन्योन्यानपेक्षतया प्रत्येकं**

भा. नच उक्तस्मृत्या आचार्यपदस्य सङ्गतिग्रह इति वाच्यम्; प्रागुक्तन्यायेन तस्य अलौकिकार्थमात्रविषयत्वात्। अत एव आचार्यत्वेऽपि धनादिप्राप्तिसं*तिरिक्ताचार्यत्वस्य तदुपायत्वाभावाच्च। किं चैवं भोगं प्रति प्रत्यासन्नधनादिकाम एव अध्यापने नियोज्योऽस्तु। न तु विप्रकृष्टालौकिकाचार्यत्वकामः। ननु दक्षिणादेर्दक्षिणादिविध्यन्तरायत्तत्वात् नाध्यापनविधिफलत्वमिति चेत्; तत् किं विध्यन्तरायत्तं न विध्यन्तरफलम्? तर्हि प्रतिग्रहादिविध्यन्तरायत्तं पश्वाद्यपि न चित्रादिफलं स्यात्। ननु पश्वादि चित्रादिनियोगस्य फलं भवति, न धनादि अध्यापननियोगस्य इति चेत्; तत्कामाधिकारे तत्फलस्य अनिराकार्यत्वात्। न चैवं पश्वादिफलवत् अध्यापनफलमप्यनियतामुष्मिकं स्यादिति वाच्यम्; कारीर्यादिफलवत् कामनानुरोधेन तस्यैहिकत्वोपपत्तेः। न हि वृत्त्यर्थमध्यापयन् यदाकदाचित् धनमस्त्विति कामयते। पश्वादिवन्नियोगजन्यत्वाभावेऽप्याचार्यत्वमुद्दिश्य[विधाना]न्निमित्तत्वमस्तीति धनकामस्य अध्ययनकामनाधिकारोपपत्तेश्च। तस्मादाचार्यत्वकामस्य अध्यापनं न श्रुत्यर्थः, नापि स्मृत्यर्थः, तस्यामपि तदप्रतीतेः। प्राग्वर्णितरीत्या तस्याः लौकिकाचार्यत्वसंज्ञामात्रपरत्वाच्च ॥

किं च अध्ययनस्य अध्यापनविधिप्रयुक्तत्वे विचारस्योत्तरक्रतुविधिप्रयुक्तिमनिच्छतस्तव विचारप्रयुक्तिरेव न स्यात्। न ह्यध्यापनविधेर्विषयस्तदुपकारकः तत्फलोपकारको वा विचारो भवति, येन तत्प्रयुक्ततया क्रियते। ननु अध्ययनेऽपि विधिरस्त्येव, परं तु अन्यप्रयुक्तत्वादध्ययनं नानुष्ठापयति, विचारं तु अन्यतोऽसिद्धमनुष्ठापयतीति चेत्, न—विषयतत्फलोपकारकातिरिक्तस्य विधिप्रयुक्तानुष्ठानानुपपत्तेः। ननु अध्ययनविधिर्निरधिकारो न सम्भवतीति ज्ञानकामोऽधिकारी कल्प्यते। न च अविधिफलस्य कथमधिकारिविशेषणत्वं इति वाच्यम्। तादृशस्याप्यधिकारिविशेषणार्थिना विधिना अङ्गीकृतत्वात्। न चैवं ज्ञानकामाधिकारिविधिनैव अध्ययने प्रवृत्तिरस्त्विति वाच्यम्; अध्ययनात् पूर्वं ज्ञानकामनाऽसम्भवेन माणवकस्य स्वाधिकारप्रतिपत्त्यसम्भवेन

* अत्र ग्रन्थे त्रुटिः।

प्रमेयत्वे प्रमेयभेदाद्वाक्यं भिद्यत इति। ननु सर्वत्र विशेष्यं सामान्यद्वारेण अनुवाद्यमेव। सत्यम्। विशेषणान्यपि तथा। किं तु विशेषाकारेण अन्योन्यविशिष्टतया पदार्थाः प्रमीयन्त इति। तस्मात् उत्पत्त्यधिकार-गुणविधयः प्रयोजकव्यापारे न सम्भवन्तीत्युपसंहरति—अतो नाचार्यस्येति॥ 232.9

तत्र माणवकव्यापारस्य गम्यमानस्यैव धातुना लक्षणया उपादाय विधेयत्वं दर्शयितुं चोदयति—ननु माणवकस्यापीति। परिहरति—

ता. ननु विशेष्यस्य अनूद्यत्वेन वाक्यभेदश्चेत् तर्हि विशेष्यस्य सामान्यद्वारेण सर्वत्र अनूद्यत्वादरुणादावपि वाक्यभेद इति चोदयति—नन्विति। सम्यक्परिहर्तुं अतिप्रसक्तिं तावदाह—सत्यमिति। गुणिवत् गुणानामपि सामान्यतः प्राप्तत्वात् गुणविधिरपि क्वापि न स्यादित्यर्थः। का तर्हि गतिः? इत्यत आह—किं त्विति। विशेषाकारेणैव यत्र गुणी प्राप्तः तत्र तदनुवादेन अनेकगुणविधाने वाक्यभेदः स्यादित्यर्थः। उपसंहरति—तस्मादिति। वृत्त्यर्थत्वेन प्राप्तत्वात् नोत्पत्तिविधिः,

भा. अध्ययनस्य तत्कामविधिप्रयुक्तत्वानुपपत्तेः। अध्ययनानन्तरं तु पटुकरणतया ततो वेदार्थं जानन् विचारात् पूर्वं स्वाधिकारविधिमवगच्छतीति तदर्थनिर्णयाय विचारे प्रवर्तत इति अध्ययनविधित एव विचारः प्रयुज्यत इति चेत्—न—प्रवृत्त्यर्थं हि अधिकार्यपेक्ष्यते। स चाभेद* रिणा। तथा च कस्य विचार-माक्षिपेत्। यत्तु न प्रवृत्तेरधिकार्यपेक्षा किन्तु विधित्वनिर्वाहायेति; तद्यत्किञ्चित्। विधित्वं ह्यप्रवृत्तप्रवर्तकत्वं तच्छक्तिर्वा। आद्ये प्रवृत्तेरन्यतस्सिद्धत्वान्नाधि-कार्यपेक्षा। द्वितीये तु, विधिस्वरूपप्रयुक्ता शक्तिः प्रयुक्तिं विनेवाधिकारिणं विनापि सिद्धैवेति किं तेन। नित्यानित्यसंयोगविरोधदोषस्तु मूलग्रन्थे स्पष्ट इत्यनेकदोषदुष्टोऽयं पक्ष इति स्वविधिप्रयुक्तमध्ययनमिति॥

'प्रमेयभेदाद्वाक्यं भिद्यत इति'। न च जीवतोऽर्थसिद्धं वय इति 'अष्टवर्षम्' इत्यनुवाद इति वाच्यम्; वयोविशेषस्यापाक्षिकत्वान्नित्यवच्च तस्य पाक्षिकानुवादत्वायोगादिति॥

*अत्र ग्रन्थे त्रुटिः॥

233 - 1 अस्तीति ब्रूम इत्यादिना । ननु कर्तुरेव व्यापारो गमनादिषु दृश्यते न
कर्मकारकस्य ग्रामादेः । माणवकश्च नयत्यर्थकर्मभूतः कथं गम्यमान-
233 - 1-2 व्यापारः ? इति चोदयति—कथमिति । परिहरति—यदैवोपनयीतेति ।
233 - 4 उपनयनसंस्कार्योऽपीति । उपगन्ताऽपीत्यर्थः । नयत्यर्थकर्मणो नीयमानस्य
गमनव्यापारः सुप्रसिद्ध इति भावः । ननु तर्हि माणवकस्य गमनं
प्रयोजकव्यापारादेव सिध्यति, किमिति तद्विधीयते इति ; न—
233 - 5 विधानमन्तरेण असिद्धेरित्याह—तस्य च प्रेक्षावत इति । ननु विधानेऽपि
233 - 6 काम्यविधिः स्यादिति ; नेत्याह—विद्यमानस्यापीति । कथं तर्हि
233 - 7 विधिरिति ? परिशेषान्नित्यविधिरित्याह—विधितोऽवश्यकर्तव्यतामिति ।
233 - 8 कथं तर्हि वाक्यं परिणम्यते ? इति ; तदाह—तेनाष्टवर्षं ब्राह्मणमिति ।

ननु नित्यतया विधेयत्वेऽपि विधिपुरुषसम्बन्धो वा विधिपुरुष-
सम्बन्धनिमित्तं वा प्रवृत्तिर्वा अधिकारशब्दार्थो न लभ्यत इति
233 - 10 चोदयति—नन्वेवमप्यधिकारो न लभ्यत इति । अयमाशयः—ननु
सामान्येन गम्यमानस्य उपगन्तुः 'अष्टवर्षं ब्राह्मणम्' इति विशेषणश्रवणात्
इदमेव अधिकारनिमित्तं सम्पत्स्यते । नैवम्—एकैकस्य विशेषणस्य अधि-
कारनिमित्तत्वानुपपत्तेः विशेषणयोश्च परस्परविशिष्टताऽभावात् एकैकस्य
विशेषणस्य आभिधानिके क्रियासंबन्धेऽप्यरुणयैकहायन्यादिवदर्थात् पर-
स्परविशिष्टतया अधिकारनिमित्ततेति चेत्, न—विधिपुरुषसम्बन्धनिमि-
233 - 10 त्तस्य अशाब्दत्वप्रसङ्गादिति परिहरति—अस्त्यत्राधिकारहेतुर्नित्यं निमित्त-
233 - 10 मिति । विधिपुरुषसम्बन्धस्य प्रवृत्तेर्वा हेतुरित्यर्थः । नित्यमिति । जीवतः

---

ता. 'विधिरत्यन्तमप्राप्ते' इति न्यायात्, विधिपुरुषसम्बन्धनिमित्तयोर्जीवनकामनयोः अश्रवणान्नाधिकारविधिः, वाक्यभेदप्रसङ्गाच्च न गुणविधिरपीत्यर्थः ॥

आक्षेपस्याभिप्रायं दर्शयितुं सिद्धान्तिनः शङ्कां तावद्दर्शयति—नन्विति । परिहरति पूर्ववादी—नैवमिति । विशेषणयोश्चेति । उपसर्जनयोः प्रधानेनैव अन्वयात् परस्परान्वयो नास्तीत्यर्थः । श्रौतान्वयाभावेऽप्यार्थिकः परस्परान्वयो भविष्यतीति शङ्कते—एकैकस्येति ॥

पुरुषविशेषस्य नियतभावीत्यर्थः। न च शाब्दमेव सर्वत्र अधिकारनिमित्तम्; साङ्गकर्मानुष्ठानसामर्थ्यस्यापि अशाब्दस्य अधिकारनिमित्तत्वात्, शक्तस्याधिकारादिति। अथ वा क्रियासम्बन्धाभिधानमुखेन विशिष्टसमर्पणे शब्दद्वयतात्पर्यकल्पनात् अधिकारनिमित्तस्य शाब्दत्वं न विहन्यते ॥

एवमपि विशिष्टस्य नाधिकारनिमित्ततेति चोदयति—ननु जातिवयसी विशेषणमुपादेयस्येति। अयमभिसन्धिः—उपादेयं नाम साक्षाद्वा परम्परया वा विधिविषयतयाऽनुष्ठेयं तद्विशेषणं च। क्रियाकारकतद्गुणसमुदाय इत्यर्थः। तत्रोपादेयविशेषणानि 'दण्डी प्रैषानन्वाह' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति कर्तृविशेषणानि, 'व्रीहिभिर्यजेत' इत्यादौ बहुत्वादीनि करणविशेषणानि, 'इन्द्राय स्वराज्ञे' इत्यादीनि सम्प्रदानविशेषणानि। न चोपादेयविशेषणमधिकारसम्बन्धनिमित्तम्। अनुष्ठेयकारकविशेषणतया विधिं प्रति गुणभूतत्वात्। अधिकारिणस्तु विधिं प्रति स्वामितया प्राधान्येन अन्वयात्। कथं पुनरत्र माणवकस्योपादेयत्वमवगम्यते? उच्यते—प्रयोजकव्यापारं प्रति माणवकस्य कर्मताभिधायिनी द्वितीयाविभक्तिः स्वव्यापारं प्रति कर्तृत्वं गमयति। कर्तृविषयत्वात् प्रयोजकव्यापारस्य। तत्र प्राप्तप्रयोजकव्यापारानुवादेन कर्तृव्यापारे विधिसम्बन्धमात्रं परिणम्यते, न शब्दप्राप्तमाणवककर्तृत्वं पराक्रियते, इत्युपादेयमाणवकविशेषणस्य जातिविशिष्टस्य वयसो नाधिकारनिमित्तता इति। कस्य पुनरधिकारनिमित्ततेत्यत आह—अनु- 234-2

234-1 (printed beside the line beginning "एवमपि")

ता.

**शाब्दत्वं न विहन्यत इति**। अभिधायकतात्पर्यवृत्तेरपि शब्दवृत्तित्वादित्यर्थः। भवत्वेवम्, तावता किमायातम्? इत्यत आह—**न चोपादेयेति**। कथा युक्त्या? इत्यत आह—**कर्तृविषयत्वादिति**। कुर्वन्तं कारयतीति न्यायादित्यर्थः। ननु प्रयोजकव्यापारस्य विधेयत्वानङ्गीकारात् कथं तत्कर्मतया माणवकस्य कर्तृत्वम्? इत्यत्राह—**तत्रेति**। फलितमाह—**इत्युपादेयेति**।

पादेयविशेषणमधिकारहेतुरिति । विधिप्रयुक्तानुष्ठेयतद्विशेषणव्यतिरेकेण विधिसम्बन्धी अनुपादेयः । यथा जीवन् गृहदाहवान् स्वर्गकामः इति ॥

234 - 3 अपसिद्धान्तेन परिहर्तुं नियोगपक्षमङ्गीकरोति—सत्यमस्तीयं स्थितिरिति । अयं भावः—यत्र लिङादिपदेन नियोगो वाक्यार्थतया प्रतिपाद्यते तत्र वाक्यार्थभूतनियोगाकाङ्क्षानिमित्तत्वात् पदार्थान्तरसम्बन्धानां नियोगस्य च कस्य कस्मिन्निति स्वरूपोपाधित्वेनैव अधिकारिविषयसापेक्षत्वात् स्वर्गकामादिः नियोगाकाङ्क्षया अधिकारित्वेन सम्बध्यते ममायं नियोग इति । स्वामितया अन्वयित्वं नियोज्यत्वमधिकारित्वं नाम । तत्र प्रथमं 'ममायं नियोग' इति प्रतिपद्य नियोगस्य कार्यतावगमात् तदनुष्ठानाय धात्वर्थे विषये पश्चात् कर्तृतया अन्वेति । नियोगो हि साध्यतया अवगम्यमानः प्रथमान्वयिनोऽधिकारिणो 'ममायं नियोगः' इति प्रतिपत्तुर्नियोगनिर्वृत्तिसमर्थे धात्वर्थे कर्त्रन्वयमन्तरेण अनुपपद्यमानः तदन्वयमर्थापत्त्या प्रतिपादयतीति अधिकारान्वयपुरस्सरः कर्त्रन्वय इति प्राभाकरा मन्यन्ते । तत्र भवत्वनुपादेयविशेषणमधिकारहेतुः [इति] ॥

भावनावादे तु पुनः उपादेयविशेषणमप्यधिकारहेतुरित्याह—
234 - 3 किं तु कर्तुरधिकार इत्यपि स्थिता न्यायविद इति । अयमाशयः—
लिङादिप्रत्ययैर्यदा पुरुषप्रवृत्तिर्भावना वाक्यार्थतया प्रतिपाद्यते तदा

---

ता. तद्दर्शयितुमनुपादेयं तावदाह — **विधिप्रयुक्तेति** । तदेवोदाहरणेनाह— **यथेति** । नित्यनैमित्तिककाम्यविषयमुदाहरणत्रयं यथाक्रमेण द्रष्टव्यम् ॥

नियोगो वाक्यार्थ इति पक्षेऽपि स्वर्गकामिनः कथं प्रथममधिकारित्वेनान्वयः इति ; तत्राह—**यत्रेति** । तथापि प्रकृते कथमधिकारिण्याकाङ्क्षा ? इति ; तत्राह—**नियोगस्य चेति** ॥

ननु नियोज्यप्रतिपत्तिं विना प्रथमत एव कथमधिकारित्वेनान्वयः ? इति ; तत्राह—**ममायमिति** । उभयत्र स्वस्य प्राधान्येन प्रतिपत्तेरविशेषान्नियोज्यत्वमधिकारित्वञ्चेत्येकमित्यर्थः । तथापि कथं कर्त्रन्वयः ? इत्यत आह—**तत्र प्रथममिति** । कर्त्रन्वये किं प्रमाणम् ? इत्यत्राह—**नियोगो हीति** ॥

प्रधानाकाङ्क्षानिमित्तत्वात् सम्बन्धस्य क्रियायाश्च स्वरूपोपाधित्वेन कर्तृकरणकर्मापेक्षणीयत्वात् पुरुषार्थधात्वर्थयोश्च भाव्यतत्करणत्वेन अन्वयात् परिशेषात् स्वर्गकामादयः कर्तृत्वेन अन्वीयन्ते। ततश्च कर्तृविशेषणतया तन्नियमार्थानि जीवनगृहदाहकामनादीनि। तत्र प्रथमं कर्तृत्वेन अन्वयं प्रतिपद्य कर्तुरेव फलसम्बन्धात् 'मदीयमिदं फलसाधनं कर्मे'ति कर्मस्वामित्वलक्षणमधिकारान्वयं पश्चादनुभवति। कर्मफलभोक्तृत्वमेव हि कर्मणि स्वाम्यन्वय इति। ततश्च कर्तृविशेषणान्येव तस्यैव फलभोक्तृतया कर्मणि स्वाम्यन्वयं नियमयन्तीति कर्तुरधिकारस्थितिः। एवं भावनावाक्यार्थोपादानेनापि माणवकस्य अधिकारसिद्धिरिति भावः॥

अथवा—यथा राजसूये राजत्वं कर्तृविशेषणमन्येन अधिकारिणा

---

एतावता कथमुपादेयविशेषणस्याधिकारहेतुत्वम्? इत्यत्राह—ततश्चेति। तथापि कथं कर्तुरधिकारान्वयः? इति; तत्राह—तत्र प्रथममिति। ननु कर्मफले भोक्तृत्वमेव प्रतीयते, न स्वामित्वम्, तत्कथं फलद्वारा कर्मणि स्वामी? इति; तत्राह—कर्मफलेति। फलितमाह—ततश्चेति। सर्वैः कर्तृविशेषणमेव अधिकारिविशेषणत्वेनाङ्गीकृतं [यत्र तत्] स्थलमाह—अथ वेति। राजत्वं कर्तृविशेषणमप्यधिकारिविशेषणं संपत्स्यते इत्यन्वयः। तत्र युक्तिमाह—अन्येनेति। अन्येन साम्राज्यकामेनापि ब्राह्मणेन वैश्येन वा राजत्वस्य ता.

---

गुरुमतेऽप्यनुपादेयविशेषणमेवाधिकारिविशेषणमिति न नियम इत्याह—अथवा यथा राजसूये इति। राजसूयवाक्ये हि राज्ञो विधेयतया अन्वयात् तद्विशेषणं राजत्वं तद्विशेषणमेव सत् अधिकारिणो विशेषणम्। तत्र हेतुमाह—अन्येनेति। स्वाराज्यकाममात्रस्य अधिकारित्वेनाकर्तृविशेषणतया राजत्वस्य सम्पादयितुमशक्यत्वात् राज्ञः सत एव स्वाराज्यकामस्य अधिकार इति उपादेयविशेषणमप्यधिकारिविशेषणमित्यर्थः॥ भा.

राजत्वस्य कर्तृविशेषणतया सम्पादयितुमशक्यत्वात् अधिकारिविशेषण-मपि सम्पद्यते तद्वदिहापि स्यादिति ॥

नन्तु नायं परिहार उपपद्यते; श्रेयस्साधनस्य लिङादिप्रत्ययैः वाक्यार्थत्वेन अभिधीयमानत्वात्, तस्य च प्रथममधिकारान्वयापेक्षत्वात्। कथम्?। श्रेयो हि भोक्तारमपेक्षते। अतस्तत्साधनमपि भोक्त्रन्वयि भवति। 'कस्येदं श्रेयस्साधनं ममेदमभिलषितसाधन'मिति च स्वाम्यन्व-याकाङ्क्षादर्शनात् 'कस्यायं नियोगो ममाय'मितिवत्। भावना तु क्रिया कर्त्राश्रयतया अवगम्यमाना तमपेक्षते। ननु कृतियोग्यमेव श्रेयस्सा-धनं विधिः। कर्तुरिष्टाभ्युपायो विधिरित्यभ्युपगमात्। ततश्च कृतिः कर्तारमपेक्षत इति। तर्हि नियोगस्यापि कार्यतया अवगमात् कृतिनिमित्तकर्त्रन्वय एव स्यात्। ननु कृतिर्नियोगोपसर्जनतयैव शब्देन अभिधीयते, न च उपसर्जनाकाङ्क्षया पदार्थान्वयः, किं तु प्रधानाकाङ्क्षया, ततश्च प्रधाननियोगाकाङ्क्षया प्रथममधिकारान्वयः इति। समानमेतदिष्टसाधनेऽपि कृतेरुपसर्जनतया अभिधानात्। ननु

---

ता. सम्पादयितुमशक्यत्वात् कर्तृनियामकतया अधिकारिविशेषणं भवतीत्यर्थः ॥

इदानीमिष्टसाधनवाक्यार्थपक्षेऽप्यधिकारान्वयपूर्वकं क(र्तृद्व) [र्त्रन्व]यं दर्शयति—**श्रेयस्साधनस्येति**। ननु साधनस्य साधकापेक्षैव न तु भोक्त्रपेक्षे-त्याक्षिपति—**कथमिति**। परिहरति—**श्रेयो हीति**। तथापि साधनस्य किमायातम्? इत्यत आह—**अतस्तत्साधनमिति**। आकाङ्क्षाभावे कथ-मन्वयः? इत्यत आह—**कस्येदमिति**। आकाङ्क्षां प्रदर्श्यान्वयप्रकारमाह—**ममेदमिति**। तर्हि भावनापक्षेऽप्यधिकारान्वयः प्रथमं किं न स्यात्? इत्यत आह—**भावना त्विति**। तर्हीष्टसाधनपक्षे कर्त्रन्वय एव प्रथमं प्राप्नोतीति शङ्कते—**नन्विति**। प्रतिबन्दिन्यायेन परिहरति—**तर्हीति**। साम्येन परिहर्तुं नियोगवादिनः परिहारप्रकारमाशङ्कते—**ननु कृतिर्नियोगेति**। तथापि तदा-काङ्क्षया कर्त्रन्वयः किं न स्यात्? इत्यत आह—**न चेति**। फलितमाह—**ततश्चेति**। अस्मन्मतेऽपि तुल्यमेतदित्याह—**समानमिति** ॥

श्रेयसोऽपि उपसर्जनत्वात् तत्सामर्थ्यलभ्यो भोक्त्रन्वयः कथं साधनस्य स्यात्?। नैष दोषः—साधनत्वस्वरूपोपाधित्वात् श्रेयसः। तस्य च नियमेन भोक्त्रन्वयात्। कर्तृभोक्तृसाधारणस्य साधनस्य स्वोपाधिश्रेयोऽनुसारेण भोक्त्रन्वयनियमसिद्धेः। तस्मात् मम अभिलषितसाधनमिति प्रथममधिकारान्वयो वाक्यार्थभूतेन विधिना श्रेयस्साधनेन अपेक्ष्यते, पश्चादभिलषितसाधनत्वस्य आश्रये धात्वर्थे विषये विधिसामर्थ्यादेव कर्त्रन्वयं प्रतिपद्यत इति॥

एवमपि तत्र न विरोध इत्याह—किं च इह न माणवको जाति- 234. 4
वयोविशिष्ट उपादेय इति। यदैव उपनयनाध्ययनादिमाणवकव्यापारस्य सामान्येन अभिलषितसाधनत्वलक्षणो विधिः शब्देन प्रतिपाद्यते, तदा सामान्यस्य श्रेयोविशेषाकाङ्क्षायां परम्परया पुरुषार्थसाधनमुपनयनसंस्कारं माणवकगतं श्रेयोविशेषं परिकल्प्य तत्साधनत्वलक्षणो विधिर्माणवकव्यापारे प्रतिपादितो भवति। ततः संस्कारफलभोक्तृ-

---

ननु कृतिवच्छ्रेयसोऽपि बोध्यसाधनोपसर्जनत्वात् तदाकांक्षया, भोक्त्रन्वयो ता.
न सिध्यतीति शङ्कते—**ननु श्रेयसोऽपीति**। परिहरति—**नैष इति**। साधनमित्युक्ते कस्येत्याकाङ्क्षायां श्रेयस इति तत्स्वरूपप्रतीतिहेतुतया अन्वयात् कृतियोग्यतायाश्च स्वरूपोपाधित्वाभावात् अकृतियोग्यस्यापि चन्द्रोदयादेः श्रेयस्साधनत्वदर्शनात् श्रेयसश्च भोक्त्रपेक्षणात् प्रथमं तदन्वय एवेत्यर्थः। ननु साधनस्यापि प्रथमं साधकापेक्षा अस्त्येवेत्याशङ्क्य, विशिष्टसाधनप्रतीत्युत्तरकालत्वात् साधकापेक्षायाः प्रथमप्रतीतश्रेयोऽनुसारेणैव अन्वय इत्याह—**कर्तृभोक्त्रिति**। **विधिसामर्थ्यादिति**। कृतियोग्येष्टसाधनस्यापि प्रबोधकत्वाद्विधेः कृतेश्च कर्त्रपेक्षत्वात् कर्त्रन्वयं प्रतिपद्यत इत्यर्थः॥

इदानीं 'उपनयीत' इत्यस्मिन् वाक्ये अष्टवर्षत्वादेरनुपादेयतया अधिकारिविशेषणताप्रकारं दर्शयति—**यदैवेति**। अत्र च **उपनयन**शब्देनोपगमनं लक्ष्यते। तथापि न संस्कारस्य श्रेयोरूपत्वमित्याशङ्क्य, परम्परया अस्तीत्याह—**श्रेयो[विशेष]रूपमिति**। तथापि कथमधिकारान्वयः? इति; तत्राह—**तत इति**।

तया विधौ माणवकः स्वामित्वेन अन्वेति । तत्र च स्वामिनियमार्थं ब्राह्मण्यादिविशेषणं तस्यैव पश्चादभिलषितसाधनत्वविषये माणवकव्यापारे कर्त्रन्वयं नियमयतीति ग्रन्थार्थः ॥

ननु प्रयोजकव्यापारविषयतया कर्तृत्वेनैव अन्वयो वाक्यात् प्रतिपन्नः । सत्यम् । तत्र विधिसम्बन्धसामर्थ्यात् भोक्त्रन्वयं प्रतिपद्य कर्त्रन्वयनियमः कल्प्यते । ननु एवमपि अध्ययनस्य न साधिकारता-
235 - 4 सिद्धिरिति; तत्राह—तदेवमुपनयनस्याध्ययनार्थत्वादिति । प्रसिद्धं च सर्वस्मृतिशास्त्रेषूपनयनमध्ययनाङ्गमिति । वाजसनेयिनां चोपनयनं प्रकृत्य अध्ययनं विधीयते । विधिद्वयसामर्थ्यं च उपादानप्रमाणं दर्शितम् । इहापि 'तमध्यापयीत' इत्युपनीतं तच्छब्देन परामृशति । अङ्गाङ्गिनोश्च एकाधिकारत्वात् 'उपनीतो ब्राह्मणोऽधीयीत' इति सम्पद्यते । अङ्गाधिकारनिमित्तस्य कालस्य सर्वत्र अङ्गिन्यन्वयनियमाभावात् वयसो नाध्ययनाधिकारनिमित्ततेति ॥

---

ता. तथापि ब्राह्मण्यादेरधिकारिविशेषणत्वं कथम्? इत्यत आह—**तत्र चेति** । कथं तर्हि कर्त्रन्वयः? इति; तत्राह—**तस्यैवेति** । **विधिसम्बन्धसामर्थ्यात्**—इष्टसाधनेन सम्बन्धसामर्थ्यात् । श्रेयो हि भोक्तारमपेक्षेतेत्युक्तत्वादित्यर्थः । तथाप्यध्ययनस्य साधिकारत्वं कथम्? इत्यत आह—**अङ्गाङ्गिनोरिति** । अष्टवर्षत्वस्याप्युपनयनाधिकारिविशेषणत्वात् अध्ययनेऽपि तदन्वयात् अष्टवर्षादूर्ध्वं अध्ययनं न स्यादित्याशङ्क्याह—**अङ्गाधिकारेति** ॥

---

भा. **अङ्गाङ्गिनोश्चैकाधिकारत्वादुपनीतो ब्राह्मणोऽधीयीतेति सम्पद्यत इति** । यथा दीक्षा संस्काराङ्गमपि स्वाम्यर्थतया सोमाधिकारनिमित्तम्, एवमुपनयनसंस्कारोऽपि अध्ययनाङ्गमध्ययनाधिकारनिमित्तमित्यर्थः । ननु एवं सति नोपनयनमध्ययनाङ्गं स्यात्, तयोर्भिन्नाधिकारिसम्बन्धित्वात् । न सां* स्वातन्त्र्येण पुरुषसम्बन्धोऽस्ति । कथं वा अङ्गाङ्गिनोरेकाधिकारत्वोक्तिः? नहि पुरुषैक्यमात्रेणैकाधिकारित्वं अतिप्रसङ्गात् । प्रधानकर्तृताप्रतिपत्तिनिमित्तं ह्यधि-

---

* अत्र ग्रन्थे त्रुटिः ॥

ननु नित्याधिकारेण अध्ययनविधिना अर्थावबोधो भाव्यतामिति; नेत्याह—अक्षरग्रहणमात्रेण चेति। ननु सकृदध्ययनादेव नित्याध्ययनविधिसिद्धेरावृत्तिः केन लभ्यते?। अर्थावबोधफलपक्षे वा कथं लभ्यते?। फलावसानानुपपत्तेरिति चेत्, इहापि समानम्। अक्षरावाप्तेः फलत्वात्। ननु अदृष्टमेव विधिफलमित्युक्तम्। समानमर्थावबोधपक्षेऽपि। ननु अदृष्टसमवायि दृष्टं फलमर्थावबोधः। तस्य चाक्षरस्वीकरणविचाराद्यपेक्षत्वात् तदर्थमावृत्तिसिद्धिरिति। न। शाखान्तरीयपौरुषेयवाक्येभ्योऽपि अभ्यस्तीकृतेभ्योऽर्थावबोधदर्शनात् न तदर्थमावृत्त्यपेक्षा युक्ता। जपस्वाध्यायविधिसामर्थ्याच्चाक्षरस्वीकरणायावृत्तिः कल्प्यते। नार्थावबोधसामर्थ्यात्। अध्ययनशब्द एव वाऽधीयमानावाप्तिपर्यन्तव्यापारस्य मुख्यया वृत्त्या अभिधायकः सकृदुच्चारणादौ गौण इत्यावृत्तिसिद्धिरिति ॥ 235 - 6

ननु वेदस्यैव अन्यनिरपेक्षतया विचारहेतुत्वं वदन् भाष्यकारोऽध्ययनविधेरेव विचारहेतुत्वमाहेति चोदयति—ननु चैवमधीतो वेद इति। 235 - 8

---

ता. स्वपक्षे पुनरावृत्त्यपेक्षायां युक्त्यन्तरमाह—जपेति। युक्त्यन्तरमाह—अध्ययनेति। ननु 'यस्सकृ(त् गद)[दध्यय]नात् द्वि(र्गद) [रध्यय]नाद्वा प्रभूया' दित्यादिषु सकृदुच्चारणादावप्यध्ययनशब्दः प्रयुज्यत इत्याशङ्क्य, 'नास्मादधीतात् प्रमाद्येत्' इति वाक्यशेषात् स्वाधीनोच्चारणक्षमतापर्यन्तमेवाध्ययनं मुख्यम्, इतरत्तु गौणम्, गौणमुख्ययोश्च मुख्यमेव स्वीकरणीयमित्याह—सकृदिति। स्वाध्यायस्य प्रयोजकप्रयोजकत्वमेव, न तु साक्षात्प्रयोजकत्व-

---

भा. कारोऽङ्गानामपि कर्तव्यताप्रतिपत्तिनिमित्तैकाधिका*त्वम्। न च उपनयनसंस्कारोऽप्युपनयनकर्तव्यताप्रतिपत्तौ निमित्तम्, दीक्षासंस्कारोऽपि सोमकर्तव्यताप्रतिपत्तिनिमित्तमधिकारः। स्वर्गकामाधिकारवाक्ये तदप्रतीतेः। किं तु गुणभूतसंस्कारस्य प्रधानभूतस्वामिना अन्वयबलाद्दीक्षासंस्कृतः स्वामी प्रधानफलार्ह इति संस्कृतोऽधिकारीत्युच्यते। न च अत्र ब्राह्मण्यमेव साङ्गाध्य-

---

* अत्र ग्रन्थे त्रुटिः ॥

सत्यम्–विचारस्य प्रयोजकोत्तरविधिप्रदर्शनद्वारेण विचारहेतुः स्वाध्यायः
286 - 1 नाध्ययनविधिविधेयताद्वारेण इति परिहरति–सत्यम्। तथैव तदित्यादिना॥

ननु स्वाध्यायात् आपातप्रतिपन्नोत्तरविधिरनिश्चितः कथं विचारं
236 - 2 प्रयुङ्क्ते? इति; तदाह—अधीतवेदो ह्यवश्यकरणीयानीति। आपातप्रतिपन्नानामुत्तरनित्यविधीनामनुष्ठेयनिर्णयज्ञानसापेक्षत्वात् तन्निर्णयाय विचारप्रयोजकत्वमिति काम्यवाक्यविचारमप्याधानवत् फलकामनैव प्रयुङ्क्ते। ननु अनेकविधिप्रयुक्तिकल्पनात् वरमध्ययनविधिप्रयुक्तिकल्पनं विचारस्य। न। विधेयतदुपकारिव्यतिरिक्तस्य विचारस्य अप्रयोजकत्वादध्ययनविधेरित्युक्तत्वात्। अर्थावबोधफलत्वाभावात् अवघाता-

---

ता. मित्याह—**सत्यमिति**। **आपातप्रतिपन्नानामिति** विशेषणं निश्चितस्य विधे(यत्वमे)[रे]वानुष्ठापकत्वं सन्दिग्धस्यैव विधे(य)स्स्वनिर्णयाय विचारप्रयोजकत्वमुक्तमिति विभागं दर्शयितुम्। अध्ययनविधेः नित्योत्तरक्रतुविधिद्वारा विचारप्रयोजकत्वे काम्यवाक्यविचारो न स्यादित्यत आह—**काम्येति**। त्वन्मते कल्पनागौरवमिति शङ्कते—**नन्विति**। सत्यम्, प्रयोजकत्वसम्भवे गौरवपरिहारायैकविधिप्रयुक्तिकल्पनम्, तदेव तु नास्तीति परिहरति—**न विधेयेति**॥

ननु अर्थावबोधफलत्वादध्ययनविधेस्तत्सिद्धये विचारप्रयोजकत्वं किं न स्यात्? इत्यत आह–**अर्थावबोधेति**। ननु एवमप्युत्तरक्रतुविधिप्रयोज्यत्वं कथम्?

---

भा. यनकर्तव्यताप्रतिपत्तिनिमित्तमुपनयनं न तु अन्वारम्भणीयेव दर्शपूर्णमासयोरध्ययनस्य आरम्भ इति वाच्यम्। अध्ययनविधेः त्रैवर्णिकसाधारणत्वात्। ननु अर्थावबोधकामना साङ्गाध्ययनकर्तव्यताप्रतिपत्तिनिमित्तमधिकारोऽस्तु, उपनयनसंस्कारस्तु अध्ययनारम्भनिमित्तमधिकार इति चेत्, न—सिद्धान्ते अर्थावबोधकामाधिकारानभ्युपगमात्। ततश्च सर्वार्थत्वस्मृतिबलादुपनयनमध्ययनाङ्गमेव सत् तदधिकारनिमित्तम्। अत एव 'यस्यैते चत्वारिंशत् संस्काराः' इति स्मृतिरपि सङ्गृहीतेति॥

वृत्तिवत् फलापेक्षयापि न विचारविधिरित्युक्तत्वात्। उत्तरविधिविधेयोपकारित्वात् विचारस्य तत्प्रयुक्तिः सम्भवति। प्रतिवाक्यं निर्णयज्ञानभेदाच्च विधिभेदो न विरुध्यते। अन्यथा यागाद्यनुष्ठानस्यापि अध्ययनविधिप्रयोज्यत्वं स्यात्। स्वर्गादिसिद्धिपर्यन्तत्वात् अध्ययनविधिफलस्य॥

ननु अध्ययनमप्युत्तरविधिप्रयुक्तं स्यात्, अध्ययनमन्तरेण विचारनिर्णयक्रत्वनुष्ठानाद्यसिद्धेरिति; तत्राह—अतः प्रागध्ययनादप्रतिपत्तेरिति। प्रागध्ययनादुत्तरविधीनामप्रतिपत्तेः नाध्ययनप्रयोजक- 236 - 4

ता. इत्यत आह—उत्तरविधीति। ननु एकस्य विचारस्य अनेकविधिप्रयोज्यत्वं कथम्? इत्यत आह—प्रतिवाक्यमिति। अध्ययनविधेरेव विचारप्रयोजकत्वे यागाद्यनुष्ठापकत्वं स्यादिति दोषान्तरमाह—अन्यथेति। ननु विधेयतदुपकारकत्वाभावे कथमध्ययनविधेर्यागाद्यनुष्ठापकत्वम्? इति; तत्राह—स्वर्गादीति। अर्थावबोधस्य स्वरूपेण अपुरुषार्थतया स्वर्गादिफलपर्यन्तत्वात् तत्सिद्धये यागाद्यनुष्ठापकत्वं स्यादेवेत्यर्थः॥

अतिप्रसङ्गं शङ्कते—नन्विति। ननु अध्ययनस्योत्तरविध्युपकारकत्वाभावे कथं तत्प्रयोज्यत्वम्? इत्यत आह—अध्ययनमिति। ननु

भा. मैवम्—उपनयनं तावत् श्रुतौ स्मृतौ च अध्ययनप्रकरणपठितं तदङ्गमेव। न चैवमङ्गाङ्गिनोरेकाधिकार्यतानुपपत्तिः; उपनयनसंस्कारयोग्यस्य अध्ययनेऽधिकारात्। अध्ययनार्थं ह्याचार्यमुपगच्छतीति। तथाऽस्त्येव प्रागध्ययनकर्तव्यताप्रतिपत्तिः। नच द्विजस्यैवा[न]ध्ययने प्रत्यवायस्मरणात् उपनीतस्यैव अधिकार इति वाच्यम्; उक्तरीत्या उपनयनस्या*त्वात् द्विजयोग्यस्यैव अध्ययने दोषकीर्तनस्य स्मृतावपि विवक्षितत्वात्। अथवा, अध्ययन इव सन्ध्यादीनामप्यध्ययनेऽपि साध्यस्वाध्यायस्य कामनैव कर्तव्यताप्रतिपत्तिनिमित्तमधिकारः। उपनयनं त्वारम्भणीयेव दर्शपूर्णमासयोरध्ययनस्यारम्भनिमित्तमस्तु। अर्थावबोधकामाधिकार एव ग्रन्थे निराकृतः॥

* अत्र ग्रन्थे त्रुटिः॥

त्वमित्यर्थः । अध्ययनविधिश्च सन्ध्योपासनादिविधिवत् पित्रादिभ्यः श्रूयमाणः प्रवर्तयति । न च सकलोत्तरविधीनामध्ययनात् प्राक् श्रवणं सम्भवतीत्युक्तम् । अस्तु तर्हि ब्रह्मज्ञानस्यापि त्रैवर्णिकाधिकृतोत्तर-
236 - 6 नित्यविधिप्रयुक्त एव विचार इति ; नेत्याह—न तथा ब्रह्मज्ञानमिति ।
न च धर्मब्रह्मविभागसिद्ध्यर्थं नित्याग्निहोत्रादिविधिरेव ब्रह्म विचारयति,
236 - 7 आपातदर्शनेनैव विविक्तभूतवस्तुविषयत्वात् । तस्मात् इत्यवान्तरप्रकरणो-
236 - 8 पसंहारः । तदेवमिति महाप्रकरणोपसंहारः ॥

ननु

'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥'

---

ता. अध्ययनविधिरपि अध्ययनात् प्रागप्रतिपन्नः कथं तत्प्रयोजयेत् ? इत्यत आह—अध्ययनविधिश्चेति । तर्हि उत्तरक्रतुविधिष्वपि पित्राद्युपदेशादेव प्राप्तिः किन्न स्यात् इत्यत आह—न च सकलेति । यथा नित्यविधिरेव धर्मस्य अधर्माद्विभागसिद्ध्यर्थं अधर्ममपि विचारयति एवं क्रतुविधिरेव विभागसिद्ध्यर्थं ब्रह्मापि विचारयेदित्यत्राह—न चेति ॥

एवं प्रसङ्गागतं परिसमाप्य, अथशब्दस्य प्रारम्भार्थत्वाभावेऽपि मङ्गलार्थता किन्न स्यात् इति शङ्कते—नन्वोङ्कार इति । अथशब्दस्य मङ्गलार्थत्व-

---

भा. तत्र यद्यपि 'दर्शपूर्णमासावारप्स्यमाणः' इति वाक्यादेव तस्यास्तदर्थत्वं प्रतीयते । न चात्र वाक्यमस्ति । तथापि 'योऽनधीत्य द्विजो वेदान्' इति संस्कारविशिष्टस्यैव तदा द * कत्वप्रतीतेरङ्गसंस्कारस्य तस्य कर्माधिकारनिमित्तत्वानुपपत्तेः, अधिकारिसंस्कारार्थतया आरम्भार्थतैव युक्ता । एतच्च पक्षद्वयं उपनयनस्य अङ्गत्वं अध्ययनस्य उपनीताधिकारत्वं वर्णयतो ग्रन्थकारस्य सम्मतम् । 'यस्यैते चत्वारिंशत् संस्काराः' इति स्मृतिरध्ययनद्वारा धर्मोपकारकत्वेऽप्यविरुद्धा । आधानस्याप्युत्तरक्रतुद्वारैव पुरुषसंस्कारत्वात्, गुणकर्मणः तस्य आत्मनि साक्षात् संस्कारानाधायकत्वादिति ॥

---

अत्र ग्रन्थे त्रुटिः ॥

इति मङ्गलार्थत्वादथशब्दस्य शास्त्रारम्भे च शिष्टाचारपरिपालनाय विघ्नोपशान्तये च मङ्गलाचरणं कर्तव्यमिति तदर्थोऽथशब्द इति; नेत्याह— मङ्गलस्यापीति। न तावन्मङ्गलं ब्रह्मजिज्ञासायाः कर्तृकरण- 237-2
कर्मभावेन वाक्यार्थेऽन्वेति। कर्त्राद्यन्यतमभावे प्रमाणाभावात् कारकान्तराणां विद्यमानत्वाच्च। नापि सामानाधिकरण्येनान्वयः—ब्रह्मजिज्ञासा मङ्गलमिति। प्रशंसापरतया अर्थवादत्वप्रसङ्गात्। ननु कर्तव्यमेव मङ्गलाचरणमिति; तत्राह—श्रुतिमात्रोपयोगादिति ॥ 237-2

ननु प्रकृतादर्थादर्थान्तरविवक्षयापि अथशब्दः प्रयुज्यते, यथा—अर्थान्तरेऽभिहितेऽर्थान्तरविवक्षया ब्रवीति—'अथैवं मन्यसे' इति, तदर्थोऽथशब्द इति चोदयति—ननु प्रक्रियमाणादिति। हेतुफलभावेन आनन्तर्या- 237-4
भिधाने प्रकृतादर्थादर्थान्तरत्वमन्तर्णीततया सिध्यतीति न पृथग्वक्तव्यमिति परिहरति—नैतदानन्तर्याद्व्यतिरिच्यत इति। ननु अर्थान्तरत्वमेव 237-6
अभिधाय आनन्तर्यमन्तर्णीतं किमिति न गृह्यते इति चोदयति—कथ- 237-6
मिति। तत्र किं नियमेन पूर्ववृत्ततया हेतुभूतो वस्तुविशेषोऽवद्योत्यते? किं वा यत्किंचिद्वस्तु पूर्ववृत्तमपेक्ष्यते? इति। तत्र न तावत् प्रथमः कल्पः, आनन्तर्याभिधानमन्तरेण हेतुतया पूर्ववृत्तवस्तुविशेषनियमासिद्धेः इत्याह—एवं तत्प्रक्रियमाणस्य नियमेन पूर्ववृत्तमिति। अथोत्तरः कल्प- 237-7
स्तत्राह—अन्यथा यस्मिन्कस्मिंश्चिदिति ॥ 237-9

नन्वानन्तर्येऽपि हेतुतया पूर्ववृत्तं नावगम्यते। सत्यम्। पुष्कलकारणात् फलस्यानन्तर्यमेव मुख्यं भवति, अव्यवधानादव्यभिचाराच्च। अहेतुफलयोस्त्वानन्तर्यं कदाचिद्व्यभिचरति कदाचिद्व्यवधीयते चेति गौणमेव स्यात्। तस्मात् मुख्यानन्तर्याभिधानेन पूर्ववृत्ते पुष्कलकारणेऽवद्योतिते अर्थान्तरभावोऽप्यन्तर्भवति नार्थान्तराभिधाने

---

सम्भवेऽपि इहोपयोगो नास्तीत्यत्राह—शास्त्रारम्भे चेति। किं मङ्गलं कारकत्वेनान्वेति? किं वा सामानाधिकरण्येन? इति विकल्प्य, क्रमेण दूषयति—न तावदिति ॥ ता.

238 - 1 मुख्यमानन्तर्यमन्तर्भवति इत्युपसंहरति—अतो हेतुभूतोर्थोऽपेक्षितव्य
238 - 2 इति । उक्तेऽर्थे भाष्यमवतारयति–तदेतदा[तदिदमा]हेति । ननु फलं चेत्
दृश्यते किं पुष्कलकारणावगमेन ? । न—अधिकारिविशेषणत्वेन
238 - 3 फलपर्यन्तेच्छाया विचारादिप्रवृत्तौ प्रतिपत्त्यपेक्षत्वादित्याह—सति
चानन्तर्यार्थत्व इति । ननु प्रज्ञातमेव पूर्ववृत्तं धर्मजिज्ञासासूत्रे इत्या-
238 - 6 शङ्क्याह—स्वाध्यायाध्ययनानन्तर्यं तु समानमिति । भाष्यार्थं विवृणोति–
238 -6-11 येन विना नियमेनेत्यादिना । योजनान्तरमाह—अथ वेति । न पुष्कलं
कारणमित्यर्थः ॥

नन्वेकाध्ययनविधिप्रयुक्तस्वाध्यायाध्ययनस्यैकमोक्षप्रयोजनत्वे वक्तव्ये अध्ययनविधिप्रयुक्तत्वाभावेऽपि कृत्स्नवेदार्थविचारस्यैकफलप्रयुक्तत्वात् धर्मब्रह्मविचारयोरन्योन्योपकार्योपकारकभावेनैकफलशेषत्वादुपकारक धर्मावबोधानन्तर्यमुपकार्यब्रह्मावबोधस्योच्यत इति चोदयति–
239 - 3 नन्विह कर्मावबोधानन्तर्यं विशेष इति । धर्मब्रह्मविचारयोरुपकार्योपकारकभावं
239 - 3 दर्शयति–तथा च वृत्त्यन्तरे वर्णितमिति । अधिकारः–प्रवृत्तिः, संस्कारः–
फलम्, प्रवृत्तिपरम्परया फलपरम्परया चेत्यर्थः । अथवा, 'संस्कार'
इति कर्मभिः पुरुषसंस्कारोऽभिधीयते । 'शब्दत' इति च तत्र प्रमाण-
मुच्यते इति । अधिगतानन्तरम्–धर्माधिगत्यनन्तरमित्यर्थः । अस्मिन्नर्थे
239 - 7 शास्त्रकारसंवादान्तरमाह—अन्यैरपि स्ववृत्तौ वर्णितमित्यादिना ॥

एकफलवत्त्वं तावत्तिष्ठतु, न तावत् धर्मब्रह्मजिज्ञासयोरुपकार्यो-
240 - 1 पकारकभाव इत्याह—न–धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्येति । भाष्यं
240 - 3 विवृणोति–वेदान्ताध्ययनं यद्यपीत्यादिना । ननु धर्मजिज्ञासायां व्युत्प-
न्नवेदप्रामाण्यपदपदार्थवाक्यार्थतदपेक्षितन्यायस्यैव ब्रह्म विचारयितुं
240 - 5 शक्यत इति चोदयति—कथमिति । अनुपकारं दर्शयितुं धर्मजिज्ञासां
240 - 5 विभजते–तत्र तावद्धर्मजिज्ञासायां त्रयं वृत्तमिति । किं तदिति ; तदाह—
240 - 6 द्वादशलक्षणे इत्यादिना । तत्र न्यायसहस्रस्यानुपकारं दर्शयितुं न्यायमपि

---

ता. ननु पुष्कलं कारणमज्ञायमानमपि जनयत्येव कार्यं तत्र किमथशब्देन तज्ज्ञापकेनेति शङ्कते—ननु फलं चेदिति ॥

विभजते—तत्र यः प्रथमसूत्रे इत्यादिना। अध्ययनविधेः दृष्टार्थावबोधफल- 240 . 8
पर्यन्ततापेक्षितो न्यायोऽथशब्दसूचितः प्रथमेन पादेन च यावान्
वेदप्रामाण्यापेक्षितो न्यायः स सर्वोऽपेक्ष्यताम्, प्रथमस्य पादस्य
धर्मब्रह्मजिज्ञासयोः साधारणत्वात् न तदानन्तर्यं धर्मजिज्ञासानन्तर्य-
मित्यर्थः ॥

ननु इहापि 'शास्त्रयोनित्वात्' 'अत एव च नित्यत्व'मित्यादौ वेदप्रामाण्यापेक्षितो न्यायः सूत्रित एव, कुतः प्रथमपादापेक्षा? इति। सत्यम्, अङ्गीकृत्यैतदुक्तमिति न विरोधः ॥

ननु श्रुतिलिङ्गादिप्रमाणानामिहापि अपेक्ष्यमाणत्वात् इतरोऽपि
न्यायः पूर्ववृत्ततया अपेक्षित इति; नेत्याह—इतरस्य(तु)पुनरिति। उत्पत्ति- 240 . 12
विनियोगप्रयोगाधिकारविधिकार्यापेक्षितो हि न्यायः तत्र प्रतिपादितः,
न च अननुष्ठेयभूतवस्तुप्रतिपादनेऽसावुपयुज्यते, कार्यार्थसाम्येऽपि प्रत्य-
ध्यायमवान्तरप्रमेयभेदेन न्यायभेदोऽपेक्ष्यते, किन्तु वक्तव्यमकार्य-
भूतवस्तुप्रमेयभेदे इति भावः। श्रुत्यादयस्तु लोकप्रसिद्धा एव उपा-
दीयन्ते। नन्तु कार्यशेषतया ब्रह्मापि तत्र निर्णीतमिति; नेत्याह—
यतो न निरस्ताशेषेति। अप्रतिज्ञातस्याप्यपेक्षितन्यायोऽन्यार्थत्वेन 241 . 1
दर्शित इति; नेत्याह—न तत्प्रतिपादन इति। ननु गुणोपसंहारेण 241 . 2
विध्यपेक्षितोऽपि न्याय उपजीव्य इति; तत्राह—यत्पुनः प्रथम- 241 . 4
तन्त्रसिद्धेति। ननु सगुणविद्यापि ज्ञानमेवेत्यत आह—तत्र च मानसी 241 . 5
क्रियेति। तदेवमित्युपसंहारः ॥ 241 . 6

मा भूद्धर्मजिज्ञासानन्तर्यमथशब्दार्थः, वेदप्रामाण्यविचारान-

---

ता. अप्रतिज्ञातस्याधर्मस्य यथा अपेक्षितो न्याय उक्तः, तद्वत् ब्रह्मणोऽपि किं न स्यात् इत्यत्राह—अप्रतिज्ञातस्यापीति। ननु सम्बन्धानिरूपणमसिद्धम्,

---

भा. प्रथमस्य पादस्य धर्मब्रह्मजिज्ञासयोः साधारणत्वादिति। तथा च अत्र तस्य ब्रह्मविचारकर्तव्यतासिद्ध्युत्तरकालत्वात् न अस्यास्तदानन्तर्यमित्यर्थः। दूषणान्तरमाह—न तदानन्तर्यमिति ॥

241-8 न्तर्यं स्यादिति; नेत्याह—यत्पुनः स्वाध्यायस्यार्थावबोधोपयोगे इति।
न च वेदाः प्रमाणमित्येतावता ब्रह्मविचारेऽनेकायासबहुले कश्चित्
प्रवर्तत इत्यर्थः। तर्हि धर्मनिर्णयज्ञानं ब्रह्मजिज्ञासाधिकारहेतुरिति; नेत्याह
241-11 —यः पुनरिति। उपयुज्यमानो धर्मनिर्णयो ब्रह्मविचारप्रवृत्त्युपयोगी स्यात्
किं वा ब्रह्मनिर्णयोपयोगी इति वक्तव्यम्। न तावत् प्रथमः कल्प इत्याह
241-12-13—न ह्यन्यविषयं ज्ञानमिति। नापि द्वितीय इत्याह—तदपीह नास्तीति।
कार्यकारणसम्बन्धे प्रपञ्चेनापि ब्रह्मानुमानात् न धर्मनिर्णयापेक्षेति भावः।
242-1 परिशेषात् कर्मणामुपयोग इत्याह—अतः कर्मणामुपयोगः परिशिष्यत इति।
तदपि न सम्भवति केषुचित् पक्षेष्विति भावः॥

तत्र अधिकारपरम्परा ब्रह्मज्ञानोपकारश्च न सम्भवतीत्याह—
242-4 केयमधिकारपरम्परेति। ननु अनुष्ठानपरम्परेयम्, तथा हि—सन्ध्यो-
पासनमारभ्य पूर्वपूर्वाल्पतरकर्मप्रहाणेन उत्तरोत्तरमहत्तरकर्मोपादानात्
सहस्रसंवत्सरे निरतिशये कर्मणि अवसितः परिशेषात् ब्रह्मज्ञानेऽवतर-
242-5 तीति; नेत्याह—यथा तावत्प्रासादमारुरुक्षोरिति। उत्तरकर्मोपादानात्
पूर्वकर्मपरित्यागे परिशेषात् ब्रह्मज्ञानावतारे च प्रमाणाभावादिति। तर्हि
परम्परया कृत्स्नकर्मफलावाप्तौ तत्र कामनाऽभावात् निवृत्तकामः परमा-
242-9 नन्दकामनया तत्र अवतरतीत्याशङ्कते—अथ कामोपहतमानस इति। तदेव
242-11 243-1 प्रपञ्चयति—तथा च सार्वभौमत्वादीति। अधिकारपरम्परया—फलपरम्परये-
243-4 त्यर्थः। परिहरति—कर्मानुष्ठानानन्तर्यं तर्हि वक्तव्यमिति। कर्मानुष्ठान-
फलप्राप्त्यनन्तरभावित्वात् ब्रह्मविचारस्य न मनुष्याधिकारं शास्त्रं
स्यादित्यर्थः॥

किं च, कर्माण्यपि ब्रह्मज्ञानस्य अन्यथा उपकुर्वन्ति न काम-
243-5-9 प्रविलयनद्वारेणेत्याह—कथं वा कामा(वा)प्तिः कामोपशमहेतुरिति। सत्यमि-

---

ता. कार्यकारणसम्बन्धस्य सद्भावादिति; तत्राह—कार्येति। केषुचिदिति।
शुद्धिद्वारव्यतिरिक्तपक्षेष्वित्यर्थः। इदानीं कामविलयपक्षे प्रमाणमपि नास्तीति
दूषयति—किञ्चेति॥

त्यतः प्राक्तनः स्पष्टार्थः। हैरण्यगर्भादिभोगानां प्रतिक्षणं क्षीयमाणत्वात् अनागतभोगनिचयकामनोपपत्तेः कामविलयनेन ब्रह्मज्ञानेऽवतार इत्याह—सत्यं युक्तम्, यदि हैरण्यगर्भो भोग इति। कुतस्तर्हि सर्वेषां 243 - 9
कामविलयः? इति; तदाह—अतो विषयस्य क्षयादिदोषदर्शनादिति। 243 - 11
तस्मात् सर्वत्र इत्युपसंहरति। किं च, निखिलविषयाप्तौ कामोपशमः 244 - 4
शास्त्रसामर्थ्यादुच्यते? किं वा अन्वयव्यतिरेकसामर्थ्यात्? । नाद्य इत्याह—न चैवंलक्षण आगम इति। तर्हि अन्वयव्यतिरेकसामर्थ्यादिति 244 - 6
चोदयति—ननु कामावाप्ताविति। परिहारग्रन्थस्तु स्पष्टार्थः। वैदिकाः 244 - 8
शब्दाः सर्वे संभूय देहात्मत्वादिप्रपञ्चप्रविलयप्रमितिपरा इति तृतीयोऽधिकारः, स च प्रतीतिविरोधादेव निरस्त इति ॥

ननु तर्हि कर्माण्यनुष्ठीयमानानि पुरुषसंस्कारतया ब्रह्मज्ञानकार्याणि, अतो धर्मानुष्ठानानन्तरं ब्रह्मजिज्ञासेति चोदयति—भवतु तर्हि संस्कार- 245 - 3
द्वारेणेति। ननु 'सर्व एते पुण्यलोका भवन्ति' इति स्वतन्त्रपुरुषार्थसाधनानां कर्मणां कथं संस्कारकर्मतया प्रोक्षणादिवत् गुणकर्मता?। स्मृतिसामर्थ्यादिति चेत्, न—श्रुतिविरोधात्। ननु संस्कारो नाम गुणाधानं मलापकर्षो वा? तत्र 'धर्मेण पापमपनुदति' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इति च आत्मनि मलापकर्षसंस्कारः सिध्यति। विध्यन्यथानुपपत्त्या वा आत्मन्यपूर्वगुणाधानं गम्यते। अतः श्रुत्यवगतमेव संस्कारकर्मत्वम्। 'इदं मेऽनेनाङ्गं संस्क्रियते' इति च श्रुतेः। न च क्रत्वङ्गद्रव्यसंस्कारतया नित्यकर्मणामितिकर्तव्यतोच्यते, येन

---

वैदिकाः शब्दा इति। 'स्वर्गकामो यजेत' इति वाक्यं देहात्मत्वप्रविलापनपरम्, देहव्यतिरिक्तात्माभावे स्वर्गसम्बन्धाभावात्; एवं 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्याद्यधिकृताधिकारविषयं वाक्यमधिकारिभेदप्रविलापनपरमित्यर्थः। ननु स्वतन्त्रफलानां कर्मणां ब्रह्मज्ञानाङ्गत्वमनुपपन्नम्, स्वतन्त्रफलसाधनत्वविधिविरोधात् इति; तत्राह—न च क्रत्वङ्गेति। ता.

स्वतन्त्रफलविरोधः स्यात्। किं तु द्रव्यार्जनविधिवत् उपकारमात्रमिति। सत्यम्। पापक्षयापूर्वलक्षणसंस्कारात् अभ्युदयफले श्रुत्यवगते न ब्रह्मज्ञानशेषता शक्या अवधारयितुं स्मृतिसामर्थ्यादिति। उच्यते—नित्यनैमित्तिककर्मानुष्ठानैः संस्कृतस्य आत्मनो यदि श्रवणमननध्यानाभ्यासादीनि ज्ञानसाधनानि सम्पद्यन्ते तदा संस्कारकर्माणि सहकारिविशेषात् आत्मज्ञानमवतारयन्ति यदा तु सहकारिकारणविरहः तदा अभ्युदयफलं इति व्यवस्थोपपत्तेः न श्रुतिस्मृत्योः परस्परविरोधः॥

ननु 'यस्यैते चत्वारिंशत् संस्काराः' इत्यत्र 'स ब्रह्मणः सायुज्यं सालोक्यं गच्छति' इति सालोक्यलिङ्गात् हिरण्यगर्भावाप्तिः संस्कारकर्मणां फलं गम्यते, न परब्रह्मावाप्तिः, येन सहकारिसामर्थ्यात् कर्मणां पुरुषसंस्कारद्वारेण मोक्षफलता स्यात्। उच्यते—संस्कारशब्दस्तावत् दधिव्रीहिसंस्कारवत् स्वतन्त्रफलसाधनाङ्गभूतद्रव्यशेषतां कर्मणां प्रतिपादयति। तत्र सर्वकर्मणां संस्कारतया अन्वयात् परिशेषार्थापत्त्या तत्त्वज्ञानशेषतया मोक्षफलता कल्प्यते। 'ब्रह्मणः सायुज्यं सालोक्यम्' इति च फलद्वयोपादानात्। तथा हि भगवान्—'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इत्युपक्रम्य 'सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे' इति चोक्त्वा 'बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥ ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति च ब्रुवन् नित्यकर्मभिः संस्कृतस्य सिद्धिशब्दाभिधेयविशुद्धान्तःकरणस्य ध्यानयोगादिसहकारिसम्पत्तौ तत्त्वज्ञानजन्मद्वारेण मोक्षं दर्शयति। 'स्वे स्वे कर्मणि' इति च नित्यकर्माण्युच्यन्ते। संसिद्धिशब्देन च आत्मवैमल्यं ब्रह्मज्ञानयोग्यतापत्तिरुच्यते।

---

ता॰

फलद्वयोपादानादिति। 'ब्रह्मणः सायुज्यं सलोकता'मिति फलद्वयकीर्तनात्। श्रवणादिसहकारिविशेषसम्पत्तौ मोक्षफलता इतरथा सालोक्यप्राप्तिरिति व्यवस्थेत्यर्थः। ननु तर्हि सिद्धिशब्देन मोक्षस्य अभिधानात् कर्मणां मोक्षहेतुत्वं प्रतीयत इति; तत्राह—संसिद्धिशब्देन चेति। उत्तरत्राभिधानात्। 'विशते

परमसिद्धेरुत्तरत्र अभिधानात्, 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इत्युक्तत्वाच्च। तथा 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः' 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति च। तस्मात् संस्कारशब्दसामर्थ्यात् स्मृत्यन्तराच्च नित्यकर्माणि मलापकर्षगुणाधानलक्षणपुरुषसंस्कारद्वारेण आत्मज्ञानयोग्यतामापाद्य तत्त्वज्ञानजनकतया मोक्षे ज्ञानेन सह समुच्चीयन्ते। यथा व्रीहिप्रोक्षणादीनि संस्कारकर्माणि दर्शपूर्णमासस्वरूपोत्पत्तिहेतुतया स्वर्गे समुच्चीयन्त इति ॥

ननु प्रोक्षणादिवत् एकाधिकारतया गुणकर्मतैव नित्यकर्मणां प्राप्ता। न—ब्रह्मज्ञानस्य अविधेयत्वात्। आत्मनः संस्क्रियमाणस्य विधेयकर्मगुणत्वाभावात्। न तर्हि संस्कारकर्मता, विहिताङ्गद्रव्यसंस्कारकर्मसु तत्प्रसिद्धेः। न—अविहितभोजनाङ्गदधिसंस्कारप्रसिद्धेः। ननु विध्युद्देशे करणतया विहितानां नित्यकर्मणां करणताविरोधिनी दध्यादिसंस्कारवत् आत्मज्ञानेतिकर्तव्यता प्राप्ता। नैष दोषः—'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति सौत्रामणीबृहस्पतिसवयोरन्यत्र करणतया स्वतन्त्रविध्यन्तरविहितयोः अग्निचयनवाजपेयाङ्गतया इतिकर्तव्यतादर्शनात्। तत्र करणेतिकर्तव्यताविधि-

---

तदनन्तरम्' इत्युत्तरत्र मोक्षस्याभिधानादित्यर्थः। उक्तेऽर्थे दृष्टान्तमाह— यथेति ॥  ता.

ननु प्रोक्षणादिवत् ब्रह्मज्ञानशेषत्वे कर्मणामधिकृताधिकारत्वं गुणकर्मत्वं च स्यादिति चोदयति—**नन्विति**। विधेयाङ्गद्रव्यसंस्कारकर्मणो गुणकर्मत्वादात्मज्ञानस्ये(त्याह अ)[हा] विधेयत्वात् नैवमिति परिहरति—**न ब्रह्मज्ञानस्येति**। नित्यकर्मणामितिकर्तव्यभावो विरुद्ध इति शङ्कते—**ननु विध्युद्देशे इति**। किमर्थविरोध उच्यते? किं वा प्रमाणाभावः? इति विकल्प्य, आद्यं दूषयति—**नैष इति**। द्वितीयं पक्षमुत्थापयति—**तत्रेति**। अत्रा(भ्युद)[प्युभ]

वाक्यप्रमाणभेदात् युक्तं सौत्रामण्यादेरुभयथात्वमिति चेत् , सत्यम् , अर्थविरोधाभावे सति नित्यविधिसामर्थ्यात् संस्कारस्मृत्यनुमितश्रुतिसामर्थ्याच्च करणतया संस्कारतया च स्वतन्त्रफलशेषता आत्मज्ञानेतिकर्तव्यता च इत्युभयथात्वमिहापि कल्प्यताम् । न च अन्यार्थद्रव्यसंस्कारमात्रत्वात् इतिकर्तव्यता । आधानेऽदर्शनात् । संस्कृताग्नेरुद्देश्यत्वात् तत्रानङ्गतेति चेत् , इहापि संस्कृतं विशुद्धान्तःकरणं विरक्तं विविदिषुमुद्दिश्य ज्ञानसाधनविधानादविरोधः । प्रत्यक्षेण विशुद्धिं प्रत्यक्प्रवणतां च चित्तस्य कर्मफलमवगच्छन् जन्मान्तरानुष्ठितं कर्म अनुमाय ज्ञानस्य अन्तरङ्गसाधनेषु प्रवर्तिष्यत इति । तस्मात् स्वतन्त्रविध्यन्तरविहितद्रव्यार्जनस्य सहकारिकारणसम्पत्तिभेदात् क्रतुभोगयोः शेषत्ववत् नित्यकर्मणामपि सहकारिभेदात् आत्मज्ञानाभ्युदययोः शेषत्वं न विरुध्यत इति ॥

---

ता. यद्ग्राहकं प्रमाणमस्त्येवेति परिहरति—**सत्यमिति** । **नित्यविधिसामर्थ्यात् करणतया** स्वतन्त्रफलशेषता, **संस्कारस्मृत्यनुमितश्रुतिसामर्थ्यात् संस्कारतया आत्मज्ञानेतिकर्तव्यता** च इति योजना । अङ्गीकृत्यैतदुक्तम् , वस्तुतस्तु तत्राप्यनियम इत्याह—**न चेति** । वैषम्यमाशङ्क्य परिहरति—**संस्कृतेति** । ननु कर्मणां ज्ञानसाधनत्वे यावज्ज्ञानोदयं तदनुष्ठानात् विविदिषासंन्यासो न सिध्येदिति; तत्राह—**प्रत्यक्षेणेति** । **अन्तरङ्गसाधनं** संन्यासपूर्वकश्रवणमननादि । **सहकारिसाधनसम्पत्तिभेदादिति** । श्रद्धादिकारणभेदात् क्रतुशेषत्वं , रागादिभेदात् भोगशेषत्वमित्यर्थः ॥

---

भा. ननु वाजपेयप्रकरणे प्रसिद्धबृहस्पतिसवात् अन्यदेव तत्समानं प्रकरणान्तरन्यायेन 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन' इति वाक्यं विधत्ते । [प्रसिद्ध] बृहस्पतिसवार्थत्वे तु कालविधिपरमेवैतद्वाक्यमिति 'समवाये चोदनासंयोगस्यार्थवत्त्वात्' (जै-सू 4-3-29.) इति न्यायविरोधः स्यादित्याशङ्क्य, सत्यं कर्मणामपि न पारार्थ्यरूपशेषत्वं ब्रूमः, किन्तु आधानवदुपकारकत्वमात्रमित्याह (मात्रस्य) [**न चान्यार्थद्रव्य**] **संस्कारमात्रत्वादिति** ॥

योऽपि कश्चित् सर्वसंकरवादी वेदान्तार्थसूक्ष्मदूरीकृतविज्ञानो वेदान्तार्थदूषको न संस्कारार्थानि नित्यानि कर्माणीति वक्ति, स शास्त्रार्थविभागज्ञानशून्यत्वात् उपेक्षणीय इति ॥

अथ वा—सर्वाण्येव कर्माणि उत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकारविध्यन्तरवत् ब्रह्मानुभवकामो यज्ञादीनि अनुतिष्ठेत इत्यधिकारान्तरविधिविधेयानि भविष्यन्तीत्याह—यज्ञेन दाने- 245-8
नेत्यादिना। कथम् ?। आत्मतत्त्वापरोक्षानुभवस्तावदिष्यमाणतया स्वर्गादिवद्भावनासाध्योऽवगम्यते, पुरुषार्थत्वात्। शाब्दज्ञाने तु संजाते तत्कामनाऽयोगात् असञ्जाते विषयानवगमादेव तत्र कामनाऽयोगात् शब्दावगते अपरोक्षज्ञानमिष्यत इति युक्तम्। तच्च प्रयत्नान्तरसाध्यमिति पुरस्ताद्दर्शितम्। तत्र यज्ञादीनामिच्छोपसर्जनतयाऽऽख्याताभिहितभावनाकरणतया अवगतानां साध्येनैव अन्वयात् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि। ततश्च 'आत्मानुभवकामो यज्ञादीन्यनुतिष्ठेत्'इति विधिः परिणम्यते। न च इच्छामात्रेण संयोगः। तस्या असाध्यमानतावगमात्। न च 'विविदिषन्ति' इति वर्तमानताविरोधः, लेट्परिग्रहेण

उक्तमेवार्थं प्रश्नपूर्वकं विवेचयति—**कथमित्यादिना**। ननु शाब्दज्ञानमेवेष्यताम्, किमपरोक्षज्ञानेन ? इति; तत्राह—**शाब्दज्ञाने त्विति**। ननु प्रथमत एव अपरोक्षज्ञानं जायतामिति; नेत्याह—(ततश्चेति।) [तच्चेति।] भवत्वेवम्, तथापि यज्ञादीनां तत्साधनता कथम् ? इति; तत्राह—**तत्र यज्ञादीनामिति**। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति वाक्ये सन्प्रत्ययवाच्येच्छोपसर्जनतया वेदनं प्रतीयते, पञ्चमलकारेण च भावना प्रतीयते, तथा सति इष्यमाणवेदनमेव यज्ञादीनां भाव्यं पुरुषार्थत्वात् अभ्युपेयम्, तत्र च यज्ञादीनां करणत्वं तृतीयाश्रुत्या अवसीयते, [ते] न अश्वेन जिगमिषती(ति त)[त्य]त्राश्वस्य गमनकरणत्ववत् यज्ञादीनामिष्यमाणज्ञानकरणत्वं प्रतीयत इत्यर्थः। कथं तर्हि वाक्यविपरिणामः ? इति; तत्राह—**ततश्चेति**। यथाश्रुतेच्छासाधनत्वमेव कस्मान्न गृह्यते ? इति; तत्राह—**न चेति**॥ ता.

विधेरेव अवगमात्। न च नित्यकाम्याधिकारान्तरविरोधः। एकस्य कर्मणोऽनेकाधिकारविधिसम्बन्धावगमात् ॥

ननु कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रस्य प्रकरणान्तरत्वात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववत् विविदिषावाक्यस्य च प्रकरणान्तरत्वात् न प्रसिद्धाग्निहोत्रादीनामत्र विनियोगः कल्पयितुं शक्यते। अतः कर्मान्तराण्येव इह उत्पत्त्यधिकाराभ्यां सह विधीयन्ते। नैतद्युक्तम्—कुण्डपायिनामयने अग्निहोत्रशब्दस्य अलौकिकाभिधानत्वात् आख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनः स्वातन्त्र्येण प्रदेशान्तरविहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः आख्यातस्य च जुहोतेः सामान्यवाचिनः स्वसन्निहितकारकादिनिरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शित्वायोगात् कर्मान्तरमेव मासगुणविशिष्टं विधीयत इत्युक्तम्। इह तु अध्ययनयज्ञदानतपोऽनाशकशब्दानां लौकिकाभिधानतया स्वातन्त्र्यात् प्रदेशान्तरविहिताध्ययनादिपरामर्शोपपत्तेः तान्येव कर्माणि संयोगभेदेन विधीयन्त इत्युपपद्यते ॥

ता. ननु एवमपि ब्रह्मज्ञानं दृष्टप्रमाणसामग्रीजन्यत्वात् न अदृष्टमपेक्षते।

---

एकस्येति। एकमेवाग्निहोत्रं काम्यं नित्यं चाङ्गीक्रियत इत्यर्थः। नैतद्युक्तमिति। अयमर्थः—अग्निहोत्रशब्दस्य अलौकिकार्थत्वात् प्रसिद्धार्थजुहोतिपदसमभिव्याहारेण स्वार्थसमर्पकत्वं वक्तव्यम्, तथा च स्वप्रकरणपठितोपसद्भिर्मासगुणेन च विशिष्टं जुहोत्यर्थं विहाय प्रकरणान्तरपठितप्रसिद्धाग्निहोत्रपरामर्शकत्वानुपपत्तेः कर्मान्तरपरत्वम्। इह तु यज्ञादिशब्दानां लौकिकार्थत्वात् न कर्मान्तरपरामर्शकत्वमिति। केवलव्यतिरेकाभावात् यज्ञादेः ज्ञानकारणत्वं न कल्पनीयमिति शङ्कते—नन्विति। यत्र अन्वयव्यतिरेकाभ्यां कारणत्वं लक्ष्यते,

---

भा. यथा 'एष वाव प्रथमो यज्ञो यज्ञानां यत् ज्योतिष्टोमः' इत्यत्र षष्ठ्यन्तयज्ञशब्दो व्यवहितानपि यज्ञान् परामृशति तथा अत्रापीत्याह—इह त्वध्ययनयज्ञदानेति ॥

सति प्रमाणकारणे यज्ञाद्यभावात् ज्ञानोदयादर्शनाभावात्। नैतत्—दृष्टकारणक्लृप्तौ हि अन्वयव्यतिरेकप्रमाणान्तर्भूतत्वात् केवलव्यतिरेकस्य तदपेक्षा युज्यते। इह तु सुखस्य दृष्टकारणसम्पत्तौ केवलव्यतिरेकाभावेऽपि विधानादेव अदृष्टसापेक्षत्ववत् सम्यग्ज्ञानेऽपि विधानादेव अदृष्टसापेक्षत्वमुपपद्यते॥

ननु कर्मणां विज्ञाने विनियोगद्वाराभावात् विज्ञानफले मोक्षे विनियोगः कल्प्यत इति। उच्यते—यथा यागादिकर्मणां स्वर्गाद्युद्देशेन विहितानां तदुपपत्तये विधिसामर्थ्यादेव मध्यवर्त्यपूर्वाणि कल्प्यन्ते एवं इहापि अन्तःकरणशुद्धिचित्तैकाग्र्यादिद्वारं कल्प्यतामिति। किंच, साक्षाच्छ्रुतज्ञानसाधनत्वानुपपत्तौ तत्फलसाधनत्वकल्पनात् वरं परम्परयापि तत्साधनत्वकल्पनम्; करणविभक्तेः 'काष्ठैः पचति' इति परम्परया साधनेऽपि दर्शनात्। फलसाधनत्वेऽपि तदयोगात्। न च अस्मिन् वाक्ये यज्ञादिसाध्यो मोक्षः श्रूयते। आत्मा तु ज्ञानकर्मतया तत्साध्योऽवगम्यते, न यज्ञादिसाध्यः। किं च, प्रमाणान्तरविरोधं परिहृत्यैव श्रुतपरित्यागेन अश्रुतकल्पना युक्ता। अस्ति च 'नान्यः पन्था विद्यते' 'न कर्मणा न प्रजया' इत्यादिना कर्मणां मोक्षसाधनत्वनिषेधः। किं च, परम्परया साधनत्वकल्पना प्रमाणान्तरमप्यनुसरती-

---

तत्र केवलव्यतिरेकापेक्षा, इह तु शास्त्रेणैव कारणत्वाधिगमात् व्यतिरेकाभावो न दोषाय सुखोत्पत्ताविव अदृष्टस्य इति परिहरति—नैतदिति॥  ता.

समुच्चयवादी शङ्कते—नन्विति। फलसाधनत्वे[ऽपि] तदयोगादिति। कर्मणां मोक्षसाधनत्वे 'यज्ञेन विविदिषन्ती'ति ज्ञानेन करणतया सम्बन्धः श्रुतः सर्वथा बाध्येत, परम्परया साधनत्वे तु नैवमित्यर्थः। मोक्षसाधनत्वे प्रमाणमपि नैतद्वाक्यमित्याह—न चेति। 'ननु तमेतम्' इत्यात्मन एव कर्मतया ज्ञानादिसाध्यत्वेन प्रतीतेः तस्यैव च मोक्षत्वादविरोध इत्यत्राह—आत्मा त्विति। तत्र ज्ञानसाध्य एव आत्मा प्रतीयते न तु यज्ञादिना साध्य इत्यर्थः। कर्मणां मोक्षसाधनत्वप्रतिषेधादपि न तत्साधनत्वं कल्पयितुं युक्तमित्याह—किं चेति। स्वपक्षे तु प्रमाणमस्तीत्याह—किं च परम्परयेति॥

245 - 9 त्याह—येन केनचन यजेतेत्यादिः। **अन्तःकरणशुद्धिपरवाक्यजातोपलक्षणार्थम्** ॥

**ननु विशुद्धिद्वारेण ज्ञानहेतुत्वे संस्कारविविदिषापक्षयोः को विवेकः ?। उच्यते—श्रवणमननध्यानाभ्यासादिसहकारिकारणसम्पत्तावेव संस्कारो विज्ञानं साधयति, तदभावे सत्यभ्युदयमेव। विविदिषायां तु विज्ञानस्य कर्मफलत्वात् फलपर्यन्तं साधनानि सम्पाद्यापि विज्ञानं जनयन्तीति विशेषः** ॥

**अत्र कश्चित् वेदान्तेऽपि सर्वसंकरवादी भेदाभेदमुखरताजडवचनो विविदिषावाक्यादेव कर्मणां मोक्षसाधनत्वं कल्पयति। स च न्यायागमाभिज्ञानशून्यत्वादुपेक्ष्यत इति। 'अश्वेन जिगमिषति' इत्यत्र अश्वस्य पुनरावृत्तिपर्यन्ततापि क्वचिद् दृष्टेति नासौ कर्मणां मोक्षसाधनत्वे दृष्टान्तः** ॥

**न्यायागमाभ्यां तु ज्ञानमेव सद्वारं साध्यमित्युक्तम्, व्यवहितफलेषु कर्मसु न फलपर्यन्तमनुष्ठानप्राप्तिः, चित्तस्य प्रत्यक्प्रवणताद्वारफलमवगम्य उपरमसिद्धेः, इत्येवं वर्णिते पूर्ववादिना सिद्धान्तयति—**
246 - 2 सत्यमेवम्। यदि समानजन्मानुष्ठितमेवेति। **अयमाशयः—प्रवृत्तिपर्यन्तेच्छोदयप्रभृत्यनुभवपर्यन्तविषये प्रवृत्त्यधिकारोपाधितया पूर्वक्षणे प्रतिपत्तव्याधिकारिविशेषणप्रतिपादनार्थोऽयमथशब्दः। तत्र अज्ञाततयैव**

---

ता. ननु कथं न्यायागमानभिज्ञत्वम्? यज्ञादिना विविदिषन्तीति यज्ञादीनामिष्यमाणज्ञानसाधनत्वेन तत्फलेऽपि मोक्षे अन्वयप्रतीतेः। यथा अश्वेन जिगमिषति इति इष्यमाणगमनसाधनस्य अश्वस्य गतिफलेऽपि ग्रामप्राप्तावन्वयो दृश्यते तद्वदित्याशङ्क्याह—**अश्वेनेति**। भवन्मतेऽपि कथं न्यायागमानुसारित्वम्? इति, तत्राह—**न्यायागमाभ्यां त्विति**। ननु ज्ञानसाधनत्वे कर्मणां यत्फलं तत्पर्यन्तमनुष्ठानात् ज्ञानानन्तरं च मोक्षप्राप्तेः मोक्षसाधनत्वमपि सिध्येदित्यत्राह—**व्यवहितेति**। **प्रवृत्त्यधिकारोपाधितयेति**। **अधिकृतिः**—अधिकारः। **तदुपाधितया**—तद्व्यावर्तकतयेत्यर्थः ॥

अनेकजन्मव्यवहितफलहेतुषु कर्मसु फलप्रवृत्तिसमकालप्रतिपत्त्यनपेक्षेषु न तत्प्रतिपत्त्यर्थोऽप्यथशब्द इति ॥

ननु समानजन्मानुष्ठितकर्मावगमोऽपि ब्रह्मजिज्ञासाधिकारहेतुः भवति, एतज्जन्मप्रयुक्तत्वात् ऋणसम्बन्धस्य, अपाकृतर्णत्रयस्यैव च मोक्षाधिकारादिति ; तत्राह—एतेन ऋणापाकरणद्वारेणापीति । ननु 247-1

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥'

इति स्मर्यते । सत्यम् । श्रुतिविरोधात् अपस्मृतिरित्याह—तथा च 247-2
श्रुतिस्मृती—'यदि वेतरथा ब्रह्मचर्यादेव' इति ॥

ननु जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति श्रुतिरस्ति। सत्यम् । अर्थवादो विधिश्रुतिविरोधे बाध्यते । किं च, ऋणशब्देन पुत्रयज्ञब्रह्मचर्याण्येव उच्यन्ते ? किं वा तद्विधयः ? इति । न तावज्जायमानस्य पुत्रादिसम्बन्धो युज्यते ; योग्यानुपलब्धिविरोधात् । नापि तद्विधिसम्बन्धः ; विधिप्रतिपत्तिसामर्थ्यविकलस्य अधिकाराभावात्, सामर्थ्यस्य च अधिकारिविशेषणत्वात् । गृहस्थो जायमानस्त्रिभिर्ऋणवा जायत इति चेत्, न—तथा कल्पनायां 'गृहात् प्रव्रजेत्' इति विधि-

ता· **अपस्मृतिरिति** । अपाकृतर्णत्रयस्यैव मोक्षाधिकार इत्येवं व्याचक्षाणस्य प्रत्यक्षश्रुतिविरोधादपस्मृतित्वमनिष्टं सज्यत इति, तस्मान्नैवं व्याख्येया स्मृतिरित्यर्थः । तदुक्तं **सुरेश्वराचार्यैः**—

"प्रत्यक्षवेदवचनप्रामाण्यापाश्रयादतः ।
आदौ संन्याससंसिद्धेः ऋणानीति ह्यपस्मृतिः ॥" इति।

**सत्यमर्थवाद इति** । 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इत्यवदानत्रयविधिशेषोऽर्थवादः 'ब्रह्मचर्यादेव प्रव्रजेत्' इति विधिश्रुतिविरोधे बाध्यत इत्यर्थः ॥

न्यायविरोधादप्यर्थवादोऽयमित्याह—**किं चेति** । ननु गृहस्थो जायमानः पुत्रादि[विधि]भिः सम्बध्यते, न तु पुत्रादि(विधि)[भि]रिति ; 1

विरोधात्। तत्रापि च पुत्रादिजन्मसम्बन्धितया गृहस्थजन्मनि योग्यानुपलब्धिविरोधः समानः। न च पुत्रादिविध्यनुष्ठानसामर्थ्याभावात् गृहस्थजन्मसमये तद्विधिसम्बन्धो युज्यते। जन्मारभ्य पुत्राद्यधिकारसम्पत्तेः प्राक् विरोधिविध्यन्तरसम्बन्धपरिहारार्थमिदं वचनमिति चेत्, न—तथाकल्पनायां संन्यासविध्यन्तरविरोधात्। तस्मादर्थवादमात्रमेतत् ॥

ननु 'ब्रह्मचर्यं समाप्य गृही भवेत्' इति विधिविरोधे कथं ब्रह्मचर्यादेव संन्यासो विधीयते ?। न—विरक्तमुमुक्षुविषयत्वात् संन्यासस्य सामान्यविधिविरोधाभावात्। ननु कर्मानधिकृतान्धपङ्ग्वादिविषयः संन्यासः किं न स्यात्?। न—'ब्रह्मचर्यात् गृहाद्वनाद्वा प्रव्रजेत्' इत्यविशेषश्रवणात्। 'अथ पुनरव्रती वा व्रती वा अस्नातको वा स्नातको वा उत्सन्नाग्निरनग्निको वा' इत्यनधिकारिणामाश्रमिभ्यः पृथगेव संन्यासाधिकारित्वेन उपादानात् अन्धादीनामपि पुत्रपञ्चमहायज्ञादिकर्माधिकारात् अनधिकृतत्वासिद्धेः अन्धादीनामप्यविरक्तानां संन्यासानधिकारात् तदेव संन्यासनिमित्तम्। 'शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा।

---

ता. तत्राह—**न च पुत्रादीति**। इदानीं विविदिषोत्पत्तिमात्रेण संन्यासाङ्गीकरणे विध्यन्तरविरोध इति शङ्कते—**नन्विति**। एकविषयत्वे बाध्यबाधकभावः, तदेव नास्तीत्याह—**न विरक्तेति** ॥

ननु सामान्यविशेषभावः किमिति कल्प्यते, कर्मानधिकृतविषय एव संन्यासविधिः किं न स्यात्? इति शङ्कते—**ननु कर्मेति**। अनधिकारिणां पृथक्संन्यासविधानादपि 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादिवाक्यं न तद्विषयम्, पौनरुक्त्यप्रसङ्गादित्याह—**अथ पुनरिति**। किंच, अन्धादयोऽप्यनधिकृता [न] भवन्तीत्याह—**अन्धादीनामिति**। अन्धादित्वे सत्यपि, वैराग्याभावे संन्यासासंभवात् तदेव संन्यासे निमित्तमित्याह—**अन्धादीनामप्यविरक्तानामिति**। इतश्च नान्धादिविषयः संन्यास इत्याह—**शरीरं मे विचर्षणमिति**। भवतु

---

भा. **अन्धादीनामपि पुत्रपञ्चमहायज्ञेति**। सर्वशक्तिन्यायात् तेषां नित्ये सर्वत्राधिकार इत्यर्थः ॥

कर्णाभ्यां भूरि विश्रुवम् ' 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इत्यादिना आत्मज्ञानाय शरीरेन्द्रियादिपाटवस्य प्रार्थ्यमानत्वात्। आत्मज्ञानशेषत्वाच्च संन्यासस्य। 'दृष्टिपूतं न्यसेत् पादम्' इत्यादिस्मृतेश्च पटुतरेन्द्रियस्यैव संन्यासाधिकारः। सर्वत्र आत्मज्ञानप्रकरणे संन्यासस्य विहितत्वात् श्रवणाद्यङ्गतया आत्मज्ञानफलता च संन्यासस्य सिद्धा। कथं पुनः कर्मणां तत्त्यागस्य च आत्मज्ञानफलता शक्या अवधारयितुम्?। षोडशिग्रहणाग्रहणयोरिव क्रत्वङ्गतयेति वदामः। क्रमेण वा कर्तत्त्यागयोरात्मज्ञानोपकारितया समुच्चयः कल्प्यते। द्वारोपकारभेदात्, निर्बर्हणीयकल्मषस्य च अनन्तत्वात्। ब्रह्मक्षत्रादिविषयतया वा व्यवस्था कल्प्यते॥

कियत्पुनरत्र परित्यज्यते?। स्वशरीरव्यतिरिक्तं सर्वम्। ननु उपवीतादि न त्यागमर्हति। न—अग्निहोत्रादिभिरविशेषात्। ननु संन्या-

ता॰ आत्मज्ञानाय शरीरेन्द्रियादिपाटवम्, ततः संन्यासस्य किं स्यात्? इत्यत आह—आत्मज्ञानशेषत्वादिति। तस्मान्नान्धादीनां संन्यासेऽधिकार इत्यर्थः॥

कर्मत्यागस्य तदनुष्ठानस्य च आत्मज्ञानशेषत्वमनुपपन्नं विरोधादिति शङ्कते—कथं पुनरिति। ननु एकस्मिन् प्रयोगे ग्रहणाग्रहणयोरङ्गत्वं नास्तीत्याशङ्क्य, अत्रापि त(त्रै)[र्थे]वेत्याह—क्रमेण वेति। तत्र हेतुः—द्वारेति। कर्मणां शुद्धिद्वारेणोपकारकत्वम्, संन्यासस्य चानन्यव्यापारतया श्रवणाद्यनुष्ठानद्वारा उपकारकत्वं इत्यर्थः। तर्हि संन्यासस्योपकारकत्वमस्तु, किं कर्मभिः? इत्यत आह—निबर्हणीयेति। ब्राह्मणानामेव संन्यासाधिकारात् क्षत्रियाणां कर्मानुष्ठानमङ्गं ब्राह्मणस्य संन्यास इति व्यवस्था कल्पनीयेत्याह—ब्रह्मक्षत्रादीति। यज्ञोपवीतादिधारणस्य कर्माङ्गत्वात् तत्त्यागे त्याग एवेत्याह—नाग्निहोत्रादिभिरिति। कौपीनादिवत् पश्चादुपादीयतामिति शङ्कते—नन्विति। आश्रमधर्मकथनसमयेऽपि 'अयज्ञोपवीती कथं ब्राह्मणः' इति

भा॰ श्रवणाद्यङ्गतयेति। श्रवणमादिः साधनं यस्य ज्ञानस्य तच्छ्रवणादि। तदङ्गतया तत्साधनतयेत्यर्थः। न तु श्रवणं प्रत्यङ्गतयेति। आदिशब्दवैयर्थ्यात्। न च प्रथमाङ्गवाचि तदिति वाच्यम्। शान्त्यादेस्ततोऽपि प्रथमभावित्वात्। न च श्रवणादिस्वरूपोपकारकमिति वाच्यम्, सर्वत्रात्मज्ञानप्रकरणे संन्या-

सकृत्त्वङ्गतया सर्वपरित्यागेऽप्युपवीतादि पश्चादुपादीयताम्। न—जाबालश्रुतौ 'प्रव्रजेत्' इति अग्निहोत्रादिभिरविशेषात् सहोपवीतादिना कृत्स्नपरित्यागं विधाय 'अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः' इत्याश्रमधर्मविधिसमये 'अयज्ञोपवीती कथं ब्राह्मणः' इति प्रश्नपूर्वकं 'इदमेवास्य तद्यज्ञोपवीतं य आत्मा' इत्येवकारेण बाह्ययज्ञोपवीतादि व्यावर्त्य आत्मन एव यज्ञोपवीतत्वसम्पादनात् ॥

अत्र सर्वसङ्करवादी पुरस्तात् यज्ञोपवीतत्यागस्य अनिर्दिष्टत्वात् 'ब्राह्मणः कथमयज्ञोपवीती' इति प्रश्नस्य प्रसङ्गाभावात् प्रक्षिप्तमिदं वाक्यमिति जल्पति। तस्य तत्त्वदर्शनतन्निष्ठपरमहंसपरिव्राजकद्वेष एव अपराध्यते। पुरस्तात् विधिसामर्थ्यलब्धसर्वपरित्यागेन उपवीतादित्यागप्रसङ्गापरिज्ञानस्य स्वाभाविकत्वात्। तथा च 'अथ परिव्राडेकशाटीपरिहितो मुण्डोऽदरपात्र्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेदा सायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्ष्यचर्यमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत' इति परिव्राजकमेवोद्दिश्य मैत्रायणीश्रुतिः। तथा च बोधायनोऽपि 'अत ऊर्ध्वं यज्ञोपवीतमासनं शिखा यष्टयः शिक्यं जलपवित्रं कमण्डलुपात्रमित्येतानि वर्जयित्वाऽथ दण्डमादत्ते सखा मा गोपाय' इति संन्यासादूर्ध्वमेव दर्शयति। तस्मा-
247-3 द्युक्त एव आत्मज्ञानाङ्गभूतः संन्यासः। तस्मात् साधूक्तमिति भाष्योपसंहारः ॥

---

ता. प्रश्नपूर्वकमात्मन एव यज्ञोपवीतत्वसंपादनान्न प्रतिप्रसवाशङ्केत्याह—न—जाबालेति ॥

ननु कथं प्रद्वेष एवापराध्यते, विधिसामर्थ्यसिद्धसर्वपरित्यागेन यज्ञोपवीतादित्यागप्रसङ्गापरिज्ञानस्यापि विद्यमानत्वादित्यत आह—पुरस्तादिति। स्वाभाविकत्वात् नायमपराधत्वेन गण्यत इत्यर्थः। विद्याकर्मणोरेकाधिकारत्वे

---

भा. तस्य अविहितत्वादिति हेतोरसाङ्गत्यात्। चतुर्थवर्णके वक्ष्यमाणविधया श्रवणस्य दर्शनानुपायत्वेन संन्यासस्य ज्ञानानुकूलत्वायोगाच्चेति भावः ॥

ननु नानन्तर्याभिधानमुखेन अधिकारिविशेषप्रतिपत्त्यर्थोऽयमथशब्दः किं तु तदभिधानमुखेन क्रमप्रतिपत्त्यर्थः इति चोदयति—
अथापि स्यात् न हेतुत्वेनेति। तत्र वक्तव्यम्–किं स्वयमेव क्रमं प्रतिपादयति? 247 - 6
आहोस्वित् प्रमाणान्तरप्रतिपन्नक्रमापेक्षितन्यायं सूचयतीति। न तावत्
प्रथमः कल्प इत्याह—तदेतदयुक्तं न्यायसूत्र इति। आगमत्वाभावादि- 247 - 8
त्यर्थः। द्वितीये विकल्पे, धर्मब्रह्मजिज्ञासयोः क्रमापेक्षानिमित्तस्य एक-
विधिप्रयुक्त्यनुष्ठानत्वस्याभावान्न तदर्थ इत्याह—अपि चैककर्तृकाणामि- 247 - 9
त्यादि। उक्तेऽर्थे भाष्यमवतारयति—तदिदमाहेति। अत्र कश्चित् 248 - 2
'धर्मब्रह्मजिज्ञासयो'रिति विशेषोपादानमवगच्छन्नपि ज्योतिष्टोमोद्गीथज्ञानयोरधिकृताधिकारत्वं खलु विद्यत इति प्रतिवक्ति। स खलु मन्दभाग्य एव। उद्गीथाद्युपासनानां धर्मविशेषाणामेव निरूपितविधिचतुष्टयानां ब्रह्मप्रकरणे प्रत्ययत्वसाम्यात् प्रासङ्गिकत्वेन भेदादिमात्रस्यैव निरूपितत्वात् शास्त्रतात्पर्यावगम्यस्य ब्रह्मज्ञानस्य कर्मण्यधिकृताधिकारित्वाभावात्॥

ननु मा भूदेकविधिप्रयुक्त्यनुष्ठेयतया आक्षिप्तक्रमविशेषापेक्षितन्यायानुसरणपरोऽथशब्दः, किं तु एकफलप्रयुक्त्यनुष्ठेयतया एकप्रमेयजिज्ञास्यप्रयुक्त्यनुष्ठेयतया वा साधनद्वये कर्त्रैक्यात् क्रमस्याक्षेपः इत्युत्तर- 248 - 6
भाष्यस्य आशङ्कामाह—यथा आग्नेयादीनामित्यादिना। चोदनाप्रवृत्तिभेदाच्च 250 - 1
इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः॥

अयमत्राशयः—न धर्मब्रह्मज्ञानयोरेकफलत्वे प्रमाणमस्ति; अर्थोऽपि न युज्यते। कथम्। न तावत् विविदिषावाक्यस्य शब्द-

---

क्वचिदङ्गीकृते तद्वदत्रापीत्यनुमातुं शक्यते, तदेव तु नास्तीत्याह—**उद्गीथेति**। ता.
धर्मविशेषत्वे हेतुमाह—**निरूपितेति**। विद्यात्वाभावे कथं विद्याप्रधानशास्त्रे निरूपणम्? इत्यत आह—**प्रत्ययत्वेति**। मानसत्वसाम्यादित्यर्थः। किंच, तत्स्वरूपनिरूपणमपि नास्ति, किं तु भेदाभेदगुणादय एव निरूपिता इत्याह—**भेदादिमात्रस्येति**॥

सामर्थ्यन्यायपरीक्षायां समुच्चये प्रामाण्यमित्युक्तम्। न च 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इति समुच्चयविधिः। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति फलभेदावगमात्। नापि 'तेनैति ब्रह्मवित्पुण्यकृत् [तैजसः] च' इति ज्ञानकर्मणोरेकस्मिन् पुरुषे समुच्चयविधिः। ब्रह्मवित्पुण्यकृतोः पुरुषयोर्मार्गे समुच्चयावगमात्। अन्वाचयार्थेन च चकारेण प्रत्येकं निरपेक्षमार्गान्वयोपपत्तेः। पुण्यकृच्छब्देन च अमानवपुरुषादर्चिरादिना गच्छतां प्रतीकालम्बनानामभिधानात् इष्टादिकारिणां धूमादिमार्गश्रवणाच्च। न च 'तान्याचरथ नियतं सत्यकामाः' इति समुच्चयविधिरवगम्यते। केवलकर्मणामेव श्रवणात्, सत्यशब्देन च 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' इति वाक्यशेषात् सत्यलोकाभिधानात्। 'प्लवा ह्येते अदृढा यज्ञरूपाः' 'नास्त्यकृतः कृतेन' इति च कर्मनिन्दया 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति च विज्ञानविधानात्। 'सत्येन लभ्यः तपसा ह्येष आत्मा' इति न समुच्चयविधिः। तपश्शब्दस्य 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति ध्यानस्यैव अभिधानात्। तस्मान्न समुच्चये प्रमाणमस्ति। प्रतिषेधाच्च—नान्यः

---

ता. ननु एकस्मिन् मार्गे सहैव गतानामेकफलभोक्तृत्वेन समुच्चय इत्याशङ्क्याह—अन्वाचयेति। ननु पुण्यवतां ज्ञानवतां च एकमार्गान्वयेन एकफलत्वेऽर्थात् समुच्चय इत्याशङ्क्याह—पुण्यकृदिति। कुत एतत्? इत्यत आह—इष्टादीति। 'सत्यं ज्ञानम्' इत्यत्र सत्यशब्दस्य ब्रह्माभिधायकत्वदर्शनात् सत्यकामा इति ब्रह्मप्राप्तिकामानुद्दिश्य कर्मविधानात् समुच्चयसिद्धिरित्याशङ्क्याह—न च तानीति। ननु 'ब्रह्मविदाप्नोति परम्' इत्यादौ ज्ञानस्य मोक्षसाधनत्वप्रतिपादनात् 'न कर्मणा न प्रजया' इत्यादौ केवलकर्मणां मोक्षसाधनत्वनिषेधात् अर्थात् समुच्चयोऽवसीयत इत्याशङ्क्य, अत्र सत्यशब्दो ब्रह्मवाचको न भवति। तेन [न] तत्प्राप्तिहेतुः समुच्चय इत्याह—सत्यशब्देन चेति। निन्द्यमानत्वादपि न कर्मणां मोक्षसाधनत्वमित्याह—प्लवा इति। पूर्वं निन्दया प्रतिषेधो गम्यत इत्युक्तम्, इदानीं साक्षात् प्रतिषेधं दर्शयति—प्रतिषेधाच्चेति। ननु उपपत्तिरेव

पन्था विद्यतेऽयनाय' 'नास्त्यकृतः कृतेन' 'न कर्मणा न प्रजया धनेन' 'नान्यैर्देवैस्तपसा कर्मणा वा' 'हित्वाऽविद्यां धियैवेयात्तद्विष्णोः परमं पदम्' इति च। केवलकर्मणां प्रतिषेध इति चेत्, न—अविशेषात्। समुच्चयविधायिप्रमाणाभावे सर्वकर्मणां प्रतिषेधोपपत्तेश्च। ज्ञानाङ्गतया सर्वकर्मसंन्यासविधानाच्च न समुच्चयः। संयासाश्रमधर्मैः समुच्चय इति चेत्, न—तद्धर्माणां ध्यानादीनां ज्ञानस्वरूपोपकारित्वात्। नित्यकर्मविधानानुपपत्तिरेव ज्ञानसहकारितया कर्मणां मोक्षफलत्वं कल्पयतीति चेत्, न—नित्यकर्मणां फलनिरपेक्षत्वात्। सापेक्षत्वे च विश्वजिन्न्यायावतारात्, संस्कारद्वारेण च विनियोगस्य दर्शितत्वात्, कर्मणामेव च विध्यनुपपत्त्या मोक्षसाधनत्वकल्पनात् समुच्चयासिद्धेः। कर्मप्रतिषेधस्य उदितहोमप्रतिषेधवत् ज्ञानस्तुत्यर्थत्वोपपत्तेः ज्ञानकर्मणोर्विकल्पेन मोक्षसाधनत्वप्रसङ्गात्। ब्रह्मज्ञानमेव इतिकर्तव्यतया कर्मणां मोक्षसाधनत्वं कल्पयतीति चेत्, न—शमादीतिकर्तव्यतान्तरभावात्, करणतया विध्यु-

---

विशेष इति; तत्राह—समुच्चयेति। प्राभाकरमतमाश्रित्याह—न [नित्यकर्मणां] फलेति। ननु कर्मणां (प्रमाणा)[फला]भावे पुरुषप्रवृत्त्यनुपपत्तेः फलापेक्षत्वमस्त्येवेत्यत्राह—सापेक्षत्वे चेति। 'स स्वर्गः स्यात्' इति न्यायेन स्वर्ग एव फलं कल्पनीयमित्यर्थः। ननु नित्यकाम्याधिकारश्रवणे [न] विश्वजिन्न्याय(ादि)[इ]त्याशङ्क्य, तर्हि संस्कारद्वारेण फलान्तरं भविष्यतीत्या(शङ्क्या)ह—संस्कारेति। (प्रकृतमुपसंहरति) समुच्चयपक्षे दूषणान्तरमाह—कर्मेति। 'प्रातः प्रातरनृतं ते वदन्ति' इत्यनुदितहोमस्य, 'यथातिथये प्रद्रुताय' इत्यादिनोदितहोमस्य च निन्दनात् तयोर्विकल्पः, एवं ज्ञानकर्मणोः कचिद्विधानादन्यत्र प्रतिषेधेऽपि विकल्पः स्यादित्यर्थः। ननु ब्रह्मज्ञानस्य करणत्वात् तस्य चेतिकर्तव्यतासापेक्षत्वात् अन्यस्यासम्भवात् कर्मणः इतिकर्तव्यतात्वमित्याशङ्कते—(ननु) ब्रह्मज्ञानमेवेति। 'यज्ञेन दानेन' इत्यादितृतीयाश्रुत्या ज्ञानं प्रति करणत्वेन विहितानां यज्ञादीनां ज्ञानं प्रत्येवेतिकर्तव्यतात्वं विरुध्यते इत्याह—करणतयेति॥

द्देशप्रसिद्धानां च कर्मणां विधिविरोधात्। अर्थश्च विरुध्यते। कश्च कर्मणां साध्योऽर्थ इति वक्तव्यम्?। न तावत् ब्रह्मात्मैकत्वम्, तस्य असाध्यत्वात्। नाप्यविद्याभेदांशाध्यासकर्मणां निवृत्तिः, 'भिद्यते हृदय-ग्रन्थिः' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादौ ब्रह्मदर्शननिवर्त्यत्वावगमात्। न हि 'तस्मिन् दृष्टे' इत्युक्ते कर्माणि सहकारित्वेनावगम्यन्ते। नाप्युपाधिद्वयनिवृत्तिः कर्मणां फलम्। 'तथा विद्वान्नामरूपाद्विमुक्तः' 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति च ब्रह्मदर्शननिवर्त्यत्वावगमात्, अज्ञानमात्रोपादानत्वस्य दर्शितत्वाच्च कर्मोपाधीनाम्। किं च, समुच्चयवादिनो न विज्ञानसाध्यमपि फलमस्ति। कर्मोपाधीनां सत्यवस्तुतया विज्ञानानिवर्त्यत्वात्, मिथ्याध्यासस्य च क्षणिकतया स्वयमेव निवृत्तेः। प्रवाहस्य च प्रवाहिनिवृत्तिमन्तरेण पृथगुच्छेदाभावात्, अवस्तुत्वाच्च। मिथ्याज्ञानसंस्कारस्य शुक्तिकादितत्त्वज्ञानेन अविरोधदर्शनात् अनिवर्त्यत्वात्। ब्रह्मात्मभावस्य च स्वयंप्रकाशतया विज्ञानाप्रकाश्यत्वात्। तत्त्वज्ञानाभ्यास-संस्काराच्च मिथ्याज्ञानसंस्कारनिवृत्तौ तत्त्वज्ञानात् मुक्तिश्रुतिविरोधात्।

---

ता. अर्थविरोधमेव दर्शयति—**कश्चेति**। ब्रह्मात्मैकत्वं साध्यम्? किं वा अविद्यातत्कार्यभ्रमनिवृत्तिः? किं वा स्थूलसूक्ष्मशरीरलक्षणोपाधिद्वयनिवृत्तिः? इति विकल्प्य, क्रमेण दूषयति—**न तावदित्यादिना**। अज्ञानमात्रोपादानत्वाच्च कर्मणामुपाधीनां च न परस्परनिवर्त्यनिवर्तकभावः, किन्तु ज्ञाननिवर्त्यत्वमेवेत्याह—**अज्ञानेति**। एवं कर्मसाध्यं फलं नास्तीत्यभिधाय, ज्ञानसाध्यमपि नास्तीत्याह—**किं चेति**। किं कर्मोपाधिनिवृत्तिः फलम्? किं वा अनात्मन्यात्माभिमानस्य? उत तत्प्रवाहस्य? किं वा मिथ्याज्ञानसंस्कारस्य? आहोस्वित् ब्रह्मात्मभावाप्रकाशस्य? इति विकल्प्य, क्रमेण दूषयति—**कर्मोपाधीनामित्यादिना**। यद्यपि मिथ्याज्ञानसंस्कारस्य तत्त्वज्ञानेनाविरोधः, तथापि तत्संस्कारस्य तत्त्वज्ञानसंस्कारेण विरोधोऽस्ति इत्याशङ्क्याह—**तत्त्वज्ञानेति**॥

तस्मात् सर्वानर्थोपादानानादिमिथ्याज्ञाननिवृत्त्यैव विज्ञानं फलवदिति न समुच्चयावकाशः ॥

अत्र सर्वसङ्करवादी ब्रह्मविचारापेक्षिताधिकारमप्यजानन् समुच्चयसामर्थ्यादेव धर्मावबोधानन्तरं ब्रह्मावबोधं जल्पति। तत्र सति वा समुच्चये विपरीतं किं न स्यात् इति निरूपणीयम्। तथा हि—ज्ञानवतैवानुष्ठितानि कर्माणि मोक्षं साधयन्तीति प्रथमं ब्रह्मावबोधमुत्पाद्य तद्वतैव ब्रह्मचारिणा धर्मविचारादि सर्वं स्वाश्रमधर्मानुष्ठानं कर्तुं युक्तमिति विपरीत एव क्रमः स्यात्। अन्यथा हि आदावेव मुमुक्षोः आ धर्मविचारपरिसमाप्तेः अनुष्ठीयमानकर्मणामानर्थक्यप्रसङ्गात्। दृश्यन्ते च प्रथमाश्रम एव मुमुक्षवः। सर्वसाधारणत्वाद्धर्मविचार एव प्रथमः कर्तव्य इति चेत्, देवानां प्रिय? न सर्वसाधारणं कर्तुमयं प्रवृत्तः, किंतु काम्यमानसाधनमवश्यानुष्ठेयं वा निर्वर्तयितुं प्रवृत्तः। तत्र यदि विचारद्वयं काम्यमानमोक्षसाधनमिष्येत, तर्हि व्युत्क्रम एव श्रेयान् इत्युक्तम्। अथ नित्याध्ययनविधिः कर्मविचारं प्रयोजयति, अतोऽवश्यानुष्ठेयविचारानन्तरं काम्यमानब्रह्मविचारः प्रयुज्यते, इति चेत्—नैतत्सारम्—काम्यमानब्रह्मविचारानन्तरमपि नित्यकर्मविचारोपपत्तेः। ननु अध्ययनानन्तरं कर्मविचाराननुष्ठाने प्रत्यवायः स्यात्। सत्यम्। नित्यवदल्पानुष्ठानेऽपि प्रत्यवायपरिहारात्। किं च, तावन्मात्रमुपेयताम्,

---

कर्मावबोधानन्तरं ब्रह्मावबोध इति पक्षे दूषणमाह—**अन्यथेति**। भोगविरक्तत्वान्न तत्कर्मणां भोगः फलम्, नापि मुक्तिः, ज्ञानाभावेन तस्यामवस्थायां समुच्चयाभावात्, अपूर्वद्वारेणोपकारकत्वे च इहैव जन्मन्यनुष्ठेयत्वनियमाभावादानर्थक्यं स्यादित्यर्थः। ननु उपकुर्वाणावस्थायां मुमुक्षुत्वमेव न सम्भवतीत्यत्राह—**दृश्यन्ते चेति**। मुमुक्षूणाममुमुक्षूणां च कर्तव्यत्वाद्धर्मविचारस्य प्रथमं कर्तव्यत्वमिति शङ्कते—**सर्वसाधारणत्वादिति**। काम्यमानमोक्षसाधनं विचारद्वयम्? किं वा अवश्यानुष्ठेयम्? इति विकल्प्य, नाद्य इत्याह—**तत्र यदीति**। द्वितीयमुत्थाप्य दूषयति—**अथेत्यादिना**। तर्हि प्रत्यवायपरिहारार्थं धर्मविचारमल्पं विधाय प्राधान्येन ब्रह्मविचारमेव करोतु इत्याह—**सत्यमिति**॥ ता.

एतदेव युक्ततरमित्याह—**किं चेति**। ननु न ब्रह्मचारिधर्माणां

विदुषा अनुष्ठीयमानब्रह्मचारिधर्माणामपि मोक्षसाधनत्वलाभात्। वेदानुवचनादिषु प्रत्येकं निरपेक्षकरणविभक्तिश्रवणात्। आश्रमकर्मणां विकल्पेन मोक्षसाधनत्वोपपत्तेः। ब्रह्मचर्यादेव संन्यासविधानाच्च। धर्मावबोधो नित्यतया अनुष्ठितोऽपि न ब्रह्मविचारहेतुः, अननुष्ठेयश्च धर्मविचारः, अग्निहोत्रादिव्यतिरिक्तसंन्यासधर्माणामपि ज्ञाने समुच्चयाङ्गीकरणात्। किं च, अध्ययनविधिः कर्मविचारं प्रयुञ्जानो ब्रह्मविचारं किमिति न प्रयुङ्क्ते? इति वक्तव्यम्। श्रोतव्य इति विध्यन्तरश्रवणादिति चेत्, अश्रुतमीमांसावृत्तान्तो देवानां प्रियः, धर्मविचारे क्लृप्तप्रवर्तकभावेन अनेनैव अध्ययनविधिना ब्रह्मविचारस्यापि प्रयोगसम्भवे 'श्रोतव्यः' इति विधेर्विनियोगाधिकारप्रयोगविधिकल्पनया प्रवर्तकत्वकल्पनाऽयोगात्। ब्रह्मज्ञानस्य काम्यमानसाधनतया तद्विचारस्यापि काम्यत्वात् न नित्याध्ययनविधिप्रयुक्ततेति चेत्, कर्मविचारे काम्यमानकर्मवाक्यविचारस्याप्यतत्प्रयुक्तत्वप्रसङ्गः ॥

स्यादेतत्—ब्रह्मविचारस्य वैराग्यशमदमोपसदनादिसाधनविशेषाणामङ्गत्वेन विधानात् अध्ययनविधेः कर्मविचारे शमाद्यङ्गशून्यस्य ब्रह्मविचारे तदङ्गानामाक्षेपकत्वानुपपत्तेः साङ्गविध्यन्तरं कल्प्यत इति। सोऽ-

---

ता. मोक्षसाधनत्वम्, किन्त्वग्निहोत्रादिधर्माणामित्यत आह—**वेदानुवचनादिष्विति।** इतश्च नाग्निहोत्रादिकर्मभिर्ज्ञानस्य समुच्चय इत्याह—**ब्रह्मचर्यादिति।** किं च, धर्मविचाराननुष्ठानमेव युक्तमित्याह—**अननुष्ठेयश्चेति।** प्रयोजकाभेदाच्च न धर्मविचारस्यैव प्राथम्य(स्य) सिद्धिरित्याह—**किं चाध्ययनेति।** प्रयोजकभेदमाशङ्कते—**श्रोतव्य इति।** कस्तर्हि **मीमांसावृत्तान्त** इत्यत आह—**धर्मविचारे इति।** कल्पनागौरवप्रसङ्गादित्यर्थः। नित्यानित्यसंयोगविरोधमाशङ्कते—**ब्रह्मज्ञानस्येति।** काम्यमानज्योतिष्टोमादिवाक्यार्थविचारस्तर्हि नित्याध्ययनविधिप्रयुक्तो न स्यादित्याह—**कर्मविचारे इति।** अध्ययनविधिप्रयुक्तधर्मविचारपक्षे इत्यर्थः ॥

विध्यन्तरप्रयुक्तत्वे कारणान्तरमाशङ्कते—**स्यादेतदिति।** कीदृशस्तर्हि

यत्रनिरूपितविधिव्यापारो वावदूकः । स्वाध्यायविधिः खलु शिरोव्रतभू-भोजनाद्यङ्गविकलमेव वाक्यान्तराध्ययनं विदधानो मुण्डककारीयाद्य-ध्ययनं शिरोव्रताद्यङ्गाक्षेपपुरस्सरमेव विदधाति । विचारं च प्रयुञ्जानः प्रतिवाक्यं दृष्टतयैवाङ्गभूतान् न्यायभेदानाक्षिप्यैव विचारं प्रयुङ्क्ते । दर्शपूर्णमासविधिश्च नित्याधिकारो यथाशक्त्यङ्गानुष्ठानं प्रयुङ्क्ते, काम्याधिकारस्तु सर्वाङ्गानुष्ठानमिति । तथा स एव विधिरुपांशुयाजे कर्मणि आज्यावेक्षणाद्यङ्गमाक्षिपति यागान्तरेष्ववघाताद्यङ्गमिति । एव-मध्ययनविधिः ब्रह्मविचारे शमाद्यङ्गमाक्षिपेत् नेतरत्र इति न विरुध्यते । न च अधिकारिविशेषणतया शमादीनामनुपादेयत्वात् अनाक्षेपः, अध्ययन-विध्यधिकारिण एव तत्प्रयुक्तविचारेऽप्यधिकारित्वात् । तस्मात् प्रधान-विधिः दृष्टादृष्टाङ्गानामुपकारविशेषापेक्षया यत्र क्वचन यत्किञ्चिदङ्गं प्रयो-जयतीति सर्वत्र समधिगतमेतत् । तस्मात् एकाध्ययनविधिप्रयुक्तत्वात् विचारद्वयस्य क्रमापेक्षायां ब्रह्मविचारानन्तरं धर्मविचारो युक्तः । विचारादीनामपि मोक्षसाधनत्वलाभात् । तस्मात् न फलैक्यादपि धर्म-जिज्ञासानन्तरं ब्रह्मजिज्ञासेति ॥

---

विधिव्यापारः? इत्यत आह—**स्वाध्यायविधिरिति । तथा स एव विधि-रिति ।** दर्शपूर्णमासविधिरेवोपांशुयाजस्य आज्यहविष्कत्वात् आज्यावेक्षणपर्य-ग्निकरणोत्पवनाद्याज्यसंस्कारमाक्षिपति, आग्नेयाग्नीषोमीययागयोः पुनः पुरोडाशह-विष्कत्वात् तत्प्रकृतिभूतव्रीह्यादिष्ववघाताद्यङ्गमाक्षिपतीत्यर्थः । दार्ष्टान्तिकमाह—**एवमिति ।** ननु विधेरुपादेयस्यैवानुष्ठापकत्वात् शमादीनां चाधिकारिविशेषण-तया अनुपादेयत्वात् कथं ब्रह्मविचारे शमाद्यङ्गमाक्षिपेत्? इति ; तत्राह—**न चेति ।** त्वत्पक्षे अध्ययनविधेर्विचारप्रयोजकस्य शमाद्यङ्गविशिष्टाधिकारियुक्तत्वा[भावा]त् नैवमित्यर्थः । अवान्तरप्रकृतमुपसंहरति—**तस्मात्प्रधानेति ।** ब्रह्मविचारानन्तरं धर्मविचारः प्राप्नोतीति यः [पक्षः] समुत्थितः तमुपसंहरति—**तस्मादेकेति ।** महाप्रकृतमुपसंहरति—**तस्मान्न फलेति ॥** ता.

प्रतिवाक्यं च तात्पर्यभेदात् प्रमेयभेदसिद्धिः। तत्र हेत्वन्तर-
250 - 1 माह—चोदनाप्रवृत्तिभेदादिति । एतद्विवृणोति—इदमपरमित्यादिना ।
250 - 1 चोदनेति शब्दभावनां कुर्वन् शब्दोऽभिधीयते। सा च चोदना अंशत्रय-
विशिष्टामर्थभावनां कुर्वती तस्मिन्ननवबुद्धे पुरुषप्रवृत्त्ययोगात् अर्थभाव-
नामपि प्रतिपादयतीति भावः। ननु ब्रह्मावबोधे भाव्ये पुरुषं प्रेरयन्ती
250 - 4 चोदना अवबोधव्यावृत्तां भावनां प्रतिपादयतीति; नेत्याह—नावबोधे
पुरुषः प्रेर्यत इति। ननु अवबोधः पुरुषप्रयत्नसाध्य इति; नेत्याह—
250 - 4 अवबोधो हि यथावस्त्विति। अनिच्छतोऽप्रयतमानस्यापि दुर्गन्धादि-
ज्ञानदर्शनादित्यर्थः॥

251 - 4 उच्यते—नित्यानित्यवस्तुविवेकः इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः।
शास्त्रीयस्य विधेः शास्त्रीयमेव अधिकारनिमित्तं वक्तव्यमित्यभिप्रेत्याह
251 - 4 —नित्यानित्यवस्तुविवेक इत्यादि। 'सोऽन्वेष्टव्यः' इति विधिप्रकरणे 'तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति नित्यानित्यवस्तुविवेको दर्शितः। 'परीक्ष्य लोकान् कर्मचितान्' 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति च ज्ञानश्रवणविधिप्रकरणे इहामुत्रार्थभोगविरागो दर्शितः। 'शान्तो दान्तः' इति च दर्शनविधिप्रकरणे शमादयो दर्शिताः। 'तद्विजिज्ञासस्व' इति विचारविधिप्रकरणे 'वरुणं पितरमुपससारे'ति गुरूपसदनं दर्शितम्। सर्वत्र च फलश्रुतयः कामनोत्पादनद्वारेण मुमुक्षोरधिकारप्रदर्शनार्थाः। अन्यथा साधनानुष्ठानादेव फलसिद्धौ सङ्कीर्तनवैफल्यात्। ज्ञानस्य

---

ता. एवं फलभेदमभिधाय, जिज्ञास्यभेदं दर्शयति—**प्रतिवाक्यं चेति**। धर्मचोदनास्वरूपमाह—**चोदनेति**। अधिकारिविशेषणानां शास्त्रीयत्वं दर्शयति—**सोऽन्वेष्टव्य इति**। मुमुक्षुत्वं तर्हि कुत्र दर्शितम्? इति; अत आह—**सर्वत्र चेति**। कया अनुपपत्त्या? इत्यत आह—**अन्यथेति**। ननु विचारविधेः शास्त्रीयत्वं न दृश्यते, 'विजिज्ञासस्व' इत्यादौ इष्यमाणस्यैव विधीयमानत्वादित्यत आह—**ज्ञानस्येति**। ननु भिन्नप्रकरणपठितत्वान्न सम्भूयैकविध्यधिकारनिमित्त-

अविधेयत्वात् तद्विधयोऽपि तत्साधनविधिपराः। तत्र सर्वशाखाप्रत्यय-न्यायेन विधीनामेकत्वोपपत्तेः। स चैको विधिरधिकारमीक्षमाणः प्रकरणसामर्थ्यात् सङ्कीर्तनवैफल्यपरिहाराच्च वर्णितं धर्मकलापमधिकार-निमित्तत्वेन स्वीकरोति। निरधिकारस्य विधेः प्रवृत्तिपर्यन्तत्वायोगात्। ननु एषु वाक्येषु विचारो विधीयते इति कथमवगम्यते?। उच्यते— 'विजिज्ञासितव्यः' 'विजिज्ञासस्व' इति च अन्तर्णीतो विचारो विधीयते, इष्यमाणज्ञानस्येच्छायाश्च विधेयत्वायोगात्। 'श्रोतव्यः' इति च स्वयमेव विचारो विहितः, 'तद्विज्ञानार्थं स गुरुमेव अभिगच्छे'दिति ज्ञानस्य साध्यतावगमात् गुरूपसदनविधानाच्च तत्साधनश्रवणादि-विधिः कल्प्यते। 'आत्मन्येवात्मानं पश्येत्' इति ज्ञानविधानायोगात् तत्साधने विधिरुपादीयते इति सर्वत्र मननिदिध्यासनाभ्यां सह श्रवणं नाम अङ्गि विधीयत इति सिद्धम्॥

ननु फलसाधनविधौ फलकामनैव पुष्कलाधिकारनिमित्तं भवति, किमितरधर्मकलापेन? इति। सत्यम्। शास्त्रीये अधिकारनिमित्ते सङ्कीर्त-नादेव जीवनगृहदाहादिवत् अधिकारनिमित्तमिति गम्यते। ननु साधन-कलापस्य अनुष्ठेयतया तत्र विधिं परिकल्प्य प्रयाजादिवत् ब्रह्मज्ञानफलो-पकार्यङ्गत्वमेव कल्प्यताम्। सत्यम्। अङ्गस्यापि प्रदोषादिकाल-

---

त्वमित्यत आह—**तत्र सर्वशाखेति**। ननु एकविधित्वेऽपि सर्वेषां सम्भूया-धिकारनिमित्तत्वं कथम्? इत्यत आह—**स चेति**। ननु विचारपदाश्रवणात् तद्वि-धित्वमनुपपन्नमित्याशङ्कते—**नन्विति**। कया अनुपपत्त्या? इत्यत आह—**इष्य-माण[ज्ञान]स्येति**। ननु मुण्डके विचारविधिर्न श्रूयत इत्यत आह—**तद्विज्ञानार्थ-मिति**। ननु शमादिविधिवाक्ये विचारविधिः नोपलभ्यत इत्यत आह— **आत्मनीति**॥  ता.

तथा विज्ञानस्वरूपोपकारित्वं न स्वीकरणीयमिति शङ्कते—**नन्विति**। कोऽभिप्रायः?। किमङ्गस्याधिकारिविशेषणत्वमनुपपन्नमित्युच्यते? किं वा संकीर्तने-नैव चरितार्थत्वान्नाधिकारिविशेषणत्वे प्रमाणम्? इति। नाद्य इत्याह—**सत्य-**

वत् अधिकारिविशेषणत्वं न विरुध्यते। शान्त्यादिगुणो भूत्वा पश्येदित्यादिलिङ्गात् । दीक्षाया अप्युत्तरक्रत्वधिकारनिमित्ततादर्शनात् ।
251 - 4 तस्माद्युक्तमुक्तम्—नित्यानित्यवस्तुविवेक इति ॥

'तेषु हि सत्सु' इत्युत्तरं भाष्यं साधनकलापस्य ब्रह्मानुभवपर्यन्तविचारादिसाधनप्रवृत्तेः अन्वयव्यतिरेकसिद्धदृष्टहेतुतां प्रतिपादयति।
251 - 6 तद्वर्णयितुं मुमुक्षुत्वमन्तरेण तावन्न प्रवृत्तिरित्याह—उक्तं पुरस्तादधिकारार्थत्वे इत्यादिना। तस्मात् मुमुक्षुत्वं तावदिष्यमाणसाधने प्रवृत्तिनिमित्तमित्यर्थः। ननु फलकामनायां सत्यामितरधर्माभावात् फलसाधने प्रवृत्त्यभावो न दृश्यते; सत्यम्, पूर्वस्य पूर्वस्य उत्तरोत्तरस्वरूपोपाधित्वेन प्रतिपन्नतया
251 - 9 मुमुक्षुत्वोपाधित्वात् अधिकारनिमित्ततेत्याह—तस्माद्यावदस्य हिरण्यगर्भावाप्तिपर्यन्तस्येत्यादिना। ननु सर्वमनित्यमेव सत्त्वात् स्वप्नवदिति; नेत्याह—
252 - 1 विनश्यदपीदमिति। न च निरुपादानं किञ्चित् कार्यमवगम्यते। कार्यस्य च कार्यान्तरोपादानत्वे पूर्वेषां कृत्स्नकारणानामुत्तरस्मिन् कार्ये अन्वयः स्यात् अनन्वयिनोऽनुपादानत्वात्। अतः प्रतिकार्यप्रवाहमनादि-

ता. मङ्गस्यापीति। अथोत्तरस्तत्राह—शान्त्यादीति। अङ्गस्याप्यधिकारनिमित्तत्वे दृष्टान्तमाह—दीक्षाया अपीति। नित्यवस्तुपर्यन्तत्वमेव उपपादयति—न च निरुपादानमिति। सोपादानत्वेऽपि कार्यन्तरमेवोपादानं किन्न स्यात्? इत्यत्राह—कार्यस्य चेति। तथापि कूटस्थैकवस्तुपर्यन्तता कथम्? भिन्नोपादानत्वसम्भवादिति; अत्राह—अतः प्रतिकार्येति। तथापि परिणामित्वान्न

भा. ननु नित्यानित्यविवेकादेर्दृष्टमुमुक्षाद्वारा हेतुत्वे सम्भवति किं साक्षात्तद्धेतुत्वेन। न च सङ्कीर्तनवैफल्यपरिहाराय तत्कल्पनमिति वाच्यम्; तस्य मुमुक्षोपस्थापनेनार्थवत्त्वात्। आत्मप्रशंसादिपरतयाप्युपपत्तेश्च। दृष्टद्वारा फलसाधने विधिवैयर्थ्येन तथैव वक्तव्यत्वात्, नित्यप्राप्ततया नियमविध्यनुपपत्तेः, अन्यथा पूर्वोक्तप्रसज्यप्रतिषेधापत्तेश्चेत्यरुचेराह—तेषु हि सत्स्वित्युत्तरं भाष्यं साधनकलापस्येत्यादिना ॥

त्वात् अनाद्यनेकोपादानकल्पनात् वरमेकस्यैवानादेः सर्वकार्योपादानत्व-
कल्पनम् । तच्च अविकारि कूटस्थम् । अन्यथा कार्यत्वप्रसङ्गात् । तथा
सर्वं कार्यं कदाचित् कात्स्न्र्येन विनश्यति एकोपादानत्वात् सुषुप्तौ
आत्मगतसुखादिवदिति । सर्वस्य च विनाशस्तथाविधवस्तुपर्यन्त एव ।
अन्यथा पूर्वकल्पस्य शून्यतापर्यन्तं विनष्टस्य स्वोपादानशेषतया
स्वसंस्कारावस्थानाभावात् तत्सजातीयाकारेण पुनर्जन्माभाववत् वर्तमा-
नस्यापि निरुपादानतया जन्माभावप्रसङ्गादिति । भोगान् भुञ्जानस्य 252 - 5
भोक्तुः सह भोगैरभिमुखं विनाशदर्शनादिति योजना ॥

अत्रैवमन्वयः—यावदनित्यत्वं नावैति तावन्नित्यं वस्तु न प्रतिपद्यत 252 - 1
इत्यध्याहारः । यावच्च नित्यानित्यवस्तुविवेको न जायते तावद्विरक्तो न 252 - 4
जायत इत्यध्याहारः । यावच्चाभिमुख[खं]विनाशेत्यत्र यावच्छब्दो नकारमध्या- 252 - 4
हृत्य विरक्तशब्देन सम्बध्यते—यावच्च न विरक्त इति । तावन्मुमुक्षुत्वं
नालम्बते इत्यध्याहारः । यावच्च मुमुक्षत्वं नालम्बते तावत् ब्रह्मजिज्ञासां 252 - 8
कः प्रतिपद्येतेति साधनकलापाभावे न विचारप्रवृत्तिरिति व्यतिरेकोऽयं
दर्शितः । ननु नास्ति व्यतिरेकः साधनकलापाभावेऽपि प्रवृत्तिदर्शनात्
इत्याशङ्क्याह—कथंचिद्वा दैववशादिति । शूद्रयागादिवत् फलपर्यन्तता 252 - 9
न स्यादित्यर्थः । व्यतिरेकनियमादेव अन्वयमपि सिद्धवत्करोतीत्याह—
तस्माद्वर्णितवस्तुकलापादानन्तर्यमिति । उक्तेऽर्थे भाष्यमवतारयति—तदाह 253 - 1-2
भाष्यकार इति ॥

---

कूटस्थत्वमित्यत्राह—तच्चेति । एवं सर्वस्य एकोपादानत्वमुपपाद्य, इदानीं तत्पर्यन्तत्वं ता.
विनाशस्योपपादयति—तथा सर्वं कार्यमिति । सिद्धसाधनतापरिहाराय
कात्स्न्र्येनेति विशेषणम् । दृष्टान्ते साध्यवैकल्यपरिहाराय एकोपादानत्वा-
दिति विशिष्योक्तम् । तथापि कूटस्थवस्तुपर्यन्तता कथम्? शून्यशेषत्वात्,
इत्याशङ्क्याह—सर्वस्य चेति ॥

विपक्षेऽनुपपत्तिमाह—अन्यथेति । वर्तमानकल्पस्य निरुपादानतया
जन्माभावात् प्रतीत्यभावः स्यादित्यनिष्टापत्तिः । ननु पूर्वकल्पवज्जायतामिति,
तत्राह—पूर्वकल्पस्येति । यथा पूर्वकल्पः संस्काराकारेणावस्थानाभावात् न

तदेवं साधनकलापस्य विधेयतया विज्ञानाङ्गत्वेऽपि शास्त्रयुक्तिभ्यामधिकारिविशेषणत्वलाभात् वर्णितसाधनसम्पत्त्यनन्तरं ब्रह्मविचारे सिद्धेऽपि कश्चित् प्रमाणव्यापारवार्तानभिज्ञो देवानांप्रियः शास्त्रार्थप्रद्वेषदोष[दो]धूयमानचेताः सर्वसङ्करवादी यत्किञ्चिदत्र जल्पति—विचारकर्तव्यतां प्रतिपद्यमानस्य किल सूत्रकारस्य शमादयो न बुद्धिसमारूढाः, न च अबुद्धिसमारूढमर्थमधिकारिविशेषणतया अथशब्देन उपादातुमर्हति, धर्मविचारस्तु बुद्धिगतोऽधिकारिविशेषणतया उपादीयत इति। नैतद्युक्तम्—न हि पूर्वापरवाक्यपरामर्शप्रज्ञाविकलस्त्वमिव सूत्रकारः। तथा हि—श्रौतं विचारविधिं सूत्रयितुं प्रतिपद्यमानो विधिप्रयुक्तमधिकार्यनुबन्धमीक्षमाणः स्वप्रकरणपठितमन्वयव्यतिरेकप्रमाणगम्यं चाधिकारिविशेषणं प्रतिपद्य अथशब्देन किमिति न सूत्रयेत्। किं च, साधनकलापस्य अथशब्दोपादानत्वाभावेऽप्यवश्यं ब्रह्मणि प्रवृत्त्यङ्गता तावद्वक्तव्या, रागाद्याक्षिप्तस्य तत्र प्रवृत्त्यनुपपत्तेः। अवश्यापेक्षणीयत्वे च तदेव अधिकारिविशेषणं वक्तव्यम्। न च धर्मजिज्ञासा दृष्टद्वारेण वा शास्त्रीयतया वा अधिकारिविशेषणतामनुगच्छति, प्रमाणाभावात्। अत एव न बुद्धिस्थाऽपि सा अथशब्देन च नोपादानमर्हति। व्यवहिताच्च

---

ता. जायते एवं वर्तमानकल्पोऽपि न जायेत इति योजना। **स्वप्रकरणपठितमिति।** प्रकरणप्रमाणात् साधनचतुष्टयमधिकारिविशेषणतया अधिगम्यत इत्यर्थः। उक्तप्रमाणाभावात् धर्मजिज्ञासा तु नाधिकारिविशेषणमित्याह—**न चेति।** यदुक्तं [धर्म]जिज्ञासा बुद्धिस्थेति; तत्राह—**व्यवहिताच्चेति॥**

---

भा. ननु एवं विचारात् पूर्वमेव नित्यवस्त्ववधारणे किं विचारेण। न च तस्य नित्यस्य आनन्दादिस्वरूपविशेषनिश्चयाय विचार इति वाच्यम्; तस्यापि तद्वदेव निश्चेतुं शक्यत्वात्। नित्यस्य पुरुषार्थत्वज्ञानाभावे मुमुक्षाऽयोगाच्च। वियदादीनामपि कार्यत्वेन अनित्यत्वस्य अत्रावधारणे 'न वियदश्रुतेः'

बुद्धिस्थात् स्ववाक्यगतमेव संनिहिततरं बुद्धिस्थं च साधनचतुष्टय-मुपादानमर्हति । तस्माद्यत्किंचिदेतदिति ॥

अतश्शब्दो हेत्वर्थः । ननु अथशब्द एव आनन्तर्याभिधानमुखेन हेतुतया पूर्वनिर्वृत्तमेवार्थं गमयतीत्युक्तम् । ननु हेतुत्वमार्थिकम्, तन्नाभिधेयमथशब्दस्य । सत्यम्, आर्थिकार्थे तात्पर्यात् आनन्तर्यमात्रे वैफल्यात् यत्परः शब्दः स वाक्यप्रयोगे शब्दार्थ इत्यथ- 253 . 6

ता. ननु हेतुत्वमिति । तेन न पौनरुक्त्यमित्यध्याहारः । ननु तथापि शब्दार्थो न भवतीत्यत आह—यत्पर इति । अथशब्दस्य

भा. इत्यादेरनारम्भप्रसङ्गाच्च । एवं विचारात् प्रागेव विरक्तत्वे वैराग्यपादानुपयोगाच्च । प्रथममेव संन्यासशान्त्यादिसम्पन्नत्वे पुरुषार्थ (साधन) [पाद] वैयर्थ्याच्च । तस्माद्विचारात् पूर्वं साधनकलापासम्भवः इति चेत्—

न तावत् नित्यानित्यविवेकासम्भवः; विचारात् पूर्वं यावतः फलस्य तदुपकरणस्य वा कार्यत्वं परिच्छिन्नत्वं वा अवधृतं तावतोऽनुमानात् स्पष्टश्रुत्या चानित्यत्वावधारणसम्भवात् । न च एवमाकाशादेः सम्भवति । आत्मा च नित्य इत्यवगम्यते । अन्यथा कस्यापि मते मोक्षाय प्रवृत्त्यसम्भवात् । न चैवं टीकाद्युक्तविधया नित्यवस्त्ववधारणं व्यर्थमिति वाच्यम् । आत्मज्ञानात् प्राप्यस्य एकस्य तत्पदार्थस्य श्रेयसश्च वर्णितरीत्या नित्यत्वावधारणसम्भवात् । तस्य आनन्दत्वमपि 'आनन्दाद्ध्येव खलु' इत्यादिवाक्यादेव निश्चीयते ॥

न चैवं विचारानारम्भप्रसङ्गः अनित्यत्वस्याप्येवं निश्चेतुं शक्यत्वादिति वाच्यम्; यत्र हि मानान्तरविरोधो वर्तते तद्धि श्रवणमात्रान्न निश्चेतुं शक्यम् । अद्वैतसमन्वयश्च तत्पूर्वपक्षन्यायमानान्तरादिना विरुद्धतया प्रतीयत इति न वाक्यमात्रान्निश्चेतुं शक्यते । ब्रह्मणो नित्यानन्दस्वरूपत्वं तु न मानान्तरेण विरुद्धतया प्रतिसन्धीयत इति तत् शब्दादेव निश्चेतुं शक्यते । न हि परमात्मनः सुखाभेदे प्रत्यक्षविरोधोऽस्ति । न च अनित्यसुखस्य नित्यात्माभेदविरोधः, अनुकूलतर्काभावेन सुखमात्रे अनित्यत्वावधारणायोगात् । सौषुप्तिक-

**शब्देनैव हेतुत्वसिद्धेः न अतश्शब्दोऽपेक्ष्यत इति। अतश्शब्दाभावे माङ्गल्यादीनामन्यतमार्थता अथशब्दस्य प्रसज्यत इति चेत्, न—निराकृतत्वात्। धर्ममीमांसायां सत्यप्यथशब्दे अतश्शब्देनापि**

ता. मङ्गलाद्यर्थत्वनिवारणाय अतश्शब्देन भवितव्यमिति शङ्कते—**अतश्शब्देति। मङ्गलस्य च वाक्यार्थे** इत्यत्रैव निराकृतत्वादिति परिहरति—**न—निराकृतत्वादिति।** शङ्कते—**धर्ममीमांसायामिति।** ननु ब्रह्मानन्दापरो-

भा. सुखावमर्शनेन जीवस्यापि नित्यतया तद्विनाशबुद्धेः अन्यविषयत्वावधारणसम्भवात्॥

किं च, येन यदेकं न्यायेन निश्चितं तेन तदितरदपि न्यायेन निश्चेतव्यमिति न नियमः। पुरुषाणां च विचित्रबुद्धितया न्यायानां च अलौकिकविषयतया अतिसूक्ष्मत्वान्नियमानुपपत्तेः। अन्यथा[एकत्र]सर्वैरेव व्याप्तिर्गृहीतेति वैशेषिकादिग्रन्थारम्भो व्यर्थ एव स्यात्। एतादृश एव पुरुषोऽस्मिन् शास्त्रेऽधिकारी। तदुक्तम्—'नात्यन्तमज्ञो नो तज्ज्ञः सोऽस्मिन् शास्त्रेऽधिकारवान्' इति॥

एवं च ब्रह्मसुखस्य च नित्यत्वम्, तदितरभोगानां चानित्यत्वं [मन्वा]-नस्य स्वरूपभूतसुखाभिलाषरूपमुमुक्षापि सम्भवतीति मुमुक्षुवैचित्र्यात् श्रवणनियमव्यावर्त्यवैचित्र्यमुपपद्यते॥

ततो वैराग्यम्। न चैवं रंहतिपादवैयर्थ्यम्। न हि तत्र नित्यानित्यत्वनिरूपणमुखेन वैराग्यं निरूप्यते; किं तु संसृतिप्रकारनिरूपणेन प्रागुत्पन्नस्यैव वैराग्यस्य स्थिरीकारः (अधिकारः) क्रियते। वैराग्योत्कर्षेन्द्रियोपरमदार्ढ्येन मुमुक्षाद्वारा श्रवणादिदार्ढ्यसम्भवात्। प्रागविरक्तस्य स्वकाम्यफलविरोधिब्रह्मज्ञाने प्रवृत्त्यनुपपत्त्या एवं वक्तव्यत्वात्। तदुक्तं **संक्षेपशारीरके**—

वैराग्यं विषयेषु पूर्वमपि मे जातं हरेरर्चनात्
यज्ञादिक्रियया निरस्तफलया किन्त्वद्य दार्ढ्यं गतम्।
संसारस्य निरूपणेन धिगिदं कर्मादिजन्यं फलं
विश्वं नश्वरमम्बुबुद्बुदसमं पद्मासनान्तं जगत्॥ इति।

तस्य हेतुत्वमुक्तमिति चेत्, अन्धगोलाङ्गूलन्यायैकशरणोऽयं सर्वसंकरवादी। न हि अन्यत्र विद्यमानः पुनरुक्तिदोषोऽस्माभिरप्यनुसरणीयः। तस्मात् अतश्शब्दवैयर्थ्यमिति प्राप्तम्। अत्र अथशब्दपरिगृहीतस्यैव हेतुत्वस्य हेत्वन्तरेण अपवादाशङ्कायां तन्निराकरणं पुनः अथशब्दोक्तहेतुत्वाभिधायिना अतश्शब्देन क्रियत इति दर्शितम्—'यस्माद्वेद एवाग्निहोत्रादीनाम्' इत्यादिभाष्येण। तत्र तामाशङ्कां 253 - 6
दर्शयति—स्यादेतत्—कृतकत्वपरिच्छेदावित्यादिना। यदा तु कृतकत्वाद्यनुमानमनैकान्तिकम्, तदा कर्मफलस्यापि कृतकस्य अनित्यत्वनियमाभावान्नित्यपुरुषार्थकामिनस्तत्रापि प्रवृत्तिः स्यात्, अतो नित्यानित्यवस्तुविवेको न ब्रह्मण्येव नियमेन प्रवृत्तिहेतुरित्यर्थः। ननु कर्मफलस्यैकान्ततोऽनित्यताऽभावेऽपि नित्यत्वे न प्रमाणमिति; तत्राह—वेदेऽप्यक्षय्यं ह वै चातुर्मास्ययाजिन इति। ननु एवमपि ब्रह्मणि 253 - 9
प्रवृत्तेः किमायातम्? इति; तत्राह—अतो न विषयभोगात् नियमेन विराग 253 - 10
इति। ततो न ब्रह्मणि प्रवर्तत इत्यर्थः। विरज्यन् वा चातुर्मास्यादिव्यतिरिक्तविषयात् विरक्तस्तत्रैव प्रवर्तत इति मा भूत् ब्रह्मण्येव प्रवृत्तिनियमः, तथापि ब्रह्मण्यपि विकल्पेन प्रवृत्तिः स्यादिति; नेत्याह
—नापि कूटस्थनित्यवस्त्ववष्टम्भेनेति। ननु विरुद्धपदार्थतादात्म्या- 253 - 11
भावेऽपि संयोगलक्षणा ब्रह्मप्राप्तिः स्यादिति; नेत्याह—नापि तदवाप्ति- 254 - 2
रिति ॥

---

भा.

एवं शमादयोऽपि। संन्यासस्तु न श्रवणप्रवृत्तिप्रयोजक इति पश्चादेव निरूप्यते। येषां मते संन्यासिनामेव श्रवणाधिकारः, तेषां अथशब्देन सिद्धस्य तस्य पुनः प्रतिपादनमफलमेव। न हि संन्यासेऽपि वैराग्यादिवत् द्वैविध्यमस्ति। अत उपपन्न एव साधनकलाप इत्यभिप्रेत्याह—**अत्रा(प्य)थशब्दपरिगृहीतस्यैव हेतुत्वस्येति** ॥

प्रकारान्तरेणापि हेतुत्वप्रतिपादनं अतश्शब्दप्रयोजनं वक्तुमाक्षेपमाह—**तत्र तामाशङ्कां दर्शयति—स्यादेतत्—कृतकत्वेति** ॥

ननु ब्रह्मानन्दोपभोगो विद्यते। न—स्वाश्रयसुखोपलब्धेरुपभोगत्वात्। न च ब्रह्मधर्मस्य सुखस्य जीवाश्रयतयोपलब्धिः सम्भवति। ननु सुखापरोक्ष्यमात्रमुपभोगो न स्वाश्रयसुखापरोक्ष्यम्, विशेषणायोगात्। तथापि भेदेनावस्थाने जीवब्रह्मणोः लोके पुरुषान्तरसुखस्य पुरुषान्तरं प्रत्यापरोक्ष्यादर्शनात् नोपभोगः। ननु आत्मैव सुखसंवित्स्वभावः तद्रूपावस्थानं च मोक्ष इति। न—योग्यानुपलब्धिविरोधात्। न च देवाद्यानन्दपरित्यागेन निरानन्दात्मना अवस्थानं मोक्षं कश्चित् प्रार्थयते। तस्मान्न साधनचतुष्टयसम्पन्नस्य ब्रह्मणि प्रवृत्तिः, किं तु
254-3 कर्मफले, इत्युपसंहरति—अतोऽजीर्णभयादित्यादिना ॥

तत्रोक्ताशङ्कानिराकरणहेतुवचनं भाष्यमवतारयितुमतश्शब्देन साधनचतुष्टयस्य हेतुत्वाभिधायिना कथमाशङ्कानिराकरणहेतुभूतं प्रमाणं
254-6-7 सूचितम्? इति पृच्छति—कथमिति। तदाह—यस्माद्वेद एवाग्निहोत्रादीनामिति। ब्रह्मव्यतिरिक्तपुरुषार्थजातस्य अनित्यतां दर्शयतीत्यर्थः। ननु 'तद्यथेह कर्मचितो लोकः' इति सामान्यश्रुतिः चातुर्मास्यादिविशेषाद-
255-1 न्यत्रैव वर्ततामिति चोदयति—ननु पुण्यस्येति। तत्र तावच्चातुर्मास्यश्रुतिः सुकृतस्याक्षयत्वमाह, न तत्फलस्य, सत्यपि सुकृते फलस्यानुपभोगवत् क्षयोपपत्तेः, तत्र वाक्यस्य श्रुतार्थं परित्यज्य फलाक्षयविषयत्वकल्पना

---

ता. क्ष्यमस्तीत्यत आह—न च ब्रह्मेति। [विशेषणायोगादिति।] केवलव्यतिरेकाभावादित्यर्थः। भेदेन व्यवस्थानेऽपि स्वरूपसुखापरोक्ष्यमस्तीति शङ्कते—नन्वात्मैवेति। ननु दुःखस्य आत्यन्तिकी निवृत्तिरेव मोक्षः न सुखापरोक्ष्यमिति; तत्राह—न च देवादीति॥

सामान्यश्रुतिरिति। 'न हिंस्यात् भूतानि' 'अग्नीषोमीयं पशुम्' इत्यादिवदित्यर्थः। ननु सुकृताक्षयत्वमनुपपद्यमानं फलाक्षयत्वं कल्पयतीयत आह—सत्यपीति। 'कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति' इति न्यायादित्यर्थः।

प्रमाणविरुद्धा इत्याह—न–तस्य वस्तुबलप्रवृत्तेति। व्याप्तिबलप्रवृत्तेत्यर्थः। 255 - 1
अनुमानानुगृहीतश्रुतिविरोध इति योजयितव्यम्। 'हिरण्यदा अमृतत्वं भजन्ते' इति श्रुतिः वर्तमानापदेशात् योग्यानुपलब्धिविरुद्धा भवति। भजिष्यन्त इति कल्पना पूर्ववत् प्रमाणविरुद्धा। अनुमानानुगृहीतदेवसर्गप्रलयश्रुतिविरुद्धा 'अपाम सोमम्' इति श्रुतिः। 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति श्रुतिः न फलस्य नित्यतां दर्शयति। वाक्यस्य फलविषयत्वकल्पना तु पूर्ववत् प्रमाणविरुद्धा। अविरोधापेक्षत्वात् कल्पनायाः। किं च, 'यदि ह वा अप्यनेवंवित् महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते' इत्युपक्रम्य 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति वचनादात्मोपासनाकर्मण एव अपरोक्षानुभवद्वारेण अक्षयाविद्यानिवृत्तिफलत्वात् 'न कर्म क्षीयते' इत्युपासनाकर्मप्रशंसामात्रमेतदुपादीयते। अनेवंविदः कर्मक्षयस्य श्रवणात् एवंविदा अनुष्ठितस्य अग्निहोत्रादेरेव मोक्षफलतया अक्षयो विधीयत इति चेत्, न—लिङ्गस्य 'नान्यः पन्था विद्यते' 'क्षीयन्ते चास्य कर्माणि' इत्यादिनिषेधश्रुतिविरोधात्। तस्मात् ब्रह्मव्यतिरिक्तपुरुषार्थे अनित्यतया वैराग्यमुपपन्नमिति॥

ननु दोषस्य तुल्यत्वात् न ब्रह्मण्यपि प्रवृत्तिकारणमेतदित्युक्तम्; 255 - 4
तत्राह—यत्पुनर्मुमुक्षुत्वाभावे इति। विरुद्धपदार्थतादात्म्यमनुपपन्नमित्यनुमानं 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिविरुद्धम्। बिम्बप्रतिबिम्बयोरिव तादात्म्यमुक्तम्। न च सुखानुभवाभावादपुरुषार्थ इति युक्तम्। ब्रह्मानन्दानुभवात्। ननु तादात्म्ये 'अहं सुखम्' इत्यनुभवः स्यात् न 'अहं सुखी' इति, 'अहं सुखी' इति च अनुभवो लोके पुरुषार्थ इति। नैष दोषः—सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वात्। ननु स्वाश्रयं सुखमेव पुरुषार्थो न सुखापरोक्ष्यमिति। न—उपलब्धानामेव सुखसाधनानां पुरु-

---

ता.
ननु सुकृताक्षयत्वेन प्रयोजनाभावात् फलाक्षयत्वं कल्पनीयमित्यत आह—[तत्र] वाक्यस्येति। शङ्कते—अनेवंविद इति॥

षार्थत्वात् इष्टत्वाविशेषात् सुखमप्युपलभ्यमानमेव पुरुषार्थ इति गम्यते। तत्र साधनपारतन्त्र्यानित्यत्वादिवत् विषयसुखस्यात्मनो भेदोऽप्यानुषङ्गिकोऽवभासते 'अहं सुखी' इति, न पुरुषार्थतया, इत्यतो ब्रह्मानन्दोऽप्यपरोक्षावभासः पुरुषार्थ इति ॥

ननु नास्ति नित्यं सुखमिति नैयायिकादयः। सत्यम्—नास्त्येव जन्यमपि सुखम्। ननु साधनोपादानात् जन्यताऽवगम्यते। न—सिद्धस्यैव सुखस्याभिव्यक्तिहेतुत्वात्। अन्यथा सुखसन्तानजन्मप्रतिभासयोग्यत्वयोः साधनाधीनताकल्पनागौरवात्। साध्यान्तराऽशेषतया वा अव्यभिचारित्वेन वा[नित्य]निरुपाधिकप्रेमास्पदत्वेन वा सुखदुःखावस्थयोः अविशेषेण सुखस्वरूप आत्मा प्रत्यक्षेण अवभासते। यस्मादतश्शब्देन शङ्कानिराकरणहेतुसूचनद्वारेण साधनकलापस्य हेतुत्वं सम-
255.7 र्थितं, तस्माद्यथोक्तसाधनेत्युपसंहारः ॥

तत्र इच्छाप्राधान्येन सूत्रवाक्यार्थो दर्शितः। साधनचतुष्टयस्यावश्यारम्भकत्वं व्यतिरेकमुखेन दर्शितम्। इदानीमन्वयमुखेन
255.9 तदेव प्रतिपादयति—यतो द्वैतानुषङ्गादित्यादिना। ननु साधनकलापवत्
256.1 धर्मजिज्ञासाऽपि नियमेन आरम्भिकेति; नेत्याह—एवं सत्यर्थादिति। आगमार्थापत्तिभ्यामेव धर्म[साधन]कलापस्यावश्यारम्भकत्वे सिद्धे तदुभयप्रमाणविकलस्य धर्मविचारस्य न हेतुतेत्यर्थः ॥

---

ता. ननु सुखापरोक्ष्यसमये सम्बन्धोऽप्यवगम्यत इति सोऽपि पुरुषार्थत्वोपयोगीत्यत आह—**तत्रेति**। वेदान्तिनां मते जन्यमपि सुखं नास्ति इत्याह—**सत्यमिति**। कथं निर्णयः? इत्यत आह—**अन्यथेति**। किं च आत्मस्वरूपत्वात् सुखस्य आत्मनश्च नित्यत्वात् सुखस्य नित्यत्वसिद्धिरित्याह—**साध्यान्तरेति**। एतच्च विशेषणं सुखाभिव्यक्तिशेषदुःखनिवृत्तिव्यावृत्त्यर्थं मतिवृत्तिव्यावृत्त्यर्थं च। इदानीं साधनव्यावृत्त्यर्थमाह—**अव्यभिचारित्वेनेति**। सुखसाधनव्यावृत्त्यर्थमेव—**नित्येति** विशेषणम्। अत एव निरुपाधिकत्वमित्याह—**निरुपाधिकेति**। सुखविशिष्टत्वेन प्रेमास्पदमिति शङ्कां व्यवर्तयति—**सुखदुःखावस्थयोरिति**।

ब्रह्मणो जिज्ञासेति भाष्यम्। ननु धर्माय जिज्ञासेतिवत् चतुर्थी- 256 - 3
समासः किं न स्यात्? इत्यत्राह—अन्तर्णीतविचारार्थान्वये हीति। इच्छा- 256 - 3
प्राधान्ये हीच्छायाः कर्मप्रयोजनयोरैक्यात् प्राधान्यात् कर्मणि षष्ठीसमासः स्यात्, विचारप्राधान्ये तु कर्मप्रयोजनभेदात्। प्रयोजनविवक्षया तु चतुर्थीसमासोऽपि स्यादिति। ननु किं तत् ब्रह्म यत् इच्छायाः प्रयोजन-
तया कर्मत्वेन वर्तत इति; तदाह—ब्रह्मशब्दस्यार्थनिर्देशावसरे इति॥ 256 - 5

तत्र यदन्यैरित्यारभ्य ब्रह्मण इति कर्मणि षष्ठी इत्यतः प्राक्तनेन 256 - 7 257 - 4
ग्रन्थेन जातिजीवकमलासनशब्दराशीनां ब्रह्मशब्दाभिधेयतया जिज्ञासां प्रति कर्तृत्वेन कर्मत्वेन वा प्रतिपादनानुपपत्तेः अस्मिन् प्रयोगे न ब्रह्मशब्दस्य जात्याद्यर्थतेति दर्शितम्॥

तत्र ब्रह्मण इति कर्मणि षष्ठी इत्यारभ्य किं च शास्त्रप्रवृत्तिरेव इत्यतः 257 - 4 259 - 8
प्राक्तनेन ग्रन्थेन अप्रधानविचारान् शब्देन मुख्यया वृत्त्या उपादाय प्रधानस्य अर्थाक्षेपकल्पनाद्वरं मुखतः प्रधानविचारमेव उपादाय अप्रधानविचाराणामर्थाक्षेपकल्पनमिति कर्मणि षष्ठी दर्शिता। शेष इति सम्बन्धसामान्यमुच्यते, न कारकपञ्चकव्यतिरिक्ताः सम्बन्धविशेषा उच्यन्ते। तत्र यथा 'देवदत्तस्य स्वम्' इति षष्ठी विशेषसम्बन्धेऽप्यन्विताभिधानमर्हति एवं 'देवदत्तस्य गच्छति' 'देवदत्तस्य गम्यते' इत्यादिकारकसम्बन्धविशेषेऽपि अन्विताभिधानं नार्हति, किंतु अभिहितसम्बन्ध-

---

वृत्तसंकीर्तनपूर्वकमनन्तरग्रन्थस्य तात्पर्यमाह — तत्रेति। प्राधान्यादिति। इच्छालक्षणक्रियायाः यत् कर्मकारकं तदेव प्रयोजनमिति प्राधान्यात् कर्मत्वमेव वक्तव्यमित्यर्थः। धर्माय जिज्ञासेति चतुर्थीसमासः पूर्वमीमांसायां तर्हि कथं दर्शितः? इति; तत्राह—विचारेति। सम्बन्धसामान्यमिति। कर्मकारकादीनां द्वितीयादिविभक्तिभिरभिहितत्वात् प्रातिपदिकार्थमात्रस्य प्रथमाविभक्त्या अभिहितत्वात् अवशिष्टं सम्बन्धसामान्यमेव शेषे षष्ठीत्यत्र शेषपदेनोच्यत इत्यर्थः। सम्बन्धविशेषाः—स्वस्वामिभावादयः। ननु सम्बन्धसामान्यत्वस्य कारकादिसम्बन्धेष्वपि विद्यमानत्वात् शेष इत्यभिधानमयुक्तमित्यत आह—तत्रेति। ता.

सामान्यार्थसामर्थ्यात्, क्वचित् कारकसम्बन्धविशेषाश्च अर्थतोऽव-गम्यन्ते इत्येतावता 'षष्ठी शेषे' इत्युक्तम्, नार्थादपि कारकसम्ब-न्धाप्रतिभास इत्युक्तम्, इति पूर्ववादिनो मतम् ॥

259 - 8
260 - 9 किं च शास्त्रप्रवृत्तिरेव' इत्यारभ्य ज्ञातुमिच्छा जिज्ञासा इत्यतः प्राक्तनेन ग्रन्थेन साधिकारविषयस्य विचारविधेः प्रतिपादके वाक्ये ब्रह्मणः कर्मकारकत्वं निर्दिष्टं सूत्रस्य च तदेकार्थत्वात् तत्रापि ब्रह्मणः कर्मत्वमेव शब्देन वक्तव्यमिति दर्शितम् ॥

260 - 9 ज्ञातुमिच्छेत्यादि भाष्यम्। तत्र अवगतविषयत्वात् इच्छायाः ब्रह्म-
ण्यवगते तज्ज्ञानेच्छानुपपत्तेः अनवगते सुतरामिति कथं ब्रह्मज्ञानेच्छा?
260 - 10 इत्यत आह --ततश्चेच्छायाः फलविषयत्वादिति। का चेयमिष्यमाणावगतिः
260 - 13 इति; तदाह--साक्षादनुभव इति। ननु प्रथममेव अवगतिरुत्पद्यते;
260 - 13 तत्राह--ज्ञानं तु परोक्षे इति। शब्दात् परोक्षतया अवगते अपरोक्षज्ञान-
260 - 14 मिष्यत इत्यर्थः। यदा पुनः शब्दादपरोक्षज्ञानमुत्पद्यते तत्राह--सन्नि-
261 - 1 हितेऽपीति। प्रमाणेनावगन्तुमिति। अपरोक्षनिश्चयानुभवेनेत्यर्थः ॥

ननु किमिह ज्ञानमित्युच्यते?। संवेदनमेव प्रमाणफलं विज्ञानमिति सुगतप्रभाकरवैशेषिकनैयायिकाः। न च संवेदनं फलं चतुष्टयसन्निकर्षादिसामग्र्यं चान्तरेण प्रमातृव्यापारो नाम ज्ञानमस्तीति। वार्तिककारीयाणां तु प्रमातृव्यापारः संविज्जनको ज्ञानमिति। क्षपणकलोकायतिकानां च आत्मचैतन्यमेव ज्ञानम्। साङ्ख्यवेदान्तिनां करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानं भावव्युत्पत्त्या संवेदनमिति। तत्र न तावत् स्थायिन्यात्मनि संवित्फलोदयः कर्तृव्यापारमन्तरेणोपपद्यते।

---

ता. सामर्थ्यादिति। सामान्यस्य विशेषपर्यवसानमन्तरेण अनुपपत्तेरित्यर्थः ॥

ननु प्रसिद्धे ज्ञाने कः प्रश्नावसरः? इत्याशङ्क्य, वादिविप्रतिपत्तेः संशयादित्याह--संवेदनमेवेति। ननु प्रमातृव्यापारस्य ज्ञानत्वात् कथं प्रमाणफलस्य ज्ञानत्वम्? इत्यत्राह--न च संवेदनमिति। किं तर्हि युक्तं इत्याकाङ्क्षायां प्रमातृव्यापार एव ज्ञानमिति दर्शयितुं सुगतादिमतं दूषयति--तत्र न तावदिति। कर्तृव्यापारमन्तरेण उत्पद्यमानप्रदीपज्वालाप्रकाशव्यावृत्त्यर्थम्--स्थायि-

ननु यतः कारणात् कर्तृव्यापारजन्म ततएव अनुभवजन्म स्यात् आत्मनः परिस्पन्दव्यापारानुपपत्तेरिति । अयमत्र वक्तव्यः—किं लोके कर्तृव्यापारात् फलजन्म प्रत्यक्षेणावगतम् ? न वा ? इति । न चेत् व्याप्तिग्रहणाभावात् अप्रत्यक्षत्वाच्च न सर्वत्र कर्तृव्यापारावगमः स्यात् । अवगम्यते च लोके कर्तृव्यापारः । अथ लोके फलहेतुतया प्रत्यक्षसिद्धः कर्तृव्यापारः, तर्ह्यात्मन्यपि तदनुमीयते व्याप्तिनियमात् । ननु न परिणामो नाम व्यापारोऽस्ति आरम्भाभ्युपगमात् इति वैशेषिकादयः । तर्हि प्रयत्नव्यापारजन्यं फलमस्तु, कर्तृव्यापारव्याप्तिनियमात् फलस्य । ननु मनस्संयोगादेव असमवायिकारणात् व्यापारमन्तरेण ज्ञानमुत्पद्यते, न—करणसंयोगव्यतिरेकेण फलजन्मनि कर्तृव्यापारदर्शनात् ॥

अत्र सर्वसङ्करवादी विलपति—पाकादिषु फलस्य कर्तृव्यापाराधीनतादर्शनात् तत्र तथा अवगम्यताम्, इह तु तद्दर्शनाभावात् न कर्तृव्यापार इति । स च अनुमानप्रक्रियायामनभिज्ञ इत्युपेक्ष्यते । सुगतानामपि नित्यात्मसाधनादेव संविदां कर्तृव्यापारापेक्षा अनुमीयते । क्षपणकानामपि स्वरूपचैतन्यस्य निरुपाधिकस्य विषयावभासित्वे सर्वदा सर्वविषयावभासः स्यात् । लोकायतस्य च जन्यसंवेदनत्वात् तद्व्यापारानुमानम् । ननु सर्वगतस्य निरवयवस्य आत्मनो न परिस्पन्दपरिणामौ युक्तौ । सत्यम् । अध्यासपरिनिष्पन्नान्तःकरणसम्पिण्डितस्य आत्मनो ज्ञानाकारपरिणामात् । न च संवेदनाकारेण परिणामः ;

---

नीत्युक्तम् । ननु कर्तृव्यापारमन्तरेण फलोदयोऽनुपपन्न इत्युक्तमिति ; तत्राह—**आत्मन इति** । (भावः)मा भूत् व्याप्तिग्रहणम्, प्रत्यक्षेणावगम्यताम्, इत्यत आह—**अप्रत्यक्षत्वादिति** । भाट्टैः फलानुमेयत्वाङ्गीकारादिति भावः । द्वैधीभावादौ कुठारोद्यमननिपतनलक्षणकर्तृव्यापारः प्रत्यक्षसिद्ध एवेति शङ्कते—**अथेति** ॥   ता.

**क्षपणकानामिति** । सोपाधिकचैतन्यस्य विषयावभासकत्वेऽप्यात्मनः कर्तृव्यापारो बलादापततीति भावः । ननु अन्तःकरणसम्पिण्डितस्य संवेदनाकारेणैव परिणामोऽस्तु, किमन्तर्गडुना ज्ञानाकारपरिणामेन ? इति ; तत्राह—[**न चेति**।]

तस्य नित्यसिद्धत्वात्। अतोऽन्तःकरणपरिणामविशेषश्चैतन्यस्य विषयावच्छेदोपाधिः करणव्युत्पत्त्या ज्ञानं भावव्युत्पत्त्या तु संवेदनमेव अर्थप्रकाशो ज्ञप्तिः ज्ञानमित्युच्यते। तत्र अर्थोपाध्यपरोक्षसंविदवच्छेदकं ज्ञानमपरोक्षमिति ॥

तत्र अवयवार्थव्युत्पादनेन अपरोक्षावगमेच्छाया वाक्यार्थत्वमुक्तम्, इष्यमाणज्ञानफलोपदेशमुखेन अन्तर्णीतं तत्साधनं विचारं कर्तव्यतया वाक्यार्थं प्रतिपादयत्युत्तरं भाष्यम्, तस्य तात्पर्यं दर्शयितुमाशङ्कान्तरं निवर्तयति। कथम्?। नास्य सूत्रस्य वाक्यार्थो वर्णनीयः। तथा हि—अस्य सूत्रस्य शास्त्रान्तर्भूतत्वे विचारारम्भकर्तव्यता। विचारसूत्रस्य केन आरम्भः क्रियते?। स्वेनैव चेदात्माश्रयतापत्तिः। सूत्रान्तरेण चेदनवस्थापातः। अथ अनन्तर्भूतम्, तर्हि प्रथमसूत्रस्य अशास्त्रतया अनारम्भप्रसङ्ग इति; तत्राह—

261-3 तदेतच्छास्त्रान्तर्भूतं सूत्रमिति। आपातप्रतिपन्नोत्तरविचारविधिरेव स्वापेक्षितविचाराय प्रथमसूत्रमारम्भयति, विधौ च विचारिते विधिविषयविचारसूत्राणि पश्चादारम्भयतीत्येकशास्त्रत्वेऽपि नानवस्था। श्रोतव्यादिवाक्यानां स्वार्थे समन्वयद्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयनिमित्तत्वात् समन्वये च सम्बन्ध इति। अत्र च श्रुत्या

261-3-4 किं प्रतिपादितम्? इति; तदाह—अनेन चेति। प्रयोज्य इत्यधिकारी।

261-4 एकस्या इति साधनकलापस्येति। तस्य कारणान्तरमदृष्टं यज्ञादि दृष्टं च

---

ता. अतः परिणाम एव ज्ञानमिति प्रकृतमर्थमुपसंहरति—अत इति। एतावता प्रस्तुते किमायातम्? इत्यत आह—तत्रेति। अर्थोपाधिः अर्थावच्छिन्ना या अपरोक्षसंवित् तदवच्छेदकं तदभिव्यञ्जकं यत् भानं तदेव अपरोक्षज्ञानमित्यर्थः। वृत्तकीर्तनपूर्वकं वर्तिष्यमाणग्रन्थस्याप्यपुनरुक्तार्थतां दर्शयति—तत्रावयवार्थेति। आपाततः प्रतिपन्नेति। अधीतवेदस्य विचारेऽधिकार इत्यध्ययनविध्यपेक्षया श्रोतव्य इत्यादिविचारविधिरेव उत्तरविधिरित्युच्यते; सच अनुबन्धत्रयविशिष्टतया स्वनिर्णयहेतुभूतविचाराय प्रथमसूत्रारम्भमाक्षिपतीत्यर्थः। तथापि कथं प्रथमाध्यायसङ्गतिः? इति; तत्राह—श्रोतव्यादीति। ननु तर्हि विचारोऽपि न

व्याप्त्यनुसन्धानादि। अर्थादुपात्तमिति। आनन्तर्याभिधानसामर्थ्यादिति। 261 - 5
अतश्शब्दस्य मुखतो हेतुत्वाभिधायिनोऽपि आशङ्कान्तरनिवृत्तौ तात्पर्या-
दर्थात् हेतुत्वमुक्तमिति। अनुवादे प्रयोजनाभावात् कर्तव्यपदमध्याहृत्य
जिज्ञासाकर्तव्यता श्रुत्या अभिहिता। ननु इच्छासंयोगाज्ज्ञानस्य
साध्यतावगमात् तदेव कर्तव्यमस्त्विति; नेत्याह—तत्र जानात्येवेति। 261 - 6
इष्यमाणस्य साध्यता स्वयंसिद्धा न शब्दमपेक्षते सुखसंवेदनत्वात्
इत्यर्थः। किं तर्हि विधीयते? इति; तदाह—उपायं तु न वेदेति। 262 - 1
अनवगताभिलषितोपाय एव विधिशब्दैः प्रतिपाद्यत इत्यर्थः। दृष्टो-
पायत्वेऽपि अपरोक्षानुभवं प्रत्यदृष्टोपायताऽपि दर्शिता श्रवणादिविधेः।
ननु पदार्थव्याख्यानादेव स्वयमेव वाक्यार्थं प्रतिपद्यते, किं वाक्यार्थ-
कथनेन?। सत्यम्, सम्बन्धादीनामर्थात् प्रतिभासो वाक्यार्थकथनेन
भवतीत्याह—शास्त्रस्य च सम्बन्धाभिधेयप्रयोजनानीति। मुमुक्षुणा ब्रह्मानुभ- 262 - 2
वाय विचारः कर्तव्य इति वाक्यार्थः। कथमत्र अर्थात् सम्बन्धादि-
प्रतिपत्तिः, तदाह—एतदुक्तं भवतीत्यादिना। ननु ब्रह्मज्ञानद्वारेण 262 - 6
काम्यमानमोक्षसाधनं विचार इति फलसम्बन्धे सिद्धेऽपि कथं विषयादि-
सिद्धिः? इति; तत्राह—अर्थाच्छास्त्रस्येति ॥ 263 - 2

॥ इति पञ्चपादिकाविवरणे तृतीयवर्णकं समाप्तम् ॥

---

विधेयः ज्ञानं प्रत्यन्वयव्यतिरेकसिद्धसाधनत्वादित्यत्राह—दृष्टोपायत्वेऽपीति ॥ ता.

॥ इति पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपिकायां
तृतीयवर्णकं समाप्तम् ॥

---

दृष्टोपायत्वेऽप्यपरोक्षानुभवं प्रत्यदृष्टोपायताऽपि दर्शितेति। भा.
भेदशास्त्रे स्वातन्त्र्येण पुराणादौ वा प्रवर्तमानस्य अद्वैतवाक्यविचाराप्राप्तेः पक्षे
अप्राप्तस्यैव उपायता दर्शितेत्यर्थः ॥

इति पञ्चपादिकाविवरणव्याख्यायां भावप्रकाशिकायां
॥ तृतीयवर्णकं समाप्तम् ॥

---

## ॥ अथ चतुर्थवर्णकम् ॥

264 - 4 'तत् पुनर्ब्रह्म प्रसिद्धम्' इत्यादिभाष्यस्य तात्पर्यमाह—प्रयोजन-
विषयसम्बन्धानाक्षिपतीति। ननु विधिसामर्थ्यादेव प्रयोजनादिष्ववगतेषु
264 - 4 कथमाक्षेपः? इति चोदयति; कथमिति। परिहरति—प्रसिद्धशब्देनेत्या-
दिना। ननु प्रतिपन्नं शब्देन अनूद्य प्रतिपादयितुं शक्यत्वात् कथमवि-
264 - 6 षयः? इत्याह—कस्मादिति। अनधिगतार्थताऽभावादिति परिहरति—प्रति-
पाद्यत्वेनेति। विषयावगमद्वारा प्रयोजनस्य पूर्वावगमेनैव सिद्धत्वात्
264 - 8-9 नास्य प्रयोजनमपीत्याह—ततश्चानेनानवगमादिति। अथ इत्यप्रसिद्धपक्षे
सम्बन्धं प्रयोजनं चाक्षिपति। ननु अनधिगतार्थ एव प्रमाणेन प्रतिपाद्यते
264 - 10 प्रयोजनं च तत्रैवेति चोदयति—कथमिति। परिहरति—यत्र कदा-
चिदपीति। प्रत्यक्षादिप्रमाणैर्विचारानपेक्षैरत्यन्तानधिगत एव प्रति-
पाद्यते, यत्र विचारापेक्षया प्रमाणेन वस्तु प्रतिपाद्यते तत्र अप्रतिपन्न-
मुद्दिश्य विचारानुपपत्तेः प्रतिपन्ने विमर्शदर्शनान्न विचारापेक्षप्रमाणेन
अनधिगतावगम इत्यर्थः। ननु अप्रसिद्धपक्षे सम्बन्धः कथमाक्षिप्तो न
265 - 2 प्रसिद्धपक्षे इति; तत्राह—प्रसिद्धं पुनर्यदि नामेति॥

'अविज्ञाते तत्त्वे कारणोपपत्तितः तत्वज्ञानार्थमूहः तर्कः' इत्यक्ष-
पादसूत्रवचनात् सामान्यप्रतिपन्नस्य वा विशेषरूपेण विशेषतोऽप्यापात-
दर्शनगोचरस्य वा विशेषनिर्णयाय प्रमाणानुग्राहकस्तर्क इति ब्रह्मणोऽ-
प्यनिश्चितविशेषप्रतिभासगोचरतया विचारयोग्यत्वप्रदर्शनेन त्रितयमपि
265 - 6 समाधत्ते इति भाष्यस्य तात्पर्यमाह—अस्ति तावत् ब्रह्मेत्यादिनेति। ननु

---

भा. द्वैतप्रपञ्चस्य सत्यत्वेन अद्वैतविषयानर्थनिवृत्त्योरसम्भवान्न शास्त्रमारम्भणी-
यमिति शङ्का निरस्ता। इदानीमद्वैतब्रह्मणः प्रसिद्ध्यप्रसिद्धिभ्यां विषयत्वाद्य-
सम्भवान्न विचारशास्त्रारम्भ इत्याक्षिपति—**तत्पुनरिति। प्रसिद्धम्।** विचारात्
प्रक् वेदान्तेभ्य इत्यर्थः; न तु मानान्तरात्। ब्रह्मणि मानान्तरस्य असम्भवेन
विकल्पनाऽयोगादिति॥

समन्वयाध्यायनिरूपणेन ब्रह्मैव विषयः प्रतिपाद्यं चेति सिध्यति, फला-
ध्यायेन तु फलविशेषः, इति न त्रितयमत्र प्रतिपादनीयमिति ; तत्राह
--श्रोतृप्रवृत्त्यर्थमिति । ननु प्रेक्षावतेत्यादिचोद्यपरिहारौ स्पष्टौ ॥ 265 - 7

ननु प्रयोजनविशेष एव प्रवृत्त्यङ्गं भवति न विषयसम्बन्धाविति
चोदयति--एवमपि प्रयोजनविशेष एवेति । ननु साधनमपि प्रवृत्तिविषयं 265 - 12
शक्यसाध्यं च अनवगम्य फलज्ञानात् कुत्र प्रवर्तते ? इति ; तत्राह—न 266 - 1
च विषयभावमनापन्नमिति । ननु फलसाधनं प्रवृत्तिविषयो न फलमिति ;
तत्राह--छिदिक्रियाविषय एवेति। प्रयोजनसमवायि वस्तु कर्मकारकतया 266 - 2
विषयो भवति । ततश्च प्रयोजनप्रतिपत्तौ विषयोऽप्यन्तर्भवतीत्यर्थः ।
ननु कुलालदण्डादिव्यापारो मृद्विषयो घटश्च प्रयोजनमिति विषय-
प्रयोजनयोर्भेद इति ; तत्राह--दण्डादेरपीति । सत्यं प्रयोजनसम- 266 - 3
वायी विषयः प्रयोजनबुद्धावन्तर्भवति ; किं तु प्रयोजनं प्रति करणलक्ष-
णस्य पुरुषव्यापारविषयस्य अनन्यसाधारणतया शक्यप्रतिपाद्यतया च
विषयभावे दर्शिते प्रयोजनसाधने नियमेन प्रवृत्तिर्भवति नेतरथा इति
परिहरति—सत्यमेवम् । तथापीत्यादिना । तत्र प्रवृत्तिनियमाय अनन्यसाधा- 266 - 4
रणतया विचारतज्जन्यज्ञानयोरनुभूयमानतया प्रयोजनमपि ब्रह्म स्वरूपेण
विषयतया पृथग्वक्तव्यमिति दर्शयितुं विपक्षे दृष्टान्तमाह—यथा चिकित्सा- 266 - 4
ज्ञा(नस्ये)[ने इ]ति । विषयस्य सम्बन्धिरूपतया अन्तर्गर्भितसम्बन्धत्वान्न
पृथक्सम्बन्धो वक्तव्य इति ; तत्राह—सम्बन्धोऽपि वक्तव्य इत्यादिना । तत्र 267 - 1
अनन्यप्रतिपाद्यत्वात् साधनान्तरनिवृत्तिरूपादन्यत्वात् सम्बन्धस्य सोऽपि
पृथग्वक्तव्य इति दर्शयितुं विपक्षे दृष्टान्तमाह--यथा साधुशब्दपरिज्ञान- 267 - 2
मित्यादिना । अयमर्थः--व्याकरणारम्भात् प्राक् चिकित्साव्यापारात्
व्यापारान्तरैरसाध्यमपि साधुशब्दज्ञानं न चिकित्साव्यापारस्य विषयः
सम्बन्धाभावात्, किं तु व्याकरणेन सम्बन्धात्तस्य विषयो भवति ।
अतस्तदर्थी न क्वचिदिति । चिकित्साव्यापार इत्यर्थः । ननु एवमपि अन्य- 267 - 3
तमाभिधानेन अन्यतमस्य अर्थसिद्धत्वान्न पृथगभिधानेन कृत्यमिति ;

267 - 6-7 नेत्याह—तेन पुरुषार्थरूपतेत्यादिना । भिद्यन्त इति । पृथग्वक्तव्यानी-
त्यर्थः। न च अन्यतमेन अन्यतमस्य सिद्धिः, सत्यप्येकस्मिन्नितराभावस्य दर्शितत्वादिति । ननु स्वरूपभेदे पृथगभिधानापेक्षायामपि कथं त्रितयं सम्भूय न प्रवृत्त्यङ्गम्? इति । तत्र व्यतिरेकमुखेन प्रवृत्तिहेतुत्वं
267 - 8 दर्शयति—तानि च त्रीण्यपि प्रवृत्त्यङ्गम् । नापुरुषार्थे इत्यादिना ॥

ननु वक्तव्यमपि त्रितयं प्रसिद्धाप्रसिद्धपक्षयोरनुपपन्नमित्युक्तमिति। तत्परिहारायोत्तरभाष्यस्य आ अधिकरणपरिसमाप्तेस्तात्पर्यमाह—
268 - 2 तत्र विप्रतिपत्त्या एकान्ततः प्रसिद्धतामित्यादिना । तत्र प्रसिद्धिमात्रेण विचारविधानोपपत्तिः उद्देशनसम्भवात् ; एकान्तप्रसिद्ध्यभावात् विचारजन्यज्ञानस्य अनन्यसाधारणतेति । विप्रतिपत्तिशब्दो ब्रह्मशब्दव्युत्पत्तेरप्युपलक्षणार्थः। ननु एवमपि विचारशास्त्रस्य विषयसम्बन्धौ न समर्थिताविति
268 - 6 चोदयति—ननु ब्रह्म वेदान्तानामिति । ननु 'ब्रह्मजिज्ञासा' इति शास्त्र-
268 - 6 स्यापि स एव विषयो निर्दिष्टः; नेत्याह—शास्त्रं च तेषामिति । सूत्रवाक्यानि न्यायविषयाणि, न्यायाश्च प्रमाणप्रमेयसम्भावनादिविषयाः । ननु सम्भावनागम एव तर्हि प्रयोजनमिति; नेत्याह—
268 - 8 प्रयोजनं त्विति । प्रणाड्या इति । परम्परयापीत्यर्थः। धर्मार्थाभ्यां सुखमेव प्राप्यत इति तयोस्तत्परता ॥

ननु करणेतिकर्तव्यतयोरेकमेव प्रयोजनमिति निर्णीतं प्रथमे तन्त्रे । तथा हि—'आग्नेयोऽष्टाकपालः' 'उपांशुयाजमन्तरा यजति' 'अग्नीषोमीयमेकादशकपालम्' इति पौर्णमास्यां कर्मत्रयम्, तथा 'आग्नेयोऽष्टाकपालः' 'ऐन्द्रं दधि' 'ऐन्द्रं पयः' इति दर्शे त्रयम्, इत्याग्नेयादयः षड्यागाः । तेषां करणभूतानां द्विविधान्यङ्गानि निरूपितानि—अर्थकर्माणि संस्कारकर्माणि चेति । फलोपकार्यङ्गानि

---

ता. तथापि न्यायानां ब्रह्मविषयत्वमस्तीत्यत आह—**न्यायाश्चेति** । अत्रैकदेशी प्रत्यवतिष्ठत इति चोद्यग्रन्थस्य तात्पर्यमाह—**ननु करणेति** । तत्र करणस्वरूपं तावद्दर्शयति—**तथा हीति** । इदानीमितिकर्तव्यतास्वरूपं दर्शयति—**तेषामिति** । तत्र क्रमेण अर्थकर्माणि संस्कारकर्माणि च दर्शयति—**फलोप-**

प्रयाजादीनि आरादुपकारकाण्यर्थकर्माणि। प्रोक्षणादीनि तु द्रव्यद्वारेण यागस्वरूपोपकारितया सन्निपत्योपकारकाणि संस्कारकर्माणि। तत्र उभयविधानामप्यङ्गानां प्रधानापूर्वद्वारेण स्वर्गसिद्धिरेव प्रयोजनमिति। एवं शब्दशक्तितात्पर्यविचारस्य संस्कारकर्मवत् शब्दप्रमाणस्वरूपोपकारितया अर्थस्वरूपब्रह्मविचारस्य च ब्रह्मावगमफलोपकारितया अवगम्यमानब्रह्मविषयत्वमुभयविधविचारस्य युज्यत इत्यपसिद्धान्ती चोदयति—नन्वाग्नेयादीनामित्यादिना ॥ 268 - 9

ननु वेदान्ता एव ब्रह्मावगतिसमर्थाः। तत्र कथमितिकर्तव्यस्य अवगमफलतया ब्रह्मविषयता? इति; तत्राह—तेन यद्यपि वेदान्ता एवेति। 269 - 4 ननु कथं संभावनाबुद्धिहेतुतया तद्विषयस्य विचारस्य ब्रह्मावगमजनकतया तद्विषयता? नहि अन्यविषयो व्यापारोऽन्यविषयः इति; तत्राह—न हि छेत्तुरिति। द्विविधं हि कर्मकारकम्—किंचिद्व्यवधानतया 269 - 6 व्यापारजन्यातिशयवत्, यथा उद्यमननिपातनव्यापारस्य ऊर्ध्वाधोदेशसंयोगविभागातिशयविशिष्टः कुठारः कर्तृव्यापारस्य अव्यवधानेन कर्मकारकं भवति। किंचिदुद्देश्यफलतया करणव्यापारव्यवधानेन कर्म भवति, यथा—द्वैधीभूतो वृक्ष इति। तत्र कर्तृव्यापारः करणव्या-

---

ता. कार्यङ्गानीति। अस्त्वेवम्, तथाप्येकप्रयोजनत्वं कथम्? इत्यत आह—तत्रोभयेति। दार्ष्टान्तिकमाह—एवमिति ॥

ब्रह्मणः कर्मकारकत्वं दर्शयितुं लोके कर्मकारकस्य द्वैविध्यमाह—द्विविधं हीति। वृक्षस्य व्यवधानेन कर्मत्वमुपपादयति—तत्र कर्तृव्यापार

---

भा. एवं शब्दशक्तितात्पर्यविचारस्येति। ब्रह्मादिशब्दानां शक्तेर्वृद्धव्यवहा(र)[रा]सिद्धत्वात् तस्याः वाक्यतात्पर्यस्य च यो विचारस्तस्येत्यर्थः। तात्पर्यस्य [पुरुष]धर्म(स्या)[त्व]व्यावृत्त्यर्थं वा शब्दशक्तिरिति तात्पर्यविशेषणम्। शब्दस्यार्थे सामर्थ्यविशेष एव तात्पर्यमिति। ननु ज्ञानोद्देशेन श्रवणविधानात् श्रवणाख्यविचारस्यापि वेदान्ताङ्गत्वं श्रौतमिति चेत्, तथा सति श्रवणस्यापि शब्दवत् करणत्वेनेतिकर्तव्यताभावायोगात् (च) ॥

पारव्यवहितोऽपि वृक्षद्वैधीभावफल उच्यते। 'वृक्षं छिनत्ति' इति कर्तृव्यापारस्य तत्कर्मतावगमात्। स एव वृक्षः कुठारव्यापारस्य साक्षात् कर्म भवति। अव्यवधानात्। ननु करणस्य कुठारस्य कथं कर्तृता? इति; उच्यते—सर्वाणि खलु स्वव्यापारापेक्षया कर्तॄणि। सर्वकारकव्यापाराणां च फलं कर्मतया साध्यम्। तत्र कर्तृकरणकर्मभेदोऽवान्तरभेदापेक्षया भवति। तत्र कर्ता साधननियोगेन वा धातुना विशेष्यव्यापारतया वा स्वतन्त्रव्यापारः। करणं फलं प्रति सन्निपत्योपकारकम्। फलसमवायि कर्मकारकमिति। 'काष्ठानि पचन्ति' इत्यादिव्यपदेशः स्वव्यापारकर्तृत्वापेक्षया नावान्तरभेदापेक्षयेति। तस्मात् कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मता। एवं विचारव्यापारस्यापि प्रमाणप्रमेयसम्भावनावगमद्वारेण ब्रह्मावगमोद्देश्यत्वात् अवगमहेतोः अवगम्यविषयत्वात् ब्रह्मकर्मता न विरुध्यते। अथ
269-8 अव्यवहितमेव कर्म नोद्देश्यमिति; तत्राह—अन्यथा अन्यत्र कर्तृव्यापार इति॥

---

ता. इति। ननु करणस्यापि व्यापारवत्त्वेन कर्तृत्वे करणत्वं व्याहन्येतेति चोदयति—नन्विति। कथं तर्हि भेदः? इत्यत आह—तत्रेति। भेदमेव दर्शयति—तत्र कर्तेति। कारकान्तराप्रयोज्यत्वे सति कारकाणां प्रयोजकः कर्ता। नियोगेन। प्रेरणेनेति यावत्। लक्षणान्तरमाह—धातुनेति। गच्छति पचतीत्यादौ धातुना गमनादिना विशेष्यो व्यापारो यस्य स तथोक्तः तस्य भावः तत्ता तया इतीत्थंभावे तृतीया, इत्येवमुभयथा त्वर्थतः शब्दतश्च यः स्वतन्त्रः स कर्तेत्यर्थः। करणं लक्षयति—करणमिति। व्यापारवत्त्वे सति फलाव्यभिचारि करणमित्यर्थः। कर्मलक्षणमाह—फलसमवायीति। परसमवेतक्रियाफलशालि कर्म इत्यर्थः। तर्हि धातुना विशेष्यव्यापारत्वात् करणस्यापि कर्तृत्वं स्यादित्यत्राह—काष्ठानीति। स्वव्यापारापेक्षया कर्तृत्वं गौणमित्यर्थः। उपपादितमर्थं दार्ष्टान्तिके योजयति—तस्मादिति। विचारव्यापारस्यापि प्रमाणप्रमेयसम्भावनावगमद्वारेण ब्रह्मकर्मता न विरुध्यते इत्यन्वयः। तत्र हेतुमाह—ब्रह्मावगमेति। तथापि ब्रह्मविषयत्वं कथम्? इति; तत्राह—अवगमेति॥

अत्र इतिकर्तव्येषु द्विविधं प्रमाणं–आगमोऽन्वयव्यतिरेकौ च। प्रयाजादीनामागमात् मृत्कुलालादीनां कर्तृव्यापारस्य च अङ्कुर-कुम्भद्वैधीभावाङ्गता अन्वयव्यतिरेकाभ्याम्। अत्र तु शब्दोपलब्धिसम्बन्धज्ञानसंस्कारसहकृताच्छब्दादर्थावगमे सति विचारस्य अङ्गता नान्यतरप्रमाणेनाप्यवगता, शब्दादेव विचारानपेक्षादवगमजननात् इत्यपसिद्धान्तिनं परिहरति पूर्ववादी--विषम उपन्यास इति। ननु यथा 269 . 10
चक्षुरादयः सम्यग्ज्ञानहेतवोऽपि दोषसंयोगात् संशयविपर्यासौ जनयन्ति पुनः सम्यग्ज्ञानजन्मनि च दोषापकर्षमपेक्षन्ते, एवं शब्दः शक्तितात्पर्याज्ञानतद्विपर्यासज्ञानदोषात् संशयादिज्ञानमुत्पादयति तत्र दोषापनयनेन विपर्यासादिनिवृत्तये शक्तितात्पर्यविचारोऽङ्गभावमश्नुते 270 . 3
इति चोदयति--ननु संशयविपर्यासनिरासद्वारेणेति॥

तत्र किं शब्द एव दोषवशात् अन्यथाज्ञानं जनयति विचारश्च तदपनयनेन तथा प्रमितिहेतुतां प्रतिपद्यते? किं वा शब्दः सम्यग्ज्ञानस्यैव हेतुः कारणान्तरात् अन्यथाज्ञानं विचारश्च प्रतिबन्धमात्रं निराचष्टे निवृत्ते च प्रतिबन्धे शब्दादेव अर्थनिर्णयः? इति। तत्र न तावद्विपर्या-

---

विचारस्य इतिकर्तव्यतात्वे प्रमाणाभावात् परम्परयापि ब्रह्मविषयत्वं न ता.
सम्भवतीति पूर्ववादी प्रत्यवतिष्ठते–**अत्रेति**। तर्हि इतिकर्तव्यताऽभावे कथं करणत्वसिद्धिः? इत्याशङ्क्य, इतिकर्तव्यतान्तरं संपादयति—**अत्र त्विति**। प्रतिबन्धनिरासद्वारेण विचारस्य उपयोगमाशङ्कते—**ननु यथेति**। एतन्निराकर्तुं विकल्पयति—**तत्रेति**। आद्यः पक्षोऽनुपपन्न इत्याह—**तत्र न**

---

वस्तुतस्तु प्रथममेव शब्दात् ज्ञापितत्वे ज्ञानोद्देशेन विचारस्य विधेः भा.
ज्ञानस्वरूपमात्रेण सम्बन्धायोगात् तद्विशेषसम्बन्धो वक्तव्यः। स च विशेषः प्रतिबन्धरूपविपरीतवासनानिवृत्तिव्यतिरेकेणान्यो न सम्भवति, ततश्च विचारस्य प्रतिबन्धनिवृत्तिरेव फलम्। निवृ(त्तिर)[त्त]प्रतिबन्धशब्दादेव अपरोक्षनिर्णय इति विचारस्य न कथमपि ज्ञानोपयोग इत्याह—**शब्दादेव विचारानपेक्षादवगमजननादिति। तत्र किं शब्द एव दोषवशादिति।**

270 - 5 सादिनिरासेन अर्थनिर्णयहेतुता विचारस्येत्याह—नैतत् सारम्—यत्र ह्यनेकमिति। अयमाशयः—न शब्दसमवायी कश्चिद्दोषोऽस्ति। पुरुषेन्द्रियसमवायित्वाद्दोषाणाम्। अतः शब्दो न विपर्यासादिज्ञानहेतुः। किं तु शब्दानां प्रयोगान्तरेषु अन्यथान्यथाशक्तितात्पर्योन्नयनदर्शनात् इहापि तथातथाविधत्वसामान्यदर्शनेन अर्थविरोधबुद्ध्या च पुरुषदोषेण अन्यथाज्ञानान्युत्पद्यन्ते। शब्दाच्च तत्त्वज्ञानमेवोत्पद्यते। ततश्च शब्दात् पुरुषदोषाच्च बहुषु परस्परविरोधिषु ज्ञानेषु जातेषु शब्दशक्तितात्पर्यावधारणं पुरुषदोषापनयनेन प्रतिपक्षज्ञानान्तरमात्रं निवर्तयति, निवृत्ते च प्रतिबन्धे शब्दादेव तत्त्वज्ञानं जायते, जातं वा निश्चलमवतिष्ठते। तस्मान्न विचारः प्रमाणेतिकर्तव्यतया ब्रह्मविषय इति॥

271 - 9 एवमपसिद्धान्ते निरस्ते पूर्ववादिना सिद्धान्तयति—अत्रोच्यते—

---

ता. तावदिति। कुतस्तर्हि विपर्यासो जायते? इत्यत आह—किं त्विति। अस्मिन् ग्रामेऽयमेव पुरुष इत्यादावन्यथैव शक्तितात्पर्यावधारणात् 'एकमेवाद्वितीयम्' इत्यादावपि शक्तितात्पर्यमन्यथा कल्पयति, तथा प्रत्यक्षादिविरोधादद्वितीयं वस्त्वेवानुपपन्नमिति अर्थविरोधबुद्ध्या चान्यथाज्ञानं जायते, न तु शब्दादित्यर्थः। शब्दस्तर्हि किं करोति? इत्यत्राह—शब्दा[च्चे]त्त्विति। तर्हि शक्तितात्पर्यावधारणस्य विचारसाध्यस्य कुत्रोपयोगः? इति; तत्राह—ततश्चेति। ननु पूर्वमेव शब्दस्तत्त्वज्ञानमजीजनदित्युक्तमिति; तत्राह—जातमिति॥

---

भा. अत्र विचारस्य करणत्वमात्रनिराकरणमभिप्रेतम्। तस्यैव प्रस्तुतत्वात्। यत्पुनः शब्दस्य भ्रमादिजनकत्वनिराकरणं तत् सर्वमपि वैदिकं वाक्यं प्रमाणमेव न तु लौकिकवत् किञ्चिदप्रमामात्रमुत्पाद्य निवर्तत इत्येतत्परम्। न तु शब्दमात्रस्य भ्रमादिजनकत्वनिवृत्तिपरम्। तस्य प्रस्तुतविचारकरणत्वनिषेधानुपयोगात्। [पुरुषदोषे]ण भ्रान्तिजनकत्वसम्भवाच्च। न चैवं अप्रमाजनकत्वेन वेदस्याप्रामाण्यप्रसङ्गः। तस्यैव वेदवाक्यस्य तदानीमेव शक्तिभ्रमादिरहिते प्रमापकत्वेन पुरुषान्तरे तद्दोषेण भ्रमजनकत्वेऽप्यदोषादिति। अथवा शक्ति *

---

* अत्र ग्रन्थे त्रुटिः।

यद्यपि वाक्यार्थज्ञानमित्यादिना । तत्र सामान्यतोदृष्टनिबन्धनेनेति । **प्रयोगा-** 271 - 10
**न्तरेष्वन्यथान्यथाशक्तितात्पर्यदर्शनादिहापि तथाभावबुद्ध्या तथा-**
**विधार्थस्य च लोकेऽन्यथाभावदर्शनात्** इहाप्यन्यथाभावबुद्ध्येत्यर्थः ।
अयमाशयः—प्रतिबन्धनिवृत्तौ सत्यामेव अर्थनिर्णयात् प्रतिबन्धनिरा-
सिनोऽप्युपचारेण ब्रह्मनिर्णयहेतुत्वाद्विचारस्य ब्रह्मविषयतेति । **अत्रेदं
विचार्यम्—किं तात्पर्यमर्थप्रमितिहेतुः ? किं वा प्रतिबन्धनिरास-
हेतुः ? इति । केचित् प्रमितिहेतुतामाहुः । तत्र किं विज्ञातं तात्पर्यं
प्रमितिहेतुः ? अविज्ञातं वा ? । न तावदविज्ञातं प्रमितिहेतुः । तात्पर्यावगम-
फलविचारानपेक्षत्वप्रसङ्गात् तात्पर्यविषयादन्यत्र बुद्ध्यनुत्पादप्रसङ्गाच्च ।
तथा च कश्चित् स्थानजिघृक्षया कश्चिदुत्थापयन्नाह—'पित्रा त्वमाहूतः'
इति । स च पितुराह्वानं प्रतिपद्य समुत्तिष्ठति । इतरस्तु तत्र निविशते ।
समुत्थितश्च सन्नितरो जानाति 'स्थानजिघृक्षयेदमुक्तम्' इति । ननु न
पितुराह्वाने तात्पर्यहीने संसर्गबुद्धिरिति चेत्, न—उत्थानादिप्रवृत्ति-
दर्शनात् । प्रवृत्तेश्च संसर्गज्ञानपुरस्सरत्वाभावे प्रवृत्त्या संसर्गे शब्द-
शक्तितात्पर्यकल्पनाऽयोगात् । ननु शब्दो न मिथ्याज्ञानमुत्पादयति ।**

---

इदानीं **अर्थविरोधबुद्ध्येति** यदुक्तं तत्प्रपञ्चयति—**तथाविधेति** । ता.
तात्पर्यावगमः प्रमितिप्रतिबन्धनिरासहेतुः न प्रमितिहेतुरिति निर्णेतुं
विचारमारभते—**अत्रेदमिति** । तात्पर्यविषयादन्यत्र बुद्धिर्नोत्पद्यत इत्याशङ्क्याह—
[**तथा च**] **कश्चिदिति** । ननु तत्र तात्पर्यशून्ये प्रतिपत्तिरेव न जायत इति,
तत्राह—**स चेति** । इतरस्यापि तर्हि पितुराह्वान एव तात्पर्यं किं न स्यात् ? इति;
तत्राह—**इतरस्त्विति** । तथापि कथं स्थानजिघृक्षायां तस्य तात्पर्यमवसीयते ?
इति; तत्राह—**समुत्थितश्चेति** । ननु तत्र पदैः पदार्थानेव प्रतिपद्यते न तु
संसर्गमिति शङ्कते—**नन्विति** । ननु भवतु प्रवृत्तिः, तथापि संसर्गबुद्धिर्मा भूदिति
चेत्, मैवम्, सम्बन्धग्रहासम्भवप्रसङ्गादिति परिहरति—**प्रवृत्तेश्चेति** । ननु
मिथ्यार्थबोधकत्वे शब्दस्य प्रामाण्यमेव हीयत इति चोदयति—**नन्विति** । न
वयं शब्दस्य मिथ्यार्थबोधकत्वं प्रतिपादयामः, यत्र वस्तुतः पितुराह्वानमस्ति, तत्र

नैष दोषः—सत्यपि पितुराह्वाने तथाभूतज्ञाने च तात्पर्यं वक्तुरन्यत्रेत्येतावद्दर्शितम्। तस्मान्नाज्ञाततया तात्पर्यं प्रमितिहेतुः। अथ ज्ञाततया, तर्हि कुत्र तात्पर्यमवगम्यते? 'शब्दस्य अत्र तात्पर्य'मित्याश्रयविषयसापेक्षत्वात् तात्पर्यस्य! न तावत् पदार्थेषु तात्पर्यम्, वाक्यार्थज्ञानेऽनुपयोगात्। संसर्गश्च अनवगतो न तात्पर्यविशेषणतया अवगन्तुं शक्यते ॥

स्यादेतत्—पदावगतेषु पदार्थेषु परस्परान्वययोग्यतानिमित्तः संसर्ग उत्प्रेक्षया अवगम्यते तद्विषया च तात्पर्यावगतिरिति। न तावत् स्मृतिसंशयविपर्यासानामन्यतमः संसर्गावबोधः। तत्र परिशेषात् शब्दजन्यतया संसर्गबोधः प्रमाणमेव स्यात्। न च शक्तिरिव सामान्योपाधौ तात्पर्यम्। प्रतिवाक्यं विशेषतात्पर्यभेदात्। किं च,

---

ता. तात्पर्यहीने विज्ञानमुत्पद्यत इत्येतावदेव वदाम इति परिहरति—**सत्यपीति**। किं पदार्थेषु तात्पर्यम्? उत वाक्यार्थे? इति विकल्प्य, नाद्य इत्याह—**न तावदिति**। नापि द्वितीय इत्याह—**संसर्गश्चेति** ॥

उत्प्रेक्षायाः कुत्रान्तर्भावः इति विकल्प्य दूषयति—**न तावदिति**। संसर्गस्य पूर्वं श्रोत्रा अनधिगतत्वात् पाक्षिककोटिद्वयावगाहित्वाभावात् बाधाभावाच्च नोत्प्रेक्षायाः स्मृत्यादावन्तर्भाव इत्यर्थः। सामान्ये शक्तिग्रहणवत् संसर्गसामान्ये तात्पर्यमवगम्य तस्मादवगतात् तात्पर्यात् संसर्गविशेषबोधोऽस्त्वित्याशङ्क्याह—**न [च] तु शक्तिरिवेति**। शक्तिरपि गवादिशब्दानां न वस्तुमात्रेऽवसीयते, किं तु गोत्वादिजातौ तद्विशिष्टे वा, एवं तात्पर्यमपि न सामान्यमात्रेऽवसीयते, किं तु विशेष एव, स च प्रागेवाधिगतश्चेत् वाक्यमप्रमाणमेव स्यादित्यर्थः।*

---

भा. शुक्तिरजतादौ क्लृप्ताज्ञानादेव तत्र भ्रमः। शब्दस्य चेन्द्रियवदन्यथासिद्धिः। शाब्दप्रमायां त्वविद्या प्रमाणमिति न हेतुः। तथा आकाङ्क्षादिकमपि तत्र दोषत्वेनैवोपयुज्यत इति ग्रन्थकृतो [नि]गर्वः ॥

---

* अत्र ग्रन्थे त्रुटिः।

पदार्थवत् संसर्गेऽपि शक्तिमात्रनिबन्धनोऽवगमः न तात्पर्यनिबन्धनः इत्यनुमातुं शक्यते । शब्दानां च पदार्थप्रदर्शनमुखेन तात्पर्योपाध्युपयोगितया अन्यथासिद्धत्वात् तात्पर्यमात्रावगमाधीनः संसर्गबोधो न शब्दनिबन्धनश्च स्यात् । तस्मात् पदानामेव संसर्गप्रतिपादन-

भा. ननु तात्पर्यज्ञानं वाक्यार्थज्ञाने कारणम् । तथा हि—['अयमेति] पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इति प्रयोगे राज्ञः पुत्रेण पुरुषेण वा अन्वये तात्पर्यमिति संशये पुरुषेणान्व(ये तद्य)[यव्य]तिरेकनिश्चये च वाक्यार्थानवगमात् । ततश्च 'यत्संशयव्यतिरेकनिश्चयौ' इति न्यायेन तत् कारणम् । स्यादेतत् । समभिव्याहृतपदानामेकप्रयोजनत्वमपेक्षितम् । तच्चैकप्रतीतिजनकत्वम्, न त्वेकार्थपरत्वम् । तादृशानामप्यङ्गप्रधानवाक्यानां नानाप्रयोजनत्वात् । अन्यथा रक्तः पटो भवतीति वाक्ये रक्तपदस्याकाङ्क्षोत्थापनाऽयोगात् । 'पटो भवति' 'रक्तोऽङ्गारः' इत्यत्र तददर्शनात् । न च अन्विताभिधानसिद्ध्यर्थं तत्राकाङ्क्षोत्थापनमिति वाच्यम्; द्वारादिवदध्याहारादनुषङ्गाद्वा तदुपपत्तेः । एवं च राजपदस्य (पुत्रेति) [पुत्र एतीति] पदाभ्यामेकप्रयोजनतावगमदशायां तात्पर्यसंशयादिप्रयुक्तवाक्यार्थज्ञानव्यतिरेकाभावात् नोक्तनियमेन तात्पर्यज्ञानकारणत्वमाश्रयितुं शक्यते । न च वाच्यं विनिगमकाभावात् उभयमपि ज्ञातव्यमिति । 'रक्तः पटो भवति' इत्यत्र गुणस्य पटान्वयतात्पर्यावगमेऽपि प्रयुक्तपदानामेकप्रयोजनत्वज्ञानाभावे अनुषङ्गाध्याहारयोः अन्यतरस्य निवारयितुमशक्य[त्वात् ।] ननु 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र सर्वपदानामेकप्रयोजनावगमेऽप्युक्ततात्पर्यसन्देहे प्रतीतिविरहो दृश्यत इति चेत्, न— गमनापसरणक्रियाभेदे प्रयोजनैक्यायोगात् । न हि क्रिययोः साक्षादन्वयः । न चात्र द्वारं किञ्चिदवगम्यते । अतः प्रयोजनैक्यज्ञानमेवापेक्षितम्, नान्वयतात्पर्यज्ञानमिति । मैवम्— 'हस्तेन दीर्घेण कुठारेण वृक्षं छिनत्ति' इत्यत्र प्रयोजनैक्यज्ञानेऽपि दैर्घ्यस्य हस्तेन कुठारेण वा सम्बन्धे तात्पर्यमिति संशयादिदशायां वाक्यार्थानवगमात् तदपि हेतुः । एवमनेकार्थेऽपि तात्पर्यज्ञानं कारणम् ॥

**सामर्थ्यात् मुख्यलक्षणादिद्वारेण प्रमाणान्तराविरुद्धे संसर्गे प्रतिपन्ने दोषान्तरनिमित्तसंशयविपर्यासदिज्ञाननिराकरणाय तात्पर्यावगम**
272-7-14 **इति सिद्धम्** । तच्चेदं त्रयमप्यवश्यं इत्यारभ्य अलमतिविस्तरेण इत्यतः
272-15 **प्राक्तनेन ग्रन्थेन उक्तमर्थं निगमयति समर्थनं प्रदर्शयितुम्** । अस्ति तावदिति **स्पष्टार्थः** ॥

---

भा. किं च सत्यादिपदानां ब्रह्मपदार्थे तात्पर्यानवगमे कथं तैर्लक्षणया तदवगम्येत ? एवं महावाक्यस्यापि तात्पर्यज्ञानं हेतुरेव । तस्माद्विचारोऽपि वाक्यार्थावगमहेतुरेव । न चैवं वेदस्य सापेक्षतापत्तिः ; शक्तिज्ञानादिनापि तत्प्रसङ्गात् । शाब्दज्ञानमात्रकारणत्वं तूभयत्रापि तुल्यम्—

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥'

इति । तदिदं परोकरोति–(**तत्रेदं तावदि**)[**तदेवमि**]**त्यादिना तच्चेदं त्रयमित्य**[**न्तेन**] **ग्रन्थेन** ॥ [पञ्च-272]

अयं भावः—स्यादेवं यदि तात्पर्यसन्देहः प्रतिबन्धको भवेत् । न च तत्र प्रमाणमस्ति । न चैवं तात्पर्यसंशयदशायामप्यन्वयबोधप्रसङ्गः । एकवाक्यविषये यावदुपस्थितयोग्याकाङ्क्षितान्वयस्येष्टत्वात् । न च एकस्य कथं युगपदनेकान्वय इति वाच्यम् ; युगपद्बोधकसमाजे एकेनेव अनेकेनाप्येकस्यान्वये बाधकाभावात् । अन्यथा अनेकत्र तात्पर्यनिश्चयेऽपि तदभावप्रसङ्गात् । न चैवं तत्र संशयानुपपत्तिः ; किं तात्पर्ये सोऽनुपपन्नः ? किं वा अन्वये ? । नाद्यः, तस्य पूर्वमनिश्चितत्वात् । न द्वितीयः, अयमन्वयस्वातन्त्र्य*प्यनेन रूपेण संशयोपपत्तेः । स्वरूपेण स नास्त्येव । अथवा शब्दात्तदुत्पन्नमप्युभयान्वयज्ञानं नानासम्बन्धिपरामर्शदोषात् एककोटिकप्रमारूपसत्तावधारणा[ना]त्मकमनभ्यासदशाया[मदु]ष्टचक्षुरादिना उत्पन्नजलज्ञानमिव । अन्यथा तत्र प्रामाण्यसन्देहानुपपत्तेः । अतोऽविरुद्धः संशयः ॥

ननु तात्पर्यज्ञानस्याहेतुत्वे पूर्वोत्तरकालयोरविशेषात् तन्निर्णयानन्तरमपि प्रागिवान्यतरनिर्धारणं न स्यात् । अन्यथा प्रागपि स्यादिति चेत्, न—

---

* अत्र ग्रन्थे त्रुटिः ।

ननु न ब्रह्म सामान्येनापि लोके प्रतिपत्तुं शक्यम्, प्रमाणा-
न्तरागोचरत्वात्। नाप्यागमसामर्थ्यात्, तत्र प्रयुज्यमानस्य ब्रह्म-
शब्दस्य अनवधृतार्थत्वात्। न च पदमात्रादेव अर्थान्तरसिद्धिः, जात्या-
द्यर्थान्तरेषु प्रसिद्धत्वात्। तस्मान्न प्रसिद्धमुद्दिश्य विचारविधानोप-
पत्तिरिति चोदयति—कथमिति। तत्र श्रुतिसूत्रयोः ब्रह्मशब्दप्रयोग- 273-1
सामर्थ्यादेव जात्यादिव्यतिरिक्तं किंचिद्वस्तु प्रतिपत्तुं शक्यत इत्यत
आह—ब्रह्मशब्दस्तावदित्यादिना। ननु अर्थान्तरसद्भावे किं प्रमाणम्? इति। 273-2
प्रयोगार्थापत्तिः इत्याह—अतो नूनमन्यदेवेति। ननु श्रौतप्रयोगानुप- 273-3
पत्तिः नापूर्वमर्थं गमयति लौकिकप्रयोगाधीनत्वात् श्रौतप्रयोगस्येति;
तत्राह—तेन स्वर्गापूर्वदेवतेति। अपूर्वमिति 'तानि धर्माणि प्रथमान्या- 273-4
सन्' इत्यादौ वेदे धर्मशब्दप्रयोगोऽभिप्रेयते। ननु वाक्ये प्रयुक्तं पदं
प्रमाणान्तरानधिगतमर्थं न प्रतिपादयति, पदार्थांशे अनुवादमात्रत्वात्
इत्याह—नैतत् सारमिति। न प्रत्यक्षवत् सम्बन्धग्रहणाभावान्नानु- 273-6
मानादिवच्च इत्यर्थः। ननु दर्शितं स्वर्गादिवदिति; नेत्याह—स्वर्गाद्यर्थो- 273-8
ऽपीति। सन्निहितानेकवाक्यार्थसामर्थ्यलभ्यः स्वर्गादिपदार्थ इत्यर्थः।
तत्र वाक्यार्थप्रमितिविवक्षया प्रसिद्धार्थैः पदान्तरैः सह अप्रसिद्धार्थ-
पदप्रयोगानुपपत्तिरेव प्रतिपाद्येन सम्बन्धग्रहणानपेक्षया अपूर्वपदार्थं
पदवाच्यत्वेन प्रतिपादयतीति परिहरति—यस्मिन् वाक्ये एकं पदमिति। 273-9

---

भा०

उभयविशिष्टज्ञानसामग्रीसत्त्वे प्रागन्यतरनिर्णयानुपपत्तेः। पश्चात्तु अन्यतरान्वयप्रतीतौ तात्पर्याभावनिश्चयेन प्रतिबद्धायां तदन्यत्र निश्चयः। वस्तुतस्तु तात्पर्याभावनिश्चयोऽपि न प्रतिबन्धकः; तत्र मानाभावात्। किन्तु तात्पर्याभावेन शब्दावगतस्याशब्दार्थत्वमेव निश्चीयते। न च तदन्वयप्रतीतौ प्रमाणाभावः; एतस्य प्रतिबन्धकत्वे प्रमाणे असति आकाङ्क्षादिसामग्रीसत्त्वस्यैव तत्र प्रमाणत्वात्। न चैवमयोग्यतादिनिश्चयोऽपि न प्रतिबन्धक इति वाच्यम्; अयोग्यतानिश्चयस्य ग्राह्याभावनिश्चयतया प्रमाणान्तर इव प्रतिबन्धकत्वात्॥

नैराकाङ्क्ष्यनिश्चयोऽपि एकवाक्यतातात्पर्यनिश्चयविरोधी तत्प्रतिबन्धकः।

विप्रलम्भभ्रान्त्यादिदोषरहितवेदसूत्रवाक्यार्थनिर्णयस्य अवश्यलभ्यत्वा-
दिति भावः। ननु सहप्रयोगानुपपत्तिर्नियामकाभावात् यं कंचिदर्थमुप-
274-2 स्थापयतीति ; तत्राह—तत्र निगमनिरुक्तेति। निगमो नाम प्रसिद्धार्थतद-
वयवौ परित्यज्य शब्दस्य शब्दैकदेशानुगमेन अर्थान्तरे वृत्तिः, यथा—
देहात्मादिशब्दानामुपचितवस्तुसन्ततगमनवत्पदार्थादावेकदेशानुगमेन
वृत्तिः। प्रसिद्धार्थतदवयवोपादानेन अर्थान्तरवृत्तौ लक्षणागुणवृत्ति-
प्रसङ्गात्। निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धादर्था-
दर्थान्तरे वृत्तिः। यथा—सोमशब्दस्य पार्वतीसहितमहेश्वरे वृत्तिः।
व्याकरणं—प्रत्ययविधानसामर्थ्यादर्थनिश्चयः। यथा—वादीति
ताच्छील्ये णिनिप्रत्ययविधानसामर्थ्यात् वदनशीलो गम्यते। ननु प्रसि-
द्धबलेन अप्रसिद्धमुपादीयते न च अप्रसिद्धेन प्रसिद्धं त्यज्यत इत्यत्र को
274-5 विशेष इति ; तत्राह—न हि प्रसिद्धिरप्रसिद्ध्येति। अप्रसिद्धिः नैसर्गिक-
प्रागभावः, प्रसिद्धपदार्थैः सह वाक्यार्थनिर्णयाय प्रयोगानुपपत्ति-
रेव आगन्तुकी तस्य प्रागभावस्य निवृत्तिहेतुरिति भावः॥

भा. न च तात्पर्याभावनिश्चयस्यैवंरूपत्वमस्ति ; अन्यथा रुद्ररोदनाद्यर्थवादानां स्वार्थे तात्पर्याभावनिश्चयदशायां संसर्गानवबोधकत्वप्रसङ्गात्। तथा च ततो निन्दा प्रशंसा वा न प्रतीयेत। न ह्येकैकरुद्रादिपदान्निन्दादि प्रतीयते। न वा रुद्ररोदनादाववान्तरतात्पर्यं वक्तुं शक्यम्। ततश्च अतत्परा अप्यर्थवादाः शब्दशक्त्यनुसारेण स्वार्थसंसर्गबोधमस्वार्थसाधकमुत्पाद्य निन्दादिप्रतीतिं जनयन्तीति पौरुषेयम्॥

किं च, न हि प्रतिप्रयोगं तात्पर्योपस्थापकलिङ्गोपस्थितिर्नियताऽस्ति। न च समभिव्याहारमात्रेण तदु(भय)[प]स्थितिर्नियता। भूयसां तेषां तात्पर्यहीनानामुपलम्भात्। तथा च कदाचित् पदार्थ(त्व)स्मृत्यादिशाब्दधीसामग्रीमतामपि 'गामानय' इत्यादिवाक्यमबोधकं स्यात्। यत्त्वनेकार्थस्थले तात्पर्यज्ञानं वाक्यार्थज्ञाने कारणमिति सर्वत्रापि तथेति ; तन्न—तत्रापि लाघवात् पदार्थविशेष एव तात्पर्यज्ञानमपेक्षितम्। तेन पदार्थविशेष(ण)-

ननु अवयवार्थसामान्यानुगमानां सर्वतोविप्रसृतिसम्भवात् उपादेयार्थनियमायोगात् वाक्यार्थप्रतिपत्तिनियमो न स्यादिति चोदयति—ननु निगमादिवशेनेति। अत्र निगूढाभिसन्धिरुत्तरमाह—न तर्हि निगमादी- 274 - 7-9
नामिति। रूढिसमार्थ्यादेव सर्वत्र वाक्यार्थनियमे लोकप्रसिद्धं वृत्त्यन्तरमनर्थकं स्यादिति भावः। पूर्ववादी निगमादीनामर्थवत्तामाह—भवत्यर्थवत्तेति। स्वार्थादन्यत्रेति। अर्थान्तरविवक्षयेत्यर्थः। विनियोगा- 274 - 9-10
दिति। वाक्यार्थसंसर्गं निमित्तीकृत्येत्यर्थः। अयं भावः—वाक्यार्थनिर्णयं निमित्तीकृत्य पदान्तरैः सह प्रयोगानुपपत्तिरेव निगमादिवशेन अर्थमाददाना सन्निहितपदार्थसंसर्गयोग्यतया प्रयोजनपर्यन्तमेव पदार्थमादत्त इति वाक्यार्थनियमसिद्धिरिति। सिद्धान्ती गूढाभिसन्धिं विवृणोति—एवं तर्ह्येकार्थनियमायेति। प्रथमप्रयोगानुपपत्तिर्निगमाद्यनु- 275 - 2
गृहीता फलपर्यन्तवाक्यार्थान्वयिपदार्थाकाङ्क्षानुगृहीता च नियत-

---

भा० परेण पदार्थविशेषस्य शब्दार्थत्वमात्रं निर्णीयते। न त्वन्वयबोधः। यावदुपस्थितयोग्यसाकाङ्क्षान्वयधियः प्रथममेव वाक्यादुत्पन्नत्वात्। अत एव वाक्यादनेका(र्थी)[र्थ]प्रतीत्या कस्तस्यार्थ इति सन्दिग्धे ॥

केचित्तु अन्यत उपस्थिते वाक्यवत् सम्बन्धमात्रादुपस्थितेष्वनेकार्थेषु पदविशेषस्य पदार्थविशेषे तात्पर्यज्ञानात् पदार्थान्तरोपस्थितिप्रतिबन्धे सति वृत्त्या नियतपदार्थोपस्थितिरिति तात्पर्यज्ञानस्य पदार्थज्ञान एवोपयोगः। अत एव—पदार्थज्ञाने सति तन्निरूपिततात्पर्यज्ञानं ततः पदार्थज्ञानमिति परस्पराश्रय इति प्रत्युक्तम्। वृत्त्यादिना पदात् सम्बन्धमात्रादुपस्थितार्थेषु तात्पर्यग्रहसम्भवात्। न च वृत्त्या पदार्थोपस्थितौ पदानां नातिरिक्तापेक्षेति वाच्यम्; प्रतिबन्धकाभावस्यावश्यापेक्षितत्वात्। दृश्यते हि शब्दश्रवणेऽपि कदाचिदेवार्थः स्मर्यते न सर्वदेति। न चात्र तात्पर्यज्ञानस्य प्रतिबन्धकत्वे प्रमाणाभावः। युगपदनेकान्वयप्रतीत्यङ्गीकारे युगपदनेकार्थज्ञाने प्रमाणाभावेन तत्प्रतिबन्धकल्पनात्। नानार्थात् पदात् वृत्त्या पदार्थोपस्थितौ तात्पर्यज्ञानं कारणं वा अस्तु। न सर्वथा वाक्यार्थज्ञाने कारणम् ॥

पदार्थोपादानहेतुभावे रूढेर्न विशिष्यत इत्यर्थः ॥

ननु एवमपि कथं ब्रह्मशब्दस्य जात्यादिविलक्षणे निरतिशयपुरु-
275 - 4 षार्थे मुमुक्षोर्जिज्ञासायोग्ये वस्तुनि निगमवशात् वृत्तिः? इति; तदाह—तदत्र
ब्रह्मशब्दे व्युत्पाद्यमाने इति। ननु एवमपि यत्किंचिदापेक्षिकमहत्त्वसम्पन्नं
275 - 5 वस्त्वनुगम्यतामिति ; नेत्याह—प्रयोगानुगमे वा असतीति। तत्र हेतुः—
275 - 7 वाक्यार्थान्वयीति। तत्र अल्पत्वं नाम वस्तुनो देशकालवस्तुपरिच्छेदः,
तद्व्यावृत्तिर्निरतिशयमहत्त्वम्, तत्र उपपदादिसङ्कोचकाभावे जिज्ञास्यस्य
275 - 7 पुरुषार्थतया वाक्यार्थान्वयसम्भवे च तदपि ब्रह्मपदेन अनुगम्यत इत्याह—
276 - 4 ततश्च कालकृतावच्छेदनिमित्तस्येत्यादिना बुद्धत्वं च इत्यतः प्राक्तनेन ग्रन्थेन।

---

भा. एतेन—मा भूत् स्वातन्त्र्येण [तात्पर्यज्ञानं] कारणम्। आकाङ्क्षाज्ञानान्तर्भूतत्वेन त्ववश्यं कारणम्। आकाङ्क्षा ह्यभिधानापर्यवसानम्। तच्च यस्य पदस्य येन पदेन विना तात्पर्यविषयाननुभावकत्वं तत् इति प्रत्युक्तम्। अर्थवादवाक्यस्य नैराकाङ्क्ष्यप्रसङ्गात्। 'गामानय' इत्यादिप्रयोगे तात्पर्यलिङ्गोपस्थितिनैयत्याभावेन तस्य दुर्ग्रहत्वाच्च। यस्य पदस्य येन विना स्वार्थाननुभावकत्वं तदेवापर्यवसानम्। आकाङ्क्षा च (नैव)[सैव] भवतु, लाघवात्। [ननु] तर्हि 'अहो विमलं जलं नद्याः कच्छे महिषश्चरति' इति प्रयोगे कच्छपदेनान्वयप्रतीतिजननसम्भवात् नदीपदस्य जलपदेनाकाङ्क्षा न स्यादिति चेत्, न—यस्य पदस्य येन पदेनैकप्रयोजनत्वमवगतं तस्य पदस्य तेन विना अभिधानापर्यवसानात्। एकप्रयोजनत्वं च क्रियाकारकतद्विशेषणपदानामाकाङ्क्षां विनैव समभिव्याहारात् ज्ञातुं शक्यम्। न त्वाकाङ्क्षया, सत्यामपि तस्यां (योऽनन्त)[योऽप्स्वन्तः] इति मन्त्रे तदभावात्। एकप्रयोजनत्वज्ञाने सत्यप्याकाङ्क्षा वक्तव्या। 'भगो वां विभजतु' इत्यादिविभागमन्त्राणामेकप्रयोजनानामपि परस्पराकाङ्क्षाविरहादेकैकधा(र्य)[त्वर्थ]त्वात् अतोऽभिधानापर्यवसानं वक्तव्यम्। तच्च तात्पर्यज्ञानं विनापि सिध्यति। अत एवैकप्रयोजनवशाद्गुणपदेष्वाकाङ्क्षोत्थाप्यते ॥

**भाष्ये नित्यशब्देन त्रिविधमपि महत्त्वं दर्शितमित्यर्थः। ननु बुद्ध-त्वादयो गुणा न ब्रह्मत्वोपयोगिनः तत् कथं ब्रह्मपदादनुगम्यन्ते इति चोदयति**—कथमिति। **नैष दोषः—गुणतोऽपकृष्टेऽप्यल्पबुद्धिदर्शनात्।** 276-4 **तथा हि—गुणहीनं दोषभूयिष्ठं च वस्त्वल्पमविद्यमानसमं मन्यन्ते। गुणभूयिष्ठं दोषहीनं च महान्तं कथयन्ति। अतो गुणतोऽल्पत्वनिरा-करणेन महत्त्वं दर्शयितुं बोधगुणहीनस्य गुणतोऽपकृष्टतया अल्पत्वात् बुद्धत्वमनुगम्यत इत्याह**—अबोधात्मकं हि वस्त्वित्यादिना। **तथा चेतन-** 276-4 **स्यापि संसारित्वे दोषभूयिष्ठत्वात् गुणतोऽपकर्षान्निरतिशयमहत्त्वासिद्धेः सर्वदोषरहिततया मुक्तत्वोत्कर्षोऽप्यनुगम्यत इत्याह**—मुक्तमिति च। 276-7 अविद्याकामकर्मपरतन्त्र इति। **चेतनस्यापि मुक्तस्य सर्वविषयज्ञानाभावे सर्वकार्यनियमनादिशक्त्यभावे च परिशिष्टज्ञेयकार्यविषयज्ञाननियमन-शक्त्यभावात् ततोऽपकर्षात् अल्पता स्यात्, तद्व्यावृत्त्यर्थमाह**—सर्वज्ञं सर्व- 276-10 शक्तिसमन्वितं च तदित्यादिना। **ननु ब्रह्मशब्दप्रयोगेऽपि जातिजीव-कमलासनशब्दराशिषु नैतावानर्थः प्रतीयते, तत्र कथमनुगमादप्येतादृश-**

---

भा. किं च प्रकृतिप्रत्ययात्मकनिखिलपदप्रतिपाद्यसंसर्गस्य वाक्यादृते ज्ञातुमशक्यत्वान्न तन्निरूपिततात्पर्य(म)[मिति]ज्ञानम्। यत्तु वाक्येन प्रतिपि-पादयिषितसंसर्गविशेषस्य प्रागज्ञानेऽप्येतत्पदार्थस्यैतत्पदार्थसंसर्गे तात्पर्य-मिति ज्ञानं प्रागपि सुसम्पादमिति; भवतु तद्ज्ञानम्, तत्तु भिन्नविषयं न वाक्यार्थसंसर्गविशेषज्ञाने कारणम्। वाक्यार्थसंसर्गविशेषज्ञानं तु स्वविषय-गोचरतात्पर्यज्ञानं विनैव जायत इत्यन्यदपि ज्ञानं तथैवेति तात्पर्यज्ञानं न क्वापि कारणम्। किं तु पदार्थस्मरणादिसामग्रीमहिम्ना प्रथममेव वाक्यार्थज्ञानं जन्यते। तच्च कचित्तात्पर्यज्ञानविपरीतवासनादोषादनवधारणं भवति। गृहीते तु तात्पर्ये वर्णितदोषो निवर्तते। ततश्शब्दादेव निश्चयः। तदभिप्रेत्य 'धर्मे प्रमीयमाणे' इत्याद्युक्तम्। यत्तु सत्यादिपदानां तात्पर्याज्ञाने लक्षणानवतार इति; सत्यम्, तथापि शक्तिग्राहकमा(प)[न]न्न वाक्यार्थज्ञाने हेतुरिति॥

276 - 14 स्य अर्थस्य प्रतिपत्तिरिति ; तत्राह—सिद्धे हि वस्तुनि प्रयोगे इति । प्रमाणान्तरगृहीतेऽर्थे प्रयोगसामर्थ्यादेवार्थप्रतिपत्तावल्पं वा महद्वा यथा प्रमाणान्तरेण प्रतिपद्यते तथैव शब्दार्थः प्रतिपत्तव्यः, यदा पुनः प्रयोगसामर्थ्यमनपेक्ष्य शब्दावयवसामर्थ्यादेवार्थोऽनुगम्यते तदा प्रमाणान्तरोपपदप्रकरणानां सङ्कोचहेतूनामभावात् यथासामर्थ्यं मुख्य एवार्थः प्रति-
277 - 4 पत्तव्यः इति भावः । उक्तेऽर्थे भाष्यमवतारयति—तदेतदाहेति ॥

ननु सौत्रस्य शब्दस्य अर्थो ऽनुगम्यते ? किं वा श्रौतस्य ? न तावत् सौत्रस्य । पौरुषेयप्रयोगस्य प्रमाणान्तरापेक्षत्वात्तदभावात् । नापि श्रौतस्य । 'सत्यं ज्ञानम्' 'यतो वा इमानि' इत्यादिशास्त्रे निर्णीयमानार्थत्वात् अनुगमानपेक्षणादिति । नैष दोषः—श्रुतिप्रमाणावगतविषयतया तन्मूलस्यैव सौत्रस्य ब्रह्मशब्दप्रयोगस्य उत्तरसूत्रप्रतिपाद्यश्रुतिप्रमाणगम्यब्रह्मस्वरूपमनपेक्ष्यैव अर्थानुगममुखेन अर्थोपादानात्, उत्तरसूत्रसाध्यसिद्धवत्कारेण अर्थोपादानानुपपत्तेश्च । श्रौतस्य वा अयं ब्रह्मशब्दस्य अर्थानुगमो वर्ण्यते । वाक्यार्थान्वयितया प्रयुक्तस्य ब्रह्मशब्दस्य

---

भा. 'अस्ति तावत् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते बृहतेर्धातोरर्थानुगमा'दिति भाष्ये बृहत्त्वं निरतिशयमहत्त्वम् । तच्च न परिमाणविशेषः । न वा तद्गुणवत्त्वम् । निर्गुणत्वश्रुतिविरोधात् । नापि अवयवोपचयः नद्यादाविव, निरवयवत्वश्रुतिविरोधात् । किन्तु स्वरूपोपचयः सर्वात्मतायोग्यत्वम् । तच्च जडरूपमप्युपपन्नं भवति, यदि ज्ञानादिकं श्रुतियुक्तिसिद्धं न स्यात् । सति तु तस्मिन् तदभेद[सि]द्धेर्ज्ञानानन्दादिश्रुतिप्रमितनिखिलस्वरूपं ब्रह्म तत्पदानुगमात् सिध्यति इति दर्शितम् । यथा अमरशब्दो देवेषु प्रयुज्यमानः आपेक्षिकमेव अमरत्वमुपस्थापयति, परमात्मनि प्रयुज्यमानस्तु निरवधिकं अमरत्वम् , तथा ब्रह्मशब्दोऽपि इत्यभिप्रेत्य तत्रोपपत्तिमाह—प्रमाणान्तरगृहीतेऽर्थ इति । प्रपञ्चप्रमाणं तु न सङ्कोचकम् , प्रपञ्चस्य मिथ्यात्वादिति भावः ॥

वाक्यप्रमाणमनपेक्ष्यैव अन्यतः सिद्धेः वक्तव्यत्वादनुगमापेक्षणात्। ननु
तर्हि पदानुगमस्य वर्णितविशिष्टार्थविषये सम्भावनामात्रबुद्धिहेतुत्वात्
प्रमाणान्तरानधिगतस्य पदार्थस्य कथं वाक्यार्थान्वयितया तत्र निर्णय-
हेतुत्वम्? इति चोदयति—नन्वेवमपि व्युत्पत्त्यनुसरणेनेति। तत्र जिज्ञासा- 277.8
पदस्य सन्निहितस्य अनिर्णीतजिज्ञास्यवस्तुसापेक्षत्वात् तदपेक्षितार्थ-
समर्पणस्य ब्रह्मशब्दस्य अनिर्णीतप्रतिपन्नवस्तुमात्रसमर्पणेन वाक्यार्थ-
निर्णयहेतुत्वं न विरुध्यत इति परिहरति—सत्यमेवम्—अत एवेति। 277.10
'सर्वस्यात्मत्वाच्च' इति भाष्यतात्पर्यार्थमाह—इदमपरं ब्रह्मशब्दार्थ- 277.11
स्येति। ननु आत्मन्यपि न प्रमाणम्, प्रत्यक्षाद्यविषयत्वात्, अप्रामाणि-
कस्य च द्विचन्द्रादिवत् अवस्तुत्वादिति; तत्राह—सर्वो ह्यात्मास्तित्वमिति। 277.13
ननु शून्य एव अयमात्मा प्रतिभासते; कथमात्मास्तित्वसिद्धिः? इति
शून्यवादमाशङ्क्याह—यदि नात्मास्तित्वप्रसिद्धिः स्यादिति। ननु आत्म- 278.1
पदार्थे प्रत्यक्षावगते कथं ब्रह्मपदार्थस्य प्रसिद्धिः? इति; तदाह—
आत्मा च ब्रह्मेति। ननु अनादिवृद्धव्यवहारे ब्रह्मशब्दस्य आत्मनि प्रयोगा 278.2
दर्शनात् कथं ब्रह्मशब्देन आत्मा जिज्ञास्यत्वेनोपादीयते? इति चोदयति—
कथं पुनरात्मा ब्रह्मेति। लौकिकप्रयोगाभावेऽपि वैदिकप्रयोगसामर्थ्यात् 278.2
'स वा अयमात्मा ब्रह्म' इत्यादौ ब्रह्मशब्देन आत्मा जिज्ञास्यत्वेन
उपादीयत इति परिहरति—वेदान्तेष्विति। ननु ब्रह्मशब्दाभिधेयोऽयमात्मा 278.3
नाहंप्रत्ययवेद्यः, किं तु आगमैकसमधिगम्य इति; नेत्याह—आत्मा- 278.3
नमेवेति। ततश्च प्रतिपन्नमुद्दिश्य विचारसम्भवात् शक्यप्रतिपाद्यता
सिद्धा इत्याह—तदेवमहंप्रत्यये एवेति ॥ 278.4

ननु वेदान्तेषु संज्ञापरतया न आत्मनि ब्रह्मशब्दः प्रयुज्यते, किं
तु आत्मनो ब्रह्मशब्दार्थतादात्म्याभिप्रायेण, ततश्च अतिरिक्तार्थत्वात्
ब्रह्मशब्देन आत्मा उपादीयत इत्ययुक्तमिति। नैष दोषः—अतिरिक्त-

ब्रह्मस्वरूपनिर्णयविवक्षया प्रसिद्धांशस्य ब्रह्मशब्देन उपादानात् एकस्मिन्नप्यर्थे बिम्बप्रतिबिम्बादिवत् प्रतिभासाप्रतिभासोपपत्तेः ॥

एवं तर्हि प्रत्यक्षगोचरतया अनन्यसाधारणत्वाभावात् विषयत्वं न
278 - 5.8 सिध्यति इत्याक्षिपति—यदि तर्हि लोके ब्रह्मात्मत्वेनेति । समाधत्ते—न-
278 - 10 तद्विशेषं प्रति विप्रतिपत्तेरिति । भाष्यार्थं विवृणोति—सत्यं अहमित्यात्मनि प्रत्यय इत्यादिना । ननु अन्यस्मिन् विप्रतिपन्ने कथमन्यन्निर्णीयते ?
279 - 1 इति ; तदाह—ताश्च वस्तुत इति । ननु प्रसिद्धे पदार्थे कथं विप्रति-
279 - 2 पत्तिः ? इति ; तत्राह—ततः सामान्यतः (प्र)सिद्धमपीति । ननु अप्रतिपन्नविशेषं वस्तु स्वयमप्रतिपन्नमेवेति कथमुद्दिश्यविधानाभावे शक्य-
279 - 4 प्रतिपाद्यता ? इति ; तत्राह—सामान्यतः सिद्धत्वात्(च) शक्यत इति ॥

ननु नास्ति ब्रह्मणि सामान्यविशेषभावः । सत्यम् । शरीरेन्द्रियमनोबुद्धिशून्यकर्तृभोक्तृसर्वज्ञब्रह्मात्मनां पराग्व्यावृत्तप्रत्यग्धर्मानुगमेन सिद्धिः सामान्यम् । तत्र प्रत्यग्धर्मानुगमेन सिध्यन् विशुद्धस्वरूपोऽपि सामान्यतः सिद्ध इत्युच्यते । ततः प्रत्यक्त्वानुरक्तविशेषान्तरैर्विप्रतिपद्यते । तत्र विशेषान्तरानुरागविरोधिना असाधारणस्वरूपेण निर्णीयत इति ॥

279 - 6 कथं विप्रतिपत्तिः ? तां दर्शयति—देहमात्रमित्यादिना । कथं पुनः प्रत्यक्षसिद्धे पदार्थे जायमानस्य प्रयुज्यमानस्याहंप्रत्ययस्य तच्छब्दस्य च अनेकार्थसाधारण्याशङ्कया विप्रतिपत्तिरिति ; तत्र
279 - 7 दृष्टान्तमाह—तद्यथा गोशब्दस्येति । जातिर्वैदिकैः प्रतिपन्ना, व्यक्तिः साङ्ख्यादिभिः, उभयं वैयाकरणैः, आकृतिरवयवसंस्थानमार्हतादिभिः, त्रितयमपि नैयायिकैः, क्रियागुणसंस्थानादयोऽपि यथादर्शनम्, इति यथा गोशब्दप्रयोगे जात्यादीनामन्वयव्यतिरेकनियमात् एकस्यापि व्यभिचाराभावात् शब्दार्थत्वाशङ्का तथा शरीरादीनामन्वयव्यतिरेकनियमात् आत्मत्वाशङ्केति भावः ॥

स्पष्टमूर्ताकारतया स्थूलमूर्ततारतम्यात् निरासक्रमसिद्धेश्च शरीर-
मारभ्य विप्रतिपत्तिं दर्शयति—तदाह—देहमात्रं चैतन्यविशिष्टमिति । 279·11
शरीरस्य आत्मत्वशङ्कायां प्रत्यक्षं प्रमाणमाह–तथा हि मनुष्योऽहमिति । 280·1
देहशब्दार्थमाह— देहमात्रमितीति । त्वगिन्द्रियस्य निरपेक्षाधारः शरीरं 280·3
नाम, तत्रावयवान्तरेषु छिद्यमानेष्वपि प्रायेण त्वगिन्द्रियं तिष्ठति,
न शिरश्छेदे, इत्यभिप्रायेण सशिरस्केत्युच्यते । ननु भूतचतुष्टयतत्त्व-
वादिनां पञ्चमं चैतन्यं तत्त्वमवशिष्यत इति ; तन्निवृत्त्यर्थमाह—
मात्रशब्देन न देहातिरिक्तमित्यादिना ॥ 280·4

पक्षान्तरमाह—इन्द्रियाण्येवेति । ननु यस्मिन् विज्ञानमुत्पद्यते 280·9
स चेतनः । न हीन्द्रियाश्रयं विज्ञानमुत्पद्यते । 'मनुष्योऽहं जानामी'त्यव- 280·10
गमात् । तत्र कथं तेषां चेतनत्वम् ? इति ; तत्राह—इन्द्रियाणां चक्षुरादि-
मनःपर्यन्तानामिति । अयमाशयः—सत्यपि शरीरे विषयज्ञानानामि-
न्द्रियैरन्वयव्यतिरेकवत्त्वात् करणतया अन्वयव्यतिरेकवत्त्वकल्पनात्
आश्रयतया अन्वयव्यतिरेककल्पनस्य अभ्यर्हितत्वादिन्द्रियाण्येव विज्ञा-
नाश्रयाणीति । ननु एकस्मिन् शरीरे बहूनामिन्द्रियाणां चेतनत्वे
'रूपमद्राक्षमिदानीं शृणोमि' इति प्रत्यभिज्ञा न स्यात्, भोक्तृत्वं च 281·1
रूपरसादिषु युगपत् स्यात्, न क्रमेणेति ; तत्राह—क्रमेण च वरगोष्ठी-
वदिति । एकशरीराश्रयत्वमेव प्रत्यभिज्ञाक्रमभोगयोर्निमित्तं नैकत्व-
मित्यर्थः । ननु चेतनत्वेऽप्यहंप्रत्ययालम्बनस्यैव आत्मत्वम्, तदभावान्ने- 281·2
न्द्रियाणामात्मत्वमिति ; तत्राह—तथा चेन्द्रियधर्मसामानाधिकरण्यमहंप्रत्य-
यस्येति । शरीरस्याप्यहंप्रत्ययालम्बनत्वविज्ञानान्वयव्यतिरेकयोरि-
न्द्रियात्मनामाश्रयत्वेनाप्युपपत्तेरिति भावः ॥ 281·4

पक्षान्तरमाह—मन एव चेतनमिति । किमत्र प्रापकं प्रमाणम् ? 281·5
इति ; तदाह— दृश्यते हि स्वप्ने इति । अयमर्थः—स्वप्ने चक्षुराद्यभावेऽपि
केवले मनसि विज्ञानालम्बनत्वाहंप्रत्ययविषयत्वयोरविकलयोर्दर्शनात्
रूपादिविज्ञानानां चक्षुराद्याश्रयत्वे तदभावे केवले मनसि रूपादि-

स्मृत्यनुपपत्तेः आश्रयान्तरे च सिद्धे चक्षुरादीनां ज्ञानान्वयव्यतिरेकयोः
करणविषयतयाप्युपपत्तेः अहंप्रत्ययस्य च देह इव करणे कर्तृत्वोपचारात्
सिद्धेः प्रत्यभिज्ञायाः शरीरादाविव एकत्वनिबन्धनत्वात् एकाश्रयत्वा-
त्प्रत्यभिज्ञायामेकप्रासादसमाश्रितानामपि तत्प्रसङ्गात्। तस्माच्चक्षुरादि-
करणशरीराधारं मन एव आत्मेति ॥

281 - 7 पक्षान्तरमाह—विज्ञानमात्रं क्षणिकमित्येके इति। वर्णत्रयशब्देन
वर्णत्रयाभिधेयं विज्ञानमात्रमुच्यते। तेन विज्ञानाश्रयस्य आत्मनोऽभाव
उच्यत इति। कथम्? शरीरेन्द्रियाणां तावद्विज्ञेयत्वात् अविज्ञानत्वाच्च
अनात्मत्वात् मनसश्च समनन्तरप्रत्ययव्यतिरेकिणोऽभावात् आश्रयान्तरा-
281 - 9 दर्शनादिति। कस्तर्ह्यात्मा? इति; तदाह—तेन विज्ञानमेवेति। तर्हि
281 - 9 साङ्ख्यादीनामिव विज्ञानमेव अनादिनिधनमात्मेति; तत्राह—स्वरस-
भङ्गुरमिति। कथं तर्हि प्रत्यभिज्ञानेनैकत्वावगमः? इति; तदाह—
281 - 9 अविरतोदयमिति। ज्वालायामिव सन्ततविज्ञानोदयसादृश्यात् प्रत्यभि-
ज्ञेत्यर्थः। कथं तर्हि कर्मज्ञानबन्धमोक्षाद्याश्रयत्वं क्षणिकस्य? इति;
282 - 1 तदाह—अखिललोकयात्रानिलयमिति। विज्ञानानां हेतुफलसन्तानमात्रा-
देव कर्मफलसम्बन्ध इत्यर्थः। ननु स्थायिन्यात्मन्येकस्मिन् सर्वमेतत्
282 - 1 मुख्यमुपपन्नमिति; तत्राह—अनुभवभग्नपक्षान्तरमिति ॥

282 - 3 पक्षान्तरमाह—शून्यमिति। विज्ञानव्यतिरिक्तानां तावदात्म-
त्वं विज्ञेयत्वात् प्रत्याख्यातम्। न च विज्ञानस्य आत्मत्वमस्ति;
सुषुप्ते शून्यतावगमात्। विद्यत एव तत्रापि विज्ञानप्रवाह इति चेत्,
न—विषयावभासाभावात् निरालम्बनज्ञानायोगाच्च। साकारज्ञाना-
नामेव सालम्बनत्वं न सौषुप्तिकानामिति चेत्, न—विशेषाभावात्
अविशेषानुमानाच्च। उत्थितेन अस्मर्यमाणविज्ञानत्वाच्च सुषुप्ते विज्ञाना-
भावः। किं च, सविकल्पकस्य स्वविषयविपरीतनिर्विकल्पकालम्बन-
त्ववन्निर्विकल्पकस्यापि सत्प्रत्ययत्वात् स्वविषयविपरीतशून्यालम्बन-
त्वानुमानात् उत्थानप्रत्ययः शून्यालम्बन इति गम्यते। तदेतदाह—

सुषुप्ते विज्ञानलेशस्याप्यभावादिति । मा भूद्विज्ञानलेशः, ततः किम्? इति ; 282 - 3
तदाह—अकस्मादेवेति । उत्थानप्रत्ययस्य पूर्वसमनन्तरप्रत्ययशून्य- 282 - 4
तया कारणशून्यता स्यादिति भावः । मा भूत् कारणमिति चेत् ;
तदाह—अकारणस्य कादाचित्कस्येति । तस्मात् शून्यालम्बनोऽसदव- 282 - 4
भासोऽयमिति ॥

विप्रतिपत्त्यन्तरमाह—अस्ति देहादिव्यतिरिक्त इति । कथं पुनः 282 - 6
विज्ञानशून्यव्यतिरिक्तस्य आत्मनः सिद्धिः? इति ; तदाह—अहमुल्लेख- 282 - 7
शून्यस्य भोक्तृत्वस्येति ॥

अयमाशयः—अहमित्यवभासमानो विषयसंविदाश्रयत्वेन भोक्ता न कदाचिदपि ममप्रत्ययालम्बनो भोक्तृत्वमनुभवति । स च अबाधित-प्रत्यभिज्ञागोचरो न सुषुप्ते अभावमनुभवितुमर्हति । ततः शून्यक्षणिक-विज्ञानव्यतिरिक्तो भोक्ता । प्रत्यभिज्ञया सुषुप्तेऽपि सत्तावगमात् । ज्ञानेच्छाद्वेषप्रयत्नसुखदुःखेषु च आश्रयैकत्वावगमात् । तथा हि—प्रवृत्तिनिमित्तभूतमभिलषितसाधनज्ञानमुत्पद्यमानमित्थमुत्पद्यते । प्रथमं वस्तुनि दृष्टे, तदुपभोगानन्तरं सुखसंवेदने च द्वितीये संजाते, पुनः वस्त्वन्तरदर्शने तृतीये समुत्पन्ने, चतुर्थे च दृष्टस्य वस्तुनः पूर्वसुखसाधन-सामान्यानुसन्धाने, पञ्चम्यामवस्थायामिदं सुखसाधनमिति ज्ञानमुत्पद्यते। ततः पञ्चस्ववस्थासु एकमात्मानमन्तरेणेदं ज्ञानमनुपपन्नम् । अन्यदृष्टे अन्यस्य सुखानुभवाभावात् अन्यानुभूतेऽन्यस्य व्याप्त्यनुसन्धानाभा-वात् अन्यानुसंहितेऽन्यस्य सुखहेतुज्ञानाभावात् सन्तानभेदेष्वदर्शनात् । तथा दुःखहेतुताज्ञानमपि पञ्चावस्थमात्मानं कल्पयति । तथा हिताहित-ज्ञानपूर्वकौ रागद्वेषौ षष्ठावस्थौ षडवस्थमात्मानं कल्पयतः । राग-द्वेषाभ्यां च हानोपादानप्रयत्नो जायमानः सप्तावस्थमात्मानं कल्पयति । तथा प्रयत्नानन्तरमष्टम्यामवस्थायां सुखदुःखे जायमाने अष्टावस्थमात्मानं कल्पयतः, न च क्षणिकेष्वात्मसु सन्तानभेदेष्विव अयं व्यवहारः

प्रत्यभिज्ञयेति । सति भेदे सन्तानैक्यस्याप्रयोजकत्वात् प्रत्यभिज्ञा न स्यादित्यर्थः । ता.

सम्भवति। तथा न अहं ज्ञानमित्यहमुल्लेखो विज्ञानेषु। किं तु मम ज्ञानमिति। न च ममात्मेतिवदुपचारः; बाधाभावात्। इतरत्र च सम्बन्धप्रत्ययस्य आत्मशब्देन बाधात्। तस्मादहमुल्लेखप्रत्यभिज्ञाभ्यां शून्यविज्ञानव्यतिरिक्त आत्मा ॥

तथा ताभ्यामेव हेतुभ्यां मनोऽपि नात्मा। सुषुप्ते मनसोऽभावेऽपि आत्मनि प्रत्यभिज्ञानात्। 'अहं मन' इत्यनवगमात्। 'मे मन' इति च प्रतिभासात्। ज्ञानायौगपद्येन करणतयैव तस्य कल्पनात् ॥

तथा ताभ्यामेव हेतुभ्यां नेन्द्रियाण्यप्यात्मानः। रूपरसादिविज्ञानपञ्चके द्रष्टुः प्रत्यभिज्ञानात्। स्वप्ने चक्षुरादिव्यवहाराभावेऽपि अहमित्यात्मनि परिपूर्णप्रत्ययात्। 'ममेन्द्रियाणी'ति चावगमादिन्द्रियाणामहमुल्लेखव्यतिरेकात् ॥

तथा शरीरमपि नात्मा; स्वप्ने शरीराकारावभासाभावेऽपि अहमित्यात्मनि परिपूर्णप्रत्ययात्, अहमुल्लेखव्यतिरेकात्। शरीराकारसंसर्गशून्येऽप्यहमिति द्रष्टरि प्रत्ययः शरीरादात्मनो भेदे प्रत्यक्षप्रत्ययो भवति। मम शरीरमिति च व्यतिरेकप्रत्ययात्। ननु 'अहं काणः' 'अहं मनुष्यः' इति च शरीरेन्द्रियेष्वहमुल्लेखादुपचारो भेदप्रत्ययः। अहमुल्लेख एवोपचारः किं न स्यात्?। कस्तर्हि निर्णयः? अहमुल्लेखस्यैवोपचारो

ता. अहमुल्लेखाभावादपि न विज्ञानादावात्मत्वमित्याह—**तथा नाहमिति**। तत्रापि बाधो न दृश्यत इत्यत आह—**इतरत्र चेति**। ननु ज्ञानाश्रयत्वेनात्मत्वमुक्तमिति, तत्राह—**ज्ञानायौगपद्येनेति** ॥

ननु लोकायतिकानामस्माकं नानुमानं मानम्, किं तु प्रत्यक्षमेव, तच्च देहातिरिक्तात्मनि नास्तीति; तत्राह—**शरीराकारेति**। **शरीराकारसंसर्गशून्येऽपीति**। शरीराकारप्रतिभासशून्येऽपीति यावत्। शरीराकारसंसर्गप्रतिभासाभावेऽपि जागरावस्थायामहं जानामीति प्रतिभासात् जाग्रद्देहाभिमानाभावेऽपि स्वप्नेऽप्यहमुल्लेखात् शरीरस्याहंप्रत्ययव्यभिचारित्वाच्छरीरादात्मनो भेदप्रत्ययः प्रत्यक्ष एवेत्यर्थः। **अहमुल्लेखस्यैवोपचारो युक्तः इति**। शरीर इति शेषः

।

युक्तः। व्यतिरिक्तेऽप्यात्मन्यध्यासनिबन्धनत्वोपपत्तेः। न च अध्यासात् द्विचन्द्रादिवद्भेदप्रत्ययः; द्वितीयेऽपि चन्द्रे चन्द्राकारवत् स्वप्नेऽपि पशुरहमिति प्रतिभासे मनुष्यशरीराद्याकारप्रत्ययप्रसङ्गात्। तथा जातमात्रस्य जन्तोः भयहर्षशोकादिरुत्पद्यमानो दृष्टनिमित्ताभावे अस्मदादिवत् पूर्वानुभूतनिमित्तानुस्मृतिं कल्पयति। ततश्च अस्यैवात्मनो भयादिनिमित्तदर्शनवत्तया पूर्वजन्मसम्बन्धसिद्धिः; प्रत्यभिज्ञानात्॥

तदेवमहमुल्लेखप्रत्यभिज्ञाभ्यां शरीरेन्द्रियमनोबुद्धिशून्यव्यतिरिक्त आत्मा सिद्धः॥

ननु स्थायित्वेऽपि कदाचिदभावः स्यात्। न तावत् परतो विनाशः। निरवयवस्य हेतूपरागाभावात् स्वसंसर्गिणश्च स्वकर्मफलसाधनतया उपात्तस्य फलहेतुतया आत्मनः स्थितिहेतुत्वादविनाशकत्वात्। 282 - 8
नापि स्वत इत्याह— स्थिरस्य चावधिहेत्वनुपलब्धेरिति। स्वसत्ताप्रयुक्तविनाशहेतुत्वानुपपत्तेः क्षणिकस्यैव तद्भावादित्यर्थः। कथं पुनस्तस्य 282 - 9
कर्तृत्वभोक्तृत्वे? इति; तत् प्रतिपादयति— निर्विकारस्य च भोगासम्भवा- 283 - 4
दित्यादिना। कथं पुनस्तद्व्यतिरिक्तत्वमिति स्पष्टार्थः॥

तत्र नैयायिका मन्यन्ते—पार्थिवाप्यतैजसवायव्यानि भूम्यन्तरिक्षस्वर्गब्रह्मलोकेषु व्यवस्थया शरीराणि। नानेकैर्भूतैरेकं शरीरमा-

---

ता. भेदप्रतिभास एवाध्यासनिबन्धनः किं न स्यात्? इत्यत आह—**न चेति**। अहमुल्लेखमभिधाय प्रत्यभिज्ञामाह—**तथेति**। तदनेन 'पूर्वाभ्यस्तस्मृत्यनुबन्धात् जातस्य हर्षभयशोकसंप्रतिपत्ते'रित्यक्षपादसूत्राभिमतो हेतुरत्रोक्तो वेदितव्यः। फलितमाह—**ततश्चेति**।

भवतु प्रत्यभिज्ञया स्थायित्वम्, तथापि आत्मनो नित्यत्वं न सिध्यतीति शङ्कते—**नन्विति**। विनाशस्य दुर्निरूपत्वान्नित्यत्वमपि सिध्यतीति परिहरति —**न तावदिति**। अदृष्टादीनामात्मसम्बन्धित्वात् कथं हेतूपरागाभावः? इत्यत आह—**स्वसंसर्गिणश्चेति**। 'भूतसङ्घातस्तावत् शरीर'मिति **टीका-**

रब्धमिति। तत्र अस्मदादिशरीरं पार्थिवमेव 'पार्थिवगुणान्तरोपलब्धेः' इत्यक्षपादसूत्रात्। शरीरे गन्धविशेषोपलब्धेरित्यर्थः। न च रूपरसस्पर्शा भूतान्तरसमवायं गमयन्ति। पार्थिवस्यापि तेषां गुणत्वात्। ननु क्लेदनपाचनव्यूहनावकाशानां शरीरे दर्शनात् भूतपञ्चकारब्धत्वं शरीरस्येति। न। दृतिवस्त्रोदकादिवत् भूतान्तरसंयोगादपि व्यूहनाद्युपपत्तेः। श्रुतिश्च 'पृथिवीं शरीरम्' इति पार्थिवत्वमेव शरीरस्य दर्शयति। वैशेषिकास्तु 'प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते' इति वाय्वाकाशयोरप्रत्यक्षत्वात् पञ्चात्मकं शरीरमप्रत्यक्षं स्यात्। तस्मात्
283 - 6 पार्थिवमेव शरीरमिति कल्पयन्ति। तान् प्रत्याह—भूतसङ्घातस्तावच्छरीरमिति। वस्त्रे क्लेदनस्य, जले पाकस्य, दृतौ व्यूहनस्य, जलाग्निपवनविगमादपायेऽपि वस्त्रादीनामपचयादर्शनाच्छरीरस्य च जलादिविगमे तन्त्वपचयात् पटापचयवत् अपचयदर्शनात् सर्वतन्त्वारब्धपटवत् सर्वभूतारब्धं शरीरमिति गम्यते। 'अन्नमशितं त्रेधा विधीयते'

---

ता. व्यावर्त्यां शङ्कां दर्शयति—तत्रेति। तेषामिति। रूपरसस्पर्शानां पृथिवीगुणत्वाङ्गीकारादित्यर्थः। पञ्चभूतानां कार्यस्य शरीरे दर्शनात् पञ्चभूतारब्धत्वं शरीरस्यानुमीयत इति शङ्कते—नन्विति। श्रुतिश्चेति। 'पृथिवीं शरीरम्' इति शरीरस्य प्रकृतिगामित्ववचनं तस्य पार्थिवत्वं द्योतयतीत्यर्थः॥

दृतिवस्त्रोदकादिवदिति यदुक्तम्, तद्विघटयति—वस्त्रे क्लेदनस्येत्यादिना। 'अन्नमशितम्' इति पुरीष-मांस-मनसां पृथिवीकार्याणाम् मूत्र-लोहित-प्राणानां जलकार्याणाम् अस्थि-मज्जा-वाचां च तेजःकार्याणाम् शरीरे प्रतिपादनात् भूतत्रयात्मकत्वं शरीरस्य, व्यूहनावकाशकार्यदर्शनाच्च पाञ्चभौतिकत्वं गम्यते। 'पृथिवीं शरीरम्' इति तु वचनं शरीरस्य पृथिवीप्रकृतिकतामात्रप्रतिपादनपरत्वात् न भूतान्तरप्रकृतिकत्वं निवारयतीत्यर्थः। स्मृतिवादाः 'पञ्चभूतात्मके

---

भा. शरीरे सर्वगुणोपलम्भादविनिगमनात् भूतान्तरोपचये शरीरोपचयदर्शनात् शरीरस्य विनाशकाले*'पृथिवीं शरीरम्' इति श्रुतेरितरव्यावृत्त्यर्थत्वाभावाच्च पाञ्चभौतिकं शरीरमित्याह—वस्त्रे क्लेदनस्येत्यादिना॥

---

* अत्र ग्रन्थे त्रुटिः।

इत्यादिश्रुतिस्मृतिवादाश्च भूतपञ्चकं शरीरं कथयन्ति। प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वे सर्वावयविनां प्रत्यक्षाप्रत्यक्षाश्रयवृत्तीनामप्रत्यक्षत्वापातः। तस्मात् भूतसङ्घातः शरीरमिति ॥

अत्र अवयव्यारम्भमनपेक्ष्य सङ्घातमात्रस्य भोक्तृत्वाभावं
दर्शयितुं विभजते—तत्र व्यस्तानामिति। व्यस्तानां भोगेऽपि युगपत् 283 - 6
क्रमेण वा भोगः? न तावद्युगपदित्याह—यदि तावद्व्यस्तानामिति। 283 - 7
तत्र दूषणमाह—ततः स्वार्थप्रयुक्तत्वादिति। मा भूदङ्गाङ्गिभावः इत्यत 283 - 8
आह—न चाङ्गाङ्गिभावमन्तरेणेति। एकैकस्य भोक्तृत्वे सङ्घातादन्यत्रापि 283 - 9
भोगः स्यादित्याह—तस्मान्न व्यस्तेषु [युगपत्] भोग इति। अस्तु तर्हि क्रमः। 283 - 10
ननु क्रमपक्षेऽपि भोक्तृणां न सङ्घातापत्तिरिति; तत्राह--विरोधा- 283 - 11
द्वरगोष्ठीवदिति। परिहर्तुं दृष्टान्तात् वैषम्यमाह—नैतदेवमिति। 283 - 11

---

ता. तात शरीरे पञ्चतां गते' इत्यादयः। प्रत्यक्षाप्रत्यक्षेति। अन्तर्बहिरवस्थितानां सर्वेषां अवयवानां प्रत्यक्षेण ग्रहीतुमशक्यत्वात् तत्तद्वृत्तीनामवयविनामप्रत्यक्षत्वप्रसङ्गः। अप्रत्यक्षशब्देन प्रत्यक्षायोग्यस्य ग्रहणे, द्व्यणुकसहितानेकत्र्यणुकारब्धस्यापि अवयविनो न प्रत्यक्षता स्यात्। न च गन्धादिमतां गन्धादिरहितानां च परस्परविरोधादेककार्याजनकत्वम्। तथा सति नीलपीतादिगुणवतामवयवानां तद्गुणानां च नीलादीनां एकावयविजनकत्वस्यैकचित्ररूपारम्भकत्वस्य चासम्भवप्रसङ्गात्। अनुभवबलादेव तत्र तथा स्वीकारे प्रकृतेऽपि तन्न दण्डवारितमिति भावः ॥

रूपरसगन्धस्पर्शाश्चत्वारोऽपि चतुर्णां भोक्तृणां साधारण्येन विषयाः? किं वा प्रतिभोक्तृ व्यवस्थया तेषां विषयत्वम्? इति विकल्प्य, क्रमेण दूषयति—

---

भा. प्रत्यक्षाप्रत्यक्षवृत्तेरिति। अवयविनोऽपि संयोगसाम्याभ्युपगमे यावदाश्रयोपलम्भ एव प्रत्यक्षापत्तिः। नचैवं जातिसाङ्कर्यदोषः। जगन्मात्रस्यैव पाञ्चभौतिकत्वात् अविद्यातिरिक्तजात्यभावाच्च पृथिव्यादाविव वैशेष्यादपि जातिव्यवस्थोपपत्तेश्चेति भावः ॥

284 - 2 दार्ष्टान्तिकं विभजते--इह पुनरिति। अयमत्राशयः—यदि तावत् रूपर-
सगन्धस्पर्शानामन्यतमोऽपि चतुर्णां भोक्तॄणां विषयः तदा साधारणे
विषये क्रमभोगे कारणं नास्ति। यदि रूपादिषु प्रत्येकं भूतानां
भोक्तृत्वविषयव्यवस्था तदापि युगपत् सर्वविषयसन्निधाने क्रमानुप-
पत्तिः। यथा एकस्मिन् मुहूर्ते प्रत्येकं भोग्यकन्यावस्तुनि सन्निहिते
वराणां गुणप्रधानतया सङ्घाताभावः तद्वत्। भोक्तृषु च प्रत्यभिज्ञानुप-
पत्तिरिति। अस्तु तर्हि समूहस्य भोक्तृत्वम्। ननु एकस्मिन् भूते
284 - 4 अविद्यमानं चैतन्यं कथं सङ्घाते जन्यते? इति; तदाह—तिलज्वाला-
वदिति। तत्र वक्तव्यम्—किं संहतानां भोक्तृत्वम्? आहोस्वित् भोक्तॄणां
संहतिः? इति। सङ्घातस्यावस्तुत्वात् भोक्तृत्वानुपपत्तेः, वस्तुत्वेऽपि
भूतेभ्यो भेदे पञ्चमतत्त्वाभ्युपगमप्रसङ्गात्, अभेदे भूतान्येव सङ्घात
इति तेषामेव भोक्तृत्वात्। तत्र संहतानां भोक्तृत्वे संहतिहेतुर्वक्तव्यः।
आगामी भोग इति चेत्, तं प्रति भूतानां समानत्वात् गुणप्रधानभावेन
284 - 5 सङ्घातानुपपत्तिरित्याह—नैतदेवम्—भोगेषु समूहासम्भवादिति। ननु
भोगान्वयात् प्राक् भूतानां कर्तृत्वात् कर्तॄणां भोगे गुणभावेन सङ्घा-
284 - 5 तोपपत्तिरिति चोदयति—कथमसम्भव इति। अन्योन्यं गुणप्रधानत्वा-
भावाद्भोगं प्रत्यपि प्राधान्यात् भोक्तॄणां न सङ्घात इति परिहरति—
284 - 6 भोक्तुर्भोगं प्रति प्राधान्यादिति। ननु भोगे शेषिणि तादर्थ्येन समूहो
284 - 6 दृश्यत इति चोदयति—ननु भोगेऽपीति। तत्र शरीरव्यतिरिक्तयोरेव
आत्मनोर्भोक्त्रोस्तादर्थ्येन शरीरयोर्गुणप्रधानभावेन अन्वयः न भोक्त्रो-

---

ता. **यदि तावदिति**। दूषणान्तरमाह—**भोक्तृषु चेति**। 'य एवाहं रूपमद्राक्षं स एवाहं शब्दं शृणोमि' इति प्रत्यभिज्ञा न स्यादित्यर्थः। **किं संहतानामिति**। सङ्घातविशिष्टानामेव भोक्तृत्वमिति प्रथमविकल्पस्यार्थः। भूतानामेव भोक्तृत्वम्, उपलक्षणतया संहति(र्न्यपेक्ष)[रपेक्ष्य]त इति द्वितीयस्य। सङ्घातस्य दूषणेन तद्विशिष्टानामपि भोक्तृत्वं निराकृतं भवतीति सङ्घातं दूषयति—**सङ्घातस्येति**। सङ्घातहेतोरसम्भवादपि न संहतानां भोक्तृत्वमित्याह—**तत्रेति**। प्रथमपक्ष-

रेवेति अभिप्रेत्य परिहरति—नैतत् सारमिति। ननु ज्वालायां तिलानां 284.7
गुणभाववत् भोगे सङ्घात इति ; नेत्याह—तिलज्वालायां तु विपरीतमिति। 285.1
अत एव भोक्तॄणामेव संहतिपक्षोऽनुपपन्नः ॥

ननु कोऽयं सङ्घातो नाम ?। न च वनवदेकदेशतामात्रम्। तत् व्यापिनां भूतानां सर्वत्र विद्यत इति सर्वत्र चैतन्यभोगयोः प्रसङ्गात्। न च अवयव्यारम्भः। तस्य भूतेभ्यो भेदे तत्त्वसङ्ख्यातिरेकात्। अभेदे च भूतमात्रतया सङ्घाताभावात्। भेदाभेदानङ्गीकरणात्। ननु स्वतन्त्रं भूतचतुष्टयमेव। अवयव्यादीनां पारतन्त्र्यात् सङ्ख्यातिरेकाभावात्। तर्हि न भूतानां भोक्तृत्वम्; किं त्ववयविन एव। तत्र भूतव्यापारानपेक्षया स्वयमेव भोक्तुरवयविनः परतन्त्रताऽभावात् सङ्ख्यातिरेकः स्यात्। जलादेश्च पृथिव्यादितन्त्रत्वात् न्यूना च सङ्ख्या स्यात्। न च एकद्रव्यबुद्ध्यालम्बनयोग्यतापत्तिः सङ्घातः। अर्थस्वभावेनैकत्वापत्त्ययोगात्। अनेकेष्वेकत्वबुद्धेर्भ्रमत्वात्। न च एकार्थक्रियायां युगपदन्वयः सङ्घातः। काष्ठाश्रयेण वह्निना वायुसमुद्भूतेन जले दह्यमानेऽपि सङ्घाताद्भोगप्रसङ्गात्। न च अग्न्ययःपिण्डवत् संश्लेषः सङ्घातः। शरीरे वायोः तथासंश्लेषाभावात्। वह्निव्याप्ते चायःपिण्डे

---

दूषणं द्वितीयपक्षेऽप्यतिदिशति—**अत एवेति**। सङ्घातस्य दुर्निरूपत्वादेवेत्यर्थः ॥ ता.

प्रकारान्तरेण सङ्घातं दूषयति सिद्धान्ती—**ननु कोऽयमिति**। तदित्येकदेशतामात्रमुच्यते। नैकदेशतामात्रं सङ्घातः किं तु तदारब्धोऽवयवीत्याशङ्क्य परिहरति—**न चेति**। अवयविनो भोक्तृत्वेऽपि तस्य भूततन्त्रत्वात् भूतानामेव भोक्तृत्वमिति, तत्राह—**तत्र भूतेति**। संज्ञायामवयविनः पारतन्त्र्येऽपि भोक्तृत्वे तदभावादुक्तदोषः स्यादेवेत्यर्थः। **एकद्रव्यबुद्ध्यालम्बनयोग्यतापत्तिरि**त्यत्र बुद्धेः प्रमाणत्वं विवक्षितम्। क्रमेणैकफलसाधनानि व्यावर्तयितुं **युगपदि**ति विशेषणम्। **तथा संश्लेषाभावात्**। एकबुद्ध्या-

समापीतजले वायुसंयुक्ते च भोगप्रसङ्गात् । तस्मात् नास्ति भोग-
निमित्तः सङ्घात इति ॥

285-2 एवं तर्हि एकस्यैव भूतस्य भोग इत्याह—अस्त्वेकस्य तर्हि नियत इति । रूपरसगन्धस्पर्शेषु भोग्येषु कठिनमृदुपाकचलनगुणवति भूत-सङ्घाते च भोगान्वयिनि परिदृश्यमाने कस्यैकस्य भोगः? इत्यनवधारितो
285-3 भोगः स्यादिति दूषयति—न—तत्रापीति । ननु यस्य कस्यचिद्भोगः स्यात्, तावतैव शरीरव्यतिरिक्तभोक्तुरभावो विवक्षितः सिद्धः इत्याह—
285-3-4 किमवधारणेनेति । परिहरति—यद्येवमिति । चतुर्णां भोगान्वयदर्शनात् विशेषनिर्धारणाभावात् चतुर्षु भोक्तृषु सङ्घातानुपपत्तेः अयुक्तं शरीरात्मकेषु भूतेषु भोक्तृत्वमिति ॥

इन्द्रियाण्येव भूतात्मकान्यात्मेति लोकायतभेदाः । तत्रोक्तं
285-6 दूषणजातमतिदिशति—एवं करणात्मकेष्वपीति । यद्येकैकभूतारब्धान्येकैकेन्द्रियाणि तत्र प्रत्यभिज्ञानाभावादयो दोषाः, यदि भूतचतुष्टयारब्धमेकैकेन्द्रियं तदा सङ्घातानुपपत्त्यादयो दोषाः इति । कार्यकरणात्मकः
285-7 संघातो भोक्तेत्यन्ये लोकायतिकाः । तत्राह—तथोभयात्मके इति । प्रत्यभिज्ञासङ्घातानुपपत्तेरिति ॥

ननु कानीन्द्रियाणि नाम ?

गोलकमात्राणीति सुगताः । तच्छक्तय इति मीमांसकाः । तद्व्यतिरिक्तानि द्रव्यान्तराणीत्यन्ये सर्वे ॥

न तावद्गोलकमात्रम्; सर्पादीनां तद्विरहिणामपि शब्दाद्युपलब्धेः । 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' 'तस्मात्पश्यन्ति पादपाः' इत्यादिशास्त्रात् वृक्षादीनां गोलकविरहिणां कर्मफलभोगस्थानतावगमेन

---

ता. लम्बनसंश्लेषाभावादिति यावत् । वायोः संयोगमात्रं सङ्घातः, इतरेषां त्वग्न्ययः-पिण्डवत् संश्लेष इत्याशङ्क्याह—वह्निव्याप्ते चेति । यद्येवमित्यस्य अभिप्रायमाह—चतुर्णामिति । अतिदिष्टदूषणस्य विभागमाह—यदीति । वृक्षादीनां

शब्दाद्युपलब्ध्यभ्युपगमात् । वृक्षादिहिंसाप्रतिषेधाच्च प्राणित्वावगमात् । अत एव न तच्छक्तयः । शक्तिमद्द्रव्यान्तरकल्पनाल्लघीयः प्रतिपन्नस्थानेषु शक्तिकल्पनमिति चेत्; तर्ह्यात्मन एव सर्वज्ञानसामर्थ्यं क्रमकारि कल्प्यताम् । सर्वगतस्याप्यात्मनः शरीरप्रदेशे ज्ञानपरिणामवत् गोलकप्रदेशेषु ज्ञानपरिणामात् । गोलकानां ज्ञानान्वयव्यतिरेकोपपत्तेः अनिन्द्रियत्वेऽपि शरीरवत् । सन्तु तर्हीन्द्रियाणि गोलकव्यतिरिक्तानि शक्तिमन्ति द्रव्याणि स्थानविशेषसम्बन्धाच्चक्षुरादिशब्दवाच्यानि । न-तेषु प्रमाणाभावात् । रूपाद्युपलब्धय एव कर्तृव्यापाराः करणानुमाने लिङ्गमिति चेत्, न-स्वव्यापारकर्तृषु करणेषु करणान्तराभावात् अनैकान्तिकत्वात् । करणविषये च तत्प्रेरणालक्षणे कर्तृव्यापारे करणान्तराभावात् । 'सर्वे प्राणा अनूत्क्रामन्ति' इत्यागमगम्यानीन्द्रियाणि इति चेत्, न—आगमसंस्कारविरहिणामपि इन्द्रियप्रतिपत्तेः । न च मनोवत् **साक्षिवेद्यानीन्द्रियाणि । कार्यभावाभावव्यतिरेकेण इन्द्रियभावाभाव-**

---

प्राणित्वाभावादेव न तेषां भोग इत्याशङ्क्याह—**वृक्षादीति** । **अत एवेति** । ता. गोळकानामभावे तदाश्रितशक्तीनामभावात् भोगो न स्यादिति दोषोऽत्रापि तुल्य इत्यर्थः । शक्तीन्द्रियवादी विशेषमाशङ्कते—**शक्तिमदिति** । गोळकानामिन्द्रियत्वाभावे कथं तदन्वयव्यतिरेको ज्ञानानामित्याशङ्क्य, शरीरवदिन्द्रियत्वाभावेऽपि तयोरुपपत्तेरिति परिहरति—**सर्वगतस्यापीति** । **स्वव्यापारकर्तृष्विति** । काष्ठादीनां ज्वालादिव्यापारकर्तृणां स्वव्यापारजनने व्यापारान्तराभावेन तत्र हेतोरनैकान्तिकत्वात् व्यापारान्तरकल्पने च अनवस्थानादित्यर्थः । अचेतनस्य कर्तृत्वासम्भवात् ज्वालादीनां न कर्तृव्यापारता, अतो नानैकान्तिकत्वमित्याशङ्क्याह—**करणविषये इति** । न च करणप्रेरणेऽपि प्रयत्नस्य करणत्वम्, तस्मिन्नेव कर्तृव्यापारे प्रयत्ने करणान्तराभावात् । न च तत्रापि मनः करणम्, मनःप्रेरणे करणव्यापाराभावात् । तत्रापि तथा स्वीकारे अनवस्थापातादित्यर्थः । **कार्यभावाभावव्यतिरेकेणेति** । रूपादिज्ञानसत्त्वासत्त्वव्यतिरेकेण साक्षिणा

**नवगमात् । तस्मान्न सन्तीन्द्रियाणि ॥**

**उच्यते—आगमावगमात् प्राक् स्थानविशेषेषु चक्षुरादीन्द्रियव्यवहारः प्रवर्तते, मण्डलादिष्वादित्यादिव्यवहारवत् । आगमावगतौ तु स्थानविशेषाधिष्ठातॄणि चक्षुरादीन्द्रियाणि आदित्यादिदेवतात्मवदित्यवगम्यते ॥**

**तानि पुनर्व्यतिरिक्तान्यपि आहङ्कारिकाणीति साङ्ख्याः । तदयुक्तम्-प्रमाणाभावात् । न तावदध्यात्माहङ्कारजन्यानीन्द्रियाणीत्यन्वयव्यतिरेकावागमो वा दृश्यते । न च कृत्स्नकार्यव्यापी भूतेन्द्रियाणां प्रकृतिः कश्चिदहङ्कारो विद्यते । मानाभावात् । आप्तवचनं मानमिति चेत्, न—अतीन्द्रियत्वात् । ननु पुराणवाक्यान्येव सन्ति । सत्यम् । 'अन्नमयं हि सोम्य मनः' इत्यादिभूतविकारार्थमयट्श्रुतिविरोधात् अहङ्काराधीनतामात्रमिन्द्रियाणां तत्र कथ्यत इति न विरोधः ॥**

**भौतिकानीन्द्रियाणीति वैशेषिकादयः । तदप्ययुक्तम्—माना-**

---

ता. लिङ्गाद्यनपेक्षेण चक्षुरादीनामप्रतीतेरित्यर्थः ॥

सिद्धान्तमुपक्रमते—**उच्यत इत्यादिना**। यदुक्तं आगमसंस्कारविरहिणामपि इन्द्रियप्रतीतिरस्तीति, तत्राह—**आगमेति** । आगमस्य तर्हि किं प्रयोजनम् ? इति; तत्राह—**आगमावगताविति** । किमाध्यात्मिकाहंकारजन्यानीन्द्रियाणि ? किं वा आधिदैविकाहंकारजन्यानि? इति विकल्प्य, आद्यं दूषयति—**न तावदिति** । द्वितीयं दूषयति—**न चेति** । आप्तवचनस्य किं प्रत्यक्षं मूलम् ? उत प्रमाणान्तरम् ? इति विकल्प्य, आद्यं दूषयति—**न—अतीन्द्रियत्वादिति** । द्वितीयमुत्थापयति—**नन्विति** ।

'त्रिविधोऽयमहंकारो महत्तत्त्वादजायत ।
इन्द्रियाणां ततः सृष्टिः गुणद्वारा महामुने ॥'

इत्यादीनि **पुराणवाक्यानि** द्रष्टव्यानि । मुख्यार्थे प्रत्यक्षश्रुतिविरोधेन तेषामन्यार्थत्वादिति परिहरति—**सत्यमिति** ॥

भावात्। भौतिकानीन्द्रियाणि मध्यमपरिमाणत्वेन सावयवत्वात् घटादिवत्, इति चेत्, न—हेतोरसिद्धत्वात्। अणुपरिमाणत्वोपपत्तेरिन्द्रियाणाम्। तर्ह्यणुपरिमाण एव विषयावभासः स्यात्। न—अणुपरिमाणेनापि मनसा विस्तृतात्मादिवस्तुदर्शनात्। ननु भौतिकानीन्द्रियाणि रूपरसगन्धस्पर्शानां नियमेन अभिव्यञ्जकत्वात् प्रदीपास्योदकहिङ्ग्वादिद्रव्यव्यजनवायुवत् इत्यनुमानान्तरेण प्रत्येकभूतारब्धानि प्रत्येकेन्द्रियाण्यनुमीयन्त इति। न—शब्दाभिव्यञ्जके श्रोत्रे शब्दगुणवदाकाशानारब्धे अनैकान्तिकत्वात्। कर्णशष्कुल्यवच्छिन्नाकाश-

---

ता. सावयवत्वसाधनार्थं **मध्यमपरिमाणत्वेनेति** विशेषणम्। मनसोऽणुत्ववादिभिरित्थं वक्तुमेव न शक्यत इति परिहरति—**न-अणुपरिमाणेनेति**। **रूपरसगन्धस्पर्शानामि**त्यत्र मनोव्यावृत्त्यर्थं **नियमेनेति** विशेषणम्। चक्षुः ग्राह्यसजातीयविशेषणवद्द्रव्यारब्धम्, रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकद्रव्यत्वात्। यत् यस्य नियमेनाभिव्यञ्जकं तत् तद्गुणवत्प्रकृतिकम्, यथा दीपः, एवमितरत्राप्यूहनीयमिति भावः। दूषयति—**न-शब्दाभिव्यञ्जके इति**। ननु चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकद्रव्यत्वात् प्रदीपवदिति प्रयोगे नानैकान्तिकतेति चेत्, न—रूपादिषु मध्ये इत्यसिद्धिवारकविशेषणोपादाने, क्षित्यादिकमकर्तृकं शरीराजन्यत्वादिति प्रयोग इव व्या(पक)-

---

भा. **अणुपरिमाणेनापि मनसा विस्तृतात्मदर्शनादिति**। नन्वेवं कथं समूहालम्बनं व्यवहिताशेषविषयमुत्पद्यते? अणुना चक्षुषा युगपत् सर्वविषयसम्बन्धाभावात्। एवं त्वचा सर्वशरीरव्यापिशैत्योपलम्भश्च न स्यादिति चेत्, न—अणुमनोवादे पञ्चावधानादाविव अत्रापि क्रमानुमानसम्भवात्। त्वगिन्द्रियस्य बहिस्सञ्चाराभावेऽप्यन्तस्सञ्चारसम्भवाच्च। अथवा, यथा दृष्टादृष्टावयवान्तरैस्तव मते तदा चक्षुरन्तरारम्भः भाव्यवस्थाभेदेन शरीरभेदे त्वगिन्द्रियमपि तादृशैः अवयवैरारभ्यते, तथा तैरेव अवयवैरनारभ्य द्रव्यं समूहालम्बनादिर्भवतु किमवयव्यन्तरेणेति भावः॥

मात्रस्य श्रोत्रत्वाभ्युपगमादनारब्धत्वात्। मनसश्च भूतचतुष्टयारब्धत्वप्रसङ्गः। तदभिव्यञ्जकत्वात्। आत्माकाशादीनामपि साधारणत्वात् मनसो न भूतारभ्यत्वमिति चेत्। सङ्ख्यापरिमाणसंयोगविभागजातिविशेषसमवायादीनामपि साधारणत्वात् इन्द्रियाणां न भूतारभ्यत्वसिद्धिः। असाधारणविषयारभ्याणीन्द्रियाणीति चेत्, तर्ह्यात्मारभ्यं मनः स्यात्, असाधारणविषयत्वात्। एकद्रव्यारब्धं न द्रव्यमिति चेत्, न—सावयवमनेकद्रव्यारभ्यमित्येतावत्, निरवयवं तु मनो निरवयवात्मारभ्यं किं न स्यात्। तस्मादागमादेव भौतिकत्वसिद्धिः॥

---

ता. [प्य]त्वासिद्धिप्रसङ्गात्। गन्धाग्राहकत्वे सति रूपग्राहकत्वादिति हेतुरिति चेत्, न—सुरभि चन्दनमिति गन्धविशिष्टचाक्षुषप्रत्यये चक्षुषो गन्धस्यापि ग्राहकत्वेन हेत्वसिद्धेः। कथं गन्धश्चक्षुषा गृहीतः? इति चेत्, सोऽयं देवदत्त इति प्रत्यभिज्ञायां तत्तांशस्यापि कथं चक्षुषा ग्रहणम्? इति पर्यनुयोगः। सामर्थ्यात् संस्कारोपनीतस्य तत्राविरोधे प्रकृतेऽपि समं समाधानमिति द्रष्टव्यम्॥

रूपादीनां चतुर्णामप्यभिव्यञ्जकत्वात् मनसो भूतचतुष्टयारब्धत्वं प्रसज्यत इति दूषणान्तरमाह—**मनसश्चेति**। [आत्माकाशादि]साधारणविषयग्राहकत्वात् (आत्माकाशादीनामिव) मनसो न भूतारब्धत्वमिति शङ्कते—**आत्मेति**। साधारणविषयग्राहकत्वं चक्षुरादिष्वप्यस्तीति तेषामपि न भूतारब्धत्वसिद्धिरिति परिहरति—**सङ्ख्येति**। यस्यासाधारणो यो विषयस्तत्तदारब्धमिति विशेषमाशङ्कते—**असाधारणेति**। श्रोत्रस्याकाशारभ्यत्वमङ्गीकृत्य, मनस्यनैकान्तिकत्वमाह—**तर्हीति**। अनेकद्रव्यारब्धत्वं सावयवस्यैव न निरवयवद्रव्यस्येति परिहरति—**न–सावयवमिति**। ननु निरवयवद्रव्यत्वादात्मवद-

---

भा. **निरवयवं तु मनो निरवयवात्मारभ्यं किं न स्यात् इति**। यथा निरवयवं रूपादि घटादिनैकेनारभ्यते तथा मनोऽप्यात्मना आरभ्यताम्। न च अवयवसंयोगरूपासमवायिकारणाभावे कथं कार्यद्रव्यं स्यात् इति वाच्यम्। यथा हि कार्यमात्रे न संयोगोऽसमवायिकारणं एवं कार्यद्रव्यमात्रेऽपि मा भूत्, आत्मनो मनस उत्पत्तेः प्रमाणसिद्धत्वा[दिति] भावः॥

तानि सर्वगतानीति योगाः प्रतिपेदिरे। तदपि मानहीनम्। आत्मेन्द्रियमनांसि सर्वगतानि सर्वत्र दृष्टकार्यत्वात् आकाशवदिति चेत्, न—हेतोरसिद्धत्वात्। यत्र शरीरं तत्र सर्वत्र दृष्टकार्यत्वात् इति चेत्, शरीरे अनेकान्तः। परोपाधिगमनत्वादाकाशवदिति चेत्, न—शरीरावयवानामपि परोपाधिगमनात्। सर्वगतत्वे च युगपत् सर्वविषयोपलब्धिश्च स्यात्। शरीर एव वृत्तिलाभान्नेति चेत्, तर्हि बहिरिन्द्रियसद्भावकल्पना न प्रमाणप्रयोजनवती॥

तान्यप्राप्यकारीणीति सुगताः। तदयुक्तम्—दूरत एव स्पर्शरसगन्धोपलब्धिप्रसङ्गात्। योग्यदेशावस्थानमपेक्षितमिति चेत्, न—इन्द्रियदेशप्राप्तिव्यतिरेकेण योग्यदेशानिरूपणात्। स्पर्शनरसनघ्राणेन्द्रियवत् चक्षुःश्रोत्रयोरपि प्राप्यकारित्वमनुमीयते। तेजसश्चातिदूरशीघ्रगमनदर्शनात् चक्षुषो ध्रुवादिप्राप्तिरविरुद्धा। शब्दस्य च दूरदेशोपलब्धेः न वीचीसन्तानवत् परम्परया श्रोत्रसमवायः। तस्माद्भौतिकानि परिच्छिन्नानि प्राप्यकारीणीन्द्रियाणीति सिद्धम्॥

किं तर्हि मनो नाम?

नित्यं निरवयवमणुपरिमाणमिति वैशेषिकादयः संगिरन्ते।

न तावन्नित्यम्, परिच्छिन्नत्वात्। निरवयवद्रव्यत्वादात्मवत् नित्यमिति चेत्, न—करणत्वेनेन्द्रियवत् सावयवत्वानुमानात्,

---

नारभ्यत्वमिति चेत्, न—द्रव्यशब्देन गुणवतः समवायिकारणस्य वा अभिधाने वेदान्तिनं प्रति दृष्टान्तस्य साधनविकलत्वात्। द्रव्यत्वप्रसिद्धिस्तु परतन्त्रत्वाभावमात्रेणात्मनीत्यपि द्रष्टव्यम्॥ ता.

चक्षुःश्रोत्रे प्राप्यकारिणी बहिरिन्द्रियत्वात् त्वगादिवदित्यनुमानमाह—**स्पर्शनेति**। चक्षुषः प्राप्यकारित्वे कथमुन्मीलनमात्रेण दूरस्थध्रुवादिदर्शनम्? इत्यत्राह—**तेजसश्चेति**। तार्किकोक्तां शब्दस्य श्रोत्रेण प्राप्तिं दूषयति—**शब्दस्य चेति**। श्रोत्रसमवेतस्य शब्दस्य ग्रहणे तत्र शब्द इति प्रत्ययो न स्यात् इह श्रोत्रे शब्द इत्येव प्रत्ययः स्यादित्यर्थः॥

**करणत्वेने**त्यत्र द्रव्यत्वे सतीति विशेषणमवगन्तव्यम्। अन्यथा

अन्नमयत्वश्रुतेश्च । मूर्तद्रव्यानभिघातान्निरवयवमिति चेत्, न—मनसो बहिर्निर्गमनाभावात्। उत्क्रान्तिरिन्द्रियाणामपि समाना। संयोगविभागवत्त्वान्न घटादिवदणुपरिमाणता । सर्वगतत्वे च युगपत् सर्वेन्द्रियसंयोगात् सर्वज्ञानप्रसङ्गः। मध्यमपरिमाणत्वेन सावयवत्वेऽवयवोपचयापचयसम्भवान्न स्थूलसूक्ष्मदेहप्रतिपत्तिविरोधः ॥

समनन्तरप्रत्यय एवोत्तरज्ञानकारणतया मन इति शाक्याः प्रतिपेदिरे। तन्न—ज्ञानस्य ज्ञानान्तरहेतुत्वे व्याप्तिसापेक्षत्वात् । शाब्दज्ञानमपि व्याप्तिजन्यमिति ते मतम् । विशिष्टज्ञानमपि सम्प्रयोगजन्यं

---

ता. सन्निकर्षादेरद्रव्यस्यापि करणस्य सावयवत्वाभावेन हेतोरनैकान्तिकत्वात । तथापि विनिगमनायां को हेतुः ? इत्यत आह—**अन्नमयत्वेति** । बहिरुपघाताभावोऽन्यथासिद्ध इति परिहरति—**न—मनस इति**। बहिर्निर्गमनाभावोऽसिद्धः उत्क्रान्तेरङ्गीकारादित्यत आह—**उत्क्रान्तिरिति** । उत्क्रान्ति(रु)[रनु]पघातश्चेन्द्रियान्तरैर्मनसस्तुल्य इत्यर्थः । **संयोगविभागवत्त्वात्** इत्यत्रानैकान्तिकता परमाण्वनङ्गीकारेण परिहरणीया। भाट्टमतं दूषयति—**सर्वगतत्वे चेति** । आत्ममनस्सन्निकर्षस्य इन्द्रियमनस्सन्निकर्षस्य च विद्यमानत्वादपेक्षणीयान्तराभावाद्युगपत्सर्वविषयोपलब्धिः प्रसज्येत । न च मध्यमपरिमाणत्वेऽपि समानः प्रसङ्गः, तस्य सङ्कोचविकासवत्त्वेन कादाचित्केन्द्रियमनस्सन्निकर्षवशात् प्रतिनियतविषयग्रहणोपपत्तिरिति भावः । मध्यमपरिमाणत्वे मनसः यूकादिशरीरेष्ववस्थानं कथम् ? इत्यत आह—**मध्यमेति** ॥

**समनन्तरप्रत्यय इति** । अतीतानन्तरप्रत्यय इति यावत् । शब्दज्ञानस्यार्थज्ञानजनकत्वे व्याप्त्यभाववदिहापि स्यादित्यत आह—**शाब्दज्ञानमपीति**। सौगतेन शब्दस्यानुमानेऽन्तर्भावाङ्गीकारादिति भावः । विशेषणज्ञानं व्याप्तिनिरपेक्षमेव विशिष्टज्ञानजनकमित्याशङ्क्याह—**विशिष्टज्ञानमिति** । समानेन्द्रियग्राह्ययोर्विशिष्टप्रत्ययः सन्निकर्षजन्य एव। भिन्नेन्द्रियग्राह्ययोः 'सुरभि चन्दनम्' इत्यादौ विशिष्टप्रत्ययः साक्षिरूपतया न विशेषणज्ञानजन्य इत्यर्थः । पूर्वज्ञानस्य नोत्तरज्ञानसत्ताज्ञापकत्वम्, येन व्याप्त्यपेक्षा स्यात् । किं तु

न विशेषणज्ञानजन्यम्। समनन्तरप्रत्ययात् उत्तरस्य ज्ञानाकारलाभ इति चेत्, न—वस्तुस्वभावस्य अनन्याधीनत्वात्। तस्मात् सावयवमन्यदेव मन इति ॥

कश्चायमात्मा ?। सर्वगतो जड इति केचित्। न तावत् सर्वत्र दृष्टकार्यत्वं सर्वगतत्वे हेतुरित्युक्तम्। व्यवहितदेशे अदृष्टनिमित्तनृत्यादिक्रियारम्भात् तस्य च अदृष्टवदात्मसंयोगापेक्षत्वात् सर्वगत इति चेत्, न—अत्र समवेतादृष्टस्य स्वर्गे भोगोदयात् अदृष्टवत्प्रदेशासंयोगात्। केवलात्मप्रदेशसंयोगस्य फलाहेतुत्वात्। तस्मादागमादेव सर्वगतत्वसिद्धिः। न च जाड्यम्। स्वयंप्रकाशतावगमात्। प्रत्यक्षत्वात् सुषुप्तेऽवभासः। अनुमानमपि—स्वयंप्रकाशोऽयमात्मा स्वसत्तायां

---

ता. उत्तरज्ञाने पूर्वस्मात् ज्ञानाकारो जायत इत्याशङ्कते—**समनन्तरेति**। आकाराकारिणोरभेदात् ज्ञान(समाश्रित)[सामग्रीत] एव ज्ञानाकारसिद्धेर्नान्यापेक्षेति परिहरति—**न—वस्त्विति** ॥

किं यत्रात्मप्रदेशे अदृष्टं तत्प्रदेशसंयोगोऽपेक्ष्यते ? किं वा अदृष्टोपलक्षितात्मसंयोगः ? इति विकल्प्य, क्रमेण दूषयति—**नात्रेति**। **प्रत्यक्षत्वादिति**। सुप्तोत्थितस्य 'सुखमहमस्वाप्सम्' इत्यात्मपरामर्शात् तस्य चानुभवपूर्वकत्वात् इन्द्रियव्यापाराभावाच्च आत्मानुभवः सुषुप्तौ स्वत एव सिद्ध इत्यर्थः। **स्वयम्प्रकाश इति**। सजातीयप्रकाशाप्रकाश्य इति यावत्। अन्यथा अप्रसिद्धविशेषणत्वात् दृष्टान्तस्य साध्यविकलत्वाच्च। **व्यतिरेकः** अभावः। अभावशून्यत्वादित्युक्ते साधनविकलो दृष्टान्तः प्रदीपस्यापि विनाशित्वात् अत उक्तम्—**प्रकाशव्यतिरेकेति**। तथापि नष्टे प्रदीपे प्रभाव्यतिरेकोऽस्ति, अत उक्तम्—**स्वसत्तायामिति**। न च हेत्वसिद्धिः, जाग्रस्वप्नयोरात्मप्रतिभासाङ्गीकारात्।

---

भा. **केवलात्मप्रदेशसंयोगस्य फलाहेतुत्वादिति**। पुण्यविशेषरहितस्यापि सुखविशेषप्रसङ्गादित्यर्थः। ननु अदृष्टमपि कारणम्, तच्च समवायिप्रदेशे कचित् स(ए)[दे]व हेतुरिति चेत्, न—स्वसमानाधिकरणकार्यारम्भ[क]स्य अग्निसंयोगस्यैव कार्यप्रदेशवृत्तित्वनियमात्। तस्य च परपक्षे अनुपपत्तेः।

प्रकाशव्यतिरेकाभावात् प्रदीपसंवेदनवत्। आत्मा स्वयंप्रकाशः विषयप्रकाशकर्तृत्वात् प्रदीपवत्। तथा—आत्मा स्वयंप्रकाशः विषयप्रकाशाश्रयत्वात् आलोकवत्। अजन्यप्रकाशगुणश्चात्मा प्रकाशगुणत्वात् आदित्यादिवत्। आत्मा स्वयंप्रकाशः अनिन्द्रियगोचरत्वे सत्यपरोक्षत्वात् संवेदनवत्। आगमश्चात्र दर्शितः। स चैकः सर्वशरीरेषु; सर्वत्राह-

---

ता. परामर्शबलेन सुषुप्तेऽप्यात्मप्रतिभाससाधनात्। अत्र च द्रव्यत्वे सतीति विशेषणमवगन्तव्यम्। अन्यथा दुःखादिष्वनैकान्तिकत्वात्। **प्रदीपवत् संवेदनवच्चेति** (तथा)[कथा]भेदेन दृष्टान्तद्वयमवगन्तव्यम्। य(था)[दा] प्रदीपः त(था)[दा] हेतोर्द्रव्यविशेषणम्, यदा ज्ञानं तदा ज्ञानेतरात्मविशेषगुणव्यतिरिक्तत्वे सतीति विशेषणमित्येवं काशकुशावलम्बनेन कथं चिदनुमानस्वरूपस्थितिरवगन्तव्या। **प्रकाशकर्तृत्वात्** इत्युक्ते असिद्धिः स्वस्य प्रकाशरूपतया तत्कर्तृत्वाभावात् अत उक्तम्—**विषयेति**। आत्मनि प्रकाशगुणस्य जन्यत्वात् **प्रकाशव्यतिरेकशून्यत्वादिति** हेतोरसिद्धिमाशङ्क्याह—**अजन्येति**। अत्र च सति धर्मिण्यजन्यप्रकाशगुण इति प्रतिज्ञार्थो विशेषणीयः। अन्यथा आदित्यप्रकाशस्य जन्यत्वेन दृष्टान्तस्य साध्यविकलत्वात्॥

**प्राभाकरं** प्रत्यनुमानमाह—**आत्मेति**। घटादिषु व्यभिचारनिवारणार्थम्—**अनिन्द्रियगोचरत्वे सतीति** विशेषणम्। अतीन्द्रिये धर्मादौ व्यभिचारो मा भूदिति **अपरोक्षत्वात्** इत्युक्तम्। **आगमश्चात्र दर्शित**

---

भा. अदृष्टं स्वाश्रयसंयुक्तमेव कार्यं जनयतीति नियमस्तु शब्दादौ व्यभिचारात् नेत्युक्तम्। न च नानादेशेषु कर्मफलभोगार्थं आत्मनो विभुत्वमिति वाच्यम्। परिच्छिन्नत्वेऽपि तत्र गमनादिना तदुपपत्तेः। सुखादेरदृष्टाश्रयप्रदेशनियमेन तथैव वक्तव्यत्वात्। न च—कायव्यूहदशायां युगपदनेकशरीरेषु भोगार्थमात्मनो विभुत्वम्, न च तत्र प्रमाणाभावः, 'आत्मनो वै शरीराणि बहूनि मनुजेश्वर' इत्यादिपुराणवाक्यानामेव तत्र प्रमाणत्वादिति वाच्यम्। एवमप्यागमायत्तत्वेन अनुमानात् तदसिद्धेः। किं च त्वन्मते पुराणवाक्यस्य

मित्येकाकारप्रत्यक्षवेदनीयत्वात्, गोत्ववत्। शरीरभेदादेव अतीतशरीरादाविव न भोगानुसन्धानप्रसङ्गः। न च एकस्मिन्नपि परिमाणभेदात् प्रतिक्षणं शरीरभेदो युक्तः। प्रत्यभिज्ञाविरोधात् अननुसन्धानप्रसङ्गाच्च। ज्वालायां सूक्ष्मदर्शने प्रत्यक्षत एव भेददर्शनात्। तस्मादेकः स्वयंप्रकाश आत्मेति सिद्धम्। तस्मादित्युपसंहारः॥ 285-7

पक्षान्तरमाह—भोक्तैव केवलमिति। कर्तृत्वं हि क्रियावेशः। न 286-2
च सर्वगतस्य निरवयवस्य आत्मनः परिस्पन्दपरिणामलक्षणक्रियान्वयः सम्भवति। न च बुद्धेः कर्तृत्वमात्मनो भवति। तादात्म्याध्यासाभावात्। अख्यातिवादित्वात्। हेत्वन्तरमाह—करोमि जानामि भुञ्जे 286-4
चेति। अयमर्थः—चैतन्यवत् क्रियावेशोऽप्यात्मनः स्वभावधर्मश्चेत्

---

ता.

इति। 'अत्रायं पुरुषः स्वयंज्योतिः' इत्यादिः। आत्मन एकत्वे सर्वशरीरेषु भोगानुसन्धानप्रसङ्ग इत्यत आह—शरीरभेदादिति। ननु बाल्यकौमारयौवनादिषु शरीरनिष्ठे हीनाधिकपरिमाणे भिन्नाश्रये हीनाधिकपरिमाणत्वात् घटशरावादिपरिमाणवदित्यनुमानादस्ति शरीरभेदः। प्रतिसन्धानं च भोगस्य दृश्यते, तद्वच्छरीरान्तरेष्वपि स्यात् इत्याशङ्क्याह—न चैकस्मिन्निति। बाल्यकौमारयौवनादिषु शरीरभेदे शरीरान्तरेष्विव भोगानुसन्धानं न स्यादित्याह—अननुसन्धानेति। शरीरैकत्वप्रत्यभिज्ञा[ज्वालैकत्वप्रत्यभिज्ञा]वत् भविष्यतीत्याशङ्क्याह—ज्वालायामिति॥

मायावादिन इव अन्तःकरणगतं कर्तृत्वमात्मनि भवेदित्यत आह—न च बुद्धेरिति। सोऽपि भवेदित्यत आह—अख्यातिवादित्वादिति। आत्मनः क्रियावेशः स्वाभाविकः? अन्याधीनो वा? इति विकल्प्य, क्रमेण दूषयति—चैतन्यवदिति॥

---

भा.

सर्गाद्यकालीनप्राणिव्युत्पादनार्थं प्रवृत्तेश्वरविषयत्वेनाप्युपपत्तेः। प्रत्यक्षादिना जीवपरिच्छिन्नत्वस्य सिद्धत्वेन तव ज्ञानविपरिलोपनिषेधश्रुतेरिव ईश्वरविषयत्वस्यैव वक्तव्यत्वात्। उपासनापरं वा अभेदवाक्यवदस्तु। प्रत्यक्षादिविरोधस्य तुल्यत्वादिति॥

आत्मप्रतिभासं न व्यभिचरेत्। न चागन्तुको निरवयवद्रव्यस्य हेतूपरागेण कश्चिद्धर्म उत्पादयितुं शक्यत इति। ननु आत्मप्रतिभास-
286 - 6 व्यभिचारात् कर्तृत्ववत् भोक्तृत्वमपि न स्यादिति चोदयति—ननु
286 - 7 भोक्तापीति। परिहरति—नैतदेवमिति। दृश्यावभासमात्रं भोक्तृत्वं न सुखदुःखान्वयः। ततश्च अवस्थात्रयेऽपि दृश्यावभासव्यभिचाराभावात् भोक्तैव केवलमिति॥

286 - 10 पक्षान्तरमाह—अस्ति तद्व्यतिरिक्त इति। भाष्यं व्याचष्टे—
287 - 1-7 तस्मादपीति। तस्मादपि देहादिव्यतिरिक्तादन्यः सिद्ध ईश्वरः इत्युत्तरेण सम्बन्धः॥

287 - 3 अत्रेश्वरे वैशेषिकानुमानं दर्शयति—शरीरिणां मनसापीत्यादिना। विवादगोचरापन्नं भूतभौतिकलक्षणं तनुभुवनविरचनकार्यं स्वरूपोपादानसम्प्रदानप्रयोजनोपकरणादिविषयविज्ञानवत्कर्तृपूर्वकं विविधविन्यासरूपकार्यत्वात् प्रासादादिवदिति कल्पनालाघवेनैककर्तृकत्वोपादानात्
287 - 5 सर्वज्ञत्वादिसिद्धिरिति। साङ्ख्ययोगानुमानं दर्शयति—सातिशयानां काष्ठाप्राप्तिरिति। विवादगोचरापन्ना ज्ञानैश्वर्यशक्तयः क्वचित् सर्वविषयज्ञानैश्वर्यशक्त्यविनाभूताः तरतमभावेनोत्कृष्यमाणविषयव्यापिधर्मत्वात् स्वविषयदेशव्यापिपरिमाणधर्मवदिति। काष्ठाप्राप्तिरसर्वविषयत्वेऽपि
287 - 7 सम्भवतीति सर्वविषयमिति वा इत्युक्तम्। अनुमाने तथैव दर्शितत्वात्।

---

ता. कर्तृमात्रसाधने सिद्धसाधनता स्यादिति तत्परिहारार्थम्—स्वरूपोपादानेत्यादिविशेषणम्। उन्मत्तकृतकार्ये व्यभिचारनिवारणार्थम्—विविधविन्यासेत्यादिविशेषणम्। ननु विविधविन्यासकार्यस्य प्रासादादेः बहुकर्तृकत्वदर्शनात् कथमेकसर्वज्ञेश्वरसिद्धिः इति; तत्राह—कल्पनेति। ज्ञानैश्वर्यशक्तय इति। शौक्ल्यादि[सा]धर्म्यं व्यावर्तयति—तरतमभावेनेति। एकाभावः द्वयाभावः त्रयाभाव इति तरतमभावेनोत्कृष्यमाणधर्मत्वमभावेऽप्यस्तीति अत उक्तम्—विषयव्यापीति। प्रतियोगिलक्षणविषयव्यापित्वाभावात् व्यभिचारपरिहारः। दृष्टान्ते विषयशब्दस्यार्थमाह—विषयदेशेति। [इति] चिरन्तनव्याख्या। सा च अनुपपन्ना; तथा हि—सर्वविषयज्ञानैश्वर्यशक्तीनां

सर्वदा सिद्ध ईश्वरः इति **नैयायिकाद्यनुमानं** दर्शयति—**विवादगोचरापन्नानि धर्माधर्मफलानि कर्मतत्फलसम्प्रदानोपकरणादिविज्ञानवता प्रदीयमानानि व्यवहितकर्मफलत्वात् सेवादिफलवदिति । तस्मात् सिद्ध ईश्वरः ॥** 287-7

**ननु प्रत्यगात्मनो विप्रतिपत्त्यालम्बनस्य सम्बन्धितया स्कन्धभेद[प्र]दर्शनं विप्रतिपत्तिः । न च व्यतिरिक्त ईश्वरः प्रत्यगात्मनो विशेष-**

---

सिद्धत्वे अनुमानवैयर्थ्यम् । असिद्धावप्रसिद्धविशेषणता । परिमाणेऽपीदृशधर्मस्यासत्त्वेन दृष्टान्तस्य साध्यविकलता । विषयशब्दस्य चार्थैक्याभावात् साधनविकलो दृष्टान्तः । ज्ञानादिषु विषयशब्दस्य कर्मपरत्वात् । परिमाणे चाश्रयपरत्वात् । विषयव्यापित्वं च विषयाश्रयत्वं चेत् हेत्वसिद्धिः । ज्ञानादीनां चेतनाश्रितत्वेन विषयानाश्रितत्वात् । तस्माच्छब्दछायामात्रेण चिरन्त(नानु)[नानां व्याख्या । अनु]मानशरीरं पुनः—ज्ञानैश्वर्यशक्तयः क्वचित् परां काष्ठां प्राप्ताः सातिशयत्वात् परिमाणवदिति । एवं चाङ्गीकारे सति **सातिशयानां काष्ठाप्राप्तिः परिमाणा(दावु)[नामु]पलब्धेति पञ्चपादिका** चानुकूलिता भवति ॥ ता.

जन्मादिसूत्रे चैतदनुमानदूषणावसरे, **विवरणा**चार्यो(व्यासातिशयानां)[ऽप्याह—'योगानुमानेऽपि ज्ञानैश्वर्यशक्तीनां] क्वचित् काष्ठाप्राप्तिमात्रेऽनुमीयमाने लक्ष्यपदार्थ(ज्ञानादिमत्त्वु)[विषयज्ञानादिषु]पर्यवसानसिद्धेः कुतः सर्व(ज्ञा)[ज्ञत्वा]दिसिद्धि'रिति । सातिशयत्वहेतोश्च गुरुत्वादिषु अनैकान्तिकतामाह स्म । **मण्डनाचार्योऽपि** इदमेवानुमानशरीरमभिप्रेत्य दूषणमवोचत्—

'काष्ठा यद्यवधिः कामं परं यस्मादसम्भवि ।
कार्यद्रव्यैरनैकान्तो गुणैश्च गरिमादिभिः ॥'

इति । तस्मादुक्तैवानुमानस्वरूपस्थितिरवगन्तव्या । सिद्धसाधनताव्यवच्छेदार्थम् **हेतौ—कर्मतत्फलेत्यादि**विशेषणम् । भोजनसाध्यतृप्त्यादिव्यवच्छेदार्थं **व्यवहितेति** पदम् ॥

**स्कन्धभेदप्रदर्शनम्** । इन्द्रियाणि वा आत्मा देहो वेत्यादिपक्षभेदप्रदर्शनम् । भवतु, तथापि किम्? इत्यत आह—**न चेति** ।

स्कन्धः, अतोऽसौ न शरीरादिवत् स्कन्धविशेषतया प्रतिपादनीय इति
287 - 9 288 - 3 चोदयति—ननु अहमिति सर्वो लोक इत्यादिना। उच्यते इत्यादिपरिहारस्य अयमर्थः—ब्रह्म हि विप्रतिपत्त्यालम्बनम्, तच्च प्रत्यगात्मव्यतिरिक्तमव्यतिरिक्तं वेति विप्रतिपत्तिं दर्शयितुं व्यतिरिक्तेश्वरपक्षोऽपि दर्शनीयः। किमिति तर्ह्यात्मनि विप्रतिपत्तिः प्रदर्श्यते ? इति;
288 - 4 तदाह—अहंप्रत्ययविषयविप्रतिपत्त्यापीति। किमिदमुक्तं भवति ?। प्रत्यगात्मा तावत् प्रमाणान्तरेणोद्दिश्य शरीरेन्द्रियमनोबुद्धिशून्यकर्तृत्वभोक्तृत्वादिविशेषपर्युदासेन अद्वितीयज्ञानानन्दस्वभावेन प्रतिपाद्यते। एवं प्रतिपादने संसारनिवृत्तेः पुरुषार्थलाभाच्च। अतः प्रत्यगात्मा सर्वज्ञत्वादिगुणकात् ब्रह्मणोऽन्योऽनन्यो वेति विप्रतिपत्तिं दर्शयितुं तद्व्यतिरिक्त ईश्वरः साधितः विप्रतिपत्तिस्कन्धत्वात्॥

अत्र कश्चिदाह—नेह प्रत्यगात्मा असाधारणस्वभावविवक्षया ब्रह्मशब्देन जिज्ञास्यत्वेनोद्दिश्यते। किं त्वीश्वर एव ब्रह्मशब्देनोद्दिश्य विचार्यते। जन्मादिसूत्रे जगत्कारणत्वलक्षणाभिधानात्। न हि प्रत्यगात्मन्येतल्लक्षणमुपपद्यते। तस्मात् आत्मविप्रतिपत्तिप्रदर्शनमसमञ्जसमिति॥

उच्यते—यदि ब्रह्मशब्देनेश्वरोऽभिधीयते किमिति तर्हि जगत्कारणे विप्रतिपत्तिं दर्शयसि 'प्रधानमेके परमाणूनपरे' इत्यादिना। न हीश्वरेऽर्थान्तरे जिज्ञासाकर्मणि ब्रह्मशब्दोपादाने अर्थान्तरे जगत्कारणे विप्रतिपत्तिर्युक्ता दर्शयितुम्। जगत्कारणादीश्वरस्याभिन्नत्वात्तद्विप्रति-

---

ता. पुरुषार्थलाभात्। परमानन्दस्वरूपप्राप्तेरिति यावत्। ईश्वरस्य विचार्यत्वे युक्तिमाह पूर्ववादी—जन्मादीति। पूर्ववादिसम्मतां विप्रतिपत्तिं दूषयति—यदीति। ननु सम्बन्धविषययोः सिद्धयोः सामान्यप्रसिद्धिर्विशेषविप्रतिपत्तिश्च दर्शनीयेत्यत आह—न हीति। स्वमते विप्रतिपत्त्युपपत्तिमाह—

---

भा. पदद्वयलक्ष्यवाक्यार्थयोरत्र प्रतिपिपादयिषितत्वा[दित्यभि]प्रेत्याह—प्रत्यगात्मा तावदित्यादिना॥

पत्तिरीश्वरविप्रतिपत्तिरिति चेत्, तर्हीश्वरः प्रधानं परमाणुर्वेति विप्रतिपत्तिर्दर्शिता स्यात्। न तथा संशेरते जनाः। युज्यते तु प्रत्यगात्मनो ब्रह्मशब्दाभिधेयविशेषस्वरूपस्य शरीरेन्द्रियादिषु संशयः। तेषामात्मनि तादात्म्यावभासात्। किञ्च, प्रत्यगात्मानमुद्दिश्य तस्य विशेषस्वरूपे ब्रह्मणि जिज्ञास्यमाने यज्जगज्जन्मादिकारणं तत् ब्रह्मेत्युक्ते विधूतशरीरादिभेदः प्रत्यगात्मा जगत्कारणतया सर्वात्मभूतः प्रतिपादितो भवति। जगत्कारणे तु विप्रतिपद्यमाने किं तज्जगत्कारणम्? इति वीक्षायम्, यत् ब्रह्म तज्जगत्कारणमिति ब्रह्मोद्देशेन जगत्कारणत्वं विधेयं स्यात् न जगत्कारणमुद्दिश्य ब्रह्मविधानमिति वैपरीत्यमापद्यते। ब्रह्मशब्देन जगत्कारणमभिधीयत इति चेत्, न—ईश्वरोऽभिधीयत इति स्ववचनेन विरोधात्। किञ्च, ईश्वरे जगत्कारणे प्रतिपादिते पुरुषस्य किमायातम्?। उपासनमिति चेत्, न—आरोपितरूपेणापि सम्भवात् प्रतिपादनवैयर्थ्यात्। तस्मात् प्रत्यगात्मानमुद्दिश्य तस्य वेदान्तविहितब्रह्मशब्दाभिधेयबुभुत्सायां यज्जगज्जन्मादिकारणं सत्यज्ञानानन्दादिलक्षणं तत् प्रत्यगात्मभूतं ब्रह्मेति प्रतिपादयितुमात्मनि विप्रतिपत्तिप्रदर्शनं युक्तमिति जगत्कारणे विप्रतिपत्तिः सम्प्रदायपरिचयशून्यतया शास्त्रार्थप्रद्वेषात् सर्वसङ्करवादिना दर्शिता इति॥

---

ता. **युज्यते त्विति।** ब्रह्मशब्देन प्रत्यगात्मपरिग्रहे[द्वितीयसूत्रम]नुगुणं भवतीत्याह—**किं चेति।** पूर्ववादिमते पुनः उत्तरसूत्रमनुगुणं न भवतीत्याह—**जगत्कारणे त्विति।** सन्दिग्धस्य विधित्सितत्वादित्यर्थः। **स्ववचनेन विरोधादिति।** जगत्कारणशब्दस्य प्रधानपरमाणुशून्यस्वभावसाधारणत्वात् त्रिविधपरिच्छेदशून्यपरब्रह्मवाचिना ब्रह्मशब्देन तस्य सामानाधिकरण्ये ब्रह्मणः परमाण्वादिरूपता प्रतिपादितेति स्ववचनविरोध इत्यर्थः। सूत्रस्य पुरुषार्थप्र[योजनत्वं वक्तव्यम्।]कारणमुद्दिश्य ब्रह्मत्वविधाने जीवस्य पुरुषार्थाभावात् सूत्रस्य वैयर्थ्यमपि स्यादित्याह—**किं चेश्वरे इति।** परकीया विप्रतिपत्तिरनुपपन्नेत्युपसंहरति—**इति जगत्कारणे इति॥**

288-7 **पक्षान्तरमाह**—आत्मा स भोक्तुरित्यपरे इति। **यथा च सत्यज्ञानानन्दं निरवयवं ब्रह्म, प्रत्यगात्मापि तथा। तत्र विवादगोचरापन्नो जीवो ब्रह्मैव सन्नुपाधिपरिच्छिन्नविभागः, ब्रह्मणा समानस्वभावतया निरवयवद्रव्यत्वे सत्युपाधिपरामर्शाधीनपरिच्छेदप्रतिभासत्वात्, यत्र**

---

ता. जीवब्रह्मणोरेकत्वश्रुत्यनुकूलां युक्तिं दर्शयितुं विरोधपरिहाराय पदार्थपरिशोधनं करोति—**यथा चेति**। **परिच्छेदप्रतिभासत्वात्** इत्युक्ते घटादौ व्यभिचारः, तदर्थं **उपाधिपरामर्शाधीनेति** पदम्। तथापि रागद्वेषादौ व्यभिचारः तस्यापि विषयादिलक्षणोपाधिपरामर्शाधीनपरिच्छेदप्रतिभासत्वात्, तदर्थम्—**द्रव्यत्वे सतीति** पदम्। तथापि सेत्वाद्युपाधिना द्रव्यस्यापि क्षेत्रस्य परिच्छेदप्रतिभासोऽस्ति तदर्थमुक्तम्—**निरवयवेति**। आकाशे व्यभिचारनिवारणार्थम्—**ब्रह्मणेति** पदम्॥

---

भा. **आत्मा स भोक्तुरित्यपरे** इति पक्षमुपपादयितुं जीवब्रह्मणोरभेदयोग्यतामाह—**यथा च सत्यज्ञानानन्दं निरवयवं ब्रह्म, प्रत्यगात्मापि तथेति**। 'सत्यं ज्ञानम्' 'विज्ञानमानन्दं ब्रह्म' इति वाक्यात् ब्रह्म यथा सदादिरूपं प्रसिद्धं एवं प्रत्यगात्मनोऽप्यस्तीत्यनुभवात् सत्यत्वम्, 'अत्रायं पुरुषः स्वयञ्ज्योतिः' इति वाक्यात प्रागुक्तन्यायाच्च ज्ञानरूपत्वम्, परमप्रेमास्पदत्वन्यायात् 'तदेतत् प्रेयः पुत्रात्' इत्यादिवा[क्यात् आनन्दत्वम्] सत्यत्वान्निरवयवत्वम्। यत्तु दुःखित्वादिकं प्रतीयते तत् सर्वमौपाधिकमित्युक्तं **प्रथमवर्णके** इत्यर्थः॥

सम्भावितेऽर्थे अनुमानमाह — **तत्र विवादेति**। भेदाभेदव्यावृत्त्यर्थमेवकारः। 'ब्रह्मैव' इत्येतावत् साध्यम्। ब्रह्मणा समानस्वभावत्वादिति हेतुः। तत्र च समानत्वं यद्यपि नैकत्वं सदृशत्वं वा सम्भवति, साध्याविशेषाद्विरोधाच्च। तथाप्यविलक्षणत्वं हेतुः। तच्चोक्तरीत्या सिद्धम्। न चैवं सव्येतरादौ व्यभिचारः; भिन्नेषु यत्किञ्चिद्विलक्षणत्वस्य सत्त्वात्। न च 'नाहं ब्रह्म' इत्यनुभवविरोधः, इत्याह—**उपाधिपरिच्छिन्नविभाग इति**। औपाधिकविभागवानित्यर्थः। तत्र हेतुः—**उपाधिपरामर्शाधीनेति**। जीवस्य

येन समानस्वभावतया निरवयवद्रव्यत्वे सत्युपाधिपरामर्शाधीनपरि-
च्छिन्नप्रतिभासं तत् तदात्मकत्वे सत्युपाधिपरिच्छिन्नभेदं दृष्टम्, यथा
घटाकाशमिति। भाष्यं व्याचष्टे— योऽयमिति। ननु संसारिणः कथम- 288 - 7
संसारिणैकत्वम्? इति; तत्राह—तस्याहंप्रत्ययसिद्ध इति। नन्वेवमहमिति 288 - 8
सामान्यतः प्रतिपन्नस्य शरीरादिविशेषमिथ्यात्वे परमार्थभूतो विशेषो
वक्तव्यः अहमित्थंभूत इति; तदाह—परमार्थतस्त्विति। अहं ब्रह्मैवेति 288 - 10
विशेषोपसंहारो न शरीरादीत्यत्र किं प्रमाणम्? इति; तदाह—एवमसौ 288 - 11
बृंहत्यर्थान्वयादिति। ननु जीवेभ्यो भेदेऽपि बृंहत्यर्थलाभो देशकाल-
व्यापित्वादिति; तदाह—इतरथा तद्रूपविकलस्येति॥ 289 - 1

उपसंहरति—एवं बहव इति। किञ्चित्—शरीरादि, ब्रह्मेति— 289 - 3-5
प्रत्यगात्मेति विप्रतिपन्ना इत्यर्थः। ननु न विप्रतिपत्तिमात्रात् जिज्ञास्यं
भवति, किं तु प्रमाणयुक्तिमूला हि विप्रतिपत्तिर्निराकर्तव्येति; तत्रोत्त-
रम्—'युक्तिवाक्ये'त्यादि भाष्यम्। तद्व्याचष्टे—युक्ति—प्रमाणानामित्यादिना। 289 - 6
कस्मिन् पक्षे युक्तिवाक्ये क्व वा तदाभासाः इति विभजते—युक्तिवाक्या- 289 - 9
भ्यामन्त्यं पक्षं निश्चितवन्त इति॥

---

भा.

स्वरूपमहङ्कारातिरिक्तमेव सत् तदभिन्नं प्रतीयत इति प्राङ्निर्धारितम्। न च असौ परस्माद्भिन्न इति प्रतीयते, येन निरुपाधिकभेदप्रत्ययः स्यात्। अतो 'नाहं ब्रह्म' इत्यनुभवेऽहङ्कारोऽनात्मा नियमेन प्रतीयत इति उपाधिपरामर्शाधीनप्रतीतेरेव आत्मभेद इति नासिद्धिः। भेदस्य स्वाभाविकत्वे बाधकमाह—निरवयवद्रव्य(त्वादि)[त्वे सती]ति। स्वाभाविकविभागे हि परिच्छिन्नत्वं वक्तव्यम्; तस्य तन्नियमात्। न च तदा जीवस्य अणुत्वं सम्भवति; प्रत्यक्षत्वविरोधात्। अतो मध्यमपरिमाणं स्वाभाविकं वक्तव्यम्। एवं ब्रह्मव्यतिरिक्तस्य जीवस्य सर्वगतत्वे प्रमाणाभावादपि स्वाभाविकमेव मध्यमपरिमाणं वक्तव्यम्। तच्च निरवयवस्य न सम्भवतीत्यर्थः॥

एवं वा परं प्रति प्रयोक्तव्यम्। जीवो ब्रह्मनिष्ठात्यन्ताभा(व)[वा]-प्रतियोगिभेदप्रतियोगी न भवति, आत्मत्वात्, ब्रह्मवत्। न च निषेध्या-

ननु यथा बृंहत्यर्थान्वयात् युक्तिवाक्याभ्यां च ब्रह्मैव भोक्ता तथा सुखदुःखतत्साधनप्रपञ्चोऽपि ब्रह्मैवेत्यपुरुषार्थतया न जिज्ञास्यं ब्रह्म स्यात्। न हि कतिपयसुखदुःखतत्साधनसंसर्गमप्यसहमानो निखिलदुःखादिमत्तामङ्गीकुर्यात्। ननु वक्ष्यमाणेन ज्ञानानन्दादिलक्षणेन पुरुषार्थतया जिज्ञास्यमेव किं न स्यात्? न—क्षुन्निवृत्तिसाधनतया पुरुषार्थेऽपि विषमिश्रितेऽन्नेऽनर्थहेतुतया प्रेक्षापूर्वकारिणामुपेक्षादर्शनात्।'न लिप्यते लोकदुःखेन बाह्यः' इत्यादिशास्त्रात् न अपुरुषार्थतेति चेत्, न—'आत्मैवेदम्' इत्यादिसर्वतादात्म्यश्रुतेरुपादानकारणत्वाच्च। सर्वज्ञतया अज्ञानमिथ्याज्ञानाभावान्नानर्थसम्बन्ध इति चेत्, न—तत्त्वत एव प्रपञ्चतादात्म्यादज्ञानाद्यनपेक्षणात्। कर्मनिमित्तः सुखदुःखादिसम्बन्धः, तदभावान्न ब्रह्मण्यनर्थसम्बन्ध इति चेत्, न—कर्मव्यतिरेकेणापि स्वभावादेव अखिलसुखदुःखादितत्साधनानां स्वान्वयितया ब्रह्मणोऽपरोक्षत्वात्। कर्मादीनामपि तावन्मात्रहेतुत्वात्। न हि दुःखाद्यापरोक्ष्यव्यतिरेकेण संसारोऽन्यो दृश्यते। कर्माविद्यादीनामपि बृंहत्यर्थान्वयादेव ब्रह्मणि तादात्म्यात् तन्निमित्तोऽपि संसारः सुतरामुपपन्न इति। ब्रह्मणि तत्त्वज्ञानेन बाधितत्वात् न अनर्थसम्बन्ध इति चेत्, न—प्रपञ्चात्मभावस्यापि तात्त्विकत्वात्। न च कारणाकारणब्रह्मभेदेन कार्यकारणब्रह्मभेदेन वा संसारविमुक्तिव्यवस्था, बृंहत्यर्थान्वयाभावप्रसङ्गात्। तस्मात् बृंहत्यर्थान्वयेन अद्वितीयसर्वज्ञत्वजीवत्वाद्युपगमेन अजिज्ञास्यं ब्रह्म प्राप्तम्॥

उच्यते—सत्यपि सर्वस्यापरोक्षतया ब्रह्मसम्बन्धे मायानि-

---

ता. बृहत्यर्थान्वये ब्रह्मणः सर्वात्मकतया दुःखरूपत्वात् न जिज्ञास्यत्वमिति चोदयति—नन्विति। सुखरूपत्वस्यापि सम्भवाज्जिज्ञास्यता किं न स्यात्? इति चोदयति—ननु वक्ष्यमाणेनेति। कर्मणो दुःखापरोक्ष्यं प्रति हेतुत्वात् तस्य च सर्वज्ञतया स्वत एव सम्भवात् न कर्मापेक्षेति परिहरति—न—कर्मेति। एवमेकदेशिमतं दूषयित्वा, स्वमतेन परिहारमाह—उच्यत इत्यादिना। जीवगत-

मित्ततया प्रतिबिम्बश्यामत्वादिवत् मायाविगतव्याघ्रत्वादिवच्च तत्त्वज्ञानेन बाधितत्वात् बिम्बस्थानीयब्रह्मणो नित्यसर्वज्ञतया तत्त्वज्ञाननियमान्न तत्रात्मानुबन्ध इति। विशुद्धिवाक्यानामेव च बलवत्तरत्वं वक्ष्यामः।
युक्तिवाक्याभासमूलता कस्य? इति; तदाह—इतरे तु युक्तय इवेत्यादिना। 289 - 10
कथं पुनर्युक्त्याभासता शरीराद्यात्मभावस्य? इति; तदाह—युक्त्याभासत्व- 290 - 1
मिति। ननु नैतावता युक्त्याभासत्वसिद्धिर्देहादिष्विति; तत्राह—
इतरेषां च युक्त्याभाससिद्धत्वमिति। किञ्च, दर्शिता एव युक्त्याभासाः 290 - 2
न तत्रान्यापेक्षेत्याह—दर्शितं च लेशत इति॥ 290 - 3

---

ता.

संसाराभावे दृष्टान्तमाह—प्रतिबिम्बेति। आकाशादिप्रपञ्चास्पर्शे दृष्टान्तमाह—मायावीति। बाधितत्वात् न तत्रानात्मानुबन्धः इति वक्ष्यमाणेन सम्बन्धः। तत्त्वज्ञानसमये बाधितस्यापि प्रपञ्चस्य तदुत्तरकालं ब्रह्मसम्बन्ध इत्याशङ्क्याह—बिम्बेति। सर्व[ज्ञ]त्वमेव पारमार्थिकं अपरमार्थं तु निष्प्रपञ्च[त्व]मिति किन्न स्यात्? इत्यत आह—विशुद्धीति। वक्ष्याम इति। द्वितीयसूत्रे इति शेषः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य-
श्रीचित्सुखमुनिविरचितायां पञ्चपादिकाविवरणव्याख्यायां
तात्पर्यदीपिकायां चतुर्थं वर्णकं समाप्तम्॥
॥ जिज्ञासाधिकरणं च॥

---

भा.

प्रसिद्धिः। परमतसिद्धस्यैव तं प्रति निषेधात्। जीवो ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगिभेदप्रतियोगी ब्रह्मणि स्वात्यन्ताभावप्रतियोगिभेदप्रतियोगीति वा मिथ्याभेदप्रतियोगित्वं साध्यम्, तत एव, तद्वत्। सत्यतो भिन्नत्वे मिथ्याभेदप्रतियोगित्वायोगादभेदसिद्धिः। आत्मत्वं (वा) [च] असन्मतेऽपि विशिष्टव्यवहाराय यावद्व्यवहारं कल्पितोऽखण्डो धर्मोऽस्तीति नासिद्धिः। विपक्षे च ब्रह्मणो ब्रह्मत्वमात्मन आत्मत्वं च न स्यात्। वस्तुतः परिच्छेदे तदयोगात्। एवं जीवेश्वरभेदं पक्षीकृत्यापि मिथ्यात्वं साधनीयमिति॥

'ननु स वा एष पुरुषोऽन्नरसमयः' 'स वा अयमात्मा ब्रह्म' 'पृथिवीमय आपोमयस्तेजोमयो वायुमयः' इत्यादीनि शरीरात्मवादे वाक्यानि, 'ते ह वाचमूचुः तेभ्यो ह वागुदगाय'दित्यादीनीन्द्रियात्मवादे, 'मन उदगायत्' इति मनोवादे, 'कतम आत्मेति योऽयं विज्ञानमयः' इत्यादि विज्ञानवादे, 'असद्वा इदमग्र आसीत्' 'असदेवेदम्' इति शून्यवादे, 'अनुमन्ता बोद्धा कर्ता विज्ञानात्मा' इति कर्त्रात्मवादे, 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति बुद्धिविषयत्वात् 'अनश्नन्नन्यः' इति भोक्त्रात्मवादे, 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति व्यतिरिक्तेश्वरवादे वाक्यानि विद्यन्ते। कथं निर्मूलता पक्षान्तराणाम्? इति; तत्राह—
290-4 वाक्याभासतां त्विति; ननु एवमपि यस्य यस्मिन् रुचिरुत्पद्यते, स तं पक्षमाश्रित्य पुरुषार्थं साधयेत् किं विचारेण? इति; तत्राह
290-6-7 —तत्राविचार्य यत्किञ्चिदिति। भाष्यं व्याचष्टे—तत्र एवंस्थिते इत्यादिना। ननु मा भूदन्त्यात् पक्षादर्वाचीनेषु पक्षेषु तत्त्वज्ञानाभावात् निःश्रेयस-
290-12 लाभः, अनर्थः किमिति प्राप्यत इति; तत्राह—अन्धं तमः प्रविशन्तीति। ननु आत्महननं तत्रानर्थहेतुरुक्तो न तत्त्वाप्रतिपत्तिरिति; तत्राह—
291-1 अनात्मदर्शनेनात्मनोऽसत्कल्पत्वापादन[नमात्महननम्, एवं]रूपस्येति। सूत्र-
291-4 वाक्यार्थमुपसंहरति–तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेनेति। भाष्यं व्याचष्टे
291-6 –ब्रह्मजिज्ञासोपन्यासव्याजेनेति। जिज्ञासापदेन अन्तर्णीतं विचारमुलक्ष्य
291-7 तत्कर्तव्यतापरं सूत्रमित्युक्तं भवति। योजनान्तरमाह—अथ वेति। जिज्ञासा कर्तव्येत्युक्ते ज्ञानमिष्यमाणं साध्यतया कर्तव्यमिति सूत्रार्थः सम्पद्यते। तत्र ज्ञाने कर्तव्येऽप्यर्थात् तत्साधनकर्तव्यताप्यवगम्यते।
291-9 अतोऽर्थसिद्धविचारकर्तव्यतापरं सूत्रमिति। किंप्रयोजनेत्यादिः स्पष्टार्थः॥

कथं पुनर्विचारस्य निःश्रेयसं प्रयोजनम्?। विचारजन्यब्रह्मावबोधसाध्यत्वादिति चेत्; किं तत् निःश्रेयसम्?। कर्तृत्वभोक्तृत्वदोषसंयोगाध्यासप्रवाहोपादानस्य अज्ञानस्य निवृत्तिः; न–निवृत्तेऽप्यज्ञाने द्वैतदर्शनस्य अनपायात्। न हि पृथिव्यादिप्रपञ्चः कर्तृत्वाद्यध्यासनि-

वृत्तिमात्रान्निवर्तते ॥

उच्यते—सत्स्वपि पृथिव्यादिष्वन्तःकरणाध्यासनिवृत्तौ प्रमातृत्वाभावादात्मचैतन्यस्य स्वतो विषयोपरागाभावात् द्वैतदर्शनं न प्राप्नोति अनिन्द्रियस्येव रूपादिदर्शनमित्येकः पक्षः। इतरस्तु सर्वद्वैतनिवृत्तिपक्षः समन्वयसूत्रे वक्ष्यते। तस्मान्निरस्तसकलकर्तृत्वाद्यध्यासं अपाकृतद्वैतदर्शनं अनतिशयानन्दप्रकाशमानब्रह्मस्वरूपावस्थानं निःश्रेयसं वेदान्तविचारस्य प्रयोजनमिति रमणीयम् ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यस्य
प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे
चतुर्थवर्णकं समाप्तम् ॥
॥ जिज्ञासाधिकरणं च ॥

---

तत्त्वज्ञानेन निखिलप्रपञ्चोपादानाज्ञाननिवृत्तौ न द्वैतस्य स्थितिः। न च वियदादिकं न अविद्याकार्यम्, किं तु मायाकार्यमिति वाच्यम्; तदभेदस्य साधितत्वात्। अतो नायं पक्षः साधीयानित्यभिप्रेत्याह—इतरस्तु सर्वद्वैतनिवृत्तिपक्ष इति ॥ भा.

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथाश्रमपूज्यपादशिष्य-
श्रीनृसिंहाश्रम विरचितायां पञ्चपादिकाविवरणव्याख्यायां
भावप्रकाशिकायां चतुर्थवर्णकं समाप्तम् ॥
॥ जिज्ञासाधिकरणं च ॥

## ॥ अथ पञ्चमवर्णकम् ॥

जगज्जन्मस्थितिध्वंसा यतः सिध्यन्ति कारणात् ।
तत् स्वरूपतटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यते ॥

वृत्तसङ्कीर्तनभाष्यस्य अन्तर्णीतविचारार्थोपादानेन अर्थं कथयति
293 - 2 —ब्रह्म जिज्ञासितव्यमित्युक्तमित्यादिना। ननु ब्रह्मविचारप्रतिज्ञायां साध-
293 - 3 नादिविचाराणामप्रतिज्ञातत्वादसाध्यतेत्यत आह—यदैवेदमु[मित्यु]क्त-
मित्यादिना । ननु पञ्चानां विचाराणां प्रतिज्ञातत्त्वे किमिति
स्वरूपमेव प्रथमं विचार्यते ? । फलभूततया प्राधान्यादिति चेत्—न,
साधनाद्यधीनत्वात् साध्यसिद्धेः तेषामेव प्रथमं विचारः क्रियतामिति ;
293 - 5 अत आह—तत्र स्वरूपस्याभ्यर्हितत्वादिति । ब्रह्मप्रमाणं ब्रह्मयुक्तिर्ब्रह्मसाधनं
ब्रह्मफलमिति विशिष्टविचाराणां ब्रह्मविशेषणसापेक्षत्वात् ब्रह्मस्व-
रूपनिर्णयस्य चानन्यापेक्षत्वात् प्राधान्येन साध्यत्वाच्चेत्यर्थः ॥
293 - 6 वृत्तं सङ्कीर्त्य उत्तरेण आकाङ्क्षापुरस्सरं सम्बन्धमाह—किंलक्षणं
पुनस्तदिति। जिज्ञास्यपुरुषार्थब्रह्मस्वरूपप्रदर्शननिमित्तमाचार्यं पूजयति—
293 - 6 भगवानिति। ननु 'अस्येदं लक्षणम्, इदं वानेन लक्ष्यम्' इति लक्ष्यलक्षण-
योरव्याप्त्यतिव्याप्तिपरिहारेण अविनाभावः प्रमाणयुक्तिव्यतिरेकेण न
293 - 7 सिद्ध्यति, तत् कथं स्वरूपलक्षणपरमेव सूत्रमिति ? तत्राह—युक्तिरपि
लक्षणनिर्णयेऽर्थादिति । अपिशब्दात् प्रमाणमपीत्यर्थः । अत्र च सूत्रि-
293 - 8 तयोर्ब्रह्मणि प्रमाणयुक्त्योरध्यायद्वयेन निर्णयः क्रियते । जन्म उत्पत्तिः
294 - 2 293 - 8 इत्यारभ्य तृतीयलिङ्गेत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः । तद्गुणसंविज्ञान

---

ता.

जन्मादिसूत्रस्य सङ्क्षेपतस्तात्पर्यमाह—**जगदिति** । समन्वयाविरो-
धाभ्यां प्रमाणयुक्त्योः प्रतिपादनात् अत्रापि तत्प्रतिपादने पौनरुक्त्यमित्यत
आह—**अत्र च सूत्रितयोरिति** ॥

---

भा.

यतोऽनतिशयानन्दादज्ञातान्निखिलं जगत् ।
जातं स्थित्वा तिरोधत्ते तं वन्दे नृहरिं गुरुम् ॥

ननु अस्मिन् सूत्रे 'जन्मादी'त्यादिपदम् 'जन्मस्थितभङ्गं समासार्थः'
इति भाष्यं चानुपपन्नम् । जन्मन एव लक्षणत्वे सम्भवति स्थित्यादेर-

इति। **विशेष्यैकदेशमेव विशेषणं कृत्वा समास इत्यर्थः। ननु एवमपि जन्मस्थितिभङ्गाः त्रयोऽपि विशेष्याः, तत्कथमेकत्वनिर्देशः? इत्यत आह**

---

भा. नपेक्षितत्वात्। तथा हि—लक्षणेऽतिव्याप्त्यादिवारकं विशेषणमुपादीयते। न च जगज्जन्मकारणत्वं ब्रह्मणोऽन्यस्य सम्भवति, परमाण्वादीनामसत्त्वात्। सत्त्वे वा, निमित्तत्वे सत्युपादानत्वस्य वक्ष्यमाणस्य तत्राभावात्। अत एव न मायायामतिव्याप्तिः। स्थित्यादिकारणत्वस्य तत्र सत्त्वाच्च (एतेना)-[तेन ना]तिव्याप्तिनिवृत्तिः। नापि जगज्जन्मकारणत्वस्य अव्याप्तिनिवृत्तये स्थित्यादिग्रहणम्। ब्रह्ममात्रस्य लक्ष्यत्वात्। तत्र च अविशेषितस्य जन्मकारणत्वस्य सत्त्वात्। अत एव [स्थि]त्यादिना अविशेषितस्य नासम्भवोऽपि। ननु यदि [जन्मकारणत्वं] लक्षणं तर्हि पालनादिकारणमन्यदेव स्यादिति परिच्छिन्नं जन्मकारणमिति जन्ममात्रकारणत्वस्य ब्रह्मण्यसम्भवः स्यात्, अतः त्रितयकारणत्वमेव पू(र्व)[र्ण]ब्रह्मधर्मः इत्यसम्भवपरिहाराय विशेषणमर्थवदिति चेत्; यदि पालनादिकारणं अन्यत् स्यात् [तदा एवं स्यात्]। न च तत्। तत्र मानाभावात्। ब्रह्मैव त्रितयकारणं सर्वत्र श्रूयते। लक्षणं तु तस्यैककारणत्वमात्रमित्येतावदिहोच्यते। न हि त्रितयकारणत्वाधिकरणमेककारणत्वाधिकरणं न भवति। ननु एवमप्यादिपदं व्यर्थम्, जन्मकारणत्वस्येव स्थित्यादिकारणत्वस्यापि पृथक् लक्षणत्वसम्भवेन अनेकलक्षणज्ञापनार्थत्वादिति चेत्; सत्यम्, तर्हि साहित्यस्याविवक्षितत्वेन तृतीयलिङ्गनिर्देशानुपपत्तेः इति शङ्कते—**नन्वेवमपि जन्मस्थितिभङ्गास्त्रयोऽपि विशेष्या इति॥**

सत्यम्, जन्मकारणत्वमेव ब्रह्म लक्षयितुं शक्नोति। तच्च तदितरकारणत्वसमानाधिकरणमेव ब्रह्मधर्मः। अन्यथा तदाश्रयस्य स्थित्यादिकारणात् व्यावृत्तत्वेनाब्रह्मतया तस्य ब्रह्मण्यसम्भवापातात्। ननु यत् वियदादिकरणं तस्य ब्रह्मशब्दप्रयोगात् श्रुतौ तदेव ब्रह्मेति नास्यासम्भवः इति चेत्; सत्यम्, न हि जन्मकारणत्वं ब्रह्मपदप्रवृत्तिनिमित्तम्; किं तु ब्रह्मपदार्थस्य जगत्कारणत्वं धर्मः। 'यतः,' इति यच्छब्दप्रकृत्यर्थस्यैव 'तद्विजिज्ञासस्व' इति तच्छब्देन अनुकृष्य जिज्ञास्यतयोक्तस्य 'तत् ब्रह्म' इत्यत्र तच्छब्देन परामर्शात्। न हि

294 - 2-3 —तृतीयलिङ्गेति। जन्मादीनामादिमध्यावसानमाक्षिपति—नन्वादिरिति।
294 - 4-5 परिहरति—जन्मनश्चादित्वमिति। भाष्यं व्याचष्टे—यदनेन सूत्रेणेति। ननु सर्वं जनित्वैव नश्यति न कश्चित्कालं तिष्ठति स्वसत्ताप्रयुक्तत्वा-
294 - 8-9 द्विनाशस्येत्यत आह—क्षणिकत्वनिराकरणादिति। अतो जनित्वा इत्यादिः स्पष्टार्थः। ननु इदंशब्दः किञ्चिदेव सन्निहितं गमयति नाखिलं
295 - 2 जगदित्यत आह—तथा हि—सर्वत्रेति। ननु जन्मादीनां जगतश्च कः
295 - 5 सम्बन्धः षष्ठ्या विवक्षित इति; तदाह—सर्व एवेति। ननु जगज्जन्म-स्थितिभङ्गं किंसम्बन्धितया लक्षणं भवति? न तावत् काकवल्लक्ष्य-सम्बन्धितया, जगदाश्रयत्वाद्धर्माणां इति; कारणसम्बन्धितयेत्याह—
295 - 7 यत इति कारणनिर्देश इति॥

---

भा. जन्मकारणत्वं यत्पदप्रकृत्यर्थः। न वा जिज्ञास्यम्। किं तु तदाश्रयभूतमद्वैतम्॥

किं चैवं विनिगमकाभावात् जन्मादिकारणत्वत्रयं ब्रह्मपदार्थ इति (तर्ह्य) [तस्या]नेकार्थत्वापत्तिः। अव्यवहितलय[कारण]त्वं वा तदर्थः स्यात्। मिलितत्रितयनिरूपितकारणत्वं तु जन्मादीनां समाहारविवक्षां विना न सिध्यति। किं च, (ब्रह्मणि शब्दवत्) [ब्रह्मशब्दस्य] ब्रह्मणि न रूढिः कल्प्या। क्लृप्तयोगसम्भवे रूढेरकल्प्यत्वात्। न च जगत्कारणत्वे तद्विशिष्टे वा ब्रह्मशब्दस्य योगोऽस्ति। सर्वात्मतायोग्ये तु स्वरूपोपचयलक्षणा वृद्धिर्भवतीति तस्मिन् सम्भवति योग इति तदेव ब्रह्म लक्ष्यम्॥

अपि च, जिज्ञासासूत्रे अद्वैतब्रह्म जिज्ञास्यमुक्तम्, जिज्ञासासूत्रमूलश्रवणविधिस्थात्मशब्देन 'इदं सर्वं यदयमात्मा' 'आत्मनि खल्वरे दृष्टे' इति 'यतः' इति वाक्यसिद्धाद्वैतात्मन एवाभिहितत्वेन सूत्रस्थब्रह्मशब्देनापि तस्यैव वक्तव्यत्वात्। अन्यजिज्ञासया जीवस्य कर्तृत्वादिभ्रमनिवृत्त्यसम्भवाच्चाद्वैतमेव ब्रह्म जिज्ञास्यम्। ततश्च लक्षणपि तस्यैव वक्तव्यम्। एवं च य(त्)[दि] प्रत्येकमेव जन्मादिकारणत्वं लक्षणं तदितरकारणत्वसमानाधिकरणमेव ब्रह्म लक्षणं भवितुमर्हतीति द्योतयितुं समाहारो विवक्षित इति आदिशब्दः तृतीयलिङ्गव्यपदेशश्चोपपद्यत इत्याह—तृतीयलिङ्गेतीति॥

ननु जगज्जन्मादिकारणत्वमपि लक्षणान्तर्गतम्? आहोस्विल्लक्ष्यस्वरूपान्तर्गतम्? इति वक्तव्यम्। ननु गृहस्य काकाधिकरणत्वं नाम धर्मः कस्मिन्नन्तर्भवति?। लक्ष्य इति चेत्, काकाधिकरणत्वं च गृहशब्दार्थः स्यात्। ततश्च काकविगमे गृहैकदेशभङ्गबुद्धिः स्यात्। लक्षणान्तर्गतमिति चेत्, कारणत्वमपि तथा। न हि नानाविधकार्यक्रियावेशात्मकत्वं तत्प्रसवशक्त्यात्मकत्वं वा जिज्ञास्यविशुद्धब्रह्मान्तर्गतं भवितुमर्हति। तस्मात् जगज्जन्मादिकारणत्वमेवोपलक्षणमिति ॥

ता. प्रतिबन्दिन्यायेन परिहरति—ननु गृहस्येति ॥

भा. यत्तु आद्यस्य हिरण्यगर्भस्य सर्गाद्यकार्यस्य जन्म यतो भवतीति सूत्रार्थ इति न सूत्रे तृतीयलिङ्गनिर्देश इति; तन्न—उक्तविधया जन्मकारणत्वमात्रस्य ब्रह्मलक्षणत्वानुपपत्तेः। स्थित्यादिकारणस्य त्वदुक्तविधया असङ्ग्रहात्। किं च, हिरण्यगर्भस्य चैतन्यस्य अनादित्वात् न तज्जन्मान्वयः। तच्छरीरं च नाद्यम्। न हि सूक्ष्माकाशमात्रं हिरण्यगर्भशरीरं भवतीति। न च तन्मात्रकारणत्वं ब्रह्मणो लक्षणमिह निर्दिश्यते। ब्रह्मणो वाय्वादिकारणत्वस्येहासिद्धिप्रसङ्गात्। न च अन्यत्र तत् व्युत्पाद्यते। न च समानन्यायतया अनुक्तमपि तत् सिध्यतीति वाच्यम्; न हि येनैकं क्रियते[तेन अन्यदपि कर्त]व्यमिति नियमः। नियमो वा। समानन्यायगोचराणां समानश्रुतिविषयाणां तेषां परिसङ्ख्याने बीजाभावात्। 'भूतानि जायन्ते' इति श्रुतिनिर्दिष्टनिखिलभूतग्रहणमेव सूत्रे उचितमिति सूत्रे भगवत्पादीयपदविभाग एव युक्त इति ॥

ननु तत्र न तावन्निमित्तत्वं लक्षणम्; ब्रह्मणि तस्य दुर्निरूपत्वात्। तथा हि—तद्धि ब्रह्मणः कर्तृत्वेन वक्तव्यम्। चेतनस्य ततोऽन्यथा निमित्तत्वे प्रमाणाभावात्। तस्य सिद्धान्तिना अनङ्गीकृतत्वाच्च। तच्चोपादानापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्? ज्ञानवत्त्वमात्रं वा?। नाद्यः, अवाप्तनिखिलपुरुषार्थरूपे ब्रह्मणि इच्छाप्रयत्नयोरनुपपत्तेः। स्वेष्टसाधनताज्ञानाद्धि चिकीर्षा वक्तव्या। परेष्टसाधनत्वेन अवगतेषु उदासीनस्य चिकीर्षाया अदर्शनात्। न च कृपालवोऽन्यत्रापि प्रवर्तन्त इति वाच्यम्; ये हि परदुःखेन दुःखिनः तेऽपि निमित्तान्तरम-

भा. नपेक्षमाणा अपि स्वदुःखनिवृत्त्यर्थमेव प्रवर्तन्त इति न क्लृप्तनिमित्तत्यागो युक्तः। ततश्च न प्रयत्नोऽपि। (न चिकीर्षार्थः। एवमपि) [एवमपि चिकीर्षाद्यर्थमपि] चिकीर्षादिकमपेक्षणीयमिति तदभावात् सर्गाद्यकालीनयोस्तयोरनुत्पादप्रसङ्गः। ब्रह्मणो वा न निखिलकर्तृत्वं स्यात्। न च अनाद्येव तदुभयमिति वाच्यम्; चिकीर्षामात्रे इष्टसाधनताज्ञानस्य कृतिमात्रे च चिकीर्षायाः कारणत्वनियमात्। अनादितत्सद्भावे प्रमाणाभावाच्च। न च कार्यमेव प्रमाणमिति वाच्यम्; घटादावपि तदकारणत्वस्य अग्रे वक्ष्यमाणत्वेन ततस्तदसिद्धेः। 'सोऽकामयत' इत्यादिश्रुतिश्च चेतनकारणत्वपरा, न त्ववाप्तकामस्यैच्छादिसंसर्गपरा। 'कामः सङ्कल्पः' इत्यादिश्रुत्या अनुभवेन चान्तःकरणधर्मतया सिद्धयोस्तयोरनन्तःकरणे ब्रह्मण्ययोगाच्च। किं चैवमुत्पन्नविनष्टयोरपि चिकीर्षासद्भावात् कृतिसाध्यत्वप्रसङ्गः। न च प्रतिपदार्थमनादिभूता चिकीर्षा तदुत्पत्तिमात्रेण निवर्तत इत्यत्र प्रमाणमस्ति। सत्यामपि चिकीर्षायां सिद्धत्वज्ञाने प्रवृत्तिः प्रतिबद्धेति चेत्, साध्वेतत्, सत्यसङ्कल्पस्यापीश्वरस्येच्छा कुतश्चिद्विहतेति। अयोग्यमपि चिकीर्षतीति भ्रान्तोऽसर्वज्ञश्च स्यात्। न च उत्पन्नपदार्थे इच्छायाश्चिकीर्षात्वं नास्तीति वाच्यम्; चिकीर्षात्वं हि कृतिसाध्यत्वप्रकारकेच्छात्वम्। तच्चेच्छास्वरूपविशेष एवेति न तस्यां सत्यां तन्निवृत्तिः। अतिरिक्तत्वेऽप्यनादिभूतस्य प्रकारविशेषस्य तत्त्वज्ञानादृते अनिवृत्तेश्च॥

यत्तु—अदृष्टादिसामग्र्युपधानमेवेश्वरेच्छायाश्चिकीर्षात्वम्, तच्चोत्पन्ने नास्तीति न तदिच्छा, न वा चिकीर्षेति। तन्न—'एतत् कर्तुमिच्छामि' इत्यनुभूयमानस्य चिकीर्षात्वस्य अदृष्टघटितत्वानुपपत्तेः। इच्छामात्रस्य कारणत्वायोगेन तद्विशेषचिकीर्षात्वस्य अदृष्टाद्यघटितस्यैव वक्तव्यत्वात्। तस्मादनित्यैव चिकीर्षा कृतिश्चेति न तद्घटितं कर्तृत्वमीश्वरस्य सम्भवति॥

नापि ज्ञानवत्त्वमात्रं कर्तृत्वम्। उदासीनानामपि घटादौ कर्तृत्वप्रसङ्गात्। ननु स्वतन्त्रः कर्ता स्वातन्त्र्यं च इतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम्। (कर्तृ तच्च) [तच्च कर्तृत्वं] ईश्वरे समस्ति इति चेत्, न—

**ननु निमित्तकारणत्वं उपादानकारणत्वं उभयं वा उपलक्षणत्वेनोच्यते? न तावत् निमित्तकारणत्वमेव ब्रह्मोपलक्षणम्। जगदभिन्नस्य उपादानकारणस्य भेदेनावस्थानात् ब्रह्मशब्दस्य स्वार्थान्वयाभावप्रसङ्गात्। नाप्युपादानकारणत्वमुपलक्षणम्।**

---

ता. **स्वार्थान्वयाभावप्रसङ्गात्**—बृहत्यर्थान्वयाभावप्रसङ्गादित्यर्थः ॥

---

भा. तत्प्रयोक्तृत्वं हि तद्व्यापारयितृत्वम्। व्यापार(श्च)[यितृत्वं च] न परिस्पन्दः, सर्वगते तदयोगात्। नापि प्रयत्नः, तस्य निरस्तत्वात्। एतेन— क्रियाश्रयत्वं कर्तृत्वम्, क्रिया च परिणामरूपा ब्रह्मण्यपि सम्भवति इति निरस्तम्। क्रियाकर्तृत्वस्यैवायोगाच्च, प्रयत्नातिरिक्तक्रियायाः कर्तृत्वाप्रयोजकत्वात् इत्यभिप्रेत्याह—**न तावन्निमित्तकारणत्वमिति** ॥

दूषणान्तरमाह **[जगदभि]न्नस्येति**। तदा [जगतो] निमित्तोपादानाभेदस्य सूत्रानुपात्तत्वेन न्यायतस्त (त्सि)[दसि]द्धेः तयोर्भेद एव स्यादिति ब्रह्मशब्दोपस्थितानवच्छिन्नवस्तुनो भेदः लक्षणं स्यादित्यर्थः। एवमुपादानत्वमपि तस्य न सम्भवतीति न तदपि लक्षणमित्याह—**नाप्युपादानकारणत्वमिति**। अयं भावः— किमिदमुपादानत्वम्?। विकारवत्त्वमिति चेत्, न तर्हि (तद्धि)-[निर्वि]कारस्य ब्रह्मण उपादानत्वम् ॥

किं च, विकारवत्त्वं न विकारसमवायवत्त्वम्, समवायस्यैवाभावात्। स च न प्रत्यक्षतस्तावत् सिध्यति। तदाकारानुभवादर्शनात्। न च शुक्लो घटः इत्यादिविशिष्टप्रत्ययो विशेषणविशेष्यवैशिष्ट्यविषय इति प्रत्यक्षमेव तत्र प्रमाणमिति वाच्यम्। विशिष्टप्रत्ययेन हि विशेषणविशेष्यसम्बन्धमात्रं सिध्यति। न तु समवायः। तथा च सति विशेषणादिवत् तत्राप्यविप्रतिपत्तिप्रसङ्गात्। [ननु] विशिष्टप्रत्ययत्वेन गुणक्रियाजातिभिः द्रव्यस्य सम्बन्धानुमाने लाघवात् एकं सिध्यति, स च समवाय एव, तदन्यस्यैकस्यासम्भवादिति चेत्, न— स्वरूपसम्बन्धः सम्बन्ध्यतिरिक्त इति मते तेनैवार्थान्तरत्वात्। अतिरिक्तसम्बन्धकल्पनागौरवप्रतिहतत्वाच्च। विशिष्टप्रत्ययस्याभावविशिष्टप्रत्ययवदन्यथोपपत्तेश्च ॥

**निमित्तकारणस्य सर्वज्ञस्य भेदेनावस्थानात् 'यतः सर्वज्ञात् सर्वशक्तेः' इति व्यपदेशो न स्यात्। उपादानकारणस्य लोकेऽचेतनत्वात्। 'सत्यं ज्ञानमनन्तम्' इति च स्वरूपलक्षणस्योभयत्रायोगात्। नाप्युभयकारणत्वं ब्रह्मोपलक्षणम्; एकस्योभयकारणत्वे प्रमाणाभावात्। प्रमा-**

---

ता.

प्रत्येकं दोषमभिधाय उभयपक्षे दूषणमाह—**सत्यं ज्ञानमिति**। केवलोपादानत्वाङ्गीकारे अनन्तं ज्ञानमिति च न स्यात्। निमित्तकारणस्य पृथगवस्थानात्। उपादानस्य चाचेतनत्वात्। निमित्तत्वे पुनरनन्तमिति न स्यात् उपादानस्य पृथगवस्थानादित्यर्थः ॥

---

भा.

किं च, समवायस्यैकत्वे गगनादौ नीलिमादिप्रतीतिरपि समवायविषया। तत्र रूपादिप्रतीतिः प्रमैव स्यात्, तस्य तत्र सत्त्वात्। तथापि तत्र रूपं नास्तीति चेत्, न—तत्समवाये सति सत्यां च तत्प्रतीतौ तदभावस्य वक्तुमशक्यत्वात्। प्रतीतिर्बाधितेति चेत्; तत्सम्बन्धप्रतीतिभ्यां बाधकानामेवाभासत्वात्। एतेन—समवायविषया तत्र रूपादिप्रतीतिरप्रमैव सम्बन्धान्तरविषया सा प्रमेति निरस्तम्। रूपप्रतीतिर्हि समवायमाधाराधेयं च विषयीकरोति। तदुभयं चेहाप्यस्त्येव। तत्राविद्यमानानामपि सम्बन्धमात्रविषयतया अनेकज्ञानानां प्रमात्वदर्शनाच्च। भूतलकालादेरपि घटाद्युपादानत्वप्रसङ्गाच्च। अनेकसमवाये च न किञ्चित् प्रमाणम्। नापि विकारवत्त्वं तत्तादात्म्यम्। [तादात्म्यं] यद्यभेदः; तन्न—कार्यकारण(बाधा)[भावा]योगात्। नापि भेदाभेदात्मकम्, विरोधात् इति ॥

दूषणान्तरमाह— **निमित्तकारणस्येति । एकस्योभयकारणत्वे प्रमाणाभावादिति**। न तावत् ब्रह्मणः कर्तृत्वे प्रमाणमस्ति। आत्मत्वेन तदनुमानस्याप्रयोजकत्वात्, तेन जगत्कर्तृत्वासिद्धेश्च। नापि क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् इति तदनुमानम्। घटादेर्हि सकर्तृकत्वं (यद्यु)-[न हि उ]पादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्य(त्वस्य) [त्वम्]; तत्र प्रमाणाभावात्। अन्वयव्यतिरेकानु[मानं] मानमिति चेत्, न—परस्य ज्ञानादिना

णान्तरसिद्धं हि लक्षणमनधिगतलक्ष्यस्वरूपाधिगमायालम् । न तावदेकस्य

---

भा· घटादेरन्वयाद्यनवगमात् । न च चेष्टादिना परस्यापि ज्ञानादिकमनुमाय घटादेस्तस्यान्वयव्यतिरेकावगम इति वाच्यम्; घटादिकारणचेष्टाकारणत्वेनोपस्थितस्य घटाद्यहेतुत्वात् । न च चेष्टा द्वारम्, ज्ञानादिकारणताग्रहात् पूर्वमेव तस्याः स्वातन्त्र्येणोपस्थितायाः कारणत्वग्रहेण द्वारत्वायोगात् । अन्यकारणत्वोपपादनाय कल्प्यमानं हि द्वारं भवति, यथा अपूर्वं संस्कारो वा । अन्यथा मनस्संयोगोऽपि ज्ञानादिद्वारा घटादौ कारणमिति [चेष्टा]कारणं न भवेत् । स्वस्यापि चेष्टाकारणत्वमगृहीत्वा न ज्ञानादिकारणत्वग्रहः सम्भवति । तेन [न] ज्ञानादेर्घटकारणता ॥

नापि चेष्टावत्कारणत्वं कर्तृत्वम् । ब्रह्मणि तदसम्भवात् । नापि 'इद सर्वमसृजत' इति श्रुत्या तत्सिद्धिः । तस्याः सिद्धान्ते (आवर....त्वात्) [अचेतनकारणनिरासपरत्वात्] । एवमुपादानत्वेऽपि न ब्रह्मणो मानमस्ति । न च 'पृथिव्यादिकार्यं चेतनोपादानकं कार्यत्वात् दुःखादिवत्' इति तत्सिद्धिरिति वाच्यम्; सर्वं जीवोपादानं तत एव तद्वदित्याभाससमत्वात् । कार्यानुगमस्य सर्वत्र तुल्यत्वात् । ब्रह्मणि वर्णितरीत्या उपादानत्वासम्भवेन बाधितत्वाच्च । अत एव न 'आत्मनः' इत्यादिपञ्चमीश्रुत्या तत्सिद्धिः । सृष्टिश्रुतिः कारणत्वांशे अनुवादः, तदेकत्वांशे प्रमाणमिति सिद्धान्तव्याकोपाच्च ॥

किं च, पञ्चमीश्रुतिर्नोपादानत्वे प्रमाणम्, 'वृक्षात् पर्णं पतति' इत्यत्र वृक्षस्यानुपादानत्वात् । न च 'जनिकर्तुः प्रकृतिः' इति सूत्रविहितपञ्चमी उपादानार्था । वृत्तौ 'पुत्रात् प्रमोदो जायते' इत्यस्याप्युदाहृतत्वेन तस्या अपि(साधा)[का]रणार्थत्वात् । नाप्यर्थापत्तिः ब्रह्मण उपादानत्वे मानम् । न तावत् कार्यानुपपत्तिः । तस्य प्रधानपरमाणुभ्यामुपपत्तेः । वस्तुतो जडप्रपञ्चस्य जडमेव उपादानम् । अन्यथा प्रपञ्चे जाड्यानुपपत्तेः । नापि ब्रह्मणोऽनवच्छिन्नत्वानुपपत्तिः । जगदुपादानत्वे सिद्धे हि तस्य तत्सिद्धिरिति । एवं ब्रह्मण उपादानत्वादि एकैकं न सिध्यति प्रमाणाभावादित्युक्तम् । इदानीमेकैकरूपे तत्सत्त्वेऽपि नोभयरूपत्वं तस्य सिध्यति प्रमाणाभावादित्याह—**न तावदेकस्येति** ॥

**जगन्निमित्तोपादानत्वमनुमानेनावगन्तुं शक्यम् ; दृष्टान्ते भेददर्शनात्। महाभूतपञ्चकव्यतिरिक्तेषु पदार्थेषु नानाविधनिमित्तोपादानदर्शनान्न तदनुवादेन ब्रह्म विधातुं शक्यम् , भूतपञ्चकनिमित्तोपादानत्वमेकस्या-**
295 - 7 **प्रसिद्धमिति ; तत्राह**—प्रकृतित्वनिबन्धना हि पञ्चमीति। **निमित्तत्व-**

ता.

महाभूतव्यतिरिक्तजन्मादिकारणत्वमुपलक्षणम् ? किं वा महाभूतकारणत्वम् ? इति विकल्प्य, क्रमेण दूषयति—**महाभूतेति** ॥

भा.

उभयकारणत्वं ब्रह्मणो लक्षणमित्याह—**निमित्तत्वस्याप्युपलक्षणमिति**। तत्र मायायामतिव्याप्तिवारणाय निमित्तपदोपादानम्। पराभिमतेश्वरे भौतिकप्रपञ्चकर्तरि जीवे चातिव्याप्तिवारणाय उपादानत्वमिति द्रष्टव्यम्। न च मुक्तावात्मन्येतस्याभावाद(ति)व्याप्तिः, तटस्थलक्षणस्य कदाचिल्लक्ष्यसम्बन्धमात्रस्यैवापेक्षितत्वात्। नाप्यसम्भवः। तत्र न तावदुपादानत्वाभावः। यदभिन्नं कार्यमुत्पद्यते तत्कारणमुपादानम्। अभेदश्चात्र तादात्म्यम् , न भेदाभावस्वरूप एव। अभिन्ने तादात्म्यं च भिन्नत्वे सत्यभिन्नसत्ताकत्वम्, सत्तानवच्छेदकभेदवत्त्वमिति यावत्। भेदसत्ताऽविरोध्यनिर्वचनीयः कश्चन धर्मो वा। एतच्च मृद्घटयोरेव, न दण्डघटयोः। मृद्घटः इतिवत् दण्डो घट इति सामानाधिकरण्यप्रतीतेरभावात् दण्डाभावेऽपि घटसत्त्वदर्शनाच्चेति तत्र नोपादानत्वम्। न च उपादानोपादेययोर्भेदस्यासत्त्वे उपादानोपादेयभाव एव अनुपपन्नः इति वाच्यम् ; अनिर्वचनीयभेदमात्रेण तदुपपत्तेः। एतच्च उपादानत्वं ब्रह्मणोऽप्यस्त्येव। न चैवं ब्रह्मणो निर्विकारत्वभङ्गः। कल्पितस्य नभोनीलिमवदधिकरणस्वभावाविरोधात्। न च निमित्तत्वासम्भवः। कार्यानुकूलज्ञानवत्त्वं हि कर्तृत्वम्। तच्च लोकेऽप्यस्ति। कुलालादिज्ञानस्यापि परम्परया कार्यानुकूलत्वात्। अनुकूलत्वं च कारणतत्कारणसाधारणम्। न चैवं उदासीनस्य कर्तृत्वप्रसङ्गः। तज्ज्ञानस्य कार्याननुकूलत्वात्। न च चिकीर्षादावुक्तदोषो ज्ञानेऽस्ति ; तस्याविद्यादिविषयस्य ब्रह्मस्वरूपतया तदकर्तृत्वात् । न

**स्याप्युपलक्षणमेतत् । उभयत्र पञ्चमीविधानात् । भूतपञ्चकस्य तावदेका प्रकृतिरनुमीयते । सद्वस्त्वेकस्वभावानुगमात् । तथा हि—महाभूतानि**

---

ता. **उभयत्रेति ।** 'जनिकर्तुः प्रकृतिः' इति प्रकृतौ 'हेतौ' इति च निमित्तेऽपि **पञ्चमीविधाना**दित्यर्थः ॥

**भूतपञ्चकनिमित्तोपादानत्वमेकस्याप्रसिद्धमिति** यदुक्तम्, तत्राह—**भूतपञ्चकस्येति ।** कार्यकारणयोरुभयोरप्येकस्वभावानुरक्तत्वमस्ति, तेन

---

भा. चैवमपि ज्ञानवत्त्वमसिद्धमिति वाच्यम्; अविद्यायाः सूक्ष्मरूपकार्याणां च तस्मिन् सत्त्वेन औपाधिकभेदेन तद्वत्त्वोपपत्तेः । चेतनत्वे सति कारणत्वं वा कर्तृत्वम् । लोके कुलालादिचेतनस्यापि कारणत्वात् । चिकीर्षादिकं च शरीरमिव कार्यविशेषे कारणमिति न तदन्वयव्यतिरेकविरोधः । न च उपादानस्या(पि)कर्तृत्वम्, (तस्य कारणत्वे)[तत्त्वे] प्रमाणाभावादिति । 'जनिकर्तुः' (तत्र)[उभयत्र]प्रमाणाभाव इत्याह—**उभयत्र पञ्चमीविधानादिति** । 'जनिकर्तुः' इति सूत्रेण निमित्तोपादानसाधारणेऽर्थे पञ्चमीविधानात् उभयमपि पञ्चम्येहोपादीयते । एवम् 'तदैक्षत बहु स्याम्' इति श्रुतौ कारणस्य ईक्षणबहुभवनश्रवणात् उभयकारणत्वम् । न च कारणत्वस्य श्रुतिप्रतिपाद्यत्वे सिद्धान्तविरोधः । श्रुतितात्पर्याभावेनातदर्थत्वेऽपि तदनुवादप्रतीतिजनकतया परं प्रति तदुपन्यासोपपत्तिरिति प्राप्तस्यानुवा* ॥

परमात्मकर्तृत्वस्य कार्यानुमानात् सिद्धिः सर्वसम्मतेति (अपेक्षितस्य)[तदुपेक्ष्य]उपादानत्वे प्रमाणमाह—**तथा हीत्यादिना । सद्वस्तुप्रकृतिकानि**—(अज्ञात)[स्वानुगत]प्रकृतिकानीत्यर्थः। अतो न(सिद्धान्ते) दृष्टान्ते साध्यवैकल्यम् । **विकारत्वात्** इत्येव हेतुः । **विविधत्वं** विभक्तत्वम् । तच्च 'यावद्विकारं तु विभागो लोकवत्' इति न्यायेन भूतानां विकारत्वप्रतिपादनाय । न च अन्तःकरणोपादानककामादिवृत्तौ व्यभिचारः । तस्या अपि पक्षसमत्वात् । तच्च (अज्ञातसत्ताकं)[अनुगतं सद्वस्तु]लाघवादेकमिति न परमाणुभिरर्थान्तरता । न च एकस्य अनुपादानत्वात् न ला[घवन्या]य इति वाच्यम् । सत एकत्वेऽप्यनिर्वचनीयमायया अनेकत्वसम्भवात् । रज्जुद्रव्यस्यैकस्यैव सर्पाद्युपादानत्वदर्शनाच्च । न च एवमपि

---

* अत्र ग्रन्थे त्रुटिः ।

**सद्वस्तुप्रकृतिकानि, तत्स्वभावानुरक्तत्वे सति विविधविकारत्वात्, मृदनुस्यूतघटादिवत्। द्रव्यत्वाद्यभेदा अपि प्रकृतिस्वभावा एव सामान्यवदवभासन्ते। सद्वस्तु पुनः सर्वानुगमात् सर्वविकारप्रकृतिः। भौतिकानां**

ता. कारणे अनैकान्तिकता स्यात् इति **विकारत्वादिति पदम्**। विकारत्वसमर्थनार्थं **विविधपदम्**। विभक्तत्वाद्विकार इति यावत्। प्रसिद्धभिन्नप्रकृतिकेषु घटहिमकरकादिष्वनैकान्तिकतापरिहारार्थं **तत्स्वभावानुरक्तत्वे** इति विशेषणम्, **तत्स्वभावानुरक्तत्वे सतीत्यत्र** प्रत्येकमिति विशेषणमवगन्तव्यम्। अन्यथा वनादौ व्यभिचारात्। द्रव्यत्वादिस्वभावानुरक्तत्वेऽपि तत्प्रकृतिकत्वाभावात् अनैकान्तिकता इत्याशङ्क्य परिहरति—**द्रव्यत्वादीति**। द्रव्यत्वादीनामपि प्रकृतिस्वभावाभेदान्न व्यभिचार इत्यर्थः॥

ननु द्रव्येषु द्रव्यत्वं सत्त्वं चानुस्यूतं प्रतिभाति। ततोऽनेकप्रकृतित्वं इत्यत आह—**सद्वस्त्विति**। द्रव्यत्वादीनां सर्वविकारानुवृत्तत्वाभावात् अनु-

भा. प्रकृत्या अर्थान्तरता; अज्ञानातिरिक्तप्रकृतौ प्रमाणाभावात्। तस्य च साध्यविशेषणेन व्यावृत्तत्वात्। अतो ब्रह्मैव प्रपञ्चोपादानम्। अन्यथा तस्य प्रपञ्चे अनुगतिर्न स्यात्, अनुगतं च तत् घटस्सन् पटस्सन्निति, इत्यभिप्रेत्योक्तम्—**तत्स्वभावानुरक्तत्वे सतीति**। ननु सतः प्रपञ्चे अनुगमोऽकारणत्वेऽप्युपपद्यते द्रव्यत्वादेरिव इत्याशङ्क्य, न—तस्यापि प्रकृतिभूतमायास्वभावत्वादित्याह—**द्रव्यत्वाद्यभेदा इति**। अज्ञानमेव हि तत्तद्द्रव्यविशेषतादात्म्यापन्नं द्रव्यत्वादिप्रतीतिविषयः न पराभिमता जातिरित्युक्तम्। ननु घटस्सन्निति प्रतीतिः सत्तासामान्यं विषयीकरोति सामान्यं च न कारणमिति न कारणस्येयमनुगतिरित्याशङ्क्याह—**सद्वस्तु पुनरिति**। सदिति प्रतीयमानं सद्वस्त्वपि सर्वविकारप्रकृतिरेव, न सामान्यम्। कुतः? सर्वानुगमात्। न हि सर्वपदार्थै[रनुग]ता एका जातिरस्ति। न च उपाधिरूपं सामान्यम्; सर्वाधिष्ठानात्मविषय[तया] प्रतीतेरन्यथासिद्धेर्धर्मान्तरकल्पनाऽयोगादिति भावः॥

ननु येषां सद्वस्तूपादानत्वं साध्यते न तेषु तद्बुद्धिरस्ति, अतीन्द्रियत्वान्महाभूतानाम्। यत्र तु भौतिकेषु सद्बुद्धिरस्ति न तत्र सदुपादानत्वम्।

च भूतोपादानत्वं दृश्यमानं मूलप्रकृत्यधीनतामेव सर्वस्य गमयति। अतः सर्वकार्योपादानमेकमेव लाघवादिति न्यायानुगृहीतानुमानेन

---

ता. वृत्तत्वाच्च (त)[स]त्स्वभावस्य एकप्रकृतिकत्वमेवेत्यर्थः। भूतपञ्चकव्यतिरिक्तेषु नानाविधनिमित्तोपादानदर्शनादिति यदुक्तम्, तत्परिहरति—भौतिकानामिति। मूलप्रकृत्यधीनत्वे का युक्तिः? इत्यत आह—लाघवादिति। अस्त्वेक-

---

भा. तेषां भूतोपादानकत्वात्। अतो न सद्बुद्धिः कारणविषयणीत्यत्राह— भौतिकानां चेति। तत्रापि परम्परया सदुपादानं सिध्यतीति सद्बुद्धिः कारणविषयिणी। वस्तुतस्तु सत् साक्षादेव सर्वस्योपादानम्। न च तत्र प्रमाणाभावः। प्रकृतानुमानादेव तत्सिद्धेः। साक्षात् घटादितादात्म्यविषयत्वे सम्भवति परम्परया [तद्विष]यत्वकल्पनाऽयोगात्। न चैवं घटादेरनेकोपादानत्वमनुपपन्नमिति वाच्यम्; यावत्प्रमाणसिद्धोपादानत्वे दोषाभावात्। केचित्तु सदेव प्रकृतिस्वभावं सर्वत्रोपादानम्, मृदादिकं तु सदवच्छेदकमेवेत्याहुः। तदप्युपपन्नमेव। परं तु मृदनुस्यूतघटादिवदिति वदतो मूलकारस्य असम्मतमिति। (अ)[य]तः उपादानोपादेययोरेव अनुगतमतिर्भवति नान्ययोः, तत्रापि व्यावृत्तानि भूतान्येव उपादेयानि, न सत्, तत्त्वनुगतमुपादानमेवेत्युपसंहरति—(तस्मादिति।) [अत इति]॥

एवं घटातिरिक्तं कार्यं स्वोपादानजडातिरिक्तोपादानकम्, कार्यत्वात्, घटवत्। स्वपदं च पक्षमात्रपरमिति न साध्याप्रसिद्धिः। तच्चानुगतबुद्धिगोचरः सदेवाबाधितमिति ब्रह्मोपादानम्, [न] तदतिरिक्तो[पादानक]मिति नाप्याभाससमानता। यत्त्वेवं सति प्रपञ्चस्यापि (स)चेतनत्वापत्तिः चेतनोपादानत्वादिति, तन्न—शुक्लपीताद्यवयवारब्धे चित्रपटे वैशेषिकादिमते शुक्लरूपस्य क्षीरपरिणामे च दधनि मधुररसस्याभावेन कारणगुणानां [स्वसमान]जातीयगुणारम्भकत्वनियमाभावात्। किं च, चैतन्यतादात्म्यमपि घटादावस्त्येव। कथमन्यथा तदापरोक्ष्यम्। न चैवं चेतनाचेतनविभागानुपपत्तिः; अहङ्कार[तदतिरिक्त]विषयत्वात् तद्विभागस्य। अत एव—घटादेश्चैतन्याभ्युपगमे सर्व[त्र चेतन]व्यवहारप्रसङ्ग इति निरस्तम्। अहङ्कारातिरिक्तस्येच्छाद्यसम्भवात्

**सिद्धम् । तस्यैव च निमित्तकारणत्वमनुमानेन कल्प्यते । तथा च— इदं जगदभिन्ननिमित्तोपादानं भवितुमर्हति प्रेक्षापूर्वजनितकार्यत्वात् आत्मगतसुखदुःखरागद्वेषादिवत् । न च घटादिष्वनैकान्तिकता ; तत्राप्यभिन्ननिमित्तोपादानत्वकल्पनात् । अदृष्टादिनिमित्तभेदो दृश्यत इति चेत्, न—उपादानाधिष्ठात्रोरेवैकत्वानुमानात् । तस्मादनुमानेनैव**

---

ता. मुपादानम्, तथापि तस्यैव निमित्तत्वं कथम्? इत्यत आह—**तस्यैवेति** । कार्येऽपि शुक्तिरजतादौ नाभिन्ननिमित्तोपादानकत्वमस्ति, अज्ञानस्योपादानत्वाद्दोषादेश्च निमित्तत्वात्, अतस्तत्र व्यभिचारः, तत्परिहारार्थम्—**प्रेक्षापूर्वेति** विशेषणम् । **कार्यत्वपदं** तु स्पष्टार्थम् । दृष्टान्तस्य साध्यवैकल्यमाशङ्कते—**अदृष्टेति** । अभिन्नोपादानाधिष्ठातृकमिति प्रतिज्ञास्वीकारान्न साध्यविकलो दृष्टान्त इति परिहरति—**नोपादानेति** । अनुमानेन उभयकारणत्वं प्रसाध्य श्रुत्यापि साधयति

---

भा. तदयोगात् न च स्पर्शवत एव द्रव्योपादानत्वनियमात् ब्रह्मणस्तदनुपपन्नमिति वाच्यम् ; स्पर्शवतोऽपि घटादेरनुपादानत्वात् । न च स्पर्शवत्त्वं तद्व्यापकं व्यापकव्यभिचारश्च न दोष इति वाच्यम् । अनुकूलतर्काभावेनाप्रयोजकत्वात् । न चैवं कार्ये स्पर्शनियमो न स्यादिति वाच्यम् । नभोमनसोस्तदभावात् द्रव्योपादाने तमसि तदभावाच्च । कथं तर्हि क्वचित् कार्ये स्पर्शः क्वचिन्नेति व्यवस्था? इति चेत् । (नित्ये)[न–ते]ष्वेवादृष्टात्तदुपपत्तेरिति ॥

एवमात्मन [उपा]दानत्वादौ प्रमाणमुक्त्वा मिलितोभयरूपत्वे प्रमाणमाह—**तस्यैवेत्यादिना** । अत्र कार्यत्वादिति हेतुः । कार्यस्य कर्तृनियमं स्मारयति—**प्रेक्षापूर्वजनितेति** । न च सुखदुःखादावात्मनः कर्तृत्वमसिद्धं उपादानगोचरचिकीर्षादेरसम्भवादिति वाच्यम् ; [कार्यानुकूलज्ञानमात्रस्य] कर्तृत्वप्रयोजकत्वात् । ईश्वरात्मघटसंयोगो वा परं प्रति दृष्टान्तोऽस्तु । न च अप्रयोजकत्वम् ; कर्तुरुपादानस्य चैकत्वे लाघवादिति । **तत्राप्यभिन्ननिमित्तोपादानत्वकल्पनादिति** । कुलालशरी(रत्वान)[रा]वच्छिन्नचैतन्यस्यैव तत्राप्युपादानकर्तृत्वादित्यर्थः ॥

प्रसिद्धमेकस्योभयकारणत्वं लक्षणत्वेन निर्दिश्यते। सृष्टिवाक्यप्रसिद्धं चैकस्योभयकारणत्वं लक्षणत्वेन निर्दिश्यते ॥

तत्र केचित् परिणामवादमवतारयन्ति ॥

तैस्तत्र प्रमाणं वक्तव्यम्। सृष्टिश्रुतय इति चेत्, न—तत्र परिणामशब्दाश्रवणात्। सत्यतोऽन्यथाभावः परिणामो ब्रह्मणोऽपि सत्यतः प्रपञ्चापत्तिं प्रतिपादयतीति चेत्, न—तासु सत्यशब्दाश्रवणात्। स्वतःप्रामाण्यात् तथाभूतैव सृष्टिरिति चेत्, किमिदं तथाभूतत्वं नाम? सत्यत्वमिति चेत्, न—'मिथ्येदं रजतम्' इति विशिष्टेऽर्थे प्रमाणगम्ये स्वप्नसृष्टावपि सत्यबुद्ध्यभावात्। स्वोपाधौ स्वविषयाभावविरोधितेति चेत्, मायात्मकत्वेऽपि समानम्। सृष्टेश्च स्वोपाधावभावव्यावृत्तत्वात्। सर्वे च सोपाधिकधर्माः स्वाश्रयोपाधावबाध्यतया सत्या भवन्ति। ननु सृष्टिरपि स्वरूपेण न बाध्यते; किन्तु परमार्थसत्यत्वांशेन। ननु

---

ता.—सृष्टिवाक्येति। 'बहु स्याम्' इति बहुभवनाशासनलिङ्गेन, 'तदैक्षत' इतीक्षणपूर्वकस्रष्टृत्वेन चोपादानत्वमधिष्ठातृत्वं चैकस्य प्रसिद्धमित्यर्थः ॥

परिणामे सृष्टिश्रुतेः प्रामाण्यं दर्शयितुं तस्य स्वरूपमाह—सत्यत इति। तथाभूतत्वं नाम किं सत्यत्वम्? किं वा स्वोपाधावभावव्यावृत्तत्वं? उत स्वोपाधावबाध्यत्वम्? अथ वा स्वरूपेणाबाध्यत्वम्? इति चतुर्धा विकल्प्य, आद्यं दूषयति—न मिथ्येति। प्रमाणावगतत्वमात्रेण सृष्टिश्रवणादेव वा सत्यताङ्गीकारे, बाध्यत्वाद्यनुमानगम्ये शुक्तिकारजतादौ स्वप्नसृष्टावपि सत्यता स्यादित्यर्थः। द्वितीयं पक्षमनूद्य दूषयति—स्वोपाधाविति। स्वाधिष्ठानभूते ब्रह्मणि श्रुत्यादिप्रतिपन्नसृष्टेः तत्रैव नास्तितताविरोधित्वं (सत्य)[तथाभूत]त्वमिति यावत्। समानत्वमेव दर्शयति—सृष्टेरिति। तृतीयं कल्पं दूषयति—सर्वे चेति। प्रतिबिम्बश्यामतादौ घटाकाशादौ च दर्शनादित्यर्थः। चतुर्थविकल्पं दूषयति—सृष्टिरपीति। स्वरूपेण बाध्यत्वाभावे मिथ्यात्ववाचोयुक्तिः कथम्? इत्यत आह—किं त्विति ॥

मिथ्यासृष्टिविषयत्वे वाक्यस्याप्रामाण्यं स्यात् । न तत् । प्रमाण-व्यापारानभिज्ञो देवानांप्रियः । प्रमाणं हि प्रमेयाभावं न सहते, नाप्रमेयाभावम् । न च सृष्टिश्रुतिः परमार्थसत्यतां प्रमिमीते; तदभिधानाभावात् । यथा 'घटः' इत्युक्ते भावाभावयोः साधारणोऽवभासते अन्यतराभिधानाभावात् तद्वत् । न हि स्वप्नविषया सृष्टिश्रुतिः तत्सत्यतां प्रतिपादयति । प्रयोजनशून्यतया तात्पर्यहीनत्वाच्च न ब्रह्मणः प्रपञ्चापत्तिं प्रतिपादयति । अनर्थहेतुत्वाच्च दुःखतत्साधनपरिणामस्य । न च कर्मकाण्डस्य प्रत्यक्षादेर्वा सिद्धिः प्रयोजनम् ; जगन्नित्यतयाप्युपपत्तेः । सृष्टिश्रुत्यवगमात् प्रागेव सिद्धत्वाच्च । अभेदस्यापि सत्त्वादिरूपेण सिद्धत्वान्न शब्दापेक्षेति चेत्, केयमतिव्याकुलता सर्वसंकरवादिनः ? । न हि नित्यशुद्धबुद्धमुक्तनिरतिशयानन्दप्रकाशमानसर्वज्ञाद्वितीयप्रत्यगात्मभूतं ब्रह्म अवगमात् प्रागेव सिध्यति । किं तर्हि सृष्टिश्रुतेः प्रयोजनम्?

---

ता. सृष्टिश्रुत्या सत्यत्वस्यापि बोधनात् तदभावे प्रामाण्यं न स्यादित्यत आह—**न चेति । यथा घट इति ।** घटपदेनैवास्तित्वाभिधाने घटोऽस्तीति पौनरुक्त्यापातः, नास्तीत्यभिधाने च व्याघातः, सदसत्त्वयोः विरोधात्, अतो घटपदेन भावाभावसाधारणतया घटोऽवभासते । तदुक्तं **धर्मकीर्तिना**—

'घटोऽस्तीति न वक्तव्यं सन्नेव हि घटो यतः ।
नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्त्वयोः ॥'

इति । तथा सृष्टिश्रुतावित्यर्थः । सृष्टिश्रुत्यैव सत्यत्वोक्तावतिप्रसङ्गमाह—**न हीति ।** इतोऽपि न सृष्टिश्रुतेः स्वार्थे तात्पर्यमित्याह—**प्रयोजनेति । प्रत्यक्षादेर्वा सिद्धिरिति ।** तत्प्रामाण्यसिद्धिरित्यर्थः । मीमांसकमतेनार्थापत्तेरन्यथोपपत्तिमाह—**जगन्नित्यतयेति ।** इतोऽपि सृष्टेर्न प्रतिपाद्यत्वमित्याह—**सृष्टिश्रुतीति ॥**

**परिणामवादी** शङ्कते—**अभेदस्यापीति ।** सत्त्वादिरूपेणाभेदसिद्ध्यर्थं नागमापेक्षा किं तु रूपान्तरसिद्ध्यर्थमित्याह—**न हीति ।** स्वपक्षे

प्रत्यक्षादिसिद्धप्रपञ्चस्य ब्रह्मण्येवोत्पत्तिविनाशवत्तया अन्यत्राभावमुपवर्ण्य तत्रापि प्रतिषिध्य मिथ्यात्वापादनेन प्रमाणान्तराविरुद्धतया अद्वितीयब्रह्मस्वरूपसिद्धिः प्रयोजनम्। तेनैकवाक्यत्वात्। अन्यथा शेषिविरोधात्। सृष्ट्याभासत्वात् रजताभासवत् तज्ज्ञानस्याप्रामाण्यमिति चेत्, न—सत्यरजतवत् मुख्यसृष्ट्यन्तराभावात्, तस्या एव मुख्यसृष्टित्वात्, तज्ज्ञानस्य मुख्यरजतज्ञानवत् प्रामाण्यात्। 'देवदत्तो व्याघ्रोऽभवत्' 'माया ह्येषा मया सृष्टा' इत्यादौ मिथ्याकार्येऽपि तद्भावसृष्टिशब्दयोः श्रवणात् ॥

कुतः पुनः सत्यमिथ्यासाधारण्यां सृष्टौ मिथ्यात्वे पक्षपातः?। 'नासदासीन्नो सदासीत्तम आसीत' 'आसीदिदं तमोभूतम्' 'मायां तु प्रकृतिम्' इत्यादौ सदसद्विलक्षणानिर्वचनीयप्रकृतित्वश्रवणात्, तदात्मकत्वाच्च विकारस्य।

'तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥'

इति स्मृतेः तमोऽविद्यामायानां पर्यायत्वात्। तदेवं श्रुत्यवगतायां मिथ्यासृष्टौ सत्यत्वकल्पनायां श्रुतिबाधप्रसङ्गात्। तथा च 'अस्ति घटः'

---

ता. सृष्टिश्रुतेः प्रयोजनं दर्शयति—**प्रत्यक्षादीति**। तत्र हेतुमाह—(**न हीति**) [**तेनेति**।] परमार्थसृष्टिप्रतिपादनेनैकवाक्यता किं न स्यात्? इत्यत आह—**अन्यथेति**। 'सच्च त्यच्चाभवत्' 'स इदं सर्वमसृजत' इत्यादौ तद्भावसृष्टिशब्दयोः प्रयोगात् सृष्टेः पारमार्थिकत्वमित्याशङ्कयाह—**देवदत्त इति**। भवतु कारणस्य मिथ्यात्वम्, कार्यस्य सत्यत्वे को दोषः? इत्यत आह—**तदात्मकत्वादिति**। जगत्कारणस्य ज्ञाननिवर्त्याविद्यारूपत्वाभिधानात् मिथ्यात्वमित्याह—**तमो मोह इति**। क्वचित्तमसः कारणत्वं श्रुतम्, क्वचिदविद्यामाययोः, ततो नैकस्य जगत्कारणस्य सिद्धिरित्यत आह—**तमोऽविद्येति** ॥ इहेदानीं प्रत्यक्षमपि मिथ्यात्वे प्रमाणमित्याह—**तथा चास्तीति**।

---

भा. [अस्ति] घट इत्यादि प्रौढ्यैवोक्तम्। देशकालान्तरविशिष्ट

इत्यस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेणैव बाधो दृश्यते। देशकालयोर्देशकालान्तराभावात् तयोर्द्वयोर्निरुपाधिकनिषेधात् अस्त्यर्थस्यानुयायिनो निषेधाभावात्। अतो देशकालतदुपाधिघटानामस्त्यर्थे ब्रह्मस्वरूपे प्रतिपन्नोपाधौ प्रत्यक्षेणैव बाधात् मिथ्यात्वसिद्धिः। एवं सर्वभावप्रत्ययगोचरे ब्रह्मणि स्वरूपोपाधावस्त्यर्थे कालाद्युपाधिभिः सहाभावप्रत्यक्षेण बाधात् मिथ्यैवेति सिद्धम्। अन्याभावविशिष्टवस्त्वन्तरज्ञानस्य प्रत्यक्षत्वात् ॥

अनुमानमपि—सर्वे विकाराः स्वानुस्यूते एकस्मिन् वस्तुनि परि-

---

ता. प्रतिपन्नस्यान्यत्र कालान्तरे निषेधात् न स्वरूपेण घटस्य निषेध इत्यत आह—**देशकालयोरिति**। न च तयोरप्युपाधिविशिष्टयोर्निषेधः, उपाधेः देशकालविशिष्टस्य निषेधः, देशकालयोश्चोपाधिविशिष्टयोर्निषेधः, इति परस्पराश्रयत्वात्; उपाध्यन्तरस्वीकारे चानवस्थापातात् स्वरूपेणैव नास्तित्वपर्यवसानादिति भावः। अस्त्यर्थस्यापि नास्तीति निषेधान्मिथ्यात्वमित्यत आह—**अस्त्यर्थस्येति**। उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति**। अभावस्य न प्रत्यक्षता, षष्ठप्रमाणगम्यत्वादित्याशङ्क्याह—**अन्याभावेति**। अथ वा, प्रत्यक्षस्य सदर्थविषयत्वादसदर्थविषयत्वं न सम्भवतीत्यत आह—**अन्याभावेति** ॥

**सर्वे विकारा इति**। **शून्यवादिमतेन** सिद्धसाधनपरिहारार्थं—

---

भा. (एवार्थस्त्वर्थे) [एवास्त्यर्थे] घटादेः प्रत्यक्षेण निषेधात्। तत्र च तस्य अप्रतिपन्नत्वात्। देशकालान्तरयोश्च प्रत्यक्षेणानिषेधात्। न हि देशो नास्ति कालो नास्तीति स्वरूपेण तन्निषेधोऽस्ति ॥

सन् घटः इति प्रत्यक्षं घटादेर्मिथ्यात्वे प्रमाणम्। (ता)[तेन च सत्ता] दात्म्यं घटादेर्विषयीक्रियते, न तु सत्तासम्बन्धः। आत्मस्वरूपातिरिक्तसत्तायां प्रमाणाभावात्। सत्तादात्म्यं च सद्भिन्नस्यैवेति सदन्यो घटादिर्मिथ्यैव। आत्मनि कल्पितसत्त्ववैशिष्ट्यं विषयीकरोतीत्या(हुः....**कारा इति**।) [ह—**सर्वे विकारा इति**। अविद्यातिरिक्तदोषाजन्यं वियदादि कार्यं वेत्यर्थः।

**कल्पिताः प्रत्येकमेकस्वभावानुविद्धत्वे सति विभक्तत्वात् चन्द्रभेदवत्, जडत्वात् कार्यत्वात् भेदत्वात् रजतवत् चन्द्रभेदवच्च ॥**

---

ता. **वस्तुनीति** पदम् । **विज्ञानवादिना** अनेकेषु (विषयेषु विज्ञानाकारस्य) [व्यावृत्तज्ञानेषु विषयस्य] कल्पितत्वाङ्गीकारात् सिद्धसाधनता स्यात्, अत उक्तम्—**एकस्मिन्निति**। सर्वमित्यननुगतैकज्ञाने सर्वस्य सौगतेन परिकल्पितत्वाभ्युपगमात् सिद्धसाधनता, तद्व्यावृत्त्यर्थं **अनुस्यूते इति**। **प्रत्येकमेकस्वभावानुविद्धत्वात् विभक्तत्वाच्चेति** हेतुद्वयं द्रष्टव्यम्। वने व्यभिचारपरिहारार्थं **प्रत्येकमिति पदम्**। भेदस्यैव परिकल्पितत्वे हेतुः—**भेदत्वादिति**। अन्यथा विकारेषु भेदत्वाभावेन भागासिद्धिप्रसङ्गात्। **रजतवच्चन्द्रभेदवच्चेति** क्रमेण दृष्टान्तः ॥

---

भा **परिकल्पिताः**। [स्व]रूपेणारोपिता इत्यर्थः। (कुतः) [कुत्र] समारोपिता इत्याकाङ्क्षायामाह—**स्वानुस्यूते इत्यादि**। कल्पितत्वसाध्ये **विभक्तत्वादिति** हेतुः, तच्च धर्मिसमानसत्ताकभेदाश्रय(त्वादि)[त्वमि]ति न ब्रह्मणि व्यभिचारः। सतोऽधिष्ठानत्वे युक्तिमाह—**प्रत्येकमित्यादिना**। (न.... क्षादौ) [वनस्वभावानुविद्धवृक्षादौ] व्यभिचारपरिहाराय–**प्रत्येक**मिति। प्रत्येकं तत्स्वभावानुरक्तत्वादित्यर्थः। न च अप्रयोजकत्वम्, सत्यप्रपञ्चस्य ब्रह्मप्रकृतिकत्वानुपपत्तेः विभागस्य असम्भवात्। तच्च श्रुतिन्यायाभ्यां सिद्धम्, वक्ष्यमाणरीत्या प्रकृत्यन्तरासम्भवाच्चेति ॥

एवं [प्रपञ्चः अ]निर्वचनीयः प्रतिपन्नोपाधौ निषिध्यमानत्वात् सम्मतवत्। न च दृष्टान्तासिद्धिः, प्रत्यक्षविषयशुक्तिरूप्यादेरसत्त्वायोगात् तत्र सत्त्वे बाधासम्भवात् अन्यत्र सत्त्वेऽप्यपरोक्षप्रतीत्यनुपपत्तेः तत्र प्रमाणाभावाच्च। नन्वपरोक्षप्रतीतिबाधाभ्याम[सत्त्व]सत्त्वनिवृत्तौ मिथ्यारजताभ्युपगमे धर्मिकल्पनागौरवात् तत्परिहाराय देशान्तरसत्त्वकल्पनमेवेति न दृष्टान्तसिद्धिरिति चेत्, न–अपरोक्षविषयस्य देशान्तरीयत्वासम्भवेन लाघवानवतारात्, प्रामाणिकगौरवस्यादोषत्वात्। किं च, लाघवप्रमि*न्मते असन्मतेऽपि सत्त्वात् न तेन प्रत्यक्ष-

---

* अत्र ग्रन्थे त्रुटिः।

**प्रतिपन्नब्रह्मोपाधावस्थूलादिवाक्यैः प्रतिषिध्यमानत्वात् देहात्मभाववत्। विरोधिकारणस्वभावानुपमर्देन विरोधिकार्यापत्तिलक्षणत्वात् माया-व्याघ्रवत्, प्रलयावस्थायां सह कालेन स्वोपाधौ शून्यत्वात् देहात्म-**

---

ता. एकदेशिनं प्रत्यनुमानमाह—**प्रतिपन्नेति** । निषिध्यमानत्वसमर्थनार्थं **अस्थूलादिपदम्** । प्रमाणान्तरमाह—**विरोधीति** । प्रलयकाल एव शून्यत्वं न स्वोपाधावित्यत आह—**सह कालेनेति** । ब्रह्मज्ञानस्य स्वरूपतो मिथ्यात्वम् ?

---

विषयस्य देशान्तरीयत्वं सिध्यति । न हि मिथ्यारजतेन तत्र तदत्यन्ताभावो व्यावर्त्यते । प्रत्यक्षविषयश्च पुरोदेशवैशिष्ट्यमङ्गीकृतमिति मिथ्यारजतसिद्धिरिति न दृष्टान्तासिद्धिः । न च असिद्धिः [अस्थूलादिवाक्यै]स्तत्सिद्धेरित्याह—**प्रतिपन्नेति** ॥

भा. नन्वयं हेतुः सत्त्वेऽप्युपपद्यते । घटादेः स्वसत्तादशायामपि भूतलादौ समवायेन घटो नास्तीति प्रतीतेरत्यन्ताभावसत्त्वात् । न च प्रतिपन्नोपाधौ सत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वं हेतुः, (न च) [स] च सत्यत्वेऽनुपपन्न इति वाच्यम् । सत्त्वविशिष्टस्यैव समवायसन्बन्धेन भूतले अभावात् । प्रपञ्चे स(त्य)[त्व]वैशिष्ट्यस्य सत्त्वेन तद्रूपेण तदधिकरणे त्रैकालिक-निषेधायोगात् । न हि घट(विशिष्ट)[निष्ठ]स्य रूपस्य घटे त्रैकालिकनिषेधः सम्भवति । न च सत्त्ववैशिष्ट्यस्य मिथ्यात्वान्न (तत्) [तेन रूपेण] प्रपञ्च-स्याधिकर(णा)[णे अ]भावविरोधोऽस्तीति वाच्यम् ; तर्हि प्रपञ्चस्यैव त्रैकालिक-निषेधोऽस्तु । किं सत्त्वविशिष्टतया ? इति चेत्, न—घटाधिकरणे हि भूतले घटत्वावच्छिन्नप्रतियोगिकघटाभावो न विद्यते, तत्र घटो नास्तीत्यप्रतीतेः, दोषात् प्रतीतेश्च भ्रमत्वात् । या तु प्रतीतिरुक्ता 'समवायेन घटो नास्ति' इति, सा समवायविशिष्टघटाभावविषया, न केवलघटाभावविषया । तृतीयार्थस्य साहित्यस्य प्रतियोगिविशेषणत्वं विना अनुपपत्तेः । समवायविशिष्टश्च घटो न तत्रेति नाप्रयोजकत्वम् ॥

किं च प्रतियोग्यारोपपूर्विका अभावप्रतीतिः परैरिष्यते, न च घटवति भूतले तस्य (अतो....वति) [आरोपो भवति] (घटवतीति) [घटवदिति] ज्ञानस्य

**भाववत्। अर्थापत्तिरपि—प्रपञ्चजन्मविनाशावनुपपन्नौ तस्य मिथ्यात्वमन्तरेण। अमिथ्याभूतयोर्ब्रह्मशून्ययोरजन्मविनाशित्वात्। न च**

तत्र व्यधिकरणप्रकारकत्वाभावात्। ननु सम्बन्धान्तरेण घटोऽपि व्यधिकरण इति चेत्, न—भासमानसम्बन्धेन हि वैयधिकरण्यं वक्तव्यम्। अन्यथा अतिप्रसङ्गात्। न च घटवत्यधिकरणे तद्भानस्य समवायविषयत्वे किञ्चिन्मानमस्ति। विशिष्टप्रत्ययत्वमात्रस्य अन्यथोपपत्तेः। न च अभावप्रत्ययबलात्तस्य समवायविषयत्वं कल्प्यते। 'अत्र घटो न' इति निषेधस्यापि कल्प्यत्वात्। न च घटविशिष्टबुद्धेः संयोगमात्रविषयत्वे प्रमाणाभावात् समवायोऽपि विषय इति वाच्यम्। विशिष्टज्ञानस्य हि प्रमाणत्वानुरोधेनाबाधितवैशिष्ट्यं तद्विषयो भवति, स च संयोग एवेति, (न) [स] तावत्तत्र सकलविशिष्टप्रत्ययस्य विषय एव। न च समवायविषयत्वे तत्र किञ्चिन्मानमस्ति। अन्यथा सर्वमेव ज्ञानं प्रमा न स्यात्। न च तदधिकरणे तत्प्रकारकज्ञानं किञ्चित् प्रमा किञ्चित् न इति व्यवस्था सम्भवति, येन व्यक्तिभेदेन प्रमात्वाप्रमात्वव्यवस्था भवेत्। व्यवहितगुणदोषादिसामग्र्यभावाच्च। एवं प्रसिद्धभ्रा(न्ति) [न्ते]रपि स्वरूपसम्बन्धविषयतया प्रमा(त्व)[त्वं स्यात] बाधस्य समवायसम्ब(न्धो)[न्धविषयत्वो]पपत्तेरिति भ्रान्तिमात्रोच्छेदः। एवं प्रतियोगितावच्छेदकधर्मप्रकारकप्रतियोगिविशिष्टप्रमासत्त्वादपि तत्र न तदभावप्रमा। न च ज्ञानसम्बन्धेन प्रतियोगी निषिध्यते तद्विषयकतत्प्रतियोग्युपलम्भस्यैवे*वाच्यम्। गौरवात्। अतः सत्यत्वे प्रपञ्चस्य न तदधिकरणे तदभाव इति नार्थान्तरत्वमिति ॥                    भा०

**तस्य मिथ्यात्वमन्तरेणेति।** ननु प्रत्यक्षादिविरोधात् कथं मिथ्यात्वं प्रमातुं शक्यते इति चेत्, अहो! इयं वैदिकशिरोमणेः वेदान्तश्रवणे श्रद्धा, यत् परमार्थो घटः तदधिकरणे च केनापि प्रमाणेन अप्रमीयमाणोऽत्यन्ताभावोऽस्ति तत्र च न प्रत्यक्षादिविरोधः, प्रपञ्चाधिकरणे तु श्रुतिप्रमितोऽत्यन्ताभावः पुनः प्रत्यक्षादिना विरुध्यत इति। प्रत्यक्षादिसिद्धप्रपञ्चस्य श्रुतिप्रमितात्यन्ताभावानुरोधेन शुक्तिरजतादौ दृष्टतद्विषमसत्ताकत्वकल्पनस्यैव उचितत्वात्तदविरोधात्। सद्बुद्धेरधिष्ठानसत्तादात्म्यविषयत्वात् श्रुतेरश्रुतार्थ-

* अत्र ग्रन्थे त्रुटिः।

ब्रह्मज्ञानस्यापि प्रपञ्चज्ञानवत् मिथ्यात्वानुमानम् । 'तत् सत्यं स आत्मा' इति वचनविरोधात् । न च अस्थूलादिवाक्यैः स्थूलादिभ्योऽन्यत्वमात्रमुच्यते । कार्यकारणतादात्म्ये सत्येवंप्रतिषेधानुपपत्तेः । यथा शुक्लायां गवि अन्यत्वविवक्षयापि अशुक्ला गौरिति प्रतिषेधो न दृश्यते । तथा च प्रतिषेधे शुक्लतास्वरूपमात्रनिषेधदर्शनात् । तर्काप्रतिष्ठानान्न मिथ्यात्वानुमानमिति चेत्, न—विचारशास्त्रानारम्भप्रसङ्गात् । शब्दमूलत्वात् ब्रह्मणि न विरोधबुद्धिरिति चेत्; तर्हि 'असद्वा इदमग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिद्वयसामर्थ्यात् कारणस्य सदसत्त्वे स्याताम् । श्रुत्यर्थस्य तर्कागोचरत्वात् । सर्वशक्तित्वात् ब्रह्मणः सर्वमुपपन्नमिति चेत्, न—ब्रह्मणि विरोधपरिहाराय विचारानारम्भप्रसङ्गात् । अत एव असत्यतापि ब्रह्मणः कदाचित् किं न स्यात् । तस्मात् प्रत्यक्षानुमानार्थापत्तिभिः प्रपञ्चस्य मिथ्यात्वावगमात् प्रशान्तत्वाच्च ब्रह्मणो निष्प्रयोजना च सृष्टिश्रुतिः विवर्त एवेति । न च सद्बुद्ध्यनुगमविरोधः; अधिष्ठानत्वात् तस्य, घटादिविशेषाणामेव मिथ्यात्वात् इति सिद्धम् ॥

---

ता. किं वा विषयतः ? । तत्राद्योऽङ्गीक्रियते । द्वितीयस्त्वनुपपन्नः, श्रुतिविरोधात् इत्याह—तत्सत्यमिति । प्रपञ्चस्य प्रतिषिध्यमानत्वमसिद्धम्, अस्थूलादिवाक्यस्य स्थूलादिव्यतिरेकप्रतिपादनपरत्वात् इत्याशं(क्याप्यङ्गीकारा)[क्य, तथा अङ्गीकारेऽपि] भेदाभेदवादिनो नैवं प्रतिषेधः संभवति इति परिहरति—नचास्थूलेति । (न) भेदस्यापि सम्भवात् प्रतिषेधः किं न स्यात् ? इत्यत आह—यथेति । एवंविधोऽपि प्रतिषेधः कचित् दृश्यते इत्यत आह—तथा चेति । न तर्कप्रदर्शनाय शास्त्रारम्भः, किं तु परैरुद्भावितत्तर्काणां ब्रह्मविषयश्रुतिविरोधेनाभासत्वप्रदर्शनाय, इति शङ्कते—शब्देति । (त)[अ]त एव । सर्वशक्तित्वादेवेति यावत् । प्रशान्तत्वादिति । अविकारित्वादित्यर्थः । सन् घट इति प्रत्यक्षविरोधात् न मिथ्यात्वानुमानसिद्धिरित्यत आह—न च सद्बुद्धीति ॥

---

भा. कल्पने बाधप्रसङ्गादित्यभिप्रेत्याह—न च (शब्दाद्य)[सद्बुद्ध्य]नुगमविरोध इति ॥

लक्षणमनूद्य लक्ष्यस्वरूपं कथयितुमुत्तरं भाष्यमित्याह—अस्य 296 - 1
जगत इति । ननु न तावदिदं विशेषणलक्षणम् ; प्रपञ्चजन्मादिकारण-
त्वस्य प्रपञ्चोपाधित्वात् निरुपाधिकब्रह्मस्वरूपलक्षणकथनमन्तरेण
सोपाधिकधर्मप्रतिपत्त्ययोगात् । नाप्युपलक्षणमेतत् ; लक्ष्यस्य ब्रह्म-
शब्दार्थत्वायोगात् अवच्छेदादिति ; तत्राह—द्विविधं हि लक्षणमित्यादि । 296 - 2
उपलक्षणत्वेऽपि नाद्वितीयस्वरूपलक्षणविरोधः ; 'यत् रजतमित्यभात्
सा शुक्ति'रितिवत् मिथ्याभूतेनापि प्रपञ्चकारणत्वेन उपलक्षणयोगात् ।
असाधारणसम्बन्धो हि लक्षणनिमित्तम्, न लक्षणसत्यत्वम् । काका-
दीनामसम्बद्धानां गृहोपलक्षणत्वदर्शनादिति ॥

कार्यप्रपञ्चं केचिदिति । अयमर्थः—नामरूपकर्मात्मकमिति वेदा- 296 - 5
न्तिनः । द्रव्यगुणकर्मसामान्यात्मकमिति वार्तिककारीयाः । कार्य-
कारणयोगविधिदुःखान्ताः पञ्चेति शैवाः । द्रव्यगुणकर्मसामान्यविशेष-
समवायाः षडिति वैशेषिकाः । जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षाः
सप्तेति क्षपणकाः । द्रव्यगुणकर्मसामान्यविशेषशक्तिपारतन्त्र्यनियोगा

---

भवतु सोपाधिकलक्षणमेवेति, तत्राह—**निरुपाधिकेति** । **अवच्छेदा-** ता.
**दिति** । तटस्थलक्षणेन स्वरूप[स्य]परिच्छिन्नत्वात् ब्रह्मशब्दार्थत्वासम्भव
इत्यर्थः । यदुक्तम्—**अवच्छेदान्नोपलक्षणत्वमिति**, तत्राह—**उपलक्षण-
त्वेऽपीति** । उपलक्षण(त्वा)[स्यासत्यत्वा]न्नाद्वैतव्याघात इत्यर्थः । ननु सत्यमेव
लक्षणम्, न मिथ्येति, तत्राह—**असाधारणेति** । **असम्बद्धानाम्**[असत्याना]
मिति यावत् । **कार्यं** प्राधानिकं महदादि, **कारणं** ईश्वरः, **योगः** समाधिः,
**विधिः** त्रिषवणस्नानादि मूढचर्यावसानम्, **दुःखान्तो** मोक्षः । **जीवेति** ।
बद्धो मुक्तो नित्यसिद्धश्चेति त्रिविधो जीवपदार्थः । पुद्गलास्तिकायः धर्मास्ति-
कायः अधर्मास्तिकायः, आकाशास्तिकायश्च, इत्यजीवपदार्थश्चतुर्विधः । आस्र-
आस्रावयति पुरुषं ज्ञानजननेन विषयेष्वितीन्द्रियप्रवृत्तिः **आस्रवः** । आस्र-
वस्रोतसो द्वारं संवृणोतीति शमदमरूपा प्रवृत्तिः **संवरः** । **निर्जरः** तप्तशिलारोह-
णादिः निश्शेषपुण्यापुण्ये सुखदुःखोपभोगेन जरयतीति । **बन्धो**ऽष्टविधं कर्म ।

अष्टाविति प्राभाकराः। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि षोडशेति नैयायिकाः। ज्ञानेन्द्रियकर्मेन्द्रियभूततन्मात्रमहाभूतमनोऽहङ्कारमहदव्यक्तपुरुषा इति साङ्ख्याः इति। कस्तर्हि सिद्धान्तः? तदाह—
297 - 1 तद्व्युदासायेत्यादि ॥

यद्यपि रूप्यत इति रूपेणेत्थंभूतं जगत् व्याक्रियते, कथं
297 - 3 नाम्ना रूपितमुत्पाद्यते? इति; तत्राह—व्याक्रियमाणं हि वस्त्वति। अयमर्थः—लोके घटं चिकीर्षुः कुलालः प्रथमं घटशब्दविकल्पितं पृथुबुध्नोदराकाररूपविकल्पितं च स्वबुद्धावाविर्भावयति। पश्चाद्यथाविर्भूतं घटशब्दालम्बनयोग्यं पृथुबुध्नोदराकाररूपितं च घटं निर्वर्तयति। एवमेव मूलकारणमपि नामरूपाभ्यां स्वबुद्धावाविर्भूतमेव सर्वं पश्चात्
297 - 5 व्यनक्तीति नामरूपाभ्यामित्थंभूतं व्याकृतमित्युच्यते। अनेककर्तृभोक्तृ-
298 - 11 संयुक्तस्य इत्यारभ्य ननु अन्येऽपि परिणामादयो भावविकारा इत्यतः प्राक्तनः[ग्रन्थः]स्पष्टार्थः ॥

ननु किमत्र उपलक्षितस्य ब्रह्मणः स्वरूपलक्षणमुच्यते? न च स्वरूपलक्षणमन्तरेण कस्यचित् वस्तुनः प्रतिपत्तिरस्ति। न च 'यत्र शाखाग्रं स चन्द्रः' इत्येतावता प्रकृष्टप्रकाशात्मप्रतिपत्तिमन्तरेण चन्द्रावगतिरस्ति। न तावत् सर्वशक्तित्वं ब्रह्मासाधारणलक्षणम्। प्रधानादीनामप्यविशेषात्। सर्वज्ञत्वमिति चेत्, न—तस्य सर्वोपाधिकधर्मत्वात् निरुपाधिकब्रह्मस्वरूपाप्रतिपत्तिः। कथं चेदं सर्वज्ञत्वमिति

---

ता. अलोकाकाशे सततोर्ध्वगमनं मोक्षः। पारतन्त्र्यं समवायः। इदन्तु चिरन्तनप्राभाकरमतम्। द्रव्यगुणकर्मसामान्यसमवायशक्तिसङ्ख्यासादृश्यानीत्यष्टपदार्थाः आधुनिकमतेन ॥

उपलक्षितस्यैव स्वरूपलक्षणमस्तु, को दोषः? इत्यत आह—न चेति। स्वरूपलक्षणमन्तरेणापि उपलक्षणात् स्वरूपप्रतिपत्तिर्दृश्यत इत्यत आह—न च यत्रेति। अस्तु तर्हि ब्रह्मणः स्वरूपलक्षणमित्याशङ्क्य, तत्किं सर्वशक्तित्वम्? उत सर्वज्ञत्वम्, इति विकल्प्य, आद्यं दूषयति—न तावदिति। द्वितीयमुत्थापयति—सर्वज्ञत्वमिति। पक्ष एवायमनुपपन्न इत्याह—कथं चेदमिति। किं षड्भिः प्रमाणैः सर्वज्ञत्वम्? उत प्रत्यक्षेणेति विकल्प्य, आद्यं दूषयति—

वक्तव्यम् ? न तावत् प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावप्रमाणैः सर्वं वेत्ति। तेषामयुगपत्प्रवृत्तेः सर्वस्य च प्रत्यक्षताहानात्। सत्स्वपि तेष्वस्माकं सर्वज्ञताऽभावात्। इन्द्रियाणां च देशकालवस्तुविप्रकृष्टार्थग्राहित्वाभावात्। संयुक्तसमवायात् संयुक्तसंयोगात् संयुक्तविशेषणतया वा सर्वार्थप्रत्यक्षत्वे अस्माकमपि प्रसङ्गात्। मानसमपि ज्ञानमात्मनोऽन्यत्रेन्द्रियादिसापेक्षमिति सर्वं न मानसप्रत्यक्षगम्यम्। न च धर्मातिशयवशादपि इन्द्रियैरयोग्यं वस्तु गृह्यते। मार्जारादिदृष्टीनामपि योग्यरूपादिष्वेव अतिशयत्त्वदर्शनात्। न च कृत्स्नपरिभावनासंस्कारजन्यं मानसं सर्वज्ञज्ञानं

---

**न तावत्प्रत्यक्षेति**। दूषणान्तरमाह—**सर्वस्य** (वे) [चे]ति। माभूत् सर्वस्य प्रत्यक्षत्वम्, तथापि यथाकथंचित् सर्वज्ञत्वमस्त्येवेति, तत्राह—**सत्स्वपीति**। द्वितीयपक्षेऽपि, किं बाह्येन प्रत्यक्षेण ? किं वा आन्तरेण ? आहोस्वित् साक्षिप्रत्यक्षेण सर्वज्ञत्वम् ? इति विकल्प्य, आद्यं दूषयति—**इन्द्रियाणामिति**। नास्ति विप्रकृष्टत्वम्, यथायोगं वस्तुषु साक्षात्परम्परया वा सम्बन्धसद्भावात् इत्यत आह—**संयुक्तेति**। द्वितीयं दूषयति—**मानसमिति**। **आत्मनो**ऽन्यत्रेत्युपलक्षणम्, आत्मनिष्ठजातिगुणादीनामपि मानसप्रत्यक्षत्वाभ्युपगमात्। एतच्च **विधिविवेके** सर्वज्ञदूषणप्रस्तावे **मण्डनमिश्रै**रभिहितम्—

> ‘ हेत्वभावे फलाभावात् प्रमाणे सति न प्रमा।
> चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः ॥ ’ इति ॥

केवलेन्द्रियाणां विप्रकृष्टादिग्राहित्वाभावेऽपि, धर्मसहकृतानां तथाभावः किं न स्यात् ? इत्याशङ्क्याह—**नच धर्मेति**। सहकारिवशादपि योग्यमेव गृह्यते नायोग्यमित्यर्थः। तथा चोक्तं **वार्तिककारैः**—

> ‘ यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
> दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रुतवृत्तिता ॥ ’ इति।

मार्जारादिदृष्टीनामालोकनिरपेक्षत्ववत् सर्वज्ञेन्द्रियाणामपि सम्प्रयोगादिनिरपेक्षता स्यादित्याशङ्क्याह—**मार्जारादीति**। सर्वविषयपरिभावनासंस्कारसहकृतं मनः सर्वविषयप्रत्यक्षज्ञानं जनयिष्यतीत्यत आह—**न चेति**।

कृत्स्नार्थं ग्राहयति। प्रथमं कृत्स्नार्थग्रहणाभावे तत्र परिभावनाऽयोगात् तज्जन्यकृत्स्नग्राहिज्ञानायोगात्। परिभावनायाः प्रागपि कृत्स्नार्थग्रहणे अस्माकमपि प्रसङ्गात्। अतीतानागतवर्तमानार्थानामियत्तानवधारणाच्च सर्वग्रहणानुपपत्तिः। 'एतावदिदं नातः परमस्त्यज्ञातम्' इत्यनवधारणात्। न च स्वरूपज्ञानेनैव सर्वज्ञता; तस्य प्रदीपप्रभावत् अतीतानागतार्थग्राहित्वाभावात्। तस्मान्नास्ति सर्वज्ञ इति॥

उच्यते—सर्वस्य कर्तृत्वादेव वर्तमानस्वकार्यसर्वविषयज्ञता तावत् सिद्धा। एवं तत्तत्कालेऽतीतसर्वविषयावगमात् अनुभूतविषयाऽसंप्रमोषा स्मृतिः स्वमायापरिणामोपाधिरनावरणत्वात् सर्वविषया कल्प्यते। तथा सृष्टेः प्रागपि सृज्यमानपदार्थावधारणस्य कुलालादिषु दृष्टत्वात् आगामिसर्वविषयज्ञानं स्वमायापरिणामोपाधि कल्प्यत इति युक्ता सर्वज्ञता। 'यः सर्वज्ञः सर्ववित्' इति च जगत्कारणे सर्वज्ञ-

---

ता. षड्भिः प्रमाणैः अशेषवस्तुग्रहणात् तत्र परिभावना सम्भवतीत्यत आह—**परिभावनाया** इति। दूषणान्तरमाह—**अतीतेति**॥

[सिद्धान्तयति—**उच्यते—सर्वस्येति**।] [विषयाका]रधारिषु मायापरिणामेषु प्रतिबिम्बितं चैतन्यं सर्वानुभव इत्युच्यते, तेन विषयैराध्यासिकसम्बन्धाद्वर्तमानकाले तावत् सर्वज्ञत्वं सिद्धमित्यर्थः। भवत्वेवम्, तथापि अतीतविषयज्ञत्वं कथम्? इति; तत्राह—(**अत एवेति**)। [**एवमिति**।] **सर्वविषयापगमेन** तदवच्छिन्नमायावृत्तीना(मिति)[मपि] अपगमात् तदवच्छिन्नानां अनुभवानामपि निवृत्तौ तत्संस्कारात् अस्मदादिष्विव अतीतविषया स्मृतिरूपा मायापरिणामात्मिका वृत्तिः भवति तया अतीतविषयज्ञत्वमपि सिद्ध्यतीत्यर्थः। संस्कारोद्बोधाभावे कथं स्मृतिः? इति; तत्राह—**अनावरणत्वादिति**। अविद्याकामकर्मादीनां ज्ञानप्रतिबन्धकानामभावात् उद्बोधकान्तरनिरपेक्षैव स्मृतिः भवतीत्यर्थः। इदानीमागामिविषयज्ञानोपपत्तिमाह—**तथा सृष्टेरिति**। न केवलं युक्तिमात्रमेव सर्वज्ञतायाम्, तदनुग्राह्यं प्रमाणमप्यस्तीत्याह—**यस्सर्वज्ञ इति**। सर्वज्ञशब्देन सर्वविषयज्ञानमेवाभिधीयते, नतु तत्कर्तृत्वम्,

पदप्रयोगात् सर्वविषयज्ञानं प्रमीयत इति श्रुतियुक्तिभ्यां युक्ता सर्वज्ञता। ननु सोपाधिकधर्मत्वान्न स्वरूपलक्षणमित्युक्तम्, न—अनेन सर्वज्ञशब्देन सर्वावभासक्षमं विज्ञप्तिमात्रं आदित्यादिप्रकाशवदविषयोपाधिकं विज्ञानमेव ब्रह्मस्वरूपलक्षणं विवक्ष्यत इत्यविरोधः। नन्वन्येऽपि इत्यादिः 298 - 11
स्पष्टार्थः ॥

ननु निरुक्तवाक्यमेव मूलीकृत्य सूत्रेऽपि षड्भावविकारा गृह्यन्ता- 299-4-5
मिति चोदयति—ननु षड्भावविकारा इति। यास्कपरिपठितानामित्यादिपरिहारस्य अयमर्थः—आर्षेयस्य वाक्यस्य मूलप्रमाणं प्रत्यक्षमागमो वा भवति। अनुमानादेरस्माकमपि प्रवृत्तेर्वाक्यानपेक्षणात्। तत्र प्रत्यक्षमूलत्वे यास्कवाक्यस्य भौतिकधर्मा एव भावविकाराः प्रत्यक्षेण अवगन्तुं शक्यन्ते, न महाभूतविषयाः। तत्र भौतिकविकारकारणे ब्रह्मणि गृह्यमाणे भूतपञ्चकमेव ब्रह्म गृहीतं स्यात्। श्रुतौ तु मूलप्रमाणानपेक्षत्वात् यत् किञ्चिद्भवनधर्मवत् तस्य मूलकारणं ब्रह्म ग्रहीतुं शक्यत इति। किं च श्रुत्यर्थपरत्वात् सूत्राणां श्रुतिरेव जन्मादिसूत्रमूलमित्याह— 299 - 10
तदर्थनिर्णयार्थत्वादिति ॥

ननु भूतभौतिकमूलकारणं न ब्रह्मेति प्रतिपत्तुं युक्तम्; मायाया अपि मूलकारणत्वात्। 'मायां तु प्रकृतिम्' इति श्रुतेः। प्रक्रियतेऽ-

---

अतो न स्वरूपलक्षणत्वविरोध इति परिहरति—अनेनेति। सर्वस्याभावे कथं तत्प्र- ता.
काशकं ज्ञानम्? इत्यत आह—सर्वावभासक्षममिति। सप्रतियोगिकतां निवारयति—अविषयोपाधिकमिति ॥

अस्मत्पक्षे तु नायं दोष इत्याह—श्रुतौ त्विति। लक्षणस्यातिव्याप्तिमाशङ्कते—ननु भूतेति। एकदेशी शङ्कते—प्रक्रियत इति। ब्रह्म

---

पूर्वमुपादानत्वं मायायामतिव्याप्तमिति तदर्थं निमित्तत्वमप्युपलक्षण- भा.
विशेषणमिति उक्तम्। सम्प्रति यादृक् ब्रह्मणः उपादानत्वं न तन्मायाया इति वक्तुमाशङ्कते—ननु भूतभौतिकमूलकारणं न ब्रह्मेति प्रतिपत्तुं युक्तमिति। ननु माया [न] जगदुपादानकारणम्, (न) [किं]तु उपकरणमात्रमिति न तत्रातिव्याप्तिरित्याशङ्क्याह—मायां तु प्रकृतिमिति श्रुतेरिति। 'प्रकृतिं

नयेति प्रकृतिरिति करणमात्रं मायेति चेत्, न—प्रकृतिशब्दस्य उपादाने रूढत्वात् व्युत्पादनायोगात्। 'आत्मन आकाशः' इति प्रकृत्यन्तरश्रवणात् व्युत्पाद्यत इति चेत्, न—तुल्यश्रुतित्वात् मायाप्रकृतित्वविरोधात्। निमित्तेऽपि पञ्चमीप्रयोगात्। दृश्यमानजाड्यानुसारेण च मायोपादानत्वनियमोपपत्तेः। 'इन्द्रो मायाभिः' इति तृतीयैव श्रूयत इति चेत्, सत्यम्, आत्मनो बहुत्वापत्तौ करणता भवति। प्रपञ्चोपादानत्वे का हानिः। निरपेक्षप्रकृतिद्वयानुपपत्तिरिति चेत्,

ता. कारणं माया पुनः करणमित्यर्थः। पूर्ववादी दूषयति—**न—प्रकृतिशब्दस्येति**। योगात् रूढेः प्राबल्यादित्यर्थः। अपवादसद्भावात् रूढिपरित्याग इति शङ्कते—**आत्मन इति**। पञ्चम्याः प्रकृत्यर्थत्वमङ्गीकृत्य परिहरति पूर्ववादी—**न—तुल्येति**। जगतः प्रकृतिद्वयायोगादिति भावः। तुल्यश्रुतित्वमेव नास्ति, 'आत्मनः' इति पञ्चमीविभक्तेरन्यथाप्युपपत्तेरित्याह—**निमित्तेऽपीति**। मायायाः प्रकृतित्वे विनिगमनहेतुमाह—**दृश्यमानेति**। मायाया न योगवृत्त्या करणत्वम्, किं तु तृतीयाश्रुत्येति शङ्कते—**इन्द्रो मायाभिरिति**। (मा)[तृती]याश्रुतेर्भिन्नविषयतया मायोपादानत्वाबाधकत्वादिति परिहरति—**सत्यमिति**। 'जनिकर्तुः प्रकृतिः' इत्युपादानेऽपि पञ्चमीप्रयोगात् 'यतो जायन्ते' इति पञ्चम्या आत्मनोऽप्युपादानतावगमात् मायाया अपि प्रकृतित्वे जगतः प्रकृतिद्वयप्रसङ्गात् प्रकृतिशब्दः करणपर एवेति शङ्कते—**निरपेक्षेति**। उभयोरपि प्रकृतित्वोपपत्तेरविरोध इति परिहरति—

भा. पुरुषं चैव' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति स्मृतिसूत्रयोः पृथक् प्रकृतिशब्दो ब्रह्मणि जडेऽपि प्रयुज्यते। न च उभयत्रापि योगः, ब्रह्मण्युक्तव्युत्पादनासम्भवात्। न च ब्रह्ममात्रेऽपि शक्तिः, जडेऽपि प्रयोगात् अनेकार्थत्वायोगात्। न चात्र गौणमुख्यविवेकः सम्भवति ; जडेऽप्युपादानत्वाभिप्रायेणैव प्रयोगादित्युपादाने तस्य रूढिरेवेत्यभिप्रेत्याह—**न—प्रकृतिशब्दस्योपादाने रूढत्वादिति**। जडे सर्वत्र प्रकृतिशब्द उपादानत्वाभिप्राय इत्येतदविरुद्धमिति शङ्कते—**आत्मन इति**। ननु सन् घट इत्यनुभवेन सत उपादानत्वान्न तद्विषया पञ्चमी निमित्तार्थेत्याशङ्क्याह—**दृश्यमानजाड्यानुसारेणेति** ॥

तर्हि परस्परविशिष्टतया द्विसूत्ररज्जुवत् प्रकृतिता स्यात्। अतो जगत्कारणे ब्रह्मणि मायाया अपि ब्रह्मत्वं लक्षितं स्यात्। मायेति प्रज्ञा अभिधीयते सा च ब्रह्मचैतन्यमेव इत्यविरोध इति चेत्, न—अन्वयव्यतिरेकविरोधात्। परिदृश्यमानहस्त्यश्वरथादौ प्रतिपन्नोपाधौ बाधिते च वृद्धव्यवहारे अन्वयव्यतिरेकाभ्यां मायाशब्दः प्रयुज्यमानो दृश्यते। लोकसंवेदनविरोधाच्च। न हि प्रज्ञातिशयवन्तं मायाविनं वदन्ति। गर्हन्ति च विदुषि मायाशब्दप्रयोगम्। बुद्धिविषयत्वात् मायाशब्दस्य न ब्रह्मचैतन्यप्रज्ञायां प्रसङ्गः। स्वप्नादिविविधमायाकारप्रतिभासनाद्वा बुद्धेः कार्यवाचिनो मायाशब्दस्योपचारात् कारणे प्रयोग इत्यनवद्यम्॥

---

ता. तर्हीति। पूर्ववादी स्वपक्षमुपसंहरति—अत इति। एकदेशी शङ्कते—मायेति। इतोऽपि मायाशब्दो न ब्रह्मचैतन्यविषय इत्याह—बुद्धीति। पूर्वं बुद्धौ मायाशब्दस्य रूढत्वमभिप्रेत्योक्तम्, इदानीं तत्राप्युपचारात् प्रयोग इत्याह—स्वप्नेति॥

---

भा. ननु मायाया उपादानत्वे तत्कार्याणां नियामकः संस्कारो वक्तव्यः। स च जड इति तत्प्रयुक्तमेव जाड्यमस्तु। तस्यापि जडत्वं तत्पूर्वं विनश्यज्जाड्यात्, तस्यापि तत्पूर्वसंस्कारात् इत्यनादिप्रवाहायत्तं जाड्यमिति किं मायोपादानेन। किं च, यथा द्रव्यादत्यन्तविलक्षणमेव गुणाद्युत्पद्यते एवं चेतना[द्विल]क्षणमेव जगदुत्पद्यताम्। अपि च विवर्ते नायमस्ति नियमः—सजातीयादेव सजातीयोत्पत्तिः इति, शुक्तेरपि रजतोत्पत्तेः॥

ननु तत्त्वज्ञानात् प्रपञ्चविनाशस्तत्कारणविनाशादृते न सम्भवतीति ज्ञानेन निवृत्तियोग्यमज्ञानं तद्धेतुरिति चेत्, (अ)[न—प्रपञ्चस्य]ज्ञानात् साक्षाद्विनाशोपपत्तेः। ननु ब्रह्मोपादानत्वे प्रपञ्चस्यापि परमार्थत्वापत्तिः उपादानोपादेययोः समानसत्ताकत्वात् इति चेत्, किं ब्रह्मानुपादानमेव। उपादानत्वे च यस्तव परिहारः स एवास्माकम्। अतो न मायायाः [उपादानत्वे] किं चिन्मानमस्ति। शुक्तिरजतादौ (तज्ज्ञाना)[शुक्त्यज्ञाना]न्वयव्यतिरेकयोर्निमित्तत्वेनाप्युपपत्तेः। श्रुतेश्चान्यथोपपत्तेः॥

अपि च 'भूयश्चान्ते विश्वमायानिवृत्तिः' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' 'माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः' इति निवर्त्यत्वतर्तव्यत्वगुणमयत्वज्ञानावरणत्वलिङ्गाच्च न ब्रह्मचैतन्यं माया। बुद्धिरेव मायेति चेत्, न—प्रकृतिशब्दविरोधात्। मन्त्रौषधादि मायेति चेत्, न—दृश्यमानगन्धर्वनगरादौ मायाशब्दप्रयोगात्। मन्त्रौषधादौ तदप्रयोगात्। तथापि जडात्मिका मायाशक्तिः पारमार्थिकीति चेत्, न—'नासदासीन्नो सदासीत्तम आसीत्' इति जगत्प्रागवस्थायाः सदसद्विलक्षणानिर्वचनीयत्वश्रवणात्। लोके च हस्त्यश्वरथादिषु व्यभिचारिषु मिथ्यावस्तुमात्रे

---

ता॰ मन्त्रादीनां परस्परव्यभिचारित्वात् अनुयायित्वाच्च ज्ञानबाधितस्य तदेव मायाशब्दार्थ इत्याह—**लोके चेति**। ज्ञाननिवर्त्याविद्यासामानाधिकरण्याद-

---

भा॰ स्यादेतत्—सर्गाद्यकालीनं कार्यं जडोपादानम्, कार्यत्वात् घटादिवत्। तच्च लाघवादेकमिति मायोपादानम्। घटादिकं च मृदा (त्यात्म....यत) [आत्मन्युत्पाद्यते] इति मृदाद्युपादानकमिति न साध्यवैकल्यम्। न च अप्रयोजकत्वम्; एकस्य जडस्य प्रपञ्चानुपादानत्वे प्रपञ्चानुगतजाड्यादिबुद्धेर्निर्विषयत्वप्रसङ्गात्। न हि विकारेषु प्रकृतिस्वभावातिरिक्तमनाद्यनुगतं किञ्चिदस्ति। न च जडत्वादिकं किञ्चिन्नित्यं नानित्यमायेति वाच्यम्। जडत्वादेः सर्वमुक्तौ [सत्त्वे] प्रमाणाभावात्। न च अनुपादानस्य कार्येष्वनुगतिरिति मायोपादानमिति चेत्, न—स्वभावतो जडप्रपञ्चानुगतब्रह्मण एव जाड्यानुगतमतिविषयत्वात्। न च जडस्यैव जाड्यानुगतबुद्धिविषयत्वमिति वाच्यम्; घटाद्यभेदमात्रेण घटाद्यनात्मनोऽप्युपादानस्य घटानुगतमतिविषयत्ववदजडात्मनोऽपि तद्बुद्धिविषयत्वोपपत्तेः। सद्बुद्धिस्तु जडमात्रेण न भवति। (स)[अ]तो ब्रह्मण उपादानत्वम्। न च अविद्याकार्यत्वाभावे कथं मिथ्यात्वं इति वाच्यम्। अविद्यादिवत्तदुपपत्तेः। अतोऽप्रयोजकत्वान्नोक्तानुमानात् सिद्धिरिति ॥

अनुयायिनि मायाशब्दप्रयोगात् ।

'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥'

---

ता. प्यविद्यैव माया न सत्यमित्याह—तरतीति ॥

---

भा. उच्यते—स्वतो ज(डा)[डम]नुगतं यदि न कल्प्यते तदैव खलु जडतादात्म्या(भि)हितजाड्यस्य जडानुगतमतिविषयत्वं वक्तव्यम् । अन्यथा (त)[स]द्बुद्धेः पटे अंशोरेव प्रपञ्चोपादानाज्ञानानुगततया परम्परया प्रपञ्चा(दु)-[नुगतमतिविष]यत्वोपपत्तेः सतोऽकारणत्वप्रसङ्गः । न च साक्षादनुगमे बाधकाभावान्न परम्परया तदनुगम इति वाच्यम् ; जडानुगतमतेरपि स्वतो जडविषयत्वे सम्भवति नान्याधेयजाड्यविषयत्वं कल्प्यमिति तुल्यम् । किं च अविद्यादशायां प्रपञ्चस्यात्यन्तिकनिवृत्ते[रदर्शना]त्तन्निवृत्तावेव सा वक्तव्या । तत्र यदि सैव तद्धेतुस्तर्ह्यनु(ग)[म]तमेवाविद्याया उपादानत्वम् । निमित्तनिवृत्तेः कार्यात्यन्तिकनिवृत्तावहेतुत्वात् । ननु ज्ञानमेव कार्यप्रपञ्चमत्यन्तं निवर्तयतीति चेत्, न—अविद्यानिवृत्तिं विना इदमिति द्रव्यमिति वा [ज्ञानात्] शुक्तिरजतादेरत्यन्तनिवृत्त्यभावात् । न च शुक्तिरिति ज्ञानं निवर्तकमिति वाच्यम् ; [अ]नीला शुक्तिरित्यपि भ्रमदर्शनात् ॥

ननु भ्रमजनकाज्ञानसमानविषयकज्ञानात् भ्रमस्यात्यन्तिकनिवृत्तिः । न च तेन अविद्या निवर्तते तन्निवृत्त्या च भ्रमनिवृत्तिरिति वाच्यम् ; [ज्ञानस्य साक्षात् भ्रमनिवर्तकत्वात्] प्रपञ्चनिवृत्तावपि ज्ञानस्य [साक्षात्] हेतुत्वादिति चेत्, न—सत्यम्, ज्ञानं प्रपञ्चं निवर्तयतीति । तत्त्वविद्यानिवृत्तिसहकृतमेव । अविद्यासमानविषयज्ञानस्यानुत्पादितभ्रमस्थले अज्ञाननिवृत्तौ हेतुत्वेन क्लृप्तस्य कार्यनिवृत्तावपि [अविद्यानिवृत्तिसहकृ]तेन रूपेण तस्य हेतुत्वे [संभवति साक्षात् हेतुत्वे] प्रमाणाभावात् । अन्वयव्यतिरेकयोरविद्यानिवर्तकत्वेन अन्यथासिद्धत्वात् । अतोऽविद्यानिवृत्तिरपि तत्र कारणमिति अविद्या तत्रोपादानमेव । अनुपादाननिवृत्तेरात्यन्तिकनिवृत्त्यहेतुत्वात् । एवं च अन्वय-

इति मायाऽविद्ययोः सामानाधिकरण्याच्च। **तस्मादनिर्वचनीयमा-**
300.1 **याविशिष्टं कारणं ब्रह्मेति प्राप्तम्; तत्राह**—अतो यदवष्टम्भो विश्वो विवर्तत इति। **त्रैविध्यमत्र सम्भवति—रज्ज्वाः संयुक्तसूत्रद्वयवत् मायाविशिष्टं ब्रह्म कारण-मिति वा, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतेः मायाशक्तिमत् ब्रह्म कारणमिति वा, जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति। तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन**

ता. सिद्धान्ती परिहारं वक्तुं **आचार्याणां** मतभेदमाह—**त्रैविध्यमिति**। जगत्कारणत्वरूपोपलक्षणपक्षे प्रसक्तातिव्याप्तिः स्वरूपलक्षणेन निवार्यत इत्याह—**तत्र विशिष्टेति**। भवतु ब्रह्मपरतन्त्रता कार्यस्य, ततः किम्? इत्यत आह—

भा. व्यतिरेकाभ्यामज्ञानस्योपादानत्वमेव वक्तव्यमिति प्रपञ्चोऽप्यज्ञानोपादानक इत्यतिव्याप्तिं समर्थ्योपसंहरति—**तस्मादनिर्वचनीयमायाविशिष्टमिति** ॥

न केवलं ब्रह्मोपादानम्, न वा अज्ञानम्; किं तु विशिष्टमिति न काप्य[ति]व्याप्तिरित्याह—(रज्जु)[**रज्ज्वाः**] **संयुक्तेति**। ननु विशिष्ट-ब्रह्मणः करणत्वकल्पनमनुपपन्नम्। जिज्ञास्यविशुद्धब्रह्मलक्षणस्यैव प्रस्तुतत्वा-[दिति आशङ्क्य पक्षान्तरमाह—] **देवात्मशक्तिमिति**। अनवच्छिन्नं ब्रह्मैव कारणम्, माया तन्निर्वाहिका शक्तिरित्यर्थः। मायाया अपि प्रकृतित्वात् कथं तच्छक्तित्वम्? इति पक्षान्तरमाह—**जगदुपादानमायाश्रयतयेति**। माया-तद्विवर्तप्रपञ्चाधीन*। एतदुक्तं भवति—यदभिन्नं कार्यमुत्पद्यते तदुपादान-मित्युपादानसामान्यलक्षणम्। विवर्ताधिष्ठानत्वं तु तद्विशेषो ब्रह्मण एव। तच्च विषमसत्ताककार्यात्मकत्वादिकम्। तदपि सन् घट इत्यनुभवबला* वक्तव्यम्। उपयोगाभावात्। न तावदनेन ब्रह्मस्वरूपं सिध्यति नापि तस्येतरव्यावृत्तिः स्वरूपलक्षणादेव तस्यापि सिद्धत्वादित्याशङ्क्य, जगत्कारणत्वेन हि सम्भावि-ताद्वितीयं वस्तु ब्रह्मशब्देन नामाद्यसत्यादिवाक्यैस्तस्य* **तत्रेत्यादिना** ॥

अथवा नात्रातिव्याप्तिराशङ्क्य निराक्रियते। किं तु मायावत् जडत्वेऽपि कर्तृत्वं सम्भवति परमतेऽप्यात्मनः कर्तृत्वात् इत्याशङ्क्य, स्वरूप-लक्षणतटस्थलक्षणाभ्यां (न) वि(वक्षित) [शुद्ध]ब्रह्मसिद्धिरित्याह* वि(वक्षित)-

* अत्र सर्वत्र ग्रन्थे त्रुटिः।

मायानिष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः। उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात् तत्कार्यमपि ब्रह्मपरतन्त्रं भवति। यथा अंशुतन्त्रतन्त्वारब्धोऽपि पटः अंशुतन्त्रः प्रतीयते। ततश्चोत्पद्यमानकार्यस्य यदाश्रयोपाधि ज्ञानानन्दलक्षणं च तत् ब्रह्मेति शुद्धब्रह्मलाभ इति। तदाह— 300 - 1
यदवष्टम्भ इति ॥

केचितु ब्रह्मैव जगदाकारेण परिणमते मृदिव घटाकारेणेति 300 - 1
वदन्ति; तत् व्यावर्तयति—विश्वो विवर्तत इति। एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासो विवर्तः। एकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिः परिणामः। तत्र ब्रह्म न विवर्तते किं तु परिणमत एवेति तैस्तत्र प्रमाणं वक्तव्यम्। सृष्टिश्रुतेः परिणमत इति चेत्; सा खलु सृष्टिश्रुतिः ज्ञानानन्दसत्यनिरवयवापरिच्छिन्नब्रह्मस्वरूपस्य पूर्वसिद्धस्य परित्यागेन जडदुःखमिथ्यासावयवपरिच्छिन्नकार्यापत्तिं ब्रह्मणो ब्रवीति? आहोस्वित् पूर्वसिद्धरूपापरित्यागेनैव तद्विपरीतकार्यरूपापत्तिं ब्रह्मणो ब्रवीति? इति वक्तव्यम्। तत्र पूर्वपरित्यागे ब्रह्मस्वरूपोच्छेदात् कार्यमात्रमेव वस्तु स्यात्। सृष्ट्यवस्थायां कार्यमात्रमेव पुनः प्रलयावस्थायां ज्ञानानन्दादिरूपेण परिणमत इति चेत्, न—अनिर्मोक्ष-

---

ता **ततश्चेति**। विवर्तलक्षणमाह—**एकस्येति**। तत्त्वं स्वरूपम्। असत्येति पदं लक्षणोपपादनार्थम्, न लक्षणान्तर्गतम्। अस्तु विवर्तपरिणामयोर्लक्षणम्, ततः किम्? इत्यत आह—**तत्रेति**। प्रथमपक्षे दूषणमाह—**तत्र पूर्वेति**। रुचकादिविनाशे सुवर्णाविनाशवत् कार्यरूपापत्तावपि ब्रह्मरूपस्यानाशात् ज्ञानादिरूपेण परिणामो भविष्यतीति शङ्कते—**सृष्ट्यवस्थायामिति**। [**अनिर्मोक्षप्रसङ्गादिति**।] ज्ञानानन्दब्रह्मरूपापत्तेः मुक्तित्वात् तद्रूपस्यापि ब्रह्मणः पुनः कार्याकारेण परिणामे मुक्तानामपि बन्धप्रसङ्ग इत्यर्थः।

---

भा [शुद्ध]ब्रह्मसिद्धिरिति वक्तुं मायाया उपादानत्वमुक्तमिति द्रष्टव्यम्। यत्तु तटस्थलक्षणातिव्याप्तिः स्वरूपलक्षणान्तर्भावेन एतैर्ग्रन्थैः परिह्रियत इति, तत् न—स्वरूपलक्षणान्तर्भावे तटस्थलक्षणवैयर्थ्यादि*

---

* अत्र ग्रन्थे त्रुटिः।

प्रसङ्गात्। 'अज आत्मा महान् ध्रुवः' 'न जायते' इत्यादिश्रुतिविरोधश्च स्यात्। अथ पूर्वविपरीतब्रह्मस्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रूयात् सृष्टिश्रुतिः; एवं तर्हि विवर्तं प्रतिपादयति। शुक्तिकारजतमायाव्याघ्रादिषु विवर्तस्य तल्लक्षणत्वात्। अथ सृष्टिश्रुतिः सृष्टिमात्रविषया न पूर्वस्वरूपपरित्यागापरित्यागयोर्व्याप्रियत इति चेत्; तथापि व्यवस्थितब्रह्मवाक्यैरेकवाक्यत्वात् तत्स्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रह्मणो ब्रुवाणा विवर्तमेव दर्शयतीत्यनवद्यम् ॥

योऽपि कश्चिदाह—निरवयवमपि परिणमत इति। तथा हि—हेमद्रव्ये रुचकाकारेण परिणममाने तदवयवा अपि परिणमेरन् न वेति वक्तव्यम्। यदि परिणमेरन्; तर्हि तदवयवा अपि तथेति निरवयवपर्यन्तः परिणामः स्यात्। अथ न परिणमेरन्; न तर्हि अवयवी परिणमेत। आश्रयविकारमन्तरेण आश्रितविकारायोगात्। तस्मात् यथा संयोगः अवयव्येकदेशसमवेतः परम्परया निरवयवपरमाणुसंयोगपुरस्सरः, तथा निरवयवपरिणामपुरस्सरः अवयविपरिणाम इति ॥

स वक्तव्यः—कश्चायं परिणामः? इति। यदि तावत् स्वावयवानां पूर्वसंयोगात् संयोगान्तरापत्त्या वा अवयवान्तरसंयोगेन वा संमूर्छितावयवत्वं परिणामः; न तर्हि निरवयवे परिणामः। स्वावयवाभावात् निरवयवस्य। न च अवयवानां संयोगान्तरेण संमूर्छितत्वमन्तरेण अवय-

---

ता. श्रुतिविरोधादपि ब्रह्मणः कार्याकारेण परिणामपक्षोऽनुपपन्न इत्याह—अज आत्मेति। द्वितीयपक्षमुत्थाप्य दूषयति—अथेति। कार्यापेक्षया पूर्वं च तद्विपरीतं चेति पूर्वविपरीतं तदपरित्यागेन स्वरूपापरित्यागेनेति यावत्। व्यवस्थितब्रह्मवाक्यैः। सत्यादिवाक्यैरित्यर्थः ॥

निरवयवस्यापि स्वावयवाकारेण परिणामं पारिशेष्येण साधयति—तथा हीति। उक्तमर्थं सदृष्टान्तमुपसंहरति—तस्माद्यथेति। एकदेशिमतं दूषयति—स वक्तव्य इति। अवयवानां संयोगान्तरेण यत्संमूर्छितत्वं तद्व्यतिरेकेणावयविनः परिणामोऽवस्थान्तरं वान्यथाभावो वा निरूपयितुं न च

विनः परिणामोऽवस्थान्तरं वा अन्यथाभावो वा निरूपयितुं शक्यते। न च वस्तुनो वस्त्वन्तरसंयोगो वा परिस्पन्दो वा गुणान्तरोदयो वा परिणामः। ब्रह्मणि तेषामभावात्। आकाशे च वस्त्वन्तर-संयोगिनि परिस्पन्दमाने च भ्रमरे लौहित्योदये च घटे द्रव्ये परिणामबुद्ध्यभावात्। अथ तदनुषक्तद्रव्यान्तरोत्पत्तिः परिणाम इति; तत्र किं हेमावयवानां रुचकरूपेणैव परिणामः? किं वा द्रव्यान्तररूपेण?। न तावत् द्रव्यान्तररूपेण; तत्र रुचकद्रव्यातिरिक्तकार्यद्रव्यादर्शनात्। नापि रुचकाकारेणैव; तस्यावयविपरिणामत्वात्। अवयवानां च रुचकानुगमस्य रुचकानुगतावयव्यनुगमेनैव अन्यथासिद्धत्वात्। न च रुचकावस्थाव्यतिरेकेण हेमावयवानामवस्थान्तराणि दृश्यन्ते, येन परिणामभेदः स्यात्। न च संयोगभेद एव अवयवपरिणाम इत्युक्तम्। न च अवयविद्रव्यं विना हेमावयवा रुचकाकारेण परिणमन्त इति युक्तम्। आरम्भवादप्रसङ्गात्। अथ अदृश्यमानोऽपि अवयवपरिणामोऽवय-विपरिणामानुपपत्त्या कल्प्यते आश्रयविकारमन्तरेण आश्रितविकारानुप-पत्तेः। नैतत्सारम्—अवयविजन्मविनाशयोरवयवानामपि तत्तन्त्राणां

---

**शक्यत** इत्यन्वयः। कुतो निरूपयितुं न शक्यते संयोगादेरेव परिणामत्वादित्यत आह—**न च वस्तुन इति**। **गुणान्तर**शब्देन रूपादयः,(आदि)[उदय]शब्देना-वस्थान्तरम्। संयोगादिषु परिणामबुद्ध्यभावाच्च न ते परिणाम इत्याह—**आकाशे इति**। **तदनुर[ष]क्तेति**। उपादानकारणसम्बद्धद्रव्यान्तरोत्पत्तिरिति यावत्। भवत्ववयविनो रुचकरूपेण परिणामः, अवयवानां कः परिणामः? इति विकल्पयति—**तत्र किमिति**। अवयवावयविनोरेक एव परिणामः अवयविस्वरूपवदवयवा-नामप्यस्मद्दर्शनादित्यत आह—**अवयवानां चेति**। अवयवानामवस्थाभेदस्तर्हि परिणाम इत्यत आह—**न च रुचकेति**। मा भूदवयविनः परिणामः, अवयवानामेव स किन्न स्यात्? इत्यत आह—**न चावयवीति**। द्व्यणुकैः त्र्यणुकारम्भवत् **आरम्भवादप्रसङ्ग** इत्यर्थः। जन्मविनाशव्यतिरिक्तोऽवयवि-

जन्मविनाशप्रसङ्गात्। अवयविगमनेऽवयवानां गमनवत् परिणामोऽपि भविष्यतीति चेत्, न—अवयविनि घटत्वजातिसमवायिनि अवयवानां घटत्वजातिसमवायाभावात्। ननु अवयवानामन्यथाभावमन्तरेण कथमवयविनोऽन्यथाभावः स्यात्?। जातिगुणादिष्वन्यथाभावरहितेषु द्रव्यपरिणामवदिति वदामः। न हि द्रव्यस्यावस्थान्तरद्रव्यान्तरापत्तिवत नैल्यं गुणान्तरमापद्यतेऽवस्थान्तरं वा। न च अवयविकार्यव्यतिरेकेण अवयवानां कार्यं दृश्यत इत्युक्तम्। न हि पटे कार्यान्तरावभासेऽपि तन्तवोऽतन्त्वात्मना अवभासन्ते। पटकार्ये तन्त्वनुगमः स्वानुगतानुगमादन्यथासिद्ध इत्युक्तम्। किं च, अवयविपरिणामोपाधावेव अवयवपरिणामो दृष्ट इति न निरुपाधिनिरवयवात्मपरिणामसिद्धिः॥

यत्तु निरवयवसंयोगवत् परिणाम इति, तत्रापि दृश्यमानोऽवयविसंयोगो न परमाणुसमवेतः; तद्गतरूपादिवदप्रत्यक्षत्वप्रसङ्गात्।

---

ता. विकारः स्वीयावयवविकारपुरस्सर इति शङ्कते—**अवयविगमने इति**। गुरुमतेन समवायस्य कार्यत्वमङ्गीकृत्य प्रसङ्गो द्रष्टव्यः। तादर्थ्यादवयवविकारमन्तेरण कथमवयविविकारः? इति शङ्कते—**नन्ववयवानामिति**। परिहारमेव स्पष्टयति—**न हि द्रव्यस्येति**। जातिगुणादौ भवतु तथा, ततोऽन्यत्र पुनरन्यथाभावो भविष्यतीत्याशङ्क्याह—**न चावयवीति**। **कार्यान्तरावभासे**। पटसाध्यरज्जुलक्षणकार्यान्तरावभासे इति यावत्। अवयविकार्यमेव आवयवानां कार्यं तेषां अवयविकार्येऽन्वयदर्शनादिति यदुक्तम्, तत्र अन्यथासिद्धत्वमेवोक्तं स्मारयति–[**पटकार्ये**]**तन्त्वनुगम इति**। **स्वानुगतानुगमात्**। अवयवानुगतस्य अवयविनोऽनुगमादिति यावत्। अवयवानां पृथक्परिणाममङ्गीकृत्य ब्रह्मणि न सम्भवतीति दूषयति—**किं चेति**॥

अवयविसंयोगदृष्टान्तेन निरवयवस्यापि परिणामो भवतीति यदुक्तम्, तद्दूषयति—**यत्त्विति**। दृश्यमानसंयोगस्य परमाणुसमवेतत्वमुच्यते? किं वा परमाणुसंयोगपुरस्सरत्वम्? इति विकल्प्य, आद्यं दूषयति—**तत्रापीति**। द्वितीयं

नाप्यवयव्येकदेशसंयोगेन निरवयवे संयोगः कल्पयितुं शक्यते। अवयविन्येव जातिसमवायवदवयवसंयोगमन्तरेण अवयविन्येव संयोगोपपत्तेः। अवयवानां संयोगानुगमस्य अवयव्यनुगमेन अन्यथासिद्धत्वात्। अवयवेष्वेव संयोगो नावयविनि इति चेत्, न—अवयविभ्यामसंयुक्ताभ्यां कार्यान्तरानारम्भप्रसङ्गात्। तस्मादवयविन्येव संयोगः; नावयवेषु। अवयविसमवाये संयोगस्य कृत्स्नवृत्तिता संयोगस्य प्राप्नोतीति चेत्, तर्हि निरवयवसंयोगेऽपि कृत्स्नवृत्तेः प्रचयाभावप्रसङ्ग इति॥

कथं पुनर्ब्रह्मणो निरवयवत्वलाभः?। उच्यते—अवयवावयविनोः स्वयंप्रकाशत्वे सति इतरेतराविषयत्वान्न सावयवत्वं ब्रह्मणा स्वात्मन्यनुभवितुं शक्यम्। अन्यतरस्य अस्वयंप्रकाशत्वे अन्यतरेण वेद्यत्वात् घटात्मनोरिव नांशांशिभावसिद्धिः। श्रुतिश्च 'निष्कलं निष्क्रियं शान्तम्' इति क्रियावयवशून्यतामाह। नियन्तृत्वादिक्रियापि श्रूयत इति चेत्, तर्हि परस्परविरोधे सति मायया तत्त्वातत्त्वव्यवस्था कल्पनीया। 'इन्द्रो मायाभिः पुरुरूप ईयते' इति प्रवृत्तेः मायानिबन्धनत्वश्रवणात् चेतनस्य निर्व्यापारस्य सुषुप्ते पुरुषार्थत्वावगमात् ब्रह्मणः स्वतःप्रवृत्तिप्रयोजनाभावाच्च विपरीतस्वरूपापरित्यागेन विपरीतकार्यापत्तेश्च विवर्त एवेति सिद्धम्॥ ता.

दूषयति—**नापीति**। अवयविनि संयोगानङ्गीकारे तन्तूनामपि स्वावयवापेक्षया अवयवित्वात् तेषां परस्परसंयोगाभावात् पटानारम्भप्रसङ्ग इति परिहरति—**न—अवयविभ्यामिति**॥

ब्रह्मणः सावयवत्वपक्षे अवयवावयविनोरुभयोः स्वयंप्रकाशत्वम्? उत अन्यतरस्य? इति विकल्प्य, क्रमेण दूषयति—**उच्यत इत्यादिना**। निरवयवत्वे मानसद्भावादप्येवमित्याह—**श्रुतिश्चेति**। **क्रियावयवशून्यता** इत्यत्र व्यत्यासेन अन्वयो द्रष्टव्यः। नियन्तृत्वं मायानिबन्धनमित्यत्र प्रमाणमाह—**इन्द्रो मायाभिरिति**। परिणामे प्रयोजनाभावादपि न परिणाम इत्याह—**चेतनस्येति**॥

**ननु जगदुत्पत्तिकारणत्वं न सिद्धवत् ब्रह्मलक्षणत्वेन उपादातुं**
**शक्यम्, भूतपञ्चकस्य कार्यत्वासिद्धेः भौतिकानां च भूतोपादानत्वात्**
301 - 1 **इति चोदयति**—ननु श्रुतिनिर्दिष्टग्रहणे इत्यादिना। उच्यते **इत्यादेः**
300 - 3 **परिहारस्यायमर्थः—पृथिव्यप्तेजोवायवो विवादपदानि जन्मविनाशवन्तः,**
**पृथिव्यप्तेजोवायुबुद्धिगोचरत्वात्, एकदेशपृथिव्यप्तेजोवायुवदिति।**
**ननु प्रत्यनुमानमस्ति—पृथिव्यादयो न जायन्ते महाभूतत्वादाकाशवत्,**
**आकाशश्च न जायते निरवयवद्रव्यत्वादात्मवदिति। सत्यम्। महा-**
**भूतत्वादिति सामान्यतोदर्शनात् पृथिवीबुद्धिगोचरत्वात्तदेकदेशवदिति**
**विशेषतोदर्शनमेव बलीय इत्यनवद्यम्। 'न यथोक्तविशेषणस्य' इत्यादि-**
301 - 8 **भाष्यतात्पर्यमाह**—युक्तिरपि ब्रह्मस्वरूपनिर्णयायेत्यादिना॥

---

ता.

भूतोपादानत्वं ब्रह्मलक्षणम्? उत भौतिकोपादानत्वम्? इति विकल्प्य क्रमेण दूषयति—**भूतपञ्चकस्येत्यादिना**। भूतानां ब्रह्मकार्यत्वं साधयितु-मुत्पत्तिविनाशवत्त्वं साधयति—**पृथिवीति**। अत्र पृथिव्यादिविषयमनुमान-चतुष्टयं (द्रव्यम)[बोध्यम्। अ]न्यथा भागासिद्धिप्रसङ्गात्। पृथिव्यादिबुद्धि-गोचरत्वं तु पृथिवीत्वादिहेतुप्रसाधनार्थम्। अत्र 'आत्मन आकाशस्सम्भूतः' इति श्रुतिविरुद्धतया आकाशानुत्पादानुमानस्य कालात्ययापदिष्टत्वम्, गुणाश्रयत्वादि-रूपद्रव्यत्वस्य आत्मन्यसिद्धेर्दृष्टान्तस्य साधनविकलता, इति दूषणद्वयं स्पष्टतयो-पेक्ष्य प्रौढिमारूढो दूषणान्तरमाह—**सत्यमिति**। सामान्यतोदृष्टानुमाना-

---

भा.

निरवयवत्वं(यद्य)[ना]कार्यत्वम्, साध्याविशेषात्। नाप्यवयवासमवेतत्वम्; कार-णातिरिक्तावयवशब्दार्थाभावात्। तथा च असिद्धो हेतुः। रूपादेरिव निरवयव-द्रव्यस्यापि उत्पत्तौ बाधकाभावाच्च। 'आत्मन आकाशः सम्भूतः' इति श्रुतिविरुद्ध-त्वाच्च। बाह्ये*नुमानासम्भवाच्च। ततश्च दृष्टान्तेन सूक्ष्मपृथिव्यादीनामनुत्पत्ति-र्नानुमातुं शक्या। तथाप्यङ्गीकृत्य दूषणान्तरमाह—**सत्यम्, महाभूतत्वादिति**॥

अयमाशयः—पृथिव्यादिनवद्रव्यपक्षीकारे आत्मनि (बाधः, )[भागा-सिद्धिः,] प्रत्येकपक्षे व्यभिचारः, पृथिव्यदिचतुर्णां अन्यतमस्य पक्षत्वे विशेषतो-दृष्टबाधः, अन्यान्यत्वेन पक्षत्वे श्रुतिबाध इति। **सामान्यतोदर्शनादिति**। सामान्याकारसाध्यज्ञानादित्यर्थः॥

---

* अत्र ग्रन्थे त्रुटिः।

'अस्य जगतः' इत्यादिभाष्यं व्याचष्टे—नान्यतः—परपरिकल्पितात् 302 - 3
प्रधानादेरिति। अयमर्थः—सर्व एव ह्याध्यात्मिका भावाः सुखदुःखमोह-सामान्यप्रकृतिकाः, सुखदुःखमोहसामान्येन नियमेनान्वितस्वभावत्वात्, ये विकारा यदन्वितस्वभावास्ते तत्प्रकृतिका दृष्टाः यथा मृदन्विताः शरावादयः, तथा सर्वे विकारा अविभक्तैकप्रकृतिकाः, परिमितानेकविकारत्वात्, ये परिमितानेकविकारास्तेऽविभक्तैकप्रकृतिकाः यथा मृत्पिण्डप्रकृतिकाः शरावादयः, इति जगन्मूलकारणं प्रधानमनुमिमते साङ्ख्याः। तथा अणुवादिनश्चानुमिमते—सर्वं कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणसंयोग-सचिवसमानजातीयानेकद्रव्यारब्धम्, कार्यद्रव्यत्वात्, यत् कार्यद्रव्यं

---

द्विशेषतोदृष्टानुमानं बलीयः साध्याङ्ककाच्च सिद्धाङ्कमिति स्थितिः। तत्र दृष्टान्तस्य साधनविकलतया साध्याङ्कं महाभूतत्वादिति सामान्यतोदृष्टानुमानं पृथिवीत्वादिविशेषतोदृष्टानुमानेन सिद्धाङ्केन बाध्यते। तदुक्तं भट्टपादैः— ता.

'प्रसिद्धावयवे यत्स्यात् विशेषेण प्रतिष्ठितम्।
तत्साध्याङ्कसामान्यदृष्टाच्च बलवत्तरम्॥
बाधस्सामान्यशास्त्रस्य विशेषविषयाद्यथा।
अनुमानान्तरैरेवमनुमानस्य बाधनम्॥' इति।

प्रधानकारणत्वसाधकानुमानं दर्शयति—सर्वे(चे)[एवे]ति। संयोगादिव्यावृत्त्यर्थमाह—नियमेनेति। तथेति। अविभक्तपरमाणुप्रकृतिकत्वेन सिद्धसाधनता मा भूदिति एकप्रकृतिका इत्युक्तम्। तावन्मात्राभिधाने च ब्रह्मकारणत्वेन सिद्धसाधनता, तदर्थं अविभक्तेति पदम्। परिमितत्वात् अनेकत्वात् विकारत्वाच्चेति हेतुत्रयम्। स्वपरिमाणादणुतरपरिमाण-द्रव्यारब्धं इत्येतावन्मात्रेणैव परमाणुसिद्धिः, संयोगसचिवेत्यादिविशेषणैस्तु संयोगस्यासमवायिकारणत्वं पार्थिवानामेव पार्थिवारम्भकत्वं अनेकेषामेव एकद्रव्यारम्भकत्वं साध्यत इति द्रष्टव्यम्। नित्यद्रव्ये गुणादौ च व्यभिचार-

तत्तथा यथाऽनेकद्रव्यारब्धः पटः, इति निरवयवपरमाणुपर्यन्तमनुमानप्रवृत्तेः परमाणवो मूलकारणमिति। तथा शून्यवादिनश्च—सर्वं कार्यमभावपुरस्सरं भवितुमर्हति, योग्यत्वे सत्यनुपलभ्यमानपूर्वावस्थत्वात्, यत् अभावपुरस्सरं न भवति न तद्योग्यत्वे सत्यनुपलभ्यमानपूर्वावस्थं यथा परपरिकल्पित आत्मा, इति शून्यालम्बनत्वं सर्वत्र वदन्ति। योगाः शैवाश्च हिरण्यगर्भं पशुपतिं चागमसामर्थ्याज्जगत्कारणं कल्प-
302-3 यन्ति। तान् पक्षान् व्यावर्तयति—नान्यतः—परपरिकल्पितादित्यादिना॥

302-6 तत्र प्रथमं तावत् प्रमाणदूषणं सम्भावयति—अचेतनात्तावदित्यतः प्राक्तनेन ग्रन्थेन। कथम्? साङ्ख्यानुमाने तावत् सुखदुःखमोहान्वयो भावानामसम्प्रतिपन्नः। अन्तर्बहिर्भावेनोपलब्धेः। स्यादेतत्—सर्वे विकाराः सुखदुःखमोहात्मकाः, चित्तोपरक्तत्वे सति तत्र तदाकारप्रतिभासहेतुत्वात्, दर्पणोपरक्ततया मुखाकारप्रतिभासहेतुबिम्बवत् इति भावानां सुखदुःखमोहान्वयोऽनुमीयत इति। न—अन्तर्बहिर्भावभेदप्रत्यक्षविरोधात्। एकं च शब्दमुपलभमानानां प्रत्येकं सुखदुःखमोहत्रितयोपलम्भप्रसङ्गाच्च। अदृष्टेन च वस्तुसामर्थ्यनियमायोगात्। अतोऽसिद्धो हेतुः। अनैकान्तिकश्च। गुणसामान्यैरप्यप्रकृतिभिर्द्रव्याणां

---

ता· निवारणार्थं कार्यद्रव्येति विशेषणद्वयम्। आत्मनि व्यभिचारनिवारणार्थं योग्यत्वे सतीति विशेषणम्॥

प्रथमानुमाने हेतोरसिद्धिमाह—साङ्ख्यानुमाने इति। अनुमानमसिद्धिपरिहार[क]माशङ्कते—स्यादेतदिति। स्वाभिव्यञ्जकोपाधौ तदाकारप्रतिभासहेतुत्वादिति हेत्वर्थः। अन्यथा दृष्टान्तस्य साधनविकलताप्रसङ्गात्। अत्र च सुखदुःखमोहात्मकत्वसाधकमनुमानत्रयं द्रष्टव्यम्। नान्तरिति। सुखादेरान्तरत्वात् घटादेश्च बाह्यत्वात् तयोरभेदसाधनं प्रत्यक्षविरुद्धमित्यर्थः। यद्यपि त्रितयमेकस्मिन्नप्यस्ति, तथाप्यदृष्टवशादेकमेवावगम्यत इत्यत्राह—अदृष्टेन चेति। गुणसामान्यैरिति। शुक्लादिगुणैर्घटत्वादिसामान्यैरिति यावत्।

समन्वयात् । यत्तु परिमितत्वादिति ; तत्रापि वस्तुतः परिमितत्वे हेतोः गुणपुरुषेष्वनैकान्तिकता । देशकालपरिमितत्वे घटहिमकरकादिषु प्रत्यक्षदृष्टभिन्नप्रकृतिष्वनेकान्तः । वैशेषिकानुमानेऽपि स्वपरिमाणादणुतरपरिमाणारभ्यत्वे दीर्घविस्तीर्णदुकूलैः क्रियमाणरज्जुद्रव्यस्य ह्रस्वस्यापि कार्यत्वदर्शनादनैकान्तिको हेतुः । प्रत्यनुमानदुष्टश्च । न किञ्चिदपि कार्यद्रव्यं निरवयवद्रव्यसंयोगपुरस्सरम्, प्रचयात्मक-

ता. अविभक्तैकप्रकृतिकत्वानुमानं दूषयति—यत्त्विति । प्रचयः अवयवबाहुल्यम्, सावयवत्वमिति यावत् । एवं च विवादाध्यासितं कार्यद्रव्यं सावयवारब्धं कार्यत्वात् घटवदिति प्रयोगार्थः । अन्यथा निरवयद्रव्यसंयोगपुरस्सरत्वाभावमात्रसाधने सिद्धसाधनत्वात् दिक्कालाकाशादिसंयोगपुरस्सरत्वाभावस्य सिद्धत्वात् निरवयवशब्देन

भा. दीर्घविस्तीर्णदुकूलैः क्रियमाण(स्य) रज्जुद्रव्यस्येति । न च तत् कार्यद्रव्यान्तरं न भवति किं तु संयोगान्तरमिति वाच्यम् । नामरूपकार्यभेददर्शनेन पटवत् तस्यापि भिन्नद्रव्यत्वात् अन्यथा अवयविन एव विलोपप्रसङ्गात् अनेकाणुसंयोगादेव प्रत्यक्षत्वोपपत्तेश्च । यत्तु संयोगान्तरमिति, तत् न तावत् पटस्य, एकमात्रवृत्तिसंयोगासम्भवात् । नापि तदवयवानाम्, पूर्वसंयोगे सति तदयोगात् पूर्वसंयोगनाशे च पटनाशप्रसङ्गात् । किञ्च, पटादिकार्यस्य स्वकारणात् ह्रस्वत्वं दृश्यते । न हि तन्तुभिरर्धप्रदेशारब्धपटस्य तावदधिकं वा दैर्घ्यं भवति । एवं परिमाणान्तरमपि कारणात् न्यूनं चेत् न किञ्चिद्बाधकमिति भावः ॥

न (हि) किञ्चिदपि कार*गासमवायिकारणकवृत्ति, द्रव्यवृत्तिधर्मत्वात् घटादिवत् । अन्यथा निरवयवारब्धे ततोऽधिकपरिमाणं न स्यादिति भावः । द्रव्यद्वयारब्धे कार्ये परिमाणं संयोगारब्ध(द्रव्य)मिति द्व्यणुकादिकार्यपरिमाणमपि तद[वयव]संयोगारब्धं वक्तव्यम् । संयोगश्चाव्याप्यवृत्तिरेव परिमाणारम्भको वक्तव्यः । अन्यथा अधिकपरिमाणासम्भवात् । न च द्वित्वमेव तत्र तदारम्भकं न संयोग इति वाच्यम् ; अन्यत्रादर्शनोपगतस्य तदयोगादस्य * न्महत्त्वमपि स्यादिति किमं* अन्यत्रादर्शना*हद्रव्यस्य कार्यद्रव्यारब्धनियमासिद्धिः । कार्यद्रव्यस्य द्रव्यारभ्यत्वनियमवत्तस्याप्रयोजकत्वादिति ॥

* अत्र सर्वत्र ग्रन्थे त्रुटिः ।

त्वात्, यत् प्रचयात्मकं न तन्निरवयवद्रव्यसंयोगपुरस्सरं यथा घटः। शून्यानुमानेऽपि घटस्य पूर्वावस्था प्रत्यक्षदृष्टा मृदित्यनुपलभ्यमानपूर्वावस्थत्वादित्यसिद्धो हेतुरिति ॥

302 - 6 इदानीमर्थदूषणमभिप्रेत्याह—अचेतनात्तावदचेतनत्वादेवेत्यादिना। मा भून्निरीश्वरात् प्रधानाद्विचित्रकार्यरचना। परमाणुवादे तु पुनरधिष्ठातुरीश्वरस्य विद्यमानत्वात्तद्बुद्धिसामर्थ्यादेव विचित्रजगत्कार्यरचना
302 - 7 भविष्यतीत्याशङ्क्याह—चेतनादपीति। अयमर्थः—कुलालादिदृष्टान्तेन अनुमीयमानस्येश्वरस्य शरीरेन्द्रियपरिच्छिन्नज्ञानशक्तित्वात्तेनैव दृष्टान्तेन परिच्छिन्नज्ञानशक्तेश्च जगद्रचनानुपपत्तिरिति। घटादिषु च कर्तृद्वयप्रसङ्गात् मूलकारणेऽपि तदनुमानमिति ॥

---

ता. च परमाणुविवक्षयां तत्सिद्धावसिद्धौ च धर्मिग्राहकप्रमाणबाधाश्रयासिद्ध्योरन्यतरापातादिति द्रष्टव्यम् ॥

दूषणान्तरमाह—घटादिषु चेति। विवादाध्यासितं कार्यं द्विकर्तृकं कार्यत्वात् घटादिवत्यपि प्रसङ्गात्। न चेदमपि नानिष्टं अदृष्टद्वारा जीवकर्तृकत्वस्य साक्षादीश्वरकर्तृकत्वस्य चाभ्युपगमादिति वाच्यम्। घटादौ तदुभयकर्तृकत्वस्य तदतिरिक्तकुलालकर्तृकत्वस्य च दृष्टतया पृथिव्यादौ कर्तृत्रयप्रसङ्गात्। न चायमुत्कर्षसमः; अव्यासधर्मप्रसञ्जनस्यैव तथात्वात् घटादौ च लोके तथाभूतत्वस्य व्यभिचारानुपलम्भादिति भावः ॥

---

भा कुलालादिदृष्टान्तेनेति। यदि कुलालादिदृष्टान्तेन ज्ञानेच्छाप्रयत्नवान् क्षित्यादिकार्येण कल्प्येत तर्हि ज्ञानस्यानित्यत्वशरीरादिजन्यत्वनियमात् तादृशमेव कल्प्येत, व्याप्तेस्तुल्यत्वे स्वाभिमतमात्रानुमानायोगात्। न च तादृशेन क्षित्यादिरचना सम्भवति इति न तटस्थेश्वराधिष्ठिताः परमाण्वादयो जगदुत्पादयन्तीति समञ्जसम्। निरवयवसंयोगासम्भवाच्च न च परमाणुकार्यं जगदिति। घटादिषु च कर्तृ(त्व)द्वयप्रसङ्गात् मूलकारणेऽपि तदनुमानमिति। क्षित्यादिकं द्विकर्तृकं कार्यत्वात् घटवत्। ततश्च घटे त्रिकर्तृकत्व-

यत्तु शून्यालम्बनं जगदिति; तत्राह—अभावात् पुनरिति । न च निरुपाख्योपादानता जगतः; सदन्वयादिति । किं च, निरुपाख्यस्य कारणत्वे पूर्वकल्पस्य निरन्वयविनाशात् संस्काराभावात् पुनः सजातीयकार्योत्पादनियामकाभावाद्विशिष्टसंस्थानपश्वादिकामितया अनुष्ठितकर्मणां कल्पान्तरे तथाविधपश्वाद्यनुपपत्तेः । शब्दार्थसम्बन्धतद्व्यवहारिणां च 302 - 7

'नाकस्य पृष्ठे तं कालं दिवि सूर्य इव रोचते ।
ततः कृतयुगस्यादौ ब्रह्मपूतो महायशाः ॥
सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन् ।'

इत्यादिश्रुतिप्रतिपन्नानां निरन्वयविनाशात् कल्पान्तरे पूर्वकल्पव्यवहारानुसन्धानेन व्यवहारप्रवृत्त्यभावात् अपूर्वसङ्केते च धर्मस्य प्रमाणान्तरागोचरत्वात् गोपदार्थस्यापूर्वसाधनत्वं प्रमाय तत्र च गोशब्दं प्रयुज्य 'गवा यजेत' इति वाक्यरचनानुपपत्तेश्च कर्मतत्फलतत्प्रमाणव्यवहारोच्छेदः इत्याह—अतीतकल्पसंस्काराभावादित्यादिना ॥ 302 - 8

---

ता. मा भूत् पूर्वकल्पसजातीयकार्योत्पत्तिरिति ; तत्राह—विशिष्टसंस्थानेति । तं कालम् । तावत्कालम्, आकर्मक्षयादिति यावत् । मा भूत् पूर्वव्यवहारानुसन्धानम्, व्यवहारप्रवृत्तिरभिनवैवास्त्विति ; तत्राह—पूर्वेति ॥

---

भा. प्रसङ्गात् क्षितावपि तदनुमितेरित्यनन्तेश्वरः स्यात् । ननु सर्वज्ञसिद्धेः पूर्वं द्विकर्तृकत्वेन(सा) [न] व्याप्तिः, तत्सिद्धौ च लाघवादेकत्वेनैव सिद्ध इति न द्विकर्तृकत्वानुमानमिति चेत्, न—लाघवेन हि पक्षीकृतक्षित्यादीनां परस्परभिन्नकर्तृत्वं निवार्यते । न त्वेकव्यक्तिः कर्तृद्वयं वा । तदुपस्थितेस्तत्सिद्ध्यनन्तरभावित्वात् । सकर्तृकत्वानुमानपर्यवसानानन्तरमेव घटादिषु द्विकर्तृकत्वनिश्चयात् । न च द्विकर्तृकत्वे व्याप्तिरेव नास्ति अप्रयोजकत्वादिति वाच्यम् । कार्यत्वमात्रस्य लाघवेन ज्ञानेच्छाकृतिनिरूपितजन्यतावच्छेदकत्वात् कर्तृद्वयनिरूपितजन्यतावच्छेदकत्वस्यापि सम्भवात् । प्रयोजनाभावस्तु तन्मते ज्ञानादावपि समान इति वक्ष्यत इति ॥

अत्र स्वभाववादी जल्पति—न कारणसापेक्षमिदमुत्पद्यते। ननु स्वयमेव स्वस्य निमित्तमित्युक्तं भवति? किं वा निर्निमित्तमुत्पद्यते? इति। निर्निमित्तमिति ब्रूमः। ननु तर्हि घटस्य भावाभावौ युगपत् स्याताम्, क्रमकारिनिमित्तनिरपेक्षत्वात्। उच्यते—कारणस्य क्रमकारित्वं स्वाभाविकं चेत् स्वभाववादप्रसङ्गः। निमित्तान्तरसापेक्षत्वे अनवस्थापातः। कालभेदेन क्रमकार्यव्यवस्थेति चेत्; स कालक्रमः स्वाभाविकश्चेत् स्वभाववादः। निमित्तान्तरापेक्षत्वे अनवस्था। तस्मात् सर्वं कार्यं विचित्रं क्रमवर्ति च यथादर्शनं स्वभावेनैव जायत
303 - 3 इति। तत्राह—न च स्वभावत इत्यादिना। स्वतस्सिद्धसामर्थ्यानामपि
303 - 5 भावानां परस्परोपकार्योपकारकभावः प्रत्यक्षसिद्ध इत्यर्थः। अत इत्युपसंहारः॥

ननु अनुमानेनैव यथोक्तविशेषणमीश्वरं तार्किका व्यवस्थाप-
303 - 8 यन्ति, किं युक्तिसहितेनागमेन? इत्यत आह—एतदेवानुमानमित्यादिना।

---

ता. सिद्धान्ती विकल्पयति—**नन्विति**। आह पूर्ववादी—**निर्निमित्तमिति**। सिद्धान्ती दूषयति—**ननु तर्हीति**। पूर्ववादी परिहरति—**उच्यत इति**। सिद्धान्तिनो मतमाशङ्कते—**कालभेदेनेति**। किमनेनानवस्थाप्रसङ्गेन वस्तूनां सामर्थ्यस्य निमित्तान्तरनिरपेक्षत्वमुच्यते? किं वा सति वस्तूनां सामर्थ्ये निमित्तान्तरानुसरणं व्यर्थम्,? इति। तत्राद्यं दूषयति—**स्वतस्सिद्धसामर्थ्यानामिति**। वस्तुसामर्थ्यस्यान्यनिरपेक्षत्वमङ्गीकृतमेवेति भावः। द्वितीयं दूषयति—**परस्परोपकार्येति**। अयमभिप्रायः—निमित्तान्तरापेक्षत्वं न प्रतीयत इत्युच्यते? किं वा प्रतीतमपि दुर्निरूपम्? इति। नाद्यः, प्रत्यक्षविरोधात्। घटमारभमाणस्य कुम्भकारस्य दण्डचक्रसूत्राद्यपेक्षायाः प्रत्यक्षसिद्धत्वात्। नापि द्वितीयः, दुर्निरूपत्वस्य सर्वानिर्वचनीयवादिनोऽलङ्कारत्वात्। भूतचतुष्टयमेव तत्त्वम्, प्रत्यक्षमेवैकं प्रमाणं, स्वभाववाद एव पारमार्थिकः, इति मन्यमानस्य तत्र तत्र प्रतिज्ञातार्थे परमार्थतो हेतूपन्यासे हेतुवादप्रसङ्गः, अनुपन्यासे च प्रतिज्ञातार्थासिद्धिः, प्रतीतिमात्रचरणशरणत्वे चानिर्वचनीयवादापातः, इति॥

युक्तिर्हि सम्भावनाबुद्धिमात्रमुत्पादयति। अनुमानं पुनरर्थं निश्चाययति। व्याप्त्यनुपपत्त्याभास उदाहरणमात्रदर्शनं युक्तिः। अव्यभिचारिणी च व्याप्तिरनुमानम्। तत्र कुलालादिदृष्टान्तैः न सर्वज्ञेश्वरकारणत्वं निश्चेतुं शक्यते। विपरीतोदाहरणसम्भवात्। किं तु प्रमाणान्तरे सति कुलालादिदृष्टान्तैः सम्भावयितुं शक्यते। अतो युक्तिरेवैषा। तत्राज्ञानादर्थनिश्चायकमनुमानं मन्यन्ते इति। किं तदनुमानम्? इति। उच्यते—सर्वं कार्यं स्वरूपोपादानोपकरणसम्प्रदानप्रयोजनसामर्थ्यविषयविज्ञानवत्कर्तृकं विविधविन्यासकार्यत्वात् घटादिवदिति वैशेषिकानुमानम्। साङ्ख्ययोगाः—ज्ञानैश्वर्यशक्तयः क्रमेणोत्कृष्यमाणाः क्वचित्सर्वविषयविज्ञानैश्वर्यशक्तिमति पर्यवस्यन्ति तरतमभावेनोत्कृष्यमाणधर्मत्वात् परिमाणवदित्यनुमिमते। नैयायिकास्तु—सर्वं कर्मफलजातं कर्मतत्फलतद्भोक्तृदेशकालादिविषय[विशेष]विज्ञानवता प्रदीयमानं कर्मफलत्वात् सेवादिकर्मफलवदित्यनुमिमते॥

तत्र वैशेषिकानुमाने जगतो बहुकर्तृत्वपरिच्छिन्नज्ञानैश्वर्यादिमत्कर्तृत्वानुमानेषूदाहरणसम्भवाद्युक्तिमात्रमेतत्। योगानुमानेऽपि लक्ष्यपदार्थविषयज्ञानैश्वर्यशक्तीनां क्वचित्काष्ठाप्राप्तिमात्रेऽनुमीयमाने

---

ता. **युक्तिरेव सूत्रिता न त्वनुमान**मिति टीकाकारेणोक्तम्, तत्र युक्त्यनुमानयोः फलतो वैलक्षण्यमाह—**युक्तिर्हीति**। न केवलं फलभेदादेव भेदः, स्वरूपतोऽपि भेद इत्याह—**व्याप्त्यनुपपत्तीति**। व्याप्त्याभासोऽनुपपत्त्याभासः उदाहरणमात्रदर्शनं चेति त्रयं **युक्ति**रित्यर्थः। **अनुमानं** अनुमितिकरणमिति यावत्। वादिभिरुक्तमपि युक्तिमात्रमेव नानुमानमित्याह—**तत्र कुलालादीति**॥

---

भा. **तत्र वैशेषिकानुमाने इति**। तिष्ठतु तावत् प्रत्युदाहरणम्। अनुमानात् कर्तृत्वादिकं न सिध्यति। कुतः? चेत(स)[न]: न हि कार्यमात्रे कृतिमान् कर्ता कारणमित्युक्तम्। चेष्टामात्रे कृतेः कारणत्वात्। अस्तु वा

**ज्ञानादिषु पर्यवसानसिद्धेः कुतः सर्वज्ञत्वादिसिद्धिः। सर्वविषयज्ञानाद्यनुमाने गुरुत्वरागद्वेषदुःखभ्रान्त्यादिषु अनैकान्तिकतेति युक्तिमात्रमेतत्। नैयायिकानुमानेऽपि कर्मफलस्य शरीरेन्द्रियादिमद्बहुदातृत्वदर्शनात् एकेश्वरासिद्धेः श्रुतिप्रतिपन्नसर्वकारणसर्वज्ञसर्वेश्वरसर्वफलदात्रद्वितीयब्रह्मप्रतिपत्तावुदाहरणमात्रेण सम्भावनाबुद्धिहेतुत्वात् युक्तिमात्रमित्यज्ञानान्निश्चायकमनुमानं मन्यन्ते ॥**

**ननु वाक्येषु सत्सु किमित्यनुमानप्रयासः? इति। अनुमानसिद्धा-**
304 - 2 **र्थानुवादकत्वादित्याह**—जन्मादीति। **ननु सूत्रेऽप्येतान्येवानुमानानि**

---

ता. तर्हि युक्तिमात्रत्वमपि कथम्?। सम्भावनाबुद्धिहेतुत्वादित्याह—**श्रुतिप्रतिपन्नेति ॥**

---

भा. कृतिः। तथापि ज्ञानं कुतः सिद्ध्येत्? कृतिः स्वसमानविषयज्ञानं विना [न] भवतीति चेत्, न—त्वन्मते क्षितिजनककृतेः नित्यत्वेन ज्ञानानपेक्षणात्। न च कृतिर्ज्ञानविषयमेव विषयीकरोतीति तद्विषयतानियामकत्वेन ज्ञानमादेयमिति वाच्यम्; नित्यज्ञानविषयतायां इव नित्यकृतिविषयतायामपि नियामकानपेक्षणात्। न च ज्ञानविषयत्वमेव कृतिविषयत्वं न त्वन्यदस्ति ज्ञानस्यैव सविषयत्वादिति वाच्यम्। ज्ञानस्येव कृतेरपि विषयनिरूप्यतया सविषयत्वस्वभावात्। (पदार्थस्य)[स्वगत]विशेषमन्तरेण कृ(ति) [तेः]सविषयज्ञानजन्यतया(न) [स]विषयत्वे दुःखादेरपि ज्ञान[जन्यस्य]सविषयत्वापत्तिः। ततो ज्ञानविषयत्वात् कृतिविषयत्वमन्यदेव। तस्माल्लोके कृतिः स्वोत्पत्त्यर्थमेव ज्ञानमपेक्षते, न (कृति) [स्वस]विषय[त्वाय] (त्वेन)। [स्वगतत्वे च स]विषय[त्वस्य घट]कृतिः पटमपि विषयीकरोत्विति चेत्, न—त्वन्मतेऽपि तत् किमिति न स्यात्? पटस्य ज्ञानाविषयत्वादिति चेत्, न—तत्काले पटस्यापि ज्ञानसम्भवात्। जनकज्ञानविषयो न भवतीति चेत्, तर्हि जन्यकृतेरेव समानविषयज्ञानापेक्षेति न नित्यकृतेस्तदपेक्षा। (यदि) [कृतिः ज्ञान]समानाधिकरणेति कृत्या ज्ञानानुमानमिति च अप्रयोजकत्वात्। अन्यथा दुःखादेरपि तत्र प्रसङ्गः। अशरीरे दुःखवत् ज्ञानस्याप्यसम्भवात् नित्यज्ञानवत् नित्यदुःखस्यापि सम्भवादिति च अनुमानात् [न] सर्वज्ञसिद्धिः इति ॥

स्वातन्त्र्येणार्थनिश्चायकत्वेन सूत्रितानि, तत् कथमागमगुणभूतेयं
युक्तिः ? इति चोदयति—ननु इहापि तदेवोपन्यस्तमित्यादिना । परिहरति— 304 - 5
न—वेदान्तवाक्यकुसुमग्रथनार्थत्वादित्यादिना । किञ्च, अनुमानमात्रात् 304 - 7
कारणसद्भावमात्रं सिध्यति नाधिकम्, इह तु सत्यज्ञानानन्दानन्तसर्व-
ज्ञप्रत्यगात्मब्रह्मावगतिर्विवक्षिता । न चागममन्तरेण सामान्यमात्र-
विषयानुमानादेव विशिष्टार्थसिद्धिः इत्याह—समन्वयसूत्रप्रमुखोपात्तैरित्या- 304 - 10
दिना । न तर्हि युक्तिरत्र सूत्रिता, आगमेनैव विशिष्टार्थसिद्धेरिति ;
तत्राह—सत्सु त्विति । न धर्मजिज्ञासायामित्यादिः स्पष्टार्थः । श्रुतिः— 305 - 2-10
पदान्तरनिरपेक्षः शब्दः । लिङ्गम्—श्रुतस्यार्थस्यार्थान्तरेणाविनाभावः ।
अनेकपदसामर्थ्यं वाक्यम् । वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं
प्रकरणम् । क्रमवर्तिनां पदार्थानां क्रमवर्तिभिः पदार्थैर्यथाक्रमं सम्बन्धः
स्थानम् । संज्ञासाम्यं समाख्या ॥

ननु शब्देन ब्रह्मस्वरूपेऽवधारिते नानुभवेन कृत्यमस्ति, न च
शब्दप्रमेयमनुभवितुं च शक्यमिति ; तत्राह—अनुभवावसानत्वादित्या- 306 - 1
दिना । ननु धर्मजिज्ञासायामित्यादिः स्पष्टार्थः । किमिति धर्मस्यानु- 306 - 3
भवानपेक्षा ? इति चोदयति—कथमिति । धर्मस्यानुभवायोग्यत्वात् अन- 307 - 1
पेक्षितानुभवत्वाच्च न शब्दादन्यापेक्षेति दर्शयति—कर्तव्यं हीत्यादिना । ननु 307 - 1
सिद्धस्वभावस्यानुभवयोग्यत्वेऽपि किमित्यनुभवोऽपेक्ष्यते ? इति ; तत्राह
—इह तु सिद्धस्येति । ननु वेदप्रमेयत्वाविशेषात् मनननिदिध्यास- 307 - 2
नानुभवेषु धर्मवत् ब्रह्मण्यपि मा भूदपेक्षा, ब्रह्मवद्वा धर्मेऽपि स्याद-
पेक्षा ; इत्यत आह—न हि कर्तव्यसिद्धार्थनिष्ठयोरिति । अस्तु पुरुषे- 397 - 5
च्छाप्रयत्ननिर्वर्त्यत्वमपीति ; तत्राह—ततो विधिप्रतिषेधेति । 'यजेत' 307 - 7

ता.

श्रुत्यादीनां स्वरूपं दर्शयति—श्रुतिरिति । वाक्यव्यवच्छेदार्थं पदा-
न्तरनिरपेक्ष इत्युक्तम् । श्रुतिव्यावृत्त्यर्थं अनेकपदेत्युक्तम् । वाक्यद्वयसा-
मर्थ्यं प्रकरणम् इत्युक्ते प्रतिज्ञाहेतुवाक्यद्वयसामर्थ्यमपि प्रकरणं स्यात् तदर्थ-
मारभ्याधीतविषयमित्युक्तम् । श्रुतिवाक्ययोर्व्यवच्छेदार्थं वाक्यद्वयेत्युक्तम् ॥

307 - 7 'न भक्षयेत्' इतिवत् ब्रह्मणो विधेयत्वं प्रतिषेध्यत्वं चेत्यर्थः। विकल्पेति।
307 - 7 'व्रीहिभिर्यवैर्वा' इतिवत् 'ब्रह्म वा स्थाणुर्वा' इतीच्छाविकल्पः। समुच्चयेति
307 - 7 षड्यागसमुच्चयः। इह ब्रह्म स्थाणुश्चेत्यर्थः। उत्सर्गापवादेति।
'न हिंस्यात् सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेत' 'आहवनीये
जुहोति' 'पदे जुहोति' इतिवत् सामान्यप्रतिपन्नब्रह्मणो विशेषेऽपवादः।
307 - 7 बाधाभ्युच्चयेति। प्रकृतेरतिदिष्टानां कुशमयबर्हिषां विकृतावुपदिष्टशर-
मयबर्हिर्भिर्बाधवत् ब्रह्मणोऽपि क्वचित्प्राप्तस्य पदार्थान्तरेण बाधः।
(प्राकृतानां पञ्चनारिष्टहोमानां वैकृतैरुपहोमैः समुच्चित्यानुष्ठानवत् ब्रह्म-
णोऽप्यतिदिष्टस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः।) 'पञ्च प्रया-
जान् यजति' इति प्रकृतेर्विकृतावतिदिष्टानां विकृतौ 'एकादश प्रयाजान्
यजति' इत्युपदिष्टेन समुच्चित्यावृत्त्या षोडशप्रयाजानुष्ठानवत् ब्रह्मणोऽप्य-
308 - 1 तिदिष्टस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः। व्यवस्थितविकल्पेति।
'उदिते जुहोत्यनुदिते जुहोति' इति शाखाभेदव्यवस्थावत् क्वचित् ब्रह्म
भवति न भवतीति व्यवस्था। अस्त्वेवं धर्मसाम्यं ब्रह्मण इति चेन्नेत्याह
308 - 1-2 309 - 1 —न वस्तुनीति। तदेव प्रपञ्चयति—तथा चैकस्मिन्निति। [अ]परः परिचोदयति
इत्यतः प्राक्तनः ग्रन्थः स्पष्टार्थः॥

309 - 1 पुनरनुमानवादिनश्चोदयन्ति—ननु भूतवस्तुविषयत्वे इति। ननु
309 - 4 अनुमानसूचनपरं सूत्रं न प्रतिभातीति; तत्राह—पूर्वसूत्रेणेति। ज्ञानान-
न्दप्रत्यग्भूतब्रह्मणः चक्षुरादिना सामान्यमात्रविषयानुमानैश्च भूतवस्तु-
309 - 5 त्वेऽपि नानुभवः कर्तुं शक्यत इति परिहरति—न—इन्द्रियाविषयत्वेन
309-8-12 इत्यादिना। अत इत्युपसंहारः। नन्वेवं सतीति स्पष्टार्थः॥

310 - 1 उच्यते इत्यादेः परिहारस्यायमर्थः—ज्ञानानन्दसर्वज्ञप्रत्यगात्मभूतं ब्रह्म निश्चाययितुमसमर्था अपि युक्तयः शब्दावगते ब्रह्मणि सामान्यद्वारेण सम्भावनाबुद्धिहेतवो भवन्ति। कथम्?। जगदुपादाने अद्वितीये शब्दावगते मृदादिदृष्टान्तैरुपादानव्यतिरेकेण कार्यस्यानिरूपणात् अद्वितीयता संभाव्यते। स्फटिकलौहित्यप्रतिबिम्बरज्जुसर्पघटाकाश-

दृष्टान्तैरात्मनि कर्तृत्वादेरारोपितत्वं जीवब्रह्मैक्यं ब्रह्मव्यतिरिक्तप्रपञ्च-स्वातन्त्र्याभावः असङ्गत्वद्वारेण विशुद्धाद्वितीयप्रत्यगात्मता सम्भाव्यते इति। 'किं पुनस्तद्वेदान्तवाक्यम्' इति भाष्यस्याक्षेपार्थमाह—सर्वत्र 310.6 [सर्वस्मिन्नेव]वेदान्तवाक्ये ब्रह्मपदस्येत्यादिना ॥

येषां वेदान्तवाक्यानामित्यादेः परिहारस्यायमर्थः—सत्यज्ञाना- 310.8 नन्दप्रत्यगात्माद्वितीयब्रह्मपदार्थेऽप्रसिद्धेऽपि बृहत्त्वमात्रस्य प्रसिद्धत्वात् तदनुवादेन सन्निहितपदार्थसंसर्गसामर्थ्यात् विशिष्टब्रह्म प्रतिपत्तुं शक्यत इति ब्रह्मप्रतिपादनपरं सत्यादिवाक्यम्, अर्थात्तदेव लक्षणमिति न सत्यज्ञानानन्दब्रह्मस्वरूपलक्षणस्य सिद्धानुवादप्रसङ्ग इति ॥

---

ता. सन्निहितपदार्थसंसर्गसामर्थ्यात्। सत्यादिपदार्थसंसर्गसामर्थ्यादिति यावत्। ननु प्रमाणान्तरसिद्धस्य लक्षणत्वात् सत्यादीनामपि लक्षणत्वे तद्वाक्यस्य प्रमाणान्तरप्रसिद्धार्थानुवादकत्वप्रसङ्ग इति; तत्राह—अर्थात्तदेवेति। तथैवो-

---

भा. अर्थात्तदेवेति। ननु असाधारणधर्मो लक्षणं न स्वरूपमिति चेत्, न—असाधारणधर्मेषु घटत्वादिषु असाधारणधर्मान्तराभावात् तत्स्वरूपासिद्धिप्रसङ्गात्। न च घटत्वादावपि[घटत्वत्वं](भावत्वं) जातिरसाधारणधर्मोऽस्तीति वाच्यम्। न ताव[दत्र घटत्वत्वं जातिरूपो]धर्मः। जातेर्जा(त्यनाश्रय) [त्याश्रयत्वं]न सम्भवतीत्युक्तम्। अन्यथा भावत्वादेरपि जाति[त्व]प्रसङ्गात्। समवाय-स्यापि तत्र सम्भवात्। नापि[घटत्वत्वं] घटेतरावृत्तित्वे सति सकल-(सुख)[घट]वृत्तित्वमिति वाच्यम्; परस्पराश्रयेणास्य दुरधिगमत्वात्। तथा हि घटत्वत्वज्ञानं विना घटत्वस्य घ(टादिप)[टेत]रावृत्तित्वधीर्न सम्भवति। न तया विना घटपटयोर्व्यावृत्तत्वधीरस्ति। घटत्वस्य पटादिव्यावृत्तिसंशय-व्यतिरेकनिश्चयदशायामयं पटो न भवतीत्यप्रतीतेः। न च घटपटयोर्व्यावृत्तत्व-ज्ञानं विना घटेतरावृत्तित्वे सतीत्यादि ज्ञातुं शक्यते। तस्मात् घटत्वादिकं स्वतो व्यावृत्तमिति न तस्मिन् घटत्वत्वादिराश्रयणीयः ॥

एवं अत्र घटोऽस्तीति अत्र पटोऽस्तीति वाक्याभ्यामुपस्थितघटत्वपट-

नन्ु स्वाध्यायपाठक्रमेण नार्थप्रतिपत्तिः, किन्तु वैपरीत्येन। 'प्रसिद्धानुवादेन अप्रसिद्धं प्रतिपाद्यते' इति न्यायात्। तथाच कारणस्य प्रसिद्धत्वात् यस्मादाकाशः सम्भूतः स आत्मा सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यप्रवृत्तिः। तथा यस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते स सर्वज्ञः सर्वविदिति। तथा यस्मात् प्राणादि जायते स दिव्यो ह्यमूर्तः पुरुषः इत्यादि। तथा यो भूतयोनिः तदद्रेश्यमग्राह्यमित्यादि। तथा यस्मात् तेजोऽबन्नानि जायन्ते तत्सदद्वितीयमणिमा तत्त्वमसि इत्यादिकारणमात्रानुवादेन तद्विशेषः प्रतिपाद्यत इति। सत्यम्। अधिकारिज्ञान-
311 - 2 कर्तव्यताब्रह्मात्मप्रतिपादनानां क्रममभिप्रेत्येदमुक्तम्। तदाह—तथैवोदाहरणमिति। ननु जगत्कारणे नानात्वस्यापि प्रतिपत्तेः कथं तदनुवादेन
311 - 4 ब्रह्म प्रतिपादनीयमिति चोदयति—कथमिति। परिहरति—
311 - 4 पूर्वोक्तेनेत्यादिना ॥

अयमर्थः—जगत्कारणमात्रानुवादेऽपि तस्य नानात्वाशङ्कायां 'यतः' इत्येकत्वनिर्देशात् एकत्वमपि प्रमीयते। ननु अनुवादे प्रमिति-

---

ता. दाहरणमिति टीकाग्रन्थस्य तात्पर्यं वक्तुं शङ्कामाह—ननु स्वाध्यायेति। सत्यमिति। मुमुक्षूणां ब्रह्मज्ञानं कर्तव्यमित्युक्ते, किं तद्ब्रह्म? इत्याकाङ्क्षायां तल्लक्षणप्रस्तावो भवतीति तेनाकाङ्क्षाक्रमेण 'भृगुर्वै' इत्याद्युपसदनवाक्यं प्रथमसूत्रेण विचारितम्, 'यतो वा' इत्यादिवाक्यं तु द्वितीयसूत्रेण विचारितमाकांक्षानुसारेणेत्यर्थः। यत इत्येकत्वनिर्देशादिति। अयमर्थः—यद्यपि तसिल्प्रत्ययो बहुत्वैकत्वयोस्साधारणः, तथापि 'येन जातानी'ति वाक्यशेषादेकत्वविषय

---

भा. त्वयोरन्योन्यव्यावर्तकज्ञानासम्भवेन उ(दा)[दका]हरणाद्यर्थिनोऽनियतप्रवृत्तिः स्यात्। निष्कम्पप्रवृत्तेर्व्यावर्तकज्ञानाधीनत्वात्। अन्यथा तदितरभेदसंशयादावपि प्रवृत्तिः स्यादिति घटत्वादिकं स्वत एव व्यावृत्तं वक्तव्यमिति नासाधारणधर्म(लक्षण)स्य लक्षणत्वम्। किं तु(यावत् ज्ञानजन्यविषयं)यज्ज्ञानं सजातीयविजातीयेभ्यो व्यावर्तकं[तत् लक्षणम्] तच्च क्वचिद्धर्मः क्वचित् स्वरूपमिति च स्वरूपस्य [न] लक्षणत्वानुपपत्तिरिति ॥

नुपपन्ना । न—जगत्कारणैकत्वपुरोवादाभावात् अनुवादसामर्थ्यादेवै-
कत्वं प्रमीयते । अन्यथा अनुवादवैयर्थ्यात् । ननु एकत्वे ब्रह्मलक्षणे च
प्रमीयमाणे वाक्यभेदः स्यात् । न—एकत्वस्य ब्रह्मप्रतिपत्तिगुण-
भूततया एकवाक्यत्वात् । अथवा, एकत्वमपि लक्ष्यान्तर्गतमेव भवति
न लक्षणान्तर्गतम् । तथा हि—जगत्कारणमात्रानुवादेन एकं ब्रह्म
विधीयते इति । ततः किमायातम् ? इति ; तदाह—अर्थात्सर्वज्ञमिति । 311 - 8
न संज्ञासंज्ञिसम्बन्धपरं वाक्यम्, किं त्वर्थप्रतिपादनपरम्, आर्थिकस्तु
संज्ञासंज्ञिसम्बन्धः इत्याह—पुनस्तद्विजिज्ञासस्वेत्यादि । एकं सर्वज्ञं 311 - 9
सर्वशक्ति सर्वतोऽनवच्छिन्नं च जगत्कारणम्, तच्च ब्रह्मशब्दाभिधेय-
मित्यर्थः ॥

---

ता. एव तसिल्प्रत्ययो निर्धार्यते, तेन कारणस्याप्येकत्वं सिध्यतीति । यतश्शब्द-
स्यानुवादकत्वान्न प्रमितिपरत्वमिति शङ्कते—**नन्विति** । यत इति प्रत्ययार्थैं-
कत्वस्य प्रमाणान्तरप्रसिद्धत्वं नास्तीति परिहरति—**न—जगत्कारणैकत्वेति** ।
**अनुवादसामर्थ्यादिति** । प्रकृत्यर्थानुवादेन तत्र प्रत्ययेनैकत्वं प्रमीयत इत्यर्थः ।
उपलक्षणस्वरूपलक्षणपरत्वेनावान्तरवाक्यभेदेऽपि वाक्यैकत्वं न विरुध्यत इति
परिहरति — **नैकत्वस्येति** । यज्जगज्जन्मादिकारणं तदेकमिति यतो
वेति वाक्यार्थः, तदनुवादेन च तदेव सच्चिदानन्दरूपमिति वाक्यैकत्वं
न विरुध्यत इति भावः । गोसदृशो गवयशब्दवाच्य इतिवत् संज्ञासंज्ञि-
सम्बन्धप्रतिपादनपरत्वान्नार्थस्वरूपपरत्वमित्यत आह—**न संज्ञेति** ॥

---

भा. 'आत्मन आकाशः सम्भूतः' इत्यत्र आत्मत्वस्येव 'यतो वा'
इति वाक्ये प्रधानादिव्यावर्तककारणस्वरू[पो]पस्थित्यभा(वस्याभा)वात् 'तस्य
च निर्णयवाक्यं अनन्दाद्ध्येव' इति भाष्यम् । नन्वेतस्य सृष्टिवाक्यानि
विषयः अविशेषात् । अन्यथा भाष्यकारस्य 'यतः सर्वज्ञात्' इत्यादि-
यच्छब्दव्याख्यानुपपत्तेः । तत्र च कारणनिर्णयः सिद्ध इति किमनेन । ननु
सर्वज्ञत्वादिकं ज्ञानगुणकत्वेऽप्युपपद्यत इति न पराभिमतात्मवैलक्षण्यं

**ननु निरुपाधिकब्रह्मस्वरूपकथनमन्तरेण सोपाधिकानां सर्वज्ञत्वादीनां कस्यचित् धर्मतया प्रतिपत्तिर्न युक्ता। तत्र 'यत् सुषिरं तदाकाशम्' 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिवत् स्वरूपलक्षणमेव किंचिद्वक्तव्यम्। ब्रह्मशब्दाभिधेयमेव स्वरूपलक्षणमिति चेत्, न—बृहत्वधर्ममात्राभिधानात्। महान् घट इत्युक्ते महत्त्वस्य निरुपाधिर्घटो धर्मितया प्रतीयते तथेहापि वक्तव्यम्। सच्छब्दाभिधेयं लक्षणमिति चेत्, न—महासामान्यमात्राभिधानात्। सन्नित्युक्ते घट इत्यवान्तरसामान्यव्यक्तिर्महासामान्यपर्यवसानत्वेन अपेक्ष्यते तथेहाप्यवान्तरसामान्यव्यक्तिर्वक्तव्या। विज्ञानमेव बृहत्त्वसर्वज्ञत्वादिधर्मवत्तया निरुपाधिब्रह्मस्वरूपलक्षणमिति चेत्, न—तस्य सुखदुःखरागद्वेषादिमहासामान्यत्वात् तस्याप्यवान्तर-**

---

ता. (वेदान्तिमतेन) [प्राभाकरमतेन] व्यभिचारमाह—**न—तस्येति**। विज्ञानत्वस्य सुखदुःखरागद्वेषाद्यपेक्षया महासामान्यत्वात्तत्राप्यवान्तरसामान्याधारव्यक्त्यपेक्षा न निवर्तत इत्यर्थः। विज्ञानस्य ब्रह्मस्वरूपत्वं साधयितुं विचारमारभते

---

भा. जगत्कारणस्य सिध्यतीति चेत्, न—सत्यज्ञानादिवाक्येन कारणविषयेण ज्ञानाभेदस्यापि सिद्धत्वात्। न च एवमपि साङ्ख्याभिमतात्मनस्तद्वैलक्षण्यं [न] सिध्यतीति वाच्यम्; आनन्त्योपादानत्वाभ्यामेव तस्यापि सिद्धत्वात् जगत्कारणे आनन्दस्यापि कैश्चित् स्वीकरणाच्चेति चेत्, सत्यम्—एतस्मात् प्रकरणात्तेन विना न कारणस्वरूपनिर्णय इति तदुपपन्नमित्यभिप्रेत्य(ाह) आनन्दपदोपादानस्याभिप्रायमाह—**ननु निरुपाधिकब्रह्मेति**॥

**सर्वज्ञत्वादीनामिति**। सर्वकारणत्वस्येत्यर्थः।* क्यसामर्थ्येन सर्वज्ञत्वासिद्धिः। न च सर्वकर्तृत्वसामर्थ्यात्तत्सिद्धिः इति वाच्यम्; 'यतो वा' इति वाक्ये कर्तृत्वे गमकाभावादिति। कार्ये च सत्स्फुरणयोरनुगमेन कारणं सदात्मकं ब्रह्म तद्धर्म इति शङ्कित्वा परिहरति—(त) [स]**च्छब्दाभिधेय[मिति।]तो*** च सत्यज्ञानशब्दाभिधेयस्यैकव्यक्तित्वेऽपि सज्ज्ञानयोरनेकव्यक्तिषु चानुगमात् सामान्योक्तिरिति द्रष्टव्यम्। **तस्य सुखदुःखरागद्वेषेति**। एतच्च

---

* अत्र ग्रन्थे त्रुटिः।

सामान्यव्यक्तौ पर्यवसानं वक्तव्यमिति ; तदाह—तस्य च निर्णयवाक्य- 311-11
मप्यानन्दाद्ध्येवेति। आनन्द एव हि ब्रह्मत्वसर्वज्ञत्वकारणत्वादिधर्मवत्तया निरुपाधिब्रह्मस्वरूपं निर्णीयते। तथा हि—'यत्र नान्यत्पश्यति' इत्यारभ्य 'यो वै भूमा तत्सुख'मिति सुखस्यैव बृहत्त्वधर्मवत्तामाह। विज्ञानं तर्हि निरुपाधिकब्रह्मगुण इति चेत्, किं विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलवत् गुणगुणिभावात्? किं वा द्रव्यं घट इतिवत् परापरसामान्यभावात्? इति। न तावत् गुणगुणिभावात् 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेः, 'एकधैवानुद्रष्टव्यं नेह नानास्ति' इति गुणगुणिभावभेदप्रतिषेधात्। गुणस्य गुणिनोऽन्यत्वानन्यत्वाभ्यामनिरूपणात् ॥

अत्र सर्वसङ्करवादी न निर्गुणं द्रव्यमस्तीति जल्पति। मा भून्निर्गुणं द्रव्यम्। ब्रह्म तु न द्रव्यम्। प्रमाणाभावात्। समवायिकारणत्वात् द्रव्यमिति चेत्, न—आरम्भवादानभ्युपगमात्। उपादानकारणत्वात् द्रव्यमिति चेत्, न—गुणादीनामपि ग्रहणकर्मत्वादिधर्मोपादानत्वात्। तस्मात्तत्त्वज्ञानेन निर्गुणं वस्त्विति चेत्, अन्त्यगुणेष्वनेकान्तः।

---

ता. —किं विज्ञानेति। युक्त्यापि निर्गुणत्वमाह—गुणस्य गुणिन इति। ग्रहणकर्मत्वं ज्ञातता, आदिशब्देन द्वित्वादि। ज्ञाततादौ धर्मान्तरमस्ति? न वा? अस्ति चेदनवस्थापातः, नास्ति चेत्तत्र व्यभिचारः, इत्यभिप्रेत्य परिहरति —अन्त्यगुणेष्विति। विज्ञानानन्दादिशब्दानां [गुण]वाचकत्वाभावे कथं

---

भा मतान्तरमवष्टभ्योक्तम्। वस्तुतो ज्ञानत्वसामान्याश्रयस्यापि परोक्षापरोक्षरूपेणानेकविधत्वात् न तेनापि ब्रह्मस्वरूपनिर्णय इत्यर्थः। अन्त्यगुणेष्विति। गुणानामपि गुणवत्त्वे अप्रामाणिकानन्तगुणाभ्युपगमप्रसङ्गात् निर्गुणं किञ्चित् वक्तव्यम्, तत्र च वस्तुत्वहेतोरनैकान्तिकत्वमित्यर्थः। [किञ्च गुणानां ब्रह्मणा] न समवायः सम्बन्धः, नापि तादात्म्यम्, समानसत्ताकभेदाभेदात्मनस्तस्य विरोधेनासम्भवात्। नापि सिद्धान्त्यभिमतः कल्पितो भेदसत्तासहिष्णुर्धर्म-

**प्रद्वेषमात्रमेतत् न निर्गुणं ब्रह्मेति। तस्मात् 'द्रव्यं घटः' 'सन् घटः' इतिवत् परापरसामान्यनिबन्धनं 'विज्ञानमानन्दम्' इति सामानाधिकरण्यम्। तस्माद्विज्ञानसामान्यालम्बनमानन्दविशेषो ब्रह्मेति। तत्र सर्वज्ञाद्वितीयत्वादिधर्माणां प्रपञ्चोपाधितया अनिर्वचनीयत्वात् न तैर्ब्रह्म सगुणं सद्वितीयं वा भवति। विज्ञानसामान्यमपि दुःखरागादिप्रपञ्चोपाधितया अनिर्वचनीयं सत् ब्रह्मणि विज्ञानशब्दप्रवृत्तिमात्रहेतुर्भवति। विज्ञान-**

ता. सामानाधिकरण्यम्? इत्याशङ्क्य, उपसंहारव्याजेन परिहरति—**तस्मात् द्रव्यमिति**। **विज्ञानसामान्यस्य आनन्दव्यक्तिराधार** इति यदुक्तं तदुपसंहरति—**तस्माद्विज्ञानसामान्येति**॥

सर्वज्ञत्वादिधर्मवत्तया सद्वितीयत्वमाशङ्क्याह—**तत्र सर्वज्ञेति**। तथापि ज्ञानशब्दप्रवृत्तिनिमित्तस्य विज्ञानत्वस्य भावादद्वैतव्याघात इत्याशङ्क्याह—**विज्ञानसामान्यमिति**। अनिर्वचनीयेनैव सामान्येन जलपात्रगतचन्द्रेषु चन्द्र-

भा. विशेषः, श्रुतेर्मिथ्यार्थे तात्पर्ये अप्रामाण्यप्रसङ्गात्। न च अत्यन्ताभेदेऽपि गुणगुणि[भावः। स्ववृतित्वाभावे] तस्य पारिभाषिकत्वात्। तस्मात् निर्गुणमेव ब्रह्मेत्युपसंहरति—**तस्मादिति**॥

यत्तु—आत्मसुखरूपे ज्ञाने ज्ञानत्वं सामान्यमस्ति चेत्, किमद्वितीयत्वम्? नास्ति चेत् कथं तस्य ज्ञानरूपत्वम्? इति। तत्राह—**विज्ञानसामान्यमपीति**। दुः(खनास्ये) [**खरागादी**]त्यविवक्षितम्। नानावृत्त्युपाधितयेत्यर्थः। न तर्हि ज्ञानस्वरूपं ब्रह्मेति शङ्कामनूद्याह—(करोति) **विज्ञानेति**। न हि ज्ञानत्वमेव ज्ञानस्वरूपम्। ततोऽन्यस्य जडस्य तत्स्वरूपत्वायोगात्। ततोऽज्ञानरिपुप्रकाशस्वभावं स्वतो विलक्षणमिति ज्ञानत्वाभावेऽपि न किञ्चिद्धीयत इति॥

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथाश्रमपूज्यपादशिष्य-श्रीनृसिंहाश्रमविरचितायां पञ्चपादिकाविवरणव्याख्यायां भावप्रकाशिकायां पञ्चमं वर्णकं समाप्तम्॥**

**॥ जन्माद्यधिकरणं च॥**

गुणत्वाभावे न विज्ञानं ब्रह्मेति चेत्, न—विज्ञानसामान्यालम्बनस्य विज्ञानव्यवहारगोचरत्वात् विज्ञानप्रयुक्तार्थक्रियाकारित्वाच्च । सामान्यस्याभासत्वात् तदालम्बनं ब्रह्मज्ञानं मिथ्याज्ञानमिति चेत्, न—मुख्यसामान्यान्तराभावादस्यैव च मुख्यत्वात् । तस्माद्विज्ञानस्वभाव
आनन्दो ब्रह्म इत्यानन्दस्यैव ब्रह्मतां प्रतिपादयति–प्रसिद्धावद्योतकेनेत्या- 311 - 12
दिना । तस्मात् सर्वेषु वेदान्तवाक्येषु पाठव्यत्यासेन जगत्कारणमात्रानु-
वादेन तस्य ब्रह्मत्वं प्रतिपाद्यत इत्युपसंहरति—तस्मात् ब्रह्मपरे इति ॥ 312 - 3

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यस्य
प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे
पञ्चमं वर्णकं समाप्तम् ॥
॥ जन्माद्यधिकरणं च ॥

---

ता. व्यवहारवद्विज्ञानव्यवहारो ब्रह्मणि न विरुध्यत इत्यर्थः । गुणाभावेऽपि जातिनिबन्धनो व्यवहारः खण्डमुण्डादिष्विव गोत्वनिबन्धन इति परिहरति—न—विज्ञानेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुख-
मुनिविरचितायां पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपि-
कायां पञ्चमं वर्णकं समाप्तम् ॥
॥ जन्माद्यधिकरणं च ॥

---

## ॥ अथ षष्ठं वर्णकम् ॥

शब्दोपादानभावात् ध्वनिगतविषयद्योतनाः शक्तयोऽमू-
र्ब्रह्मण्येवासुरग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः ।
द्रष्टुश्च ज्ञानशक्तिर्ननु न करणता किन्तु दीपप्रभावत्
संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते सर्ववित्त्वम् ॥

---

ता. उत्तरसूत्रस्य सङ्क्षेपतस्तात्पर्यमाह—**शब्दोपादानेति**। **अपरमिह साध्यते**। **सर्ववित्त्वम्**। केन हेतुना ? इत्यत आह—**शब्दोपादानेति**। कार्यगतप्रकाशनशक्तेः कारणगतशक्त्यनुमापकतायां दृष्टान्तमाह— **अग्नेरिति**। **दीपशक्तिर्या विषयविषयिणी** सा **अग्नेरिव** इत्यन्वयः। कारणशक्त्या कथं कर्तुः सर्वज्ञत्वम् ? इत्यत आह—**द्रष्टुश्चेति**। दृष्टान्तगतं करणत्वमविवक्षितम् । किं तु प्रभायाः संयुक्तसर्वप्रकाशकत्ववत् द्रष्टुरपि संयुक्तप्रकाशिका ज्ञानशक्तिरस्तीत्येतावदेव विवक्षितमित्यर्थः ॥

केचिदेवं व्याचक्षते — शब्दगतप्रकाशनशक्तेः करणशक्तित्वात् ब्रह्मण्यपि तादृश्येव शक्तिः स्यादित्याशङ्क्य, ब्रह्मगतसर्वार्थप्रकाशनशक्तिरेव तत्कार्यशक्तेष्वपि तथैवान्वेति, सैव जीवानां विषयानुभवे करणतयोपकरोति, न ब्रह्मणः इत्याह—**द्रष्टुश्चेति** ॥

---

भा. वेदमात्रकरणेनापि ब्रह्मणः सर्वज्ञत्वं सुसम्पादमित्येतत्सूत्रम् । [वेदानां] नित्यत्वेने[श्वरस्य] सकलकर्तृत्वासम्भव इत्याक्षेपसमाधानाय वा । तत्र शास्त्रमृग्वेदादि । एतच्च सर्वशब्दानामुपलक्षणम् । तथा च शब्दे मुख्यामुख्यवृत्तिभ्यां प्रतिपादितार्थभावाच्छब्दे सर्वार्थप्रकाशानुकूला शक्तिर्विद्यते । शब्द[स्य] च ब्रह्मोपादानम् । 'तन्नामरूपाभ्यां [व्याक्रियत'] (नियत)['अ]स्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः' इत्यादिश्रुतेः। शास्त्रगता सर्वार्थप्रकाशशक्तिस्तदुपादानगता कार्यगतप्रकाशशक्तित्वात् दीपगतप्रकाशशक्तिवदित्यभिप्रेत्याह—**शब्दोपादानभावादिति**। हेतौ प्रकाशपदं उदकाहरणादिशक्तौ [व्यभिचार]निवृत्तये। मृदि(करा)घटादिकारणे उदकाहरणकार्यादर्शनेन तच्छक्तौ प्रमाणाभावात् ॥

**ब्रह्मणो लक्षणद्वयाभिधानपरेऽपि सूत्रे सर्वज्ञत्वं प्रधानादिकारण-वैलक्षण्यस्य सिद्धये जगद्विरचनोपपत्तये च श्रुतियुक्तिभ्यां प्राधान्येन प्रदर्शितम् । तदेव हेत्वन्तरेण साधयति, प्राधान्यात् । अथ वा, सर्वजगत्कारणत्वेन सर्वज्ञत्वं न सम्भवति वेदानामकर्तृकत्वात् इत्या-**

---

पूर्वसूत्रेण लक्षणद्वयपरतया सर्वज्ञत्वाप्रतिपादनात् तत् कथमे(क)[त]स्मिन् ता.
सूत्रे हेत्वन्तरेण दृढीक्रियत इत्याकाङ्क्षायामाह—ब्रह्मण इति । प्रत्यक्षेणा-

---

न च दीपगता शक्तिर्यथा तत्कारणे तयोरपृथक्सत्त्वात्, एवं जगतोऽपि भा.
किं न स्यात्? इति वाच्यम्; अपृथक्सत्त्वं हि प्रमाण(विध्यो)[सिद्धस्यो]प-पादकम्। न च स्वयं तत्र (कर्तृ)[सा]धकम्; अपृथक्सिद्धत्वेऽपि कार्यकारण-योर्भेदमात्रमादाय प्रमाणबलाच्छक्ति(व)[त]दभावव्यवस्थोपपत्तिः । न चैवं यस्य तेजसोऽवयवतो न प्रकाशस्तच्छक्तौ व्यभिचारः। कार्यशब्देन यत् कार्यमेव न तु कस्यचित् सजातीयस्य उपादानं तस्य विवक्षितत्वात्। तादृशस्य तेजस उपादानमपि प्रकाशकमिति न व्यभिचारः ॥

न चैवं वर्णानां पदवाक्यकल्पनाधिष्ठानत्वे ब्रह्मणस्तत्प्रकृतित्वासिद्धिरिति वाच्यम्। ऋग्वेदादिशब्दवाच्य(जड)[पदवाक्य]योरपि साक्षात् (ग्रहत्व)-[ब्रह्मप्रकृतिकत्व]श्रवणात् अवान्तरप्रकृतिकल्पनाऽयोगात् । द्रव्योपादान*वा विवक्षितम्। ननु नास्ति ब्रह्मणः सर्वार्थप्रकाशशक्तिः, स्वस्यैव प्रकाशत्वात्। न हि स्वस्मिन् स्वनिरूपिता शक्तिः सम्भवति। न च प्रकाशस्वभावत्वमेव प्रकाशशक्तिरिति वाच्यम्; वेदे तदभावेन शास्त्रयोनित्वेन तदुपपादनासम्भ-वात्। वेदपदे*पि जीवज्ञानहेतुतया सर्वज्ञ(त्वे तदु)[त्वो]पपत्तेश्चेति। मैवम्। अस्ति तावत् ब्रह्मणि सर्वस्याविद्यावरणनिवर्तकतया तन्निवृत्तिरूपप्रकाशनानु-कूला शक्तिः। अस्ति वेदस्यापि परम्परया तद्धेतुत्वमिति तदनुकूलशक्तिः। न चैवं चक्षु[रादौ] व्यभिचारः; चक्षुराद्यवयवस्यापि ज्ञानजनकत्वेन तत्रापि तच्छक्तेः सत्त्वात्। न च तदवयवेष्वेव व्यभिचारः, तत्रोक्तहेतोर-भावादिति ॥

---

* अत्र ग्रन्थे त्रुटिः ॥

314 - 2 शङ्क्य सम्बन्धमाह—अयमपर इति। वेदस्य तावत् सर्वविषयज्ञानसामर्थ्यं
314 - 3 दर्शयति तदुपादानतया ब्रह्मणोऽपि तद्दर्शयितुम्—अनेकनानाविधविषय-
विद्यास्थानेति। ननु नास्ति वेदस्य सर्वज्ञता, अर्थज्ञानकरणतयोप-
योगादिति। सत्यम्, अत एव कल्पप्प्रत्ययप्रयोग इति। ननु वेदस्य
315 - 1 सर्वविषयज्ञानसामर्थ्येऽपि ब्रह्मणः कथं सर्वज्ञता इत्यत आह—ततश्च तस्य
315 - 2 कारणमिति। दृश्यत इत्यादिः दृष्टान्तः। अयं प्रयोगः—वेदः स्व-
विषयादधिकतरविज्ञानवत्प्रणीतो भवति वाक्यप्रमाणत्वात् पाणिन्यादि-
शास्त्रवदिति। ननु किमत्रानुमानेन प्रसाध्यते? यदि तावदुपाध्या-
यस्याध्यापनोच्चारणवच्छास्त्रशब्दोपलक्षितानां सर्वेषां शब्दानां ब्रह्म-
ण्यप्युच्चारणं साध्यते; तदा नोपाध्यायवत् सर्वज्ञं ब्रह्म भविष्यति।
अथ सकलवाक्यार्थं प्रमाणान्तरेणोपलभ्य तत्प्रतिपत्त्यर्थं परस्मै
वाक्यं विरचयति; प्राप्तं तर्हि पौरुषेयत्वम्, तल्लक्षणत्वात् पुरुषवचसां
315 - 3 इति चोदयति—नन्वेवं सतीति॥

अत्र केचित् परिहारमाचक्षते—प्रमाणान्तरेणार्थमुपलभ्य विवक्षित्वा परस्मै विरचितः शब्दः पौरुषेय इत्युच्यते। तत्र इदमनेन कर्तव्यमिति वक्तुरभिप्रायभेदो रागः पुरुषवचसामर्थः। द्विविधश्च रागो नित्योऽनित्यश्च। तत्रानीश्वराणामभिलषितसाधनज्ञानस्य अनित्यतया तज्जन्यरागस्याप्यनित्यत्वात् तद्विषयाणां पुरुषवचसां प्रमाणान्तरसापेक्षतया पौरुषेयत्वमङ्गीक्रियते। ईश्वरस्य तु पुनर्निखिलेष्टसाधनविषयज्ञानानां नित्यतया तन्मूलरागस्यापि नित्यत्वादीश्वरप्रणीतानामपि वैदिकवचसां नित्यरागविषयतया पौरुषेयता न जेगीयत इति॥

नैतत्सारम्—ईश्वरे सकलाभिलषितसाधनज्ञाननित्यत्वे प्रमाणाभावात्। अनुमानानां च अतद्गोचरत्वस्य दर्शितत्वात्। शब्द इति चेत्,

---

ता. नाप्तवाक्येन च व्यभिचारनिवारणाय वाक्यप्रमाणत्वादिति विशेषणद्वयम्। पौरुषेयत्वस्याभावं दर्शयितुं पौरुषेयलक्षणमाह—प्रमाणान्तरेणेति। ननु तथापि कथं वेदस्यापौरुषेयत्वम्? इत्यत आह—तत्रेदमिति। अनुमानानाम्।

न—इतरेतराश्रयापातात् । नित्यज्ञानमूलनित्यरागजन्यत्वे शब्दस्य अनपेक्षं प्रामाण्यम्, अनपेक्षे च शब्दे नित्यज्ञानसिद्धिरिति। रागश्च नित्यो नित्याभिलषितसाधनज्ञानमूल इति च व्याहन्यते। कुतश्चेदं लब्धं नित्यानित्याभिप्रायभेदेन पुरुषवचसामपि सतां सापेक्षत्वानपेक्षत्वविभागो विद्यत इति। न च पुरुषाभिप्रायः शब्दार्थ इति च वक्ष्यते। तस्मादसमञ्जसमेतत् ॥

अन्ये तु सङ्गिरन्ते—व्यासाद्यभिप्रायभेदतात्पर्यवतामपि भारतवचसामिदानीन्तनवाचकवदध्ययनविधितात्पर्यवतामेव वेदानां सृष्टिकाले समुच्चारणमीश्वरस्य वेदप्रणयनं नाम। ततश्च रागतात्पर्याभावाद्वेदप्रामाण्यमीश्वरस्य सर्वज्ञता चेति ॥

अत्र वयं पृच्छामः—सृष्टिसमये किं प्रमाणान्तरेणार्थमुपलभ्य वेदवाक्यं व्यनक्ति यथा पाणिन्यादिः? आहोस्वित् उपाध्यायवत् पूर्वसिद्धवाक्यमुच्चारयति?। तत्र पूर्वस्मिन् कल्पे पौरुषेयतापत्तिः। उत्तरस्मिन्नुपाध्यायवदेवासर्वज्ञतापत्तिः। अभिप्रायतात्पर्याभावादपौरुषेयतेति चेत्, उपलभ्य रचनायां कुतो रागतात्पर्याभावः। पूर्वमेव विधितात्पर्यादिति चेत्, तथापीतरन्न विहन्यते। न च उभयतात्पर्यमुपपद्यते। सत्यपि विधितात्पर्येऽवगम्यार्थं रचनैव सापेक्षत्वे निमित्तं

---

क्षित्यादिकं सकर्तृकम्, ज्ञानं कचित्परां काष्ठां प्राप्तम्, इत्यादीनामिति यावत्। ता. रागश्चेति। नित्यश्च नित्यज्ञानकार्यश्चेति व्याघातः, रागश्च नित्यश्चेत्यपि व्याघातः, लोके रागस्यानित्यत्वेन व्याप्तत्वादिति भावः। **पुरुषवचसाम्**। पुरुषबुद्धिपूर्वाणां लौकिकवैदिकवचसामिति यावत्। **वक्ष्यते इति**। समन्वयसूत्रे इति शेषः ॥

**इदानीन्तनवाचकवत्**। इदानीन्तनपाठकवदित्यर्थः। **इतरन्न विहन्यते**। रागतात्पर्यं न विहन्यत इति यावत्। रागमात्रतात्पर्यवत्त्वात् पौरुषेयत्वमित्याशङ्क्याह—**न चोभयेति**। **सत्यपि विधितात्पर्ये**। विधिरागतात्पर्ये

समधिगतम् । न चोपलभ्य रचनायां विधितात्पर्यमुपपद्यते इति यत्किञ्चिदेतत् ॥

अपरे तु मन्यन्ते—निर्विकल्पकज्ञानपूर्वकाणि किल वेदवाक्यानि न सापेक्षत्वदोषमश्नुवते । ब्रह्मस्वरूपज्ञानस्य निर्विकल्पकत्वात् । लौकिकवचसां तु सविकल्पज्ञानपूर्वत्वात् सापेक्षतेति ॥

नायमपि विभागः सिध्यति । उपलभ्य रचनाया एव सापेक्षत्वनिमित्तत्वात् । स्वरूपज्ञानस्याप्यभिलषितसाधनोपरागे सविकल्पकत्वात् । तस्मान्नैते परिहाराः ॥

स्यात् तर्हि वेदानां पौरुषेयता । ननु अपौरुषेयो वेदः व्यवहाराविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवत् इत्यपौरुषेयता अनुमीयत इति । न—चिरवृत्तेष्वपीदानीमनुमानप्रमीयमाणकर्तृकेष्वनैकान्तिकत्वात् । वेदानां च कर्तुरनुमानागमाभ्यां प्रमीयमाणत्वात् । तथा हि—विशिष्टबहुज्ञपुरुषप्रणीतो वेदः बह्वर्थविषयवाक्यप्रमाणत्वात् भारतवत् । 'इदं सर्वमसृजत' 'ऋचो यजूंषि सामानि' इत्यागमः । तस्मात् पौरुषेयो वेद इति ॥

---

ता. केवलविधितात्पर्यं चेति यावत् । तथापि विधितात्पर्यादपौरुषेयत्वमस्तीति, तत्राह—**न चोपलभ्येति** ॥

ब्रह्मस्वरूपज्ञानस्य निर्विकल्पकत्वमप्रसिद्धमित्याह—**स्वरूपज्ञानस्येति**। अपौरुषेयत्वं न संभवति चेत् पौरुषेयत्वमेव भवत्विति शङ्कते—**स्यात्तर्हीति**। अस्मर्यमाणकर्तृकत्वं नाम किं स्मरणागोचरकर्तृकत्वम् ? उत अप्रमीयमाणकर्तृकत्वम् ? इति विकल्प्य, आद्ये जीर्णकू(पनामा)[पारामा]दिषु व्यभिचारमाह—**न–चिरेति**। कर्तृसद्भाव एव तत्रासिद्ध इति ; तत्राह—**अनुमानेति**। द्वितीये दोषमाह—**वेदानां चेति**। 'तत्र ये[तत्त्रयो]वास्य कर्तारो मुनिभण्डनिशाचराः' इति यन्नास्तिकैरुच्यते, तत् विशेषणैर्निराकरोति—**विशिष्टबहुज्ञेति**। अबहुज्ञपुरुषप्रणीते प्रमाणभूतवाक्येऽनैकान्तिकता मा भूदिति **बहुज्ञे**त्युक्तम्। विप्रलम्भकवाक्ये व्यभिचारनिवारणार्थं **प्रमाणेति** विशेषणम् । ऐश्वरप्रत्यक्षे व्यभिचार-

अत्र पृच्छामः—कथं पौरुषेये वेदे प्रामाण्यं लभ्यते कपिलकणादाक्षपादानामिति। सर्वज्ञप्रणीततयेति चेत्, न तावदनुमेयः सर्वज्ञ इत्युक्तम्। आगमाच्चेत् सिद्धिः, न—इतरेतराश्रयात्—सर्वज्ञे सिद्धे तत्प्रणीततया वेदप्रामाण्यम्, ततश्च सर्वज्ञसिद्धिरिति। स्यादेतत्—महाजनपरिग्रहाद्वेदप्रामाण्यमिति। न—सुगताद्यागमानुसारिणामेव देशविशेषेष्वानन्त्यश्रवणात्। न च देहात्मभावचन्द्रप्रादेशत्वादीनां महाजनपरिगृहीतानां प्रामाण्यं दृश्यते। न च महाजनपरिग्रहः प्रमाणपक्षपाती। तस्मात् न प्रामाण्यलाभः॥

किञ्च, पुरुषो वा केन प्रमाणेनोपलभ्य धर्माधर्मौ वेदवाक्यं विरचयेत्। न तावदिन्द्रियपञ्चकेन। रूपरसगन्धस्पर्शशब्दतत्समवेतविशेषग्राहित्वात् वर्तमानग्रहणनियमाच्च। धर्मस्य च साध्यत्वात्। ननु आत्मसमवायी धर्मस्तद्ग्रहणेनैव ज्ञानेन तद्गुणतया मनसैव चक्षुरादिना वा गृह्यत इति। किमिति तर्हि तस्मिन्न गृह्णीमः। न च विशिष्टः पुरुषो गृह्णाति। तदिन्द्रियाणामप्येतादृशत्वात्। योगजधर्मसामर्थ्याद्विशिष्टानि तदिन्द्रियाणीति चेत्, तथापि मार्जारादिदृष्टिवत् स्वविषयेऽतिशयमात्रं गृह्णीयुः, नाविषयं धर्मम्। 'दिव्यं चक्षुर्ददाम्य-

---

ता.

निवारणार्थं वाक्येति विशेषणम्। महाजनपरिग्रहः किं प्रामाण्याविनाभूतः ? किं वा षट्प्रमाणेष्वन्यतमः ? इति विकल्प्य, आद्यं दूषयति—न च देहेति। द्वितीयं दूषयति—न च महाजनेति॥

रूपरसेति। रूपवतः तत्समवेतस्य रूपादेः तद्विशेषणस्य समवायादेः ग्रहणनियमादित्यर्थः। दूषणान्तरमाह—वर्तमानेति। धर्मोऽपि वर्तमान इति; तत्राह—धर्मस्य चेति। तार्किकमतमाशङ्कते—नन्विति। तेषामेव मतान्तरमाह—चक्षुरादिनेति। परिहरति—किमितीति। यदि धर्माधर्मौ मनसा गृह्येते तदा तादृशे मनसि सत्यपि वयं किमिति तौ न गृह्णीमः इत्यर्थः। पूर्वस्मिन् कल्पे धर्मोपदेशे सति च तदनुष्ठाने, अस्मिन् कल्पादौ धर्मो वर्तत इति स्यात्, तच्च न संभवति, धर्मस्याप्रत्यक्षत्वेन तदा-

हम्' 'प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः' इति स्मरणादस्ति योगिनां दिव्यं चक्षुरिति चेत्, न—तस्यापि विश्वरूपादिस्वविषयातिशयदर्शित्वात्। न चात्मसमवेततयापि धर्मो वर्तमानो भवति, येन प्रत्यक्षः स्यात्। कल्पान्तरीयोऽनुष्ठितो धर्मोऽस्मिन् कल्पादौ वर्तत इति चेत्, न—कल्पान्तरीयधर्मोपदेशायोगात्। ततोऽपि कल्पान्तरानुष्ठितधर्मं प्रत्यक्षेणोपलभ्योपदिशतीति चेत्, अन्धपरम्परा स्यात्। तस्मान्न प्रत्यक्षमूलो वेदः। नापि शब्दमूलः, अनवस्थानात्। तस्मात् प्रामाण्यहानान्न पौरुषेयो वेद इति ॥

मा भूत् प्रामाण्यमिति सुगतार्हताः। तैरिदं वक्तव्यम्—प्रत्यक्षानुमानदृष्टव्यतिरिक्तः कर्मफलसम्बन्धो विद्यते न वा इति। विद्यते चेत्, कथमपौरुषेयागममन्तरेण तस्य सिद्धिः। सर्वज्ञसुगतप्रणीतागमादिति चेत्, किं कपिलादयः सर्वज्ञा न भवन्ति?। सर्वे तीर्थकराः सर्वज्ञा इति चेत्, धर्माधर्मयोर्विवादः कथं स्यात्?। न चैकः सर्वज्ञो नेतर इति प्रमाणमस्ति। न च सर्वे सर्वज्ञप्रणीता धर्मा एवेति युक्तम्। अन्योन्यधर्मनिराकरणात्। न चापौरुषेया एव सुगताद्यागमा इति युक्तम्। अनुस्मर्यमाणकर्तृकत्वात्। अपौरुषेयत्वे वा न विवदामः। उदितानुदितहोमवत् व्यवस्थोपपत्तेः ॥

आह लोकायतः—मा भूत् प्रत्यक्षदृष्टातिरिक्तः कर्मफलसम्बन्धः, पौरुषेयता तु वेदस्यानुमानसिद्धा न निवार्यते इति। स वक्तव्यः—किं लौकिकवचांसि प्रमाणानि? न वा? इति। न चेत्, न मया ते वादो युक्तः। शब्दैरेव परस्परविरुद्धार्थप्रतिपादनरूपत्वाद्वादस्य। अथ लौकिकवचांसि प्रमाणानि; वेदवचोभिस्तर्हि किमपराद्धम्। ननु

---

ता. प्युपदेशायोगादिति परिहरति—न कल्पान्तरीयेति। मन्वादिशास्त्रवत् सर्वेऽपि प्रमाणं किं न स्युरित्यत आह—न च सर्वे इति। परस्परविरुद्धार्थत्वे कथं प्रामाण्यमित्यत आह—उदितेति। त्रैवर्णिकात्रैवर्णिकभेदेनानुष्ठानव्यवस्थोपपत्तेरित्यर्थः ॥

**पौरुषेयत्वं वेदस्य अनुमानात्, तस्य च मूलप्रमाणाभावादप्रामाण्यमुक्तम्। न—स्वाभाविकत्वाच्छब्दानामर्थावबोधसामर्थ्यस्य पुरुषप्रत्ययानुसारित्वाभावात्। अन्यथा सागरं विवक्षन् मेरुशब्दं ब्रूयात्। स्वभावसिद्धशब्दसामर्थ्यानुसारेण हि लौकिकाः शब्दं प्रयुञ्जते। सत्यम्। कदाचित् सर्वाभिधानसङ्केतसामर्थ्यादिदानीं व्यवस्थया अभिधानमिति चेत्, तन्न—विवादगोचरापन्नः पूर्वतनशब्दार्थसम्बन्धव्यवहारः तथाविधपूर्वपूर्वव्यवहारपरम्परानिबन्धनः अभिधाना-**

---

ननु तीरेऽपि गङ्गाशब्दं प्रयुञ्जते लौकिकाः इत्यत आह—**स्वभावेति**। ता.
स्वभावसिद्धसामर्थ्यमनिराकृत्यैव लक्षणया तीरादौ गङ्गाशब्दप्रयोगो न पुनस्तद्वाचकतयेत्यर्थः। दशस्वर्थेषु हरिशब्दसंकेतवत् सर्वे शब्दाः सर्वेश्वरेण सर्गादौ संकेतिताः, सांप्रतं तेषु तेषु प्रयोगेषु वक्तृविवक्षया तं तमर्थं अभिदधतीति शङ्कते—**सत्यमिति**। शब्दार्थसम्बन्धस्य साङ्केतिकत्वं निराकरोति **न**–[**तन्न**] **विवादेति**॥

---

वेदस्य पौरुषेयत्वं नाम किं शब्दार्थसम्बन्धस्य साङ्केतिकत्वम्? वाक्यार्थ- भा.
(जन्यं)[धीजन्यत्वं] वा? *॥

विशेषरहितस्य शरीरभेदानुसन्धानायोगात्। अन्यथा जन्मान्तरीयमपि स्मर्येत। तस्माच्छरीरैक्यान्न तन्मात्रवृत्तिः सम्भवति। किं चैवमेकस्य युगपत् (व्यक्ति) [उभा]भ्यां देवदत्तयज्ञदत्तसंज्ञाद्वयकरणं न स्यात्। तत्र तुल्यव्यक्तिकदेवदत्तयज्ञदत्तजातिद्वयासम्भवात्। न च तौ शब्दौ पर्यायाविति वाच्यम्; अ*तयो*वसिद्धत्वात्। न वा विष्णुनारायण[शब्दयोरिव] पर्यायत्वे निखण्ड्वादिसरणमस्ति। किं च एवं शब्दाः सर्वार्थाः स्युः। न च तथा प्रसिद्धिरस्ति॥

अपि च यत्र यज्ञ[देव]दत्त इति ज्येष्ठकनिष्ठयोः संज्ञा तत्र देवदत्तत्वभेदे प्रमाणाभावात् अनुगतव्यवहारेणैकत्वावगमात् एकत्र व्युत्पन्नदेवदत्तशब्देन अपरत्रापि कठादिशब्देन वस्त्वन्तरे पित्राद्यभिप्रायसमुचितविशेषसङ्केतप्रतिसन्धानं विनाऽपि व्यवहारप्रसङ्गः। न च तथा दृश्यते। तस्मात्

---

* अत्र कोशे—अत्रैकं पत्रं गलितम्—इति लिखितम्।

* अत्र सर्वत्र ग्रन्थे त्रुटिः॥

**भिधेयव्यवहारत्वात् इदानीन्तनतद्व्यवहारवत् इत्यनादितानुमानात्। साङ्केतिकशब्देष्वनैकान्तिक इति चेत्, न—अभिधानाभिधेयविषयत्वादनुमानस्य। जातिमात्राभिधायिनो वा सर्वदेशेष्वभिधानतया सम्प्रतिपन्ना वा यस्मिन्नुत्पद्यमाने क्वचिद्गृहीतसम्बन्धा एवोपरज्यन्ते शब्दाः तानि चाभिधानानि। नैवं साङ्केतिकाः शब्दा इति। मा भूत् तर्हि अभिधानसङ्केतः, वेदवाक्यरचना तु पुरुषनिबन्धनैव; इत्यत**

ता. **न अभिधानेति**। देवदत्तादिशब्दानां गाव्यादिशब्दवदभिधानाभासतया अभिधानाभिधेयव्यवहारत्वहेतोस्तत्राभावान्नानैकान्ततेत्यर्थः। परिहारान्तराण्याह—**जातिमात्रेति**। प्रथमे घटादिशब्दाः पक्षीक्रियन्ते। द्वितीये गगनादिशब्दाः। तृतीये घटादिशब्देष्वेव प्रयोजकान्तरमुक्तमिति [वि]शेषः।

भा. प्रतिव्यक्ति*मभिप्रायप्रतिसन्धानापेक्षित्वात् साङ्केतिकानां न जात्यभिधानम्। अन्यलभ्ये शब्दस्य शक्त्यभावात्। न च एवमनर्थकः शब्दः इति प्रातिपदिकत्वानुपपत्तिः। न हि यस्मिन्नर्थे सङ्केतस्तमादायैव प्रातिपदिकत्वं वक्तव्यमिति नियमः। अनित्यसङ्केतस्य अनादिप्रातिपदिकनिमित्तत्वानुपपत्तेः। किं त्वर्थान्तरे प्रसिद्धा एव शिवादिशब्दाः अन्यत्र सङ्केत्यन्त इति तेनैवार्थेन प्रातिपदिकत्वम्। देवदत्तादिशब्दा अप्यवयवार्थेनार्थवन्तः। एवं डित्थादिशब्दा अपि निगमादिप्रसिद्धेन निखण्ड्वादिप्रसिद्धेन चार्थवन्तः। सङ्केतेनाप्यर्थवत्त्वं प्रातिपदिकत्वानुकूलमेव। अर्थसम्बन्धमात्रस्यैव तत्रापेक्षितत्वादिति न किञ्चिदनुपपन्नम्। ननु एवमपि देवदत्तमानयतेति शब्दान्वयो न स्यात्, शब्दवृत्त्युपस्थापितस्यैव शाब्दान्वयप्रतियोगित्वात्। सङ्केतो वृत्त्यन्तरारोपादिति चेत्, न—सङ्केतस्य शब्दस्वभावप्रयुक्तप्रवृत्तित्वायोगात्। प्रमाणान्तरत्वप्रयोजकसम्बन्धमनपेक्ष्य शब्दो यमर्थमुपस्थापयति (अ)[त]स्य शाब्दान्वयबोधः, साङ्केतिकोऽप्यर्थस्तथेति न तस्य शाब्दान्वयानुपपत्तिः। किं च शब्दस्य येन सम्बन्धेन अर्थवत्त्वं तेनैव सम्ब(न्धात्त)[न्धेन त]दुपस्थितिरपेक्षणीयेति न साङ्केतिकशब्दस्याभिधानत्वम्, न वा शब्दे व्यवहारावधिरिति। वाक्यार्थज्ञानपूर्वकत्वं वेदस्य पौरुषेयत्वमिति शङ्कते—**मा भूत्तर्ह्यभिधानेति**॥

* अत्र ग्रन्थे त्रुटिः॥

आह--न स्यात् ब्रह्मवदनादित्वादिति। विवादगोचरापन्नं सृष्टिकालीनं वेदा- 315-3
ध्ययनं पूर्वपूर्वतथाविधवेदाध्ययनानुस्मृतिनिबन्धनं भवितुमर्हति वेदा-
ध्ययनत्वादिदानीन्तनवेदाध्ययनवदिति विशेषतोदृष्टानुमानेन वाक्य-
त्वाद्भारतवदिति सामान्यतोदर्शनाद्बलीयसा वेदस्यानादित्वसिद्धेः कुतः
पौरुषेयता। ननु सर्वेष्वपि ग्रन्थेष्विदमनादित्वानुमानमनुविशति, न-
तैरेव ग्रन्थैस्तत्तत्कर्तृणां प्रतिपादनात् तदागमविरोधात्। इहापि श्रुत्यैव
वेदस्य कर्ता प्रतिपाद्यत इति चेत्, न तावत् 'स तया वाचेदं सर्वमसृजत'
'ऋचो यजूंषि सामानि' इति श्रुतिः प्रजापतिविषया सती तस्य प्रमा-
णान्तरेणार्थमुपलभ्य शब्दरचनां ब्रवीति। 'यो ब्रह्माणं विदधाति
पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतौ प्रागेव वेदसद्भावाव-
गमात्। 'अस्य महतो भूतस्य' इति श्रुतिरीश्वरविषयापि सती प्रकरण-
सामर्थ्याद्वेदोपादानत्वमेव ब्रवीति॥

किं चेदं पौरुषेयत्वं साध्यते। यदि तावत् पुरुषनिर्वर्त्यता-
मात्रम्, सम्प्रतिपन्नमेव तत्। क्रमविशिष्टानामेव वर्णानां वेदशब्दा-

---

आगमविरोधादिति। [कर्तृप्रतिपादकागमविरोधात्] इत्यर्थः। 'स भाणकरोत्' ता.
इत्यादिश्रुत्या पौरुषेयत्वं नाभिहितमित्याह--न तावदिति। कुतो न ब्रवीति?
इति; तत्राह--यो ब्रह्माणमिति। प्रागेव। प्रजापतिसृष्टेः प्रागेवेत्यर्थः। 'अस्य
महतो भूतस्य निःश्वसित'(मित्यत)[मिति श्रुतिविरोध इत्यत] आह--अस्य
महतो भूतस्येतीति। वेदोपादानत्वमेव ब्रवीतीति। आकाशादिवत् ब्रह्मोपा-
दानकत्वमेव ब्रवीति, नतु प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं इत्येवकारार्थः॥

---

न हि वाक्यप्रयोगमात्रे वाक्यार्थज्ञानं कारणम्* व्यभिचारात् शब्दज्ञान- भा.
मात्रान्वयानुपपत्तेश्च। किं च पदस्यार्थप्रतीतिमुद्दिश्य यो वाक्यप्रयोगस्तस्यैव
वाक्यार्थज्ञानं कारणम्। न च वेदस्तथा प्रयुक्त इत्यत्र किञ्चिन्मानमस्ति।
वाक्यस्य हेतौ*ले व्यभिचारादप्रयोजकत्वाच्चेत्यभिप्रेत्याह--(नेत्याह) [न
स्यात्] ब्रह्मवदिति। वाक्यार्थज्ञानजन्यत्वाभावे च प्रमाणमाह--(विचारेति)
[विवादेति]॥

---

* अत्र ग्रन्थे त्रुटिः॥

भिधेयत्वात् क्रमस्य तूच्चारणोपलब्ध्योरन्यतरस्य प्रतिक्षणनिर्वर्त्यतया तद्विशिष्टवर्णानामपि प्रत्युच्चारणं जन्यत्वात् पूर्वपूर्वक्रमानुस्मरणेन तत्सदृशोत्तरोत्तरक्रमनिर्वर्तनात् क्रमसादृश्यपरम्परायाश्चानिदंप्रथमतया तद्विशिष्टवर्णनित्यत्वाभिधानात्। अथ वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वात् पौरुषेय इति। तत्र प्रत्यनुमानमुच्यते—वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यो न भवति असर्वज्ञवचनत्वाभावे सति धर्माधर्मब्रह्मप्रमाणत्वात् परपरिकल्पितेश्वरबुद्धिवदिति। अथाध्ययनस्येदंप्रथमता वेदस्य पौरुषेयतेति, न—अध्ययनस्यानादित्वानुमानस्य दर्शितत्वात्। तस्मान्नास्ति वेदस्य पौरुषेयत्वमिति ॥

ननु आप्तेन प्रमाणान्तरेणार्थमुपलभ्य परप्रतिपत्तये तत्र प्रयुज्यमानः शब्दः प्रमाणं भवति, तदभावादनाप्तवाक्यवदप्रमाणं वेदः प्रसज्यते। ननु अनाप्तेन भ्रान्त्या उत्प्रेक्षया वा अर्थाभासमुपगम्य परप्रवृत्तये तत्र प्रयुज्यमानः शब्दः प्रामाण्यात् परिहीयते, तदभावादाप्तवाक्यवद्वेदः प्रमाणं किं न स्यात्। नन्वाप्तवाक्यमनाप्तप्रणीतत्वाभावात् प्रमाणम्? किं वा आप्तप्रणीतत्वात्? इति विवेक्तव्यम्। नोभयथापीति ब्रूमः। कथम्? शब्दानां तावत् संसृष्टार्थावबोधनसामर्थ्यं स्वारसिकमेव

---

ता.

तर्हि वेदस्य नित्यत्वं कथम्? इति; तत्राह—पूर्वपूर्वेति। वेदः स्वार्थेति। मन्वादिवचने व्यभिचारनिवारणार्थं असर्वज्ञेत्यादिविशेषणम्। प्रमाणपदेन स्मृतेर्व्यवच्छेदः। धर्माधर्मेत्यादिविशेषणेन च प्रत्यक्षस्य। भागासिद्धिपरिहारार्थं धर्माध(र्मब्रह्मे)[र्मे]त्युक्तम्। दर्शितत्वादिति। विवादगोचरापन्नं सृष्टिकालीनमित्यनुमानस्य दर्शितत्वादित्यर्थः ॥

परिहरति—नन्वनाप्तेन भ्रान्त्येति। शङ्कते पूर्ववादी—नन्वाप्तवाक्यमिति। विवेक्तव्यमिति। सन्दिग्धप्रयोजको हेतुरिति यावत्। उभयोः प्रयोजकयोः परस्परविरुद्धयोरन्यतरनिषेधेऽन्यतरप्राप्तेः नोभयनिषेध इति शङ्कते—कथमिति। स्वारसिकं सामर्थ्यमवगतम् इत्युत्तरेणान्वयः। संसृष्टार्थावबोधसामर्थ्यम्—संसृष्टार्थप्रमितिजननसामर्थ्यम्, तच्चेत् स्वारसिकं

मध्यमवृद्धप्रयोगप्रत्ययाभ्यामाप्तानाप्तप्रत्ययव्यतिरेकेणावगतम्। तत्र
अनाप्तस्य भ्रान्त्युत्प्रेक्षाज्ञाने तन्मूलविरचितशब्दकारणदोषतया शब्देऽपि
दोषं प्रसञ्जयतः। ततश्च दुष्टकारणजन्यविज्ञानमयथार्थमप्रमाणमिति
स्वतस्सिद्धशब्दसामर्थ्यप्रयुक्तप्रामाण्यस्य प्रतिबन्धकतया अनाप्तज्ञान-
मवतिष्ठते। आप्तप्रमाणं च प्रतिबन्धभ्रान्त्युत्प्रेक्षादिदोषनिरासितया
सम्पद्यते। ततश्च आप्तज्ञानं न शब्दप्रामाण्यहेतुः। वेदे तु पुरुषसम्बन्धा-
भावान्न प्रतिबन्धतन्निरासापेक्षेति नाप्तप्रणीतत्वमत्रोपयुज्यते। ननु आप्त-
प्रयोगानपेक्षत्वे अग्निपर्वततत्सम्बन्धशब्देषु स्मर्यमाणेषु तेभ्य एवाग्नि-
मान् पर्वत इति प्रमितिरुत्पद्येत। सत्यम्। पर्वतस्याग्निमत्तामात्रं
प्रमीयत एव, पुरोवर्तिनि तु प्रमाणान्तरविरोधान्न प्रमीयते इति। अथ
वा, द्विविधः प्रयोगः प्रामाण्यहेतुः—अर्थोपलब्धिनिबन्धनः पौरुषेये,
पूर्वप्रयोगानुस्मृतिनिमित्तो वेदे। तदुभयाभावात् सुप्तादिवाक्येषु
अप्रामाण्यमिति। अथ वा, तात्पर्याभावात् केवलेभ्यः शब्देभ्यो नार्थ-
प्रमितिः। वेदे पुनरध्ययनविधितात्पर्यादाप्तप्रयोगाभावेऽपि प्रमितिः

---

ता. शब्दानामङ्गुल्यग्रादिवाक्ये कथं तदभावः? इत्यत आह—**तत्रानाप्तस्येति**।
भ्रान्त्युत्प्रेक्षाज्ञाने शब्दे दोषं प्रसञ्जयत इत्यन्वयः। तत्र हेतुः—**तन्मूलेति**।
तावता कथं तत्र प्रमित्यभावः? इत्याशङ्क्य अग्नेर्मण्यादिनेव प्रतिबन्धादि-
त्याह— **ततश्च दुष्टेति**। शब्दाप्रामाण्यं पुरुषदोषाधीनं चेत् प्रामाण्यमपि
पुरुषगुणाधीनं किं न स्यात्? इत्याशङ्क्य, गुणानां दोषनिरासितया अन्यथासिद्ध-
त्वादिति परिहरति—**तत्राप्तज्ञानं नेति**। वेदेऽपि तर्हि प्रतिबन्धनिरासितया
आप्तप्रणीतत्वोपयोगः किं न स्यात्? इत्यत आह—**वेदे त्विति**। **आप्तप्रयोगा-
नपेक्षत्वे**। वाक्यार्थज्ञानोत्पत्त्यर्थमिति शेषः। अग्निमत्त्वप्रमितिमात्रमापाद्यते?
किं वा पुरोवर्तिविषयम्? इति विकल्प्य, क्रमेण दूषयति—**सत्यमिति**। द्वैविध्यमेव
दर्शयति—**अ(र्थावगमे)ति**। [र्थोपलब्धीति]वेदे पुनरन्यथेत्याह—**पूर्वेति**।
कथं तर्हि सुप्तप्र(ळया)[मत्ता]दिषु अप्रामाण्यम्? इति; तत्राह—**तदुभयेति**।
तात्पर्याभावाद्वेदे विहितप्रमितिर्न जायत इत्यत आह—**वेदे पुनरिति**।

उत्पद्यते। अध्ययनविधिवाक्यस्यापि स्वेनैव तात्पर्यसिद्धेः। अतोऽनादिर्वेद इति। अनादित्वेऽपि पुराणवाक्यवदन्यथासन्निवेशप्रणयन-
315 - 4 माशङ्क्याह—कूटस्थनित्यत्वादिति॥

315 - 4 अनादेर्वेदस्य कथं ब्रह्मकारणता इति शङ्कते—कथं पुनरिति। अत्र शास्त्रशब्दोपलक्षितसर्वशब्दानां वर्णानामेकपदार्थबुद्ध्यवच्छेदकवर्णनियामकक्रमविशिष्टपदानां वाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामकक्रमविशिष्टवाक्यानां महावाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामकक्रमविशिष्टप्रकरणानां परिपूर्णपुरुषार्थसाधनबुद्ध्यवच्छेदकानेकप्रकरणनियामकक्रमविशिष्टशास्त्राणां च प्रवाहरूपेण ब्रह्मोपादानतया कार्यत्वमस्तीत्याह—
315 - 5 तत्परतन्त्रत्वादित्यादिना॥

ननु रज्जुसर्पवदिति वेदस्य मिथ्यात्वं कथं निदर्श्यते। ननु कोऽयं वेदो नाम। न तावद्वर्णमात्रम्। क्रमविशेषवन्तो वर्णा इति चेत्, नास्ति देशकालनिबन्धनो वर्णक्रमः। नित्यतया सर्वगतत्वात्।

---

ता. वेदवाक्यानां तात्पर्यमध्ययनविधिनिबन्धनं यदि, तदा तस्यापि तात्पर्यं तद्वदेव विध्यन्तरनिबन्धनमित्यनवस्थापात इति; तत्राह—अध्ययनविधीति। न चात्माश्रयः, शब्दशब्दवदुपपत्तेरिति भावः॥

क्रमस्वरादिविशिष्टानां वर्णानां वेदत्वात् तस्य अनादित्वमस्मदुक्तप्रकारेणैव सर्वैरङ्गीकर्तव्यमित्यभिप्रेत्य शास्त्रस्वरूपं दर्शयति—अत्र शास्त्रेति। एकपदार्थबुद्ध्यवच्छेदकाः बुद्धिजनकाः ये वर्णाः तेषां नियामको यः क्रमः तद्विशिष्टानि यानि पदानि तेषामिति यावत्। एवं वाक्यादिष्वपि योज्यम्। एकपदार्थप्रतिपादनावच्छिन्ना वर्णाः पदम्, एकार्थप्रतिपादनावच्छिन्नानि क्रमविशिष्टानि पदानि वाक्यम्, तथाविधवाक्यसमूहः प्रकरणम्, एवंविधप्रकरणसमूहः कार्त्स्न्येन पुरुषार्थसाधनोपदेशपरः शास्त्रमिति समुदायार्थः॥

वेदस्वरूपस्य मिथ्यात्वं दर्शयितुं तत्स्वरूपमाक्षिपति — ननु कोऽयमिति। न तावदिति। अक्रमव्युत्क्रमोच्चारितेषु वेदबुद्ध्यभावादित्यर्थः। देशकालनिबन्धनक्रमाभावे व्युत्क्रमेण हेतुद्वयं नित्यतया सर्वगतत्वादिति।

नापि वस्तुनिबन्धनक्रमः विरोधात्। न ह्येकदैव 'राजा ज[जा]रा' इति जकारस्य रेफात् पूर्वापरीभावो युक्तः। उच्चारणसमवेत एव क्रमो वर्णेषूपरज्यत इति चेत्, न—अप्रत्यक्षत्वादुच्चारणतत्क्रमयोः। प्रत्यक्षस्तु क्रमविशिष्टवर्णात्मा वेदः। अथोपलब्धिक्रमवन्तो वर्णा वेदशब्दभाज इति, न—अन्यधर्मस्य क्रमस्यान्यधर्मत्वानुपपत्तेः। अथोपलब्धिधर्म एव क्रमो वर्णेषु समारोप्यत इति चेत्, तर्ह्यख्यातिवादिनः क्रममात्रस्य वर्णमात्रस्य वेदशब्दानर्हत्वाद्विशिष्टप्रत्ययाभावादविवेकमात्रमेव वेद इत्यर्थावबोधो न स्यात्। अन्यथाख्यातौ पुनः विशिष्टप्रत्ययमात्रत्वात् विशिष्टार्थाभावात् विज्ञानातिरिक्तो वेदो न स्यात्। न चोपलब्धि-विशिष्टार्थाभावात् क्रमविशिष्टवर्ण-क्रमोपलक्षिता वर्णा वेदः न विशिष्टाः इति युक्तम्। क्रमविशिष्टवर्ण-प्रत्ययस्य प्रत्यक्षत्वात्। अनिर्वचनीये तु पुनर्विशिष्टार्थतत्प्रत्यययोः भावात् विज्ञानव्यतिरेकेण अर्थस्य अनिर्वचनीयत्वेऽपि अर्थक्रियासमर्थ-तया तुच्छव्यावृत्तसत्ताभ्युपगमात् अस्त्येवार्थावबोधसमर्थो वेद इति निरवद्यम्॥

ननु पाणिन्यादिदृष्टान्तेन यदि सर्वशब्दोपादानतैव ब्रह्मणो वेदस्य पौरुषेयत्वपरिहाराय गीयते तदा कथं तावता सर्वज्ञत्वम्? इति

---

ता.

अप्रत्यक्षत्वादिति। श्रोत्रप्रत्यक्षत्वाभावादित्यर्थः। भ्रान्त्या प्रतीयमानस्य वस्तुतः कथमर्थक्रियाकारित्वम्? इति; तत्राह—विज्ञानव्यतिरेकेणेति। देहाद्यात्म-

---

भा.

अनिर्वचनीये तु पुनर्विशिष्टार्थतत्प्रत्यययोर्भावादिति। निरवद्य-मिति। ननु इदमिदानी*शब्दधर्मः क्रमः। किञ्च सर्गादावेवोत्पन्नः* इदानी-मवान्तरवत् श्रोत्रादारोप्यते?। नाद्यः, एकैकवर्णस्य स्वसमानसत्ताकविरुद्धानेक-क्रमायोगात्। न द्वितीयः, ते* ब्रह्मविवर्तवत् सत्त्वात्। कर्तृत्वसिद्धान्त-व्याघा*वर्णानां आकल्पं स्थायित्वेन क्षणिकत्वप्रयुक्तानन्त्यदोषादपि नित्यानन्त-वर्णसम्भवेन तत्तत्क्रमविशिष्टवर्णानां ब्रह्मविवर्ततया पदवाक्ययोरपि ब्रह्मविवर्त-त्वनित्यत्वयोरुपपत्तिः॥

---

* अत्र सर्वत्र ग्रन्थे त्रुटिः॥

316 - 3 **चोदयति**—नन्वेवं सति कथं सर्वज्ञतेति । **परिहरति**—तस्यैव ज्ञानशक्तिविवर्तात्मकत्वान्नामप्रपञ्चस्येति । **अस्ति तावद्वर्णानां क्रमसङ्ख्यादिभेदभाजां मुख्यलक्षणादिद्वारेण सर्वार्थप्रकाशनसामर्थ्यम् । अव्यपदेश्यस्य वस्तुनोऽभावात् । तत्र कार्यगतमर्थप्रकाशनसामर्थ्यमुपादानकारणधर्म एव भवति । प्रदीपगतप्रकाशनसामर्थ्यस्य वह्निधर्मत्वदर्शनात् । कार्योपादानयोः शक्तिद्वयकल्पनाऽयोगात् । एवं सर्वार्थप्रकाशनसमर्थत्वात् सर्वज्ञं ब्रह्म ॥**

**ननु समर्थस्यापि नित्यवत् ज्ञानसंयोगो न भवति । नैष दोषः–यथा प्रकाशद्रव्यस्य प्रदीपस्य स्वसन्निहिताशेषवस्तुप्रकाशिता एवं**

---

ता. भाववदित्यर्थः । सर्वार्थप्रकाशनसामर्थ्ये हेतुमाह—**अव्यपदेश्यस्येति** । तावता कथमुपादानस्य सर्वज्ञत्वम् ? इति ; तत्राह—**तत्रेति** । कार्यगतं प्रकाशनसामर्थ्यमन्यदेव कस्मान्न भवेत् ? इत्यत आह–**कार्येति** । **नित्यवत्** । सर्वदेति यावत् ।

**॥ इति पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपिकायां षष्ठं वर्णकं समाप्तम् ॥**

---

भा. ननु प्रत्यभिज्ञया यथा नित्यत्वं तथैकत्वमपीति कथं वर्णानन्त्यम् ? इति चेत्, न––वेदस्य ब्रह्मयोनित्वश्रुतिविरोधेन वर्णैकत्वप्रत्यभिज्ञायां प्रामाण्यासम्भवात् । अस्मदादीनां क्वचित्तद्व्युत्पादनं वृत्त्येति न विरोधः । अथ वा, नित्येषु वर्णेषु क्रमो नाम एकप्रतीत्यनन्तरप्रतीतियोगित्वं शब्दस्य, न तु तादृशप्रतीतिमात्रयोग्यत्वम् । एवं च रेफादेरेकैकत्वेऽपि तत्तद्वर्णप्रतीत्यनन्तरप्रतीतियोग्यतारूपोऽनन्तादित्येकक्रमो न विरुध्यत इति न राजा जारेत्यादिपदविरोधः । उपाध्यायोच्चारणेन विद्यमान एव योग्यतालक्षणक्रमोऽभिव्यज्यत इति न तद्व्यर्थम् ॥

ननु एवं मतान्तरेऽप्येवंविधक्रम उपपद्यत इति चेत्, (न) भवत्वेवम्, श्रुत्यनुरोधेन ब्रह्मविवर्तत्वे तु न कोऽपि दोषः । अर्थक्रियाकारित्वस्य वियदादेरिव सत्त्वेन प्रामाण्योपपत्तिः । लोके तु क्रमस्य पुरुषेच्छाद्य-

**प्रकाशस्वरूपस्य ब्रह्मणः सर्वोपादानतया सर्वसंसर्गिणः स्वसन्निहिताशेषवस्तुप्रकाशिता नित्यवत् भवतीति युक्तं सामर्थ्यानुसारेण सर्वज्ञत्वम्। कथं करणसामर्थ्यानि कर्तृसामर्थ्यानि भवन्तीति चेत्, न—ब्रह्मणो विषयावगमं प्रति शब्दस्य करणताऽभावात्। ननु स्वयंप्रकाशतया सर्वसंसर्गित्वादेव सर्वज्ञता सिध्यति। न—वाय्वाकाशरसगन्धादिव्यापिनोऽपि सवितृकिरणस्य तत्प्रकाशनायोग्यत्वदर्शनात्।**

---

न्वयव्यतिरेकदर्शनान्नैवमिति । **स्वसन्निहिता(नेक)[शेष]वस्तुप्रकाशिता** भा. **नित्यवद्भवतीति** । अनावृतप्रकाशत्वादित्यर्थः । **न—ब्रह्मणो विषयावगमं प्रतीति** । जनानां विषयावगमे तस्य करणत्वेऽपि प्रकाशानुकूला शक्तिः क्वचिदिति भावः । सर्वकर्तृकरणसाधारणे तस्मिन् विद्यत इति न दोषः क्वचिदिति भावः। सर्वसङ्गित्वमात्रेण न तत्प्रकाशनसामर्थ्यं सिध्यति । वाय्वादिसंसर्गिप्रदीपप्रकाशे व्यभिचारात्। अतः कार्यसामर्थ्यमेव तस्मिन् प्रमाणमिति स्वयम्प्रकाशस्य ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं सिध्यति इत्याह—**न—वाय्वाकाशेति** ॥

अथ वा, शास्त्रकर्तृत्वात् ब्रह्म स[र्वज्ञम्,] तथा हि—ब्रह्म स्वतन्त्रमध्येतॄणां पुरुषार्थसिद्ध्यर्थं नियतं स्व(राद्य)[र]क्रमाद्यपेक्षमाणं परमते तत्सिद्धवेदक्रमादेः पुरुषार्थहेतुत्वस्य क्लृप्तत्वात्। न च क्रमादिना विशिष्टान् वर्णान् करोति। अन्यथा *कल्पने अक्लृप्तकल्पनादोषात् 'धाता यथापूर्वमकल्पयत्' इति श्रुतेश्च। तथा च अनियतानन्तकल्पस्थवेदक्रमस्वरादिप्रतिसं(स्कार)[धा]नं तस्य वक्तव्यम्, एवमनन्तवर्णवेदवाक्यप्रतिसन्धानं च* त्वायोगात्। तदीक्षणस्यापि कारणत्वात्, तत्सकलज्ञानं च न ब्रह्मणो मानान्तरात्, तस्यान्तःकरणादिसम्बन्धाभावेन मानन्तरासम्भवात् ॥

किञ्च, अनावृतस्वरूपचैतन्यबला(दिति)[दपि] सङ्कोचकाभावात् यावत्संसृष्टप्रकाशवत् ब्रह्म*नुमानिकसर्वज्ञत्वमेव[मेव] वक्तव्यम्। सर्वस्यापक्षत्वेन हेतुतया सर्वगोचरज्ञानासिद्धेः। सिद्धान्ते सर्वज्ञत्वसम्भावनायां तावन्मात्रस्यैव अपेक्षितत्वाच्च। तस्माच्छास्त्रयोनित्वेन ब्रह्म सर्वज्ञमिति शास्त्रयोनित्वात् सर्वज्ञम्।

---

*अत्र सर्वत्र ग्रन्थे त्रुटिः ॥

तस्मात् सर्वार्थप्रकाशनसमर्थसर्वशब्दोपादानतया सर्वज्ञं ब्रह्म। तदे-
316 - 5 तदाह—नासतः प्रादुर्भावादिति ॥

॥ इति पञ्चपादिकाविवरणे षष्ठं वर्णकम् ॥

---

भा. एतच्च स्वप्रकाशत्वेन च शास्त्रोपादानब्रह्मणः सर्वज्ञत्वमुपपादयतो ग्रन्थकारस्य सम्मतं शङ्कालेशशून्यमिति ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथाश्रमपूज्यपादशिष्य-
श्रीनृसिंहाश्रमविरचितायां पञ्चपादिकाविवरणव्याख्यायां
भावप्रकाशिकायां षष्ठं सप्तमं च वर्णकं समाप्तम् ॥

॥ शास्त्रयोनित्वाधिकरणं च ॥

---

## ॥ अथ सप्तमं वर्णकम् ॥

अथवेत्यादि द्वितीयवर्णकविवरणं स्पष्टार्थम् । तस्माज्जन्मादिनिमित्तोपादानकारणं सर्वज्ञं ब्रह्मेति सिद्धम् । तत्र बिम्बस्थानीयं ब्रह्म मायाशक्तिमत्कारणं जीवाश्च प्रत्येकमविद्यानुबद्धाः इति केचित् । मायाविद्याप्रतिबिम्बितं ब्रह्म जगत्कारणम्, विशुद्धं ब्रह्म अमृतत्वालम्बनम्, जीवाश्च अविद्याबद्धाः इत्यन्ये । जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्माविर्भावयन्ति सादृश्याच्च प्रपञ्चैकतावभासः अनेकैरवगतद्वितीयचन्द्रवत् स्वरूपापेक्षया च ब्रह्म सर्वजगत्कारणं इत्यपरे । ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्तते स्वप्नादिवदिति मतान्तरम् । तस्मात् ब्रह्मैव स्वमायया अविद्यया विवर्तत इति ॥ 317 - 2

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यस्य
प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे
सप्तमं वर्णकं समाप्तम् ॥

॥ शास्त्रयोनित्वाधिकरणं च ॥

---

जगतो जन्मादिकारणं ब्रह्मेत्युक्तम् । तत्र कारणस्वरूपनिर्धारणाय आचार्याणां मतानि दर्शयति—तत्रेति । ब्रह्मसिद्धिकाराणां मतमाह— जीवा एवेति । यत्त्वया दृष्टं तन्मया दृष्टमिति कथं प्रत्यभिज्ञानम् ? इति ; तत्राह —सादृश्यादिति । इष्टसिद्धिकाराणां मतमाह—ब्रह्मैकमेवेति । अन्त्यं पक्षमुपसंहरति—तस्मादिति ॥ ता

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य-
श्रीचित्सुखमुनिविरचितायां पञ्चपादिकाविवरणव्याख्यायां
तात्पर्यदीपिकायां सप्तमं वर्णकं समाप्तम् ॥

॥ शास्त्रयोनित्वाधिकरणं च ॥

---

## ॥ अथ अष्टमं वर्णकम् ॥

ज्ञानानन्दैकरूपं निखिलजगदुपादानमीशं प्रभूणां
सर्वज्ञं ब्रह्म नित्यं विशदमतितरां निर्गुणं निष्क्रियं च ।
एतत्कार्यावमृष्टिं निखिलभववतीं सम्यगुद्धूय विद्ध्वा
त्वप्रामाण्यं श्रुतीनां श्रुतिभिरिदमजं ज्ञेयमित्युच्यतेऽस्मिन् ॥

जगतो जन्मादिकारणं ज्ञानानन्दं ब्रह्मेति च लक्षितम् । तत्र वेदान्ताः प्रमाणमिति प्रतिज्ञातम् । तत्रेदं निरूपणीयम्--किं भूतेऽप्यर्थे
319 - 2 शब्दः प्रमाणम्? न वा? इति। नेति तावदाह—कथं पुनर्ब्रह्मण इति।
319 - 2 ननु आक्षेपः किंनिबन्धनः?। सूत्रप्रामाण्यादित्याह—यावता आम्नायस्येति ॥

ननु वेदान्तानामानर्थक्यमुच्यते? किं वा क्रियापरत्वम्? इति। न तावत् क्रियापरत्वम्, आदिमध्यावसानेषु तात्पर्येण ब्रह्मैक्यपर्य-
319 - 5 वसानादिति; तत्राह—यद्यपि प्रदर्शितानीति। तथापि तत्र न सम्भवति प्रामाण्यमित्यर्थः। ननु यत्र शब्दस्य शक्तितात्पर्ये विद्येते तत्र शब्दः प्रमाणम्, न विषयविशेषापेक्षं शब्दस्य प्रामाण्यम्, विषयस्य शाब्द-

---

ता. अतीतसूत्रद्वयार्थकथनपूर्वकं समन्वयसूत्रस्य तात्पर्यमाह—ज्ञानानन्देति। ज्ञानानन्दैकरूपमिति स्वरूपलक्षणस्यानुवादः। निखिलजगदुपादानमिति तटस्थलक्षणस्य। तदेवोपपादयति—ईशं प्रभूणामिति। तृतीयसूत्रार्थमनुवदति—सर्वज्ञं ब्रह्मेति। समन्वयसूत्रस्य द्वितीयवर्णकार्थमाह—एतत्कार्यावमृष्टिमुद्धूयेति। कार्यसंस्पर्शाभावे हेतुमाह—नित्यमित्यादिना। प्रथमविशेषणेनोत्पाद्यत्वं निराकरोति, द्वितीयेन दोषापगमलक्षणसंस्कारम्, तृतीयेन गुणाधानम्, चतुर्थेन परिस्पन्दपरिणामवत्त्वम्। किमिति कार्यावमृष्टिः निराक्रियते? इत्यत आह—निखिलभववतीमिति। भववतीं संसारवतीमिति यावत्। भयवतीमिति वा पाठः,। उभयथापि संसारहेतुत्वं निराक्रियत इत्यर्थः। समन्वयसूत्रस्य प्रथमवर्णकार्थमाह—विध्वा त्वप्रामाण्यमिति। श्रुतिभिरजमिदं ज्ञेयमिति सिद्धमेव वस्तु श्रुतिप्रमाणवेद्यमिति दर्शयति ॥

प्रमितिहेतुत्वाभावादिति ; तत्राह—तत्र परिनिष्ठिते वस्तुनीति । अभूत् अस्ति 319 - 6
भविष्यति इत्यवगम्ये वस्तुनि असाध्यस्वभावे वा वस्तुनीत्यर्थः ॥

ननु परिनिष्ठितोऽपि रसो न चक्षुषा गृह्यते, नापि जिह्वया गन्धः,
तद्वत् परिनिष्ठिते ब्रह्मणि प्रमाणान्तरानधिगम्यतया शब्दैकगम्यत्वं किं
न स्यात् ? । न—चक्षुरादीनामितरेतरविषयव्यभिचारवत् आगमव्यति-
रिक्तप्रमाणानां परिनिष्ठिते वस्तुनि व्यभिचारादर्शनात् भूतं चेत् प्रमा-
णान्तरगम्यमेवेति निश्चीयते । ननु तुच्छव्यावृत्तेऽपि वस्तुनि प्रमाणान्तर-
गम्यताया व्यभिचाराभावात् कार्यमपि प्रमाणान्तरगम्यं किं न स्यात् ? ।
न—साध्यस्वभावत्वात् प्रत्यक्षानधिगम्यतया सम्बन्धाग्रहणात् अनुमाना-
दीनामनवगम्यत्वात् तुच्छव्यावृत्तं प्रमाणान्तरयोग्यमिति च ग्रहणाद्दूरं
भूतं वस्तु प्रमाणान्तरयोग्यमिति ग्रहणम्, प्रयोजकस्य निरुपाधिकत्व-
लाभात् । ननु रूपादिहीनत्वात् ब्रह्मापि प्रमाणान्तरानधिगम्यमेव । तथा
पि परिनिष्ठितवस्तुत्वात् प्रमाणान्तरयोग्यत्वाशङ्का न व्यावर्तते । अस्ति
च प्रमाणान्तरं ब्रह्मस्वरूपविज्ञानम् । अतस्तत्संवादादप्रमाणं वेदान्ताः ॥

ननु पुरुषवचांसि प्रमाणान्तरसापेक्षत्वात् तत्संवादविसंवादाभ्यां
प्रामाण्यमप्रामाण्यं वाऽश्नुवते, वेदवचसां तु पुरुषसम्बन्धाभावात् प्रमाणा-
न्तरानधिगम्यविषयतया चक्षुरादिवदनपेक्षमेव प्रामाण्यमिति चोदयति 319 - 9
—नन्वपौरुषेयत्वादिति । परिहरति—सत्यं, तथापीति । अयमर्थः—अन- 320 - 1
पेक्षप्रमाणयोरपि चक्षुस्स्पर्शनयोरर्थे विसंवादादन्यतरस्य अप्रामाण्यवत्
ब्रह्मैकत्वश्रुतेः 'अहं मनुष्य' इति प्रत्यक्षस्य च परस्परव्याघातात् शब्दस्य
अप्रामाण्यमिति । किं च, आप्तः खलु लोके प्रमाणान्तरेण अर्थमवगम्य

---

अध्ययनविधिपरिगृहीतानामानर्थक्यमयुक्तमित्यभिप्रेत्य, पक्षान्तरमुपपाद- ता.
यति—किं वेति । पूर्ववादी परिहरति—न—साध्येति । भूतत्वमेव प्रमाणा-
न्तरगम्यतायां प्रयोजकम्, न तुच्छव्यावृत्तत्वं सप्रतियोगितया बुद्धिगौरवादित्याह
—तुच्छव्यावृत्तमिति । भवतु प्रमाणान्तरं ततः किम् ? इत्यत आह—अत
इति । अर्थे । चित्रनिम्नोन्नतत्वादौ । प्रयोजन[पुरुषार्थ]शून्यत्वादपि
न सिद्धे प्रामाण्यमिति टीकाग्रन्थस्य तात्पर्यमाह—किं चाप्त इति ॥

परस्मै शब्दं प्रयुञ्जानः श्रोतुः साक्षाद्वा परम्परया वा प्रयोजनपर्यन्तमर्थं
विवक्षित्वा प्रयुङ्क्ते, प्रयोजनानभिसन्धाने तात्पर्यादर्शनात्, तच्च प्रयोजनं
साध्यस्वभावमिति परिनिष्ठितं वस्तु स्वयं न प्रयोजनम्, नापि क्रियामन-
पेक्ष्य प्रयोजनसाधनमिति न तत्र तात्पर्यहीनः शब्दः प्रामाण्यमश्नुत
320 - 2-5 इत्याह—किं च पुरुषार्थशून्यत्वादित्यादिना । ततो न कचिदित्युपसंहरति ।
किञ्च, विधायकपदव्यतिरिक्तानां पदानां सम्भूय प्रमाणान्तरानधि-
गतवस्तुप्रतिपादनं न सम्भवति । प्रमाणान्तरानधिगतविषये सम्बन्धा-
ग्रहणात् । यथासम्बन्धग्रहणमर्थप्रतिपादनात् । कार्यस्य तु प्रमाणा-
न्तरानवसेयतया तत्संसृष्टपदार्थानामतद्गोचरत्वाद्युक्ता शब्देभ्यः अपूर्वा-
320 - 6 र्थप्रमितिरिति दर्शयति—किच्च प्रत्यक्षाद्यविषये इत्यादिना । यस्मात्
सूत्रकारवचनाद्भूतवस्तुप्रतिपादनायोगात् प्रयोजनशून्यत्वादनधिग-
तार्थताऽभावाच्च न ब्रह्मणि वेदान्ताः प्रमाणं तस्मादनर्थका वेदान्ताः
321 - 2 इत्युपसंहरति—तस्मादिति ॥

321 - 4 यत्पुनर्भाष्यकारेणेत्यादेरयमर्थः—न तावद्वेदान्ताः कस्यचित् कर्म-
विशेषस्य प्रकरणे समधिगताः । येन 'सोऽरोदी'दित्यादिवत् विधि-
समन्वयः स्यात् । ननु सर्वकर्मविधायिवेदैकदेशत्वात् सर्वकर्मप्रकरणं
स्यात् । न—सर्वेण वेदवाक्येनैकस्य वस्तुनः प्रतिपादनाभावादेक-
वाक्यताऽयोगात् । धर्मसामान्यस्याप्रतिपाद्यत्वात् । अस्तु तर्हि पर्ण-
मयीवाक्यवत् कर्तृद्वारेण सर्वक्रतुशेषभूतोऽर्थवाद इति । नैतद्युक्तम्—
स्तुतिप्रतिपादनयोरुपकाराभावाद्वैपरीत्याच्च । न हि कर्मणां कर्ता
नित्यशुद्धबुद्धमुक्तस्वभावो निर्गुणो निष्क्रियोऽनश्नन्नन्योऽभिचाकशीति
इति स्तवः प्रतिपादनं वा कर्मसु प्रवृत्तावुपकरोति । विपरीतं च स्यात् ।
तस्मान्न कर्मसु वेदान्तानां समन्वयः, किं तु स्वप्रकरणगतसगुणोपास-
321 - 6 नासु संबन्धः इति भाष्यार्थमनूद्याक्षिपति—तदयुक्तमिति ॥

तदापि विशिष्टब्रह्मस्वरूपासिद्धिरित्यर्थः। न खलूपासनाशेषतया ब्रह्मस्वरूपसिद्धिर्भाष्येऽभिप्रेता, किं तु उपास्यगुणप्रक्षेपद्वारेण वेदान्तानां समन्वयो विवक्षित इति परिहरति—सत्यमनुमानत इति। ननु 321 - 8
वेदान्तवाक्यानां सगुणोपासनप्रकरणादपि व्युत्थितानां स्वरूपमात्रपर्यवसितानां नोपासनासम्बन्धः, नापि स्वात्मन्युपासना कल्पयितुं शक्यते, अश्रुतत्वादिति ; तत्राह—एवं च अध्ययनविधीति। फलञ्चेति। 322 - 1-2
रात्रिसत्राणामिवेति शेषः। सूत्रं व्याचष्टे—तत् ब्रह्म सर्वज्ञत्वादीत्यादिना॥ 322 - 5

तत्र तात्पर्येणेति। अयमर्थः—तात्पर्यं नाम तदर्थप्रमितिशेषता 322 - 7
शब्दधर्मः। कथम्?, विवक्षा तात्पर्यमिति चेत्। अर्थप्रमितिं विवक्षित्वा तादर्थ्येन प्रयुज्यमानत्वं शब्दधर्म एव। तत्रापि तात्पर्यं न विवक्षामात्रम्। तच्च तात्पर्यं यस्मिन् अर्थे वाक्यस्योपक्रमोपसंहारैकरूप्यं यस्य चार्थस्य पुनःपुनरभ्यासः यस्मिन् अर्थे फलविशेषसङ्कीर्तनं अपूर्वार्थप्रमेयता च यत्र च अर्थवादोपादानं उपपत्तिभिरुपपादनं चेत्यादीनि लिङ्गानि भवन्ति तस्य वाक्यस्य तस्मिन् अर्थे तात्पर्यमिति गम्यते। न च प्रमेयस्य साध्यतैव तात्पर्यलिङ्गम् ; 'पुत्रस्ते जातः' इत्यादिषु तात्पर्य-

---

ता

उपास्यगुणप्रक्षेपद्वारेण उपास्यगुणारोपणेनेति यावत्। अश्रुतत्वा-
दिति। 'पूषा प्रपिष्टभाग' इत्यादौ द्रव्यदेवतासम्बन्धवत् अत्र विधिकल्पनस्याश्रुत-
त्वादित्यर्थः॥

आक्षिपति—**कथमिति**। आक्षेसैवाह—**विवक्षेति**। विवक्षा—
तात्पर्यम्, विवक्षा च पुरुषधर्मो न शब्दधर्म इत्यर्थः। परिहरति—**अर्थप्रमिति-**
**मिति**। भवतु प्रयुज्यमानत्वं शब्दधर्मः, तथापि तात्पर्यं विवक्षैवेति ; तत्राह
—**तत्रापीति**। अपौरुषेये वेदे तात्पर्याभावप्रसङ्गादित्यर्थः। भवतु विवक्षा-
तिरिक्ततात्पर्यं तथा विवक्षयैव तद्गम्यत इत्यत आह—**तच्चेति**। एतेन—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥'

इति षड्विधं लिङ्गं तात्पर्यगमकमुक्तमिति द्रष्टव्यम्। नोपक्रमादीनि
तात्पर्यलिङ्गम्, किं तु कार्यत्वमेवेति ; तत्राह—**न च प्रमेयस्येति**। तत्रापि

दर्शनात्। साध्यस्य च प्रमेयत्वे तात्पर्यसिद्धिस्तात्पर्ये सिद्धे साध्यस्य प्रमेयतेतीतरेतराश्रयात्। साध्येऽर्थे प्रमिते प्रतिबन्धनिरासितया पश्चात् तात्पर्यमवगम्यत इति चेत्; तथापि साध्यता न तात्पर्यलिङ्गम्। 'जर्तिलयवाग्वा वा जुहुयात्' इत्यादिष्वदर्शनात्। तस्मादुक्तानि तात्पर्यलिङ्गानि वेदान्तानां ब्रह्मणि दृश्यन्ते। तथा हि—'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इत्युपक्रमोपसंहारयोरैकरूप्येण प्रत्यगात्माद्वितीयरूपं ब्रह्मावगम्यते। तथा 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इति नवकृत्वोऽभ्यस्यते। प्रमाणान्तरेण चानधिगतमद्वितीयब्रह्मात्मत्वं प्रतिपाद्यते। 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति च निरतिशयपुरुषार्थावाप्तिर्ब्रह्मविज्ञानफलमवगम्यते। 'अनेन जीवेनात्मनानुप्रविश्य' 'येनाश्रुतं श्रुतम्' इत्यादिः ब्रह्मण्यर्थवादश्चोपादीयते। मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैः स्वपितिनामनिर्वचनेन च सृष्टिस्थितिसंहारैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति। तथा तैत्तिरीयके 'सत्यं ज्ञानमनन्तं ब्रह्म' 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्युपक्रमोपसंहारयोः प्रत्यगद्वितीयं ब्रह्मावगम्यते। तथा 'सच्च त्यच्चाभवत्' 'यदिदं किं च' 'तदात्मानं स्वयमकुरुत' 'यतो वाचो निवर्तन्ते' इति च प्रत्यगद्वितीयं ब्रह्माभ्यस्यते। प्रमाणान्तरेण

ता. तात्पर्यमसिद्धं कार्याभावादिति; तत्राह—साध्यस्य चेति। साध्यविषयप्रमितौ सत्यां तत्प्रमितिजननसामर्थ्यलक्षणं तात्पर्यं सति च तस्मिंस्तत्प्रमितिसिद्धिरिति परस्पराश्रय इत्यर्थः। 'विषं भुङ्क्ष्व' इत्यादौ तात्पर्याभावे विषभोजनप्रमित्यनुत्पादात् प्रमितिप्रतिबन्धनिरासितया तात्पर्यमुत्पन्नयागप्रमित्यैवावगम्यते न पुनस्तात्पर्येण प्रमितिः ज्ञायते, तेन नेतरेतराश्रय इति शङ्कते—साध्येऽर्थे इति। तथापि प्रमितिमात्रमेव तात्पर्यलिङ्गम्, न साध्यत्वविशेषिता, विशेषणवैयर्थ्यात् साध्यत्वस्य च व्यभिचारादिति परिहरति—तथापीति। जर्तिलाः अरण्यतिलाः, तन्निमिता यवागूः॥

अनधिगतं च प्रतिपाद्यते । 'स सर्वान् कामान् समश्नुते' इत्यादि च फलं ब्रह्मविज्ञानेऽवगम्यते । सृष्टिश्रुतयश्च अद्वितीयब्रह्मप्रतिपत्त्यर्थवादभूता दृश्यन्ते । तथा कोशपञ्चकोपन्यासेन प्राणनादिव्यापारलिङ्गैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति । एवं सर्वेषु वेदान्तेषु ब्रह्मात्मैकत्वप्रमितौ तात्पर्यलिङ्गानि द्रष्टव्यानि । एवं तात्पर्येण समन्वयात् ब्रह्मैव वेदान्तप्रमेयमिति ॥

सम्यगन्वयः इत्यादिना सूत्रभागं व्याचष्टे । **पदानामन्वय इति** 322 - 7
**सम्बन्धः ।** तत्र क्रियाकारकसंसर्गविषयतया पदानामन्वयं व्यावर्त- 322 - 8
यति—परस्परानवच्छिन्नार्थानामिति । तत्रोद्भिदादिशब्दस्य यजतिसामा-
नाधिकरण्येन उद्भिद्यागमात्रवर्तिनोः उद्भिद्यागशब्दयोः अनवच्छिन्नार्थ-
त्वेऽपि नियोगाकाङ्क्षा विद्यते, तथेहापि स्यादिति ; नेत्याह—अनन्या- 323 - 1
काङ्क्षाणामिति ॥

एवं शब्दानां क्रियावाक्येभ्यो वैलक्षण्यमुक्त्वा अर्थवैलक्षण्यं
दर्शयति—तत्र क्रियाकारकसंसर्गेभ्यो वैलक्षण्यमाह—अव्यतिरिक्तेति । ननु 323 - 1
नीलोत्पलवत् भेदाभेदविषयतयापि अभिधेयाव्यतिरेक इति ; नेत्याह— 323 - 1
एकरसेति । तत्र उद्भिद्यागशब्दयोः यागविशेषैकरसार्थवर्तिनोरपि अर्थस्य 323 - 1
नियोगाकाङ्क्षावत् इहाप्यन्याकाङ्क्षेति ; नेत्याह—प्रातिपदिकार्थेति । 323 - 1
तत्रापि लिङ्गसङ्ख्ययोः अवश्याभ्युपगमनीयतेति ; नेत्याह—मात्रान्वय
इति । जगत्कारणसामान्यानुवादेन तत्र ज्ञानानन्दशब्दौ आनन्दविशेषं

---

समुदायतात्पर्यमुक्त्वा अवान्तरतात्पर्यमाह—**तत्र क्रियेति । अखण्ड-** ता.
वाक्यतदर्थलक्षणमभिधाय इदानीं ज्ञानानन्दादिशब्दानां वृत्तिप्रकारमाह—
**तत्र ज्ञानेति ॥**

---

तत्र **अव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः** इति **टीकाग्रन्थेन** भा.
भिन्नप्रवृत्तिनिमित्तावयवत्वे सति एकप्रातिपदिकार्थतात्पर्यकत्वमखण्डार्थत्वमिति
लक्षणं दर्शितं वक्ष्यमाणदृष्टान्तसूचितानुमानविषयाभिप्रायेण । एतादृशा-

**गमयतः। एकसत्यानन्तशब्दा भेदमिथ्यात्वद्वैताभावाभिधानद्वारेण तत्र लक्षणया वर्तन्ते। सर्वज्ञः सर्वशक्तिरित्यादिशब्दाश्च अनिर्वचनीयप्रपञ्चो-**

---

भा. खण्डार्थत्वं पदानां लक्षणयैव वाच्यमिति तदर्थं वाच्यस्वरूपमाह—**एक-सत्यानन्तेति**। एकशब्दो हि रूपादौ प्रयुज्यमानः नैकत्वसङ्ख्यामाह, किं तु सजातीयाभावमेव। न च अयमेकशब्दार्थस्य गुण इति वाच्यम्; जलस्यैकं रूपमेको रस इत्यत्र एकवदिति प्रतीत्यभावात् सजातीयभेदाभावस्यैकशब्दार्थ-नियतगुणत्वाभावाच्च, गौणमुख्यविवेकासम्भवाच्च। द्रव्येऽप्ययमेकशब्दः सजातीयभेदाभाव एव प्रयुज्यते। अविकलाङ्गे बहुपुत्रादिसम्पन्ने च एकचक्षुरेक-पुत्र इत्यप्रयोगात्। विकलाङ्गादिषु च प्रयोगात्। आकृत्यधिकरणन्यायेन अन्वयव्यतिरेकाभ्यां सजातीयभेदाभाव एवैकशब्दस्य(युज्यो)[मुख्यो]ऽर्थः। एत-दुक्तम्—एके मुख्यान्यकेवलाः इति। कैयटे च—एकशब्दोऽयमन्यप्रधाना-सहायसङ्ख्याप्रथमसमानवाचीति। अत्र च केवलासहायशब्दावुपजीव्यौ। अर्थान्तरं त्वत्र असम्भवप्रमाणविरोधाभ्यां त्यज्यते॥

नन्वेवं 'एकमेवाद्वितीयम्' इत्यत्र सजातीयभेदाभावः एवाद्वितीय-पदाभ्यामुच्यत इति पुनरुक्तिः। न च अद्वितीयशब्देन विजातीयभेदाभावः उच्यत इति वाच्यम्; द्वितीयशब्दस्य सजातीयद्वितीयार्थत्वेन तत्संसृष्ट-नञः तदभावार्थकत्वात्। अतः एकशब्दस्य न सजातीयभेदाभावोऽर्थ इति चेत्। न—उक्तरीत्या तस्यार्थान्तरत्वायोगात्। अद्वितीयमित्यत्र द्वितीयपदेन लक्षितविजातीयभेदस्यैव प्रतिषेधात्। 'वेदो वा प्रायदर्शनात्' इति न्यायेन प्रथमश्रुतैकशब्दस्य मुख्यार्थत्वात्। एवं सत्यादिशब्दोऽपि मिथ्यात्वाभावमाह। बाधायोग्यत्वमाहेति यावत्। तद्धि घटादिषु सदिति बुद्धिगोचरः। अबाध्यस्यैव सद्बुद्धिगोचरत्वात्। सा च प्रपञ्चाधिष्ठानब्रह्मव्यक्तिरेव। न च सद्बुद्धिर्घटादिधर्मं सत्त्वं विषयीकरोति न तदधिष्ठानमाधारम्, अतः सच्छब्दवाच्यमपि धर्मरूपमेव किञ्चिदिति वाच्यम्। सन् घट इत्यादि-बुद्धिर्घटादेः सत्तादात्म्यमात्रं विषयी[करोति।] न तस्य धर्मत्वं धर्मित्वं वा। मानान्तरं तु सत एकस्योपादानत्वविषयं तस्य ब्रह्मस्वरूपतया धर्मित्वमेव

व्यवस्थापयति। ब्रह्मस्वरूपभूता सत्ता च पराभिमतजातिरिव सर्वप्रमाणयो- भा.
ग्येत्युक्तम्, इति तस्य नानुभवानुपपत्तिः। अविवेकदशायामपि* अनुगत-
सद्बुद्धिगोचरः सत्पदवाच्य इति व्युत्पत्तिग्रहोऽपि ब्रह्मविषय एव। एवमनन्त-
पदमप्यन्तं प्रतिषेधत् तस्य त्रिविधपरिच्छेदशून्यत्वमाह। एवं ज्ञानपदमप्यन्तः-
करणवृत्तिविशेषाधिष्ठानं तदुपाधिनोऽनन्तव्यावृत्तां निर्धर्मिकां* ज्ञप्तिमाह।
वृत्त्युपहितस्य निर्धर्मकचैतन्यस्यैव वृत्त्यनुगतसामान्यबुद्धिगोचरतया लौकिक-
व्युत्पत्तिगोचरत्वात्॥

एवमानन्दपदमपि परमप्रेमास्पदत्वयोग्यं अन्तःकरणवृत्त्यवच्छेदकनिमित्त-
ब्रह्मस्वरूपभेदमवि*रूपमाह। विषयजन्यान्तःकरणवृत्त्यनुगतानन्दव्यक्तेरेव
लौकिकव्युत्पत्तिविषयत्वात्। न चैवं पूर्णब्रह्मव्यक्तावेव शक्तिरस्त्विति
वाच्यम्; एकैकपदात्तदप्रतीतेः, सम्भूय बोधासम्भवाच्च। यत्तु शक्यतावच्छे-
दकधर्माभावे न शक्तिगोचरत्वमिति न निर्धर्मकं शब्दवाच्यमिति; तन्न
—स्वत एव व्यावृत्तैकव्यक्तौ शक्तिग्रहे तस्य अनुपयोगात्। किं च, तदपि
शब्दवाच्यं न वा? । न चेत्, शब्दात् न प्रतीयेत, वाच्यं चेत्, तत्रैव
व्यभिचारः। न च तत् स्वस्मिन् वर्तते। सम्बन्धाभावेन स्ववृत्तित्वायोगात्।
न चैवं पदात् जायमानं ज्ञानं पराभिमतनिर्विकल्पकवत् न स्वार्थ-
विवेचकं स्यादिति वाच्यम्; सर्वत्र असङ्कीर्णव्यक्तिस्वरूपज्ञानस्यैव व्यावर्तकतया
तस्यापि स्वार्थविवेचकत्वात्। व्यक्तेश्चासङ्कीर्णत्वं साधारणधर्ममात्रानुरूप्य-
त्वम्। अथवा, यथा प्रमेयत्वादिरूपेण ज्ञातमपि घटादि असङ्कीर्णरूपेण ज्ञानात्
न अव्यावर्तकम्, एवं व्यक्तिरपीदमिति ज्ञायमाना। ज्ञायमानेऽप्यज्ञातत्वस्य धर्म-
वदुपपत्तेः। वक्ष्यति चैतद्विस्तरेण। अतः पदान्निर्विकल्पकापत्तिरिति निरस्तम्।
त्वदभिमतनिर्विकल्पके प्रमाणाभावाच्च। एवमात्मशब्दः आ(ज्ञातेत्याज्ञ)[प्नो-
तीत्या]प्तारमाह, आप्यं च विशेषानिर्देशात् स्वातिरिक्तं सर्वमिति सर्वात्मक-
चैतन्यमात्मशब्दार्थः। न त्वात्मत्वजातिरात्मपदार्थः। योगे सति रूढेरकल्पना-
दिति। एकव्यक्तिकजातेरसम्भवाच्च। (न) [स] चाहमनुभवे प्रकाशमान एव
प्रयुज्यते। अतो ब्रह्मपदेन जगत्कारणविषयेण तस्य न सह प्रयोगा[नुप]पत्तिः।

* अत्र सर्वत्र ग्रन्थे त्रुटिः॥

पाधितया तत्र वर्तन्ते। 'अयमात्मा' 'तत्त्वमसि' इत्यादिशब्दाश्च मुख्यलक्षणाभ्यां ब्रह्मण्येव वर्तन्त इति सर्वे जगत्कारणविषयाः शब्दा मुख्यलक्षणोपाधिभिः एकरसमेव ब्रह्म प्रतिपादयन्ति। न च अनिर्वचनीयभेदाभावयोः शब्दप्रवृत्तिनिमित्तयोः परमार्थसत्यैकरसभेदनिमित्ततेति ॥

---

ता. **मुख्यलक्षणाभ्यामिति** । जहदजहल्लक्षणयेत्यर्थः । **मुख्यलक्षणोपाधिभिरिति** । तत्र ज्ञानानन्दशब्दौ व्यक्त्यंशापरित्यागेन मुख्यवृत्त्या वर्तेते, एकादिशब्दाः जहल्लक्षणया वर्तन्ते, 'तत्वमसि'इत्यादयो मुख्यलक्षणाभ्याम्, सर्वज्ञत्वादयः उपाधितः, इति द्रष्टव्यम् । ननु सर्वज्ञादिशब्दानां प्रपञ्चोपाधितया ब्रह्मणि वृत्तावद्वितीयत्वं न सिध्यतीति ; तत्राह—**न चेति** ॥

---

भा. एवमन्येषामपि यथायोग्यं वाच्यं द्रष्टव्यम् ॥

एवं पदानां वाच्यं दर्शयित्वा तेषां ब्रह्मणि लक्षणया वृत्तिमाह—**अयमात्मेति** । न तावदात्मादिशब्दानां सत्यज्ञानानन्दात्मके ब्रह्मणि शक्तिः सम्भवति । तत्तत्पदघटितवाक्यार्थत्वात् । न हि तत्तद्वाक्यप्रतिपाद्यं तदेकदेशपदशक्यं भवति । सहश्रुतपदानां सम्भूय बोधकताव्युत्पत्तिविरोधप्रसङ्गात् । एकैकपदात् यावद्ब्रह्मस्वरूपाप्रतीतेश्च । पदान्तरवैयर्थ्यप्रसङ्गाच्च । सिद्धान्ते च सर्वपदानामर्थवत्त्वमग्रे वक्ष्यते । किञ्चैवमविशेषात् सर्वेषां तत्र शक्तौ पर्यायतापत्तिरिति प्रवृत्तिनिमित्तभेदो वक्तव्यः । तथा च धर्ममात्रं विशिष्टं वा शक्यमिति नैकस्यापि पदस्य वाक्यतात्पर्यगोचरे ब्रह्मणि शक्तिः । क्लृप्तशक्त्यनुरोधेन लक्षणया पदानां तद्बोधकत्वसम्भवे शक्तिकल्पनाऽयोगाच्च ॥

ननु कस्यापि पदस्य तत्र शक्त्यभावे कथं तल्लक्षणा स्यात्? पदान्तराभिधेयस्यैव लक्ष्यत्वात् । किञ्च, वाच्यसम्बन्धितया लक्ष्यस्यावगमो वक्तव्यः । स चावगमो ब्रह्मणि न मानान्तरेण, औपनिषदे तदप्रवृत्तेः इति शब्दादेव वाच्यम् । सोऽपि लाक्षणिकश्चेत् अनवस्थया न कस्यापि पदस्य लक्षणा सिध्यतीति चेत् ॥

अत्रोदाहृत**विवरणवाक्ये मुख्यशब्दं** श्रुत्वा ब्रह्मण्यपि किञ्चित पदं मुख्यमिति नोक्तदूषणद्वयमिति केचित् । तन्न—किं तेन पदेन सत्यज्ञाना-

नन्दात्मकतया ब्रह्म उपस्थाप्यते ? किं सर्वात्मत्वयोग्यसर्वव्यापिबाधायोग्यत्वादिरूपेण ? । नाद्यः-उक्तरीत्या सत्यादिपदानां तेन सह प्रयोगायोगात्, पदान्तरवैयर्थ्याच्च । द्वितीयेऽपि पदान्तराणि जहल्लक्षणया पदान्तरवाच्यं लक्षयन्ति चेत् पूर्वोक्तवैयर्थ्यमेव । *तत्त्वमपि न स्यात् । अजहल्लक्षणया चेत्, न ततः समुदायोपस्थितिः । न ह्यनेकदेशशक्त्या समुदायोपस्थितिः सम्भवति । अनात्मसंसर्गोऽपि तत्त्वावेदकाखण्डवाक्यार्थः स्यात् । अनात्मांशं विहायात्मांशं लक्षयन्तीति चेत्, न—तर्हि लक्ष्यस्याभिधायं....* भा.

यदपीदं मतम्—तत्तद्वृत्त्युपहितमानन्दात्मकं चैतन्यमेव ज्ञानानन्दादिपदैरभिधीयते, तानि च लक्षणां विना सामानाधिकरण्यात् ज्ञानानन्दात्मकं ब्रह्म प्रतिपादयन्तीति ब्रह्मादिपदादेव लक्ष्योपस्थितिरिति । तत्र किं वाच्यं शब्दो* ज्ञानानन्दादीनामौपाधिकभेदो नास्ति ? उत अस्ति ? । आद्ये एकैक पदात् विशिष्टस्वरूपोपस्थितिप्रसङ्गः पदान्तरवैयर्थ्यं च । द्वितीये कथं वाक्येन [अ]भेदप्रतिपादनम् । कल्पितभेदोऽभेदाविरोधीति चेत्, तर्हि महावाक्येऽपि तथैवास्तु, किं लक्षणया । मिथ्याभेदविरुद्धधर्माणामभेदाविरोधित्वात्, ब्रह्मादिपदेन मुख्यवृत्त्या सच्चिदानन्दस्वरूपेण वर्णितरीत्या तत्पदलक्ष्यपरामर्शासम्भवाच्च । व्यक्तिमात्रपरामर्शे च वाक्याद्विशिष्टस्वरूपासिद्धेः ॥

कथं तर्हि सर्वपदलक्ष्ये ब्रह्मणि तद्दोषपरिहारः । उच्यते—न तावदभिधेयमेव लक्ष्यमिति राजनियो(ग्य)[गः] । लक्ष्येऽनात्मत्ववदभिधेयत्वस्यापि अप्रयोजकत्वात् । अभिधायकपदं विना लक्ष्योपस्थितिर्न सम्भवतीति चेत् । तर्हि स एव दोषः । सोऽपि न—स्वस्य तर्केणैव अर्थविशेषोपस्थितिसम्भवात् ।तथा हि—'विज्ञानमानन्दं ब्रह्म' इति वाक्यं वक्ष्यमाणविधया अखण्डार्थम् । एकस्मिंश्चार्थे शक्तानां सहप्रयोगायोगात् कल्पितभेदमर्थं शक्त्या प्रतिपादयन्तीति । सम्भवति ह्येकस्मिन्नपि कल्पितो भेदः । यथा बिम्बप्रतिबिम्बयोः । तथा च वृत्तिविशेषोपहितमानन्दाद्यात्मकं चैतन्यं कल्पितभेदं विज्ञानादिपदवाच्यम्, सर्वात्मतायोग्यता तदुपहितं वा चैतन्यं ब्रह्मादिपदवाच्यमिति विचारात् बहिर्जानतो 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमात् सत्यादिवाक्यं

* अत्र सर्वत्र ग्रन्थे त्रुटिः ॥

भा. ब्रह्मनिष्ठमित्यापाततो भवति विज्ञानाद्यात्मकं ब्रह्म ज्ञानादिपदलक्ष्यमिति बुद्धिः। विचारानन्तरं तु सुतरां लक्ष्यविशेषोपस्थितिरिति किमभिधायकपदेन ॥

अत एव—भवतु स्वस्यैवम् , परप्रतिपादनं तु कथमभिधायकं विना भवेत् ? तं प्रति हि पदेनैव लक्ष्यं निर्देष्टव्यम् , तदपि लाक्षणिकं चेदनवस्थितिमूकतैवेति निरस्तम् । सत्यादिपदानां प्रथममुक्तप्रकारेणार्थविशेषं व्युत्पाद्य, वाक्यतात्पर्यगोचरश्च ब्रह्मेत्युपपाद्य, वाक्यस्थसत्यादिपदलक्ष्यप्रश्ने ब्रह्मेत्युत्तरेऽपि व्युत्पत्तिप्रकारोपस्थितौ ज्ञानाद्यभिन्नं सर्वात्मत्वयोग्यं निर्धर्मकं ब्रह्मपदलक्ष्यं भवति बुद्धिरिति ततः शङ्का । न चोत्तरं व्यर्थम् । तं प्रत्यपि प्रपञ्चमिथ्यात्वादिकं प्रथमं सम्यग्युक्तिभिरुपपाद्य वर्णितव्युत्पत्तिप्रतिसन्धानानन्तरं च शास्त्रमुदाहर्तव्यमिति न काचिदनुपपत्तिः ॥

एवंप्रकारानाश्रयणेऽपि कथं ज्ञानमनित्यमिति प्रयुक्तशब्दार्थं प्रत्याययेत् । न हि ज्ञानपदवाच्यमुद्दिश्यानित्यता विधातुं शक्यते । सामान्याश्रयसर्वविशेषाणां विधेयत्वाय योग्यत्वे हि सामान्यशब्दो मुख्यार्थो भवति । किंचिद्विशेषमात्रपरत्वे तु तन्मात्रोपस्थितिस्तस्य शक्त्या न भवतीति वृत्त्यन्तरमेव । सर्वेषु ज्ञानेषु चानित्यतान्वयः परस्य सम्भवतीति लाक्षणिकमेव । तत्र च लक्ष्यं केन पदेनोपस्थापनीयम् ? जन्यज्ञानपदेनेति चेत् ; न हि जन्यज्ञानमित्यखण्डमेकं जनिमज्ज्ञानशक्तौ वदन्ति । किं तु नानापदात्मकम् । विग्रहवाक्यस्थज्ञानपदेन मुख्यवृत्त्या स्वार्थोपस्थितौ पूर्वोक्तदोष एव । लक्षणायां च ज्ञानपदेनैव लक्ष्योपस्थाने तत्रापि लक्षणेत्यनवस्थायां मूकतापत्तिः ॥

एवं जातिवाचकपदैर्लक्ष्यत इति मतेऽपि श्रोतुः सामान्यस्य व्यक्तिसम्बन्धितया अवगतत्वात् स्वत एव लक्ष्यविशेषबुद्धिरिति वक्तव्यम् । न च तत्र तद्व्यक्तिशब्देनैव तदुपस्थितिः व्यक्तिशब्दश्च न रूढः येन तत्रापि लक्षणा स्यात् , किं तु व्यज्यतेऽनयेति यौगिक इति वाच्यम् ।* तस्य ज्ञानवाचिनो व्यज्यत इति शब्दस्य व्यक्तौ लक्षणाया वक्तव्यत्वात् । किं च, ब्रह्मस्वरूपभूतनिर्धर्मकज्ञानात् एकैकव्यक्तिवाचकेन ज्ञानादिपदेन शक्त्यैव तदितरलक्ष्योप(स्थितिः । )स्थितेर्न काचिद्दोषकला ॥

---

* अत्र ग्रन्थे त्रुटिः ॥

नन्वेवं ज्ञानादिपदानां लक्षणा व्यर्था ; तस्यां च त्याज्यांशाभावात् । भा· जहल्लक्षणैव स्यादिति ब्रह्म जडमसदनानन्दमिति चेत् ; उक्तं तावत् ग्रन्थकारेण 'सत्यादिपदानां ब्रह्मप्रातिपदिकार्थमात्रे तात्पर्यम्' इति । तत्रैवोपक्रमादितात्पर्यलिङ्गप्रदर्शनात् । न च जडात्मकं तत् भवितुमर्हति ; तस्य मिथ्यात्वेन तत्त्वावेदकश्रुतितात्पर्यगोचरत्वानुपपत्तेः, सत्यादिपदानां वैयर्थ्यापत्तेश्च । ततश्च सत्यादिपदेषु परिपूर्णस्वव्यक्तिलक्षणानङ्गीकारे तत्तत्पदशक्तिव्यवस्थापकभेदनिरोधनाभावात् नीलोत्पलादिसाधारणभेदबुद्धिरेव स्यादिति न वर्णिततात्पर्यं सिध्यति न वा मिथ्याभेदघटितसंसर्गनिष्ठत्वं वाक्यस्य सम्भवतीति परिच्छिन्नावस्थितस्वार्थपरित्यागेन परिपूर्णावस्थं तं तमेवार्थं लक्षयति । तेन लक्षणा न व्यर्था । न च ब्रह्मानृतजडात्मकम् ॥

ननु एवमपि ब्रह्मपदे लक्षणैव मास्तु, सर्वात्मकत्वयोग्यव्यक्तेरेव तदर्थतया ज्ञानाद्यभेदसम्भवादिति चेत्, न—सर्वात्मत्वयोग्यता हि तस्य अवास्तवपरिच्छिन्न[त्व]मेव निवारयति, न तु ब्रह्मादिपदानां शक्तिव्यवस्थापककल्पितार्थभेदम् । अन्यथा ब्रह्मपदमात्रात् तस्यानन्दाद्यात्मकप्रतीतिप्रसङ्गादिदोषस्य तदवस्थत्वात् । अतस्तदपि कल्पितभेदासहिष्णुब्रह्मस्वरूपमुपस्थापयल्लाक्षणिकमेव। न च ज्ञानाद्यात्मकमेव सत्यादेः पू(र्व)[र्ण]त्वमिति किं तत्र लक्षणया इति वाच्यम् । तस्य प्रागपि सत्त्वात् । का तर्हि पूर्णता ?। शक्तिव्यवस्थापकभेदविरोधिस्वरूपता इति ब्रूमः । किं च ज्ञानादिपदाभावे तदात्मतालक्षणं पूर्णत्वमपि कुतः सिध्येत् । श्रौतत्वे हि तस्य सत्यत्वात् भेदे पूर्णत्वायोगात् तदभेदः सिध्यति । श्रुत्यभावे तु कुतस्तदभेदः ॥

ननु एकैकपदादेव अनवच्छिन्नस्वरूपप्रतिपत्तौ पदान्तरं व्यर्थं स्यादिति चेत्, न—एकैकपदाद्धि सदादिकं स्वरूपेण पू(र्व)[र्ण]मुपस्थाप्यते । न तस्यानन्दाद्यात्मकत्वम् । अन्यथापि तदुपपत्तेः । तत्तु आनन्दादिपदसमभिव्याहारादेव सिध्यति । ननु एवमपि पुनरुक्तिः किं पर्यायता ? ज्ञातज्ञापनं वा ?। नाद्यः, वाच्यभेदस्य सत्त्वात् । अन्यथा अर्थवादादिपदानामेकप्राशस्त्यादि लक्षयतां पर्यायतापत्तिः । न द्वितीयः, पदानां ज्ञातज्ञापनस्य सर्वत्र

भा. सिद्धत्वात् युगपदेव स्वस्वार्थलक्षकत्वाच्च वाक्यस्याप्यर्थवत्त्वं लक्ष्यते। न च सर्वपदलक्षणा अप्रसिद्धेति वाच्यम्। 'विषं भुङ्क्ष्व' इत्यादौ तद्दृष्टेः। एतच्च अन्यत्रोपपादितम्। सर्वपदानां लाक्षणिकत्वे लाक्षणिकस्य अननुभावकत्वात् वाक्यमबोधकं स्यादिति चेत्, कर्णे कथ्यताम्॥

यत्तु—अवगतस्य आत्मनः केनचित् सम्बन्धाभावान्न लक्षणेति; तदपि तथा। एवं 'तत्त्वमसि' इति वाक्येऽपि पदद्वयलक्षणा स्वभा(व)[ग]त्यागेन भागगोचरा जहदजहद्रूपा। तत्पदस्य प्रकृतजगत्कारणसर्वात्मत्वविशिष्टं सदर्थः; न तु तन्मात्रम्; विशिष्टस्यैव पूर्वं प्रस्तुतत्वात्। एवं त्वम्पदस्य परिच्छिन्नाहङ्कारा-भिन्नमर्थः* व्यवह्रियमाणत्वात्। न च अनयोरभेदः सम्भवति, विरोधात्। ननु अहङ्कारस्य ब्रह्मविवर्तत्वेन तदभिन्नत्वाच्चैतन्यस्य च तद्रूपत्वान्नाभेदविरोधः इति चेत्, न—विवर्ताधिष्ठानयोर्हि काल्पनिकं तादात्म्यम्। न च तत्त्वा-वेदकक्रृत्यर्थो*तावदेकप्रातिपदिकार्थमात्रतात्पर्यं सिद्धमिति॥

यत्तु—विरुद्धयोर्नाभेद इत्यनुमानं 'तत्त्वमसि' इति श्रुत्या बाध्यत इति मुख्यार्थयोरेवाभेद इति; तन्न—श्रुतितात्पर्यगोचराभेदस्य वृत्त्यन्त-रेणापि श्रुतेरनन्यथासिद्धप्रमाणान्तरभेदकत्वायोगात्। अन्यथा 'यजमानः प्रस्तरः' इत्यादावपि वृत्त्यन्तरं न स्यात्। 'गुणात् व्याप्त्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात्' इति न्यायसूत्रमपि न स्यात्॥

ननु अभेदश्रुतेरभेदो नाम भेदाभावोऽर्थः। तथा च अद्वयता, 'नेह नाना' इति श्रुत्या विद्यमानस्यापि प्रपञ्चस्य तात्त्विकाभावो ब्रह्मणि प्रति-पाद्यते। एवं वाच्ययोर्भेदे विद्यमानयोरपि तत्त्वतोऽभावः श्रुत्यर्थ इति किं लक्षणया इति चेत्; स्यादेवम् 'नात्र काचन भिदास्ति' इत्यादिवाक्यानां रीतिः। नेदं निषेधवाक्यम्, किं तु जीवस्य ब्रह्मरूपतापरम्। न हि तत् भेद-विरुद्धस्वभावमित्येतावता अर्थनिषेधकं वाक्यं भवति। सर्वस्यापि प्रमाणनिषेध-कत्वप्रसङ्गात्। तत्प्रमेयस्य स्वभावविरुद्धत्वात्॥

ननु अहङ्कारावच्छिन्नजीवस्य ब्रह्मभेदो विरुद्धधर्मश्चावास्तव एव। स च बिम्बप्रतिबिम्बयोरिव अभेदाविरोधी। ततश्च 'नेक्षेतोद्यन्तम्'

---

* अत्र ग्रन्थे त्रुटिः॥

इत्यादिस्मृतौ वारिस्थमादित्यमिति सामानाधिकरण्यवत् प्रकृतेऽपि तत् किं न स्यात्। न हि तत्रापि वारिस्थतानिवृत्तिरभिप्रेता, विवक्षितार्थासिद्धेरिति। न–पदार्थस्य हि पदार्थेनान्वयो लोके व्युत्पन्नः न तु पदार्थैकदेशस्य। इतरांशोपस्थितिवैयर्थ्यात्। गोत्वादेरपि व्यक्त्यवच्छेदेनान्वयात्। न च स्वतन्त्रोपस्थिताहङ्कारोऽवच्छेदको भवति। न च अहमि प्रतीयमानोऽहङ्कारः कस्यचिद्विशेषणतया प्रतीयते। न चैवं जीवाहङ्कारैक्यं त्वम्पदवाच्यमिति शक्त्यभेदप्रसङ्गः। जीवस्याप्यहमित्येव प्रतीयमानत्वेन तयोः कल्पितैक्येन एकपदार्थत्वात्। ततश्च अहङ्कारस्य तत्पदार्थेन अभेदासम्भवाद्वाक्यार्थाननुप्रवेशिनः पदादुपस्थित्यसम्भवाल्लक्षणा वाच्या। अहमिति परिच्छिन्नतयोपस्थितस्य अपरिच्छिन्नतत्पदार्थाभेदप्रतीत्यसम्भवाच्च ॥

नन्वेवं अस्तु त्वम्पदे लक्षणा, तत्पदे किमिह स्वीकर्तव्या। ननु विनिगमकाभावात् पदद्वयेऽपि लक्षणा स्यात्। न च जघन्य(ग)तया त्वम्पदस्योचितेति वाच्यम्; 'अहं ब्रह्म' इति वाक्ये तद्वैपरीत्यात्। न च त्वम्पदमुद्देशकतया अनुवादकमिति तत्र लक्षणा न्याय्येति वाच्यम्; 'अर्धमन्तर्वेदि' इत्यादिविधायकेऽपि तद्दृष्टेः। महावाक्यप्रवृत्तेः पूर्वमुभयपदार्थस्यापि ज्ञातत्वेऽनुद्देश्यत्वस्यापि अनियतत्वादिति चेत्, न—तत्पदलक्षणायामपि नाहङ्कारचैतन्याभेदः शास्त्रार्थः सम्भवतीत्यवश्यं पदलक्षणा वाच्येति तयैवालम्। किं च, जीवस्य यदज्ञानात् संसारस्तदात्मत्वमेव श्रुत्योपदिश्यत इति तत्पदार्थाभेद एव विधेयः। जीवस्यैवाधिकाराच्च तदुद्देशेनैव शास्त्रं प्रवर्तत इति त्वम्पदार्थ एव सोचितेति ॥

उच्यते—यद्यहङ्कारोपलक्षितापरोक्षचैतन्यमात्रस्य तत्पदार्थसप्रपञ्चब्रह्माभेदः शास्त्रार्थः स्यात् तर्हि यावदुद्देश्यस्वरूपं तावद्विधेयाभेदेन भवितव्यमिति मुक्तावपि सप्रपञ्चता स्यादिति न निष्प्रपञ्चब्रह्मस्वरूपसिद्धिः। ननु उपदेशाविरोधे शास्त्रजन्यजीवब्रह्माभेदसाक्षात्कारादेव अविद्यानिवृत्त्या प्रपञ्चोऽपि निवर्तिष्यत इति निष्प्रपञ्चत्वसिद्धिरिति चेत्, न—उपदेशजन्यज्ञानस्य प्रपञ्चगोचरत्वे स्वविषयानिवर्तकत्वात्, प्रपञ्चस्य तत्त्वावेदकश्रुतितात्पर्यगोचरस्यात्मवत् ज्ञानानिवर्त्य-

भा.

भा. त्वाच। प्रपञ्चस्य श्रुतौ तात्पर्यागोचरत्वे च कथमपि वाक्यार्थानन्वयित्वेन श्रुत्या अनभिमतस्य वाक्यार्थानन्वयित्वात् शब्दादुपस्थित्ययोगेन तत्पदेऽपि लक्षणैव वक्तव्या। त्वम्पदवाच्यस्य अहङ्कारस्यापि विशेषणत्वे एषा रीतिरिति द्रष्टव्या ॥

ननु ब्रह्मणो निष्प्रपञ्चत्वमुपदेशसामर्थ्यादेवानीयते। उपदेशश्चेत् सप्रपञ्चेऽपि अविरुद्धः तस्य कुतो निष्प्रपञ्चत्वम्? इति चेत्। भ्रान्तोऽसि। न हीदं महावाक्यं पदार्थशोधनपरं ब्रूमहे। किन्तु 'अस्थूलमनणु' 'अथात आदेशो नेति नेति' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यानि तत्पदार्थपरिशोधकानि इति। ननु एवं सति ब्रह्मादिपदानां तत्र लक्षणायामपि तत्पदस्य तदेव शक्यं भविष्यति। सर्वनाम्नः प्रकृतार्थस्य प्रकृतनिर्विशेषब्रह्मण्यपि शक्त्युपपत्तेः। न च अस्थूलादिवाक्यस्य शाखान्तरे पाठात् न तदर्थस्य तत्पदेन परामर्श इति वाच्यम्;' तथापि 'सर्वशाखाप्रत्ययम्' इति न्यायेन तच्छब्दस्य यावच्छ्रुत्यभिप्रेतनिर्विशेषब्रह्मार्थत्वात्। अन्यथा ज्ञानानन्दात्मकत्वं तत्पदार्थस्य तेन न परामृश्येत। वाचारम्भणादिश्रुत्या अत्रापि विशेषापवादस्य कृतत्वात्। न च निर्विशेषस्य शब्दान्नि(र्विशेषा) [र्देशा]योगात् निरस्तप्रपञ्चविशिष्टमेव तच्छब्देन परामृश्यत इति वाच्यम्; बुद्धेरिव तदधीनशब्दस्यापि तद्गोचरत्वसम्भवात्। तस्य बुद्ध्यगोचरत्वे च तत्र तात्पर्यग्रहायोगात्, शब्दप्रमाणोपन्यासवैयर्थ्यापत्तेश्च इति चेत्;

सत्यम्—बुद्धिस्थं तच्छब्दार्थः। सापि बुद्धिरतीतैव तच्छब्दप्रवृत्तिनिमित्तमित्युक्तम्। वर्तमानानामिव बुद्धिविशिष्टे तच्छब्दाप्रयोगादिति न तद्विशिष्टस्य वर्तमानेन अभेद इति लक्षणा। अयमेवार्थः परोक्षं ब्रह्म तदर्थः इत्यभिधीयते। बुद्ध्यैव सप्रपञ्चत्वाच्च। ततश्च भागत्यागलक्षणयैव वृत्तिः। अथ वा सत्यादिपदेष्वयमपरः पक्षः—सत्यज्ञानादिशब्दानां घटतज्ज्ञानादौ प्रयोगात् सोऽपि तदर्थ एव। सामान्याभिधायिनोऽपर्यवसानात् व्यक्तिवत् सत्यादिपदादपि तत्प्रतीत्युपपत्तेः। गवादिव्यक्तिवत् तस्यापि शब्दार्थत्वात्। अत एव पञ्चमाद्ये सत्यत्वज्ञानत्वयोः ब्रह्मस्वरूपभूतयोरपि परापरसामान्यात्मकत्वं ग्रन्थकारेणापि उक्तमिति न तत्र गवादिविशेष इति सत्तादेः स्वतन्त्रोपस्थित्यर्थं पदार्थैकदेशान्वयायोगात् तत्रावश्यं लक्षणेति ॥

**अनेकेषां पदानां लक्षणादिद्वारेण एकरसवृत्तितायामुदाहरणमाह। तत्र द्विविधा वाक्यप्रवृत्तिः, एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्य-ज्ञानादिलक्षणब्रह्मविषया। तत्र प्रथमं ब्रह्मात्मैकत्वे दृष्टान्तमाह—**

---

तत्त्वमस्यादिवाक्यमखण्डार्थम्। परस्परनिरूपितकार्यकारणभावानधि-करणद्रव्यगोचरसमाना[धिकरणवाक्यत्वात् 'सोऽयं देवदत्तः' इति](इति) वाक्यवदित्यभिप्रेत्याह—**तत्र प्रथममिति**। साध्यं तावत् (निमित्तम्।) भिन्नप्रवृत्तिनिमित्तत्वे सति एकप्रातिपदिकार्थत्वमिति। ननु असिद्धो हेतुः, 'सर्व एत आत्मानो व्युच्चरन्ति' इति[आत्म]पदार्थस्य जीवस्य परस्मादुत्पत्तिश्रवणात् स्वरूपतः सुषुप्तौ तस्य सति ब्रह्मणि विलयश्रवणाच्च। न च ब्रह्माकार्यस्य ब्रह्मणि लयः सम्भवति। एवं सिद्धान्ते गुणाश्रयत्वस्य जातेर्वा द्रव्य[त्व]त्वाभावात् तदन्यस्य द्रव्यत्वस्य प्रतिवादिनोऽसिद्धिः। वाक्यस्य नानापदार्थसंसर्गबोधकत्व-नियमेन विरुद्धत्वाच्च। 'दण्डी देवदत्तः' इति दण्डसंसर्गाभिप्रायसमानाधिकरण-वाक्ये व्यभिचारश्च। विमतं नाखण्डार्थं वाक्यत्वात् सम्मतवदिति सत्प्रतिपक्षश्च। अविद्यानिवर्तकसप्रकारकज्ञानोद्देशेन श्रवणादिविधानानुपपत्तिबाधितं च। प्रतिकूलतर्कपराहतश्च। तथा हि—वाक्यत्वमाकाङ्क्षादिमत्पदसमूहत्वम्। आकाङ्क्षादिकं च यस्य येन पदेन विना स्वार्थान्वयाननुभावकत्वमित्यादि-रूपेण संसर्गघटितम्। तच्चैकव्यक्तिनिष्ठत्वेनोपपद्यत इति॥     भा.

मैवम्। न तावज्जीवस्योत्पत्तिरस्ति; प्रतिबिम्बस्य वस्त्वन्तरत्वनिरा-करणात्। जीवस्य च प्रतिबिम्बत्वात्। नापि परीत्योत्पत्तिः सम्भवति; निरवयवत्वात्। न च निरवयवत्वमसिद्धम्; शिरःपाण्यादेरेव तदवयवत्वे तस्य चार्वाकनिराकरणेनैव निरस्तत्वात्। तदतिरिक्तावयवारब्धत्वे चार्हत एव। स च निरस्तस्सर्वैरिति नात्र निरसनीयः। कृतनाशादिप्रसङ्गश्च। 'न जायते' इति श्रुत्या 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' इति सूत्रेण च तस्य प्रतिषिद्ध-त्वाच्च। विष्फुलिङ्गदृष्टान्तेन व्युच्चरणश्रुतिस्तु तत्स्वभावापरित्यागेन मूर्तोपा-ध्युत्पत्तौ स्पष्टं ततो विभागमात्रमाह न तु जीवस्वरूपोत्पत्तिम्। अन्यथा उक्त-

भा. श्रुत्यादिविरोधात्। सम्पत्तिवाक्यमप्यन्तःकरणविशिष्टस्यैव लयमाह 'प्राणबन्धनं हि सोम्य मनः' इत्युपसंहारात् ॥

द्रव्यत्वमपि रूपाद्यन्यत्वं विवक्षितं मतद्वयसाधारणम्। यावद्द्रव्यव्यवहारं कल्पितगुणाश्रयत्त्वादेरपि सत्त्वेन नासिद्धिः। तच्च सिद्धान्ते सहोत्पन्नरूपादिविषयसमानाधिकरणवाक्ये व्यभिचारपरिहाराय। वक्ष्यमाणरीत्या प्रयोजकत्वेन वर्णितहेतोः साध्याभावेन नियमग्राहकप्रमाणाभावात् सोऽयमित्यादौ व्यभिचाराच्च न विरुद्धम्। दण्डीति प्रयोगे च न द्रव्यवाचकयोर्दण्डपुरुषयोः सामानाधिकरण्यमिति न व्यभिचारः। अन्यथा दण्डः पुरुष इति स्यात्। इनिप्रत्ययस्तु सम्बन्धविशिष्टमात्रमाह न द्रव्यम्। दण्डि ज्ञानमित्यपि प्रयोगस्य मुख्यार्थत्वात्। द्रव्यमात्रसम्बन्धिप्रवृत्तिनिमित्तं हि द्रव्यगोचरमिति। प्रत्ययार्थसम्बन्धस्तु रूपादिसाधारणः। तत्पदार्थस्तु नानेति न दृष्टान्ते असिद्धिः ॥

ननु एवमपि 'द्रव्यं घटः' इति प्रयोगे जातिद्वयसामानाधिकरण्यनिष्ठे व्यभिचारः। तदुभयार्थस्य द्रव्यस्यैकत्वेनाकार्यकारणद्रव्यगोचरसामानाधिकरण्यवाक्यत्वस्य सत्त्वात्। न च यथा मृत् घट इति बुद्धिर्घटस्य मृत्का* मान्यथासिद्धेति। न च घटस्य मृदभेदः एवं द्रव्यं घट इति धीरपीति घटो द्रव्यत्वाश्रय इति पदार्थयोः परस्परनिरूपितकार्यकारणभावराहित्याभावात् न व्यभिचार इति वाच्यम्। तत्कारणत्वस्येव तस्यापि द्रव्यत्वस्य* तदाश्रयत्वादिति चेत्; सत्यम्; घटो द्रव्यं तदुपादानमपि द्रव्यमेवेति न पदार्थयोः कार्यकारण[भाव]राहित्यम्। न च वाक्यार्थप्रतीतिविषयपदार्थयोः न कार्यत्वादिमतिरिति वाच्यम्। तस्याहेतुत्वेनाविवक्षितत्वात्। नित्यपरमाणोरप्रमाणत्वेन न तद्गोचरवाक्ये व्यभिचारः ॥

यत्तु वाक्यत्वेनाखण्डार्थत्वाभावसाधनम्, तन्न — अखण्डार्थत्वस्य सिद्ध्यसिद्ध्योर्निषेधायोगात्। न च संसर्गागोचरप्रमाजनकत्वं निर्विकल्पजनके प्रसिद्धं वाक्ये निषिध्यत इति वाच्यम्। शब्दातिरिक्तस्य विशिष्टज्ञानाजनकत्वासम्भवात्। विशेषणविशेष्यसन्निकर्षादिलक्षणविशिष्टज्ञानसामग्र्याः

---

* अत्र सर्वत्र ग्रन्थे त्रुटिः ॥

सर्वत्र सुलभत्वात्। विशेषणज्ञानं च न विशिष्टज्ञानजनकं प्रमाणाभावादित्युक्तम्। न च तत्त्वमसिवाक्यं स्वपदोपस्थापितार्थसंसर्गबोधकं वाक्यत्वात् सम्मतवदिति वाच्यम्। 'विषं भुङ्क्ष्व' इत्यादिवाक्ये व्यभिचारात्। अत्र पदोपस्थापितविषादीनामन्वयस्य अशाब्दत्वात्। न च लक्ष्यार्थोऽपि परम्परया पदोपस्थाप्य इति वाच्यम्; वाक्यार्थस्य सर्वपदलक्ष्यत्वमते तत्र अनैकान्त्यात्। संसर्गप्रतीत्यजनकत्वे बाधकाभावेनाप्रयोजकत्वाच्च। न चैवं प्र(कृत्या)[वृत्त्या]दिकं न सिध्यतीति वाच्यम्। तत्त्वमसिवाक्यस्याविद्यानिवृत्तिमात्रप्रयोजनकत्वेन प्रवृत्त्यप्रयोजनत्वात्। चिन्मात्रगोचराविद्यानिवृत्तौ च तत्समानविषयतया तन्निवर्तकस्य चिन्मात्रगोचरस्यैव वक्तव्यत्वात्॥

भा-

ननु पदार्थातिरिक्तवाक्यार्थाभावे वाक्यवैयर्थ्यम्। न च लक्षणां विना पदान्न शुद्धपदार्थोपस्थितिः लक्षणा च न पदान्तरसमभिव्याहाराद्दते सिध्यतीति वाच्यम्। अद्वैततात्पर्यबलात् एकपदमात्रादपि लक्षणासम्भवात्। किं चैवं लक्षणासिद्ध्यर्थं वाक्यप्रयोगः न अनधिगतार्थसिद्धये इति लोके अर्थप्रतीत्यर्थमेव वाक्यं प्रयुज्यत इति चेत्; 'अहं ब्रह्म न वा' 'अब्रह्मैवे'ति संशयादिप्रयोजकाज्ञानं हि वाक्यजन्यज्ञानेन निवर्तनीयम्। तन्निवृत्तिश्च निवर्त्यमानाज्ञानगोचरसत्ता(पदार्थ)[वधारण]रूपज्ञानाद्भवति, न तु तत्समानविषयज्ञानमात्रात्। विचारात् प्रागपि ब्रह्मण्यनभ्यासदशापन्नजलज्ञानादौ च तत्सत्त्वेन विचाराद्यनारम्भप्रसङ्गात्। जलाजलगोचरप्रामाण्य संशय*तत्सत्तावधारणरूपत्वं च पदद्वयसामानाधिकरण्यं विना न भवति। अभेदगोचरतर्काणामभेदवाक्यशेषत्वेन तेन वाक्यप्रत्याख्यानायोगात्। अतोऽभेदगोचराज्ञाननिवर्तकं च ज्ञानमनतिरिक्तविषयमपि* वाक्यं व्यर्थम्। पदयोरपि अपर्यायत्वं तु वाच्यभेदादेव सिद्धमिति परप्रयुक्तहेतवोऽप्रयोजकाः। तात्पर्यलाघवं सिद्धान्तहेतोरनुग्राहकस्तर्क इति सोऽधिकबलः॥

ननु अविद्यायाः सप्रकारकज्ञाननिवर्त्यत्वनियमा*सम्भवतीति चेत्, न—ज्ञानस्य समानविषयत्वेनैवाविद्यानिवर्तकत्वात्। न तु समानप्रकारकत्वेनापि, गौरवात्। समानप्रकारकादप्यन्यगोचरादन्याज्ञानानिवृत्तेः। न च

---

* अत्र सर्वत्र ग्रन्थे त्रुटिः॥

भा. गौरवं प्रामाणिकं अन्यथा इदमिति ज्ञानात् घटो न वेति संशया[देर्निवृत्ति-प्रसङ्ग इति] वाच्यम्। तन्मतेऽपि प्रमेयवानिति ज्ञानात्तन्निवृत्तिप्रसङ्गात्। न च तस्य सामान्यधर्मप्रकारकत्वान्न संशयादिनिवृत्तिप्रयोजकतेति वाच्यम्। तथापि घटत्वादिप्रकारकताया अनपायात्। न च सामान्यधर्माप्रकारक-ज्ञान*मादिनिवर्तकमिति वाच्यम्। सामान्यधर्माप्रकारकसमानविषयज्ञान-स्यैव लाघवेन निवर्तकत्वात्। किं च सामान्यधर्माप्रकारकधर्मादिज्ञाने सत्यपि जातिसंशयदर्शनान्नेदं प्रयोजकम्, किं तु सत्तावधारणरूपमेव ॥

यत्तु एक* मात्रमवधारणरूपमेव। जलादिज्ञानेऽपि प्रामाण्यसन्देहा-देव सन्देह इति; तन्न—समीपस्थजलादिज्ञानवत् तस्यापि सत्तावधारण-रूपत्वे प्रामाण्यसंशयायोगात्। अन्यथा अत्रापि स्यात्। जलत्वप्रकारकमिदं ज्ञानं जलत्ववति वा जलत्ववैशिष्ट्यविषयमिति संशयात्मनः प्रामाण्यसंशयस्य पूर्व-ज्ञानस्य जलत्ववैशिष्ट्यांशे निश्चयरूपत्वासम्भवाच्च। संशयनिवृत्त्यनुकूलस्वरूप-विशेषस्य निश्चयत्वस्य सन्दिह्यमानगोचरज्ञाने सत्त्वे प्रमाणाभावा*ज्ज्ञानादनति-रिक्तविषयस्यापि ज्ञानस्य तर्कानुसन्धानबलान्निश्चयत्वापत्तेश्च। किं च, इदमिति ज्ञानात् द्रव्यं न वेति संशयो भिन्नविषयत्वादेव न निवर्तते। संशयगोचरद्रव्य-त्वस्य तदगोचरत्वात् व्यक्त्यंशज्ञानस्यासंशयत्वात् ॥

यत्तु ज्ञाने सत्ता[वधारणत्वं]नानुगतं किञ्चिदस्ति, समानप्रकारत्वं त्वनुगतमिति तदेव संशयनिवृत्तौ प्रयोजकमिति, तन्न—प्रकारत्वस्यापि तत्तत्स्वरूपव्यतिरेकेणैकस्य अनुगतस्याभावात्। जलादिज्ञाने अनुगतस्यापि तस्य अप्रयोजकत्वदर्शनाच्च। स[मानप्रकारक]ज्ञानमेव संशयनिवर्तकं न तु सत्तानिश्चयरूपं समानविषयमिति मते पुरुषे दण्डोऽस्ति न वेति संशयस्य दण्डी पुरुष इति ज्ञानादनिवृत्तिप्रसङ्गाच्च। किं च, विशिष्टविषयाज्ञानं सप्रकारक-ज्ञाननिवर्त्यं केवलविषय [न्तु तन्मात्रगोचरज्ञान] निवर्त्यम्, न तु तद्गोचरवै-शिष्ट्यज्ञानात्। मूलाज्ञानं चैतन्यमात्रगोचरमित्युपपादितमिति न तन्निवृत्तौ विशिष्टज्ञानापेक्षा। तस्मात् तात्पर्यलाघवमबाधितमिति सिद्धान्ते हेतुरधिकबलः। एतेन अविद्यानिवर्तकज्ञानफलश्रवणविधानानुपपत्त्या बाध इत्यपि निरस्तम्। उक्तरीत्या न्यायोपपत्तेरन्यथोपपत्तेश्च ॥

---

* अत्र सर्वत्र ग्रन्थे त्रुटिः ॥

किं च, 'एकधैवानुद्रष्टव्यम्' इति श्रुतिर्ज्ञानस्यैकाकारत्वं दर्शयति। न च सप्रकारकज्ञानपक्षे इदमुपपद्यते। ब्रह्म[णो निर्धर्मकत्वात्।] निर्विशेषज्ञानपक्षेऽप्यनुपपन्नं धात्वर्थप्रत्ययार्थप्रकारस्य असम्भवादिति चेत्; व्यावर्तको हि विशेषः प्रकारः, स चात्र सच्चिदानन्दब्रह्मस्वरूपमेवेति एकब्रह्मस्वरूपाकारज्ञानमेकाकारमिति न तावदनुपपत्तिः। यत्तु आकाङ्क्षादेरन्वयभावाभावानुविधायित्वादन्वयाप्रतिपादने आकाङ्क्षाद्यसिद्धेर्वाक्यत्वमेव न सिध्यतीति; तत्तुच्छम्—यस्य पदस्य येन पदे[न वि]ना अन्वया(र्था)ननुभावकत्वं तात्पर्यविषयार्थाननुभावकत्वं वा तत्तस्य आकाङ्क्षा, वाक्यार्थाबाधो योग्यता इत्यादिक्रमेण तन्निरूपणस्य अन्यत्रापि सम्भवात्। जीवब्रह्मपदार्थयोः संसर्गासम्भवाच्च। तादात्म्यादेरसम्भवस्योक्तत्वात्। न च अभेद एव संसर्ग इति वाच्यम्। तादात्म्यातिरिक्तस्याभेदस्य विशिष्टप्रत्ययानियामकत्वेनासम्बन्धत्वात्। अन्यथा घटे रूपे च 'घटी रूपी' इत्यादिप्रत्ययप्रसङ्गात्। न च घटस्य स्वरूपमिति तेनापि विशिष्टप्रत्ययो दृश्यत इति वाच्यम्। तत्र घटस्य घट इतिवत् प्रतीत्ययोगेन षष्ठीप्रयोगस्यौपचारिकत्वात्, घटस्य विशिष्टप्रत्ययविषयसम्बन्धिमात्रस्वभावत्वात्, सर्वस्यापि ज्ञानस्य स्वविषयाभेदविषयतया तस्यैव तद्विशेषणत्वापत्त्या तज्ज्ञानं विना अनुपपत्तिप्रसङ्गाच्च॥ भा.

एवं तत्त्वमस्यादिवाक्यमखण्डार्थं परस्परमाधाराधेयत्वरहितपदार्थसमानाधिकरणवाक्यत्वात् 'सोऽय'मिति वाक्यवत्। 'द्रव्यं घट' इति वाक्ये व्यभिचारवारणाय परस्परेति। तत्र ह्यभिधानापर्यवसानलभ्या (वृत्ति)[व्यक्ति]रपि जातिवाचकपदार्थ एवेति द्रव्यपदार्थव्यक्तौ द्रव्यत्वस्य च सत्त्वात् न हेतुः। तत्त्वमस्यादिवाक्यप्रतिपाद्यसंसर्गाद्यसम्भवाच्च न अप्रयोजकत्वम्। यत्तु अर्वाचीनैस्तत्पदार्थमात्रे लक्षणामाश्रित्य 'तत्[अन्यत्र]कुतो न' इत्यादि वर्ण्यते; तदप्रामाणिकपक्षानुवादेनाप्यप्रामाणिकमित्युपेक्ष्यते। शुद्धेऽद्वितीये ब्रह्मणि वाक्यतात्पर्यमुपदर्शयद्भिराचार्यैर्निरस्तत्वाच्च। यत्तु अतत्त्वमसीति छेदात् सामानाधिकरण्यवाक्यत्वमसिद्धमित्यर्वाचीनवचः; तत् 'सदेव सोम्येदम्' इति (प्रति)[उप]-

323 - 2 सोऽयमित्यादिवाक्यस्थपदानामिवेति। तत्र 'सोऽयं देवदत्तः' इति पदत्रयस्य एकस्मिन् देवदत्ते पर्यवसानं दृश्यते। तथा हि–प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति—'सोऽयं देवदत्तः' इति। तत्र न तद्देशकालयोः एतद्देशकालयोश्च परस्परैक्यं प्रत्यभिजानाति; भेदप्रत्ययात्। अत एव विशिष्टयोरप्यैक्यं न प्रत्यभिज्ञायते। किं तु 'सोऽयम्' इति विशिष्टद्वयोपलक्षितः प्रत्यभिज्ञागोचरः। प्रत्यभिज्ञातं चार्थं परस्मै 'सोऽयम्' इति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशपरित्यागेन एकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयति। ननु 'सोऽयम्' इति पदार्थयोः यदैक्यं तदेव वाक्येनापि प्रतिपाद्यते चेदनुवादप्रसङ्गः। न च देवदत्तस्य

---

ता. सोऽयमिति वाक्यस्यैकस्मिन्नर्थे पर्यवसानं दर्शयितुं मूलप्रमाणस्य प्रत्यभिज्ञानस्यार्थं परिशोधयति—**तथा हीति**। विशिष्टयोरैक्याभावं दर्शयितुं तद्विशेषणयोरैक्याभावमाह—**तत्र न तदिति**। एवं प्रमाणार्थं परिशोध्य वाक्यस्य तस्मिन्नर्थे पर्यवसानं दर्शयति–**प्रत्यभिज्ञातं चेति**। प्रतिबन्दिन्यायेन

---

भा. क्रमेण ऐतदात्म्यमिति पूर्ववाक्येन 'अहं ब्रह्मास्मि'. 'तत्त्वमेव त्वमेव तत्' इति प्रसिद्धवाक्यान्तरेण विरुद्धत्वात् स्वेच्छामात्रप्रभवमिति यत्किञ्चिदिति ॥

दृष्टान्तस्य साधनवैकल्यं परिहरति—**तत्र सोऽयमिति**। **स्वार्थैकदेशपरित्यागेनेति**। [न] तावत्तदेतत्पदवाच्ययोरभेदः सम्भव(ती)ति; विरुद्धविशेषणद्वयविशिष्टयोरभेदायोगात्। न च एकपदलक्षणया तदितरपदवाच्यविशिष्टाभेदो वाक्यार्थोऽस्त्विति वाच्यम्; यावदन्यतरोपलक्ष्यस्वरूपं विशिष्टस्यावस्थानप्रसङ्गात्। न हि यावत्तत्पदलक्ष्यस्वरूपं इदंपदलक्ष्यस्वरूपं वा तावदेतत्का[लादिविशिष्टः तत्कालादि]विशिष्टो वा वर्तते। तस्मात् पदद्वयमपि भागत्यागेनांशे लक्षणया देवदत्तस्वरूपमादाय [ऐक्यं] प्रतिपादयतीति तद्वाक्यमखण्डार्थम् ॥

ननु इदं वाक्यं तत्तेदन्तयोरेकवृत्तित्वं बोधयति। सामानाधिकरण्यवाक्यत्वात्। भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। काल-

ऐक्यद्वयमस्ति येन वाक्यप्रमेयमपरमैक्यं स्यात् । प्रत्यभिज्ञायां तर्हि कथम् । न हि अभिज्ञयोरवगतदेवदत्तैक्यव्यतिरिक्तं प्रत्यभिज्ञागम्यमपरैक्यमस्ति । एकस्य कालद्वयसम्बन्धः प्रत्यभिज्ञागोचर इति चेत्, कालद्वयसम्बन्धिपदार्थोऽभिज्ञयोरेव सिद्धः, परिशेषात् तदैक्यं प्रत्यभिज्ञाविषयः, तत्र च अनुवादो दर्शितः ॥

स्यादेतत्—क्षणिकत्वपरिहाराय प्रत्यभिज्ञाप्रामाण्यं तावत् वक्तव्यम् । तत्र कालद्वयपरामर्शेन तत्सम्बन्धिपदार्थैक्ये प्रत्यभिज्ञाविषयेऽपि

---

परिहरति—प्रत्यभिज्ञायां तर्हीति । निरुद्धः पूर्ववादी सिद्धान्तिमतमेव शङ्कते —स्यादेतदिति ॥ ता.

---

द्वयवैशिष्ट्यं च एकत्र अविरुद्धमिति नाखण्डार्थम् । किं च, तत्तादिरतीतोऽपि विशेषणमेव । यदन्विततया ज्ञात एव तात्पर्यविषयीभूतेत(दा)[रा]न्वयधीस्तद्विशेषणमित्येवंरूपस्य विशेषणत्वस्य सम्भवात् । न च विधेयान्वयविशेषण* इत्यादौ घटत्वादावव्याप्तिः । नापि विधेयान्वयकाले विद्यमानमेव विशेषणम् ; 'दण्डी भविष्यति' 'दण्डीह नास्ती'त्यादावव्याप्तेः । नापि विधेयान्वयप्रतियोगितावच्छेदकं विशेषणम् । अवच्छेदकत्वस्यान्यूनानधिकदेशकालत्वरूपत्वे 'दण्डः शुक्लः' इत्यादावव्याप्तेः । यद्वत्तया ज्ञात एव यदन्वयधीस्तत्त्वं चेदवच्छेदकत्वं तदिहाप्यस्ति । न हि तत्ताव(च्छेदे)[त्त्वे]न अज्ञाते इदन्त्वधीरिति ॥ भा.

उच्यते—सोऽयमिति पदद्वयं तत्तेदन्ते एकवृत्ती इति बोधयति ? उत सोऽयमित्येव प्रतीत्याकारः वाक्यतात्पर्यं त्वेकवृत्तित्वे ? इति । नाद्यः, तयोरुपसर्जनतयोपस्थितत्वात् । एकत्वरूपाभेदस्य वाक्यादन्येनानुपस्थितेश्च । वाक्यादेव तत्सिद्धौ वाक्यमखण्डार्थमेव । न च तत्तेदन्ते(तिपदवदतिवृत्ति)-[देवदत्तवृत्ती] इति प्रतिपादनात् भ्रमनिवृत्तिर्भवति । सोऽयमिति वाक्ये देवदत्तवृत्ती[इति]पदाभावाच्च । द्वितीये, यदि तात्पर्यकल्पनम्, तर्हि लाघवेन विशेषणीभूताभेदमात्रे तदस्तु । किं च एतदेव न्याय्यम् । अभेदसंशयादिनिवृत्त्यर्थमेवास्य प्रयोगात्, तदभावे तत्तेदन्तयोरेकवृत्तित्वालाभाच्च, उपसर्जनीयतया सिध्यति

---

* अत्र ग्रन्थे त्रुटिः ॥

पदार्थभेदप्रतिभासविरोधितैव प्रमाणफलं नाज्ञातार्थाधिगतिः। अतः कालद्वयपरामर्शेन तत्सम्बन्धिपदार्थैक्यमेव अवलम्बमाना पदार्थभेदप्रतिभासविरोधितया प्रामाण्यमश्नुते प्रत्यभिज्ञा। एवं तर्हि 'सोऽयम्' इति वाक्यस्यापि एवमेव प्रामाण्यं भविष्यति। तथा तत्त्वमसिवाक्यस्यापि त्वंपदेन एकदेशपरित्यागेन लक्ष्यमाणद्रष्टृस्वरूपस्य पारोक्ष्यपरित्यागेन तत्पदाभिधेयब्रह्मस्वरूपैक्ये वाक्यजन्यज्ञानगोचरेऽपि जीवब्रह्मपदार्थप्रतीतिसमये प्रतिपन्नैक्यविषयतया अनुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यमुपपद्यत इति ॥

ननु पदार्थयोः प्रत्येकमसाधारणमैक्यं पदार्थप्रत्ययगोचरः पदार्थयोरितरेतरैक्यं वाक्यगम्यमित्यस्त्येव प्रमेयभेदः। नैतत्

ता. तुल्यमेतदस्मन्मतेऽपीति परिहरति सिद्धान्ती—**एवं तर्हीति**। दार्ष्टान्तिकमाह—**तथेति** ॥

भा. वाक्यतात्पर्यायोगाच्च। तत्तेदन्तावैशिष्ट्यतात्पर्याभावेऽपि तदुपलक्षिताभेदप्रतीतिसम्भवाच्च। स चाभेदो न[विशिष्टयोः] विशिष्टयोरन्वये विशेषणयोरपि प्रतियोगित्वेन तदवच्छेदकत्वेन वा अन्वयो वाच्यः। न च तत्र प्रतियोगित्वं सम्भवति; तयोरभेदायोगात्। अवच्छेदकत्वं च विशेषणस्य काकादिव्यावृत्तमवच्छेद्यान्यूनकालीनत्वमेव। 'यद्वत्तया ज्ञाते' इत्यस्य काकेऽपि सत्त्वेन तस्यापि विशेषणत्वापत्तेः। न हि काकवत्तया ज्ञानं विना 'काकवद्देवदत्तगृहम्' इति धीः सम्भवति। न तावत् संशयादिनिवृत्तिः। शुक्ला गौ(री)रिति प्रयोगस्तूपलक्षणत्वे। इदन्तावदवच्छेदकत्वं न तत्तादेः सम्भवतीति पदद्वयलक्षणया वाक्यमखण्डार्थमिति ॥

**एवं तर्हि सोऽयमिति वाक्यस्येति**। तत्र हि पदार्थानधिकविषयमपि वाक्यं विशिष्टाभेदानुपपत्त्या भागत्यागलक्षणायां व्युत्पन्नस्य भेदरूपसंशयादिनिवृत्तियोग्यनिर्णयरूपं जनयति, न तु पदमात्रम्। तत्र कालद्वयपरामर्शाभावेन तस्य भेदसंशयादिनिवृत्तियोग्यनिर्णयजनकत्वासम्भवादिति वाक्यमज्ञातज्ञापकं प्रमाणमिति भावः। उक्तन्यायं महावाक्येऽप्याह—**तथा तत्त्वमसिवाक्यस्यापीति** ॥

सारम् । भिन्नद्रव्ययोः ऐक्यप्रतिपादने तथा स्यात् । यदेकमेव द्रव्यं भिन्नोपाधिपरिकल्पितभेदप्रतिभासव्युदासेन प्रतिपाद्यते तदा निवर्त्यविशेषादेव प्रामाण्यं न प्रमेयविशेषात् । तदुक्तम्—सिद्धं तु निवर्तकत्वादिति । इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरण्यं 'सोऽयम्' इतिवदेकस्य द्रव्यस्य उपाधिपरिकल्पितभेदव्युदासेन एकद्रव्यपर्यवसायी इत्यवगम्यते । ननु तत्त्वंपदाभ्यां लक्ष्यमाणपदार्थयोरपि भेदो विद्यते ? न वा ?। विद्यते चेत् , ऐक्यप्रमितिर्न स्यात् । न चेद्भेदः, वाक्यार्थ एव पदार्थः स्यात् । सत्यम् । वाक्यार्थ एव पदार्थः । स च लक्षणया प्रतिपाद्यते ; मुख्याभिधेयैक्यायोगात् । तस्मात् तत्त्वंपदाभ्यामेकमेव ब्रह्म उपाधिपरामर्शेन प्रतिपाद्यत इति सिद्धम् ॥

अत्र केचिदाहुः—लक्ष्यमाणयोरपि जीवब्रह्मणोः भेदाभेदविषयं सामानाधिकरण्यम् । अन्यथा पदार्थवाक्यार्थयोः साङ्कर्यात् । अस्ति च जीवब्रह्मणोः भेदोऽपि । 'य आत्मनि तिष्ठन्' इत्यादिलिङ्गात् । नैतद्युक्तम्—भेदाभेदविषयेण वाक्यजन्यज्ञानेन तदभ्यासजन्यापरोक्षज्ञानेन वा स भेदो निवर्त्यते वा ? न वा ? (इति) । निवर्त्यते चेत् , कथं विज्ञानस्य स्वविषयनिरासिता । तृतीयज्ञानेन अभेदमात्रविषयेण भेदो निवर्त्यत इति चेत् , न—यथाप्रमाणमभ्यासजन्यस्यापि ज्ञानस्य भेदाभेदविषयत्वात् । अन्यथा प्रमाणे अन्यथा अभ्यासजन्यज्ञाने च भेदाभेदप्रमाणवै(क)[फ]ल्यात् । ज्ञाननिवर्त्यत्वेन भेदस्यापि अविद्यावत् मिथ्यात्वमपि स्यात् ।

---

**निवर्त्यविशेषात्** । भेदभ्रमस्य निवर्त्यस्य निरासादिति यावत् । सोऽयमिति वाक्ये भवतु तथा, इह तु तथाभावः कस्मात् ? इत्यत आह—**इह त्विति** । ननु पदार्थस्यैव वाक्यार्थतायामेकेनैव पदेन तत्सिद्धेः कृतं पदान्तरेण; इत्यत आह—**स च लक्षणयेति** ॥ ता.

भवतु उभयसिद्धत्वादभेदः, भेदे तु किं प्रमाणम् ? इत्यत आह—**अस्ति चेति** । शाब्दविज्ञानध्यानापेक्षया साक्षात्कारः **तृतीयं विज्ञानमभेदमात्रविषयम्**, तेनेति यावत् । भेदस्य ज्ञाननिवर्त्यत्वमङ्गीकृत्यापि दूषयति—**ज्ञाननिवर्त्यत्वेनेति** ॥

ज्ञानेन अज्ञानं निवर्त्यते भेदस्तु कर्मभिः विनश्यतीति चेत्, न–'ब्रह्म वेद ब्रह्मैव भवति' इति ज्ञानप्रयुक्तत्वात् एवकारा[कारका]भिधेयभेदनिरासस्य। येनैव चाकारेण जीवस्य भेदः तेनैव चेदभेदोऽपि, भेदनिवृत्तावभेदोऽपि निवर्तेत। आकारान्तरेण चेदभेदः, तदा निरवयवद्रव्यस्य एकदेशो न कर्मणा निवर्तयितुं शक्यत इति भिन्नाभिन्न एव मुक्तावपि जीवः स्यात्। न च भेदाभेदौ शास्त्रेण प्रतिपादनीयौ ; लोकसिद्धसामान्यतोदर्शनेनैव सिद्धेः। यदि च भेदाकारविशिष्टो जीवः, तन्नाशेन नश्येत्। अथ भेदविनिर्मुक्तो जीवः, ब्रह्मस्वरूपमेव जीवः इत्येकद्रव्यनिष्ठं सामानाधिकरण्यं स्यात्। अथ विशिष्टो जीवो विशेषणनाशेऽपि स्वरूपावस्थानात् मुच्यत इति, तर्हि यो मुक्तिमनुभवति स एव पूर्वमपि जीवः संसारीत्येकमेव वस्तु सामानाधिकरण्यालम्बनमित्युक्तं स्यात्। तस्मात् अभिधेयपरामर्शेन एकस्मिन् वस्तुनि लक्षणया वृत्तिः सामानाधिकरण्यमिति। योऽपि लक्ष्यमाणजीवब्रह्मणोः अतिरेकनिमित्तं पदार्थपौनरुक्त्यं कल्पयति तस्यातिरेको भेदवन्निराकर्तव्यः। 'एकधैवानुद्रष्टव्यं नेह नाना' इति श्रुतेः। तस्मात् एकस्य द्रव्यस्य उपाधिजनितभेदावभासपरामर्शेन एकद्रव्यपर्यवसायि सामानाधिकरण्यं इत्येकरसं ब्रह्मेति सिद्धम्॥

---

ता. **कारकाभिधेयेति।** 'ब्रह्म वेद' इति द्वितीयाविभक्तिलट्प्रत्ययाभ्यामभिधेयः कर्मत्वकर्तृत्वरूपो यः भेदस्तन्निरासस्य ज्ञानमात्राधीनत्वावगमादित्यर्थः। दुर्निरूपत्वाच्च न भेदाभेदपक्षोऽपि युक्त इत्याह—**येनैव चेति।** **सामान्यतोदर्शनेनेति।** सत्त्वादिरूपेण अभेदः, घटादिरूपेण च भेद इति लोकसिद्धदृष्टान्तेनैव जीवब्रह्मणोरपि भेदाभेदयोः सिद्धत्वान्न शास्त्रप्रतिपाद्यत्वमित्यर्थः। दूषयति—**तन्ना(श)[शेन] इति।** तथा च मोक्षाभावप्रसङ्ग इत्यर्थः। **एकमेव वस्त्विति।** अन्यथा बन्धमोक्षयोः वैयधिकरण्यापत्तेरित्यर्थः। **अमृतानन्दीयमतं** निराकरोति—**योऽपीति।** **भेदवदिति।**

**इदानीं सत्यज्ञानादिवाक्यस्य उदाहरणमाह**—प्रकृष्टप्रकाशशब्दयो- 323 - 2
रिवेति । **तयोः एकार्थनिष्ठतामेव दर्शयति**—तथा च व्यक्तिविशेष इति । 323 - 3
**अयमर्थः—प्रकाशशब्दः सामान्याभिधानमुखेन लक्षणया व्यक्तिविशेषे वर्तते, प्रकृष्टशब्दश्च लक्षणया प्रकर्षगुणाभिधानमुखेन प्रकाशविशेषे वर्तते, तत्र गुणसामान्ययोः चन्द्रपदाभिधेयत्वाभावात् जहल्लक्षणया तदुभयं व्युदस्य तत्समवायिप्रकाशविशेष एव चन्द्रपदाभिधेयतया समर्प्यते, इति प्रकृष्टप्रकाशचन्द्रशब्दानामेकार्थवृत्तिता सिद्धा। ननु गुणगुण्यन्वयः**

---

सत्यज्ञानादिवाक्यमखण्डार्थं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदित्यभिप्रेत्याह—[**इदानीं सत्यज्ञानादि**]**वाक्यस्येति** ॥ भा.

न[नु] लक्षणवाक्यत्वं यद्यसाधारणधर्मवाक्यत्वं तदा सिद्धान्ते असिद्धिः, विरुद्धश्च । यदि व्यावर्तकविषयवाक्यत्वम्, तदा नीलोत्पलमित्यत्र व्यभिचारः । दृष्टान्तश्च साध्यविकलः । तथा हि—प्रकृष्टप्रकाश इति वाक्यस्याखण्डार्थत्वं न तावन्मुख्यवृत्त्या, असम्भवात् । नापि लक्षणया, 'गङ्गायां घोष' इत्यादाविवानुपपत्त्यभावात् । नापि 'यष्टीः प्रवेशय' इत्यादाविव तात्पर्यानुपपत्त्या चन्द्रस्वरूपमात्रस्य पृष्टत्वादिति वाच्यम् । प्रश्नस्य चन्द्रमात्रगोचरत्वासिद्धेः । अस्ति कश्चिच्चन्द्रपदार्थ इत्यज्ञाने धर्मिज्ञानसाध्यबुभुत्सायाः संशयस्य च अनुपपत्तेः । चन्द्र इत्यनूद्य 'स कः' इति प्रश्नायोगाच्च । असङ्कीर्णचन्द्रस्वरूपं न ज्ञातमिति चेत्, न—चन्द्रस्वरूपद्वयाभावात् । चन्द्रस्वरूपमसङ्कीर्णत्वेन न ज्ञातमिति चेत् तर्हि तस्य असङ्कीर्णत्वं व्यावृत्तत्वं व्यावर्तकधर्मो वा[ति] न ज्ञातव्य इति वैशिष्ट्यमेव प्रश्नविषय इति प्रश्नानुसारेण [न] वाक्यमखण्डार्थम् । एवं प्रतिवचनस्य प्रकृष्टत्वादिविशिष्टतात्पर्याभावे यः कश्चिच्चन्द्र इत्येव बोधनात् तात्पर्यविषयस्य च प्रतीतस्य अव्यावर्तकत्वाद्यस्य कस्यचिच्चन्द्रत्वं स्यात् । तात्पर्यविषयीभूते चन्द्रे लक्ष्यलक्षणरूपोद्देश्यविधेयभावाभावेन यत्किञ्चिदित्येव वाक्येन बोधः स्यादिति न ततश्चन्द्रबुभुत्सानिवृत्तिः स्यात्। प्रकृष्टादिपदवैयर्थ्यं च स्यात् । अतः चन्द्रे अचन्द्रव्यावृत्तिवैशिष्ट्यं बुभुत्सितम् ।

324-2 **क्रियाकारकान्वयो वा किं न स्यात्? इति; तत्राह**—**एवं च सति नीलोत्पलवदिति।** ‘**एकमेवाद्वितीयम्**’ ‘**एकधैवानुद्रष्टव्यम्**’ ‘**नेह नानास्ति किञ्चन**’ ‘**उदरमन्तरं कुरुते। अथ तस्य भयं भवति**’ **इत्यादिप्रतिषेधादि-**
324-4 325-2 **त्यर्थः**। तथाविधान्युदाहरति **इत्यारभ्य** यत्पुनः इत्यतः **प्राक्तनो ग्रन्थः स्पष्टार्थः**॥

---

भा. तच्च असाधारणधर्ममनभिधाय न साक्षाच्छब्देन प्रतिपादयितुं शक्यमित्यनया वचोभङ्ग्या व्यावृत्तिवैशिष्ट्यमेव प्रतिपाद्यते, व्यावर्तकवैशिष्ट्यमात्रं वा, चन्द्रपदवाच्यत्ववैशिष्ट्यं वेति न अखण्डार्थमिति न दृष्टान्तसिद्धिरिति॥

उच्यते—न तावत् दृष्टान्तासिद्धिः; चन्द्रमात्रबुभुत्सया प्रयुक्तवाक्यस्य तावन्मात्रतात्पर्यतया लक्षणया चन्द्रपदार्थमात्रार्थत्वात्। अन्यथा प्रश्नोत्तरयोः वैयधिकरण्यं स्यात्। तथा हि—अस्ति तावदेतेषु कश्चन्द्रः? इति प्रश्नः। स च चन्द्रमात्रविषयः, न तु व्यावृत्तिव्यावर्तकवाच्यत्वान्यतमविषयः, प्रश्नवाक्ये व्यावृत्त्यादिपदाभावात्। अत उत्तरमपि तावन्मात्रगोचरः प्रश्नसमानविषयत्वाय। उत्तरवाक्येऽपि व्यावृत्त्यादिपदाभावात्। यत्तु प्रातिपदिकार्थस्य ज्ञातत्वान्न तद्गोचरः प्रश्न इति, तन्न—चन्द्रत्वविशिष्टस्य प्रातिपदिकार्थ-(स्यात्) [र्थस्याज्ञातत्वात्]। किञ्च, चन्द्रत्ववैशिष्ट्यं व्यक्तिविशेषे प्रागेव निर्णीतम्?। उत न?। अन्त्ये स एव तर्हि प्रातिपदिकार्थोऽज्ञातो वाक्येन प्रतिपाद्यते॥

न(तु)[नु] प्रत्यक्षविषये चन्द्रे व्यक्तौ चन्द्रत्वजातिवैशिष्ट्यमपि प्रत्यक्षत एव निर्णीतमिति चेत्, तन्न—चन्द्रव्यावर्तकचन्द्रत्वस्य व्यक्तिविशेषे निर्णये सति व्यावर्तकवैशिष्ट्ये व्यावृत्तौ वा (न) ज्ञानमिति न तदन्यतरनिष्ठं वाक्यम्। प्रकृष्टप्रकाशसामानाधिकरण्येन चन्द्रव्यावृत्तिर्न ज्ञाता इति चेत्, न—प्रत्यक्षतोऽनुभूयमानप्रकृष्टप्रकाशाश्रयव्यक्तौ चन्द्रत्ववैशिष्ट्यस्य निश्चये तत्प्रयुक्ता चन्द्रव्यावृत्तिरपि निश्चितैवेत्यज्ञातांशाभावात्। तत्र तस्यानिश्चये वा तन्निष्ठमेव वाक्यमिति न व्यावृत्त्यादिकं वाक्यार्थः। न च प्रकृष्टप्रकाशाश्रये प्रागितरव्यावृत्तिर्ज्ञातापि सा नाचन्द्रव्यावृत्तित्वेन ज्ञायते। प्रतियोगि-

भा

ष्वचन्द्रत्वस्य प्रागज्ञानादिति वाच्यम्। प्रकृष्टप्रकाशाश्रयश्चन्द्र इति वाक्येनापि चन्द्रप्रातिपदिकार्थप्रतिपादनं विना तेषु तज्ज्ञापनादचन्द्रव्यावृत्तिज्ञानासम्भवात्॥

किं च, व्यावर्तकस्वरूपज्ञानं विना व्यावृत्तिज्ञानासम्भवात् सति च तस्मिन् स्वत एव तत्सम्भवात् शब्देन व्यावर्तकमेव प्रतिपाद्यत इति वक्तव्यम्। अन्यथा चन्द्रपदेऽपोहलक्षणाप्रसङ्गात्। प्रकृष्टप्रकाश[पदे] बहुव्रीह्यर्थलक्षणायाः त्वत्पक्षेऽपि सत्त्वात्। व्यावर्तकवैशिष्ट्यं च प्रकृष्टप्रकाशवैशिष्ट्यं न वाक्यं प्रतिपादयति। तस्य व्यक्तिविशेषे प्रत्यक्षसिद्धत्वेन अजिज्ञासितत्वात्। तस्य चन्द्रत्वसामानाधिकरण्यं न जानातीति चेत्, तदाश्रये चन्द्रत्वनिश्चये तदयोगात्। एतेन—प्रकृष्टप्रकाशे चन्द्रासाधारणधर्मत्वं प्रागज्ञातं वाक्यं प्रतिपादयतीति प्रत्युक्तम्। प्राक् तदधिकरणे चन्द्रत्वाज्ञानं विना तदयोगात्। तस्मात् न व्यावर्तकस्य व्यावृत्तेर्वा वैशिष्ट्यं वाक्यार्थः। नापि वाच्यत्ववैशिष्ट्यम्। चन्द्रपदं कस्यचिद्वाचकं पदत्वात्। तच्च चन्द्रत्वम्। तस्यैव ततो नियमेन प्रतीतेः। सा च जातिः, असति बाधके जातित्वापरित्यागादिति प्रागेव चन्द्रपदवाच्यतत्स्वरूपयोर्ज्ञातत्वात्। चन्द्रपदवाच्यजातेराश्रयो न ज्ञात इति चेत, तर्हि तदेवायातम् 'चन्द्रत्वविशिष्टो न ज्ञायते' इति॥

ननु प्रकृष्टप्रकाशे यो जातिविशेषो नक्षत्रादिव्यावृत्तो दृश्यते स तत्र निर्णीत एव चन्द्रत्वमिति किं तत्राज्ञातम्? इति। परं तु तस्मिंश्चन्द्रपदवाच्यत्वं विशेषादर्शनात् सन्दिह्यते। स एव वाक्यार्थ इति चेत्, न—तस्यामेव जातौ तदाश्रये वा चन्द्रत्वसंज्ञिता जातिस्तद्विशिष्टो वा चन्द्रपदवाच्य इत्याप्तोपदेशादिना निश्चितत्वात्। न हि चन्द्रभेदोऽस्ति। न चायं चन्द्रपदवाच्य इत्यज्ञानाद्वाच्यत्वसन्देह इति वाच्यम्। प्रकृष्टप्रकाशत्वसामानाधिकरण्येन तदज्ञानेऽपि चन्द्रत्वविशिष्टे निश्चितत्वेन ग्राह्यनिश्चयदशायां संशयासम्भवात्। अन्यथा अनुत्पन्नगवादिविशेषे प्राक् तत्पदवाच्यत्वं न ज्ञातमिति प्रतिव्यक्ति सन्देह एव स्यात्। न च व्यक्तिविशेषवाच्यत्वज्ञानं प्राक् परोक्षमेवेति न* विरोधीति वाच्यम्। प्रकृष्टप्रकाश इत्युपदेशादपि ज्ञातस्य परोक्षत्वात्॥

---

* अत्र ग्रन्थे त्रुटिः॥

भा. यत्तु—चन्द्रत्वविशिष्टः चन्द्रपदवाच्यो न वेति न सन्देहः ; किं तु प्रकाशश्चन्द्रपदवाच्यो न वेति । तस्मिंश्चन्द्रपदवाच्यत्ववैशिष्ट्यं प्राक् न ज्ञातमिति ; तन्न—तस्यैव चन्द्र* । न च तद्वृत्तिधर्मे चन्द्रत्वसंज्ञां न जानातीति । प्रागुत्पन्नतत्संज्ञाबुद्धेरपि प्रकृष्टप्रकाशवृत्तिधर्मविषयत्वात् द्रव्य[विषय]-त्वाभावात् । किं च, चन्द्रो न वेति संशयः किं वाच्यत्वप्रकारक एव ? उत तदन्यजातिप्रकारकः ? नाद्यः, गवादिपदवच्चन्द्रपदस्य चन्द्राचन्द्रत्वं वाच्यं इत्यनेकार्थसंशयदशायामपि तत्पदवाच्य इति तस्मिन् वाच्यत्वनिर्णयानन्तरमपि भवतस्तस्य तदनुपपत्तेः ॥

द्वितीये प्रकृष्टप्रकाशे सोऽस्ति ? न वा ? । अन्त्ये अनेकार्थत्वनिश्चय-दशायां प्रकृष्टप्रकाशे चन्द्रपदवाच्यत्वं जानतोऽप्ययं चन्द्रस्सन् तत्पदवाच्यः, अतोऽ(न्यथे)[न्यो वे]ति संशयाभावप्रसङ्गात् । प्रथमे चन्द्रत्वाज्ञानं वक्तव्यमिति तदेव असङ्कीर्णचन्द्रस्वरूपाज्ञानमुच्यते । न च चन्द्रस्सन् तत्पदाभिहितोऽन्यथा वेति सन्देहः प्रकृष्टप्रकाशवृत्तिधर्मे चन्द्रत्वसंज्ञे पर्यवसन्नः इति वाच्यम् । प्रकृष्टप्रकाशे चन्द्र इति वाच्यत्वनिश्चयदशायां तन्मात्र(प्र)वृत्तिधर्मे चन्द्रपद-वाच्यत्वस्यापि निश्चितत्वेन तदयोगात् । चन्द्रपदवाच्या जातिरिहास्तीति वाक्याच्चन्द्रत्वसंज्ञानुसन्धानाभावेऽपि निवर्तमानस्य तद्गोचरत्वायोगात् ॥

किं च, एवं सर्वोऽपि संशयो वाच्यत्वविषयसंशय एवेति असाधारण-धर्मान्तराकारः कोऽपि न स्यात् । देवदत्तादिसाङ्केतिकशब्दार्थे तु देवदत्त-त्वादिरूपोऽर्थो नास्तीति शब्दसम्बन्धविषय एव संशयादिः । न हि घटादि-व्यक्तिविशेषे कदाचित् साङ्केतिकस्य देवदत्तादिशब्दस्य अभिधेयं किञ्चिदस्ति, यदज्ञानात् संशयो भवेत् । सत्त्वे वा तदपि चन्द्रत्वादितुल्यमिति नास्माकम-निष्टम् । चन्द्रसंशयस्तु न वाच्यत्वविषयः इत्येताव(न्मता)[न्मात्रा]भिधानम् । तस्मात् सामान्यतो व्यक्तिविशेषे वाच्यत्वनिश्चयानन्तरमप्ययं चन्द्रो न वेति संशयदर्शनात् 'जानाम्यहं चन्द्रं चन्द्रपदवाच्य इति, तमेव न जानामी'त्यनु-भवाच्च अनुभूयमानेऽपि चन्द्रे चन्द्राज्ञानमस्तीति वाच्यम्, उपदेशान्तर-भाविप्रत्यक्षमेव तन्निवर्तकमिति ज्ञातेऽप्यज्ञानमुपपद्यत इति तत्स्वरूपमेव

* अत्र ग्रन्थे त्रुटिः ॥

वाक्यार्थः। प्रातिपदिकार्थस्य अज्ञातत्वे तत्रैव जिज्ञासासम्भवेन प्रश्नोत्तर-वाक्ययोरपि तावन्मात्रे पर्यवसानसम्भवात् ॥ भा·

न चैवं प्रकृष्टप्रकाशवैशिष्ट्यस्या [न]भिप्रेतत्वे यः कश्चिच्चन्द्र इत्ये-वोक्तमिति चन्द्रस्वरूपानिर्णयः स्यादिति वाच्यम्। प्रकृष्टप्रकाशपदे हि लक्षणया चन्द्रस्वरूपं बोधयतः, न तु शक्त्या। अनेकार्थत्वे प्रमाणाभावात्। लक्षणा च मुख्यार्थसम्बन्धिन्येवेति तात्पर्यम् (?)। सर्वत्राविद्यावृतस्वरूपविशेषो-पस्थितिरिति भवति तत्स्वरूपनिर्णयः। अत एव नान्यतरपदवैयर्थ्यम्। नन्वेवमपि विशिष्टमेव वाक्यार्थः स्यात् न अखण्डमिति चेत्, न—एकप्राति-पदिकार्थत्वं ह्यखण्डार्थत्वं वाक्यस्य, तद्विशिष्टस्य प्रातिपदिकार्थत्वेऽपि न हीयते। न च एवं* चेति वाच्यम्; पक्षीभूतानन्तादिपदसामर्थ्यात् सिद्धेः ॥

अथ वा, ज्ञायमानायामपि जातौ तद्वैशिष्ट्ये च यथाऽज्ञानम्, तद्व्यक्तावपि तत् न विरुद्धम्; व्यक्तिस्वरूपाज्ञानाभावे जातौ तदसम्भवात्। व्यक्ति-स्वरूपविशेषश्च यज्ज्ञाने सति जातिर्ज्ञायत एव स एवेति चेत्, अनुभूतदण्ड-संसर्गस्य 'दण्डाश्रयमनुभवामि न तु दण्ड'मितिवत् येन पूर्वं घटत्वाद्याश्रयतया व्यक्तिरनुभूता तस्य 'घटत्वाश्रयमनुभवामी'त्यनुभवात्। 'इदन्त्वेन अनुभूयमानेषु घटत्वाश्रयं नानुभवामी'त्यनुभवाच्च। यावद्धर्मोपाधिकव्यक्तिभेदस्य सत्त्वात्। किं च, व्यवहारयोग्यतयोर्भेदेन इदमिति व्यवहारयोग्ये घटादौ नीरूपे योग्यताया अभावस्य तद्विपरीतयोग्यतायाश्च सम्भवात् कस्यैवावरणानावरणे ? ॥

किं च, घटत्वादिसामान्यस्य यथा अयमसाधारणधर्मवान् सामा-न्यवानिति वा अनुभवेऽप्यज्ञानम्, अन्यथा तत्र संशयाद्ययोगात्, एवं व्यक्तावपि किं न स्यात्। न च तत्र स्वरूपाज्ञानात् [न] संशयः किं तु तत्प्रकारकाज्ञानादिति वाच्यम्। तस्यापि घटत्वादिप्रकारत्वात्। न च तत्र धर्मत्वादिकं प्रकार इति वाच्यम्; तथापि घटत्वादिप्रकारताया विशेष-स्वभावताया अनपायात्। असाधारणधर्मवानयं घटो घटाद्यसाधारणधर्म-वानयमिति ज्ञानात् तस्याविशेषात्। वस्तुतस्त्वेवमेव युक्तम्।* बुद्धिमात्रविशेष-सर्वभावत्वात् व्यक्तेरेव व्यावृत्तरूपताया विशेषस्वभावतया संशयादिदशायां

* अत्र ग्रन्थे त्रुटिः ॥

325 - 2-4 यत्पुनः सिद्धे वस्तुनि इति उक्तार्थमनुवदति। परिहरति—तत्रूपाद्यभावादिति ॥

अयमाशयः-किं प्रमाणान्तरयोग्यत्वे सति तदनुत्पत्तौ विषयस्य अभावे निश्चिते तत्र शब्दस्य मिथ्यात्वमाशङ्क्यते? किं वा प्रमाणान्तरसम्भिन्नार्थविषयत्वात् पौरुषेयवचोवत् सापेक्षं प्रामाण्यं इति? किं वा प्रमाणान्तरयोग्यार्थविषयत्वात् तत्सिद्धार्थानुवादाशङ्का? इति ॥

तत्र न तावत् प्रथमः कल्पः। प्रमाणेन हि प्रमीयमाणस्य अर्थस्य प्रमाणान्तरानुत्पादो मिथ्यात्वं नावहति। सर्वप्रमाणानामनधिगतार्थगन्तृत्वात्। अन्यथा चक्षुषा गृह्यमाणस्य रूपस्य द्रव्यस्य वा स्पर्शनेन अग्रहणात् मिथ्यात्वशङ्का स्यात्। कथंचित् सापेक्षप्रमाणस्य पुरुषवचसः प्रमाणान्तराभावे मिथ्यात्वाशङ्का स्यात्। न तु अपौरुषेयस्य वेदवचसः; अनपेक्षत्वात् ॥

---

भा. तदज्ञानादेव सामान्यज्ञानमिति व्यक्तिरेवाज्ञाता ज्ञास्यत इति सैव लक्षणया वाक्यार्थ इति लोकेऽपि वाक्येष्वेकव्यक्तिनिष्ठ[त्व]मेवेति न साध्यवैकल्यम् ॥

लक्षणवाक्यत्वमपि साधारणधर्माप्रतिपादकभावार्थवाक्यत्वं पदार्थस्वरूपजिज्ञासानिवर्तकवाक्यत्वं वा, समभिव्याहृतपदार्थव्यावर्तकवाक्यत्वं नेह विवक्षितमिति न व्यभिचारो नापि विरुद्धः। न चाप्यसिद्धिः। सत्यादिपदार्थे जडवृत्तिताया निरस्तत्वात्। प्रकर्षविशिष्टप्रकाशस्य चन्द्रावृत्तित्वान्न दृष्टान्ते साधनवैकल्यम्। अयमचन्द्रव्यावृत्त इति व्यावृत्तिवैशिष्ट्यप्रतिपादके वाक्ये व्यभिचारवारणाय भावार्थेति। न च कश्चन्द्रासाधारणो धर्मः? इति जिज्ञासायां प्रयुक्ते प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये व्यभिचार इति वाच्यम्। पिकः कोकिल इत्यर्थभेदेऽपि भेदभ्रमनिवृत्तये सहप्रयोगवत् अर्थैक्येऽपि प्रकृते सहप्रयोगसम्भवेन यथाश्रुतवृत्त्या त*धारणमेव धर्मवैशिष्ट्यं बाधकत्वाल्लक्षणा वक्तव्या। तथा च स एव असाधारणधर्म इति न व्यभिचारः। न चैवं सखण्डवनादिवाक्ये व्यभिचारः; तत्र च पदार्थात्मकसंसर्गे सत्यपि अखण्डार्थताया अनपायात्। हेतुर्वा विशेषणीय इति सिद्धमखण्डार्थत्व[म्] (निरूपणीयम्) ॥

---

* अत्र ग्रन्थे त्रुटिः ॥

नापि द्वितीयः कल्पः; प्रमाणान्तरसम्भिन्नार्थताऽभावात्। भूतार्थविषयत्वेन नदीतीरफलसत्तावाक्यवत् प्रमाणान्तरसम्भिन्नार्थता इति चेत्, न—पौरुषेयवचनप्रयुक्तत्वात् सम्भेदस्य। भूतार्थत्वप्रयुक्तत्वे प्रत्यक्षादीनामपि सम्भेदः स्यात्। ननु भूतार्थस्मृतौ सम्भेदो दृश्यत इति चेत्, तर्हि स्वार्थप्रवृत्तज्ञानान्तरजन्यता सम्भेदहेतुः। कार्यभूतार्थनिष्ठयोः लौकिकवचसोः तथादर्शनात्। पुरुषो हि प्रमाणान्तरेण अर्थमुपलभ्य तन्निमित्तं परस्मै शब्दं विरचयति; न तु वेदवचसः प्रमाणान्तरजन्यता इत्यनपेक्षता। किं च, तुच्छव्यावृत्तमात्रं प्रमाणान्तरयोग्यमिति विधिवाक्यानामपि संभिन्नार्थतया सापेक्षता स्यात्। लौकिकविधीनां प्रमाणान्तरयोग्यतादर्शनात्। अयोग्यत्वे वा तत्र सम्बन्धाग्रहणात् वेदेऽपि अर्थप्रतिपत्तिर्न स्यात्। ननु कार्यस्य साध्यस्वभावत्वात् न प्रमाणान्तरगम्यता इति। ब्रह्मापि तर्हि रूपादिहीनत्वात् न प्रमाणान्तरेण गम्यते। स्वरूपज्ञानमेव प्रमाणान्तरमस्ति, अतः तत्सम्भिन्नतया सापेक्षतेति चेत्, न—शब्दजन्यज्ञानविषयस्थचैतन्यतया प्रमाणफलरूपत्वात्। चैतन्य-

---

अतिरेकविशिष्टो जीवः? किं वा केवलः? इत्यादिविकल्पैर्निराकर्तव्य इत्यर्थः॥ ता.

न भूतार्थत्वं सापेक्षत्वप्रयोजकम्, तदभावेऽपि कार्यविषयपुरुषवचसां सापेक्षत्वदर्शनादित्याह—**पुरुषो हीति**। कार्यस्य प्रमाणान्त(र)[रा]गोचरत्वान्न तद्वचनानां सापेक्षत्वम्, न च सम्बन्धाग्रहणम्, प्रवर्तकाकारमात्रे लोकवेदसाधारणे सम्बन्धग्रहणसम्भवादिति शङ्कते—**नन्विति**। स्वरूपज्ञानशब्देन किं शब्दजन्यवृत्तिविषयेणावच्छिन्नचैतन्यमुच्यते? किं वा वृत्त्यवच्छिन्नमेव? इति विकल्प्य, आद्ये दोषमाह—**न—शब्देति**। तद्विषयो ब्रह्म, तत्र स्थितत्वं चैतन्यस्य(उपचार्य) [उपचरितम्], घटादिष्विव स्वरूपातिरिक्तचैतन्यस्याभावात्। विषयेणावच्छिन्नस्य चैतन्यस्य फलस्वरूपत्वेन प्रमाणत्वाभावात् प्रमेयत्वाभावाच्च न तत्संभिन्नार्थता शब्दस्येत्यर्थः। द्वितीये दोषमाह—**चैतन्यज्ञानेति**। चैतन्यविषयं ज्ञानं [तत्संभिन्ने ब्रह्मणि] शब्दस्यानपेक्ष-

ज्ञानसम्भिन्ने वा ब्रह्मणि शब्दस्य अनपेक्षप्रामाण्यसिद्धिः ; पुरुषान्तर-तत्संवेदनविषयं पुरुषान्तरानुमानं स्वयंप्रकाशविषयमपि सम्भिन्नार्थतया न सापेक्षमिति । तस्मादनपेक्षमपौरुषेयं वचः ॥

नापि तृतीयः कल्पः ; स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात् । शब्दविषयोऽयं नियम इति चेत्, विधिवाक्यस्यापि स्यात् । तस्यापि लौकिकस्य मानान्तरयोग्यत्वात् । शब्दावगतस्य वा प्रमाणान्तरमनुवादः किं न स्यात् । तस्मात् भूतार्थनिष्ठमपि वैदिकं वचोऽनपेक्षं प्रमाणमिति ॥

325-5 तत्र चोदयति—ननु इन्द्रियागोचरत्वादिति । अत्र पृच्छामः—किं प्रमाणान्तरगृहीते अर्थे सम्बन्धग्रहणमात्रमुच्यते ? किं वा प्रमाणा-
325-6 न्तरमपि शब्दार्थः ? इति । पूर्वस्त्वङ्गीकृत इत्याह—यद्यपि शब्दमात्रस्येति ।
325-7 नापि द्वितीयः कल्प इत्याह—व्युत्पत्ता तु कथमिति । ननु प्रमाणान्तर-

---

ता. प्रामाण्यसिद्धिरित्येकदेशिमतेन ग्रन्थयोजना । अतत्संभिन्ने वा ब्रह्मणीति ग्रन्थपाठमङ्गीकृत्य केचिदित्थं व्याचक्षते—ब्रह्माकारबुद्धौ प्रतिबिम्बितचैतन्यं स्वरूप[ज्ञान]मुच्यते ? आहोस्विदज्ञानावच्छिन्नमिति विकल्प्य, आद्ये दोषमाह—न शब्द[जन्य]ज्ञानेति । द्वितीये दोषमाह—अतत्सम्भिन्ने इति । अतत्सम्भिन्ने । शब्दजनितज्ञानेनासम्भिन्न इति यावत् ॥

परिहारान्तरमाह—पुरुषान्तरेति । पुरुषान्तरं स्वयंप्रकाशमपि पुरुषान्त(रम)[रा]नुमानवेद्यमिति साङ्ख्यमतम्, पुरुषान्तरसंवेदनं स्वयंप्रकाशं पुरुषान्तरानुमानवेद्यमिति प्राभाकरमतमिति विभागः । प्रमाणान्तरयोग्यविषयत्वात्तत्सिद्धार्थानुवादशङ्केति तृतीयं पक्षं दूषयति—नापि तृतीय इति । तस्यापीति । वैदिककार्यस्य न प्रमाणान्तरगम्यत्वमिति च नाशङ्कनीयम्, वैदिकभूतार्थस्यापि प्रमाणान्तरागम्यत्वसाम्यादिति भावः । प्रतिबन्दिन्यायेन परिहारान्तरमाह—शब्दावगतस्येति । न च तत्र प्रमाणान्तरस्यैव पूर्ववृत्ततया नानुवादत्वमिति वाच्यम् ; प्रथमतः शब्दावगते पश्चात्प्रवर्तमानप्रत्यक्षादेरपि अनुवादत्वप्रसङ्गादिति भावः ॥

गृहीतेऽर्थे प्रयोगप्रत्ययदर्शनात् तत्सम्भिन्नार्थज्ञाने शब्दसामर्थ्यं गृह्यत इति ; नेत्याह—श्रोतृव्यवहारो हि मूलमिति ॥ 325 - 8

अयमर्थः—शब्दादर्थं प्रतिपद्यमानः श्रोता किं स्वकीयप्रमाणसम्भिन्नं प्रतिपद्यते ? किं वा व्युत्पत्तुः प्रमाणसम्भिन्नम् ? आहोस्वित् वक्तुः प्रमाणसम्भिन्नम् ? इति। न तावत् पूर्वौ पक्षौ। शब्दादर्थप्रतिपत्तेः प्राक् उभयोरपि तस्मिन् अर्थे प्रमाणानुत्पादात्। प्रमाणान्तरेण उपलभ्य तत्र शब्दप्रयोगात् वक्तुः प्रमाणसम्भिन्नेऽर्थे श्रोतुः शाब्दप्रमितिरिति व्युत्पत्तापि तत्रैव शब्दसामर्थ्यं श्रोतुः प्रवृत्त्या प्रतिपद्यत इति चेत् ; तत्राह—स च श्रोतुर्ज्ञानान्तरानिमित्ततापरिशुद्ध इति। अयमर्थः— 325 - 8
व्युत्पत्ता तु प्रत्यक्षादिव्यवहारे प्रवर्तितव्यार्थमात्रज्ञानात् प्रवर्तमानमात्मानं पश्यति, न प्रमाणान्तरसम्भिन्नार्थज्ञानात्। ततश्च स्वेनैव दृष्टान्तेन श्रोतुः प्रवृत्तिलिङ्गादर्थमात्रज्ञानमनुमिमीते, न वक्तुः प्रमाणस्य विषयविशेषणतया अवगम्यत्वेन प्रवृत्तिहेतुतां कल्पयति। दृष्टान्ताभावात्। अतः प्रमाणान्तरस्य विषयविशेषणत्वेन अनवगम्यमानतया प्रवृत्तिं प्रत्यनिमित्ततया परिशुद्धः श्रोतुः व्यवहारः केवलार्थज्ञानजन्य इत्यर्थः ॥

ततः शब्दस्य अर्थमात्रज्ञाने सामर्थ्यप्रतिपत्तेः न प्रमाणान्तरसम्भिन्नः शब्दार्थ इत्याह—अतो न प्रतिपत्तुर्ज्ञानान्तरसिद्धार्थावबोधकत्वमिति। 325 - 10
ननु मा भूत् श्रोतुः प्रमाणान्तरसम्भिन्नोऽर्थः प्रतिपन्नः, तथापि व्युत्पत्ता सम्भिन्नेऽर्थे शब्दसामर्थ्यं प्रतिपद्यत इति ; नेत्याह—तेनानवगम्यैव 325 - 11
तद्विषयमिति। प्रवृत्तिहेतुज्ञानविषयतया स्वात्मानुमानेन अनवगतस्य मानान्तरस्य न शब्दसामर्थ्यविषयता प्रतिपत्तुं शक्यत इत्यर्थः। ननु अर्थमात्रे सम्बन्धग्रहणेऽपि व्युत्पत्त्युत्तरकालं सम्भिन्नोऽर्थो बोध्यत इति ;

---

उभयोः। श्रोतृव्युत्पत्त्रोरिति यावत्। तृतीयं कल्पमुत्थापयति— ता.
प्रमाणान्तरेणेति। अन्वयकथनेन टीकार्थमुपसंहरति—अत इति ॥

सिद्धवाक्ये सम्बन्धग्रहणनिमित्तभूतप्रवृत्तेरभावात् अस्य शब्दस्यायमर्थः

325 - 12 नेत्याह—यथावगमं चेति। ननु कार्यविषयात् वाक्यात् असम्भिन्नेऽर्थे
युक्तः सम्बन्धग्रहः, कार्यपदव्यतिरिक्तस्य तु शब्दमात्रस्य सम्भिन्नेऽर्थे
सम्बन्धग्रह इति। न—तेषामपि कार्यवाक्येऽर्थमात्रसम्बन्धग्रहणात् ॥

अत्र केचिदाहुः—अर्थासंस्पर्शी शब्द इति। तथा हि—'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इत्यादौ न कश्चिदर्थः प्रमीयते, यत्र च प्रमीयते तत्रापि मानान्तरनिबन्धना प्रमितिः न शब्दनिबन्धनेति ॥

अत्र केचित् परिहारमाचक्षते—पुरुषवचसां तु नार्थसंसर्गः प्रमेयः, किं तु 'एवमयं वेद' इति वक्तृज्ञानमेव प्रमीयते। प्रमीयमाणवक्तृज्ञानसामर्थ्याच्च अर्थो निश्चीयते। सर्वत्र च अङ्गुल्यग्रादिवाक्येषु भ्रान्तिमुत्प्रेक्षां प्रमाणं वा वक्तृज्ञानं शब्दः प्रमेयं न व्यभिचरति। तस्मात् अर्थासंस्पर्शी शब्द इति ॥

तदयुक्तम्—वक्तृज्ञानस्य अनुमानगम्यत्वात् शब्दप्रमेयत्वाभावात्
326 - 1 इत्याह—यदा पुनर्व्युत्पन्नः (सन्नि)[स इ]ति। अयमर्थः—गृहीतसम्बन्धोऽपि
सन् प्रमाणान्तरेण अर्थमुपलभ्य विवक्षित्वा परस्मै शब्दं प्रयुञ्जानमा-
त्मानं पश्यति। तेन दृष्टान्तेन पूर्वमपि मध्यमवृद्धेभ्यः प्रयोक्तारः प्रयुञ्जा-
नाः प्रमाणान्तरेण उपलभ्यं विवक्षित्वा प्रयुञ्जत इत्यनुमिमीते। ननु
एवमपि शब्दसामर्थ्यविषयतयैव प्रमाणान्तरमनुमिमीत इति; नेत्याह
326 - 3 केवलमिति। शब्दप्रयोगनिमित्ततामेव विवक्षामानान्तरयोः स्वात्मनि

---

ता. इत्युपदेशादिना सम्बन्धग्रहो वाच्यः, ततश्च प्रमाणान्तरसम्भिन्न एवार्थे सङ्गतिरिति शङ्कते—**ननु कार्येति**। न—**तेषामिति**। कार्यवाक्येऽपि योग्येतरान्विता-(र्थैरपादाना)[र्थैः पदानां] सङ्गतिग्रहणात् कार्यविशेषणस्याप्रयोजकत्वादित्यर्थः। नन्वाप्तवाक्येऽर्थः प्रमीयत इत्यत आह—**यत्र चेति** ॥

**प्राभाकरमत**मुत्थापयति—**अत्र केचिदिति**। **तुशब्देन** वेदवाक्यानि व्यावर्तयति। तत्र वक्तुरभावेन वक्तृज्ञानपरत्वाभावात्। कथं तर्हि पौरुषेयेष्वर्थसिद्धिरिति; तत्राह—**प्रमीयमाणेति**। निर्विषयज्ञानस्यासम्भवात् वक्तृज्ञानविशेषणतया अर्थोऽपि सिध्यतीति भावः। नन्वर्थव्यभिचारवदङ्गुल्यग्रादिवाक्येषु ज्ञानव्यभिचारोऽपि सम इत्यत आह—**सर्वत्र चेति** ॥

पश्यन् अन्यत्रापि तथैव अनुमिमीत इत्यर्थः। प्रकरणार्थमनूद्य उपसंहरति—तस्मात् न शब्दस्य इत्यारभ्य अपि च इत्यतः प्राक्तनेन ग्रन्थेन॥ 326 - 4.8

किं च, यदि लौकिकवचांसि वक्तृज्ञानमेव गमयन्ति तदा संसृष्टार्थप्रतिपादनसामर्थ्याप्रतिपत्तेः वेदे शब्दादर्थाधिगमो न स्यात्। किं च, न तावद्वक्तृज्ञानमात्रं शब्दार्थः; अर्थे व्यवहारानुदयप्रसङ्गात्। नापि अर्थव्यावृत्तं ज्ञानम्; अर्थस्यैव शब्दप्रमेयत्वप्रसङ्गात् ज्ञानस्य अनुमेयतया अन्यथासिद्धेः। ज्ञानाभिधायिशब्दाभावाच्च न तस्य वाक्यार्थता; पदार्थस्यैव वाक्यार्थत्वात्। ननु पदेभ्यः पदार्थाः प्रतीयन्ते, संसर्गश्च उत्प्रेक्षया अवगम्यते, तेन च व्यावृत्तं वक्तृज्ञानं शब्दार्थ इति। तदिदं श्रोतुः संसर्गज्ञानं वक्तृज्ञानविशेषणार्थविशिष्टतया प्रथमोत्पन्नं स्मृतिसंशयविपर्यासायोगात् प्रमाणज्ञानमेव परिशिष्यते। शब्दानां च पदार्थज्ञानोपक्षयात् वक्तृज्ञानाधीनैव संसर्ग-

---

किं वक्तृज्ञानं शब्दार्थः ? किं वा अर्थविशेषितम् ? इति विकल्प्य, आद्ये ता. दोषमाह—**किं च न तावदिति**। द्वितीये दोषमाह—**नापीति**। वक्ष्यमाणन्यायेन वक्तृज्ञानविशेषणीभूतस्यार्थस्य मानान्तरेण प्रतिपत्त्ययोगात् प्रतिपत्तौ वा शब्दस्य वैयर्थ्याच्छब्देनैव संसर्गप्रतिपत्तिरङ्गीकरणीया, तथा च संसर्गस्यैव शब्दप्रमेयतेत्याह—**अर्थस्यैवेति**। नन्वर्थस्यैवेति कथम्? ज्ञानस्यापि तत्र प्रतीतेरित्याशङ्क्य, शब्दकार्यलिङ्गेन कारणतया ज्ञानप्रतीतिर्धूमेनाग्निप्रतिपत्तिवत् अनुमानसामर्थ्यादेव न शब्दसामर्थ्यादिति परिहरति—**ज्ञानस्येति**। मा भूत् ज्ञानाभिधायिपदम्, तथापि ज्ञानस्य वाक्यार्थता किं न स्यात्? इत्यत आह—**पदार्थस्येति**। 'विषं भुङ्क्ष्व' इत्यादिवाक्येभ्योऽन्यत्र पदार्थस्यैव वाक्यार्थत्वादिति भावः॥

यद्यपि संसृष्टार्थे शब्दस्य सङ्गतिग्रहः, तथाप्यनाप्तवाक्येषु बहुशो व्यभिचारदर्शनेन तच्छङ्काकुण्ठितशक्तित्वान्न प्रथमतोऽर्थः प्रतीयते, किं तु वक्तृज्ञानद्वारेणैवेति शङ्कते—**नन्विति**। परिहरति—**तदिदमिति**। **प्रमाणज्ञानमेवेति**। प्रमाणान्तराधीनत्वे शब्दस्य वैयर्थ्यापातात् शब्देनैव तज्जायत इति स्वीकरणीयमित्यर्थः। दूषणान्तरमाह—**शब्दानां चेति**॥

प्रमितिः इति वेदे संसर्गः शब्दार्थो न स्यात्। तस्मात् शाब्दी संसर्गप्रमितिः वक्तृज्ञानं तु अनुमेयमिति सिद्धम् ॥

कस्तर्हि शब्दानामर्थासंस्पर्शस्य परिहारः ? इति ॥

उच्यते—प्रत्यक्षेऽपि तुल्यमेतच्चोद्यम्। शुक्तिरजतादिज्ञानानामर्थव्यभिचारात्। अदुष्टकारणजन्यज्ञानानामर्थसंस्पर्श इति चेत्, शब्देऽपि योग्येतरसंसृष्टाभिधायिन्यर्थनियमो विद्यते, अङ्गुल्यग्रादीनां संसर्गायोग्यत्वात् इति ॥

किं च, अपौरुषेयस्य शब्दस्य अनपेक्षप्रमाणत्वात् मानान्तर-
326 - 8 संवादविसंवादाभ्यां न किंचित् परिहीयत इत्याह—अपि च अपौरुषेये
326 - 10 इति। ननूक्तमिति स्पष्टार्थः ॥

327 - 1 न तत्साधूक्तम् इति परिहारग्रन्थस्य अयमर्थः—निरपेक्षज्ञानयोरपि परस्परविरुद्धयोरन्यतरस्य कारणदोषसम्भावनया बाधो निरूप्यते। तत्र अद्वितीयप्रत्यगात्मप्रतिपत्तेरात्मनि द्वैतप्रत्यक्षस्य च विरोधे द्वैतावभासस्य देहात्मप्रत्ययवत् दुष्टकारणजन्यत्वं कल्प्यते। शब्दस्य स्वयं दोषरहितत्वात् द्वैतावभासहेतूनां चक्षुरादीनां सम्भावितदोषत्वात् 'इन्द्रो मायाभिः' 'मायां तु प्रकृतिम्' 'अविद्यायामन्तरे' इत्यादिदोषजन्यत्वश्रवणाच्च। स्वप्नवत् दोषजन्यत्वेऽपि व्यवहाराविसंवादात् प्रामाण्यलाभात्। शब्दे तु पुनर्दोषकल्पनायां व्यवहारातीतविषयत्वाद्दोषवत्तया च तत्त्वात् प्रच्युतेरुभयविधमपि प्रामाण्यं न स्यात्। न च द्वैतावभासस्य दोषजन्यत्वात् शुक्तिरजतज्ञानवत् व्यवहारविसंवादः कल्पयितुं शक्यः ; प्रत्यक्षविरोधात् आगमेन च द्वैतस्य तत्त्वांशबाधात्

---

ता. दोषजन्यत्वे कथं प्रामाण्यम्? इत्यत आह—**स्वप्नवदिति**। शब्देऽपि तथा किं न स्यात्? इत्यत आह—**शब्दे [तु] पुनरिति**। **व्यवहारातीतविषयत्वात्** न व्यवहाराविसंवादलक्षणं प्रामाण्यम्, नापि तत्त्वावेदनलक्षणम्, **दोषवत्तया** तत्त्वपरित्यागादित्यर्थः। तर्हि दोषजन्यत्वात् शुक्तिरजतादिज्ञानवत् प्रत्यक्षादेर्व्यवहाराविसंवादलक्षणमपि प्रामाण्यं न स्यादित्यत आह—**न चेति**। प्रत्यक्षादीनामागमावबाधितविषयत्वात् व्यवहाराविसंवादलक्षणमपि प्रामाण्यं न भवेदित्यत आह—**आगमेन चेति**। आगमवाक्यानामपि प्रपञ्चान्तःपाति-

व्यवहारबाधाभावात् अद्वितीयात्मप्रतिपत्तेश्च शब्दादीनामर्थक्रियासा-
मर्थ्यलभ्यत्वात् । तस्मादद्वितीयात्मप्रमितिरपरोक्षप्रत्ययरूपा च देहात्म-
प्रत्ययमिव द्वैतावभासं बाधते । अन्यथा देहात्मभावस्यापि अबाधप्रसङ्गा-
दिति । ननु प्रमेयगतदोषादेव चित्रनिम्नोन्नतादिज्ञानवत् ब्रह्मज्ञानमपि
मिथ्येति ; नेत्याह—प्रमेयस्य पुनः ज्ञानहेतुत्वे इत्यादिना । अत 327-3-6
इत्युपसंहरति ॥

अपि च, भूतार्थनिष्ठत्वात् प्रमाणान्तरविरोध उच्यते ? संवादो
वा अपेक्ष्यते ? इति । विरोधे अन्यतरस्य बाधो दर्शितः । संवादोऽपेक्षित
इति चेत्, न—इत्याह—न च संवादलक्षणमिति । अज्ञातार्थावगम एव 327-7
प्रमाणलक्षणमित्यर्थः । ततः किमायातम् ? इति ; तदाह—अतो यथैव 328-1
विधिवाक्यानामिति । ननु सूत्रवचनविरोध इति चोदयति—ननु विधिवाक्या- 328-3
नामेवेति । न—इतरेतराश्रयत्वादिति परिहारः । ननु सूत्रकारप्रामाण्या- 328-4
देव आम्नायस्य क्रियार्थत्वं सिद्धमिति ; नेत्याह—न ह्येकमप्यन्यत इति । 328-6
कस्तर्ह्याम्नायार्थः ? इति ; तदाह—अतो यदवगमयतीति । ननु प्रमेय- 328-7
विशेषादेव प्रामाण्यम्, नावबोधात् । न—कार्यस्यापि अवबोध-
निबन्धनत्वात् इत्याह—तस्माद्यथा कार्यमिति । न तर्हि ब्रह्मणि शब्देभ्यः 328-7
प्रतीतिरिति ; नेत्याह—प्रतीतिस्त्विति । ननु प्रवर्तनालक्षणं प्रामाण्यं न 328-9
बोधलक्षणमिति ; नेत्याह—प्रत्यक्षादिष्वपीति । ननु भिन्नमेव प्रमाणलक्षणं 328-10
प्रत्यक्षादिषु वस्तुमात्रावबोधप्रामाण्यलक्षणम्, प्रवृत्तिनिवृत्ती तु

---

तथा मिथ्यात्वान्न स्वार्थप्रमितिजनकत्वमित्याशङ्क्य, अर्थक्रियासामर्थ्यलक्षणसत्त्वस्य ता०
विद्यमानत्वात् भवत्येव प्रमितिजनकत्वमिति परिहरति—अद्वितीयेति ॥

प्रमेयस्य साध्यत्वनिबन्धनं प्रामाण्यं वेदवाक्यानामिति चोदयति—ननु प्रमेयविशेषादिति । कार्यस्य । कार्यपदस्येति यावत् । प्रवर्तनालक्षणम् । प्रवृत्तिहेतुत्वलक्षणमिति यावत् । ननु तत्रापि प्रवृत्तिनिवृत्ती दृश्येते इति ; तत्राह—प्रवृत्तिनिवृत्ती इति । फलाभावेन अप्रामाण्ये उपेक्षाज्ञानानामप्रामाण्यं स्यादित्यर्थः ॥

वस्तुस्वभावानुरोधिन्यौ न प्रमाणफलम् । शब्दे तु पुनः प्रवृत्तिनिवृत्ति-
फलपर्यन्त एव प्रमाणव्यापारः, श्रोतुः पुरुषार्थमुद्दिश्य शब्दप्रयोगात् ।
329 - 1 अतः प्रवृत्तिनिवृत्तिशून्ये भूते वस्तुनि न शब्दप्रामाण्यमित्याह—युक्तं
329 - 4 इत्यादिना -उच्यत इत्यतः प्राक्तनेन ग्रन्थेन । उच्यते इत्यादिः परिहारः ॥

इदं निरूपणीयम्–पुरुषः खल्विष्टानिष्टप्राप्तिपरिहारमात्रं प्रार्थयते ?
किं वा तयोः प्रवृत्तिनिवृत्तिसाध्यतामपि ? इति । तत्र प्रवृत्तिनिवृत्तिसा-
ध्येष्टानिष्टप्राप्तिपरिहारप्रार्थनाकल्पनात् लघीयसी हिताहितप्राप्तिपरिहार-
329 - 5 प्रार्थनाकल्पनेत्याह—पुरुषो ह्येतावदपेक्षत इति । ननु सर्वः साध्यस्वभाव-
329 - 5 मेव पुरुषार्थं प्रार्थयत इति ; नेत्याह—न त्वित्थमन्यथा वेति । फलमेव
हि मुख्यं प्रार्थयते, नान्तरीयका साधनप्रार्थनेत्यर्थः । ननु साध्यासा-
329 - 6 ध्यावपि पुरुषार्थौ साध्यावेव करोतीति ; नेत्याह—न चास्य स्वयमीष्टे
इति । ननु सर्वः साध्य एव पुरुषार्थः, न तु सिद्धस्वभावः, प्रेप्सा-
329 - 6 गोचरत्वाभावादिति ; तत्राह–द्विविधं चेष्टमिति । ननु द्विविधेऽपि पुरुषार्थे
330 - 1 साध्यस्वभावता न व्यावर्तत इति ; नेतीति विभज्य दर्शयति—तत्र
प्राप्यपरिहार्ययोरिति । ननु ज्ञानमात्रसाध्यः पुरुषार्थो न लभ्यत इति ;
330 - 2 तत्राह—इतरयोस्तु भ्रान्तिमात्रव्यवहितत्वादिति । ननु हस्तगतविस्मृत-
सुवर्णस्य तत्त्वज्ञानात् प्राप्तिमारोपितसर्पादिभावस्य तत्त्वज्ञानान्निवृत्तिं
पुरुषार्थतया नानुमन्यते, क्रियासाध्यस्यैव पुरुषार्थताप्रसिद्धेरिति ;
330 - 4 नेत्याह–एवमपि लभ्यमानमिति । साधनसाध्यात् ज्ञानलभ्यस्य अतिशयेन
330 - 5 पुरुषार्थतामाह—सुतरां चाभिनन्दतीति । ननु ब्रह्मात्मैकत्वे प्रतिपाद्यमाने
330 - 7 न क्रियासाध्यः पुरुषार्थः, नापि ज्ञानलभ्य इति ; तत्राह—अनेकानर्थ-
कलुषितमिवेति ॥

किं च, शब्दस्य प्रामाण्यं प्रत्यक्षादिवत् प्रमेयमात्रावबोधनि-

---

ता. ननु कदाचित् साधनमपि प्रार्थ्यते, तत्कथं फलमेव ? इत्यत्राह–फलमेव
हीति । ननु प्रवृत्तिनिवृत्त्योरुद्देशेन वाक्यप्रयोगात् तत्पर्यन्तं वाक्यप्रामाण्यमिति ।
तर्हि वक्तव्यम्—प्रवृत्तिनिवृत्ती साक्षात्प्रयोजनम् ? किं वोद्देश्यतया ? इति

बन्धनं किं न स्यात्। न च प्रवृत्तिनिवृत्ती साक्षात् फलम्। अवगते वस्तुनि प्रयोजनाद्यनुस्मृतिनिबन्धनत्वात् प्रवृत्तिनिवृत्त्योः। न च ते पुरुषार्थतया आकाङ्क्षिते; सुखदुःखप्राप्तिपरिहारलक्षणत्वात् प्रयोजनस्य। ततश्च नित्यनैमित्तिकवाक्यानां प्रयोजनशून्यतया प्रामाण्यं न स्यात्। अकरणे प्रत्यवायपरिहारः प्रयोजनमिति चेत्, न—प्रत्यवायस्यापि तन्निबन्धनत्वात्। ततश्च नित्यविधयः अनुष्ठानाननुष्ठानयोरनर्थमेव प्रापयन्तीति न तद्वाक्यानां प्रामाण्यं युक्तम्। अतो बोधलक्षणमेव प्रामाण्यम्, न प्रवृत्तिलक्षणमिति। तस्मात् सिद्धं ब्रह्मणः 330 - 10
शास्त्रप्रमाणकत्वमित्युपसंहरति॥

॥ इति पञ्चपादिकाविवरणे अष्टमं वर्णकं समाप्तम्॥

---

ता.

विकल्प्य, आद्यं दूषयति–न च प्रवृत्तिनिवृत्ती इति। द्वितीयं दूषयति—न च ते इति। गुरुमते फलितं दोषमाह–ततश्चेति। भाट्टमतमाशङ्कते—अकरणे इति। परिहरति— न—प्रत्यवायस्यापीति। विहितत्वे सति तदकरणनिबन्धनः प्रत्यवायः, तस्मिन् सति च तत्परिहाराय विधानमित्यर्थः। फलितमाह—ततश्चेति। अनुष्ठाने बहुतरवित्तव्ययायासः, अननुष्ठाने च प्रत्यवायः, इति विहितकरणाकरणयोरनर्थ एवेत्यर्थः॥

इति पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपिकायां
अष्टमं वर्णकं समाप्तम्॥

## ॥ अथ नवमं वर्णकम् ॥

**लोके पदानां योग्येतरसंसृष्टस्वार्थप्रतिपादने सामर्थ्यमङ्गीकृत्य भूतेऽप्यर्थे प्रामाण्योपगमेन लौकिकवचसां च भूतेऽर्थे प्रमाणान्तरानु-**

---

ता. वृत्तसङ्कीर्तनपूर्वकं **द्वितीयवर्णकस्य** तात्पर्यमाह—**लोके** इति। भवत्ववबोधलक्षणं प्रामाण्यम्, तथापि भूतेऽर्थे शब्दानां तन्न सम्भवति प्रयोजनाभावादित्यत आह—**लौकिकवचसां चेति**। भूतेऽर्थे सामर्थ्याभावादनुप-

---

भा. प्रस्तोष्यमाणवर्णकस्य अनन्तरवर्णकादपुनरुक्तमर्थमाह — **लोके पदानामित्यादिना**। अत्र च ग्रन्थकारस्य आशयः अतिस्पष्ट इति न किञ्चिल्लिख्यते ॥

अहं कियान् काक्षमनश्श्रुतीनां विहारदूरं परमात्मतत्त्वम् ।
अहो गुरूणां चरणारविन्दप्रसादभाजां सुलभं समस्तम् ॥

कृतिरियमनवद्या नैव वासीन्न जाने
मम हृदयनिविष्टो यस्तमोदूरचारी ।
हितमहितमथान्यत् कारयन्मां य आस्ते
नरमृगवपुरीशो दृग्भिरेनां पुनातु ॥

यदि च विकृतिरत्राल्पीयसी भूयसी वा
कियदपि मम नैनः संस्तवो वा गुणेन ।
अपि तु भवत एतौ किं ग्रहग्रस्तलोके
नरमृगवपुषस्ते यत्र वेदाः प्रमाणम् ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगन्नाथाश्रमपूज्यपाद-शिष्यश्रीनृसिंहाश्रममुनिविरचितायां पञ्चपादिका-विवरणव्याख्यायां भावप्रकाशिकायां अष्टमं नवमञ्च वर्णकं समाप्तम् ॥**

**॥ समन्वयाधिकरणं च ॥**

**समाप्तोऽयं ग्रन्थः ॥**

सारेण प्रयोजनपर्यन्तं प्रामाण्यमङ्गीकृत्य वेदवचसां तु प्रमाणान्तराभावात् विध्यनुसारेणैव प्रयोजनपर्यन्तं प्रामाण्यं वक्तव्यमित्याशङ्कय नेति प्रतिपादितम् । इदानीं कार्यसंसृष्टस्वार्थे शब्दसामर्थ्यमिति मन्वानाः कार्यशेषतयैव भूतेऽप्यर्थे प्रामाण्यमिति प्रत्यवतिष्ठन्त इत्याह—अत्रापरे 331 - 2
प्रत्यवतिष्ठन्ते इति । ननु लौकिकवचसां भूतेऽप्यर्थे प्रयोगप्रत्ययदर्शनात् तदनुसारेण च योग्येतरसंसृष्टे शब्दसामर्थ्यप्रतिपत्तेः कुतो विधिसंस्पर्श इत्याक्षिपति—कस्मादेवमिति । परिहरति—अन्यथा शब्दप्रयोगानुपपत्तेरिति ॥ 331 - 3-4

अयं भावः—श्रोतुः साध्यमेव किंचित् प्रयोजनमुद्दिश्य प्रवृत्तिं विवक्षित्वा प्रवर्तकज्ञानाय प्रयोक्ता शब्दं प्रयुङ्क्ते । ततः प्रवर्तकनिष्ठं वाक्यं श्रोतुः प्रवर्तकज्ञानमेव जनयति । प्रवर्तकज्ञानेन च शब्दसमनन्तरभाविना अनन्यथासिद्धान्वयव्यतिरेकाभ्यां शब्दस्य सम्बन्धं व्युत्पत्त्या प्रतिपद्यते । तच्च प्रवर्तकं प्रत्यक्षादिव्यवहारेषु शब्दव्युत्पत्तेः प्राक् कार्यमिति ज्ञानात् सर्वत्र प्रवर्तत इति कार्यमेव श्रोतुः शाब्दज्ञानगोचरं कल्पयति । तत्र कार्यसंसृष्टेषु पदार्थेषु पदसमुदायस्य प्रथमं सामर्थ्यं कल्पयित्वा पुनः प्रयोगान्तरेषु आवापोद्वापाभ्यामेकैकस्य पदस्य कार्यसंसृष्टस्वार्थेषु सम्बन्धं प्रतिपद्यते । प्रथमप्रयोगे कार्यसंसृष्टपदार्थेषु सामर्थ्यप्रतिपत्तेः । ननु बालस्य स्वव्यवहारे अभिलषितसाधनताज्ञानात् प्रवृत्तिः, न कार्यज्ञानात्, ततश्च श्रोतुः शब्दसामर्थ्यविषयतया अभिलषितसाधनज्ञानमेव प्रवृत्त्या अनुमिमीते, न कार्यज्ञानमिति । नैतद्युक्तम्—अभिलषितसाधनेऽपि कार्यमिति ता.

---

पत्तौ तत्र प्रयोगप्रत्ययावित्याशङ्कयाह—तदनुसारेण चेति । प्रवर्तकज्ञानाय । साधनगोचरप्रवृत्तिजनकज्ञानायेति यावत् । भवतु प्रवर्त(कं)[के सङ्गतिग्रहः] तथापि भावना इष्टसाधनं वा तद्भव(ती)[त्वि]ति ; तत्राह—तच्चेति । आवापोद्वापाभ्यां योग्येतरान्विते शक्तिः कस्मान्न कल्प्यते इति ; तत्राह—प्रथमेति । अतीतानागतादौ सत्यपि हितसाधनज्ञाने कार्यज्ञानाभावेन प्रवृत्त्यभावात् तदेव प्रवृत्तिं प्रत्यव्यवहितपूर्वक्षणवर्तितया कारणमित्याह—अभि-

ज्ञानस्य प्रवृत्त्यानन्तर्यात् तदेव प्रवर्तकमनुमीयते। न च इष्टसाधनज्ञानं प्रवर्तकम्; अतीतानागतवर्तमानेष्टसाधनज्ञानानामप्रवर्तकत्वात्। तस्मात् कार्यसंसृष्टस्वार्थेषु शब्दसामर्थ्यमिति। ननु सर्वत्र कार्यव्यभिचाराभावेऽपि संसृष्टस्वार्थेषु शब्दसामर्थ्यमिति युक्तं प्रतिपत्तुम्, कार्यसंसृष्टस्वार्थ इति विशेषणायोगात्। अन्यथा प्रमाणान्तरगृहीतकार्यसंसृष्टस्वार्थे इत्यव्यभिचारात् कल्प्येत। नैतद्युक्तम्—संसृष्टस्वार्थ इत्युक्ते केन संसृष्ट इत्यपेक्षायां कार्यसंसृष्ट इति विशेषप्रतिपत्तिमन्तरेण प्रयोजकस्य अनिरूपणात् प्रमाणान्तरगृहीतत्वस्य शब्दसामर्थ्यप्रतिपत्तिकाले अप्रतिपत्तेः न तत्र शब्दसामर्थ्यमित्युक्तम्। ननु कार्यसंसृष्ट इत्युक्ते कार्यस्य कार्यान्तराभावात् कार्यपदस्य अन्यसंसृष्ट इति प्रयोजकभेदो वक्तव्यः स्यात्। न—धात्वर्थस्यापि कार्यत्वात् तत्संसृष्टनियोगे कार्यपदसामर्थ्यात्। ननु लोकेऽतीतानागतवर्तमानार्थनिष्ठवाक्येभ्योऽतीताद्यर्थप्रतिपत्तिकार्यदर्शनात् तदनुसारेण संसृष्टस्वार्थे सामर्थ्यं नियम्यत इति। न—सम्बन्धग्रहणाधीनत्वादर्थप्रतिपत्तेः तया

---

ता. लषितेति। कार्यज्ञानव्यवधानाद्धितसाधनस्य प्रवर्तकत्वं न सम्भवतीत्युक्तम्। इदानीं हितसाधनज्ञानं प्रवर्तकमेव न सम्भवतीत्याह—**न चेष्टेति**। कार्यस्यान्वयित्वेऽपि केवलव्यतिरेकाभावान्न शब्दसामर्थ्यप्रतियोगित्वमिति सिद्धान्ती शङ्कते—**नन्विति**। अव्यभिचारितया कार्यमपि विशेषणं किं न स्यात्? इत्यत आह—**अन्यथेति**। तथा च वेदस्याप्रामाण्यं स्यादित्यर्थः। पूर्ववादी परिहरति—**नैतदिति**। कार्यरूपविशेषणस्य प्रतिपत्तिमन्तरेण प्रयोजकस्यानिरूपणात् तदङ्गीकरणीयमित्यर्थः। अन्वयित्वेन प्रयोजकत्वे प्रमाणान्तरस्यापि तथा प्रसङ्ग इति यदुक्तम्, तत्राह—**प्रमाणान्तरेति**। **शब्दसामर्थ्यप्रतिपत्तिकाले** मानान्तरस्याप्रतीतेः **न तत्र शब्दसामर्थ्यमिति** तथैवोक्तमित्यर्थः। ननु 'निधिमानेष भूभागः' इत्यादिवाक्यादर्थप्रतिपत्तेरबाधिताया दर्शनात् प्रतिपत्तिलक्षणकार्येण सिद्धेऽपि सामर्थ्यमवगम्यत इति चोदयति—**ननु लोके** त्वान्मैवमिति परिहरति—**न—सम्बन्धग्रहणेति**। तर्हि सिद्धवाक्येषु कथमर्थ-

सम्बन्धग्रहणनियमायोगात् । अतीतादिवाक्यानां च एवमवधार्यतामिति
नियोगनिष्ठत्वात् । तस्मात् न कार्यसंस्पर्शमन्तरेण भूतेऽप्यर्थे शब्द-
प्रामाण्यमिति ॥

अपि च, प्रवृत्तिनिवृत्तिसाध्यप्रयोजनमन्तरेण वाक्यप्रयोगानु-
पपत्तेः प्रयोजनस्य नियोगसामर्थ्याधीनत्वात् नियोगपर्यवसितमेव
वाक्यमित्याह—पुरुषेच्छासमुत्थापितो हीति । ननु नेदं कालान्तरभावि 331 - 4
नैयोगिकं फलम्, येन नियोगाधीना फलप्रतिपत्तिः स्यात्, किं तु,
सम्यग्ज्ञानफलं प्राप्तब्रह्मप्राप्तिलक्षणमविद्यानिवृत्तिलक्षणं च हस्तगत-
विस्मृतसुवर्णप्राप्तिवत् अन्वयव्यतिरेकसिद्धमिति ; नेत्याह—न च विस्मृत- 331 - 6
सुवर्णारोपितसर्पदशनाप्रतिपत्ता विवेति । नन्वन्वयव्यतिरेकविरुद्धमेतत् यत्
ब्रह्मात्मतत्त्वज्ञानात् ब्रह्मप्राप्त्यनर्थनिवृत्ती न स्त इति ; न—प्रत्यक्ष-
विरोधादित्याह—पूर्ववदेव संसारित्वोपलब्धेरिति । अपि च, शाब्दज्ञान- 331 - 8
व्यतिरेकेण ब्रह्मात्मनि ज्ञानसाधनान्तरविधानात् प्रयत्नान्तरसाध्यं
प्रयोजनं न ज्ञानमात्रसाध्यमित्याह—प्रतीत्युत्तरकालं चेति । ननु लोके 331 - 9
भूतार्थनिष्ठतया प्रयोजनपर्यन्तता दृश्यते तद्वदिहापि स्यात् इति ;
नेत्याह—तस्मात् सन्तु नाम लोके इति । ननु धर्मजिज्ञासा ब्रह्मजि- 332 - 1
ज्ञासेति च जिज्ञास्ययोः धर्मब्रह्मणोः सिद्धसाध्यभेदेन वैलक्षण्यं दर्शितम्,
न च ब्रह्मणि जिज्ञासाकर्मणि शब्दगृहीते प्रतिपत्तिविध्यादयः शास्त्रेण
प्रतिपाद्या इति युक्तं प्रतिपत्तुम्, सूत्रविरोधात्, इत्यत आह—
तस्माद्यद्यपीति । तथापि प्रतिपत्त्यादिविधिशेषतयैव ब्रह्म जिज्ञास्य- 332 - 3
मित्यर्थः । कथं पुनर्ब्रह्मप्रतिपादनपराणां वाक्यानां ब्रह्मप्रतिपत्तिविधि-
शेषतया समन्वयः? इति ; तदाह—सोऽन्वेष्टव्य इत्यादि । यः पुनः तस्मात् 332 - 4-9
इत्यादिः स्पष्टार्थः ॥ ता.

---

प्रतिपत्तिः? इति । कार्याध्याहारेणेत्याह—अतीतादीति । तात्पर्याभावादपि
न कार्यादन्यत्र शब्दस्य सामर्थ्यमित्याह—अपि चेति ॥

तत्र नियोगमुखेन ब्रह्मणोऽवगतिमिच्छतो नियोगब्रह्मणी न
333 - 1 प्रमाणेन प्रमातुं शक्येते इत्येतत् प्रथमं दर्शयति—अत्रोच्यते इति । तत्र
333 - 1 विधेयाभावात् तद्व्यावृत्तो विधिः प्रमातुं न शक्य इत्याह—किमिदं
ज्ञानमिति । तत्र तावत् शाब्दं ब्रह्मविषयं विज्ञानं विधातुं न शक्यत
333 - 1 इत्याह—न तावच्छब्दजन्यमिति । गृहीतपदपदार्थसम्बन्धस्य अधीयमानात्
वाक्यात् विधिवाक्यादिव विध्यर्थे ब्रह्मणि विज्ञानमुत्पद्यते, तदेव च
विचारेण प्रतिष्ठाप्यते [इति] । न च अनन्यथासिद्धकार्यमन्तरेण नियोग
उपपद्यते । शब्दावगते ब्रह्मणि तत्समानजातीयस्मृतिसन्तानो विधीय-
333 - 2 तामिति शङ्कते—अथ शब्दजन्यस्यैवेति । तत्र स्मृतिसन्तानविधेः
प्रयोजनं न तावददृष्टम्, स्वर्गादिवत् मोक्षस्य कर्मजन्यत्वप्रसङ्गात्,
333 - 3 दृष्टफलत्वेऽपि न किञ्चित् फलं निरूप्यत इत्याह—न तस्य प्रयोजनं
333 - 4 पश्याम इति । ननु मर्दनसुखवत् प्रत्यक्षं सुखमित्याह—नन्विष्टविषय-
स्येति । तर्हि अन्वयव्यतिरेकसिद्धसाधनत्वात् मर्दनादिवत् स्मृतिसन्तानो
333 - 5 न विधेय इत्याह—यद्येवमिति । अस्तु तर्हि स्मर्यमाणस्य साक्षात्करणं
333 - 5 स्मृतिसन्तानविधेः प्रयोजनमिति शङ्कते—अथ पुनरिति । किं साक्षा-
त्करणं स्मृतिसन्तानस्य अदृष्टं प्रयोजनं दृष्टं वा भवति ?। न चादृष्टम् ;
वस्त्वापरोक्ष्यस्य चक्षुरादिप्रमाणसामग्रीसाध्यत्वात् अदृष्टमात्राजन्यत्वात् ।

---

ता. वेदान्तेषु नियोग एव नास्ति, यदि कथंचिदस्ति, तथापि ब्रह्मवाक्यानां नियोगशेषतया अन्यपराणां प्रत्यक्षादिविरोधात् अद्वितीये ब्रह्मणि प्रामाण्यं न स्यादित्यभिप्रेत्याह—**नियोगब्रह्मणी इति**। समुदायतात्पर्यमुक्त्वा अनन्तर-ग्रन्थतात्पर्यमाह—**तत्रेति**। **तद्व्यावृत्तो विधिः**, तद्विशेषितो विधिरिति यावत्। वाक्यात् ज्ञानमुत्पद्यते चेत् किं विचारेण? इत्यत आह—**तदेव चेति** । **प्रतिष्ठाप्यते**—असम्भावनाविपरीतभावनानिरासमुखेनाप्रामाण्यशङ्का निराक्रियत इति यावत् । तदेव विधेयं किं न स्यात्? इत्यत आह—**न चेति**। अन्वयव्यतिरेकसिद्धे न विधिसम्भवः 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादित्यर्थः । जन्मान्तरीयब्रह्मध्यानजन्यादृष्टसहकृताच्छब्दादस्मिन् जन्मनि

अदृष्टसहकृतात् जन्मान्तरीयप्रमाणकारणात् जन्यत इति चेत्, तर्हि जन्मान्तरे यथा शब्दादिप्रमाणकारणं विधिमन्तरेण ब्रह्मावगतिं जनयिष्यति तथेहापि स्यात्। अथ दृष्टमेव ब्रह्मसाक्षात्करणं प्रयो-
जनमिति; न—अनुपलब्धेरित्याह—नैतद्युक्तमिति। अनुपलब्धि- 333 - 6
विरोधमेव दर्शयति—न हि लैङ्गिकोऽर्थ इति ॥ 333 - 7

शाब्दज्ञानस्मृतिसन्तानात् नापरोक्षज्ञानमात्रमुत्पद्यते, किं तु तज्जननसमर्थं विज्ञानान्तरमुत्पद्यते, तद्विज्ञानफलाय स्मृतिसन्तानो
विधीयते, इति शङ्कते—मा भूच्छाब्दज्ञानादेवेति। तदप्यपरोक्षफलं 334 - 2
विज्ञानं नादृष्टतया विधिफलम्, प्रमाणाधीनत्वादवगमस्य। नापि
दृष्टतया, स्मृतिसन्तानस्य प्रमाणत्वाभावात्। नापि तद्विधविज्ञान- 334 - 3
फलत्वे प्रमाणमस्ति इत्याह—नेत्थम्भावे प्रमाणमस्तीति। मा भूत् स्मृतिसन्तानविधिः, शब्दावगते ब्रह्मणि ध्यानं विधीयते। ननु को विशेषः स्मृतिसन्तानात् ध्यानस्य ?। तत्र स्मृतिसन्तानो नाम प्रमाणावगते वस्तुनि तत एव प्रमाणात् सजातीयप्रत्ययप्रवाहो वस्तुतत्त्वविषयः,
ध्यानं नाम वस्तुतत्त्वमनपेक्ष्य आरोपितविषयतयापि मनस्सङ्कल्पप्रवाहः, 334 - 3
स विधेय इत्याह—अस्तु तर्हि शब्दात् प्रतिपन्नस्येति। ननु तस्याप्यदृष्टं
दृष्टं वा प्रयोजनं वक्तव्यम्। न तावददृष्टम्; नैयोगिकत्वेन स्वर्गा- 334 - 5
दिवदनित्यत्वप्रसङ्गात्। नापि दृष्टं दृश्यते इत्याक्षिपति—किमर्थमिति। ननु ध्येयसाक्षात्करणाय। तदपि नादृष्टं फलम्। प्रमाणजन्यत्वा-
दर्थानुभवस्य। दृष्टं फलं चेत्, न—अनुपलब्धिविरोधादित्याह— 334 - 6
न तस्य सम्भव इत्यादि। ननु ध्यानाभ्यासप्रचयसामर्थ्यात् विनष्टपुत्राद्या- 334 - 7
परोक्ष्यं दृश्यत इति चोदयति—ननु दृष्टमिति। न हि विनष्टपुत्रादीनामिदानीमविद्यमानत्वात् तदापरोक्ष्यं सम्भवति, किं तु यत् पुरोदेशे
पुत्राद्यवभासते तत् बाध्यमानत्वादविद्यात्मकम्। अतो न वस्त्वापरोक्ष्य- 334 - 8
मिति परिहरति—मैवम्—न तद्ध्यायमानमिति ॥

ता.

---

ब्रह्मापरोक्षज्ञानमुत्पद्यत इति शङ्कते—अदृष्टसहकृतादिति ॥

ननु ब्रह्मात्मनि ध्यायमाने ध्यानप्रकर्षात् ध्येयापरोक्ष्यं तावत् पुत्रादिवत् सिध्यति, ध्येयस्य च वस्तुत्वं शब्दप्रमाणात् सिध्यति, अतो वस्त्वापरोक्ष्यं ध्यानात् फलिष्यति, यथा स्वप्ने चतुष्पथे हस्तिज्ञानमुत्पन्नं तथाभूतजागरणसंवादेन सम्यग्ज्ञानं भवतीति । नैतत् सारम्— अपरोक्षज्ञानस्य शब्दप्रमाणसामर्थ्यात् तथाभूतज्ञानत्वे(न) संवादात् प्रामाण्यं स्यात् । न च स्वप्नज्ञानं प्रमाणम्; अविद्यात्मकत्वात् । संवादस्तु सादृश्यभ्रमात् इति । न हि चक्षुरादिप्रवृत्तिमन्तरेण वस्तुदर्शनं सम्भवति ॥

ननु विध्युद्देशसामर्थ्यादेव ध्येयसाक्षात्करणं ध्यानफलं गम्यते,
334 - 10 किमन्वयव्यतिरेकाभ्याम् , इत्याह—ननु द्रष्टव्य इति । तत्रापि किं नैयोगिकं फलमाहोस्वित् दृष्टम् ? इति । नैयोगिकत्वे स्वर्गादिवत् उपच-
335 - 1 यापचयात्मको मोक्षः स्यात् । दृष्टं फलं चेत् , तदाह—उक्तमेतदिति । विधेयसद्भावमङ्गीकृत्य शब्दानां ध्यानविधिपरत्वे ब्रह्मात्मैकत्वं न
335 - 3 सिध्यतीत्याह—अथापि भवतु नाम ध्यानादिति । ननु शब्दो ब्रह्मात्मैकत्वं
335 - 4 प्रतिपादयतीति, नेत्याह—शब्दस्तावदिति । ननु ज्ञानविधिवाक्यव्यति-
353 - 6 रिक्तानामवान्तरवाक्यानां ब्रह्मणि समन्वयात् वस्तुसिद्धिरित्याह—सत्यं
335 - 7 तथापि तत्त्वं सिध्यतीति । परिहरति—विषम उपन्यास इति । तस्मात्
335 - 9 विधिपरत्वे नास्ति वस्तुसिद्धिरिति सर्वविधिभेदेष्वतिदिशति—पूर्वोक्ते-ष्वपीति ॥

स्मृतिसन्तानध्यानयोर्नियोगो निराकृतः । इदानीं तृतीयज्ञानेऽ-
335 - 11 परोक्षफले नियोगमाशङ्कते—यत्पुनः कैश्चिदुच्यते इति । तत्र वदामः— विधीयमानज्ञानस्य प्रत्यक्षानुमानशब्दजन्यत्वाभावात् दर्शपूर्णमासवत्

---

ता. प्रतीयमानस्य संवादेन तथात्वे दृष्टान्तमाह—यथेति ॥

तथाभूतज्ञानत्वे । यथार्थत्वे इति यावत् । दृष्टान्तोऽप्यसम्प्रतिपन्न इत्याह—न चेति । प्रामाण्यमेव कस्मान्न भवेत् ? इत्याशङ्क्य, प्रमितिसामग्र्यभावान्नैवमित्याह—न हीति ॥

अलौकिककरणेतिकर्तव्यताविषयविधानैः सह (दर्शनं) [तत्] विधेयम्, न
तत् दृश्यत इत्याह—तत्पुनः किंसाधनमित्यादिना । शङ्कते—तमेतं वेदानुवचने- 336 - 2.5
नेति । श्रवणमनननिदिध्यासनैः करणैः वेदानुवचनयज्ञदानतपोऽनशन-
शमदमाद्यनुगृहीतैर्मोक्षकामो ब्रह्मण्यपरोक्षफलं ज्ञानं कुर्यादित्यर्थः । परि-
हरति— प्रमाणान्तरस्य तर्हि प्रमाणमिति । अयमर्थः—सेतिकर्तव्यं 336 - 7
साधिकारं च ब्रह्मण्यपरोक्षफलं विज्ञानं प्रमाणान्तरम्, तत् कर्तव्यतया
शब्दैः प्रमीयते चेत्, न ब्रह्मणि प्रमाणं शब्दः, किं तु ब्रह्मप्रमाणे
प्रमाणम् । ततश्च कल्पनालाघवात् ब्रह्मण्येव प्रामाण्यं युक्तमिति । ननु
विधिविषयमन्तरेण ब्रह्ममात्रे प्रामाण्यं न युक्तमिति; नेत्याह—
कार्यगम्यमिति । गृहीतसम्बन्धस्य वेदान्तवाक्येभ्यो ब्रह्मणि निश्चित- 336 - 8
प्रमितिकार्यगम्यं वेदान्तप्रामाण्यम् । तत्र प्रमितिजननात् । विषयस्य
विधेयत्वगम्ये प्रामाण्ये अग्निहोत्रवाक्यं दर्शपूर्णमासविधिनिष्ठं किं न
स्यात् । तत्र शब्दसामर्थ्याभावात् प्रमित्यनुदयादिति चेत्, इहापि
'सत्यं ज्ञानमनन्त ब्रह्म' 'तत्त्वमसि' इत्युक्ते न विधौ सामर्थ्यं प्रमितिर्वा
गम्यत इति ब्रह्मण्येव प्रामाण्यं युक्तमिति । ननु लौकिकं प्रामाण्यं
कार्यगम्यमेव, शास्त्रीयं तु विधिगम्यमिति; नेत्याह—तदुक्तमिति । 336 - 9
अत्र लौकिकानां शब्दानां मुख्यार्थाभिधानमुखेन वैदिकार्थप्रतिपादना-
सम्भवे किं वेदे पृथक्सम्बन्धं गृह्णीमः ? किं वा वृत्त्यन्तरद्वारेणापि
लौकिकादेव सम्बन्धादर्थं प्रतिपद्यामहे ? इति विशये, लौकिकमेव
प्रतिपत्तुं युक्तं अलौकिककल्पनात् इत्याह—गुणाद्वाप्यभिधानं स्यादिति । 336 - 9

ता.

भवतु प्रमाणे एव प्रमाणम्, का क्षतिः ? इत्यत आह—ततश्चेति ।
ब्रह्मविषयप्रमाणे प्रामाण्यस्वीकारात् ब्रह्मणि प्रामाण्यस्वीकारो लघीयानित्यर्थः ।
यथा केवले विषये अप्रवर्तमानमपि प्रत्यक्षं सवितृसम्पृक्ते प्रवर्तते एवं
केवले ब्रह्मण्यप्रवर्तमानमपि शब्दप्रमाणं विधिसंसृष्टे प्रवर्तत इति शङ्कते—नन्विति ।
विधिनिबन्धनप्रामाण्ये दोषमाह—विषयस्येति । कार्यगम्यम्—प्रमितिल-
क्षणकार्यगम्यम् । शास्त्रीयम् । शास्त्रसम्बन्धिप्रामाण्यमिति यावत् ॥

एवं लौकिकमेव प्रामाण्यं युक्तमलौकिककल्पनादित्यर्थः । तस्मान्न दृष्टफलतया नियोगपर्यवसितानि वेदान्तवाक्यानि ॥

ननु कोयं नियोगो नाम? । ननु आचार्यनियोग इत्यादौ प्रसिद्धः। सत्यम् । तत्र उत्कृष्टस्य पुरुषस्य अवरपुरुषप्रेरणात्मकोऽभिप्रायभेदो नियोगः। नासौ अपौरुषेये वेदे बालस्य प्रत्यक्षादिव्यवहारे च सम्भवति। ननु कार्यबुद्धिगम्यं वस्तु नियोग इत्याख्यायते प्रवर्तकत्वसामान्यादिति। किमिदं कार्यं नाम ?। यदि कृतियोग्यतामात्रम्, न ततः प्रवृत्तिः। प्रागभाववतां सर्वेषां कृतियोग्यत्वात् । अथ कृतिसंसृष्टं कार्यम्; न— कृतिसंसर्गस्यैव निमित्तत्वोपगमात् कार्यबुद्धेः । अथ कृतियोग्यमेव अलौकिकं किञ्चिद्वस्तु कार्यमिति; तर्हि अव्युत्पन्नस्य घटेन उदकाहरणं कर्तव्यमित्यादिप्रत्यक्षव्यवहारे क्रियाकारकव्यतिरिक्तमलौकिकं किंचित् प्रतिपन्नं न वेति वक्तव्यम् । प्रतिपन्नं चेत्, नालौकिकं किञ्चिदिति । निदर्शनीयं च शब्दान्तरेण इदमित्थमिति । ननु कार्यमिति प्रतिपद्य

---

ता. विषयाभावान्नियोगाभावोऽभिहितः। सम्प्रति नियोगः स्वरूपतोऽपि दुर्निरूप इत्याह—**नन्विति** । ननु मा भूद्वेदे, लोके तु भविष्यतीत्यत आह— **बालस्येति** । अभिप्रायभेदे प्रसिद्धस्य शब्दस्य कथं तत्र प्रवृत्तिः? इति। उपचारादित्याह—**प्रवर्तकत्वसामान्यादिति**। **प्रागभाववतामिति**। दुःख-साधनानामपि कृतियोग्यतया ततोऽपि प्रवृत्तिप्रसङ्ग इत्यर्थः। **कृतिसंसृष्टम्**। पुरुषप्रयत्नेन साध्यमानमिति यावत् । अनुष्ठानहेतौ विचार्यमाणे अनुष्ठीयमान-मेवानुष्ठानहेतुरित्युक्तिरयुक्तेत्यभिप्रेत्य परिहरति—**न—कृतिसंसर्गस्येति** । **कार्यबुद्धिः** अनुष्ठेयमिति बुद्धिः, तस्याः **कृतिसंसर्गः** प्रयत्नसम्बन्ध एव हेतुः इत्यभ्युपगमादित्यर्थः। **अलौकिकम्**। क्रियाकारकफलव्यतिरिक्तमिति यावत्। **प्रतिपन्नं चेदिति**। अप्रतिपन्नत्वे तत्र शब्दस्य सम्बन्धाग्रह इति बहिरेव द्रष्टव्यम्। प्रतिपन्नत्वमङ्गीकृत्य दूषणान्तरमाह—**निदर्शनीयं चेति**। कार्यशब्दं विहाय प्रवर्तकशब्देन निर्देष्टुं शक्यत इति शङ्कते—**ननु कार्यमिति**।

प्रवर्तते, ततश्च प्रवर्तकाकारता कार्यस्य क्रियाकारकफलेभ्यो वैलक्षण्यमिति। न—धात्वर्थस्यैव अभिलषितसाधनतया प्रवर्तकत्वात्। तस्यैव च कार्यबुद्धिगोचरत्वात्। ननु अन्यत् कार्यमन्यदभिलषितसाधनम्। सत्यम्। अभिलषितसाधनमेव कृतियोग्यतया प्रवर्तकं कार्यमुच्यते। न च श्रेयःकृतिप्रतियोगिभेदमात्रात् उभयबुद्ध्यालम्बनं साधनं भिद्यते। न च कृतियोग्येष्टसाधनव्यतिरिक्तं कार्यं नाम प्रवृत्तिनिमित्तं पश्यामः॥

ननु फलमपि कार्यतया प्रवृत्तिसमर्थं दृश्यते। न—विशिष्टप्रवृत्तिहेतुत्वाभावात् फलकार्यत्वस्य। अभिलषितसाधनं कार्यमेव सम्बन्धग्रहणलिङ्गभूतायाः प्रवृत्तेर्हेतुः; फलस्येच्छामात्रहेतुत्वात्। न च कार्यं नाम अलौकिकं किञ्चित् लोके दृश्यते। न तावत् प्रत्यक्षेण अवगन्तुं शक्यम्। असिद्धस्वभावत्वात्। सम्बन्धाग्रहणात् नानुमानेन। अव्युत्पन्नत्वात् न आगमेन। अलौकिककार्य-

ता.

भवत्वेवम्, तथापि क्रियादिभ्यः कथं वैलक्षण्यम्? इत्यत आह—ततश्चेति। कार्यमित्यवगम्य प्रवर्तमानतया तस्यैव प्रवर्तकत्वं न धात्वर्थस्येति; तत्राह—तस्यैव चेति। कार्यत्वं नाम कृतिसाध्यत्वम्, फलसाधकत्वं तु फलोत्पादे कारणत्वम्, अतो भिन्नत्वान्न धात्वर्थस्य कार्यबुद्धिगोचरत्वमिति चोदयति—नन्विति। नाभिलषितसाधनमात्रं कार्यम्, चन्द्रोदयादौ व्यभिचारात्, किं तु कृतियोग्यमिष्टसाधनं कार्यबुद्धिगोचर इति परिहरति—सत्यमिति। कार्यफलसाधनशब्दयोरपर्यायित्वात् कथमेकमेवोभयशब्दवाच्यम्? इति; तत्राह—न च श्रेय इति। तथा सत्येकस्यापि देवदत्तस्य वाचकपाठकशब्दाभ्यामभिधेयस्य भेदः स्यादित्यर्थः॥

कृतिफलसाधनयोरेकैकव्यभिचारेऽपि कार्यबुद्धिदर्शनात् उभयानुगतमन्यदेव कार्यबुद्ध्यालम्बनं खण्डमुण्डादिव्यभिचारे गोत्वमिव गोबुद्ध्यालम्बनमिति चोदयति—नन्विति। सम्बन्धग्रहणहेतुभूतप्रवृत्तिहेतुतया कार्यबुद्धिविषयत्वं न फलस्येति परिहरति—न—विशिष्टेति। कीदृशं प्रवृत्तिहेतुत्वं तर्हि फलस्य? इति; तत्राह—फलस्येति। नियोगसद्भावे प्रमाणाभावाच्च न पराभिमतं कार्यमस्तीत्याह—न च कार्यमिति। अस्तु तर्हि शब्दगोचरः? इति; तत्राह—न [च] यूपाहवनीयादिवदलौकिकत्वेऽपि नियोगे अव्युत्पन्नत्वादिति। न

मन्तरेण अनुपपत्त्यभावात् न अर्थापत्त्या कार्यमवगन्तुं शक्यम् । प्रवृत्तिरनुपपन्नेति चेत्, न—कृतियोग्यात् अभिलषितसाधनादपि प्रवृत्तेः । न च साधनत्वमपि कार्यवत् प्रमाणशून्यम्; तत्फलोदयान्वयव्यतिरेकाभ्यामवगमात् । अननुभूतेऽपि सामान्यतोदर्शनेन साधनत्वसिद्धेः । न च अतीतादिसाधनेषु प्रवृत्तिप्रसङ्गः; कृतियोग्येष्टसाधन इति विशेषणात् । तस्मात् अव्युत्पन्नस्य व्यवहारे प्रमाणान्तरेण यत् प्रवर्तकतया वर्तते तदेव श्रोतुरपि शब्दबुद्धिगोचरतया प्रवर्तकमनुमीयत इति सिद्धम् ॥

तत्र ब्रह्मात्मैकत्वविज्ञाने विधिसम्बन्धो नाम फलसाधनसामर्थ्यम् । तत्र अविद्यानिवृत्तिव्यतिरेकेण मोक्षफलस्य अभावात् तस्य च अन्वयव्यतिरेकसिद्धत्वात् तत्त्वज्ञानस्य मोक्षसाधनत्वमन्वयव्यतिरेकगम्यं न शब्दप्रमेयमिति ब्रह्मण्येव प्रमाणं शब्द इति सिद्धम् । इदानीं जीवब्रह्मणोः भेदमङ्गीकृत्य ब्रह्मणश्च प्रदेशान्तरवर्तित्वं सर्वगतत्वं च अभ्युपगम्य 'अहं ब्रह्मास्मि' इत्यारोपितरूपेण विधीयमानात् उपासनात् यागादिव स्वर्गो मोक्षः फलिष्यतीति ये मन्यन्ते तन्नि-
337-2 रासाय उत्तरं भाष्यमित्याह—अथापि अथ यदतः परो दिवो ज्योति-
रित्यादिना । ननु एवमपि उपासनाविधिपरत्वे शब्दस्य ब्रह्म-
337-3 स्वरूपासिद्धिरित्यत आह—देवताविग्रहवत्त्वन्यायेति । न च प्रमाणान्तर-

---

ता. सम्बन्धग्रहणम्; तेषां 'यूपं तक्षति' इत्यादिप्रसिद्धपदसामानाधिकरण्यानुपपत्तिगम्यत्वात् नियोगस्य चार्थापत्तिवेद्यत्वानङ्गीकारादिति भावः । ननु इष्टसाधनेऽपि समानोऽयं प्रसङ्ग इत्यत आह—**न चेति** । फलोत्पत्तेः प्राक् तत्साधनत्वस्यानवगमात् कथं ततः प्रवृत्तिः? इत्याशङ्क्याह—**अननुभूतेऽपीति** । इदमेवंजातीयत्वादेतस्य साधनमिति सामान्यतोदृष्टानुमानेनेत्यर्थः । भवतु हि तत्साधनं विधिः, प्रकृते किमायातम्? इत्यत आह—**तत्रेति** । इष्टसाधनरूप एव विधिर्वेदान्तेषु किं न स्यात्? इत्याशङ्क्य, अन्वयव्यतिरेकसिद्धत्वान्नैवमित्याह—**तत्राविद्येति** । **प्रदेशान्तरेति** । स्वरूपेण सर्वगतत्वं विशुद्धतया च प्रदेशान्तरवर्तित्वमिति विशेषः । मानान्तरविरोधान्न देवताधिकरणन्यायप्रवृत्तिरिति; तत्राह—**न च प्रमाणान्तरेति** ॥

विरोधः, विकारासंस्पर्शित्वात् ब्रह्मणः सद्वितीयत्वात्। ननु नैयोगिक-
फलत्वे मोक्षस्य स्वर्गादिवत् अनित्यतेति ; नेत्याह—न च साध्यत्वेऽपीति। 337-5
ननु श्रुतिरनित्यत्वानुमानविरुद्धा कथमनावृत्तिं साधयेत्? इत्यत आह—
न ह्येष इति। ननु अनुमानागमयोर्विरुद्धाव्यभिचारित्वात् संशयहेतुत्व- 337-6
मिति; तत्राह—शब्दगम्यस्येति। अनुमानादागमो बलवानित्यर्थः। अस्य 337-7
परिहारत्वेन भाष्यमवतारयति—न—कर्मब्रह्मविद्याफलयोरित्यादिना। 337-8
भाष्यस्य तात्पर्यार्थमाह—अस्यायमर्थः संङ्क्षेपत इत्यादिना॥ 338-1

ननु नास्ति फलवैलक्षण्यम्, मोक्षस्यापि उपासनासाध्यतया कर्म-
जन्यत्वात्, ततश्च उपचयापचयशरीरेन्द्रियादिमत्तापि स्यात्; इत्यत 338-1
आह—श्रुतितो न्यायतश्चेति। 'ब्रह्म वेद ब्रह्मैव भवति' 'विद्ययाऽमृत-
मश्नुते' 'ब्रह्मसंस्थोऽमृतत्वमेति' 'अथायमशरीरोऽमृतः प्राणो ब्रह्मैव'
इत्यादिश्रुतितो ब्रह्मात्मताऽशरीरताऽमृतत्वलक्षणो मोक्षो दर्शितः। न्याय-
तश्च मोक्षस्य नित्यत्वं गम्यते। पुनरावृत्तौ पुनर्बन्धात् मोक्षशब्दस्य उप-
चरितार्थताप्रसङ्गात्। अभ्युदयनिःश्रेयसयोश्च भेदप्रतिपत्तेः। अनादित्व-
मपि श्रुतिन्यायाभ्यामवगतम्। 'विमुक्तश्च विमुच्यते' 'ब्रह्मैव सन् ब्रह्मा-
प्येति' इति श्रुतेः। सादित्वे चान्तवत्त्वं स्यादिति न्यायात्। ततश्च न
क्रियासाध्यो मोक्ष इति। क्रियासाध्यत्वे अभ्युदयफलवत् शरीरेन्द्रियादि- 338-2
सम्बन्धः क्षयिष्णुता उपचयापचयवत्त्वं च मोक्षस्य स्यादित्याह—यदि
सन्ध्योपासनवदित्यादिना। ननु यथैवोपचयापचयवत् क्षयिष्णु शरीरेन्द्रि-
यादिभोग्यं च कर्मफलं एवं तद्विपरीतमशरीरामृतब्रह्मलक्षणं च निःश्रेयसं 338-7
कर्मफलमेव स्यात्, कर्मणां पश्वादिविविधफलहेतुत्वदर्शनादिति; अत
आह—न च अशरीरत्वमेव धर्मकार्यमिति॥ ता.

---

विकारासंस्पर्शित्वात् ब्रह्मण इति। विकारास्पृष्टविषया अद्वितीय-
श्रुतिरित्यर्थः। नापि प्रत्यक्षविरोध इत्याह—ब्रह्मणः सद्वितीयत्वादिति।
विकारसंस्पृष्टब्रह्मविषयमेव प्रत्यक्षमित्यर्थः। विरुद्धाव्यभिचारित्वात्। सत्प्रति-
साधनानुमानसदृशत्वादिति यावत्। तत्र श्रुतिं दर्शयति—ब्रह्म वेदेति। न्यायं
दर्शयति—न्यायतश्चेति। भेदप्रतिपत्तेरिति। नित्यत्वानित्यत्वेनेति यावत्॥

किमिदं स्वाभाविकमशरीरत्वं किं वा नैमित्तिकम् ? इति। शरीरात्मनोः मिथ्याज्ञानसम्बन्धव्यतिरिक्तस्य सर्वप्रकारसम्बन्धस्य आत्यन्तिकाभावः स्वाभाविकमशरीरत्वं मिथ्याज्ञानसम्बन्धात् नैमित्तिकं सशरीरत्वमिति। तत्र सम्यग्ज्ञानसाध्यस्य मिथ्याज्ञानसम्बन्धनिवृत्तिलक्षणस्य अशरीरत्वस्य कर्मसाध्यत्वाभावात् सम्बन्धान्तरनिवृत्तिलक्षणस्य अशरीरत्वस्य स्वाभाविकत्वात् न धर्मसाध्यो मोक्ष इति। ननु यदिदमशरीरामृतब्रह्मलक्षणं फलं तत् अन्यथा कर्मभिः परिणम्यत इति; नेत्याह
339 - 1 —तत्रापि कथंचिदित्यादिना। ननु भवतु स्वाभाविकाशरीरामृतध्रुवलक्षणो मोक्षः सदैकरूपः, तथापि उपासनासन्तानात् विधीयमानात्
339 - 4 भविष्यति, ज्ञानलक्षणत्वादुपासनस्य, इत्यत्राह—तत्र यदि हस्तगतविस्मृतसुवर्णादिवदित्यादिना॥

ननु किमिति यागफलवत् उपासनासाध्यत्वे मोक्षस्य उपचयापचयक्षयिष्णुताशरीरसम्बन्धः स्यात्॥

उच्यते—मोक्षफलाय विधीयमानस्य उपासनस्य स्वरूपतः कालतः सङ्ख्यातो वा परिमितिरस्ति वा ? न वा ? इति वक्तव्यम्। अस्तिचेत्, साङ्गदर्शपूर्णमासपरिमितिवत् एतावदिदमित्युपासनापरिमितिः प्रदर्शनीया। न च तथा दृश्यते। नापि सङ्ख्यातः परिमाणमस्ति; सहस्रं लक्षं वा प्रत्ययानां मोक्षसाधनमिति नियामकादर्शनात्। नापि कालतः परिमाणमस्ति ; एकं शतं सहस्रं वा संवत्सराणामुपासीनस्य मोक्षः इति नियमे प्रमाणाभावात्। मरणमेव अवधिरिति चेत्, तथापि दर्शपूर्णमासवत् एकाकारसाधनपरिमितिर्न लभ्यते। एकेन दशभिः शतेन

---

ता. नैमित्तिकमशरीरत्वं दर्शयितुं नैमित्तिकं सशरीरत्वं दर्शयति—मिथ्याज्ञानेति। मिथ्याज्ञाननिवृत्तिरेवोपासनासाध्या स्यादित्यत आह—तत्रेति। सम्बन्धान्तरनिवृत्तिलक्षणस्य—सम्बन्धान्तरशून्यतालक्षणस्य। उपासनालक्षणकर्मसाध्यत्वे मोक्षस्य स्वर्गादिवदुपचयापचयरूपता स्यादित्यत्राह—ज्ञानलक्षणत्वादिति। उपचयापचयरूपत्वं प्रथमं दर्शयति—उच्यत इति। स्वरूपत इति। प्रयाजादिविशिष्टाग्नेयादिवत् इयदुपासनमिति स्वरूपतः

सहस्रेण वा कालेन कस्यचित् मरणात् पुरुषभेदेषु उपासनोपचयापचय-प्रसङ्गात्। उपास्यापरोक्ष्यमवधिरिति चेत्, तथापि कस्यचित् केनचित् कालेनापरोक्षात् साधनोपचयापचयौ तदवस्थौ। अतो नोपासन-लक्षणमोक्षसाधनैकरूप्यं लभ्यते। न च आरोपितापरोक्षानुभव एव मोक्षसाधनम्; अविहितत्वात् मिथ्याज्ञानत्वाच्च॥

अथ मा भूदैकरूप्यम्, देशकालसङ्ख्यापरिमाणभेदादग्निहोत्राभ्या-सवत् पुरुषभेदेषु साधनोपचयापचयात्मता भविष्यतीति, न तर्हि सर्वेषा-मेकरूपो मोक्षः स्यात्। काष्ठोपचयात् ज्वालोपचयवदग्निहोत्रोपचयात् स्वर्गोपचयवच्च उपासनोपचयात् मोक्षो(पचया)पचयोपपत्तेः। अथ साधन-वैषम्येऽपि फलैकरूप्यमुच्येत, अनुष्ठानवैफल्यं स्यात्। अथ उपासनापि विधीयमाना नियामकाभावात् उपचयापचयरूपिणी फलं च शास्त्रादेक-रूपमिति। नैतत् सारम्—उपासनातोऽविद्यातत्संस्कारकामकर्मसु क्षीयमाण-क्षीयमाणेषु चित्तैकाग्र्यात् अपरोक्षसम्यग्ज्ञानोदयोपपत्तेः

परिच्छेद इत्यर्थः। मा भूदुपासनस्य मोक्षसाधनत्वम्, तज्जन्यानुभवस्यैकरूप्यात् ता.
भवतु तस्यैव मोक्षसाधनत्वमित्यत आह—**न चारोपितेति**। अपरोक्षानुभवस्य
मोक्षसाधनत्वं किं वैधम्? किं वा अन्वयव्यतिरेकसिद्धम्? इति विकल्प्य, आद्यं
दूषयति—**अविहितत्वादिति**। द्वितीयं दूषयति—**मिथ्याज्ञानत्वादिति**।
तत्त्वज्ञानस्यैव अविद्यानिवर्तकत्वमन्वयव्यतिरेकसिद्धम्, न मिथ्याज्ञानस्येत्यर्थः।
अथ वा, एकदेशिमतानुसारेण स्वर्गवत् कालान्तरभाविमोक्षसाधनमपरोक्षानुभवो
न भवतीत्याह—**अविहितत्वादिति**। स्वमतानुसारेण अविद्यानिवृत्तिलक्षणमोक्ष-
साधनत्वमपि न भवतीत्याह—**मिथ्याज्ञानत्वादिति**॥

लौकिकवैदिक[दृष्टान्तौ] क्रमेण दर्शयति—**काष्ठेति**। उपासनस्यैक-
रूप्याभावेऽपि फलस्यैकरूप्यं भविष्यति एकरूपफलोद्देशेन तद्विधानादिति
शङ्कते—**अथोपासनेति**। न्यायाविरुद्धेऽर्थे प्रामाण्ये सम्भवति तद्विरुद्धार्थता
न कल्पनीयेति परिहरति—**नैतदिति**। चित्तैकाग्र्यापरोक्षज्ञानद्वारेण उपासनस्य
मोक्षसाधनत्वे सम्भवति न्यायविरुद्धं साक्षादेकरूपमोक्षसाधनत्वं न कल्पनीय-
मित्यर्थः। भवत्पक्षे कथमुपासनावैषम्यम्? इति; तदाह—**क्षीयमाणेति**।

कर्मादिवैषम्यादेव उपासनावैषम्यात् अपरोक्षज्ञानोपपत्तेश्च । तस्मात् स्वर्गादिफलवत् उपचयापचयरूपिणी मुक्तिः स्यादिति विधीयमानोपासनासाध्यत्वात् सुखदुःखस्येव शरीरेन्द्रियादिदृष्टसामग्रीसाध्यत्वं
339 - 10 साधनक्षयात् क्षयिष्णुता च स्यादित्युपसंहरति—अतो न कर्तव्यशेषत्वेनेति॥

नन्वु श्रुत्यनुमाने सामान्यावलम्बिनी 'तद्यथेह कर्मजितः' 'यत् कृतकं तदनित्यम्' इति, अपुनरावृत्तिश्रुतिस्तु मोक्षविषया बलीयसी
339 - 12 इत्युक्तार्थमनुवदति—यत् पुनः न च पुनरावर्तते इति। तत्र तावत् विधिपरत्वे वेदान्तानां फलश्रुतयोऽर्थवादाः पर्णमयीत्वादिवत् । न च अर्थवादैरपुनरावृत्तिः प्रमातुं शक्यते। द्रव्य(गुण)संस्कारकर्मफलश्रुतिवत्। ननु नार्थवादत्वात् फलश्रुतयः प्रामाण्यं जहति, किंतु वर्तमानापदेशित्वेन योग्यानुपलब्धिविरोधात् । इहापि तर्हि 'न च पुनरावर्तते' इत्यप्राप्तप्रतिषेधात् न अर्थवादानां प्रामाण्यम् । तथा हि—'ब्रह्मलोकमभिसम्पद्यते' 'न च पुनरावर्तते' इत्यभिसम्पत्तिसमये पुनरावृत्तिरप्राप्ता प्रतिषिध्यते। 'न च पुनरावर्तिष्यते' इति भाविनी पुनरावृत्तिः प्रतिषिध्यत इति वाक्यार्थः कल्प्यत इति चेत्, न— श्रुतार्थपरित्यागेन अश्रुतार्थकल्पनायां 'यत् कृतकं तदनित्यम्' 'तद्यथेह कर्मजितः' इति श्रुत्यनुमानविरोधात् । एवमपुनरावृत्तिवाक्यान्तरेषु योजयितव्यम् ।

---

ता. क्षीयमाणकर्मणामप्रत्यक्षतया उपासनाया निरवधित्वप्रसङ्ग इत्यत आह— अपरोक्षेति। एवं मोक्षस्योपचयापचयात्मकत्वमुक्त्वा शरीरेन्द्रियसम्बन्धक्षयिष्णुत्वप्रसङ्गौ दर्शयति— विधीयमानेति । श्रुत्यनुमाने एव क्रमेण दर्शयति— तद्यथेहेति । अग्नीषोमीयादिशास्त्रवद्विशेषविषयत्वादपुनरावृत्तिश्रुतिर्बलीयसी इत्याह—अपुनरावृत्तीति । अर्थवादैरपि फलसिद्धिरस्तु रात्रिसत्रवत् इति; तत्राह—न चार्थवादैरिति । द्रव्ये फलश्रुतिः 'यस्य पर्णमयी' इत्यादि । संस्कारे 'यदाङ्क्ते चक्षुरेव' इत्यादि। कर्मणि 'वर्म वा एतद्यज्ञस्य क्रियते' इत्यादि । ननु अपुनरावृत्तेरयोग्यत्वान्न योग्यानुपलब्धिविरोध इत्याशङ्क्य, तर्ह्यप्राप्तप्रतिषेधप्रसङ्गान्न श्रुतेः प्रामाण्यमित्याह—इहापीति । अप्राप्तप्रतिषेधकत्वमेव दर्शयति—तथा हीति । अपुनरावृत्तिवाक्यान्तरेषु—'एतेन प्रतिपद्यमाना

तस्मादर्थवादमात्रमेतत् ॥

सामान्यश्रुत्यनुमानाभ्यां साध्यस्य मोक्षस्य अनित्यता दर्शिता।
इदानीमपुनरावृत्तिविशेषणसामर्थ्यादेव अन्तवत्तामाह—किञ्च तेषामिहेति। 340.1
'इमम्' 'इह' इति विशेषणं मानवान्तरे स्वतःप्राप्तामावृत्तिं दर्शयति।
ननु अस्मिन् कल्पेऽनावृत्तिं प्रतिपादयतो वाक्यस्य कल्पान्तरे पुनरा-
वृत्तिप्रतिपादने द्वैयर्थ्यात् वाक्यभेदः स्यादिति। अनभिज्ञोऽयं सर्व-
सङ्करवादी देवानां प्रियः। यतः सर्वेषां सविशेषणवाक्यानामिदं चोद्य-
मवतरति। अथ सविशेषणं वाक्यं विशिष्टमर्थं मुखतः प्रतिपादयति,
अर्थात्तु विशेष्यान्तरव्यावृत्तिः प्रमीयत इति न वाक्यभेदः; तर्हि इहापि
एतत्कल्पविशेषितानावृत्तिर्मुखतः प्रतिपाद्यते अर्थादपुनरावृत्तिरस्य क-
ल्पान्तरे निवार्यत इति न वाक्यभेदः। ननु कल्पान्तरेऽपि श्रुतिसामा-
न्यात् इह न पुनरावृत्तिरिति प्रतिषेधस्तुल्यः। सत्यम्। अस्माकं तावदस्मिन्
कल्पे प्रतिपन्नानां कल्पान्तरे पुनरावृत्तिर्विशेषणसामर्थ्यात् प्रमीयते
इदानीम्, कल्पान्तरप्रतिपत्तॄणामपि तस्मिन्ननावृत्तिप्रमितिश्चेत् स्यात् इत्थं
व्यवस्था कल्प्यते—अस्मिन् कल्पे प्रतिपन्नानां कल्पान्तरे पुनरावृत्तिः
कल्पान्तरे प्रतिपन्नानां तत्र अनावृत्तिरिति। अन्यथा विशेषणवैफल्या-
दिति ॥ 340-6

अपि च अभ्युपेत्य इत्यारभ्य तथा तद्धैतत् इत्यतः प्राक्तनग्रन्थस्य 341-3
अयमर्थः—शब्दादवगते ब्रह्मणि सुखसंवेदनत्वादभ्यासेन अपरोक्षीकृते
विधिमन्तरेण यत् साक्षात्करणं तत् ब्रह्मवेदनमित्युच्यते। तस्मिन्नुत्पन्ने
अनन्तरमेव अविद्यादिदोषनिवृत्तेर्युक्तं ब्रह्मसंवेदनेन समानकालत्वं फलस्य।
यदा पुनरुपासनैव अध्यारोपितात्मविषया विधीयमाना ब्रह्मसंवेदनमुच्यते

विशेषणसामर्थ्यात्   ता.

---

इमं मानवम्' इत्यादिषु। प्रतिपन्नानां—प्राप्तैश्वर्याणाम्। विशेषणसामर्थ्यात्
—इममिहेति विशेषणसामर्थ्यात् ॥

'तदात्मानमेवावेत्' 'ब्रह्म वेद' इत्यादिवाक्येषु वेदनशब्दस्यार्थमाह—अतः
शब्दादवगते इति। अपरोक्षतया[अ]विदितस्य स भवेदिति? तत्राह—अतः

तदा नैयोगिकफलस्य कालान्तरभावित्वान्न युक्तः समानकालतानिर्देशः। अतः शब्दादपि विदितस्य ब्रह्मणः स्वयमेव अपरोक्षज्ञानाय
341 - 3 प्रवृत्तेः फलजननात् प्राक् न कार्यानुप्रवेश इति। तथा तद्धैतत्पश्यन्नृषिर्वाम-
341 - 12 देव इत्यादिः किं च इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः॥

अपि च, ब्रह्मविद्याफलमविद्यानिवृत्तिं दर्शयन्ति। सा च अपरोक्षाध्यासलक्षणा तत्त्वापरोक्षज्ञानमन्तरेण न निवर्तते। यदा पुनरुपासनैव आरोपितरूपा तत्त्वज्ञानं स्यात् न तेन अविद्या निवर्तेत। अतस्तत्त्वज्ञानमेव प्रमाणजनितमविद्यानिवर्तकमित्यविद्यानिवृत्तिफलश्रवणात् ब्रह्मात्मनि
341 - 12 वेदान्ताः प्रमाणमित्याह—किं च तस्मै मृदितकषायायेत्यादि। ननु अविद्यानिवृत्तिरिह न श्रूयते। नैष दोषः—'तरति शोकमात्मवित्' इति शोकतरणनिमित्तमात्मज्ञानं प्रक्रम्य 'तमसः पारं दर्शयति' इत्युपसंहरन् यदि तमोनिवृत्तिमेव न ब्रवीति तदा शोकाद्यध्यासनिवृत्त्युपक्रमो न स्यात्। अतः शोकाद्युपादानानाद्यविद्यानिवृत्तिरेव 'तमसः पारं दर्शयति' इत्युक्तेति गम्यते। तथा 'अविद्यायाः परं पारं तारयसि' इत्यविद्यातिक्रमेण ब्रह्मप्राप्तिं ब्रुवन् अतिक्रमानुपपत्तेः निवृत्तिमेव दर्शयतीति॥

श्रुत्यनुसारेण अविद्यानिवृत्तिफलसिद्धये तत्त्वज्ञाननिष्ठं वेदान्तप्रमाणमित्युक्तम्। इदानीं तर्कशास्त्रानुसारेणापि मिथ्याज्ञाननिवृत्तिफलं
342 - 1 तत्त्वज्ञानमिति दर्शयति—इतश्चैतदेवमिति। अयमर्थः—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः इति। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गेषुद्वादशसु पदार्थेषु यदिदमनादिप्रवृत्तं मिथ्याज्ञानं तस्य आत्मपरमात्मशरीरेन्द्रियादिद्वादशपदार्थतत्त्वदर्शनवैमल्यादपाये तेषु रागद्वेषमोहा नोत्पद्यन्ते,

---

ता. शब्दादिति। सा चेत्यपि[ना] द्योत्यते। उपासनाज्ञानमेव तत्त्वज्ञानं किं न स्यात्? इति; तत्राह—यदा पुनरिति। अतत्त्वज्ञानमिति [वा] पदच्छेदः। आत्मशरीरेन्द्रियार्थेत्यत्र सूत्रे अर्थशब्देन पृथिव्यादयः तद्गुणाश्च कथ्यन्ते।

ततः प्रवर्तकाभावात् सुखदुःखफले प्रवृत्तिनिवृत्ती नोपजायेते, ततः प्रवृत्तिनिवृत्तिद्वारोपचितशुभाशुभव्यामिश्रकर्मशून्यतया ब्रह्मादिस्थावरान्तेषु योनिभेदेषु न जायते—शरीरसम्बन्धं न प्रतिपद्यत इत्यर्थः, ततः शरीराभावे सुखदुःखे नोत्पद्येते, इति मिथ्याज्ञानापायमेव मोक्षं दर्शयति। तथा वैशेषिकैरपि—द्रव्यगुणकर्मसामान्यविशेषसमवायेषु सालक्षण्यवैलक्षण्याभ्यां तत्त्वापरिज्ञानात् अनादिप्रवृत्तं मिथ्याज्ञानं तत्त्वपरिभावनया निवर्त्यते। ततश्च उत्तरोत्तराभावात् अपवर्ग इत्युक्तम्। तथा साङ्ख्ययोगैरपि दर्शितम्—द्रष्टृदृश्याविवेकलक्षणा अविद्या अनादिप्रवृत्ता तत्त्वज्ञानेन निवर्त्यते। ततश्च अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः प्रहीयन्ते। ततः प्रक्षीणक्लेशस्य प्रवृत्त्यनुदयादपवर्ग इति। सुगतैरपि उक्तम्—अनुसन्धानकल्पनया रागद्वेषादिदोषैः प्रवृत्तितत्फलोदयपर्यन्तैः विषयविभ्रमैश्च दूषितानि विज्ञानानि। तेषु च तत्त्वपरिभावनया निवृत्तेषु विभ्रमेषु विशुद्धविज्ञानचरमक्षणोदयो मोक्ष इति। तदेवमविद्यानिवृत्तौ मोक्षे प्रमाणजनितं तत्त्वज्ञानं विहाय कथमुपास्तिक्रिया मोक्षसाधनं कल्प्यते? इति ॥

मिथ्याज्ञाननिवर्तकं तत्त्वज्ञानम् ॥

ननु प्रदर्शितमन्यदन्यदेव

तथा हि—द्वादशपदार्थेषु तत्त्वपरिभावनाजनितेन सम्यग्ज्ञानेन अविद्या निवर्त्यते, पूर्वोपचितानि च कर्माणि तत्त्वपरिभावनाजनितसंक्लेशेन तत्प्रकर्षजनितेन आनन्देन वर्तमानस्य च उपभोगेन निवर्त्यन्ते, ततश्च कैवल्यमिति नैयायिकैरुक्तम् ॥

ता

---

जन्मनोऽप्रसक्तत्वात् कथं न जायते; इत्युक्तमिति; तत्राह—शरीरेति ॥

तत्त्वज्ञानस्य प्रतिमतं वैषम्यवदुपासनाज्ञानमपि मोक्षसाधनं किं न स्यात्? इति चोदयति—नन्विति। संसारहेतोः कर्मणो निवृत्त्यभावे कथं मोक्षः? इत्यत आह—पूर्वोपचितानीति। सुखदुःखयोरुपभोगेन धर्माधर्मयोः क्रमेण निवृत्तिं दर्शयति—तत्त्वपरिभावनेति ॥

वैशेषिकैरपि—पदार्थषट्कपरिभावनाजनितेन तत्त्वज्ञानेन ईश्वराभिध्यानानुगृहीतेन मिथ्याज्ञानं निवर्त्यते। ततो रागादयः क्रमेण परिहीयन्ते। ततश्च पूर्वोपचितदुरितानां पदार्थपरिभावनापरिक्लेशफलानामत्यन्तोच्छेदः। सुकृतानां च तत्त्वदर्शनवैमल्यानन्देन निवृत्तिः। ततः कैवल्यमिति दर्शितम्॥

योगास्तु प्रतिपेदिरे—असम्प्रज्ञातसमाधिजनितेन प्रकृतिपुरुषविवेकज्ञानेन पुरुषाकारमात्रपर्यवसितेन अविद्यास्मितारागद्वेषाभिनिवेशेषु क्षीयमाणेषु पूर्वोपचितकर्मसु च ऐकभविकेन न्यायेन क्षीयमाणेषु अपवृज्यत इति॥

सुगतैः प्रतिपन्नम्—क्षणिकस्वलक्षणदुःखमार्गासत्यभावनाजनितविशुद्धज्ञानलक्षणचरमक्षणोदयेन हीयमानेषु स्थायित्वाकार्यत्वप्रवृत्तिविषयविभ्रमेषु सन्तानोच्छेदो मोक्ष इति॥

342-3 तदेवं भिन्नविज्ञानसाध्यो मोक्ष इति; तत्राह—मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानादिति॥

ननु प्रदर्शिततत्त्वदर्शनेष्वपि मिथ्याज्ञाने प्रतिपक्षेषु ब्रह्मविज्ञान-
342-4 मेव किमिति निवर्तकं गृह्यते? इति चोदयति—कथं गम्यत इति। भेददर्शनस्य मिथ्याज्ञानविलसितत्वेन तत्प्रतिपक्षेण अद्वितीयब्रह्मात्म-
342-4 दर्शनेनैव तन्निवृत्तिः न यथोक्तभेददर्शनैः इति परिहरति—इन्द्रो मायाभिरित्यादिना। ननु अद्वितीयब्रह्मात्मैकत्वपरं न शास्त्रम्, तत्र तात्पर्याभावात्, किंतु जीवविलक्षणे प्रमाणान्तराविरुद्धे ब्रह्मणि शास्त्र-
342-7 प्रतिपन्ने सम्पदादिविषयाणि तादात्म्यवाक्यानीति पूर्वपक्षयति—अथापि
344-1 स्यादित्यारभ्य अत्रोत्तरम् इत्यतः प्राक्तनेन ग्रन्थेन। ग्रन्थस्तु स्पष्टार्थः। तत्रेदं वक्तव्यम्—किं प्रमाणान्तरविरोधात् सम्पदादिपरः पदसमन्वयः?

---

ता. असम्प्रज्ञातेति। ध्येयविषयवृत्त्यवस्थानं सम्प्रज्ञातस्समाधिः, वृत्त्युपरमे तत्संस्कारमात्रावशेषतया चित्तस्यावस्थानमसम्प्रज्ञात इति विभागः। सर्वेषां कर्मणामेकशरीरारम्भकत्वमैकभविकन्यायः। भेदावभासस्य का गतिः?

किं वा अर्थे तात्पर्याभावात्? इति। न तावत् प्रमाणान्तरविरोधः,
तयोस्तदगोचरत्वात्। भेदावभासेऽपि बिम्बप्रतिबिम्बन्यायावतारात्।
न च तात्पर्याभावात् अर्थपरत्वाभाव इत्याह—सम्पदादिरूपे हीत्यादिना॥ 344.1

तथा हि—'तत्त्वमसि' इति नवकृत्वोऽभ्यस्तस्य 'अनेन जीवे-
नात्मनानुप्रविश्य' इत्यैकात्म्यसिद्ध्येऽर्थवादो गृह्यते। 'अथ येऽन्यथाऽतो
विदुरन्यराजानस्ते क्षय्यलोका भवन्ति' इति भेददर्शनं निन्द्यते।
तथा 'अहं ब्रह्मास्मि' इत्यस्य 'स एष इह प्रविष्टः' इत्याद्यर्थवादः।
'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहम्' इत्यादिभेदप्रतिषेधश्च
तात्पर्यहेतुरुपादीयते। तथा 'एष त आत्मा' इति बहुकृत्वोऽभ्यस्तस्य
'नान्योऽतोऽस्ति द्रष्टा' इत्यादिभेदापवादेन तात्पर्यं ज्ञायते। तथा
'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः' इत्यस्य 'तत् सृष्ट्वा।
तदेवानुप्राविशत्' इत्याद्यर्थवादः। तथा 'उदरमन्तरं कुरुते। अथ तस्य भयं
भवति' इति भेददर्शनापवादः। तथा 'एतमेव पुरुषं ब्रह्म ततममपश्यत्'
इत्यस्य 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' इत्यर्थवादः॥

तदेवं सर्ववेदान्तेषु तत्र तत्र अवस्थात्रयपर्युदासेन ब्रह्मात्मैकत्वं
प्रतिपाद्यमानं द्रष्टव्यम्। न हि भेददर्शनापवादेन ब्रह्मण एव जीवा-
त्मना प्रवेशार्थवादेन च ब्रह्मात्मैकत्वं तत्र तत्र अभ्यस्यावस्थात्रयसंबन्ध-
विरोधनिराकरणेन च प्रतिपाद्यमानं तात्पर्यहीनमिति युक्तं वक्तुमिति॥

किं च, अविद्यानिवृत्तिर्ब्रह्मात्मभावश्च विद्याफलं श्रूयते। न च
सम्पदादिपरत्वे तदुपपद्यते; अन्यस्य अन्यात्मताविरोधात्, अप्रमा-
णत्वाच्च। अतः फलवचनसामर्थ्यादपि ब्रह्मात्मैकत्वपरः पदसमन्वय
इत्याह—तदवगमनिमित्तं चेति। उपसंहरति—तस्मान्न सम्पदादिवदिति॥ 344.3.6 ता.

---

इति; तत्राह—भेदावभासेऽपीति। एवं तात्पर्यलिङ्गसद्भावे तात्पर्यं
नास्तीति वक्तुं न शक्यत इ(ति तत्रा)[त्या]ह—न हीति। ब्रह्मभावानुपपत्ति-
माह—अन्यस्येति। अविद्यानिवृत्त्यनुपपत्तिमाह—अप्रमाणत्वाच्चेति॥

अत्र कश्चिदाह—ब्रह्मणो भिन्नाभिन्नोऽयं जीवः; ततश्च ब्रह्मणो नित्यमुक्तता जीवस्य च नित्यबद्धता व्यवस्थामश्नुते। अत्यन्ताभेदे तु ब्रह्मैव स्वसंसाराय कथं जगदुत्पादयेत्। विरुद्धा च विशुद्धस्य अशुद्धताप्रतिपत्तिरिति ॥

अत्रोच्यते—किमात्मिकेयं भिन्नाभिन्नता? न तावत् जातिव्यक्तिगुणगुणिकार्यकारणविशिष्टस्वरूपांशांशिभावनिबन्धना। जीवब्रह्मणोः तेषामभावात्। प्रकारान्तरेण भेदाभेदादर्शनात्। 'ममैवांशो जीवलोके' इति स्मृतेः अंशांशितेति चेत्, न—'निष्कलं निष्क्रियं' इति श्रुतिविरोधात्। 'पादोऽस्य सर्वा भूतानि' इति च अल्पतामात्रविवक्षयोक्तम्। वाक्यस्य ब्रह्मानन्त्यप्रतिपादनपरत्वात्। सांशत्वे च पटादिवत् अवयवारभ्यत्वप्रसङ्गात्। ननु स्वाभाविकी निरवयवता बुद्ध्याद्युपाधिनिमित्तं सांशत्वमिति चेत्, न तावदुपाधिना विदार्य पृथक् क्रियते जीवः। खड्गधारासमाविद्धेऽप्याकाशे निरवयवे भेदनादर्शनात्। उपाधिभिश्च स्वात्मानं विदार्य संसारमनुभावयता ब्रह्मणा स्वात्मनि व्यामोह एव प्रकटितः स्यात्। न च उपाधीनामन्यार्थतया सृष्टिः। अन्याभावात्। प्रागभिन्नानां जीवानामन्यत्वाभावात्। द्रव्येणैव

---

ता. भेदाभेदवादिमतमुत्थापयति—अत्रेति। तत्र प्रमाणमाह—ततश्चेति। स्रष्टृत्वान्यथानुपपत्तिरपि तत्र प्रमाणमित्याह—अत्यन्ताभेदे त्विति। लोकसिद्धप्रकारेण भिन्नाभिन्नत्वम्? उतान्येन? इति विकल्प्य, आद्यं दूषयति[न तावदिति। द्वितीयं दूषयति]—प्रकारान्तरेणेति। 'पादोऽस्य (विश्वा)[सर्वा] भूतानि' इति श्रुतेरंशतापि जीवस्य किं न स्यात्? इत्यत आह—पादोऽस्येति। श्रुतिद्वयाविरोधमाशङ्कते—नन्विति। अन्याभावात्। ब्रह्मव्यतिरिक्तचेतना(दावि)[भावादि]त्यर्थः। ननु जीवोऽन्यो विद्यते इति; तत्राह—प्रागिति। अन्तःकरणोत्पत्तेः प्राक् ब्रह्मणा अभिन्नानां जीवानामुत्पन्नान्तःकरणेनाप्यन्यत्वासम्भवादित्यर्थः। अन्तःकरणोत्पत्तेः प्रागपि भेदो विद्यते अन्तःकरणोत्पत्त्या स्पष्टतया भेदो व्यवह्रियते इति भेदस्य तत्कृतत्वव्यपदेश इति; तत्राह—द्रव्येणैवेति।

द्रव्यविदारणात्। कर्माविद्यासंस्कारानां सतामप्यनुपाधित्वात्। अथ भेदोऽनिष्पन्नोऽपि औपाधिको व्यज्यत इति; तर्हि अनादिरेव भेदः। स च जातिव्यक्तिभावादिनिबन्धनो ब्रह्मणि जीवे च न स्यात्। नील-पीतादिवत् स्वाभाविको भेदो द्रव्यत्वादिजातिनिबन्धनश्चाभेद इति चेत्, तर्हि तद्वदेव 'अयमात्मा ब्रह्म' इति सामानाधिकरण्यं न स्यात्, तस्यैव प्रवेशश्रुतयश्च बाध्येरन्। एकत्वानुमानं च दर्शितम्। न निष्पन्नः, नाप्यनादिः, किंतु उपाधिनिबन्धनस्तत्र प्रकाशते भेद इति चेत्; स तर्हि अतस्मिंस्तदारोपो विभ्रम एव स्यात्। न च प्रत्यक्षादिभिर्जीव-ब्रह्मभेदो गृह्यत इत्युक्तम्। आगमश्च 'नान्योऽतोऽस्ति द्रष्टा' इति भेदं प्रतिषेधति। अभेदवचनानि तानीति चेत्, मैवम्—'एष त आत्मा' इत्यादिना अभेदं प्रतिपाद्यैव पुनर्भेदस्य तत्रैव प्रतिषेधात्। कथं वा सत्य-(प्य)[पि]भेदे अविद्याकामकर्मव्यवस्था ?। न हि आकाशं घटेन अवच्छिद्य

---

ता०

द्रव्येणैव कुठारादिना द्रव्यस्य वेण्वादेः विदारणं भवति न तु व्यज्यत इत्यर्थः। कर्माविद्यानिबन्धन एव (भेदाभेदो)[भेदो [भवतु इत्याशङ्क्याह]— कर्माविद्येति। तत्र प्रलयावस्थायां सुषुप्तिवदनुपाधित्वादित्यर्थः। उपाधिजनितो भेदो महाप्रलयादावुपाधिविगमेऽपि विद्यत इति शङ्कते—अथेति। उपाधिवि-गमेऽपि संभवेनोपाधिनिमित्तत्वाभावात् भेदोऽनादिरेव स्यादिति परिहरति—तर्हीति। अस्तु तथैवेति, तत्राह–स चेति। नीलस्य पीतरूपत्वाभाववत् जीवस्य ब्रह्मभावो न स्यादिति दूषयति—तर्हीति। न निष्पन्नः। अग्निसंयोगात् घटे लौहित्यवत्। नाप्यनादिः। नीलपीतादिभेदवत्। भे(दं)[दप्रतिभासं] प्रति सामग्र्यनिरूपणादपि भेदो न वास्तवः इत्याह—न चेति। इत्युक्तमिति। तयोस्तदगोचरत्वादित्यत्रोक्तमित्यर्थः। भिन्नाभिन्न इत्यत्राभिन्नशब्दे(ना)[न] प्रतीयमानोऽर्थो 'नान्योऽतोऽस्ति' इत्यादिश्रुत्या प्रतिपाद्यत इति शङ्कते–अभेद-वचनानीति। भेदाङ्गीकारेऽप्यभेदस्य विद्यमानत्वान्न व्यवस्थासिद्धिरित्याह–कथं वेति। को दोषः ? इत्यत आह—न हीति। तथापि विरोधस्य तुल्यतया स

तदन्तर्धूमादिसमावेशने सति आकाशस्य धूमादियोगः परिहर्तुं शक्यते। ननु भेदात् व्यवस्थाऽपि विद्यते। तर्हि ब्रह्मणि अविद्यादिसंसर्गोऽसंसर्गश्च इत्युभयमपि स्यात्। ननु विरुद्धमिदमापद्यते। कोऽयं भेदाभेदवादिनो विरोधो नाम। एकोपाधौ एकस्यैव भावाभावोपगमात्। अभेदो नाभावः किं तु ऐक्यमेव धर्मान्तरमिति चेत्; तथापि 'अहं मनुष्यो' 'द्वौ चन्द्रौ' इत्यादौ ऐक्यभेदयोर्भेदैक्यज्ञानाभ्यां बाधदर्शनात् भेदाभेदौ विरुद्धौ एकत्र अभ्युपगच्छता किमिति भावाभावावविद्यादीनां ब्रह्मणि नाभ्युपगम्येयाताम्।

किं च, प्रत्येकं देहपटावयवेषु मलसंसृष्टेषु 'मलिनः पटः' 'अहं मलिनः' इति वा अवयविनि मलसंसर्गनिश्चयात् फलवचनानां च वर्तमानापदेशिनां प्रत्यक्षविरुद्धतया अर्थवादत्वात् सत्यपि भेदे जीवसमवायिभिर्मलैः अवयवि ब्रह्म मलभूयिष्ठमेवेति निश्चीयेत॥

किं च, ब्रह्मणि अविद्यादिमलसंसर्गमपि असहमानोऽतिभक्तिविलसितान्तःकरणः कथं तैरेव मलैरभेदं सहते। निरवद्यश्रुतिविरोधात् न अभेद इति चेत्, न—सर्वात्मत्वश्रुतेः। अत एव पापीयानयं पक्ष इत्युक्तम्॥

ननु उपाधिभेदेन व्यवस्थाप्यते—न—अर्थतो भेदनाभावे

---

ता. दोषः तदवस्थ इत्याह—**तथापीति**॥

(अङ्गाङ्गि)[अंशांशि]भावस्थले धर्मसाङ्कर्यस्य दृष्टत्वादपि न व्यवस्थासिद्धिरित्याह—**किं चेति**। **निश्चयात्** अंशे जीवे संसरति अंशि ब्रह्मापि संसारि स्यादेवेति शेषः। लोके तथा दृष्टत्वेऽपि 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः न अंशिनो ब्रह्मणो मलादिसम्बन्ध इत्याशङ्क्याह—**फलवचनानां चेति**। सर्वेणापि भिन्नाभिन्नतया मलसंसर्गः परिहर्तुं न शक्यत इत्याह—**किं च ब्रह्मणीति**। अभेदासहने कारणमाशङ्कते—**निरवद्येति**। अभेदश्रुतिसामर्थ्यादभेदोऽपि स्यादिति परिहरति—**न—सर्वेति**। ननु विरुद्धोऽर्थः कथमङ्गीक्रियते? इति; तत्राह—**अत एवेति**॥

परमार्थसत्यस्य संसारसंबन्धस्याभेदे सति व्यवस्थानुपपत्तेः। मिथ्याभेदेन तु मिथ्यासंसारव्यवस्था युज्यते। बिम्बप्रतिबिम्बयोः तथा दर्शनात् ॥

किं च, ब्रह्म सर्वान् जीवानात्मत्वेन पश्यति वा ? न वा ?। न चेत्, सर्वज्ञताहानिः। पश्यति चेत्, स्वात्मन्येव संसारं पश्येत्। ननु भेदमपि पश्यति। तर्हि ब्रह्म आत्मनि संसारं पश्यति न पश्यतीति स्यात् ॥

किं च, सत्यपि भेददर्शने मिथ्यातादात्म्याभिमानात् देहधर्मा-नात्मनि पश्यति, किंतु वक्तव्यं सत्येन अभेदाभिमानेन इति। न हि अभेदापरोक्ष्ये सति भेदोऽप्यपरोक्षोऽवभासमानो दृष्टः ॥

किं च, सर्वं च सत्यतयैव आत्मन्यपरोक्षतया सर्वाधारस्य सर्वज्ञस्य पश्यतो ब्रह्मणः सर्वसंसारसंबन्धः स्यात् ॥

किं च, ज्ञानध्यानसमाधिभिः एकस्मिन् उपाधौ एकस्य जीवस्य प्रलीयमानेऽपि न किंचित् प्रयोजनमस्ति। परिशिष्टसर्वोपाधितद्धर्मसम्बन्धप्रतिभासनात्। न च सर्वोपाधिविनिर्मोक्षः केनचिदपि ता.

---

उपाधिभेदेन श्रुतिविरोधपरिहार इति शङ्कते—नन्विति। परिहरति—न-अर्थत इति। आकाशस्य धूम्रतावदित्यर्थः। जीवब्रह्मणोरभेदस्य विद्यमानतया भवत्पक्षेऽपि स दोषस्समान इत्यत आह—मिथ्याभेदेन त्विति। ननु देहात्मनोः भेदस्य परोक्षतया देहधर्मानात्मनि पश्यतीति युक्तम्, इह तु भेदाभेदयोरुभयोरप्यपरोक्षत्वान्न ब्रह्मणि संसारबन्धः इति; तत्राह—(न हीति)[तर्हीति]। सर्वाभिन्नत्वाद्ब्रह्मण्येव संसारसम्बन्धः स्यादिति दूषणान्तरमाह—किं च सर्वं चेति। सर्वस्य तत्र विद्यमानत्वेऽपि सर्वस्यात्मनि विद्यमानतामाह—सर्वाधारस्येति। सर्वस्य तत्र विद्यमानत्वेऽपि तदपरिज्ञाने कथं संसारः ? इत्यत आह—सर्वज्ञस्येति। परोक्षतः सर्वज्ञत्वशङ्कां व्यावर्तयति—सर्वं चेति। स्वप्नप्रतीतितुल्यतामपाकरोति—सत्यतयैवेति ॥

सर्वात्मभावस्यैव मोक्षत्वात् मुक्तेः संसारानुबन्ध एव श्रेयानित्याह—किं चेति। तर्हि सर्वोपाधिप्रविलये मुच्यत इत्यत आह—न चेति। भवत्पक्षेऽपि

कर्तुं शक्यते। मम पुनरेकोपाधिपरित्यागेन बिम्बभूतब्रह्मात्मताऽपरोक्षावभासिनोऽपि प्रतिबिम्बश्यामत्वादिभिरिव जीवसंसारैर्न सम्बन्धः। मिथ्यात्वेन तत्त्वज्ञानप्रतिहतत्वात्। स्वप्नादिवच्च तत्त्वज्ञानेन सर्वोपाधिविनिर्मोक्षश्च युज्यते। वामदेवादिमुक्त्या इदानीं संसारानुपलब्धिः स्यादिति चेत्, एकैकमुक्तावपि अनन्तैरेव युगैः अनन्तानां जीवानां मुक्तत्वात् तुल्येदानीं संसारानुपलब्धिः। इदानीं संसारदर्शनं तु परस्यापि तुल्यम्। अनुपपत्तिश्चावयोः समाना। अतो निरुपाधिकचैतन्ये त्वयि ब्रह्मणि प्रत्यक्षे बन्धावभासे सोपाधिकचैतन्येषु तव मुक्ततावभासो विभ्रमः। तद्विषयश्रुत्यादीनां प्रत्यक्षविरुद्धतया अर्थवादत्वात्। निरुपाधिकचैतन्यप्रतिभासे त्वयि सोपाधिकचैतन्यभेदानां कल्पितत्वात्। कस्यैकस्य बन्धमोक्षौ इति तव तावत् सन्देहो न जायते। सोपाधिकचैतन्येषु मुक्तताभ्रमात् तद्वचनानां चार्थवादत्वात्। एवं प्रत्येकमात्मनो न सन्देहः। तस्मात् सर्वसङ्करवादिनो विभ्रमोऽयं अस्मत्पक्षे व्यवस्थेति ॥

तदेवं ब्रह्मावगमे विधिमन्तरेणैव अपरोक्षफलपर्यन्ते साध्यान्तरा-
344 . 8 भावात् न विधिसम्बन्ध इत्याह—तत्रैवं सतीति। किं तर्हि प्रमाणफलम्? इति;
344 . 10 तदाह—अतो मिथ्यैवेति। ननु प्रयोजनाभावात् ब्रह्म न विधिकर्म भवति? आहोस्वित् कारकत्वाभावात् इति?। प्रयोजनं तु साध्यो मोक्षो वक्ष्यते।

---

ता तुल्योऽयं दोष इत्यत आह—मम पुनरिति। यदुक्तं न च सर्वोपाधिविनिर्मोक्षः केनचिदपि कर्तुं शक्यत इति तदप्यस्मत्पक्षे न दूषणमित्याह— स्वप्नादिवदिति। ननु मुक्तिमभ्युपगम्य संसारानुपलब्धिश्चोद्यते? किं वा संसारोपलम्भेन प्रागेकस्यापि न मुक्तिः? इति विकल्प्य, आद्यं पक्षं दूषयति—एकैकेति। द्वितीयं दूषयति—इदानीमिति। भवत्पक्षे तर्हि को विशेषः? येन तत्परिग्रह इति; तत्राह—निरुपाधिकेति। ननु कथं मुक्ततावभासो विभ्रमः? श्रुतिप्रतिपन्नत्वात् इति; तत्राह—तद्विषयेति। एतेषां मध्ये कस्य तर्हि बन्धमोक्षाविति निर्णय इति; तत्राह—निरुपाधिकेति ॥

न कारकत्वाभावात्, विदिक्रियाकारकत्वादित्याह—ननु विदिक्रियाकर्मेति। 345-3
न चेति भाष्यमेव परिहारः। ननु विदिक्रियाकर्मत्वाभावे शास्त्रजन्यज्ञान-
व्यावर्तकत्वाभावात् न शास्त्रगम्यं ब्रह्मेति चोदयति—सोऽयं शान्तिकर्मणीति। 345-5
स्वयंप्रकाशमानतया स्वविषयप्रकाशजननानपेक्षस्यापि ब्रह्मणः शास्त्र-
जन्यज्ञानाकारतया तद्व्यावर्तकस्य अविद्यादिदोषनिवृत्तिफलवत्तया
शास्त्रप्रमेयं ब्रह्मेति प्रतिपादयति—अत्रोत्तरम्--न—अविद्याकल्पितेत्यादि। ननु 345-9
अनधिगतार्थप्रकाशनमन्तरेण न प्रमाणव्यापारस्य फलवत्तेत्यत्राह—
शास्त्रं हि सोऽयमित्यादीति। ननु तत्र वा विषयाधिगममन्तरेण कथं 345-10
निवर्त्यमात्रे प्रमाणव्यापारः? इति; अत आह—तथा हीति। उक्तमेतत् देव- 345-11
दत्तैक्यस्य अभिज्ञायामेव सिद्धत्वात् तदाकारेण प्रत्यभिज्ञावाक्याभ्यामुप-
जनितेन ज्ञानेन उपाधिपरिकल्पितभेदनिरासेन प्रत्यभिज्ञावाक्ययोः
प्रामाण्यमिति। ननु ब्रह्मात्मनि विपर्ययाभावात् न तन्निरासेनापि
प्रामाण्यमित्यत आह—तथा त्वंपदार्थोऽपीति। केन तर्हि प्रमाणाकारेण 346-1
विपर्यासनिरासः? इति; तदाह—तत्पदार्थैकतामुपगच्छन्निति। तत्त्वं- 346-2
पदाभ्यां लक्ष्यमाणं ब्रह्मात्मैकत्वं विज्ञानाकार इत्यर्थः। किं तर्हि तदाकार-
ज्ञानेन निवर्त्यते? इति; तदाह—अहमात्मकेदमंशोपाधिकृतेति। प्रमाण- 346-3
व्यापारे विषयाकारोदय एव प्रमीयमाणवस्तुसामर्थ्यात् विपर्यासनिरास
इत्याह——अर्थादिति॥ 346-3

ननु ज्ञातृसमवायिनी ज्ञेयाकारा संवित् प्रमाणफलम्, अनेन च
विपर्यासो निरस्यते, प्रकाशस्यैव अप्रकाशविरोधित्वात्, नित्ये च चैतन्य- 346-4
प्रकाशे न प्रमाणफलमस्ति; इत्यत आह—अवच्छिद्यमानानिदंप्रकाशः
प्रमाणफलमिति। प्रमाणेन विषयीकृतार्थगतं चैतन्यं प्रमाणफलमुच्यते,
न प्रमाणजन्यम्, लोकेऽप्यजन्यत्वात्, अतः प्रमातृप्रमाणप्रमेयावच्छिन्नं
चैतन्यं प्रमात्रादि निवर्तयति, अवच्छेदनिवृत्त्योः पूर्वोत्तरक्षणतया
विरोधाभावादिति। ननु फलं चेत् निवर्तकं निवर्त्यानन्तर्भूतत्वात्, 346-5
तर्हि फलं यावत्कालमेव स्थास्यतीति; नेत्याह—तदप्यवच्छेदक-

विनाशे इति । ननु शास्त्रजन्यज्ञानेन न प्रकाश्यते चेत् ब्रह्म
346 - 6 न शास्त्रगम्यं स्यात्; इत्यत आह—तेन प्रमात्रादिचतुष्टयस्येति । ननु
किमिति अविद्यानिवृत्तिरेव प्रमाणफलमुच्यते, विषयप्रकाशोऽपि प्रमाण-
347 - 2 फलमुच्यतामिति; तत्राह—तथा चैवंविधस्येति। 'अविज्ञातं विजान-
ताम्' 'यतो वाचो निवर्तन्ते' इत्यादि । ननु 'मनसैवानुद्रष्टव्यम्'
'तं त्वौपनिषदं पुरुषम्' इति ज्ञानक्रियाकर्मत्वमपि श्रूयते । नैष
दोषः—वेदान्तजनितापरोक्षज्ञानस्य आकारसमर्पकतया व्यावर्तकत्वं शास्त्र-
प्रमेयत्वं नाम, ज्ञानजन्यप्रकाशातिशयशून्यत्वमविषयता नाम, इति
व्यवस्थोपपत्तेः । न हि प्रकाशगुणे पुनः प्रकाशगुणान्तरोदयः इति । ननु
अविद्यानिवृत्तेरपि ज्ञानसाध्यत्वात् मोक्षस्य अनित्यतेति; नेत्याह—
347 - 3 एवं च नित्यमुक्तेति ॥

ननु कोऽयं जीवो नाम? यस्य स्वरूपं त्वंपदेन लक्ष्यमाणं ब्रह्मैव वाक्यार्थः सम्पद्यते ॥

ब्रह्मैवाविद्याप्रतिबिम्बितमिति वदामः। ततश्च त्वंपदेन अशेषोपाधिनिराकरणेन आत्मस्वरूपमेव लक्ष्यमाणं तत्पदोपलक्ष्यं ब्रह्मैव पदद्वयसामर्थ्यात् सम्पद्यते । न चैतत् उपाधिद्वयनिराकरणेन विशुद्धब्रह्मात्मज्ञानमेकेनैव पदेन लभ्यते । विरोधानुत्पत्तेः ॥

ननु भिन्नाभिन्नता वाक्यार्थः किं न स्यात्?।

न—तथा सति शरीरेन्द्रियविशिष्टस्यैव त्वंपदार्थस्य ब्रह्मणो

---

ता. टीकाकारोक्तमन्त्रब्राह्मणे दर्शयति—अविज्ञातमिति । ज्ञानकर्मत्वं शास्त्रविषयत्वं च श्रुतिरेव दर्शयतीति चोदयति—नन्विति । व्यावर्तकत्वम्—संविदवच्छेदकत्वम् । न केवलं शास्त्रसामर्थ्यादियं व्यवस्था, न्यायतोऽपीत्याह—न हीति ॥

जीवस्वरूपस्य कः प्रसङ्गः? इत्यत आह—यस्येति । स्वरूपस्यैकत्वेनैकपदेनैव तस्य लाभसम्भवात् किं पदद्वयेन? इत्यत आह—न चैतदिति। पदद्वयस्यापुनरुक्तार्थत्वसिद्ध्ये भिन्नाभिन्नमेष्टव्यमिति चोदयति—नन्विति । तर्हि भिन्नाभिन्नत्वविषयवाक्यार्थज्ञानेन शरीराध्यासनिवृत्तिर्न स्यादिति परहरति—

भिन्नाभिन्नत्वात् तथैव वाक्यार्थसिद्धेः लक्षणया ब्रह्मात्मज्ञानेन अध्यास-बाधो न स्यात् । वर्तमानापदेशिनां फलवचनानां योग्यानुपलब्धिबाधात् सत्यपि तत्त्वज्ञाने न शास्त्रात् बन्धनिवृत्त्यवगमः । भिन्नाभिन्ने च वाक्यार्थे न तत्त्वज्ञानात् भेदांशनिवृत्तिः । तस्य स्वविषयानाशकत्वात् । कर्मोपासनापरोक्षानुभवात् निवृत्तिकल्पना भिन्नाभिन्नविषयागमविरुद्धा । आगमस्य सर्वकालं भेदाभेदविषयत्वात् । यत्तु अभेदांशेन ज्ञान-मोक्षादिव्यवहारः भेदांशेन कर्मविद्यादिव्यवहारः इति व्यवस्था कल्प्यते; तत् मन्दचेतनोपच्छन्दनमात्रम् । तथा हि—यदि भेदाभेदाभ्यामंशी जीवोऽभेदांशश्च ब्रह्मैव स्यात् तदा सावयवो जीवो जीवांशश्च ब्रह्मेति पण्डितम्मन्यस्य विपरीतोऽर्थः सम्पद्येत । अभेदांशस्य अब्रह्मत्वे अत्यन्तभेद एव स्यात् । न च अंशद्वयसमुदायो जीवः ; अवस्तुत्वप्रसङ्गात् । न चाभेदांश एव जीवः ; ब्रह्मण एव जीवत्वप्रसङ्गात् । न च उभावंशौ; जीवद्वयप्रसङ्गात् । न च भेदांश एव जीवः ; अत्यन्तभेदप्रसङ्गात् , भेदाभेदांशावभिन्नौ जीव तत्र तत्त्वज्ञानमोक्षादिव्यवहारासिद्धिः । ता.

---

न—तथेति ॥

ननु [न] युक्तितो भेदाभेदज्ञानादध्यासनिरासः, किं तु श्रुतिसाम-र्थ्यादित्यत आह—**वर्तमानापदेशिनामिति** । 'भिद्यते हृदयग्रन्थिः' इत्यादीनाम् । आद्ये संसारावस्थातो न मुक्त्यवस्थायां भेदस्यानुवृत्तिः ? किं वा निवृत्तिः ? । आद्ये संसारावस्थातो न विशेषः । द्वितीये दूषणमाह—**भिन्नाभिन्ने चेति** । कर्मणा उपासनाजनिता-परोक्षानुभवेन च निवृत्तिमाशङ्क्याह—**कर्मोपासनेति** । किं भेदाभेदाभ्यामंशी जीवः ? किं वा अंशद्वयसमुदायः ? इति विकल्प्य, प्रथमपक्षे किं अभेदांशो ब्रह्म ? किं वा ततोऽर्थान्तरमिति विकल्प्य, आद्य दूषयति [**यदि भेदाभेदा-भ्यामिति**] अभेदांशस्य अर्थान्तरत्वे दूषणमाह—**अभेदांशस्येति** । समुदायपक्षे दूषणमाह—**न चेति** । मा भूत् समुदायः अंशद्वयमेव जीव इत्याशङ्क्य, किमभेदांश एव जीवः किं वा प्रत्येकमंशद्वयं उत भेदांश एवेति विकल्प्य, क्रमेण दूषयति—**न च अभेदांश इत्यादिना** । भवतु को दोषः ? इत्यत आह—**तत्रेति** । अत्यन्तभेदपक्षे 'अहं ब्रह्मास्मि' इति तत्वज्ञानस्य तत्साध्य-

इति चेत्; यद्यभिन्नावेव जीवः तर्हि ब्रह्मैव जीव इति कुतो बन्धमोक्षव्यवहारव्यवस्था। अथ भेदाभेदांशौ परस्परं भिन्नाभिन्नाविति मतम्, नैवम्—भेदाद्यनवस्थाप्रसङ्गात्। किं च, अंशिनो वा अंशद्वयसमुदायस्य वा परस्पराभिन्नांशद्वयस्य वा जीवत्वे ब्रह्मणो जीवांशत्वं परिहर्तुं न शक्यते। किं च कस्यायं शास्त्रोपदेशः? । न तावदभेदांशस्य; तस्य ब्रह्मस्वरूपतया उपदेशानपेक्षत्वात्। नापि भेदांशस्य उपदेशः; 'अहं ब्रह्मास्मि' इति प्रतिपत्त्ययोगात्। न च भेदांशस्य पुनरभेदः सम्भवति; विरोधात्, ब्रह्मण्येव संसारप्रसङ्गाच्च। कस्य चायमविद्यादोषः? । न तावदभेदांशस्य; ब्रह्मण्येव प्रसङ्गात्। नापि भेदांशस्य; उपाधिजननात् प्राक् भेदाभावात्। स्वत एव भेदांशेऽशिनि वा जीवे बन्धदोष इति चेत्, तद्विनाशे जीवनाशः स्यात्। मोक्षे भेदांशविनाशादभेदांशस्य नित्यमुक्तत्वात् कस्यायं मोक्ष उपदिश्यते। तत्रापि भिन्नाभिन्नं चेत्, 'ब्रह्म वेद ब्रह्मैव भवति' इत्येवकारविरोधः संसारादविशेषश्च स्यात्॥

किं च, अयं सर्वत्र संकीर्णं वस्तु प्रतिपद्यमानः स्वर्गनरकबन्धमोक्षादीन् साङ्कर्येण व्यवस्थापयितुं प्रवृत्तः कथं व्युत्पन्नमतिषु नापत्रपेत। भेदेनैव सर्वं व्यवस्थाप्यते चेत्, किमनेन अभेदेन वन्ध्यायमानेन स्वप्रयुक्तकार्यानिमित्तेन कल्पितेन धर्मिप्रतियोगिव्यतिरेकेण भेदोपाधे-

---

ता. मोक्षस्य चासिद्धिरित्यर्थः। परस्पराभिन्नमंशद्वयं जीवः? किं वा भिन्नाभिन्नम्? इति विकल्प्य, क्रमेण दूषयति—**यदीति**। [**भेदाद्यनवस्थेति**] भेदाभेदांशयोः प्रत्येकं भेदांशस्याभेदांशस्य चानन्तस्य स्वीकारादनवस्थेत्यर्थः। **ब्रह्मण्येव संसारेति**। अभेदांशस्य ब्रह्मत्वे भेदांशस्य तत्रान्तर्भावे ब्रह्मण्येव संसारः स्यादित्यर्थः। मोक्षदशायामपि भेदाभेदयोरभ्युपगम इति शङ्कते—**तत्रापीति**॥

अभेदस्य स्वाभाविकत्वात् भेदस्य धर्मिप्रतियोगिसापेक्षत्वाच्च भेदाभाव इत्याह—**धर्मिप्रतियोगीति**। अस्तु तर्ह्युपाधिनिमित्तो भेदाभेदः इति; तत्राह—

रभावात्। उपाधिभेदेन भेदाभेदव्यवस्था तु एकस्य भेदाभेदौ निवारयति
धर्मिप्रतियोगिभेदात्। शास्त्रं पुनः 'नान्योऽतोस्ति द्रष्टा' इति भेदोपमर्दे-
नैव अभेदं प्रतिपादयति। 'एष त आत्मा' इति च। न च सत्त्वादि-
सामान्यद्वारेण जीवब्रह्मणोरभेदः। अनुमानेनैव तत्सिद्धेः शास्त्रानपेक्ष-
णात्। ननु अत्यन्ताभेदवादिनः तवैव सर्वं संकीर्येत, न मम, भेदस्य
अभ्युपगमात्। नैवम्—कार्यप्रपञ्चस्य अनिरूपितस्वभावतया यथावभा-
सं भेदादिव्यवस्थोपगमात्। आत्मन एव अभेदोपगमात्। तस्मात्
मन्दमतिसन्तोषमात्रप्रयोजनतया बहुवेणुभारपीडितचेतसा अयं भेदा-
भेदपक्षः समादीयत इति॥

तस्मादेकमेव ब्रह्म देवदत्तवदुपाधिभेदनिमित्तविभागपरामर्शेन
प्रत्यस्तमितविभागं वाक्येन प्रतिपाद्यत इति शोभनम्॥ 347.5

यस्य तूत्पाद्यो मोक्षः इत्यादिना उत्तरस्य भाष्यसमुदायस्य
तात्पर्यमाह। ननु ब्रह्मणोऽपि कारकत्वसम्भवात् कथं न सम्भवति 347.9
क्रिया इत्याह—कथमिति। तत्रेदं वक्तव्यम्—किं यागादिवत् कर्तृसम-
वेतापूर्वादिफलदानाय ज्ञानं विधीयते? किं वा कर्मकारकातिशयफलाय?
इति। न तावत् पूर्वः कल्पः। 'न—कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्' 347.9
इत्यारभ्य निरस्तत्वात्। नाप्युत्तरः कल्प इत्याह—यदि तावदुत्पाद्य
इत्यादिना॥

अत्र केचिदाहुः—उत्पाद्यत्वेऽपि मोक्षस्य नानित्यतादोषः; क्रिया-
साध्यस्यैव अनित्यत्वात्। मोक्षस्य ज्ञानमात्रसाध्यत्वात्। न च ज्ञान-
मात्रसाध्यस्य अनित्यत्वं दृष्टम्। न च अविद्यानिवृत्तिमात्रमेव ज्ञानसा-
ध्यम्; ब्रह्मभावस्यापि साध्यत्वात्। ननु जीवस्य ब्रह्मभावः स्वाभाविको
न साधनीयः। न—तादात्म्यस्यैव स्वाभाविकत्वात्। भेदतावन्मात्र- ता.

---

उपाधिभेदेनेति। इदानीं स्वपक्षमुपसंहरति—[तस्मादिति।]
अत्र केचिदित्यादिना [परपक्ष उपक्षिप्यते।] अविद्यानिवृत्तेर्ज्ञान-
मात्रसाध्यतया मोक्षरूपत्वमङ्गीक्रियत इति; तत्राह—न चेति। तादात्म्यब्रह्म-
भावयोः कथं विशेषः? इति। लक्षणभेदादित्याह—भेदतावन्मात्रेति।

विरोधः तादात्म्यं नाम। तद्भावस्तु ब्रह्मतावन्मात्रता जीवस्य ज्ञानेन साध्यते। 'तरति शोकमात्मवित्' 'ब्रह्म वेद ब्रह्मैव भवति' इत्युभयविधश्रुतिसामर्थ्यादिति ॥

अत्रोच्यते—किं शास्त्रजनितसम्यग्ज्ञानेन तादात्म्यविषयेण मोक्षः साध्यते? किं वा तद्भावविषयेण? इति। न तावत् तद्भावविषयेण; तस्य नित्यसिद्धताप्रसङ्गात्। यदि तादात्म्यविषयेण; तत्रापि निवृत्ते तादात्म्ये तद्भावः साध्यते, न वेति वक्तव्यम्। निवृत्ते चेत्, ज्ञानस्य स्वविषयविनाशकत्वं दर्शितं स्यात्। ज्ञाननिवर्त्यत्वे च अज्ञानमेव तादात्म्यमापद्येत। अनिवृत्ते तु तादात्म्ये तद्भावो नोपपद्यते। न हि तावन्मात्रता तद्विरोधिता च युगपत् स्यातामिति ॥

किं च, तादात्म्यनिवृत्तिरेव तद्भावः? किं वा अन्यः? इति वक्तव्यम्। निवृत्तिरेव चेत्, अविद्यानिवृत्तिरेव मोक्ष इत्युक्तं स्यात्। अन्यश्चेत्, तर्हि तादात्म्यं तद्भावं च अन्तरेण रूपान्तरं वक्तव्यम्। न हि जीवब्रह्मणोः तादात्म्यतद्भावव्यतिरेकेण अत्यन्तभेदात् अन्यत् रूपान्तरं शक्यते निरूपयितुम्। कश्च अयं तद्भावो नाम?। न तावत् ब्रह्मैव; असाध्यत्वात्। अत एव न जीवोऽपि। न च तृतीयश्चेतनोऽचेतनो वा तद्भावो निरूपयितुं शक्यः। किं च, यदि तादात्म्यलक्षणातिरेकविशिष्टश्चेज्जीवः, तद्विनाशे विनाशमियात्। निष्कृष्टतादात्म्यश्चेज्जीवः, ब्रह्ममात्रमेव स्यात्। अत्यन्तभेदानङ्गीकारात्। तस्मात् तत्तादात्म्यस्य तद्भावः शास्त्रयुक्तिहीनः। न च तत्त्वंपदाभ्यां लक्ष्यमाणयोः जीवब्रह्मणोः

---

ता. भेदस्पृष्टोऽभेदः तादात्म्यम्, तद्भावः पुनः ऐक्यमिति विभागः। तत्र प्रमाणमाह—**तरतीति** ॥

उच्यतां तर्हि रूपान्तरम्, को दोषः इति; तत्राह—**न हीति**। **असाध्यत्वात्**। सिद्धत्वेनासाध्यत्वादिति यावत्। अतिरेकेण विशिष्टो जीवः? किं वोपलक्षितः? इति विकल्प्य, आद्ये दोषमाह—**किं च इति**। उपलक्षणपक्षे दोषमाह—**निष्कृष्टेति**। ननु कथं शास्त्रहीनत्वम्? 'तत्त्वमसि' इति तादात्म्यस्य 'ब्रह्मैव भवति' इति ब्रह्मभावस्य प्रतीतेरित्यत आह—**न चेति**। एकस्यैव वस्तुनो

तादात्म्यं प्रतीयते; भिन्नोपाधिपरामर्शेन एकस्य वस्तुनो लक्ष्यमाणत्वात्। न च एकेनैव पदेन तस्य लक्षणायां भेदावभासो निवर्तते। फल-श्रुतयश्च अविद्यानिवृत्तौ योजयितुं शक्यन्ते। न च ज्ञानसाध्यस्य नित्यतालाभः। संस्कारस्य तज्जन्यस्य अनित्यतादर्शनात्। न च संस्कारस्यापि क्रियाजन्यता। संस्कारान्तरवत् स्मृतिहेतुत्वायोगात् अन्वयव्यतिरेकविरोधाच्च। अब्रह्मज्ञानस्य साध्यत्वात् क्रियाजन्यतेति चेत्, न—क्रियायामनैकान्तिकत्वात्। तस्मात् अभूत्वा भवनमेव अनित्यताहेतुरिति ॥

तर्हि तृतीयं फलं क्रियासाध्यमिष्यतामिति शङ्कते—अथानित्य- 348 - 2
त्वपरिहारायेति ॥

तत्रेदं वक्तव्यम्—किं ब्रह्म प्रत्यगात्मभूतं व्यतिरिक्तं वा ?। व्यतिरेकेऽपि सर्वगतं वा ? प्रदेशान्तरवर्ति वा ब्रह्म ? इति। तादात्म्ये 348 - 3
दूषणमाह—तदपि नेति। व्यतिरेके, सर्वगतं चेत् संयोगव्यतिरिक्त- 348 - 4
प्राप्त्यभावात् संयोगो नित्यसिद्ध इत्याह—व्यतिरेकेऽपीति। प्रदेशवर्तित्वं 348 - 5
शङ्कते—अथ विकारावर्तिन इति। तत्र वक्तव्यम्—किं विकारसंस्पर्श-परिहाराय प्रदेशवर्तित्वमुच्यते ? किं वा शास्त्रसामर्थ्यात् ? इति। शास्त्रं ता.

---

लक्ष्यमाणतायामेकेनैव पदेन तत्सिद्धेः पदान्तरस्य वैयर्थ्यमित्यत आह—फल-न चैकेनैवेति। ननु उभयोः साध्यत्वे श्रुतिः प्रमाणमुक्तेति, तत्राह—फलश्रुत-श्रुतयश्चेति। ननु ब्रह्मभावो ज्ञानसाध्यः श्रूयत इत्याशङ्क्य, ब्रह्मभावव्यवधाय-काविद्यानिवृत्तिद्वारा तस्य साध्यत्वात् मैवमिति वा परिहरति—फलश्रुत-यश्चेति। ज्ञानसाध्य(त्व)[स्य]नित्यत्वमिति यदुक्तम्, तत्राह—न च ज्ञानेति। तत्रापि नाशलक्षणक्रि(यायास्सं)[यया सं]स्कारस्साध्यो न ज्ञानेन इत्याशङ्क्याह—न च संस्कारेति। संस्कारान्तरवत्। वेगस्थितस्थापकवदित्यर्थः। प्रध्वंसस्य कारकत्वाभावात्, संस्कारस्य तत्साध्यत्वे ज्ञानान्वयव्यतिरेकविरोधश्च स्यादित्याह—अन्वयव्यतिरेकेति। ब्रह्मज्ञानेतरसाध्यत्वात् संस्कारस्य क्रिया-साध्यत्वमित्याशङ्क्य, मैवमिति परिहरति—अब्रह्मज्ञानस्येति ॥

पुनः सर्वगतत्वमेव दर्शयति, न च सर्वगतत्वेऽपि विकारसंस्पर्शः
348 - 7 इत्याह—न—विकारदेशेऽपीति । अथ सर्वगतत्वस्य औपचारिकत्वात्
348 - 8 प्रदेशविशेषवर्त्येव ब्रह्मेति शङ्कते—अथ विकारावर्त्येवेति । न—मध्यम-
परिमाणस्य वस्तुनः पृथिव्यादिवत् सावयवत्वात् । दूषणविभागज्ञानाय
348-9-11 विकल्पयति—सा तर्हि तत्प्राप्तिरिति । प्रथमे कल्पे दूषणमाह—तदा
स्वरूपनाश इति । कथम् ? । तत्र तावज्जीवस्य ब्रह्मभावः ब्रह्मैववाजीवो वा
न सम्भवति असाध्यत्वात् । नापि जीवब्रह्मभ्यामारभ्यमाणं द्रव्या-
न्तरम् ; विनाशित्वप्रसङ्गात्, सर्वगतस्य ब्रह्मणोऽवयवत्वायोगात् । नापि
जीवब्रह्मणोस्तादात्म्यं नाम कश्चित् सम्बन्धः ; भिन्नद्रव्ययोः संयोगाति-
रिक्तसम्बन्धाभावात् । नापि जीवेऽणुपरिमाणेऽवस्थिते ब्रह्मस्वरूपापत्तिः ;
विरोधात् । अनवस्थिते च परिमाणे द्रव्यस्वरूपनाशः इति । द्वितीयेऽपि
348 - 11 कल्पे दूषणमाह—संयोगस्येति । ननु शास्त्रसामर्थ्यात् अपुनरावृत्तौ
349 - 1 कथं तर्केण पुनरावृत्तिः साध्यते ? तत्राह—न च अपुनरावृत्तिश्रुतिरिति ।
यथाश्रुतार्थे अप्राप्तप्रतिषेधात् । 'नावर्तिष्यते' इति कल्पनायाः
कृतकत्वानुमानविरोधात् । तस्यैव च स्वरूपेण अवस्थाने 'स स्वराड्-
भवति' इति श्रुतेरनेकेश्वरप्रसङ्गात् । तस्मात् न प्रदेशान्तरवर्तिब्रह्म-
प्राप्तिरिति ॥

ननु 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रूयते । तर्हि प्रतीकालम्ब-
नानामपि मूर्धन्यनाड्यैव अमानवपुरुषात् गच्छताममृतत्वं स्यात् ।

---

ता. विकारसंस्पर्शपरिहारायेति पक्षमाशंक्य परिहरति—न चेति । सर्व-
गतत्वश्रुतेरौपचारिकत्वात् 'अथ यदतः परो दिवः' इति श्रुतेरनौपचारि-
कत्वादित्यर्थः । टीकातो बहिरेव दूषणमाह—न—मध्यमेति । सर्वगतस्य
ब्रह्मण इति । प्रदेशवर्तिब्रह्मपक्षेऽपि ब्रह्मणस्सर्वजगदुपादानकारणतया कारणस्य
कार्येऽन्वयात् सर्वगतत्वमापादनीयम् । यथाश्रुतार्थः स्वीक्रियते ? किं वा
कल्प्योऽर्थः ? इति विकल्प्य, उभयत्र [क्रमेण] दूषणमाह—यथाश्रुतार्थे इति ।
कोशकारवदाकारावस्थानमाशङ्क्याह—तस्यैव चेति ॥

श्रुत्यैव प्रदेशान्तरवर्तिब्रह्मप्राप्त्यवगमात् तर्केण तस्या बाधो न युक्त इति
शङ्कते—नन्विति । (किं) अमृतत्वं स्या[दिति ।] आभूतसम्प्लवस्थानविषय-

अविशेषश्रवणात्। ननु 'स एनान् ब्रह्म गमयति' इत्यर्चिरादिना गच्छतां ब्रह्मप्राप्तिः श्रूयते। न—कार्यब्रह्मविषयत्वात्। ननु ब्रह्मशब्दार्थस्य मुख्यत्वात् परमेव ब्रह्म गम्यते। न—यदि तावत् वृद्धव्यवहारे प्रयोगात् मुख्यता अभिधीयते तर्हि कार्यब्रह्मण्यपि रूढ एवायं शब्दो भवति। अथ अवयवार्थानुगमेन अर्थमुख्यता अभिधीयते। नैवम्—एकस्य शब्दस्य युगपत् रूढियोगवृत्तिद्वयोपादानायोगात्। प्रयोगमुख्यत्वे कार्यब्रह्मैव गम्यते। किं च, 'स एनान् ब्रह्मलोकान् गमयति' इति ब्रह्मलोकशब्दात् बहुवचनात् 'तेषु पराः परावतो वसन्ति' इत्यधिकरणाधिकर्तव्यताश्रवणात् 'तस्मिन् वसन्ति शाश्वतीः समाः' इति कालपरिच्छेदश्रवणात् 'तृतीयस्यामितो दिवि' इति सङ्ख्याद्युशब्दयोः श्रवणात् तथा ऐरंमदीयस्य सरसः अश्वत्थस्य सोमसवनस्य अपराजितायाश्च पुरो हिरण्मयस्य च वेश्मनः अरस्य ण्यस्य चार्णवस्य पर्यङ्कादेश्च भोग्यवस्तुभेदस्य श्रवणात् 'प्रजापतेः सभां वेश्म प्रपद्ये' इति प्रजापतिसभावेश्मनां श्रवणाच्च कार्यब्रह्मैव अर्चिरादिना गम्यत इति प्रतीयते। न च ब्रह्मैव लोक इति समासः। ब्रह्मलोकशब्दस्य सत्यलोके रूढत्वात्। यौगिकत्वेऽपि तत्र प्रथमतरबुद्धिहेतुत्वात्। ब्रह्मणि लोकशब्दविरोधात्।   ता.

---

तया अमृतत्वश्रुतिरौपचारिकीति भावः। किं प्रयोगमुख्यत्वम्? किं वा अर्थतो मुख्यत्वमिति विकल्प्य, आद्यं दूषयति—यदि तावदिति। द्वितीयमाशङ्कते—अथेति। तदा किं रूढियोगयोरुभयोः परिग्रहः? किं वा रूढेरेव? इति विकल्प्य, आद्यं दूषयति—नैवमिति। द्वितीयं दूषयति—प्रयोगमुख्यत्वे इति। ब्रह्मशब्दस्य कार्यब्रह्मपरत्वे हेत्वन्तराण्याह—किञ्चेति। ननु ब्रह्मणो लोको ब्रह्मलोक इति योगवृत्त्या ब्रह्मलोकशब्दोऽपि सत्यलोके वर्तते, ततश्च निषादस्थपत्यधिकरणन्यायेन षष्ठीसमासात् कर्मधारयसमासो बलीयानाश्रयितव्य इत्याशङ्क्याह—यौगिकत्वेऽपीति। दूषणान्तरमाह—ब्रह्मणीति। न हि ब्रह्मणो लोकत्वं संभवति। न च लोक्यत इति व्युत्पत्त्या ब्रह्मण्यपि लोकशब्दप्रवृत्तिरिति युक्तम्; योगात् रूढेर्बलीयस्त्वादिति

न च एतेषां कार्यब्रह्मलिङ्गानामपबाधया ब्रह्मशब्दस्य एकस्य प्रयोगमुख्यत्वातिरिक्तमर्थमुख्यत्वमप्युपादातुं युक्तम्। प्रजापतिशब्दस्य कार्ये ब्रह्मणि रूढत्वात्। लोकशब्दस्य च भोगभूमिविशेषवाचित्वात् ॥

किं च, पञ्चाग्निविदामपि परब्रह्मप्राप्तिरस्मिन् पक्षे स्यात्। न च 'स एनान् ब्रह्म गमयति' इत्येतच्छब्दः पञ्चाग्निविदतिरिक्तान् परामृशतीति युक्तम्। पञ्चाग्निविदामेव प्राधान्येन प्रकृतत्वात् तेषामनिर्दिष्टफलत्वप्रसङ्गात् ॥

किं च, गायत्रीशाण्डिल्यषोडशकलोपकोसलवैश्वानरभूमदहरपर्यङ्कविद्यानामेकरूपैव ब्रह्मप्राप्तिः फलं आहोस्विदुपचयापचयरूपं इति वक्तव्यम्। एकरूपफलत्वे गुणोपचयापचयात् उपासनोपचयापचयौ व्यर्थौ स्याताम्। न हि अग्निहोत्राद्यनुष्ठानोपचयात् फलोपचयो न जायते। अथ फलोपचयापचयावपीष्येयाताम्, तर्हि न विकारासंस्पर्शिब्रह्मप्राप्तिः। तत्र तदभावात् ॥

किं च, वैश्वानरोपासनाफलं त्रैलोक्यापत्तिरिष्यते वा न वेति वक्तव्यम्। इष्यते चेत्, विकारासंसृष्टे ब्रह्मणि कथं त्रैलोक्यात्मताफलप्राप्तिः। न चेदिष्यते, 'तं यथा यथोपासते' इति श्रुतिविरोधः स्यात् ॥

किं च, पित्रादिसङ्कल्पैः विकारासंस्पृष्टे ब्रह्मण्युपभोगः स्यात् न वेति वक्तव्यम्। न चेत्, पित्रादिसङ्कल्पश्रुतिविरोधः। स्याच्चेत्, विकारावर्ति ब्रह्म पित्रादियुक्तं स्यात् ॥

किं च, विकारावर्तिब्रह्म प्राप्तोऽपि ब्रह्मैवेति 'मनसैतान् कामान् पश्यन् रमते' 'तेन पितृलोकेन सम्पन्नो महीयते' इति ब्रह्मण एव

---

ता. भावः। अर्थमुख्यत्वे दूषणान्तरमाह—**न चेति**। दूषणान्तरमाह—**तेषामिति**। 'स एनान् ब्रह्म गमयति' इत्यत्र एतच्छब्देन ब्रह्मविदामेव परामर्शे पञ्चाग्निविदां फलनिर्देशो न स्यादित्यर्थः। **तदभावात्**। उपचयापचयाभावात्। **पित्रादिसंकल्पैः**—'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः

साधनैर्भोगो दर्शितः स्यात्। ततश्च आप्तकामताविरोधः स्वार्थप्रयुक्ता च सृष्टिः स्यात् ॥

किं च, विकारावर्ति ब्रह्म प्राप्तस्य लिङ्गशरीरमस्ति वा न वेति वक्तव्यम्। अस्ति चेत् कलाप्रलयश्रुतिर्बाध्येत। न चेल्लिङ्गशरीरम्, 'मनसैतान् कामान्' इति श्रुतिर्बाध्येत ॥

किं च, तत्र लिङ्गशरीरविलये निमित्तं वक्तव्यम्। विद्यैव चेत्, उत्क्रान्तिकाले स्यात्। तदा आरम्भककर्मक्षयात्। अमानवकरस्पर्शश्चेत्, विद्युत्स्थाने स्यात्। न च उपरिष्टात् कलाविलयनिमित्तं श्रूयते ॥

किं च, औपाधिकजीवपक्षे न जीवस्य विकारावर्तिब्रह्मगमनं सम्भवति। निरवयवावच्छेदस्य घटाकाशस्येव उद्धृत्य नयनायोगात्। उद्धरणे च ब्रह्मशून्योऽयं प्रदेशः स्यात्। उपरिष्टाच्च ब्रह्म उपचयं प्राप्नुयात् ॥

तस्मादुपाधिगमनादात्मनि गमनविभ्रमः ॥

ननु उपाधेरपि गमनं न सम्भवति, तदुपादानस्य ब्रह्मणः चलनशून्यत्वात्। न हि मृदि निश्चलायां घटस्य गमनमस्तीति। एवं तर्हि स्वप्नगमनवत् मायाविजृम्भितो गमनादिप्रतिभासः ॥

ननु न पित्रादिसङ्कल्पैर्ब्रह्मणि भोगोऽभिधीयते, किं तु यावांस्तत्र भोगः तस्य नित्यानन्दप्राप्त्यन्तर्भावात् ऐश्वर्यभेदः कथ्यते

ता. समुत्तिष्ठन्ति' इत्यभिहितैः। **कलाप्रलयश्रुतिः**। 'षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुतिरिति यावत्। उत्क्रान्तिकाल एव अपरोक्षज्ञानोदयात् लिङ्गशरीरविलये गमनमेव न स्यादित्याह—**उत्क्रान्तीति**। विद्यातिरिक्तं लिङ्गशरीरविलयनिमित्तमाशङ्कते—(**तदारम्भकेति**।) [**अमानवकरेति**।] यद्यपि विद्युत्स्थाने करस्पर्शः तथापि ब्रह्मलोकप्राप्तौ लिङ्गशरीरस्य लय इति; तत्राह—**न चेति**। आत्मनः स्वर्गादिगमनश्रवणस्य तर्हि का गतिः? इत्यत आह—**तस्मादिति**। भवत्वेतत् ब्रह्मपरिणामपक्षे, (न) मायावादिनस्तु न कश्चिद्दोष इति परिहरति—**एवं तर्हीति**। 'संकल्पादेव

इति। न—एकस्य ब्रह्मशब्दस्य यौगिकार्थभङ्गभयात् बह्वीनां फलश्रुतीनामुपचारकल्पनाऽयोगात् शास्त्रान्त्यपादवैफल्यप्रसङ्गाच्च। तस्मात् प्रदेशान्तरवर्तिब्रह्मप्राप्तये क्रियाविधानमित्यनुपपन्नम् ॥

349 - 2 संस्कारपक्षे दूषणमाह—संस्कार्यत्वमपीति। दोषापनयनेन विद्य-
349 - 4 मानस्य ब्रह्मभावस्य अभिव्यक्तिः संस्कार इत्याशङ्कते—अथ विद्यमानस्येति। तत्र वक्तव्यम्—किमात्माश्रयक्रियया दोषापनयः? किं वा अन्याश्रयया? इति। न तावदात्मनो निरवयवस्य परिस्पन्दपरिणामा-
349 - 4 वित्याह—न—आत्मनः क्रियारहितत्वादिति। न च अन्याश्रयक्रियया, क्रिया-
349 - 6 वद्द्रव्यैः संयोगाभावात् तत्र अतिशयायोगात् इत्याह—प्रत्यग्रूपत्वादिति। ननु मन्त्रदेवताभिध्यानात् विषनिरासवत् ईश्वराभिध्यानाद्दोषापनयः
349 - 7-8 स्यादिति चोदयति—नन्वीश्वराभिध्यानादिति। उच्यते इत्यादिपरिहारः स्पष्टार्थः। ननु शास्त्रीयकर्मभिरात्मनो गुणाधानलक्षणः संस्कारः श्रूयत
350 - 1 इति; नेत्याह—न च स्नानादिक्रिययेवेति। अयमर्थः—यः साधनानि शरीरेन्द्रियमनांसि प्रेरयति स कर्ता भोक्ता संस्कार्यश्च। स च चैतन्यसंवलितोऽहङ्कारः। 'विज्ञानं यज्ञं तनुते' इति श्रुतेः। स च आ संसारसमाप्तेरविच्छिन्नो वर्तत इति भोगश्च सम्भवति। तत्र च धर्माधर्मातिशय उत्पद्यते। न निर्विकारात्मनि। ततस्तस्य न संस्कार्यत्वमुपपद्यते इति।
350 - 2-8 तस्मात् न संस्कार्य इत्यादिः ननु इत्यतः प्राक्तनः ग्रन्थः स्पष्टार्थः। ननु
351 - 5 ज्ञानस्यापि इत्यारभ्य इदमपरम् इत्यतः प्राक्तनौ चोद्यपरिहारौ पूर्वोक्तावष्यवसरप्राप्तत्वात् पुनरिहानीतौ स्पष्टार्थौ ॥

जन्याजन्यफलत्वेन क्रियाज्ञानयोर्वैलक्षण्यमुक्तम्। इदानीं पुरुषेच्छाप्रयत्नसाध्या हि क्रिया तदनपेक्षमात्मज्ञानमिति कारणतो वैलक्षण्य-

---

ता. तु तच्छ्रुतेः' इत्याद्यधिकरणानां च वैफल्यं स्यादित्याह—शास्त्रेति। अहन्यहनि विलीयमानस्य कर्तुरन्तःकरणस्य कथं भोक्तृत्वम्? इत्यत आह—स चेति। धर्माधर्मयोरात्मगुणत्वाद्धर्माधर्मकर्तुरेव च भोक्तृत्वादात्मन एव कर्तृत्वभोक्तृत्वे इति; तत्राह—तत्र चेति ॥

माह—इदमपरं वैलक्षण्यमिति। चोदनाजन्यं पुरुषेच्छाप्रयत्नजन्यं न 351 - 5
भवति ज्ञानम्, अनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनादित्यर्थः। ननु
शब्दजन्यस्य ज्ञानस्य विषयजन्यत्वाभावान्न वस्तुपरतन्त्रता। ततः
चोदनाजन्यत्वमिति शङ्कते—अथापीति। तत्रापि विधिजन्यपुरुषेच्छा- 351 - 8
प्रयत्ननिरपेक्षमेव लिङादिजन्यमेवेति परिहरति—तत्रापीति॥ 351 - 9

ननु संयोगविभागप्रचयातिरेकिणी केयं क्रिया नाम?। ननु चलतीति प्रत्यक्षमेवैतच्चलनम्। सत्यम्। तदपि संयोगाविभागालम्बनमेव चलनम्। ननु स्थाणावपि श्येनसंयोगविभागवति चलतीति प्रसङ्गः। न—स्वदेशसंयोगविभागालम्बनत्वात् प्रत्ययस्य। स्थाणोश्च श्येनदेशत्वाभावात्। सर्वस्य च आकाशदेशत्वादिति चेत्॥

न—बहुलान्धकारावृते नभस्यप्रतीयमानेऽपि खद्योते चलनबुद्धिदर्शनात्। न च देशमप्रतीत्य तत्संयोगविभागाः प्रतीयन्ते इति। तस्मात् संयोगविभागातिरिक्तक्रियालम्बनश्चलतीति प्रत्ययः॥

यस्तु—स्वदेशसंयोगविभागाभ्यां क्रियामनुमिमीते। कथम्?।

---

ज्ञानस्य क्रियातो वैलक्षण्यमुक्तम्, तदनुपपन्नम्, क्रियाया एव अभावात् ता.
इति शङ्कते—**नन्विति**। **प्रत्यक्षग्राह्यं चलनम्**। **संयोगविभागालम्बनम्**—संयोगविभागप्रचयरूपमिति यावत्। चलतिप्रत्ययस्य संयोगविभागावालम्बनमिति न युक्तं स्थाणौ व्यभिचारादिति शङ्कते—**नन्विति**। स्वाश्रयदेशवस्तुनः संयोगविभागौ चलतिप्रत्ययस्य आलम्बनम्, न चैवं स्थाणाविति परिहरति—**न—स्वदेशेति**। स्थाणावपि तथा किं न स्यादिति; तत्राह—**स्थाणोश्चेति**। ननु स्थाण्वादिकमनाश्रित्यापि श्येनस्य संयोगविभागयोश्चलतिप्रत्ययो दृष्ट इति; तत्राह—**सर्वस्य चेति**। तत्राप्याकाशस्यैव आश्रयत्वात् न व्यभिचार इति भावः॥

सिद्धान्तयति—**न बहुलेति**। आश्रयग्रहणव्यतिरेकेण संयोगविभागयोरप्रतीतेः तयोश्चलतिप्रत्ययविषयत्वाभावादतिरिक्ता चलतिप्रत्ययविषयभूता अस्ति क्रियेत्यर्थः। मा भूदाश्रयप्रतीतिः, संयोगविभागप्रत्ययस्य किमायातम्? इत्यत आह—**न चेति**॥

**प्राभाकरमतमुत्थापयति** — **यस्त्विति**। कर्मणो नित्यानुमेयतया व्याप्तिग्रहाभावे कथं तदनुमानम्? इति शङ्कते—**कथमिति**। अनुमानमाह—

द्रव्यजनितौ संयोगविभागौ स्वाश्रये कादाचित्कातिशयपुरस्सरौ व्यवस्थितद्रव्ये कादाचित्कत्वात् संयोगविभागजन्यकार्यवदिति—

तस्य मकरादिषु जलप्रवाहाधारेषु स्थिराचलावयवेषु स्वदेशजलसंयोगविभागयोः सतोरपि तेषु क्रियाज्ञानाभावादनैकान्तिकता हेतोरिति ॥

किं च, संयोगविभागहेतुरतिशयः क्रियाभिधानीयः स्थिरादेव द्रव्यादुत्पद्यतेऽतिशयान्तरवतो वा ? पूर्वस्मिन् अव्यवस्थितद्रव्यादेव क्रियाजन्मवत् तत एव संयोगविभागजन्म स्यादित्यनैकान्तिकः । अतिशयान्तरकल्पनायामनवस्थापातः । पादाश्रयस्य कर्मणो हि स्वाश्रयासम्बन्धिभूतलसमवायिपादसंयोगारम्भवत् प्रयत्नवदात्मपादसंयोगस्यापि भूपादसंयोगारम्भसिद्धेः न पादाश्रयकर्मातिशयावकाशः । तस्मात् प्रत्यक्षः क्रियाप्रत्ययः । ननु क्षणिकस्य कर्मणः कथमिन्द्रियसंयोगज्ञान-

---

ता. **द्रव्यजनिताविति** । संयोगजसंयोगव्यवच्छेदार्थम्—**द्रव्यजनिताविति** विशेषणम् । तस्य पक्षीकारे कादाचित्कसंयोगलक्षणातिशयजन्यतया सिद्धसाधनत्वप्रसङ्गात् । **अतिशयपुरस्सरौ** । अतिशयजन्यावित्यर्थः । तथापि ईश्वरेच्छया सिद्धसाधनता मा भूदिति **कादाचित्केति** विशेषणम् । प्राक्क्षणेन सिद्धसाधनतानिवृत्त्यर्थं **स्वाश्रयेति** विशेषणम् । अत्र च **कादाचित्क**शब्देन अव्यवहितपूर्वक्षणोत्पन्नमभिधीयते । तेन [आत्मगतसंयोगविभागयोः तद्गतेन] यागजनकेनादृष्टेन [न] सिद्धसाधनता । द्रव्येण सह उत्पन्नशौक्ल्यादिव्यावृत्त्यर्थं **व्यवस्थितद्रव्ये इति** विशेषणम् । व्यवस्थितद्रव्यनिष्ठत्वादित्येवोच्यमाने नित्यैर्महत्त्वादिभिर्व्यभिचारः, तद्व्यावृत्त्यर्थं **कादाचित्कत्वादिति** ॥

किं यावत्स्वाश्रयेऽतिशयपुरस्सरत्वम् ? स्वाश्रयेऽतिशयमात्रपुरस्सरत्वं वा ? इति विकल्प्य, आद्यं दूषयति—**तस्येति** । द्वितीये त्वाभाससमानयोगक्षेमता, आश्रयान्तरे तादृगतिशयपुरस्सरत्वाभावादिति द्रष्टव्यम् । किं च, कर्मासमवायिकारणात् प्रयत्नवदात्मपादसंयोगात् भूपादसंयोगोपपत्तेः न पादे कर्मानुमानसिद्धिः । न च व्यधिकरणस्य भूपादसंयोगारम्भकत्वाभावः, भवदभिमतकर्मव(दनु)[दु]-पपत्तेः इत्याह—**पादाश्रयस्येति** ॥

लक्षणक्षणद्वयावस्थानम् ?। शब्दविद्युदादिवदित्यविरोधः। तस्मादस्ति क्रिया ज्ञानविलक्षणेति। किंचेति स्पष्टार्थः॥ 351-10

किं च, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति निश्चितार्थविषयतत्त्वज्ञानमेव मोक्षसाधनमुक्तम्, तच्च प्रमाणजन्यत्वे सम्भवतीत्याह—एवं सम्यग्ज्ञानत्वोपपत्तेरिति। दार्ष्टान्तिकमाह—एवं सतीति॥ 352-3.4

ननु ब्रह्मज्ञाने विधयः श्रूयन्ते, तत् कथं तर्केण निरस्यन्ते? इति; तत्राह—अतः श्रूयमाणा अपीति। ननु अनुष्ठेयाभावाद्विधेरभावे शब्दस्य 352-6 वैयर्थ्यं स्यादिति; नेत्याह—अतोऽर्थवादतयेति। नन्वर्थवादान्तरवत् 352-7 स्तावकत्वे विधिपदमर्थशून्यं स्यादिति; नेत्याह—तदुन्मुखीकरणादिति। 352-8 तथा च श्रवणं नाम इत्यादिना यैः श्रवणादिभिरात्मा संस्तूयते तान् 352-10 विभज्य दर्शयति। ननु श्रवणादिभिः किं श्रेयः क्रियते? येनोत्कर्षवद्भिरेतैर्विषयीकरणादात्मा स्तुतः स्यादिति; तदाह—ततो वाक्यार्थे 353-3 स्थैर्यादिति। ननु विधेयस्यैवार्थवादसम्बन्धः, स्तुतेः प्रवृत्तिफलत्वात् न सिद्धवस्तुनः, इत्याक्षिपति—कः पुनरिति। फलप्रशंसाया अपि 353-4 प्रवृत्त्युपयोगित्वात् फलभूतात्मप्रशंसाया अपि श्रवणादिप्रवृत्त्युपयोगित्वमुपपद्यत इत्यभिप्रेत्याह—इदमत्र प्रस्तुतम् इत्यादि। ग्रन्थस्तु स्पष्टार्थः॥ 353-5

ननु सम्यग्दर्शनस्य फलरूपत्वात् प्रमाणाधीनत्वाच्चाविधेयतेति युक्ता तस्य अर्थवादता, श्रवणादयस्तु क्रियारूपत्वात् सम्यग्दर्शनस्य दृष्टादृष्टोपकारितया विधेया एवेति; तदाह—एतच्च सर्वं प्रथमसूत्रेणैवेति। 354-1 मनननिदिध्यासनोपबृंहितस्य श्रवणस्य सम्यग्दर्शनाय विधेयत्वमङ्गीकृत्य प्रथमसूत्रं प्रवृत्तमित्यर्थः। विधीनामपि सतां स्तावकत्वमुक्तम्। इदानीं शब्दस्य अर्थान्तरमाह—अपि च नैवायमिति। ननु मा 354-2 भूवन् ज्ञानविधयः, उपासनाविधिस्तु श्रूयते इति; नेत्याह—एतेनात्मे- 354-3 त्येवोपासीतेत्यादि। सर्वत्र एवकारविशेषणश्रवणात् अहमिति स्वभावप्राप्तप्रत्ययावृत्त्यनुवादेन विषयविशेषः प्रतिपाद्य इति। अतो हानोपादनशून्ये- 354-5 त्युपसंहरति। भाष्यं विवृणोति—अस्यायमर्थ इति॥ 354-7

उक्तमेतत् मोक्षफलविधेयज्ञानब्रह्मस्वरूपनिरूपणायां विधिनिरपेक्षमेव ब्रह्मणि वेदान्ताः प्रमाणमिति द्वितीयेन वर्णकेन। प्रथमेन च वर्णकेन प्रमाणान्तरानपेक्षं ब्रह्मणि प्रामाण्यमुक्तम्। इदानीं तदु-
355 - 1 भयवर्णकार्थमाक्षिप्य समाधत्ते—यदपि केचिदाहुरित्यादिना। कथम्?। किं अहंप्रत्ययावसेय एवात्मा वेदान्तैः प्रतिपाद्यते? किं वा तद्व्यतिरिक्तः?। यद्याद्यः, तदा तस्य क्रियायामङ्गत्वात् विधिवाक्यैर्वेदान्तानामेकवाक्यता स्यात्। अथ तद्व्यतिरिक्तः प्रतिपाद्यते, तदा किंचिदुद्दिश्य किंचित् प्रतिपाद्यमित्युद्देशनाभावात् प्रतिपादनं न स्यात्। तस्यापि चेतनत्वे कर्माङ्गतैव स्यात्। तस्मात् क्रियायामेव वेदान्ताः प्रमाणम्। तथा च कर्मण्येव कृत्स्नस्य वेदस्य प्रामाण्यमापस्तम्बो दर्शयति–'त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा, तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते' इति। तथा च 'अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्' इति ॥

355 - 4 तत्र उत्तरमाह–तन्न–औपनिषदस्येत्यादिना। अहंप्रत्ययावसेयात् विशिष्टात्मनोऽन्य एव क्रियाकारकसंसर्गशून्यः, न स कर्माङ्गतया वेदान्तानां विधिशेषतां नयतीत्यर्थः। ननु असावपि चेतनश्चेदहंप्रत्यय-
355 - 8 गम्यतया कर्माङ्गमिति; नेत्याह—न स केनचिदिति। ननु शास्त्र-
355 - 9 गम्यस्यापि कर्माङ्गता किं न स्यात्? इत्यत आह–न हि प्रमाणान्तरासिद्ध इति। अधिकारिणं कर्तारं च प्रमाणान्तरसिद्धावनूद्य विधिमात्रप्रतिपादनात्, अन्यथा वाक्यभेदादिति। ननु चेतनः प्रमाणान्तरागम्य-
356 - 1 त्वात् शास्त्रेणापि न गम्यत इति; नेत्याह–न च स न प्रतीयत इति।
356 - 2 ननु सर्वो वेदो धर्मे विनियुक्तः स्मृतिकारैरित्युक्तम्; अत आह—अत

---

ता. उक्तमेतदिति। मोक्षफलस्य विधेयज्ञानस्य ब्रह्मस्वरूपस्य च निरूपणायामिति यावत्। किमहंप्रत्ययावसेय आत्मा वेदान्तैः प्रतिपाद्यते? किं वा तद्व्यतिरिक्तः? इति विकल्प्य, क्रमेण दूषयति— यदीति ॥

एवौपनिषदत्वेति । औपनिषद इति तद्धितप्रत्ययो ब्रह्मणि वेदान्तान्
विनियुङ्क्ते । तथा 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव
वेद्यो वेदान्तकृत्' इति श्रुतिस्मृतिभ्यां ब्रह्मपरा वेदान्ता इति गम्यते ।
ननु पदसमन्वयात् ब्रह्मणि प्रतीयमानेऽपि प्रत्यक्षादिभिर्बाधात् मिथ्या-
ज्ञानमिति ; नेत्याह—नैष प्रतीयमानोऽपीति। ननु उद्देश्याभावात् उपादेयं 356 - 4
प्रमातुं न शक्यत इत्यत आह— इतश्च न शक्यत इति । ननु अहम्प्रत्यय- 356 - 5
गम्यमात्मानमुद्दिश्य तस्याद्वितीयनिरतिशयज्ञानानन्दब्रह्मात्मताप्रति-
पादनेऽप्यात्मनोऽवस्तुत्वात् निरालम्बनत्वमिति ; नेत्याह— आत्मनश्चा- 356 - 7
निराकार्यत्वादित्यादिना । प्रकरणार्थमुपसंहरति—अतोऽवच्छेदत्रयशून्ये 357 - 1

इत्यादिना ॥

ननु सूत्रकारवचनसामर्थ्यात् कृत्स्नो वेदः क्रियायामेव विनियुक्त
इति चोदयति—नन्वाम्नायस्येति । ननु पौरुषेयवचनात् कथमनादेर्वैदि- 357 - 6
कपदसमन्वयस्यार्थनिर्णयः ?। उच्यते—अनादिप्रवृत्तात् क्रियार्थतयैव
प्रयोगप्रत्ययव्यवहारादेतदवगम्यते इत्याह—तस्मात् प्रवृत्तिनिवृत्तीति । 357 - 7
ननु शब्दश्रवणानन्तरं भूतेऽप्यर्थे प्रतीतिरुपजायत इति ; नेत्याह—
ततो वस्त्ववगम इति। ननु अज्ञातब्रह्मावगमः कथं विभ्रमः स्यात् ? इति ; 357 - 8
तत्राह—अत एव च तन्मिथ्येति । शब्दसामर्थ्याभावात् संवादाभावाच्च 358 - 2
इत्यर्थः । ननु भूतेऽप्यर्थे प्रमितिरुपजायते चेत् तेनैव तत्र शब्द-
सामर्थ्यं कल्प्यतामिति चोदयति—कथं पुनरिति। परिहरति—शब्दस्य 358 - 3-4
तत्रेति । ननु धूमस्य सामान्येन गृहीतसम्बन्धस्य विशेषबोधकत्ववत्
क्रियार्थे गृहीतसम्बन्धोऽपि भूतमर्थं गमयेदिति ; नेत्याह—न चागृ- 358 - 5
हीतसामर्थ्य इति । तर्हि भूतेऽप्यर्थे सम्बन्धो गृह्यतामिति ; नेत्याह—
सामर्थ्यग्रहणं चेति । ननु भूतेऽप्यर्थे प्रवृत्त्या ज्ञानानुमानेन सामर्थ्यं 358 - 6
गृह्यतामिति ; नेत्याह—तदभावे कुत इति। साध्ये प्रवृत्तिः न भूतार्थे इति ॥ 358 - 7

ता.

---

सर्वे वेदा यत्पदमामनन्तीति । कर्मभागस्य अन्तःकरणशुद्धिद्वारा
ज्ञानजननेन ब्रह्मपरत्वमवगम्यत इति भावः ॥

358 - 10 उच्यते नैव सूत्रकारेत्यादिः परिहारः । कथम् ? । लौकिकन्याय-मनुसरता वार्तिककारेणेदं प्रतिपादितम्—अभिहितान्वयः—इति । पदेभ्यः प्रतिपन्नानां पदार्थानां संसृष्टपरस्परार्थावबोधनमभिहितान्वयो नाम । तत्र श्रोतुः प्रवृत्त्या विशिष्टसंसर्गज्ञानं शब्दकार्यत्वेन अनुमाय शब्दसमुदायस्य अर्थसमुदाये सामर्थ्यं प्रतिपद्यते । तत्र 'गामानय' 'गां बधान' इत्यादिप्रयोगभेदेषुआवापोद्वाराभ्यामानयनतत्संसर्गव्यभिचारेऽपि गोमात्रान्वयाद्बन्धनेऽपि गोशब्दस्य गोमात्रे सम्बन्धं प्रतिपद्यते । नानयनतत्संसर्गयोः । व्यभिचारात् । एवं सर्वपदानां पदार्थस्वरूपमात्रेषु सामर्थ्यप्रतिपत्तेः संसर्गबोधः किन्निबन्धनः इति वीक्षायामनन्यथासिद्धान्वयव्यतिरेकाभ्यां शब्दावगतपदार्थनिबन्धन इति कल्प्यते । ततः पदेभ्यः पदार्थाः पदार्थेभ्यः संसर्ग इत्यभिहितान्वयवादिनां मतम् । तत्र यद्यक्रियाभिधायिनां पदानामालम्बनाभाव उच्यते ? किं
359 - 1 वा प्रयोजनाभावः ? इति । यद्यालम्बनाभावः ; तत्राह—पश्यतु भवान् देवदत्त गामभ्याजेति । अथ नालम्बनाभावः, किं तु प्रयोजनाभाव इति
359 - 4 वक्तव्यमित्याह—प्रतीयते चेदिति । अथाक्रियार्थानां प्रयोजनाभाव
359 - 7 इति, न—क्रियायाः प्रयोजनत्वाभावादित्याह—प्रयोजनं चानन्तरमिति ।
359 - 8 अथ क्रियाद्वारमेव प्रयोजनमिति, सत्यं केषांचिदित्याह—अतस्तदर्थक्रियानुपयोग्यर्थवाचिनामिति । ननु सर्वं क्रियाद्वारमेव प्रयोजनमिति ;
359 - 9 नेत्याह—ब्रह्मात्मत्वावगतीति । अतोऽभिहितानां पदार्थानां प्रयोजनवदर्थसंसृष्टस्वार्थप्रतिपादनेऽपि भूतवस्तुप्रतिपादनं संभवतीति ॥

---

ता. अनन्यथासिद्धान्वयेति । न च पदानामन्वयव्यतिरेकसम्भवात् कथं संसर्गबोधः पदार्थनिबन्धन इति वाच्यम् ; तेषां पदार्थप्रतिपत्तिहेतुतया अन्वयव्यतिरेकयोरन्यथासिद्धत्वादिति भावः । एवं अभिहितान्वयवादिनां मतं उपन्यस्य, टीकाग्रन्थं अवतारयितुं विकल्पयति—तत्रेति । अभिहितान्वयवादेऽपि वेदान्तानां ब्रह्मणि प्रामाण्यं सम्भवतीत्युपसंहरति—अत इति ॥

अत्र प्राभाकरः प्रत्यवतिष्ठते--कार्यसंसृष्टस्वार्थे पदसामर्थ्यं न पदार्थमात्र इत्याह—स्यादेतत्–यद्यपीति। ननु भूतार्थे सामर्थ्यं प्रमीयते 359 - 10
चेत् भूतसंसर्गोऽपि प्रमीयतामिति ; नेत्याह—तथापि नाप्रतिपन्नेति। 359 - 11
भूतार्थविशिष्टं कार्यमेव प्रमीयत इत्यर्थः। ननु संसृष्टस्वार्थे शब्दसामर्थ्यं चेत्, भूते संसर्गः प्रमीयतामिति ; नेत्याह—क्रियार्थतयैवेति। नियोग- 360 - 1
संसृष्टतयैवेत्यर्थः। ननु कार्यसंसृष्टस्वार्थसामर्थ्येऽपि अन्वितस्वार्थस्य तत्र अन्तर्भावात् तेनैव प्रयोजकेन भूतेऽपि संसर्गः प्रतीयतामिति ; नेत्याह—न हि गोपदात्तदर्थ इति। अयमाशयः—'गामानय शुक्लां 360 - 2
दण्डेन' इति शब्दश्रवणानन्तरं श्रोतुर्गवानयने प्रवृत्तिमुपलभ्य गवानयन-कर्तव्यता अनेन शब्दात् प्रतिपन्नेति भूतार्थसंसृष्टे कार्ये शब्दसमुदायस्य सामर्थ्यं प्रतिपद्यते। पुनश्च 'गां बधान' 'अश्वमानय' इति प्रयोगान्तरेषु गोशब्दस्य अन्वये कार्यसंसृष्टगवाकृतेरन्वयात् तदुद्धारे च कार्यसंसृष्टगवा-कृतेरेव उद्धारात् कार्यसंसृष्टायां गवि पदसामर्थ्यं कल्प्यते। आनयनत-त्संसर्गव्यभिचारेऽपि कार्यसंसर्गाव्यभिचारात्। एवं च प्रथमावगत-संसर्गबुद्धिहेतुत्वानपवादात् शब्दानां मध्ये च पदार्थतच्छक्तिव्यवधान-कल्पनागौरवपरिहारात् पदानामेव संसर्गप्रतिपादनसामर्थ्यकल्पना। लाघवाच्च। तस्मात् कार्यसंसृष्टस्वार्थेषु शब्दसामर्थ्यमिति ॥

तदेतन्निराचष्टे—विषम उपन्यास इति। न हि प्रयोगभेदेषु 360 - 4
कार्यसंसर्ग एव गवाकृतेर्नियमेन प्रतीयते, किं तु गुणव्यक्तिक्रिया-कारकसंसर्गश्च। तथा हि—'शुक्लां गामानय' इत्युक्ते गुणकारकक्रिया- ता.

संसर्गप्रत्ययं प्रति पदानामन्वयव्यतिरेकौ पदार्थस्मृतिजननेनान्यथा-सिद्धाविति यदुक्तम्, तत्राह—**एवं चेति**। प्रवृत्तिलिङ्गेन शब्दानां भूतसंसृष्टे कार्ये यत् सामर्थ्यं प्रथममवगतं तस्य **अनपवादात्** इति यावत्। अन्विता-भिधानपक्षे लाभमाह—**मध्ये चेति**। पदानां पदार्थस्मृतिजननसामर्थ्यं, पदार्थानां च संसर्गप्रत्ययजननसामर्थ्यमिति कल्पनागौरवं च परिहृतमित्यर्थः। **गुणकारकेति**। शुक्लामिति गुणेन सम्बन्धः, गामिति कर्मकार(कत्वेन)[केण]

सम्बन्धाः प्रतीयन्ते। क्रियाद्वारश्च कार्यसम्बन्धः। तत्र अव्यवहितसम्बन्धोपादानसिद्ध्यै अन्यान्वितस्वार्थे सामर्थ्यं गृह्यते। क्रमेण च गुणक्रियादिसंसर्गो यथायोगमवभासमानो यावदन्त्यपदोच्चारणसमाप्ति पश्चात् सम्भूय सर्वैरेव पदैरेकप्रयोजनावच्छिन्नो महावाक्यार्थः प्रमीयत इति नान्योन्यसंसर्गविरोधः। प्रमाणान्तरग्राह्यत्ववत् कार्यमपि प्रवृत्तिलिङ्गहेतुतया नियमेन अन्वेति, न सर्वशब्दसामर्थ्यविषयतया। तस्मात् लाघवादन्वितस्वार्थे सामर्थ्यमिति। अन्यथा अनुवादप्रसङ्गात्। कार्यान्वितस्वार्थेषु प्रमाणान्तरेण शब्दसामर्थ्यप्रतिपत्तौ शब्दादपि तावन्मात्रबोधे अनुवादः स्यात्। न च कार्येण सर्वपदार्थानामव्यवहितः सम्बन्धः, येन तत्संसृष्टे सामर्थ्यं स्यात्। अस्ति शेषशेषितालक्षणसम्बन्ध इति। केयं शेषशेषिता नाम?। न तावत् स्वस्वामिता ; चेतनविषयत्वात् तस्याः। नापि देवदत्तवदङ्गाङ्गिता ; तदवयवत्वाभावादितरेषाम्। अथ साध्यतैव शेषिता; क्रियैव तर्हि गुणकारकसाध्येति सैव शेषिणी स्यात्। अथ परमसाध्यता; स्वर्ग एव तर्हि शेषीति किमनेन कार्येणान्तर्गडुना। तस्मात् गुणानां द्रव्यैरन्वयो द्रव्याणां विभक्त्यर्थसंसृष्टानां क्रियया अन्वयः तस्याश्च कार्येणेति व्यवधानादन्यान्वितस्वार्थे सामर्थ्यं समञ्जसम्॥

किं च, कार्यस्य कार्यान्तरान्वयाभावादन्यान्वयो वक्तव्यः। धात्वर्थेन कार्येण कार्यस्य अन्वय इति चेत्, न—नियोगान्वयनिमि-

---

ता. आनयेति प्रकृत्यर्थक्रियया संबन्धः प्रतीयते। ततः किम्? इत्यत आह—तत्रेति। कार्यद्वारा सम्बन्धमनपेक्ष्य गवाकृतेर्गुणादिभिः अव्यवहितसम्बन्धसिद्ध्यै इति यावत्। तर्हि संसर्गिणां बहुतया तत्संसर्गस्यापि बहुत्वेन वाक्यार्थभेदः स्यादिति? तत्राह—क्रमेण चेति। ननु कार्यस्य सर्वत्र अव्यभिचारात् अस्यैव शब्दार्थत्वम्, इति ; तत्राह—प्रमाणान्तरेति। विपक्षे दोषमाह—अन्यथेति। अनुवादत्वमेवाह—कार्येति। सम्बन्धमङ्गीकृत्यावोचाम, कार्येण सर्वपदानां सम्बन्धश्च नास्तीत्याह—न चेति। अवयवावयवित्वं शेषशेषितेति ; नेत्याह—नापीति॥

त्तत्वाद्धात्वर्थकार्यतायाः। नियोगस्य तु धात्वर्थेन केवलेनान्वयो न कार्येण ; उत्तरकालत्वात् तत्कार्यत्वस्य। अतोऽप्यन्यान्विते शब्दसामर्थ्यमिति ॥

किं च, प्रमाणान्तरग्राह्यत्वमपि अर्थस्य शब्दसामर्थ्यविषयः स्यात्, अव्यभिचारात्। प्रयोगनिमित्ततया अन्यथासिद्धिरन्वयस्येति चेत्, कार्यत्वस्यापि प्रवृत्तिलिङ्गहेतुतयैव अन्वयनियमो न सर्वपदसामर्थ्यविषयतयैवेति ॥

किं च, भूतसंसर्गेऽपि शाब्दी प्रमितिरनुभूयते लोके-देवदत्तो भुक्त्वा निर्गत इत्यादौ। तत्र किं प्रतिवाक्यं कार्यपदमध्याहियताम्, शब्दव्यतिरिक्तप्रमाणान्तरं वा कल्प्यताम्, भ्रान्तित्वं वा उपेयताम्, आहोस्वित् अन्यान्विते शब्दसामर्थ्यं प्रतिपद्य प्रामाण्यं वा व्यवस्थाप्यताम्, इति अबाधितभूतार्थव्यवहारात् कल्पनालाघवाच्च अगृहीतप्रयोजनानां विप्रतिपन्नप्रयोजनानां च सम्बन्धग्रहणादेव अर्थप्रतिपत्तेः निरूपणीयमेतत ॥

किं च, निघण्टुव्याकरणोपदेशैः कार्यपदार्थमप्रतिपद्यैव अर्थान्तरशब्दसामर्थ्यं प्रतीयते। क्वचित् कार्यसंसर्गसंसृष्टस्वार्थेषु अव्यभिचारात् शब्दसामर्थ्यं ता.

---

प्रमाणान्तरग्राह्यत्ववत् कार्यमपि इत्युक्तम्, तदेव प्राप्तावसरतया विचारमारभते—[तत्र किं प्रतिवाक्यं] विभजते—**किञ्च प्रमाणान्तरेति**। प्रत्यक्षादिव्यतिरिक्तमलौकिकम्। अलौकिककार्यपदमिति। **प्रमाणान्तरं** बाधाभावात् भ्रान्तितापि कल्पना न युक्तेत्यभिप्रेत्याह—**भ्रान्तित्वमिति**। साक्षात्पक्षमाह—(अ)[आहोस्विदन्या]न्विते इति। न युक्तेत्यभिप्रेत्य, अध्याहारप्रमाणान्तरयोः कल्पनां अन्त्यपक्षस्वीकारे हेतुमाह—**अबाधितेति**। कार्यस्य प्रयोजकतां निराचष्टे—**अगृहीतेति**। भवतु परिहरति—**कल्पनेति**। कार्यस्य प्रयोजकत्वं गृहीतदेवदत्तवाक्ये अगृहीतप्रयोजकत्वम्, गामानयेत्यादौ कार्यस्य प्रयोजकत्वं गृहीतमिति, तत्राह—**विप्रतिपन्नेति**। **निरूपणीयमेतदिति**। अन्यान्विते शब्दसामर्थ्यं प्रतिपाद्य देवदत्त(स्य) वाक्यस्य प्रामाण्यं स्वीकरणीयमित्येतत् वादिभिः निरूपणीयमित्यर्थः ॥

दर्शनादन्यत्रापि तदनुमीयते इति चेत्, न—अन्यत्र अन्यसंसर्गमात्र-दर्शनेन कार्यसंसृष्टेऽपि अन्यसंसर्गमात्रप्रयोजककल्पनोपपत्तेः। अदृष्ट-प्रयोजकोपसंहारात् दृष्टप्रयोजकस्यैव युक्तत्वात्। तस्मादन्यसंसृष्टस्वार्थे शब्दसामर्थ्यमिति सिद्धम् ॥

ननु गोपदस्यापि आनयनसंसर्गादिबह्वर्थप्रतिपादकत्वात् आनय-नपदस्यापि गोसंसर्गाद्यनेकार्थाभिधायित्वात् पदाभ्यां प्रतिपाद्यसंसर्ग-नियमो न स्यात्। नैष दोषः—एकैकपदोच्चारणे यावानर्थः प्रतीयते तावतामेव संसर्गः संभूयोच्चारणेऽपि प्रतीयत इति नियमोपपत्तेः। नहि एकैकपदोच्चारणात् सर्वे संसर्गाः प्रतीयन्ते ; सहकारिपदान्तरनिमि-त्तत्वात् संसर्गप्रतीतेः। ननु एवं पर्यायता स्यात्। तथा हि—गोपदस्यापि आनयनसंसृष्टं गोत्वमर्थः, आनयेति पदस्यापि गोसंसृष्टमानयनमर्थः इति। नैतत् सारम्—एकस्मात् पदात् यावानर्थः प्रतीयते तावानेव चेत् पदान्तरादपि प्रतीयात् स्यादेव पर्यायत्वम्। यदा पुनरितरेतरसंसृष्टौ पदार्थौ पदाभ्यां संभूय प्रतीयेते तदा कुतः पर्यायता इति। ननु गोपदोच्चारणे गवाकृतिरेव किमिति प्रतीयते न सामर्थ्यविषयभूतं सर्वमिति। अ(न्वय)व्यभिचारात् संस्कारभूयस्त्वात् गवाकृतेः इतरेषां व्यभिचारात् इत्यनवद्यम् ॥

ननु अभिहितेन पदार्थान्तरेण संसृष्टं गोत्वं प्रतिपादयति चेत् गोपदं आनयतिपदमपि अभिहितेनैव गोपदेन संसृष्टं स्वार्थं प्रतिपाद-यतीति इतरेतराश्रयता स्यात्—गोत्वे अभिहिते तत्संसृष्टानयनाभिधानं

---

ता. न—अन्यत्रेति। देवदत्तो भुक्त्वा निर्गत इत्यादावित्यर्थः। वैपरीत्यमेव कस्मान्न स्यादित्यत आह—[कार्यसंसृ]ष्टे इति। एकपदोच्चारणेऽपि तर्हि सर्वसंसर्गः प्रतीयतामिति, नेत्याह—न हीति। परिहृतमपि प्रकारान्तरेण परिहर्तुं चोदयति—ननु गोपदेति। परिहरति—अ [न्वय]व्यभि-चारादिति। संसर्गस्य व्यभिचारान्न प्रतीतिरित्यर्थः। अभिहितान्विताभिधानं चेदितरेतराश्रयप्रसङ्ग इति शङ्कते—नन्विति। पदान्तरवैयर्थ्यादिप्रसङ्गा-

तस्मिन्नभिहिते तत्संसृष्टगोत्वाभिधानमिति। नैष दोषः—क्रमेण पदेषु उच्चार्यमाणेषु क्रमेणैव पदार्था अव्यभिचारिणः प्रतीयन्ते, अन्त्यपदोच्चारणानन्तरं च संभूय एकस्मृतिगम्यानि पदानि अभिहितानेव पदार्थान् संसृष्टतया प्रतिपादयन्ति, इति अभिहितेनैव अन्वयोपपत्तेः। पदार्थेषु च संसर्गप्रतिपादकेषु तुल्यौ चोद्यपरिहारौ। पदानामेव संसृष्टस्वार्थप्रतिपादनमन्विताभिधानं नाम ॥

तदेवं कार्यमनपेक्ष्यैव भूतेऽप्यर्थे शब्दसामर्थ्यं सिद्धम्। तदेतत्
सर्वमभिप्रेत्याह—गोपदस्याभिधेयसम्बन्धे इत्यादिना ॥ 360 - 4

वेदेऽपि कार्यमनपेक्ष्यैव संसर्गप्रमितिरङ्गीकृतेत्याह—तथा च 360 - 10
वषट्कर्तुरित्यादिना। ननु कर्तव्य इति पदं तत्राप्यध्याहृत्य तेनैकवाक्य-
त्वोपगमेन वाक्यार्थः प्रमीयत इति; तत्राह—यस्तु कर्तव्य इति। ननु 361 - 1
सूत्रकारेणैव वृद्धव्यवहारानुसारिणा कार्यान्वितस्वार्थे शब्दसामर्थ्यं
दर्शितम्—'तद्भूतानां क्रियार्थेन' इति; तत्राह—यत्तु तद्भूतानामित्यादि। 361 - 3
भाष्यकारेणैव गुणगुण्यादीनां विशेषणविशेष्यादिभावेन समन्वयो
दर्शित इत्यर्थः। ननु क्रियार्थेनेति वचने कथं गुणगुण्यादिसामानाधि-
करण्यसम्बधः? इत्यत आह—क्रियार्थेनेति। तथा च भाष्यकारोऽपीत्यारभ्य 361 - 6-7
अत एव इत्यतः प्राक्तनः ग्रन्थः स्पष्टार्थः ॥ 361 - 11

किं च, किमिति जैमिनीयसूत्रवचनात् वेदान्तानां कार्यनिष्ठत्व-
मिष्यते बादरायणसूत्रैर्ब्रह्मनिष्ठत्वमिष्यतां इत्याह—अत एव पूर्वेण 361 - 11
तन्त्रेणेति। ननु अर्थभेदाभावे कथं पृथगारम्भः? इति; तत्र विभागमाह
—तत्र हि वेदस्य इत्यारभ्य मुख्यः प्रदर्शित इत्यन्तेन ग्रन्थेन ॥ 362 - 1-6

ननु प्रातिपदिकार्थानामेकरसब्रह्मपरतया अन्वयेऽपि प्रथमा-
विभक्तेरव्यभिचारात् तदर्थकारकत्वान्वय इति; नेत्याह—तथा च 362 - 6

---

पादनं च अभिहितान्वयवादेऽपि तुल्यमित्याह—पदार्थे[षु चे](ष्वपी)ति। ता.
पदेभ्यः प्रथमतः पदार्थमात्रप्रतीतौ पक्षयोः को विशेषः? इति; तत्राह—
पदानामेवेति ॥

भगवान् पाणिनिरव्यतिरिक्ते इति। **तत्र लिङ्गसङ्ख्यादयस्तु अर्थात् प्रतीय-
माना अपि 'प्रज्ञानघन एव' 'अद्वितीयम्' इत्यादिशब्दविरोधादनिर्व-
चनीया भविष्यन्तीत्यर्थः। ननु क्रियान्तरविरहेऽपि प्रातिपदिकार्थान्वये
'अस्तिर्भवन्तीपरः प्रयोक्तव्यः प्रथमपुरुषेऽगम्यमाने' इति कात्यायन-
362 - 7 स्मरणात् अस्त्यर्थनिष्ठः समन्वय इति; नेत्याह**—न अस्तिक्रियाकर्तर्येवेति।
363 - 2 **ननु अस्तिक्रियामप्यपहाय समन्वयो न दृश्यत इति; तत्राह**—दृश्यते च
फलिता इति। **ननु तत्रापि अस्तिक्रियान्वयः कल्प्यतामिति; नेत्याह**—
363 - 4 न तत्रापि ये फलिता इति। **कुत्र तर्हि वाक्यं पर्यवसितम्? इति; सम्बन्ध-
363 - 5 मात्रे इत्याह**—अपि त्वेते द्रुमा इति। **कथं पुनरत्र क्रियामपहाय
363 - 6 सम्बन्धमात्रपर्यवसितं वेदान्तवाक्यम्? इति; तदाह**—एवं सामान्यतः
सिद्धस्येति॥

**उक्तं तावत् पदानामर्थान्तरसंसर्गमात्रे सम्बन्धग्रहणात् क्रियाम-
पहाय अव्यतिरिक्तैकरसप्रातिपदिकार्थान्वयो युक्त इति। इदानीं क्रियान्व-
याभिधानवादिनामपि भूतेऽर्थे निषेधवाक्यसमन्वयो वक्तव्य इत्याह**—
364 - 4 किं च ब्राह्मणो न हन्तव्य इति। **ननु ब्राह्मणहननाभावोऽपि स्वयं क्रिया
364 - 5 क्रियार्थो वेति; नेत्याह**—न क्रिया क्रियार्थो वेति। **प्राप्तक्रियानिवृत्ति-
लक्षणत्वादित्यर्थः। ननु 'नेक्षेतोद्यन्तमादित्यम्' इत्यादावीक्षणविरो-
धिनी 'नेक्षे' इति सङ्कल्पक्रिया विधीयते, एवं 'न हन्या'मिति हननविरो-
364 - 6 धिनी सङ्कल्पक्रियैव विधीयतामिति; नेत्याह**—व्रतशब्दसमन्वयादिति।
**अयमर्थः—संसृज्यमानाभावमेव मुख्यया वृत्त्या नञ्शब्दः प्रति-
पादयति। अनुष्ठेयाभिधायिव्रतशब्दोपक्रमात् संसृज्यमानविरोधिनि
क्रियान्तरे लक्षणया वर्तते। न तथेहापवादकं किंचिदस्ति, येन
नञ्शब्दस्य संसृज्यमानविरोधिसङ्कल्पक्रियायां लक्षणा स्यादिति। ननु
संसृज्यमानादन्यतद्विरोधिनोरपि मुख्य एव नञ्शब्द इति; नेत्याह**—
364 - 9 न नञः समन्वयमात्रादिति॥

---

ता. लिङ्गसङ्ख्यादीनामपि तत्र प्रतीतेः **कथमद्वितीयत्वम्? इति; तत्राह**—
**तत्रेति। अस्तिः** अस्तिधातुः। **भवन्तीपरः** भवत्यर्थसमानार्थः। **नाभावो**

अत्र प्राभाकरः प्रत्यवतिष्ठते—अत्र त्रयोऽर्थाः प्रतीयन्ते—
ब्राह्मणो हननं प्रत्ययार्थश्चेति। तत्र न ब्राह्मणेन प्रतिषेधान्वयः,
प्रत्यक्षविरोधात्। न च हननाभावं प्रतिपादयति; तस्य प्रवृत्तत्वात्।
नापि प्रत्ययार्थाभावम्; फलप्रार्थनायाः प्रवृत्तिहेतोः कार्यबुद्धेर्वा
प्रत्यक्षत्वात्। ततः स्वभावप्राप्तहन्त्यर्थानुरागेण तद्विरोधिनी सङ्कल्प-
क्रियैव नञा प्रतिपाद्यते। सा च प्रत्ययेन विधीयते। न च अभावो
नाम भावान्तरव्यतिरेकेण कश्चिदस्ति, येन तत्पर्यवसितं वाक्यं स्यात्।
अतो भावान्तरविधिपरं वाक्यमिति। तदेतदाह—स्वभावत एव 365 - 2
रागादिनिमित्तात् इत्यादिना ॥

परिहरति—न चैतद्युक्तमिति। न च अभावस्तद्बुद्धिगोचरो 365 - 7
निवर्तयितुं शक्यः। न च भावान्तरमेवाभावः; तस्य सप्रतियोगिक-
त्वात्। अभाव एव च नञो मुख्योऽर्थः। अर्थान्तरविरोधिनोरभाव-
सम्बन्धिनोर्लक्षणयापि प्रवृत्तिसम्भवे रूढिकल्पनाऽयोगात्। ननु 'नाम-
धात्वर्थयोगे तु नैव नञ् प्रतिषेधकः। वदत्यब्राह्मणाधर्मावन्यमात्र-
विरोधिनौ ॥' इत्यर्थान्तरेऽपि नञ्शब्दो दर्शितः। सत्यम्। तत्रापि
मुख्यार्थान्वयेन लक्षणया अर्थान्तरेऽपि बुद्धिनियमो दर्शित इत्य-
विरोधः ॥

आह प्राभाकरः—हननाभावे नियोगः, ततश्च नियोगपर्यवसितं
वाक्यमिति। तदाह—ननु नञर्थे नियोग इति। दूषयति—वार्तमेतदिति। 366 - 1-3
भावार्थो दध्यादिगुणो वा विधिविषयतया तन्निर्वृत्तिहेतुः, न हनन-
प्रागभावः। अनादिसिद्धतया नियोगस्य अननुष्ठेयत्वात्। दूषणान्तरमाह
—एवं प्रतिषेधस्येति। विधिप्रतिषेधविभागव्यवहारो लौकिको न 366 - 5
ता.

---

निराक्रियते, किं तु तस्य भावबहिर्भूतत्वमिति; तत्राह—न चेति। इतोऽपि
न (सं)क्रियाप्रतीतिरित्याह—[अ]भाव एवेति। अन्यतद्विरोधिनोरपि नञ्-
शब्दस्य मुख्यैव वृत्तिरिति वार्तिकप्रदर्शनेन चोदयति—ननु नामेति।
प्रतिषेधको न भवति चेत् किमभिधत्ते? इति; तत्राह—वदतीति। भवत्वे-

366 - 6 स्यादित्यर्थः। तस्मान्न कार्यपर्यवसितमित्युपसंहरति—तस्मात् संसृज्य-
मानेति ॥

प्रकृत्यर्थस्य हननस्यैव नञ्शब्दान्वयमङ्गीकृत्य भावोऽर्थान्तरं
वा न विधेयमित्युक्तम्। इदानीं प्रत्ययार्थ एव नञा सम्बध्यते
366 - 7 प्रकृत्यर्थस्य अन्योपसर्जनत्वात् प्रधानेन चेतरेषामन्वयादित्याह—तच्च
संसृज्यमानमिति। प्रत्यक्षादिव्यवहारेषु पुरुषान्तरनिबन्धनत्वाभावात्
366 - 8 विध्यादीनामसम्भवे। प्रतिपाद्यधर्म इति। अनुष्ठेयधात्वर्थधर्म इत्यर्थः।
366 - 8 प्रतिषिध्यमानक्रियाफलेति। निवर्त्यमानक्रियाफलेत्यर्थः। प्रत्ययार्थनिषेधे-
ऽपि प्रकृत्यर्थो निवर्तत इति। प्रार्थ्यत इति प्रार्थना फलसाधनमित्यर्थः।
ततश्च हननस्य यदिष्टसाधनत्वं प्रवर्तकं तदेव प्रत्ययेन अनूद्य प्रतिषिध्यते
—ब्राह्मणहननमिष्टसाधनं न भवतीति। ननु प्रत्यक्षमिष्टसाधनत्वं हननस्य।
न—अदृष्टाविरोधिदृष्टप्रयोजनस्येष्टशब्दत्वात्। इदमदृष्टाविरोधि दृष्टसाधनं
न भवतीत्यर्थः। सर्वत्र चार्थानर्थसंयोगात् अनर्थादधिकोऽर्थः पुरुषार्थ
इत्युच्यते, अर्थाच्च अधिकोऽनर्थः अपुरुषार्थ इति। तत्र पुरुषार्थसाधनं न
भवति हननमित्युक्ते अनर्थादधिकोऽर्थो नास्तीत्युक्तं भवति। ततश्च
अर्थादनर्थस्य आधिक्यात् अर्थात् अनर्थमित्युक्तम्। तदेवं प्रत्ययार्थप्रति-
367 - 2 षेधस्य अननुष्ठेयत्वं सिद्धमित्याह—स च प्रागभाव इति। किं तर्हि
अनुष्ठेयम्? इति?। पुनः पुरुषार्थसाधनविभ्रमात् रागाद्युद्बोधप्रसक्तौ
367 - 2 तन्निमित्तप्रध्वंसोऽनुष्ठेय इत्याह—तत्संस्कारोद्बोधेति। स एव तर्हि
367 - 4 वाक्येन विधीयतामिति; नेत्याह—स च यद्यपि साध्य इति। हननमिष्टं
न भवत्यनिष्टं च इत्यत्रगतौ हननोद्बोधनिमित्तनिरोधस्य अन्वय-
व्यतिरेकाभ्यामेव अनुष्ठेयत्वात् न तत्र शब्दापेक्षा, निमित्तनिरोध-
367 - 5 कर्तव्यतायां वाक्यस्य असामर्थ्याच्च इत्याह—तत्प्रतिपादकेति। ननु

---

ता. वमिष्टशब्दार्थः, तथापि नञन्वितः प्रत्ययार्थः कीदृक्? इति; तत्राह—इदमिति। ननु लौकिकोऽर्थः सर्वत्र अनर्थमिश्र एव प्रार्थ्यमानो दृश्यते, तेन ब्राह्मणहननमपि तथा प्रार्थ्यतामित्यत आह—सर्वत्र चेति। ततः किम्? इत्यत आह—तत्रेति ॥

अनिष्टसाधनविषयशब्दसामर्थ्याच्चेन्निमित्तनिरोधः, सोऽपि तर्हि शब्दार्थ
इति ; नेत्याह—यश्चार्थादर्थ इति। अङ्गीकरोति—अथ पुनरिति। दूषयति 368 - 1-4
—भवतु तथापीति। तथापि अनुष्ठेयांशस्य अन्वयव्यतिरेकसिद्धत्वात् 368 - 5
शब्दो नानुष्ठेयनियोगपर्यवसित इत्यर्थः ॥

ननु प्रत्ययेन अपूर्वं प्रतिपाद्यते, तत् कथमननुष्ठेयं स्यात् ?। कैत-
दृगृहीतसम्बन्धम् ?। न तावल्लोके। तस्यादर्शनात्। ननु स्वर्गकामिनो
यागकर्तव्यता स्वर्गसाधनतामन्तरेण अनुपपन्ना, तच्च साधनत्वं क्षण-
भङ्गिनः कर्मणो मध्यवर्तिकार्यमन्तरेण अनुपपन्नमिति श्रुतार्थापत्त्या अपूर्वं
गम्यते, तत्र शब्दस्य सामर्थ्यं गृह्यते इति। सोऽयं बकबन्धः। शब्दा-
ल्लौकिकसामर्थ्यानुसारेण क्रियाकर्तव्यता अभिहिता चेत् पुनस्तत्साम-
र्थ्यलभ्ये अपूर्वे किमिति सम्बन्धो गृह्यते। अथ नाभिहिता क्रियाकर्त-
व्यता, न तर्हि अपूर्वमेव लभ्यत इति कुतः सम्बन्धग्रहः। ननु यागकर्त-
व्यताऽभिहिता, अनुपपन्ना सा अपूर्वाभिधानमन्तरेणेति ; तर्हि तदप्य-
नुपपन्नम्, शरीरेन्द्रियविषयसम्बन्धमन्तरेण स्वर्गस्यासिद्धेः। अतः
प्रत्ययेन शरीराद्यभिधानं स्यात्। अर्थापत्तिगम्यत्वान्न शब्दापेक्षेति चेत्,
अपूर्वेऽपि तुल्यम्। तस्माद्धात्वर्थकर्तव्यतालक्षणमिष्टसाधनमेव प्रत्ययार्थ 369 - 1-8
इति। तदेवं वृद्धव्यवहारानुसारेण इत्यारभ्य अत्रोत्तरम् इत्यतः प्राक्तनः
ग्रन्थः स्पष्टार्थः ॥

प्रथमोत्पन्नं शाब्दज्ञानं तावन्न विधीयते, तत्सन्तानश्च सुखानुभव-
कामस्य न विधेयः, ताभ्यामेव च स्वयंप्रवृत्ताभ्यामपरोक्षज्ञानमुत्पद्यते,
तदेवमुत्पन्नापरोक्षज्ञानमधिकृत्योत्तरमाह—न—अवगतब्रह्मात्मभावस्येति। 369 - 8

अपूर्वं सम्बन्धग्रहणमुपपादयति पूर्ववादी—नन्विति। किं लोके ता.
क्रियाकर्तव्यतावगता ? किं वा न ? इति विकल्प्य, आद्ये दोषमाह—शब्दादिति।
अत एव प्रतिपन्नत्वान्न सम्बन्धग्रहणापेक्षेति भावः। द्वितीये दोषमाह—
अथेति। अतिप्रसङ्गेन दूषयति—तर्हीति। अनुपपत्तिगम्यस्य प्रत्ययार्थत्वे
शरीरसम्बन्धस्यापि तथात्वं स्यादित्यर्थः ॥

नन्वु कर्मादिनिमित्तः शरीरसम्बन्धः, ततश्च संसारः, किमपरोक्षज्ञानेन ?
369 - 10 370 - 6 इत्यत आह—न कर्मनिमित्तस्तावत् इत्यादिना सुखदुःखानुभव इत्यन्तेन
ग्रन्थेन । उक्तमन्वयव्यतिरेकाभ्यां तत्त्वज्ञानेन अविद्यानिवृत्तौ संसार-
370 - 6 निवृत्तिरिति। अथेदानीं तत्रैव आगमप्रमाणमाह—तथा च श्रुतिस्मृतिवादा
इति। ते हि ब्रह्मात्मैकत्वं साक्षादनुभवतोऽपि द्वैतदर्शनाभासं दर्शयन्ति॥

नन्वु अपरोक्षज्ञानात् मिथ्याज्ञाने निवृत्ते कुतो द्वैतदर्शनम्? इति;
370 - 8 तत्राह—वैषयिकस्त्विति। नन्वु कर्मणामपि निवृत्तत्वात् कथं तन्निमित्तं
द्वैतदर्शनम्?। नैष दोषः—'तस्य तावदेव चिरम्' इति ज्ञानव्यतिरिक्ता-
वध्यन्तरकरणात् कञ्चित्कालं शरीरेन्द्रियाद्यवस्थानकल्पनया तन्निमित्त-
कर्मावस्थानकल्पनात्। नन्वु सर्वकर्मक्षयश्रुतेः श्रुत्यर्थापत्तिः कथमेक-
देशबाधिका स्यात्। अर्थापत्त्यनुदये श्रुतस्यैव बाधप्रसङ्गादिति वदामः।
तस्मात् श्रुत्यादेरेव सामान्यविशेषभावेन व्यवस्थेति॥

नन्वु अपरोक्षज्ञानेन कृत्स्नाविद्यानिवृत्तौ कुतः कर्मणामवस्थानम्?
इति। उच्यते—तत्त्वज्ञानमेव स्वकारणेभ्यो जायमानं श्रुत्यवगता-
रब्धकर्मावस्थानप्रतिबन्धात् तदपेक्षितद्वैतप्रतिभासनिवर्तनपाटवशून्य-
मितरकर्माविद्यारागादेर्निवर्तकं चोत्पद्यते॥

नन्वु ब्रह्मात्मानुभवद्वैतदर्शनयोः कुतः साहित्यमुच्यते?। न
वयं साहित्यं ब्रूमः। कदाचिदसम्प्रज्ञातात्मैकत्वदर्शनं कदाचिदारब्ध-
कर्मोपस्थापितदोषनिमित्तद्वैतदर्शनं चेति। नन्वु नास्त्येव सशरीरस्य
अपरोक्षदर्शनम्?। न—आर(म्भक)[ब्ध]कर्मव्यतिरिक्तपूर्वोत्तरकर्मविनाश-

---

ता. उत्तरग्रन्थस्थ आशङ्कां दर्शयितुं श्रुतिस्मृत्योः प्रतीयमानमर्थं दर्शयति—
ते हीति। प्रत्यक्षश्रुतिविरोधे श्रुतार्थापत्तिः दुर्बला कथं बाधिका? इति शङ्कते—
नन्विति। अर्थापत्त्यनुदये श्रुतेः अप्रामाण्यप्रसङ्गात् तदनुसारेणैव श्रुतिर्व्याख्येया
इति परिहरति—अर्थाप(त्त्ये)[त्त्यनुदये इ]ति॥

साहित्यं नाभिधीयते चेत् तर्हि किमभिधीयते? इति; तत्राह—कदा-
चिदिति। जीवन्मुक्तिप्रद्वेषिणो मतमाशङ्कते—नन्वु नास्त्येवेति। पूर्वोत्तर-

निमित्तदर्शनाभ्युपमात्। न च अपरोक्षदर्शनमन्तरेण कृत्स्नकर्मविनाशः। प्रारब्धकर्मवतश्च तत्त्वदर्शनं सशरीरस्यैव सम्भवति। व्यासादीनां च सशरीराणामेव अपरोक्षदर्शनं श्रूयते॥

ननु तत्त्वदर्शिनोऽपि द्वैतदर्शनं चेत् नियोगानुष्ठानमपि स्यात्। न—नियतदेशकालाधिकारकर्तृत्वप्रतिपत्त्यधीनत्वादनुष्ठानस्य। तत्त्वदर्शिनस्तु आरब्धकर्मनिमित्तदोषोद्भवस्य देशकालनियमाभावात् प्रारब्धानुष्ठानपरिसमाप्तिपर्यन्तमवस्थानायोगात् पुनःपुनस्तत्त्वदर्शनेन अनुष्ठितकर्मणां बाधात् अनुष्ठाने प्रयोजनाभावात् प्रत्यवायस्य च तत्त्वदर्शनेनैव निवृत्तेः॥

ननु तत्त्वदर्शिनः शास्त्रनियमाभावे यथेष्टाचरणं स्यात्। न—हिताहितप्राप्तिपरिहारप्रार्थनानिमित्तत्वादाचरणस्य स्वात्मन्येव निरतिशयानन्दमशेषानर्थनिवृत्तिं च साक्षादनुभवतः साध्यपुरुषार्थप्रार्थनाऽभावात् कुतो यथेष्टाचरणप्रसङ्गः। कथं तर्हि शरीरयात्रा? इति चेत्। आरब्धकर्मदोषवशादित्युक्तम्। न च अपूर्वकर्मोपचयस्य अविद्यारागादिनिमित्तं सम्भवति, निवृत्तत्वात्। आरब्धकर्मणां च स्वफलमात्रहेतु- ता.

---

कर्मविनाशेत्यत्र कर्मणां शेषोऽपि संगृहीतः। परोक्षज्ञानेन कर्मणामश्लेषविनाशौ इति; तत्राह—**न चेति**। पटुतरदेहेन्द्रियस्यैव अपरोक्षज्ञानं सम्भवति न मुमूर्षोरित्याह—आ[प्रा]**रब्धेति**। तत्त्वदर्शिनोऽपि तथा किं न स्यात्? इति; तत्राह—**तत्त्वदर्शिनस्त्विति**। कदाचिन्नियतदेशकालाधिकारकर्तृप्रतिपत्तिसम्भवादनुष्ठानमपि किं न स्यात्? इति; तत्राह—**प्रारब्धेति**। यत्र अवस्थानं सम्भवति तत्र अधिकारः किं न स्यात्? इति; तत्राह—**पुनः पुनरिति**। प्रत्यवायपरिहाराय कर्मणामनुष्ठानं किं न स्यात्? इति; तत्राह—**प्रत्यवायस्य चेति**॥

विधिप्रतिषेधनियमाभावे दुराचारप्रसङ्गं चोदयति—**नन्विति**। प्रार्थनापि किं न स्यात्? इति; तत्राह—**स्वात्मन्येवेति**। हिताहितप्राप्तिपरिहारप्रार्थनाऽभावे भोजनादिप्रवृत्तिरपि न स्यादिति चोदयति—**कथं तर्हीति**। भोजनादिप्रवृत्तिवत् अपूर्वकर्मोपचयः किं न स्यात्? इत्यत आह—**न चेति**। आरब्धकर्मैव निमित्तं किं न भवेत्? इत्यत आह—**आरब्धेति**॥

त्वात्। तस्मात् तत्त्वदर्शिनोऽपि द्वैतदर्शनाभास उपपद्यत इति॥

ननु श्रवणज्ञानव्यतिरेकेण मनननिदिध्यासनविधानात् साध्या-
371 - 2 न्तरमस्तीत्युक्तमिति; नेत्याह—मनननिदिध्यासनयोरिति। उक्तं च मनन-
निदिध्यासनयोस्तत्त्वदर्शनहेतुत्वम्। इदानीं वर्णकद्वयोक्तमर्थमनुवदति—
371 - 5 372 - 13 तदेवं सिद्धस्य वस्तुन इत्यारभ्य अतो विधिनिरपेक्षं स्वतन्त्रमेव ब्रह्म शास्त्र-
प्रमाणकं वेदान्तवाक्यसमन्वयात् इत्यन्तेन ग्रन्थेन। अपि च, विधिनिरपेक्ष-
372 - 15 भूतवस्तुप्रतिपादने शास्त्रारम्भभेदसिद्धिरित्याह—एवं च सति पदाना-
मिति। ननु प्रवर्तकविशेष एव पृथक्छास्त्रारम्भनिमित्तमिति; नेत्याह—
373 - 1 अन्यथा इति। ननु अन्यदेव भेदकमस्ति, शरीरेन्द्रियनिर्वर्त्या
विधिभेदाः कर्मकाण्डे निरूपिताः, इह तु केवलमानससाध्यो विधि-
373 - 3 र्निरूप्यते इति; तदाह—अथाप्यबहिस्साधनत्वात् इति। दूषयति—तथापि
373 - 5 अथातः परिशिष्टधर्मजिज्ञासेति। अधिकरणार्थमुपसंहरति—तदेवं ब्रह्मा(त्मा)-
वगमात्प्रागिति। ब्रह्मात्मापरोक्षदर्शनादुत्तरकालमन्तःकरणसम्पिण्डित-
प्रमातृबाधात् प्रमेयसम्बन्धासिद्धेर्निवर्तत एव प्रमातृप्रमाणप्रमेयकर्तृकर्म-
कार्यभोक्तृभोग्यभोगलक्षणो व्यवहार इति॥

ननु भेदाभेदरूपत्वात् नाद्वैतदर्शनेन द्वैतदर्शनबाधः। न तर्हि देहात्मभावः सुखदुःखादिरपि बाध्येत। भेदाभेदरूपत्वात्। भेदाभेद इति च स्ववचनविरोधः पूर्वपक्षसिद्धान्तनियमाभावश्च। सर्वसाङ्कर्यात्। ननु तवाप्यद्वैते सर्वसाङ्कर्यं समानम्। न—प्रपञ्चस्य यथादर्शनमेव भेदेन व्यवस्थितत्वात्। ब्रह्मण एव अद्वितीयत्वात्। ननु दृश्यते भिन्नाभिन्नं वस्तु प्रत्यक्षेण। किं तत् प्रत्यक्षम्। न तावत् 'खण्डो गौः' इति भिन्नाभिन्नविषयं प्रत्यक्षम्। तथाप्रतिभासाभावात्। ननु इतरेतरात्मनैव अभेदः प्रतिभासते। तर्हीतरेतरानात्मना भेदोऽप्यवभासेत। ननु

---

ता.

उपपादितं चैतदित्याह—ब्रह्मण एवेति। प्रमाणप्रतिपन्नत्वात् भेदाभेदयोः कथं तर्केण निराकरणं इति शङ्कते—ननु दृश्यत इति। [न तावदिति।] खण्डो गौर्भवति न भवति चेति प्रतिभासाभावात् इत्यर्थः। तर्हि भेदस्य तद्विरुद्धत्वात् इतरेतरा[ना]त्मापि प्रतिभासेतेति परिहरति—तर्हीति॥

रूपभेदेन भेदोऽवभासते। तर्हि रूपैक्यादभेदो वक्तव्यः। अथ इतरेतरात्मत्वादभेदो रूपभेदाद्भेद इति। क दृष्टमितरेतरात्मत्वमभेदः इति। न तावदेको घट इत्यत्र दृश्यते। तस्मात् 'खण्डो गौः' इति न भेदाभेदावभासः॥

स्यादेतत्—'खण्डो गौः' 'मुण्डो गौः' इति प्रत्ययाभ्यां भेदाभेदावभास इति। न—ज्ञानयोः सम्भूय प्रमापकत्वाभावात् प्रत्यभिज्ञामन्तरेण एकस्य उभयसम्बन्धासिद्धेः। तर्हि प्रत्ययत्रयेण अर्थात् भेदाभेदसिद्धिरिति। प्रत्यक्षं तावत् पराहतम्, खण्डस्य गोश्च तदुभयालम्बनपिण्डस्य च त्रयाणां प्रत्यक्षेऽवभासनात्, सामानाधिकरण्यस्य च तदुभयाश्रयपिण्डालम्बनत्वात्। नच अर्थापत्तिरपि। 'ह्रस्वोऽकारः' 'दीर्घोऽकारः' 'स एवायमकारः' इति प्रत्ययत्रयेणापि भेदाभेदासिद्धेः भ्रान्तिमात्रत्वोपगमात्।

---

ता. अपुनरुक्तशब्दद्वयप्रयोगात् रूपभेदोऽवभासत इति शङ्कते—**नन्विति**। परिहरति—**तर्हि रूपैक्यादिति**। तद्विरुद्धत्वात् अभेदस्य ऐक्यमपि तर्हि स्यादिति भावः। **न तावदेको घट इति**। सम्प्रतिपन्नाभेदस्थले तथा दृष्टत्वादिति भावः। कोष्ठगत्या यत्र पूर्वज्ञानेनाभेदः घटस्यैकत्वेन भेदस्पृष्टाभेदाभावादित्यर्थः। प्रतीतः तत्रैवोत्तरज्ञानेन भेदस्य प्रतीतेः एकत्र भेदाभेदसिद्धिरिति; तत्राह—**प्रत्यभिज्ञामिति**। भेदविषयं ज्ञानमेकमभेदविषयं च अपरं स एवायमिति तृतीयज्ञानं तदन्यथानुपपत्त्या भेदाभेदसिद्धिरिति शङ्कते—**तर्हीति**। तर्हि मानान्तरेणैव भेदाभेदसिद्धिः न प्रत्यक्षेणेति परिहरति—**प्रत्य(क्षत्वमिति)[क्षं तावदिति]**। प्रत्यक्षमङ्गीकृत्यापि दूषयति—**खण्डस्य (चेति) [गोश्चेति]**। भेदस्यैव प्रतिपादनात् नाभिमतसिद्धिरिति भावः। सामानाधिकरण्यं तर्हि कथम्? इति; तत्राह—**सामानाधिकरण्यस्येति**। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन् अर्थे वृत्तिः शाब्दं सामानाधिकरण्यम्, तथा च न भेदाभेदसिद्धिरिति भावः। माभूत् प्रत्यक्षं, मानान्तरादेव भेदाभेदसिद्धिरिति, तत्राह—**न चेति**। अनात्मनि भेदाभेदौ निराकृत्य आत्मनि तौ

तस्मात् न भिन्नाभिन्नं वस्तु। नाप्यात्मनि भेदः प्रमातुं शक्यः। विवाद-गोचरापन्नाः स्थावरजङ्गमशरीरव्यक्तयः प्रतिवादिशरीरव्यक्त्यात्मनैव आत्मवत्यः शरीरव्यक्तित्वात् प्रतिवादिशरीरव्यक्तिवत् इत्येकात्म-त्वानुमानात्। युगपज्जननमरणादिविरुद्धधर्माश्रयत्वात् अग्न्युदकादिवत् धर्मिभेदोऽनुमीयत इति चेत्, न—शरीराश्रयतया व्यधिकरणासिद्ध-त्वात्। प्रतिशरीरं सुखदुःखाद्यनुभवाननुभवानुसन्धानाननुसन्धानैर्द्रष्टृ-भेदः कल्प्यत इति चेत्, न—शरीरभेदे सति एकस्यापि आत्मनो जन्मान्तरीयाननुसन्धानादिदर्शनात्। सत्यप्येकत्वे प्रतिबिम्बभेदेषु वर्ण-सङ्करादर्शनात्। न च जीवब्रह्मभेदोऽपि प्रत्यक्षसिद्धः; विरुद्धधर्मा-श्रयत्वात् भेदानुमाने बिम्बप्रतिबिम्बयोरनैकान्तिकत्वात्। नियन्तृनियन्तव्येशित्रीशितव्यद्रष्टृदृश्यत्वादीनां भेदलिङ्गत्वात् जीवब्रह्मभेद इति चेत्, न—'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्यैव भेदप्रतिषेधे लिङ्गाद्भेदप्रमितेरयोगात्। अतुल्यप्रमाणत्वाच्च भेदाभेदकल्पनाऽयोगात्। 'द्वा सुपर्णा' इति द्वित्वसङ्ख्या श्रूयते इति चेत्, न—'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः' इत्येकत्वसङ्ख्याश्रवणात् भ्रान्तिसिद्ध-

---

ता. निराकरोति—**नापीति**; सिद्धसाधनतापरिहारार्थं **प्रतिवादीति** विशेषणम्। सप्रतिसाधनतामाशङ्कते—**युगपज्जननेति**। शरीरभेदेनैव अननुसन्धानसिद्धिरिति परिहरति—**न—शरीरेति**। आत्मन एकत्वे सुखदुःखसाङ्कर्यं स्यादित्यत आह—**सत्यपीति**। जीवानां परस्परं भेदं निराकृत्य ब्रह्मणोऽपि तं निराचष्टे—**न चेति**। मास्तु प्रत्यक्षसिद्धः, किं तु बद्धत्वमुक्तत्वादिविरुद्धधर्माध्यासेन भेदोऽनुमीयत इति, तत्राह—**विरुद्धेति**। श्रौतैर्लिङ्गैर्भेदोऽनुमीयत इति शङ्कते—**नियन्त्रिति**। श्रुतिविरोधे श्रौतं लिङ्गं दुर्बलमिति परिहरति—**नान्योऽतोऽस्तीति**। ननु उभयवाक्यसामर्थ्यात् भेदाभेदसिद्धिरित्यत आह—**अतुल्येति**। तत्परत्वातत्परत्वाभ्यां **अतुल्यत्वम्** इत्यर्थः। श्रुत्योर्विरोधे अनुवादश्रुतिः दुर्बला विधिश्रुतिविरोधे इत्याह—**भ्रान्तीति**। किं च, न कुत्रापि

द्वित्वानुवादात् एकत्वनानात्वे प्रमाणाभावात्। प्रत्यक्षेण भेदग्रहणे भेदस्य धर्मिप्रतियोगिव्यवस्थापेक्षत्वात् तद्व्यवस्थायाश्च भेदापेक्षत्वात् इतरेतराश्रयत्वात्। तस्मात् न भेदाभेदौ इति अद्वैतदर्शनेन द्वैतदर्शन-बाधः। प्रत्यक्षभ्रमस्य च आप्तवचनेन बाधदर्शनात् फलवचनानां च वर्तमानापदेशितया योग्यानुपलब्धिविरोधात् दृष्टद्वारेण बन्धनिवृत्तिरेव मोक्ष इति ॥

'अपि चाहुः' इति श्लोकत्रयस्य तात्पर्यमाह। गौणमिथ्यात्मन इत्या- 373 - 7-8
दिना श्लोकं व्याचष्टे। तदे(व)[तत्]द्वयन्नाहेति द्वितीयश्लोकस्य तात्पर्य- 374 - 6
माह। कथमिदानीमस्य प्रामाण्यमित्यादिना तृतीयश्लोकं व्याचष्टे। अद्वि- 375 - 12
तीयनिरतिशयानन्दचैतन्यैकतानसर्वज्ञसर्वेश्वरसर्वशक्तिनिरवयवस्वच्छा-तीयनिरतिशयानन्दचैतन्यैकतानसर्वज्ञसर्वेश्वरसर्वशक्तिनिरवयवस्वच्छा सङ्गप्रत्यग्भूतब्रह्मात्मनि अपरोक्षानुभवात् प्राक् देहात्मप्रत्ययवत् सर्वो व्यवहारो यथादर्शनं उपपद्यते। तस्मिंश्च अपरोक्षेऽवभासमाने प्रमातृत्वादिबाधात् सर्वो व्यवहारो निवर्तते इति श्लोकार्थः ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यस्य
प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे
नवमं वर्णकं समाप्तम् ॥

॥ समन्वयाधिकरणं च ॥

॥ परिसमाप्तश्चायं पञ्चपादिकाविवरणाख्यो निबन्धः ॥

---

प्रत्यक्षाभिमतस्य भेदस्य कथं वाक्य- ता.
भेदग्रहणं सम्भवतीत्याह—प्रत्यक्षेणेति। नायं सर्प इति वाक्यात् सर्पभ्रमस्य जन्यज्ञानेन बाध इत्यत आह—प्रत्यक्षेति। ननु शास्त्रादेव बन्धनिवृत्तिरस्तु किमन्वयव्यतिरेकाभ्यानिवृत्तिदर्शनादित्यर्थः। आऽऽत्मनिश्चयादिति भागं व्याचष्टे-मित्यत आह—फलवचनानां चेति। [अद्वितीय] निरतिशयेति ॥

ता. ग्रन्थग्रन्थितमिसं भिन्दाना तत्त्वबोधविधिचतुरा ।
मुनिना चित्सुखनाम्ना विवरणतात्पर्यदीपिका रचिता ॥

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य-श्रीचित्सुखमुनिविरचितायां पञ्चपादिकाविवरणव्याख्यायां तात्पर्यदीपिकायां नवमं वर्णकं समाप्तम् ॥**

**॥ समन्वयाधिकरणं च समाप्तम् ॥**

---

*विवरणस्य या व्याख्या चित्सुखाचार्यनिर्मिता ।
पुरुषोत्तमविद्याख्यैर्लिलिखे सा सुशोभना ॥

**समाप्तोऽयं ग्रन्थः ॥**

—:o:—

* अयं ग्रन्थः श्रीचित्सुखमुनिशिष्येण पुरुषोत्तमविद्याख्येन यतिवरेण आचार्योक्तिमनु लिखित इति ज्ञायते अनेन पद्येन ॥

भारती विजयम् प्रेस्, मद्रास्-५.